न त्वद्धोता पूर्वो अग्ने यजीयान्न काव्यैः परो अस्ति स्वधावः ।
विशश्च यस्या अतिथिर्भवासि स यज्ञेन वनवद्देव मर्तान् ॥ ५ ॥

न त्वद्धोता । न[1] । त्वत्तः[2] । होता[3] । प्रथमः[4] । अग्ने[5] ! विद्यते[6] । यष्टृतरः[7] । न च । स्तोत्रैः[8] । परो[9] विद्यते । अन्नवन्[10] ! स त्वम् । यस्याः । विशः[11] । अतिथिः[12] । भवसि । मनुष्याः साधयित तेन[13] । यज्ञेन[14] । मनुष्यानाश्रितान्[15] । भजते[16][17] ।

वयमग्ने वनुयाम त्वोता वसूयवो हविषा बुध्यमानाः ।
वयं समर्ये विदथेष्वह्नां वयं राया सहसस्पुत्र मर्तान् ॥ ६ ॥

वयमग्ने । वयम्[18] । अग्ने ! प्रयच्छेमहि[19] । त्वया रक्षिताः[20] । धनकामाः[21] । हविषा[22] दीयमानेन । त्वया बुध्यमानाः[23] । वयम् । सङ्ग्रामे[24] । अह्नां सम्बन्धिषु[25] । यज्ञेषु[26] च शत्रून् अभिभवेम । मनुष्यान्[27] । धनेन[28] । हे सहसः । पुत्र[29] !

१. त्वद्धो M. त्वद्धो तां P., D.
२. Omitted by P.
३. अन्यः Sy. ४. त्वद्धोता P.
५. वृश्नः P. प्रश्नः D. पूरकः पुराणो वा Sy.
६. अस्ति Sy.
७. यष्टा वा Sy.
८. स्तोत्रैः स्तुत्यः Sy.
९. परस्तात् परस्मिन्नपि काले Sy.
१०. अन्नवान् P.
११. प्रजाया ऋत्विग्रूपायाः Sy.
१२. ०शोति० P., D. अतिथिवत्पूज्यः Sy.
१३. ०पि D. मनुष्याः साधयित seems to be unnecessary.
१४. The passage beginning with त्वत्तः and ending with यज्ञेन is omitted by M.
१५. ०ष्याणा श्रि० P. अस्मद्द्वेष्टॄन् Sy.
१६. वृश्चति हिनस्ति। यद्वा मर्तान् परिचारकान् सम्भजेत् Sy.
१७. VM. ignores च । and देव ।
१८. यजमानाः Sy.
१९. ०च्छाम० P. प्रयच्छेम is suggested for प्रयच्छेमहि ॥ शत्रून् पीडयाम सम्भजेमहि वा धनम् Sy.
२०. त्वया रक्षिताः सन्तः Sy.
२१. वसुकामाः Sy.
२२. P. adds दीप्ताञ्जहि प्राज्ञाभिशस्तिमेते क्रियमाणा माग्नेयोस्मानागते सेनसा च बाध after हविषा । D. adds दीप्ताञ्जहि प्राज्ञाभिशस्तिमेतैः क्रियमाणामग्नेयोस्मानागसेन सा च बाध after हविषा । The additional passage in P. and D. has a striking resemblance with the commentary on RV. V.3.7.
२३. त्वां बोधयन्तः Sy.
२४. समरणे जयेम शत्रूनिति शेषः Sy.
२५. सं बि षु P. सञ्चिषु D. संवि (सर्वे)षु M. सर्वेष्वहःसु Sy.
२६. यज्ञेषु च is missing in M. यागेषु प्राप्नुयाम बलम् । यद्वा वनुयामेत्येदनुषज्यते Sy. २७. पुत्रभृत्यादींल्लभेमहि Sy.
२८. धनेन सह Sy.
२९. ०त्रः P. किञ्च हे बलस्य पुत्र ! पालक ! वाग्ने ! Sy.

योन॒ आगो॑ अ॒भ्येनो॒ भरा॑त्यधीद॒घम॒घशं॑से दधात ।
ज॒ही चि॑कित्वो अ॒भिश॑स्तिमे॒तामग्ने॒ यो नो॑ म॒र्चय॑ति द्व॒येन॑ ॥ ७ ॥

**यो नः ।** यः[1] । अस्माकम्[2] । आगः[3] । पापं च । अभिप्रापयति[4] । तस्मिन्, अघशंसे । अघम्[5] । अग्निरधिधत्तात्[6] ।[7] जहि । प्राज्ञ[8] ! अभिशस्तिम्[9] । एतेन क्रियमाणाम्[10] । अग्ने[11] ! यः[12] । अस्मान्[13] । आगसैनसा[14] च । बाधते[15] ।[16]

त्वाम॒स्या व्यु॒षि दे॑व॒ पूर्वे॑ दू॒तं कृ॑ण्वा॒ना अ॑यजन्त ह॒व्यैः ।
सं॒स्थे यद॑ग्न॒ ईय॑से रयी॒णां दे॒वो मर्तै॒र्वसु॑भिरि॒ध्यमा॑नः ॥ ८ ॥

**त्वामस्या व्युषि[17] ।** त्वाम् । रात्रेः । विवासे[18] । देवम् । पूर्वे[19] । कवयः । दूतम्[20] । कृण्वानाः[21] । अयजन्त । हविर्भिः[22] । यत् त्वम्[23] । रयीणाम्[24] । संस्थाने[25] युद्धे । गच्छसि । देवः[26] । वासयितृभिः[27] । मनुष्यैः[28] । समिध्यमानः[29] [30] ।

---

१. मर्त्यः Sy.

२. अस्मभ्यम् Sy.

३. अपराधम् Sy.

४. अभितः करोति Sy.

५. पापम् Sy.

६. ०धिधत्तान् P. ०ग्निधिधत्तात् M. ददात्वग्निः । आगोऽपराधं यो मह्यमिदं करोति तस्मा एवाग्निस्तत् करोत्वित्यर्थः Sy.

७. अथ प्रत्यक्षेणोच्यते Sy.

८. प्रज्ञ M.

९. उत्तरत्र यच्छब्दश्रवणात्तदानुगुण्येनैनमभिशंसकमिति व्याख्येयम् Sy.

१०. ०णम् P.

११. M. omits क्रियमाणाम् and अ of अग्ने ।

१२. अभिशस्ता Sy.

१३. ये स्मान् P., D.

१४. द्वयेन उक्तेन आगसा एनसा वा Sy.

१५. बाधते । तमिति Sy.

१६ VM. ignores इत् ॥ इदिति पूरणः Sy.

१७. प्युषि P., D.

१८. व्युष्टायामुषसीत्यर्थः Sy.

१९. पुरातना यजमानाः Sy.

२०. देवानां प्रेरकम् Sy.

२१. कुर्वाणाः Sy.

२२. हविर्भिः साधनैः Sy.

२३. यत्वं P. युतं D.

२४. रयीणां हविर्लक्षणानाम् Sy.

२५. संसास्थाने P. Missing in M. आसादने सति Sy.

२६. द्योतमानः Sy.

२७. वासकैः Sy.

२८. ऋत्विग्भिः Sy.

२९. ०यितृभिर्मनुष्यैस्समृध्यमानः D.

३०. VM. explains देव as देवम् and ignores अग्ने ।

अव॑ स्पृधि पि॒तरं॒ योधि॑ वि॒द्वान्पु॒त्रो यस्ते॑ सहसः सून ऊ॒हे ।
कु॒दा चि॑कित्वो अ॒भि च॑क्षसे॒ नोऽग्ने॑ कु॒दाँ ऋ॑त॒चिद्या॑तयासे ॥ ९ ॥

अव स्पृधि[1] । अवप्रीणय[2] । मदीयं पितरम्[3] । सम[4] पृथक्[5] कुरु च । तस्य शत्रुं[6] जानन् । योऽहम्[7] । तव । पुत्रस्तुभ्यं[8] हविः । वहामि[9] । सहसः । पुत्र[10] ! कदा[11] । प्राज्ञ[12] ! अभिपश्यसि । अस्मान् । अग्ने[13] ! कदा वा । सत्यज्ञस्त्वम्[14] । युद्धाय निर्गमयसि[15] ।

भूरि॒ नाम॒ वन्द॑मानो दधाति पि॒ता व॑सो॒ यदि॒ तज्जो॒षया॑से ।
कु॒विद्दे॒वस्य॒ सह॑सा चका॒नः सु॒म्नम॒ग्निर्व॑नते वावृधा॒नः ॥ १० ॥

भूरि नाम[16] । भूरि[17] । हविः[18] । स्तुवन्[19] । प्रयच्छति[20] । अस्मदीयः पिता[21] । हे वासयितः[22] ! यदि त्वम् । तत[23] । सेवसे[24] । कुवित्[25] । देवस्य[26] । सहसा[27] । दीप्यमानः प्रयच्छसि[28] । सुखम्[29] । अग्निश्च तस्मै । प्रयच्छति । वर्धमानः[30] ।

---

१. अप P.
२. अप० P. पारय Sy.
३. पालकं पितृभूतम् Sy.
४. तम् is suggested for सम ।
५. प्रथ P., D. Sy. adds पापात् ।
६. M. omits सम् पृथक् कुरु च तस्य ।
७. जानह्योहं तस्य P. तस्य D. यो हन्त M.
८. पुत्रस्थानीयस्तव यो यजमानः, त्वाम् Sy.
९. वहति । तमेवं कुर्वित्यृषिरात्मानं परोक्षेणाह । 'ह॒व्य॒वाळ॒ग्निर॒जरः॑ पि॒ता नः॑' (RV. V.4.2.) इति हि वक्ष्यति । यद्वा पितृपुत्रभावो व्यत्यस्तः । पितरं पितृवद्रक्षकं यजमानमव स्पृधि योधि च । यस्त्वं पुत्रः पुत्रवत् सदा रक्षणीयः 'त्वं पु॒त्रो भ॑वसि॒ यस्तेऽवि॑धत्' (RV. II.1.9.) इति हि श्रुतिः Sy.
१०. हे बलस्य पुत्र अग्ने ! त्वम् Sy.
११. तवा M.
१२. हे चेतनावन् ! Sy.
१३. अने M.
१४. यज्ञस्योदकस्य वा चेतयिता Sy.
१५. Omitted by M. प्रेरयसि सन्मार्गेण Sy.
१६. नामं D.
१७. प्रभूतम् Sy.
१८. त्वदीयं नाम Sy.
१९. वन्दमानः सन् Sy.
२०. धारयति । सामर्थ्याद्धविः । अथवा नामकं हविः प्रभूतं धारयति दातुम् Sy.
२१. पालकस्त्वम् Sy.
२२. हे वासकाग्ने ! Sy.
२३. हविः Sy.
२४. M. omits the words between प्रयच्छति and सेवसे ।
२५. बहु हविः Sy.
२६. कविर्दे० P. व्यवहर्तुर्यजमानस्य Sy.
२७. बलेन युक्तः सन् Sy.
२८. कामयमानः । यद्वा कर्मणि षष्ठी । देवं यजमानं कामयमानः Sy.
२९. प्रयच्छत सुम् P., D. सुम्नम् Sy.
३०. यजमानं वर्धयन् वा Sy.

**त्वमङ्ग जरितारं यविष्ठ विश्वान्यग्ने दुरिताति पर्षि ।**
**स्तेना अदृश्रन्रिपवो जनासोऽज्ञातकेता वृजिना अभूवन् ॥ ११ ॥**

त्वमङ्ग । त्वम् । क्षिप्रम्[1] । स्तोतारम्[2] । युवतम ! विश्वानि । अग्ने ! दुरितानि । अतिपारय[3] । स्तेनाः[4] । दृश्यन्ते[5] । रिपवः[6] । जनासः[7] । अज्ञातनिवासस्थानाः[8] । बाधकाः[9] । भवन्त्विति[10] ।

**इमे यामासस्त्वद्रिगभूवन्वसवे वा तदिदागो अवाचि ।**
**नाहायमग्निरभिशस्तये नो न रीषते वावृधानः परा दात् ॥ १२ ॥**

इमे यामासः । स्वपितरं प्रत्याह—अमी शत्रवः । गन्तारः[11] । त्वदभिमुखाः । भवन्ति । तच्चैतत् । उपद्रवम्[12] । वासयित्रेऽग्नये[13] मया । उक्तम्[14] । समुच्चयार्थीयो[15] वाशब्दः । न । एव । अयम् । अग्निः[16] । अस्मान् । अभिशस्तये[17] । प्रयच्छति[18] । न । हिंसते[19] । वर्धमानोऽग्निः[20] प्रयच्छति[21] ।

---

१. अङ्ग ! हे स्वामिन् ! Sy.

२. स्तोतारमनुग्रहीतुम् Sy.

३. अतिपारयसि Sy.

४. तस्कराः Sy.

५. अदृ० P. आदृ० D.

६. शत्रुभूताः Sy.

७. M. omits जनासः ॥ मनुष्याः Sy.

८. ०सोज्ञान्तनि० P. जातनि० M. अप्रज्ञातचिह्नाः Sy.

९. अस्माभिर्वर्जिताः Sy.

१०. ०त्विति P. भवन्ति Sy.

११. गन्तारः स्तोमाः Sy.

१२. ०द्रवत् P., D. उपद्रव is in the mas. gend. and as such it should be उपद्रवः । Similarly एतत् and उक्तं going with उपद्रवः should be एषः and उक्तः ॥ अपराधमावासमल्पम् । इदं देहीति याचनमेवापराधः, यद्वा तदिदं वक्ष्यमाणं शत्रुभिः कृतमागोऽवाचि Sy.

१३. वासकाय Sy.

१४. उक्तवानहमग्निम् Sy.

१५. ०यामीयो D.
अथवा Sy.

१६. अग्निना P. M. omits the words between र्थीयो वा and अग्निः ।

१७. निन्दकाय Sy.

१८. परावद्यात् Sy.

१९. हिंसकाय Sy.

२०. स्तुत्या वर्धमानः सन् Sy.

२१. VM. ignores इत् ॥ इदिति पूरणः ॥३॥ Ms. D. puts the figure ॥३॥ here to indicate the end of the third hymn. No such number is given in P. and M.

V. 4.

त्वाम॑ग्ने वसु॑पतिं वसू॑नाम॒भि प्र मं॑न्दे अध्व॒रेषु॑ राजन् ।
त्वया॒ वाजं॑ वाज॒यन्तो॑ जये॒मा॒भि ष्या॑म पृत्सु॒तीर्मर्त्या॑नाम् ॥ १ ॥

त्वामग्ने[1,2] । त्वाम्[3] । अग्ने[4] ! धनपतिम्[5] । आभिमुख्येन प्रस्तौमि[6] । यज्ञेषु[7] । दीप्यमान[8] ! त्वया[9] । सङ्ग्रामम्[10] । युद्धं कर्तुकामाः[11] । जयेम[12] । अभिभवेम[13] । पृतनाः[14] । मनुष्याणाम्[15,16] ।

ह॒व्य॒वाळ॒ग्निर॒जरः॑ पि॒ता नो॑ वि॒भुर्वि॒भावा॑ सु॒दृशी॑को अ॒स्मे ।
सु॒गा॒र्ह॒प॒त्याः समिषो॑ दिदीह्यस्म॒द्र्य॑क्सं मि॑मीहि॒ श्रवां॑सि ॥ २ ॥

हव्यवाट्[17,18] । हविषां वोढा । अग्निः[19] । जरारहितः[20] । पालयिता[21] । अस्माकम् । विविधं भवन्[22] । दीप्तिमान्[23] ।

---

१. 'त्वामग्ने' इत्येकादशर्चं चतुर्थं सूक्तमात्रेयस्य वसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयम् । अनुक्रान्तञ्च 'त्वामग्न एकादश' (KSA. 24.4. p. 19.) इति । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः 'अबोध्यग्निः' इत्यत्रोक्तः Sy.

२. त्वम० P.

३. ईदृशं त्वाम् BB.

४. P. omits त्वाम् । अग्ने ।

५. धनवतिम् P., D. वृत्त्यवृत्तिभ्यां वसूनां बाहुल्यं तत्स्वामित्वं चोक्तम् । बहूनां धनानां स्वामिनम् Sy. वसूनां सर्वेषां सम्बन्धिनं नैकस्य द्वयोर्वा वसुपतिं वसूनां नित्यस्वामिनम् । इदं समासव्यासाभ्यां प्रतिपाद्यते कश्चिदाह वसूनां देवानां मध्ये वसुपतिमिति BB.

६. प्रस्तौति D. स्तौमि Sy. तर्पयामि 'मदि स्तुतिमोदस्वप्नकान्तिगतिषु' BB.

७. यागेषु Sy.

८. ०मानः D. ०मानं M. हे राजन् ! Sy. चरुपुरोडाशादिभिर्दीप्यमान ! Sy.

९. अनुकूलेन Sy. त्वयैव BB.

१०. वाजम् Sy.

११. अन्नमिच्छन्तो वयम् Sy. वाजमन्नमात्मन इच्छन्तः ।....यद्वा वयं वाजमिच्छामस्तदा BB.

१२. त्वया वाजं जयेम....प्राप्नुयाम BB.

१३. ०कामाभि० P.

१४. ममृतानां P. वृतानाम् D. सेनाः Sy. पृतनां कर्तुं या अस्माभिरिच्छन्ति ताश्शत्रुसेनाः ।.... पृदिति सङ्ग्रामकर्म । तस्मात्सङ्ग्रामयितुमिच्छन्तीति सन् ।....यद्वा पृतनास्सूयन्त उत्पाद्यन्ते याभिस्ताः पृत्सुतयः । छान्दसं ह्रस्वत्वम् । पृद्भावश्च । बहुविकारत्वान्नावगृह्यते BB.

१५. ०णा D. मरणधर्मकाणाम् Sy. मर्त्यानां मध्ये BB.

१६. VM. ignores वसूनाम् ।
This stanza=TS. 1.4.46.2.

१७. दर्शपूर्णमासे पत्नीसंयाजे गृहपतेर्याज्यैषा । सूत्रितञ्च—'हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजाः' (ASS. 1.10.) इति । देवसुवां हविःष्वप्यग्नेरेषैव याज्या । सूत्रितञ्च—'हव्यवाळग्निरजरः पिता नस्त्वं च सोम नो वशः' (ASS. 4.11.) इति Sy.

१८. हव्यवान् D.

१९. अङ्गनादिगुणयुक्तः BB.

२०. ०तं P. अजीर्णः सन् Sy. जरारहितः BB.

२१. पिता भवत्विति शेषः Sy.

२२. भवं P. भव D. व्याप्तः Sy. भुवनस्य व्यापी BB.

२३. विशेषेण भानशीलः । भातेर्वनिप् BB.

सुदर्शनीयः[1] । अस्माकं भवतु । शोभनगृहपतिकानि[2] । अन्नानि[3] । सन्दिदीहि[4] अस्मभ्यम् । अस्मदभिमुखानि[5] । अन्नानि[6] । सह कुरु[7] ।

**विशां कविं विश्पतिं मानुषीणां शुचिं पावकं घृतपृष्ठमग्निम् ।**
**नि होतारं विश्वविदं दधिध्वे स देवेषु वनते वार्याणि ॥ ३ ॥**

**विशां कविम्** । मानुषीणाम्[8] । विशाम्[9] । स्वामिनम् । कान्तप्रज्ञम्[10] । दीप्तम्[11] । शोधकम्[12] । घृतपृष्ठम्[13] । अग्निम् । निदधिध्वे[14] । ह्वातारम्[15] । सर्वज्ञम्[16] । सः[17] । देवेषु[18] । मनुष्याणां धनानि[19] । भजते[20] ।

**जुषस्वाग्न इळया सजोषा यतमानो रश्मिभिः सूर्यस्य ।**
**जुषस्व नः समिधं जातवेद आ च देवान्हविरद्याय वक्षि ॥ ४ ॥**

**जुषस्व**[21] । जुषस्व[22] । अग्ने[23] ! समिद्ध ! इडया[24] । सङ्गतः[25] । यतमानश्च[26] । सूर्यरश्मिभिः सह[27] । तथा

---

१. शोभनदर्शनः Sy. सुखदर्शनः । दृशीकादयो निपात्यन्ते BB.

२. अथ प्रत्यक्षवादः, शोभनगार्हपत्ययुक्तानि Sy. शोभनगृहपतित्वहेतुभूताः BB.

३. ०पतिकोन्नानि P.

४. सम्यक् प्रकाशय ददस्व वा Sy. एकीकृत्य दीपय देहीत्यर्थः । दिदेतिर्दीप्तिकर्मा छान्दसः । ददातेर्वा रूपं छान्दसविकारः BB.

५. अस्मदभिमुखम् Sy. अस्मदाभिमुख्येनागतिमत् BB.

६. यशांस्यन्नानि वा BB.

७. ह P. सम्यक् प्रयच्छ Sy. सम्यङ् निष्पादय । 'माङ् माने', जौहोत्यादिकः BB. This stanza=TS. 3.4.11.1.

८. सर्वासां मनुष्यरूपाणां पालकं स्वामिनं वा Sy.

९. प्रजानाम् Sy.

१०. मेधाविनम् Sy.

११. शुद्धं दीप्तं वा Sy.

१२. अन्येषां शोधकम् Sy.

१३. प्रदीप्तपृष्ठोपलक्षितशरीरम् । अथवोपरितनभागे आज्योपेतम् Sy.

१४. धारयथ हे ऋत्विजः ! Sy.

१५. होमनिष्पादकम् Sy.

१६. विश्वस्य वेत्तारम् Sy.

१७. देवः Sy.

१८. देवेषु मध्ये Sy.

१९. वरणीयानि धनानि Sy.

२०. सम्भजतेऽस्मदर्थम् । स्वयं वा वार्याणि हवींषि वनते Sy.

२१. युषस्व D.

२२. जू० D. सेवस्व स्तुतिम् Sy.

२३. M. adds समिद्धमस्मदीयाम् after अग्ने.

२४. ळलया P., D. वेदिलक्षणया भूम्या वाचा वा Sy.

२५. सङ्गप्रत P., D. समानप्रीतिः Sy.

२६. प्रयत्नमुषःकाले कुर्वन् Sy.

२७. VM. explains सूर्यस्य and रश्मिभिः together as सूर्यरश्मिभिः सह ।

हे जातवेदः[1] ! अस्माकम्[2] । समिधम् । सेवस्व । आवह[3] । च । देवान् । हविषो भक्षणाय[4] ।

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥ ५ ॥

जुष्टः[5] । पर्याप्तः[6] । दममनः[7] । अतिथिर्भवन्[8] । गृहे[9] । इमम्[10] । नः । यज्ञम् । उपगच्छ[11] । जानन्[12] ।

---

१. जातस्य वेदितरग्ने ! Sy.
२. अस्मदीयाम् Sy.
३. VM. explains आ and वक्षि together as आवह but Sy. explains these separately आ as आवह and वक्षि as वहसि तद्धविः ।
४. ०षे P. हविरदनाय Sy.
५. अथ पवित्रेष्टयां स्विष्टकृतोऽनुवाक्यैषा । सूत्रितञ्च—'जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये' (ASS 2.12.) इति । मरुद्भ्यः पुरोडाशं सप्तकपालमित्यत्रापि स्विष्टकृतोऽनुवाक्या । 'अत्यासो न ये मरुतः स्वञ्चो जुष्टो दमूनाः' (ASS.2.18.) इति Sy. वसुश्रुतस्यात्रेयस्य SKN. वसुश्रुतस्यात्रेयस्येदमार्षम् Dur.
६. अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । यस्त्वं जुष्टः सेवितः सर्वेण, प्रियो वा सर्वस्य SKN. आ सेवितस्त्वमस्माभिः स्तुतिभिः Dur.
७. दमना M. दममनाः is suggested for दममनः ॥ दानमना दान्तमना वा Sy. अक्रूरमना भूत्वा Dur.
८. अतिथिः तद्वत् पूज्यः सन् Sy. अतिथिस्थानीयश्च सायंप्राप्तश्चाग्निहोत्रिणाम् ।....अततिर्गतिकर्मा अभिगतो हि स नूनं निवासं गृहाण्यतिथिः । अभ्येति तिथिषु वा कुलानि । अभ्येति तिथिषु सुष्ठु गच्छतीत्यर्थः । अतिथिर्हि यावद् गन्तव्यं तावद् याति परकुलानीतिSKN. अतिथिश्च त्वमग्निहोत्रिणां दान्तमनसां प्रातः सायं चोद्बोध्यमानो भवसि । स्वभाव एवैष तवाग्निहोत्रिणामतिथित्वेनोपस्थातव्यमिति ।.... आह, अतिथिः कस्मात् ? उच्यते, गृहानभि आभिमुख्येनासौ अततो भवति गत इत्यर्थः । 'अतति पतति' गतिकर्मसु पठितम् । अथवैवमन्यथा स्यात्—'अभ्येति' अभ्यागच्छति तिथिषु पौर्णमास्याद्यासु परकुलानि यजमानकुलानीत्यतिथिः Dur.
९. ग्रहे D. गृहेऽस्मदीये SKN. अतो ब्रूमो वयमपि दान्तमनसोऽग्निहोत्रिणश्च । अस्माकमपि य एषः....यज्ञगृहे यज्ञस्तन्यते तं त्वमुपायाहि तमागच्छ ।....दुरोण इत्येतद् गृहनाम (Ngh.3.4.) आह—किं कारणम् ? उच्यते ते हि गृहाः दुरवा भवन्ति । अवतिस्तर्पणार्थः, दुस्तर्पा इत्यर्थः । उक्तञ्च 'कुटुम्बतन्त्राणि हि दुर्भराणि' इति । एवमेतस्मिन्मन्त्रे 'जुष्टः दमूनाः, अतिथिः विद्वान्, हे अग्ने ! यज्ञमुपयाहि' इत्येतस्मिन्नधिकारे वर्तमानः 'दमूनाः' शब्दः कमन्यमग्निविशेषणादर्थं ब्रूयात् ? न कञ्चिदपि । परिशेषाद् दमूना इत्येतदग्निविशेषणमेवेति सिद्धम् Dur.
१०. अस्मदीयम् Sy.
अस्माकं स्वभूतम् SKN.
११. उपागच्छ Sy. अथवा गृहं ममेदमिति चेतोऽवस्थाप्य तत उपयाहि । अथवा दान्तेष्वेव हि तव मनो वयं च दान्ताः Dur.
१२. जानन् स्वमधिकारं भक्ततां वाऽस्माकम् SKN. जानानः स्वमधिकारं भक्ततां चास्माकम् Dur.

सर्वाः[1]। अग्ने[2] ! अभियौक्त्रीः[3] सेनाः। विहत्य[4]। शत्रूयतां[5] तेषाम्। अन्नान्यस्माकम्[6]। आहर[7][8]।

**वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे३ स्वायै ।**
**पिपर्षि यत्सहसस्पुत्र देवान्त्सो अग्ने पाहि नृतम वाजे अस्मान् ॥ ६ ॥**

**वधेन**[9]। आयुधेन। दस्युम्[10]। प्रकर्षेण पीडय[11]। स्वस्मै[12]। शरीराय[13]। गमनम्[14]। कुर्वाणः। पारयसि[15]। यत्[16]! सहसः। पुत्र[17]! देवाः[18]। तदा स त्वम्[19]। अग्ने! अस्मान्। रक्ष। युद्धे[20]। नेतृतम![21]

**वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे ।**
**अस्मे रयिं विश्ववारं समिन्वास्मे विश्वानि द्रविणानि धेहि ॥ ७ ॥**

**वयं ते**। वयम्। तुभ्यम्[22]। अग्ने! उक्थैः[23]। परिचरणं कुर्मः[24]। वयम्। हविर्भिः[25]। पावक[26]।

---

१. सर्वान् Sy. उपगम्य च...सर्वाः SKN.

२. हे अग्ने ! Sy.
हे भगवन्नग्ने ! Dur.

३. ०यो० suggested for ०यौ० अभियोक्तॄन् Sy. स्त्रीलिङ्गनिर्देशादभियोक्त्रीरस्मच्छत्रुसेना इत्यर्थः SKN. अभितः सर्वतो युजोऽभियोक्त्र्यः। शत्रुसेनास्त्वदागमनप्रतिबन्धेन वर्तमानाः Dur.

४. विविधं हत्वा SKN. नानाप्रकारं हत्वा तत उपयाहि Dur.

५. ०त्रुय० P. शत्रूयतां येऽस्माकमिच्छन्ति तेषां स्वभूतानि SKN. किञ्च एवमागच्छंस्त्वं शृणु यत् कुरुष्व ।....येऽस्माकं शत्रुत्वं कामयन्ते कर्तुं तान् विहत्य तेषां बलानि Dur.

६. अन्नानि धनानि Sy. अथवा भोजनमिति धननाम (Ngh.2.10.) धनानि SKN. ततो यानि तेषां भोजनान्यन्नानि धनानि वा Dur.

७. तान्यस्मभ्यमाभर, आहरेति समस्तार्थः Dur.

८. दमूना दममना वा। दानमना वा। दान्तमना वा। अपि वा दम इति गृहनाम (Ngh. 3.4.)। तन्मनाः स्यात्। मनो मनोतेः।....अतिथिरभ्यतितो गृहान् भवति। अभ्येति तिथिषु परकुलानीति वा। (पर)गृहाणीति वा। (अयमपीतरोऽतिथिरेतस्मादेव) दुरोण इति गृहनाम (Ngh.3.4.)। दुरवा भवन्ति दुस्तर्पाः। इमं नो यज्ञमुपयाहि विद्वान्। सर्वा अग्ने! अभियुजो विहत्य शत्रूयतामाभर भोजनानि। विहत्यान्येषां बलानि शत्रूणां भवनादाहर भोजनानीति वा। धनानीति वा N. 4.4.,5., SKN. II.208.

९. हे अग्ने ! Sy.

१०. उपक्षपयितारम् Sy.

११. विय P., D. प्रणाशय Sy.

१२. स्व M. स्वीयाय Sy.

१३. अथवा स्वायै तन्वे यजमानादिरूपाय पुत्राय Sy.

१४. वयः अन्नम् Sy.

१५. तर्पयसि Sy.

१६. यस्मात् Sy.

१७. पुत्रा P., D. अग्ने ! Sy.

१८. भवान् P. दवान् D. देवान् is suggested for देवाः।

१९. Omitted by D.

२०. सङ्ग्रामे Sy.

२१. VM. ignores हि॥ हि इति पूरणः Sy.

२२. त्वाम् Sy.

२३. ०भ्यमग्न उ० P. शस्त्रैः Sy.

२४. परिचरेम Sy.

२५. हविर्भिर्विधेम Sy.

२६. शोधक ! Sy.

भजनीयदीप्ते[1] ! अस्मासु[2] । धनम् । सर्वैर्वरणीयम्[3] । सङ्गमय[4] । अस्मासु[5] । सर्वाण्येव[6] । धनानि[7] । स्थापय[8] ।

**अस्माकमग्ने अध्वरं जुषस्व सहसः सूनो त्रिषधस्थ हव्यम् ।**
**वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि ॥ ८ ॥**

**अस्माकम्**[9] । अस्माकम् । अग्ने ! यज्ञम्[10] । सेवस्व । सहसः[11] । पुत्र ! त्रिस्थान[12] ! हविश्च[13] । वयम्[14] । देवेषु[15] । शोभनकर्माणः[16] । स्याम[17] । सुखेन[18] । त्रिगुणेन[19] । रक्ष[20] ।

**विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिं पर्षि ।**
**अग्ने अत्रिवन्नमसा गृणानो३ऽस्माकं बोध्यविता तनूनाम् ॥ ९ ॥**

**विश्वानि** । सर्वाणि । अस्मान्[21] । दुःखेन । गाहितव्यानि[22] । हे जातवेदः[23] ! सिन्धुम्[24] । इव । नावा[25] । दुरितानि । अतिपारय । अग्ने ! अत्रिणेव[26] । मनसा[27] । स्तूयमानः[28] । अस्माकम् । अङ्गानाम्[29] । रक्षिता[30] भवामीति । बुध्यस्व ।

---

१. हे कल्याणदीप्ते ! Sy.
२. ०प्तो स्मा० D. अस्मभ्यम् Sy.
३. विश्वैर्वरणीयम् Sy.
४. प्रापय Sy.
५. अस्मभ्यम् Sy.
६. विश्वानि Sy.
७. द्रविणानि Sy.
८. स्थापयः P., D.
९. अस्माकमग्ने M.
१०. अध्वरम् Sy.
११. हे बलस्य पुत्र ! Sy.
१२. त्रिषु क्षित्यादिषु स्थानेषु स्थित ! Sy.
१३. M. notes here, असमग्रम् इतः परं ग्रन्थपातः ॥ हविः जुषस्व । यद्वा अध्वरं हविरिति योज्यम् । अहिंसितं हविरिति Sy.
१४. यजमानाः Sy.
१५. Sy. adds मध्ये ।
१६. ०कर्म P., D. शोभनापूर्वकर्तारः Sy.
१७. स्योम D. भवेम Sy.
१८. ०नन् D.
१९. त्रिगुणे मृगेन P. त्रिगुणेमृडेन D. वाचिकादिभेदेन त्रिधा वरणीयेन त्रिच्छदिष्केण गृहेण वा Sy.
२०. VM. ignores नः ।
२१. अस्माकम् Sy.
२२. दुःखेन गाह्यानि दुःखेन भोग्यानि Sy.
२३. ०द D.
२४. नदीम् Sy.
२५. नाविको यथा तद्वत् Sy.
२६. अत्रेर्यथा तथास्माकम् Sy.
२७. नमसा is suggested for मनसा ॥ स्तोत्रेण Sy.
२८. मानः is suggested for ०मान ॥ स्तूयमानः सन् Sy.
२९. तनूनाम् Sy.
३०. रक्षकः Sy.

**यस्त्वा॑ हृ॒दा की॒रिणा॒ मन्य॑मा॒नोऽम॑र्त्यं॒ मर्त्यो॒ जोह॑वीमि ।**
**जात॑वेदो॒ यशो॑ अ॒स्मासु॑ धेहि प्र॒जाभि॑रग्ने अमृत॒त्वम॑श्याम् ॥ १० ॥**

यस्त्वा[1] हृदा[2]। यः[3]। त्वा[4]। हृदयेन[5]। विक्षिप्तेन[6]। स्तुन्वन्[7]। अमर्त्यम्[8]। मर्त्यः[9]। भृशमाह्वयामि[10]। जातः[11]! तेनास्मासु[12]। कीर्तिम्[13]। धेहि[14]। प्रजाभिः[15]। अग्ने ! अमृतत्वं[16] च। प्राप्नुयाम्[17]।

**यस्मै॒ त्वं सु॒कृते॑ जातवेद उ लो॒कम॑ग्ने कृ॒णवः॑ स्यो॒नम् ।**
**अ॒श्विनं॒ स पु॒त्रिणं॑ वी॒रव॑न्तं॒ गोम॑न्तं र॒यिं न॑शते स्व॒स्ति ॥ ११ ॥**

यस्मै[18] त्वम्। यस्मै। त्वम्। कर्मणे[19]। जातवेद[20] ! कृणोषि[21]। लोकम्—आवासस्थानम्[22]। सुखकरम्[23]।

---

१. पुत्रकामेष्टयां 'यस्त्वा' इत्येषा प्रधानस्य याज्या। सूत्रितञ्च—'यस्त्वा हृदा कीरिणा मन्यमानोऽग्निस्तुविश्रवस्तमम्' (ASS. 2.10.) इति Sy.

२. हृता P. ३. योऽहम् BB.

४. यः and त्वा are omitted by P. त्वाम् Sy. BB.

५. दयेन P. हृदयेन युक्तः Sy. मनसा BB.

६. स्तुत्यादिषु विक्षिप्तेन Sy. कीर्तयता गुणकीर्तनशीलेन BB.

७. ईदृशेन हृदयेन...मन्यमानो जानन् BB.

८. अविनाशम् Sy. अमरणधर्माणम् BB.

९. ०र्त्यमर्त्यः P. मरणधर्माहम् Sy. मरणधर्मा मनुष्यः BB.

१०. अत्यर्थमाह्वयामि। यद्वा स्तोतृवाचकेन कीरिणाशब्देन स्तुतिरुपलक्ष्यते। स्तुतियुक्तेन मनसा त्वां मन्यमानो जोहवीमि Sy. यद्वा त्वदर्थमिदं हविर्जुहोमि BB.

११. जातवेदः is suggested for जातः ॥ हे जातवेदः ! Sy. जातानां वेदितो जातधनं वा BB. १२. येषां सम्बन्धी तवाह्वाताहं तेष्वस्मासु पुत्रपौत्रेषु BB.

१३. धनं प्रजां वा Sy.

१४. स्थापय। यशस्विनस्सर्वानस्मान् कुरु BB.

१५. पृजा० P. त्वद्दत्ताभिः Sy. ताभिः प्रजाभिः पुत्रादिभिरविच्छिन्नाभिः सहाहम् BB.

१६. सन्तत्यविच्छेदलक्षणम् Sy. दीर्घायुष्यम् BB.

१७. ०याम D., P. and D. add यश्च after प्राप्नुयाम् ॥ 'प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्' (TB. 1.5.5.6.) इति हि श्रुतिः Sy. व्यत्ययेन परस्मैपदम् BB.

१८. तस्यामेव पुत्रकामेष्टयां 'यस्मै त्वम्' इत्येषाग्नेः पुत्रवतोऽनुवाक्या। 'यस्मै त्वं सुकृते जातवेदो यस्त्वा हृदा कीरिणा मन्यमानः' (ASS. 2.10.) इति हि सूत्रितम् Sy.

१९. सुकर्मणे is suggested for कर्मणे। यजमानाय Sy. शोभनानि कर्माणि कृतवते BB.

२०. ०वेदः is suggested for ०वेद। हे जातवेदः ! Sy.

२१. अकरोः। यद्वा। लोकमालोकेन स्योनं कृणवः। अनुग्रहेण कुर्वित्यर्थः Sy. कुर्याः ॥ 'कृवि हिंसाकरणयोः' लेट् BB.

२२. ०कवावास० D. स्थानम् BB,

२३. सुखम् BB,

सः[1]। अश्ववन्तम्[2]। पुत्रवन्तम्[3]। वीरवन्तम्[4]। गोमन्तं[5] च। रयिम्[6]। अविनाशेन[7]। प्राप्नोति[8]।

V. 5.

**सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन। अग्नये जातवेदसे ॥ १ ॥**

सुसमिद्धाय[10]। सुष्ठु[11] समिध्यमानाय[12]। घृतम्[13]। तीव्ररसम्[14]। जुहोतन[15]। अग्नये[16]। जातप्रज्ञाय[17][18]।

**नराशंसः सुषूदतीमं यज्ञमदाभ्यः। कविर्हि मधुहस्त्यः ॥ २ ॥**

नराशंसः। नरैः शंसनीयम्[19]। सुष्ठु प्रेरयतीति[20]। इमम्। यज्ञम्[21]। अहिंस्यः[22]। कविः[23]। ह्ययम्। मादयितृहस्ताङ्गुलिकः[24]।

---

१. यजमानः Sy. स एव BB.
२. बह्वश्वोपेतम् Sy. अश्वादिसहितम् BB.
३. बहुपुत्रोपेतम् Sy.
४. वीरैर्वीर्येण वोपेतम् Sy.
५. शोभन्तम् P. गोभिर्युक्तम् Sy.
६. धनम् Sy. ७. ०यिसवि० D. अविनश्वरम् Sy. अविच्छेदेन BB.
८. नशतिर्गतिकर्मा। स एव त्वत्प्रसादाद्बह्वश्वो भवति, अश्वादिपुत्रपौत्रादिमांश्च भवति, अन्यैश्च विक्रान्तैः पुरुषैस्तद्वान् भवति। गोमहिष्यादिसङ्घातस्वामी महाधनश्च भवतीति BB.
९. VM. ignores उ and अग्ने ॥ उ इति पूरणः Sy. उ इत्यवधारणे।....यस्मा एव यदर्थमेव BB.
The stanza=TS. 1.4.46.1.
Ms. D. puts the figure ॥४॥ here to indicate the end of the fourth hymn. No such number is given in P.
१०. 'सुसमिद्धाय' इत्येकादशर्चं पञ्चमं सूक्तमात्रेयस्य बहुश्रुतस्यार्षं गायत्रमिध्माद्युक्तदेवताकम्। आप्रमित्युक्तत्वात्तनूनपाद्वर्जितम्। (Cf.KSA. 1.13. p. 6.) 'सुसमिद्धायाप्रं गायत्रम्' (KSA. 24.5. p. 19.) इत्यनुक्रमणिका। अत्रीणामिदमाप्रीसूक्तम्। 'समिद्धो अग्नेति सर्वेषां यथर्षि वा' (ASS. 3.2.) इत्युक्तत्वात् Sy.
११. ०द्धय D.
१२. सुष्ठु समिद्धायैतन्नामकायाग्नये Sy. शोभनतया सम्यग् दीप्ताय साधु समिद्धाय U.
१३. ०तवत् P. आज्यम् Sy. घृतेन Mah.
१४. प्रभूतम् Sy. तीव्रं स्वादुतमं समग्रं वा पटुतरं वा। ग्रहणोद्वासनाधिश्रयणावेक्षणादिभिः संस्कृतमित्यर्थः Mah. तीव्रं पटुतरं गव्यं ग्रहणोद्वासनाधिश्रयणावेक्षणादिभिः संस्कारैः संस्कृतमित्यर्थः U.
१५. जुहोतन हे ऋत्विजः! Sy. जुहुत Mah. कुरुत। नेत्यर्थका उपजना भवन्ति कर्तन हन्तन यातनेति U.
१६. अङ्गनादिगुणयुक्ताय Sy.
१७. जातधनाय Sy. जातं वेत्ति वेदयति वा जातवेदास्तस्मै जातप्रज्ञानाय वा Mah. जातप्रज्ञानाय U.
१८. VM. ignores शोचिषे ॥ दीप्तिमते Sy. अत एव शोचिषे शोचिष्मते दीप्तिमते ज्वलिताय Mah. शोचिषे शोचिष्मते....ज्वलनाय U.
This stanza=YV. 3.2.
१९. ०नीयः is suggested for नीयं ॥ नरैः शंसनीयोऽयमग्निः Sy.
२०. रयसीति P. D. २१. इदं हविर्वा Sy.
२२. ०स्य P. ०स्या D. स देवः अहिंस्यः केनापि Sy. २३. मेधावी Sy.
२४. मधुरहस्त्यः Sy.

**ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् । सुखै रथेभिरूतये ॥ ३ ॥**

ईळितः । स्तुतः[1] । अग्ने ! आवह । चित्रम्[2] । अस्मिन् यज्ञे । सुद्वारैः[3] । रथैः । रक्षणाय[4][5] ।

**ऊर्णम्रदा प्रथस्वाभ्य१र्का अनूषत । भवा नः शुभ्र सातये ॥ ४ ॥**

ऊर्णम्रदा[6] । हे ऊर्णवन्मृदु[7] ! त्वम् बर्हिरिव । विस्तीर्णं[8] भव । त्वां मन्त्राः[9] । अभ्यस्तुवन्[10] । भव । अस्माकम् । शोभन[11] ! मानाय[12] ।

**देवीर्द्वारो वि श्रयध्वं सुप्रायणा न ऊतये । प्रप्र यज्ञं पृणीतन ॥ ५ ॥**

देवीः । हे देव्यः[13] ! द्वारः[14] ! विघटिता[15] भवत । सुप्रगमनाः[16] । अस्माकम् । रक्षणाय[17] । यज्ञं[18] च । प्रपूरयत[19][20] ।

**सुप्रतीके वयोवृधा यह्वी ऋतस्य मातरा । दोषामुषासमीमहे ॥ ६ ॥**

सुप्रतीके[21] । शोभनावयवे[22] । अन्नस्य[23] वर्धयित्र्यौ । यज्ञस्य[24] । निर्मात्र्यौ । महत्यौ । रात्रिम्[25] । उषसं[26] च । अभिलषितं याचामहे[27] ।

---

१. स्तुतः सन् Sy.
२. ०हन् चि० P. ०हञ्चि० D. चायनीयम् Sy.
३. सुखैः Sy.
४. अस्मद्रक्षणाय Sy.
५. VM. ignores इन्द्रम् and प्रियम् ।
६. ०र्णामृ० P. ०र्णम्मृ० D.
७. ०वामृदु P. ऊर्णाकम्बलवत् मृदु हे बर्हिः ! Sy.
८. प्रथय Sy.
९. स्तोतारः Sy.
१०. स्तुवन्ति Sy.
११. शोभ P. हे दीप्त ! Sy.
१२. दानाय is suggested for मानाय ॥ धनाय तद्दानाय वा Sy.
१३. दे P.
१४. हे यज्ञस्य द्वाराभिमानिन्यः ! Sy.
१५. द्याविता P. वियुक्ता भवत Sy.
१६. शोभनगमनसाधनाः Sy.
१७. रक्षायै Sy.
१८. यं P. यजमानम् Sy.
१९. पूरयत कामैर्यज्ञमेव वा फलैः Sy.
२०. VM. explains प्र once only.
२१. हे अह्नो रात्रेश्चाभिमानिन्यौ ! देव्यौ ! Sy.
२२. सुरूपे ! शोभनाङ्गे ! वा Sy.
२३. ०यव अ० D.
२४. यज्ञस्य उदकस्य वा Sy.
२५. तयोर्मध्ये प्रत्येकं रात्रिदेवीम् Sy.
२६. अहर्देवीम् Sy.
२७. स्तुमः Sy.

वातस्य पत्मन्नीळिता दैव्या होतारा मनुषः । इमं नो यज्ञमा गतम् ॥ ७ ॥

वातस्य[1] । वातस्य[2] । पतनेऽन्तरिक्षे वर्तमानौ । स्तुतौ[3] । देव्यौ[4] । होतारौ[5] । मनुष्यस्य । युवाम् अस्मदीयम्[6] । इमम् । यज्ञम् । आगच्छतम् ।

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधः ॥ ८ ॥

इळा सरस्वती । इमाः[7] । तिस्रः । देव्यः । अक्षीणाः[8] । बर्हिरिदम्[9] । अधितिष्ठन्तु[10] ।[11]

शिवस्त्वष्टरिहा गहि विभुः पोष उत त्मना । यज्ञेयज्ञे न उदव ॥ ९ ॥

शिवस्त्वष्टः[12] । कल्याणः[13] । त्वष्टः[14] ! इह[15] । आगच्छ । पोषणे[16] । ईश्वरस्त्वम्[17] । आत्मनैव[18] । यज्ञे यज्ञे[19] । च[20] । अस्मान् । रक्ष[21] ।[22]

---

१. वस्ये P.

२. वातस्य पत्मन्—लुप्तोपमैषा । वायुगमनसदृशगमनार्थम् Sy.

३. अस्माभिः स्तुतौ । यद्वा पतनसाधनेऽन्तरिक्षे गच्छन्तौ Sy.

४. देवादग्नेरादित्याच्च समुद्भूतौ Sy.

५. देवानामाह्वातारौ युवाम् Sy.

६. अस्माकम् । नो मनुषो यज्ञमिति व्यधिकरणे षष्ठ्यौ । अस्माकं यजमानस्य यज्ञमित्यर्थः Sy.

७. It is the explanation of इळा, सरस्वती and मही ॥ इळा पृथिवी । सरस्वती सर उदकम् । तस्मात् सरस्वान् वायुः । तस्य स्त्री सरस्वती । मही महती भारती भरतस्यादित्यस्य पत्नी । अत्र यद्यप्येषा नोक्ता तथापि सर्वत्र सहदृष्टत्वात्, त्रिसंख्याश्रवणाच्च सा गृह्यते । अथवैताः क्षित्यन्तरिक्षद्युस्थाना वाग्देव्यः Sy.

८. ०यो दक्षिणाः P. अहिंसिकाः सत्यः Sy.

९. बर्हिषि Sy.

१०. उपविशन्तु Sy.

११. VM. ignores मयोभुवः ॥ मयोभुवः सुखस्य भावयित्र्यः Sy.

१२. ०स्तुष्टः D.

१३. कल्याः P. कल्या D. सुखकरः सन् Sy. सुखकरः BB.

१४. हे त्वष्टः ! देव ! Sy., BB.

१५. अस्मद्यज्ञम् Sy. अस्मिन् कर्मणि BB.

१६. पोषकरणे Sy. पुष्ट्यर्थमस्माकम् निमित्तात्सप्तमी BB.

१७. व्याप्तस्त्वम् Sy. व्याप्तिमान् BB.

१८. स्वयमेव Sy. आत्मना केवलेनापि, आत्मना ऽन्यनिरपेक्ष एव पोषं कर्तुं समर्थः BB.

१९. यज्ञ D. सर्वेषु यज्ञेषु Sy. सर्वस्मिन् यज्ञे BB.

२०. आगत्य च Sy.

२१. रक्ष Sy. पाहि प्रतियज्ञमुत्कृष्टं पाहीत्यर्थः BB. This stanza=TS. 3.1.11.2.

२२. VM. ignores उत् ॥ उत् उत्कृष्टम् Sy., BB.

यत्र॒ वेत्थ॑ वनस्पते दे॒वानां॒ गुह्या॒ नामा॑नि । तत्र॑ ह॒व्यानि॑ गामय ॥ १० ॥

यत्र[1] वेत्थ[2] । स्थितानां देवानाम् । गुह्यानि । इमानि[3] । तत्र गत्वा तैर्नामभिः । हव्यानि । तान्[4] गमय[5] ।

स्वाहा॒ग्नये॒ वरु॑णाय॒ स्वाहेन्द्रा॑य म॒रुद्भ्यः॑ । स्वाहा॑ दे॒वेभ्यो॑ ह॒विः ॥ ११ ॥

स्वाहा[6] । स्वाहुतमस्तु[7] । तेभ्यः[8] । देवेभ्यः । हविरपि वा स्वाहाकृणोमि[9] ।[10]

## V. 6.

अ॒ग्निं तं मन्ये॒ यो वसु॒रस्तं॒ यं यन्ति॑ धेनवः॑ ।
अस्त॒मर्व॑न्त आ॒शवोऽस्तं॒ नित्या॑सो वा॒जिन॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥ १ ॥

अग्निम्[11] । अग्निम् । तम् । स्तौमि[12] । यः[13] । वासयिता[14] । यज्ञं च गृहभूतम्[15] । धेनवः[16] । समागच्छन्ति[17] ।

---

१. अग्निहोत्रे उत्तराहुतिस्कन्दने 'यत्र वेत्थ' इत्यनया समिधमादध्यात् । सूत्रितञ्च 'यत्र वेत्थ वनस्पत इत्युत्तरस्या आहुत्याः स्कन्दने' (ASS. 3.11.) इति Sy.

२. वेथ P., D.

३. मानि P. नामानि is suggested for इमानि ॥ नामकानि रूपाणि Sy.

४. प्रापय Sy.

५. VM. ignores यत्र । वेत्थ and वनस्पते ॥ यस्मिन् स्थाने । हे वनस्पते ! यूपाभिमानिदेव ! Sy.

६. ०हां P. D.    ७. ०मस्ते P. D.

८. तेभ्यः refers to अग्नये । वरुणाय । इन्द्राय and मरुद्भ्यः ॥ अग्न्यादिविश्वे देवाः, तेभ्यः Sy.

९. करोमीति शेषः, स्वाहुतं करोमीत्यर्थः, एवं स्वाहाकृतेः स्तुतिः Sy.

१०. Ms. D. puts the figure ॥५॥ here to indicate the end of the fifth hymn. No such number is given in P.

११. 'अग्निं तं मन्ये' इति दशर्चं षष्ठं सूक्तं वसुश्रुतस्यार्षमाग्नेयं पाङ्क्तम् । 'अग्निं तं दश पाङ्क्तम्' इत्यनुक्रमणिका (KSA. 24.6. p. 19.) । प्रातरनुवाके आग्नेये क्रतौ पाङ्क्ते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । 'अग्निं तं मन्य इति पाङ्क्तम्' (ASS. 4.13.) इति हि सूत्रितम् । आश्वमेधिके मध्यमेऽहनीदमेव आज्यशस्त्रम् । सूत्रितञ्च 'अग्निं तं मन्य इत्याज्यं तस्यैकाहिकमुपरिष्टात्' (ASS. 10.10.) इति । आद्य आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्यानुरूपस्तृचः । सूत्रितञ्च—'अग्निं तं मन्ये यो वसुरग्ने स्थूरं रयिं भर' (ASS. 7.8.) इति Sy.

१२. जानामि Mah. जाने U.

१३. अग्निः Sy.

१४. वासकः Sy. तापपाकप्रकाशरूपकुर्वन् धनरूपो वसुरित्युच्यते । वसुर्वासयिता वा Mah. तापपाकप्रकाशरूपकुर्वन् धनमित्युच्यते । यद्वा वसुर्वासयिता U.

१५. सर्वेषां गृहवदाश्रयभूतम् Sy. गृहम् Mah., U.

१६. धेनवो गावो यमग्निमुद्धृतं ज्ञात्वा Mah., U.

१७. गच्छन्ति प्रीणयितुम् Sy. गच्छन्ति दोहकालोऽस्माकं होमार्थं प्राप्त इति Mah. प्राप्तोऽस्माकं दोहदकाल इति. . . .यन्ति U.

तथाश्वाश्च[1] । शीघ्रगन्तारः[2] । अजस्राः[3] । बलवन्तः[4] । त्वमन्नम्[5] । स्तोतृभ्यः[6] । आभर[7] ।[8]

**सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।**
**समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आ भर ॥ २ ॥**

सो अग्निः[9] । यः । गमनशीलः[10] । स्तूयते[11] । यश्च । निवसन्[12] । यं च[13] । समागच्छन्ति[14] । धेनवः । सम्[15] । अश्वाः । शीघ्रं गच्छन्ति[16] । सह गच्छन्ति[17] । शोभनजननाः[18] । प्राज्ञाः[19] ।[20]

---

१. अरणवन्तोऽश्वाः Sy. अश्वा यं दृष्ट्वाऽस्तं यजमानगृहं यन्ति गच्छन्ति Mah. स्वामी हि पशूनामग्निः । यत्तज्जातः पशूनविन्दतेत्युपक्रम्य 'तस्मात्सर्वानृतून्पशवोऽग्निमभिसंयन्ति इति श्रुतिः U.

२. शीघ्रगामिनः Sy., Mah. शीघ्राः U.

३. तथा नित्यप्रवृत्तयः Sy. नित्याः शाश्वताः सर्वकालभाविनः Mah. शाश्वतिकाः U.

४. हविर्लक्षणान्नवन्तो यजमानाः यमस्तं यान्ति तं मन्ये Sy. बलवन्तोऽश्वाः । सैन्धवाभिप्रायेण पुनर्वचनम् । यं दृष्ट्वाऽस्तं यन्ति । यमुपास्य गवाश्वादिकं लभ्यत इत्यर्थः Mah. सुहयाः । सैन्धवाभिप्रायमेतत् । य उपास्यमान एतत् सर्वं यजमानस्योत्पादयति तमग्निं मन्ये U.

५. बन्त रल वन्तस्त्वम् P. यदि स त्वमग्निः U.

६. अस्मभ्यम् Sy. स्तुतिकारिभ्यो यजमानेभ्यः Mah.

७. आभर अग्ने Sy. देहि Mah., U.

८. VM. ignores यम् and explains अस्तम् once only. This stanza=YV. 15.41.
तस्य प्रातः सवनम् । अग्निं तं मन्ये यो वसुरिति होता पाङ्क्तमाज्य शस्त्वैकाहिकमुपस शंसति बार्हतं च प्रउगं माधुच्छन्दसं च त्रिचश उभे स शं सति यश्च बार्हते प्रउगे कामो य उ च माधुच्छन्दसे तयोरुभयोः कामयोराप्त्यै क्लृप्तं प्रातःसवनम् । SB. 13.5.1.8. p. 988.

९. सोग्निः D.

१०. VM. seems to explain सः as यः and अग्निः as गमनशीलः ॥ स खल्वग्निः Sy.

११. स्तौमि 'गृ? (गॄ)शब्दे' स्वादिः? (त्र्यादिः) . . . यद्वा सोऽग्निर्गृणे स्तूयतेऽस्माभिः । कर्तृप्रत्ययस्य कर्मत्वं विधेयम् Mah. गीयते स्तोतृभिः U.

१२. VM. seems to explain वसुः as निवसन् ॥ योऽग्निर्वसुर्वासयिता सोऽग्निः । विभक्तिव्यत्ययः । तमग्निम् Mah. स एवाग्निर्यो वसुरिति U.

१३. यमग्निम् Mah.

१४. समायन्ति होमार्थम् Sy.

१५. It should come immediately before गच्छन्ति । समायन्ति होमार्थम् Sy.

१६. VM. explains रघुद्रवः as शीघ्रं गच्छन्ति । लघुगमनाः Sy. रलयोरैक्यम् । 'लघु क्षिप्रमरं द्रुतम् (Amar. 1.128.) लघु शीघ्रं द्रवन्ति गच्छन्ति लघुद्रुवः, 'द्रु वधगत्योः' स्वादिः ? (cf. द्रु द्रु गतौ भ्वादिः, द्रुञ् हिंसायाम्, त्र्यादिः) Mah. लघुद्रवणाः U.

१७. समायान्ति Sy. यदुपासकं सर्वे भजन्त इत्यर्थः Mah.

१८. सुजातासः Sy. शोभनं जातं जन्म येषां ते सुजातासः सुजाताः Mah. कल्याणजन्मानः U.

१९. मेधाविनश्च स खल्वग्निरिति Sy. सूरयः पण्डिताः । एतदुक्तं भवति । किं तेनाग्निना य एतत्सर्वमात्मद्वारा यजमानस्य नोपनयति । स चेत् त्वम् । इषं स्तोतृभ्य आभर U.

२०. This stanza=YV. 15.42.

**अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।**
**अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भर ॥ ३ ॥**

अग्निर्हि । अग्निः[1] । हि[2] । अश्वम्[3] । मनुष्याय[4] । प्रयच्छति[5] । विश्वस्य द्रष्टा[6] । अग्निः । धनार्थम्[7] । शोभनभवनम्[8] । वरणीयं हविः[9] । गच्छति[10] । सु[11] । प्रीतः[12] ।

**आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।**
**यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥ ४ ॥**

आ ते अग्ने[13] । हे अग्ने ! तव[14] । दीपयामः । दीप्तिमन्तम् । जरारहितं भानुम्[15] । यत् । खलु । त्वदीयं तेजः[16] । इयम्[17] । समित्[18] । अह्नि[19] । सन्दीपयति[20] । स्तुत्या । तमाम्[21][22] ।

**आ ते अग्न ऋचा हविः शुक्रस्य शोचिषस्पते ।**
**सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥ ५ ॥**

आ ते अग्ने । हे शुक्रस्य[23], शोचिषः[24], पते[25] ! अग्ने ! तुभ्यम् । ऋचा[26] । हविः । आहूयते[27] । हे सुकान्त[28] ! दर्शनीय[29] ! विशां पते[30] ! हविषां वोढः[31] ! हविस्तुभ्यम् । हूयते ।

---

१. ०ग्नि D. अयमग्निः Sy.
२. खलु Sy.
३. अन्नवन्तं पुत्रमश्वमन्नं वा Sy.
४. यजमानाय Sy. ५. ददाति Sy.
६. विश्वे चर्षणयो मनुष्या रक्षणीया अर्चका वा यस्य स तथोक्तः । यद्वा पश्यतिकर्मैतत् । सर्वस्य द्रष्टा Sy.
७. धनार्थिने । अथवा द्वितीयार्थे चतुर्थी, धनम् Sy.
८. सुष्ठु सर्वत्र व्याप्तम् Sy.
९. सर्वैर्वरणीयम् Sy.
१०. यमयति । दातुं वा गच्छति Sy.
११. सः is suggested for सु ।
१२. प्रीतः सन् Sy.
१३. आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोत्रियतृचस्य 'आ ते अग्न इधीमहि' इत्यादिके प्रथमाद्वितीये । सूत्रितञ्च भवति—'आ ते अग्न इधीमह्युभे सुचन्द्रसर्पिष इति द्वे एका च' (ĀSS. 7.8.) इति Sy.
१४. त्वाम् Sy. १५. बाहुं P. अजीर्णम् Sy.
१६. तव Sy. १७. इदं D. सा Sy.
१८. दीप्तिः Sy. १९. द्युलोके Sy.
२०. दीप्यते Sy.
२१. तमाम् seems to be a part of the verb सन्दीपयति, i.e. the verb should be read as सन्दीपयतितमाम् as an explanation of दीदयति ।
२२. VM. ignores आ and देव ॥ and आ सर्वतः Sy. २३. दीप्तस्य Sy.
२४. दीप्तेः Sy. २५. स्वामिन् ! Sy.
२६. ऋचा D. मन्त्रेण सह Sy.
२७. हूयते Sy.
२८. सुकर्मन् P. सुष्ठ्वाह्लादक ! शोभनहिरण्य ! वा Sy.
२९. हे शत्रूणामुपक्षपयितः ! Sy.
३०. प्रजानां पालक ! Sy.
३१. वोढा D. हविषो वोढः ! Sy.

प्रो त्ये अग्नयोऽग्निषु विश्वं पुष्यन्ति वार्यम् ।
ते हिंन्विरे त इंन्विरे त इंषण्यन्त्यानुषगिषं स्तोतृभ्य आ भंर ॥ ६ ॥

प्रो त्ये[1] । प्रपुष्यन्ति[2] । तेऽमी मदीयाः । अग्नयः[3] । अग्नीनां मध्ये[4] । वरणीयं धनम्[5] । सर्वम् । ते[6] । धनं प्रेरयन्ति[7] । तेऽस्मान्[8] । प्रीणयति[9] । तेऽस्माकम् । अन्नम् ।, अनुषक्तम्[10], इच्छन्ति ।

तव त्ये अंग्ने अर्चयो महिं व्राधन्त वाजिनंः ।
ये पत्वंभिः शफानां व्रजा भुरन्त गोनामिषं स्तोतृभ्य आ भंर ॥ ७ ॥

तव त्ये । तव[11] । त्ये[12] । अग्ने ! अर्चयः[13] । अत्यन्तम्[14] । वर्धयन्ति[15] । बलवन्तः[16] । ये[13] । शफानाम् । पतनैः । गवाम् । व्रजाः[17] । आगच्छन्ति[18] तान् प्रयच्छन्ति पशूनित्यर्थः ।

नवा नो अग्न आ भंर स्तोतृभ्यः सुक्षितीरिषंः ।
ते स्याम य आनृचुस्त्वादूंतासो दमेदम इषं स्तोतृभ्य आ भंर ॥ ८ ॥

नवा नः । नवाः[19] । अस्मभ्यम् । आभर[20] । अग्ने ! स्तोतृभ्यः । सुप्रजाः[21] । इषः[22] । ते वयं समृद्धाः । भवाम[23] । ये[24] त्वाम् । आनृचुः[25] । यज्ञे यज्ञे[26] । त्वं दूतो[27] येषामिति ।

---

१. त्यो P.
२. प्रो प्रैव Sy.
३. धिष्णयाः Sy.
४. गार्हपत्यादिषु । यद्वा लौकिका अग्नयस्तेजःपदार्थोऽग्निषु वैदिकेषु Sy.
५. वरणीयमपेक्षितं धनं पुष्यन्ति Sy.
६. अग्नयः Sy.
७. ०ति D. प्रीणयन्ति Sy.
८. तस्मात् D.
९. ०ति णि D. प्रीणयन्ति is suggested for प्रीणयति ॥ व्याप्नुवन्ति च Sy.
१०. VM. seems to explain इषण्यन्ति and आनुषक् together as अन्नमनुषक्तमिच्छन्ति ॥ सर्वत्रानुषक्तम् । तत्राग्निसामान्याभिप्रायेणैकवचनम् Sy.
११. त्वदीयाः Sy.
१२. ते Sy.
१३. रश्मयः Sy.
१४. महदत्यधिकम् Sy.
१५. वर्धन्ते Sy.
१६. ०वतः P. Omitted by D. अन्नवन्तो वा । यद्वा लुप्तोपमा वाजिनोऽश्वा इव Sy.
१७. यूथानि Sy.
१८. भुरन्त इच्छन्ति । आयाता ज्वाला होमाय काङ्क्षन्त इत्यर्थः । ते वर्धन्ते Sy.
१९. स्तुत्या नूतना वा Sy.
२०. प्रयच्छ Sy.
२१. सुनिवासाः सुप्रजा वा Sy.
२२. उक्तलक्षणान्यन्नानि Sy.
२३. भूयास्म । दमेदमे स्यामेति वा योज्यम् Sy.
२४. ये वयम् (?) Sy.
२५. अनृ० P. अर्चयन्ति Sy.
२६. सर्वेषु यागगृहेषु Sy.
२७. त्वां दूतं फलसूचकं लब्धवन्तः सन्तः Sy.

उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥ ९ ॥

उभे[1] सुश्चन्द्र । जुहूपभृतौ[2] । सुकान्त[3] ! सर्पिषः पूर्णे[4] । त्वामास्ये[5] । श्रयसि[6] । अपि च । अस्मान्[7] । उत्पूरय[8] । शवसः[9] । पुत्र[10] !

एवाँ अग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।
दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य आ भर ॥ १० ॥

एवाँ अग्निम्[11] । एवम्[12] । अग्निम् । अस्तुवन्[13] , अपि वा स्तुवन्ति यच्छन्तीत्याख्यातं[14] द्वेजयं[15] पदम्[16] ।

---

१. आभिप्लविकेषूक्थ्येषु तृतीयसवने वैकल्पिकस्तोत्रियतृचे 'उभे सुश्चन्द्र' इत्येषा तृतीया । सूत्रमुक्तम् (Cf. ĀŚS. 7.8.) Sy.

२. दर्व्याकारौ हस्तौ Mah. उभौ हस्तौ दर्व्याकारौ कृत्वा U. दर्वी हनू सर्पिषः सम्बन्धिन्यौ सर्पिस्संसिक्ते । दीर्यते भक्ष्यतेऽन्नमाभ्यामिति दर्वी ते BB.

३. हे शोभनाह्लादन ! शोभनहिरण्य वाग्ने ! Sy. चन्द्रमिति हिरण्यनाम (Ngh. 1.2.) शोभनं चन्द्रं हिरण्यं यस्मात् । यद्वा शोभनश्चन्द्र इव चन्द्रो धनदाता । शोभने चन्द्रे धनप्राप्तिर्भवतीति ज्योतिश्शास्त्र उक्तम् । यद्वा शोभनं चन्द्रत्याह्लादयति सुचन्द्रः । हे सुचन्द्र ! Mah. शोभनचन्द्र इव धनानामुत्पादक ! शोभने हि चन्द्रमसि धनान्युत्पद्यन्त इति ज्योतिश्शास्त्रविदः प्रतिजानन्ति । यद्वा कल्याणाह्लादन ! U. हे सुश्चन्द्र ! सुकान्त ! BB.

४. घृतस्य पानाय Mah.
सर्पिषः पानाय U.

५. आस्ये मुखे । सर्पिषः पानायेति शेषः Mah. आस्ये मुखे U. आस्ये BB.

६. श्रयसि पचसि वा Sy. आश्रयसि सेवसे । 'श्री पाके' क्र्यादिः । अत्राश्रयार्थः Mah. आश्लेषसि U. सदा सेवसे । यद्वा, उभे दर्वी सर्पिषः श्रीणीषे, सर्पिः प्रापयसि, सर्पिषा मिश्रीकुरुष्व BB.

७. नोऽस्मान् Mah. अस्माकम् BB.

८. उत्पूरय फलैः Sy. उत्कर्षेण पूरय धनैरिति शेषः Mah. अपि च त्वं ब्रूषे यदि नामोत्क्षिप्य सर्पिषो भाण्डमत्यर्थमञ्जलिं पूरयेरस्माकं साधु कृतं स्यात् U. उच्छ्रितं पूरय, सामर्थ्याद् धनं बलमेव वा, अविशेषणात् सर्वम् । अनिरुक्तत्वात् प्रजापतिरामन्त्र्यते । 'पूरी आप्यायने' BB.

९. हे बलस्य पालयितः ! Sy. बलस्याधिपते ! Mah. बलस्य पते ! U. बलस्य पातः ! BB.

१०. VM. ignores उभे and उक्थेषु ॥ यागेषु Sy. उक्थेषु शस्त्रवत्सु यज्ञेषु Mah. उक्थेषु यज्ञेषु U. उक्थेषु स्तोत्रवत्सु यज्ञेषु इषमन्नं स्तोतृभ्य आभर स्तोतृभ्य ऋत्विग्भ्य आभर BB.
This stanza=YV. 15.43.=TS. 2.2.12.7.

११. एषामग्निं D. एषां अग्निं P.

१२. यम् P. एषाम् D.
उक्तरीत्या Sy.

१३. स्तु० D. गच्छन्ति Sy.

१४. गच्छन्ति तथा कृत्वा यमुः यमयन्ति स्थापयन्ति । हविर्भिर्यजन्तीत्यर्थः । एवमात्रेयाः स्वान् परोक्षतया निर्दिशन्ति । अजुर्यमुरित्यत्र 'आख्यातमाख्यातेन क्रियासातत्ये' (Cf. Pa. 2.1.79.) इति समासः Sy.

१५. ०त P.

१६. द्विजातं is suggested for द्वेजयम् ।

स्तुतिभिः । हविर्भिश्च । अनुषक्तम् । स त्वं दधत्[2] । अस्मभ्यम्[3] । शोभनवीर्यम्[4] । अपि च । आशुगन्तार-मश्वसङ्घम्[5] । अपि वा द्वे एते पदे 'अजुः' 'यमुः' इति तत्र द्वितीयस्यापि निघातो दृष्टो यथा हिरण्यकर्ण[6] मणिग्रीवमिति नाम्नः[7] ।

## V. 7.

**सखा॑यः॒ सं वः॑ स॒म्यञ्च॒मिषं॒ स्तोमं॑ चा॒ग्नये॑ ।**
**वर्षि॑ष्ठाय क्षिती॒नामू॒र्जो नप्त्रे॒ सह॑स्वते ॥ १ ॥**

[8]सखायः सं वः । हे[9] सखायः[10] ! सम्प्रयच्छत[11] । यूयम्[12] । समीचीनम्[13] । स्तोमम्[14] । अन्नम्[15] । च ।

---

१. यज्ञैर्वा तत्साधनैर्हविर्भिर्वा Sy.
२. धारयति Sy.
३. अस्मासु Sy.
४. शोभनपुत्रादिकम् Sy.
५. आशवोऽश्वा यस्य भवन्ति स आश्वश्वः । तस्य भाव आश्वश्व्यं तदपि Sy.
६. ०कर्ष P. ०कण्ठं D.
७. VM. ignores त्यत् । इषम् etc. त्यत् तत् Sy.
Ms. D. puts the figure ॥६॥ here to indicate the end of the sixth hymn. No such number is given in P.
८. 'सखायः सं वः' इति दशर्चं सप्तमं सूक्तम् । आत्रेय इष ऋषिः । अन्त्या पङ्क्तिः, शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः । तथा चानुक्रान्तम्—'सखाय इषः पङ्क्त्यन्तम्' (KSA. 24.7. p. 19.) इति । प्रातरनुवाके आग्नेये क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चोत्तमावर्जमिदं सूक्तम् । सूत्रितञ्च—'सखायः सं वस्त्वामग्ने हविष्मन्त इति सूक्ते' (ĀSS. 4.13.) इति Sy.
९. P. and D. read इषः for सं वः ।
१०. हे सखिभूताः ! ऋत्विजः ! Sy. ऋत्विजः प्रति यजमानो ब्रूते—हे सखायः ! ऋत्विजः ! Mah. यजमान ऋत्विजः सम्बोधयति हे सखायः ! U. समानख्यानाः ! ऋत्विग्यजमानाः ! BB.
११. सं is omitted by P. संस्कुरुत । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः Sy. सम्पादयत । अग्न्यर्थं हविः कुरुत । त्रिवृत्पञ्चदशादिस्तोमं च वदतेत्यर्थः ।....समित्युपसर्गस्यापेक्षितः क्रियाशब्दोऽध्याहर्तव्यः Mah. सङ्गत्य शृणुत U. समारभध्वं कुरुत । एतत्क्रियाया अश्रुतत्वात्साकाङ्क्षत्वादुपसर्गसामर्थ्याद्युत्तरस्मिंश्च मन्त्रे विशेषस्य श्रुतत्वात् । तत्रायं विवेकः—अग्न य इषं स्तोमं च संहराम इत्यत्रोच्यते । सोऽग्निरस्मभ्यं विश्वानि वसूनि समाहरत्विन्त्युत्तरत्र वक्ष्यते BB.
१२. व्यत्ययेन प्रथमास्थाने द्वितीयाबहुवचनं कृत्वा वसादेशो व इति Mah. वो युष्मान् ब्रवीमि U. वो युष्मदर्थं युष्माकं श्रेयोऽर्थमस्मासु BB.
१३. सम्यञ्चम् Sy. सङ्गतमेकीभूतम् U. समीचीनमतिगुणम् BB.
१४. स्तोत्रम् Sy. स्तोमं चाग्नये Mah. स्तोमं च त्रिवृत्पञ्चदशादि U. स्तोत्रम् BB.
१५. अन्नम् is suggested for अन्तम् । हविर्लक्षणमन्नम् Mah., U. अन्नं पुरोडाशादिकं हविश्च BB.

अग्नये[1] । प्रजाम्[2] । अत्यन्तं वर्षित्रे[3] । अन्नस्य[4] । पौत्राय[5] । बलवते[6] ।[7]

कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने ।
अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ॥ २ ॥

कुत्रा चित्[8] । भवति[9] । यस्य[10] । सङ्गमने[11] । नरः[12] । रममाणाः[13] । नृणां सदने गृहे वर्तन्ते[14] । यम्[15] । च । अहन्तो यजमानाः[16] । समिन्धते[17] । सङ्गता जनयन्ति च[18] । जाताः, यामिति[19][20] ।[21]

सं यदिषो वनामहे सं हव्या मानुषाणाम् ।
उत द्युम्नस्य शवस ऋतस्य रश्मिमा ददे ॥ ३ ॥

सं यदिषः[22] । सम्भजामहे[23] । यदा । अन्नानि । ददेवाह[24]—संवनामिहे[25] । हवनीयानि[26] हवींषि ।

---

१. अग्ने P. अग्नये भरत U.
२. प्रजानाम् is suggested for प्रजाम् ॥ यजमानानामर्थाय Sy. मनुष्याणाम् । क्षियन्ति निवसन्ति भूमाविति क्षितयो नराः कर्तरि क्तिन् Mah.
निवासहेतूनां मध्येBB.
३. अतिशयेन प्रवृद्धाय प्रवृद्धतमाय Sy. श्रेष्ठाय वृद्धतमाय । सर्वपूज्यायेत्यर्थः Mah. पृथुतमाय U. प्रवृद्धतमाय BB.
४. अन्न P. बलस्य Sy. ऊर्जो जलस्य Mah. अपाम् U.
५. न पातयित्रे तत्पुत्राय वा Sy. अद्भ्यो वनस्पतयो जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः Mah. अद्भ्यश्च ओषधिवनस्पतयो जायन्ते ताभ्योऽग्निः U. नप्त्रे चतुर्थाय यथाऽन्नादाहुतिः, आहुतेरादित्य आदित्यादग्निरिति BB.
६. बलवते संस्कुरुतेति Sy. सहो बलमस्यास्तीति Mah. अतिशयेन बलवत ईदृशायास्मै BB.
७. This stanza=YV. 15.29.=TS. 2.6.11.4.
८. कुत्र P., D.
९. सोऽग्निः कुत्र वर्तत इति शेषः। कुत्रास्ते ? Sy. कुत्रचिदपि सर्वत्रापीति यावत् BB.
१०. अग्नेः Sy.
११. सम्प्राप्तौ Sy. BB.
१२. नेतार ऋत्विजः Sy. मनुष्याः BB.
१३. ममाणाः P. रमणा भवन्ति । रणनवन्तो वा गतिमन्तो वा 'रवि गतौ' BB.
१४. यागगृहे Sy. नरास्सीदन्ति यत्र यत्र सर्वत्र प्रदेशे BB.
१५. यमेवाग्निम् BB.
१६. अर्हन्तो is suggested for अहन्तो ॥ पूज्याः पूजयन्तो वा सन्तः Sy. महन्तः पूजयन्तो वा मनुष्याः BB.
१७. दीपयन्ति Sy., BB.
१८. सञ्जनयन्ति च अरण्याम् Sy. आधानादिना सम्यगुत्पादयन्ति BB.
१९. प्राणिनः Sy. यमग्निं जन्तवो मनुष्याः BB.
२०. यम् is suggested for याम् ।
२१. VM. ignores कुत्रा and चित् ॥ चिदिति पूजायाम् Sy.
This stanza=TS. 2.1.11.3.
२२. यमिषः D.
२३. सभ० D.
२४. तदेवाह is suggested for ददेवाह ।
२५. संवनामहे is suggested for संवनामिहे ॥ संसेवते Sy.
२६. वननीयानि P.

यजमानानाम्[1] । तदानीमयम्[2] । अन्नस्य[3] । वलस्य[4] च साधयितारम् । यज्ञस्य सम्बन्धिनम्[5] । रश्मिम्[6] । आदत्त[7] इति ।

**स स्मा कृणोति केतुमा नक्तं चिद्दूर आ सते ।**
**पावको यद्वनस्पतीन्प्र स्मा मिनात्यजरः ॥ ४ ॥**

**स स्मा कृणोति** । सः । खलु[8] । कृणोति[9] । प्रज्ञानम् । रात्रौ । अपि[10] । दूरे । अपि[11] । आसीनः[12] । अयं[13] पावकः । यदा । काष्ठानि[14] । प्रकर्षेण हिनस्ति[15] । समिद्धः[16][17] ।

**अव स्म यस्य वेषणे स्वेदं पथिषु जुह्वति ।**
**अभीमह स्वजेन्यं भूमा पृष्ठेव रुरुहुः ॥ ५ ॥**

**अव स्म**[18] । अवजुह्वति[19] भूम्याम् । मार्गेषु[20] स्थिताः वनस्पतयः । दावरूपस्य[21] । व्याप्तौ[22] । स्वेदजलम्[23] । तेन[24] दध्वा[25] अपि स्वभूतजायमानपदार्थाम्[26] । भूमिम्[27] । एनाम्[28] । पुनश्चाभ्यारोहयन्ति[29] । एव[30] । यथाश्वपृष्ठान्यश्वारोहाः[31][32] ।

---

१. मनुष्याणामस्माकम् Sy.
२. ०नीं यम् P.
३. द्योतमानस्यान्नस्य Sy.
४. बलेन सामर्थ्येन Sy.
५. उदकस्य ग्राहकम् Sy. अस्माकमस्य ऋतस्य सत्यस्य BB.
६. रश्मिमिममग्निम् BB.
७. आदत्तेऽग्निः । फलजनकं तेजः स्वीकृतवान् यद्वा ऋतस्य यज्ञस्य रश्मिं रश्मिवत् ग्राहकं स्तवम्, आददे स्वीकरोति Sy. आददीमहे । वचनव्यत्ययः । आश्रयामह इत्यर्थः BB. This stanza=TS. 2.1.11.3.
८. अग्निः Sy.
९. सः । खलु and कृणोति are omitted by P. करोति Sy.
१०. VM. seems to explain आ as अपि ॥ आ सर्वतः Sy.
११. चिदप्यर्थे Sy.
१२. वर्तमानाय मनुष्याय Sy.
१३. अयमग्निः Sy.
१४. एधांसि Sy.
१५. प्रकर्षेण दहति Sy.
१६. अजीर्णोऽनभिभाव्यः सन् Sy.
१७. VM. ignores स्म ॥ स्मेति पूरणः Sy.
१८. भव स्म D. भवन् P.
१९. अपजु० P. अधोमुखं जुह्वति अध्वर्यवः Sy.
२०. होममार्गेषु रश्मिषु Sy.
२१. दा वरुणस्य P. दावरूपस्य seems to be the explanation of यस्य which stands for अग्नेः ।
२२. परिचर्यायाम् Sy.
२३. स्रवदाज्यम् Sy.
२४. P. reads ते तेन ते for तेन ।
२५. दग्धाः is suggested for दध्वा ।
२६. ०मानाः पदार्थं P. स्वोत्पन्नम् Sy.
२७. बहु भवतीति भूमापत्यम् । तत् Sy.
२८. तदानीमेनमग्निम् Sy.
२९. अभ्यारोहन्त्येवाज्यधाराः Sy.
३०. अह इति विनिग्रहार्थीयः Cf. N. 1.5.
३१. पृष्ठेव । पितुः पृष्ठदेशानिव, पुत्रा यथा पितुरङ्कमारोहन्ति तद्वत् Sy.
३२. VM. ignores स्म ।

यं मर्त्यैः पुरुस्पृहं विदद्विश्वस्य धायसे ।
प्र स्वादनं पितूनामस्तंतातिं चिदायवे ॥ ६ ॥

यं मर्त्याः[1] । यम्[2] । मनुष्याः[3] । बहुभिः स्पृहणीयम् । प्रविदन्ति[4] । विश्वस्य[5] । धारणार्थम्[6] । अन्नानाम् । स्वादुकर्तारम्[7] । च[8] । मनुष्याय[9] । निरस्तधनम्[10] —दत्तधनमुत्तरत्र सम्बन्धः ।

स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः ।
हिरिश्मश्रुः शुचिदन्नृभुरनिभृष्टतविषिः ॥ ७ ॥

स हि ष्म । सः[11] । हि । खलु । निरुदकं देशम्[12] । वनस्पतिभिरधिष्ठितम्[13] । छेत्ता[14] । इव । आच्छिनत्ति[15] । पशुरित्यग्निमाह[16] । हरितवर्णज्वालः[17] । शुचिदन्[18] । दीप्यमानः[19] । अनपभ्रष्टबलः[20] ।

शुचिः ष्म यस्मा अत्रिवत्प्र स्वधितीव रीयते ।
सुषूरसूत माता क्राणा यदानशे भगम् ॥ ८ ॥

शुचिः । शुचिः—भानुः[21] । यस्मा अग्नये । अदनीययुक्तां भूमिम्[22] । परशुरिव छिन्दन्[23] । प्रगच्छति तम् । सुषूः[24] । मातौषधिः[25] । असूत । कर्म कुर्वाणा[26] । यत्[27] । एनं भजनीयं पुत्रम्[28] । व्याप्तवती तस्मात्[29] सुसूतिरिति[30][31] ।

---

१. यं मर्त्याः omitted by P. VM. reads मर्त्याः for मर्त्यैः of the Vedic hymn.
२. अग्निम् Sy.
३. ०ष्यो P. यजमानः Sy.
४. वेत्ति Sy.
५. सर्वस्य Sy.
६. व्यापारार्थम् Sy.
७. प्रकर्षेण स्वादूकर्तारम् Sy.
८. चित् पूरणः Sy.
९. अन्नार्थं यजमानार्थं वा Sy.
१०. ०न P. अस्ते गृहे निवासकर्तारम् Sy.
११. अग्निः Sy.
१२. निरुदकं प्रदेशम् Sy.
१३. तृणकाष्ठादिभिराक्षिप्तम् Sy.
१४. तृणादि खण्डयिता Sy.
१५. सर्वतः खण्डयति दहतीत्यर्थः Sy.
१६. पशुरिव पशुर्यथा तृणजातं क्रमेण भक्षयति तद्वत् Sy.
१७. हिरण्यश्मश्रुः Sy.
१८. दीप्तदन्तः Sy.
१९. उरु भवन् । महानित्यर्थः Sy.
२०. अनवभ्र० D. अपीडितबलः Sy.
२१. अयमग्निः शुचिः दीप्तः Sy.
२२. अत्रिरिव यजमानो हविर्दातुम् यद्वा शुचिर्यस्मै । प्रथमार्थे चतुर्थी । दीप्तो योऽत्रिवत्, अत्ति तृणमित्यत्रिः पशुः । स इव । स यथा तृणानि खादमानो गच्छति तद्वद्दहतीत्यर्थः Sy.
२३. छित् P.
२४. सुप्रसवा Sy.
२५. मातोतोषधीः P. अरणिः Sy.
२६. ०णः P. कुर्वाणं जगदुपकारकम् Sy.
२७. यस्माद्य इति वा । योऽग्निः Sy.
२८. भगम् अन्नम् Sy.
२९. अश्नुते Sy.
३०. सुसूतीति P.
३१. VM. ignores स्म ॥ खलु यद्वा स्मेति पूरणः Sy.

आ यस्ते॑ स॒र्पिरा॑सु॒तेऽग्ने॒ शमस्ति॒ धाय॑से ।
ऐषु॑ द्यु॒म्नमु॒त श्रव॒ आ चि॒त्तं मर्त्ये॑षु धाः ॥ ९ ॥

**आ यस्ते[1]** । आधेहि तम् । यः[2] । ते[3] । हे सर्पिरासुते ! सर्पियस्मिन्नासूयते[4] हूयते । अग्ने ! शमयितारोहणम्[5] । अस्ति रस्मिः[6] । तद्धारणार्थम्[7] । तथैष[8] । द्योतमानम्[9] । अन्नम् । त्वदीयं[10] वित्तम्[11] । च । आधेहि । मनुष्येषु[12] ।

इति॑ चि॒न्मन्यु॑म॒ध्रिज॒स्त्वादा॑त॒मा प॒शुं द॑दे ।
आद॑ग्ने॒ अपृ॑ण॒तोऽत्रिः॑ सासह्या॒द्दस्यू॑नि॒षः सा॑सह्या॒न्नॄन् ॥ १० ॥

**इति चित्** । इति[13] । चित् । पूज्यम्[14] । अत्रिकुलजातं[15] छान्दसो धकारः । त्वया[16] दत्तम् । पशुम् । आददे[17] । अनन्तरम्[18] । अग्ने[19] ! अप्रयच्छतः[20] । दस्यून्[21] । अयमात्रेयः[22] । इष ऋषिः । भिर्भवतु[23] । मनुष्यान्[24][25] ।

---

१. D. reads अयन्ते for आयस्ते

२. यस्त्वम् Sy.

३. तुभ्यम् Sy.

४. सर्पिर्यस्मिन् is suggested for सर्पियस्मिन् ॥ हे घृताख्यान्न ? Sy.

५. शं सुखमस्ति । स्तुतेः सकाशात् Sy.

६. रश्मिः is suggested for रस्मिः ।

७. सर्वस्य धात्रे Sy.

८. तथैषु is suggested for तथैष । स्तोतृष्वात्रेयेषु Sy.

९. द्युम्नं यशः Sy.

१०. ०य P.

११. चित्तम् is suggested for वित्तम् । त्वदीयामनुग्रहबुद्धिमपि Sy.

१२. VM. ignores आ ॥ सर्वतो भवसि Sy.

१३. इत्थं कृतप्रकारेण Sy.

१४. मन्युं मननसाधनं स्तोत्रम् Sy.

१५. अध्रिजः अधृतमन्यैरग्निव्यतिरिक्तैरधृष्यं वा जनयिता ऋषिः Sy.

१६. त्वया दातव्यम् Sy.

१७. आदत्ते । आददीत वा Sy.

१८. अनन्तरमेव Sy.

१९. Sy. seems to read अग्नेः for अग्ने of the Vedic hymn.

२०. अददतः Sy.

२१. नस्यून् P.

२२. तद्गोत्रः Sy.

२३. अभिभवतु is suggested for भिर्भवतु भृशमभिभवेत् Sy.

२४. इष एष्टॄन् विरोधिनः Sy.

२५. VM. explains ससह्यात् once. ॥ पुनरुक्तिरादरार्था Sy.
Ms. D. puts the figure ॥८॥ here to indicate the end of the seventh hymn. No such number is given in P.

## V. 8.

त्वामग्न ऋतायवः समीधिरे प्रत्नं प्रत्नास ऊतये सहस्कृत ।
पुरुश्चन्द्रं यजतं विश्वधायसं दमूनसं गृहपतिं वरेण्यम् ॥ १ ॥

त्वामग्ने[1] । त्वाम्[2] । अग्ने ! यज्ञमिच्छमानाः[3] । सन्दीपयन्ति[4] । प्रत्नम्[5] । प्रत्नाः[6] । रक्षणार्थम्[7] । सहसा कृत ![8] बहूनां हर्षकम्[9] । यजनीयम्[10] । विश्वस्य धर्तारम्[11] । दममनसम्[12] । गृहपतिम्[13] । वरणीयम् ।

त्वामग्ने अतिथिं पूर्व्यं विशः शोचिष्केशं गृहपतिं नि षेदिरे ।
बृहत्केतुं पुरुरूपं धनस्पृतं सुशर्माणं स्ववसं जरद्विषम् ॥ २ ॥

त्वामग्ने । त्वाम् । अग्ने ! अतिथिमुख्यम्[14] । ज्वालाकेशम्[15][16] । गृहपतिम्[17] । मनुष्याः[18] । प्रतिनिषीदन्ति[19] । बृहज्ज्वालम्[20] । बहुरूपम्[21] । धनस्य स्रष्टारम्[22] । सुसुखम्[23] । स्वन्नम्[24] । जीर्णशत्रुकम्[25] ।

---

१. 'त्वामग्ने' इति सप्तर्चमष्टमं सूक्तमात्रेयस्य इषस्यार्षं जागतमाग्नेयम् । 'त्वामग्ने सप्त जागतम्' (KSA. 24.8. p. 19.) इत्यनुक्रमणिका । प्रातरनुवाके आग्नेये क्रतौ जागते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । तथा च सूत्रितम्—'जनस्य गोपास्त्वमग्न ऋतायवः' (ĀSS. 4.13.) इति Sy.

२. त्वाम् । अग्ने are omitted by P.

३. इच्छन्तः is suggested for इच्छमानाः ॥ यज्ञकामा ऋषयः Sy.

४. सम्यग्दीपितवन्तः Sy.

५. प्रश्नम् P. पुरातनम् Sy.

६. प्रश्नाः P.
पुरातनाः Sy.

७. स्वरक्षणाय Sy.

८. हे बलस्य कर्तः ! Sy.

९. कीदृशं त्वाम् P. बहुधनमतिशयेनाह्लादकं वा

१०. यष्टव्यम् Sy

११. बह्वन्नम् Sy.

१२. दानमनसम् Sy.

१३. यजमानगृहस्य पालकम् Sy.

१४. ०थिम् is suggested for ०थि ॥ कीदृशं त्वाम् ? अतिथिवत् पूज्यम् Sy.

१५. पुरातनम् Sy.

१६. दीप्तज्वालम् Sy.

१७. ग्रह० D.
गृहस्वामिनम् Sy.

१८. यजमानाः Sy.

१९. गार्हपत्यरूपेण स्थापितवन्त इत्यर्थः Sy.

२०. ०हज्ज्वा० is suggested for ०हुज्वा० ॥ प्रभूतप्रज्ञानम् Sy.

२१. आहवनीयादिरूपेण बहुरूपम् Sy.

२२. स्पृ० P.
धनानां स्पर्शितारम् Sy.

२३. शोभनसुखम् Sy.

२४. ०न्न P. सुरक्षणम् Sy.

२५. जरतां वृक्षाणां व्यापकं जीर्णोदकं वा Sy.

**त्वाम॑ग्ने मानु॑षीरीळते विशो॑ होत्रावि॒दं विवि॑चिं रत्न॒धात॑मम् ।**
**गुहा॒ सन्तं॑ सुभग वि॒श्वद॑र्शतं तुविष्व॒णसं॑ सु॒यजं॑ घृत॒श्रिय॑म् ॥ ३ ॥**

त्वामग्ने[1] । त्वाम् । अग्ने ! मनुष्यसम्बन्धिन्यः[2] । विशः[3] । स्तुवन्ति । स्तोत्रविदम्[4] । विवेचकम्[5] । रत्नानां धातृतममग्निरणेषु[6] गुहायाम्[7] । वर्तमानम्[8] । हे सुधन[9] ! विश्वस्य दर्शनीयम्[10] । महास्वनम्[11] । सुष्ठु यष्टारम्[12] । यस्त्वं[13] घृतं श्रयति[14] ।

**त्वाम॑ग्ने धर्ण॒सिं वि॒श्वधा॑ व॒यं गी॒र्भिर्गृ॒णन्तो॒ नम॒सोप॑ सेदिम ।**
**स नो॑ जुषस्व समिधा॒नो अ॑ङ्गिरो दे॒वो मर्त॑स्य य॒शसा॑ सु॒दीति॒भिः॑ ॥ ४ ॥**

त्वामग्ने । त्वाम् । अग्ने ! धारयितारम्[15] । सर्वदा[16] । वयम्[17] । गीर्भिः । स्तुवन्तः । नमस्कारेण च । उप सेदिम[18] । सः[19] । अस्मान्[20] । सेवस्व[21] । समिध्यमानः[22] । अङ्गिरसाम्[23] । एकदेवः[24] । मनुष्यस्य[25] । यशोऽर्थम्[26] । शोभनदानैः[27] ।

---

१. अग्नीनां परस्परं संसर्गे विविचयेऽग्नये काचिदिष्टिः । तत्र 'त्वामग्ने मानुषीः' इति याज्या । सूत्रितञ्च 'त्वामग्ने मानुषीरीळते विशोऽग्न आयाहि वीतये' (ĀSS. 3.13.) इति Sy.
२. मानुषसम्बन्धिन्यः Sy. मनुष्याः BB.
३. सर्वाः प्रजाः Sy. प्रजाः BB.
४. कीदृशं त्वाम् ?-होत्राणां होमानां सप्तहोत्रकाणां वा वेत्तारम् Sy. वाग्विशेषज्ञम् BB.
५. विवेचकं सदसतोः Sy. मिश्रितानां शोधकम् BB.
६. रमणीयानां धनानां दातृतमम् Sy. रमणीयानां धनानां धातृतमं दातृतमम् BB.
७. अग्निम् । अरणिषु is suggested for अग्निरणेषु ॥ अरण्यां हृदयेषु वा Sy. गुहायां सन्तं गुह्यम् । सप्तम्या आकारः BB.
८. सर्वदा वर्तमानम् Sy.
९. शोभनधन ! Sy. सर्वस्य प्रिय ! यद्वा शोभनधन ! BB.
१०. सर्वैर्द्रष्टव्यम् Sy. विश्वस्य दर्शितारम् । विश्वं दर्शनमस्येति बहुव्रीहिः BB.
११. प्रभूतध्वनिम् Sy. प्रवृद्धमनसं, महाबलमित्येके । बहूनां मन्तारमिति मन्ये BB,
१२. वैगुण्यापनोदनम् BB.
१३. यं स्त्वं P.
१४. श्रयसि is suggested for श्रयति ॥ घृतं श्रयन्तम् Sy. घृतस्य श्रयितारम् ईदृशं त्वामीडते प्रजाः त्वं चाभिप्रेतैर्योजय सर्वतोऽस्मदभिप्रेतमपि साधयसि BB.
This stanza=TS. 3.3.11.2.
१५. सर्वस्य धारकम् Sy.
१६. बहुप्रकारेण Sy.
१७. आत्रेयाः Sy.
१८. उपसन्ना भवेम Sy.
१९. स त्वम् Sy.
२०. ०त् D.
२१. सेवस्व धनादिभिः Sy.
२२ सम्यग्दीप्तो दीप्यमानोऽस्माभिः Sy.
२३. हे सर्वत्र गन्तः ! अङ्गिरसः पुत्र ! वा Sy.
२४. दीप्यमानस्त्वम् Sy.
२५. यजमानस्य Sy.
२६. यंशार्थं P.
यशसा Sy.
२७. ज्वालाभिः सह जुषस्व Sy,

त्वम॑ग्ने पुरुरूपो॑ वि॒शेवि॑शे वयो॑ दधासि प्र॒त्नथा॑ पुरुष्टुत ।
पु॒रूण्यन्ना॒ सह॑सा वि रा॑जसि॒ त्विषि॒ः सा ते॑ तित्विषा॒णस्य॒ नाधृषे॑ ॥ ५ ॥

त्वमग्ने । त्वम् । अग्ने ! बहुरूपः[1] । मनुष्याय[2] । अन्नम् । प्रयच्छसि[3] । प्रत्न इव[4] । पित्रादिभिः स्तुत[5] । बहूनि[6] । अन्नानि । बलेन भक्षयन् । विराजसि[7] । दीप्तिः । सा[8] । तव[9] । दीप्यमानस्य[10] । न । धर्षयितु शक्यते[11] ।[12]

त्वाम॑ग्ने समिधा॒नं य॑विष्ठ्य दे॒वा दू॒तं च॑क्रिरे हव्य॒वाह॑नम् ।
उ॒रु॒ज्रय॑सं घृ॒तयो॑निमाहु॑तं त्वे॒षं चक्षु॑र्दधिरे चोद॒यन्म॑ति ॥ ६ ॥

त्वामग्ने । त्वाम् । अग्ने ! समिध्यमानम्[13] । युवतम[14] ! देवाः । दूतम् । कृतवन्तः[15] । हविषां वोढा-रम् । बहुवेगम्[16] । घृतस्थानम्[17] । आहुतम्[18] । दीप्यमानम्[19] ! चक्षुः[20] । दधिरे[21] । चोदयन्मति[22] शत्रो[23] यस्य बलमेनं चोदयति ।

त्वाम॑ग्ने प्र॒दिव॒ आहु॑तं घृ॒तैः सु॑म्नाय॒वः सु॒षमिधा॒ समी॑धिरे ।
स वा॑वृधा॒न ओष॑धीभिरु॒क्षि॒तो॒३॒॑भि ज्रयां॑सि॒ पार्थि॑वा॒ वि ति॑ष्ठसे ॥ ७ ॥

त्वामग्ने । त्वाम् । अग्ने ! पुराणम्[24] । घृतैः । आहुतम् । सुखमिच्छमानाः[25] । शोभनया समिधा[26] ।

---

१. पुरुरूपः सन् Sy.
२. सर्वस्मै यजमानाय Sy.
३. धारयसि Sy.
४. पुराण इव Sy.
५. बहुभिः स्तुत ! Sy.
६. चरुपुरोडाशादीनि Sy.
७. ईश्वरो भवसि स्वीकर्तुम् Sy.
८. प्रसिद्धा Sy.
९. त D.
१०. दीप्तस्य Sy.
११. अन्यैरधृष्या भवति Sy.
१२. VM. explains विशे once only.
१३. सम्यगिध्यमानम् Sy.
१४. ०मं D.
१५. त्रयाणामग्नीनां मध्ये हव्यवाहनः खलु पूर्वं देवैर्हविर्वहनाय दूतः कृतः । 'हव्यवाहनो देवानाम्' (TS. 2.5.8.6.) इति हि श्रुतिः Sy.
१६. प्रभूतवेगम् Sy.
१७. घृतं योनिः कारणं यस्य तम् Sy.
१८. आहुतं त्वाम् Sy.
१९. दीप्तम् Sy.
२०. उक्तलक्षणं सर्वप्रकाशकं चक्षुःस्थानीयं कृत्वा Sy.
२१. दधिरे देवा मनुष्याश्च Sy.
२२. ०दयन् पति P. ०दयनवति D. चोदयन्ती मतिर्यस्य तच्चोदयन्मति । मत्या हि चक्षुश्चोद्यते Sy.
२३. शत्रोर्य० is suggested for शत्रोय ।
२४. पुरातनाः Sy.
२५. इच्छन्तः is suggested for इच्छमानाः ॥ सुखमिच्छन्तो यजमानाः Sy,
२६. शोभनेनेध्मेन Sy.

सम्[1]। वर्धमानः। ओषधीभिः। उक्षित[2]। पार्थिवानि[3]। यजमानानां शत्रुबलानि[4]। अभि[5]। विविधं गच्छसि[6]।

ऋगर्थदीपिका चेयं तृतीयश्चायमष्टकः।
कर्ता श्रीवेङ्कटार्यस्य[7] तनयो माधवाह्वयः॥

# [ अथ चतुर्थोऽष्टकः ॥ ][8]

चतुर्थोऽथाष्टकस्तस्मिन्नध्यायादिषु[9] वक्ष्यते।
शब्देष्वावर्तमानेषु यद्वाच्यमिह वैदिकैः[10] ॥१॥

समानशब्दा आवृत्ता[11] भवन्ति पदपूरणाः[12]।
पर्यायेषु तु निब्रूयादिच्छयान्यतमं[13] बुधः ॥२॥

अप्रसिद्धः प्रसिद्धश्च सङ्गच्छेते यदि क्वचित्।
तत्राप्रसिद्धं निर्ब्रूयान्न प्रसिद्धमिति स्थितिः ॥३॥

जायते त्वष्टुरर्वाशुरश्व[14][15] इत्यत्र सङ्गताः।
अर्वन्तमाशुं निर्ब्रूयान्नत्वश्वं[16] सार्वलौकिकम् ॥४॥

---

१. Something seems to be omitted after सम्।
२. उक्षितः is suggested for उक्षित॥ सिक्तः Sy.
३. पार्थिवान् वृक्षान्। यद्वा पार्थिवेति त्रयोविशेषणम्। पार्थिवानि चरुपुरोडाशादिकानि Sy.
४. त्रयांसि अन्नानि Sy.
५. अभिव्यज्य वर्तसे Sy.
६. VM. ignores ईधिरे॥ समीधिरे सम्यक् दीपितवन्तः Sy. Ms. D. puts the figure ॥ ८ ॥ here to indicate the end of the eighth hymn. No such number is given in P. and M.
७. व्याख्या श्रीवेंकिटार्य P.
८. The matter within brackets is supplied by the Editor.
९. ०र्थाष्ट० P.
१०. ०कैं D.
११. ०वर्ता P., D.
१२. पाद० P.
१३. निर्ब्रूया० is suggested for निब्रूया०
१४. ०ष्टूर० P., D.
१५. रञ्च P. Cf. VS. 29.9.
१६. अर्व अर्वमाशुन्निब्रू० P.

ऋचि "विश्वंस्य ही"त्यस्यां सूनरि[१]त्यादिषु त्रिषु ।
उषसो नामधेयेषु निब्रूया[२]दिच्छया बुधः ॥५॥
नापेक्षते[३] निर्वचनं भिन्नास्वृक्षु यथा नरः[४] ।
तथैव पादभेदेऽपि केचिन्नेच्छन्ति निर्वच[५] ॥६॥
नामा[६]ख्यातोपसर्गाणां निपातानां तथैव च ।
पारुच्छेपीषु दृश्यन्ते बहवः पाद[७]पूरणाः ॥७॥
सहसो जातवेदसं[८] विप्रं[९] न जातवेदसम्[१०] ।
नान्यस्तत्रो[११]भयोरर्थो द्वयोर्ह्यर्थोत्र कीर्त्यते ॥८॥
जातप्रज्ञं विप्रमिव जातप्रज्ञमितीदृशी[१२] ।
वचनव्यक्तिरत्रास्ति तस्यान्या[१३]वप्यपेक्षितौ[१४] ॥९॥
नैतच्च युज्यते यस्मात् कवितात्र प्रतीयते[१५] ।
'यदिन्द्राग्नी अव[१६]मस्याम्' इत्यृचोः[१७] कविता यथा ॥१०॥
एवमत्रापि कविता विपर्यासात् प्रतीयते ।
ननु श्रद्धातिरेको ऽत्र पुनरुक्त्या प्रतीयते ॥११॥

---

१. ०नरीत्या० is suggested for ०नरित्या० ।
२. निर्ब्रूया० is suggested for निब्रूया० ।
३. ०न्ते R.
४. नराः R.
५. निर्वचः is suggested for निर्वच ॥
६. नोमा० P. D.
७. पाद is omitted by P. D. Cf. RV.I. 127.1.
८. ०सि P.
९. ना P.
१०. ०स P. D.
११. ०स्त्यत्रोरुभ० P. D.
१२. ०शि P.
१३. ०न्वावप्य० P. D.
१४. D. adds निस्थिराणि चिदोजसा पादस्तद्ध्रंस्तु पूरणः after अपेक्षितौ ।
P. adds निस्थिराणि चिदोजसा अभ्यासान्नतु चात्रापि भूयानर्थः प्रतीयते after अपेक्षितौ ।
१५. Omitted by P.
१६. अमस्याम् P. D. RV.I. 108.9.
१७. ०चो D.

आ द्वाभ्यां हरिभ्यामिन्द्र याहीत्यादौ[1] यथा तथा ।
सत्यर्थे कविता तस्मान्नासतीति[2] विपश्चितः ॥१२॥
एवं च पूरणः पादो "नि स्थिराणि चिदोजसा"[3] ।
अभ्यासान्नतु चात्रापि भूयानर्थः प्रतीयते ॥१३॥
नेति ब्रुवन्त्यप्रतीतेः पादोऽयं पूरणस्ततः ।
ऋषिप्रयुक्ता चावृत्तिर्नन्वन्यत्र[4] च दृश्यते ॥१४॥
अया रुचा हरिण्येति[5] तृचस्तत्र निदर्शनम् ।
परुच्छेपस्य[6] तनयस्तमद्राक्षीदनानतः[7] ॥१५॥
ततः पितृवदभ्यासात्तच्छीलस्यात्र[8] युज्यते ।
परुच्छेपो ऽपि ननु च नावर्तयति तद्यथा ॥१६॥
'उभे[9] पुनामि[10] रोदसी'[11] 'पिशङ्गभृष्टिमम्भृणम्'[12] ।
तस्माच्छन्दःस्वभावोऽयमिति[13] वृद्धेभ्य आगमः ॥१७॥
ऊर्ध्वं जगत्याश्छन्दांसि[14] पूर्यन्ते सदृशैः पदैः ।
तानि[15] द्रष्टुमशक्यानि वृत्तदैर्घ्याद् भवन्त्यतः ॥१८॥
तैरेव शब्दैः पूर्यन्ते प्रायेणेति विनिश्चयः ।
वामदेवो मण्डलादावृचस्तिस्रो ददर्श ताः[16] ॥१९॥

---

१. RV.II.18.4.
२. तस्मादस० R.
३. RV.I.127.4.
४. ०वृत्ति न्वत्र P. ०र्नत्वन्यत्र R.
५. RV.IX. 111.1.
६. पार० D. पारुच्छेप P.
७. ०यतम० P.
८. ०त्तच्छिवस्या० P. ०भ्यासस्तत्सुतस्या० R.
९. Omitted by P. D.
१०. भैनामि D.
११. RV.I. 133.1.
१२. पिशंगभूषिमभ्रिणं P. पिशंगभूषितमभ्रिणं D. RV.I. 133.5.
१३. ०न्दस्व० P., D.
१४. ०त्याछ० P. D.
१५. D. reads पातानिवैः for पदैः । तानि ।
१६. D. reads निदर्शिताः for ददर्श ताः ।

अष्टिं तथातिजगतीमर्थभेदात् प्रयुज्यते ।
न पादपूरणाशङ्का[1] तत्र को ऽयं परिश्रमः ॥२०॥
पारुच्छेपीसु[2] सर्वासु[3] शक्यं[4] द्वैरूप्यमञ्जसा ।
जातवेदःशब्द इव न प्रदर्शयितुं बुधैः ॥२१॥
यथाकथंचिद्[5] द्वैविध्यं प्रतिपादयितुं बुधः[6] ।
नेच्छन्ति तेन[7] सर्वे ऽमी भवन्ति पदपूरणाः[8] ॥२२॥
तमेवार्थं ब्रुवाणानां वचनव्यक्तयः पृथक् ।
मन्त्रेषु केषुचित्[9] सन्ति केषुचित्तु[10] न सन्ति[11] च[12] ॥२३॥
इच्छन्ति काव्यवद् वृद्धा न वेदे बहुभाषणम्[13] ।
तस्माच्छब्दस्य तस्यार्थं तमेवाहुर्विपश्चितः ॥२४॥
पारुच्छेपी ऋचः[14] सर्वा यदा पश्यति पण्डितः ।
न[15] तदा प्रतिपाद्यो ऽस्य सो ऽयमर्थ इति स्थितिः ॥२५॥
वेदमुद्रा[16]मजानन्तः[17] कुतर्कगतमानसाः ।
आपाततो भाषमाणास्ते हास्या वैदिकैरिह ॥२६॥
अभ्यासादाह भूयांसमर्थं यस्ककुलोद्भवः[18] ।
अन्यानर्थान्[19] नतु ब्रूते व्याख्यातारो वदन्ति यान् ॥२७॥
दर्शनीयो दर्शनीय[20] इत्यभ्यासात् प्रतीयते ।
भूयानर्थोऽत्यन्तमिति निर्वाहो ऽयं च केषु चित् ॥२८॥ इति ॥

---

१. ०जगती वर्तमानानामत्यर्थं भेदान्न प्रयुज्यते पादपूरणात् शंका D.
०जगती वर्तमानानामवर्तमानानामत्यर्थभेदान्न प्रयुज्यते पादपूरणान् शंका P.
२. ०च्छपी० P. ३. सर्वास्न P. D.
४. शक्य P. ५. चिद्वैवि० P. D.
६. बुधाः is suggested for बुधः ।
७. ने P. ८. पाद० P. ९. केनचित् P.
१०. P. reads तेषु चित्त for केषु चित्तु ।
११. यन्ति P. D. १२. Omitted by P.
१३. वबहु० P. १४. ०च्छेमी ततः P.
१५. Omitted by D. १६. ०व्रम० P. D.
१७. ०न्त D. १८. Cf. N. 10.42.
१९. अन्यात्यर्थां D. अन्यमर्थं R. २०. दर्शय P.

## V. 9.

**त्वाम॑ग्ने ह॒विष्म॑न्तो दे॒वं मर्ता॑स ईळते।**
**मन्ये॑ त्वा जा॒तवे॑दस॒ं स ह॒व्या व॑क्ष्यानु॒षक्॥ १ ॥**

**त्वामग्ने[1]।** ॥ गयः ॥ त्वाम्। अग्ने! हविःसम्भरणानन्तरम्[2]। देव[3]! मनुष्याः[4]। स्तुवन्ति[5] हविर्वहनाय सामधेनीभिः। अहं[6] च त्वामेव। स्तौमि[7]। जातप्रज्ञम्[8]। स त्वम्[9]। हव्यानि[10]। वह[11]। अनुषक्तम्[12]।

---

१. पञ्चमे मण्डले प्रथमेऽनुवाके पूर्वमष्टौ सूक्तानि व्याख्यातानि। 'त्वामग्ने हविष्मन्तः' इति सप्तर्चं नवमं सूक्तमात्रेयस्य गयस्यार्षम्। सप्तमीपञ्चम्यौ पङ्क्ती, शिष्टा अनुष्टुभः। अग्निर्देवता। तथा चानुक्रम्यते 'त्वामग्ने गयोऽन्त्यापञ्चम्यौ पङ्क्ती' (KSA. 25. 9. p. 19.) इति। प्रातरनुवाके आश्विनशस्त्रे च एतदादिके द्वे सूक्ते शंसनीये। तथैव सूत्रितञ्च—'त्वामग्ने हविष्मन्त इति सूक्ते' (ĀSS.4.13.) इति Sy.

२. VM. seems to explain हविष्मन्तः by हविःसम्भरणानन्तरम्॥ होमसाधनद्रव्यसमेताः। हविष्मन्तः—हविःशब्दः औणादिक इस्प्रत्ययान्तः। 'तदस्यास्ति' इति मतुप्। पदसंज्ञाया अपवादत्वेन 'तसौ मत्वर्थे' इति भसंज्ञायां रुत्वाभावः। मतुब्जसोरनुदात्तत्वात् प्रत्ययस्वर एव शिष्यते Sy.

३. देवम् is suggested for देव॥ दीप्यमानम्। देवम्—अच्प्रत्ययान्तत्वाद् देवशब्दोऽन्तोदात्तः Sy.

४. मर्त्याः। मर्तासः—'मृङ् प्राणत्यागे' 'असिहसिमृङ्०' इत्यादिना तन्। गुणः। मर्तः। जसेरसुक् मर्तासः। नित्त्वादाद्युदात्तः Sy.

५. ईळते—'ईड स्तुतौ' अदादित्वाच्छपो लुक् 'आत्मनेपदेष्वनतः', टेरेत्वम्। अत्र डकारस्य अध्येतृसम्प्रदायप्राप्तो ळकारः। लसार्वधातुकानुदात्तत्वेन धातुस्वरे प्राप्ते आष्टमिको निघातः Sy. ६. Omitted by P.

७. त्वा—'युषि मिश्रणे' मदिक्प्रत्ययान्तो युष्मच्छब्दः प्रत्ययस्वरेणान्तोदात्तः। 'त्वमावेकवचने' इतिमपर्यन्तस्य त्वादेशः। 'द्वितीयायाञ्च' (Pa. 7.2.87.) इत्याकारः। 'एकादेश उदात्तेनोदात्तः' इत्येकादेशोऽप्युदात्त एव। 'त्वामौ द्वितीयायाः' इति त्वादेशः। स्थानिवद्भावेनान्तोदात्तत्वे प्राप्ते 'अनुदात्तं सर्वमपादादौ' इत्यनुदात्तत्वम् Sy.

८. मनिरत्र स्तुत्यर्थे वर्तते, धातूनामनेकार्थत्वात्। मन्ये—श्यनो नित्त्वादाद्युदात्तत्वम् Sy.

९. जातमुत्पन्नं चराचरं भूतजातं वेत्तीति जातवेदाः। अथवा जातानि स्थावरजङ्गमात्मकान्येनं विदुरिति जातवेदाः। यद्वा वेद इति धननाम। जातं सर्वं वेदो धनं यस्यासौ जातवेदाः। एवंविधम्। जातवेदसम्—'जनी प्रादुर्भावे' क्तः। 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः। 'जनसनखनां सञ्झलोः' इत्यात्वम्। प्रत्ययस्वरेणान्तोदात्तः। वेदस्शब्दोऽपि असुन्प्रत्ययान्तत्वादाद्युदात्तः। कर्मधारयपक्षे समासान्तोदात्तापवादत्वेन 'तत्पुरुषे तुल्यार्थ०' इत्यादिना पूर्वपदप्रकृतिस्वरत्वे प्राप्ते कृदुत्तरपदप्रकृतिस्वरत्वम्। तदपवादत्वेन 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति पूर्वपदप्रकृतिस्वरत्वम्। बहुव्रीहिपक्षे 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति Sy.

१०. हवनसाधनानि हवींषि। हव्या-हवमर्हतीत्यस्मिन्नर्थे 'यः' इत्यनुवर्तमाने 'छन्दसि च' इति यः। नपुंसकत्वाच्छिरादेशः। 'शेश्छन्दसि बहुलम्' इति लोपः। प्रत्ययलक्षणेन नुम्। दीर्घनलोपौ। प्रत्ययस्वरेणान्तोदात्तः Sy.

११. वहसि। वक्षि—'वह प्रापणे' सिप्। लुगनुवृत्तौ 'बहुलं छन्दसि' इति शपो लुक्। ढत्वकत्वषत्वानि। सिपः पित्त्वादनुदात्तत्वेन धातुस्वरेण आद्युदात्तत्वे प्राप्ते निघातः Sy.

१२. निरन्तरतया अनुषक्तं यथा तथा। आनुषक्—अनुपूर्वस्य षञ्जेः क्विप् नकारलोपः कुत्वं च। धात्वादेः सकारस्य 'उपसर्गात्सुनोति०' इत्यादिना षत्वम्। दीर्घश्छान्दसः। कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

अग्निर्होता दास्वतः क्षयस्य वृक्तबर्हिषः ।
सं यज्ञासश्चरन्ति यं सं वाजासः श्रवस्यवः ॥ २ ॥

अग्निर्होता । अग्निः । होता[1] भवति । दानवतः[2] । यजमानस्य[3] । स्तीर्णबर्हिषः[4] । यमग्निम् । यज्ञाः[5] । यज्ञाधारा वाजश्च[6] । यजमानानामन्नमिच्छमानानामन्नमिच्छमानाः[7][8] । सङ्गच्छन्ति[9][10] ।

उत स्म यं शिशुं यथा नवं जनिष्टारणी ।
धर्तारं मानुषीणां विशामग्निं स्वध्वरम् ॥ ३ ॥

उत स्म यम् । यथा[11] काचित् । नवतरम्[12] । पुत्रं[13] जनयति । एवं यम् । अरणी[14] । जनयः[15], उपमानेन

---

१. देवानामाह्वाता भवति Sy.

२. D. repeats दानवतो दानवतः ॥ हविष्प्रक्षेपणादिदानवतः । दास्वतः—'दा दाने' असुन्प्रत्ययान्तः । मतुप आदुपधत्वाद् वत्वम् । धातुस्वरेणाद्युदात्त एव Sy.

३. क्षियन्ति निवसन्त्यस्मिन् स्वर्गसाधनफलानीति क्षयः । तस्य यजमानस्य यागार्थम् । क्षयस्य—'क्षि निवासगत्योः' 'क्षयो निवासे' इत्याद्युदात्तत्वम् Sy.

४. वृक्तानि लूनानि बर्हींषि दर्भा येनासौ वृक्तबर्हिः । तस्य । 'वृजी वर्जने' वर्जनमत्रोपचाराच्छेदनम् । निष्ठा । प्रत्ययस्वरेणान्तोदात्तः । बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् Sy.

५. सर्वे यज्ञाः । यज्ञासः—यज्ञशब्दः 'यजयाच०' इत्यादिना नङ्प्रत्ययान्तोऽन्तोदात्तः Sy.

६. वाजाश्च is suggested for वाजश्च । वाजासः—वर्जेर्घञ् । वाजः । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । छान्दसत्वात् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तः Sy.

७. इच्छ् (इषु) being parasmaipada, the reading should be इच्छताम् and इच्छन्तः respectively.

८. यजमानस्य प्रभूतां कीर्तिं सम्पादयन्तः श्रवस्यवः—'छन्दसि परेच्छायाम्' इति क्यच्, 'क्याच्छन्दसि' इत्युप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः Sy.

९. सहिता गच्छन्ति । सञ्चरन्ति प्राप्नुवन्ति ॥ चरन्ति—'चर गतिभक्षणयोः' अदुपदेशाल्लसार्वधातुकानुदात्तत्वम् । 'यद्वृत्तान्नित्यम्' इति निघाताभावः Sy.

१०. VM. explains सम् once only.

११. 'यथेति पादान्ते' इति सर्वानुदात्तः Sy.

१२. नूतनम् Sy.

१३. अपत्यम् । शिशुम्—'शो तनूकरणे' 'आदेचः०' इत्यादिनात्वम् । 'शः कित् सन्वच्च' इत्युप्रत्ययः सन्वद्भावश्च । द्विर्भावोऽभ्यासस्य ह्रस्वश्च । 'सन्यतः' इतीत्वम् । 'आतो धातोः' इत्याकारलोपः । नित्त्वादाद्युदात्तः Sy.

१४. द्वे अरणी । 'ऋ गतौ' 'अर्तिसृभृधृधम्यश्यवितृभ्योऽनिः' इत्यनिप्रत्यय आद्युदात्तः । आभ्यामर्ति ? (इयर्ति) गच्छत्यग्निरित्यरणिः । कथमपादानार्थे औणादिकोऽनिः 'ताभ्यामन्यत्रोणादयः' (Pa. 3.4.75.) इति नियमात् ? भीमादित्वात् सिद्धम् Sy.

१५. जन्याः i.e. gen. sing. of जनी (mother) is suggested for जनयः ।

समन्वयाज्[1] जनिष्टेत्येकवचनमपि भवति[2] । मनुष्यसम्बन्धिनीनाम्[3] । प्रजानाम्[4] । धर्तारम्[5] । अग्निम् । सुयज्ञं[6] पूर्वत्रान्वयः[7] ।

**उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणाम् ।**
**पुरू यो दग्धासि वनाग्ने पशुर्न यवसे ॥ ४ ॥**

[ उत स्म ][8] अपि च । दावरूपस्त्वं[9] दुर्ग्रहमात्मानमिच्छसि[10] । तथागच्छतस्तस्य[11] ? अश्वानाम्[12] । इव । पुत्रो[13] युवा । पुरूणि[14] । यः[15] । दग्धा[16] । भवसि[17] । अरण्यानिव[18] यथा[19] । पशुः[20] । यवसे[21] विसृष्टः सर्वं यवसं विनाशयति[22] ।

१. या P.

२. अजनिषाताम् । अरणी प्रजानां पोषणार्थं चैतमग्निमसृजतामित्यर्थः । जनिष्ट—'जनी प्रादुर्भावे' लुङ्, छान्दसत्वाद्वचनव्यत्ययः Sy.

३. मनोर्जातानाम् । मानुषीणाम् । 'मनोर्जातावञ्यतौ षुक् च' इत्यञ्प्रत्ययः षुगागमश्च 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् Sy.

४. विशन्ति प्रविशन्ति गर्भाशयमिति विशः प्रजाः । तासाम् । विशाम् 'विश प्रवेशने' कर्तरि क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.

५. तासां धर्तारम् आहारादिपाकद्वारेण शरीरधातूनां पोषकम् Sy.

६. शोभनयज्ञम् । स्वध्वरम्—हिंसार्थस्य ध्वरतेः पचाद्यच् । न विद्यते ध्वरो यागहिंसा यस्मिन्नित्यध्वरः । बहुव्रीहिस्वरापवादत्वेन 'नञ्सुभ्याम्०' इत्यन्तोदात्तः Sy.

७. VM. ignores उत and स्म । अपि च Sy.

८. The *pratīka* is supplied by the Editor.

९. तापरूप० P.

१०. दुःखेन गृह्यसे । दुर्गृभीयसे—'ग्रह उपादाने' यक् । 'ध्रुव ईट्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इतीडागमः । ग्रहिज्यादिना सम्प्रसारणम् । 'हृग्रहोर्भश्छन्दसि' इति भकारः । निघातः Sy.

११. गच्छतस्य P. तथागच्छतस्तस्य is not clear. तथा गच्छतां तेषाम् or तथा गच्छन्तीनां तासाम् is suggested.

१२. कुटिलं गच्छतां सर्पाणाम् । यद्वा आस्कन्दितादिगतिविशेषेण वक्रगमनानामश्वानाम् । ह्वार्याणाम्—'ह्वृ कौटिल्ये' 'ऋहलोर्ण्यत्', आदिवृद्धिः । 'तित्स्वरितम्' इति स्वरितम् Sy.

१३. Omitted by D. बालसर्प इवाशिक्षितबालाश्व इव वा Sy.

१४. बहूनि । पुरु—'पॄ पालनपूरणयोः' 'पॄभिदिव्यधिगृधिधृषिदृशिभ्यः' इति कुप्रत्ययः । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । प्रत्ययस्वरेणान्तोदात्तत्वम् Sy.

१५. यस्त्वम् Sy. १६. दाहकः Sy.

१७. असि—'यद्वृत्तान्नित्यम्' इति न निघातः Sy.

१८. अरण्यानीव is suggested for अरण्यानिव ॥ वनानि Sy.

१९. था P.

२०. अयमर्थः । अत्यन्तक्षुधार्तः पशुस्तृणविषये विसृष्टः सन् यथा सर्वं भक्षयति तद्वदित्यर्थः Sy.

२१. तृणे Sy.

२२. VM. ignores अग्ने !

**अधं स्म यस्यार्चयः सम्यक्संयन्ति धूमिनः ।**
**यदीमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा ॥ ५ ॥**

**अध स्म** । धमनानन्तरम्[1] । एव[2] । यस्य[3] । अर्चयः[4] । समीचीनम्[5] । सङ्गच्छन्ते[6] । धूमयुक्तस्य[7] । यदि[8] । एनम्[9] । एवाग्निम् । त्रिस्थानः[10] त्रयाणां वाग्न्यादीनामेको[11] वायुः । अन्तरिक्षे । यथायस्कारो लोहं भस्त्र-[12]यावधमत्येवम् । उपधमति[13] । तीक्ष्णीकरोति[14] च । यथा । अयस्कारे[15] ।

**तवाहमग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः ।**
**द्वेषोयुतो न दुरिता तुर्याम मर्त्यानाम् ॥ ६ ॥**

**तवाहम्** । तव । अहम् । अग्ने ! रक्षणैः[16] । मित्रस्य[17] । च देवस्य । स्तुतिभिः[18] । द्वेषमो[19] मिश्रयितॄन्

---

१. **अपि च** Sy.

२. **अहेति पादपूरणः** Sy.

३. **अग्नेः** Sy.

४. **अर्चींषि** Sy.

५. **शोभनम्** Sy.

६. **सर्वतः प्राप्नुवन्ति । यन्ति—'इण् गतौ', यच्छब्दयोगान्निघाताभावः** Sy.

७. **धूमवतः** Sy.

८. **यदा** Sy.

९. **अयमात्मानम्** Sy.

१०. **त्रिषु स्थानेषु ततो व्याप्तः त्रीणि स्थानानि वातीत्य** Sy.

११. **वा** is omitted by P.

१२. **कर्मारो यथा भस्त्रादिभिरग्निं संवर्धयति तद्वत्स्वात्मानं वर्धयतीत्यर्थः** Sy.

१३. **उपवर्धयति तदा ज्वालाः सर्वतो निर्गच्छन्तीत्यर्थः । धमति—'ध्मा शब्दाग्निसंयोगयोः' पाघ्रादिना धमादेशः । पूर्ववत् निघाताभावः** Sy.

१४. **तद्वत्स्वयमेव स्वात्मानं तीक्ष्णीकरोतीत्यर्थः । शिशीते—'शो तनूकरणे' व्यत्ययेनात्मनेपदी । 'श्लौ' इत्यनुवर्तमाने 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'आदेच उपदेशेऽशिति' इत्यात्वम् । 'श्लौ' इति द्विर्वचनम् । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम्, 'उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञायामातः 'ई हल्यघोः' इतीत्वम् । तिङ उत्तरत्वान्निघाताभावः** Sy.

१५. **यथा ध्मातृसमीपे विद्यमानोऽग्निस्तेन ध्मायमानः स आत्मानं शिशीते** Sy.

१६. **युष्मत्कर्तृकरक्षणैः । ऊतिभिः—'अव रक्षणे' क्तिन् । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यूठ् । 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इत्यन्तोदात्तत्वेन निपातितः** Sy.

१७. **सर्वेषां मित्रभूतस्य** Sy.

१८. **अस्मत्कृतैः स्तोत्रैश्च । प्रशस्तिभिः—'शंसु स्तुतौ' क्तिन् । कृदुत्तरपदप्रकृतिस्वरापवादत्वेन 'तादौ च निति कृत्यतौ' इति गतेरुदात्तत्वम्** Sy.

१९. **द्वेषयुक्तान् शत्रून् । द्वेषोयुतः—'द्विष् अप्रीतौ' भावेऽसुन्प्रत्ययः, 'यु मिश्रणे' कर्तरि क्विप् । तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम्** Sy.

शत्रून् । इव । दुःखानि[1] । अतितरेम[2] । यान्येतानि मर्त्यानां[3] दृश्यन्ते, यथा परोक्षोपक्रमाः प्रत्यक्षापवर्गा मन्त्रा भवन्त्येवमेकवचनबहुवचनयोरपि[4] द्रष्टव्यमिति[5] ।

**तं नो॑ अग्ने अ॒भी नरो॑ र॒यिं स॑हस्व॒ आ भ॑र ।**
**स क्षे॑पयत्स पो॑षयद्भुव॒द्वाज॑स्य सा॒तय॑ उ॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥ ७ ॥**

**तं नो अग्ने** । तम् । अस्मभ्यम् । अग्ने ! अभ्याभर[6] । नेता त्वम्[7] । हे बलवन्[8] ! रयिम्[9] । स रयिः[10] । शत्रून् क्षपयतु[11] । पोषयतु चास्मान्[12] । भवतु च[13] । अन्नस्य[14] । भजनाय[15] । अपि च । भव[16] । सङ्ग्रामेषु[17] । अस्माकम्[18] । वर्धनाय[19] ।

---

१. दुरितानि तत्कर्तृकानि पापसाधनकर्माणि Sy.

२. तरेयम् । अयमर्थः । त्वद्रक्षणैः त्वत्सम्बन्धिस्तुतिभिश्च बाह्याभ्यन्तरशत्रून् तरेयमित्यर्थः । तुर्याम—'तॄ प्लवनतरणयोः' प्रार्थनायां लिङ् । यासुट् 'लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः । 'बहुलं छन्दसि' इति शपो लुक् । 'उदोष्ठ्यपूर्वस्य' 'बहुलं छन्दसि' इत्युत्वम् । यासुडागमस्योदात्तत्वाच्छेषनिघातः '०अपादादौ' इति प्रतिषेधात् निघाताभावः Sy.

३. अतिरेयमान्येतानि मर्त्यान् P. शत्रुभूतानां मनुष्याणाम् Sy.

४. ०चनोः अपि D.

५. The passage: यथापरोक्षो०....मिति is VM's addition.

६. आभिमुख्येनाहर Sy.

७. हविषां नेता त्वम् Sy.

८. सहस्व—'षह मर्षणे' असुन् । सहत्य ? (तेऽ)-नेन शत्रून्, इति सहो बलम् । मतुप् 'मादुपधायाः०' इति वत्वम् । 'मतुवसो रुः सम्बुद्धौ छन्दसि' इति रुत्वम्, 'आमन्त्रितस्य च' इति निघातः Sy.

९. लोके प्रसिद्धं पश्वादिलक्षणं धनम् Sy.

१०. रयिरं P. पूर्वोक्तः सोऽग्निः Sy.

११. अस्मदीयान् शत्रून् क्षपयतु । क्षेपयत्—'क्षिप प्रेरणे' णिजन्ताल्लेट् 'इतश्च लोपः' । 'लेटोऽडाटौ' इत्याडागमः । शप् गुणायादेशौ । पररूपत्वं च Sy.

१२. पोषयत्—'पुष पुष्टौ' Sy.

१३. भुवत्—'भू सत्तायाम्' 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । उवङ् Sy.

१४. अन्यस्य P.

१५. लाभाय Sy.

१६. सङ्ग्रामे शत्रुविजयार्थं स त्वं समृद्धिं कुर्वित्यर्थः । एधि—'अस् भुवि' 'घ्वसोरेद्धावभ्यासलोपश्च' इत्येत्वम् । तस्यासिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति धिरादेशः । निघातः Sy.

१७. पृतनासु युद्धेषु । पृत्सु—'पदादिषु०' इत्यादिना पृतनाशब्दस्य पृदादेशः । सावेकाचत्वात् अन्तोदात्तत्वम् Sy.

१८. समृद्धये Sy.

१९. VM. explains सः once only. Ms. D. puts the figure ॥९॥ here to indicate the end of the ninth hymn. No such number is given in P.

V.10.

# अग्न॒ ओजि॑ष्ठ॒मा भ॑र द्यु॒म्नम॒स्मभ्य॑मध्रिगो ।
# प्र नो॑ रा॒या परी॑णसा॒ रत्सि॒ वाजा॑य॒ पन्था॑म् ॥ १ ॥

अग्न[1] ओजिष्ठम्[2] । अग्ने ! बलवत्तमम्[3] । आभर[4] । अन्नम्[5] । अस्मभ्यम्[6] । अधृतगमन[7] ! प्रलिख[8] । अस्माकम् । धनेन । महता[9] सह । अन्नाय[10] । पन्थानम्[11] ।

---

१. 'अग्न ओजिष्ठम्' इति सप्तर्चं दशमं सूक्तम् । ऋष्यादिविनियोगश्च पूर्ववत् । चतुर्थीसप्तम्यौ पङ्क्ती । 'अग्न ओजिष्ठमन्त्याचतुर्थ्यौ च' (KSA. 25.10. p. 19.) इत्यनुक्रान्तम् Sy.

२. आ० D.

३. ओजिष्ठम्—'उब्ज आर्जवे' 'उब्जेर्बले बलोपश्च' इत्यसुन् बलोपश्च । गुणः । ओजः । 'तदस्यास्ति०' इत्यर्थे 'अस्मायामेधा' इत्यादिना विनिः । 'अतिशायने०' इतीष्ठन् । 'विन्मतोर्लुक्' 'टेः' इति टिलोपः । नित्त्वादाद्युदात्तः Sy.

४. आहर Sy.

५. द्योतते कटकमुकुटादिरूपेण सर्वत्र प्रकाशत इति द्युम्नं धनम् । द्युम्नम्—'द्युत दीप्तौ' इत्यस्माद् धातोः 'सुम्नद्युम्ननिम्न०' इत्यादिना नक्प्रत्ययो नकारश्चान्तादेशो निपात्यते । प्रत्ययस्वरेणान्तोदात्तः Sy.

६. अस्मान् Sy.

७. उद्यतगमनं P. अधृतमप्रतिहतं गमनं यस्येत्यधृता अनिवारिता गावो रश्मयो यस्येति वा अधृतगुः अध्रिगुः । तस्य सम्बोधनम् । अधृतशब्दस्य अध्रयावेशः । गोशब्दस्योपसर्जनह्रस्वत्वम् । आमन्त्रितस्य निघातः Sy.

८. Sy. explains प्र and रत्सि separately: प्र as प्रकर्षेण योजय and रत्सि as विलिख कुर्वित्यर्थः । रत्सि—'रद विलेखने' भौवादिकः । 'बहुलं छन्दसि' इति शपो लुक् । पादादित्वान्निघाताभावः ।

९. परितो व्यापकेन । परीणसा—'णस कौटिल्ये' अत्र व्याप्त्यर्थो धातूनामनेकार्थत्वात् । अस्मात्सम्पदादिलक्षणो भावे क्विप् । परि प्राप्तं नस् व्यापनं यस्य तत्तथोक्तम् । 'उपसर्गादसमासे०' इति णत्वम् । अत्र प्रापणक्रियया युक्तस्य परेर्णसतिं प्रत्युपसर्गसंज्ञा नास्ति यत्क्रियायुक्तास्तं 'प्रति गत्युपसर्गसंज्ञा' (Pa. 1.4.60.3.) इति न्यायात् । अतः कथं णत्वम् ? एवं तर्हि 'उपसर्गाद्बहुलम्' इति वचनात् णसो णत्वं भविष्यति । 'निपातस्य च' इति पूर्वपदस्य दीर्घः, 'बहुव्रीहौ प्रकृत्या०' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

१०. अन्नलाभाय Sy.

११. अन्नस्य मत्समीपप्राप्तिसाधनं मार्गम् । पन्थाम्—द्वितीयैकवचने 'इतोऽत्सर्वनामस्थाने' इत्यत् । नकारलोपश्छान्दसः । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् Sy.

त्वं नो॑ अग्ने अद्भुत॒ क्रत्वा॒ दक्ष॑स्य मं॒हना॑ ।
त्वे अ॑सु॒र्य१॒॑मारु॑हत्क्रा॒णा मि॒त्रो न य॒ज्ञियः॑ ॥ २ ॥

त्वं नो अग्ने[1]। त्वम्। अस्माकम्। अग्ने! आश्चर्यभूत[2]। प्रज्ञया[3]। बलस्य[4] च। महत्वेन[5]। कर्माणि कुर्वाणः[6]। यज्ञियो[7] भवसि। सखा[8]। इव। त्वयि[9]। असुराणां हन्तृरूपम्[10]। अरुहद्[11] हि[12]।

त्वं नो॑ अग्न ए॒षां गयं॑ पु॒ष्टिं च॑ वर्धय ।
ये स्तोमे॑भिः॒ प्र सू॒रयो॒ नरो॑ म॒घान्या॑न॒शुः ॥ ३ ॥

त्वं नो अग्ने[13]। अस्माकम्। एषाम्। अग्ने! गृहम्[14]। पुष्टिम्[15]। च। वर्धय[16]। केषामित्याह—

१. त्वं नेताग्ने D.

२. सामर्थ्यातिशयेन सर्वेषामाश्चर्यभूत ! अद्भुत—आमन्त्रितस्याद्युदात्तत्वम् Sy.

३. प्रज्ञां P. कर्मणास्मत्कृतेन यज्ञादिव्यापारेण प्रीतः सन् । क्रत्वा—'डुकृञ् करणे' 'कृञः कतुः' इति कतुप्रत्ययः। ककारो गुणवृद्धिप्रतिषेधार्थः। यणादेशः । क्रतुः कर्म । तृतीयैकवचने 'जसादिषु वावचनम्' इति वचनान्नाभावाभावः Sy.

४. धनस्य वा । दक्षस्य—'दक्ष गतिहिंसनयोः' दक्ष्यन्ते हिंस्यन्तेऽनेन शत्रव इति दक्षं बलम् । 'करणाधिकरणयोश्च' इति घञ् । ञित्वादाद्युदात्तः Sy.

५. ०त्वे० is suggested for ०त्वे०। मंहनं नाम दानं कुर्विति शेषः। मंहना—मंहतिर्दानकर्मा । 'सुपां सुलुक्०' इत्याकारादेशः Sy.

६. यज्ञघातुकराक्षसापनोदनलक्षणानि कर्माणि कुर्वाणो भव । क्राणा—'डुकृञ् करणे' शानच् । 'बहुलं छन्दसि' इति विकरणस्य लुक्। यणादेशः 'सुपां सुलुक्०' इत्यात्वम् । 'चितः' इत्यन्तोदात्तः Sy.

७. यज्ञार्हस्त्वम् । यज्ञियः—यज्ञमर्हतीत्यस्मिन्नर्थे 'यज्ञर्त्विग्भ्यां घखञौ' इति घः । प्रत्ययस्वरेणान्तोदात्तः Sy.

८. मित्रः सूर्यः Sy.

९. यतः कारणात् त्वयि । त्वे—'सुपां सुलुक्०' इत्यादिना ङेः शेआदेशः। सुबादेशत्वादनुदात्तः। त्वशब्दः प्रत्ययस्वरेणान्तोदात्तः 'एकादेश उदात्तेनोदात्तः' इत्येकादेशस्योदात्तत्वम् Sy.

१०. असुरघ्नं बलम् Sy.

११. त्वयर्णां हन्तृरूपमरुचिद्धि P. अरुहत्—रुहेर्धातोर्लुङि 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङादेशः। ङित्वाद् गुणाभावः Sy.

१२. VM. ignores आ।

१३. पोषम् P.
त्वत्स्तावकानाम् Sy.

१४. गृहम् is suggested for गृह ॥ गम्यते निवासायेति गयं गृहम् । गीयते स्तूयते इति वा गयं धनम् । गयम्—गृहपक्षे गमेः 'अघ्न्यादयश्च' इति यत्प्रत्ययान्तो मकारलोपश्च निपात्यते । धनपक्षे 'गा स्तुतौ' अस्माद्यत्प्रत्ययः । ह्रस्वत्वम् । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.

१५. गवादिविषयां पुष्टिम् । पुष्टिम्—'पुष पुष्टौ' 'स्त्रियां क्तिन्'। छान्दसत्वादन्तोदात्तत्वम् Sy.

१६. वृद्धिं प्रापय Sy.

हे[1] स्तोतारः[2] । स्तोत्रैस्त्वत्तः[3] । धनानि[4] । प्रकर्षेण व्याप्नुवन्[5] तेषामेषामिति ।[6]

ये अग्ने चन्द्र ते गिरः शुम्भन्त्यश्वराधसः ।
शुष्मेभिः शुष्मिणो नरो दिवश्चिद्येषां बृहत्सुकीर्तिर्बोधति त्मना ॥ ४ ॥

ये अग्ने । ये[7] । अग्ने ! कान्तः[8] । तुभ्यम् । स्तुतिगिरः[9] । शोधयन्ति[10] । लब्धाश्वधनाः[11] । बलैश्च[12] । बलिनः[13] । येषां[14] च । कीर्तिः[15] । स्वयमेव[16] । दिवः[17] । अपि । महद्भूता[18] । प्रकाशते[19] तेषामेषां गयं पुष्टिमिति ।[20]

तव त्ये अग्ने अर्चयो भ्राजन्तो यन्ति धृष्णुया ।
परिज्मानो न विद्युतः स्वानो रथो न वाजयुः ॥ ५ ॥

तव त्ये । तव । इमे[21] । अग्ने ! अर्चयः[22] । दीप्यमानाः । यन्ति[23] । तमसो धर्षणशीलाः[24] । परितो[25]

---

१. Omitted by P. ये is suggested for हे ।
२. सूरयो लब्धवर्णाः Sy. ३. स्तोमैः स्तोत्रैः । स्तोमेभिः—'ष्टुञ् स्तुतौ' 'अर्तिस्तुसुहु' इत्यादिना मन् । गुणः । नित्त्वादाद्युदात्तः Sy.
४. मंहनीयानि गवादिधनानि Sy.
५. यथा प्राप्नुवन् तद्वद्वयमपीत्यर्थः । आनशुः—'अशू व्याप्तौ' लिट् द्विर्वचनम् । हलादिशेषः । 'अत आदेः' इत्यात्वम् 'अश्नोतेश्च' इति नुडागमः । निघातः Sy.
६. VM. ignores त्वम् । ये and नरः ॥ ये लोके प्रसिद्धाः । नरः स्तोतारो मनुष्याः Sy.
७. Omitted by P.
८. कान्त ! is suggested for कान्तः ॥ सर्वेषां प्राणिनामाह्लादकर ! Sy.
९. त्वत्सम्बन्धिस्तोत्ररूपा वाचः Sy.
१०. शाधयन्ति P. शोभनाः कुर्वन्ति । शुम्भन्ति—'शुभ शुम्भ दीप्तौ' तुदादिः । पादादित्वान्निघाताभावः । लसार्वधातुकानुदात्तत्वे प्राप्ते सति शिष्टत्वाद्विकरणस्वर एव Sy.
११. लबद्धाश्च धानाः P. ते अश्वधना भवन्ति । एतेन सर्वसमृद्धिरुपलक्ष्यते । अश्वराधसः—'अशू व्याप्तौ' 'अशूप्रुषि०' इत्यादिना क्वन् । अश्नुते व्याप्नोत्यध्वानमित्यश्वः । नित्त्वादाद्युदात्तः । 'राध साध संसिद्धौ', असुन् । राध्नुवन्ति साधयन्त्यनेन धर्मादीनीति राधो धनम् । बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम् Sy.
१२. शुष्मैः स्वकीयैर्बलैः सत्त्वैः शत्रुशोषका भवन्ति Sy. १३. बलवन्तः सन्तः Sy. १४. त्वत्सम्बन्धिनं स्तवं कुर्वताम् Sy. १५. सुकीर्तिर्भवति सर्वदिगन्तरालवर्तिनी कीर्तिर्भवतीत्यर्थः Sy.
१६. एवंविधं त्वां गयः आत्मना स्वयमेव । त्मना—'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः Sy. १७. आकाशात् Sy.
१८. ०भूत्वा P. महती । बृहत्—'बृह बृहि वृद्धौ' । शतृ । ङीपो लोपश्छान्दसः । प्रत्ययस्वरः Sy.
१९. बोधयति । बोधति—'बुध अवगमने' ण्यन्तात् शपि कृते तस्य 'छन्दस्युभयथा' इति सार्वधातुकसंज्ञायां णिलोपः । 'यद्वृत्तान्नित्यम्' इति निघाताभावः । धातुस्वरेणाद्युदात्तः Sy.
२०. VM. ignores नरः ।
२१. मे P. ते प्रसिद्धाः Sy.
२२. अधश्च P. त्वदीया रश्मयः Sy.
२३. सर्वतो गच्छन्ति । यन्ति 'इण् गतौ' Sy.
२४. धृष्णवोऽत्यन्तप्रगल्भाः । धृष्णुया—'ञिधृषा प्रागल्भ्ये' । 'त्रसिगृधिधृषि०' इत्यादिना क्नुप्रत्ययः । 'आदितश्च' (Pa. 7.2.16.) इतीट्प्रतिषेधः । बहुवचने 'सुपां सुलुक्' इत्यादिना याजादेशः । 'चितः' इत्यन्तोदात्तत्वम् Sy. २५. परिगतो P.D.

गन्त्यः[1] । विद्युतः[2] । इव । स्वनवान्[3] । इव च । रथः । शत्रुभ्योऽन्नमिच्छन्[4] ।

**नू नों अग्न ऊतयें सबाधंसश्च रातयें ।**
**अस्माकांसश्च सूरयो विश्वा आशांस्तरीषणिं ॥ ६ ॥**

**नू नो अग्ने ।** क्षिप्रम् । अस्माकम् । रक्षणाय भव[5] । धनाभावाद् बाधायुक्तस्य[6] । धनदानाय[7] । च[8] । अस्मदीयाः[9] । च । मेधाविनः पुत्राः[10] । सर्वाः[11] । दिशः । तरितुं शक्ता भवन्तु[12] ।

**त्वं नों अग्ने अङ्गिरः स्तुतः स्तवान आ भंर ।**
**होतर्विभ्वासहं रयिं स्तोतृभ्यः स्तवसे च न उतैधि पृत्सु नों वृधे ॥ ७ ॥**

**त्वं नो अग्ने ।** त्वम् । अस्मभ्यम्[14] । अग्ने ! अङ्गिरसामेक[15] ! स्तुतः[16] । स्तूयमानश्चाहम्[17] । रयिम्[18] ।

---

१. बलिन्त्यः P. परितो गन्त्यः, सर्वतो व्याप्ताः । परिज्मानः, 'अज व्रज गतौ' परिपूर्वाद्धातोः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । आकारलोपश्छान्दसः । नित्त्वादाद्युदात्तः Sy.

२. अचिरप्रभाः । अनेन प्रकाशातिशय उक्तः Sy.

३. शब्दायमानः । अनेनार्चिषां स्वनाधिक्यमुक्तम् Sy.

४. अन्नकाम इवान्नार्थं युद्धेषु शत्रुविजयाय यथा प्रवर्तते तद्वदित्यर्थः । अनेनाहुतिविषयोऽभिलाष उक्तः । वाजयुः—वाजमात्मन इच्छति इति क्यच् 'न छन्दस्यपुत्रस्य' इतीत्वदीर्घयोः प्रतिषेधः । 'क्याच्छन्दसि' इत्युप्रत्ययः Sy.

५. रक्षायै भव Sy.

६. दारिद्र्यनिमित्तबाधसहितस्य । सबाधसः—बाधेरसुन् । बाधसा सह वर्तते इति सबाधाः । 'वोपसर्जनस्य' इति सहस्य सभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

७. धनानां दानाय भव । रातये—'रा दाने' क्तिन् 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इत्यन्तोदात्तः Sy.

८. किञ्च Sy.

९. आस्माकाः पुत्रमित्रादयः । अस्माकासः—'तस्मिन्नणि च युष्माकास्माकौ' इत्यणि कृतेऽस्माकादेशः । छान्दसत्वादणो लोपः । बहुवचनेऽसुगागमः । षष्ठीबहुवचने मध्योदात्तत्वेन दृष्टत्वात्तथाविधमादेशमत्रापि कृतवानाचार्यः Sy.

१०. स्तोतारः Sy.

११. विश्वाः—विशेः 'अशिप्रुषि०' इत्यादिना क्वन् । नित्त्वादाद्युदात्तः Sy.

१२. तासां तरणे क्षमा भवन्तु । अथवा आशाः कामाः । अयमर्थः—स्वाभिलषितप्रशस्तसमस्तवस्तु सम्पादनं कुर्वित्यर्थः Sy. तरीषणि—'तॄ प्लवनतरणयोः' 'कृतॄभ्यामीषन्' (Uṇādi 4.466.) इतीषन् । बहुलवचनान्नलोपाभावः । अन्तोदात्तश्छान्दसः Sy.

१३ VM. ignores अग्ने ।

१४. अस्माकम् Sy.

१५. कार्यकारणयोरभेदोपचारादङ्गिरसां प्रकृतिभूतोऽप्यग्निरङ्गिरा इत्युच्यते । हे अङ्गिरः ! Sy.

१६. पूर्वैर्महर्षिभिः स्तुतः Sy.

१७. इदानीन्तनैश्च स्तूयमानस्त्वम् । स्तवानः—'ष्टुञ् स्तुतौ' शानचि कर्मणि व्यत्ययेन शप्प्रत्यय आद्युदात्तश्च Sy.

१८. धनम् Sy.

महतामभिभवितारम् । तथा स्तोतृभ्यः । अस्मभ्यम् । बलाय । च भव । उत । एधि । वृत्सु । नः । वृधे ।

V.11.

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥ १ ॥

जनस्य ॥ सुतम्भरः ॥ जनस्य । गोपायिता । जातः । जागरणशीलः । शोभनबलः । अभ्युदयाय ।

१. महतामप्यभिभवितारम् । अभिभवहेतुत्वादभिभवितृ धनमुच्यते । विभ्वासहम्—संहितायां विभूनामिति षष्ठीबहुवचनस्य 'सुपाम्०' इत्यादिनाऽऽकारादेशः । 'तत्पुरुषे कृति बहुलम्' इति षष्ठ्या अलुक् । पदकारास्तु विपूर्वाद्भुवतेः अगागमे 'अन्येषामपि दृश्यते' इति दीर्घत्वं च मत्वावग्रहं कुर्वन्ति । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

२. स्तोतृं सामर्थ्यं च प्रयच्छ । स्तवसे—'ष्टुञ् स्तुतौ' तुमर्थेऽसेन्प्रत्ययः । नित्त्वादाद्युदात्तः Sy.

३. अपि च Sy.

४. भव Sy.

५. वृतत्सु P. पृत्सु is suggested for वृत्सु ॥ युद्धेषु Sy.

६. अस्माकम् Sy.

७. समृद्धये Sy.

८. VM. ignores आ । भर and होतः ॥ आ हर हे देवानामाह्वातः ! Sy.
Ms. D. puts the figure ॥१०॥ here to indicate the end of the tenth hymn. No such number is given in P.

९. 'जनस्य गोपाः' इति षडृचमेकादशं सूक्तमात्रेयस्य सुतम्भरस्यार्षं जागतमाग्नेयम् । तथा चानुक्रान्तम्—'जनस्य षट् सुतम्भरो जागतम्' (KSA. 25.11. p. 19.) इति । प्रातरनुवाके आश्विनशस्त्रे चास्य सूक्तस्य विनियोगः । 'जनस्य गोपास्त्वामग्न ऋतायवः' (ASS 4.13. इति) Sy.

१०. यजमानस्य Mah., U.

११. रक्षिता । गोपाः—'गुपू रक्षणे' आयप्रत्ययः । गोपायतेः क्विप् । परत्वादतो लोपः । अत्र परत्वादपृक्तस्य लोपे कृते वर्णाश्रयत्वात् प्रत्ययलक्षणाभावेन यलोपो न स्यात् 'लोपो व्योर्वलि' इति प्रथमं लोपग्रहणात् ज्ञापकाद्यलोप एव भवति । लोपाजादेशस्य यलोपविधिं प्रति न स्थानिवद्भावः । प्रत्ययस्वरः Sy. गोपायति रक्षतीति गोपाः Mah. योऽयं गोपायिता U.

१२. तैर्मथितत्वात्तेभ्यो जात इत्युच्यते Mah.

१३. जागरणशीलः सदा प्रबुद्धः । जागृविः—'जागृ निद्राक्षये' 'जॄशॄस्तॄजागृभ्यः क्विन्' इति क्विन्प्रत्ययः । 'जाग्रोऽविचिण्णल्ङित्सु' इति प्रतिषेधाद् गुणाभावः नित्त्वादाद्युदात्तः Sy. कर्मणि सावधानः Mah. अम्लिष्टज्ञानोऽग्निः U.

१४. सुबलः सर्वैः श्लाघनीयबलः । सुदक्षः—'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् Sy. शोभनो दक्ष उत्साहो यस्य, अतिकुशलो वा Mah. शोभनोत्साहः U.

१५. लोकानां कल्याणाय । सुविताय—'तन्वादीनां छन्दस्युपसंख्यानम्' इति सोरुवङादेशः' 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् Sy. सूताय प्रसूताय कर्मणे यागाय । सूतेरिडागम आर्षः Mah. सुप्रभूताय कर्मणे U.

नवतराय[1]। घृतलिङ्गः[2]। दिवं स्पृशता तेजसा[3] सह। दीप्तियुक्तम्[4]। विभाति[5] सोऽयम्। मनुष्येभ्यः[6]। शुचिः[7][8]।

**यज्ञस्य॑ के॒तुं प्र॑थ॒मं पु॒रोहि॑तम॒ग्निं नर॑स्त्रिषध॒स्थे समी॑धिरे।**
**इन्द्रे॑ण दे॒वैः स॒रथं॒ स ब॒र्हिषि॒ सीद॒न्नि होता॑ य॒जथा॑य सु॒क्रतुः॑ ॥ २ ॥**

**यज्ञस्य।** 'यज्ञस्य[9] केतुमि[10]त्येष[11] ह वै यज्ञस्य केतुर्यत्र ह वै क्वच सूयते तदेष ह वै पुरस्तात् केतुरुच्छ्रीयते। प्रथमं पुरोहितमि[12]ति पुर इव वा एनमेतं[13] दधते यमग्निमादधते' इति विज्ञायते। त्रयाणां बर्हिषो धातूनां सहस्थाने[14]। दीपयन्ति[15]। सोऽयम्। इन्द्रेण। देवैश्च। सरथमागत्य[16]। बर्हिषि[17]। निषीदतु[18]। यज्ञा[19]। सुकर्मा[20][21]।

---

१. नव्यसे—नवशब्दादतिशायनेऽर्थे ईयसुन्प्रत्ययः। ईकारलोपश्छान्दसः। अतो लोपः। आद्युदात्तः Sy. नवीयसे अभिनवं नवीयस्तस्मै। ईलोप आर्षः Mah.

२. घृतेन प्रज्वलिताङ्गः Sy. घृतं प्रतीके मुखे यस्य Mah. घृतमुखः U.

३. अभ्रंलिहेन तेजसा युक्तः। दिविस्पृशा—'हृद्द्युभ्यां ङेरुपसंख्यानम्' इत्यलुक्। कृदुत्तरप्रकृतिस्वरत्वम् Sy. द्युलोकस्पर्शिना Mah. दिवं स्पृशतीति दिविस्पृक् तेन दिविस्पृशा U.

४. दीप्तिमत् यथा भवति तथा। द्युमत्—'ह्रस्वनुड्भ्यां मतुप्' इति ह्रस्वात्परस्य मतुपोऽन्तोदात्तत्वम् Sy. कान्तिमद्यथा तथा Mah. द्युतिमद् U.

५. प्रकाशते Sy. विविधं दीप्यते Mah., U.

६. ऋत्विग्भ्यस्तदर्थम् Sy. भरतेभ्य ऋत्विग्भ्यः सकाशात् Mah. ऋत्विग्भ्योऽर्थाय U. भरता इत्यृत्विङ्नाम (Ngh. 3.18.)

७. शुद्धः, एवंविधोऽग्निः Sy. शुद्धो बहूनि हवींषि भक्षयन्नपि, उच्छिष्टो न स्याच्च शोधको वा Mah. बहून्यपि हवींषि भक्षयन्नुच्छिष्टो न भवति शोधको वा। यद्वा योऽसौ यजमानस्य गोपायिताऽजनिष्ट भरतेभ्यः ऋषिभ्यः सकाशात्। ऋत्विग्यजमानेभ्यो वा। जागृविरग्निः सुदक्षः। सुप्रभूताय कर्मणे नवतराय। सोऽयं घृतमुखो महता भानुना दिविस्पृशा द्युतिमद्विभाति। 'शुचिः शोचतेः। ज्वलतिकर्मणः' (N.6.1.) यद्वा मनुष्येभ्यो विजायमानो मनुष्यसम्बद्धैर्दोषैर्न लिप्यते। U.

८. VM. ignores अग्निः and बृहता॥ बृहता महता Sy. बृहता ज्वालासमूहेन Mah. महता भानुना U.
This stanza=YV. 15.27.

९. यागस्य Sy.

१०. प्रज्ञापकम्। 'कित ज्ञाने' औणादिक उप्रत्ययः Sy. ११. ०तुं इष P.

१२. यजमानैः पुरस्कृतम्। पुरोहितम्—"पुरोऽव्ययम्' इति गतिसंज्ञायां 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

१३. ०मेतद् P.

१४. त्रिस्थाने विहारप्रदेशे। त्रिषधस्थे—आहवनीयादिलक्षणेन त्रिप्रकारेणानेन सह तिष्ठतीति त्रिषधस्थः। कप्रत्ययः। 'सधमादस्थयोश्छन्दसि' इति सधादेशः। कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

१५. मिव यन्ति P. समैन्धत Sy.

१६. तेषां मान्यत्वात् समानरथम् Sy.

१७. बर्हिर्युक्ते तस्मिन् स्थाने Sy.

१८. प्रतिष्ठितोऽभवदिति यावत्। सीदत्—सदेः पाघ्रादिना सीदादेशः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। पादादित्वान्निघाताभावः Sy. १९. यज्ञाय is suggested for यज्ञा॥ यजथाय—यजेरौणादिकोऽथप्रत्ययः। प्रत्ययस्वरेण मध्योदात्तः Sy.

२०. ०र्माः P. शोभनकर्मा Sy.

२१. VM. ignores नरः and होता॥ नरः ऋत्विजः। होता देवानामाह्वाता Sy.

असंमृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरुदतिष्ठो विवस्वतः ।
घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद्दिवि श्रितः ॥ ३ ॥

**असम्मृष्टः**[1] । शत्रुभिरसम्मृष्टस्त्वम्[2] । अरण्योः[3] । जायसे[4] । निर्मलः[5] । क्रान्तस्त्वम्[6] । उत्थितवानसि[7] जननानन्तरम् । यजमानात्[8] । अथ घृतेन । त्वाम्[9] । अवर्धयन्[10] । अग्ने ! आहुत[11] ! धूमश्च । ते[12] । प्रज्ञापकः[13] दिवि[14] । अभवत्[15] । व्याप्तः[16] ।

अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरन्ते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुम् ॥ ४ ॥

**अग्निर्नः**[17] । अग्निः । अस्माकम्[18] । यज्ञम्[19] । उपगच्छतु[20] । सुष्ठु[21] । अग्निम् । मनुष्याः । विविधं धारयन्ति[22] । अनुग्रहम्[23] । अग्निम्[24] । दूतः[25] । अभवत्[26] । हविषां वोढा[27] । अग्निमेव[28] । यज्ञाय वृणानाः[29] । वृणते[30] होतारम् । क्रान्तप्रज्ञम्[31] ।

---

१. ०सम्० D.

२. ०त्रुसम्० P. अबाधित एव Sy.

३. स्वजननिमित्तत्वादरणी मातरावित्युच्येते । ताभ्याम् । मात्रोः—'उदात्तयणोः हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् Sy.

४. प्रादुर्भूतो भवसि Sy. ५. निर्मदः P.

६. का० D. सर्वत्र व्याप्तः । अथवा मेधावी । कविः—क्रमेः 'इन् सर्वधातुभ्यः' इतीन्प्रत्ययः । बाहुलकान्मकारस्य वत्वं रेफलोपश्च । व्यत्ययेनान्तोदात्तत्वम् Sy.

७. उदितोऽभवः । उदतिष्ठः—उत्पूर्वादूर्ध्वकर्मवाचिनस्तिष्ठतेरात्मनेपदाभावः Sy.

८. अग्निहोत्राद्यर्थं गृहे विशेषेण वसतः यजमानात् । विवस्वतः—विपूर्वाद्वसतेः सम्पदादिलक्षणो भावे क्विप् । 'तदस्यास्ति०' इति मतुप् 'मादुपधायाश्च०' इति वत्वम् । मतुपोऽनुदात्तत्वाद् धातुस्वरः Sy.

९. पूर्वे महर्षयस्त्वाम् Sy.

१०. आव० P. वृद्धिमनयन् Sy.

११. हे आहुतिभिर्हुत ! Sy.

१२. तव Sy.

१३. प्रज्ञापकः, . . . अग्न्यनुमापकत्वाद् धूमस्य Sy.

१४. अन्तरिक्षे Sy.

१५. दीप्य भव व्याप्तः P.

१६. VM. ignores मन्द्रः ॥ सर्वैः स्तुतः । मन्द्रः—'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' स्तुत्यर्थादस्मात् 'स्फायितञ्चि०' इत्यादिना रक् । अन्तोदात्तः Sy.

१७. नः is omitted by P.

१८. अस्मदीयम् Sy. १९. यागं प्रति Sy.

२०. उदग० P. आगच्छतु Sy.

२१. सर्वपुरुषार्थानां साधकः । साधया—'सुपां सुलुक्०' इत्यादिना विभक्तेर्यादेशः Sy.

२२. विहरन्ति विहरणं कुर्वन्तीत्यर्थः Sy.

२३. ०गृहं is suggested for ०ग्रहम् ॥ अनुगृहम् Sy.

२४. अग्निः is suggested for अग्निम् ।

२५. देवानां दूतः Sy.

२६. Both P. and D. read वद् only, which evidently stands for अभवत् ।

२७. हव्यानां वोढा Sy.

२८. अग्नि वै P. २९. सम्भजमानाः सन्तः Sy.

३०. ०तो P. सम्भजन्ते Sy.

३१. कान्त० P. क्रान्तयज्ञम् Sy.

तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।
त्वां गिरः सिन्धुमिवावनीर्महीरा पृणन्ति शवसा वर्धयन्ति च ॥ ५ ॥

तुभ्येदम् । तुभ्यमेव । अग्ने ! मधुमत्तमम्[1] । इदम् । वचः[2] । तथा मति तुभ्यमेव । स्तुतिः[3] । इयम् । अस्तु । सुखकरा[4] । हृदयाय[5] । त्वाम् । स्तुतयः[6] । समुद्रमिव । आपः[7] । महत्यः । आपूरयन्ति । वेगेन[8] । वर्धयन्ति । च ।

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥ ६ ॥

त्वामग्ने[9] । त्वाम् । अग्ने ! अङ्गिरसः[10] । गुहायाम्[11] । निहितम्[12] । अन्वविन्दन्[13] । श्रयमाणम्[14] । काष्ठे[15] । काष्ठे । स त्वम्[16] । जायसे[17] । मथ्यमानः[18] । तं त्वाम् । महत्[19] । बलम्[20] । आहुः[21] । सहसः[22] । पुत्रम् । आङ्गिरसामेक[23] !

---

१. त्वदर्थम् Sy.
२. अत्यन्तं मधुरम् Sy.
३. ०चः स्त० D. वचः क्रियते Sy.
४. कर D. सुखं कुर्वती Sy.
५. हृदि Sy.
६. स्तुतिरूपा वाचः Sy.
७. अवन्यो नद्यः Sy. ८. बलेन Sy.
९. यं त्वाम् Mah., U.
१०. ऋषयः Sy. अङ्गिरोवंशोद्भूवा ऋषयः Mah. आङ्गिरस ऋषयः U.
११. निगूढे प्रदेशे Mah., U.
१२. नि is omitted by P. निगूढम् Sy. स्थितम् । अप्सु प्रविष्टमित्यर्थः । 'अग्निर्देवेभ्यः उदक्रामत्सोऽप आविशत्' इत्यादिश्रुतेः Mah. अवस्थितम । अप्सु, 'अग्निर्देवेभ्य उदक्रामत् सोमः प्राविशत्' इत्येवमादिनिदानमस्य मन्त्रस्य U. १३. ०न्दं P. अलभन्त Sy. लेभिरे । अन्विष्य प्रापुरित्यर्थः Mah. लब्धवन्तः U.
१४. आश्रितम् । शिश्रियाणम्—'श्रिञ् सेवायाम्' लिटः कानच् । शपः श्लुः । 'श्लौ' इति द्विर्वचनम् । इयङादेशः । चित्त्वादन्तोदात्तः Sy. श्रितम् Mah. अवस्थितम्....अन्वविन्दन्नङ्गिरस इति वर्तते U.
१५. वृक्षे वृक्षे Sy. पुनर्नष्टं त्वां वने वने नानावनस्पतिषु Mah. पुनरपि नष्टं सन्तं वने वने ओषधिवनस्पतिषु U.
१६. यं त्वामङ्गिरसोऽलभन्त स त्वम् Mah. स त्वमिदानीमपि U.
१७. अधुनाप्यरणिभ्य उत्पद्यसे Mah. जायसेऽरणिकाष्ठेभ्यो मथ्यमानः U.
१८. मथ्यमानो जायस इत्यर्थः Mah.
१९. महता Sy. महता बहुना Mah. महतेति विभक्तिव्यत्ययः U. २०. बलेन युक्तः Sy. सहसा बलेन मथ्यमानः । महत्सहश्शब्दाभ्यां तृतीयालोपः Mah. बलेन U.
२१. अत एव त्वामाहुर्वदन्ति मुनयः । बलेन मन्थनाज्जायमानत्वाद् बलपुत्रं वदन्तीत्यर्थः Mah. अतश्च कारणात्त्वामाहुर्ऋषयः U.
२२. बलस्य Mah., U.
२३. ०कः D. अङ्गिरसां प्रकृतिभूत ! Sy. अङ्गिरस इत्यग्नेः सम्बोधनम् । हे अङ्गिरः ! U. Ms. D. puts the figure ॥११॥ here to indicate the end of the eleventh hymn. No such number is given in P.
This stanza=YV. 15.28.

V. 12.

प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म ।
घृतं न यज्ञ आस्ये सुपूतं गिरं भरे वृषभाय प्रतीचीम् ॥ १ ॥

[1] प्राग्नये । प्रभरामि[2] । अग्नये । महते[3] । यज्ञार्हाय । उदकस्य[4] । वर्षित्रे । बलवते[5] । मननीयाम्[6] ।
घृतम्[7] । इव । सुपूतम्[8] । आस्ये । स्तुतिम्[9] । कामानां वर्षित्रे । अग्निं प्रति गच्छन्तीम्[10] ।[11]

ऋतं चिकित्व ऋतमिच्चिकिद्ध्यृतस्य धारा अनु तृन्धि पूर्वीः ।
नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः ॥ २ ॥

ऋतं चिकित्वः । ऋतस्य[12] । ज्ञातः[13] ! ऋतम्[14] । एव[15] । जानीहि[16] । तथा ऋतस्य[17] । धाराः। पूर्वीः ।
अनुतृन्धि[18], बह्वीः[19] । न । अहम् । आरोचमानस्य । वृष्णोऽग्नेः[20] । सत्यभूतम्[21] । मोर्गम्[22] । ससा[23] अविचारेण ।
स्पृशामि[24] । नापि । सत्येन चानृतेन[25] च, ऋतमिति शास्त्रीयमकुटिलं कर्मोच्यते[26] ।

---

१. 'प्राग्नये बृहते' इति षडृचं द्वादशं सूक्तं सुतम्भरस्यार्षं त्रैष्टुभमाग्नेयम् । 'प्राग्नये' (KSA. 25.12. p. 19.) इत्यनुक्रान्तम् प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तं विनियुक्तम् । सूत्रितञ्च—'प्राग्नये बृहते प्र वेधसे कवये' (ĀSS. 4.13.) इति Sy.

२. प्रणयामि Sy.

३. सामर्थ्यातिशयेन महते Sy.

४. ०र्हा नया द० P. ऋतमित्युदकनाम Ngh. 1.12.

५. असुराय असेरौणादिक उरन्प्रत्ययः Sy.

६. ज्ञानसाधनम् Sy.

७. आस्ये प्रहुतं घृतं यथा प्रीतिकरं भवति तथा प्रीतिकरीं स्तुतिमित्यर्थः Sy.

८. सम्यक् संस्कृतम् Sy.

९. स्तुतिरूपां वाचम् Sy.

१०. गच्छति P. अभिमुखीम् Sy.

११. VM. ignores यज्ञे ।

१२. ऋतं स्तोत्रम् । ऋतमिति पदस्य परस्मिन्नामन्त्रिते विद्यमानेऽपि छान्दसत्वात्पराङ्गवद्भावाभावः Sy.

१३. हे चिकित्वः ! जानन्नग्ने ! त्वम् Sy.

१४. मया क्रियमाणमिदं स्तोत्रम् Sy.

१५. इदिति पूरणः Sy.

१६. चिकिद्धि—'कित ज्ञाने' । जुहोत्यादिः । लोटि रूपम् Sy.

१७. तथार्तस्य P.
उदकस्य Sy.

१८. सस्यपोषणार्थमुत्पादयितुम् मेघाननुविध्य Sy.

१९. बह्वी P. बह्वीः refers to पूर्वीः, therefore it should immediately follow पूर्वीः and precede अनुतृन्धि ।

२०. कामानां वर्षितुस्तव Sy.

२१. स्तोत्रमेव Sy.

२२. यातुं कर्मणां नाशकरीं हिंसाम् Sy.

२३. सहसा is suggested for ससा ॥ बलेन युक्तः Sy.

२४ स्पृशामि करोमीति यावत् । 'षप समवाये' इति धातुः Sy.

२५. सत्यानृताभ्यां यत्किञ्चिदवैदिकं कृत्यम् Sy.

२६. The passage, ऋतमिति शास्त्रीयमकुटिलं कर्मोच्यते, should immediately follow सत्यभूतम् and precede मार्गम् ।

**कया॑ नो अग्न ऋ॒तय॑न्नृ॒तेन॒ भुवो॒ नवे॑दा उ॒चथ॑स्य॒ नव्यः॑ ।**
**वेदा॑ मे दे॒व ऋ॑तु॒पा ऋ॑तू॒नां नाहं पतिं॑ सनि॒तुर॒स्य रा॒यः ॥ ३ ॥**

**कया नः ।** कीदृशा[1] वाचा । अस्माकम्[2] । अग्ने ! सत्येनैव[3] । सत्यं कर्मेच्छन्[4] । भवति[5] । ज्ञाता[6] । उक्तस्य[7] । स्तुत्यः कीदृश्या वाचा स्तुत उक्तं शृणोतीत्यर्थः[8] । जानाति[9] । माम् । ऋतूनाम् । ऋतुपाः[10] । पतिम्[11] । न । अहं वेद्मि[12] । धनस्य[13] । अस्य[14] । पालयितारम्[15] । प्रदातारमिति[16][17] ।

**के ते॑ अग्ने रि॒पवे॒ बन्ध॑नासः॒ के पा॒यवः॑ सनिषन्त द्यु॒मन्तः॑ ।**
**के धा॒सिम॑ग्ने॒ अनृ॑तस्य पान्ति॒ क आस॑तो॒ वच॑सः सन्ति गो॒पाः ॥ ४ ॥**

**के ते ।** के[18] । तव[19] । अग्ने ! शत्रोः[20] । बन्धका[21] रश्मयः ? के वा रश्मयः[22] । प्रयच्छन्ति[23] धनानि ।

---

१. केनापि Sy.

२. अस्मदीयस्य Sy.

३. क्रियमाणेन कर्मणा Sy.

४. सत्य P. सर्वप्राणिनां जीवनहेतुकमुदकं कुर्वन् Sy.

५. भवेः । भुवः—'भू सत्तायाम्' लिङर्थे लेटच्-डागमः । उवङादेशः Sy.

६. नवेदाः—न न वेत्तीति वेत्तीत्यस्मिन्नर्थे वर्तते । कथमेतल्लभ्यते ? निपातनात् । द्विनञ्पूर्वस्या-सुन्प्रत्ययान्तस्य वेदेरेकस्य नञो लोपोऽन्यस्य प्रकृतिभावश्च स्कन्दस्वामिना निपातितः । पाणिनिना तु 'नभ्राण्नपात्' इति सूत्रे न वेत्ती-त्येतस्मिन्नर्थे निपातितः । अस्यार्थस्यानुपपन्न-त्वात् स्कन्दस्वामिपक्ष एवाश्रीयते Sy.

७. उचथस्य is suggested for उक्तस्य ॥ स्तोत्रस्य Sy.

८. उक्थं M.

९. वेत्तु Sy.

१०. ०पः P. द्वितीय ऋतुशब्दोऽनुवादकः Sy.

११. स्वामिनं तमग्निम् Sy.

१२. जानामि Sy.

१३. पश्वादिलक्षणस्य धनस्य Sy.

१४. मम Sy.

१५. पालयितारम् seems to be the explanation of पतिम् and should immediately follow it.

१६. प्रदातारम् seems to be the explanation of सनितुः ॥ सनितुः भजमानस्य Sy.

१७. VM. ignores देवः ॥ देवो द्योतमानोऽग्निः Sy.

१८. कीदृशाः । सामर्थ्यातिशयादेवंविधा इति केनापि ज्ञातुं न शक्यन्त इत्यर्थः Sy.

१९. त्वत्सम्बन्धिनस्ते पुरुषाः Sy.

२०. Sy. adds स्वकीयस्य ।

२१. ०करा P.
बन्धकाः स्युः Sy.

२२. VM. seems to explain पायवः as रश्मयः ॥ Sy. explains पायवः as जनानां रक्षितारः ।

२३. दीनेभ्यो धनं प्रयच्छन्ति ते त्वदीयाः कीदृशाः ? Sy.

दीप्तिमन्तः ? के[1] वा। अनृतकर्मणः[2]। धारकं पुरुषम्[3]। रक्षन्ति ? के[4] वा। असत्यस्य[5]। वचसः। गोपायितारः[6]। भवन्तीति प्रश्नः।

**सखा॑यस्ते॒ विषु॑णा अग्न ए॒ते शि॒वासः॒ सन्तो॒ अशि॑वा अभूवन् ।**
**अधू॑र्षत स्व॒यमे॒ते वचो॑भिरृजू॒यते॑ वृजि॒नानि॑ ब्रु॒वन्तः॑ ॥ ५ ॥**

**सखायः।** सखायः[7]। ते[8]। अग्ने ! विष्वग्गमना[9] अभूवन् पराबभूवुः[10] स्वदोषाः[11]। तथा पुरा भद्राः[12]। सन्तः। पश्चाद् अभद्राः[13]। अभूवन्। क एषां दोष[14] इत्याहाधूर्षतेति[15]। स्वयमेव। अशिवैर्वचोभिः[16]। हिंसितवन्तः[17]। ऋजुकर्माचरते तुभ्यम्[18]। अनृतानि[19]। ब्रुवन्तः यदा त्वां निन्दन्ति नायं स्तोतॄन् रक्षतीति तदा पराभवन्तीत्यर्थः[20]।[21]

**यस्ते॑ अग्ने॒ नम॑सा य॒ज्ञमीट्ट॑ ऋ॒तं स पा॑त्यरु॒षस्य॒ वृष्णः॑ ।**
**तस्य॒ क्षयः॑ पृ॒थुरा सा॒धुरे॑तु प्र॒सर्स्रा॑णस्य॒ नहु॑षस्य॒ शेषः॑ ॥ ६ ॥**

**यस्ते अग्ने।** यः[22]। ते[23]। अग्ने[24] ! नमस्कारेण[25] सह। यज्ञम्[26]। स्तौति साधु देवानग्निर्यजतीति[27]। सः।

---

१. को D. ये Sy.
२. असत्यस्य Sy.
३. जनम् Sy.
४. ते त्वदीया जनाः के सन्ति ? न के ऽपीत्यर्थः। अथवा ये के जना रिपोर्बन्धकाः, ये के पायवो रक्षितारः सनिषन्त धनं प्रयच्छन्ति। ये के ऽनृतस्यासत्यस्य धासिं धारकं जनं पान्ति, अनृतजनितपापात् परिहृत्य सन्मार्गप्रदानेन रक्षन्ति, ये केऽसतोऽभिशापादिलक्षणाद्वचसो गोपायितारः सन्ति ते सर्वे त्वदीयाः। त्वदुपासका इत्यर्थः Sy.
५. स० P. ये असतः दुष्टस्याभिशापादिलक्षणस्य Sy.
६. गोपायितारः रक्षितारः Sy.
७. स्तोतारः Sy.
८. तव Sy.
९. विप्रकीर्णाः सर्वत्र व्याप्ताः Sy.
१०. ०वु D.
११. स्वे P.। स्वदोषान् is suggested for स्वदोषाः।
१२. इदानीं त्वत्परिचर्यां कुर्वन्तः शिवा आढ्याः Sy.
१३. पूर्वं परनिन्दादीनि कुर्वाणास्त्वत्परिचर्यां त्यजन्तोऽभद्राः Sy.
१४. दोह P.
१५. ०हृ धू० P.
१६. ०वशि० P. असाधूक्तिभिः Sy.
१७. अहिंस्यन्त। धूर्वतेर्हिंसाकर्मण इदं रूपम् Sy.
१८. ऋजु सम्यगाचरतेऽपि मह्यम् Sy.
१९. कुटिलानि Sy.
२०. ०वती० D.
२१. VM. ignores एते twice ॥ एते मम सपत्नाः Sy.
२२. मनुष्यः Sy.
२३. त्वाम् Sy.
२४. Omitted by P.
२५. ननम० P. स्तोत्रेण Sy.
२६. ०ज्ञ D. यजनीयम् Sy.
२७. यद्वा ते तुभ्यं यज्ञं यागं नमसान्नरूपेण हविषा ईट्टे यजति। अस्मिन् पक्षे यजेः 'बहुलं छन्दसि' इति शपः श्लुः, 'श्लौ' इति द्विर्वचनम्। 'बहुलं छन्दसि' इति सम्प्रसारणं सवर्णदीर्घः। जकारस्य टकारः Sy.

आरोचमानस्य । वर्षितुस्तव[1] । आत्मविषयप्रजापश्वादिदानात्मकं शोभनकर्म[2] । अविच्छेदेनैव[3] रक्षति । तस्य[4] । निवासः[5] । विस्तीर्णः[6] । धनसमृद्धः[7] । आगच्छतु[8] । त्वां प्रति पुनः पुनः सरतः[9] । मनुष्यस्य । शेषभूतः[10][11] ।

## V.13.

**अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि । अग्ने अर्चन्त ऊतये ॥ १ ॥**

अर्चन्तः[12][13] । पूजयन्तः[14] । त्वाम[15] । हवामहे[16] । अर्चन्त एव[17] । सन्दीपयामः[18] । परिचरन्तः[19] । रक्षणाय[20][21] ।

**अग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यवः ॥ २ ॥**

अग्नेः । अग्ने[22] ! स्तोमम्[23] । उच्चारयामः[24] । कामानां साधकम्[25] । ज्वालाभिर्दिवं स्पृशतः[26] । देवस्य[27] । द्रविणमिच्छमानाः[28][29] ।

---

१. कामानां वर्षितुरग्नेः Sy.
२. ऋतं स्तोत्रम् Sy.
३. रिर० P., D.
४. यजमानस्य Sy.
५. गृहम् Sy.
६. विस्तीर्णं भवति । पश्वादिलक्षणैर्धनैः सम्पूर्णं भवतीत्यर्थः Sy.
७. कामानां साधकः Sy.
८. भवत्वित्यर्थः Sy.
९. सरन्तः P. प्रकर्षेण त्वत्परिचर्यां गच्छतः Sy.
१०. शिष्यत इति शेषः पुत्रः Sy.
११. Ms. D. puts the figure ॥१२॥ here to indicate the end of the twelfth hymn. No such number is given in P.
१२. 'अर्चन्तस्त्वा' इति षड्डृचं त्रयोदशं सूक्तं सुतम्भरस्यार्षं गायत्रमाग्नेयम् । अनुक्रान्तञ्च—अर्चन्तो गायत्रं तु' (KSA. 25.13. p. 19.) इति । प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि आश्विनशस्त्रे इदमादिके द्वे सूक्ते । सूत्रितञ्च 'अर्चन्तस्त्वेति सूक्ते' (ĀSS. 4.13.) इति । आहवनीयोपस्थाने 'त्वमग्ने सप्रथा असि' इत्येका । सूत्रितञ्च 'सं नः सृज सुमत्या वाजवत्या त्वमग्ने सप्रथा असीति च' (ĀSS. 3.10.) इति । अश्वमेधे पौष्णेष्टौ 'त्वमग्ने सप्रथाः' इति प्रथमाज्यभागानुवाक्या । 'त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वन्तौ' (ĀSS. 10.6.) इति Sy.
१३. अर्चयन्तः P.
१४. पूजयन्तो वयम् Sy.
१५. त्वा P.
१६. आह्वयामः Sy.
१७. ०न्तं देवः P. स्तुवन्तो वयम् Sy.
१८. समिद्भिः सन्दीपयामः Sy.
१९. अर्चन्त इति तृतीयं पदमादरातिशयार्थम् Sy.
२०. रक्षणाय तर्पणाय वा Sy.
२१. VM. ignores अग्ने !
२२. VM. explains gen. by voc.
२३. स्तोत्रम् Sy.
२४. ब्रूमः Sy.
२५. साधक P. पुरुषार्थानां साधकम् Sy.
२६. सूर्यरूपेणाऽऽकाशं व्याप्नुवतः Sy.
२७. द्योतमानस्य Sy.
२८. See footnote no. 7. on RV.V.9.2. p. 50. धनमिच्छन्तो वयम् Sy.
२९. VM. ignores अद्य ॥ अस्मिन्नहनि Sy.

अग्निर्जुषत नो गिरो होता यो मानुषेष्वा । स यक्षद्दैव्यं जनम् ॥ ३ ॥

अग्निः । अग्निः । अस्माकम् । स्तुतीः । सेवताम् । होता[1] । धन्यः[2] । मानुषेषु । आवर्तते[3] । सः[4] । यजतु । दैव्यम्[5] । जनम्[6] ।

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वि तन्वते ॥ ४ ॥

त्वमग्ने । सर्वतः पृथुतमः[8] । असि[9] । पर्याप्ता[10] । होता । वरणीयः[11] । त्वया[12] । यज्ञम् । कुर्वन्ति[13][14] ।

त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् ॥ ५ ॥

त्वामग्ने । त्वाम् । अग्ने ! अतिशयेनान्नस्य दातारम्[15] । मेधाविनः[16] । वर्धयन्ति[17] । सुष्ठु स्तुतम्[18] । सः[19] । अस्मभ्यम् । देहि । शोभनं[20] वीर्यम् ।

अग्ने नेमिरराँइव देवांस्त्वं परिभूरसि । आ राधश्चित्रमृञ्जसे ॥ ६ ॥

अग्ने नेमिः । त्वम् । अग्ने ! अरानिव[21] । नेमिः[22] । देवान् । परितो भवसि[23] । चित्रम्[24] । अन्नं[25] च । प्रसाधयसि[26][27] ।

---

१. देवानामाह्वाता Sy.
२. सन् यः is suggested for धन्यः ।
३. मानुषो गत्य व० P., D. आवसति Sy.
४. अग्निः Sy.
५. देवसम्बन्धिनम् Sy.
६. जन P.
७. सुतम्भरस्यार्षम् । हे अग्ने ! SKN.
८. सर्वतः पृथुरसि प्रियश्च SKN.
९. भवसि Sy.
१०. पर्याप्तः is suggested for पर्याप्ता ॥ सर्वदा प्रीतः Sy.
११. सर्वैर्वरणीयः Sy.
१२. Omitted by P. किं च सर्वे यजमानाः त्वया साधनेन Sy. त्वया च हेतुना तव प्रसादेनेत्यर्थः SKN.
१३. वितन्वते Sy. सर्वयष्टारो वितन्वते कुर्वन्तीत्यर्थः SKN.
१४. VM. ignores त्वम् and अग्ने ॥ सप्रथाः सर्वतः पृथुः । 'त्वमग्ने सप्रथा असि' इत्यपि निगमो भवति N. 6.7., SKN. II.415.
१५. वाजोऽन्नम् । तद्दतम् Sy.
१६. मेधाविनः स्तोतारः Sy.
१७. स्तोत्रैर्वर्धयन्ति Sy.
१८. पूर्वैर्महर्षिभिः सम्यक् स्तुतम् Sy.
१९. स त्वम् Sy.
२०. ०न P. सर्वैः श्लाघनीयं बलम् Sy.
२१. नाभावर्पितान् सूक्ष्मान् स्थासकानिव Sy.
२२. प्रकाशमानः चक्रस्य बाह्यो वलयः Sy.
२३. स्वतेजसा परिभवसि Sy.
२४. नानाविधम् Sy.
२५. राध्नुवन्ति साधयन्त्यनेन पुरुषार्थानिति राधो धनम् Sy. राध इति धननाम Ngh. 2.10.
२६. आ ऋञ्जसे स्तोतृभ्यः प्रसाधय Sy.
२७. Ms. D. puts the figure ॥१३॥ here to indicate the end of the thirteenth hymn. No such number is given in P.

V.14.

**अ॒ग्निं स्तोमे॑न बोधय समिधा॒नो अम॑र्त्यम् । ह॒व्या दे॒वेषु॑ नो दधत् ॥ १ ॥**

अग्नि[1] स्तोमेन । अग्निम् । स्तोतः[2] ! स्तोमेन[3] । बोधय[4] । काष्ठैः समिधानः[5] । अमर्त्यम्[6] । सः[7], हव्यानि[8] । देवेषु । अस्माकम्[9] । प्रयच्छतु[10] ।[11]

**तम॑ध्व॒रेष्वी॑ळते दे॒वं मर्ता॒ अम॑र्त्यम् । यजि॑ष्ठं॒ मानु॑षे॒ जने॑ ॥ २ ॥**

तमध्वरेषु । तम्[12] । यज्ञेषु[13] । स्तुवन्ति । यष्टृतमम् । मानुषे[14] । जने[15] वर्तमानम्[16] ।

**तं हि शश्व॑न्त॒ ईळ॑ते स्रु॒चा दे॒वं घृ॑त॒श्चुता॑ । अ॒ग्निं ह॒व्याय॒ वोळ्ह॑वे ॥ ३ ॥**

तं हि शश्वन्तः[17] । तम् । हि । बहवः[18] । स्तुवन्ति । घृतश्चुता[19] । जुह्वा सह[20] । अग्निम् । हविषः[21] । वहनाय[22] ।[23]

---

१. 'अग्निं स्तोमेन' इति षडृचं चतुर्दशं सूक्तं सुतम्भरस्यार्षं गायत्रमाग्नेयम् । 'अग्नि स्तोमेन' इत्यनुक्रमणिका (KSA. 25.14. p. 19.) प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः Sy.

२. हे स्तोतः ! हे अध्वर्यो ! Mah., U.

३. स्तोत्रेण Sy. स्तुत्या Mah. स्तुतिभिः U.

४. स्वाभिलषितार्थसिद्धये प्रबोधय Sy. अवगतार्थं कुरु Mah., U.

५. योऽग्निः स्तोत्रैः सम्यक् प्रकाशमानः Sy. समिन्द्धे स समिधानः सन्दीपयन् Mah. सन्दीपयन् U.

६. अमरणधर्माणम् Sy. मरणधर्मरहितम् Mah. U.

७. सोऽग्निर्बोधितः सन् Mah.

८. हवींषि Sy., Mah. किमर्थं पुरस्कृत्येति चेद् हव्या हवींषि U.

९. अस्मदीयानि Sy. अस्मत्सम्बन्धीनि U.

१०. निदधातु Sy. धारयतु । अस्य सोऽधिकारोऽस्ति Mah. वधातु । स ह्यस्याधिकार इति U. This stanza=YV. 22.15.

११. अथाहाग्नयेऽनुब्रूहीति । आग्नेयमाज्यभाग ँ् सोऽन्वाहाग्निँ् स्तोमेन बोधय समिधानोऽअमर्त्यम् । हव्या देवेषु नो दधदिति स्वपितीव खलु वाऽएतद्यदुद्वासितो भवति सम्प्रबोधयत्येवैनमेतत्समुदीर्यति जुषाणोऽअग्निराज्यस्य वेत्विति यजति । SB. 2.2.3.21. p. 150.

१२. अग्निम् Sy.

१३. सप्ततन्तुषु Sy.

१४. मनुष्याणां सम्बन्धिनि Sy.

१५. लोके Sy.

१६. VM. ignores देवम् । मर्ताः and अमर्त्यम् ॥ देवं द्योतमानम् । मर्ता मनुष्याः । अमर्त्यम् अमरणधर्माणम् Sy.

१७. ०न्त P.

१८. बहवः स्तोतारः Sy.

१९. घृद्युता P.,D. कीदृशास्ते ? घृतं क्षरन्त्या Sy.

२०. स्रुचा सहिताः Sy.

२१. किमर्थं स्तुवन्ति ? हव्याय हव्यवहनार्थं चरुपुरोडाशादिलक्षणं हविः Sy.

२२. वोढुम् Sy.

२३. VM. ignores देवम् ।

अ॒ग्निर्जा॒तो अ॑रोचत॒ घ्नन्दस्यू॒ञ्ज्योति॑षा॒ तमः॑ । अवि॑न्दद्गा अ॒पः स्वः॑ ॥ ४ ॥

**अग्निर्जातः** । अग्निः । जातः[1] । दीप्यते[2] । राक्षसान्[3] । तमश्च । तेजसा[4] । घ्नन्[5] । अविन्दच्च[6] । गन्त्रीः[7] । अपः[8] । स्वर्लोकात्[9] ।

अ॒ग्निमी॒ळेन्यं॑ क॒विं घृ॒तपृ॑ष्ठं सपर्यत । वेतु॑ मे शृ॒ण॒वद्ध॒वम् ॥ ५ ॥

**अग्निमीळेन्यम्** । अग्निम्[10] । ईड्यम्[11] । कविम्[12] । घृतेन धृतपृष्ठम्[13] । परिचरत[14] । स पिबतु[15] । मम सोमम्[16][17] । शृणोतु च । आह्वानम् ।

अ॒ग्निं घृ॒तेन॑ वावृधुः॒ स्तोमे॑भिर्वि॒श्वच॑र्षणिम् । स्वा॒धीभि॑र्वच॒स्युभिः॑ ॥ ६ ॥

**अग्निं घृतेन** । अग्निम् । घृतेन । स्तोमैश्च[18] यजमानाः[19] । वर्धयामासुः[20] । सर्वस्य द्रष्टारम् । सुकर्मभिश्च[21] । स्तुतिवचनमिच्छद्भिर्ऋत्विग्भिः[22][23] ।

V.15.

प्र वे॒धसे॑ क॒वये॒ वेद्या॑य॒ गिरं॑ भरे य॒शसे॑ पू॒र्व्याय॑ ।
घृ॒तप्र॑सत्तो॒ असु॑रः सु॒शेवो॑ रा॒यो ध॒र्ता ध॒रुणो॒ वस्वो॑ अ॒ग्निः ॥ १ ॥

**प्र वेधसे**[24] ॥ धरुण आङ्गिरसः ॥ प्रभरामि[25] । विधात्रे । कवये[26] । वेदितव्याय[27] । स्तुतिम्[28] । यशस्विने ।

---

१. अरण्योर्मथनेन प्रादुर्भूतः Sy.
२. अदीप्यत Sy.
३. यज्ञविघ्नकारिणः शत्रून् Sy.
४. स्वेन तेजसा Sy. ५. हिंसन् Sy.
६. अवेदयत् Sy. ७. गाः Sy.
८. उदकानि Sy. ९. सूर्यं च Sy.
१०. हे जनाः ! Sy. ११. स्तुत्यम् Sy.
१२. क्रान्तदर्शिनम् Sy.
१३. दीप्तोपरिभागम् Sy.
१४. पूजयत Sy.
१५. सोऽग्निः कामयताम् Sy.
१६. मदीयम् Sy. १७. सोम P.
१८. स्तोत्रैः Sy.
१९. ऋत्विजः Sy. २०. अवर्धयन् Sy.
२१. शोभनाध्यानैः Sy.
२२. स्तुतिकामैर्देवैः समेतम् Sy.
२३. Ms. D. puts the figure ॥१४॥ here to indicate the end of the fourteenth hymn. No such number is given in P.
२४. द्वितीयेऽनुवाकेऽष्टादश सूक्तानि । तत्र 'प्र वेधसे' इति पञ्चर्चं प्रथमं सूक्तमाङ्गिरसस्य धरुणस्यार्षं त्रैष्टुभमाग्नेयम् । अत्रानुक्रमणिका—'प्र वेधसे पञ्चाङ्गिरसो धरुणः' (KSA. 25.15. p. 19.) इति । प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे ॥ छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितञ्च—'प्र वेधसे कवये त्वं नो अग्ने वरुणस्य विद्वान्' (ASS. 4.13.) इति Sy.
२५. प्रणयानि Sy. २६. क्रान्तदृशे Sy.
२७. वेद्याय स्तुत्याय । विदिरयं मनिना समानार्थो, मनिश्च स्तुतिकर्मा Sy.
२८. स्तुति P.

पुरातनाय[1]। सोऽयं घृतेन[2] निषण्णः। प्राज्ञः[3]। सुसुखः[4]। धनस्य। धर्ता[5] गवात्मकस्य। तथाऽन्यस्यापि धनस्य[6]। धर्ता[7]। अग्निः[8]।

ऋतेन॑ ऋ॒तं ध॒रुणं॑ धारयन्त य॒ज्ञस्य॑ शा॒के प॑र॒मे व्यो॑मन्।
दि॒वो धर्म॒न्ध॒रुणे॑ से॒दुषो॒ नॄ॒ञ्जा॒तैरजा॑ताँ अ॒भि ये न॑न॒क्षुः॥ २॥

**ऋतेन**। ऋतेन[9] कर्मणा। सत्यकर्माणम्[10]। धारकमग्निम्। धारयन्ति। यज्ञस्य[11]। सहायभूते[12]। परमे[13] स्थाने उत्तरवेद्याम्। द्युलोकस्य। धारके। यज्ञकर्मणि[14]। स्थितान्[15]। नेतॄन्। देवान् मनुष्येष्वजातान्[16]। जातैः[17]। पश्वादिभिर्व्याप्नुवन्ति[18][19]।

अं॒हो॒युव॑स्त॒न्व॑स्तन्वते॒ वि वयो॑ म॒हद्दु॒ष्टरं॑ पू॒र्व्याय॑।
स सं॒वतो॒ नव॑जातस्तुतुर्या॒त्सि॒हं न क्रु॒द्धम॒भितः॒ परि॑ ष्ठुः॥ ३॥

**अंहोयुवः**[20]। अग्नेः पाशमिश्रयितारो राक्षसा युयुत्सया[21]। आत्मशरीराणि[22]। विस्तारयन्ति[23]। यानि शरीराणि पूर्व्यायाग्नये[24]। महत्[25]। दुःखेन च तरणीयम्[26]। खादनीयमन्नमिव[27] भवन्ति। ततोऽयम्[28]। संवतः सङ्गतान् राक्षसान्[29]। नवजननम्[30]। तरति[31]। ते[32] सिंहम्। इव। क्रुद्धम्। अभितः[33]। परिवर्ज्याग्निम्[34]। तिष्ठन्ति[35] सर्वतः पालयन्ते[36]।

---

१. मुख्याय तस्मा अग्नये Sy.
२. हवीरूपेण घृतेन प्रसन्नः Sy.
३. प्राज्ञ P. बलवान् Sy.
४. शोभनं शेवं सुखं यस्यासौ सुशेवः Sy. सेवमिति सुखनाम Ngh. 3.6.
५. पोषकः Sy.
६. वासकोऽग्निर्भवति Sy.
७. हविषां धारकः Sy.
८. यः अग्निः Sy.
९. स्तोत्रेण Sy.
१०. सत्यरूपमग्निम् Sy.
११. ते यजमाना यज्ञम् Sy.
१२. कर्मणि निमित्ते Sy.
१३. उत्कृष्टे Sy.
१४. यज्ञे Sy.
१५. स्थिता P. आसीनान् Sy.
१६. आजातम् P.
१७. मनुष्यैर्ऋत्विग्भिः Sy.
१८. अभिप्राप्नुवन्ति Sy.
१९. VM. ignores ये ॥ ये यजमानाः Sy.
२०. ये यजमानाः Sy.
२१. ०सया P. अंहसा वियोजिकाः Sy.
२२. ते यजमानाः स्वास्तनूः Sy.
२३. वस्ता० D.
२४. मुख्यायास्मा अग्नये Sy.
२५. मह P., D. अधिकम् Sy.
२६. ०य P. राक्षसैर्दुष्प्रापम् Sy.
२७. हवीरूपमन्नं प्रयच्छन्ति Sy.
२८. अग्निः Sy.
२९. तान्नृक्ष० P., D. सङ्गतान् शत्रून् Sy.
३०. ०नः P. नवजातः Sy.
३१. तरतु Sy.
३२. कथमिव ? मृगाः सिंहम् इव Sy.
३३. सर्वतो वर्तमानाः शत्रवो माम् Sy.
३४. ०र्ज्यग्निम् P. वर्जयित्वा Sy.
३५. तिष्ठेयुः Sy.
३६. पावयन्ते P.

**मातेव यद्भरसे पप्रथानो जनंजनं धायसे चक्षसे च।**
**वयोवयो जरसे यद्दधानः परि त्मना विषुरूपो जिगासि ॥ ४ ॥**

**मातेव**। मातेव[1]। यदा[2]। बिभर्षि। प्रथमानः[3]। सर्वं जनम्। धारणाय जीवनाय। दर्शनाय। च[4]। तदा नानाजातीयमन्नं[5] हविर्लक्षणम्। जरयसि[6]। यत् यदात्मनि[7]। धारयसि। हुतदां तेन[8]। नानारूपः सन्। स्वयमेव[9]। परितो गच्छसि[10] राक्षसान् हन्तुं[11] यज्ञे सर्वतश्चरसि जगतो धारक इति।

**वाजो नु ते शवसस्पात्वन्तमुरुं दोघं धरुणं देव रायः।**
**पदं न तायुर्गुहा दधानो महो राये चितयन्नत्रिमस्पः ॥ ५ ॥**

**वाजः**[12]। हविर्लक्षणमन्नम्। तव[13]। बलस्य। अन्तम्। रक्षतु[14]। विस्तीर्णम्[15]। कामानां[16] दोहम्। कामानां[17] धारकं[18] च। हे देव[19]! धनस्य। यथा। स्तेनः[20]। गुहायाम्। पदम्[21]। निधत्ते[22] एवम्। अत्रिमृषिमसुरैर्[23]जिघांसितं तद्दुःखेनैव[24] गुहायां निधाय। पश्चात् महते। धनाय[25]। चेतयन्[26]। तम् अस्पः[27], महःशब्दः[28] सकारान्तोऽप्यग्नि ततश्चतुर्थ्या लुक्[29], स्पृणोतिः[30] पारकर्मा[31] तत उत्तारयामासेति[32][33]।

---

१. जननीव Sy. २. यस्त्वम् Sy.
३. सर्वत्र प्रथमानः Sy.
४. सर्वैः प्रार्थ्यसे Sy.
५. सर्वमन्नम् Sy.
६. जयसि P. ७. ०त्मन P.
८. ते P. हुतदत्तेन is suggested for हुतदां तेन ॥ धार्यमाणो भवसि Sy.
९. सायमेव D. आत्मना Sy.
१०. सर्वभूतानि परिगच्छसि Sy.
११. हन्त D.
१२. जं D. १३. त्वदीयस्य Sy.
१४. समाप्तिं सम्पूर्तिम् Sy.
१५. पृथुम् Sy. १६. कामान् P.
१७. दोग्धारम् Sy. १८. कामसाधकं D.
१९. हे द्योतमानाग्ने ! Sy.
२०. तस्करः Sy.
२१. द्रव्यम् Sy.
२२. धारयन् रक्षति तद्वत् Sy.
२३. ऋषिम् is omitted by P.
२४. तद्दु० P.
२५. धनलाभार्थम् Sy.
२६. सन्मार्गं प्रकाशयन् Sy.
२७. अत्रिमृषिम् Sy.
२८. चेतन्तमप्सा P., D. अप्रीणयः । यद्वा तमापद्भ्योऽपारयः । "स्पृ प्रीणनपारणयोः" इति धातुः Sy.
२९. The passage, महः....लुक्, should immediately follow महते and precede धनाय।
३०. स्पृणोति P. D.
३१. वार P.
३२. ०त्ताख्यामा० P. The passage, स्पृणोतिः ....उत्तारयामास refers to अस्पः and should therefore immediately follow अस्पः।
३३. VM. ignores नु ॥ नु अद्य Sy.
Ms. D. puts the figure ॥१५॥ here to indicate the end of the fifteenth hymn. No such number is given in P.

V.16.

बृहद्वयो हि भानवेऽर्चा देवायाग्नये।
यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥ १ ॥

बृहत्[1] ॥ पुरः[2] ॥ महत् । अन्नम्[3] । दीप्ताय[4] । प्रयच्छ[5] । देवाय[6] । अग्नये । यमग्निम् । सखायम् । इव । यज्ञे स्तुतिभिः[7] । मनुष्याः । आहवनीये[8] धारयन्ति[9] ।

स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः ।
वि हव्यमग्निरानुषग्भगो न वारमृण्वति ॥ २ ॥

स हि । सः[10] । हि । दीप्तैस्तेजोभिः[11] । जनानां मध्ये[12] । बाह्वोः[13] । दक्षस्य[14] समर्थस्य कर्मपरस्य यजमानस्य । होता[15] भवति । ततश्च हविः । वरणीयं[16] देवेषु । व्यृण्वति[17] प्रक्षिपति[18] । यथा[19] । भगः[20]=भाग्यं मनुष्येष्विति[21] ।

अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः ।
विश्वा यस्मिन्तुविष्वणि समर्ये शुष्ममादधुः ॥ ३ ॥

अस्य[22] । अस्य । स्तोमे[23] सति । धनं प्रयच्छत[24] । सख्ये[25] सति । सख्युः शत्रुविजयार्थ[26] प्रवृद्धतेजसः[27] ।

---

१. 'बृहद्वयः' इति पञ्चर्चं द्वितीयं सूक्तमात्रेयस्य पूरोरार्षम् । अन्त्या पङ्क्तिः शिष्टा अनुष्टुभः । अग्निर्देवता । तथा चानुक्रान्तम्—'बृहत् पूरः पङ्क्त्यन्तं हि' (KSA. 25.16. p. 19) इति । प्रातरनुवाके आग्नेये क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चेदमादीनि दश सूक्तानि चतुर्थनवमवर्जितानि । आदितस्त्रिषु सूक्तेष्वन्त्यामुद्धरेत् । तथा च सूत्रितम्—'बृहद्वय इति दशानां चतुर्थनवमे उद्धरेदुत्तमामुत्तमां चादितस्त्रयाणाम्' (ĀSS. 4.13.) इति Sy.

२. हं D.

३. हवीरूपमन्नं दीयते Sy.

४. ०प्त० P. दीप्तिमते Sy.

५. वयः प्रयच्छ Sy.

६. द्योतमानाय Sy.

७. प्रकृष्टाभिः स्तुतिभिः Sy.

८. आवहनीये P. पुरस्कुर्वन्ति Sy.

९. VM. ignores हि ॥ हि अतस्त्वम् Sy.

१०. अग्निः Sy.

११. ०प्तैस्तोभिः P. द्युतिभिर्युक्तः Sy.

१२. यजमानानाम् Sy.

१३. बह्रोः P. भुजयोः Sy.

१४. बलस्य Sy.

१५. देवानामाह्वाता भवति Sy.

१६. वारं वरणीयं धनम् Sy.

१७. ०व्युण्वति P. विशेषेण प्रयच्छति मनुष्येषु Sy.

१८. ०न्ति D.

१९. इव Sy.

२०. सूर्यः Sy.

२१. VM. ignores अग्निः and आनुषक् ॥ आनुषक् देवेष्वनुषक्तं करोति Sy.

२२. अस्यं D.

२३. स्तोत्रे Sy.

२४. प्रयच्छतः is suggested for प्रयच्छत ॥ मघवतो धनवतः Sy.

२५. सख्ये च स्याम Sy.

२६. P. reads सख्युर्विजयार्थं for शत्रुविजयार्थम् ।

२७. वृद्धानि प्रवृद्धानि शोचींषि तेजांसि यस्यासौ वृद्धशोचिः । एवंविधस्याग्नेः Sy.

कस्येत्याह—विश्वेति, सर्वाणि[1] भूतानि पञ्चजना अपि । यस्मिन्नग्नौ । महास्वनौ[2] ? महास्वने[3] युद्धे । सञ्जाते सति शत्रुविजयार्थं हविर्भिः[4], बलम् । आदधुः[5], उत्तरत्र सम्बन्धः[6] ।

अधा ह्यंग्न एषां सुवीर्यस्य मंहना ।
तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः ॥ ४ ॥

अधा हि । अधा[7] । हि । अग्ने ! एषां भूतानां मध्ये[8] । तम्[9] । एव स्तोमकर्तारं त्वया सिद्धसख्यम् । सुवीर्यस्य[10] तव । महत्त्वेन[11] । महान्तम्[12] । न[13] । द्यावापृथिव्यावपि[14] । परिभवतः[15] । अपि च[16] शत्रूणां यशश्च[17] परिभवति[18] ।

नू न एहि वार्यमग्ने गृणान आ भर ।
ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे ॥ ५ ॥

नू न एहि । क्षिप्रम् । अस्मान्[19] । आगच्छ[20] । वरणीयं धनम् । अग्ने ! स्तूयमानः[21] । आभर[22] । ये । वयम्[23] । ये । चास्मदीयाः[24] । स्तोतारः । सह[25] । त्वां धारयामः[26] । त्वं च[27] । अस्माकम् । युद्धेषु[28] । वर्द्धनाय[29] । भव[30] ।

---

१. सर्वे ऋत्विजः । 'सुपां सुलुक्०' इति डादेशः Sy.
२. It seems to be unnecessary.
३. बहुशब्दे Sy.
४. हविर्भिः स्तोत्रैश्च Sy.
५. सम्यगादधति Sy.
६. VM. ignores अर्थे ॥ अर्थे स्वामिनि Sy.
७. अथ Sy.
८. अस्माकं यजमानानाम् Sy.
९. अग्निम् Sy.
१०. सर्वैः स्पृहणीयस्य बलस्य Sy.
११. मंहनायै दानाय भव Sy. मंहतिर्दानकर्मा Cf. N. 1.7.
१२. महान्तं सूर्यम् Sy.
१३. इव Sy.
१४. ०व्याव D.
१५. परिगृह्णीतः Sy.
१६. ०तो न D.
१७. सर्वैः श्रवणीयम् Sy.
१८. परिभवतः is suggested for परिभवति ।
१९. आगत्य चास्मभ्यम् Sy.
२०. यज्ञं प्रत्यागच्छ Sy.
२१. स्तूयमानः सन् Sy.
२२. सम्पादय Sy.
२३. यजमानाः Sy.
२४. वयं चोस्म० P.,D.
२५. हविर्भिः सहिता उभे ये वयम् Sy.
२६. कुर्मः Sy.
२७. अपि च Sy.
२८. पृतनासु Sy.
२९. समृद्धये Sy.
३०. VM. ignores स्वस्ति ॥ स्तोत्रम् Sy. Ms. D. puts the figure ॥१६॥ here to indicate the end of the sixteenth hymn. No such number is given in P.

V.17.

**आ य॒ज्ञैर्दे॑व मर्त्य॑ इ॒त्था तव्यां॑समू॒तये॑ ।**
**अ॒ग्निं कृ॒ते स्व॑ध्व॒रे पू॒रुरी॑ळी॒ताव॑से ॥ १ ॥**

**आ यज्ञैः**[1] । आभिमुख्येन स्तौति[2] । हविर्भिः[3] सह । हे[4] देव ! मनुष्यः[5] । इत्थम् । प्रवृद्धम्[6] । रक्षणाय[7] । अग्निम् । शोभनाध्वरके[8] हविषि । पुरुर्नामायमृषिः[9] । अन्नाय[10] रक्षकाय[11] ।

**अस्य॒ हि स्वय॑शस्तर आ॒सा वि॑धर्म॒न्मन्य॑से ।**
**तं नाकं॑ चि॒त्रशो॑चिषं म॒न्द्रं प॒रो म॑नी॒षया॑ ॥ २ ॥**

**अस्य हि** । अग्ने ! स्वभूतकीर्तिस्त्वत्पुरः[12] । विविधकर्मन्[13] ! आस्येन[14] । स्तोत्रं करोषि[15] । ततश्च तमग्निम्[16] । अविद्यमानदुःखम्[17] । चित्रतेजसम्[18] । मोदनम्[19] । स्तुत्या[20] त्वम्[21] । परो[22] भवसि, परः[23] पारणात्[24] ।[25]

---

१. 'आ यज्ञैः' इति पञ्चर्चं तृतीयं सूक्तमात्रेयस्य पूरोरार्षमाग्नेयम् । अन्त्या पङ्क्तिः, शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः । 'आ यज्ञैः' (KSA. 25.17.p. 19.) इत्यनुक्रमणिका । अन्त्यावर्जं प्रातरनुवाकाश्विनशस्त्रयोः 'बृहद्वयः' इत्यादिदशसूक्तमध्ये विनियोग उक्तः Sy.

२. VM. explains आ and ईळीत together as आभिमुख्येन स्तौति but Sy. seems to explain the words separately आ as आह्वयति and ईळीत as स्तौति ।

३. स्तोत्रैः Sy.

४. Omitted by D.

५. ऋत्विक् Sy.

६. स्वतेजोभिः प्रवृद्धम् Sy.

७. तर्पणाय Sy.

८. शोभने क्रतौ तमग्निम् Sy.

९. मनुष्यः स्तोता Sy.

१०. रक्षणाय Sy.

११. VM. seems to explain कृते by हविषि. If हविषि is in opposition to शोभनाध्वरके then कृते is ignored.

१२. कीतिस्त्वत्पुरः P. ०कीर्तिमत्तरः is suggested for ०कीर्तिस्त्वत्पुरः ॥ सुयशसां मध्येऽतिशयेन सुयशास्त्वम् Sy.

१३. विशिष्टो धर्मो यस्यासौ विधर्मा स्तोता । तस्य सम्बोधनम् । हे स्तोतः ! Sy.

१४. ०र्मन्नास्ये० P. आस्येन वाचा Sy.

१५. स्तौषि Sy.

१६. प्रसिद्धम् Sy.

१७. नाकं सुखम् । अकं दुःखम् । न विद्यतेऽकं यस्य सः । तम् Sy.

१८. ०तेजस P. १९. स्तुत्यम् Sy.

२०. प्रकृष्टबुद्ध्या साधनेन Sy.

२१. त्वं P.

२२. परस्तात् स्थितम् Sy.

२३. परा P., D.

२४. वार० P.

२५. VM. ignores अस्य and हि । अमुं हि, अग्निम् Sy.

अस्य वासा उ अर्चिषा य आयुक्त तुजा गिरा ।
दिवो न यस्य रेतसा बृहच्छोचन्त्यर्चयः ॥ ३ ॥

अस्य वै । अग्नेः । एव[1] । अर्चिषा[2] । असौ लोकोऽर्चिष्मान्[3] भवति । सोऽयं[4] देवान् । हविषो दानेन[5] । स्तुत्या च । संयुनक्ति[6] । दिवः आदित्यस्य[7] । इव । यस्य[8] । शरीरान्निर्गच्छता[9] । अत्यन्तम्[10] । दीप्यन्ते[11] । अर्चयः[12][13] ।

अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ आ ।
अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते ॥ ४ ॥

अस्य क्रत्वा । अस्य[14] । प्रज्ञानेन[15] । विशिष्टबुद्धेः[16] । दर्शनीयस्य । धनम्[17] । स्तोतॄणां रथे । आगच्छति[18] । ततोऽयम्[19] । विश्वासु[20] प्रजासु । हवनार्हः[21] सन् । अग्निः । विक्ष्[22] । स्तूयते ।

नू न इद्धि वार्यमासा संचन्त सूरयः ।
ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय उतैधि पृत्सु नो वृधे ॥ ५ ॥

नू न इद्धि[23] । क्षिप्रम्[24] । एव । अस्माकम्[25] । स्तोतारः[26] । वरणीयं धनम् । आस्येन स्तोत्रेण । सेवन्त[27] ।

---

१. खलु Sy. २. प्रभया Sy.
३. आदित्यः Sy.
४. अग्निः Sy.
५. जगद्रक्षणसमर्थेन बलेन Sy.
६. सम्बद्धो भवति Sy.
७. द्योतमानस्यादित्यस्येव Sy.
८. अग्नेः Sy.
९. प्रभया कृत्स्नं जगद्व्याप्तम् Sy.
१०. बृहन्तः Sy.
११. प्रकाशन्ते Sy.
१२. दीप्तयः Sy.
१३. VM. ignores उ ॥ उ इति पूरणः Sy.
१४. अग्नेः Sy.
१५. कर्मणा यागादिना Sy.
१६. सुमतयः ऋत्विजः Sy.
१७. वसूनि धनानि Sy.
१८. आ दधति Sy.
१९. अथ उत्पत्त्यनन्तरमेव Sy.
२०. सर्वासु Sy.
२१. यज्ञार्थमाह्वातव्यः सः Sy.
२२. प्रजासु Sy.
२३. हे अग्ने ! Sy.
२४. क्षिप्रं प्रयच्छ Sy.
२५. अस्मभ्यम् Sy.
२६. यतः स्तोतारः त्वत्तः सकाशात् Sy.
२७. सेवते P. सेवन्त would be inj. ॥ धनं लभन्ते Sy.

तथा सति हे अन्नस्य,[1] पौत्र ! अभिलषितसिद्धचर्थम्[2] । रक्षास्माकम्[3] । शक्तश्च[4] भव । अविनाशाय[5] । उतेति[6] गतम्[7] ।

V.18.

**प्रातर॒ग्निः पु॑रुप्रि॒यो वि॒शः स्त॑वे॒तादिति॑थिः ।**
**विश्वा॑नि॒ यो अम॑र्त्यो ह॒व्या मर्ते॑षु॒ रण्य॑ति ॥ १ ॥**

[8]प्रातः ॥ मृक्तवाहाः[9] ॥ प्रातरेव । अग्निः । बहूनां प्रियः[10] । यजमानस्य[11] । अतिथिर्भवन्[12] । ऋत्विग्भिः स्तूयते । यः[13] । सर्वाणि । हवींषि[14] । अमर्त्यः[15] सन् । मर्त्येषु[16] स्थितानि । देवेभ्यो रमयति[17] ।

**द्वि॒ताय॑ मृ॒क्तवा॑हसे॒ स्वस्य॒ द॒क्षस्य॑ मं॒हना॑ ।**
**इन्दुं॒ स ध॑त्त आनु॒षक्स्तो॒ता चि॑त्ते अमर्त्य ॥ २ ॥**

द्विताय[18] । द्वित इति चास्य नाम तस्मै[19] । मह्यं यजमानाय[20] । होता[21] । स्वस्य[22] । महत्वे[23] । सोमम् ।

---

१. किञ्च हे अन्नस्य न पातयितः ! बलस्य पुत्र ! वा Sy.

२. अभीच्छते मह्यमन्नं प्रयच्छेति शेषः Sy.

३. अस्मानापद्भ्यो रक्ष Sy.

४. त्वां याचे । व्यत्ययेन मध्यमः । शक्तो भवेति वा Sy. ५. शय D. क्षेमाय पश्वादिलक्षणस्य धनस्य क्षेमार्थम् Sy.

६. अपि च Sy.

७. VM. ignores हि and the repeated words—एधि । पृत्सु । नः and वृधे ॥ इद्धीति पूरणौ । पृत्सु पृतनासु । नो वृधे समृद्धये । एधि भव Sy.
Ms. D. puts the figure ॥१७॥ here to indicate the end of the seventeenth hymn. No such number is given in P.

८. 'प्रातरग्निः' इति पञ्चर्चं चतुर्थं सूक्तम् । अत्रेयमनुक्रमणिका—'प्रातर्मृक्तवाहा द्वितः' (KSA. 25.18. p. 19.) इति । मृक्तवाहा इति विशेषणविशिष्ट आत्रेयो द्वित ऋषिः । 'पङ्क्त्यन्तं हि' इति हिशब्दात् (Cf. KSA.12.3. p. 5.) अस्यापि सूक्तस्य पञ्चमी पङ्क्तिः, पङ्क्त्यन्तपरिभाषया शिष्टा अनुष्टुभः । उक्तो विनियोगः प्रातरनुवाकाश्विनशास्त्रयोः Sy.

९. मुक्तावहाः P.

१०. बहुप्रियः Sy.

११. यजमाने धनस्य निवेशकः Sy.

१२. यजमानानां गृहान्प्रति तिथिष्वभ्येतीत्यतिथिः । एवंविधः Sy. अतिथिरभ्यतितो गृहान्भवति । अभ्येति तिथिषु परकुलानीति वा । (पर) गृहाणीति वा N.4.5.

१३. या P. अग्निः Sy.

१४. हव्यानि हवींषि Sy.

१५. अमत्यः P. अमरणधर्मा Sy.

१६. मनुष्येषु यजमानेषु स्थितानि Sy.

१७. कामयते Sy.

१८. हे अग्ने ! Sy. १९. द्वितपुत्राय Sy.

२०. मृक्तं शुद्धं हविर्देवेभ्यो वहति प्रापयतीति मृक्तवाहाः । तस्मै Sy.

२१. It stands for सः ॥ मृक्तवाहाः Sy.

२२. आत्मीयस्य Sy.

२३. ०त्वेन is suggested for ०त्वे ॥ मंहनायै दानाय भव Sy.

प्रयच्छति[1] । स्तोता सन्[2] । तुभ्यम्[3] । अग्ने[4] ! अनुषक्तं[5] मदर्थं होता त्वां यजतीत्यर्थः[6] ।

तं वो दीर्घायुशोचिषं गिरा हुवे मघोनाम् ।
अरिष्टो येषां रथो व्यश्वदावन्नीयते ॥ ३ ॥

तं वः[7] । तम् । युष्मदर्थम्[8] । दीर्घगमनयुक्ततेजसम्[9] । स्तुत्या[10] । ह्वयामि[11] । हविष्मतामर्थाय[12] । अथ प्रत्यक्षमाहारिष्ट[13] इति—हे अश्वान्[14] दातः[15] ! येषां स्तोतॄणाम्[16] । रथः । सङ्ग्रामे[17] विविधं गच्छति[18] तेषामर्थायाह्वयामि[19,20] ।

चित्रा वा येषु दीधितिरासन्नुक्था पान्ति ये ।
स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि ॥ ४ ॥

चित्रा वा । चित्रा[21] । वा । येषु[22] स्तोतृषु । स्तुतिः[23] । आस्ये वा । ये । शस्त्राणि[24] । रक्षन्ति । ते स्तीर्णम्[25] । बर्हिर्लक्षीकृत्य[26] । अन्नानि[27] । धारयन्ति[28] । सर्वनरे[29] । परितः[30,31] ।

---

१. धारयति Sy.
२. स्तोता भवति Sy.
३. यतः कारणात् तुभ्यम् Sy.
४. हे अमर्त्य ! नित्याग्ने ! Sy.
५. सर्वदानुषक्तम् Sy.
६. VM. ignores दक्षस्य and चित् ॥ बलस्य धनस्य वा । चित् च Sy.
७. हे अग्ने ! Sy.
८. वः पूजायां बहुवचनम् । त्वाम् Sy.
९. ०क्तजेसं P. दीर्घगमनदीप्तिम् Sy.
१०. स्तोत्रेण Sy.
११. आह्वयामि Sy.
१२. धनिनां कृते Sy.
१३. ०तामर्ताय P.
१४. शत्रुभिरहिंसितः Sy.
१५. हेश्वान् P. हे अश्वानां दातः ! Sy.
१६. धनिनाम् Sy.
१७. युद्धेषु Sy.
१८. विगच्छतु Sy.
१९. ०षां मत्ताया० P.
२०. The passage beginning with युष्मदर्थम् and ending with आह्वयामि is omitted by D.
२१. नानाविधा Sy.
२२. ऋत्विक्षु Sy.
२३. यज्ञविषया क्रिया भवति Sy.
२४. उक्थानि स्तोत्राणि Sy.
२५. तैर्ऋत्विग्भिः स्तीर्णम् Sy.
२६. बर्हिषः Sy.
२७. ०त्य नावन्नानि P. अन्नानि हवींषि Sy.
२८. निधीयन्ते Sy.
२९. स्वः स्वर्गं नरं यजमानं नयतीति स्वर्णरो यज्ञः । तस्मिन् Sy.
३०. उपरि Sy.
३१. The commentary on this stanza is omitted by D.

ये मे॒ पञ्चा॒शतं॑ द॒दुरश्वा॑नां स॒धस्तु॑ति ।
द्यु॒मद॑ग्ने॒ महि॒ श्रवो॑ बृ॒हत्कृ॑धि म॒घोनां॑ नृ॒वद॑मृत नृ॒णाम् ॥ ५ ॥

**ये मे ।** येऽमी[1] । मह्यम्[2] । मया याचिताश्वानाम्[3] । पञ्चाशतम् । ददुः । स्तुतिभिः सह,[4] त्वयि मया स्तूयमान इत्यर्थः । तेषामेषाम्[5] । धनवताम्[6] । दीप्तिमत् । महत् । बृंहितम्[7] । अन्नम् । अग्ने । कुरु[8] । यथा मनुष्याः[9] याचिताः प्रयच्छन्ति तद्वदिति[10] ।

## V.19.

अ॒भ्य॑व॒स्थाः प्र जा॑यन्ते॒ प्र व॒व्रेर्व॒व्रिश्चि॑केत । उ॒पस्थे॑ मा॒तुर्वि च॑ष्टे ॥ १ ॥

**अभ्यवस्थाः**[11] ॥ वव्रिः ॥[12] वव्रेः[13] । अवस्थाः[14] । अभिप्रजायन्ते[15] । वव्रेर्मम जरा च । ज्ञायते[16] अकाल-विकृता वार्धक्यादयः शरीरावस्थाः । सोऽयं वव्रिः[17] । पृथिव्याः[18] । उपस्थ आसीनः[19] । समीपस्थं पश्यति दूरस्थ-मसञ्चरान्न पश्यति ।

---

१. मघवानो दातारः Sy.

२. ०ह्य P.

३. The passage beginning with ये मे and ending with याचिता is omitted by D. D. begins वाश्वानां etc.

४. स्तुत्या सहितं त्वत्स्तोत्रसमनन्तरम् Sy.

५. तेषमे० P. It seems to be the explanation of नृणाम् ।

६. मघोनाम् Sy.

७. बृहि० P. परिवृढम् Sy.

८. कुरु । देहीत्यर्थः Sy.

९. परिचारकमनुष्ययुक्तम् Sy.

१०. VM. ignores अमृत ॥ Ms. D. puts the figure ॥१८॥ here to indicate the end of the eighteenth hymn. No such number is given in P.

११. 'अभ्यवस्थाः' इति पञ्चर्चं पञ्चमं सूक्तम् । अत्रेयमनुक्रमणिका—'अभ्यवस्था वव्रिर्गायत्र्या-वनुष्टुभौ विराड्रूपा' (KSA. 25.19. p. 19.) इति । आत्रेयो वव्रिर्ऋषिः । प्रथमा-द्वितीये गायत्र्यौ तृतीयचतुर्थ्यावनुष्टुभौ पञ्चमी विराड्रूपा—'एकादशिनस्त्रयोऽष्टकश्च विरा-ड्रूपा' (KSA. 9.6. p. 4.) इत्युक्त-लक्षणोपेतत्वात् Sy.

१२. ०व्रि D.

१३. ऋषेः Sy.

१४. अशोभना दशाः Sy.

१५. अभि उत्तरोत्तरं जायन्ते Sy.

१६. प्रजानीयात् । ज्ञात्वा चापनयत्विति भावः Sy.

१७. वव्रिः हविषां सम्भक्ता सोऽग्निः Sy.

१८. योऽग्निः पृथिव्याः Sy.

१९. समीपे स्थितं पदार्थजातम् Sy.

जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति । आ दृळ्हां पुरं विविशुः ॥ २ ॥

जुहुरे[1][2] । तेऽमी यौवने शत्रून् बुध्यन्तः[3][4] । विजुहुरे[5] आहूतवन्तो[6] युद्धार्थम्[7] । तदानीमेषः[8] । बलं च[9] । रक्षन्[10] । दृढाम्[11] । शत्रुपुरीं च[12] । विविशुः[13][14] ।

आ श्वैत्रेयस्य जन्तवो द्युमद्वर्धन्त कृष्टयः ।
निष्कग्रीवो बृहदुक्थ एना मध्वा न वाजयुः ॥ ३ ॥

आ श्वैत्रेयस्य[15] । अश्वित्रायामपत्यस्य[16] मे[17] वव्रेः[18] । ज्ञाताः[19] । मनुष्याः[20] । दीप्तियुक्तम्[21] । आवर्धयन्त

---

१. वव्रेरात्रेयस्यार्षम् SKN., Dur.

२. जुरे P. ३. ये Sy.

४. बुध्, being Ātmanepada, the reading should be बुध्यमानाः ॥ तव प्रभावं जानन्तो जनाः Sy. विविधं जानन्तः । किम् ? होमकर्मैव ब्रह्म वाऽऽत्माख्यम् SKN. कर्मकर्तृसाधनानां याथात्म्यं वेददर्शनेन जानानाः Dur.

५. विजुरे P. जुहुविरे यज्ञार्थं त्वामाह्वयन्ति Sy.

६. ०हु P. अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । ये जुहुरे हुतवन्तो जुह्वति वा हवींषि SKN. जुह्वति येऽग्निम् । शब्दसारूप्यमपि च 'जुहुरे' इत्येतस्मिञ्छब्देऽस्त्येव । प्रकरणाच्चेयमाग्नेयी ऋक् । तस्मात् 'जुहुरे' इत्येष शब्दो हवनार्थ एवेत्युपपद्यते Dur. जुह्विरे विचेतयमानाः N. 4.19.

७. बुद्धा० P.

८. तदानादानीमेषः P. तदानिमिषम् or तदानिमेषम् is suggested for तदानीमेषः॥ सर्वदा Sy. अनिमेषं निमेषवर्जितं च महता यत्नेनेत्यर्थः ।

९. आहूय च तव बलं हविर्भिः स्तोत्रैश्च Sy. नृम्णं बलं योगसामर्थ्यलक्षणम् SKN. ये नरा अनिमिषम्, आदरवदवस्थानमात्मनः कृत्वा युक्तात्मानो नृम्णं योगबलमात्मनः Dur.

१०. रक्षन् seems to be the explanation of पान्ति । It should be अरक्षन् unless रक्षन् is construed as an injunctive form. रक्षन्ति Sy. रक्षन्ति । सततं च योगमभ्यस्यन्तीत्यर्थः SKN. कर्मणि वर्तमाने पान्ति रक्षन्तीत्यर्थः Dur.

११. दृढं P. ते दृढां शत्रुभिः साधयितुमशक्याम् Sy. दृढां दुर्भेदाम् SKN. आह य एवं गुणयुक्ताः किं तेषाम् ? इत्युच्यते, ते दृढां नित्याम् Dur.

१२. पुरीम् Sy. पुरं परमात्माख्यम् SKN. अनावृत्तये परब्रह्ममयीं पुरम् । इमामदृढां शरीरपुरं पापिष्ठां हत्वेत्यभिप्रायः Dur.

१३. प्रविशन्ति । 'शतं पूर्भिरायसीभिर्नि पाहि' (RV. VII.3.7.)इति निगमः Sy. ते ज्ञानकर्मसमुच्चयकारिणः । ....आविशन्ति परमात्मनि लीयन्ते मोक्षं गच्छन्तीत्यर्थः SKN. विचेतयमाना हि वेदप्रामाणिकाः सन्तो हवनादृते किमन्यत् कुर्युः ? तेन दृढां पुरमाविशेयुः Dur. १४. VM. ignores आ ॥ आकारो विविशुरित्यनेन सम्बध्यते SKN. जुह्विरे विचेतयमानाः N. 4.19., SKN. II.252. १५. अ D.

१६. अश्वित्राया अपत्यस्य is suggested for अश्वित्रायामपत्यस्य॥ पदपाठ and सायण read आ । श्वैत्रेयस्य । which is explained as श्वित्रमन्तरिक्षम् । तत्र भवस्य वैद्युतस्याग्नेः Sy. १७. मय P.

१८. Omitted by P. १९. जाताः is suggested for ज्ञाताः । जायन्त इति जन्तवः Sy.

२०. ऋत्विजः Sy. २१. दीप्तिमद्बलम् Sy.

पुत्राश्च मम वृद्धा आसन्नित्यर्थः[1]। पुत्राणां नामानि—निष्कग्रीवः[2]। बृहदुक्थः[3]। अनेन[4]। मधुना[5] सह। वाजयुश्चेति[6] चत्वारः पुत्राः, नकारः समुच्चयार्थीयः[7]।

**प्रियं दुग्धं न काम्यमजामि जाम्योः सचा।**
**घर्मो न वाजंजठरोऽदब्धः शश्वतो दभः॥ ४॥**

**प्रियं दुग्धम्।** प्रियम्[8]। दुग्धम् पयः। इव। कमनीयम्। पुनः पुनर्दर्शनेऽपि यत् श्रद्धामावहति[9] तद् अजामि[10] तादृशं मम शरीरम्। द्यावापृथिव्योः। सहायभूतं[11] शत्रुनिरसनात् तथाभम्[12]। पुरा घर्मः[13]। इव। अन्तःसक्तहविष्को[14] दीप्यमानः। शत्रुभिरहिंसितः[15]। अनेकेषाम्[16]। हिंसको[17] भव[18]।

**क्रीळंन्नो रश्म आ भुवः सं भस्मना वायुना वेविदानः।**
**ता अस्य सन्धृषजो न तिग्माः सुसंशिता वक्ष्यो वक्षणेस्थाः॥ ५॥**

**क्रीळन्।** इद्धं[19] वृद्धः सम्प्रति मुमूर्षुरग्निं प्रार्थयते—हे रश्मे[20]! श्मशाने[21]। अस्माकम्। क्रीळन्[22]। प्रादुर्भव[23]। चिताभस्मना[24]। वायुना[25] च। सह ज्ञायमानाः[26]। ताश्च[27]। अस्य[28]। धर्षणशीलाः[29]। सुसंशिताः[30]।

---

१. अभिवर्धयन्ति Sy.
२. निष्केण सुवर्णेनालङ्कृतग्रीवाः। व्यत्ययेनैकवचनम् Sy.
३. बृहत्स्तोत्राः Sy.
४. एनया स्तुत्या Sy.
५. मधुना Sy.
६. अन्नकामाः Sy.
७. इव, यद्वा नकारश्चार्थे Sy.
८. प्रियम् अस्मदीयं स्तोत्रं शृणोतु Sy.
९. ०मावति P.
१०. दोषरहितम् Sy.
११. सहायभूतोऽग्निः Sy.
१२. शत्रुनिरसनात् तथाभं should be construed as an epithet of शरीरम्, i.e. तथाभूता आभा यस्य तत् तथाभं i.e. 'having that kind of brilliance on account of the slaughter of the enemy'.
१३. प्रवर्ग्यः Sy.
१४. ०विरेष्का D. वाजोऽन्नं जठरे यस्य सः। घर्मो यथा हव्येनाज्येन पयसा सिक्तो वाजजठरस्तद्वत्। हविर्जठर इत्यर्थः Sy.
१५. शत्रुभिः स्वयमहिंसितः Sy.
१६. शाश्वतो नित्यः Sy.
१७. शत्रूणां हिंसकः Sy.
१८. भवं D.
१९. द्ध P.
२०. रश्मिमन्नग्ने! Sy.
२१. शाने P.
२२. वनेषु क्रीडन् Sy.
२३. अभिमुखो भव Sy.
२४. स्वकार्येण भसितेन Sy.
२५. प्रेरकेण मरुता च Sy.
२६. जज्ञाय० D. सम्यग्ज्ञायमानस्त्वम् Sy.
२७. ताश्व P. ज्वालाः Sy.
२८. यजमानस्य मम Sy.
२९. शत्रूणां धर्षिकाः Sy.
३०. सुतीक्ष्णाः Sy.

वहनशीला[१]: । वहनशीलेऽग्नौ स्थिता[२]: । न । तिग्मा[३]: । भवन्तु[४] सुखं[५] दुहन्तु मामिति[६] ।

V.20.

**यमग्ने वाजसातम त्वं चिन्मन्यसे रयिम् ।**
**तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥ १ ॥**

**यमग्ने**[७][८] ।। प्रयस्वन्तः ।। यम् । अग्ने ! अन्नानां दातृतम[९] ! त्वम् । एव[१०] । बुध्यसे । रयिम्[११] । तम् । अस्माकम्[१२] । स्तुतिभिः । श्रवणीयम्[१३] । देवेषु । ब्रूहि[१४] । योग्यम्[१५], अमीभ्यः[१६] प्रयच्छतेति देवान् ब्रूहीति ।

**ये अग्ने नेरयन्ति ते वृद्धा उग्रस्य शवसः ।**
**अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिरे ॥ २ ॥**

**ये अग्ने** । ये[१७] । अग्ने ! न[१८] । ईरयन्ति[१९] काष्ठादिकम् । तव[२०] । आढ्या[२१] अपि । उद्गूर्णस्य[२२] । तेजसः[२३] न त्वां प्रज्वलयन्ति यागार्थमित्यर्थः, अथवा शवः[२४] अन्नं तद् उद्गूर्णस्य तव न प्रयच्छन्तीति[२५] । द्वेषः पापम् । यज्ञभ्रंशनिमित्त उपद्रवः ह्वरः[२६] । यस्य यजमानस्य प्रमादाद् व्रतादन्यदसत्यादिकम्[२७] । उपनसोन्यमतिव्रतः[२८] ?

---

१. हवनशी० D. हविर्वहन्तीति वक्ष्यो ज्वालाः Sy.
२. वक्षणे वह्नौ स्थिताः Sy.
३. तिमाः P. तीक्ष्णाः Sy.
४. सन् सन्तु । अस्तेर्लेटि रूपम् Sy.
५. सुखं दुहन्तु is omitted by P.
६. Ms.D. puts the figure ॥१६॥ here to indicate the end of the nineteenth hymn. No such number is given in P.
७. 'यमग्ने' इति चतुर्ऋचं षष्ठं सूक्तमत्रीणां प्रयस्वतामार्षमाग्नेयम् । अन्त्या पङ्क्तिः । शिष्टा अनुष्टुभः । तथा चानुक्रान्तम्—'यमग्ने चतुष्कं प्रयस्वन्तः पङ्क्त्यन्तं ह' (KSA. 25.20 p. 19.) इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । अत्रेश्चतुर्वीराख्येऽह्नीनं द्वितीयेऽह्नीदं सूक्तमाज्यशस्त्रम् । सूत्रितञ्च—'यमग्ने वाजसातमेति द्वितीयेऽह्न्याज्यम्' (ASS. 10.2.) इति Sy.
८. D. repeats यमग्ने ।
९. हे अत्यन्तमन्नद ! Sy.
१०. चिदिति पूरणः Sy.
११. धनमस्माभिर्दीयमानं हवीरूपं धनम् Sy.
१२. अस्मदीयं हविर्लक्षणं धनम् Sy.
१३. प्रशस्यम् Sy.
१४. प्रापयेत्यर्थः Sy.
१५. युक्तम् Sy.
१६. अमिमेभ्यः P.
१७. जनाः Sy.
१८. प्र P. D.
१९. हवींषि (न) प्रयच्छन्ति ते Sy.
२०. तुभ्यम् Sy.
२१. पश्वादिलक्षणैर्धनैः समृद्धाः सन्तः Sy.
२२. अधिकेन Sy.
२३. बलेनान्नेन वा Sy.
२४. शवव: P.
२५. प्रेद्वषः D. प्रेद्वेषः P. त्वत्सम्बन्धिनं विरोधम् Sy.
२६. अतिहिंसां च Sy.
२७. अन्यद्वैदिकाद्विभक्तं व्रतं कर्म यस्य तस्यासुरस्य Sy.
२८. ०मिति० P.

सश्चतिरास्वादन[1]कर्मा यजमानस्य प्रमादकृतं पापं तत आददत इत्यर्थः[2]।

**होतारं त्वा वृणीमहेऽग्ने दक्षस्य साधनम् ।**
**यज्ञेषु पूर्व्यं गिरा प्रयस्वन्तो हवामहे ॥ ३ ॥**

होतारम् । होतारम्[3] । त्वा[4] । वृणीमहे । अग्ने[5] ! बलस्य । साधयितारम्[6] । यज्ञेषु । पूर्वकालभवं[7] मुख्यम्[8] । स्तुत्या[9] । प्रयस्वन्तो नाम्ना वयम्[10] । हवामहे[11] च ।

**इत्था यथा त ऊतये सहसावन्दिवेदिवे ।**
**राय ऋतार्य सुक्रतो गोभिः ष्याम सधमादो वीरैः स्याम सधमादः ॥ ४ ॥**

इत्था[12] । इत्थमेव[13] । तव । तर्पणाय[14] । हे बलवन्[15] ! अन्वहम्[16] । स्याम[17] ! तथास्मान् तथ्यभूताय[18] । धनाय[19] च कुरु । सुप्रज्ञ[20] ! वयं[21] त्वत्प्रसादाद् गोभिः[22] । वीरैश्च[23] । सहमोदितारः[24] । स्याम[25] ।

---

१. अपसश्चिरे । आत्मानं प्रापयन्ति Sy.
२. VM. ignores अप twice.
अप नीता बलान्नहीना भवन्तीत्यर्थः Sy.
३. Omitted by P. देवानामाह्वातारम् Sy.
४. त्वाम् Sy.
५. अग्ने D.
६. साधकं साधयितारं त्वाम् Sy.
७. ०लं० P.
८. मम्यं P.
त्वाम् Sy.
९. स्तुतिरूपया वाचा Sy.
१०. अन्नवन्त एतन्नामका वयम् Sy.
११. स्तुमः Sy.
१२. इत्था P.
१३. इत्थं कुरु Sy.
१४. रक्षणाय Sy.
१५. हे अग्ने ! Sy.
१६. Sy. adds वयम् ।
१७. यथा स्याम तथा कुरु Sy.
१८. तस्य भू० P. D.
यज्ञाय च Sy.
१९. यज्ञाय च Sy.
२०. हे सुक्रतो ! Sy.
२१. किञ्च वयम् Sy.
२२. होभिः P.D. Sy. adds सह माद्यन्तः स्याम
२३. पुत्रैश्च Sy.
२४. सह माद्यन्तः Sy.
२५. VM. ignores यथा and explains सधमादः once only. Ms. D. puts the figure ॥२०॥ here to indicate the end of the twentieth hymn. No such number is given in P.

## V.21.

**मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि ।**
**अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥ १ ॥**

मनुष्वत्[1] । स मनुर्यथा[2] । त्वाम्,[3] आदधे । यथा च समिधे[4] । वयं च तथा कुर्मस्त्वां च । अग्ने ! अङ्गिरः[5] ! तद्वत्[6] । देवानिच्छते[7] यजमानाय । देवान् । यज ।

उत्तरा निगदसिद्धा

**त्वं हि मानुषे जनेऽग्ने सुप्रीत इध्यसे ।**
**स्रुचस्त्वा यन्त्यानुषक्सुजात सर्पिरासुते ॥ २ ॥**

[त्वं हि][8] यस्मिन्[9] सर्पिरासूयते[10] हूयते स तथोक्तः ।[11]

**त्वां विश्वे सजोषसो देवासो दूतमक्रत ।**
**सपर्यन्तस्त्वा कवे यज्ञेषु देवमीळते ॥ ३ ॥**

त्वां विश्वे । देवाश्च । सङ्गता[12] हविर्वहनाय । त्वाम् । दूतम् । अकृण्वन्[13] । मनुष्याश्च त्वामेव । पूजयन्तः[14] । स्तुवन्ति[15] ।[16]

---

१. 'मनुष्वत्त्वा' इति चतुर्ऋचं सप्तमं सूक्तमात्रेयस्य ससस्यार्षम् । 'मनुष्वत्ससः' (KSA. 25.21. p. 19.) इत्यनुक्रमणिका । 'पङ्क्त्यन्तं ह' (KSA. 25.20 p. 19.) इति । पूर्वत्रोक्तत्वादिदमादीनि त्रीणि सूक्तानि पङ्क्त्यन्तानि, शिष्टा अनुष्टुभः । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

२. ०ष्यात् स D. ३. मनुरिव । मनुःशब्दो मनुपर्यायः । 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति भसंज्ञायां रुत्वाभावः Sy.

४. समिन्धे is suggested for समिधे ॥ समिद्भिः सन्दीपयामः Sy.

५. ०रसः D. हे अङ्गारात्मकाग्ने ! Sy.

६. तद्व P. D. मनवे मनोरपत्याय Sy.

७. देवकामाय यजमानाय Sy.

८. The *pratika* is supplied by the Editor.

९. यमस्मिन् P.

१०. ०रासुते P.

११. Sy. explains the stanza in the following manner—हे अग्ने ! त्वं मानुषे जने मनुष्यलोके सुप्रीतः स्तोत्रैः सुष्ठु प्रीतः सन् इध्यसे दीप्यसे । स्रुचः हविर्भिः सम्पूर्णाः आनुषक् अनुषक्तं यथा भवति तथा त्वा त्वां यन्ति प्राप्नुवन्ति । हे सुजात ! हे सर्पिरासुते ! घृतयुक्तान्न ! इति ।

१२. देवा श्वां गता P. ०श्चासं० D. सह प्रीयमाणाः Sy.

१३. अकुर्वन् Sy.

१४. परिचरन्तो यजमानाः Sy.

१५. देवानाह्वातुं याचन्ते Sy.

१६. VM. ignores विश्वे । कवे । यज्ञेषु and देवम् ॥ विश्वे सर्वे । अतः कारणात् हे कवे ! क्रान्तदर्शिन् ! द्योतमानम् Sy.

देवं वो देवयज्ययाग्निमीळीत मर्त्यः ।
समिद्धः शुक्र दीदिह्यृतस्य योनिमासदः ससस्य योनिमासदः ॥ ४ ॥

देवं वः । हे मनुष्याः ! युष्माकम्[१] । मर्त्यो[२] होता[३] । देवयागार्थम्[४] । अग्निम्[५] । स्तौति[६] । अथ प्रत्यक्षः— स त्वमग्ने ! शुक्रवर्ण[७] ! समिद्ध[८] । दीप्यस्व । यज्ञस्य[९] । स्थानम्[१०] । आसीद[११] । ससनाम्नः[१२] । गृहम्[१३] । आसीद[१४][१५] ।

V. 22.

प्र विश्वसामन्नत्रिवदर्चा पावकशोचिषे ।
यो अध्वरेष्वीड्यो होता मन्द्रतमो विशि ॥ १ ॥

प्र[१६] विश्वसामन् ॥ विश्वसामा[१७] ॥ हे विश्वसामन् ! यथैनमत्रिरस्तौद्[१८] एवम्[१९] । अस्मै शोधकतेजसे[२०] । प्रस्तुहि[२१] । यः[२२] । यज्ञेषु । स्तोतव्यः[२३] । ह्वाता[२४] । मादयितृतमश्च[२५] । मनुष्येषु[२६] ।

---

१. त्वाम् Sy.
२. मनुष्यः Sy.
३. मत्यो हता P. Ms. D. adds the following passage between मर्त्यो and होता । जातप्रज्ञं देवं काले यष्टारं प्रैयत्वयमग्निर्यष्टानुषक्तमतिशयेन । The additional passage is the explanation of RV. V.22.2. Ms. D. puts the figure ॥२१॥ here to indicate the end of the twenty-first hymn. No such number is given in P.
४. देवयज्यायै Sy.
५. अग्रगण्यम् Sy.
६. स्तोतुमर्हति Sy.
७. हे शोचिष्मन् ! Sy.
८. ०द्धन् P. समिद्धः is suggested for समिद्ध ॥ हविर्भिः प्रवृद्धः सन् Sy.
९. सत्यभूतस्य Sy.
१०. कारणं स्वर्गसाधनं यज्ञस्थानम् Sy.
११. देवतारूपेणासीद Sy.
१२ ०नामः D. ऋषेर्मम Sy.
१३. गृमम गृहम् P., D.
१४. आदरातिशयद्योतनार्थं पुनर्वचनम् Sy.
१५. VM. ignores देवम् ॥ द्योतमानम् Sy.
१६. 'प्र विश्वसामन्' इति चतुर्ऋचमष्टमं सूक्तम् । आत्रेयो विश्वसामा ऋषिः । चतुर्थी पङ्क्तिः, शिष्टा अनुष्टुभः । अग्निर्देवता । तथा चानुक्रान्तम्—'प्र विश्वसामन् विश्वसाम' (KSA. 25.22. p.19.) इति । उक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः Sy.
१७. ऋषेः सम्बोधनमेतत् । त्वम् Sy.
१८. यथै० D.
अत्रिरिव Sy.
१९. एवौ चस्मे P.
२०. शोधकदीप्तये तस्मा अग्नये Sy.
२१. ०स्त० P. प्रगाय Sy.
२२. अग्निः Sy.
२३. सर्वैर्यज्वभिः स्तुत्यः Sy.
२४. देवानामाह्वाता Sy.
२५. स्तुत्यतमः Sy.
२६. जने Sy.

**न्य१॒ग्निं जा॒तवे॑दसं॒ दधा॑ता दे॒वमृ॒त्विज॑म् ।**
**प्र य॒ज्ञ ए॑त्वानु॒षग॒द्या दे॒वव्य॑चस्तमः ॥ २ ॥**

**न्यग्निम्**[1] । निधत्त[2] । अग्निमायतने । जातप्रज्ञम्[3] । देवम्[4] । काले यष्टारम्[5] । प्रैत्वग्निः[6] । यष्टा[7] । अनुषक्तम्[8] । अतिशयेन,[9] अद्य, देवानां[10] व्यापकः ।

**चि॒कि॒त्विन्म॑नसं त्वा दे॒वं मर्ता॑स ऊ॒तये॑ ।**
**वरे॑ण्यस्य॒ तेऽव॑स इया॒नासो॒ अम॑न्महि ॥ ३ ॥**

**चिकित्विन्मनसम्**[11] । यस्य मनः सर्वं विजानाति तम्[12] । त्वा[13] । देवम्[14] । मनुष्या वयम् । तृप्तये[15] । वरणीयम्[16] । तव । रक्षणम्[17] । भजमानाः[18] । स्तुमः ।

**अग्ने॑ चिकि॒द्ध्य१॒स्य न॑ इ॒दं वचः॑ सहस्य ।**
**तं त्वा॑ सुशिप्र दम्पते॒ स्तोमै॑र्वर्ध॒न्त्यत्र॑यो गी॒र्भिः शु॑म्भ॒न्त्यत्र॑यः ॥ ४ ॥**

**अग्ने चिकिद्धि**[19] । अग्ने ! बुध्यस्व[20] । नः अस्माकमत्रीणाम्[21] । अस्य विश्वसाम्नः[22] । इदम्[23] । स्तुतिवचः[24] । हे सहसो जात[25] ! तम् । त्वाम् । सुहनो[26] ! गृहपते[27] ! स्तोमैः[28] । वर्धयन्ति । अत्रयः[29] । गीर्भिः । अलङ्कुर्वन्ति[30] अत्रयः[31] ।

---

१. न्या० P.
२. हे यजमानाः ! Sy.
३. जातधनं वा Sy.
४. द्योतमानम् Sy.
५. ऋतुयष्टारम् Sy.
६. प्रैयत्वमग्निः P., D. प्रगच्छतु Sy.
७. यज्ञसाधनमस्माभिर्दीयमानं हविः Sy.
८. अनुषक्तं यथा भवति तथा Sy.
९. अस्मिन्नहनि Sy.
१०. देवानामाप्ततमः Sy.
११. हे अग्ने ! Sy.
१२. चिकित्विज्जानत् मनो यस्यासौ चिकित्विन्मनाः तम् Sy.
१३. त्वाम् Sy.
१४. देव P.
१५. रक्षणार्थम् Sy.
१६. भजनीयम् P. सम्भजनीयस्य Sy.
१७. रणम् P. अवसे तर्पणाय Sy.
१८. उपगच्छन्तः Sy.
१९. अग्नि P.
२०. जानीहि Sy.
२१. ०मन्त्रिणाम् P. अस्मदीयम् Sy.
२२. ०श्वससा० P.
२३. परिचरणमिदम् Sy.
२४. स्तोत्रं च Sy.
२५. जा P., D. बलस्य पुत्र ! Sy.
२६. शोभने शिप्रे हनू नासिके वा यस्यासौ सुशिप्रः । तस्य सम्बोधनम् । सुशिप्र ! Sy.
२७. ग्रहृ० P. ०ते: D.
२८. स्तोत्रैः Sy.
२९. अत्रिपुत्राः Sy.
३०. अवलकु० P.
३१. Ms. D. puts the figure ॥२२॥ here to indicate the end of the twenty-second hymn. No such number is given in P.

V.23.

अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।
विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत् ॥ १ ॥

अग्ने सहन्तम्[1] ॥ द्युम्नः ॥ अग्ने ! शत्रूनभिभवन्तम्[2] । रयिम्[3] । आभर[4] । द्युम्नस्य[5] मम शत्रून् । प्रसह्य[6] । यो रयिः[7] । सर्वान्[8] । मनुष्यान्[9] । निरसनेन[10] । सङ्ग्रामेषु[11] । अभिभवन्ति[12] ।

उत्तरा निगदव्याख्याता

तमग्ने पृतनाषहं रयिं सहस्व आ भर ।
त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः ॥ २ ॥

[तमग्ने[13]][14]

---

१. 'अग्ने सहन्तम्' इति चतुर्ऋचं नवमं सूक्तम् । अत्रानुक्रमणिका—'अग्ने द्युम्नो विश्वचर्षणिः' (KSA. 25.23. p. 19.) इति । द्युम्न ऋषिः । चतुर्थी पङ्क्तिः । आद्यास्तिस्रोऽनुष्टुभः । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तान्तःपातित्वादुक्तो विनियोगः Sy.

२. पराभिभवक्षमं पर्याप्तमित्यर्थः BB.

३. पुत्रम् Sy. ईदृशं रयिं धनम् BB.

४. आहर Sy. BB.

५. द्युम्नाय मह्यमृषये, चतुर्थ्यर्थे षष्ठी Sy. द्युम्नस्य यशस्विनः पुरुषस्यास्मदमित्रभूतस्य BB.

६. प्रकृष्टेन बलेन Sy. प्रहस(सह)नेन तादृशमस्मदमित्रमभिभूय तदीयं रयिमस्मभ्यमाहर । 'सह मर्षणे' चौरादिकः BB.

७. पुत्रः Sy. यो भवान् BB.

८. विश्वाः BB.

९. शत्रून् Sy. मनुष्यसेना अस्मद्विपक्षभूताः BB.

१०. आस्येन स्तोत्रेण युक्तः सन् Sy. किं कुर्वन्नित्याह ....आसनमात्रेणैव । आसेः क्विप् BB.

११. युद्धेषु Sy. अन्नेषु निमित्तभूतेषु । उपलक्षणं चैतत् । अस्माकमन्नादिकं साधयितुम् BB.

१२. ०भवति is suggested for ०भवन्ति । अभि आभिमुख्येन गतान् अभिभवति Sy. अभिभवतु BB.

This stanza=TS. 1.3.14.6.

१३. The *pratika* is supplied by the Editor.

१४. हे अग्ने ! सहस्वः ! बलवन् ! पृतनासहं पृतनाः सेना अभिभवितारम् । रयिं पुत्रं त्वम् । आ भर आहर । त्वं हि । सत्यः सत्यभूतः । अद्भुतः महान् । गोमतः गोभिर्युक्तस्य । वाजस्य अन्नस्य दाता Sy.

हे अग्ने ! सहस्वो महाबल ! ....पृतनासहं सर्वशत्रुसेनाभिभवनसमर्थं तत्र पर्याप्तं रयिं धनमाभर आहर । पूर्ववद्रूत्वम् ।....यस्मात्त्वमेव सत्योऽवितथः, अद्भुत आश्चर्यभूतो वाजस्यान्नस्य दाता, गोमतो गोसहितस्य वाजस्य दातेत्यर्थः । तस्मात्तादृशमन्नमस्मभ्यं देहि येन वयं शत्रूनभिभविष्याम इति BB.

This stanza=TS.1.3.14.7.

विश्वे हि त्वा सजोषसो जनासो वृक्तबर्हिषः ।
होतारं सद्मसु प्रियं व्यन्ति वार्या पुरु ॥ ३ ॥

विश्वे[1] । सर्वे । हि । सङ्गताः[2] । जनाः[3] । यज्ञार्थं स्तीर्णबर्हिषः[4] । त्वाम् । आत्मगृहे[5] । पुरूणि[6] । धनानि[7] । कामयन्ते याचन्ते ।

स हि ष्मा विश्वचर्षणिरभिमाति सहो दधे ।
अग्न एषु क्षयेष्वा रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि ॥ ४ ॥

स हि ष्म । अग्निः[9] । सर्वस्य[10] द्रष्टा । शत्रूणामभिमननशीलम्[11] । बलम् । धारयति[12] । प्रत्यक्षः शिष्टः[13]—अग्ने[14] ! अस्माकमेषु । गृहेषु । धनयुक्तम्[15] । अस्माकम्[16] । दीप्यस्व[17] । दीप्तियुक्तं[18] चेति[19] ।

---

१. हे अग्ने ! Sy.

२. P. reads हिंसागताः for हि सङ्गताः ॥
सह प्रीयमाणाः Sy.

३. ऋत्विजः Sy.

४. तीर्णबर्हिषं P.
लूनबर्हिषः Sy.

५. यज्ञगृहेषु Sy.

६. बहूनि Sy.

७. वरणीयानि धनानि Sy.

८. VM. ignores होतारम् and प्रियम् ॥
होतारं देवानामाह्वातारम् । प्रियं सर्वेषां प्रीतिकरम् Sy.

९. स प्रसिद्धः Sy.

१०. ऋषिः Sy.

११. शत्रूणां हिंसकम् Sy.

१२. धारयतु Sy.

१३. शि P. Omitted by D.

१४. ग्ने P.
हे अग्ने ! Sy.

१५. धनयुक्तं यथा भवति तथा Sy.

१६. अस्मदीयेषु Sy.

१७. आदीप्यस्व Sy.

१८. दीप्तियुक्तं यशोयुक्तं वा Sy.

१९. VM. ignores हि । स्म । आ । शुक्र । पावक and दीदिहि ॥
हि स्म इति पूरणौ । हे शुक्र शोचिष्मन् ! हे पावक ! पापानां शोधकाग्ने ! त्वम् दीप्यस्व Sy.
Ms. D. puts the figure ॥२३॥ here to indicate the end of the twenty-third hymn. No such number is given in P.

V. 24.

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥ १ ॥ २ ॥

अग्ने[1] त्वं नः ॥ गौपायना[2]: बन्धुः सुबन्धुः श्रुतबन्धुर्विप्र[3]बन्धुरिति क्रमेण चतसृ[4]णामृषयः ॥ अग्ने[5] ! त्वम् । अस्माकम् । अन्तिकतमः[6] । अपि च । रक्षिता[7] । भव । कल्याणकारी[8] गृहहितः[9] ।

१. 'अग्ने त्वं नः' इति चतुर्ऋचं दशमं सूक्तम् । अत्रानुक्रमणिका 'अग्ने त्वं गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चैकर्चा द्वैपदम्' (KSA. 25.24. p. 19.) इति । 'विंशतिका द्विपदा विराजः' (KSA.12.8. p. 5.) इत्युक्तत्वाच्चतस्रो द्विपदा विराजः । बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण चतसृणामृषयः, ते च गौपायना लौपायना वा । अग्निर्देवता । महापितृयज्ञे आहवनीयं प्रति गच्छन्त ऋत्विज इदं सूक्तं जपेयुः । तथा च सूत्रितम् 'अथैनमभिसमायन्ति मा प्र गामाग्ने त्वं न इति जपन्तः' (ĀŚS. 2. 19.) इति । दशरात्रे षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य 'अग्ने त्वम्' इति द्वे, 'तं त्वा शोचिष्ठ' इत्येका, एवं मिलितो द्वैपदस्तृचः स्तोत्रियः । तथैव सूत्रितम्—'अग्ने त्वं नो अन्तमोऽग्ने भव सुषमिधा' (ĀŚS. 8. 2.)-इति Sy.

२. गोपायनः P.

३. ०र्वप्र० P.

४. ०सृ० P. A fragment of KSA. 25. 24. p. 19.

५. हे अग्ने ! Sy., BB. हे अग्ने ! गार्हपत्य ! Mah. हे भगवन्नग्ने ! U.

६. अन्तमोऽन्तिकतमः सर्वदा समीपवर्ती भव । 'अम गतौ' भजने शब्देऽमति समीपं प्राप्नोति, इत्यम् क्विप् । अतिशयितोऽम् अन्तमः, अम्शब्दात्तमप् । यद्वाऽन्तिकशब्दात्तमपि पृषोदरादित्वेन साधुः Mah. त्वमस्माकं निकटतमः । अन्तिकशब्दस्य तमप्येतद्रूपम् । ब्रह्मचर्यप्रभृत्यग्निमुपासते तदभिप्रायमेतत् । देशविवक्षया वा सन्निकृष्टो ह्यग्निर्विप्रकृष्टा ह्यन्या देवताः U. सन्निकृष्टतमः BB.

७. रक्षकः Sy. पालयिता Mah. स्वभावत एव सर्वप्राणिनां पालयितासि । यत एवमतो ब्रूमः U. रक्षको भयेष्विति गम्यते BB.

८. सुखकरश्च भव Sy. शान्तः Mah. शान्तो भव U. सुखकरः सर्वदा भवास्माकम् BB.

९. वरणीयः सम्भजनीयः । यद्वा वरूथैः परिधिभिर्वृतः Sy. वरूथाय हितो वरूथ्यस्तादृशश्च भव । पुत्रादिसमूहो वरूथः । यद्वा वरूथं गृहम्, तस्मै हितो भव Mah. वरूथमिति गृहनाम (Ngh. 3. 4.) वरूथाय हितो वरूथ्यः U. गृहे भवो नित्यसन्निहितः । दिगादित्वाद्यत् । वरूथाय गृहाय वा हितो वरूथ्यः । उगवादिर्द्रष्टव्यः BB.

This stanza=YV. 3.25.=TS. 1. 5.6.2.

अथ द्विपदाः । अग्ने त्वं नोऽअन्तम उत त्राता शिवो भवा वरूथ्यः ! वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः । तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्या णोऽअघायतः समस्माद्[1] इति । ŚB.2.3.4.31. p. 166.

[1] RV. reads स नो...समस्मात् before तं त्वा....सखिभ्यः ।

वसुः[1] । वासयिता । अग्निः[2] । वस्वन्नः स त्वमस्मान्[3] । अभिव्याप्नुहि[4] । दीप्ततमम्[5] । रयिं[6] च । देहि[7] ।

**स नो॑ बोधि श्रुधी हव॑मुरुष्या णो॑ अघाय॒तः सम॑स्मात् ।**
**तं त्वा॑ शोचिष्ठ दीदिवः सु॒म्नाय॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥ ३ ॥ ४ ॥**

स नः[9] । स[10] त्वम् । अस्मान्[11] । बुध्यस्व[12] । शृणु[13] च । आह्वानम्[14] । रक्ष[15] च । अस्मान् ।

---

१. वासकः Sy. वासयतीति वसुः । जनानां वासयिता Mah. यस्त्वं वसुर्वासयिता जनानाम् । यद्वा वसु धनम् । तापपाकप्रकाशैरुपकुर्वन्नुपस्कर इव भवसिU. वसुमान् । मत्वर्थीयो लुप्यतेBB.

२. ०ग्नि P. सर्वेषामग्रणीः Sy. अङ्गतीत्यग्निः । 'अगि गतौ' आहवनीयादिरूपेण गमनशीलः Mah. अग्निशब्द आमन्त्रितविभक्तया विपरिणम्यते वाक्यसम्बन्धात् । हे अग्ने ! U. अङ्गनादिगुणयुक्तः BB.

३. व्याप्तान्नस्त्वम् Sy. वसुना धनेन श्रवः कीर्तिर्यस्यासौ वसुश्रवाः । धनप्रदोऽयमिति यस्य कीर्तिरित्यर्थः Mah. वसुना धनदानेन यः श्रूयते स वसुश्रवाः । धनदानैरित्यर्थः U. वासयतीति वसुः । तादृशं श्रवणं यस्य तादृशः । वसुभिर्वा श्रूयत इति वसुश्रवाः BB.

४. ०स्माभि० P. आभिमुख्येन अस्मान् व्याप्नुहि Sy. अच्छ आभिमुख्येन BB. अच्छाभेराप्तुमिति शाकपूणिः N. 5. 28.

५. अभिव्याप्नुह्यस्मान् । . . . . नशतिराप्नोतिकर्मा । यद्वा हे अच्छ ! निर्मलभावाग्ने !, नक्षि, अस्मद्धोमस्थानं गच्छ । 'नक्ष गतौ' । यदा यदा वयं जुहुयाम तदा समागच्छेत्यर्थः Mah. नशतिराप्नोतिकर्मा । अभिव्याप्नुह्यस्मान् U. प्राप्नुहि । . . . . नशतिर्गतिकर्माBB.

६. अतिशयेन दीप्तिमन्तम् Sy. अतिदीप्तियुक्तम् Mah. दीप्तिमन्तम् U. अस्मान् प्राप्य चास्मभ्यं द्युमत्तमो दीप्तिमत्तमस्त्वम् BB.

७. पश्वादिलक्षणं धनम्Sy. धनम् Mah.U.BB.

८. अस्मभ्यं देहि Sy. ददातेर्लुङि रूपम् Mah. दधातेर्लिटि पूर्ववच्छपो लुक् BB.
This stanza=YV. 3.25.=TS. 1.5.6.3.
RV. V. 24. 1.=SB. 2. 3. 4. 31. इदमुपरितनमेव ब्राह्मणमासां चतसृणामपि ऋचाम् ।
For SB. see previous stanza.

९. इयं द्विपदा श्रुतबन्धोः । सापि च प्रसङ्गाद् व्याख्यायते । य उक्तगुणोऽसि SKN. श्रुतबन्धोरार्षम् । यस्त्वमेवंप्रभावो यथाप्रभावं त्वां वयमवोचाम Dur.

१०. हे अग्ने ! Sy., SKN. यस्त्वमुक्तगुणः सः U. स त्वं हे भगवन्नग्ने ! Dur.

११. ०स्मा P. अस्मान् भवत्सेवकान् Mah. अस्माकम् U. अस्माकं स्वभूतां स्तुतिमिति शेषः SKN.. अस्माकमभिप्रायम् Dur.

१२. बुध्यस्वाभिप्रायम् U.

१३. बुद्ध्वा च . . . . शृणु U.

१४. अस्मदीयमाह्वानम् Sy., Mah., U. आह्वानम् SKN. आह्वानमिदम् Dur.

१५. उरुष्यती रक्षणकर्मा Mah. श्रुत्वा चाह्वानम्, उरुष्या णः, उरुष्यती रक्षतिकर्मा, रक्षास्मान् U. रक्ष चास्मान् SKN. आहूतश्च . . . . उपगम्यास्मान् . . . . पाहि Dur.

अघमिच्छतः[1] । सर्वस्माद्[2] अपि ।

तं त्वा[3] । तम्[4] । त्वा[5] । शोचिष्टम[6] ! दीप्त[7] ! पुत्रादिभ्यः[8] । सुखार्थम्[9] । याचामहे[10] । सम्प्रति[11] ।[12]

---

१. अघायतः शत्रोः....अघं परस्येच्छत्यघायति । ....अघायतीत्यघायंस्तस्मादघायतः शतृप्रत्यये (वा) रूपम् Mah. अघं पापं य इच्छति सोऽघायत्? (त्)तस्मादघायतः शत्रोः U. कुतः ?....पापमिच्छतः SKN.; Dur.

२. सर्वस्माज्जनात् Sy. सर्वस्मात्....समशब्दः सर्वपर्यायः Mah. U. सर्वस्माद्रक्षआदेः SKN. सर्वस्मात्....एवमत्र 'समस्मात्' इति पञ्चम्यां व्यत्ययो दृष्टः । तस्मात् व्यत्ययदर्शनाद् 'दृष्टानुविधिश्छन्दसि भवति' इति कृत्वा अनुदात्तप्रकृतित्वेऽपि सति नामैतद् भवतीत्युपपद्यते Dur.
'उरुष्या णो' अघायतः समस्मात्' इति पञ्चम्याम् । उरुष्यतिरकर्मकः N.5.23.; SKN. II.373. This stanza=YV. 3.26.

३. त्वां D.

४. तं पूर्वोक्तगुणकम् Mah. यस्त्वमुक्तगुणस्तम् U. तादृशमन्तिकतमादिगुणविशिष्टम् BB.

५. त्वाम् Sy. त्वां ब्रवीमि U. य उक्तगुणोऽसि तं त्वाम् SKN.

६. शोचिष्टत्तम P. हे अतिशयेन शोचिष्मन् ! Sy. दीप्तिमत्तम ! शोचिरस्यास्तीति शोचिष्मान्, मतुप् Mah. शोचिष्मत्तमः । शोचिरिति ज्वालानामसु पठितम् । छान्दसो मतुब् लोपः U. अतिशयेन शोचितः SKN. दीपयितृतम ।....यद्वा शोचस्वितम ! BB. शोचिरिति ज्वालानाम (Ngh. 1.17.) ।

७. स्वतेजोभिर्दीप्ताग्ने ! Sy. सर्वस्य दीपयितः ! Mah. सन्दीपयस्व । दिवेर्ज्वलनार्थस्य लिटि क्वस्वन्तस्य रूपम् U. दीप्तिमत् SKN. दीप्यमान ! जिगीषन् ! वा BB.

८. ०दिभिः P. समानख्यातिभ्यः पुत्रेभ्यस्तदर्थम् Sy. सखिभ्योऽर्थाय Mah., U. सखीनामर्थाय SKN. समानख्यानेभ्यः सुहृदयसुहृद्भ्यः BB.

९. सुखाय । तदर्थम् Sy. द्वितीयार्थे चतुर्थी । सुम्नं सुखम्, यद्वा सुखार्थम् Mah., U. द्वितीयार्थे चात्र चतुर्थी । सुखम् SKN. धनाय सुखाय वा ।....'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् सुम्नायेति चतुर्थी BB. सुम्नमिति सुखनाम Ngh. 3.6.

१०. यद्वाऽस्मत्सखीनामुपकाराय च त्वामीमहे Mah. त्वत्तोऽवश्यं सुखं भवतीत्यभिप्रायः ।....सुम्नं नूनमीमह इत्यनुषङ्गः U. याचामहे SKN.

११. नूनम् Sy. नूनं निश्चयेन Mah., U., SKN. नूनमिति पादपूरणे निश्चये वा । यद्वा नूनं नूतनमभूतपूर्वं तं त्वाम् BB. This stanza =YV.3.26.=TS.1.5.6.3.=N.5.23., SKN. II. 373.

१२. Ms. D. puts the figure ॥२४॥ here to indicate the end of the twenty-fourth hymn. No such number is given in P.

## V.25.

**अच्छा॑ वो अ॒ग्निमव॑से दे॒वं गा॑सि॒ स नो॒ वसुः॑ ।**
**रास॑त्पु॒त्र ऋ॑षू॒णामृ॒तावा॒ पर्ष॑ति द्वि॒षः ॥ १ ॥**

**अच्छा वः ।**[1] ॥ वसूयवः ॥[2] युष्माकम्[3] । रक्षणाय । त्वमग्निम् । देवम् । अभिगच्छ[4] । सः[5] । अस्माकम्[6] । वासयिता[7] । स ऋषीणाम्[8] । पुत्रः[9] । अस्मभ्यमभिमतं प्रयच्छति[10] । सत्यकर्मा[11] । शत्रूंश्चास्माकम् । तरति[12] ।

**स हि स॒त्यो यं पूर्वे॑ चि॒द्दे॒वास॑श्चि॒द्यमी॑धि॒रे ।**
**होता॑रं म॒न्द्रजि॑ह्व॒मित्सु॑दी॒तिभि॑र्वि॒भाव॑सुम् ॥ २ ॥**

**स हि सत्यः ।** सः[13] । हि । सत्यकर्मा[14] । यम्[15] । पूर्वे । च ऋषयः[16] । समीधिरे[17] । यम् । देवाः । अपि[18] । होतारम्[19] । मोदनवाचम्[20] । एव[21] । शोभनदानैर्हविर्भिः[22] । विभावसुमिति[23][24] ।

---

१. 'अच्छा वो अग्निम्' इति नवर्चमेकादशं सूक्तम् । अत्रानुक्रमणिका—'अच्छा वो नव वसूयव आनुष्टुभम्' (KSA. 25.25.p.19.) इति । आत्रेया वसूयुनामान ऋषयः । अनुष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता (KSA. 12. 12. p. 5.) । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । प्रातःसवनेऽच्छावाक वदस्वेत्युक्ते 'अच्छा वो अग्निमवसे' इत्यृचमनुब्रूयात् । तथा च सूत्रितम्—'अच्छा वो अग्निमवस इत्यृचमन्वाह' (ĀSS 5.7.) इति Sy.

२. हे वसूयवः ! Sy.

३. यूयम् Sy.

४. अभिगायत Sy.

५. अग्निः Sy.

६. अस्मभ्यम् Sy.

७. अग्निहोत्रार्थं यजमानानां गृहे वासयिता Sy.

८. ०म P.

९. ऋषिभिर्मन्थनेन जनितत्वात् पुत्र इत्युपचर्यते Sy.

१०. कामान् ददातु Sy.

११. ऋतवान् सत्यवानुदकवान्वा सोऽग्निः Sy.

१२. पारयतु Sy.

१३. अग्निः Sy.

१४. सत्यप्रतिश्रवो भवति Sy.

१५. अग्निम् Sy.

१६. महर्षयः Sy.

१७. ०मि० P. D. समैन्धत Sy.

१८. P. and D. read वा अपि for देवाः । अपि ।

१९. ०र P. देवानामाह्वातारम् Sy.

२०. हविषां प्रदानेन देवानां मादयित्री जिह्वा यस्य स तम्, यद्वा मोदनजिह्वम् Sy.
'मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा N.6.23.

२१. इदिति पूरणः Sy.

२२. शोभनदीप्तिभिर्युक्तम् Sy.

२३. प्रभाधनम् Sy.

२४. शोभनानैर्हविर्भिभावसुमति P.

**स नो॑ धी॒ती वरि॑ष्ठया॒ श्रेष्ठ॑या च सु॒म॒त्या ।**
**अग्ने॑ रा॒यो दि॑दीहि नः सुवृ॒क्तिभि॑र्वरेण्य ॥ ३ ॥**

**स नो धीती**[1] । स त्वम् । अस्मभ्यम्[2] । वरणीयतमेन[3] । कर्मणा[4] । त्वदीयया श्रेष्ठया[5] । सुमत्या[6] । च । अग्ने ! धनानि । प्रज्वलय[7] । पुनर्न इति पूरणम्[8] । स्तोत्रैरस्मदीयैः[9] । वरणीय !

**अ॒ग्निर्दे॒वेषु॒ राज॑त्य॒ग्निर्मर्ते॑ष्वावि॒शन् ।**
**अ॒ग्निर्नो॑ ह॒व्य॒वाह॑नो॒ऽग्निं धी॒भिः स॑पर्यत ॥ ४ ॥**

**अग्निर्देवेषु** । उभयेषु देवमनुष्येषु[10] । आविशन्[11] । अग्निः[12] । विराजति[13] । सोऽयमग्निः[14] । अस्माकम् । हविषां[15] वोढा । तमिममग्निम्[16] । पूजयत[17] । कर्मभिः[18] ।

**अ॒ग्निस्तु॒विश्र॑वस्तमं तु॒विब्र॑ह्माणमुत्त॒मम् ।**
**अ॒तूर्तं॑ श्राव॒यत्प॑तिं पु॒त्रं द॑दाति दा॒शुषे॑ ॥ ५ ॥**

**अग्निः**[19] । अयम् अग्निः । अतिशयेन प्रवृद्धकीर्तिम्[20] । प्रवृद्धस्तोत्रम्[21] । उत्तमम्[22] । शत्रुभिरहिंसितम् । श्रावयितॄणां यशस्विनां पतिम्[23] । पुत्रम् । प्रयच्छति[24] । यजमानाय[25] ।

---

१. **स नो धीती** is omitted by P.
२. **अस्मदीयेन** Sy.
३. **वरतमेन** Sy.
४. **कर्मा** P.
**परिचरणात्मकेन कर्मणा** Sy.
५. **श्रेष्ठा** D.
**अतिशयेन प्रशस्येन** Sy.
६. **सुमतिरिति शस्त्रमुच्यते शस्त्रेण च प्रीतः सन्** Sy.
७. **देहि** Sy.
८. **अस्मभ्यम्** Sy.
९. **त्रैर०** P.
**स्तुतिभिः स्तूयमान !** Sy.
१०. **देवानां मध्ये, मनुष्येषु** Sy.
११. **अवि०** D. **आहवनीयादिरूपेण प्रविष्टो भवति** Sy.
१२. **०ग्नि** P. **यः अग्निः** Sy.
१३. **देवतारूपेण प्रकाशते** Sy.
१४. Omitted by P. **यः अग्निः** Sy.
१५. **अस्मदीयेषु यज्ञेषु देवतार्थं हव्यानां वोढा भवति** Sy.
१६. **हे यजमानाः ! तमग्निम्** Sy.
१७. **परिचरत** Sy.
१८. **स्तुतिभिः** Sy.
१९. **पुत्रकामेष्ट्यां 'अग्निस्तुविश्रवस्तमम्' इति द्वे स्विष्टकृतो याज्यानुवाक्ये । सूत्रितञ्च--'अग्निस्तुविश्रवस्तममिति द्वे संयाज्ये'** (ASS. 2.10.) **इति** Sy.
२०. **बह्वन्नम्** Sy.
२१. **बहुस्तोत्रम्** Sy.
२२. **उत्कृष्टम्** Sy.
२३. **श्रावयति विश्रुतान्करोति पतीन् पालयितॄन् पितॄनिति स्वकर्मणा पितॄणां प्रख्यापक इति श्रावयत्पतिः । तथाविधम्** Sy.
२४. **ददातु** Sy.
२५. **हवींषि दत्तवते यजमानाय** Sy.

**अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः ।**
**अग्निरत्यं रघुष्यदं जेतारमपराजितम् ॥ ६ ॥**

**अग्निः** । अग्निः । ददाति[1] । सतां पतिं पुत्रम्[2] । यः[3] । शत्रून्[4] । युद्धेन । सहते[5] । तथाग्निः । अश्वम्[6] । क्षिप्रगामिनम्[7] । जेतारम्[8] । अपराजितं[9] च प्रयच्छति ।

**यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।**
**महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ ७ ॥**

**यद् वाहिष्ठम्**[10] । यत्[11] । तद् वा[12] । दृढतमं[13] स्तोतॄणाम्[14] । अग्नये निहितं तेजः[15] । अथ प्रत्यक्षः—हे विभावसो[16] ! महत्तत्[17] तेजोऽनेन हविषा । पूजय[18] । यथा[19] राजस्त्री[20] स्वगृहालङ्कृता निर्गच्छति[21] तद्वत्[22] । स्तोतॄणां त्वत्तः[23] ।

---

१. अस्मभ्यं ददातु Sy.
२. पालयितारं तथाविधं पुत्रम् Sy.
३. पुत्रः Sy. ४. नृभिः परिजनैः Sy.
५. Mss. P. and D. add पुस् between सहते and तथा ॥ शत्रूनभिभवति Sy.
६. अतति सततं गच्छतीत्यत्योऽश्वः । तं ददातु Sy.
७. रघुर्लघुः स्यदो जवो यस्य तम् Sy.
८. जतारम् P. जेतारं शत्रून् Sy.
९. अराजितम् P., D. अपराजितं शत्रुभिः Sy.
१०. अश्वमेधे पौष्ण्यामिष्टौ 'यद्वाहिष्ठम्' इति स्विष्टकृतो याज्या । सूत्रितञ्च—'यद्वाहिष्ठं तदग्नय इति संयाज्ये' (ĀSS. 10.6.) इति Sy.
११. ०हिष्मं P. १२. स्तोत्रम् Sy. तस्मादीदृशं यत् स्तोत्रम् BB. १३. तदग्नये क्रियते Sy.
१४. वोढृतमम् Sy. वाहयति प्रापयतीष्टमिति वाहयितृ । वहेर्ण्यन्तात्तृच् । अत्यन्तं वाहयितृ वाहिष्ठम् Mah. वोढृतमम् U. वाहयितृतमं प्रीतेः प्रापयितृ । स्तोत्रमेव चेदृशं भवति BB.
१५. हे उद्गातः !....अग्न्यर्थं तत् Mah. अग्नयेऽर्थाय U. अग्न्यर्थमेव । अग्निरेव रमणीयं स्तोत्रमर्हति तस्मादीदृशेन स्तोत्रेण त्वामेव स्तौमीति भावः BB.
१६. अतो हे प्रभाधनाग्ने ! Sy. सामगानेन प्रत्यक्षमग्निं ब्रूहि । हे विभावसो ! विभा कान्तिरेव वसु धनं यस्य स विभावसुः । हे अग्ने ! Mah. ततो दृष्ट्वाऽग्निं ब्रूहि—हे विभावसो ! विभूतधनाग्ने ! U. तेजोधन ! BB.
१७. बह्वन्नं धनं च Sy. बृहत्साम Mah., U. त्वमपि बृहत् प्रशस्तं मदीयं स्तोत्रम् BB.
१८. अस्मभ्यं प्रयच्छ Sy. बृहत् साम्नो गानं कुरु Mah. गाय U. बहु मन्यस्व । अङ्गीकुरु BB.
१९. इवेति पूरणः Sy.
२०. महती Sy. तत्र दृष्टान्तः । महिषीव यथा महिषी प्रथमपरिणीता स्त्री Mah. महिषी प्रथमवित्ता, यथा प्रथमपत्नी धर्मार्थकामात्मिका U. महान्नृषिर्महर्षिर्महेश्वरः । पृषोदरादित्वादाकारस्येत्वम्, रेफलोपश्च । ततः पञ्चम्येकवचनस्य 'सुपां सुलुक्०' इति लुक् । महाराजादिव त्वत्तो धनमुत्पद्यते । वृषादित्वादाद्युदात्तत्वम् । यद्वा महिष्येव गृह्यते, यथा राजभार्याया रत्नादिकं लभते एवं त्वत्तोऽपि BB.
२१. गृहाद् भोगार्थं पतिं प्रति Mah.
२२. ०ताग्निर्ग० D. उद्गच्छति Mah. उदीरत उत्तिष्ठति सुखात्मिका भवति ।.... अथवा महिषी यथा सर्वान् भोगान्....उत्क्षिपति परोपकाराय U.
२३. कथमस्यान्नधनप्रदातृत्वमित्यपेक्षायामाह यतः त्वत्तः सकाशात् Sy. त्वत्तः सकाशात् Mah. किमिति देवतान्तरं मुक्त्वाऽग्निरेव स्तूयत इत्यत आह....त्वत्तः BB.

रयिः[1] । उद्गच्छति । तथान्नानि च । त्वत्तः[2] । उद्गच्छन्ति[3] ।

**तव॑ द्यु॒मन्तो॑ अ॒र्चयो॒ ग्रावे॒वोच्यते बृ॒हत् ।**
**उ॒तो ते॑ तन्य॒तुर्य॑था स्वा॒नो अ॑र्त॒ त्मना॑ दि॒वः ॥ ८ ॥**

**तव द्युमन्तः**[4] [5] । तव । दीप्तिमन्तः[6] । रश्मयस्तथा । शैल[7] इव । उच्यते[8] । महत्त्वम्[9] । अपि च । तवारण्ये । दीप्तस्य[10] । शब्दः । सर्वं देशं व्याप्नोति[11] । स्वयमेव[12] । यथा मेघानां गर्जितशब्दः[13] ।

**ए॒वाँ अ॒ग्निं व॑सू॒यवः॑ सह॒सानं॑ ववन्दिम ।**
**स नो॒ विश्वा॒ अति॒ द्विषः॒ पर्ष॑न्ना॒वेव॑ सु॒क्रतुः॑ ॥ ९ ॥**

**एवाँ अग्निम्** । एवम्[14] । अग्निम् । वसूयवो[15] नाम्ना[16] वयम् । बलाचरणशीलम्[17] । स्तुतवन्तः[18] । स[19] च । अस्मान् । विश्वान्[20] । द्वेष्ट्रीः[21] सेनाः । अतिनयन्तु[22] । नावेव[23] सिन्धुम् । सुकर्मा[24] [25] ।

---

१. धनम् Sy. एवं त्वद्रयिः सुखात्मिका, उदीरत उत्तिष्ठति U. रयिर्धनमुत्पद्यते । उदीरत इति वक्ष्यमाणबहुवचनान्तमत्रैकवचनान्तविपरिणामेन सम्बध्यते BB.

२. एकं त्वत्पदं पादपूरणम् । रयिस्त्वदुदीर्त इति वा Mah. अन्नान्यपि त्वत्तः BB.

३. 'ईर गतौ कम्पने च' Mah. उद्गच्छन्ति परोपकाराय U. उत्पद्यन्ते BB.
This stanza=YV. 26. 12.=TS. 1.1.14.4.

४. ०न्तं D.

५. हे अग्ने ! Sy.

६. दीप्तिमन्तो भवन्ति Sy.

७. शैव P. अभिषवग्रावेव Sy.

८. स्तूयसे Sy.

९. ०त्त्वम् is suggested for ०त्वम् ॥ महान् त्वम् Sy.

१०. द्योतमानस्य Sy.

११. उद्गच्छति Sy.

१२. आत्मना Sy.

१३. मेघगर्जितमिव Sy.

१४. उक्तप्रकारेण Sy.

१५. वसूवः P. वसुकामा वयम् Sy.

१६. ना P.

१७. अस्माकं बलमाचरन्तम् Sy.

१८. स्तुमः Sy.

१९. अग्निः Sy.

२०. सर्वान् Sy.

२१. शत्रून् Sy.

२२. ०शयन्तु P. ०नयतु is suggested for ०नयन्तु ॥ अतिपारयतु Sy.

२३. नानेव P.
नावा साधनेन सिन्धुम् Sy.

२४. शोभनकर्मा Sy.

२५. Ms. D. puts the figure ॥२५॥ here to indicate the end of the twenty-fifth hymn. No such number is given in P.

V.26.

अग्ने॑ पावक रो॒चिषा॑ म॒न्द्रया॑ देव जि॒ह्वया॑ । आ दे॒वान्व॑क्षि॒ यक्षि॑ च ॥ १ ॥

अग्ने[1] पावक[2] । इति निगदव्याख्याता[3] ।

तं त्वा॑ घृतस्नवीमहे॒ चित्र॑भानो स्व॒र्दृश॑म् । दे॒वाँ आ वी॒तये॑ वह ॥ २ ॥

तं त्वा । तम् । त्वाम् । उदकस्य[4] प्रापयितः ! याचामहे । चित्रदीप्ते[5] ! सर्वस्य[6] द्रष्टारम् । त्वमिह

---

१. 'अग्ने पावक' इति नवर्चं द्वादशं सूक्तम् । वसूयव ऋषयः । गायत्री छन्दः । अग्निर्देवता । तथा चानुक्रान्तम्—'अग्ने गायत्रम्' (KSA. 25.26. p. 19.) इति । प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितञ्च—'अग्ने पावक दूतं व इति सूक्ते' (ĀSS. 4. 13.)इति । आधाने द्वितीयायामिष्टौ प्रथमस्य हविषः 'अग्ने पावक' इत्येषा याज्या । सूत्रितञ्च—'स नः पावक दीदिवोऽग्ने पावक रोचिषा' (ĀSS. 2.1.) इति Sy.

२. ०वकेति D.

३. This stanza is explained in the following manner:—हे पावक ! शोधक ! रोचिषा स्वदीप्त्या । मन्द्रया देवानां मादयित्र्या जिह्वया च । हे देव ! द्योतमान ! अग्ने ! देवान् आ वक्षि यज्ञार्थमावह । यक्षि च तान् यज Sy. हे अग्ने ! पावक ! शोधक ! हे देव ! रोचिषा रोचनेन ज्वालासमूहेनाहवनीयात्मना स्थित इति शेषः । मन्द्रया मदनीयया जिह्वया होतृवाग्रूपेणावस्थित इति शेषः । देवानावक्षि आवह यक्षि यज च । द्वावग्नेरधिकारौ हौत्रमाहवनीयरूपेण हविर्ग्रहणं चात एव स्तूयते Mah. हे अग्ने ! पावक ! पावयितः ! रोचिषा रोचनेन ज्वालासमूहेन । आहवनीयात्मना स्थित इति शेषः । मन्द्रया च मदनीयया च देवजिह्वया होतृत्वेनावस्थित इति शेषः । आ देवान् वक्षि यक्षि च देवान् वक्षि चावह देवान् यज चेति । द्वौ ह्यग्नेराकारौ हौत्रं चाहवनीयरूपेण हविर्वहणं चात एवं स्तूयते U. हे अग्ने ! पावक ! शोधक ! . . . . रोचिषा रोचनशीलया मन्द्रया श्लक्ष्णया मदनशीलया वा हे देव ! जिह्वया त्वदीयया वाचा वा देवानावक्षि आवह आह्वय यक्षि च यज च । . . . . इष्ट्वा च देवान् यजमानस्याभिमतं रसं सम्पादयेति भावः BB.

This stanza=YV. 17.8.=TS. 1.3.14.8.

अभ्यात्मं पक्षपुच्छानि विकर्षति । अभ्यात्ममेव तच्छान्तिं धत्ते । परस्तादर्वाक्परस्तादेव तदर्वाचीᳪ शान्तिं धत्तेऽग्ने पावक रोचिषेति दक्षिणं पक्षᳪ स नः पावक दीदिव इति पुच्छं पावकया यश्चितयन्त्या कृपेत्युत्तरं पावकं पावकमिति यद्वै शिवᳪ शान्तं तत्पावकᳪ शमयत्येवैनमेतत् SB. 9.1. 2.30. p. 708.

४. उदकतस्य P. घृतस्य प्रेरक ! यद्वा घृतेन जनित ! Sy.

५. चित्रा नानाविधा भानवो रश्मयो यस्यासौ चित्रभानुः, तस्य सम्बोधनम् Sy.

६. सर्वद्रष्टारम् Sy.

देवान् । हविर्भक्षणाय[1] । आवह ।

**वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तमध्वरे ॥ ३ ॥**

वीतिहोत्रम् । प्रिययज्ञम्[2] । त्वाम्[3] । कवे[4] ! दीप्तिमन्तम्[5] । दीपयामः[6] । अग्ने[7] ! महान्तम् । अध्वरे[8] ।

**अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये । होतारं त्वा वृणीमहे ॥ ४ ॥**

अग्ने विश्वेभिः । अग्ने ! यजमानायास्मै[9] । सर्वैः[10] । देवैः सह । आगच्छ[11] । त्वाम् । होतारम्[12] । वृणीमहे[13] ।

उत्तरा निगदव्याख्याता[14]

**यजमानाय सुन्वत आग्ने सुवीर्यं वह । देवैरा सत्सि बर्हिषि ॥ ५ ॥**

[यजमानाय][15]

---

१. हविषां-भक्षणाय Sy.

२. कान्तयज्ञम् Sy. 'इण गतौ' इतिर्गतिर्व्याप्तिः पुत्रपौत्रपशुधनादिभिः समृद्धिरित्यर्थः । वीतये समृद्ध्यै होत्रं होमो यस्य स वीतिहोत्रस्तं, यत्र होमे कृते समृद्धिप्राप्तिः स्यादित्यर्थः । यद्वा वीतिरभिलाषो होत्रे होतृकर्मणि यस्य तम् Mah. 'वी गतिप्रजननकान्त्यसनखादनेषु' वीतिरभिलाषो होतृकर्मणि यस्य स वीतिहोत्रः । अथवा विविधा ईतिर्गतिर्होतृप्रशास्त्रादिषु होत्रासु यस्य स वीतिहोत्रः ।.....वीतिहोत्रं त्वाम् U. वीतिहोत्रमिष्टस्तोत्रम्....वेतव्या कमितव्या होत्रा वाक् स्तोत्ररूपा होतृव्यापारो वा यस्य तम् BB. ३. त्वा P.

४. हे क्रान्तदर्शिन् ! Sy. अतीतानागतदूरवर्तिपदार्थानां यस्य युगपज् ज्ञानं स कविः Mah. अतीतानागतदूरवर्तिपदार्थानां यस्य युगपज् ज्ञानं स क्रान्तदर्शनः U. मेधाविन् ! BB.

५. द्यौः कान्तिरस्यास्तीति द्युमांस्तं स्वत एव द्युत्युपेतम् Mah.

६. समिद्भिः सन्दीपयामः Sy. अनेनेध्मकाष्ठेन दीपयामः Mah. 'इन्धी दीप्तौ' सन्दीपयामः । अनेनेध्मकाष्ठेन U. प्रागेव दीप्तिमन्तं सन्तमनया समिधा सम्यग्दीपयामः BB.

७. हे भगवन्नग्ने ! U.

८. यज्ञे Sy., U. यागे निमित्ते Mah. अध्वरार्थम् । निमित्तात्सप्तमी । 'ध्वृ हूर्छने', हूर्छनं कौटिल्यम् । ध्वरन्तीति ध्वरा रक्षःप्रभृतयः । पचाद्यच् । ते यत्र न सन्ति सोऽध्वरः ।.... तादृशाय यज्ञाय त्वां समिधीमहि BB. सोभ्यादधाति । वीतिहोत्रं त्वां कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरऽइत्येतया गायत्र्या गायत्रीमेवैतत्समिन्धे सा गायत्री समिद्धान्यानि छन्दाꣳसि समिन्धे छन्दाꣳसि समिद्धानि देवेभ्यो यज्ञं वहन्ति । SB. 1.3.4.6. p. 30. This stanza=YV. 2.4.=TS. 1.1.11.2.

९. हविषां दात्रे यजमानाय, तदर्थम् Sy.

१०. सर्व P.

११. ०च्छन् P. त्वं यज्ञं प्रत्यागच्छ Sy.

१२. यतः देवानामाह्वातारम् Sy.

१३. प्रार्थयामहे Sy. १४. ताः P.

१५. The *pratīka* is supplied by the Editor. हे अग्ने ! सुन्वते अभिषवं कुर्वते । यजमानाय । सुवीर्यं शोभनं बलम् । आ वह प्रापय । किञ्च देवैः सह । बर्हिषि यज्ञे । आ सत्सि आसीदेति Sy.

**समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि । देवानां दूत उक्थ्यः ॥ ६ ॥**

समिधानः । सन्दीप्यमानः[1] । शत्रुसहस्रस्य तेजः[2] ! त्वम्[3] । अग्ने ! कर्म[4] । प्रवर्तयसि[5] । देवानाम् । दूतः[6] । प्रशस्य[7] !

**न्यग्निं जातवेदसं होत्रवाहं यविष्ठ्यम् । दधाता देवमृत्विजम् ॥ ७ ॥**

न्यग्निम्[8] । निदधात धत्त[9] । अग्निम् । जातप्रज्ञम्[10] । सप्तानां होत्राणां वोढारम्[11] । युवतमम् । देवम्[12] । ऋतौ[13] च यष्टारम्[14] ।

**प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः । स्तृणीत बर्हिरासदे ॥ ८ ॥**

प्र यज्ञः । यज्ञः[15] । प्रगच्छतु[16] । अद्य[17] । अनुषक्तम्[18] । अतिशयेन देवव्यापी[19] । तदर्थमनुषक्तं बर्हिः । स्तृणीत[20] ।[21]

**एदं मरुतो अश्विना मित्रः सीदन्तु वरुणः । देवासः सर्वया विशा ॥ ९ ॥**

एदं मरुतः । अश्विनौ[22] । मित्रावरुणौ[23] । अन्ये[24] च देवाः । सर्वैः[25] । अनुचरैः सह[26] । इदं बर्हिः[27] । अग्ने ! सीदन्तु[28] ।

---

१. हविर्भिः समिद्धयमानः Sy.
२. जेतः is suggested for तेजः ॥ हे सहस्रस्य जेतः ! Sy.
३. तुम् P.
४. कर्मा P. नः कर्माणि यज्ञादिक्रियाः Sy.
५. पोषयसि Sy.
६. दूतः सन् Sy.
७. प्रशस्यः is suggested for प्रशस्य ॥
८. हे यजमानाः ! Sy.
९. निधत्त Sy.
१०. जातानि भूतानि वेत्तीति जातवेदास्तम् Sy.
११. होत्रस्य यज्ञस्य वोढारम् Sy.
१२. द्योतमानम् Sy.
१३. Omitted by D.
१४. जष्टारं P.
१५. यज्ञसाधनं हविः Sy.
१६. देवान् गच्छतु Sy.
१७. अस्मिन्नहनि Sy.
१८. अनुषक्तं यथा भवति तथा Sy.
१९. देवैः प्रकाशमानैः स्तोतृभिर्व्याप्ततमः Sy.
२०. स्तृ० D.
२१. VM. ignores आसदे ॥
हे ऋत्विजः ! . . . . अग्नेरासदनार्थम् Sy.
२२. देवानां भिषजौ Sy.
२३. सूर्यः । वरुणश्च Sy.
२४. एते सर्वे देवाः Sy.
२५. सर्वः P. समस्तेन Sy.
२६. स्वीयेन परिजनेन सार्धम् Sy.
२७. ०र्हिम् P.
२८. VM. ignores आ and मरुतः ।
आ सीदन्तु । मरुतो मरुद्गणाः Sy.
Ms. D. puts the figure ॥२६॥ here to indicate the end of the twenty-sixth hymn. No such number is given in P.

V.27.

अनस्वन्ता सत्पतिर्मामहे मे गावा चेतिष्ठो असुरो मघोनः।
त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर त्र्यरुणश्चिकेत ॥[1] १ ॥

अनस्वन्ता[1]। कात्यायनः[2]—"त्रैवृष्णपौरुकुत्स्यौ द्वौ त्र्यरुणत्रसदस्यू[3] राजानौ भारतश्चाश्वमेधः[4]"[5] इति त्र्यरुणत्रसदस्युरग्निप्रसादान्महद्[6] धनं लब्ध्वा वदति[7]—अनस्वन्तेति[8]।

अनोवहनयोग्यौ[9]। अनुडुहौ[10]। सतां पतिस्त्र्यरुणः[11]। मह्यम्। अददात्[12]। अतिशयेन देवान् प्रति स्तोत्रवतो ज्ञाता[13]। निरसिता शत्रूणाम्[14]। किं चायम्, अग्ने! त्रैवृष्णः[15]। त्र्यरुणः[16]। दशभिः गवां सहस्रैर्मह्यं प्रदित्सितैः[17]। ममाग्रतः[18] प्रादुरभूत्[19][20]।

---

१. 'अनस्वन्ता' इति षड्चं त्रयोदशं सूक्तम्। अत्रानुक्रमणिका—'अनस्वन्ता षट् त्रैवृष्णपौरुकुत्स्यौ द्वौ त्र्यरुणत्रसदस्यू राजानौ भारतश्चाश्वमेधोऽन्त्यास्तिस्रोऽनुष्टुभो नात्मात्मने दद्यादिति सर्वास्वत्रिं केचिदन्त्यैन्द्राग्नी' (KSA. 25.27. p. 19.) इति। त्रिवृष्णस्य पुत्रस्त्र्यरुणः—पुरुकुत्सस्य पुत्रस्त्रसदस्युर्भरतस्य पुत्रोऽश्वमेध एते त्रयोऽपि राजानः सम्भूयास्य सूक्तस्य ऋषयः, यद्वात्रिरेव ऋषिः। आद्यास्तिस्रस्त्रिष्टुभः चतुर्थ्याद्यास्तिस्रोऽनुष्टुभः। षष्ठीन्द्राग्निदेवत्या शिष्टाः पञ्चाग्नेय्यः। विनियोगो लैङ्गिकः Sy.

२. त्रैष्ण्यः P., D.

३. ०स्यु P.

४. ०श्चश्व० P., D.

५. A fragment of KSA. 25.27. p. 19.

६. ०त्रसदस्यू is suggested.

७. वादति P. वदतः is suggested for वदति।

८. ०स्वान्ताविति P. ०स्वन्ताविति D. अत्री राजर्षीणां दानमग्नेः पुरतोऽनेन सूक्तेनावर्णयत् Sy.

९. अनसा शकटेन संयुक्तौ Sy.

१०. ०हो P. अनड्वाहौ is suggested for अनुडुहौ॥ गावावनड्वाहौ गवां हिरण्यानां वा Sy.

११. पीवति P.
पालयिता Sy.

१२. ददौ। 'महि दाने' Sy.

१३. ज्ञातृतमः Sy.

१४. बलवान् Sy.

१५. चयम् P.

१६. त्रैष्ण्यं P. त्रैष्ण्यः D.
त्रिवृष्णपुत्रः Sy.

१७. ०ण P.
इत्येतन्नामा राजर्षिः Sy.

१८. ०त्सित्रैतममा० P.

१९. स राजर्षिः सर्वैर्जनैरनेन दानेन ज्ञायते Sy.

२०. VM. ignores मघोनः and वैश्वानर॥ मघवा धनवान्, प्रथमार्थे ङसिः॥ हे विश्वेषां नराणां नेतः! Sy.

योमे॑ श॒ता च॑ विं॒श॒तिं च॒ गोनां॒ हरी॑ च यु॒क्ता सु॒धुरा॒ ददा॑ति ।
वैश्वा॑नर॒ सुष्टु॑तो वावृधा॒नोऽग्ने॒ यच्छ॒ त्र्य॑रुणाय॒ शर्म॑ ॥ २ ॥

योमे । यः[1] । मे[2] । पूर्वोक्तेभ्योऽधिकं शतानि[3] । विंशतिम्[4] । च । गवाम् । अश्वौ । च । रथे युक्तौ[5] । शोभनधूर्वहनसमर्थौ[6] । ददाति[7] । तस्मै त्र्यरुणाय । अग्ने ! वैश्वानर[8] ! मया सुष्ठु स्तुतः[9] । ववृधानः[10] । सुखम् । प्रयच्छ ।

ए॒वा ते॑ अग्ने सुम॒तिं च॑का॒नो नवि॑ष्ठाय नव॒मं त्र॒सद॑स्युः ।
यो मे॒ गिर॑स्तुविजा॒तस्य॑ पू॒र्वीर्यु॒क्तेना॒भि त्र्य॑रुणो गृ॒णाति॑ ॥ ३ ॥

एवा ते । एवम् । अग्ने ! नविष्ठाय[11] । तुभ्यम् । स्तोतव्याम्[12] । सुमतिम्[13] । त्रसदस्युम्[14] । चकानो[15] भवति निवेदयतीत्यर्थः । कं[16] सुमतिमित्याह यो म इति—यः । मम । याज्ञा[17] गिरः[18] । बहुपुत्रस्य[19] । पूर्वप्रयुक्ताः[20] । युक्तेन वचनेन[21] । अयं त्र्यरुणः । अभिगृणाति—इदं[22] ददामीति वदतीत्यर्थः ।

यो म॒ इति॑ प्र॒वोच॒त्यश्व॑मेधाय सू॒रये॑ ।
दद॑दृ॒चा स॒निं य॒ते दद॑न्मे॒धामृ॑ताय॒ते ॥ ४ ॥

यो म इति ॥ सोऽयमेकाश्वमेधस्य[23] ॥ यो याचकः[24] । मह्यम्[25] । इति । प्रवोचति[26] । अश्वमेधाय[27] ।

---

१. त्र्यरुणः Sy.
२. मह्यम् Sy.
३. शतानि सुवर्णानाम् Sy.
४. ०ति P.
५. रथेन युक्तौ Sy.
६. ०भोजनधू० P. सुधुरौ सुष्ठु धुरं वहन्तौ Sy.
७. अददात् Sy.
८. हे वैश्वानर ! Sy.
९. ०ता P.
अस्माभिः सम्यक् स्तुतः Sy.
१०. हविर्भिर्वर्धमानस्त्वम् Sy.
११. अत्यन्तं स्तुत्याय Sy.
१२. ०तव्यं D. नवतमाम् Sy.
१३. स्तुतिम् Sy.
१४. त्रसदस्युरपीदं गृहाणेदं गृहाणेति मां प्रार्थितवान् Sy.
१५. त्रसदस्युः is suggested for त्रसदस्युम् ॥ कामयमानः Sy.
१६. कां is suggested for कं ।
१७. ०ज्ञां P. याच्ञा is suggested for याज्ञाः ।
१८. स्तुतीः श्रुत्वा प्रीतः सन् Sy.
१९. बह्वपत्यस्य Sy.
२०. बह्वीः Sy.
२१. अभियुक्तेन मनसा Sy.
२२ Omitted by P. इदं गृहाणेदं गृहाणेति यथा मां ब्रवीति Sy.
२३. सेयमेकाश्व० or सोऽयमेकोऽश्व० is suggested for सोऽयमेकाश्व० ।
२४. भिक्षमाणोऽर्थी Sy.
२५. मह्यं देहि Sy.
२६. प्रब्रवीति Sy.
२७. राजर्षये Sy.

प्रज्ञाय[1] मह्यं दातव्यमिति वदतीत्यर्थः[2]। तस्मा अयमश्वमेध ऋचा[3]। सनिम्[4]। प्रतिगच्छते देवबलेन धनं याचते[5]। धनं प्रयच्छति । तथा धनप्रदाने मेधाम्[6] । प्रयच्छति[7] । यज्ञमिच्छत[8] इत्यात्मस्वभावान्मनुकथनमश्वमेधस्य[9] यस्य[10] अश्वमेधस्त्र्यरुणाय महद्धनमददात्[11]।

**यस्य॑ मा परु॒षाः श॒तमु॑द्ध॒र्षय॑न्त्यु॒क्षणः॑ ।**
**अश्व॑मेधस्य॒ दाना॒ः सोमा॑इव॒ त्र्याशिरः ॥ ५ ॥**

ततस्त्र्यरुणो वदति[12]। यस्य अश्वमेधस्य[13] । माम् । परुषा बलोत्सिक्ताः[14] । शतसंख्याः[15] । उक्षणः[16] । अत्यन्तं हर्षयन्ति[17] । तस्याश्वमेधस्य[18]। दानाः[19]। सोमा इव[20] भवन्ति । त्र्याशिरः[21] सक्तवः पयोधाना इति सोममिश्राणि त्रीणि ।

**इन्द्रा॑ग्नी श॒त॒दाव्न्यश्व॑मेधे सु॒वीर्य॑म् ।**
**क्ष॒त्रं धा॑रयतं बृ॒हद्दि॒वि सूर्य॑मिवा॒जर॑म् ॥ ६ ॥**

इन्द्राग्नी । निगदव्याख्याता[22] । क्षत्रमिति धनानामेति[23], अश्वमेधेनान्येभ्यो दीयमानेन[24] धनेन[25] तुष्यति

---

१. प्राज्ञाय is suggested for प्रज्ञाय ॥ प्रेरकाय धनानां दात्रे वास्मै Sy.

२. वदति seems to be the explanation of प्रवोचति। योऽश्वमेधं धनानि भिक्षत इत्यर्थः Sy.

३. अग्नेः स्तोत्रेण सह Sy.

४. सर्नि D. धनम् Sy.

५. आत्मनः समीपं गच्छते तस्मा अर्थिने Sy.

६. यज्ञविषयां प्रज्ञाम् Sy.

७. देहि Sy.

८. हे अग्ने ! ऋतायते यज्ञमिच्छते तस्मा अश्वमेधाय Sy.

९. ०स्वभावानुकथन० is suggested for ०स्वभावान्मनुकथन० ।

१०. यः is suggested for यस्य ।

११. The commentary on this stanza is omitted by P.

१२. ततः....वदति is omitted by P.

१३. यस्य । अश्वमेधस्य is omitted by P. यस्य येन Sy.

१४. ०क्ता P. कामानां पूरकाः Sy.

१५. शतस्य संख्याः P. शतम् Sy.

१६. उक्षाणो बलीवर्दाः Sy.

१७. उत्कर्षेण हर्षयन्ति Sy.

१८. अश्वमेधेन Sy.

१९. दत्ताः Sy.

२०. सोमा इव तव प्रीणनाय भवन्तु Sy.

२१. हे अग्ने ! ते उक्षाणः दधिसक्तुपयोरूपास्तिस्र आशिरोऽधिश्रयणसाधनभूता येषां ते त्र्याशिरः Sy.

२२. Omitted by D.

२३. धननाम is suggested for धनानाम ॥ Ngh. 2.10.

२४. ०माना P. २५. चनेन नेन P.

त्र्यरुण इत्यपरमन्त्रमिति[1] ।[2]

## V.28.

**समिद्धो अग्निर्दिवि शोचिरश्रेत्प्रत्यङ्ङुषसमुर्विया वि भाति ।**
**एति प्राची विश्ववारा नमोभिर्देवाँ ईळाना हविषा घृताची ॥ १ ॥**

[3]समिद्धः[4] । विश्ववारा ॥ सूर्ये[5] तिरोहिते[6]ऽत्रिरुषसमजनयत्तत्[7][8] आत्रेय्युषा[9] विश्ववारोच्यते । अग्निरुषसि । समिद्धः[10] । तथा दिवि[11] । द्यौषसं तेजः । श्रयति । सूर्यश्च महान्[12] । उषसम् । प्रकाशयति[13] । अभिमुखः[14] । तथा सर्वैर्वरणीयोषाश्च[15] । अभिमुखम्[16] । आगच्छति[17] । पुरुषाणां प्रबुद्धानां[18] देवविषयैर्नमस्कारैः[19] सह । देवान्[20] । स्तुवती[21] । हविषा[22] सह । घृतं चाञ्चन्ती[23] प्रवयन्ती[24] प्रवर्तयन्ती[25] यज्ञमित्यर्थः ।

---

१. ०खन्त इति P. ०मन्त्र० इति is suggested for ०मन्त्रमिति ।

२. हे इन्द्राग्नी ! शतदाव्नि शतमपरिमितमर्थिभ्यो धनं ददातीति शतदावा तस्मिन् । अश्वमेधे राजर्षौ । सुवीर्यं शोभनवीर्यसहितम् । बृहत् महत् । अजरं जरारहितम् । क्षत्रं धनम् । धारयतं निधारयतम् । कथमिव ? दिवि अन्तरिक्षे । सूर्यमिव Sy.
Ms. D. puts the figure ॥२७॥ here to indicate the end of the twenty-seventh hymn. No such number is given in P.

३. 'समिद्धो अग्निः' इति षडृचं चतुर्दशं सूक्तम् । अत्रेयमनुक्रमणिका—'समिद्धो विश्ववारात्रेयी त्रिष्टुब्जगती त्रिष्टुबनुष्टुब्गायत्र्यौ' (KSA. 25.28. p. 19.) इति । अत्रिगोत्रोत्पन्ना विश्ववारानामिकास्य सूक्तस्य ऋषिः । आद्या तृतीये त्रिष्टुभौ द्वितीया जगती चतुर्थ्यनुष्टुप् अन्त्ये गायत्र्यौ । अग्निर्देवता । सूक्तविनियोगो लैङ्गिकः Sy.

४. समिन्धः P.

५. P. and D. add न before सूर्ये ।

६. तिरोहिते is omitted by P.

७. ०तिर० P., D.

८. ०मजत्त० P., D.

९. अत्रेर्युषा D.

१०. सम्यग्दीप्तः Sy.

११. द्योतमानेऽन्तरिक्षे Sy.

१२. उरु विस्तीर्णम् Sy.

१३. विशेषेण भ्राजते Sy.

१४. अभिमुखः सन् Sy.

१५. अभिमुखस्तथा । सर्वैर्वरणीया । उषाश्च are omitted by P. सर्वमपि पापरूपं शत्रुं वारयित्र्येतन्नामिका Sy.

१६. प्राङ्मुखी सती Sy.

१७. एवंभूतमग्निं प्रति गच्छति Sy.

१८. प्रयुद्धानां P.

१९. स्तोत्रैः Sy.

२०. इन्द्रादीन् Sy.

२१. ०न्ति P.

२२. हविषा पुरोडाशादिलक्षणेन युक्तया Sy.

२३. ०ञ्चान्ति P. घृताच्या स्रुचा सहिता Sy.

२४. प्रर्पयन्ति P.

२५. प्रवर्तयन्ति P.

समिध्यमानो अमृतस्य राजसि हविष्कृण्वन्तं सचसे स्वस्तये ।
विश्वं स धत्ते द्रविणं यमिन्वस्यातिथ्यमग्ने नि च धत्त इत्पुरः ॥ २ ॥

**समिध्यमानः** । दीप्यमानस्त्वम्[1] । अन्नस्य[2] । ईश्वरो भवसि[3] । हविः । कृण्वन्तम्[4] । सेवसे[5] । अविनाशाय । सः[6] विश्वम्[7] । धनम्[8] । धारयति । यम्[9] । त्वं व्याप्नोषि[10] । तथातिथीनां योग्यमन्नादिकम्[11] । च । अतिथीनामग्रतः[12] । निधत्ते[13] । एव[14][15] ।

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥ ३ ॥

**अग्ने**[16] । अग्ने[17] ! अस्माकमभ्युदयाय[18] । महते[19] । उद्युक्तो भव[20] । तव[21] । अन्नानि[22] । उत्तमानि[23] । अस्मासु

---

१. सम्यगिद्धमानस्त्वम् Sy.
साकमेधेषु मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालमित्यत्राप्येषैव स्विष्टकृतो याज्या । सूत्रितञ्च—'जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये' (ĀSS. 2. 18.) इति Sy.

२. उदकस्य Sy.

३. ईशिषे Sy.

४. पुरोडाशादिहविष्कर्तारं यजमानम् Sy.

५. सेवसे वसे D.

६. यजमानः Sy.

७. समस्तम् Sy.

८. पश्वादिलक्षणं धनम् Sy.

९. यजमानम् Sy.

१०. गच्छसि Sy.

११. अतिथिरूपस्य तव योग्यं हविः Sy.

१२. तव पुरस्तादेव Sy.

१३. स्थापयति च Sy.

१४. एवं P.

१५. VM. ignores अग्ने ।

१६. पवित्रेष्ट्यां स्विष्टकृतः 'अग्ने शर्ध' इति याज्या । सूत्र्यते हि—'जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये' (ĀSS. 2.12.) इति ।

१७. हे अग्ने ! त्वम् Sy.
हे भगवन्नग्ने ! U.

१८. शोभनधनत्वाय Sy. महत्सौभाग्यं लोकस्थितिः Sy.

१९. प्रभूताय Sy.

२०. शत्रून् सहस्व Sy. उत्सहस्व । बलमाविष्कुरु Mah. U.

२१. तव सम्बन्धीनि Sy. उद्यच्छतस्तव Mah. एवं कुर्वतस्तव U.

२२. धनानि तेजांसि वा Sy. हविर्लक्षणान्यन्नानि यशांसि वा सन्तु Mah. हविर्लक्षणानि धनानि सन्तु यशांसि वा U. 'द्युम्नं द्योततेर्यशो वाऽन्नं वा' N.5.5.

२३. अन्नन्युमन्युत्त० P. अन्नं न्युमन्युत्त० D.
उत्कृष्टानि Sy. उत्कृष्टानि सन्तु Mah.

भवन्तु । धनप्रदानेन जायापत्योर्द्वन्द्वम्[१] । सुष्ठु संयुक्तम्[२] । समाकुरु मां च जायां च सङ्गतौ[३] कुरु । शत्रुत्वमिच्छतां[४] च । तेजांसि[५] । अभितिष्ठ[६] ।

**समिद्धस्य प्रमहसोऽग्ने वन्दे तव श्रियम् ।**
**वृषभो द्युम्नवाँ असि समध्वरेष्विध्यसे ॥ ४ ॥**

समिद्धस्य[७] । सन्दीप्तस्य[८] । प्रकृष्टतेजसः । अग्ने ! स्तौमि[९] । तव[१०] । कान्तिम्[११] । स त्वं वर्षिता कामानाम् । अन्नवान्[१२] । असि[१३] । यज्ञे[१४] च । समिध्यसे[१५] ।

उत्तरा निगदसिद्धा

**समिद्धो अग्न आहुत देवान्यक्षि स्वध्वर । त्वं हि हव्यवाळसि ॥ ५ ॥**

[१६][ समिद्धः ][१७]

---

१. ०यावत्योर्द्वन्द P. ०यापत्यो द्वन्द्वम् D. किञ्च हे अग्ने ! त्वं जास्पत्यम्—जा जाया च पतिश्च जायापती । तयोः कर्म जास्पत्यम् । तत् Sy. जायापत्यमित्यर्थे जास्पत्यमिति निपातः । जायापत्यं पत्नीयजमानरूपम् Mah. जायापतिमिति प्राप्ते, आकारयकारयोर्लोपः सुक् च U.

२. सुष्ठु नियमनोपेतम् । अन्योन्यं संश्लिष्टमित्यर्थः Sy. सुनियमं जितेन्द्रियमन्योन्याबद्धरागम् । ....सुष्ठु यम्यते सुयमम् Mah. सुनियममन्योन्यबद्धरागम् U.

३. ०तौ P., D. सम्यक् कुरुष्व Sy. कुरु Mah. कुरुष्व U.

४. शत्रुमात्मन इच्छतां सपत्नानाम् Sy.

५. महत्त्वानि U.

६. आक्रमस्व Sy., Mah. पद्भ्यामभिभव U.
This stanza=YV. 33.12.

७. ०मिध्यस्य P.

८. प्रवृद्धस्य Sy.

९. अहं यजमानः स्तौमि Sy.

१०. तव सम्बन्धिनीम् Sy.

११. दीप्तिम् Sy.

१२. धनवान् Sy.

१३. भवसि Sy. १४. यज्ञेषु Sy.

१५. सम्यग्दीप्यसे Sy.

१६. दर्शपूर्णमासयोः 'समिद्धो अग्न आहुत' इति द्वे सामिधेन्यौ । सूत्रितञ्च—'समिद्धो अग्न आहुतेति द्वे' (ĀŚS. 1. 2.) इति Sy.

१७. The *pratīka* is supplied by the Editor. हे आहुत ! यजमानैरा समन्ताद्धुत ! हे स्वध्वर ! शोभनयज्ञोपेत ! हे अग्ने ! समिद्धः सम्यग्दीप्तः । त्वम् । देवान् द्योतमानानिन्द्रादीन् । यक्षि यजस्व यस्मात् कारणात् हे अग्ने ! त्वम् । हव्यवाट् असि हव्यानां वोढा । भवसि । अतः कारणाद्देवान् यजस्वेति सम्बन्धः Sy. इयमृक् परिधिस्थानीया । परिधानं विधानसमापनम् । समिद्ध इति च समाप्तिलिङ्गम् । अत एवानुयाजे वेदितव्या । परिधेर्बहिः बहिःपरिधिः BB.
This stanza=TS.2.5.8.6.

आ जुंहोता दुवस्यताग्निं प्रंयत्यंध्वरे । वृणीध्वं हंव्यवाहंनम् ॥ ६ ॥

आ[1] जुहोत[2] । प्रयति[3] वर्तमाने । यज्ञे[4] । जुहुत[5] । "यजध्वं[6] च यस्मै कामाय समैधिध्वम्" इति वाजसनेयकम्, देवान्[7] । अग्निः, हव्यवाहनस्तम्[8] । वृणीध्वम्[9] । न तु कव्यवाहनं नाप्यसुराणामग्निं[10] सहरक्षसमिति[11] ।[12]

V.29.

त्र्यर्यमा मनुंषो देवताता त्री रोचना दिव्या धारयन्त ।
अर्चन्ति त्वा मरुतः पूतदंक्षास्त्वमेषामृषिरिन्द्रासि धीरः ॥ १ ॥

त्र्यर्यमा[13] ॥ गौरिवीतिः[14] शाक्त्यः ॥ अर्यमशब्दः प्रेरयितृवचनः[15] । मनुष्यम्[16] । यज्ञे[17] । त्रीणि । तेजांस्यग्न्यादीनि[18] । प्रेरयन्ति । तथा त्रीण्येव तानि । अन्तरिक्षस्थानि[19] । वर्तन्ते[20] । तथा मरुतश्च । शुद्धबला[21] स्वकार्यं कुर्वाणाः । त्वाम् । पूजयन्ति[22] । त्वम् । एषामग्न्यादीनाम्[23] । न्यूनातिरिक्तावेक्षणम्[24] । प्रभुः सन्

---

१. ०ता P.

२. हे ऋत्विजः ! यूयम् Sy.

३. प्रति P. प्रवृत्ते सति Sy.

४. अस्मदीययागे Sy.

५. जुहोत Sy. ६. परिचरत Sy.

७. देवाग्निः D.

८. हविषां वोढारमेतन्नामकम् । हव्यवाहननामकस्यैवाग्नेर्देवतासम्बन्धो यजमानैर्वरणीयत्वं च तैत्तिरीये स्पष्टमाम्नातम्—'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सहरक्षा असुराणाम् । त एतर्ह्याशंसन्ते मां वरिष्यन्ते मामिति वृणीध्वं हव्यवाहनमित्याह य एव देवानां तं वृणीते' (TS. 2.5.8.6.) इति Sy.

९. प्रणी० P. व्रणी D. सम्भजध्वञ्च हव्यवाहनम् Sy. १०. व्यावहन्न P.

११. ०रसमिति P.

१२. VM. ignores आ ॥
आ समन्तात् Sy.
Ms. D. puts the figure ॥२८॥ here to indicate the end of the twenty-eighth hymn. No such number is given in P.

१३. 'त्र्यर्यमा' इति पञ्चदशर्चं पञ्चदशं सूक्तम् । अत्रानुक्रमणिका—'त्र्यर्यमा गौरिवीतिः शाक्त्य ऐन्द्रमुशना यदौशनसो वा पादः' (25.29. p. 19.) इति । शक्तिगोत्रोत्पन्नो गौरिवीतिर्नाम ऋषिः । अनुक्तत्वात्त्रिष्टुप् (KSA. 12.6. p. 5.) । इन्द्रो देवता मण्डलादिपरिभाषया (KSA. 12.12. p. 5.) निवृत्तत्वात् । 'उशना यत्सहस्यैः' इति पाद औशनस ऐन्द्रो वा । आभिप्लविके तृतीयेऽहनि मरुत्वतीये एतन्निविद्धानम् । सूत्रितञ्च—'तृतीयस्य त्र्यर्यमा यो जात इवेति मध्यन्दिनः' (ĀSS. 7.7.) इति Sy.

१४. ०ति P.

१५. The passage, अर्यम . . . वचनः, should follow प्रेरयन्ति ॥ अर्यमाणि यानि तेजांसि सन्ति Sy. १६. मनोः सम्बन्धिनि Sy.

१७. देवतातौ Sy.

१८. रोचमानानि वाय्वग्निसूर्यात्मकानि Sy.

१९. दिव्यन्तरिक्षे भवानि तानि तेजांसि Sy.

२०. मरुतो धारयन्ति Sy.

२१. ०बलाः is suggested for ०बला ।

२२. स्तुवन्ति Sy. २३. मरुताम् Sy.

२४. It seems to be the explanation of ऋषिः ॥ द्रष्टा Sy.

करोषि[१] । प्राज्ञः[२] ।

**अनु यदीं मरुतो मन्दसानमार्चन्निन्द्रं पपिवांसं सुतस्य ।**
**आदत्त वज्रमभि यदहिं हन्नपो यह्वीरसृजत्सर्तवा उं ॥ २ ॥**

अनु यदीम्[३] । यदा । एनम्[४] । इन्द्रम् । मोदमानम्[५] । सोमम्[६] । पपिवांसम्[७] । मरुतः । सोमपानानन्तरमाहुः[८] । "प्रभर भगवो जहि वीरयस्व"* इति । तदानीं[९] वज्रम् । अभ्यादत्त[१०] । यदायमिन्द्रः । अहिम्[११] । हतवान्[१२] तेन वज्रेण । अथाहिं स हत्वा[१३] वह्वीः[१४] । अपः[१५] सरणाय[१६] । असृजत्[१७] ।[१८]

**उत ब्रह्माणो मरुतो मे अस्येन्द्रः सोमस्य सुषुतस्य पेयाः ।**
**तद्धि हव्यं मनुषे गा अविन्ददहन्नहिं पपिवाँ इन्द्रो अस्य ॥ ३ ॥**

उत ब्रह्माणः[१९] । अपि च । हे ब्राह्मणाः[२०] ! हे मरुतः[२१] ! मम[२२] । इमम्[२३] । सोमम्[२४] । सुष्ठु सुतम्[२५] । इन्द्रः[२६] । पिबतु[२७] । तत् । हि[२८] । सोमाख्यं हविः[२९] । मनुष्यार्थम्[३०] । पणिभिरपहृतान् पशून्[३१] । अविन्दत्[३२] । तथाहि[३३] च । इमम्[३४] । पीत्वा[३५] । जघान[३६] । इन्द्रः ।

---

१. VM. seems to explain इन्द्र असि as प्रभुः सन् करोषि ॥ हे इन्द्र ! भवसि Sy.
२. धीमान् Sy.
३. ०दिं D.
४. ०देन० D.
५. तृप्यन्तम् Sy.
६. अभिषुतं सोमम् Sy.
७. पीतवन्तम् Sy.
८. अन्वस्तुवन् Sy.
*AB. 3.20.
९. तदेन्द्रः Sy.
१०. आददौ Sy.
११. वृत्रम् Sy.
१२. अभिहतवान् Sy.
१३. Omitted by D.
१४. बर्हिः P. महतीः Sy.
१५. वृत्रेण निरुद्धान्युदकानि Sy.
१६. स्वैरत्वेन सर्तुं गन्तुम् Sy.
१७. सृ० D. निरोधाच्चामुञ्चत् Sy.
१८. VM. ignores उ ।
१९. Omitted by P.
२०. ०ण P.
हे बृहन्तः ! Sy.
२१. हे मरुतः ! यूयम् Sy.
२२. मदीयस्य Sy.
२३. अस्य Sy.
२४. सोमस्य । इमं सोमम्, द्वितीयार्थे षष्ठी Sy.
२५. सुष्ठ्वभिषुतम् Sy.
२६. इन्द्रश्च Sy.
२७. पिबत । पेयाः—पिबतेराशीर्लिङि मध्यमबहुवचनस्यैकवचनम् Sy.
२८. खलु Sy.
२९. युष्माभिः पीतं सोमात्मकं हविः Sy.
३०. मनुष्याय यजमानाय Sy.
३१. धेनूर्वृष्टिलक्षणान्युदकानि वा Sy.
३२. वेदयति । यजमानं गा लम्भयतीत्यर्थः Sy.
३३. वृत्रम् Sy.
३४. सोमम् Sy.
३५. पीतवान् Sy.
३६. अवधीत् Sy.

**आद्रोद॑सी वित॒रं वि ष्कं॑भायत्संविव्या॒नश्चि॑द्भि॒यसे॑ मृ॒गं कः॑ ।**
**जिग॑र्ति॒मिन्द्रो॑ अप॒जर्गु॑राण॒ः प्रति॑ श्व॒सन्त॒मव॑ दा॒न॒वं॑ ह॒न् ॥ ४ ॥**

आद्रोदसी[१] । सोमपानानन्तरम् । एव[२] । द्यावापृथिवी[३] । पुराऽत्यन्तं विश्लिष्टम्[४] । विस्कभायत्[५]—स्थापितवान्, अधः पृथिवीमुपरि द्याम्[६] । तथा बलिनं सिंहादिकम्[७] । अरण्येनाच्छादयन्[८] । भयाय । करोति[९] भीतो यथा जनपदेन निर्गच्छति । तथा गरणशीलम्[१०] । अपबाधमानम्[११] । श्वसन्तम्[१२] । वृत्रम्[१३] । प्रत्यवहन्[१४] प्रतिमुखं गत्वा भूम्यामचूर्णयत्[१५][१६] ।

**अध॒ क्रत्वा॑ मघवन्तुभ्यं॑ दे॒वा अनु॒ विश्वे॑ अददुः सोम॒पेय॑म् ।**
**यत्सूर्य॑स्य ह॒रितः॒ पत॑न्तीः पु॒रः स॒तीरुप॑रा॒ एत॑शे॒ कः॑ ॥ ५ ॥**

अध[१७] क्रत्वा[१८] । अथ । तव महतानेन कर्मणा[१९] । हे मघवन्[२०] ! तुभ्यम्[२१] । सर्वे[२२] । देवाः[२३] । राज्ञ इव करं सोमपानम् । अन्वददुः[२४] । यदा[२५] । सूर्यः स्वस्य[२६] । अश्वाः[२७] । सर्वदा गच्छन्ती[२८] । सूर्यस्य पुरोभागे[२९] । वर्तमानाः[३०] ।

---

१. अन्द्रोसि P.
२. चिदित्येवेत्यस्यार्थे वर्तते Sy.
३. द्यावापृथिव्यौ Sy.
४. अतिशयेन । वितरम्—'अमु च छन्दसि' इति वेस्तरपि कृतेऽमुप्रत्ययः Sy.
५. व्यस्तभ्नात्, चलनरहिते अकरोत् Sy.
६. द्या D.
७. मृगं मृगवत्पलायमानं वृत्रम् Sy.
८. संवृण्वानः सङ्कुच्छमानो वेन्द्रः । संविव्यानः—व्ययतेर्वा संवरणकर्मणो वेतेर्वा रूपम् Sy.
९. अकार्षीत् । कः—करोतेर्लुङि 'मन्त्रे घसह्वर०' इत्यादिना च्लेर्लोपः 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः Sy.
१०. जागर० is suggested for गर० ॥ गिरन्तमाच्छादयन्तम् Sy.
११. आच्छादनाद्विमोचयन् Sy.
१२. भयार्थं श्वासं कुर्वन्तम् Sy.
१३. दनोः पुत्रं वृत्रम् Sy.
१४. प्रतिगत्य अवहतवान् Sy.
१५. ०य D.
१६. VM. ignores इन्द्रः ॥ इन्द्रः परमैश्वर्ययुक्तः Sy.
१७. ०धः P.
१८. अपि च Sy.
१९. क्रतुना त्वदीयेन कर्मणा Sy.
२०. हे धनवन्निन्द्र ! Sy.
२१. त्वदर्थम् Sy.
२२. सर्व P.
२३. द्योतमाना वह्न्यादयः Sy.
२४. आनुपूर्व्येण दत्तवन्तः । ततः प्रभृतीन्द्रो देवेभ्यः सर्वेभ्योऽधिकोऽभवदित्यर्थः । तथा च श्रूयते—'स महान् भूत्वा देवता अब्रवीदुद्धारं म उद्धरत' (AB. 3.21.) इत्यादि Sy.
२५. P. and D. add त्वा after यदा ॥ यस्त्वम् Sy.
२६. स्वस्व P. सूर्यस्य सम्बन्धिनीः Sy.
२७. अश्वा P. D. वडवाः Sy.
२८. ०न्तीः is suggested for ०न्ती ।
२९. पुरस्तात् Sy.
३०. भवन्तीः Sy.

एतशस्य[1] विजयार्थं तस्मिन्नृषौ । उप्ताः[2] । कृतवानसि सूर्यादादाय तत्र स्थापितवानसि ।

**नव यदस्य नवतिं च भोगान्त्साकं वज्रेण मघवा विवृश्चत् ।**
**अर्चन्तीन्द्रं मरुतः सधस्थे त्रैष्टुभेन वचसा बाधत द्याम् ॥ ६ ॥**

नव यत् । नव[3] । नवतिम्[4] । च । अस्य प्रकृतस्याहेः[5] । भोगाय तानि पुराणि[6] । युगपदेव । वज्रेण । यदा । मघवा[7] । विवृश्चत्[8] । तदानीमर्चन्ति[9] । इन्द्रम् । मरुतः । अन्तरिक्षे[10] । अथ मरुद्भिरुच्यमानेन[11] वीर्यहेतुना त्रैष्टुभेन[12] । स्तुतिवचनेन[13] प्रवृद्धवीर्य इन्द्रः[14] । दीप्तमहिम्[15] । बाधितवान्[16], इति ।

**सखा सख्ये अपचत्तूयमग्निरस्य क्रत्वा महिषा त्री शतानि ।**
**त्री साकमिन्द्रो मनुषः सरांसि सुतं पिबद्वृत्रहत्याय सोमम् ॥ ७ ॥**

सखा सख्ये । सखा[17] । सख्ये[18] च यत्[19] । क्षिप्रम् । अग्निः । इन्द्रस्य । कर्मणाऽहिहननेन हेतुना[20] । त्रीणि । शतानि[21] । महिषान्[22] । तथा मनुषो[23] यजमानस्य[24] । त्रीणि । सरांसि[25] । यथा[26] पूर्णानि भवन्ति तथा सुतम्[27] । अपि[28] बत् । वृत्रहननाय[29] । सोममिति[30] ।

---

१. एतशाख्याय ऋषये । एतशो हि स्वश्वपुत्रेण सूर्येण सह स्पर्धामकरोदिति यावत् । तथा च निगमान्तरे—'प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः' (RV. I.61.15.) इति Sy. २. उपरता मन्दगतीः Sy.
३. नवसंख्याकानि Sy.
४. नवतिसंख्याकानि च Sy.
५. अस्येत्यनेन शम्बर उच्यते, शम्बरस्य सम्बन्धीनि Sy. ६. भोगान् इत्यन्तोदात्तः पुरवचनः Sy.
७. धनवानिन्द्रः Sy.
८. व्यवृश्चत्, अभिनत् Sy.
९. अस्तुवन् Sy.
१०. सहस्थाने युद्धे वा स्थितम् Sy.
११. ०द्भि च्य० P.
१२. त्रिष्टुप्छन्दस्केन Sy.
१३. वाग्रूपेण स्तोत्रेण Sy.
१४. Omitted by P. इन्द्र एवं स्तुतः सन् Sy.
१५. ०प्ति० D. मरुद्भिः प्रयुज्यमानेन मन्त्रेण दीप्तं शम्बराख्यमसुरम् Sy.
१६. अबाधत पिपीडे Sy.
१७. इन्द्रस्य मित्रभूतः Sy.
१८. सख्युर्मित्रभूतस्य Sy.
१९. च यत् seems to be a corrupt reading which originally stood for अपचत्, अ being elided after ए of सख्ये ॥ पपाच Sy.
२०. निमित्तभूतेन Sy.
२१. शतसंख्याकानि Sy.
२२. महिषाणां पशूनाम् Sy.
२३. ०षांस्थ P.
२४. मासुषो P., D. मनोः सम्बन्धीनि Sy.
२५. पात्राणि । अत्र सरःशब्देन पूतभृदाधवनीयद्रोणकलशसंज्ञानि पात्राण्युच्यन्ते । तेषु स्थितम Sy. २६. यथा P.
२७. अभिषुतम् Sy.
२८. अपि P., D. पपौ Sy.
२९. ०त्रन० P.
३०. VM. ignores अपचत् । साकम् and इन्द्रः ॥ साकं युगपदेव । इन्द्रः परमैश्वर्ययुक्तः Sy.

त्री यच्छता महिषाणामघो मास्त्री सरांसि मघवा सोम्यापाः ।
कारं न विश्वे अह्वन्त देवा भरमिन्द्राय यदहिं जघान ॥ ८ ॥

त्री यत् । यदा । त्रीणि । शतानि । महिषाणाम् । अभक्षयत् । इन्द्रः । मांसम् । यदा वा त्रीणि । सरांसि । सोममयानि । अपिबत् । अथ शङ्खम् । इव । विश्वे । देवाः । भरमपि । अह्वयन्त । इन्द्रार्थम् । यदा । अहिम् । हतवानसाविति । भरश्च शङ्खवत् वाममन्यमन्यविशेषः ।

उशना यत्सहस्यैरयातं गृहमिन्द्र जूजुवानेभिरश्वैः ।
वन्वानो अत्र सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णम् ॥ ९ ॥

उशना । इन्द्र ! त्वं च । उशना च । यदा । बलकरणयोग्यैः । वेगवद्भिः । अश्वैः । कवयस्य गृहम् । अगच्छतम् । वनोतिर्वधकर्मा, अथ कुत्सस्य शस्त्रेण । शुष्णं । देवैश्च । एकं रथमास्य शुष्णं हन्तुकामः ।

१. त्रि P.
२. हे इन्द्र ! त्वम् Sy.
३. त्रयाणाम् Sy.
४. शतसंख्याकानाम् Sy.
५. पशूनाम् Sy.
६. अघः भक्षितवानसि । घसेरत्तेर्वा रूपम् Sy.
७. मघवा धनवांस्त्वम् Sy.
८. मांसानि Sy.
९. पात्राणि Sy.
१०. पीतवानसि Sy.
११. तदा Sy.
१२. तत्र दृष्टान्तः कारं न स्वामिनः कर्मकरमिव तद्वत् Sy.
१३. सर्वे Sy.
१४. सोमपानादिना पूर्णम् Sy.
१५. आह्वयन्त Sy.
१६. इन्द्रं युद्धार्थम् Sy.
१७. यदेन्द्रः Sy.
१८. अहम् P. वृत्रम् Sy.
१९. वाद्यम् i.e. to be uttered, a cry, is suggested for वामम् ।
२०. ०विशिष्टम् is suggested for विशेषः । The meaning seems to be that *Bhara* is the name of Indra's war-cry which resembles a conch but is different from anything else.
२१. उशनसः स्तोमे 'उशना यत्सहस्यैः' इति मरुत्वतीयें सूक्तमुखीया । सूत्रितञ्च—'उशनसस्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेतोशना यत्सहस्यैरयातम्' (ĀŚS. 9.5.) इति Sy.
२२. काव्यश्च Sy.
२३. अभिभवनशीलैः Sy.
२४. जूजुवानैर्गच्छद्भिः Sy.
२५. कुत्सस्य Sy.
२६. ०त P., D. आगच्छतं तदा हे इन्द्र ! त्वम् Sy.
२७. वेनो० P. वेनोतिर्व० D. The passage, वनोतिर्वधकर्मा should follow हतवानसि and precede च तं यात्ना०
२८. शस्त्रौ P. कुत्सेन Sy.
२९. शुष्ण D. अत्र, अस्मिन् काले Sy
३०. P. and D. add कुत्सौ after देवैः ॥ देवैश्च सह Sy.
३१. चक्रं for च एकं P. समानमेकं रथम् Sy
३२. आस्थाय is suggested for आस्य ।
३३. शत्रून् हिंसन् Sy.

ययाथ[1] । हतवानसि[2] च तं यानानन्तरम् । शुष्णम्[3] ।[4]

**प्रान्यच्चक्रमंवृहः सूर्यस्य कुत्सायान्यद्वरिवो यातवेऽकः ।**
**अनासो दस्यूँरमृणो वधेन नि दुर्योण आवृणङ्मृध्रवाचः ॥ १० ॥**

[**प्रान्यच्चक्रमवृहः**][5] प्रावहः[6] शत्रुवधार्थम् । अन्यत्[7] । चक्रम् । अथान्यत्[8] सूर्यरथस्य[9] चक्रम् । कुत्साय[10] । धनस्य[11] । आगमनाय[12] । कृतवानसि[13] । तत्र शुष्णानुगाननशीलान्[14] श्वसतः । दस्यून्[15] । तेन चक्रेण हननसाधनेन[16] । हतवानसि[17] मृधिर्हिंसाकर्मा । दुर्योणाख्ये[18] देशे । निर्हिंसितवानसि[19] । परुषवाचस्तानिति[20] ।

**स्तोमासस्त्वा गौरिवीतेरवर्धन्नरन्धयो वैदथिनाय पिप्रुम् ।**
**आ त्वामृजिश्वा सख्याय चक्रे पचन्पक्तीरपिबः सोममस्य ॥ ११ ॥**

**स्तोमासः**[21] । स्तोत्राणि । त्वाम् । गौरिवीतेर्मम[22] स्वभूतानि । वर्धयन्त[23] । वशमनयस्त्वम्[24] । विदथिनः[25] पुत्राय ऋजिश्वने[26] । पिप्रुं[27] नाम शत्रुम् । अथ त्वाम्[28] । ऋजिश्वा । सख्याय[29] । आचक्रे[30] । तुभ्यं पक्तव्यानि हवींषि[31] । पचन्[32] । त्वं चास्य[33] । अपिबः[34] । सोमम् ।

---

१. जगन्थ Sy.
२. अहिंसीः खलु Sy.
३. एतन्नामानमसुरम् Sy.
४. VM. ignores ह ॥ खलु Sy.
५. The *pratika* is supplied by the Editor. हे इन्द्र ! Sy.
६. पृथक् चकर्थ Sy.
७. एकम् Sy.
८. एकं चक्रम् Sy.
९. पूर्वं द्विचक्रस्य सूर्यस्य Sy.
१०. कुत्सस्य Sy.
११. ध स्या० P. धनम् Sy.
१२. प्राप्तुम् Sy.
१३. अकार्षीः Sy.
१४. आस्यरहितान् । आस्यशब्देन शब्दो लक्ष्यते । अशब्दान् मूकान् Sy.
१५. असुरान् Sy.
१६. आयुधेन वज्रेण Sy.
१७. अहिंसीः Sy.
१८. सङ्ग्रामे Sy.
१९. ०वा सि P. नितरां छिन्नवानसि । अमृणो न्यवृणगिति द्विरुक्तिरादरार्था Sy.
२०. हिंसितवागिन्द्रियानसुरान् Sy.
२१. हे इन्द्र ! Sy.
२२. एतन्नामकस्य मन्त्रद्रष्टुर्मम सम्बन्धीनि Sy.
२३. वर्धयन्तु Sy.
२४. ० य त्वं P., D.
२५. ० दथिनः P., D.
२६. ऋजिश्वनाम्ने Sy.
२७. विप्रं P. D. एतन्नामकमसुरम् Sy.
२८. हे इन्द्र ! ऋजिश्वनामा कश्चिदृषिः Sy.
२९. तव सखित्वाय Sy.
३०. अभिमुखीचकार Sy.
३१. पक्तव्यानि पुरोडाशादीनि Sy.
३२. पाकं कुर्वन् Sy.
३३. Omitted by P. ऋजिश्वनः सम्बन्धिनम् Sy.
३४. अपाः Sy.

**नवंग्वासः सुतसोमास इन्द्रं दशंग्वासो अभ्यंर्चन्त्यर्कैः ।**
**गव्यं चिदूर्वमंपिधानंवन्तं तं चिन्नरंः शशमाना अपं व्रन् ॥ १२ ॥**

नवग्वासः[1] । गवामयनेन[2] यन्तोऽङ्गिरसः[3] केचन नवसु मास्सूदतिष्ठन्[4] दशसु केचित्तेन[5] नवग्वासश्च दशग्वासश्च भवन्ति ते । सुतसोमाः[6] । इन्द्रम् । स्तोत्रैः[7] । अभ्यर्चन्ति[8] । तथा कृत्वा गोसङ्घम्[9] । च[10] । महान्तम्[11] । अपिधानवन्तं[12] पणिभिराहृतम्[13] । तम् । अङ्गिरसः[14] । त्वां परिचरन्तः[15] । अप[16] व्रन्[17][18]—विवृतद्वारं कृतवन्तः ।

**कथो नु ते परिं चराणि विद्वान्वीर्या मघवन्या चकर्थ ।**
**या चो नु नव्या कृणवंः शविष्ठ प्रेदु ता ते विदथेषु ब्रवाम ॥ १३ ॥**

कथो[19] । कथम् । नु[20] । खलु । तुभ्यम् । परिचराणि[21] । जानन्[22] । यानि । त्वं मघवन्[23] ! वीर्याणि । पुरा कृतवानसि[24] । यानि । च[25] । सम्प्रतिनानि[26] । कृणोषि[27] । प्रब्रवाम[28] । तुभ्यम्[29] । यज्ञेषु । तानि[30][31] ।

---

१. दशपेयेऽहनि मरुत्वतीये शस्त्रे 'नवग्वासः' इति सूक्तमुखीया । सूत्रितञ्च—'नवग्वासः सुतसोमास इन्द्रं सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानयोराद्ये' (ĀSS. 9.3.) इति Sy.
२. गमायनेन P. सत्रयागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः । दशभिर्मासैः समाप्य ये गतास्ते दशग्वाः । एते उभयविधा अङ्गिरसः Sy.
३. ०स P. D.
४. ०दितिष्ठत्तं D.
५. रेचि० D.
६. अभिषुतसोमाः सन्तः Sy.
७. अर्चनीयैः स्तोत्रैः Sy.
८. अभिष्टुवन्ति Sy.
९. गोसम्बन्धिनमपि Sy.
१०. चित् अपि Sy.
११. समूहम् Sy.
१२. ०न्त D. वलेनासुरेणाच्छादितवन्तम् Sy.
१३. ०भिरं हृतं D.
१४. बहुषु प्रदेशेषु प्रसिद्धमपि Sy.
१५. नेतारः Sy.
१६. स्तुवन्तः Sy.
१७. अव D.
१८. प्रन् P.
अपावृण्वन् Sy.
१९. परिक्रीनाम्न्येकाहे मरुत्वतीयनिष्केवल्ययोः सूक्तमुखीये 'कथो नु ते' इत्याद्ये द्वे ऋचौ । सूत्रितञ्च—'कथो नु ते परि चराणि विद्वानिति द्वे' (ĀSS. 9.5.) इति Sy.
२०. कथोन्नु P.
२१. परिचर्यां करवाणि Sy.
२२. जाननन् P.
२३. हे धनवन्निन्द्र ! Sy.
२४. चकृषेऽहं तानि वीर्याणि Sy.
२५. चैव Sy.
२६. नव्यानि नूतनानि वीर्याणि Sy.
२७. कुर्याः Sy.
२८. ०ब्रु० D.
प्रैव वदाम Sy.
२९. त्वदीयानि Sy.
३०. वीर्याणि Sy.
३१. VM. ignores उ । नु । इत and शविष्ठ ॥ नु क्षिप्रम् । हे शविष्ठ ! बलवत्तमेन्द्र ! त्वम् Sy.

एता विश्वा चकृवाँ इन्द्र भूर्यपरीतो जनुषा वीर्येण ।
या चिन्नु वज्रिन्कृणवो दधृष्वान्न ते वर्ता तविष्या अस्ति तस्याः १४ ॥

एता विश्वा । एतानि[1] । विश्वानि[2] । कृतवानसि । हे इन्द्र ! भूरीणि[3] त्वम् । अपरिगतः[4] । जातेन[5] । केनचिद् वीर्येण[6] । यानि । च[7] । इदानीम् । करोषि[8] शत्रूणां धर्षणान्[9] । धर्षणशीलः[10] । तव[11] । तेषां निदानभूतस्य । बलस्य । वारयिता[12] । न । कश्चिदस्ति[13] [14] ।

इन्द्र ब्रह्म क्रियमाणा जुषस्व या ते शविष्ठ नव्या अकर्म ।
वस्त्रेव भद्रा सुकृता वसूयू रथं न धीरः स्वपा अतक्षम् ॥ १५ ॥

इन्द्र ब्रह्म । इन्द्र ! स्तोत्राणि[15] । क्रियमाणानि[16] । सेवस्व । यानि । तव[17] । बलवत्तम[18] ! नूतना[19] । वय[20] कृतवन्तः[21] । वस्त्राणीव । कल्याणानि[22] । धनमिच्छन्[23] । रथम् । इव च । प्राज्ञः[24] । शोभनकर्मा । कृतवानस्मि[25] । स्तोत्राणि[26] [27] ।

---

१. प्रत्यक्षोपलभ्यमानानि Sy.
२. व्याप्तानि भुवनजातानि Sy.
३. पुरीणि P., D. बहूनि Sy.
४. परि० P., D. शत्रुभिरपरिगतस्त्वम् Sy.
५. जननसिद्धेनात्मीयेन Sy.
६. बलेन Sy.
७. च विश्वानि Sy.
८. कुर्याः Sy.
९. ०र्णं P. धर्षणानि is suggested for धर्षणान् ।
१०. सपत्नान् धर्षयंस्त्वम् Sy.
११. त्वदीयस्य Sy.
१२. निवारयिता Sy.
१३. ०दा० D. कोऽपि Sy.
१४. VM. ignores नु and वज्रिन् ॥ नु क्षिप्रम् । हे वज्रवन्निन्द्र ! तस्य Sy.
१५. ब्रह्माणि तानि स्तोत्राणि S
१६. अस्माभिः क्रियमाणानि S
१७. स्तोत्राणि Sy.
१८. तुभ्यम् Sy.
१९. हे बलवत्तम ! शूरतम ! वा Sy.
२०. नूतनानि is suggested for नूतना ॥ नूतना अद्यतनाः Sy.
२१. अकुर्म Sy.
२२. भद्राणि भजनीयानि Sy.
२३. धनकामोऽहम् Sy.
२४. धीमान् Sy.
२५. अकरवम् । स्तोत्राण्युपहारवद् ग्राह्याणीत्यभिप्रायेण वस्त्रनिदर्शनमुक्तम् । रथदृष्टान्तस्त्वागमनसाधनत्वप्रतिपादनाय । स्तोत्राणि स्वीकृत्य मह्यं धनं प्रयच्छेत्यर्थः Sy.
२६. सुष्ठु कृतानि स्तोत्राणि Sy.
२७. Ms. D. puts the figure ॥२६॥ here to indicate the end of the twenty-ninth hymn. No such number is given in P.

V.30.

**क१ स्य वी॒रः को अ॑पश्यदिन्द्रं॑ सु॒खर॑थ॒मीय॑मानं॒ हरि॑भ्याम् ।**
**यो रा॒या व॒ज्री सु॒तसो॑म॒मि॒च्छन्तदोको॒ गन्ता॑ पुरुहू॒त ऊ॒ती ॥ १ ॥**

क्व[1] स्यः ॥ बभ्रुः[2] ॥ सोऽयमृणञ्चयनाम्नो राज्ञश्चत्वारि गवां सहस्राण्यलभत, नमुचिस्तान्यपजहार[3] तेन युद्धार्थं शीघ्रं निर्गच्छन्[4] बभ्रुर्वदति क्व[5] । सः[6] । वीर[7] इन्द्रः । कः । अपश्यत्[8] । इन्द्रम् । सुद्वाररथम्[9] । अश्वाभ्याम्[10] मम शत्रून्[11] प्रति । गच्छन्तम् । यः । धनेन[12] । वज्री[13] । सुतसोमं[14] यजमानम् । अन्विच्छन् । तत्[15] । गृहम् । पुनः पुनर्गच्छति[16] । बहुभिराहूतः । रक्षणार्थम्[17] ।

**अवा॑चचक्षं प॒दम॑स्य स॒स्वरु॒ग्रं नि॑धा॒तुरन्वा॑य॒मि॒च्छन् ।**
**अपृ॑च्छम॒न्याँ उ॒त ते म॑ आहु॒रिन्द्रं॒ नरो॑ बुबुधा॒ना अ॑शेम ॥ २ ॥**

अवाचचक्षम् । युद्धं प्रविशङ्क्यास्येन्द्रस्य[18] । पदम्[19] । अन्तर्हितम्[20] । किमिहास्ति किमिहेति[21] पृथिव्या-

---

१. 'क्व स्य वीरः' इति पञ्चदशर्चं षोडशं सूक्तम् । अत्रानुक्रमणिका—'क्व स्य बभ्रुर्ऋणञ्चयोऽप्यत्र राजा स्तुतः' (KSA. 25.30.p.20.) इति । बभ्रुर्ऋषिः । अनुक्तत्वात्त्रिष्टुप् (KSA. 12.6. p. 5.) । इन्द्रो देवता । ऋणञ्चयनामा राजापि क्वचित् स्तूयते । अतः सोऽपि देवता । तीव्रसोमाख्ये एकाहे मरुत्वतीयशस्त्र इदं सूक्तं निविद्धानम् । सूत्रितञ्च—'तीव्रसोमेनान्नाद्यकामः क्व स्य वीरः' (ASS. 9.7.) इति Sy.

२. बभ्रूः D.

३. तान्यपहारते D.

४. P. and D. add गमन् between निर् and गच्छन् ।

५. कुत्र विद्यते Sy.

६. इन्द्रः Sy.

७. विक्रान्तः Sy.

८. ददृशे Sy.

९. शोभनाक्षद्वारो रथो यस्य स सुखरथः । सुष्ठु खनति लिखति भूमिमिति वा सुखम् । तादृग्रथम् Sy. 'सुहितं खेभ्यः खं पुनः खनतेः' N.3.13.

१० स्ववाहनाभ्याम् Sy.

११. श्रून् D.

१२. देयेन धनेन सह Sy.

१३. वज्रवान् Sy.

१४. अभिषुतसोमं यजमानम् Sy.

१५. तस्तत् D. तस्य यजमानस्य Sy.

१६. प्राप्तो भवति Sy.

१७. रक्षायै Sy.

१८. प्रवशको स्ये० P.

१९. स्थानम् Sy.

२०. It seems to be the explanation of सस्वः ॥ सस्वरित्यन्तर्हितनाम Ngh. 3.25.

२१. ०हास्तीति हेति P.

मघश्चक्षुषापश्यम्[1]। तथा निरीक्षमाणश्चाहं[2] पदमन्विच्छन्[3]। उद्गूर्ण पदम्। निधातुस्तव[4] पदम्। अनुगतवान्-स्मि[5]। तदानी क्व स्य वीर इति[6] पृच्छम्[7]। अन्यान्[8]। अपि च। ते[9]। मम[10]। आहुः। वयमपि मनुष्याः[11]। इन्द्रः[12]। ज्ञातुकामा[13] एव। स्थितवन्तः[14] सहान्वेषः कार्य इति।

**प्र नु वयं सुते या ते कृतानीन्द्र ब्रवाम यानि नो जुजोषः।**
**वेददविद्वाञ्छृणवच्च विद्वान्वहतेऽयं मघवा सर्वसेनः॥ ३॥**

**प्र नु वयम्।** इन्द्रं दृष्ट्वा स्तौति प्रब्रवाम[15]। क्षिप्रम्[16]। वयम्[17]। यज्ञे पुरा[18]। यानि[19]। तव। कृतानि[20]। यानि च पुरा। अस्माभिः कृतानि[21]। इन्द्र! त्वम्। सेवितवानसि[22]। परोक्ष उत्तरार्धः—अजानन्[23]। तानि[24] जानातु। विद्वानपि[25]। अस्माभिरुच्यमानानि श्रृणोतु[26]। प्रविशति[27]। अयम्[28]। मघवा[29]। समग्रसेनस्तत्र[30] वयं तानि प्रब्रवामः[31][32]।

**स्थिरं मनश्चकृषे जात इन्द्र वेषीदेको युधये भूयसश्चित्।**
**अश्मानं चिच्छवसा दिद्युतो वि विदो गवामूर्वमुस्रियाणाम्॥ ४॥**

**स्थिरं मनः[33]।** युद्धे प्रादुर्भूतस्त्वम्[34]। आत्मीयं मनः[35]। स्थिरम्[36]। करोषि[37]। तथा त्वमेकः[38]। एव सन्[39]।

---

१. अहमवाद्राक्षम् Sy. २. नरी० P.
३. अन्व० P. इन्द्रमन्विच्छन्नहम् Sy.
४. स्वं स्थापयितुरस्येन्द्रस्य पदम् Sy.
५. अन्वगमम् Sy. ६. इ P.
७. पृच्छम् can be taken as an inj. अपृच्छम् would be a better reading॥ पृष्ठवानस्मि Sy. ८. विदुषोऽपि मार्गे इन्द्रम् Sy.
९. पृष्टास्ते Sy. १०. मह्यम् Sy.
११. किमाहुः ? इत्युच्यते—यज्ञानां नेतारः Sy.
१२. इन्द्रम् is suggested for इन्द्रः।
१३. बुभुत्समाना वयम् Sy.
१४. इन्द्रं प्राप्तवन्तः स्मः। यद्यपीन्द्रो विद्यते तथापि दुर्लभश्चेदनुपगन्तव्यः इति बुभुत्समानः स्वभावमपृच्छत्। पृष्टैश्च सुलभ इत्युक्त इन्द्रप्राप्त्यर्थं सूक्तशेषमपश्यदित्यर्थः Sy.
१५. ०प्रब्रु० D. तानि कर्माणि प्रकर्षेण वदाम Sy.
१६. अद्य Sy. १७. स्तोतारः Sy.
१८. It seems to be the explanation of सुते॥ सोमेऽभिषुते सति Sy.
१९. त्वदीयानि Sy.
२०. कृतानि कर्माणि सन्ति Sy.
२१. त्वमपि अस्मदर्थं यानि कर्माणि Sy.
२२. असेवथाः Sy.
२३. तानि कर्माणि इतः पूर्वमजानन् जनः Sy.
२४. तनि P. २५. अन्वस्मा० P.
२६. श्रृणुयाच्च। यद्वा विद्वान् जानन् पुरुषः श्रृणवच्च। अजानन्तमपि जनं श्रावयेच्च Sy.
२७. अश्वैरुह्यते। व्यत्ययेन कर्तृप्रत्ययः। प्रापयति Sy. २८. अय्यं P. इन्द्रो जानतश्च श्रृण्वतश्च तान् जनान् प्रति Sy.
२९. ०व P. धनवान् विद्वान् जानन् Sy.
३०. सङ्ग्रामसेवः P. सर्वाभिः सेनाभिर्युक्तः Sy.
३१. प्रब्रु० D.
३२. VM. ignores च।
३३. ०र P.
३४. ०त त्व० P. उत्पन्नमात्र एव त्वम् Sy.
३५. चित्तम् Sy. ३६. चलनरहितम् Sy.
३७. चकर्थ। सर्वान् बलिष्ठान् जयेयमितीदृशम्। तथा हे इन्द्र! Sy.
३८. असहायः Sy. ३९. एव त्वम् Sy.

युद्धाय[1] । बहून्[2] । अपि । गच्छसि[3] । तत आयुधबलेन । धनम्[4] । विद्युत:[5] प्रकाशीकृतवानसि । ततः शत्रून् जित्वा गवाम्[6] । उत्सरणशीलानाम्[7] । सङ्घातम्[8] । अविन्दः[9] ।[10]

**परो यत्त्वं परम आजनिष्ठाः परावति श्रुत्यं नाम बिभ्रत् ।**
**अतश्चिदिन्द्रादभयन्त देवा विश्वा अपो अजयद्दासपत्नीः ॥ ५ ॥**

परः । परः[11] । त्वम् । यथा[12] । युद्धस्य परमे स्थाने[13] । आजायसे प्रादुर्भवसि[14] । दूरे । श्रुत्यम्[15] । इन्द्राख्यं नाम[16] । बिभ्रत्[17] । तत आरभ्यास्मात्[18] । इन्द्रात्[19] । अभयन्त[20] । देवाः[21] । किं चायं सर्वाण्येव[22] । उदकानि । अजयत्[23] । येषां दासः[24] पतिः[25] ।

**तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः ।**
**अहिमोहानमप आशयानं प्र मायाभिर्मायिनं सक्षदिन्द्रः ॥ ६ ॥**

तुभ्येत्[26] । तुभ्यम्[27] । एव । एते । मरुतः[28] । सुसुखाः[29] । स्तोत्रम्[30] । उच्चारयन्ति[31] । सुन्वन्ति[32] च । सोमं[33] यजमानाः[34] । अहिम्[35] । ओहानं युध्यन्तम्[36] । अपः[37] । आवृत्य शयानम्[38] । मायाविनम्[39] । मायाभिः[40] । इन्द्रः[41] । प्र सक्षत्[42] अभिव्याप्तवानिति ।

---

१. बहुतरान् राक्षसादीन् Sy. २. अवेः, अगमः Sy. ३. अयुब० P., D. बलेन Sy.
४. धम D. अश्मानं चित् गवामावरकं पर्वतमपि Sy. ५. ०त D. व्यभिनः Sy.
६. धेनूनाम् Sy. ७. क्षीरमुत्सारयन्तीनाम् Sy.
८. संघा० P. समूहम् Sy.
९. अवेदयोऽलम्भयः Sy.
१०. VM. ignores इन्द्र and explains चित् once.
११. परस्तादुपरिष्टात्स्थितः Sy.
१२. यदा हे इन्द्र ! Sy. १३. उत्कृष्टतमः Sy.
१४. आ समन्तादजायथाः Sy.
१५. श्रवणीयम् Sy. १६. नामधेयम् Sy.
१७. धारयन् Sy. १८. शेषः परोक्षकृतः Sy.
१९. अत आरभ्यैव Sy. २०. बिभ्युः Sy.
२१. द्योतमाना अग्न्यादयः Sy.
२२. चान्ययं P., D. २३. वशीचक्रे Sy.
२४. द्रासः D. दासो वृत्रः पतिः पालयिता यासामपां ता इति Sy. २५. VM. ignores चित् ॥ चित् एव Sy.
२६. तुभ्ये D. २७. तुम् P.
२८. महद्रवन्ति वदन्तीति मरुतः स्तोतारः Sy.
२९. सुखाः P. शोभनसुखाः सन्तः । स्तोत्रेण शोभनं सुखमुत्पादयन्तः सन्तः Sy. शेवमिति सुखनाम Ngh. 3.6.
३०. अर्चनीयं स्तोत्रम् Sy.
३१. स्तुवन्ति कुर्वन्तीत्यर्थः Sy.
३२. अभिषवं कुर्वन्ति Sy.
३३. सोमलक्षणमन्नम् Sy.
३४. ०नः P. ३५. वृत्रम् Sy.
३६. अहिममाहानं P. देवान् बाधमानम् Sy.
३७. उदकानि Sy.
३८. आवृत्य शयनं कुर्वन्तम् Sy.
३९. कपटवन्तम् Sy.
४०. स्वकीयाभिः शक्तिभिः Sy.
४१. परमैश्वर्ययुक्तः Sy. ४२. अभ्यभवत् Sy.

**वि षू मृधो॑ ज॒नुषा॒ दान॒मिन्व॒न्नह॒न्गवा॑ मघव॒न्त्संच॑का॒नः ।**
**अत्रा॑ दा॒सस्य॒ नमु॑चेः॒ शिरो॒ यद॒वर्त॑यो॒ मन॑वे गा॒तुमि॒च्छन् ॥ ७ ॥**

**वि षू मृधः ।** इन्द्रं मित्रं युद्धार्थं भजमानम् मृधः[1] परिवत्रुः तान् । मघवन्[2] ! त्वम् । सेवमानः[3] । विविधं सुष्ठु हतवानसि[4] । जनुषा[5] जातेन । तेजसा[6] । सन्दीप्यमानः[7] । दानवः[8] खण्डयिता । यदा त्वम् । अस्मिन्[9] लोके । उपक्षपयितुः[10] । नमुचेः[11] । शिरश्[12] छित्वा । अगमयः[13] । मनवे[14] नमुचिना संरुद्धाय बभ्रवे । गमनमार्गम्[15] । इच्छन्[16] तदानीमिति ।

**यु॒जं हि मामकृ॑था॒ आदिदि॑न्द्र॒ शिरो॑ दा॒सस्य॒ नमु॑चेर्मथा॒यन् ।**
**अश्मा॑नं चित्स्व॒र्यं१॒॑ वर्त॑मानं॒ प्र च॒क्रिये॑व॒ रोद॑सी म॒रुद्भ्यः॑ ॥ ८ ॥**

**युजं हि ।** इन्द्र[17] ! नमुचेः[18] । असुरस्य[19] । शिरः । मथितुमिच्छन्[20] । सहायम्[21] । मा बभ्रुम् । अकृथाः[22] । स्वच्छतया[23] स्वरणकुशलम् । अभिमते देशे गच्छन्तम्[24] । वज्रम्[25] । च सहायमकृथाः । तदानीं तव साहाय्यं कर्तुकामेभ्यो मरुद्भ्यः[26] । द्यावापृथिवी[27] । चक्रे इव । आस्ताम्[28] उभयतो भवताम्, अन्तरिक्षं सर्वं मरुद्भिर्व्याप्तिमासीदित्यर्थः[29][30] ।

---

१. मृधः तदनुचरान् राक्षसादीन् शत्रून् Sy.
२. हे धनवन्निन्द्र ! Sy.
३. अस्माभिः स्तूयमानस्त्वम् । सञ्चकानः— सम्पूर्वः कायतिः शब्दकर्मा । तस्य लडर्थे लिटि रूपम् Sy. ४. विजघन्थ Sy.
५. जन्मना । इन्द्रस्यासुरा जन्मारभ्य शत्रव इत्यर्थः Sy.
६. The word गौः means 'a ray' N.2.6. VM. seems to explain गवा as तेजसा and इन्वन् as सन्दीप्यमानः । The literal meaning of इन्वन् is of course 'going.' वज्रेण Sy.
७. प्रेरयन् हिंसन् Sy.
८. देवानां बाधकं वृत्रमसुरम् Sy.
९. हे इन्द्र ! त्वं युद्धे Sy.
१०. उपक्षपयितुरसुरस्य सम्बन्धि Sy.
११. एतन्नामकस्य Sy.
१२. शीर्षम् Sy.
१३. लोक वे क्षपयितान्नमुचे शिरश्शित्वं गयः P. अचूर्णयस्तदा शत्रून् विजघन्थेति पूर्वेण सम्बन्धः Sy. १४. नमुचिनापहृतगोधनाय मह्यम् Sy.
१५. सुखम् Sy.
१६. अभिलषन् Sy.
१७. हे इन्द्र ! त्वम् Sy.
१८. असुरस्य Sy.
१९. उपक्षपयितुः Sy.
२०. चूर्णयन् Sy.
२१. सखायम् Sy.
२२. ०था P. चकृषे खलु Sy.
२३. तथा च्छ० D. स्वरेण सहितम् Sy.
२४. भ्रमन्तम् Sy.
२५. मेघमिव स्थितम् Sy.
२६. त्वत्सहायेभ्यः Sy.
२७. द्यावापृथिव्यौ Sy.
२८. प्र आस्ताम् । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः Sy. २९. ०क्षः P.
३०. VM. ignores हि । आत् and इत् ॥ हि खलु । आत् अनन्तरमेव Sy.

**स्त्रियो॒ हि दा॒स आयु॑धानि च॒क्रे किं मा॑ करन्नब॒ला अ॑स्य॒ सेनाः॑ ।**
**अ॒न्तर्ह्यख्य॑दु॒भे अ॑स्य॒ धेने॒ अथोप॒ प्रैद्यु॒धये॒ दस्यु॒मिन्द्रः॑ ॥ ९ ॥**

स्त्रियः । नमुचिः[1] । प्रथममिन्द्रस्य स्त्रियः[2] । आयुधानि[3] । चक्रे[4] युद्धार्थं निर्गमयत् । इन्द्रश्च । किम् । माम् । कुर्वन्तु[5] । स्त्रीभूताः[6] । अस्य[7] । सेना इति मन्यमानः । तासु[8] स्त्रीषु रूपयुक्ते[9] । द्वे स्त्रियावादाय । अन्तः[10] । चकार । अथ[11] सम्भ्रान्तः सन् । दस्युम्[12] । युद्धार्थम्[13] । उपप्रागादिति[14] ।[15]

**सम॑त्र॒ गावो॒ऽभितो॑ऽनव॒न्तेहेह॑ व॒त्सैर्वियु॑ता॒ यदास॑न् ।**
**सं ता इन्द्रो॑ असृजदस्य शा॒कैर्यदीं॒ सोमा॑सः॒ सुषु॑ता॒ अम॑न्दन् ॥ १० ॥**

समत्र । अस्मिन्नसुरे[16] । समगच्छन्त[17] । गावः[18] । यदा । इह चेह[19] च । वत्सैः । वियुक्ताः[20] । आसन्[21] । सङ्गतपवकाले[22] ? नगरात् बहिस्सङ्गता अपजहार[23] । अथ ता गाः । अस्य स्वभूताः[24] । तं जित्वा मरुद्भिः[25] सह, जित्वा स्वामिना मया समसृजत्[26] । यदा । एनम्[27] । सोमाः । सुताः[28] । अमन्दन्[29] । बभ्रोर्मम[30] ।[31]

---

१. उपक्षपयिता नमुचिरसुरः Sy.
२. स्त्रीः Sy.
३. युद्धसाधनानि Sy.
४. कृतवान् । इन्द्रेण सह योद्धुं प्रहितवानित्यर्थः Sy.
५. कुर्युरिति मन्यमान इन्द्रः Sy.
६. स्त्रीरूपाः Sy.
७. असुरस्य सम्बन्धिन्यः Sy.
८. तासां मध्ये Sy.
९. प्रीणयित्र्यौ सुरूपे Sy.
१०. गृहमध्ये निदधे Sy.
११. अनन्तरम् Sy.
१२. दस्यु P.,D. नमुचिम् Sy.
१३. युद्धाय Sy.
१४. उपप्रागच्छत् Sy.
१५. VM. ignores हि ॥ हि खलु Sy.
१६. अस्मिन् काले Sy.
१७. अत्यन्तमगच्छन् Sy.
१८. नमुचिनापहृता गावः Sy.
१९. सर्वतः Sy.
२०. वसैर्वियुक्ता P.,D.
२१. अभवन् Sy.
२२. सङ्गत वच P. अस्मिन् काले Sy.
२३. आप० P.
२४. बभ्रोः सम्बन्धिनीर्नमुचिनापहृताः Sy.
२५. शक्तैर्मरुद्भिः Sy.
२६. यमा समसुत् P. वत्सैः सह समयोजयत् Sy.
२७. इन्द्रम् Sy.
२८. सुषुता बभ्रुनाम्ना ऋषिणा सुष्ठ्वभिषुताः Sy.
२९. अमादयंस्तदा Sy.
३०. ०भ्रो म० P. बभ्रोर्मम seems to refer to अस्य; therefore the word should immediately follow अस्य and precede स्वभूताः ।
३१. VM. ignores अभितः and इन्द्रः ॥ सर्वतः Sy.

**यदीं सोमा॑ ब॒भ्रुधू॑ता॒ अम॑न्द॒न्नरो॑रवीद्वृष॒भः साद॑नेषु ।**
**पु॒रं॒द॒रः प॑पि॒वाँ इन्द्रो॑ अस्य॒ पुन॒र्गवा॑मददादु॒स्रिया॑णाम् ॥ ११ ॥**

**यदीं सोमाः**[1] । यदा । एनम् । बभ्रुनाम्ना मया स्तुताः[3] । सोमाः । अमन्दन्[4] । अथायं वृषभः[5] । युद्धेषु । अत्यन्तं शब्दं करोति[6] । पुरन्दरः[7] । पपिवान्[8] । इमं सोमम् । पुनश्च । असुरैरपहृता गा आहृत्य । प्रायच्छदिति[9, 10] ।

**भ॒द्रमि॒दं रु॒शमा॑ अग्ने॒ अक्र॒न्गवां॑ च॒त्वारि॒ दद॑तः स॒हस्रा॑ ।**
**ऋ॒णं॒च॒यस्य॒ प्रय॑ता म॒घानि॒ प्रत्य॑ग्रभीष्म॒ नृत॑मस्य॒ नृ॒णाम् ॥ १२ ॥**

सम्प्रति गवां दातारमृणञ्चयं स्तौति—

**भद्रमिदमिति** । ऋणञ्चयेन[11] दत्तानि गवाम्[12] । चत्वारि[13] । सहस्राणि । मह्यं गृहमानीय प्रयच्छन्त[14] तस्य भटाः[15] । दीप्ताः[16] । भद्रम् । इदं कर्म[17] । कृतवन्तः । वयम् ऋणञ्चयस्य[18] । प्रत्तानि[19] । महनीयानि[20] गोधनानि[21] । प्रतिगृहीतवन्तः[22] । नृणाम्[23] । नृतमस्य[24, 25] ।

**सु॒पेश॑सं॒ माव॑ सृज॒न्त्यस्तं॒ गवां॑ स॒हस्रै॑ रु॒शमा॑सो अग्ने ।**
**ती॒व्रा इन्द्र॑मममन्दुः सु॒तासो॒ऽक्तोर्व्यु॑ष्टौ॒ परि॑तक्म्यायाः ॥ १३ ॥**

**सुपेशसम्** । सुरूपम्[26] । माम्[27] । मदीयं गृहम् । आनीय प्रविशेत्यवसृजन्ति[28] । गवाम्[29] । सहस्रैः सह ।

---

१. सोम D. २. इन्द्रम् Sy.
३. बभ्रुणाभिषुताः Sy.
४. अमादयंस्तदा Sy.
५. मन्द यथा च मर्षं P. कामानां वर्षितेन्द्रः Sy.
६. अत्यर्थं शब्दमकरोत् Sy.
७. पुरां दारयिता Sy.
८. पीतवान् Sy.
९. प्राच्छदिति P., D. बभ्रवे ददौ Sy.
१०. VM. ignores उस्रियाणाम् ॥ क्षीरमुत्स्राविणीः Sy. ११. ऋणयेन P., D.
१२. धेनूनाम् Sy.
१३. चतुःसंख्यायुक्तानि Sy.
१४. प्रायच्छन्त or प्रयच्छन्तः nom. pl. is suggested for प्रयच्छन्त ॥ मह्यं प्रयच्छन्तः । राज्ञा हि दीयमानानि धनानि राजपुरुषा एव प्रयच्छन्ति Sy.
१५. रुशम इति कश्चिज्जनपदविशेषः । अत्र रुशमशब्देन तत्रत्या जना उच्यन्ते । ऋणञ्चयनाम्नो राज्ञः किङ्कराः Sy.
१६. कल्याणम् Sy. १७. अकुर्वन् Sy.
१८. एतन्नामकेन राज्ञा Sy.
१९. प्रयतानि दत्तानि Sy.
२०. मह० D.
२१. गोरूपाणि धनानि Sy.
२२. प्रतिगृहीतवन्तः स्मः । पूजार्थं बहुवचनम् Sy.
२३. नेतॄणां मध्ये Sy.
२४. अतिशयेन नेतृतमस्य Sy.
२५. VM. ignores अग्ने ।
२६. स्वरू० P. अलङ्काराच्छादनादिभिः संस्कृतम् Sy. २७. मा P.
२८. एव० P. प्रापयन्ति स्म Sy.
२९. धेनूनाम् Sy.

अमी रुशमाः[1] । अग्ने ! इति स्वायननस्थानायाग्नये निवेदयति । तकतिर्गतिकर्मा[2] ऋणञ्चयमपहाय बभ्रुर्यस्यां रात्र्यामागतः सा परितक्म्योच्यते[3] अस्याः । रात्रेः । व्युच्छने[4] धनसद्भावादपरेद्युर्मया[5] । सुताः[6] । तीव्ररसाः[7] सोमाः । इन्द्रम् । अममन्दुः[8] ।

**औच्छत्सा रात्री परितक्म्या याँ ऋणंचये राजनि रुशमानाम् ।**
**अत्यो न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत्सहस्रा ॥ १४ ॥**

औच्छत् । मदीयात् गृहात् प्रतिनिवृत्तानां[9] रुशस्य[10] ? करेषु[11] ।[12]

**चतुःसहस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने ।**
**घर्मश्चित्तप्तः प्रवृजे य आसीदयस्मयस्तम्वादाम विप्राः ॥ १५ ॥**

चतुःसहस्रम्[13] । रुशमेषु[14] । प्रतिगृहीतवन्तः[15] । प्रवर्जज्ञायनाय[16] ? तपः[17] । घर्मः[18] । इव[19] । यः[20] । आसीत्[21] ।

---

१. ऋणञ्चयस्य किङ्कराः Sy.
२. तकृति० P., D.
३. ०तक्ष्योच्य० P., D. तमसा भूतानि परितस्तकति गच्छतीति परितक्म्या । तस्याः Sy.
४. व्युच्छने सति । उषःकाल इत्यर्थः Sy.
५. ०द्युर्मय P. ०द्युर्माया D.
६. लब्धबहुधनेन मयाभिषुताः Sy.
७. रसवन्तः Sy.
८. अमन्दुः P., D. अमादयन् । बभ्रुः गवां प्राप्त्यनन्तरमवलम्बितमेव सोमेनेज इत्यर्थः Sy.
९. ०तान, P. ०ताना D.
१०. रुशमानाम् is suggested for रुशस्य ।
११. कारेषु is suggested for करेषु ।
१२. VM. practically ignores the whole of the stanza. रुशमानां रुशमनाम्नां जनानाम् । राजनि प्रभौ । ऋणञ्चये एतत् संज्ञके तत्समीप एव । या रात्रिः । परितक्म्या परितो गन्त्री भवति । सा रात्रीः । औच्छत् व्युष्टाभवत् । अत्यः सततगामी । वाजी न अश्व इव । रघुः शीघ्रगामी । अज्यमानः प्रेर्यमाणः । बभ्रुरेतन्नामक ऋषिः ॥ चत्वारि चतुःसंख्याकानि । सहस्रा सहस्राणि गोरूपाणि धनानि । असनत् अलभत Sy.
१३. 'क्व स्य बभ्रुर्ऋणञ्चयोऽप्यत्र राजा स्तुतः' (KSA. 25.30. p. 19.) इत्यनुक्रमणिकाकारः । तथा बृहद्देवता (5.33.36.) अत्रेः सुतमृषिं बभ्रुमार्त्विज्याय ऋणञ्चयः । सहस्रदक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ॥३३॥ ददौ च रौशमो राजा सहस्राणि शतानि तु । तस्मै चत्वारि चत्वारि महावीरं च काञ्चनम् ॥३४॥ प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् । प्रतिगृह्य ऋषिर्गच्छन् मध्यमेनाग्निना पथि ॥३५॥ पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च यत् ॥३६॥ 'भद्रमिदं रुशमाः' इत्यादिभिः 'चतुःसहस्रम्' इत्यन्ताभिः (RV. V. 30. 12-15.) बभ्रुर्ऋणञ्चयं त्रिष्टुभा तुष्टाव DDN.
१४. एतत्संज्ञकेषु जनेषु Sy., DDN.
१५. प्रतिगृहीतवन्तः स्मः Sy.
१६. प्रवर्ग्याय or प्रवर्ग्यज्ञानाय is suggested for प्रवर्जज्ञायनाय ॥ प्रवृञ्जनार्थम् Sy. DDN.
१७. तप्तः is suggested for तपः ॥ सन्तप्तः शोभनवर्णः Sy., DDN.
१८. महावीरः Sy.
१९. पूजनीयो महावीरः । चिदयं पूजायाम्, आचार्यश्चिदिदं ब्रूयादिति यास्कः (N.64.) DDN.
२०. कलशः Sy.
२१. अभवत् Sy.

हिरण्येन निर्मितः[1] । तादृग्भवां[2] पयः । भुक्तवन्तो[3] वयम्[4] । दीप्तिवन्तो वयं मेधाविन[5] इति[6] ।

V.31.

**इन्द्रो॒ रथा॑य प्र॒वतं॑ कृणोति॒ यम॒ध्यस्था॒न्म॒घवा॑ वाज॒यन्त॑म् ।**
**यू॒थेव॑ प॒श्वो व्यु॑नोति गो॒पा अरि॑ष्टो याति प्रथ॒मः सिषा॑सन् ॥ १ ॥**

इन्द्रः[7] ॥ अपस्युः[8] ॥ इन्द्रः । आत्मीयाय रथाय[9] । प्रवणवन्तं देशम्[10] । करोत्यग्रतः स्थिता[11] घ्नन् । यम्[12] । अधितिष्ठति[13] । सङ्ग्राममिच्छन्तम्[14] । गोयूथानिव[15] । गोपालः । विविधं प्रेरयत्येवं सङ्ग्रामिकानश्वपुरुषान्[16] विविधं प्रेरयतेति[17] । स्वमग्रेऽरिष्टः[18] । गच्छति । सर्वेषामग्रतः[19] । शत्रून् सिषासन्[20] ।[21]

**आ प्र द्र॑व हरिवो॒ मा वि वे॑नः॒ पिश॑ङ्गराते अ॒भि नः॑ सचस्व ।**
**न॒हि त्वदि॑न्द्र॒ वस्यो॑ अ॒न्यदस्त्य॑मे॒नांश्चि॒ज्जनि॑वतश्चकर्थ ॥ २ ॥**

**आ प्र द्रव[22]** । आभिमुख्येन प्रद्रव[23] । हरिवः[24] ! मा । विगतकामोऽभूः[25] श्रद्धधान आगच्छ ।

---

१. अयोमयो हिरण्मयः Sy. DDN.

२. तादृग् गवां is suggested for तादृग्भवां ॥ तमु दोहनार्थं कलशञ्च Sy.

३. आदत्तवन्तः Sy., DDN. ४. यं P.

५. ०ने D. विप्रा मेधाविनो वयम् DDN.

६. VM. ignores चतुःसहस्रम् । गव्यस्य । पश्वः । अग्ने and उ ॥ हे अग्ने ! गव्यस्य गवात्मकस्य । पश्वः पशोः पशूनाम्, जातावेकवचनम् । चतुःसहस्रं चत्वारि सहस्राणि Sy., DDN. चतुःसहस्रमिति—'सहस्रं सनिता०' (RPR.5.27.) इति निषेधान्न षत्वम् DDN. Ms. D. puts the figure ॥३०॥ here to indicate the end of the thirtieth hymn. No such number is given in P.

७. 'इन्द्रो रथाय' इति त्रयोदशर्चं सप्तदशं सूक्तम् । अवस्युर्नाम आत्रेय ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । 'उग्रमयातम्' 'सं ह यद्वाम्' इति पादयोः क्रमेण कुत्सोशनसौ विकल्पेन देवता । 'इन्द्राकुत्सा वहमाना' इत्यस्या इन्द्रः कुत्सश्च । तथा चानुक्रान्तम्—'इन्द्रो रथाय सप्तोनावस्युरुग्रमिति कौत्स्यौशनसौ वा पादौ परैन्द्राकौत्सी' (KSA. 25.31.p.20.) इति । विनियोगो लैङ्गिकः Sy.

८. अवस्युः is suggested for अपस्युः ।

९. तस्मै रथाय Sy. १०. प्रवणमाजिम् Sy.

११. स्थितान् is suggested for स्थिता ।

१२. रथम् Sy. १३. घ्नमतितिषति P.

१४. अन्नमिच्छन्तम् Sy. १५. VM. explains यूथेव and पश्वः together as गोयूथानिव ॥ पशूनां यूथानि यथा Sy.

१६. सा० is suggested for स० ॥ यथा प्रेरयति तथा शत्रुसैन्यानि प्रेरयति Sy.

१७. प्रेरय० is suggested for प्रेरय ।

१८. स्वग्रम् is suggested for स्वम् ॥ शत्रुभिः स्वयमहिंसितः Sy.

१९. ०ता P. देवानां मुख्य इन्द्रः Sy.

२०. विषा० P. शत्रुधनानीच्छन् Sy.

२१. VM. ignores मघवा ॥ मघवा धनवान् Sy. २२. ०वः D.

२३. अस्मानभिमुखं प्रकर्षेण गच्छ Sy.

२४. हे हरिवन्निन्द्र ! त्वम् Sy.

२५. विशतकामो भू P., D. वेनतिः कान्तिकर्मा । अस्मासु विगतकामः(मा) भूः Sy.

हे[1]। माम्[2]। धनदानादिभिः[3] सेवस्व[4]। नहि। त्वत्तः। अन्यत्[5]। प्रगल्भतरम्[6]। अस्ति भूतम्[7]। त्वमस्त्रीकान्[8]। अपि। जायावतः[9][10]। करोषि[11]।

**उद्यत्सहः सहस आजनिष्ट देदिष्ट इन्द्र इन्द्रियाणि विश्वा।**
**प्राचोदयत्सुदुघा वव्रे अन्तर्वि ज्योतिषा संववृत्वत्तमोऽवः ॥ ३ ॥**

उद्यत्। उदाजनिष्ट[12]। यदा। सहसः[13] उपादानात्। इन्द्राख्यं सहः[14] प्रारथ[15] प्रबुद्धानां पञ्चानां जनानाम्। बलानि[16]। इन्द्रः। दीपयति[17]। प्रमोदयति[18]। गाश्च[19]। वव्रे[20] व्रजे[21]। अन्तः स्थिताः सञ्चरणार्थम्[22]। तथा ज्योतिषा[23]। वेष्टमानम्[24]। तमश्च मसर्वम्[25]। विवृणोति[26][27]।

**अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम्।**
**ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ४ ॥**

अनवः[28]। मनुष्या ऋभवः[29]। तव[30]। अश्वानुगुणम्[31]। रथम्। कृतवन्तः[32]। त्वष्टा[33] च। वज्रम्[34]।

---

१. Something, probably पिशङ्गराते, seems to be missing after हे। At present हे stands alone and is incomplete.
२. अस्मान् Sy.
३. ०भि P. ४. अभिसेवस्व Sy.
५. वस्तुजातम् Sy.
६. वसीयः श्रेयस्करम् Sy.
७. ०त P.
८. अस्तिकान् P., D. मेनाशब्दः स्त्रीवाची। अपगतस्त्रीकांश्च Sy.
९. ०पतः D.
१०. अ क० P., D.
११. VM. ignores पिशङ्गराते। अभि and इन्द्र ॥ किञ्च हे बहुरूपधन ! इन्द्र ! Sy.
१२. उपरिष्टात् प्रादुर्बभूव तदा Sy.
१३. उषःसम्बन्धिनस्तेजसः Sy.
१४. सह D. सूर्यसम्बन्धि तेजः Sy.
१५. प्रातरथ is suggested for प्रारथ।
१६. धनानि। इन्द्रियमिति धननाम Ngh. 2.10.
१७. देदिष्टे यजमानेभ्यो दिशति Sy.
१८. प्रमोयति P. प्रचोदयति is suggested for प्रमोदयति ॥ प्रैरयत् Sy.
१९. सुष्ठु दोग्ध्रीर्गाः Sy.
२०. वप्रे P. निवारके पर्वते Sy.
२१. व्रजन्तः P. मध्ये बलेन निरुद्धाः Sy.
२२. ०ता P. २३. तेजसा Sy.
२४. संवरणशीलम् Sy.
२५. सर्वं is suggested for मसर्वम्।
२६. पिवृ० D. निवारितवान् Sy.
२७. VM. ignores विश्वा ॥ विश्वानि सर्वाणि Sy. २८. अनपः D.
२९. अनव इति मनुष्यनाम Ngh. 2.3.
३०. त्वदीयम् Sy.
३१. तथाश्वाननुगुणं P.D. अश्वाभ्यां संयोगार्हम् Sy. अश्वं योक्तुं यथा योग्यो भवति तथा संस्कुर्वन्ति। यद्वा अश्वाय व्याप्तिमते तुभ्यं यथा पर्याप्तो भवति BB.
३२. अतक्षन्। अकुर्वन् Sy. तक्षन्तु संस्कुर्वन्तु। लङ् लोडर्थे। अडभावश्छान्दसः BB.
३३. देवानां शिल्पी BB.
३४. त्वदीयं वज्रम् Sy. वज्रं तक्षतु तीक्ष्णीकरोतु BB.

दीप्तिमन्तं कृतवान्[1]। ब्राह्मणाश्च[2]। मन्त्रैः[3]। इन्द्रम्[4]। पूजयन्तः[5]। अहिम्[6]। हन्तुम्[7]। अवर्धयन्[8]।

**वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः।**
**अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ ५ ॥**

वृष्णे। वृष्णे[9]। यदा। तुभ्यम्। वर्षितारः[10]। ग्रावाणः, अधिषवणप्रदाः[11]। गौश्च[12]। सङ्गताः[13]। अर्चनीयं सोमम्[14]। अर्चन्ति अभिषुण्वन्ति[15]। अथाश्वरथवर्जिताः[16]। इन्द्रप्रेषिताः[17]। पवयः—आयुधानि[18]। दस्यून्[19]। अभ्यवर्तन्त[20] शीघ्रमेक एव गत्वायुधानि शत्रुषु विसृजतीति[21][22]।

---

१. अकरोत् Sy.

२. ०णात्व D., P. अङ्गिरसः परिवृढा मरुतो वा Sy.

३. स्तोत्रैः Sy.
हविर्लक्षणैरन्नैर्वा BB.

४. मन्त्रैन्द्रं P.
ईश्वरम् BB.

५. अहि P., D. वृत्रम् Sy. किमर्थम्? अहये, अघाय। अहिंसनाय। आगत्य हन्तीत्यहिस्सर्पादिः। 'आङि श्रुहनिभ्यां ह्रस्वश्च' इतीण्प्रत्ययः, कर्मणि चतुर्थी BB.

६. हन्तवै—'तुमर्थे सेसेन्०' इति तवैप्रत्ययः BB.

७. वर्धितवन्तः Sy. यशसा।....त्वं चास्माकं महायज्ञमुपनयेति BB.

८. VM. ignores पुरुहूत and उ॥ हे बहुभिराहूतेन्द्र! Sy., BB. अपि च Sy. उः पादपूरणे BB.
This stanza=TS. 1.6.12.6.

९. वर्षित्रे कामानाम् Sy.
वर्षित्रे, अभिमतदात्रे। षष्ठ्यर्थे चतुर्थी। तव वर्षितुः BB.

१०. सेचनसमर्था मरुतः Sy.
वर्षितारो मेघा वृष्टिं कुर्वन्तः, तवार्कमर्चयन्ति मेघाः इत्यर्थः BB.

११. अभिषवपाषाणाः Sy.

१२. अदितिः अदीनाः, वचनव्यत्ययः Sy. अदितिः पृथिवी च BB.

१३. सङ्गता बभूवुरिति शेषः Sy. समानप्रीतिस्त्वया तैर्वा मेघैरानुकूल्यं भजमानाः सस्याद्युत्पादयन्तस्तव कर्मार्कमर्चयति BB.

१४. ०नाचनीयं P. ०ता अघनयं D. स्तोत्रम् Sy. अर्चनीयामाज्ञामर्चनीयं वा ते तव यागम् BB.

१५. अस्तुवन्। अकुर्वन्नित्यर्थः Sy. अर्चयन्ति पूजयन्ति BB.

१६. यद्यदैवमेते कुर्वन्ति तदानीं दुष्टात्मानो दस्यवोऽपि त्वयैव हन्तव्या इति तत्प्रार्थयते BB.

१७. रथवर्जितारः P. VM. seems to explain अनश्वासः and अरथाः together as अश्वरथवर्जिताः॥ अश्वरहिताः।....अरथा रथरहिता अश्वरथमनपेक्षमाणाः BB.

१८. ०तां P. इन्द्रेण प्रेषिताः Sy. सर्वदेन्द्रेणैव प्रेषिता अन्येन प्रेषितुमशक्यास्ते BB.

१९. अधानी P. आधानि D. पवमाना गच्छन्तः Sy. ये पवयस्तवायुधविशेषाः BB.

२०. शत्रून् Sy.

२१. अभिभूतान् कुर्वन्तो वर्तन्ते स्म ते मरुतोऽर्चानिति सम्बन्धः Sy. आभिमुख्येन हन्तुं वर्तन्ताम्। स्वरणादिद्वाराऽस्मदुपक्षपयितारो दस्यवस्तानभिभूय पराजितान् कृत्वा सर्वदाऽस्मानुक्षन्तो वर्तन्तामिति भावः। छान्दसो लङ्। एवं सर्वस्य लोकस्य रक्षको महात्मा त्वमतोऽस्माकमपि महायज्ञमुपनयेति BB.

२२. VM. ignores इन्द्र and ये॥ हे इन्द्र! ये मरुतः Sy.
This stanza=TS. 1.6.12.6.

**प्र ते॒ पूर्वा॑णि॒ कर॑णानि वोचं॒ प्र नूत॑ना मघव॒न्या च॒कर्थ॑ ।**
**शक्ती॑वो॒ यद्वि॒भरा॒ रोद॑सी उ॒भे जय॑न्न॒पो मन॑वे॒ दानु॑चित्राः ॥ ६ ॥**

प्र ते[1] । प्रब्रवीमि[2] । तव[3] । वृत्रवधादीनि पुरातनानि । कर्माणि । तथा ब्रवीमि[4] । नूतनानि[5] च । मघवन्[6] ! यानि । कृतवानसि कर्माणि[7] । शक्तिमन्[8] ! यस्त्वम् । द्यावापृथिवी[9] । विविधं[10] बिभर्षि[11] । जयन्[12] । उदका[13] । चित्रदानानि[14] । तस्माद् ब्रवीमीति[15] ।

**तदिन्नु ते॒ कर॑णं दस्म वि॒प्राहिं॒ यद्घ्नन्नोजो॒ अत्रामिमी॑थाः ।**
**शुष्ण॑स्य चि॒त्परि॑ मा॒या अ॑गृभ्णाः प्रपि॒त्वं यन्नप॒ दस्यूँ॑रसेधः ॥ ७ ॥**

तदित् । तत् । एव । तव[16] । कर्म[17] । दर्शनीय[18] ! मेधाविन्[19] ! अहिम्[20] । घ्नन्[21] । यत् त्वम्[22] । तस्मिन्[23] । बलम्[24] । कृतवानसि[25] । शुष्णस्य[26] । अप्यसुरस्य । मायाः[27] । परिगृहीतवानसि । बलिनः प्राप्तिम्[28] । गच्छन्[29] । अन्यानप्यसुरान् । अपासेधः[30] [31] ।

**त्वम॒पो यद॑वे तु॒र्वशा॒यार॑मयः सु॒दुघाः॒ पा॒र इ॑न्द्र ।**
**उ॒ग्रम॑यात॒मव॑हो ह॒ कुत्सं॒ सं ह॒ यद्वा॑मु॒शनार॑न्त दे॒वाः ॥ ८ ॥**

त्वमपः । पारयिता[32] । त्वम् । उदकानि[33] । सुदोहनानि[34] । यदुतुर्वशाभ्याम्[35] । अरमयः[36] । किञ्चेन्द्र !

---

१. हे इन्द्र ! Sy.
२. अहं प्रकर्षेण ब्रवीमि Sy.
३. त्वदीयानि Sy. ४. प्रब्रवीमि Sy.
५. नूतनानि नवानि कर्माणि Sy.
६. हे धनवन्निन्द्र ! Sy.
७. यानि कर्माणि कृतवानसि तानि प्रवोचमिति सम्बन्धः ।
८. शत्तिमन् P. हे शक्तिमन् ! शक्तिर्वज्रं कर्म वा तद्वन्निन्द्र ! Sy.
९. द्यावापृथिव्यौ Sy. १०. विविच्य Sy.
११. बभ० P. १२. वशीकुर्वन् Sy.
१३. उदकानि is suggested for उदका ।
१४. चित्रदानाः Sy.
१५. VM. ignores उभे and मनवे ॥ मनवे मनुष्याय Sy.
१६. त्वदीयम् Sy.
१७. कर्म विद्यते Sy. १८. ०यम् D.
१९. मेधाविन् ! इन्द्र ! त्वम् Sy.
२०. वृत्रमसुरम् Sy. २१. हिंसन् Sy.
२२. यत्वं D. यन्त्वं P. यत् Sy.
२३. अस्मिँल्लोके Sy.
२४. बलं बलं P., D.
२५. प्रकाशितवानसि Sy.
२६. अपि च एतन्नामकस्याप्यसुरस्य सम्बन्धिनीः Sy.
२७. ०या D. प्रज्ञाः Sy.
२८. हे इन्द्र ! त्वं प्रपित्वं सङ्ग्रामं समीपं वा Sy.
२९. प्राप्नुवन् Sy.
३०. अपाबाधथाः Sy.
३१. VM. ignores नु ॥ नु खलु Sy.
३२. पारे नदीनां तीरे । प्रवृद्धा इति शेषः Sy.
३३. अन्नानि P.
३४. ओषधिवनस्पतीन् सुष्ठु दुहतीः Sy.
३५. यदुनामकाय राज्ञे, तुर्वशायैतन्नामकाय राज्ञे च Sy. ३६. रमितवानसि Sy.

त्वं च कुत्सश्च[1] । उग्रं[2] शुष्णासुरम् । अगच्छतम्[3] । त्वं हि शुष्णं प्रति गच्छन्[4] कुत्सम् । अपि[5] । नीतवानसि[6] । यदा तत्र गतौ । वाम्[7] । उशना[8] । देवाः । च[9] । समागच्छन्त ।

**इन्द्रा॑कुत्सा॒ वह॑माना॒ रथे॒ना वा॒मत्या॒ अपि॒ कर्णे॑ वहन्तु ।**
**निः षी॑म॒द्भ्यो धम॑थो॒ निः ष॒धस्था॑न्म॒घोनो॑ हृ॒दो वर॑थ॒स्तमां॑सि ॥ ९ ॥**

इन्द्रा०[10] । इन्द्राकुत्सौ[11] । गच्छन्तौ[12] । रथेन[13] । वाम्[14] । अश्वाः[15] । कर्णकुलजाते मयि[16] । अपि । आवहन्तु[17] । तौ युवां तमांसि[18] । अन्तरिक्षात्[19] । सर्वतः[20] । निर्धमथः[21] । तथा पृथिव्याः[22] । च[23] । महतः[24] । अस्माकं हृदयाच्च[25] ।

---

१. ०श्च D. युवाम् । त्वं कुत्सश्चेति शेषः Sy.
२.-उद्गूर्णं शुष्णम् Sy.
३. च्छन्तं P., D.
४. तदनन्तरं त्वं शुष्णं हत्वा Sy.
५. खलु Sy.
६. स्वगृहं प्रापितवानसि Sy.
७. युवामिन्द्राकुत्सौ Sy.
८. भार्गवः Sy.
९. सम्भेजिरे Sy.
१०. इन्द्राः P. अवस्योः SKN. कुत्सेन संस्तवः । अवस्योरार्षम् Dur.
११. द्राकूत्सौ P. हे इन्द्राकुत्सौ ! Sy., SKN., Dur.
१२. वहमानावुह्यमानौ Sy. वहमानौ प्रापयन्तौ SKN. उह्यमानौ....युवां ब्रुवे Dur.
१३. रथेनात्मानम् SKN.
१४. युवाम् Sy.
१५. अश्वाः is suggested for अश्वा ॥
१६. स्तोत्राणि कृणोति करोतीति कर्णः स्तोता यजमानो वा तत्समीपेऽपीति यावत् Sy. अपठितमपि कर्मनामैतत् । करणमित्यस्य वा कर्मनाम्नश्छान्दसोऽकारलोपः । कर्मण्यस्मदीये SKN. नित्यं कर्मणे । ततश्च कर्मणा परितोषितौ Dur.
१७. आ समन्ताद्वाहका भवन्तु Sy. आ इत्युपसर्गो वहन्त्वित्येतेन सम्बध्यते SKN.
१८. अज्ञानरूपाणि पापानि Sy. तमोरूपाणि । असत्यां वृष्टौ कथं जीविष्यामः कथं पुत्राः कथं पौत्राः इत्येवमादीनि मानवानि दुःखानि SKN. एतानि तमांसि Dur.
१९. अप्सु प्रविष्टम् Sy. अद्भ्य इति द्वितीयार्थे चतुर्थी, पञ्चमी वा, अपः....अपो वृष्टिलक्षणाः SKN.
२०. एनं शुष्णासुरम् । सीमिति शुष्णासुरो बुद्धिस्थः परामृश्यते Sy. सीमिति परिग्रहार्थीयः सर्वपर्यायः SKN. सर्वतोऽरीन् Dur.
२१. अबाधेथाम् Sy. निरुपसर्गाभ्यासादत्राख्यातस्याप्यभ्यासो द्रष्टव्यः । अभ्यासाच्चार्थभूयस्त्वम् ।....एतदुक्तं भवति—सुष्ठु सर्वान् निर्धमथो निर्गमयथः SKN.
२२. स्वकीयात् स्थानात् Sy. कुतः ? सधस्थात् सहस्थान्मेघात् SKN. समानस्थानादन्तरिक्षात् Dur.
२३. निः अबाधेथाम् Sy.
२४. VM. seems to explain मघोनः as महतः ॥ मघवतः हविष्मतो यजमानस्य Sy. एतच्च कुर्वन्तौ मघोनो हविराद्येन धनेन धनवन्तौ SKN. तत ओषध्याद्युत्पत्त्या सुकाले कुर्वाणौ मघोनः, महान्त्येतानि Dur.
२५. वृतयाच्च P. पृदयाच्च D. यजमानस्य हृदो हृदयात् SKN. हृदयस्याच्छादकानि, अनाकालभयकृतानि Dur.

निवारयथ[1]। कुत्सश्च साहचर्याद् देवता भवति[2]।

**वातस्य युक्तान्त्सुयुजश्चिदश्वान्कविश्चिदेषो अजगन्नवस्युः।**
**विश्वे ते अत्र मरुतः सखाय इन्द्र ब्रह्माणि तविषीमवर्धन् ॥ १० ॥**

**वातस्य**[3]। गच्छतस्तव[4]। योग्यान्[5]। सुयुजः[6]। अश्वान्। अयम्[7]। अवस्युर्ऋषिः[8][9]। क्रान्तदर्शनः[10]। मनसा गच्छति[11] स्मरति तवागमनमिच्छन्नित्यर्थः[12]। अस्मिन्नवसरे[13]। विश्वे[14]। मरुतः[15]। तव। गमनोद्युक्तसहाया[16] आसन्। तथा ब्राह्मणैः[17] प्रयुक्तानि स्तोत्राणि च। तव[18] बलम्। अवर्धयन्निति[19]।

**सूरश्चिद्रथं परितक्म्यायां पूर्वं करदुपरं जूजुवांसम्।**
**भरच्चक्रमेतशः सं रिणाति पुरो दधत्सनिष्यति क्रतुं नः ॥ ११ ॥**

**सूरश्चित्**। सूर्यस्य[20]। रथम्। रात्र्याम्[21]। अग्रतः प्रादुर्भूतं चक्रं प्रह्वी[22]। तत्रोप्तमवस्थितम्[23], अगमत्[24]। वेगेन गच्छन्तम्। तस्य चक्रं च। भरत् अबृहत्[25] शत्रूणां[26] जयार्थम्। अस्मिन् काले सूर्येण स्पर्धमान एतश[27] ऋषिः। इन्द्रेण सङ्गच्छते[28]। एवंविध इन्द्रोऽस्मान्। सर्वेषां पुरतः। स्थापयन्[29]। अस्मद्यज्ञम्[30]। आगमिष्यति[31][32]।

---

१. ०थः is suggested for ०थ ॥ वारयथोऽपनयथः SKN. वारयथ इत्येतदाशास्महे Dur.

२. अथवा मघोन इत्याद्यन्यथा योज्यते। उदकलक्षणेन धनेन धनवतो मेघस्य। हृदो हृच्छब्देन सामीप्यादुदकं लक्ष्यते। उदकाद् वरथोऽपनयथस्तमांसि तमोरूपाणि तमस्स्थानि यान्यावरणानि N.7.10.; SKN. III.58.59.

३. वातस्म P., D.

४. वायोर्वेगेन Sy. ५. संयुक्तान् Sy.

६. सुष्ठु योजनीयान् Sy. ७. मन्त्रद्रष्टा Sy.

८. ०वस्वुः P. एतन्नामकः Sy.

९. ऋषि D. १०. कान्त० D. प्राज्ञः Sy.

११. प्राप्नोत् Sy. १२. वाग० D.

१३. अस्मिंल्लोके Sy.

१४. सर्वे Sy. १५. बहवः स्तोतारः Sy.

१६. गमनोद्युक्तस्य सहा० is suggested for गमनोद्युक्तसहा० ॥ अवस्योः सखायः Sy.

१७. ब्रह्मभिः स्तोत्रैः Sy.

१८. त्वदीयम् Sy.

१९. VM. ignores चित् (twice) and इन्द्र ॥ चिद् अपि Sy.

२०. सूरस्य P. एतशाख्येन ऋषिणा सह योद्धुः सूर्यस्यापि सम्बन्धिनम् Sy.

२१. इन्द्रः सङ्ग्रामे। परितो गच्छन्त्यस्यां भटा इति परितक्म्या सङ्ग्रामः Sy.

२२. बह्वी P. प्रह्वीचक्रे is suggested for चक्रं प्रह्वी।

२३. उपरतव्यापारम् Sy.

२४. अगत् P., D. पुराकरोत् Sy.

२५. अपृहत् D. अहरत् is suggested for अबृहत्।

२६. शिश्रुणां P. २७. एवश P. एवतश D. एतशाय। विभक्तिव्यत्ययः। इन्द्रः पूर्वं द्विचक्रस्य रथस्यैकं चक्रम् Sy.

२८. स इन्द्रस्तेन चक्रेणासुरान् हिनस्ति Sy.

२९. पुतस्तवयन् P. अपि चास्मान् पुरस्कुर्वन् Sy.

३०. अस्मदीयं यज्ञम् Sy.

३१. सम्भजतु Sy.

३२. VM. ignores चित्।

आयं जना अभिचक्षे जगामेन्द्रः सखायं सुतसोममिच्छन् ।
वदन्ग्रावाव वेदिं भ्रियाते यस्य जीरमध्वर्यवश्चरन्ति ॥ १२ ॥

**आयम्** । हे जनाः ! अयम् । इन्द्रः । अभिदर्शनार्थम्[1] । सुतसोमम्[2] । सखायम्[3] । अन्विच्छन्[4] । आजगाम[5] । आगते[6] चास्मिन्, अभिषवग्रावा[7] ! शब्दं कुर्वन् । वेदिं प्रति[8] वेद्यामित्यर्थस्तत्र[9] । अधस्ताद् भ्रियते[10] दीर्घश्छान्दसः[11] धार्यतेऽभिषवार्थम्[12] । यस्येन्द्रस्य[13] पानाय । क्षिप्रम्[14] । अध्वर्यवः । चरन्ति[15] यज्ञ इतस्ततः ।

ये चाकनन्त चाकनन्त नू ते मर्ता अमृत मो ते अंह आरन् ।
वावन्धि यज्यूँरुत तेषु धेह्योजो जनेषु येषु ते स्याम ॥ १३ ॥

**ये चाकनन्त**[16] । ये च पुरा त्वाम् इन्द्र[17] ! कामितवन्तः[18] । ते लब्धकामाः । क्षिप्रम्[19] । पुनश्च कामितवन्तः[20] । तेऽमी[21] । मर्त्याः[22] । हे अमर्त्य[23] ! मा[24] । पापम्[25] । प्राप्नुवन्तु[26] । तदर्थं भजस्व[27] । तानस्मान् यष्टॄन्[28] । अपि च । तेषु[29] । बलम् । धेहि । जनेषु[30] । येषु । त्वदीया वयम् । स्याम[31] सहायानां[32] बलं धेहीति[33] ।

---

१. युष्मानभिद्रष्टुम् Sy.
२. अभिषुतसोमं यजमानम् Sy.
३. स्तोतारम् Sy.
४. अभिलषन् Sy.
५. आगच्छति Sy. ६. गते D.
७. ०वाः D. स सोमाभिषवपाषाणः Sy.
८. वेद्यमि प्रति P.
९. वेद्यमादित्यर्थस्तत्र P.
१०. अभिह्रियते Sy.
११. ०र्घं छा० P.
१२. ते षवार्थं P.
१३. यस्य ग्राव्णः Sy.
१४. क्षेपणं प्रेरणम् Sy.
१५. कुर्वन्ति Sy.
१६. ०न्तः D.
१७. हे इन्द्र ! धनार्थिनः ये जनाः Sy.
१८. अकामयन्त Sy.
१९. क्षिप्रमेव Sy.
२०. त्वां चाकनन्त Sy.
२१. जनाः Sy.
२२. ते मित्याः P. मरणधर्माणः Sy.
२३. हे अमरणशीलेन्द्र ! Sy.
२४. भा P., D. मा उ इति निपातसमुदायो मेत्येकनिपातार्थे वर्तते Sy.
२५. वाव P. वावम् D. अनर्थम् Sy.
२६. म्नाप्नु० P. माप्नु० D. गमन् Sy.
२७. सम्भजस्व Sy.
२८. त्तनस्मात्यष्टूतम् P. यजमानान् Sy.
२९. जनेषु Sy.
३०. येषां जनानां मध्ये स्तोतारः Sy.
३१. भवाम Sy.
३२. हायानाम P.
३३. Ms. D. puts the figure ॥३१॥ here to indicate the end of the thirty-first hymn. No such number is given in P.

V.32.

**अर्दर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।**
**महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥ १ ॥**

अदर्दः[1] ॥ गातुः[2] ॥ दारितवानसि[3] । अपामुत्सम्[4] । मेघद्वाराणि[5] चास्य । व्यसृजः[6] । तथा[7] महतोदकेन बाधमानान्[8] । सिन्धून्[9] वज्रे नियम्य । स्वे स्वे स्थानेऽरमयः[10] । इत्येतदेवाह महान्तमिति यदा[11] । त्वम् । महान्तम्[12] । मेघम्[13] । दारितवानसि[14], अस्यापामपिधानानि[15] द्वाराण्यपावृण्वन् । उदकधाराश्च[16] । व्यसृजः[17] । तथा

---

१. 'अदर्दरुत्सम्' इति द्वादशर्चमष्टादशं सूक्तम् । गातुर्नामात्रेय ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । तथा चानुक्रान्तम्—'अदर्दद्वादश गातुः' (KSA. 25.32. p. 20) इति । गतो विनियोगः Sy.

२. ०तुं D. गतुं P. गातोरार्षम् SKN. गातोरात्रेयस्यार्षम् Dur.

३. हे इन्द्र ! त्वम् Sy. हे भगवन्निन्द्र ! त्वम् Dur.

४. विदारितवानसि Sy. दारयसि SKN. दारितवानसि त्वम् Dur.

५. अवाम् D. उत्स्यन्दमानं मेघम् Sy. 'उत्सं दुहन्ति स्तनयन्तम्' इत्यादौ दर्शनादुत्सशब्दोऽपठितमपि मेघनाम SKN. उत्सो मेघः । स कस्मात् ? 'उत्सदनाद् वा' उत्पूर्वस्य सदेः' ऊर्ध्वमसौ सन्न इत्युत्सः । 'उत्स्यन्दनाद् वा' उत्पूर्वस्य वा स्यन्दतेः' उपर्यसाववस्थितः स्यन्दतीत्युत्सः । 'उनत्तेर्वा' 'उन्दी क्लेदने' इत्यस्य, क्लेदयत्यसौ । तमुत्सं मेघम् Dur.

६. तदनन्तरं मेघस्थोदकनिर्गमनद्वाराणि Sy. अवकाशान्मेघस्य, यैरुदकं निर्गच्छति । उदकनिर्गमनबिलानीत्यर्थः SKN. बिलानि Dur.

७. विशेषेण सृष्टवानसि Sy. मेघं दारयित्वा चासृजो विसृजसि विवृणोषि । छान्दसत्वात्परो विः पुरस्ताद् द्रष्टव्यः SKN. दारयित्वा च जर्जरीकृत्य तस्योत्सस्यासृजः.... विवृतानि त्वमकरोः Dur.

८. बाध्यमानान् Sy. निर्गमननिरोधं कुर्वता मेघेनात्यर्थं बाध्यमानान् SKN. उदकभारेणातिगुरुणा बाध्यमानान् Dur.

९. उदकवतो मेघान् Sy. विवृत्य च त्वमर्णवान्, भूम्नि त्वयं मत्वर्थीयो द्रष्टव्यः, 'अर्णसो लोपश्च' इति । अर्ण उदकम् । अवयवभूतं बहुदो येष्वस्ति तेऽर्णवाः । के पुनस्ते ? मेघाः । ये महार्णाः उदकसङ्घातास्तान् SKN. स त्वममुना प्रकारेण....अर्णस्वतः, अर्णसोदकेन तद्वतः 'एतान्माध्यमिकान् संस्त्यायान्' मेघसङ्घातान् Dur.

१०. विसर्जयसि क्षारयसीत्यर्थः । अत्र रम्णातिर्विसर्जनकर्मा Sy. रम्णाति संयमनकर्माऽन्यत्र 'सविता यन्त्रैः' इत्यादौ । इह तु विसर्जनकर्मा विसर्जयसि क्षारयसीत्यर्थः SKN. यथाकालमरम्णा विसृष्टवानसि । रम्णातिर्धातुः संयमनकर्मा, अन्यत्र । तद्यथा 'सविता यन्त्रैः पृथिवीमरम्णात् (RV. X. 149.1.) इत्यत्र । इह पुनर्मेघविदारणसम्बन्धाद् विसर्जनकर्मा Dur.

११. यस्त्वम् । यदिति लिङ्गव्यत्ययः Sy., SKN.

१२. प्रभूतम् Sy. योऽप्यतिमहान् Dur.

१३. पर्वतो मेघः । केनचिदप्यन्येनाशक्यो विवृतद्वारः कर्तुं तमपि Dur.

१४. विवृतवानसि Sy. 'वि'इत्याख्यातेन सम्बध्यते । ....'मन्त्रे घसह्वर०' (Pa. 2.4.80.) इत्येवं लेर्लुकि रलोपे रूपम् । पूर्वेष्वपि कालेषु विवृतवानसि SKN. विवृतमपावृतोदकनिर्गमनद्वारमकरोः Dur. १५. अस्वापा० D.

१६. अपां धाराः Sy. धारा उदकस्य SKN.

१७. विसृष्टवानसि Sy. विवृत्य च सृजः, विपूर्ववदुपसर्गः । मेघाद् विसर्जितवानसि SKN., Dur.

वृत्रं[1] चापि। हतवानसि[2]। अत्र[3] यास्कः—'त्वमर्णवानर्णस्वतः। एतान् माध्यमिकान् संस्त्यायान्। बाबध्य-[4] मानानरम्णाः। रम्णातिः संयमनकर्मा[5] महान्तमिन्द्र! पर्वतं[6] मेघं यद् व्यवृणोः। व्यसृजोऽस्य[7] धाराः। अपाहन्नेनं[8] दानकर्मणिम्'[9] इति।

**त्वमुत्साँ ऋतुभिर्बद्धधानाँ अरंह ऊधः पर्वतस्य वज्रिन्।**
**अहिं चिदुग्र प्रयुतं शयानं जघन्वाँ इन्द्र तविषीमधत्थाः॥ २॥**

त्वमुत्सान्। मेघान्[10]। वर्षर्तुभिः[11]। बाधमानान्[12]। शिलोच्चयस्य[13]। अधसि[14]। प्रेरितवानसि[15]। वज्रिन्[16]! अहिम्[17]। चित्[18]। उद्गूर्ण[19]! प्रवृद्ध[20]। शयानम्[21]। जघन्वान्[22]। इन्द्र! बलम्। अकृणोः[23][24]।

**त्यस्यं चिन्महतो निर्मृगस्य वधंर्जघान तविषीभिरिन्द्रः।**
**य एक इदंप्रतिर्मन्यमान आदस्मादन्यो अंजनिष्ट तव्यान्॥ ३॥**

त्यस्य चित्[25]। त्यस्य[26]। चित्। महतः शत्रोः[27]। मृगरूपस्य[28] वधार्थम्[29]। आत्मीयं[30] वज्रम्[31]। बलैः[32]।

---

१. दनोः पुत्रं वृत्रमसुरं....यद्वोदकस्य दातारं मेघं वा Sy. दनोः पुत्रो दानवोऽसुरो वृत्रोऽन्यो वा कश्चिन्मेघस्य रक्षिता, तञ्च SKN. उदकदातारं मेघम् Dur.
२. अभिहतवानसि Sy. अवेत्ययं हन्नित्येतेन सम्बध्यते।....हतवानसि। अथवा दानवं दातारं चोदकस्य महान्तमपि मेघं सर्वमधो हतवान् SKN. पुनः पुनः....अवघ्नन्....य एतदकार्षीस्त्वं स इदं नामास्माकं कुरुष्वेति Dur.
३. VM. ignores इन्द्र and अव।
४. बाध्य० D. उद्गृणा उत्सम्। उत्स (उत्सरणाद्वा) उत्सदनाद्वा। उत्स्यन्दनाद्वा। उनत्तेर्वा। व्यसृजोऽस्य खानि। त्वम्...(शेषं मूले) N.10. 9.; SKN. III. 11, 12.
५. The passage, beginning with सिन्धून् and ending with संयमन is omitted by P. P. begins कर्मा etc.
६. N. adds विसर्जनकर्मा वा after संयमनकर्मा।
७. यन्वृणो व्य० P. यद्यवृ० D.
८. N. reads अवाहन्नेनं for अपाहन्नेनम्।
९. N. reads (दानवं) दानकर्माणम् for दानकर्माणम्।
१०. मेघान् प्रतिबन्धनादमोचय इति शेषः Sy.
११. ऋतुषु वृष्टिकालेषु Sy. १२. प्रतिबध्यमानान् Sy. १३. मेघस्य सम्बन्धि Sy.
१४. ऊधसि is suggested for अधसि॥ जलम् Sy. १५. अगमयः Sy.
१६. हे वज्रवन्निन्द्र! Sy. १७. वृत्रम् Sy.
१८. च Sy. १९. गूर्ण P. हे उद्गूर्णबलेन्द्र! Sy.
२०. प्रबन्ध P. प्रवृद्धं is suggested for प्रवृद्ध॥ उद्युक्तम् Sy.
२१. जले शयनं कुर्वन्तम् Sy.
२२. ०न्वां P. D. हतवानसि Sy.
२३. अधारयः। वृत्रवधानन्तरमिन्द्रो लोके प्रख्यातो भवतीत्यर्थः Sy.
२४. VM. ignores त्वम्।
२५. निर्जघानायुधं शक्रो वृत्रेण क्षिप्तमोजसा।
वृत्रस्य गात्रादन्यो यः प्रादुर्भूतो महासुरः॥
वृत्रं पूर्वं निहत्येन्द्रो द्वितीयं शुष्णसंज्ञकम्।
पुनर्जघानेन्द्र इति पराभिः कीर्तयत्यृषिः॥इति॥ Sy. २६. तस्य वृत्रस्य सम्बन्धि Sy.
२७. प्रभूतस्य Sy. २८. शत्रं P.
२९. मृगवच्छीघ्रगामिनः Sy.
३०. ०मत्मी० P. ३१. आयुधम् Sy.
३२. वज्रन्ववैः D. स्वकीयैर्बलैः Sy.

निजघान[1]। यः। एकः[2]। एवाहिः। अप्रतिरहमस्मीति[3]। मन्यमान आसीत्[4]। अस्मादहेः सकाशात्[5]। अनन्तरम्[6]। अन्यः[7] शुष्णो नाम। अजनिष्ट[8]। वृद्धतरः[9][10]।

त्वं चिदे॑षां स्वधया॒ मद॑न्तं मिहो॒ नपा॑तं सुवृधं॑ तमो॒गाम्।
वृष॑प्रभर्मा दान॒वस्य॒ भामं॒ वज्रे॑ण व॒ज्री नि ज॑घान॒ शुष्ण॑म्॥ ४॥

त्वं चित्॥ अतः परं शुष्णवध उच्यते[11]॥ तम्[12]। च। एषां मनुष्याणां[13] स्वभूतेन। उदकेन[14]। मदन्तम्[15]। मिहः[16]। पौत्रम्[17]। सुष्ठु। वर्धमानम्[18]। तमसो निर्गमयितारम्[19]। वर्षणशीलप्रहरणः[20]। अहेः[21]। क्रोधम्[22], क्रोधो ह्यहेः शुष्णो भूत्वाजायत एवंविधम्[23]। शुष्णमसुरम्[24]। वज्रेण[25]। वज्री। निजघानेति[26]।

त्वं चि॑दस्य॒ क्रतु॑भि॒र्निष॑त्तमम॒र्मणो॑ वि॒ददि॑दस्य॒ मर्म॑।
यदीं॑ सुक्षत्र॒ प्रभृ॑ता॒ मद॑स्य॒ युयु॑त्सन्तं॒ तम॑सि ह॒र्म्ये धाः॥ ५॥

त्वं चित्। निषत्तशब्द आवासवचनः[27], शुष्णासुरस्य[28]। तम्[29]। निषत्तं[30] तमसि स्थितमिन्द्रः। प्रजाभिः[31]।

---

१. निःशेषेणावधीत् Sy.
२. असहायः Sy.
३. प्रतिद्वन्द्विरहितः Sy.
४. मन्यमान आत्मानं यः अस्तीति शेषः Sy.
५. ०देहेः D. वृत्रात् Sy.
६. अन्तरम् P.
तदानीम् Sy.
७. असुरः शुष्णः Sy.
८. ज्येष्ठ D. अजनिष्ट is suggested for अजष्ट॥ प्रादुरभूत् Sy.
९. प्रवृद्धतरः Sy.
१०. VM. ignores इन्द्रः।
११. उष्ण० D.
१२. तं च वृत्रं जघानेति शेषः Sy.
१३. प्राणिनाम् Sy.
१४. D. and P. add मदान्तनोदकेन after उदकेन॥ अन्नेन Sy.
१५. मदन्त P.,D. मोदमानं सर्वप्राणिनामन्नं स्वयमेव भुञ्जानम् Sy.
१६. महः P. सेचनसमर्थस्य मेघस्य Sy.
१७. पातारं रक्षितारम्। अत्र नपाच्छब्दः पातरि वर्तते 'प्राणो वै तनूनपात्स हि तन्वः पाति' (AB.2.4.) इति ब्राह्मणम् Sy.
१८. प्रवृद्धम् Sy.
१९. P. and D. add वर्षणशीलं after निर्गमयितारम्॥ तमोऽन्धकारं गच्छन्तम् Sy.
२०. वर्षणशीलस्य मेघस्य प्रहर्ता Sy.
२१. दनुजस्य वृत्रस्य Sy.
२२. क्रो D. अत्र क्रोधवाचिभामशब्देन क्रोधादुत्पन्नः शुष्णासुरो लक्ष्यते। तं शुष्णासुरम् Sy.
२३. ०तेवं० D.
२४. स्वकीयेनायुधेन Sy.
२५. वजिन् P. वज्रवानिन्द्रः Sy.
२६. ०घातेनेति P.
हतवान् Sy.
२७. ०न D. The passage, निषक्त.... वचनः should immediately follow तमसि स्थितम् and precede इन्द्रः।
२८. वृत्रस्य Sy.
२९. त्यत्तदेव। लिङ्गव्यत्ययः Sy.
३०. त सिषत्तं P. निषक्तं D. निषण्णम् Sy.
३१. प्रज्ञानैः हे इन्द्र! त्वम् Sy.

अविन्दत्[1]। तथा गूढमर्मणः[2]। अपि[3]। शुष्णस्य। मर्म चाविदत्[4]। अथ प्रत्यक्षः—यदा[5]। एनं शुष्णम्[6]। युयुत्सन्तम्[7]। हे सुबल[8]! सोममदस्य[9]। प्राद्भावे[10]। हरणशीले[11]। तमसि। निहितवान्[12] अस्योत्तरा[13] भूयसे निर्वचनाय।

त्वं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम्।
तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान॥ ६॥

त्वं चित्[14]। तम्[15]। चित्[16]। इत्थम्[17]। 'कत्पयं[18] सुखपयसं[19] सुखमस्योदकम्[20]' इति यास्कः, तम्। शयानम्[21]। असूर्ये[22]। तमसि[23]। वर्धमानम्। तम्[24]। चित्[25]। सुतेन[26] सोमेन। तृप्यन्[27]। तमुच्चैः[28]। आयुधमपगूर्य[29]। हतवानिति[30][31]।

---

१. अज्ञासीः Sy.
२. गूढमर्मणो मर्मणः P.,D. मर्महीनमात्मानं मन्यमानस्य Sy. ३. एव Sy.
४. र्मं P. प्राणस्थानम्। यत्र स्थाने विद्धो म्रियते तन्मर्मेत्युच्यते Sy.
५. P. reads ददह् for अविदत्। अथ।
६. वृत्रम् Sy.
७. योद्धुमिच्छन्तम् Sy.
८. सुमल P.,D. हे सुबल! इन्द्र! त्वम् Sy.
९. मादकस्य सोमस्य Sy.
१०. प्रभृतौ प्रभरणे सति Sy.
११. हारके Sy.
१२. न्यदधाः। वृत्र इन्द्रस्य भयात्तमसि प्राविशदित्यर्थः Sy.
१३. अस्यन्योत्तरा P.
१४. गातुर्नामात्रेयस्तस्यार्षम् SKN. गातुर्नामात्रेयस्तस्येदमार्षम् Dur.
१५. त्यमिति मेघस्य निर्देशस्तच्छब्दसमानार्थः। त्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः SKN. तं मेघम् Dur.
१६. एव वृत्रम् Sy. चिदेवार्थे। यं पश्यति त्यं तमेव SKN.
१७. अमुत्रान्तरिक्षलोके Sy. अमुत्रान्तरिक्षे SKN. अमुना प्रकारेण, अथवा—अमुष्मिन्नन्तरिक्षलोके Dur. १८. कल्पयं D.
१९. ०सः P.,D. कत् सुखकरं पयो यस्य तम् Sy. सुखं पयो यस्य तं मेघम् SKN. सुखोदकम्। ....एवमत्रेन्द्रो जघानेति, अनेन सम्बन्धात् —'कत्पयः—सुखपयो मेघः' इत्युपपद्यते, तस्य वधस्याभीष्टत्वात् Dur.
२०. N.6.3. reads सुखमस्य पयः।
२१. अप्सु शयनं कुर्वन्तम् Sy. शयतिरत्र स्थानार्थः। आमाशयो जलाशय इति यथा। तिष्ठन्तमित्यर्थः SKN.
२२. सूर्यरहिते Sy. यत्रे मेघेन सूर्यस्य गमनं कृतं तेनाच्छादितत्वात् सूर्यो यत्र न दृश्यते तदसूर्यं तमस्तस्मिन् SKN. असूर्य तमश्च कृत्वा Dur. २३. अन्धकारे Sy.
२४. तं चित् इति पुनर्वचनं पूरणार्थम् Sy. तृतीयार्थैषा द्वितीया। तच्छ्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। येन यज्ञा उपकल्प्यन्ते तेन सोमेन SKN.
२५. चित् पदपूरणः SKN.
२६. अभिषुतेन सोमेन Sy. सुतस्य, तृतीयार्थे षष्ठ्येषा, सुतेनाभिषुतेन सोमेन SKN. अभिषुतस्य सोमस्य स्वमंशं पीत्वा Dur.
२७. मोदमानः Sy. तृप्तः सन् SKN. मन्दमानः Dur. २८. ऊर्ध्वम् Sy.
२९. ०र्या P. वज्रमुद्यम्य Sy. किम्? सामर्थ्याद् वज्रम् उद्यम्य SKN. वज्रम् अवगूर्य Dur.
३०. अवधीत् Sy. तेन....हतवान् हन्ति वा SKN. य एवंगुणयुक्त इन्द्रः सोऽस्माकमिदं नाम करोत्वित्येवमाशीर्योज्या Dur.
३१. VM. ignores वृषभः and इन्द्रः॥ कामानां वर्षिता Sy. वृषभो वर्षिता SKN. Dur. N. 6.3., SKN. II.393.,394

उद्यदिन्द्रो॑ महते दा॑नवाय॒ वध॒र्यमि॑ष्ट सहो॒ अप्र॑तीतम् ।
यदीं॒ वज्र॑स्य॒ प्रभृ॑तौ द॒दाभ॒ विश्व॑स्य ज॒न्तोर॑ध॒मं च॑कार ॥ ७ ॥

उद्यत् । महते[1] । सूर्याय[2] । यदा । उदयच्छत् । आयुधम्[3] । शत्रूणां सहनशीलम्[4] । अप्रतिगतम्[5] । यदा च । एनम्[6] । वज्रस्य । प्रहरेण[7] । हिंसितवान्[8] । तदानीमेनं[9] सर्वस्य । प्राणिजातस्य[10] । अधः[11] । चकार[12] निम्ने[13] प्राक्षिपदिति[14] ।

त्यं चि॒दर्णं॑ मधु॒पं शया॑नमसि॒न्वं व॒व्रं मह्याद॑दु॒ग्रः ।
अ॒पाद॑म॒त्रं म॑ह॒ता व॒धेन॒ नि दु॑र्यो॒ण आ॑वृणङ्मृ॒ध्रवा॑चम् ॥ ८ ॥

त्यं चिदर्णम् । त्यम्[15] । चित्[16] । उदकं प्रति[17] । शयानम्[18] । उदकस्य पातारम्[19] । अबन्धनम्[20] । वारकम्[21] । महान्तम्[22] । अभक्षयत्[23] । इन्द्रः[24] । अपादम्[25] । भक्षणशीलम् । महता[26] । वज्रेण । दुर्योणाख्ये[27] देशे । न्यवृणग्[28] इन्द्रः । परुषवाचम्[29] ।

---

१. प्रभूताय Sy.
२. असुराय is suggested for सूर्याय ॥ वृत्रासुराय Sy.
३. आयधं P. वज्रम् Sy.
४. शत्रूणामभिभवितृ Sy.
५. ०लेमप्रतिगदं P. केनाप्यप्रतिगतम् Sy.
६. वृत्रम् Sy.
७. प्रहरणे is suggested for प्रहरेण ॥ प्रहृतौ प्रहरणे सति । प्रभृतौ—'हृग्रहोर्भः' इति भत्वम् Sy.
८. अहिंसीत् Sy.
९. तदा Sy.
१०. प्राणिनः Sy.
११. नीचम् Sy.
१२. अकरोत् Sy.
१३. प्रक्षि० P.
१४. VM. ignores इन्द्रः and दानवाय ॥ दानवाय वृत्रासुराय Sy.
१५. तम् Sy.
१६. एव वृत्रम् Sy.
१७. गन्तारं जलं मेघं वावृत्य Sy.
१८. शयनं कुर्वन्तम्, स्थितवन्तमित्यर्थः Sy.
१९. मधुनोऽम्भसः पातारं पालयितारम् Sy.
२०. असिन्वं सपत्नानवक्षेप्तारम् । अस्यतेरिदं रूपम् Sy.
२१. पार० D. वृण्वन्तं सर्वमप्याच्छादयन्तम् । 'स इमांल्लोकानवृणोद्यदिमांल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम्' (TS. 2.5.2.2.) इति हि तैत्तिरीयकम् Sy.
२२. आददौ, प्रत्यग्रहीत् Sy.
२३. उद्गूर्णबलः Sy.
२४. पादरहितम् Sy.
२५. अमत्रम् अमात्रं परिमाणरहितम् Sy. It reads अमत्रम् for अत्रम् of the text.
२६. प्रभूतेन Sy.
२७. दुर्यणा० P., D. तदनन्तरमिन्द्रः सङ्ग्रामे Sy.
२८. न्यावृणन् P. न्यावृणद् D. नितरामहिंसीत् । 'तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदुज्जिहाताम्' (TS. 2.5.2.4.) इति तैत्तिरीयकम् Sy.
२९. हिंसितवागिन्द्रियम् । जृम्भाभिभूतमित्यर्थः Sy.

**को अ॒स्य॒ शु॒ष्मं॒ तवि॑षीं वरात॒ एको॒ धना॑ भरते॒ अप्र॑तीतः ।**
**इ॒मे चि॒दस्य॒ ज्रय॑सो॒ नु दे॒वी इन्द्र॒स्यौज॑सो भि॒यसा॑ जिहाते ॥ ६ ॥**

**को अस्य** । इन्द्रस्य[1] । शोषकम्[2] । तेजो बलं च । वारयितुं[3] शक्नोति । सोऽयमसहायः । एव । शत्रुधनानि[4] । आहरति[5] । अप्रतिगतः[6] । द्यावापृथिव्यौ । इन्द्रस्य[7] । वेगात्[8] । क्षिप्रम् । देव्यौ[9] । बलाच्च[10] । भयेन[11] । कम्पेते[12] इति वेगबलयोर्भयात् कम्पनमिति[13][14] ।

**न्य॑स्मै दे॒वी स्वधि॑तिर्जिहीत॒ इन्द्रा॑य गा॒तुरु॑श॒तीव॑ येमे ।**
**सं यदोजो॑ यु॒वते॒ विश्व॑माभि॒रनु॑ स्व॒धाव्ने॑ क्षि॒तयो॑ नमन्त ॥ १० ॥**

**न्यस्मै** । इन्द्राय । देवनशीलम्[15] । आयुधम्[16] । स्वयमेव हस्तं प्रति निगच्छति[17] । तथेन्द्राय । पृथिवी[18] । स्वयमेवात्मानं नियत्[19] । यथा कामयमाना स्त्री[20] पुरुषाय । किं चासौ सर्वम्[21] । आत्मीयं बलम् । क्षितिभिः[22] । सम्मिश्रयति[23] । ततः[24] । अस्मा अन्नवते[25] । ताः प्रजाः[26] । प्रह्वीभवन्ति[27][28] ।

---

१. इन्द्रस्य सम्बन्धिनीम् Sy.
२. शुष्मं शोषणाम् । शुष्मशब्दस्य स्त्रीलिङ्गविशेषणत्वेऽपि नियतलिङ्गत्वात् पुंल्लिङ्गत्वमेव Sy.
३. पार० D.
निवारयेत् Sy.
४. शत्रूणां वसूनि Sy.
५. बिभर्ति हरते वा Sy.
६. केनाप्यप्रतिगत इन्द्रः Sy.
७. इन्द्रस्य सम्बन्धिनः Sy.
८. वेगवतः Sy.
९. द्योतमाने Sy.
१०. बलाद् उद्भूतेन Sy.
११. भयेन Sy.
१२. कम्पते D. गच्छतः । चलत इत्यर्थः Sy.
१३. को पिन० D.
१४. VM. ignores कः and इन्द्रस्य ।
१५. द्योतमाना द्यौः Sy.
१६. ०ध P. स्वधृतिः स्वेन धृता Sy.
१७. नीचत्वेन याति Sy.
१८. भूमिः Sy.
१९. यथेष्टमात्मानं विनियोक्तुं योग्या भवतीत्यर्थः Sy.
२०. योषिदिव Sy.
२१. समस्तम् Sy.
२२. प्रजाभिः Sy.
२३. संयोजयति । इन्द्रः स्वकीयं बलं सर्वासु प्रजासु निहितवानित्यर्थः Sy.
२४. VM. seems to explain अनु as ततः ॥ आनुकूल्येन वर्तमानाः Sy.
२५. बलवत इन्द्राय Sy.
२६. मनुष्याः Sy. क्षितय इति मनुष्यनाम Ngh. 2.3.
२७. सन्नमन्ति प्रह्वीभवन्ति Sy.
२८. VM. ignores यत् ॥ यदेन्द्रः Sy.

**एकं नु त्वा सत्पतिं पाञ्चजन्यं जातं शृणोमि यशसं जनेषु ।**
**तं मे जगृभ्र आशसो नविष्ठं दोषा वस्तोर्हवमानास इन्द्रम् ॥ ११ ॥**

एकं नु[1]। एकम्[2]। एव। त्वाम्। सतां पतिम्[3]। पञ्चजनहितम्[4]। जातम्[5]। शृणोमि[6]। यशस्विनम्[7]। जनेषु[8] त्वमेक एवैवंविधो[9] जात इत्यर्थः। तं त्वाम्। मह्यमित्यर्थः[10]। स्तुत्यम्[11]। स्वीकुर्वन्ति[12]। आशंसितार[13] ऋत्विजः रात्रौ[14]। अह्नि[15] च। स्तुतिभिराह्वयन्तः[16]। इन्द्रम्।

**एवा हि त्वामृतुथा यातयन्तं मघा विप्रेभ्यो ददतं शृणोमि ।**
**किं ते ब्रह्माणो गृहते सखायो ये त्वाया निदधुः काममिन्द्र ॥ १२ ॥**

एवा हि। एवम्[17]। हि। त्वा। काले काले। शत्रून्[18] घ्नन्तम्। तद्धनानि[19] च। स्तोतृभ्यः। ददतम्[20]। शृणोमि[21]। तुभ्यम्[22]। ब्राह्मणाः[23]। ते सखायः[24]। गृह्णते[25] तुभ्यं प्रदानाय किमाददत इत्यर्थः। ये विप्राः। त्वत्कामनया[26]। प्रजापश्वादिकं[27] काममात्मनि। निदधुः[28]। इन्द्रेति[29][30]।

व्याख्यत् प्रथममध्यायं चतुर्थस्याष्टकस्य सः।
जजान यो जह्नुकुले[31] लौहित्यो[32] माधवाह्वयः॥

---

१. हे इन्द्र ! Sy.
२. मुख्यम् Sy.
३. पालकम् Sy.
४. पञ्चजनेभ्यो मनुष्येभ्यो हितम् Sy.
५. उत्पन्नम् Sy.
६. शृणोमि ऋषिमुख्येभ्यः Sy.
७. यशन्यं P.
   यशोयुक्तम् Sy.
८. सर्वेषु मनुष्येषु मध्येऽहं मन्त्रद्रष्टा Sy.
९. ०कमेवैं० P.
१०. ०त्य D. मे मदीयाः प्रजाः Sy.
११. अतिशयेन स्तुत्यम् Sy.
१२. गृह्णन्तु । स्वीकुर्वन्तु Sy.
१३. आशसितारं P., D.
    कामानां शंसमानाः Sy.
१४. क्षपायाम् Sy.
१५. वासरे च Sy.
१६. स्तुवन्तः Sy.
१७. उक्तप्रकारेण Sy.
१८. शत्रुं P. जन्तून् प्रेरयन्तम् Sy.
१९. मघानि धनानि Sy.
२०. यच्छन्तम् Sy.
२१. निशामयामि । एतन्मृषैव प्रतिभाति Sy.
२२. त्वदीयाः Sy.
२३. ०णः P., D. बृहन्तः Sy.
२४. स्तोतारः Sy.
२५. त्वत्तः किं गृह्णते । ऋषिः स्वकीयाभिलाषप्राप्तिविलम्बनादेवमुक्तवानित्यर्थः Sy.
२६. त्वयि Sy.
२७. स्वकीयाभिलाषम् Sy.
२८. न्यक्षिपन् Sy.
२९. हे इन्द्र ! Sy.
३०. Ms. D. puts the figure ॥३२॥ here to indicate the end of the thirty-second hymn. No such number is given in P.
३१. जुकुले P. जुहुकुले D.
३२. ०त्ये P.

# अथ चतुर्थाष्टके द्वितीयोऽध्यायः ॥[१]

महिं महे तवसे[२] ऽथ[३] व्याचिख्यासति माधवः ।
समासविषये वाच्यमादितः सम्प्रदर्शयन् ॥१॥
समास उपसृष्टानां निवर्तन्ते विभक्तयः ।
विस्पष्टमभिधानाय निर्दिश्यन्ते पुनश्च ताः ॥२॥
'द्रविणोदा[४] द्रविणसः', 'ता[५] सोमं सोमपातमा[६]' ।
'गवां गोपतिः[७]' इत्येवं न तु ते पादपूरणाः ॥३॥
उपादातुमशक्योऽयं[८] प्रत्ययः प्रकृतिं विना ।
ततोऽन्येन गतार्थापि[९] प्रकृतिः सम्प्रयुज्यते ॥४॥
'वसोरिन्द्रं वसुपतिं[१०]' 'पुरूतमं पुरूणां[११]' च ।
'रथीतमं रथीनां[१२]' च[१३] पादाश्चात्र[१४] निदर्शनम् ॥५॥
'वाजेभिर्वाजिनीवती[१५]' वाजेभिरिति पूरणम्[१६] ।
युक्तान्नैर्बहुभिः सेयं यज्ञं वष्टु धियावसुः ॥६॥
नन्वत्र विग्रहः सोऽयमस्त्यस्या वाजिनीति यः ।
तृतीयान्तस्य सम्बन्धः पुंल्लिङ्गस्य[१७] च तत्र कः ॥७॥

---

१. This line is supplied by the Editor.
२. RV. V.33.1.
३. ०वसोऽथ R.
४. ०दाः P.,D.
५. RV. I.15.7.
६. ०माः D. RV. I.21.1.
७. RV. I.101.4.
८. ०पादोयमं० P.,D.
९. ०र्थंपि D.
१०. RV. I.9.9.
११. ०णां D. RV. I.5.2.
१२. RV. I.11.1.
१३. रथिनातमं पञ्च P. रथीनातमञ्च D.
१४. पादास्तत्र R.
१५. ०नीपती P. RV. I.3.10.
१६. ०णः R.
१७. पुल्लिङ्गस्य P.,D.,R.

तस्मादन्नैरस्मदीयं हविर्भूतैः सरस्वती ।
वहतामिति मन्त्रार्थो[1] नत्वन्नैरन्नवतीति[2] ॥८॥
किमत्र तव वक्तव्यं 'त्वं सो[3]म क्रतुभिः[4]' इति ।
किं वेह तव वाच्यं स्याद् 'यज्ञेभिर्यज्ञवाहसम्[5] ॥९॥
तर्ह्येवं विग्रहः कार्यो वाजिनीभिः समन्विता[6] ।
या सा वाजिनीवतीति तृतीयान्तस्तथान्वितः ॥१०॥
क्रतुभिर्युक्तः[7] सुक्रतुर्[8]बहुव्रीहेश्च विग्रहः ।
नत्वस्य सन्ति क्रतवस्तृतीयाश्च तथान्विताः ॥११॥
क्रतवो यस्य सन्तीति योऽयं लौकिकविग्रहः ।
स विस्पष्टाभिधानाय सत्त्वमात्रं[9] ह्यपेक्षितम्[10] ॥१२॥
अन्वयो[11] वाजशब्देन[12] पुंल्लिङ्गेनापि[13] सिध्यति[14] ।
वाजेभिरिति पुंल्लिङ्गं[15] तथा सति न दुष्यति ॥१३॥
यद्वान्नवत्त्वं[16] बहुभिः कृतमन्नैस्तथा[17] सति ।
'वृषा वृषत्वेभिः[18]' इति समीचीनो भविष्यति ॥१४॥
'गोभिर्वपावान् मधुना[19] तत्र स्पष्टं प्रतीयते[20] ।
कृतं[21] गोभिर्वपावत्त्वं[22] गोभिरेवान्नवानिति ॥१५॥

---

१. ०न्त्रोर्थो D.
२. ०न्नैर० P. ३. से P. सो D.
४. RV. I.91.2.
५. ०वासं P. RV. VIII.12.20.
६. समीवता P.
७. ०क्त D.
८. P. and D. add इति after सुक्रतुः ।
९. सं त्वमा० D. सन्त्वमा० P.
१०. ०ग्रमपे० R.
११. अन्वायो P. १२. चश० P.
१३. पुंलिगोपि सि० D. पुल्लि० R.
१४. सिद्ध्य० R.
१५. पुंल्लि P.,R. १६. यद्वन्नाव० P.
१७. क्रतुम० R. १८. RV. I.91.2.
१९. ०पा माधुना D. ०पान्माधुना P. VS. 20. 37.
२०. ०तिय० D.
२१. Omitted by P. क्रतोः R.
२२. ०त्वं P., D.

'यज्ञेभिर्यज्ञवाहसं सोमे'भिः सोमपातमम्' [1][2] ।
यज्ञैर्यज्ञस्य वोढा यो [3] यज्ञवाहा भवेदिति ।।१६।।
'अश्विना यज्वरीः' [4] अस्यां प्रत्ययार्थं विनिर्दिशन् [5] ।
[6] चनशब्दमुपादत्ते सन्त्यन्येऽपि च तादृशाः ।।१७।। इति।।

V.33.

**महि महे तवसे दीध्ये नॄनिन्द्रायेत्था तवसे अतव्यान् ।**
**यो अस्मै सुमतिं वाजसातौ स्तुतो जने समर्यश्चिकेत ।। १ ।।**

[7] महि महे । संवरणः प्राजापत्यः ।।[8] मम महते । बलाय [9] । अत्यन्तम् [10] । तीक्ष्णीकरोमि [11] । कर्मणो नेतॄन् [12] ऋत्विजः । इन्द्राय । इद्धम् [13] । वृद्धाय [14] कर्म कर्तुम् । अहमवृद्धः [15] । यः [16] । अस्मै स्तोत्रे । सङ्ग्रामे [17] । स्तुतः सन् । जनानां [18] मध्ये । मरुद्भिः सहागत्य [19] । सुमतिम् । प्रज्ञापयति [20] ।

**स त्वं न इन्द्र धियसानो अर्कैर्हरीणां वृषन्योक्त्रमश्रेः ।**
**या इत्था मघवन्ननु जोषं वक्षो अभि प्रार्यः सक्षि जनान् ।। २ ।।**

स त्वं नः । सः [21] । त्वम् । अस्माकम् [22] । स्तोत्रैः [23] । इन्द्र ! प्रीयमाणः [24] । अश्वानाम् [25] । योक्त्रम् [26] ।

---

१. ०भिय० P.
२. RV. VIII.12.20.
३. P.D. read उह्यमानैर्यो for यज्ञैर्यज्ञस्य वोढा वो ।
४. ०रीत्यस्यां R. RV. I.3.1.
५. ०दिशेत् R.,P. ६. चनः० R.
७. तत्रात्रेः पञ्चमे मण्डले तृतीयेऽनुवाके द्वादश सूक्तानि । तत्र 'महि महे' इति दशर्चं प्रथमं सूक्तम् । प्रजापतिपुत्रः संवरणाख्य ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । तथा चानुक्रान्तम्—'महि दश प्राजापत्यः संवरणः' (KSA. 26. 33. p. 20.)। विनियोगो लैङ्गिकः Sy. ८. अहं संवरणः Sy.
९. बलवते Sy. १०. महत् प्रभूतं स्तोत्रम् Sy.
११. दीपयामि प्रकाशयामि Sy.
१२. नॄन्—षष्ठ्यर्थे द्वितीया मनुष्याणामस्मदीयानाम्। यद्वा नॄनस्मद्विरोधिनामभिभवायेति शेषः Sy. १३. इत्थम् is suggested for इद्धम् ।। वक्ष्यमाणप्रकारेण Sy.
१४. बलाय तदर्थं तवसेऽस्मद्बलाय Sy.
१५. अत्यन्तमिव दुर्बलः सन् Sy. १६. इन्द्रः Sy.
१७. वाजस्यान्नस्य वा लाभे निमित्ते सति Sy.
१८. जने जनाय संवरणाय Sy.
१९. मर्त्यैः स्तोतृभिः सहितो यद्वा सह म्रियमाणैर्युध्यमानैर्मरुदादिभिरथवा समरार्हैः Sy.
२०. जानाति Sy. २१. प्रसिद्धः Sy.
२२. अस्मान् Sy. २३. अर्चनसाधनैः स्तोत्रैर्निमित्तभूतैः Sy. २४. ध्यायन् Sy.
२५. रथे नियोज्यानामश्वानाम् Sy.
२६. नियोजनरज्जुम् Sy.

रथयुगैः समयोजयः[1]। युक्त्वा वाश्वान्[2] याहि[3]। इत्थम्। मघवन्! सेव्यं[4] मां प्रति। अभिवह[5] चास्मदीयान्। जनान्। स्वामी सन्[6] तान्। प्रसक्षि[7] च सचिः[8] सेवाकर्मेति[9]।

**न ते त इन्द्राभ्य१स्मदृष्वायुक्तासो अब्रह्मता यदसन्।**
**तिष्ठा रथमधि तं वज्रहस्ता रश्मिं देव यमसे स्वश्वः ॥ ३ ॥**

**न ते।** दर्शनीय[10]! इन्द्र! तव[11]। तेऽश्वाः[12]। न[13]। अस्मान्[14]। अभ्यागच्छन्ति[15]। यस्मादस्माकम्[16]। स्तोत्रवर्जिततया[17]। रथेऽयुक्ताः[18]। अभवन्[19]। सम्प्रति स्तोत्रे क्रियमाणे वज्रहस्त[20]! तम्[21]। रथम्। अधितिष्ठ। यं[22] चाश्वानां रश्मिमागमनार्थम्[23]। आयच्छ[24]। देव! शोभनाश्वस्त्वमिति।

**पुरू यत्त इन्द्र सन्त्युक्था गवे चकर्थोर्वरासु युध्यन्।**
**ततक्षे सूर्याय चिदोकसि स्वे वृषा समत्सु दासस्य नाम चित् ॥ ४ ॥**

**पुरू यत्[25]।** पणिभिरपहृतेषु[26] गोषु तज्जयार्थमङ्गिरोभिः प्रयुक्तानि बहूनि[27]। स्तोत्राणि[28]। यदा। तव। भवन्ति[29]। यदा[30] च पणिनां[31] तेषु तेषु क्षेत्रेषु[32] प्रविश्य। युद्धं कुर्वन्[33]। अङ्गिरसो गवे[34]। कृतवानसि[35]। तदानीं

---

१. ०य P. आश्रयसि Sy.
२. वा is used in the sense of च i.e. aggregation N. 1. 4, 5.
३. यहि P. याहि seems to be the explanation of याः ॥ याः लिङ्गव्यत्ययः। यानकान् Sy.
४. जोषं प्रीतिम् Sy.
५. VM. seems to explain अनु with जोषम् and अभि with वक्षः but Sy. explains अनु with वक्षः and अभि with प्रसक्षि ॥ अनु वक्षः अवहः। तैर्निमित्तैर्योक्त्रमश्वैरिति Sy.
६. अस्मदरीन् Sy.
७. आभिमुख्येन प्रकृष्टं पराभव Sy.
८. समिः P. सचि D.
९. VM. ignores वृषन् ॥ हे वर्षक! Sy.
१०. हे महन्! Sy.
११. त्वदीयाः Sy. १२. ते नराः Sy.
१३. न भवन्ति Sy.
१४. अस्मत्तस्त्वद्भक्तेभ्योऽन्ये Sy.
१५. अतोऽस्मद्यज्ञम् अभि आगन्तुम् Sy.
१६. यद् ये Sy.
१७. ०र्जितयो P. ब्रह्म परिवृढं कर्म तद्रहितत्वात् Sy.
१८. त्वयाऽसंयुक्ताः Sy.
१९. आसन् अभवन् Sy.
२०. हे वज्रहस्त! इन्द्र! Sy.
२१. प्रसिद्धम् Sy.
२२. ०धिष्ठिताय चा० P. ०धिष्ठाय चा० D.
२३. त्वं यं रथमारोढुं प्रग्रहम् Sy.
२४. नियमयसि तमधितिष्ठ Sy.
२५. पुरु यव D. २६. पा० P.
२७. स्वभूतानि पुरूणि बहूनि Sy.
२८. उक्थानि शस्त्राणि Sy.
२९. सन्ति Sy.
३०. यदो D.
३१. पाणीनां P. वाणिनां D.
३२. सस्योपेतासु भूमिषु निमित्तभूतासु Sy.
३३. युक्तं P. जलप्रतिबन्धकान् संहरन् Sy.
३४. वृष्ट्युदकाय Sy.
३५. करोषि भेदनम् Sy.

सूर्याय[१] । स्वे[२] । स्थाने स्थिराय । असुरैरुत्पादितेन तमसावृता[३] प्रकाशार्थं[४] तक्षणं कृतवानसि[५] । इन्द्रः[६] सेक्ता[७] । युद्धेषु[८] । दासस्य[९] उपक्षपयितुरस्य । नमयिता[१०] । च[११] । उत्तरार्धः परोक्षः ।[१२]

**वयं ते तं इन्द्र ये च नरः शर्धो जज्ञाना याताश्च रथाः ।**
**आस्माञ्जगम्यादहिशुष्म सत्वा भगो न हव्यः प्रभृथेषु चारुः ॥ ५ ॥**

**वयं ते** । वयम्[१३] । ते भवामः । तव[१४] । ये । चास्मदीयाः । योद्धारः[१५] । त्वदीयं वेगम्[१६] । जानन्तः[१७] । अस्मदीया रथाः[१८] सङ्ग्रामं प्रति । गताः[१९] । चासन् । तथा सतीन्द्र ! अस्मान् । आगच्छतु[२०] । अहेः[२१] शोषक ! शत्रूणां सदानं[२२] बलम् । भाग्यम्[२३] । इव । ह्वातव्यम्[२४] । सङ्ग्रामेषु[२५] । कल्याणमिति[२६] ।

**पपृक्षेण्यमिन्द्र त्वे ह्योजो नृम्णानि च नृतमानो अमर्तः ।**
**स न एनीं वसवानो रयिं दाः प्रार्यः स्तुषे तुविमघस्य दानम् ॥ ६ ॥**

**पपृक्षेण्यम्**[२७] । भीरूणां संसेव्यम्[२८] । इन्द्र ! त्वयि[२९] । हि । ओजः[३०] । बलानि[३१] । च[३२] विद्यन्ते । स त्वं कर्मसु नर्तनशीलः[३३] । अमरणधर्मा । स त्वम् । श्वेतां[३४] निर्मलाम् । रयिम्[३५] । अस्मभ्यम् । देहि । हे वासयितः[३६] !

---

१. सूर्यस्य Sy.
२. स्व P. स्वकीये Sy.
३. ०वृताय, going with सूर्याय or वृतेः gen. sing. is suggested for वृता ।
४. प्रकात्थं P.
५. सम्पादयसि Sy.
६. निन्द्रः P.
७. वर्षिता सन् Sy.
८. सङ्ग्रामेषु Sy.
९. वृष्टिप्रतिबन्धकर्तुरेतन्नामकस्यासुरस्य Sy.
१०. नामापि ततक्षे नाशयसीत्यर्थः Sy.
११. चिद् अपि Sy.
१२. VM. ignores इन्द्र ।
१३. वयं स्मः Sy.
१४. त्वदीयाः Sy.
१५. नरः कर्मणां नेतार ऋत्विग्यजमानाः Sy.
१६. बलम् Sy.
१७. उत्पादयन्तः स्तुतिभिः Sy.
१८. रंहणशीलाश्च Sy.
१९. होतुं त्वां प्राप्ताश्च Sy.
२०. इन्द्रानाग० D. इन्द्रनाग० P. आगच्छेत् Sy.
२१. हेः P.,D. अहिरयनात् । सर्वतो व्याप्तबलेन्द्र ! त्वदनुग्रहात् Sy.
२२. सदानवं is suggested for सदानं ॥ भृत्यादिः Sy.
२३. भग इव हव्यश्चारुः । भगदेवो यथास्मत्सहाय आगच्छति तथा भृत्यादिरागच्छेत् Sy.
२४. स्तुत्यः प्रतिभटैराह्वातव्यो वा Sy.
२५. सङ्ग्रामेषु यज्ञेषु वा Sy.
२६. सङ्गन्ता Sy.
२७. पवृक्षे० D. ववृषेण्यम् P.
२८. सम्पर्कार्हं पूज्यं वा Sy.
२९. खलु । त्वदधीनमित्यर्थः Sy.
३०. बलम् Sy.
३१. नृम्णानि नृमणानि द्रविणानि Sy.
३२. वक्ष्यमाणरय्यपेक्षया चशब्दः Sy.
३३. नृत्यन् Sy.
३४. शेतां P. एतवर्णां श्वेतवर्णाम् Sy.
३५. धनम् Sy.
३६. आच्छादयन् स्वतेजसा जगत् Sy.

स्तोतृणाम् । प्रकर्षेणाहं स्तौमि । स्तोता मानामीश्वरः[1] । बहुधनस्य[2] तव । दानम् ।

**एवा नं इन्द्रोतिभिरव पाहि गृणतः शूर कारून् ।**
**उत त्वचं ददतो वाजसातौ पिप्रीहि मध्वः सुषुतस्य चारोः ॥ ७ ॥**

**एवा नः ।** एवम् । अस्मान् । इन्द्र ! रक्षणैः[3] । अव सुरक्ष[4] । स्तुवतः[5] । शूर ! स्तोतॄन्[6] । अपि च । सङ्ग्रामे शत्रुभ्यः । आत्मीयं त्वचम्[7] । ददतः प्रदर्शयतो मम[8] । सुष्ठु सुतेन[9] । चारुणा[10] । सोमेन[11] त्वम् । पिप्रीहि[12] । धारणकर्मा वा ददतिः[13], त्वचं बिभ्रत इति[14] ।

**उत त्ये मां पौरुकुत्स्यस्य सूरेस्त्रसदस्योर्हिरणिनो रराणाः ।**
**वहन्तु मा दश श्येतासो अस्य गैरिक्षितस्य क्रतुभिर्नु सश्चे ॥ ८ ॥**

**उत[15] त्ये ।** अपि च । अमी[16] । माम्[17] । पुरुकुत्सपुत्रस्य[18] । त्रसदस्योर्मम[19] साहाय्यार्थमागतस्य । प्राज्ञस्य[20] । युक्ता अश्वाः[21] । माम्[22] । रममाणा भवन्ति[23] । तेषाम्, वहन्तु[24] । दश[25] । श्वेतवर्णाः[26] । त्रसदस्योः स्वभूताः । किं चाहम्[27], गैरिक्षितस्य[28] सहायस्य । कर्मभिः[29] । क्षिप्रम् । सक्तो भवामि[30] ।

---

१. **मा** means 'wealth' '**इन्दिरा लोकमाता मा क्षीरोदतनया रमा**' Amara '**मः शिवे मा रमायां च**' Viśva. **मानामीश्वरः** would mean 'lord of wealth'. It seems to be the explanation of **अर्यः** ॥ **अहं च अर्यः ईश्वरस्य** Sy.

२. **प्रभूतधनस्य** Sy.

३. ०**णैः** P. ४. **पालय** Sy.

५. ०**वन्तः** P. ६. **कर्तॄनृत्विजः** Sy.

७. **आच्छादकं रूपम्** Sy.

८. **प्रयच्छतः** Sy.

९. **सुष्ठु तेन** P. **सुष्ठु तो** D. **सुष्ठ्वभिषुतस्य** Sy.

१०. ०**णं** P. D. **मनोहरस्य** Sy.

११. **सोमस्य** Sy.

१२. **प्रीणयात्मानम् । द्वितीयार्थे षष्ठी । उक्तलक्षणं सोमं पिबेत्यर्थः । अथवा तृतीयार्थे षष्ठी । उक्तलक्षणेन सोमपानेन प्रीणय** Sy.

१३. ०**ति** P.

१४. The passage, **धारण . . बिभ्रतः**, refers to **ददतः**, therefore it should immediately follow **प्रदर्शयतो मम** and precede **सुष्ठु सुतेन** ।

१५. **त्रसदस्युश्च विदथो ध्वन्यश्चेति त्रयो नृपाः । अश्वान्धनानि गाश्चादुर्ऋषये तद्वदत्यृषिः ॥** Sy. १६. **ते** Sy.

१७. **माम्—चतुर्थ्यर्थे द्वितीया । मह्यमित्यर्थः** Sy.

१८. **मरुतश्वस्य** P. **पुरुत्सपु०** D. **पुरुकुत्सापत्यस्य** Sy.

१९. **रसदस्यन्योः** P. **एतन्नामकस्य राजर्षेः** Sy.

२०. **प्रेरकस्य** Sy.

२१. **अश्वाः** seems to be the explanation of **हिरणिनः**, i.e. horses swift like deer ॥ **हिरण्यवतः** Sy. २२. **मार** D.

२३. **रातेर्दानार्थस्य कर्मणि लिटः कानचि रूपम् । दत्ता इत्यर्थः** Sy. २४. **प्रापयन्तु** Sy.

२५. **दश अश्वाः** Sy.

२६. **श्येत०** P. **शुभ्रवर्णाः** Sy.

२७. ०**हं** D.

२८. **गिरिक्षितगोत्रोत्पन्नस्य** Sy.

२९. **अहं च कर्मभी रथनियोजनादिभिर्यज्ञादिभिर्वा** Sy. ३०. **गच्छेयम्** Sy.

उत त्ये मा मारुताश्वस्य शोणाः क्रत्वामघासो विदथस्य रातौ ।
सहस्रा मे च्यवतानो ददान आनूकमर्यो वपुषे नार्चत् ॥ ९ ॥

उत त्ये । अपि च । ते[1] । माम् । मारुताश्वस्य[2] राज्ञः सम्बन्धिनः । शोणाः[3] । विदथमिति[4] ।[5]

उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः ।
मह्ना रायः संवरणस्य ऋषेर्व्रजं न गावः प्रयता अपि ग्मन् ॥ १० ॥

उत त्ये । अपि च । ते[6] । मा । ध्वन्यस्य[7] । लक्षणवतो राज्ञः[8] । पर्याप्ताः[9] । शोभनदीप्तयः । यतमाना[10] अश्वा वहन्तु । तेऽमी[11] संवरणस्य । ऋषेर्मम[12] । धनस्य । महत्त्वेन[13] हेतुना[14] । व्रजम्[15] । इव[16] । गावः । अपि । ग्मन्[17] । मम सङ्गता आसन् । साहाय्यार्थं राजभिः प्रहिता[18] अश्वा इति ।[19]

---

१. अश्वा वक्ष्यमाणाः Sy.
२. मरुत्सदृशवेगाश्ववान् मरुताश्वः । तदपत्यस्य Sy.
३. शोणवर्णाः Sy.
४. The reading, विदथमिति, is doubtful. विदथमिति can be suggested in its place, but in that case विदथम् would be the paraphrase of विदथस्य ॥ विदथस्य एतन्नामकस्य राज्ञः Sy.
५. It appears that a part of the commentary on this stanza is accidentally omitted by the scribe due to the phenomenon of omissio ex homoeoteleuto. VM. ignores क्रत्वामघासः । रातौ । सहस्रा । मे । च्यवतानः । ददानः । आनूकम् । अर्यः । वपुषे । न and आर्चत् ॥ क्रतुना कर्मणा शीघ्रगमनादिलक्षणेन माहनीया अश्वाः । दाने विनियुक्ताः । मां वहन्तीति शेषः । सहस्राणि अपरिमितानि धनानि । पूज्यस्य । मे, चतुर्थ्यर्थे षष्ठी, पूज्याय मह्यम् । च्यावयन् प्रयच्छन् सः । आभरणम् । स्वशरीरालङ्काराय । प्रायच्छत् । न इति चार्थे Sy.
See my Introduction to the Nirukta, Oxford university press, 1920, and Preface to my edition of the Sanskrit text of the Nirukta, p. 13.
६. वक्ष्यमाणा रायः Sy.
७. ध्वनस्य D.
ध्वन्यनामकस्य Sy.
८. लक्ष्मणपुत्रस्य राज्ञः सम्बन्धिनोऽश्वाः Sy.
९. मां प्राप्ताः Sy.
१०. वहनाय यतमानाः Sy.
११. मे P.
१२. ऋषिर्मम P.
१३. ममहत्त्वेन P. ०त्वेन D.
१४. P. adds देवता before हेतुना ॥ महत्त्वेन युक्ताः Sy.
१५. गोष्ठम् Sy.
१६. यद्वा नेति चार्थे । गावश्च मम व्रजमपि ग्मन् । अत्रैन्द्रे सूक्ते 'प्रायेणैन्द्रे मरुतां राज्ञां च दानस्तुतयः' (Anu. 2.22.) इत्युक्तत्वाद्राज्ञां दानस्तुतिरविरुद्धा Sy.
१७. गताः प्राप्ताः । मद्गृहमिति शेषः Sy.
१८. संहता P. दत्ताः सत्यः Sy.
१९. Ms. D. puts the figure ॥३३॥ here to indicate the end of the thirty-third hymn. No such number is given in P.

V.34.

**अजा॑तशत्रुम॒जरा॒ स्व॑र्वत्य॒नु॑ स्व॒धामि॑ता द॒स्ममी॑यते ।
सु॒नोत॑न॒ पच॑त॒ ब्रह्म॑वाहसे पुरु॒ष्टुता॑य प्रत॒रं द॑धातन ॥ १ ॥**

**अजातशत्रुम्** । अविद्यमानशत्रुम्[1] । दर्शनीयम्[2] । अजरा[3] । सुखवती[4] । महती[5] । स्वधा हविर्लक्षणमन्नम्[6] । अनुगच्छति[7] । तथा सति सुनोतन सोमम्[8] । पचत च पक्तव्यानि[9] । स्तोत्रं यस्य वाहकम्,[10] इन्द्राय[11] । पुरुष्टुताय[12] तस्मै[13] । प्रकर्षेण[14] च । दत्त[15] च तानि ।

**आ यः सोमे॑न ज॒ठर॒मपि॑प्र॒तामं॑न्दत म॒घवा॒ मध्वो॒ अन्ध॑सः ।
यदीं॑ मृ॒गाय॒ हन्त॑वे म॒हाव॑धः स॒हस्र॑भृष्टिमु॒शना॑ व॒धं यम॑त् ॥ २ ॥**

**आ यः सोमेन** । आपूरयत्[16] । यः । सोमेन[17] । उदरम्[18] । मत्त आसीत्[19] । स इन्द्रः । मधुसदृशेन[20] । सोमेन[21] । यत्[22] । एनम्[23] । मृगासुरस्य[24] । हननाय[25] । महाप्रहरणः[26] । उशना[27] । सहस्रधारम्[28] । वधम् आयुधम्[29] । इन्द्राय,[30] आयच्छत्तदेति[31] ।

---

१. 'अजातशत्रुम्' इति नवर्चं द्वितीयं सूक्तं प्राजापत्यस्य संवरणस्यार्षमैन्द्रम् । नवमी त्रिष्टुप् । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः (KSA. 12.13. P.5.) । 'अजातशत्रुं नव त्रिष्टुबन्तम्' (KSA. 26.34.p.,20.) इत्यनुक्रमणिका । विनियोगो लैङ्गिकः Sy.

२. अनुत्पन्नाः शातयितारो यस्य तम् Sy.

३. शत्रूणामुपक्षपयितारम् Sy.

४. अक्षीणा Sy.

५. स्वरणवती Sy.

६. अपरिमिता Sy.

७. ०विल० D. अन्नं हविः Sy.

८. अनुप्राप्नोति Sy.

९. तदर्थं हे ऋत्विजः ! अभिषुणुत Sy.

१०. वक्त० D.
पुरोडाशादिकम् Sy.

११. वाहम् P. ब्रह्मणः परिवृढस्य स्तोत्रस्य वाहकाय Sy.

१२. पुष्टु० P. बहुभिः स्तुतायेन्द्राय Sy.

१३. तस्मै should immediately follow स्तो० वाहकम् and precede इन्द्राय ।

१४. Omitted by P. प्रकृष्टतरम् Sy.

१५. धारयत स्वस्वोचितकर्म Sy.

१६. सर्वतः अपूरयत् Sy.

१७. यां P.

१८. ०नादर P. जठरं स्वकीयम् Sy.

१९. मर्त P., D. अतृप्यत् Sy.

२०. मधुररसस्य Sy.

२१. सोन P., D.
सोमस्य पानेन Sy.

२२. यदा Sy.

२३. ०न P., D. अयम् Sy.

२४. एतन्नामकायासुराय Sy.

२५. तं हन्तुम् Sy.

२६. महावज्रः Sy.

२७. कामयमानः शत्रुं यद्वोशनसा सह Sy.

२८. अपरिमिततेजाः Sy.

२९. वज्रम् Sy.

३०. इन्द्र P.

३१. उदयच्छत् तदापिप्रत अमन्दत च Sy.

**यो अ॑स्मै घ्रं॒स उ॒त वा॑ य ऊध॑नि॒ सोमं॑ सु॒नोति॑ भव॑ति द्यु॒माँ अह॑ ।**
**अपा॑प श॒क्रस्त॑त॒नुष्टि॑मूहति त॒नूशु॑भ्रं म॒घवा॒ यः क॑वास॒खः ॥ ३ ॥**

[1]यो अस्मै । [2]यः । [3]इन्द्राय । अहनि । [4]सोमम् । सुनोति । [5]यः । [6]वा रात्रौ । [7]स [8]दीप्तिमान् । [9]एव । [10]भवति । अपोहति । [11]शक्रः । [12]ततनुष्टिं ततस्य धर्मसन्तानस्य दाहकं धर्मसन्तानादपेतम् । [13]तनूनां [14]शोभयितारम-

---

१. संवरण इन्द्रं तुष्टाव जगत्या । अच्छावाकमध्यंम-पर्याये जागतं सूक्तम् । 'अजातशत्रुमिति जाग-तस्येति' सूत्रम् (SSS. 9.14.3.) DDN. संवरणस्य प्रजापतेः पुत्रस्यार्षम् SKN. प्राजा-पत्यस्य संवरणस्यार्षम् Dur.

२. यजमानः Sy., DDN., SKN.

३. घ्रंसे गृह्यन्तेऽस्मिन् रसा इति घ्रंसः । तस्मिन् Sy. अहनि DDN. घ्रंस इति पठ्यमानस्य निर्वचनार्थं उपक्षेपः । रसा अवश्याया आदि-त्येन SKN. घ्रंसे—ग्रस्यन्तेऽस्मिन् रसाः सूर्येण Dur. घ्रंस इत्यहर्नाम Ngh.6.19.

४. सोमाभिषवं करोति DDN. सर्वदा यजत इत्यभिप्रायः SKN. अभिषुणोति, नित्यकालमेव यः सोमाभिषवे प्रयतत इत्यर्थः Dur.

५. उत वा अथवा Sy.

६. उद्धततरं भवत्युन्नद्धमिति वोधो रात्रिः । स्नेह-प्रदानरसाभ्यामूधसि रात्रौ च समत्वाद्रात्रि-रप्यूध उच्यते । अहनि रात्रौ च Sy. रात्रौ अहोरात्रयोरित्यर्थः DDN. रात्रौ.... रात्रिशब्दनिर्वचनार्थं प्रसिद्धं तावदाह गोरूधः, प्रसवकालेऽङ्गान्तरेभ्य उच्छ्रिततरं भवति । यद्वा उपश्लिष्टमुद्धृतमुद्धृतमिव केनचित् । ततः स्नेहरसानुप्रदानसामान्याद्रात्रिरप्यूध उच्यत इति निर्वचनार्थं उपक्षेपः पठ्यमानस्यैव SKN. गोरूधः, उद्धततरमिति शब्दसारूप्यप्रसक्तम् । तद्धि, अन्येभ्योऽङ्गेभ्य उद्धततरं भवति । उपोन्नद्धमिति वा, तद्धि विज्ञायते केनचिदुप-श्लिष्य गोरुदरे नद्धमिति । 'स्नेहानुप्रदान-सामान्याद्रात्रिरप्यूध उच्यते' सापि ह्यवश्या-यानोषधिवनस्पतिस्नेहकान्दधाति Dur.

७. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः, सः SKN. तस्य किमिति ? स एव Dur.

८. ऐश्वर्ययुक्त इत्यर्थः SKN.

९. अहेति पदपूरणो विनिग्रहार्थीयो वा, एवार्थे । भवत्येव दीप्तिमान् SKN. निश्चयेन Dur. अह इति विनिग्रहार्थीयः N.1.5.

१०. अपोहित P. 'प्रसमुपोदः पादपूरणे' (Pa. 8. 1.6.) इत्येवमेतच्छान्दसत्वादपशब्दस्यापि पा-दपूरणे द्विर्वचनम् । अपोहति सर्वतोऽपनयति विनाशयतीत्यर्थः SKN. उपसर्गाभ्यासदर्श-नादूहतेरप्यभ्यास आदरार्थं कृतः । पुनः पुन-रपोहति नाशयतीत्यर्थः Dur.

११. शक्र P. शक्र शक्रः D. शक्तोऽयमिन्द्रः Sy. समर्थोऽयमिन्द्रः DDN. अन्यस्तु.. .शक्त इन्द्रः SKN. शक्त इन्द्रः Dur.

१२. तदद्रुष्टं P. ततद्रुष्टं D. ततं धर्मसन्ततिं नुदति वष्टि कामयते कामा-निति ततनुष्टिः । तम् Sy. धर्मसन्तानादपेतम् DDN.

१३. ०पेदं P. ततो नुन्नधर्ममिन्द्रियविषयभोगसन्ता-नकामं वा SKN. अथ पुनरितो यो विपरीतो भवति, पूर्वैश्च पूर्वतरैश्च....अनुष्ठितताद-पेतं तम् । अलं कर्मभिरित्येवंवादिनम्, अय-जनशीलमात्ममण्डनपरं वा विषयोपभोगपर-तया स्ववित्तं तितनिषुम् । अनेकैः प्रकारैर्यो वित्तानि तनितुमिच्छति तमश्रद्दधानं धर्मे । एवमत्र ततनुष्टिशब्देन विषयोपभोगप्रधान उच्यते शब्दार्थविरोधादित्युपपत्तेः Dur.

१४. ०नामशोदयि० P. ०नामशोभयि० D. तनूः शुभ्रा शोभनीया अलंकारादिभिर्यस्य तम् । तादृशं स्वपोषकमयज्वानम् Sy. DDN.

लङ्करिष्णुम्[1] । इन्द्रः[2] । यः[3] । कुत्सितः[4] सखा न यजते तमिति[5] ।

**यस्यावधीत्पितरं यस्य मातरं यस्य शक्रो भ्रातरं नात ईषते ।**
**वेतीद्वस्य प्रयता यतंकरो न किल्बिषादीषते वस्व आकरः ॥ ४ ॥**

यस्यावधीत् । अयमिन्द्रः[6] । यस्य[7] । पित्रादीन्[8] । अवधीत्[9] पापकारिणः । तस्मात्[10] । न । पलायते[11] । वेति, इत्[12] कामयते[13] एव । अस्य । अपि । प्रत्तानि[14] हवींषि । यमनकरः[15] शत्रूणाम् । न । पुरातनात् पितृवधादिकात् किल्बिषात्[16] । पलायते[17] । धनस्य[18] । आकरः[19] ।[20]

१. स्वस्यास्तन्वाः स्रगनुलेपनादिभिः शोभयितारम् । ... ततनुष्टिशब्दार्थप्रदर्शनमलङ्करिष्णुमित्यादि । तनुं शोभयितारमिति पाठः SKN. ततनुष्टेरेवैतद् विशेषणम् Dur.
२. धनवान् Sy.
धनस्वामी इन्द्रः Dur.
३. यश्चान्योऽपि Dur.
४. कुत्सितपुरुषसहायस्तमपोहतीति Sy. ...परित्यजति कवासख इति 'कवर्दुधान्यमिथुन०' (RPR.9.8.) इति दीर्घः DDN.
कुशब्दस्यायं 'कवञ्चोष्णे' (Pa.6.3.107.) इति सखिशब्दे कवादेशश्छान्दसत्वाद् द्रष्टव्यः । कुसखा स्वयं भोगप्रवृत्तः । दृष्टप्रसाधनसखायोऽपि तस्य भोगप्रधाना एव न यागशीला इत्यर्थः SKN. कपूयसखो भवति तमप्यपोहति ।....अवश्यम्भावी तस्य हि विनाश इत्यभिप्रायः । केचित्तु कवासखशब्दं तनूशुभ्रविशेषणमेव वर्णयन्ति । इतरो विषयप्रधानोऽपि भूत्वा साधुसम्पर्कात् कदाचित् प्रत्यापद्येत, इतरस्त्वसाधुसम्पर्कादत्यन्तनष्ट एवेत्यनेनाभिप्रायेण Dur.
५. VM. explains अप once and ignores उत ॥
अपरोऽपशब्दः पूरणः Sy. आदरार्थमभ्यासः DDN. घ्रंस इत्यहर्नाम । ग्रस्यन्तेऽस्मिन् रसाः। गोरूध उद्धततरं भवति । उपोन्नद्धमिति वा । स्नेहानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते । स योऽस्मा अहन्यपि वा रात्रौ सोमं सुनोति भवत्यह द्योतनवान् । अपोहत्यपोहति शक्रः । तितनिषुं धर्मसन्तानादपेतमलङ्करिष्णुमयज्वानम् । तनूशुभ्रं तनूशोभयितारम् । मघवा यः । कवासखो यस्य कपूयाः सखायः N.6.19., SKN. II.459.
६. शक्तोऽयम् Sy.
७. अयज्वनः Sy.
८. आदि refers to मातरं and भ्रातरम् ॥ पितरम् । यस्य च मातरमवधीत् । यस्य च भ्रातरमवधीत् Sy.
९. हतवान् Sy.
१०. यस्मादयज्वनः सकाशात् Sy.
११. बिभेति गच्छति वा Sy.
१२. P. D. read सुनोति चेत् for वेति इत् ।
१३. ०य D. अयज्वानं शिक्षयित्वा नियोजयतीत्यर्थः Sy.
१४. प्रदत्तानि हवींषि Sy.
१५. ०नकाः P. D. यमनकर्ता Sy.
१६. किद्विषात् P. कित्विषात् D. पित्रादिवधयुक्तात् Sy.
१७. चलति बिभेति वा । इन्द्रस्यास्तोतॄणां हतिः, 'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्, अन्तरिक्षे पौलोमान् पृथिव्यां कालकाञ्ज्यानरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छम्' इत्यादिश्रुतिषु प्रसिद्धा Sy.
१८. वसुनः धनस्य Sy.
१९. आभिमुख्यकर्ता यः Sy.
२०. VM. explains वस्व once only.

न प॒ञ्चभि॑र्द॒शभि॑र्वष्ट्या॒रभं॒ नासु॑न्वता सचते॒ पुष्य॑ता च॒न ।
जि॒नाति॒ वेद॑मु॒या हन्ति॑ वा॒ धुनि॒रा दे॑व॒युं भ॑जति॒ गोम॑ति व्र॒जे ॥ ५ ॥

**न पञ्चभिः** । अयमिन्द्रः पञ्चभिः । दशभिः[1] पञ्चदशभिर्वा कर्मभिः[2] । पुरुषमारब्धुम्[3] । न । इच्छति[4] । किन्तु सुन्वन्तमेवारभत[5] इत्याह पुष्टेन[6] । अपि । न । असुन्वता[7] । सङ्गतो भवतीति[8] । हिनस्ति[9] । वा[10] । अमुमसुन्वन्तम्[11] । हन्ति । वा । कम्पयिता[12] शत्रूणाम् । देवकामं[13] पुनः । गोमति । व्रजे[14] । प्रवेशयति[15] ।[16]

वि॒त्व॒क्ष॒णः सम्‌ऋ॑तौ च॒क्रमा॑स॒जोऽसु॑न्वतो॒ विषु॑णः सु॒न्व॒तो वृ॒धः ।
इन्द्रो॒ विश्व॑स्य दमि॒ता वि॒भीष॑णो यथाव॒शं न॑यति॒ दास॒मार्यः॑ ॥ ६ ॥

**वित्वक्षणः**[17] । विविधमसाधूनां तनूकरणकारी[18] । सङ्ग्रामे । आयुधस्यासक्ता[19] सोऽयम् । असुन्वतः[20] । पराङ्मुखः । सुन्वतः[21] । वर्धयिता । इन्द्रः । विश्वस्य शत्रोः । दमयिता[22] । भयङ्करः[23] । आत्मीयानुगुणम्[24] । करोति[25] । स्वामी[26] ।

समीं॑ प॒णेर॑जति॒ भोज॑नं मु॒षे वि दा॒शुषे॑ भजति सू॒नरं॒ वसु॑ ।
दु॒र्गे च॒न ध्रि॑यते॒ विश्व॒ आ पु॒रु जनो॒ यो अ॑स्य॒ तवि॑षी॒मचु॑क्रुधत् ॥ ७ ॥

**समीम्**[27] । पणेः[28] सकाशात् । पशून्[29] । इन्द्रः[30] । समजति[31] बलात् । आहर्तुम्[32] । आहृत्य च दाशुषे[33] ।

---

१. ०भि D.
२. पञ्चभिर्दशभिः वा सहायैः Sy.
३. आरभम् आरम्भं शत्रुहननायालम्बनम् Sy.
४. इच्छन्निति P. साहाय्यं नापेक्षत इत्यर्थः । यद्वा अमुमिन्द्रं पञ्चभिर्दशभिर्वा यज्ञादन्यैरुपायैरारभम्, आरब्धुमुद्योगं कर्तुं न वष्टि न कामयते Sy. ५. ०रभवत P.
६. बन्ध्वादीनपोषयतापि Sy.
७. अभिषवमकुर्वता सह Sy.
८. सङ्गच्छते । असुन्वन्तमभिषवमकुर्वाणमयष्टारमपुष्णन्तं च (न) प्राप्नोतीत्यर्थः Sy.
९. न केवलमप्राप्तिमात्रम् किन्तु बाधते Sy.
१०. वाशब्दश्चार्थे Sy. ११. अयष्टारम् Sy.
१२. कम्पकः Sy. १३. देवमिन्द्रं कामयमानं यजमानम् Sy. १४. व्राजे P.
१५. योजयतीत्यर्थः Sy. १६. VM. ignores इत् ॥ इदिति पूरणः Sy. १७. वी० P.
१८. ०नु० P. विशेषेण तनूकर्ता शत्रूणां तदर्थम् Sy.
१९. रथचक्रस्यासञ्जयिता Sy.
२०. ०न्तः P. D. अयजमानस्य Sy.
२१. यजमानस्य Sy. २२. दमिता D. शिक्षयिता Sy.
२३. भयजनकः Sy. २४. यथेच्छम् Sy.
२५. नयति स्ववशम् Sy. २६. VM. ignores दासम् ॥ दासं दासकर्माणं जनम् Sy.
२७. संवरणो जगत्या इन्द्रं तुष्टाव DDN.
२८. पर्णे P. वर्णे D. वणिज इव लुब्धकस्यादातुः Sy. वणिज इव लुब्धकस्यायजमानस्य DDN.
२९. धनमन्नं वा गृहे धनम् Sy. भोजनं तनेति धननाम Ngh.2.10. ३०. अयमिन्द्रः Sy.
३१. ०जनि P.D. सम्यगगच्छति Sy. सम्यगगच्छति 'अज गतौ' । गत्वा च तस्य पणेर्धनमपहृत्य DDN. ३२. चोरयितुम् Sy. DDN.
३३. गत्वा चादाय हविर्दात्रे यजमानाय Sy. हविर्दत्तवते यजमानाय DDN.

विभजति[1]। शोभननृयुक्तम्[2]। धनम्[3]। किं च यः[4]। जनः। अस्य[5]। बलम्। क्रोधयति[6]। स विश्वः[7]। अपि[8] शत्रुजन इन्द्रेण। पुरूणि[9]। दुर्गेणाध्रियते[10] कष्टे[11] स्थाने[12] तं प्रवेशयतीति।

**सं यज्जनौ सुधनौ विश्वशर्धसाववेदिन्द्रो मघवा गोषु शुभ्रिषु।**
**युजं ह्यन्यमकृत प्रवेपन्युदीं गव्यं सृजते सत्वभिर्धुनिः॥ ८॥**

सं यत्[13]। यदा। द्वौ मनुष्यौ। शोभनधनौ[14]। परिपूर्णबलौ[15]। शोभावत्सु[16]। गोषु निमित्तेषु। सङ्ग्रामे[17] संयुक्तौ जानाति[18]। तदानीं तयोरन्यं[19] यजमानम्। आत्मना युक्तम्[20]। कृणोति[21]। प्रवेपनवानिन्द्रः[22]। कृत्वा च तस्य[23] गोसङ्घम्[24]। शत्रुत उदाजति[25]। बलैः[26]। उत्क्षेपणशीलः[27][28]।

---

१. विशेषेण ददाति DDN.

२. शोभनमनुष्यम् Sy. शोभनैर्नरैरुपेतम् DDN.

३. अयष्टुर्धनमाकृष्य यष्ट्रे प्रयच्छतीत्यर्थः Sy. DDN.

४. योऽयष्टा जनः DDN.

५. इन्द्रस्य Sy.

६. विहिताकरणादिना तस्य पणेरजतीति पूर्वशेषः यद्वा योऽस्य तविषीमचुक्रुधत् स सर्वोऽपि जनो दुर्गे चनाध्रियत इन्द्रेण Sy. विहिताकरणादिनाऽचुक्रुधत् DDN.

७. सर्वोऽपि ? (अ)दातृजनः Sy. सर्वः अयष्टा जनः DDN.

८. चनेत्येकपदमध्येतृसम्प्रादयप्राप्तम् Sy. चनेति पादपूरणः। तस्मादयष्टारं निर्धनं कृत्वा इन्द्रो यष्टारं धनिनं करोतीति भावः DDN.

९. पुरुणि loc. sing. as an attributive of दुर्गे is suggested for पुरूणि॥ न केवलं वणिग् धनप्रदानमात्रम्, पुरुणि Sy. किन्तु पुरूणि DDN.

१०. दुर्गे is suggested for दुर्गेण॥ दुःखेन गन्तव्य आपद्यपि Sy. महति दुःखे आपद्यपि DDN.

११. अध्रि० P. आस्थाप्यते Sy. DDN.

१२. स्नाने P.

१३. सु D.

१४. परस्परप्रतिद्वन्द्विनौ Sy.

१५. ०र्णा बलौ P.
व्याप्तबलौ बहूत्साहौ वा Sy.

१६. शोभनासु गोषु निमित्तभूतासु Sy.

१७. ०म P.

१८. सञ्जानाति Sy.

१९. यष्टारम् Sy.

२०. सहायम् Sy.

२१. कृतवान् Sy.

२२. शत्रूणां प्रवेपनवान् Sy.

२३. अस्मै Sy.

२४. गोसमूहम् Sy.

२५. उत्सृजते Sy.

२६. मरुद्भिः सह Sy.

२७. बलेरुक्षे० P. मेघानां कम्पयिता इन्द्रो यजमानमयजमानं वायं जानाति गोर्निमित्तं ज्ञात्वा यज्वने गोसमूहं प्रयच्छतीत्यर्थः Sy.

२८. VM. ignores इन्द्रः, मघवा and हि॥ मघवा धनवानिन्द्रः Sy.

**स॒ह॒स्र॒सामा॑ग्निवेशिं गृणी॒षे शत्रि॑मग्न उप॒मां के॒तुम॒र्यः ।**
**तस्मा॒ आपः॑ सं॒यतः॑ पीपयन्त॒ तस्मि॑न्क्ष॒त्रम॑मवत्त्वे॒षम॑स्तु ॥ ६ ॥**

सहस्रसाम्[1] । अग्ने[2] ! त्वमिन्द्रम् । सहस्रस्य दातारम्[3] । यजमानानां सम्भक्तारम्[4] । वदसि[5] । शत्रूणां शातयितारम्[6] । उपमानभूतं वीराणाम् । केतुभूतम्[7] । अर्यस्त्वम्[8] । तस्मा इन्द्राय[9] । आपः[10] । सङ्गताः[11] स्वांशम्[12] । आप्याययन्ति[13] । तस्मिन्निन्द्रे[14] । बलम्[15] । सहाययुक्तम्[16] । दीप्तं[17] च । अस्त्विति[18] ।

V.35.

**यस्ते॒ साधि॑ष्ठोऽवंस॒ इन्द्र॒ क्रतु॒ष्टमा भ॑र ।**
**अ॒स्मभ्यं॑ चर्षणी॒सहं॒ सस्नि॒ वाजे॑षु दु॒ष्टर॑म् ॥ १ ॥**

यस्ते[19] ॥ प्रभूवसुराङ्गिरसः[20] ॥ यः । तव । साधयितृतमः[21] । रक्षणाय[22] । इन्द्र ! क्रतुर्भवति[23] । तम्[24] ।

---

१. ०साः P.
अग्निवेशिसुतं शत्रिमसंख्यातधनप्रदम् ।
आशास्त ऋषिरन्त्यर्चा प्रजापतिसुतः सुधीः ॥
Sy., DDN.
संवरणस्त्रिष्टुभा शत्रिं तुष्टाव DDN.
२. अङ्गनादिगुणविशिष्टेन्द्र ! Sy. हे अग्ने ! DDN.
३. अपरिमितधनप्रदम् Sy., DDN.
४. अग्निवेशिसुतम् Sy., DDN.
५. गृणे स्तौमि Sy. स्तौमि कीदृशं तम् ? DDN.
६. शत्रिमेतन्नामकं राजर्षिम् Sy., DDN.
७. प्रज्ञापकम् । प्रख्यातमित्यर्थः Sy. प्रज्ञापकम् । प्रख्यातम् DDN. केतः केतुरिति प्रज्ञानामनी Ngh. 3.9. ८. अर्यः अहम् Sy.
९. तस्मै शत्रये DDN.
१०. कः P. आवः D.
११. ०ता P., D. सम्यग् गच्छन्त्यःSy., DDN.
१२. स्वाशम् P. १३. ०न्ती P. प्यायन्ताम् Sy., DDN. १४. राज्ञि Sy.
१५. धनम् Sy., DDN. क्षत्रं भग इति धननाम Ngh. 2.10.
१६. ०क्त D. बलसहितम् Sy., DDN.
१७. दीप्तियुक्तमस्तु । इति शत्रेः कीर्त्तिस्तिष्ठेदित्युक्तम्—
उक्तञ्च—
काये पातिनि का रक्षा यशो रक्ष्यमपाति यत् ।
नरः पतितकायोऽपि यशसा सोऽपि धार्यते ॥
DDN. १८. Ms. D. puts the figure ॥३४॥ here to indicate the end of the thirty-fourth hymn. No such number is given in P.
१९. 'यस्ते साधिष्ठः' इत्यष्टर्चं तृतीयं सूक्तम् । अङ्गिरोगोत्रः प्रभूवसुर्नाम ऋषिः । अन्त्या पङ्क्तिः । पङ्क्त्यन्तपरिभाषया शिष्टा अनुष्टुभः । इन्द्रो देवता । 'यस्तेऽष्टौ प्रभूवसुराङ्गिरसः पङ्क्त्यन्तम्' (KSA.26.35. p.20.) इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः । आभिप्लविकेषूक्थ्येषु तृतीयसवने आद्यस्तृचोऽच्छावाकस्य वैकल्पिकोऽनुरूपः । सूत्रितञ्च 'यास्ते साधिष्ठोऽवसे पुरां भिन्दुर्युवा कविः' (ĀSS.7.8.) इति । द्वितीयातृतीययोः स्वरसाम्नोश्चाद्यौ तृचावनुरूपौ । 'यस्ते साधिष्ठोऽवस इति षळनुष्टुभः' (ĀSS. 8.5.) इति हि सूत्रितम् Sy.
२०. ०रानिरसं P. ०राङ्गिरसं D.
२१. अतिशयेन साधकः Sy. २२. अस्मद्रक्षणाय Sy. २३. क्रतुभिर्भ० P. उक्तलक्षणं कर्म प्रज्ञा वास्ति Sy. २४. क्रतुम् Sy.

आहर । अस्मभ्यम् । मनुष्याणामभिभवितारम्[1] । सम्भजनशीलम्[2] । सङ्ग्रामेषु । दुस्तरम्[3] । क्रतुः[4] कर्म[5] ।

**यदिन्द्र ते चतस्रो यच्छूर सन्ति तिस्रः ।**
**यद्वा पञ्च क्षितीनामवस्तत्सु न आ भर ॥ २ ॥**

**यदिन्द्र**[6] । इन्द्र ! यत्[7] । तव । चतस्रः[8] । रक्षाः[9] । सन्ति । यदि वा[10] । तिस्रः[11] । यत् । वा[12] । पञ्च[13] । स्तोतॄणामर्थाय । तत् सर्वम् । अस्मभ्यम् । सुष्ठु[14] आहर बह्वृचस्तव रक्षाः[15] सन्ति सर्वास्ता[16] अस्मासु कुर्विति[17][18] ।

**आ तेऽवो वरेण्यं वृषन्तमस्य हूमहे ।**
**वृषजूतिर्हि जज्ञिष आभूभिरिन्द्र तुर्वणिः ॥ ३ ॥**

**आ तेऽवः** । आह्वयामहे[19] । तव । रमणीयम् । रक्षणम्[20] । कामानामतिशयेन वर्षितुः[21] । त्वं हि[22] । वर्षितृवेगः[23] । आभवनशीलैर्मरुद्भिः[24] सह । प्रादुर्भवसि[25] । क्षिप्रकारी[26][27] ।

**वृषा ह्यसि राधसे जज्ञिषे वृष्णि ते शवः ।**
**स्वक्षत्रं ते धृषन्मनः सत्राहमिन्द्र पौंस्यम् ॥ ४ ॥**

**वृषा ह्यसि** । वर्षिता[28] । हि[29] । असि[30] । धनाय[31] च । प्रादुर्भवसि[32] । वर्षणशीलम्[33] । तव । बलम् ।

---

१. सर्वेषां मनुष्याणामभिभवितारम् Sy.
२. ०ल P. संस्नातं शुद्धम् Sy.
३. अन्यैरनभिभाव्यम् Sy.
४. ०तु D.
५. ०र्मः P., D. The passage, क्रतुः कर्म should immediately follow क्रतुर्भवति and precede तम् ।
६. ०द्रः P.,D.
७. या ऊतयः Sy.
८. चतुर्षु वर्णेषु संश्रिताः Sy.
९. रक्षणः P. रक्षणम् Sy.
१०. याश्च Sy.
११. त्रिषु लोकेषु वर्तमानाः Sy.
१२. वाशब्दश्चार्थे Sy.
१३. पञ्चजनसम्बन्धिन्य ऊतयः सन्ति Sy.
१४. Omitted by P.
१५. रक्षाणि P.
१६. सर्वस्मः P. १७. कुर्वति P.
१८. VM. ignores शूर ।
१९. आह्वयामः Sy.
२०. रक्षणं गमनं वा Sy.
२१. फलानां वर्षकतमस्य Sy.
२२. खलु Sy.
२३. ०तुवे० P. वर्षणगमनः Sy.
२४. सर्वतो भवद्भिर्व्याप्तैर्मरुद्भिः Sy.
२५. उत्पादयसि, तेऽव आह्वयाम इति । यद्वा वृषगमनः सन् यस्माद्यज्ञमागत्य फलं जज्ञिषे तस्मात्तेऽवो हूमह इति Sy.
२६. ०रि P. तुर्वणिः तूर्णवनिर्हिंसको वा त्वम् Sy.
२७. VM. ignores इन्द्र ।
२८. फलस्य वर्षकः, यद्वा वृषा Sy.
२९. खलु Sy.
३०. वर्षिता । हि । असि are omitted by P.
३१. यजमानानां समृद्धये धनार्थम् Sy.
३२. उत्पद्यसे Sy.
३३. वर्षितृ Sy.

नथा स्वभूतबलम्[1] । धृष्टम्[2] । तव । मनः । बलं[3] च । सत्यमेवाहन्तृ[4] ।[5]

त्वं तमिन्द्र मर्त्यममित्रयन्तमद्रिवः ।
सर्वरथा शतक्रतो नि याहि शवसस्पते ॥ ५ ॥

त्वं तमिन्द्र । त्वम् । तम् । इन्द्र ! मनुष्यम्[6] । शत्रूयन्तम्[7] । वज्रिन्[8] ! सर्वरथैस्त्वदीयैः[9] । अभिगच्छ[10] । शतकर्मन्[11] ! बलस्य । पते[12] !

त्वामिद्वृत्रहन्तम जनासो वृक्तबर्हिषः ।
उग्रं पूर्वीषु पूर्व्यं हवन्ते वाजसातये ॥ ६ ॥

त्वामित् । त्वाम् । एव । अतिशयेन वृत्रस्य[13] हन्तः[14] ! जनाः[15] । छिन्नबर्हिषः[16] । उद्गूर्णम्[17] । पूर्वीणामपि[18] । पूर्व्यं[19] प्रजानाम् । युद्धार्थम्[20] । हवन्त[21] इति ।

अस्माकमिन्द्र दुष्टरं पुरोयावानमाजिषु ।
सयावानं धनेधने वाजयन्तमवा रथम् ॥ ७ ॥

अस्माकम् । अस्माकम् । इन्द्र ! शत्रुभिर्दुस्तरम्[22] । सङ्ग्रामेषु[23] । पुरो गन्तारम्[24] । सह गच्छन्तम्[25] । धने[26] धने । अन्नमिच्छन्तम्[27] । रथम्[28] । रक्ष ।

---

१. स्वायत्तबलम् Sy.
२. धर्षकं विरोधिनाम् Sy.
३. हे इन्द्र ! ते पुंस्त्वम् Sy.
४. सत्येमेवाहनूः P. सङ्ग्रहन्तृ Sy.
५. VM. ignores इन्द्र ।
६. मर्त्यम् Sy.
७. शत्रुत्वमाचरन्तं शत्रुं वेच्छन्तम् Sy.
८. वर्ज्रिन् D. हे वज्रवन्निन्द्र ! Sy.
९. सर्वत्र व्याप्तेन रथेन । 'सुपां सुलुक्०' इत्याकारः Sy.
१०. नितरां गच्छाभिभवितुम् । Sy.
११. तत P. हे शतक्रतो ! Sy.
१२. पालक ! Sy.
१३. हे अतिशयेन शत्रूणां हन्तः ! इन्द्र ! Sy.
१४. हननात् P. हः D.
१५. Omitted by P. जनान् D.
१६. आच्छादितदर्भाः । प्रवृत्तयज्ञा इत्यर्थः Sy.
१७. उद्गूर्णबलम् Sy.
१८ बह्वीषु प्रजासु मध्ये Sy.
१९. पूर्वस्य P. पुरातनं सन्तम् Sy.
२०. सङ्ग्रामाय Sy.
२१. हन्तवन्त P. आह्वयन्ते Sy.
२२. Omitted by P.
दुःखेन तरणीयम् Sy.
२३. P. adds भवसि वर्षणशीलं तव बलं तथा before सङ्ग्रामेषु । It is a part of the commentary on RV. V. 35.4.
२४. पुरतो मिश्रयितारम् Sy.
२५. अनुचरैः सह गन्तारम् Sy.
२६. धनं P. सर्वेषु धनेषु Sy.
२७. सङ्ग्रामं धनं वेच्छन्तम् Sy.
२८. रथं रंहणस्वभावं वा पुत्रम् Sy.

अस्माकमिन्द्रेहि नो रथमवा पुरंध्या ।
वयं शविष्ठ वार्यं दिवि श्रवो दधीमहि दिवि स्तोमं मनामहे ॥ ८ ॥

अस्माकम् । अस्मदर्थम्[1] । इन्द्र ! आगच्छ । अस्मदीयम्[2] । रथम् । रक्ष । प्रज्ञया[3] । वयम् । बलवत्तम[4] ! दीप्ते[5] त्वयि । हविः[6] । निधीमहि[7] । तथा दीप्ते[8] । स्तोमं[9] च । उच्चारयाम[10][11] ।

V.36.

स आ गमदिन्द्रो यो वसूनां चिकेतद्दातुं दामनो रयीणाम् ।
धन्वचरो न वंसगस्तृषाणश्चकमानः पिबतु दुग्धमंशुम् ॥ १ ॥

स आ गमत्[12] । सः । आगच्छतु[13] । इन्द्रः । यः[14] । वासयितॄणि । धनानि[15] । यजमानस्य[16] दातुम्[17] । बुध्यते[18], दास्यामीति मन्यत[19] इत्यर्थः । निरुदके देश इव वर्तमानः[20] । तृष्णायुक्तः[21] । कामयमानः[22] । पिबतु । दुग्धम्[23] । सोमम्[24] ।

---

१. अस्मदीय एव सन् Sy.
२. अस्माकम् Sy.
३. आगत्य च शोभनबुद्धया Sy.
४. अतिशयेन बलवन् ! Sy.
५. द्योतमाने Sy.
६. त्वदनुग्रहात् अन्नं कीर्तिं वा Sy.
७. स्थापयामः Sy.
८. दीप्तेथा दीप्ते D. दिवि त्वयि Sy.
९. स्तोत्रम् Sy.
१०. करवामह इत्यर्थः Sy.
११. VM. ignores वार्यम् ॥ वार्यं वरणीयम् Sy.
Ms. D. puts the figure ॥३५॥ here to indicate the end of the thirty-fifth hymn. No such number is given in P.
१२. 'स आगमत्' इति षडृचं चतुर्थं सूक्तम् । आङ्गिरसः प्रभूवसुर्ऋषिः । तृतीया जगती शिष्टा अनुक्तत्वात् त्रिष्टुभः ! इन्द्रो देवता । अनुक्रान्तञ्च—'स आ गमत् षट् तृतीया जगती' (KSA. 26.36. p. 20.) इति । विनियोगो लैङ्गिकः Sy.
१३. ०गमतु P. अस्मद्यज्ञं प्रत्यागच्छतु Sy.
१४. देवः Sy. १५. वसूनां धनानाम्, कर्मणि षष्ठी । वसूनि धनानि Sy.
१६. यजमानाय is suggested for यजमानस्य ।
१७ प्रदातुम् Sy.
१८. जानाति Sy.
१९. VM. paraphrases दामनः as दास्यामीति मन्यते ॥ दाता दानमना वा Sy.
२०. गमने दृष्टान्तः । धनुषा सह सञ्चरन् धानुष्क इव Sy.
२१. ०नो स्तृष्णा० P. अत्यन्तं तृषितः Sy.
२२. कामयमानः सन् Sy.
२३ अभिषुतम् Sy.
२४. VM. ignores वंसगः ॥ वंसगः वननीयगमनः Sy.

**आ ते॑ ह॒नू ह॑रिवः शूर॒ शिप्रे॒ रुह॒त्सोमो॒ न पर्व॑तस्य पृ॒ष्ठे ।**
**अनु॑ त्वा राजन्नर्व॑तो॒ न हि॒न्वन् गी॒र्भिर्म॑देम पुरुहूत॒ विश्वे॑ ॥ २ ॥**

**आ ते**[1]। तवान्नस्य भक्षितस्य । हननसाधने[2]। शिप्रे । हे हरिवः[3]! शूरः[4]। सोमः[5]। आरोहतु[6]। न[7]। पर्वतस्य। पृष्ठे वृथा तिष्ठतु। स्तुतिभिः। त्वाम्। अनुमदेम[8]। राजन्[9]! विश्वे वयम्। यथा। अश्वान्[10]। युद्धे प्रेरयन्[11] अनुमदति[12][13]।

**च॒क्रं न वृ॒त्तं पु॑रुहूत वेपते॒ मनो॑ भि॒या मे॒ अम॑ते॒रिद॑द्रिवः ।**
**रथा॒दधि॒ त्वा ज॑रि॒ता स॑दावृध कु॒विन्नु स्तो॑षन्मघवन्पु॒रूव॑सुः ॥ ३ ॥**

**चक्रम्** । चक्रम् । इव । वर्तमानम्[14]। पुरुहूत[15]! अमतेः[16]। एव । भयेन[17]। मम[18]। मनः । कम्पते स्तुतिभिरमतिरिन्द्रं दृष्ट्वा किमहं न स्तौमीति भयम् । तथा सति रथात् । यावदेव त्वं नावतरसि[19]। तावदेवायं जरिता[20]। हे सदा[21] वर्धमान[22]! मघवन्! कुवित्[23]। पुरुवसुरिति[24]—द्वे[25] संज्ञेऽस्य[26] सः।

१. हे इन्द्र ! Sy. २. ०नेन P. D. यद्यप्ययं शिप्रावचनस्तथापि पुनः शिप्राभिधानाद् गौणोऽवगन्तव्यः। उक्तरूपे संहते वा Sy.
३. हे हरिभ्यां तद्वन् ! Sy.
४. शूर is suggested for शूरः।
५. अस्मद्दत्तः Sy. ६. प्राप्नोतु Sy.
७. न तिष्ठतीत्यर्थः । यद्वा नशब्दः पुरस्तात्प्रयुक्तोऽप्यत्रोपमार्थः। पर्वतस्य पृष्ठे उपरि प्रदेशे सोमो न, तत्र यथा विस्रम्भेण प्रसरति तद्वत् Sy.
८. Sy. explains अनु and मदेम separately, त्वाम् अनु as त्वया सह and मदेम as हृष्येम ॥ त्वामनु—'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वम् Sy.
९. हे राजमानेन्द्र ! Sy.
१०. यथान् for यथा अश्वान् D. अश्वान् तृणादिभिः Sy.
११. हिन्वन् हिन्वन्तस्त्वां प्रीणयन्तः सन्तः Sy.
१२. The passage beginning with अश्वान् and ending with अनुमदति is omitted by P.
१३. VM. ignores पुरुहूत।
हे पुरुहूत ! बहुप्रकारं बहुभिर्वाहूतेन्द्र ! Sy.
१४. भूमौ वर्तमानं चक्रमिव। यस्मादेवं तस्मात् Sy.
१५. हे बहुभिराहूत ! Sy.
१६. दारिद्र्यादस्तोतुर्वा सकाशात् Sy.
१७. भीत्या Sy. १८. ना D.
१९. त्व नावपसि D. अवतरसि seems to be an explanation of अधि, रथादुपरि स्थितं त्वाम् Sy. २०. स्तोता Sy.
२१. सर्वदा Sy. २२. इन्द्र ! Sy.
२३. किवित् D. बहु Sy. २४. अहमृषिः Sy.
२५. द्वे संज्ञेऽस्य may be taken as an explanation of पुरुवसुः, i.e. पुरु being explained by द्वि and वसु by संज्ञा. This explanation seems to be rather farfetched, if it is meant to be the explanation of पुरुवसुः। Or the phrase may be read as अमतिः पुरुवसुरिति etc., i.e., the seer who has two names of अमतिः and पुरुवसुः may praise Indra. In that case, अमतिः is not a proper noun. It is a common noun, meaning thoughtless.
२६. There should be no sandhi on account of the *Sūtra* ईदूदेद्द्विवचनं प्रगृह्यम् । The reading should be संज्ञे अस्य instead of संज्ञेऽस्य ।

क्षिप्रम्[1] । त्वाम् । स्तौतु[2] ।

**एष ग्रावेव जरिता त इन्द्रेयर्ति वाचं बृहदाशुषाणः ।**
**प्र सव्येन मघवन्यंसि रायः प्र दक्षिणिद्धरिवो मा वि वेनः ॥ ४ ॥**

एषः । एषः[3] । जरिता[4] । अभिषवग्रावेव[5] । तुभ्यम्[6] । इन्द्र ! वाचम्[7] । प्रेरयति[8] । अत्यर्थम्[9] । त्वाम-श्नुवानः[10] । तस्मै सव्येन हस्तेन[11] । प्रयच्छ[12] । धनानि । दक्षिणेन च[13], प्रदक्षिण[14] ! हरिवः ! मा । विगतकामो[15] भूः स्तोतरि[16][17] ।

**वृषा त्वा वृषणं वर्धतु द्यौर्वृषा वृषभ्यां वहसे हरिभ्याम् ।**
**स नो वृषा वृषरथः सुशिप्र वृषक्रतो वृषा वज्रिन्भरे धाः ॥ ५ ॥**

वृषा[18] । वर्षिता[19] । द्यौः[20] । वर्षणशीलम्[21] । त्वाम्[22] । वर्धयतु[23] । तथा वृषा सन्[24] । वर्षितृभ्याम्[25] । अश्वा-भ्याम्[26] । गच्छसि[27] । सः । अस्मान् । वर्षितृरथः[28] । हे सुहनो[29] ! वृषकर्मन्[30] ! वज्रिन्[31] ! सङ्ग्रामे[32] । धारय[33][34] ।

---

१. स्तोष्यति स्तूयात् । अत्र कुविच्छब्दयोगेऽपि, आख्यातस्य बहुलग्रहणान्निघातः Sy.
२. This hymn is omitted by P. VM. ignores अद्रिवः ॥ हे वज्रवन्निन्द्र ! Sy.
३. एषः । एषः are omitted by P.
४. रिता P. गरिता स्तोता Sy.
५. अभिषवाश्मेव । स यथा रसं जनयति तद्वत् Sy.
६. ०ग्रावे तुम् P.,D.
७. वां P.,D.
स्तुतिम् Sy.
८. प्रेरति D. प्रेरयतीत्यर्थः Sy.
९. अत्यर्थं P.
महत्प्रभूतं फलम् Sy.
१०. आशु सम्भक्ता सन् Sy.
११. सेव्यहनस्तेन P.
१२. प्रयच्छसि Sy.
१३. अपि Sy.
१४. प्रयच्छ or प्रदक्षस्व is suggested for प्रदक्षिण ॥ प्रयंसीति शेषः Sy.
१५. विगतकामं मा कार्षीः Sy.
१६. स्तोतुरिति D.
१७. VM. ignores मघवन् ।
१८. हे इन्द्र ! Sy.
१९. वर्षित्री Sy.
२०. द्योतयित्री स्तुतिः । द्योततेर्दीव्यतेर्वा स्तुत्यर्थस्येदं रूपम् Sy.
२१. कामानां वर्षकम् Sy.
२२. त्वा P.
२३. यथा P.
२४. वृषा त्वम् Sy.
२५. सेक्तृभ्याम् Sy.
२६. वर्षितुभ्यमश्वास्या P. ०तृभ्यमश्वाभ्या D. हरिभ्याम् Sy.
२७. यज्ञं प्रत्युह्यसे Sy.
२८. वर्षिरथा P. वृषीरथा D.
वृषरथश्च सन् Sy.
२९. शोभनहनो ! Sy.
३०. वर्षणकर्मन् ! Sy.
३१. वज्रयुक्तेन्द्र ! Sy.
३२. भरणवति यज्ञे वा Sy.
३३. यारं य P.
३४. VM. explains वृषा once.

यो रोहितौ वाजिनौ वाजिनीवान्त्रिभिः शतैः सचमानावदिष्ट ।
यूने समस्मै क्षितयो नमन्तां श्रुतरथाय मरुतो दुवोया ॥ ६ ॥

यो रोहितौ[1] । यः[2] । रोहितौ[3] । अन्नवान्[4] । त्रिभिः[5] । अश्वशतैः । संयुज्यमानौ[6] युद्धे । अतिदिशति[7] । अस्मा इन्द्राय । यूने[8] । क्षितयो[9] मरुतः । संनमन्ताम्[10] । हे मरुतः[11] ! विश्रुतरथायेन्द्राय[12] । युष्मासु परिचरणेच्छा भवत्विति[13] ।

V.37.

सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वञ्चाः ।
तस्मा अमृध्रा उषसो व्युच्छान्य इन्द्राय सुनवामेत्याह ॥ १ ॥

सं[14] भानुना ॥ अत्रिर्भौमः[15] ॥ सूर्यस्य[16] । तेजसा[17] । सङ्गच्छते[18] । आहूयमानोऽग्निः[19] । स्वञ्चनः[20], "वैश्वानरो यतते सूर्येण" *इत्युक्तम् । एतस्मिन् काल उषसि यः[21] । इन्द्राय[22] । सोम सुनवामि[23] । इति[24] ।

---

१. इयं श्रुतरथस्य राज्ञो दानस्तुतिः Sy.
२. राजा Sy.
३. रोहितवर्णौ Sy.
४. श्रुतरथः Sy.
५. गवां धनानां वोक्तसंख्याभिः Sy.
६. सङ्गच्छमानौ Sy.
७. अदिष्ट, ददातेर्दिशतेर्वा लुङीदं रूपम् Sy.
८. सर्वत्र मिश्रयित्रे नित्यतरुणाय वा Sy.
९. सर्वाः प्रजाः Sy.
१०. समन्नमन्ताम P. ०न्ताम D. प्रणता भवन्तु । सेवन्तामित्यर्थः Sy.
११. इतीन्द्रसहायभूतानां मरुतां सम्बोधनम् Sy.
१२. विश्रुरथावेन्द्र P. श्रुतरथाय Sy.
१३. VM. ignores वाजिनौ ॥ वेजनवन्तावश्वौ Sy.
१४. 'सं भानुना' इति पञ्चर्चं पञ्चमं सूक्तमत्रेरार्षं त्रैष्टुभमैन्द्रम् । 'सं भानुना पञ्चात्रिः' (KSA. 26.37.p.20.) इत्यनुक्रमणिका । विनियोगो लैङ्गिकः Sy.
१५. आङ्गिरसस्यात्रेरार्षम् SKN. अत्रेरार्षम् Dur.
१६. सूर्यस्य स्वभूतया SKN.
१७. तेजसा सह Sy. दीप्त्या रश्म्या SKN. भास्वता सूर्येण Dur.
१८. सम्यक् प्रयत्नं करोति । उदयकाले ह्यग्नयः प्रज्वाल्यन्ते Sy. संस्पर्द्धते वा सूर्येण, अतिदीप्तत्वात् Dur.
१९. सर्वत्र हूयमानः, कर्मणि कर्तृप्रत्ययः Sy. 'तस्मा अमृध्राः' इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य यजमानस्य....आहूयमान आहवनीयः SKN. अभिहूयमानो वा Dur.
२०. सञ्च० P., D. अग्निः Sy. अञ्चतिर्गत्यर्थः । सुगमनः, सुष्ठु प्रज्वाल्येन्द्रं यजत इत्यर्थः SKN. शोभनगमनः स्वेन प्रकाशेन....एवमस्मिन् 'सूर्येण संयतते' इत्यनेन सम्बन्धात् 'स्वञ्चाः, सु अञ्चनः स्वञ्चनः' अञ्चतेर्गत्यर्थस्य रूपदर्शनादित्युपपद्यते Dur.
* RV.I. 98.1.
२१. तस्मात् कारणात् यः यजमानः Sy. नच केवलाय तस्मै । किं तर्हि ? यो दारिद्र्याद् यष्टुमशक्नुवन् केवलं श्रद्धालुतया SKN. अपिच यः....अयज्वापि श्रद्धाद्वितीयो दरिद्रः कश्चित् Dur.
२२. इन्द्रार्थम् Dur.
२३. सोमं सुनवानि is suggested for सोम सुनवामि ॥ अभिषुणुमः सोममिति Dur.
२४. सोम सुनवां मवि P. इत्येवमाशंसनम् SKN. एवम् Dur.

वदति[1]। तस्मै[2]। अमृध्राः[3]। उषसः। व्युच्छन्तु[4] या न हिंसन्ति[5] ता अमृध्रा[6] इति[7]।

**समिद्धाग्निर्वनवत्स्तीर्णबर्हिर्युक्तग्रावा सुतसोमो जराते।**
**ग्रावाणो यस्येषिरं वदन्त्ययद्ध्वर्युर्हविषाव सिन्धुम् ॥ २ ॥**

समिद्धाग्निः। यज्ञार्थं समिद्धाग्निः[8]। स्तीर्णबर्हिः[9] सन्। इन्द्रं भजते[10]। तथाभिषवाय युक्तग्रावा[11]। सुतसोमश्च[12]। एनं[13] स्तौति[14]। यस्येन्द्रस्य[15]। ग्रावाणः[16]। अभिलषितं[17] सोमम्[18]। वदन्ति[19]। तस्मै[20] स्यन्दनशीलं सोमम्। पुरोडाशादिना[21] सह। अवगमयति[22]। अध्वर्युः[23]।

**• वधूरियं पतिमिच्छन्त्येति य ईं वहाते महिषीमिषिराम्।**
**आस्य श्रवस्याद्रथ आ च घोषात्पुरु सहस्रा परि वर्तयाते ॥ ३ ॥**

वधूः। वधूः[24]। इयम्। पतिम्[25]। इच्छन्ती[26]। गच्छति[27]। यः[28]। एनामिन्द्र[29] उषसम्। वहाते[30]। महिषीम्।

---

१. ब्रूतेऽध्वर्युं प्रति Sy. आह तस्मा अपि SKN. ब्रवीति तस्यापि कल्याणाभिव्याहारिणः सुप्रभाता एवोषसः, किमुत यः सुनोतीत्यभिप्रायः Dur.

२. यजमानाय Sy. तादर्थ्ये एषा चतुर्थी षष्ठ्यर्थे वा। तदर्थं तस्य वा SKN. तस्य यजमानस्य किम्? इत्युच्यते तस्मा एव Dur.

३. अमुध्राः P. अहिंसिताः Sy. मृधिर्हिंसार्थः। अहिंसिताः SKN. अमृता अम्लानाः Dur.

४. उदयकालेऽग्निः प्रज्वालितस्तस्मात् सोमयागं कुर्म इति यो ब्रूते तस्य सुदिनानि भवन्तीत्यर्थः Sy. व्युच्छन्ति कुर्वन्तीत्यर्थः SKN. विभान्तीत्यर्थः। यस्यैवमभिहूयमानोऽग्निर्नित्यकालमेव सूर्येण संयतते तस्यैव पुण्यकृतः सुप्रभाता रात्र्यो भवन्ति नेतरस्यायज्वन इत्यभिप्रायः Dur.

५. हिंसिता P.

६. अमुध्रा P. The passage, या न.... अमृध्राः, should immediately follow अमृध्राः and precede उषसः।

७. VM. ignores घृतपृष्ठः ॥ प्रदीप्तज्वालो घृतयुक्तपृष्ठप्रदेशो वा Sy. घृतमाहुतिलक्षणं पृष्ठे यस्य स घृतपृष्ठो घृतेन वा स्पृष्टो घृतपृष्ठः SKN. यस्य यजमानस्य नित्ययायजूकत्वात् तेषु तेषु कर्मसु ज्वलितोऽग्निः....घृताक्तपृष्ठः Dur. 'स्वञ्चाः सु अञ्चनः' N.5.7., SKN. II.323.

८. प्रदीप्ताग्निः Sy.

९. ०र्हिषः P. प्रस्तृतदर्भोऽयं यजमानः Sy.

१०. सम्भजते Sy.

११. नियुक्ताभिषवपाषाणः Sy.

१२. अभिषुतसोमः Sy.

१३. ०सोमोश्चैनं P.

१४. जरति स्तौति Sy.

१५. यस्य अध्वर्योः Sy.

१६. अभिषवसाधनाः Sy.

१७. एषणीयं गमनशीलं वा शब्दम् Sy.

१८. Omitted by P.

१९. यदन्ति P.

२०. स्मै P.

२१. हविषा सह Sy.

२२. अवनेजनीरवगच्छति Sy.

२३. सः अध्वर्युः Sy.

२४. इन्द्रस्य पत्नी Sy.

२५. स्वप्रियम् Sy.

२६. ०न्ति० P. यज्ञगमनाय प्रवृत्तमिच्छन्ती Sy.

२७. अनुगच्छति Sy.

२८. इन्द्रः Sy.

२९. य हिना० P.D.

३०. वाता P. वाहा० D. वहति Sy.

इष्टाम्[१]। अस्मिन्नवस इन्द्रस्य। रथोऽस्माकम्। अन्नमिच्छतु[२]। आघोषयतु[३]। च। पुरूणि[४] धनानि[५]। सहस्राणि। स्तोतृभ्यः परिवर्तयति[६] स्वस्मान्निर्गमयति[७]।[८]

**न स राजा व्यथते यस्मिन्निन्द्रस्तीव्रं सोमं पिबति गोसंखायम्।**
**आ संत्वनैरजंति हन्ति वृत्रं क्षेति क्षितीः सुभगो नाम पुष्यंन्॥ ४॥**

न स राजा। चलति[९]। यस्मिन् राजनि[१०]। इन्द्रः। तीव्ररसम्[११]। सोमम्। पिबति। पयोमिश्रणम्[१२]। सोऽयमिन्द्रः[१३]। भूतैः[१४] सह। आगच्छति[१५]। हन्ति च। उपद्रवम्[१६]। अधिवसति[१७] च[१८]। भूमीः[१९]। सधनः[२०]। उदकम्[२१]। पुष्यन्[२२]।[२३]

**पुष्यात्क्षेमे अभि योगे भवात्युभे वृतौ संयती सं जयाति।**
**प्रियः सूर्ये प्रियो अग्ना भवाति य इन्द्राय सुतसोमो ददाशत्॥ ५॥**

पुष्यात्[२४]। क्षेमे[२५] लब्धपरिपालनापेक्षायाम्। स पोषं पुष्यति[२६]। अभिभवति[२७] च शत्रून्। अलब्धलिप्सायाम्[२८]। द्वौ[२९] च। मार्गौ[३०]। सङ्गच्छमाने[३१]। यजति[३२]। तथा[३३] सूर्ये। अग्नौ च। प्रियः। भवति। सुतसोमः।

---

१. महीवीमिष्टाम् P. गमनवतीम् Sy.
२. अन्नमिच्छति Sy.
३. आघुष्यति, शब्दयति Sy.
४. अत्यधिकम् Sy.
५. निधाना P. निधना D.
६. परितो वर्तयति। प्रापयति Sy.
७. स्वास्मा० P.,D.
८. VM. ignores आ॥ आ अर्वागस्मदभिमुखम् Sy.
९. व्यथितो भवति Sy.
१०. तदीये यज्ञे Sy.
११. मदजनकम् Sy.
१२. गोसखायम्—विकारे प्रकृतिशब्दः, क्षीरादिभिर्मिश्रणवन्तम् Sy.
१३. स राजा Sy.
१४. भूतैः P. सत्त्वभिरनुचरैः Sy.
१५. सर्वतो गच्छति Sy.
१६. पापं वैरिणं वा Sy.
१७. गच्छति Sy.
१८. Omitted by P.
१९. प्रजाः। अथवा क्षितीर्निवासान्निवसते Sy.
२०. शोभनसुखः Sy.
२१. नामकं धनमिन्द्रस्य स्तोत्रं वा Sy.
२२. पोषयन् Sy.
२३. VM. ignores न। and राजा।
२४. Omitted by D.
२५. प्राप्तस्य धनस्य रक्षणे Sy.
२६. पोषयेत् बन्ध्वादीन् Sy.
२७. भवति। अभीत्यनर्थको धात्वर्थानुवादी वा। प्रभुर्भवतीत्यर्थः Sy.
२८. अब्धलिप्सायां P. अलब्धस्य प्राप्तौ च Sy.
२९. उभे Sy. ३०. वर्तमाने Sy.
३१. सङ्गच्छमाने qualifying मार्गौ should have been सङ्गच्छमानौ but VM. has probably used the fem. as going with वृति of the original॥ नियते अहोरात्रे Sy.
३२. जयति is suggested for यजति॥ सम्यग्जयति। ते सुखकरे स्यातामित्यर्थः Sy.
३३. यथा P.

सन्[1] । यः । इन्द्राय । प्रयच्छति[2] । "द्वे स्रुती[3] अशृणवम्" इति मन्त्रः[4] ।[5]

V. 38.

उरोष्टं इन्द्र राधंसो विभ्वी रातिः शतक्रतो ।
अधा नो विश्वचर्षणे द्युम्ना सुंक्षत्र मंहय ॥ १ ॥

उरोष्टे[6] । इन्द्र ! तव । महतः[7] । धनस्य । महत्[8] भवति । दानम् । शतप्रज्ञ[9] ! तथा[10] सत्यम् । अस्मभ्यम् । सर्वमनुष्य[11] ! सुबल[12] ! अन्नानि[13] । प्रयच्छ[14] ।

यदीमिन्द्र श्रवाय्यमिषं शविष्ठ दधिषे ।
पप्रथे दीर्घश्रुत्तमं हिरण्यवर्ण दुष्टरम् ॥ २ ॥

यदीमिन्द्र । यदि[15] । एतत्[16] । इन्द्र ! श्रवणीयम्[17] । इष्यमाणं धनम्[18] । बलवत्तम[19] ! धारय[20] । दीर्घकालं श्रोतव्यम्[21] । शत्रुदुस्तरम्[22] । हे हितरमणीयवर्ण[23] ![24]

---

१. सत्यः for सन् । यः P.,D.

२. सोमं ददाति Sy.

३. श्रुती P.

४. RV. X.88.15.

५. VM. explains प्रियः once only and ignores सम् । Ms. D. puts the figure ॥३७॥ here to indicate the end of the thirty-seventh hymn. No such number is given in P.

६. 'उरोष्टे' इति पञ्चर्चं षष्ठं सूक्तमत्रेरार्षमानुष्टुभमैन्द्रम् । 'उरोरानुष्टुभम्' (KSA. 26.38. p.20.) इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः Sy.

७. प्रभूतस्य Sy.

८ महृ P. महती Sy.

९. बहुकर्मन् ! Sy.

१०. ०प्रज्ञात्थी P. अतः कारणात् Sy.

११. हे सर्वस्य द्रष्टः ! Sy. Ngh. 2.3.

१२. शोभनधनेन्द्र ! Sy. क्षत्रमिति धननाम Ngh. 2.10.

१३. द्युम्नानि धनानि Sy. द्युम्नमिति धननाम Ngh. 2.10. द्युम्नं द्योततेः । यशो वान्नं वा N.5.5.

१४. ०च्छः P.

१५. यत् Sy.

१६. ईं सर्वतः Sy.

१७. श्रवणीयमाणयम् P., D.

१८. इष्यामान्नं P. अन्नम्, इषशब्दो नपुंसकलिङ्गोऽप्यस्ति Sy.

१९. अतिशयेन बलवन् ! Sy.

२०. ददासि वा Sy.

२१. अतिदूरश्रवणीयतमम् । सर्वत्र कीर्त्यमित्यर्थः Sy.

२२. अनभिभाव्यमुक्तलक्षणं प्रथते Sy.

२३. ०र्णः P., D. इन्द्र ! Sy.

२४. VM. ignores पप्रथे ॥ प्रथते Sy.

शुष्मासो ये ते अद्रिवो मेहना केतसापः ।
उभा देवावभिष्टये दिवश्च ग्मश्च राजथः ॥ ३ ॥

शुष्मासः[1] । रश्मयः । ये । तव[2] । वज्रिन्[3] ! मंहनीय[4] ! विज्ञानस्पृशः[5] । तैस्त्वं तादृशैरग्निश्चोभौ[6] । द्यावापृथिव्योः[7] । अभीष्टसिद्धयर्थम्[8] । राजथः[9] [10] ।

उतो नो अस्य कस्य चिद्दक्षस्य तव वृत्रहन् ।
अस्मभ्यं नृम्णमा भरास्मभ्यं नृमणस्यसे ॥ ४ ॥

उतो नः । अपि च । अस्मभ्यम् । बलस्य[11] प्रयच्छ बलं प्रयच्छेत्यर्थः । किं च । अस्मभ्यम्[12] । धनम्[13] । आहरेति । अस्मभ्यम्[14] । धनप्रदानमिच्छसि[15] [16] ।

नू त आभिरभिष्टिभिस्तव शर्मञ्छतक्रतो ।
इन्द्र स्याम सुगोपाः शूर स्याम सुगोपाः ॥ ५ ॥

नू[17] ते[18] । क्षिप्रम् । तव । अभीष्टाभिः[19] । आभिः स्तुतिभिः । त्वदीयसुखे[20] । स्याम[21] । शोभनगोपनाः[22] । शूर[23] ! स्याम[24] । सुगोपाः[25] [26] ।

---

१. बलभूता मरुतः सन्ति Sy.
२. त्वदीयाः Sy.
३. हे वज्रवन्निन्द्र ! Sy.
४. मंहनीयाः Sy.
५. प्रज्ञापकं कर्मान्तरिक्षं वा स्पृशन्तः Sy.
६. दाशराग्निश्च P. त्वं च मरुत्समूहश्चेत्युभौ युवाम् Sy.
७. ०थिवीः P. द्युलोकात् ग्मश्च भूमेः सकाशात् Sy.
८. अभितो गमनाय Sy.
९. ईशाथे Sy.
१०. VM. ignores देवौ and च ।
११. प्रवृद्धस्य दातुर्वा Sy.
१२. पुनःश्रुतिरादरार्था Sy.
१३. नृमणं धनम् Sy.
१४. ०हरेत्यंह्यस्मभ्यं स्वं P. हे इन्द्र ! यतस्त्वमस्मभ्यम् Sy.
१५. धनमिच्छसि Sy.
१६. VM. ignores अस्य । कस्य । चित् । तव and वृत्रहन् ॥ अस्य तव स्वभूतेभ्यः ॥ कस्यचित् अनिर्देश्यस्य हे इन्द्र Sy.
१७. त्ते P.,D.
१८. शीघ्रं समृद्धा भवेमेति शेषः Sy.
१९. अभिगमनैः Sy.
२०. त्वदिसु० P. VM. explains तव and शर्मन् together as त्वदीयसुखे ॥ तव शर्मणि सुखे सति Sy.
२१. भवेम Sy.
२२. शोभनरक्षणाः Sy.
२३. हे शूर ! तव शर्मणि Sy.
२४. स्यमा P. भवेम । पुनरुक्तिरादरार्था Sy.
२५. ०पा P.
२६. VM. ignores शतक्रतो and इन्द्र । Ms. D. puts the figure ॥३८॥ here to indicate the end of the thirty-eighth hymn. No such number is given in P.

V. 39.

**यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ।**
**राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ १ ॥**

यदिन्द्र[1] ॥[2] यास्कः—'यदिन्द्र[3] चायनीयं मंहनीयं[4] धनमस्ति[5] । यन्म इह नास्तीति वा । त्रीणि मध्यमानि[6]

---

१. 'यदिन्द्र चित्र' इति पञ्चर्चं सप्तमं सूक्तमत्रेरार्षमैन्द्रम् । अन्त्या पङ्क्तिः शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः । 'यदिन्द्र पङ्क्त्यन्तम्' (KSA. 26.39.p.20.) इत्यनुक्रमणिका । आभिप्लविकेषूक्थ्येषु तृतीयसवने आद्यस्तृचोऽच्छावाकस्य वैकल्पिकः स्तोत्रियः । सूत्रितञ्च 'यदिन्द्र चित्र मेहना यस्ते साधिष्ठोऽवसे' (ĀSS. 7.8.) इति Sy.

२. ०न्द्रः P. D. अत्रेर्भौमस्येयम् SKN. अत्रेर्भौमस्यार्षम् Dur.

३. The longer recension of the *Nirukta* adds चित्रम् immediately before चायनीयम् ॥ पूज्यम् SKN. पूजार्हम् Dur.

४. मंहतेर्दानकर्मणः । अकारस्येकारोऽनुस्वारलोपश्च । शाकल्यपक्षे—मंहनीयं दानार्हमस्ति तव SKN.

५. अस्ति किञ्चित् Dur.

६. छन्दोगानान्तु—मेहनाशब्दो नैवास्ति । 'यदिन्द्र चित्र मेहनास्ति' इत्येवंरूपः पाठः । तेषां 'चित्र म इह न अस्ति' इत्येषां पञ्चानां पदानां 'म इह न' इत्येवंरूपाणि मध्यानि पदानि । यन्मे मम गृहे नास्तीत्यर्थः । परार्थं वा प्रार्थ्यते । असद्वेत्यर्थिधर्मप्रसङ्गेन चेदमस्या ऋचश्शाखान्तरे वेदान्तरे वाऽधीतस्यावयवस्येदं व्याख्यानं द्रष्टव्यम् SKN. अथवा 'यन् म इह नास्तीति' एतस्मिन्वाक्यैकदेशे 'त्रीणि पदानि मध्यमानि' मध्ये भवन्तीत्यर्थः । कथं 'मेहना' इत्येषा संहिता ? 'मे इह न' इति, एतान्यस्याः संहितायाः पदानि । एवमेष वाक्यावयवः पञ्चपदो भवति । अत्र 'यत्' इति प्रथमं पदम् । अतः परं 'मे इह न' इत्येतानि त्रीणि मध्यमानि पदानि । 'अस्ति' इति पञ्चमं पदम् । एवमभिप्रेत्य 'इन्द्र चित्र' शब्दादपकृष्योक्तं—'त्रीणि मध्यमानि पदानि' इत्याह । यदैवं पदविभागस्तदा कोऽर्थः ? इत्युच्यते—यन्मे मम गृहे नास्ति धनं तव च तदस्ति धनम्, दातव्यं च त्वया तावत् स्तोतृभ्यः ।.... बह्वृचानां—'मेहना' इत्येकं पदम् । छन्दोगानां—त्रीण्येतानि पदानि 'म इह न' इति तदुभयं पश्यता भाष्यकारेणोभयोः शाकल्यगार्ग्ययोरभिप्रायावत्रानुविहितौ । एवञ्जातीयनिर्वचनोपदर्शनमुभयोश्च प्रामाण्यख्यापनार्थम् । आह—पदकारयोः पदविकल्पे कोऽभिप्राय इति ? उच्यते विद्यावान् विद्यमानधनो वा प्रतिविशिष्टतरं प्रार्थयते—यच्च यस्य गृहे नास्ति स तद्विशिष्टमविशिष्टं वा प्रार्थयेत । नचानयोरुभयोरपि विशेषलिङ्गमस्ति तस्माद् 'मंहनीयम्' इत्येतयार्थवत्या 'मेहना' इत्येवमेकं पदमभिप्रेतं शाकल्यस्य । गार्ग्यस्य पुनः—यन्म इह (गृहे) नास्ति तदाहरेत्यभिप्रायः । एवमत्र विशेषलिङ्गाभावाद् विप्रतिपत्तिः । एवमन्येष्वपि शाखान्तरपदविकल्पेष्वनुविधानमर्थाविरोधेन कर्तव्यम् । एवमयं मेहनाशब्दो राधःशब्दसामानाधिकरण्ये वर्तमानो यन्मंहनीयं राधः, यद्वा मद्गृहे नास्तीति धनविशेषणत्वात् कमन्यमर्थं ब्रूयात् ? तस्मान्मेहनेति सामर्थ्याद्धनविशेषणमेतदित्युपपत्तिः Dur.

पदानि । त्वया [1] नस्तद् [2] दातव्यम् । अद्रिवन् [3] ! अद्रिरादृणात्येनेन [4] । अपि वात्तेः [5] स्यात् । ते सोमादो [6] । इति ह विज्ञायते [7] । राध इति धननाम । राध्नुवन्त्यनेन [8] । तन्नस्त्वं [9] वित्तधनो [10] भाभ्यां हस्ताभ्यामाहर [11] इति [12] ।

**यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर ।**
**विद्याम तस्य ते वयमकूपारस्य दावने ॥ २ ॥**

**यन्मन्यसे** । यत् [13] । मन्यसे [14] । वरणीयं [15] धनम् । इन्द्र [16] ! दीप्तम् [17] । तदस्मभ्यम् [18] । आभर ।

---

१. अस्मभ्यम् Dur. २ त्वयास्तदा० P. कृत्यार्थे प्रत्ययः । यद्देयं त्वया स्तोतृभ्यो यष्टृभ्यश्च दातुं सङ्कल्पितमित्यर्थः SKN. दातव्यमेवावश्यं सुचिरमपि स्थित्वा Dur.

३. अदिवः P., D. अद्रिर्ग्रावा तद्विकाराद्वा दारणाद्वा । वज्रोऽत्राद्रिरुच्यते, तेन तद्वता ।.... अद्रिः, आदृणाति विदारयत्यनेन सोमादि गदादि वा । अपि वात्तेः स्याद् भक्षणार्थस्य । अद्रयो ह्यभिषवकाले सोममदन्ति । तथा च मंत्रेऽपि 'सोमादो' (RV. X. 94. 9.) इत्यस्ति । सोमादनमेषां विज्ञायते SKN. अतो ब्रूमो हे अद्रिवो वज्रिन् !....अद्रिसारमयमेव ह्यायुधं भवतीति अद्रिर्वज्र उच्यते । आह—अद्रिः कस्मात् ? उच्यते—आदृणात्यादरयतीत्यर्थः । अथवा सोमाभिषवग्रावभिस्तद्वानद्रिवान् स्यात् । तैरपि हि सोम आदार्यते । 'अपि वा' अत्तेः स्यात्' अद्रिः । कुत एतत् ? निगमात् । कतमोऽसौ निगम इति ?.... 'ते सोमादो हरी इन्द्रस्य निंसते' (RV.X. 94.9.) इत्येतस्मिन्मन्त्रे विचार्यमाणे ज्ञायतेऽत्तेरद्रिः स्यादिति व्याख्यात एव शेषः Dur.

४. ०द्रीणात्ये० P. ०दृणात्यं० D.

५. ०त्ते P., D.

६. RV. X. 94. 9. P. and D. add हि between ते and सोमादः ।

७. विज्ञाते P. विज्ञति D.

८. राब्धुवत्यनेन P. राब्धुवत्येनेन D. राधो धनम्....किमर्थमेतदुच्यते ? पठितमेवं ह्येतदुच्यते प्रसङ्गेन निर्वचनप्रदर्शनार्थम् । राध्नुवन्ति साधयन्त्येतेन धर्मादीन् पुरुषार्थानिति SKN. राध इत्येतद् धननाम स्मारयति । व्यभिचारित्वाद्वा शब्दानां धननामसु पठितमपि सदेतदवधारयति, इहाप्येतद्धननामैव नात्र व्यभिचारोऽस्तीति । पठिताभिधाननिरूपणेषु सर्वेष्वेतौ समाधी योज्यौ Dur.

९. वतस्त्वं P. तनस्त्वं D. अस्मदर्थमस्मभ्यं दातुमित्यर्थः SKN.

१०. विदद्वसो P., D. धम is added after वित्तधन by P. and D. विन्दति लभते वसूनि धनानि यो विदद्वसुर्धनानां लब्धा, तस्येदं सम्बोधनम् ।....लब्धधनेत्यर्थः SKN. हे आप्तधन ! साम्प्रतमेव...प्राप्तधन ! Dur.

११. द्विदण्डयादिरयम् । उभाभ्यां हस्ताभ्यामित्यर्थः। ...'उभौ समुब्धौ भवतः । 'उभ उम्भ पूरणे' सम्पूरितौ परस्परेण । उभशब्दस्य द्विगतं साहित्यमित्यर्थः । यो यश्च साहित्यसम्पूरितौ भवतः SKN. 'उभौ समुब्धौ भवतः' सम्पूर्णावित्यर्थः Dur.

१२. ०माभर P., D. आभर प्रभूतमित्यर्थः SKN. अकृपणमाभर, आहर मा चिरायेत्यभिप्रायः Dur. उभौ समुब्धौ भवतः N.4.4.; SKN. II.206. १३. अत्रेरार्षम् SKN. अत्रेर्भौमस्येदमार्षम् Dur. १४. जानीषे त्वम् Dur.

१५. अत्यन्तोत्कृष्टमित्यर्थः । किं पुनस्तत् ? सामर्थ्यादिदम् SKN. वरणीयमेतद्धनमिति Dur.

१६. हे इन्द्र ! Sy., SKN., Dur.

१७. अन्नम् Sy. द्युशब्दो दीप्तिवचनः । 'क्षि निवासगत्योः' । दीप्तेर्निवासभूतमत्यन्तोज्ज्वलमित्यर्थः SKN. यद् द्युतिनिवासभूतं द्युतिमदित्यर्थः Dur. १८. द्युक्षम् Sy.

तस्य[1] । तव[2] दातुः प्रसादेन । वयम्[3] । अकूपारम्[4] । लभेमहि[5] ।

---

१. तादृशस्योक्तलक्षणस्य Sy. कदाचित् त्वमाहृत्यापि न दद्याः ? अतो ब्रूमस्तस्य त्वयाऽऽहृतस्य धनस्य Dur. २. तव सम्बन्धिनः Sy. तव स्वभूतस्य SKN. Dur.

३. अकूपारं P. अकुत्सितः पारोऽन्तो यस्य तादृशस्यान्नस्य Sy. 'पृ पालनपूरणयोः' इत्यकु परणं पारणं पूरणं वा यस्य तदकूपारं तस्याकुत्सितपालस्य सारवत्त्वात् सम्यक् पालितस्येत्यर्थः । अकुत्सितपूरणस्य वा प्रभूतत्वात् सर्वजनभाजनपूरणसमर्थस्येत्यर्थः ।. . .भाष्ये अकूपरणस्येति निर्वचनं वरणस्येत्यर्थकथनम् । यद्धि, अकुत्सितं वरणं परणं तद् भवति । अकुत्सितपालितं सम्यक् पूरणसमर्थं चेत्यर्थः । अनेकार्थतां दर्शयितुमाह—आदित्योऽपीत्यादि अकूपारः सन्नकूपारो भवति । अकुत्सितं पालयितेत्यर्थः । आदित्यो ह्यकुत्सितं रश्मिभिः पालयति पूरयति वा । दूरपार इति हेतुवचनं यतोऽसौ दूरं पालयिता पूरयिता वा । आपूर्ता त्रयाणामपि लोकानाम् । समुद्रोऽपीत्यादि । सोऽपि ह्यकूपारो भवति, यतो महापारः । अत्रापि पारशब्देन पालनमुच्यते पूरणं वा । महापालनो महापूरणो वेत्यर्थः । समुद्रो हि पालनं बहुसत्त्वाश्रयत्वात् पूरणं वोदकप्रभूतत्वात् । कच्छपोऽपीत्यादि । स तु न कूपमृच्छति गच्छतीत्यकूपारः । कूपशब्द उपपदे अर्तेर्गत्यर्थस्य कर्मणि कूपारः । अकूपारः कच्छपो हि सति सम्भवे न नदीं गच्छति न कूपमल्पोदकत्वात् SKN. किंलक्षणस्य ?. . . .अकुत्सितपूरणस्येत्यर्थः । येन लब्धेन सुपूर्णमात्मानं मन्यामहे पर्याप्तमैहिकाय च श्रेयसे आमुष्मिकाय चेत्यर्थः । . . . .तस्मादकूपारस्येत्येष शब्दोऽतिपरोक्षवृत्तिः । 'अकुपरणस्य' इत्येवं परोक्षवृत्तित्वेनावस्थाप्य ततः 'अकुत्सितपूरणस्य' इत्येवं प्रत्यक्षवृत्तित्वेन व्याख्यायते । अत्र 'कुः' इति कुत्सार्थः, परणं पूरणमुच्यते, कुत्सितं परणं कुपरणं, न कुत्सितं परणमकुपरणम् । तस्याकुपरणस्य प्रभूतस्येत्यर्थः. . . .एतस्मिन्मन्त्रे 'अकूपारस्य, दावने' इत्ययमनयोः पदयोरनुक्रमः । समाम्नाये पुनः 'दावने' अकूपारस्य' इति मन्त्रपाठव्यतिक्रमेणानुक्रमः । तेन ज्ञायते —अन्यैरेवायमृषिभिः समाम्नायः समाम्नातः, अन्य एव चायं भाष्यकार इति । एको हि समाम्नानं भाष्यं च कुर्वन् प्रयोजनस्याभावादेकमन्त्रगतयोः पाठानुक्रमं नाभङ्क्ष्यत् । अविवक्षितार्थाश्चैते मन्त्रे निगमाः । तेषु सम्पत्त्या काकतालीयन्यायेन कस्मिंश्चिदेकस्मिन्नेव निगमे द्वे पदे आगच्छतस्ते यथोपागते एव भाष्यकारो व्याचष्टे, इत्यदोषः Dur.

४. स्याम Sy. आहृतस्य च सतो विद्याम । विदिर्लाभे विन्देमहि लभेमहि SKN.

५. VM. ignores दावने ॥ दावने दाने Sy. दीयत इति दावं देयमुच्यते । चतुर्थी षष्ठ्यर्थे । तच्छ्रुतेश्चैकदेशमिति शेषः । देयस्यैकदेशमित्यर्थः । अथवा दावन इति द्वितीयार्थे चतुर्थी । तस्य तव स्वभूतस्य धनस्यावयवभूतं यद् धनं दावं देयं तदित्यर्थः SKN. दानस्येत्यर्थः । ईदृशस्य भावत्कस्य धनस्य वयमेव लब्धारः स्यामेत्यभिप्रायः । एवमिह यन्मन्यसे वरेण्यं द्युक्षं च तदाभरेतीन्द्र उच्यमानो धनसन्निधानाद् दानादन्यत् किमुच्यते ? धनमेव हि प्रायेण मनुष्यैः प्रार्थ्यते । तस्मादत्राश्रूयमाणोऽपि धनशब्दोऽध्याहृतः । तच्च पुनः प्रार्थ्यमानं बहु प्रार्थ्यते ।. . . .दानसम्बन्धादेव 'दावने' इत्येष शब्दो दानार्थ इत्युपपत्तिः Dur.

**अत्र शाट्यायनकम्** । 'ऋषयो ह वै सत्रादुत्थायायन्त[१] । प्रयुञ्जानास्ते होचुः[२] एत, किञ्चिदेव यक्षं पश्यामेति[३] । ते होचुः—अकूपारो वा अयं[४] काश्यपः समुद्रे तन्महद्[५] यक्षम् । एत, तं पश्यामेति[६] । तं हान्वभ्युपेयुः[७] । तेभ्यो ह[८] नाविरास । ते होचुः—एत, इन्द्रमेव स्तवाम । स वा अस्येशे । स एव न इमं[८] दर्शयिष्यतीति । तेऽत्रिमब्रुवन् ऋषे ! त्वं स्तुतादिति । स एतमत्रिस्तृचमपश्यत्[९][१०] । तेनैनमुपायन् । यदिन्द्र चित्र मेहनेति[११] । स हेक्षाञ्चक्रे महद् वत म[१२] ऋषयो याचन्त्युभयाहस्त्याभरेति[१३] वा आहुरिति[१४] 'यत्ते' दित्सु[१५] प्रराध्यम्'[१६] इति स हेक्षाञ्चक्रे दृढं वत मामृषयो याचन्त इति[१७] । न वै[१८] जज्ञौ[१९] । अकूपारं दिदृक्षन्त इति यन्मन्यसे वरेण्यमिति । स ह जज्ञौ[२०] । अकूपारं वै दिदृक्षन्त इति । तं ह यदोदस्यन्नुवाच[२१] । इममेव मामृषयो महदिवोभयाहस्त्याभरेत्य[२२]वोचन्निति[२३] तमपश्यन्त । एताः कामसनय ऋच इति ।

तत्र **यास्कः**—'अकूपरणस्य[२४] दानस्य'[२५] इति । यद्वा—अकूपारस्य तव दानाय सम्भरेमेति ।

**यत्ते॑ दि॒त्सु प्र॒राध्यं॒ मनो॒ अस्ति॑ श्रु॒तं बृ॒हत् ।**
**तेन॑ दृ॒ळ्हा चि॑दद्रिव॒ आ वाजं॑ दर्षि सा॒तये॑ ॥ ३ ॥**

**यत्ते[२६] दित्सु[२७]** । यत् । ते[२८] । दानेच्छु[२९] । प्रकर्षेण पूजनीयम्[३०] । मनः । विद्यते[३१] । विश्रुतम् । महत् । तेन

१. तत्रादुवस्थात्र्थायन्ते P. तत्रादुपस्थात्थायन्ते D.
२. होतुः P.,D.
३. वाग्याम इति P. ०म इति D.
४. वायं क० P.,D.
५. तमु हद् P. तम्म हद् D.
६. ०म इ० P.,D.
७. हान्युभवेः P.
८. Sāṭya omits it but Jaiminīya reads it.
९. एवकमत्रिचमप० P.
१०. Sāṭya and Jaiminīya omit अत्रिः ।
११. ०दी० D.
१२. मम् P.,D.
१३. चान्तम् P. चान्त D.
१४. ०रेति P. रिति is crossed by D. cf. B. Ghoṣa. Op. Cit. XVI, p. 46.
१५. दिक्षु P.,D.
१६. RV. V. 39. 3.
१७. इतीति P. इति इति D.
१८. गा P.,D.
१९. ज्ञौ P.
२०. सहाज्ञौ P.,D.
२१. पदो० P.,D.
२२. महादि० P.,D.
२३. ०त्यपोवन्नि० D.
२४. अकूवर० D.
२५ विद्याम तस्य ते वयमकूपरणस्य दानस्य । आदित्योऽप्यकूपार उच्यते । अकूपारो भवति दूरपारः । समुद्रोऽप्यकूपार उच्यते । अकूपारो भवति महापारः । कच्छपोऽप्यकूपार उच्यते । अकूपारो न कूपमृच्छतीति N. 4. 18., SKN. II. 246
२६. वाजपेये अतिरिक्तोक्थ्ये 'यत्ते दित्सु' इत्येषा । सूत्रितञ्च—'यत्ते दित्सु प्रराध्यं त्वामिच्छव-सस्पते' (ĀSS.9.9.) इति Sy.
२७. हे इन्द्र ! Sy.
२८. तव Sy.
२९. दाने च P.,D.
३०. प्रकर्षेण स्तुत्यम् Sy.
३१. अस्ति Sy.

मनसा। दृढानि[1]। अपि शत्रुपुरादीनि। अस्मभ्यं दानाय[2]। अन्नम्। आदरय[3], आदृणातिर्द्विकर्मकश्च[4] भवति[5]।

**मंहि॑ष्ठं वो म॒घोनां॒ राजा॑नं चर्षणी॒नाम्।**
**इन्द्र॒मुप॒ प्रश॑स्तये पू॒र्वीभि॑र्जुजुषे॒ गिरः॑ ॥ ४ ॥**

**मंहिष्ठम्**[6]। दातृतमम्[7]। युष्माकम्। हविष्मताम्[8]। राजानम्। मनुष्याणाम्। इन्द्रम्। स्तोतुम्[9]। बह्वीभिः[10] स्तुतिभिः। उपसेवते[11]। स्तोतार्थं[12] होता।

**अस्मा॒ इत्का॒व्यं॑ वच॑ उ॒क्थमिन्द्रा॑य॒ शंस्य॑म्।**
**तस्मा॑ उ॒ ब्रह्म॑वाहसे॒ गिरो॑ वर्धन्त्यत्र॑यो॒ गिरः॑ शुम्भन्त्यत्र॑यः ॥ ५ ॥**

**अस्मा इत्**। अस्मै। एव। कविकृतम्[13]। वचः[14]। शंसनीयम्। उक्थं[15] च। ततश्च[16] तस्मै[17]। एव[18]। स्तोत्रैरुह्यमानाय[19]। स्तुतीः। वर्धयन्ति। अत्रयः[20]। स्तुतीः[21]। अलङ्कुर्वन्ति[22]। अत्रय[23] इति[24]।

---

१. दृढम् Sy.
२. अस्मत्सम्भजनाय लाभाय वा Sy.
३. आदरयसि Sy.
४. ०ति द्वि० P.
५. VM. ignores अद्रिवः ॥ हे वज्रवन्निन्द्र ! Sy.
६. ०ष्ठमं P.
७. मह्दातृ० D.
अतिशयेन पूज्यम् Sy.
८. हविर्लक्षणधनवताम् Sy.
९. प्रशंसितुम् Sy.
१०. पुरातनीभिर्वाग्भिः Sy.
११. उपेत्य सेवन्ते Sy.
१२. ०पसे स्तोत्रयं P.
स्तोतारः Sy.
१३. कवेः स्तोतुः सम्बन्धि, यद्वा 'कु शब्दे' शब्दनीयम् Sy.
१४. वाग्रूपम् Sy.
१५. उक्तं P.,D. शस्त्रम् Sy.
१६. यस्मादेवं तस्मात् Sy.
१७. इन्द्राय Sy.
१८. ए D.
१९. ०रू० D.
परिवृढस्य स्तोत्रस्य वाहकाय Sy.
२०. ०या D. अत्रिगोत्राः Sy.
२१. गिरः Sy.
२२. दीपयन्ति Sy.
२३. ०र्वन्त्यः त्रय P.,D.
पुनरुक्तिरादरार्था Sy.
२४. VM. ignores इन्द्राय।
Ms. D. puts the figure ॥३९॥ here to indicate the end of the thirty-ninth hymn. No such number is given in P.

V.40.

**आ याह्यद्रिभिः सुतं सोमं सोमपते पिब ।**
**वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥ १ ॥**

आ याहि[1] । आगच्छ[2] । आगत्य च ग्रावभिः । सुतम्[3] । सोमम् । सोमस्य पते[4] ! मरुद्भिः[5] सह । अतिशयेन वृत्रस्य हन्तः[6] ![7]

उत्तरे निगदव्याख्याते—

**वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः ।**
**वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥ २ ॥**

[ वृषा ग्रावा[8] ।[9] ]

**वृषा त्वा वृषणं हुवे वज्रिञ्चित्राभिरूतिभिः ।**
**वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥ ३ ॥**

[ वृषा त्वा[10] । ] द्वयोरेकं[11] क्रियापदं हुव इति । हेतौ तृतीया—ऊतिभिरिति ।

---

१. 'आ याह्यद्रिभिः' इति नवर्चमष्टमं सूक्तम् । अत्रेयमनुक्रमणिका—'आ याहि नव त्र्युष्णिगाद्यन्त्यानुष्टुब्मध्ये च सा सौरी तदादीतिहासः स्तुतिकर्मकत्वादत्रिर्देवतैव' (KSA. 26.40. p.20.) इति । कृत्स्नस्य 'ऋषिश्चान्यस्मात्' (KSA.12.2.p.5.) इति परिभाषया अत्रिर्ऋषिः । आद्यास्तिस्र उष्णिहः पञ्चमीनवम्यावनुष्टुभौ शिष्टाश्चतस्रस्त्रिष्टुभः । अत्रेः स्तूयमानत्वात् षष्ठ्याद्या अत्रिदेवताका अत्र्यार्षेयाश्च, पञ्चमी सूर्यदेवत्या शिष्टा ऐन्द्र्यः । दशरात्रे तृतीयेऽहनि प्रउगशस्त्र आद्यस्तृच ऐन्द्रः पञ्चमः । सूत्रितञ्च 'आ याह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभिः' (ĀSS. 7.10.) इति । महाव्रतेऽप्यौष्णिहतृचाशीतावयं तृचः Sy.

२. आगच्छ is omitted by D̲. अस्मद्यज्ञमागच्छ Sy.

३. अभिसुतम् Sy.

४. Omitted by D. सोमस्य स्वामिन्निन्द्र ! Sy.

५. वर्षकैर्मरुद्भिः सह आयाहि पिब च Sy.

६. अतिशयेन शत्रूणां हन्तृतम ! Sy.

७. VM. ignores पिब । वृषन् and इन्द्र ॥ वृषन् ! फलस्य वर्षयितः । हे इन्द्र ! Sy.

८. This stanza is not explained by VM. The *pratika* is supplied by the Editor.

९. ग्रावा अभिषवसाधनः पाषाणः । वृषा वर्षकः सोमरसस्य फलस्य वा । मदः सोमपानेन जनितः । वृषा वर्षकः । अयम् । सुतः अभिषुतः । सोमः । वृषा । तं सोमं वृषभिः सह पिब Sy.

१०. हे वज्रिन् ! वज्रवन् ! इन्द्र ! सोमरसस्य सेक्ताहम् । वृषणं त्वाम् । हुवे आह्वयामि । किमर्थम् ? चित्राभिः चायनीयाभिः । ऊतिभिः रक्षाभिर्निमित्तभूताभिः । शिष्टं स्पष्टम् Sy.

११. द्वयोः refers to RV.V.40.2,3.

ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।
युक्त्वा हरिभ्यामुप यासदर्वाङ्माध्यंदिने सवने मत्सदिन्द्रः ॥ ४ ॥

ऋजीषी[1] । क्षिप्रकारिणो योऽभिभवतीति स तुराषाट् । अवशिष्टं[2] स्पष्टमिति ।

यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः ।
अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥ ५ ॥

यत्[3] त्वा सूर्य[4] । यत्[5] त्वा[6] सूर्येति चात्रीणां[7] पञ्चर्चे[8] कर्म[9] कीर्त्यते[10] । यदा । त्वाम् । हे सूर्य[11] ! असुरपुत्रः[12] ।

---

१. 'ऋजीषी वज्री' इत्येषा ब्राह्मणाच्छंसिनः शस्त्रयाज्या । 'ऋजीषी वज्री वृषभस्तुराषाळिति याज्या' (ĀSS.5.16.) इति हि सूत्रितम् Sy.

२. ०षाढव० P. By अवशिष्टं VM. means the whole of the stanza. He does not explain any word of this stanza except तुराषाट् । For the complete explanation of the stanza see the following: ऋजीषी सवनद्वयेऽभिषुतस्य गतसारस्य सोमस्य तृतीयसवने आप्यायाभिषुतो योऽस्ति स ऋजीषः सोमः । सोऽस्यास्तीत्यृजीषी । वज्री वज्रवान् । वृषभः वर्षिता । तुराषाट् तुराणां त्वरमाणानां शत्रूणां सोढा । शुष्मी बलवान् । राजा ईश्वरः सर्वस्य । वृत्रहा वृत्रस्य हन्ता । सोमपावा सोमरसस्य पाता, एवं महानुभाव इन्द्रः । हरिभ्याम् । युक्त्वा रथं योजयित्वा । उप यासत् उपगच्छतु । अर्वाङ् अस्मदभिमुखमागच्छतु । आगत्य च माध्यन्दिने सवने । मत्सत् माद्यतु सोमेन इन्द्रः Sy. अत्रेरार्षम् । ऋजीषी ऋजीषवान् । वृषभो वर्षिता । तुराषाट्—सहेरभिभवार्थस्य ण्विः । तूर्णमभिभविता शत्रूणाम् । शुष्मी बलवान् । राजा, ईश्वरः । वृत्रहा, असुरस्य मेघस्य वा हन्ता । सोमपावा सोमानां च पाता । युक्त्वा हरिभ्याम्, कथम् ? सामर्थ्यात् सरथम् ।.... लोडर्थेऽयं पञ्चमः । उपयातु । अर्वागस्मदभिमुखः । उपगम्य च माध्यन्दिने सवने मत्सत् । अयमपि लोडर्थ एव, तृप्यतु । कः ? इन्द्रः । हर्योरश्वयोरस्येन्द्रस्य स्वभूतयोः स भाग ऋजीषं धानाश्च । एवं हि हर्योर्ऋजीषित्वम् । इन्द्रे किमायातम् ? उच्यते, तद्वन्तो यस्य सन्ति स तद्वान् भवति । यथा साधनवन्तो भृत्या यस्य सन्ति तत्साधनेन राजापि साधनवान् व्यपदिश्यते । धनवन्तश्च यस्मिन् सन्ति तन्नगरं धनवदिति तद्वदित्यभिप्रायः SKN. अत्रेरिदमार्षम् ।....ऋजीषेण तद्वानृजीषी । वज्रेण तद्वान् वज्री । वृषभो वर्षिता कामानां शुष्मी बलवान् राजा, अधिपतिर्वृत्रहा शत्रुहा सोमपावा सोमस्य पातेत्यर्थः । य एवंगुणयुक्त इन्द्रः स युक्त्वा हरिभ्यामश्वाभ्यां रथं तमधिरुह्योपयासदुपागच्छत् । अर्वाङस्मानाभिमुख्येन माध्यन्दिने सवने, एतस्मिन् प्राप्ते । उपगम्य च मत्सद् माद्यतामस्मत्प्रदत्तेन सोमेनेत्यर्थः । एवमेतस्मिन् मन्त्रे, ऋजीषी इन्द्र उक्तः । तत्पुनरेतदृजीषित्वमिन्द्रस्य न विज्ञायते केन कारणेनेत्यतस्तदुपपादनार्थमाह —'हर्योरस्य स भागः' इति हर्योरेवाश्वयोरस्येन्द्रस्य स भागो यदृजीषम् ।....तेन हरिसंयोगेन ऋजीषेण लक्षितलक्षणया वृत्त्या इन्द्रस्य ऋजीषित्वम् Dur. N.5.12., SKN. II.337,338.

३. य P.,D. ४. सूयः P. सूर्यः D. ५. य D.

६. त्वया for यत् त्वा P. ७. चात्रिणा P. ०त्रि० D. ८. ०ञ्चर्धे D. ०ञ्चर्घे P.

९. कं D. १०. BD. V. 28. इदमादिचतुर्भिर्मन्त्रैरत्रीणां कर्म कीर्त्यते Sy. ११. प्रेरक ! देव ! Sy. १२. ०त्र P.,D. असुरस्य प्राणापहर्तुरसुर्या वा पुत्रः Sy.

स्वर्भानु:[1] सैंहिकेयः[2] । अन्धकारेण[3] । अविध्यत्[4] । तदानीं[5] यथा[6] । अक्षेत्रज्ञः[7] । मुग्धो[8] ध्यायत्येव । सूर्ये नष्टे भूतानि[9] । ध्यानपराण्यभवन्[10] ।

**स्वर्भानोरध यदिन्द्र माया अवो दिवो वर्तमाना अवाहन् ।**
**गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रिः ॥ ६ ॥**

**स्वर्भानोः** । इन्द्रः[11] । सूर्ये तमसाऽभिभूते तदनन्तरमेव[12] । स्वर्भानो[13] । तिस्रस्ता मायास्तमोरूपेण[14] परि-[15]णताः । सूर्यस्य[16] । अवस्तात् तमाच्छाद्य । वर्तमानाः[17] । यदा[18] त्वम् । अपनीतवानसि[19] । ततः[20] शिष्टेन तमसा[21] । अपगपकर्मणास्थ्यन्तर्गतेन[22] । निगूढम् । सूर्यम्[23] । अत्रिः । चतुर्थेन[24] । ब्रह्मणा । अलभत[25] लौकिकैस्त्रि-रुपायैस्त्रिष्कृत्वा[26] इन्द्रस्तमोऽपानयत्[27] अवशिष्टमत्रिर्मन्त्रेणेति[28]। "स्वर्भानुर्वै[29] सूर्यं तमसाविध्यत् तस्मै देवाः प्रायश्चि-त्तिमैच्छन्[30] । तस्य यत् प्रथमं तमोऽपाघ्नन् मा कृष्णाविरभवत् । यद्[31] द्वितीयं सा फल्गुनी[32] । यत्[33] तृतीयं सा[34] वलक्षी[35] । यदधस्तादपाकृन्तत्[36] ? साविर्विशादमभवत् ?" इति ब्राह्मणम् ।

---

१. स्वर्भानुसंज्ञकः Sy.
२. सहि० P.
३. मायानिर्मितेन Sy.
४. आवृणोदित्यर्थः Sy.
५. तदा Sy.
६. तत्रत्यः सर्वो जनः Sy.
७. स्वस्वस्थानमजानन् Sy.
८. मूढो भवति तथा Sy.
९. भुवनानि सर्वाणि Sy.
१०. दृश्यन्ते Sy.
११. इन्द्र is suggested for इन्द्रः ।
१२. जगन्मौढ्यानन्तरम् Sy.
१३. असुरस्य Sy.
१४. मायाः सन्ति Sy.
१५. ०र्भास्तिस्रस्तुमायांस्तुमो० P. ०र्भास्तिस्रस्त-मायांस्तमो D.
१६. द्योतमानादादित्यात् Sy.
१७. तदुपरि तिरोधानासामर्थ्यादिति भावः Sy.
१८. याः Sy.
१९. ०नीयतवा० P.
ताः सर्वा अवहंसि Sy.
२०. अथात्रेरेव परोक्षवादः Sy.
२१. अन्धकारेण Sy.
२२. अन्धकारस्यावरणरूपत्वादपव्रतत्वम् Sy.
२३. तथाविधम् Sy.
२४. तुरीयेण 'ग्राव्णो ब्रह्मा' (RV. V. 40.8.) इत्यनेन Sy.
२५. लब्धवान् । आवरणापगमोपायं निरावरणं शुद्धं वा सूर्यमिति । पूर्वमन्त्रापेक्षया अस्य तुरीय-त्वम् । एकैकं मायांशमेकैकेन मन्त्रेणापनोद्य चतुर्थेन मन्त्रेण निलीनं तमोऽप्यनुददित्यर्थः Sy.
२६. ०स्त्रिभिरुपायैस्त्रि० is suggested for ०स्त्रिरुपायै त्रि० ।
२७. ०त्व P.
२८. ०ष्टमन्त्रिर्मन्त्रेण P.
०त्रिमन्त्रेणेत D.
२९. ०नुरा P., D.
३०. ०यच्छस्तिमै० D.
३१ Omitted by P. य D.
३२. हद्गुनी P. हल्गुनी D.
३३ यं P.
३४. स P.
३५. ०क्षि P.
३६. यदुध्यस्ता० D. यद्स्यस्यादपाकृन्तत् P.

**मा मामि॒मं तव॒ सन्त॑मत्र इर॒स्या द्रु॒ग्धो भि॒यसा॒ नि गा॑रीत् ।**
**त्वं मि॒त्रो अ॑सि स॒त्यरा॑धा॒स्तौ मे॒हाव॑तं॒ वरु॑णश्च॒ राजा॑ ॥ ७ ॥**

**मा माम्** । अत्रिं[1] सूर्यो यथोक्तवान्[2] तदत्रिर्वदति[3]—हे अत्रे[4] ! तव[5] । आश्रयभूतम्[6] । तम्[7] । माम् । मनुष्यैर्भयेन[8] । द्रुग्धो[9] निन्दितोऽसुरः[10] । अन्नेच्छया । मा । निगिरतु[11] । त्वम्[12] । मम मित्रः[13] । भवसि । सत्यधनस्त्वं च । बन्धनानां[14] स्वामी वरुणः । च । राजा । माम् । रक्षतम्[15] ।[16]

**ग्राव्णो॑ ब्र॒ह्मा यु॑युजा॒नः स॑प॒र्यन् की॒रिणा॑ दे॒वान्नम॑सोप॒शिक्ष॑न् ।**
**अत्रि॒ः सूर्य॑स्य दि॒वि चक्षु॒राधा॒त्स्वर्भा॑नो॒रप॑ मा॒या अ॑घुक्षत् ॥ ८ ॥**

**ग्राव्णः** । 'तुर्येण[17] ब्रह्मणा' उद्युक्तोऽर्थः स्पष्टमुच्यते, सोमाभिषवार्थं ग्राव्णः[18] । युञ्जानः[19] । अत्रिः[20] । देवान् पूजयन् । वेद्यां विक्षिप्तेन[21] । अन्नेन[22] । देवान् । उपसाधयन्[23] । अत्रिः । सूर्यस्य[24] । दिवि[25] । तेजः[26] । कृतवान्[27] । तथा स्वर्भानोः[28] । मायाश्च[29] तमोरूपाः गूहन्[30] ।[31]

---

१. अत्रिः D. २. ०थोकवान् D.
३. इदं सूर्यवाक्यम् Sy.
४. ०त्र P. ५. व P.
६. आश्रयभूतम् seems to be the explanation of सन्तम् ॥ स्वभूतम् Sy.
७. तम् seems to be the explanation of इमम् । इममीदृगवस्थं माम् Sy.
८. भयजनकेन तमसा Sy.
९. तद्रुद्धः D. तद्रुद्धा P. द्रोग्धासुरः Sy.
१०. निन्द्रितः P. ११. गिरतु Sy.
१२. किञ्च हे मित्र ! Sy.
१३. त्रा P. प्रमीतेः सकाशात् त्राता Sy.
१४. ०ना P.,D. १५. मारतं क्षतं P.
१६. VM. ignores तौ and इह ॥ वरुणश्च त्वञ्च तौ युवाम् । यद्वा अत्रिरेव मित्र उच्यते । सच वरुणश्च युवाम् Sy.
१७. तुरीयेन D. तुरीयेण is suggested for तुर्येण । It refers to RV.V. 40.6.
१८. अभिषवसाधनानि Sy.
१९. युञ्जन् । इन्द्रार्थं सोममभिषुण्वन्नित्यर्थः Sy.
२०. ब्राह्मणः Sy.
२१. कीर्यते विक्षिप्यते इति कीरि स्तोत्रम्, तेन Sy.
२२. अन्नेन हविर्लक्षणेन, नमस्कारेण वा Sy.
२३. उपशिक्षन् । शिक्षतिर्दानार्थोऽत्र प्रसाधने वर्तते । प्रसाधयन् Sy.
२४. सूर्येस्य D. सर्वप्रेरकस्य Sy.
२५. अन्तरिक्षे Sy.
२६. चक्षुः सर्वस्य ख्यापकं मण्डलम् Sy.
२७. कृतवन्तः P. निस्तमस्कं कृतवानित्यर्थः Sy.
२८. तदेव स्पष्टयति—एतन्नामकस्यासुरस्य Sy.
२९. स्वाश्रयमव्यामोहयन्ती, परांस्तु तथा कुर्वती मायेत्युच्यते । तादृशीर्मायाः । यत् 'तुरीयेण ब्रह्मणा' इत्युक्तम् । तदेतदुक्तं तुरीयं ब्रह्म तेनात्रिसहाय इन्द्रः Sy.
३०. अपजुगोप न्यवारयदित्यर्थः । अथवा तृतीयपाद एवं व्याख्येयः—सूर्यस्य दिवि पूर्वमावृते प्रकाशे तदपनोद्य स्वकीयं चक्षुराधात् । निरावरणं तेजःसंस्त्यायं दृष्टवानित्यर्थः । स्वर्भानुमायया सूर्यस्यावृतिर्हारिद्रविके समाम्नाता—'स्वर्भानुश्चासुरः सूर्यं तमसाविध्यत्तस्मै देवाः प्रायश्चित्तमैच्छन् । तस्य यत् प्रथमं तमोऽपाघ्नन् सा कृष्णाविरभवत् । यद्द्वितीयं सा फाल्गुनी यत्तृतीयं सा वलक्षी यदध्यस्थादपाकृन्तन्नित्यादि Sy.
३१. VM. ignores आ and अप ।

यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ।
अत्रयस्तमन्वविन्दन्नह्य१न्ये अशक्नुवन् ॥ ६ ॥

यं वै[2] । स्वर्भानुना तमसा विद्धम् । सूर्यं तमसोऽपनयनाय । अत्रयः । तम् । अन्वविन्दन्[3] । न[4] । अन्ये तु । शक्ता आसन्[5] । निर्वि स्वर्भानुरासुर आदित्य तमसाविध्यन्[6] । तद् देवाश्चर्षयश्चाभिषज्यन्तोऽत्रिम[7]-ब्रुवन्, ऋषे ! त्वमिदमपजहीति[8] । तथेति । तदत्रिरपानुपां[9][10] ।

वैश्वदेवान्येकादश पराण्यतः[11]—

V.41.

को नु वां मित्रावरुणावृतायन्दिवो वा महः पार्थिवस्य वा दे ।
ऋतस्य वा सदसि त्रासीथां नो यज्ञायते वा पशुषो न वाजान् ॥ १ ॥

को[12] नु[13] । मनुष्यः । हे मित्रावरुणौ[14] ! वाम्[15] । यज्ञं कर्तुमिच्छन्[16] । महतः । द्युलोकस्य[17] । वृष्ट्यादिकाय दानाय[18] भवति । पार्थिवस्य[19] । वा[20] लोकस्योषध्यादिदानाय[21] भवति । तौ युवां सत्यस्य[22] । स्थानेऽकौटिल्ये[23]

१. अत्रिकृतं सामर्थ्यमनुवदति Sy.
२. ०र्यस्त० D.
३. निगदव्याख्यातैषा—अत्रयस्तं सूर्यमन्वविन्दन् । इन्द्रार्थे सोमयागदेवतास्तुतिनमस्कारैरनुक्रमेणेषदीषत् तमोऽवरुध्य लब्धवन्त इत्यर्थः । अन्ये नहि अशक्नुवन् न लब्धवन्तः खलु Sy.
४. न is omitted by P.,D.
५. आस D.
६. The two prepositions, निर्वि should be joined with अविध्यत् । Following probably the usage of the Saṃhitās and Brāhmaṇas, the prepositions are separated from the verb by a few intervening words.
७. देवाभिष० P. न लब्धवन्तः खलु Sy. अभिषज्यन्तः, i.e. 'not being able to find a remedy.' ८. ०मवज० D.
९. खानुवां D. ०रपानुदत् is suggested for ०रपानुपां ।
१०. VM. ignores यम् । वै । आसुरः and हि ।
११. The following eleven hymns are addressed to विश्वे देवाः ।
१२. 'को नु वाम्' इति विंशत्यृचं नवमं सूक्तं भौमस्यात्रेरार्षम् । षोडशीसप्तदश्यावतिजगत्यौ । विंश्येकपदा विराट् । शिष्टाः सप्तदश त्रिष्टुभः । विश्वे देवा देवता । तथा चानुक्रान्तम्—'को नु विंशतिर्वैश्वदेवं वै तत् षोळश्याद्यतिजगत्यावन्त्यैकपदा' (KSA. 26. 41.p.20.) इति विनियोगो लैङ्गिकः Sy.
१३. मनुष्यः refers to कः ॥ यजमानः Sy.
१४. हे मित्रावरुणौ ! देवौ !
१५. युवाम् Sy.
१६. यज्ञमिच्छन् शक्नुयादिति शेषः Sy.
१७. तस्मात् कृपयैव द्युलोकसम्बन्धिनि स्थाने Sy.
१८. ०या P.
१९. पार्थिवस्य सदसि Sy.
२०. वाशब्दश्चार्थे Sy.
२१. ०स्यौष० is suggested for ०स्योष ।
२२. उत्पादकस्यान्तरिक्षस्य Sy.
२३. तद्धेतुत्वात्ताच्छब्द्यम् । त्रिषु स्थानेषु Sy.

वर्तमानान्। तेन[1] प्रीतौ वा। अस्मान्[2]। रक्षतम्। यज्ञमिच्छते। वा मह्यम्[3]। अन्नानि[4] प्रयच्छतम्। आढ्यः[5] पशुषु सीदतीति पशुष[6] आर्षो[7] डः[8]।

**ते नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतो जुषन्त।**
**नमोभिर्वा ये दधते सुवृक्तिं स्तोमं रुद्राय मीळ्हुषे सजोषाः॥ २॥**

**ते नः**[9]। मित्रादयः[10]। वायुः[11]। इन्द्रः। महान्[12]। अस्मान्[13]। सेवन्ताम्। ये। च। नमस्कारैः[14] सह। सङ्गताः[15]। सेक्त्रे। रुद्राय[16]। सुप्रवृक्तम्[17]। स्तोमम्[18]। धारयन्ति[19] रुद्रस्य नत्वा नत्वा न एवंविधा इति द्रष्टव्यमिति।

**आ वां येष्ठाश्विना हुवध्यै वातस्य पत्मन्रथ्यस्य पुष्टौ।**
**उत वा दिवो असुराय मन्म प्रान्धांसीव यज्यवे भरध्वम्॥ ३॥**

**आ वां येष्ठा**[20]। हे अश्विनौ! यातृतमौ[21]। वामहम्। आह्वातुमागतोऽस्मि[22]। युवयोर्जिगमिषतोर्वेगो वातस्य[23]। पतने[24]। रथे नियुज्यमानस्याश्वस्य[25] सुहितस्य। पुष्टौ[26] युवयोरागमनप्रारम्भेऽहमाह्वातुं[27] प्रवृत्त इत्यर्थः।

---

१. तौ P.
२. P., D. read **वयास्मान्** for **वा। अस्मान्।**
३. **किञ्च हविर्दात्रे च मह्यम्** Sy.
४. **अन्नानि क्षीरदध्यादीनि** Sy.
५. **०ढ्य** P.,D.
६. **पशषु** P. **पशुषु सीदतो वाजान्। तानि यथा प्रयच्छथस्तद्वदवतमिति। यद्वा (न शब्दश्चार्थे) पशून् वाजांश्च दत्तमित्यर्थः** Sy.
७. **आर्षढ्य** P.,D.
८. VM. ignores **नु** and **न॥ नु खलु। न इव, यद्वा नशब्दश्चार्थे** Sy.
९. **न** P.,D.
१०. **आदि** refers to **वरुणः, अर्यमा,** and **मरुतः॥ देवाः** Sy.
११. **आयुः सततगतिर्वायुरुच्यते** Sy.
१२. It stands for **ऋभुक्षाः।**
१३. **अस्माकम्** Sy.
१४. **हविर्भिः** Sy.
१५. **सजोषसः सह प्रीयमाणाः। तेषां पुत्रत्वादिति भावः। केचन रुद्राय सजोषा इत्येतन्मित्रादिसर्वदेवताविशेषणमिति कथयन्ति** Sy.
१६. **अथ मरुत एव वियुत्य विशेष्यन्ते —रुद्राय मीळ्हुषे—तृतीयार्थे चतुर्थी। रुद्रेण सह** Sy.
१७. **०वृत्तं** D. **शोभनपापादिवर्जनवत्** Sy.
१८. **सोमं** P. **स्तोत्रम्** Sy.
१९. **धारयन्त्युक्तलक्षणं स्तोत्रम्। देवा द्विविधाः स्तोत्रभाजो हविर्भाजिश्च, अत्र स्तोत्रभाज उच्यन्ते** Sy.
२०. **अनयाश्विनौ रुद्रश्चोच्यन्ते** Sy.
२१. **कामानां यन्तृतमौ** Sy.
२२. **हुवे आह्वयामि, आह्वातुं प्रभवामि** Sy.
२३. **०र्जिगमिषतोर्वे ग वातस्य** P. **०र्जगमिषतो वेर्गवानस्य** D. **वातस्य धर्मसाम्याद्धर्मिग्रहणम्। वायुसमानगतेरश्वस्य** Sy.
२४. **गमने प्राप्तौ** Sy.
२५. **रथस्य। अथवा वायुवद्युवयोः शीघ्रगमनसाधनरथस्य** Sy.
२६. **पोषे च निमित्ते सति** Sy.
२७. **०रम्भेमाह्वा०** D.

अथ मित्रादीन् सर्वानेव अपि[1]। च ये[2] मित्रादयः। दिव आगत्य[3]। प्राज्ञाय[4] स्तोत्रे मह्यम्। मंहनीयानि[5] धनानि। प्रभरध्वम्[6]। यथा यजमानाय[7]। अन्नानि[8] प्रयच्छथेति[9]।

**प्र स॒क्षणो॑ दि॒व्यः कण्व॑होता त्रि॒तो दि॒वः स॒जोषा॒ वातो॑ अ॒ग्निः।**
**पू॒षा भगः॑ प्रभृ॒थे वि॒श्वभो॑जा आ॒जिं न जग्मुरा॒श्व॑श्वतमाः॥ ४॥**

**प्र सक्षणः**[10]। सचनशील:[11] सविता। दिवि भवः। कण्व[12] इति मेधाविनाम[13] प्राज्ञा यस्य सवितुर्ह्वातारो भवन्ति। त्रितस्त्रिस्थान[14] इन्द्र[15] इति यास्कः। सवितेन्द्रस्ताभ्याम्[16]। सहितः[17]। वातः[18]। अग्निः। पूषा[19]। भग इत्येते। विश्वस्य रक्षका[20] देवाः। यज्ञगृहे[21] दिवः प्रगच्छन्तु। अतिशयेन वेगवदश्वाः[22]। यथा[23]। युद्धम्[24]। गच्छन्ति[25] तद्वदिति।

**प्र वो॑ र॒यिं यु॒क्ताश्वं॑ भरध्वं रा॒य एषेऽवसे दधीत॒ धीः।**
**सु॒शेव॒ एवै॑रौशि॒जस्य॒ होता॒ ये व॒ एवा॑ मरुतस्तु॒राणा॑म्॥ ५॥**

**प्र वो रयिम्**। हे मरुतः! यूयम्। अस्मभ्यं युक्ताश्वम्[26]। रयिम्[27]। प्रभरध्वम्[28]। तथास्माकं धनस्य[29]।

---

१. सर्वं ने ह्यपि P. उत वा किञ्चेत्यर्थः Sy.
२. हे is suggested for ये।
३. द्योतमानस्य। चतुर्थ्यर्थे षष्ठी Sy.
४. असुराय प्राणापहर्त्रे रुद्राय। यद्वा द्युलोकसम्बन्धिनेऽसुराय प्राणदात्रे सूर्याय वायवे वा Sy.
५. मननीयं स्तोत्रम् Sy.
६. सम्पादयत हे ऋत्विजः! Sy.
७. यागसाधकाय Sy.
८. हविर्लक्षणानि हवींषि स्तोत्रं चेत्यर्थः Sy.
९. ०थति P.
१०. अत्र लिङ्गोक्ता देवताः। प्रजग्मुरिति सम्बन्धः Sy.
११. सवन० D. यज्ञं सेवमानः शत्रूणां सोढा वा Sy.
१२. कण्ड्व P. कण्वा ऋषयो मेधाविनो वा होतार आह्वातारो यस्य स तथोक्तः Sy.
१३. ०वि नं D. Ngh. 3. 4.
१४. त्रिषु क्षित्यादिस्थानेषु तायमानः Sy.
१५. Omitted by P. N. 9. 25.
१६. ०वित्रेन्द्र० D. दिवः सूर्येण सह Sy.
१७. समानगतिः समानप्रीतिर्वा Sy.
१८. उक्तलक्षणो वायुः Sy.
१९. पोषक एतन्नामा Sy.
२०. उक्ताः सर्वदेवाः विश्वरक्षकाः कृत्स्नात्तारो वा Sy.
२१. प्रभरणवत्यस्मिन्यज्ञे Sy.
२२. प्रकृष्टगमनाश्ववतां श्रेष्ठाः सन्तः Sy.
२३. इव Sy.
२४. सङ्ग्रामम् Sy.
२५. गच्छति P. प्रगच्छन्ति Sy.
२६. ०श्वा P., D. अश्वसहितमश्वयोग्यं पुत्रं वा Sy.
२७. धनम् Sy.
२८. ०रस्यं P. सम्पादयत Sy.
२९. धनानि गवाश्वादिलक्षणानि Sy.

अन्वेषणाय[1] । रक्षणाय[2] । धारयत[3] । कर्माणि[4] । हे मरुतः ! क्षिप्रगन्तॄणाम्[5] । युष्माकम् । ये । एवा गतयः[6] । तैरेवैः[7] । औशिजस्य[8] कक्षीवतः[9] । होताऽस्त्रिः । सुसुखो[10] भवतु ।

**प्र वो॑ वा॒युं रथ॒युजं॑ कृणुध्वं॒ प्र दे॒वं विप्रं॑ पनि॒तार॑म॒र्कैः ।**
**इ॒षु॒ध्यव॑ ऋ॒त॒सापः॒ पुरं॑धी॒र्वस्वी॑र्नो॒ अत्र॒ पत्नी॒रा धि॒ये धुः॑ ॥ ६ ॥**

**प्र वो वायुम्**[11] । यूयम्[12] । वायुम्[13] । रथयोजनम्[14] । प्रकृणुध्वम्[15] अभिमुखं कुरुत । तथाऽर्कैः[16] । देवानां स्तोतारम्[17] । मेधाविनम्[18] । अग्निञ्च देवम्[19] । प्रकृणुध्वम्[20] । इषुध्यतिरिच्छाकर्मा 'विश्वो' राय इषुध्यति' इति मन्त्रः,* इच्छन्त्यः[21] । यज्ञं स्पृशन्त्यः[22] । बहुप्रज्ञाः[23] । वसुमत्यः[24] । अस्मान्[25] । अत्र[26] । देवपत्न्यः । कर्मणे[27] । अदधुः[28][29] ।

**उप॑ व॒ एषे॒ वन्द्ये॑भिः शू॒षैः प्र य॒ह्वी दि॒वश्चि॒तय॑द्भिर॒र्कैः ।**
**उ॒षासा॒नक्ता॑ वि॒दुषी॑व॒ विश्व॒मा हा॑ वहतो॒ मर्त्या॑य य॒ज्ञम् ॥ ७ ॥**

**उप व एषे** । उपप्रगच्छतः[30] । युष्मान्[31] । स्तुत्यैः[32] । सुखैः[33] कल्याणैर्गन्तुम् । दिवः सकाशात्[34] । महत्यौ

---

१. ०णायञ्च P. प्राप्तुम् Sy.
२. D. adds म immediately after रक्षणाय ॥ अन्नाय प्राप्तानां धनानां रक्षणाय वा Sy. अव इत्यन्ननाम Ngh. 2. 7.
३. धायत P. धारयति स्तुतिम् Sy.
४. धीः स्तोता Sy. ५. त्वरमाणानाम् Sy.
६. कामा अश्वा वा सन्ति, तैरिति Sy.
७. गत तैः P. गतय तैः D. कामैर्गमनसाधनैरश्वैर्वा Sy.
८. ओशिजनस्य P. औशिजनस्य D.
९. का० D.
१०. शेवमिति सुखनाम Ngh. 3. 6.
११. 'प्र वो वायुम्' इति षष्ठी वायव्ये पशौ हविषो याज्या । 'प्र वो वायुं रथयुजं कृणुध्वमुत त्वामदिते महि' (ĀSS. 3.8.) इति सूत्रितम् Sy. १२. हे मदीया ऋत्विजः ! Sy.
१३. देवम् Sy.
१४. वायुरजजं P. वायुरजनं D. यज्ञगमनाय रथसम्बद्धम् Sy.
१५. ०कृध्वं P.,D. VM. seems to explain प्र by प्रकृणुध्वम् ॥ कुरुध्वम् Sy.
१६. अर्कैः P.,D. अर्चनसाधनैर्मन्त्रैः Sy.
१७. पनितारम्—कर्मणि कर्तृप्रत्ययः । स्तुत्यमित्यर्थः । फलप्रदातारं वा Sy.
१८. विशेषेण कामानां पूरकं विप्रवत्पूज्यं वा Sy.
१९. द्योतमानम् Sy. २०. स्तुत Sy.
* RV. V. 50.1.
२१. गन्त्र्यः Sy. २२. यज्ञस्पृशः Sy.
२३. पुरन्ध्यः स्त्रीरूपा रूपवत्यो वा Sy.
२४. प्रशस्याः Sy. २५. अस्मदीयाय Sy.
२६. अस्मिन् यज्ञे Sy.
२७. कर्मणे तन्निष्पत्तये Sy.
२८. ०र्ता अ० P. आगतवत्यः Sy.
२९. VM. ignores आ ।
३०. प्र is omitted by P. उपप्रापयामि हविः। इषिः प्रापणकर्मा स्यादुपप्राभिः समन्वितः Sy.
३१. युष्मभ्यम् Sy.
३२. वन्दनार्हैरितरैर्देवैः सह Sy.
३३. सुखकरैः । यद्वा शूषैरित्यादितृतीयाबहुवचनान्तानि वन्द्येभिरित्यस्य विशेषणानि केचिदाहुः Sy. ३४. दिवसकात् P.,D. अन्तरिक्षादविशेषेण सर्वप्रदेशात् Sy.

द्यावापृथिव्यौ स्तोत्रैर्मया[1] प्रयुज्यमानैः। आत्मगुणाँश्चेतयद्भिर्मया[2] स्तूयमानैर्युष्मान्[3] सुखैर्गन्तं गमनोद्योगं कुरुतां ? स्वर्गात्[4] लोकादित्यर्थः । उषासानक्ता[5] । मनुष्याय[6] । विश्वम्[7] । यज्ञम् । आवहतः[8] । जानत्याविव[9] द्वे स्त्रियौ यज्ञं नयत[10] इत्यर्थः[11] । ७

**अभि वो॑ अर्चे पो॒ष्याव॑तो॒ नॄन्वास्तो॒ष्पतिं॒ त्वष्टा॑रं॒ ररा॑णः ।**
**धन्या॑ स॒जोषा॑ धि॒षणा॒ नमो॑भि॒र्वन॒स्पतीँ॒रोष॑धी रा॒य एषे॑ ॥ ८ ॥**

अभि वः । अभिष्टौमि[12] । युष्मान् । पोष्यधनयुक्तान्[13] । नेतॄन्[14] देवान् । वास्तोः । पतिम्[15] । त्वष्टारम् । रराणः[16] । धननिमित्ततया[17] । स्तुत्या[18] । हविर्भिश्च[19] । सङ्गतोऽहम्[20] । ओषधीः । वनस्पतींश्च । धनानि । गन्तुं[21] स्तौमि ।

**तु॒जे न॒स्तने॒ पर्व॑ताः सन्तु॒ स्वैत॑वो॒ ये वस॑वो॒ न वी॒राः ।**
**प॒नि॒त आ॒प्त्यो य॑ज॒तः सदा॑ नो॒ वर्धा॑न्नः शंसं॒ नर्यो॑ अ॒भिष्टौ॑ ॥ ९ ॥**

तुजे । पुत्रे[22] । तत्पुत्रे[22] च । अस्माकम् । मेघा वर्षार्थम्[23] । भवन्तु । ये मेघाः । वासयितारः[24] । वीराः । इव[25] । स्वायत्तगतयो[26] भवन्ति । तथाऽस्माभिः[27] स्तुतः । अद्भ्यो जातः[28] । यष्टव्योऽपां[29] नपात् । अस्माकम्[30] ।

---

१. मन्त्रैः सहोपप्रापयामि Sy.
२. ज्ञापयद्भिः Sy.
३. ०नै P.
४. स्वर्गलो० D.
५. हे अहोरात्राभिमानिदेवते ! Sy.
६. यजमानाय Sy.
७. विश्व P.,D. हे उक्तदेवते ! सर्वं कर्तव्यजातम् Sy.
८. आवहेतो P.,D. अभिमुखं प्रापयतः Sy.
९. जाना० P.
१०. नय P.,D.
११. VM. ignores ह ॥ हेति पूरणः Sy.
१२. अभिपूजयामि स्तौमीत्यर्थः Sy.
१३. अहं बहुपोष्यजनयुक्तान् Sy.
१४. कर्मनेतॄन् Sy.
१५. ०तिः D.
१६. P. reads त्वरमणः for त्वष्टारम् । रराण । D. reads त्वरमाणः for त्वष्टारम् । रराणः ॥ स्तोत्रादिभिः क्रीडन् । हविर्ददद्वाहम् Sy.
१७. धनकारी Sy.
१८. वाग्देवता । एता द्वितीयार्थे प्रथमाः । उक्तलक्षणां वाणीम् Sy. धिषणेति वाङ्नाम Ngh. 1.11.
१९. नमोभिः सह अर्चे इति सम्बन्धः Sy.
२०. इतरदेवैः सह गच्छन्ती प्रीणयन्ती वा Sy.
२१. गन्तं D. प्राप्तुम् Sy.
२२. तने विस्तृते। तुजे दाने, यद्वा तनेति पुत्रनाम । षष्ठ्यर्थे चतुर्थी । पुत्रस्य दाने इत्यर्थः । अथवा नः तुजे पुत्रे तने तत्पुत्रे च Sy.
२३. मेघवर्षणार्थं P. पर्ववन्तः पूरणवन्तो वा मेघाः Sy.
२४. सवितारे P. जगतो वासयितारः Sy.
२५. वीरायत P.
२६. शोभनगमनाः Sy.
२७. यथा० P.
२८. आप्तव्यः सर्वैः Sy.
२९. यजनीय आदित्यः Sy.
३०. नपास्मा० P. ०व्ये पान्नपाव् वस्मा० D.

सदा[1] भवतु । वर्धयतु[2] च । अस्माकम् । कामम्[3] । नरहितोऽपां नपात्[4] । अभीच्छायाम्[5] ।

**वृष्णो॑ अस्तोषि भू॒म्यस्य॒ गर्भं॑ त्रि॒तो नपा॑तम॒पां सु॑वृ॒क्ति ।**
**गृ॒णी॒ते अ॒ग्निरे॒तरी॒ न शू॒षैः शो॒चिष्के॑शो॒ नि रि॑णाति॒ वना॑ ॥ १० ॥**

वृष्णः । भूमिहितस्य[6] । पर्जन्यस्य[7] । पुत्रम्[8] । अपाम्, नपातम्[9] । त्रिस्थानोऽहमत्रिः[10][11] । सुवृक्तिभिः[12] । स्तुतवानस्मि[13] । सोऽयमपां नपाद् अग्निः स्तोत्रैः[14] । एतरि पुरुषे[15] । मुखैः[16] । गृणीते[17] । प्रत्यक्षं न वदति । किन्तु शोचिष्केशः[18] । उदका[19] । निर्गमयति[20] ।

**क॒था म॒हे रु॒द्रिया॑य ब्रवाम॒ कद्रा॒ये चि॑कि॒तुषे॒ भगा॑य ।**
**आप॒ ओष॑धीरु॒त नो॑ऽवन्तु॒ द्यौर्वना॑ गि॒रयो॑ वृ॒क्षके॑शाः ॥ ११ ॥**

कथा[21] महे । कथम्[22] । महते । रुद्रपुत्राय मरुद्गणाय । स्तोत्रं ब्रूमः[23] । कथं वा स्तोत्रम्[24] । स्तोतॄणां स्तोत्र धनाय[25] । जानते[26] । भगाय ब्रूमः[27] । अपि च । अस्मान् । आपः[28] । ओषधयश्च । रक्षन्तु[29] । तथा द्यौः[30] । वनानि । शिलोच्चयाश्च[31] । वृक्षकेशाः[32] ।

---

१. सर्वदा Sy.
२. वर्धयेत् Sy.
३. स्तुतिम् Sy.
४. नरेभ्यो हितो देवः Sy.
५. ०तोऽपान्नयादभिच्छयां P. ०तो वान्नवादभीच्छयां D. अभित एषणेऽभिगमने वा सति Sy.
६. भूमिरन्तरिक्षम्। तदर्हस्य। तादृशस्य। अथवा भूम्यो भूमेरेवार्हः, तदुचितवृष्टिप्रदानात् Sy.
७. वर्षकस्य पर्जन्यस्य । यद्वा तादृशस्य मेघस्य Sy. ८. गर्भस्थानीयम् Sy.
९. नपत P., D. रक्षकं वैद्युतमग्निम् Sy.
१०. त्रि is omitted by P., D. स त्रितः तीर्णतमः त्रिषु-स्थानेष्वन्येषु त्रित्वापन्नेषु तायमानः Sy.
११. ०हमत्रिसुमत्रि P.
१२. सुवृक्ति स्तोत्रकर्मैतत् । शोभनपापादिवर्जनवता स्तोत्रेण Sy.
१३. स्तुतवानहम् Sy.
१४. सोय पान्नपादनि P.
१५. गन्तरि मयि Sy.
१६. सुखैर्धत्व P. सुखैद्धत्वं D. सुखकरै रश्मिभिः Sy.
१७. ग्रणे P. ग्रणेत D. गरणं कुरुते, क्रुध्यतीत्यर्थः Sy.
१८. ०चिष्के P. ०चष्के D. प्रदीप्तरश्मिः सन् Sy.
१९. वनानि Sy.
२०. हिनस्ति दहतीत्यर्थः Sy.
२१. वयमत्रयः Sy.
२२. केन प्रकारेण Sy.
२३. ब्रवाम स्तुतीः Sy.
२४. व P., D. किं च स्तोत्रम् Sy.
२५. धनलाभाय Sy.
२६. सर्वं जानते Sy.
२७. भयाय P., D. एतन्नामकाय देवाय ब्रवाम Sy.
२८. अब्देवताः Sy.
२९. रक्षतु P., D.
३०. द्युदेवता Sy.
३१. गिरयः Sy.
३२. वृक्षा एव केशस्थानीया येषां ते । एता उक्ता देवताः Sy.

**शृ॒णोतु॑ न ऊ॒र्जां पति॒र्गिरः॒ स नभ॒स्तरी॑याँ इषि॒रः परि॑ज्मा ।
शृ॒ण्वन्त्वापः॒ पुरो॒ न शु॒भ्राः परि॒ स्रुचो॑ बबृहा॒णस्याद्रेः॑ ॥ १२ ॥**

**शृणोतु** । शृणोतु । अस्माकम् । स्तुतीः । अन्नानाम्[१] । पतिर्वायुः । स[२] वायुः । नभसः[३] । अतिशयेन तरिता[४] । गमनशीलः । परितो गन्ता । तथापश्च[५] । शृण्वन्तु[६] सौधर्मर्यः[७] । पुरः[८] । इव । शोभनो[९]ऽस्ति,[१०] शरीरवचनो वा[११] पुरशब्दः, ता इमाः । स्रवन्त्य[१२] आपः । परितो भवन्ति । वर्धमानस्य । मेघस्य[१३] ।

**वि॒दा चि॒न्नु म॒हान्तो॒ ये व॒ एवा॒ ब्रवा॑म दस्मा॒ वार्यं॒ दधा॑नाः ।
वय॑श्च॒न सु॒भ्व१॒ आव॑ यन्ति क्षु॒भा मर्त॒मनु॑यतं वध॒स्नैः ॥ १३ ॥**

**विदा चित्** । जानीत[१४] । क्षिप्रम्[१५] । हे महान्तः[१६] ! ये पुरुषाः[१७] । युष्मान् प्रति । गन्तारः[१८] वयं च स्तोत्रम् । प्रब्रवामहे[१९] । दर्शनीयाः[२०] ! वरणीयं हविः । दधानाः[२१] । परोक्ष उत्तरः—पक्षिण[२२] इव वृक्षात्[२३] । द्युलोकात् महान्तो[२४] देवाः । अधस्तादागच्छन्ति[२५] । क्षोभकेण[२६] शत्रुणा[२७] । प्रहारैः[२८] । अनुबद्धम्[२९] । यजमानम्[३०], मरुतः[३१] ।[३२]

---

१. बलानाम् ! अथवा अन्नानां पतिः । प्राणोपाधिकस्य वायोः कृत्स्नान्नातृत्वं प्रसिद्धम् । श्रुतिश्च भवति—'प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत्' (Manu.5.28.) इति Sy.
२. सम P.
३. नभसि चारी Sy.
४. तरितव्यः Sy.
५. आवश्च P.
६. शृणोतु P. शृण्वन्तु गिरः Sy.
७. सौधर्म्मर्य P. The reading is doubtful. सौधर्म्याः, 'Honest' going with आपः or वाचः understood is suggested for सौधर्मर्यः ।
८. पुराणीव Sy.
९. दीप्ताः Sy. शोभनः sing., seems to be the paraphrase of शुभ्राः pl. VM. also takes पुरः in the sing., whereas Sy. construes it in the pl.
१०. ०स्ती D. ११. वायु P., D.
१२. सरणशीलाः Sy.
१३. मेघस्य वा पर्वतस्य वा Sy.
१४. जानीथ स्तोत्रम् Sy.
१५. यूयम् Sy.
१६. महन्तः P. मरुतः ! Sy.
१७. पुषाः P.
१८. भजमानाः Sy.
१९. ०ब्रु० D. प्रब्रूमहे is suggested for प्रब्रवामहे ।
२०. ०य P.
२१. ०ना P. ददाना धारयन्तो वा वयम् Sy.
२२. आगन्तारश्चैते मरुतः Sy.
२३. वृक्षा P., D.
२४. महतन्तः P. It seems to be the explanation of सुभ्वः ॥ सुष्ठु भवन्तः प्रवृद्धाः Sy.
२५. अस्मदभिमुखं गच्छन्ति Sy.
२६. क्षोभकेण सहितम् Sy.
२७. शत्रूणां D.
२८. आयुधैः परिहरन्तः अवयन्ति Sy.
२९. ०बन्धं P. अभिगतम् Sy.
३०. मरणधर्माणं वैरिणम् Sy.
३१. मरुतः goes with महान्तो देवाः ।
३२. VM. ignores चित् ॥ चिदिति पूरणः Sy.

**आ दैव्या॑नि॒ पार्थि॑वानि॒ जन्मा॒पश्चाच्छा॑ सु॒मखा॑य वोचम् ।**
**वर्ध॑न्तां॒ द्यावो॒ गिर॑श्च॒न्द्राग्रा॑ उ॒दा व॑र्धन्ताम॒भिषा॑ता॒ अर्णाः॑ ॥ १४ ॥**

**आ दैव्यानि ।** सुयज्ञाय[1] मरुद्गणायाहम् । दैव्यानि[2] । पार्थिवानि[3] च । जातानि[4] धनानि । वृष्टिलक्षणा अपः[5] । च । अभिब्रवीमि[6] दातव्यमिति[7] । ततो मम द्योतमानाः[8] । हिरण्याग्राः[9] । वाचः[10] । वर्धन्तां[11] हिरण्यं दातव्यं वस्त्रं[12] दातव्यमित्याद्या वाचः सफला भवन्तु । अपि च[13] । वर्धन्ताम्[14] । मरुद्दत्ताः[15] । आपः[16] ।

**प॒देप॑दे मे जरि॒मा नि धा॑यि॒ वरू॑त्री वा श॒क्रा या पा॒युभि॑श्च ।**
**सिष॑क्तु मा॒ता म॒ही र॒सा नः॒ स्मत्सू॒रिभि॑र्ऋजु॒हस्त॑ ऋजु॒वनिः॑ ॥ १५ ॥**

**पदेपदे[18] ।** पदनिधाने पदनिधाने[19] । मे[20] । जीर्णा[21] । निधीयते[22] । शत्रूणां वारयित्री[23] । या[24] । शक्तिः[25] । सा च[26] जीर्णा भवति । तेजोभिः[27] । च सह । तथा सत्यात्मीयै[28] रसैः । अस्मान्[29] । माता[30] । पृथिवी[31] । सेवताम्[32] । शोभनम्[33] । देवैः[34] सह । प्रसारितहस्ता[35] । प्रसारिदाना[36] ।

---

१. शोभनयज्ञाय Sy.
२. देवसम्बन्धीनि Sy.
३. पृथिवीसम्बन्धीनि च Sy.
४. जन्मानि Sy.
५. अपसा Sy.
६. अभिप्रब्र० P. अभिप्राप्तुं ब्रवीमि Sy.
७. तादव्य० P., D.
८. स्वप्रतिपाद्यार्थप्रकाशिन्यः Sy.
९. आह्लादनं हिरण्यं वाग्रे यासां ताः । तादृश्यः सत्यो वर्द्धन्ताम् Sy.
१०. स्तुतयः Sy.
११. ०न्ताम P.
१२. वसून् D.
१३. VM. seems to take उदा as उत । अपि च seems to be the explanation of उदा ॥ उदकेन Sy.
१४. समृद्धा भवन्तु Sy.
१५. मरुद्भिः सम्भक्ताः Sy.
१६. P. and D. add वनोः कथा दाशेम कथं निधीमहि न after आपः ॥ नद्यश्च Sy.
१७. VM. ignores आ ।
१८. मद P., D.
१९. तदा तदा भूमौ Sy.
२०. मदीया Sy.
२१. स्तुतिः Sy.
२२. स्थाप्यते क्रियत इत्यर्थः Sy.
२३. अस्मदुपद्रववारयित्री भवति Sy.
२४. य D.
२५. शक्ता सती Sy.
२६. वाशब्दश्चार्थे Sy.
२७. रक्षणैः Sy.
२८. Something seems to be omitted before सति । The phrase should be तथा सति ।
२९. रसा सारभूता भूमिः Sy.
३०. अस्माकं स्तुतिम् Sy.
३१. सर्वस्य निर्मात्री Sy.
३२. महती पूज्या Sy.
३३. स्मच्छब्दः प्रशस्तवचनः । प्रशस्तैः Sy.
३४. मेधाविभिः स्तोतृभिर्निमित्तैः । तेषां परिचर्यया प्रीतेत्यर्थः Sy.
३५. प्रतारि० P., D. अस्मदनुकूलहस्ता Sy.
३६. ०नाः P., D. कल्याणदाना भवतु Sy.

**कुथा दाशेम नमसा सुदानूनेवया मुरुतो अच्छोक्तौ प्रश्रवसो मुरुतो अच्छोक्तौ ।
मा नोऽहिर्बुध्न्यो रिषे धादस्माकं भूदुपमातिवनिः ॥ १६ ॥**

**कथा दाशेम ।** कथम्[1] । निधीमहि[2] । नमस्कारेण[3] । शोभनदानान्[4] । एवं गच्छतः[5] । मरुतः[6] । प्रशस्तकीर्तने[7] । अच्छोक्तौ[8] सत्याम् कथमिमेऽस्मत्स्तोत्रमुपगच्छन्तीत्यर्थः, दाशिर्दानकर्मा निधाने पर्यवस्यति[9] । मा । अस्मान् । अहिर्बुध्न्यः[10] । हिंसार्थम्[11] । निदधातु[12] । किन्त्वस्माकम्[13] । भवतु[14] । वस्तुतेः[15] सम्भक्ता[16] ।

**इति चिन्नु प्रजायै पशुमत्यै देवासो वनते मर्त्यो व आ देवासो वनते मर्त्यो वः ।
अत्रा शिवां तन्वो धासिमस्या जरां चिन्मे निर्ऋतिर्जग्रसीत ॥ १७ ॥**

**इति चित् ।** हे देवाः[17] ! इत्थम् । युष्मान् । आभिमुख्येन भजते । पशुयुक्तायै[18] । प्रजायै[19] रक्षार्थम् । अस्मिन्[20] भजनेऽत्रेः । अस्य[21] । शरीरस्य[22] । जराम् । देवी निर्ऋतिः[23] । आस्येन ग्रसताम्[24] । यास्याजरं[25] शिवम्[26] । अन्नं भवति[27] ।

---

१. वयं कथा केन प्रकारेण Sy.
२. परिचरेम Sy.
३. स्तोत्रेणान्नेन वा Sy.
४. ०दानोन् P., D.
५. क्रियमाणप्रकारेण Sy.
६. मरुतः कथा केन प्रकारेण दाशेम Sy.
७. प्रश्रवसः प्रकृष्टान्ना भवन्ति । यद्वा प्रश्रवसः प्रकृष्टान्नस्य मम Sy.
८. ०र्तेनच्छो० P., D. आभिमुख्येन वचने निमित्ते सति तान् मरुतः कथं परिचरेम । तेषां दुराराध्यत्वादिति भावः Sy.
९. The passage दाशिर्दान....पर्यवस्यति, should immediately follow निधीमहि and precede नमस्कारेण ।
१०. देवः Sy.
११. हिंसकाय Sy.
१२. स्थापयतु Sy.
१३. स देवः अस्माकम् Sy.
१४. भवतो P., D.
१५. वस्तुतः or स्वस्तुतेः is suggested for वस्तुतेः ॥ शत्रूणां हन्ता Sy.
१६. VM. explains अच्छोक्तौ once. ॥ अभिगन्त्र्युक्तिः स्तुतिर्यस्य तादृशे मयि । यद्वा स्तोत्रनिमित्ते सति । पुनरुक्तिरादरार्था Sy.
१७. हे देवाः is omitted by P.
१८. पशुसहिताय Sy.
१९. Omitted by P.
अपत्याय Sy.
२०. अस्मिन् यज्ञे Sy.
२१. ०त्रेरयस्य P.
२२. देवैरनुगृहीतस्य पुत्रस्य Sy.
२३. ०स्य राजा न्नि० P. देवता Sy.
२४. ग्रसतु Sy.
२५. ०र D.
२६. Omitted by P.
२७. VM. ignores चित् । नु । मर्त्यः । देवासः । वनते । मर्त्यः । वः । मे and चित् ॥ चित् एव । नु क्षिप्रम् । मर्त्यः यजमानः । आदेवासः—वः, पुनरुक्तिरादरार्था । मे मम । चित् च Sy.

तां वो॑ दे॒वाः सु॑म॒तिमू॒र्जय॑न्ती॒मिष॑मश्याम वसवः॒ शसा॒ गोः ।
सा नः॑ सु॒दानु॑र्मृ॒ळय॑न्ती दे॒वी प्रति॒ द्रव॑न्ती सुवि॒ताय॑ गम्याः ॥ १८ ॥

तां[1] वः । हे देवाः ! युष्माकम् । ताम्[2] । सुमतिम्[3] । स्तोतॄणामन्नं कुर्वाणम्[4] । स्तोतृभिरिष्यमाणम्[5] । स्तुतिवाचः[6] । शंसने[7] । सा । सुमतिः । अस्मान् । शोभनदाना । सुखयन्ती । स्तोतॄन्[8] प्रति । गच्छन्ती[9] । अभ्युदयार्थं[10] प्रतिगच्छन्ती । अभिगच्छतु[11][12] ।

अ॒भि न॒ इळा॑ यू॒थस्य॑ मा॒ता स्म॒न्नदी॑भि॒रुर्व॒शी वा॑ गृणातु ।
उ॒र्वशी॑ वा बृहद्दि॒वा गृ॑णा॒नाभ्यू॒र्ण्वा॒ना प्र॑भृ॒थस्या॒योः ॥ १९ ॥

अभि नः[13] । प्रजापश्वादीनां सङ्घस्य[14] । माता[15] । भूमिः[16] । नदीभिः सह[17] । अस्मान् स्तुवतः[18] । प्रशस्तम्[19] । अभिगृणात्वेवम्[20] । उर्वशी[21] चाप्सराः । किंच[22] । उर्वशी[23] । बृहद्दिवा[24] । चाप्सराः । स्तोत्रं

---

१. वा P., D. २. स्वभूतां तां प्रसिद्धाम् Sy.

३. शोभनमननसाधनाम् । अन्नेन मतिवृद्धिः 'अन्नमयं हि सौम्य मनः' (Chā U.6.5.4.) इत्यादिषु प्रसिद्धा Sy. ४. बलकरीम् Sy.

५. एषणसाधनमन्नं क्षीरदध्यादिलक्षणम् Sy.

६. ०वम् D. गोः सकाशात् Sy.

७. स्तुत्या Sy. ८. It seems to be the explanation of देवी ।

९. अस्मदभिमुखं गच्छन्ती Sy.

१०. सुखाय Sy. ११. अभिगच्छेत् Sy.

१२. VM. ignores अश्याम and वसवः ॥ अश्याम प्राप्नुयाम हे वासयितारः ! Sy.

१३. अत्रेरार्षम् Dur.

१४. गोसङ्घस्य । यद्वा यूथस्य मरुद्गणस्य Sy. गजादेः पशुजातस्य यत्किञ्चिद् यूथं तस्य सर्वस्य SKN. मेघयूथस्य Dur.

१५. निर्मात्री Sy. मातृभूता । मेघयूथस्य वा निर्मात्री SKN. किंलक्षणा ? . . . निर्मात्री मध्यमा Dur.

१६. ०मि P. यद्वा इळा गोरूपधरा मनोः पुत्रीत्याहुः । यद्वा यूथस्य मरुद्गणस्य निर्मात्रीळा माध्यमिकी वाक् Sy. का गृणातु ? इळा माध्यमिका वाक् SKN. कोऽसौ ? इळा Dur.

१७. गङ्गादिभिः सह गृणातु Sy. गङ्गाद्याभिः SKN. केनाभिगृणातु ? . . . नदनाभिरद्भिः Dur. १८. अस्मा स्तुवन्तः P.

१९. स्मच्छब्दः प्रशस्तवचन इत्युक्तम् । प्राशस्त्यं गृणातु Sy. स्मच्छब्दः सहार्थे । सह SKN.

२०. ०णात्वमेवम् P., D. अभिगृणात्विति सम्बन्धः । नान्ये, ईदृशः स्तोतार इत्येवम् । अभिगृणातिः स्तुतिकर्मा । अभिष्टौतु नोऽस्मान् SKN. अभिशब्दयत्वस्मान् Dur.

२१. माध्यमिकी वाक् Sy. उर्वशीशब्दश्चाश्नोतेः क्रियाशब्द इळाया विशेषणार्थः । . . . . यूथस्य माता उर्वशीति बह्वाकाशव्यापिनी चेत्यर्थः । अभिष्टौत्विति दर्शितः सम्बन्धः SKN. उर्वशीति वा योच्यते इळेति वा सा गृणातु नोऽस्मानित्यभिस्तनयतु Dur.

२२. वा अथवा Sy. वाशब्दः समुच्चये । यूथस्य मातेत्येतदपेक्षश्च समुच्चयः SKN. उपमार्थे वा वाशब्दो भेदापेक्षया Dur.

२३. न च केवलेळा, किं तर्हि ? उर्वशी वा, अयमपि वाशब्दः समुच्चय एव । उर्वशी मध्यमस्थाना विद्युत् SKN. उर्वशी Dur.

२४. प्रभूतदीप्तिः Sy. दिवाशब्दो दीप्तिवचनः । बृहदिति दीप्तिर्यस्याः सा महादीप्तिरित्यर्थः SKN. बृहद् महद् गृणातु दिवा द्योतनवता विद्युत्सहितेनोदकसमूहेन Dur.

भरमाणस्य[1] मम । मनुष्यस्याभिगृणातु[2] । स्वतेजसा[3] जगदभिच्छादयन्ती[4] । स्तूयमाना[5] मयेति[6] ।

## सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥ २० ॥

सिषक्तु । इत्थं देवान् स्तुत्वा स्वाभिलषितमूर्जव्यस्य[7] राज्ञो निवेदयति—सेवताम्[8] । अस्मान् । ऊर्जव्यस्य[9] । पुष्टेः[10] सकाशात् पुष्टिरिति[11] । यास्कः—"बृहद्दिवा[12] महद्दिवा[13] गृणाना । अभ्यूर्णवाना[14] । प्रभृतस्य[15] । चायोरयनस्य[16] ज्योतिषो[17] वोदकस्य वा[18] । सेवतां[19] नोऽन्नस्य पुष्टेः[20]" इति ।[21]

---

१. तेजसो वोदकस्य वा दानेन । 'प्रभृथस्य तेजसो वोदकस्य' N.11.49. अथवा प्रभृथस्य प्रभरणवत आयोर्यज्ञम् आच्छादयन्ती Sy. प्रकर्षेण सम्भृतस्य Dur.

२. आयुं मनुष्यं यजमानम् Sy. गमनशीलस्योदकस्य समूहेन Dur.

३. सते० P.

४. ०भिछादयन्ति P. 'ऊर्णुञ् आच्छादने' आभिमुख्येन छादयन्ती, अस्मान् कृत्स्नां वा पृथिवीम् SKN. सर्वमिदमभिप्रच्छादयन्ती Dur.

५. शब्दयन्त्यस्मदीयं कर्म प्रशंसन्ती Sy. कर्मणि कर्तृप्रत्ययः । गीर्यमाणा स्तूयमानाऽस्माभिः SKN. शब्दयन्ती Dur.

६. 'अभिगृणातु न इळा । यूथस्य माता (सर्वस्य माता) स्मदभि नदीभिः । उर्वशी वा गृणातु उर्वशी वा । बृहद्दिवा महद्दिवा । गृणाना । अभ्यूर्णवाना । प्रभृथस्य प्रभृतस्य । आयोरयनस्य (मनुष्यस्य) ज्योतिषो वोदकस्य वा । सेवतां नोऽन्नस्य पुष्टेः' N.11.49.; SKN. 4.94.

७. जर्व्यस्य P.

८. सेवताम् । सामर्थ्याद्दिवसङ्ग इति गम्यते । अथवोर्वशी मरुद्गणो वा गृह्यते प्रकृतत्वादिति Sy.

९. एतन्नामकस्य राज्ञः Sy. यवादेरन्नस्य Dur.

१०. 'पोषकस्य सम्बन्धिनः' षष्ठी चतुर्थ्यर्थे । पुष्टये अस्माकमन्नस्य वृद्धय इत्यर्थः Sy.

११. पुष्टिरिति पुष्टिरिति D.

१२. ब्रहदिव P. पोषणाय Dur.

१३. ०हृदि P., D.

१४. ०ना व्यूण्वाना P. ०नाप्यूण्वाना D.

१५. N. adds प्रभृथस्य before प्रभृतस्य ।

१६. च is omitted by N.

१७. ज्ञोतिपोषो D.

१८. The passage of the *Nirukta*, quoted by VM. beginning with 'बृहद्दिवा and ending with वोदकस्य वा' belongs to the previous stanza, no. 19. According to the Sarvānukramaṇī (26.41.p.20) the hymn V.41 contains 20 stanzas, the twentieth stanza consisting of one pāda (Virāṭ) only. The *Nirukta* however, reads the 19th and the 20th stanzas as one stanza and explains both together.

१९. सेवन्तां P., D.

२०. N. 11. 49.; SKN. 4. 94.

२१. Ms. D. puts the figure ॥४१॥ here to indicate the end of the forty-first hymn. No such number is given in P.

V.42.

**प्र शंतमा वरुणं दीधिती गीर्मित्रं भगमदितिं नूनमंश्याः ।**
**पृषद्योनिः पञ्चहोता शृणोत्वतूर्तपन्था असुरो मयोभुः ॥ १ ॥**

[1] **प्र शन्तमा** । [2] प्राप्नोतु । [3] सुखतमा । [4] दीप्ता । [5] स्तुतिः । [6] इदानीम् । [7] वरुणादींश्च । [8] उरुः ? किं चास्मदीयां गिरं पृषद्वर्णाश्वस्थानः [9] । वायुश्च [10] । शृणोतु [11] । अन्यैरतीर्णमार्गः [12] । बलवान् [13] । सुखस्यभावयिता, [14] 'वायुः पञ्चहोता संप्रणः' [15] इति ब्राह्मणम् [16] ।

**प्रति मे स्तोममदितिर्जगृभ्यात्सूनुं न माता हृद्यं सुशेवम् ।**
**ब्रह्म प्रियं देवहितं यदस्त्यहं मित्रे वरुणे यन्मयोभु ॥ २ ॥**

**प्रति** [17] । मदीयम् । स्तोमम् [18] । अदितिः [19] । प्रतिगृह्णातु । पुत्रम् [20] । इव । माता [21] । हृद्यम् [22] । सुसुखम् [23] ।

---

१. 'प्र शन्तमा' इत्यष्टादशर्चं दशमं सूक्तं भौमस्यात्रेरार्षं त्रैष्टुभम् । पूर्वसूक्ते 'वै तत्' (KSA. 26.41.p.20.) इत्युक्तत्वाद् इदमपि वैश्वदेवम् । 'तमु ष्टुहि' इत्येकादशी रुद्रदेवत्या । सप्तदश्येकपदा 'एतयोरुपान्त्यैकपदा' (KSA. 26.43.p.20.) इत्यनुक्रमिष्यमाणत्वात् । अत्रानुक्रमणिका—'प्र शन्तमा द्व्यूनैकादशी रौद्री' (KSA.26.42.p.20.) इति । विनियोगो लैङ्गिकः Sy.

२. ०माः D.

३. अत्यन्तं सुखकरी Sy.

४. दीधित्या कर्मणा हविष्प्रक्षेपणात्मकेन सह Sy.

५. स्तुतिरूपा वाक् Sy.

६. अवितथम् Sy.

७. वरुणं मित्रं भगमदितिं च Sy.

८. The reading is doubtful.

९. पृषद्वर्णान्तरिक्षस्थः Sy.

१०. पञ्चहोता । पञ्चविधस्य प्राणापानादिहोमस्य साधको वायुः । यद्वा, पञ्चहोतेति वायोर्नाम । 'वायुः पञ्चहोता स प्राणः' इति हि श्रुतेः Sy.

११. शृणोतु स्तोत्रमिति Sy.

१२. अहिंसितगतिः Sy.

१३. ०वा D.
प्राणस्य दाता Sy.

१४. सुखस्यास्पदभूतः । एवमुक्तलक्षणो वायुः Sy.

१५. सव्रणः P. सप्राणः is suggested for संप्रणः

१६. The passage 'वायुः......ब्राह्मणम् should follow immediately वायुश्च and precede शृणोतु ।

१७. प्रतिप्रति D., P.

१८. स्तोत्रम् Sy.

१९. ०ति P. देवता Sy.

२०. स्वतनुजम् Sy.

२१. मात्रा D. जननीव । सा यथा प्रतिगृह्यालिङ्ग्य परितुष्यति तद्वदित्यर्थः Sy.

२२. हृदयङ्गमम् Sy.

२३. शोभनसुखकरम् । एतद्द्वयं साधारणम् Sy.

अहमदितेः प्रसादेन । देवैर्निहितम्[1] । प्रियम्[2] । यद् । अन्नम्[3] । अस्ति तत् प्राप्नवानि[4] । तथा मित्रे च[5] । वरुणे च । यत्[6] । अस्य सुखस्योत्पादकं तदपीति ।

**उदीरय कविर्तमं कवीनामुनत्तैनमभि मध्वा घृतेन ।**
**स नो वसूनि प्रयता हितानि चन्द्राणि देवः सविता सुवाति ॥ ३ ॥**

उदीरय[8][9] । हे स्तोतारः[10] ! उत्थापयत[11] । अत्यन्तं कवितमम्[12] । अभ्युनत्त[13] । एनम्[14] । मोदकेन[15] । आज्येन[16] । सः । अस्मभ्यम्[17] । धनानि[18] । शुद्धानि[19] । हितानि । आह्लादनानि[20] । देवता[21] प्रेरयति[22] ।[23]

**समिन्द्र णो मनसा नेषि गोभिः सं सूरिभिर्हरिवः सं स्वस्ति ।**
**सं ब्रह्मणा देवहितं यदस्ति सं देवानां सुमत्या यज्ञियानाम् ॥ ४ ॥**

समिन्द्र[24] । हे इन्द्र[25] ! त्वम् । अस्मान् । मनसा[26] । गोभिः[27] । सन्नय[28] । तथा[29] हरिवः[30] ! प्राज्ञैश्च[31] । सन्नय[32] ।

---

१. देवैः प्राप्यम् Sy.  २. प्रियकरम् Sy.
३. ०वैर्निहितयर्चया वर्चयान्नम् P. ०वैर्निहितया-वर्चयान्नम् D. मन्त्रजातम् Sy.
४. प्राप्तवानि P., D. प्रापयामीति शेषः । यद्वा मित्रे वरुणे चाहोरात्राभिमानिदेवयोर्यदुक्तलक्षणं ब्रह्म परिवृढं यज्ञादिरूपं कर्मास्ति तदहं धारयामीति Sy.  ५. Omitted by P.
६. ब्रह्म Sy.  ७. सुखसाधनम् Sy.
८. 'उदीरय' इत्येषैकादशिने सावित्रे पशौ वपायाज्या। सूत्रितञ्च—'उदीरय कवितमं कवीनां भगं धियं वाजयन्तः पुरन्धिमिति द्वे' (Ā. S. 3.7.) इति Sy.
९. अनया सविता च स्तूयते Sy.
१०. हे ऋत्विजः ! Sy.
११. ऊर्ध्वं प्रापयत हर्षयतेत्यर्थः Sy.
१२. क्रान्तदर्शिनममुं पुरोवर्तिनमग्निं सवितारं वा Sy.
१३. अभिषिञ्चत । तर्पयतेत्यर्थः Sy.
१४. अभ्युक्तेनम् P. अभ्युनक्तेनं D. देवम् Sy.
१५. मधुरेण सोमरसेन Sy.  १६. घृतेन Sy.
१७. आज्यौन्न सोलभ्यं P. आज्येन सोलभ्यं D.
१८. धना D. निवासयोग्यानि गवादिधनानि Sy.
१९. प्रयतानि Sy.  २०. आह्रादानानि P. आह्रादनानि D. आह्लादकानि हिरण्यानि Sy.
२१. देवः सविता is suggested for देवता ।
२२. प्रयच्छत्वित्यर्थः Sy.
२३. VM. ignores कवीनाम् ।
२४. ०न्द्रं P., D.  २५. हे भगवन्निन्द्र ! U.
२६. प्रकृष्टेन चेतसा Sy. मनसाऽनुग्रहयुक्तेन Mah. प्राणेन समीचीनेन BB.
२७. गोभिः सह Sy. वाग्भिर्गवादिपशुभिर्वा Mah. वाग्भिर्गवादिभिः पशुभिः U. शब्दैः स्तुतिलक्षणैः BB.
२८. सन्न P. नयसि । अस्मान् गाः प्रापयसीत्यर्थः Sy. समित्युपसर्गो नेषीत्यनेन सम्बध्यते।.... सन्नयसि संयोजयसि Mah. समित्ययमुपसर्गो नेषीत्यनेन क्रियापदेन सम्बध्यते ।....सङ्गमयसि U. सन्नय संयोजय । मनस्विनो वाग्मिनश्च कुरु स्तोतुमित्यर्थः BB.
२९. कथा P. D.
३०. हे हरिभ्यां तद्वन्निन्द्र ! Sy. हे मघवन् ! धनवन् ! Mah. महाधन ! BB.
३१. मेधाविभिः पुत्रैर्ऋत्विग्भिर्वा Sy. पण्डितैर्होत्रादिभिः Mah. पण्डितैः U. विद्वद्भिर्होतृप्रभृतिभिस्स्तोत्रकुशलैश्च BB.
३२. सन्नाय P. D. सन्नेषि Sy. संयोजयसि Mah. सङ्गमयसि U.

अविनाशेन[1]। तथाऽन्नेन[2] च। सन्नय[3]। यच्च[4] यादृक्[5] च। अस्ति। देवैर्निहितम्[6]। तथा यज्ञार्हाणाम्[7]। देवानाम्। सुमत्या[8] च। सन्नय[9][10]।

**दे॒वो भगः॑ सवि॒ता रा॒यो अंश॒ इन्द्रो॑ वृ॒त्रस्य॑ सं॒जितो॒ धना॑नाम्।**
**ऋ॒भु॒क्षा वाज॑ उ॒त वा॒ पुरं॑धि॒रव॑न्तु नो अ॒मृता॑सस्तु॒रासः॑ ॥ ५ ॥**

देवः[11][12]। भगः। देवः[13]। तथा। धनस्य[14]। प्रेरयिता[15]। अंशः[16]। तथा[17] वृत्रस्य[18]। धनानां च। सह जेता[19]। इन्द्रश्च[20]। ऋभुः। वाजः[21]। विभ्वा च[22]। बहुप्रज्ञः[23]। एते देवाः[24]। रक्षन्तु। अस्मान्। त्वरमाणाः[25]।

**म॒रुत्व॑तो॒ अप्र॑तीतस्य जि॒ष्णोरजू॑र्यतः॒ प्र ब्र॑वामा कृ॒तानि॑।**
**न ते॒ पूर्वे॑ मघव॒न्नाप॑रासो॒ न वी॒र्यं१॒॑ नूत॑नः॒ कश्च॒नाप॑ ॥ ६ ॥**

मरुत्वतः[26]। मरुद्भिर्युक्तस्य[27]। शत्रुभिरप्रतिगतस्य[28]। जयशीलस्य[29]। जरारहितस्य[30] तव। प्रब्रूमः[31]।

---

१. स्वस्तिभिः क्षेमैः Sy. क्षेमेण Mah. अविनाशेन वा BB. स्वस्तीत्यविनाशनाम N. 3. 21.

२. प्रभूतेनान्नेन Sy. अर्थज्ञानसहितेन वेदेन Mah. ब्रह्मणा वेदेन वेदार्थज्ञानेन वा तदर्थानुष्ठानेन वा BB.

३. सङ्गमयसि U. अस्मान् सन्नेषि BB.

४. अन्नम् Sy. यदस्ति यन्नित्यमित्यर्थः U. यच्चान्यत् BB. ५. दच्च P.

६. देवहितम् Sy. देवार्थं कृतं कर्म यदस्ति यज्ञाख्यं देवैः कृतं दृष्टं वा यत्कर्म तेन सन्नेषि Mah. देवैर्दृष्टं त्रयीलक्षणम् U. देवार्थं कृतमस्ति कर्माग्निहोत्रादिकं तेनापि BB.

७. यज्ञसम्बन्धिनाम् Mah. यज्ञसम्पादिनाम् U. यज्ञार्हाणं यज्ञसम्पादितानामग्न्यादीनाम् BB.

८. अनुग्रहबुद्ध्या Sy.; Mah. तृतीयया विपरिणामः। शोभनया मत्या U. कल्याणमत्याऽनुग्रहबुद्ध्या BB.

९. संनेषि Sy. संयोजयसि Mah. अस्मान् संयोजय BB.

स॒ जुहोति। स॒मिन्द्र णो म॒नसा नेषि गो॒भिरि॒ति म॒नसेति तन्म॒नसा रिरिचानमा॒प्याययति गो॒भिरि॒ति तद्गो॒भी रिरिचानमा॒प्याययति स॒ ॐ सू॒रिभि॒र्मघवन्त्स॒ ॐ स्वस्त्या॒। सं ब्र॒ह्मणा देव॒कृतं यदस्ती॒ति ब्र॒ह्मणेति तद्ब्र॒ह्मणा रिरिचानमा॒प्याययति सं॒ देवा॒ ना ॐ सुमतौ॒ यज्ञियाना ॐ स्वा॒हा

१०. This stanza=YV.8.15.=TS.1.4.44.1. SB.4.4.4.7.p.387.

११. देव P., D.

१२. अत्र लिङ्गोक्ता देवताः Sy.

१३. हेहो P., D.

१४. सन्नस्य P. धनस्य स्वामी Sy.

१५. सविता Sy. १६. त्वष्टा Sy.

१७. ०ता शशत० P. ०ताशश्वत्त० D.

१८. वृत्रस्य हन्ता Sy.

१९. सम्यग्जेतारः Sy.

२०. एते देवाः Sy.

२१. वाचः P., D. २२. अपि च Sy.

२३. बहुधीर्विभ्वोच्यते Sy.

२४. एते च अमृता अमरणधर्माणो भगादिदेवाः Sy.

२५. अस्मद्यज्ञं प्रति त्वरमाणाः सन्तः Sy.

२६. वयं यजमानाः Sy.

२७. मरुद्भिस्तद्वत इन्द्रस्य Sy.

२८. युद्धेऽपलायमानस्य Sy. २९. न केवलं तावन्मात्रम्। जिष्णोः जयनशीलस्य Sy.

३०. अजीर्यमाणस्य। सर्वदा यून इत्यर्थः Sy.

३१. प्रख्यापयाम Sy.

कर्माणि । हे मघवन्[1] ! तव । वीर्यम्[2] । न । पूर्वे[3] । प्रापुवन्[4] । नापि । अपरे[5] प्राप्स्यन्ति । नापि सम्प्रतिनः[6] । कश्चिद्[7], आप्नोति[8] ।

**उप॑ स्तुहि प्रथ॒मं र॑त्न॒धेयं॒ बृह॒स्पतिं॑ सनि॒तारं॒ धना॑नाम् ।**
**यः शंस॑ते स्तुव॒ते शंभ॑विष्ठः पुरू॒वसु॑रा॒गम॒ज्जोहु॑वानम् ॥ ७ ॥**

उपस्तुहि[9] । उपस्तुहि । मुख्यम्[10] । रत्नानां धातारम्[11] । बृहस्पतिम्[12] । प्रदातारम्[13] । धनानाम्[14] । यः[15] । शस्त्रैः शंसते । स्तोत्रैः स्तुवते[16] च । अतिशयेन शं[17] भावयन् । बहुधनः[18] । आगच्छति[19] । अत्यन्तमाह्वयन्तमिति[20] ।

**तवो॒तिभिः॒ सच॑माना॒ अरि॑ष्टा॒ बृह॑स्पते म॒घवा॑नः सु॒वीराः॑ ।**
**ये अ॑श्व॒दा उ॒त वा॒ सन्ति॒ गो॒दा ये व॑स्त्र॒दाः सु॒भगा॒स्तेषु॒ रायः॑ ॥ ८ ॥**

तवोतिभिः । तव । रक्षणैः[21] । सङ्गच्छमानाः । अरिष्टा[22] भवन्ति । बृहस्पते ! धनवन्तः । सुपुत्राश्च[23] । ये[24] जनाः याचितृभ्यः विद्यन्ते[25] । अश्वानां[26] दातारः[27] । अपि । वा[28] । विद्यन्ते । गवां[29] दातारः । ये च । वस्त्रदाः[30] । तेषु[31] त्वया प्रीयमाणेषु[32] । कल्याणा भवन्ति[33] । रायः[34] ।

---

१. अथ प्रत्यक्षेणोच्यते हे इन्द्र ! Sy.
२. पराक्रमम् Sy.
३. पुरातनाः पुरुषाः Sy.
४. आपुः Sy.
५. अपरेऽपि नापुः Sy.
६. सम्प्रतितनः is suggested for सम्प्रतिनः । किम्बहुना नूतनः Sy.
७. कश्चनाश्चर्यभूतः Sy.
८. यः कोऽपि वीर्यं न प्राप्नोति Sy.
९. हे अन्तरात्मन् ! त्वम् Sy.
१०. प्रकृष्टतममित्यर्थः Sy.
११. रमणीयधनदातारम् । अथवा रत्नशब्देन मणिमुक्तादयो गृहीता इह धनशब्देन गवादयः । गवादिदातारम् Sy.
१२. बृहतो मन्त्रस्य पतिं स्वामिनं देवम् Sy.
१३. सम्भक्तारम् Sy.
१४. धनानां हविर्लक्षणानाम् Sy.
१५. देवः Sy.
१६. स्तुवते सामभिर्यजमानाय Sy.
१७. सं P.
सुखस्य भावयितृतमो भवति Sy.
१८. प्रभूतधनः सन् Sy.
१९. आगच्छति तमुपस्तुहि Sy.
२०. ०यत० P. यश्च आह्वयन्तं यजमानम् Sy.
२१. रक्षाभिः Sy.
२२. अहिंसिताः Sy.
२३. शोभनपुत्राश्च भवन्ति Sy.
२४. त्वदनुगृहीताः Sy.
२५. सन्ति Sy.
२६. बहूनामश्वानाम् Sy.
२७. अश्वान्दाता ते तारः P.
२८. उत वा अथवा Sy.
२९. नवां P., D.
३०. वसूवाः P., D.
३१. तेषु सर्वेषु Sy.
३२. ०मानेषु P., D.
३३. शोभनधनाः सन्ति Sy.
३४. राया P., D. धनानि सम्भवन्त्विति शेषः Sy.

विसर्माणं कृणुहि वित्तमेषां ये भुञ्जते अपृणन्तो न उक्थैः ।
अपव्रतान्प्रसवे वावृधानान्ब्रह्मद्विषः सूर्याद्यावयस्व ॥ ९ ॥

**विसर्माणम्** । विसरणशीलं[1] विनश्यमानम्[2] । कुरु[3] । एषाम्[4] । धनम्[5] । ये स्वयमेव । भुञ्जते । अस्मभ्यम्[6] । अप्रयच्छन्तः । एतैः प्रयुज्यमानैरुक्थैः[7][8] । अपगतकर्मणः[9] सर्वदा । स्वनिर्गम[10] एव । वर्धमानान् । ब्रह्मद्विषः[11] । अस्मात्[12] सूर्यात् । पृथक् कुरु[13], मारय ।

य ओहते रक्षसो देववीतावचक्रेभिस्तं मरुतो नि यात ।
यो वः शमीं शशमानस्य निन्दात्तुच्छ्यान्कामान्करते सिष्विदानः ॥ १० ॥

**य ओहते** । यः[14] । देवैरशितव्ये[15] अन्ने । राक्षसान्[16] । प्रापयति । तम्[17] । हे मरुतः ! चक्ररहितैर्भवतां[18] रथैः । नियात[19], यातिर्वधकर्मसु पठितः । यः । युष्मान्[20] । भजमानस्य[21] । कर्म[22] । निन्दति[23] । स काष्ण्यादीना-[24]मात्मीयानां कर्मणां कामान्[25] । अल्पफलान्[26] । करोति[27] । कार्येषु स्विद्यद्गात्रः[28] प्रवर्तमान इति ।

---

१. विसंमरण शीलं D. विसर्माणशीलः P.
२. विनश्यमा० P.
३. कुरु हे ब्रह्मणस्पते ! Sy.
४. वक्ष्यमाणानाम् Sy.
५. धनानां D.
६. विशिष्टेभ्योऽस्मभ्यम् Sy.
७. ०युमा० D.
८. स्तुतिप्रतिपादकैः शस्त्रैः Sy.
९. अवगतकर्म P.
१०. ०र्ग P. प्रसवे । उत्पत्तिमति मनुष्यलोके Sy.
११. ब्राह्मणद्वेष्टॄन् मन्त्रद्वेष्टॄन् वा Sy.
१२. Omitted by P. ०स्मान् D.
१३. अन्धकारे स्थापयेत्यर्थः Sy.
१४. यजमानः Sy.
१५. देवानां वीतिः प्राप्तिर्भक्षणं वा यत्र स तथोक्तः। तस्मिन् यज्ञे । अन्यथानुष्ठानादिना आसुरं करोतीत्यर्थः Sy.
१६. बलिनो राक्षसान् Sy.
१७. यजमानम् Sy.
१८. अचक्रै रथैः Sy.
१९. नियतयात P. नितरां प्रापयतान्धकारम् । यद्वा । अचक्रेभिरिति पूर्वत्रान्वयः । चक्रशब्देनाङ्गान्युच्यन्ते । पुनः पुनरङ्गरहितैः केवलैरेव प्रधानैरोहते प्रापयति, साङ्गं हि कर्म देवानभ्येति Sy.
२०. युष्माकम् Sy.
२१. शंसमानस्य मम सम्बन्धि Sy.
२२. कर्म स्तुतिलक्षणम् Sy.
२३. ०न्ति D. निन्देत् वैदिकं ज्योतिष्टोमादिरूपं कर्म निन्दति Sy.
२४. काष्या० P. ०काण्याॅ० or ०कृष्या० is suggested for ०काष्ण्या० ।
२५. कृष्यादिजनितभोगान् Sy.
२६. स्वयञ्च तुच्छ्यान्. नश्वरान् Sy.
२७. कुरुते, यद्वा युष्मासु कमनीयान् भोगान् तुच्छ्यान् करोति Sy.
२८. ०द्यन गा० D. स्विद्यन्नात्मानं क्लेशयन् Sy.

तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य ।
यक्ष्वा महे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य ॥ ११ ॥

तमु ष्टुहि । तम्[1] । एव[2] । स्तुहि[3] । यः । शोभनेषुः[4] । शोभनधनुष्कश्च[5] भवति । यो वा । सर्वस्य । भेषजस्य[6] । ईश्वरो[7] भवति । यज च । महे[8] । सौमनस्याय[9] । रुद्रम्[10] । नमस्कारैः[11] । देवम्[12] । क्षेप्तारम्[13] । परिचर[14] ।

दमूनसो अपसो ये सुहस्ता वृष्णः पत्नीर्नद्यो विभ्वतष्टाः ।
सरस्वती बृहद्दिवोत राका दशस्यन्तीर्वरिवस्यन्तु शुभ्राः ॥ १२ ॥

दमूनसः[15] । दममनसः[16] । व्यापनशीलाः[17] । ये[18] । कल्याणहस्ताः[19] । याश्च पर्जन्यस्य[20] । पत्न्यः[21] । नद्यः[22] । महतामपि तनूकर्त्र्यः[23] । तथा सरस्वती[24] । बृहद्दिवा[25] चाप्सराः[26] । तथा[27] । राका[28] ताः सर्वाः । प्रयच्छन्त्यो[29] धनम् । अस्माकमपि धनं दातुमिच्छन्तु[30] । शोभमानाः[31] ।

---

१. हे आत्मन् ! Sy.
२. रुद्रम् Sy.
३. स्तुतिं कुरु Sy.
४. ०नेषु P., D. शोभनबाणः Sy.
५. विरोधिहन्तृत्वात् सुष्ठुत्वम् Sy.
६. औषधस्य Sy.
७. ०रस्य P. शारीरस्य सांसारिकस्य चारिष्टस्य शमनायेश्वरव्यतिरिक्तस्यौषधस्याभावाद्भिषक्तमत्वाच्चास्य भेषजस्वामित्वम् । 'भिषक्तमं त्वा भिषजां शृणोमि' (RV.II. 33.4.) इत्यादिश्रुतेः Sy.
८. महते Sy.
९. सुमनस्त्वाय । ईश्वराराधनाच्चित्तशान्तिः प्रसिद्धा Sy.
१०. दुःखात्तत्साधनाद्दुरिताद्वा मोचयितारं देवम् Sy.
११. हविर्भिर्नमस्कारैर्वा Sy.
१२. देवैः D. द्योतमानम् Sy.
१३. प्रकृष्टासुम् । बलवन्तमित्यर्थः । यद्वा प्राणदातारं रुद्रम् Sy.
१४. ०च P.
१५. अत्र लिङ्गोक्ता देवताः Sy.
१६. दानमनसो दान्तमनसो वा Sy.
१७. व्यावन० D. चमसाश्वरथगवादिशोभनकर्मवन्तः । मत्वर्थो लुप्यते Sy.
१८. सन्ति Sy.
१९. अत एव कुशलहस्ताः Sy.
२०. ते ऋभवो वर्षकस्येन्द्रस्य Sy.
२१. वश्यः P. पालयित्र्यः Sy.
२२. द्यः P. नदनशीला गङ्गाद्याः Sy.
२३. ऋभूणां मध्यमेन कृताः Sy.
२४. ०ति P. सरस्वती एतन्नामिका नदी वाग्देवी वा Sy.
२५. प्रभूतदीप्तिः Sy.
२६. ०रसा P. ०रः D.
२७. अपि च Sy.
२८. ०का: P. देवी च Sy.
२९. दशस्यन्त्यः कामान् प्रयच्छन्त्यः Sy.
३०. अस्मभ्यं धनमिच्छन्तु Sy.
३१. दीप्तास्ताश्च Sy.

**प्र सू महे सुंशरणाय मेधां गिरं भरे नव्यंसीं जायमानाम् ।**
**य आंहना दुंहितुर्वक्षणांसु रूपा मिंनानो अकृंणोदिदं नः ॥ १३ ॥**

प्र सु[1] । प्रकर्षेण, सुष्ठु, भरामि[2] । महते । सुनिलयाय[3] बुद्धिम्[4] । तथा स्तुतिं च । बुद्धेर्जायमानाम्[5] । यः[6] । आहननशील[7] इन्द्रः । दुहितृभूमेः[8] । नदीषु । रूपाणि, ओषधिवनस्पत्यादीनाम् । मिमानः[9] उत्पादयन् । अस्मदर्थम्[10] । इदम्[11] । कृतवान्,[12] इदमित्युदकनामेति[13] ।[14]

**प्र सुंष्टुतिः स्तनयंन्तं रुवन्तंमिळस्पतिं जरितर्नूनमंश्याः ।**
**यो अब्दिमाँ उंदनिमाँ इयंर्ति प्र विद्युता रोदंसी उक्षमाणः ॥ १४ ॥**

प्र सुष्टुतिः[15] । सुष्टुतिः[16] । जरितः[17] ! स्तननशब्दम्,[18] अवस्फूर्जनशब्दं[19] च कुर्वन्तम्[20] । पृथिव्याः[21] । पतिम्[22] । यः[23] । मेघवान्[24] । उन्दनवान्[25] । प्रगच्छति[26] । विद्युता सह[27] । द्यावापृथिवी[28] । सिञ्चन्निति[29] ।

---

१. सुः P.
२. सम्पादयामि Sy.
३. सुखनि० P. शोभनरक्षकायेन्द्राय पर्जन्याय वा सुसुखाय वा Sy.
४. मतौ धीयमानाम् Sy.
५. इदानीमुत्पाद्यमानाम् । नूतनामित्यर्थः Sy.
६. इन्द्रः पर्जन्यो वा Sy.
७. ०हननशी० P., D. अहन्ता सेक्ता Sy.
८. दुहितृस्थानीयायाः पृथिव्या हिताय Sy.
९. ०स्पति नोन्निम्मिदयत् P. ०स्पती नोर्निमिदयत् D. कुर्वाणः Sy.
१०. अस्मभ्यम् Sy.
११. उदकम् Sy.
१२. करोतु Sy.
१३. इत्युदकेनामेति P. D. Ngh. 1.14. The passage इद....नाम should immediately follow इदम् and precede कृतवान् ।
१४. VM. ignores नव्यसीम् । नव्यसीं नवतरामतिशयेन स्तुत्यां वा Sy.
१५. सुः P. सुष्ठुरिति D.
१६. अत्र पर्जन्यः स्तूयते Sy.
१७. सुष्ठुरिति P. शोभना स्तुतिः Sy.
१८. हे स्तोतः ! त्वदीया स्तुतिः Sy.
१९. गर्जन्तम् Sy.
२०. अपस्पूर्दनशब्दं P. वर्षणजनितं शब्दं कुर्वाणम् Sy.
२१. अन्नस्योदकस्य वा Sy.
२२. स्वामिनम् Sy.
२३. पर्जन्यः Sy.
२४. मेघेष्वपान् P., D. अब्दिरपां दानवान् मेघः । तद्वान् Sy.
२५. उदकवान् Sy.
२६. गच्छति Sy.
२७. तडिता Sy.
२८. द्यावापृथिव्यौ Sy.
२९. VM. ignores प्र । नूनम् and अश्याः ॥ प्रकर्षेण । व्याप्नोतु Sy.

**ए॒ष स्तोमो॒ मारु॑तं॒ शर्धो॒ अच्छा॑ रु॒द्रस्य॑ सू॒नूँर्यु॑व॒न्यूँरुद॑श्याः ।**
**कामो॑ रा॒ये ह॑वते मा स्व॒स्त्युप॑ स्तुहि॒ पृष॑दश्वाँ अ॒यासः॑ ॥ १५ ॥**

**एष स्तोमः ।** अयम्[1] । स्तोमः[2] । मरुताम् । वेगम्[3] । अभिगच्छत्वित्येतदेवाह[4]—रुद्रस्य । पुत्रान्[5] । मिश्रणमिच्छतः[6] । उद्व्याप्नोति[7] । किं[8] मदीयः कामः[9] । माम् । धनाय[10] । आह्वयति[11] । सुष्ठु तथा सति[12] त्वम्[13] । उपस्तुहि[14] । पृषदश्वान्[15] । गच्छतो[16] मरुतः ।

**प्रैष स्तोमः॑ पृथि॒वीम॒न्तरि॑क्षं॒ वन॒स्पती॒ँरोष॑धी रा॒ये अ॑श्याः ।**
**दे॒वोदे॑वः सु॒हवो॑ भूतु॒ मह्यं॒ मा नो॑ मा॒ता पृ॑थि॒वी दु॑र्म॒तौ धा॑त् ॥ १६ ॥**

**प्रैषः ।** पृथिव्यादीन् । अयम् । स्तोमः[17] । धनार्थम् । प्राप्नोतु । तथा सर्वो[18] देवः । मह्यम्[19] । स्वाह्वानः[20] । भवतु । मा । अस्मानस्मदीया । माता[21] । भूमिः[22] । दुष्टे मनने[23] । दधातु[24] ।

**उ॒रौ दे॑वा अनिबा॒धे स्या॑म ॥ १७ ॥**

**उरौ ।** इयमेकपदा ॥ हे देवाः ! वयम् । बाधारहिते[25] । विस्तीर्णे[26] स्थाने[27] । स्यामेति[28] ।

---

१. मया सम्पादितः Sy.
२. स्तोत्रम् Sy.
३. बलम् Sy.
४. अग० P., D. अभिमुखं प्राप्नोतु । समुदायरूपेण स्तुत्वा समुदायिरूपेणाह Sy.
५. पुत्रा P. एषां रुद्रेण पुत्रत्वेन परिक्लृप्तिरसकृदुक्ता Sy.
६. यूनो मिश्रणेच्छून्वा Sy.
७. उध्याप्नो D. उन्नतमत्यधिकमश्या व्याप्नुहि हे मनः ! Sy.
८. कि P., D.
९. संकल्पः Sy.
१०. धनार्थम् Sy.
११. धनान् धारयति P. प्रेरयतीत्यर्थः । यस्मादेवं तस्मात् Sy.
१२. अविनश्वरम् Sy.
१३. त्व P., D.
१४. वस्तु० P., D. उपेत्य स्तुहि Sy.
१५. पृषद्वर्णाश्वोपेतान् Sy.
१६. यज्ञगन्तॄन् Sy.
१७. स्तुतिः Sy.
१८. सर्वोऽपि देवः Sy.
१९. मदर्थम् Sy.
२०. ०ह्वानः P.
२१. Omitted by P. सर्वस्य निर्मात्री । यद्वा अत्रेर्भौमत्वाद्विशेषेण माता तादृशी Sy.
२२. ०मि P. पृथिवी Sy.
२३. मनेने P., D. दुर्मतौ Sy.
२४. ०तुं P., D. (मा) स्थापयतु Sy.
२५. युष्माकं सम्बन्धिनि नितरां बाधरहिते सुखे Sy.
२६. महति Sy.
२७. स्था P., D.
२८. ०मिति P.
भवेम वयमत्रयः Sy.

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ १८ ॥

समश्विनोः । सङ्गमेम[2] हि । अश्विनोः[1] रक्षणेन[3] । नवतरेण[4] । सुखस्य भावयित्रा[5] । शोभनप्रणयनेन[6] । आवहतम्[7] । अस्मभ्यम् । धनम् । अपि च । आवहतम् । वीरान्[8] । आवहतं च । विश्वानि । अमरणानि[9] । सुधनत्वानि[10] च[11] ।

V.43.

आ धेनवः पयसा तूर्ण्यर्था अमर्धन्तीरुप नो यन्तु मध्वा ।
महो राये बृहतीः सप्त विप्रो मयोभुवो जरिता जोहवीति ॥ १ ॥

आ धेनवः[12] । धेनवः । तूर्णगमनाः[13] । अहिंसन्त्यः[14] । अस्मान्[15] । मधुरसेन[16] । पयसा सह[17] । उपायन्तु[18] । महते । धनाय । महतीः । सप्त नदीः[19] । सुखस्य भावयित्रीः । मेधावी[20] । स्तोता । अत्यन्तमाह्वयति[21] ।

आ सुष्टुती नमसा वर्तयध्यै द्यावा वाजाय पृथिवी अमृध्रे ।
पिता माता मधुवचाः सुहस्ता भरेभरे नो यशसावविष्टाम् ॥ २ ॥

आ सुष्टुती[22] । आह्वयामः[23] । सुस्तोत्रे[24] । नमस्कारेण[25] वयम् । सुखेन वर्तयितुम् । अहिंसित्र्यौ[26] ।

---

१. ०नो D. २. गमे P. वयं सङ्गच्छेमहि Sy.
३. ०णे P. ४. पूर्वमन्यैरननुभूतेन Sy.
५. सुखस्याम P. ६. शोभनप्रणयनवता Sy.
७. वह० P. प्रापयतम् Sy.
८. सुवीर्यवतः पुत्रानपि Sy.
९. हे अमरणावश्विनौ ! Sy.
१०. सौभगान्यपि, आवहतम् Sy.
११. Ms. D. puts the figure ॥४२॥ here to indicate the end of the fortysecond hymn. No such number is given in P.
१२. 'आ धेनवः' इति सप्तदशर्चमेकादशं सूक्तमत्रेरार्षं त्रैष्टुभं वैश्वदेवम् । अत्रानुक्रमणिका—'आ धेनवस्त्र्यूनैतयोरुपान्त्यैकपदा' (KSA. 26.43.p.20.) इति । विनियोगो लैङ्गिकः । अपोनप्त्रीये एकधनासु हविर्धानं प्रति नीयमानास्वाद्यानुवचनीया । सूत्रितञ्च—'आ धेनवः पयसा तूर्ण्यर्थाः समन्या यन्त्युप यन्त्यन्याः' (ASS.5.1) इति Sy.
१३. प्रीणयित्र्यो नद्यः Sy.
१४. त्वरमाणगमनाः Sy. अर्थोऽर्त्तेः (N.1.18.)
१५. अहिंसन्त्यः सत्यः Sy.
१६. ०सन P. मधुरेण Sy.
१७. रसेन सहिताः Sy.
१८. उपागच्छन्तु Sy.
१९. महिस्तप्त नदी P. सर्पणस्वभावाः । सप्तसंख्याकाः 'इमं मे गङ्गे' (RV.X.75.5.) इति मन्त्रोक्ता गङ्गाद्या वा । तत्र हि प्राधान्येन सप्तैवोक्ताः Sy. २०. विशेषेण प्रीणयिता Sy. २१. स्तो त्यन्त० P. २२. ०तीः P.
२३. Sy. seems to explain आ and वर्तयध्यै together as अहम्..... आवर्तयितुमिच्छामि ।
२४. सुस्तोत्रेण is suggested for सुस्तोत्रे ॥ सुष्टुत्या शोभनस्तोत्रेण Sy.
२५. हविषा च Sy. २६. हिंसारहिते Sy.

द्यावापृथिव्यौ । अन्नार्थम्[1] । तौ च मातापितरौ[2] । मधुवचसौ[3] । शोभनहस्तौ[4] । अस्मान् । सङ्ग्रामे सङ्ग्रामे[5] । यशस्विनौ[6] । अवताम्[7] ।

**अध्वर्यवश्चकृवांसो मधूनि प्र वायवे भरत चारु शुक्रम् ।**
**होतेव नः प्रथमः पाह्यस्य देव मध्वो ररिमा ते मदाय ॥ ३ ॥**

**अध्वर्यवः** । हे अध्वर्यवः[8] ! यूयम् । अभिष्टुतवन्तः[9] । सोमान्[10] । अथा[11] वायवे । यज्ञमुखे प्रभर[12] । कल्याणमभिषुतम्[13][14] । त्वञ्च वायो[15] ! होतेव[16] वषट् कर्ता[17] । प्रथममेव[18] । अस्य[19] । पिब । हे देव[20] ! एतन् मधु[21] । वयम्[22] । तुभ्यम् । मदाय । दत्तवन्तः[23][24] ।

**दश क्षिपो युञ्जते बाहू अद्रिं सोमस्य या शमितारा सुहस्ता ।**
**मध्वो रसं सुगभस्तिर्गिरिष्ठां चनिश्चदद्दुहे शुक्रमंशुः ॥ ४ ॥**

**दश क्षिपः** । दश[25][26] । अङ्गुलयः[27] । बाह्वोः[28] । ग्रावाणम्[29] । अभिषवाय युञ्जते[30] पशोः शमितार इव ।

---

१. ०र्थं D. 'अन्नं वै वाजः' (TB.1.3.6.6.) इति हि श्रुतिः Sy.
२. पालयित्री द्यौः । निर्मात्री पृथिवी Sy.
३. प्रियवचना Sy.
४. ०नस्तौ P. अभिमतदानेन शोभनहस्ता । एते उभयविशेषणे Sy.
५. सर्वेषु सङ्ग्रामेषु यज्ञेषु वा Sy.
६. यशोयुक्तौ ? (०युक्ते) द्यावापृथिव्यौ Sy.
७. अवताय P. अवातय D. रक्षताम् Sy.
८. हे अध्वरं युञ्जानाः ! Sy.
९. कुर्वाणाः यूयम् Sy.
१०. मधुररसानि सोमाज्यादीनि Sy.
११. अथ is suggested for अथा ।
१२. ०भरत is suggested for ०भर । प्रथमं प्रकर्षेण सम्पादयत Sy.
१३. चरणीयम् Sy.
१४. ०त P.
    ०भिष्टुत D.
१५. यायो P., D.
१६. होता यथा प्रथमं पिबति तद्वत् Sy.
१७. ०षड्० D.
१८. इतरदेवेभ्यः पूर्वम् Sy.
१९. म P.
    अमुं सोमम् Sy.
२०. वायो ! Sy.
२१. मधुरं सोमरसम् Sy.
२२. वयम् seems to be the explanation of नः ॥ नः अस्मदर्थम् Sy.
२३. ददाम । वायोः पूर्वपानमसकृत् प्रपञ्चितम् Sy.
२४. VM. ignores शुक्रम् ॥ दीप्तं सोमम् Sy.
२५. अत्राभिषवस्य प्रतिपाद्यमानत्वात् सोमो देवता । यद्वा ऐन्द्री Sy.
२६. दशसंख्याकाः Sy.
२७. क्षेप्त्र्योऽङ्गुलयः Sy.
२८. ०ह्वो D. बाहू अप्यध्वर्युसम्बन्धिनौ अद्रिं युञ्जाते Sy.
२९. अभिषवग्रावाणम् Sy.
३०. यज्ञते P., D. गृह्णन्ति, यद्वा परस्परं युक्ता भवन्ति Sy.

सोमस्य[1] । यौ बाहू[2] । शमितारौ[3] । शोभनपाणी । ततः शोभनबाहुपरिगृहीतः[4] । अंशु[5] । गिरिस्थितम्[6] । मध्वः[7] । रसम्[8] । दुदुहे[9] मूजवति स्थितमुत्तमं रसं[10] दुग्धे । तदेवाह—चनिश्चददिति[11] चदतिर्गतिकर्मा, अत्यन्तं[12] निर्गच्छत् । शुक्रं[13] दुदुह[14] इति ।

**असावि ते जुजुषाणाय सोमः क्रत्वे दक्षाय बृहते मदाय ।**
**हरी रथे सुधुरा योगे अर्वागिन्द्र प्रिया कृणुहि हूयमानः ॥ ५ ॥**

**असावि**[15] । अभिष्टुतः । तुभ्यम् । सेवमानाय[16] । सोमः । प्रज्ञार्थम्[17] । बलार्थं[18] च । तथा महते[19] च । मदाय[20] । ततस्त्वमश्वौ[21] । शोभनबन्धुरौ[22] । रथे[23] । योगनिमित्तम्[24] । अभिमुखम्[25] । कुरु । इन्द्र ! प्रियौ । अस्माभिर्हूयमानः[26][27] ।

**आ नो महीमरमतिं सजोषा ग्नां देवीं नमसा रातहव्याम् ।**
**मधोर्मदाय बृहतीमृतज्ञामाग्ने वह पथिभिर्देवयानैः ॥ ६ ॥**

**आ नः**[28] । आवह । अस्माकम्[29] । महतीम् । अनुपरमां[30] सर्वदा गच्छन्तीम् । तया सहितः[31] । ग्नाम्[32] ।

---

१. यो P., D.
२. अभिषोतारौ तौ बाहू युञ्जाते Sy.
३. शोभनहननौ ? (हस्तौ) Sy.
४. शोभनाङ्गुलिरध्वर्युः Sy.
५. ०तांशु P.
६. गिरिस्थायिनं गिरिवदुन्नतप्रदेशस्थितं वा Sy.
७. मधुरस्य सोमस्य Sy.
८. ०त मध्व रोसं P.
९. दोग्धि Sy.
१०. सरं P.
११. ०ददति P., D.
१२. चदन्तिर्गतिकर्म त्यन्तं P. आह्लादयन्—'चदि आह्लादने' इत्यस्माद्यङ्लुकि छान्दसं रूपम् Sy.
१३. श० P. निर्मलं रसम् Sy.
१४. दुग्धे । यद्वैकं वाक्यम् । अंशुर्व्याप्तः सुगभस्तिः । सुहस्तोऽध्वर्युर्मध्वो रसं दुदुहे दोग्धि Sy.
१५. हे इन्द्र ! Sy.
१६. सोमपानाय D.
१७. क्रतवे वृत्रवधादिकर्मणे Sy.
१८. बलाय Sy.
१९. महत्वे P., D.
२०. मादाय P., D.
२१. तस्त्वं P.
यस्मादेवं तस्मात् Sy.
२२. शोभनायां धुरि नियुक्तौ Sy.
२३. रथे योजयित्वा तं रथम् Sy.
२४. यागo D. योग is omitted by P.
योगार्हे युक्ते वा Sy.
२५. अस्मदभिमुखम् Sy.
२६. ०याया स्मा० D.
२७. ०नं D. हूयमानः सन् Sy.
२८. अत्राग्निं सम्बोध्य ग्नादेवताया आवाह्यत्वादस्याग्निर्ग्ना वा देवता Sy.
२९. अस्मदर्थम् Sy.
३०. आ समन्ताद्रममाणां सर्वत्र गन्त्रीं वा Sy.
३१. अस्माभिः सह प्रीयमाणस्त्वम् Sy.
३२. सर्वैर्गन्तव्यामेतन्नामिकां देवताम् Sy. मेना ग्ना इति स्त्रीणाम् N.3.21.

देवीम् । नमस्कारेण[1] सह । दत्तहविष्काम्[2] । सोमस्य[3] । मदाय सोमं पातुम् । उच्छ्रिताम्[4] । सत्यज्ञाम्[5] । देवयानैः[6] । मार्गैः[7] ।

**अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः ।**
**पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादि ॥ ७ ॥**

अञ्जन्ति[8] । आज्येन, अञ्जयन्ति[9] । यं घर्मम्[10] । ब्राह्मणा[11] । प्रथनीयं[12] मृदादिकमिव[13] । प्रथयन्तः[14] । वपाशब्दः[15] सारवचनः[16], यथा वपावन्तं[17] भाण्डम् । अग्निना[18] । तपन्तः[19] । सवितुः[20] । इव । पुत्रः । उपस्थे । प्रियतमः[21] । अग्निं प्रति[22] । घर्मः[23] । यज्ञमिच्छन् । अध्वर्युभिरासादि[24] ।

**अच्छा मही बृहती शंतमा गीर्दूतो न गन्त्वश्विना हुवध्यै ।**
**मयोभुवा सरथा यातमर्वाग्गन्तं निधिं धुरमाणिर्न नाभिम् ॥ ८ ॥**

अच्छ । महती[25] । बृंहिता[26] । सुखतमा । स्तुतिः[27] । दूतः[28] । इव राजप्रेषितः । अश्विनौ । अभिगच्छतु[29] ।

---

१. स्तोत्रेण सह Sy.
२. रातं दत्तं दानाय सङ्कल्पितं हव्यं यस्यास्ताम् । दत्तहविष्कामित्यर्थः Sy.
३. मधुरस्य सोमस्य Sy.
४. प्रवृद्धाम् Sy.
५. यज्ञमभिजानतीम् Sy.
६. देवैर्गन्तव्यैः Sy.
७. VM. ignores आ and अग्ने ॥ आ अभिमुखम् । हे अग्ने ! Sy.
८. प्रवर्ग्ये महावीरेऽज्यमाने 'अञ्जन्ति यम्' इत्येषा । सूत्रितञ्च—'अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमाने' (ĀŚS.4.6.) इति Sy.
९. ०न्ती P., D.
अञ्जन्ति Sy.
१०. महावीरम् Sy.
११. ०णं P. ०णाः is suggested for ०णा ॥ मेधाविन ऋत्विजोऽध्वर्य्वादयः Sy.
१२. पृथनीयाम् P., D.
१३. उदाकमिव P. इदानीं प्रथयन्तः Sy. नेति सम्प्रत्यर्थे । अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः N. 7. 31.
१४. ०न्ता P.
१५. ववाश० P.
पवाश० D.
१६. सकारव० P.
१७. प्रवृद्धं पशुं यथाग्नौ तपन्ति तद्वत् Sy.
१८. बाधवनिना P.
१९. ०न्त D.
२०. पितुः Sy.
२१. ०तमनः P.
२२. प्रीति P. अग्नौ Sy.
२३. महावीरः । 'यद्भ्रामित्यपतत्तद्घर्मस्य घर्मत्वम्' (TA. 5. 1. 5.) इति हि श्रुतिः Sy.
२४. आसादितः । अत्र पितृपुत्रदृष्टान्तः स्फोटादिराहित्येन सुखवासप्रख्यापनार्थः Sy.
२५. ०ति D. पूज्या Sy.
२६. महती Sy.
२७. ०ति D.
अस्मदीया स्तुतिः Sy.
२८. आह्वाता Sy.
२९. अभिमुखं गच्छतु Sy.

आह्वातुम्[1] । ततो युवां सुखस्य भावयितारौ । सरथौ[2] । इतोमुखम्[3] । आयातम्[4] । अभिगच्छन्तम् । निहितं[5] हविः । यथा । शकटस्य रथहननसाधनीम्[6] । धुरम्[7] । आणिरुभयोरनिःसरणार्थं गच्छतीति[8] ।

**प्र तव्य॑सो॒ नम॑उक्तिं तु॒रस्या॒हं पू॒ष्ण उ॒त वा॒योर॑दिक्षि ।**
**या राध॑सा चोदि॒तारा॑ मती॒नां या वाज॑स्य द्रविणो॒दा उ॒त त्मन् ॥ ९ ॥**

प्र तव्यसः[9] । अतिशयेन वृद्धस्य[10] । क्षिप्रस्य[11] वायोः[12] । पूष्णः[13] । च[14] । अहम्[15] । नमस्कारवचनम्[16] । प्रकर्षेणातिसृजामि[17] । यौ[18] । अन्नेन[19] । चोदयितारौ[20] । स्तुतीनाम्[21] । यौ च । बलस्य दातारौ[22] । यौ च । आत्मनैव[23] । द्रविणसो[24] धनस्य दाताराविति ।

---

१. ०विश्वानभिगच्छत्यर्थो ह्वातुं P. स्विनाभिग० D. २. एकरथौ सन्तौ Sy.

३. अभिमुखम् Sy.

४. गच्छतम् Sy.

५. निहितं सोमम् Sy.

६. स्थन० D. स्थानहननान्धनीं P.

७. मुरम् P. भारवाहिकाम् Sy.

८. कील इव । यथा निष्कीला नाभी रथं न निर्वहति तद्वद्युवाभ्यां वियुक्तः सोमो यागं न निर्वहतीति ज्ञापयितुमेव दृष्टान्तितम् Sy.

९. तव्यसरः P. तव्यरसः D. आङ्गिरसोऽत्रिरपश्यत् SKN.

१०. प्रकृष्टबलस्य Sy. तवस इति तवतेर्वृद्ध्यर्थस्य तृचि 'तुश्छन्दसि' इतीयसुनि 'तुरिष्ठेमेयस्सु' इति लोपः । छान्दसत्वादीयसुन आदिलोपेन रूपम् । तवीयसोऽतिशयेन वर्धितुः । तवश्शब्दस्य बलनाम्नो मत्वन्तस्यापकर्षणेन बलवत इत्यर्थः SKN.

११. त्वरमाणस्य Sy. त्वरणस्य । तुपूर्वस्य रिषतेर्वा हिंसार्थस्य, हिंसितुस्तमसाम् SKN.

१२. उक्तलक्षणाय Sy.

१३. पोषकस्य देवस्य उक्तगुणाय देवाय Sy.

१४. अपि च Sy. उतशब्द एवार्थे SKN.

१५. ऋषिः Sy.

१६. नम इति वचनं स्तोत्रम् Sy. स्तुत्युक्तिम् SKN.

१७. प्रदिशामि Sy. प्रेत्ययमदिक्षीत्यनेन सम्बध्यते । . . . .'दिश अतिसर्जने' प्रकर्षेण दिशाम्यतिसृजाम्युच्चारयामीत्यर्थः SKN.

१८. पूषवायू Sy.

१९. P. reads वायन्नेन for यौ । अन्नेन ॥ हविर्लक्षणेन निमित्तेन Sy. धनेन SKN.

२०. प्रेरयितारौ Sy. चोदितारौ SKN.

२१. मतीनाम् । यद्वा राधसेति षष्ठ्यर्थे तृतीया । राधसो धनस्य मतीनां च चोदयितारौ तौ देवौ Sy. धनं ददतौ तरतिक्रियायां स्तोत्रं चोदयत इत्यर्थः SKN.

२२. अन्नस्य सङ्ग्रामस्य वा चोदयितारौ तौ देवौ Sy. वाजस्यान्नस्य साकाङ्क्षत्वाद् दाताराविति शेषः SKN.

२३. आत्मवेनव P. आत्मन्यनन्यप्रेरणयैव Sy. 'मन्त्रेष्वाङि०' (Pa. 6. 4. 141.) इत्यादिलोपः, तृतीयायाश्च लुक् । . . . .आत्मनैवेत्यर्थः SKN.

२४. ०सा D. द्रविणोदौ भवतमिति शेषः Sy.

**आ नाम॑भिर्म॒रुतो॑ वक्षि॒ विश्वा॒ना रू॒पेभि॑र्जातवेदो हुवा॒नः ।**
**य॒ज्ञं गिरो॑ जरि॒तुः सु॑ष्टु॒तिं च॒ विश्वे॑ गन्त मरुतो॒ विश्व॑ ऊ॒ती ॥ १० ॥**

**आ नामभिः ।** आत्मीयैः[1] नामधेयैः विद्योतमानान् । मरुतः[2] । सर्वांस्त्वम्[3] । आवह[4] । तथाऽलङ्कृतै-[5]स्तेषां रूपैश्च[6] सह । अस्माभिर्हूयमानः[7] । अथ मरुत आह—यज्ञम्[8] । उक्थगिरः[9] । सुष्टुतिम्[10][11] । च[12] । जरितुः[13] । सर्व एव । गच्छत यूयम्[14] । हे मरुतः ! रक्षणार्थम्[15] । विश्व इति पूरणम्[16][17] ।

**आ नो॑ दि॒वो बृ॑ह॒तः पर्व॑ता॒दा सर॑स्वती यज॒ता ग॑न्तु य॒ज्ञम् ।**
**हवं॑ दे॒वी जु॑जुषा॒णा घृ॒ताची॑ श॒ग्मां नो॒ वाच॑मुश॒ती शृ॑णोतु ॥ ११ ॥**

**आ नः ।**[18] आगच्छतु[19] । अस्माकम् । महतः[20] । दीप्तात्[21] । स्वावासात्[22] पर्वतात्[23] । सरस्वती । यष्टव्या[24] ।

---

१. ०यै P. इन्द्रवरुणेत्यादिलक्षणैः Sy.
२. देवान् Sy.
३. ०र्वां त्वाम् P. सर्वानपि स्तोत्रभाजो हविर्भाजश्च Sy.
४. आवहसि Sy.
५. ०हं जयं तथा० P.
०हञ्जनन्तथा० D.
६. सहस्राक्षवज्रहस्तत्वादिलक्षणै रूपैः आ वहसि यज्ञम् Sy.
७. भूय० P., D. अस्माभिराहूयमानः सन् Sy.
८. ०तम् D.
९. अस्मदीयं यज्ञसम्बन्धि हविर्वा Sy.
१०. उक्था० P. स्तुतिवचांसि Sy.
११. स्तुतिं P. तत्साध्यां शोभनफलां स्तुतिं च । अवयविन्याः स्तुतेरेकत्वादेकवचनम् । अवयवानां बहुत्वाद् बहुवचनम् Sy.
१२. Omitted by P.
१३. स्तोतुः सम्बन्धिनीः Sy.
१४. ०त P. उक्ते यज्ञस्तुती अभिलक्ष्य आगच्छत Sy.
१५. ऊत्या रक्षया च सह गन्त Sy.
१६. पारयितं P.
१७. VM. ignores आ and जातवेदः ॥ हे जातप्रज्ञाग्ने ! Sy.
१८. 'आ नो दिवः' इत्येकादशी व्यूढे दशरात्रे नवमेऽहनि प्रउगशस्त्रे सारस्वततृचे द्वितीया । सूत्रितञ्च 'आ नो दिवो बृहतः पर्वतादा सरस्वत्यभि नो नेषि वस्यः, (ĀSS. 8. 11.) इति Sy.
१९. ०छ त्वम् P. यद्यप्यनुच्छ्रिते प्रदेशे स्थिता (तथापि) शीघ्रमागच्छतु BB.
२०. महतोऽपि BB.
२१. ०प्तान् P. द्योतमानाद् द्युलोकात् Sy.
२२. ०सान् P.
२३. ०तान् P. पर्ववतः पूरणवतः प्रीणनवतो ऽन्तरिक्षान्मेघाद्वा सरस्वती आगच्छतु । अनेन माध्यमिकी वागुच्यते । यद्वैतद्दिव इत्यस्य विशेषणम् । सन्ति हि द्युलोके त्रीणि पर्वाणि 'तिस्रो दिवः पृथिवीः' इत्यादिश्रुतेः । अस्मिन् पक्षे द्वितीय आकारः पूरणः Sy. प्रकृष्टाद्विषमाच्च प्रदेशादागच्छत्वित्यर्थः BB.
२४. देवी Sy.

आह्वानम्[1] । देवी । सेवमाना[2] । उदकमञ्चन्ती[3] । सुखाम्[4] । अस्मदीयाम्[5] । वाचम्[6] । कामयमाना[7] । शृणोत्विति[8] ।

**आ वेधसं नीलपृष्ठं बृहन्तं बृहस्पतिं सदने सादयध्वम् ।**
**सादद्योनिं दम आ दीदिवांसं हिरण्यवर्णमरुषं सपेम ॥ १२ ॥**

आ वेधसम्[9] । आसादयध्वम्[10] । विधातारम्[11] । नीलपृष्ठम्[12] । महान्तम्[13] । बृहस्पतिम्[14] । यज्ञे । अध्वर्युभिः साद्यस्थानम्[15] । यज्ञगृहे[16] । देदीप्यमानम्[17] । हिरण्यसदृशम्[18] । आरोचमानम् । स्पृशामः[19] [20] ।

**आ धर्णसिर्बृहद्दिवो रराणो विश्वेभिर्गन्त्वोमभिर्हुवानः ।**
**ग्ना वसान ओषधीरमृध्रस्त्रिधातुशृङ्गो वृषभो वयोधाः ॥ १३ ॥**

आ धर्णसिः[21] । आगच्छतु[22] । धारयिता[23] । बृहद्दीप्तिः[24] । रममाणः[25] । विश्वैः[26] । पितृभिः सह देवैः[27] । आहूयमानः । पत्नीभूताः[28] । ओषधीः । राजयन्[29] । अहिंसिकोऽग्निः[30] [31] । त्रिगुणदीप्तिरत्यन्तमुज्वलः[32] [33] । वर्षिता । अन्नस्य[34] धाता[35] ।

---

१. अस्मदीयमाह्वानम् Sy. अस्माकमाह्वानम् BB.
२. स्तुतिं सेवमाना Sy. प्रीयमाणा वा BB.
३. ०कञ्चती P., D. घृतमुदकमञ्चती Sy. घृतमाज्यभागं प्रत्यञ्चन्ती BB.
४. सुखकरीम् Sy. सुखां समर्थां वा BB.
५. अस्माकम् BB.
६. ०चम P., D. स्तुतिम् Sy. स्तुतिरूपाम् BB.
७. ०नाः P., D. कामयमाना सती Sy. कामयमाना अस्मत्प्रत्तानि हवींषि स्तोत्राण्येव वा BB.
८. VM. ignores आ and यज्ञम् । This stanza=TS. 1. 8. 22. 1.
९. एषा बार्हस्पत्या । हे ऋत्विजः ! यूयम् Sy.
१०. स्थापयध्वम् Sy.
११. विधारि P. विधार D. विविधकर्तारम् Sy.
१२. णीवपृष्ठं P. स्निग्धाङ्गम् Sy.
१३. महान्तम् । तथा सन्तम् Sy.
१४. बृहतो मन्त्रस्य स्वामिनं देवम् Sy.
१५. साद्यथानं P., D. योनौ सीदन्तम् Sy.
१६. अस्मद्यागगृहे Sy. १७. दीप्य० D.
१८. ०शः P. हितरमणीयवर्णम् Sy.
१९. वयमृत्विग्यजमानाः परिचरेम । अथवेयमाग्नेयी । बृहतः परिवृढस्य कर्मणः स्वामीति बृहस्पतिरग्निरुच्यते । तथा नीलवर्णधूमपृष्ठत्वसदनसादनहिरण्यवर्णत्वादिलिङ्गैरप्यग्निरेव बृहस्पतिः Sy.
२०. VM. ignores आ ॥ सर्वतः Sy.
२१. इदमाद्यृक्त्रयमाग्नेयम् Sy.
२२. अग्निः आगच्छत्वस्मद्यज्ञम् Sy.
२३. सर्वस्य धारकः Sy.
२४. ०प्ति D. प्रभूतदीप्तिः Sy.
२५. रममाणः कामान् प्रयच्छन्वा Sy.
२६. सर्वैः Sy. २७. पृतृ० D. रक्षणैः Sy.
२८. गन्त्रीर्ज्वालाः Sy. २९. राजयन्तन् P., D.
३०. अहिंसितः Sy. ३१. ०कोनिः D.
३२. ०णं दी० P., D. त्रिप्रकारशृङ्गवदुन्नतलोहितशुक्लकृष्णवर्णज्वालः Sy.
३३. उज्वलः is omitted by P. उज्ज्वलः is suggested for उज्वलः ।
३४. ०तोन्न० P.
३५. अन्नस्य दाता हविषो वा धारकः Sy.

**मातुष्पदे पर॑मे शुक्र आयोर्वि॑पन्यवो॑ रास्पिरासो॑ अग्मन् ।**
**सुशेव्यं॑ नम॑सा रातहव्याः शिशुं॑ मृजन्त्यायवो॑ न वासे ॥ १४ ॥**

मातुः । पृथिव्याः[1] । उत्तमे[2] । स्थाने । शोचमाने[3] । यजमानस्य[4] स्वभूते वेद्यामग्निम् । स्तोतारः[5] । रास्पिराः[6] 'रास्पी रासतेर्दानकर्मण' इति यास्कः[7], हविषो दातारः । उपगच्छन्ति[8] । शोभनसुखसाधनम्[9] । नमस्कारेण[10] । दत्तहविष्काः । कञ्चन शिशुम्[11] । हस्तेन मृजन्ति[12] । मनुष्याः[13] । इव[14] पुत्रम्[15] । वेश्मनि[16] ।

**बृहद्वयो॑ बृहते तुभ्य॑मग्ने धियाजुरो॑ मिथुनासः॑ सचन्त ।**
**देवोदे॑वः सुहवो॑ भूतु मह्यं मा नो॑ माता पृथिवी दुर्मतौ॑ धात् ॥ १५ ॥**

बृहत् । महत्[17] । अन्नम् । महते[18] । तुभ्यम् । अग्ने ! बुद्धया त्वां स्तुवन्तः[19][20] । मिथुनाः[21] । सेवन्ते[22] दानाय पत्नीयजमानाः[23] । शिष्टं[24] स्पष्टम् ।

**उरौ देवा अनिबाधे स्याम ॥ १६ ॥**

**[ उरौ[25] देवाः[26] । ]**

---

१. निर्मातुः Sy.
२. उत्तरवेद्यां स्थितम् Sy.
३. दीप्ते Sy.
४. मनुष्यस्य Sy.
५. विपन्यवः स्तोतृनामैतत् । Cf. Ngh. 3. 15. होत्रादयः Sy.
६. ०तारो॑ सरा P., D. रा धनं हविर्लक्षणम् । तत् स्पृशन्ति रास्पा जुह्वादयः । तद्वान् रास्पी तद्वन्तो रास्पिराः । उक्तविधा ऋत्विजः Sy.
७. Cf. N. 6. 21.
८. अगमन् भजन्ते Sy.
९. ०नस्सु० P. सुखाय हितम् Sy.
१०. रैः D. स्तोत्रेण Sy.
११. उत्पन्नमात्रम् Sy.
१२. सम्मार्जयन्ति Sy.
१३. ष्यौ P., D.
१४. तत्र दृष्टान्तः । लौकिका मनुष्या इव । ते यथा शिशुं वासाय मृजन्ति तद्वत् Sy.
१५. ०त्र P.
१६. श्वेति P. वासाय Sy.
१७. प्रभूतम् Sy. १८. बृहते Sy.
१९. कर्मणा जीर्णाः Sy.
२०. सुवन्तः P.
२१. मथुधना P. पत्नीभिः सहिताः Sy. 'जायापती अग्निमादधीयाताम्' इत्यादिश्रुतेः । अधिकाराध्याये षष्ठे स्त्रिया अप्यधिकारः स च पत्या सह (पू० मी० 6.1.24.) इति हि प्रतिपादितम् Sy.
२२. ०न्त. D.
२३. पत्नीयजमानाः refers to मिथुनाः ।
२४. By शिष्टं VM. means देवोदेवः । सुहवः । भूतु । मह्यम् । मा । नः । माता । पृथिवी । दुर्मतौ and धात् ॥ अवशिष्टं गतम् Sy.
It has already been explained. See RV. V. 42. 16.
२५. The *pratīka* is supplied by the Editor.
२६. The stanza has already been explained. See RV. V. 42. 17.

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ १७ ॥

[ समश्विनोः । ][1][2]

V.44.

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे ॥ १ ॥

तं[3] प्रत्नथा । सूक्तमदिष्टैक्षत्रप्रभृतिभिः (?) सहावत्सारः । काश्यप[4] इदं[5] सूक्तमपश्यत् ॥

१. The *pratīka* is supplied by the Editor.

२. The stanza has already been explained. See RV. V. 42. 18.

३. 'तं प्रत्नथा' इति पञ्चदशर्चं द्वादशं सूक्तम् । अवत्सारो नाम ऋषिः स च कश्यपगोत्रः । यासु ऋक्षु सदापृणबाहुवृक्तादयः श्रुतास्तासु तेऽपि समुच्चीयन्ते । चतुर्दशीपञ्चदश्यौ त्रिष्टुभौ शिष्टास्त्रिष्टुबन्तपरिभाषया (KSA. 12. 13.p.5.) जगत्यः । विश्वे देवा देवता । अनुक्रान्तञ्च 'तं प्रत्नथा पञ्चोना काश्यपोऽवत्सारोऽन्ये च ऋषयोऽत्र दृष्टलिङ्गा द्वित्रिष्टुबन्तम्' (KSA. 26.44.p.20.) इति । वाजपेये अतिरिक्तोक्थ्ये आदितस्त्रयोदशर्चः शंसनीयाः । सूत्रितञ्च 'तं प्रत्नथेति त्रयोदशानामेका शिष्ट्वाहूय दूरोहणं रोहेत्' (ĀSS.9.9.) इति Sy.
अपि वा 'तस्मै सूर्याय हविराजुहोत' इति हवनमन्त्रे सूर्यश्रवणात् सूर्यदेवतोऽयम् । शौनकस्तु दाशतये समाम्नाये मन्त्रदेवता अनुक्रममाणः . . . . वैश्वदेवान्येकादश सूक्तान्यवोचत् (Cf. KSA.26.41.p.20.) । तेषां 'तं प्रत्नथा' इत्येतच्चतुर्थं सूक्तम् । तेन तन्मत्या वैश्वदेव एष मन्त्रः स्यात्, वाजसनेयिनां पुनरनया शुक्रो गृह्यते । स च 'सा प्रथमा संस्कृतिः' इत्यनेनैन्द्रेण हूयते, तेन तेषामप्यैन्द्र एव । . . . . स एव सर्वथाप्येवं दुःखधारदेवतो मन्त्रः । अनिरुक्तदेवतालिङ्गत्वात् । शण्डामर्कस्त्वसुरपुरोधसोः सम्मोहनार्थमनेनानिरुक्तदेवतालिङ्गेन मन्त्रेणान्यतरः शुक्रामन्थिनोर्गृह्यते । . . . . तस्मात्तावनेनानिरुक्तदेवतालिङ्गेन मन्त्रेण समोह्येते । सौम्यो वा स्यादयं, सोमो ह्युच्यते मन्थिपात्रेण शुक्रपात्रेण गृह्यमाणो गृहीतो वा सप्तदशशस्त्रशंसनाभिप्रायेण Dur.

४. Cf.KSA. 26.44.p.20.

५. इयमुत्तरा च द्वे ऐन्द्र्यावित्याहुः । तत्रोपपत्तिमेवमाहुः । 'तं प्रत्नथा' इत्येषा शुक्रामन्थिग्रहणे विनियुक्ता । ऐन्द्रौ च शुक्रामन्थिनौ । 'यदैन्द्रं शंसति तेन शुक्रामन्थिना उक्थवन्तौ' (AB.3.1.) इति हि ब्राह्मणम् । अध्वर्युसम्प्रैषोऽपि भवति । 'प्रातःप्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य' (ŚB.4.2.1.23.) इति प्रशास्तृप्रैषश्च भवति । 'होता यक्षदिन्द्रं प्रातः प्रातःसावस्य (ĀSS.5.5.) इत्यादि 'प्रस्थिता इन्द्राय सोमाः' इति याज्या चैन्द्री 'इदं ते सौम्यं मधु' (ĀSS.5.5.) इति । तस्मादैन्द्र्यौ Sy.
अवत्सारस्य । वर्षकर्मसम्बन्धादिन्द्रोऽस्य देवता । 'दोहसे' इति मध्यपुरुषश्रुतेः प्रत्यक्षकृतोऽयं मन्त्रः SKN. अवत्सारः पञ्चदशर्चं सूक्तमपश्यद् वैश्वदेवम् । . . . . चरकाध्वर्यवः पुनरनया मन्थिनं गृह्णन्ति । . . . . इत्येवं चन्द्रदैवतोऽयं मन्त्रः Dur.

तमिन्द्रम्[१] । यथात्यन्तं पुरातना[२]: हुदुदु[३]: । यथा वा ततोऽर्वाचीना[४][५]: । यथा वा सम्प्रतितना[६] अदृश्यमाना: । सर्वे[७] यथा वा दृश्यमाना[८] इमे तद्वत् । त्वमपि स्तोत[९]: । प्रशस्तम्[१०] । मम । बर्हिषि

---

१. तं मिन्द्रं P. तं त्वा स्तुम इति शेषः Mah. तमेवंगुणविशिष्टमिन्द्रम् U. अत्रापि स एवेन्द्रः प्रत्यक्षेण स्तूयते....तमित्यत्र त्वां स्तुम इति शेषः BB. तं हे भगवन् ! सोम ! तमिन्द्रं वा वैश्वदेवं गणं वा Dur. तं त्वामिन्द्रं स्तुम इति शेषः SKN.

२. पुरातना यजमाना इव Sy. थाल्प्रत्यय उपमार्थीयः । प्रत्नशब्दः पुराणवचनः । चिरन्तनानां भृग्वादीनामिव फलं दोहसे Mah. था उपमार्थीयः । प्रत्नशब्दः पुराणवचनः । चिरन्तनानामिव ऋषीणां भृगुप्रभृतीनाम् U. अयमर्थः—यथा शक्त्यादयः पुराणास्तामस्तुवंस्तथा वयमपि त्वां स्तुमः BB. कथं पुनर्धोक्षि, इन्द्रं वैश्वदेवं वा गणम् ? ....चिरन्तना इव ये महर्षयो भृग्वादयस्तेषां यथा दुग्धवानसि तथाऽस्माकमपि धोक्षि Dur.

३. हुदद्रुः P. दुद्रुहः is suggested for हुदुदुः ।

४. तों० D. ५. अस्मदीयाः पूर्वे यथा Sy. पूर्वेषामिवर्षीणां साध्यादीनामिव Mah. यथा च ततोऽपि पूर्वे भृगुप्रभृतयो मदीयाः पित्रादयो वा त्वामस्तुवंस्तथा वयं स्तुमः BB. पूर्वं इव च शक्तिप्रभृतय ऋषयः । ते हि पूर्वे न च पुराणाः । अत्रिप्रभृतीनामपत्यत्वात् SKN.

६. इदानीं वर्तमाना यजमानाः । ते यथेन्द्रस्य स्तुत्या फलमलभन्त तद्वद्वयमपि Sy. इदानीन्तनानां यजमानानामिवास्य फलं दोहसे Mah. इदानीन्तनानामिव यजमानानाम् U. यथा वेमे वर्तमानास्त्वां स्तुवन्ति तथा स्तुमः BB. यथा वर्तमानकालीनानां यजमानानां धोक्षि तथैवास्माकमपीति Dur. इम एव वर्तमानाः । ....इमथेति निगमप्रसक्तस्य प्रकृतिं निराह —'अयमेततरः' आगततर इव भवति । प्रत्यक्षात्यन्तासन्नोपाधित्वादिदमः । आपेक्षिकत्वाद् दूरासन्नव्यपदेशस्य । अत्यन्तविप्रकृष्टापेक्षायामीषद्विप्रकर्षप्रतिलब्धासन्नव्यपदेशविषयोऽदश्शब्दोऽस्त आह—अमुष्माद् अदस इत्यर्थः । ....'असावस्ततरः क्षिप्ततरः इव । कुतः ? अस्मादिदम इत्यर्थः । अत्राप्युक्तेनैव प्रकारेण प्रकर्षप्रत्यययोजना । असाविति प्रसङ्गेनाह—अमुथेत्यादि । यथा इमथा, इतीदमवस्था भवत्युपमायाम् । एवमदसोऽप्यमुथा, इति पदं व्याख्यातम् । यथा असावित्यनेन कृतनिर्वचनेन पदद्वयेनासावस्ततर इति प्रकृत्यर्थो, यथेत्युपमायामिति थाशब्दार्थः । एवममुथेति, यथासावित्यनेन व्याख्यातम् । ननु 'था इति चोपमायाम्' इत्यनेनैव, अमुथा, अन्यथा, इत्यादिकं प्रत्नथेत्यादिवद् व्याख्यातं, किमुच्यते, अमुथा यथासाविति व्याख्यातमिति ? उच्यते थेति च, इत्यस्यैवायं प्रपञ्चो भाष्यग्रन्थत्वान्नातिमहते दोषाय SKN.

७. प्राणिनो यथा Sy. विश्वेषां सर्वेषामृषिपुत्राणामिव Mah. यथा विश्वेऽपि त्वां स्तुवन्ति तथा तथा च स्तुमः BB. ऋषिपुत्रकाणामृषीणां च सर्वेषां यथा दुग्धवानसि तथाऽऽस्माकमपि धोक्षि Dur. विश्व इव सर्व इव भविष्यन्तश्चर्षयः SKN.

८. सर्वे यथा वा दृश्यमाना is omitted by P.

९. हे अन्तरात्मन् ! त्वमपि Sy.

१०. ०स्त P., D. ज्येष्ठम् Sy. तननं तातिर्विस्तारः । ज्येष्ठा उत्कृष्टा तातिर्विस्तारो यस्य तम् । ....प्रशस्तो ज्येष्ठो ज्येष्ठेषु प्रशस्यो वा ज्येष्ठतातिः Mah. उत्कृष्टतातिमुत्कृष्टेविस्तारम् । अथवा....ज्येष्ठतातिं ज्येष्ठप्रशस्यम् U. प्रशस्यतमम् BB. अतिशयेन वृद्धः प्रशस्यो वा ज्येष्ठः । ज्येष्ठ एव ज्येष्ठतातिरतिशयेन प्रशस्यं वृद्धं वा । अथवा तातिशब्दस्तनोतेः सन्तानवचनः । अतिशयेन वृद्धः प्रशस्तो वा वृष्टिसन्तानो यस्य तम् SKN. ज्येष्ठदीप्तिम् । अथवा ज्येष्ठः श्रेष्ठः सर्वेषां देवानामिन्द्रः स यस्य राजा सोऽयं ज्येष्ठराट् वैश्वदेवगणस्तं ज्येष्ठराजम् Dur.

सीदन्तम्[१]। सर्वज्ञम्[२]। त्वदभिमुखम्[३]। शत्रूणां जेतारम्[४]। स्तुत्या[५] वृष्टिलक्षणानि उदकानि। दोहसे[६]। यासु[७] स्तुतिषु

---

१. यज्ञेषु बर्हिषि सीदतीति बर्हिषदस्तम् Mah., U. बर्हिषि यागे सीदतीति बर्हिषदं, पृषोदरादित्वात्सकारलोपः BB. बर्हिष्याहूतो यज्वभिर्यः सीदति स बर्हिषत्तं बर्हिषदम् Dur. वेदिस्तरणे सत्तारम् SKN.

२. सर्वज्ञं सर्वस्य लम्भयितारं वा Sy. स्वर्द्युलोकं वेत्ति जानातीति स्वर्वित्तम्। तत्र हि तस्य निवासः Mah. स्वःशब्देन द्युलोकोऽभिधीयते। द्युलोकं जानाति तत्र हि तस्य निवासः U. सुवः स्वर्गमादित्यं वा वेत्तीति सुर्विदम् BB. स्वरिव यो दृश्यते स स्वर्दृक् तं स्वर्दृशं सूर्यसमानदर्शनमित्यभिप्रायः Dur. दिव आदित्यस्य वा स्वरशब्दवाच्यस्य वेदितारम् SKN.

३. प्रत्यस्मदभिमुखमञ्चन्तम् Sy. आत्मनोऽभिमुखम् Mah. आत्मनोऽभिमुखमिन्द्रमवस्थाप्य स्ववीर्येण तर्पयित्वा अस्मै यजमानाय U. अधुनाऽर्धर्चान्तरेण स्तुतिहेतुमाह। त्वां खलु प्रतीचीनं प्रतीचीनगतिं पराङ्मुखमपि सामर्थ्यान्मेघम्।....प्रतीचीना गतिरस्यास्तीति प्रतीचीनम्। मत्वर्थीयोऽकारो लुप्यते BB. यज्ञाभिमुखमिन्द्रं वैश्वदेवं वा गणमवस्थाप्य स्ववीर्येण तर्पयित्वा Dur. तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यः प्रतीचीनम्, अञ्चेर्गत्यर्थस्येदं रूपम्। प्रतिगतमन्तरिक्षे, पराङ्मुखमित्यर्थः SKN.

४. शत्रूणां जेतारम् seems to be the explanation of वृजनम्॥ बलनामैतद्बलवति वर्तते। बलवन्तम् Sy. बलं बलवद्यज्ञफलम् Mah. बलवच्च यज्ञफलम् U. धनम् Dur. बलनामैतत्। तस्मादर्शआदित्वादच्, बलवन्तम् SKN. वृजनमिति बलनाम Ngh. 2.9.

५. गिरा स्तुत्या साधनेन Sy. YV. reads धुनिम् for गिरा in RV. धुनिम्। 'धूञ् कम्पने' कम्पितारं शत्रूणाम् Mah. कम्पयितारं शत्रूणाम् U. गिरा गर्जितलक्षणया शब्देन BB. स त्वं क्रियासु तासु तथावस्थितस्त्वं गिरा स्तुत्या सहितः Dur. वाचा हुङ्कारमात्रेणैवेत्यर्थः। वाचा वा माध्यमिकया SKN.

६. धुक्ष्व सर्वदा सर्वान् कामान्। इत्यन्तरात्मनः प्रैषः Sy. क्षारयसि। ददासीत्यर्थः। यजमानायेति शेषः Mah. प्रक्षारयसि U. ईदृशं मेघं दोहसे क्षारयसि। विकरणव्यत्ययेन शप्। स्वरितेत्। य इति वाऽध्याह्रियते यस्त्वं धोक्षि तं स्तुमः BB. अस्मै यजमानाय....धोक्षि प्रक्षारयसि Dur. क्षारयसि कम्? सामर्थ्यान्मेघमुदकम्। द्विकर्मकोऽयं 'दुहियाचि' PMBH. 1.4.3.p.334. on Pa.1.4.51. इत्यादिस्मरणात् SKN.

७. यासु यज्ञक्रियासु Mah. यासु विक्षु येषु यजमानेषु U. यासु क्रियासु यागलक्षणासु BB. तमेवं गुणसंयुक्तमिन्द्रं वैश्वदेवं सगणं हे सोम! यासु क्रियासु Dur. यास्विति स्त्रीलिङ्गनिर्देशाद् दिशः प्रतिनिर्दिश्यन्ते। यासु दिक्षु SKN.

त्वम् । आशुकारिणम्[1] । शत्रून्[2] जयन्तम्[3] । अनुवर्धयसि[4], इदमिहापि[5] स्मर्तव्यं यथा द्वयोर्मन्त्रयोरेकस्यैवार्थस्य विरम्याभिधानात् एकवचनबहुवचनाभ्यां[6] निर्देशः, एवमेकस्मिन्नपि मन्त्रे विरम्याभिधानाद् भिन्नपादस्थयोरेकवचनबहुवचनयोरन्वयो[7] भवतीति[8] ।

---

१. शीघ्रगामिनं व्याप्तं वा Sy. शीघ्रम् Mah., U., Dur. व्यापकं वा दिगन्तानाम् BB. शीघ्रम् Dur. शीघ्रं महत्त्वेनोदकेन वा मेघाञ्जनयन्तम् SKN.

२. शत्रुं P.

३. सर्वमभिभवन्तमिन्द्रम् Sy. जयन्तं जेतव्यानि वस्तूनि Mah., U. लोकानभिभवन्तम् BB. जेतव्यानसुरादीन् Dur.

४. प्रवृद्धो भवसि वर्धयसि वेन्द्रं यथा स्तुत्येति यास्विति व्यत्ययेन बहुवचनम् Sy. पुनः पुनः सोमपानेन वृद्धिं प्राप्नोषि तासु Mah. वर्धसे पुनः पुनः संस्क्रियसे तासु तासु क्रियासु त्वमवस्थितस्तत्र प्रतीचीनं वृजनं दोहसे U. त्वमनुवर्धसे । अनुक्रमेण वृद्धिं गच्छसि, स्तुत्यनन्तरं वा वृद्धिं गच्छसि तासु स्तुमः । यद्वा यासु स्तुतिषु त्वमनुवर्धसे स्तुतो वृद्धिं गच्छसि तास्स्तुतीः कुर्म इति शेषः । स्तुत्या हि स्तोतव्यो वर्धते । यथा 'वर्धन्तु त्वा सुष्टुतयः' इति । यद्वा—ईदृशं मेघं दोहसे कम् ? वृजनं बलकरमुदकं गिरा गर्जितेनोपलक्षितः BB. स्तुतिभिर्हविर्भिश्चानुपूर्व्येण वर्धसे । येषु देशेषु मनुष्यैः स्तूयस इज्यसे च तेष्वित्यर्थः SKN. पुनः पुनः संस्क्रियसे Dur.

५. ०हावि P.

६. एकवचनाभ्यां P., D.

७. ०रेकवचनयोर० P., D.

८. यद्वा । अस्या ऋचोऽर्थान्तरम् । हे इन्द्र ! यस्त्वं प्रतीचीनं प्रतिगमनमस्मत्प्रतिकूलं वृजनं वर्जनीयमालस्याश्रद्धादिकं दोहसे रिक्तीकरोषि विनाशयसि 'दुह प्रपूरणे' प्रपूरणं रिक्तकरणमिति क्षीरस्वामी । किञ्च यासु क्रियासु धुनिं त्वदनुग्रहाच्छत्रून् कम्पयन्तमाशुं क्षिप्रकारिणं जयन्तं सम्यगनुष्ठानेन यजमानान्तराण्यतिशयानमेनं यजमानमनु सोमपानेन स्तुत्या च यस्त्वं वर्धसे तासु क्रियासु तं त्वां स्तुम इति शेषः । कथमिव प्रत्नथा थाप्रत्यय उपमार्थः । प्रत्नाः पुरातना भृग्वादयो यथा त्वामस्तुवन् पूर्वथा पूर्वे पित्रादय इव । विश्वथा अतीताः सर्वे यजमाना इव । इमथा इदानीन्तना वर्तमानाः यजमाना इव वयं त्वां स्तुम इत्यर्थः । कीदृशं त्वाम् । ज्येष्ठतातिं स्वार्थे तातिः । ज्येष्ठमित्यर्थः । बर्हिषदं यागे सन्निहितत्वेन तिष्ठन्तम् । स्वर्विदं यजमानाय दातव्यं स्वर्गं वेत्तीति स्वर्वित् Mah.

प्रत्न इव पूर्व इव विश्व इवेम इवेति । अयमेततरोऽमुष्मात् । असावस्ततरोऽस्मात् । अमुथा यथासाविति व्याख्यातम् N. 3. 16., SKN. II. 175, 176.

इमां त्वेव शुक्रस्य पुरोरुचं कुर्यात् । तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषद ँ स्वर्विदमित्यत्ता ह्येतमन्वत्ता हि ज्येष्ठस्तस्मादाह ज्येष्ठतातिं बर्हिषद ँ स्वर्विदम् प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहीति सादयत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्मादाहैष ते योनिर्वीरतां पाहीति दक्षिणार्धे सादयत्येता ँ ह्येष दिशमनु संचरति । SB. 4.2.1.9., P.353. This stanza= YV. 7. 12.=TS. 1. 4. 9.1.

अत्र 'वर्धसे' इत्यन्त एव पाठ ऋग्वेदस्य, ततोग्रे यजुरनुरोधेन । अथर्वाचि 'गिराशुम्' इत्यस्ति परं यजुषि 'धुनिमाशुम्' इत्यस्ति पाठः ।

**श्रिये सुदृशीरुपरस्य याः स्वर्विरोचमानः ककुभामचोदते ।**
**सुगोपा असि न दभाय सुक्रतो परो मायाभिर्ऋत आस नाम ते ॥ २ ॥**

श्रिये[1]। भूम्याश्रयणार्थम्[2]। सुदर्शनाः[3]। मेघस्य स्वभूताः[4]। यास्त्वमिन्द्र[5]! अपः प्रेरयसि[6]। ककुभां[7] सम्बन्धिने। अचोदते[8] चोदश्शब्द[9] ओषधिवनस्पतिवचनोऽभिलषितस्य चोदयित्र्या वाचा रहितमिति ताः स्तोतारस्त्वां दुहन्तीति। एवं च त्वमिन्द्र! जगतः सुष्ठु गोपयिता[10]। भवसि। सुकर्मन्[11]! न च। हिंसायै[12] भवसि[13] तरसि च शत्रून्। प्रज्ञाभिः[14]। तथा इन्द्रः शक्र इत्यादिकं तव। नाम[15]। उदकनिमित्तम्[16]। अभूत्[17] कीर्त्यमानमिति[18][19]।

**अत्यं हविः सचते सच्च धातु चारिष्टगातुः स होता सहोभरिः ।**
**प्रसस्राणो अनु बर्हिर्वृषा शिशुर्मध्ये युवाजरो विस्रुहा हितः ॥ ३ ॥**

अत्यम्[20][21]। पार्थिवाल्लोकाद्देवान् प्रति गमनं निहितम्[22]? हविः[23]। सेवते। जङ्गमं[24] पश्वादिकम्[25]। स्थावर-मोषध्यादिकम्[26]। च। अहिंसितमार्गः[27]। सः[28]। होता[29] राक्षसानार्थम्। बलस्य भर्ता। तथा बर्हिः[30]। लक्षीकृत्य।

---

१. श्रीये D.
२. हे इन्द्र! Sy.
३. प्राणिनां श्रयणाय प्रेरको भवेति शेषः Sy.
४. ०न P., D. सुरोचमानाः Sy.
५. मेघस्य सम्बन्धिन्यः Sy.
६. यस्त्व० P. या आपः सन्ति तासामपाम् Sy.
७. सर्वासां दिशां मध्ये Sy.
८. अचोदते चोदते P. अप्रेरयितुः। षष्ठ्यर्थे चतुर्थी Sy.
९. चोदच्छब्द P.
१०. प्राणिनां सुष्ठु गोपायितासि Sy.
११. शोभनवृष्टिप्रदानादिकर्मन्निन्द्र! Sy.
१२. दम्भनाय वधाय प्राणिनाम् Sy.
१३. प्रभवसि Sy.
१४. त्वं च मायाभिः आसुरीभिः Sy.
१५. त्वदीयं नामकं रूपम् Sy.
१६. It seems to be the explanation of ऋते॥ सत्यलोके Sy.
१७. भवत् P. ०त्त भूत D. आस्ते Sy.
१८. ०न इ० P.
१९. VM. ignores स्वः। विरोचमानः and परः॥ स्वः स्वर्गे। परः मायाभ्यः परस्ताद् वर्तमानः Sy.
२०. अत्य P.
२१. इयमाग्नेयी होतृत्वयुवत्वादिलिङ्गैः। अयमग्निः Sy.
२२. सततमतनार्हम् Sy.
२३. आज्यादिकम् Sy.
२४. सत्फलसाधनत्वाद्धविरपि सत् Sy.
२५. जंगमः पश्वादि P.
२६. धारकं सर्वस्य। हूयमानस्य हविष आदित्यद्वारा वृष्टिसाधनत्वात्। तया च वृष्ट्या प्रजोत्पत्तेर्धारकत्वम्। तथा हि 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (Manu.3.76.) Sy.
२७. अहिंसितगमनः। सति तस्य गमने यज्ञनिष्पत्त्या फलसिद्धेरिष्टगमनत्वम् Sy.
२८. स खलु Sy.
२९. होमनिष्पादकः Sy.
३०. बहि D.

प्रसर्स्राणिः[1] । कामानां वर्षिता[2] । शिशुः[3] । सोऽयमन्तरिक्षस्थानामपाम्[4] । मध्ये । निहितः[5] । अजरः[6] । एवेति[7][8] ।

**प्र वं एते सुयुजो यामन्निष्टये नीचीरमुष्मै यम्य ऋतावृधः ।**
**सुयन्तुंभिः सर्वशासैरभीशुंभिः क्रिविर्नामानि प्रवणे मुंषायति ॥ ४ ॥**

[9] **प्र वः** । समीपस्थानृषीनवत्सारो वदति—हे ऋषयः ! अग्नेः । एते रश्मयः । दिवं प्रति गमने[10] । युष्माकम् । अभ्युदयार्थं[11] भवन्ति । सुयोजनाः[12] यस्मात् । अस्मै अग्नये[13], अन्तरिक्षे वर्तमानाय । नीचीनाग्राः[14] । उदकस्य यन्त्यौ ? ज्वाला[15] विद्यते । इत्येतदेव विस्पष्टमाह शोभनयमनैः[16] । सर्वस्य जगतः शासितृभिः[17] । रश्मिभिः । कूपसदृशोऽयं[18] पार्थिवोऽग्निः । अन्तरिक्षस्थान्युदकानि[19] । पृथिव्याम्[20] । आहरति[21] ।

**संजर्भुराणस्तरुंभिः सुतेगृभं वयाकिनं चित्तगर्भासु सुस्वरुंः ।**
**धारवाकेष्वृजुगाथ शोभसे वर्धस्व पत्नीरभि जीवो अध्वरे ॥ ५ ॥**

**संजर्भुराणः** । ज्वलनसाधैस्तरुभिरात्माश्रयैः[22][23][24] । सम्भरन्[25] । सुते गृहीतम्[26] । वयाकशब्दो[27] मिश्रणवचनः व्याघारणशेषेणाज्येन मिश्रितः[28] पात्नीवतो[29] भवति । विचित्तगर्भा[30] पष्ठौही[31] दक्षिणेत्यत्र प्रज्ञातगर्भेत्यर्थः[32]

---

१. प्रसस्राणः P., D. प्रकर्षेण सरन् Sy.
२. वर्षकः फलस्य Sy.
३. स इव रक्षणीयोऽप्रौढो वा Sy.
४. It seems to be the explanation of विस्रुहा ॥ विस्रुहाणामोषधीनाम् Sy.
५. स्थापितः Sy.
६. ०रा P. जरारहितः Sy.
७. सर्वत्र मिश्रयिता Sy.
८. VM. ignores च ।
९. एषा सौरी वा Sy.
१०. यज्ञगमने Sy.
११. एषणाय Sy.
१२. सुष्ठु परस्परं संयुक्ताः Sy.
१३. यजमानाय Sy.
१४. नीचं गच्छन्तीति शेषः Sy.
१५. यम्यः यम्या गमनार्हाः । अथवा यमो नियमितादित्यः । तस्य सम्बन्धिनः Sy.
१६. ०भननय० P. सुगमनैः Sy.
१७. सर्वस्य शासकैः Sy.
१८. क्रिविः कर्ता Sy.
१९. नामान्युदकानि Sy.
२०. निम्ने भूप्रदेशे Sy.
२१. मुष्णाति । आदत्त इत्यर्थः । अथवाग्निना-वाह्यस्याग्नेरेतेऽश्वा इष्टये यज्ञगमनाय यामनि रथे सुयुजः प्रगच्छन्ति । शिष्टं समानम् । क्रिविः क्रिविसदृशोऽग्निः प्रवणे नामानि हवींष्युक्तलक्षणाभिर्ज्वालाभिर्मुषायत्यादत्ते Sy.
२२. ०लसा० P.
२३. तरभि० P., D. तरुविकारैर्ग्रहैः Sy.
२४. ०त्मश्र० D.
२५. संभेरन् P. गृभ्णन् गृह्णन् Sy.
२६. अभिषुतेन रसेन गृहीतम् Sy.
२७. ब्दं P.
२८. श्रितः P., D. कुत्सिता वयाः शाखा वयाका लता । तद्वन्तं सोमम् Sy.
२९. वन्तीवतो P.
३०. चित्तग्राहिणीषु स्तुतिषु, स्तुतिभिः सह Sy.
३१. वष्टौह P.
३२. ०ज्ञागत० P.

सूत्रकारैरुक्तः इह तु युवतिष्वित्यर्थः। शोभनस्वरणस्त्वमग्ने[1]! स्तुतिवाक्यानां धारकेष्वस्मासु[2]। शोभनस्तुते[3]! शोभसे[4] स[5] त्वम्। पत्नीः[6]। लक्षीकृत्य[7]। तद्यागार्थम्। जीवमानोऽनुपशान्तः[8]। वर्धस्वेति[9]।

**याद॑गे॒व द॑दृ॒शे ता॒दृगु॑च्यते॒ सं छा॒यया॑ दधिरे सि॒ध्रया॒प्स्वा।**
**म॒हीम॒स्मभ्य॑मुरु॒षामु॒रु ज्रयो॑ बृ॒हत्सु॒वीर॒मन॑पच्युतं॒ सहः॑ ॥ ६ ॥**

**यादृक्** ॥ सूर्यो[10] देवता ॥ यादृक्[11]। एव। ददृशे[12]। तादृगेव। अस्माभिरुच्यते यथा दृष्टमेव ब्रूम इत्यर्थस्तमाह। आदित्यस्य रश्मयोऽस्मभ्यम्[13]। महतीम्[14]। उरूणामर्थानां सातिम्[15]। महच्च[16]। वेगं शारीरम्। महत्[17]। शोभनपुत्रयुक्तम्[18]। अप्रस्खलितम्[19]। सह[20] इत्येतत् त्रयम्[21]। अप्सु[22]। सह धारयन्ति[23]। आत्मीयया कामानां धारयित्र्या[24]। छाययेति[25]।

**वेत्य॒ग्रुर्जनि॑वा॒न्वा अति॒ स्पृधः॑ सम॒र्यता॒ मन॑सा॒ सूर्यः॑ क॒विः।**
**घ्रं॒सं रक्ष॑न्तं॒ परि॑ वि॒श्वतो॒ गय॑म॒स्माकं॒ शर्म॑ वनव॒त्स्वाव॑सुः ॥ ७ ॥**

**वेति**[26]। अतिगच्छति[27]। गमनशीलः[28]। उदितः[29]। शत्रुभिः[30]। सङ्ग्राममिच्छता[31]। मनसा[32]। प्राज्ञस्तमिमम्[33][34]।

---

१. ०नः स्व० D. शोभनगमनः शोभनस्तुतिको वा त्वम् Sy.
२. धारयन्ति वाकान् स्तोत्राणीति धारवाका ऋत्विग्यजमानाः। तेषु मध्ये Sy.
३. शोभनस्तुतिक अग्ने! Sy.
४. सुशोभनसे P.
५. Omitted by P.
६. पालयित्रीरोषधीर्ज्वाला वा Sy.
७. अभिमुखम् Sy.
८. सर्वस्य जीवयिता Sy.
९. अभिवर्धय Sy.
१०. एषा वैश्वदेवी Sy.
११. दक् P. दृक् D.
१२. यादृग्रूपमेव दृश्यते तादृग्रूपमेवोच्यते। यथा दृष्टमेव स्तूयते नतु परवचनप्रत्ययेन Sy.
१३. प्रयच्छन्त्वित्यर्थः Sy.
१४. पूज्याम् Sy.
१५. ०णामनां सातिः P. ०तिः D. बहुदात्रीं रयिम् Sy.
१६. प्रभूतम् Sy.
१७. मह P.
१८. शोभनवीर्यमपत्यम् Sy.
१९. अप्रच्छख्युतं P., D. अनुपक्षीणम् Sy.
२०. बलं चाभिभावुकम् Sy.
२१. इत्यृतं P. ०त्येत D.
२२. व्यापिकासु स्तुतिषु अप्स्वेव वा Sy.
२३. सम्यग्धारयन्ति स्वीयं रूपं स्तुतिं वा Sy.
२४. साधिकया सह Sy.
२५. दीप्त्या Sy.
२६. इयं सौरी Sy.
२७. अतिगच्छति मन्देहानसुरान् योद्धुम् Sy.
२८. अग्रगामी Sy.
२९. जन्मवान् जायावान् वा। उषा ह्यस्य जाया। वा इति प्रसिद्धौ Sy.
३०. शत्रू P. शत्रु D.
३१. ०त P. समरमिच्छता Sy.
३२. मसास्त P. मनसान्त D.
३३. प्र० P. क्रान्तदर्शी Sy.
३४. ०मिम् P.

अह्नः । सर्वमेव मनुष्याणां गृहम्[2] । सर्वतः । रक्षन्तम्[3] । अस्माकम्[4] । सुखम्[5] । परि । वनवत्[6] । स्वभूतहविर्धनोऽस्मदीयो[7] होता[8] ततो यथा यजमानमभिगच्छति तथा याचनं परिवननम्[9] ।

**ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते ।**
**यादृश्मिन्धायि तमपस्यया विदद्य उ स्वयं वहते सो अरं करत् ॥ ८ ॥**

**ज्यायांसम्**[10][11] । अस्य । यजमानस्य[12] । प्रज्ञानेन[13] । अतिशयेन प्रशस्यं त्वाम्[14] । ऋषिभिः कीर्त्यमानम्[15] । नाम[16] । चरति त्वामुपतिष्ठतीत्यर्थः[17] । यास्वप्सु[18] । तव[19] । नाम कीर्तितं[20] भवति एधयत्युदकानीत्यर्थः । परोक्ष

---

१. दीप्तम् Sy.

२. गह P. गृहमन्तरिक्षं वा Sy.

३. रक्षन्तं परिचरेमेति शेषः Sy.

४. ०ख P.

५. सम्यक् Sy.

६. दद्यात् Sy.

७. स्वायत्तधनः सन् Sy.

८. य P., D.

९. VM. ignores वै । स्पृधः and सूर्यः ॥ स्पृधः सङ्ग्रामान् । सूर्यः देवः Sy.

१०. इयमाग्नेयी सौरी वा । हे देव ! Sy. अवत्सारस्यार्षम् । आदित्यस्वरूपेणाग्निरूपेण चोच्यते SKN. अवत्सारस्येदमार्षम् Dur.

११. माज्यां० P.

१२. जमस्य D. यततिर्गतिकर्मा गन्तुरस्य सूर्यस्य । कर्मणि षष्ठ्यौ । अमुं गन्तारम् Sy. यततिगत्यर्थः । गमनशीलस्य तव स्वभूतमण्डलस्य यदा त्वमग्निस्तदाऽस्य यतुनस्यादित्यस्यैव SKN. कर्मणि षष्ठ्यौ वा । यतनशीलस्य भगवतः सूर्यस्य Dur.

१३. प्रज्ञापकेन कर्मणा । उदयादिलक्षणेन विशिष्टम् Sy. कर्मणोदयलक्षणेन । आदित्यमण्डलस्यैवोदयवेलायामुदितमात्रे मण्डले SKN. कर्मणा प्रज्ञया वा Dur.

१४. ०नेतिन P. अतिशयेन प्रवृद्धम् Sy. अत्र चैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यं सर्वतो ज्यायांसमतिशयेन प्रशस्यं वृद्धं वा महान्तमादित्यमग्निं वा SKN. महत्तरम् Dur.

१५. ऋषिभिः स्तुत्यं त्वाम् Sy. स्वरतीत्यर्चतिकर्मा । ऋषिस्तुत्यम् SKN.
ऋषिभिः स्वर्यते स्तूयत इत्यृषिस्वरस्तमृषिस्वरं स्तुवन् Dur.

१६. नमनं नामकं वा रूपं वर्तते ताभिरित्यर्थः । यद्वास्य यतुनस्य गमनशीलस्य तव केतुना तमोनिर्हरणादिकर्मणा विशिष्टं त्वां चरति Sy. देवताभूतस्य स्तूयमानस्य....अभिधानम् । ....तव नमनं वा प्रह्वीभावमागत्य तव तासु त्वमिज्यसे चेत्यर्थः SKN. नमनं.... तव हे भगवन्नग्ने Dur.

१७. गच्छति । भजते यजमानः Sy. चरतिरत्र शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः । आहुतिप्रदानकर्मणोपस्थानं चरति SKN. प्रचरति Dur.

१८. यास्वाप्सु P. केन साधनेन ? यासु स्तुतिषु Sy. अग्निहोत्रहोमोपस्थानयागादिक्रियासु SKN. यासु क्रियासु Dur.

१९. त्वदीयम् Sy.

२०. कीर्ति P.

उत्तरार्द्धः यादृशे[१] कामे[२] मम[३] । मूर्धो निहितो[४] भवति । त[५] कामम्[६] । तदीयकर्मेच्छया[७] । स लभते[८] । यः[९] । एवास्मै[१०] । स्वयं[११] हविः[१२] । वहते[१३] । स[१४] स्वयमेव । पर्याप्तं[१५] धनमात्मनः । करोति[१६] ।

**स॒मु॒द्रमा॑सा॒मव॑ तस्थे अग्रि॒मा न रि॑ष्यति॒ सव॑नं॒ यस्मि॑न्ना॒यता॑ ।**
**अत्रा॒ न हार्दि॑ क्रव॒णस्य॑ रेजते॒ यत्रा॑ म॒तिर्वि॒द्यते॑ पूत॒बन्ध॑नी ॥ ९ ॥**

**समुद्रम्**[१७] । यासु[१८] नाम न उच्चारयन्ति, आसामपाम्[१९] । अग्रिमा[२०] । अन्तरिक्षम्[२१] । प्रत्यवतस्थे[२२] अधो गच्छति[२३] । किं च ता इमा आपो यस्मिन् सवने[२४] । वितता भवन्ति[२५] । तत् सवनम्[२६] । न । रिष्यतीति[२७] । किं च

---

१. यादृशे यादृशे D. यादृश एव कामे SKN. स एवं सरंस्तासु क्रियासु....यादृशे कामे ....एवमत्र शब्दसारूप्याद् 'यादृश्मिन्' इत्यस्य 'यादृशे' इत्येवं विपरिणाम उपपद्यते Dur.

२. ०मे मनुं P. ०मेनुं D.

३. ममनु P.

४. धायि धत्ते । कर्त्तरि चिण् । सामर्थ्यान्मनो गम्यते Sy. व्यत्ययेनायं कर्तरि चिण् द्रष्टव्यः । धत्ते, किम् ? सामर्थ्यान्मनः SKN. मनो धत्ते Dur.

५. यथानिर्देशं प्रतिनिर्देष्टव्यत्वात्तादृशमित्यर्थो ज्ञातव्यः । तादृशं कामम् Sy. यादृश्मिन्नित्युद्देशादुद्दिष्टस्य च प्रतिनिर्देष्टव्यत्वात् तादृक्शब्दस्यार्थे तादृशमेव SKN. तादृशं कामम् Dur.

६. कामयत् P., D.

७. कर्मणा हविःस्तुत्यादिलक्षणेन Sy. अपः कर्म, अप एवापस्या, स्वार्थिकस्तद्धितः । तयाऽपस्यया तेन परिचारेण कर्मणेत्यर्थः SKN. तयाऽपस्यया क्रियया हविःस्तुत्यादिलक्षणया Dur.

८. विन्दते Sy. विदेर्लाभार्थस्येदम् । विन्दति लभते यः SKN. तव प्रसादात्....अलभतेत्यर्थः Dur.

९. Omitted by P. य एव स्वयमनन्यप्रेरितः सन् स्वमनीषयैव Sy.

१०. उकारोऽत्र चार्थे । यश्च SKN.

११. स्वयमेव श्रद्धया न परेण प्रेरितः सन् SKN.

१२. पविः D. किम् ? सामर्थ्याद्दाहुतीः स्तुतीश्च SKN. स्तुतीः Dur.

१३. P. reads वव्रिहते for हविः । वहते ॥ धारयति फलम् Sy. त्वां प्रति प्रापयति SKN. त्वां प्रत्यादरवान् प्रापयति Dur.

१४. सए P. स एव Dur.

१५. अलमत्यर्थम् Sy. पर्याप्तं बहु SKN. पर्याप्तमात्मनः Dur.

१६. अथवा य उ य एव स्वयं वहते स्वयमेवानुतिष्ठति सोऽस्त्यर्थं कुर्यात् । न ह्यन्येन कारितं फलवद्भवति Sy. आत्मनः....करोति नेतारः SKN. अभिप्रेतमर्थं करोति Dur.
यादृशोऽधायि तमपस्ययाविदत् N.6.15., SKN. II.440.

१७. इयमपि सौरी Sy.

१८. सु P.

१९. स्तुतीनाम् । यद्वासां प्रजानामृत्विजां स्तुतिरिति सम्बन्धः Sy.

२०. अत्यन्तं श्रेष्ठास्मदीया स्तुतिः Sy.

२१. अग्रन्तरिक्षम P., D. समुद्रवत् पर्यवसानभूतं सूर्यम् Sy.
समुद्रमित्यन्तरिक्षनाम Ngh. 1.3.

२२. अवगच्छति Sy.

२३. गच्छ D.

२४. आयता विस्तीर्णानि स्तोत्राणि तत्सवनमिति Sy.

२५. भवति P., D.

२६. सूयते सोमोऽत्रेति सवनं यज्ञगृहम् Sy.

२७. न हिंस्यते किन्तु प्रवर्धते इत्यर्थः Sy.

अप्स्वेव[1] । हृदयाभिलषितम्[2] । वर्षणशीलस्य स्तोतुः[3] । न[4] । चलते[5], अपामेव स्तोत्रेऽभिलषितं सिध्यतीत्यर्थः । या स्वप्सु[6] । विद्यते[7] । स्तुतिः[8] । पवनस्य[9] बन्धनी शोधयन्तीति ह्यपां स्तुतिः[10] ।

**स हि क्षत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः ।**
**अवत्सारस्य स्पृणवाम रण्वभिः शविष्ठं वाजं विदुषा चिदर्ध्यम् ॥ १० ॥**

स हि[11] । 'चित्तिः स्रुक्[12]' 'चित्तमाज्यम्[13]' 'चित्तं च चित्तिश्च[14]' इत्यादिषु[15] चित्तशब्दश्चिन्तितवचनो दृष्टः[16] । सः । हि सूर्यः[17] । पञ्चानाम्[18] । अभिलषितैः सहाजगामेति शेषः । सम्प्रति ममावत्सारस्यापि[19] । रमणीयैः[20] स्तोत्रैः । स्पृशाम[21] । सूर्यादस्माद् बलवत्तमम्[22] । अन्नम्[23], यदन्नम् । जानता सर्वेण[24] । पूजनीयमिति[25] ।[26]

**श्येन आसामदितिः कक्ष्यो३ मदो विश्ववारस्य यजतस्य मायिनः ।**
**समन्यमन्यमर्थयन्त्येतवे विदुर्विषाणं परिपानमन्ति ते ॥ ११ ॥**

श्येनः[27] । द्यावापृथिव्योः[28] कक्षं सेवमानः । मेघः[29] । अद्रीनः[30], अद्भिः । आसां[31] विशाम् । मदयिता[32] भवति[33]

---

१. अस्वोप P.
२. हृदयसम्बन्धि हृदयगतं काम्यं फलम् Sy.
३. स्तुतिकर्तुः Sy.
४. स्तोर्त्रे P., D.
५. मलते P. न विचलति । न मृषा भवति Sy.
६. यस्मिन् स्तोतृगृहे Sy.
७. अत्र न रेजत इति Sy.
८. ०ति P.
९. ववनस्य P.
१०. ०ति P.
११. इयमपि सौरी Sy.
१२. ०त्ति स्तुत् P. ०ति स्रु० D. MS. 1.9.1.
१३. थित्त० P., D. MS.1.9.1.
१४. ०त्त P.
१५. वित्तश्च P. वित्तं च D. MS.1.4.14.
१६. The passage चित्तिः....दृष्टः should immediately follow अभिलषितैः सहाजगामेति शेषः ।
१७. हितो P. हिता D. खलु सविता देवः सर्वैः स्तुत्यः सर्वकामपूरक इत्यर्थः । हिशब्दो लोकवेदयोः प्रसिद्धिद्योतकः Sy. तस्मात् सकाशात् Sy. पञ्चानाम् refers to five saints as क्षत्रस्य । मनसस्य । एवावदस्य । यजतस्य and सध्रेः ।
१८. ०ञ्चनाम् P., D. अत्र 'अन्ये च ऋषयोऽत्र दृष्टलिङ्गाः' इत्युक्तत्वात् क्षत्रादय ऋषयः । क्षत्रस्य मनसस्य एवावदस्य यजतस्य सध्रेः.... चैषामृषीणामस्माकम् Sy.
१९. व० P., D.
२०. रमणीयाभिः Sy.
२१. पूरयाम Sy.
२२. अतिशयेन बलवत् Sy.
२३. 'अन्नं वै वाजः' (TB.1.3.6.6.) इति श्रुतेः Sy.
२४. विपश्चिता Sy.
२५. समर्धनीयं स्पृणवाम । क्षत्रादयो वयमिति सम्बन्धः Sy.
२६. VM. ignores चित् ।
२७. मददेवत्येयम् Sy.
२८. ०थिव्याः D. कक्ष्यपूरकश्च भवतीति शेषः Sy.
२९. शंसनीयगमनः शीघ्रं पातृसकाशं गन्ता Sy.
३०. ०दिनः P. अतिसमृद्धः Sy.
३१. अपां सोमरसलक्षणानाम् Sy.
३२. विश्ववारादीनां त्रयाणामृषीणां स्वभूतः मदः Sy.
३३. ०न्ति P.

कासामित्याह—विश्ववारस्य । यजतस्य च । कर्मवत:[1] त इमे[2] क्षत्रप्रभृतय इत: पूर्वमज्ञानात्[3] त्वत्तो व्यतिरिक्तम् । अन्यमन्यमात्मनोऽभ्युदयार्थम्[4] । गन्तुम्[5] । समर्थयन्ति[6] । ते सम्प्रति विशेषेण प्रयच्छन्तम्[7] । परितो रक्षितारम्[8] । अन्तिके । त्वाम्[9] । विदुरिति[10] ।

**सदापृणो यजतो वि द्विषो वधीद्बाहुवृक्तः श्रुतवित्तर्यो वः सचा ।**
**उभा स वरा प्रत्येति भाति च यदीं गणं भजते सुप्रयावभिः ॥ १२ ॥**

**सदापृणः**[11] । सदापृणोऽयम्[12] । शत्रून् । अवधीत्[13] । ततो[14] यजतश्च[15] । तथा बाहुवृक्तः[16] । तथा श्रुतवित्[17] । वः, एवं सुदापृणादीनाम्[18] । सहायभूतः[19] । सूर्यश्च[20] । उभौ[21] । सः[22] । वारकौ[23] । शत्रून्[24] प्रति । गच्छति[25] । भाति । चान्तिकस्थो दूरस्थश्चोभौ शत्रू भवतः । यदि[26] । एनम् । इन्द्रादीनां गणम्[27] । भजते[28] । सुप्रगमनैः[29, 30] ।

**सुतंभरो यजमानस्य सत्पतिर्विश्वासामूधः स धियामुदञ्चनः ।**
**भरद्धेनू रसवच्छिश्रिये पयोऽनुब्रुवाणो अध्येति न स्वपन् ॥ १३ ॥**

**सुतम्भरः** । अयं सुतभरः[31] । यजमानस्य ममावत्सारस्य[32] । सतां[33] पतिः । सर्वासामेव विद्यानाम्[34] ।

---

१. ०र्मवः P.
२. ते विश्ववारादयः सत्रे प्रवृत्ताः Sy.
३. इतः पूर्वमज्ञानात् is omitted by P. ०ना D.
४. परस्परम् Sy.
५. सोमं प्राप्तुं तत्पानाय Sy.
६. याचन्तेऽनुज्ञाम् Sy.
७. विशेषेण मदस्य दातारम् Sy.
८. परिपानम् Sy.
९. त्वा P.
१०. जानन्ति लभन्ते वा Sy.
११. ०दावृण P. ०दावृणं D.
१२. ०वृणो० P., D. सदापृणः सर्वदा दानशील एतन्नामा Sy.
१३. हिंस्यात् Sy.
१४. ततः P., D.
१५. यज्ञत० P. यष्टा च Sy.
१६. ०क्तः P. बाहुभ्यां वृक्तदर्भश्च Sy.
१७. श्रुतस्य वेत्ता च Sy.
१८. सदावृणादीनाम P. एतेषां पञ्चानां परस्परापेक्षया प्रत्येकमेकवचनम् । सः स ऋषिः Sy.
१९. ०त P., D. युष्माभिः सहित इत्यर्थः Sy.
२०. तर्यश्च is suggested for सूर्यश्च ।
२१. इह लोकपरलोकविषयौ कामौ Sy.
२२. Omitted by D. ऋषिः Sy.
२३. वारणौ P. श्रेष्ठौ Sy.
२४. शत्रू P.
२५. अभिगच्छति Sy.
२६. यस्मात् Sy.
२७. देवसङ्घम् Sy.
२८. ०त P. तस्मादेवं भवतीति Sy.
२९. ०नै D. सुष्ठु प्रकर्षेण मिश्रयद्भिः Sy.
३०. VM. ignores वि ।
३१. यागनिर्वाहक एतन्नामा ऋषिः Sy.
३२. अवत्सारस्य मम Sy.
३३. ०रस्य (पि रमणीयै स्तोत्रैः) सतां P. सतां विद्यमानानां फलानां पालयिता होता भवतीत्यर्थः Sy.
३४. सर्वेषां कर्मणाम् Sy.

ऊर्ध्वो[1]ऽभवत् । ततश्च स । कर्मणाम् । ममोदञ्चन[2] उत्थापक आसीत् । तथा मया[3] दत्तां धेनुं[4] च[5] । भरत्[6] । तस्या[7] रसवत्[8] । पयश्च[9] । शिश्रिये[10] । सोऽयं[11] मन्त्राणामर्थमनुब्रुवाणो[12] मन्त्रान् विस्पष्टम् । अधीते[13] । न । स्वपन्[14] अविस्पष्टमिति ।

**यो जा॒गार॒ तमृचः॑ कामयन्ते॒ यो जा॒गार॒ तमु॒ सामा॑नि यन्ति ।**
**यो जा॒गार॒ तम॒यं सोम॑ आह॒ तवा॒हम॑स्मि स॒ख्ये न्योकाः ॥ १४ ॥**

यः । प्रसङ्गाज् जागरणगुणानाह—इति । सख्येऽभिमुखस्थानः[15] सख्ये न्योका इति[16] ।

**अ॒ग्निर्जा॑गार॒ तमृचः॑ कामयन्ते॒ऽग्निर्जा॑गार॒ तमु॒ सामा॑नि यन्ति ।**
**अ॒ग्निर्जा॑गार॒ तम॒यं सोम॑ आह॒ तवा॒हम॑स्मि स॒ख्ये न्योकाः ॥ १५ ॥**[16]

उक्तमर्थमुदाहरणेन द्रढयति—अग्निरिति[17] ।

V. 45.

**वि॒दा दि॒वो वि॒ष्यन्नद्रि॑मु॒क्थैरा॑य॒त्या उ॒षसो॑ अ॒र्चिनो॑ गुः ।**
**अपा॑वृत व्र॒जिनी॒रुत्स्व॑र्गा॒द्वि दुरो॒ मानु॑षी॒र्देव आ॑वः ॥ १ ॥**

विदा[18] ॥ सदापृणः[19] ॥ "अहर्देवानामासीद् रात्रिरसुराणां तेऽसुरा यद् देवानामवित्तमवेद्यमासीत्

---

१. उद्धततरं फलम् Sy. २. उदकञ्चनः P., D. ऊर्ध्वमुद्गमयिता फलप्रापक इत्यर्थः Sy.
३. ममया P., D. ४. गौः Sy.
५. दत्तानण्डनुञ्च P. ६. अहरत् Sy.
७. तस्य P. ८. सारवत् Sy.
९. वय० D. १०. श्रयति चास्य सामर्थ्यात् Sy. ११. सोमं P., D.
१२. तत्सर्वम्—अनुक्रमेण सङ्कीर्तयन् Sy.
१३. स्मरत्यवत्सारः सुतम्भरस्तादृश इति Sy.
१४. स्वापमकुर्वन्ननवरतम् Sy. १५. ०स्थने P.
१६. VM. does not explain this stanza. यः देवः । जागार सर्वदा विनिद्रो जागरूको गृहे वर्तते । तम् । ऋचः सर्वशास्त्रात्मिकाः । कामयन्ते । यश्च जागार तमु तमेव सामानि स्तोत्ररूपाणि यन्ति प्राप्नुवन्ति । यो जागार तमयमभिषुतः सोमः, आह वक्ति मां स्वीकुर्विति । हे अग्ने ! तादृशस्य । तव सख्ये समानाख्याने हितकरणे न्योकाः नियतस्थानः अहमस्मि भवामि Sy.
१७. Ms. D. puts the figure ॥४४॥ here to indicate the end of the forty-fourth hymn. No such number is given in P. पूर्वयैव निगदितव्याख्या । य इत्यस्य स्थानेऽग्निरिति विशेषः Sy.
१८. अथ चतुर्थेऽनुवाके द्वादश सूक्तानि । तत्र 'विदा दिवः' इत्येकादशर्चं प्रथमं सूक्तम् । सदापृणो नामात्रेय ऋषिः । त्रिष्टुप् छन्दः । 'वै तत्' (KSA. 26.41. p. 20.) इत्युक्तत्वादिदमपि वैश्वदेवम् । 'विदा एकादश सदापृणः' (KSA. 26.45.p.20.) इत्यनुक्रमणिका । विनियोगो लैङ्गिकः । अत्रेन्द्रादयो लिङ्गोक्तदेवताः । अत्राङ्गिरसां पणिभिरपहृत्य गिरेरधः स्थापितानां गवामिन्द्रेण विमोकः प्रतिपाद्यते Sy.
१९. ०वृणः P., D.

तेन सह[1] रात्रिं प्राविशन्" इति ब्राह्मणं तत्रेदं सूक्तं प्रवर्तते। हे स्तोतः! [2] स्तोत्रैः[3]। शिलोच्चयम्[4]। विमुञ्चन्[5]।
स्वर्गाल्लोकाद् देवैः सह शिलोच्चयम्। लभस्व[6] गच्छ प्रकाशीकरणार्थम्[7]। आगच्छन्त्याः[8]। उषसः[9]। दीप्तयश्च[10]।
आगताः[11]। तथा सूर्यश्च। उदगात्। उद्गतश्च अपावृतवान्[12]। व्रजवती शिलोच्चयपरिवृता[13] गाः। स्वरित्या-
दित्यनाम[14]। तथा तमसा तिरोहिता मानुषीश्च[15]। दुरः[16]। विवृतवानिति[17] [18]।

**वि सूर्यो॑ अ॒मतिं॒ न श्रियं॑ सा॒दोर्वाद्गवां॑ मा॒ता जा॒न॒ती गा॑त्।**
**धन्व॑र्णसो न॒द्यः॑ खादो॑अर्णाः स्थूणे॑व॒ सुमि॑ता दृंहत॒ द्यौः ॥ २ ॥**

**वि सूर्यः।** यथालङ्कृतः[19] कश्चित्। आत्मीयं रूपं[20] प्रकाशयत्येवम्। सूर्यः[21]। आत्मीयां तेजोभिः[22] कृतां[23]
श्रियम्[24]। प्रकाशीकरणार्थं व्यमुञ्चत्[25]। अथ गवाम्[26]। ऊर्वात् उरोः[27] महतः सङ्घात्। माता सरमा[28] पणिभिरप-
हृता गाः इव[29]। जानती[30]। आजगाम[31]। अथ शिलोच्चयं प्रति गच्छतां देवानां गमनविघ्नकारिणीर्गच्छदुदकाः[32]।

---

१. सहा P., D.
२. Omitted by P.
३. ०त्रै P. अङ्गिरसां स्तुतिभिर्निमित्तभूताभिः Sy.
४. ०य P. वज्रम् Sy.
५. विदुञ्चन् P., D. प्रक्षिपन्। रक्षकाणामुपरि गिरिभेदनाय च विध्यन् Sy.
६. ०स्वे P. अवेदयदिन्द्रः। किम्, गा निगूढा इति सम्बन्धः Sy.
७. ०शा० P.
८. आगामिन्याः Sy.
९. उषसः सम्बन्धिनः Sy.
१०. ०प्ति० D. रश्मयः Sy.
११. अगच्छन् सर्वत्र प्रसृता अभवन् Sy.
१२. अपावृणोत् Sy.
१३. सूश्वादकादुद्गतञ्चपावृतावान् व्रजपतीः P. उदकादुद्गतं चापावृतवान् प्रजपती D. तमः पुञ्जवतीर्निशाः Sy.
१४. ०त्यादिना P. यादिनाम D. The passage स्वरित्यादित्यनाम should immediately follow सूर्यश्च and precede उदगात्॥ सरणशील आदित्यः Sy.
१५. मनुष्यसम्बन्धिनीः Sy.
१६. द्वाराणि Sy.
१७. व्यावृणोत्। अन्धकारायनयनेन मनुष्यादिव्यवहारायाकरोदित्यर्थः Sy.
१८. VM. ignores देवः।
१९. ०थाकृ० P. यथा seems to be the explanation of न।
२०. अमतिम्। रूपमिव द्रव्यम्। यथा द्रव्याणि घटपटादीनि नीलपीतादिरूपं लभन्ते तद्वत् Sy. अमतिरिति रूपनाम Ngh. 3.7.
२१. देवः Sy.
२२. ०भि D.
२३. ०ताः P.
२४. ०यः P. दीप्तिम् Sy.
२५. विभजते प्रकाशयतीत्यर्थः Sy.
२६. रश्मीनाम् Sy.
२७. ०रो P. महतोऽन्तरिक्षात् Sy.
२८. उषाः Sy.
२९. रमा P.
३०. सूर्य उदेष्यति मया च व्युच्छनं कर्तव्यमिति जानती Sy.
३१. आगच्छति Sy.
३२. धन्वर्णसः। ध्वनतिर्गतिकर्मा। धन्वन्ति गच्छन्त्यर्णांसि यासु तास्तथोक्ताः। दीर्घभावश्छान्दसः Sy.

शब्दकारिणीः[1] । खादोअर्णसा[2] इति नदीनाम[3] ताः । द्यौः । आदृंहत[4] यथा[5] स्थिरोदका निश्चला गमनयोग्या भवन्ति यथा चक्र आत्मनीव हन्ति[6] । यथा सुमिता[7] । स्थूणा[8] वंशमत्याहितं[9] निश्चलं धारयत्येवमिति ।

**अस्मा उक्थाय पर्वतस्य गर्भो महीनां जनुषे पूर्व्याय ।**
**वि पर्वतो जिहीत साधत द्यौराविवासन्तो दसयन्त भूम ॥ ३ ॥**

**अस्मै ।** अस्मै[10] वक्तव्याय[11] । प्रशस्यायेन्द्राय[12] । पर्वतस्य[13] । गर्भः[14] प्रकाश आसीदिति शेषः । गवाम्[15] । पूर्व्याय[16] । जन्मने[17] स्वामिन इत्यर्थः । तदा पर्वते[18] प्रविशत इन्द्रस्य पर्वते विजिहीत[19] द्वारप्रदेशमपहायोभयतो[20] गत इत्यर्थः । प्रकाशीकरणार्थं द्यौश्च । अभिलषितम् । साधितवती[21] । तत एनं परिचरन्तः[22] । बहु शत्रुजातम्[23] । उपक्षपितवन्तः[24] ।

सदाप्रणस्वर्यूव्यान्[25] अवत्सारस्य गृहपतेर्यज्ञं प्रति गन्तुमिदमाह—

**सूक्तेभिर्वो वचोभिर्देवजुष्टैरिन्द्रा न्व१ग्नी अवसे हुवध्यै ।**
**उक्थेभिर्हि ष्मा कवयः सुयज्ञा आविवासन्तो मरुतो यजन्ति ॥ ४ ॥**

**सूक्तेभिः[26] ।** गवामपहर्तृभिः पणिभिरभिभूतानां युष्माकम्[27] । रक्षार्थम्[28] । सुवचनैः[29] । वचोभिः । देवैः

---

१. नद्यः Sy.
२. भक्षितकूलोदकाः । कूलङ्कषा इत्यर्थः । नद्यश्चैवंरूपा भवन्ति Sy.
३. Ngh. I.13.
४. अदृंहत P. अदृंमहत D. दृढाऽभवत् । एतत् सर्वं सूर्यस्याज्ञयेति भावः Sy.
५. यता P.
६. ०न्तिः P. ०न्ती D.
७. सुहिता P.
सुष्ठु गृहे स्थापिता
८. गृहाधारस्तम्भ इव Sy.
९. ०मन्त्या० P.
१०. मह्यम् Sy.
११. ०ये P.
१२. स्तोत्रे Sy.
१३. पर्ववतो मेघस्य Sy.
१४. ०र्भे D.
गर्भस्थानीयमुदकम् Sy.
१५. पूर्वगवां P. पूगवां D. महतीनां स्तुतीनाम् Sy.
१६. प्रत्नाय Sy.
१७. उत्पादयित्रे Sy.
१८. पर्वतो मेघः Sy.
१९. पिजीोहित P., D. जिहीत । चलति । चालयति वेन्द्रः Sy.
२०. ०योभवतो P. द्वारमपहा० D.
२१. साधयति वृष्टिम् Sy.
२२. सर्वतः परिचरन्तोऽङ्गिरसः Sy.
२३. अत्यधिकम् Sy.
२४. उपक्षपयन्त्यात्मानं कर्मभिः Sy.
२५. सूर्यभिः P.
२६. सदापृणः स्वपूर्व्यान् is suggested for सदापृण स्वर्यूव्यान् ।
२७. वः युवां व्यत्ययेन बहुवचनम् Sy.
२८. अस्मद्रक्षणाय Sy.
२९. सूक्तैः सुवचनैः शोभनगुणप्रकाशनप्रवणैः Sy.

सेवितैः[1]। इन्द्राग्नी[2]। क्षिप्रम्। आह्वातुमेते[3] प्रवृत्ता[4] इति शेषः। तथोक्थेभिः[5]। कान्तप्रज्ञा[6] एते। शोभनयाः[7]। परिचरन्तः[8]। मरुतश्च[9]। यजन्ति[10] पणिभिरपहृतेषु पशुष्ववत्सारः। 'स हि क्षत्रस्य' इत्यस्यामृचि[11] निर्दिष्टैर्ऋषि-[12]भिर्यष्टुमुद्युक्तस्ततः[13] 'सदापृणो[14] यजतः' इत्यस्यामृचि[15] निर्दिष्टान्[16] ऋषीन् प्रतीत्थं[17] वदतीति, अस्याख्यातस्योदात्त-[18]त्वादुत्तरत्र[19] सम्बन्धः[20]।

**एतो न्व१द्य सुध्यो३ भवाम प्र दुच्छुना मिनवामा वरीयः।**
**आरे द्वेषांसि सनुतर्दधामायाम प्राञ्चो यजमानमच्छ॥ ५॥**

**एतो नु।** आगच्छत[21]। क्षिप्रम्[22]। अद्य[23]। वयं सुकर्माणः[24]। भवाम। कृत्वा च कर्माणि[25] प्रहिंसामो[26] वयम्। राक्षसान्[27]। वरीयः[28] वरीयसः[29]। इत्येतदेवाह[30]—आरे इति दूरे। द्वेष्टॄणि[31] रक्षांसि। अन्तर्हितानि[32]। दधाम[33]। तदर्थं[34] यजमानमवत्सारम्[35]। प्रति[36]। गच्छाम इति[37]।

---

१. देवैः सेवनीयैः Sy.
२. परस्परापेक्षया प्रत्येकं द्विवचनम्। यद्यप्येकमेव पदं मध्ये व्यवधानं छान्दसम्। हे इन्द्राग्नी! Sy.
३. आह्वयामि Sy.
४. वृत्ता P.
५. स्तोत्रैः Sy.
६. कान्त० D. अनूचानाः पूर्वे ऋषयः Sy.
७. शोभयानाः D. शोभनयागाः is suggested for शोभनयाः।
८. स्तुत्यादिना परिचरन्तः Sy.
९. मरुत्सदृशाः कर्मसु शीघ्राः Sy.
१०. जयति P. पूजयन्ति Sy.
११. ०त्यस्मामिचि P., D. RV. V. 44. 10.
१२. ०ष्टेः ऋ० P.
१३. ०ष्ट० D.
१४. सदावृणो P. तदावृणो D.
१५. RV. V. 44. 12.
१६. ०ष्टाम् P., D.
१७. पतित्थं D.
१८. आख्या० P.
१९. ०त्तत्वमु० P.
२०. VM. ignores हि and स्म॥ हि स्मेति पूरणौ Sy.
२१. अथमङ्गिरसां वादः Sy.
२२. गच्छत Sy.
२३. अस्मिन् यागदिने Sy.
२४. शोभनकर्माणः Sy.
२५. र्माणि P.
२६. प्रकर्षेण हिंसाम Sy.
२७. द्विषः Sy.
२८. परीयः D. अत्यन्तमित्यर्थः Sy.
२९. परी० D.
३०. ०सेत्ये० P.
३१. यजमानस्य द्वेष्टॄन् Sy.
३२. सम्भक्तॄन्। यद्वा पूर्वं प्रकाशवैरिणां वध उक्त इदानीं प्रच्छन्नानामिति विवेकः Sy. सनुतरित्यन्तर्हितनाम Ngh. 3.25.
३३. स्थापयाम Sy.
३४. दर्थं P. ०हितन्निधामदर्थं D.
३५. ०नव० D. सदापृणमवत्सारं च Sy.
३६. अभिमुखम् Sy.
३७. VM. ignores प्राञ्चः।

**एता धियं कृणवामा सखायोऽप या माताँ ऋणुत व्रजं गोः ।**
**यया मनुर्विशिशिप्रं जिगाय यया वणिग्वङ्कुरापा पुरीषम् ॥ ६ ॥**

**एतां धियम्** [1] । कर्म । कर्तुमागच्छत । कृणवामः [2] । कर्म [3] । हे सखायः [4] ! मातृस्थानीयम् [5] । यत् [6] कर्म । पणिभिरपहृतानां [7] गवाम् । वज्रम् । अप [8] ऋणोति विवृतद्वारं [9] करोतीत्यर्थः । विक्षु भक्षणार्थ हनू प्रवेशयतीति विशिशिप्रो नाम कश्चिदसुरस्तम् [10] । मनुः [11] । पुरिरा [12] ? येन कर्मणा । जिगाय [13] । येन [14] वा । असुरोऽयम् [15] । वङ्कु-नाम [16] । उदकम् [17] । प्राप्तवान् [18] ।

**अनूनोदत्र हस्तयतो अद्रिरार्चन्येन दश मासो नवग्वाः ।**
**ऋतं यती सरमा गा अविन्दद्विश्वानि सत्याङ्गिराश्चकार ॥ ७ ॥**

**अनूनोत्** [19] । इन्द्रस्य [20] हस्तेन यतः [21] । वज्रः [22] । गवामरणम् । अस्मिन् [23] कर्मणि । अनूनोत् [24], नुदतिः प्रेरणकर्मा, विवृतद्वारमकरोत् । येन [25] कर्मणा । अङ्गिरसः [26] गवामयनेन यन्तः । दश । मासान् [27] । अर्चितवन्तः [28] । अथ भिन्न-द्वारे शिल्लोच्चये सत्यभूतं [29] गोधनं प्रति । गच्छन्ती [30] । सरमा [31] नाम देवशुनी । पणिभिरपहृता गाः । अविन्दत् ।

---

१. इदमप्यङ्गिरसां वाक्यम् Sy.
२. आगत्य च करवाम Sy.
३. स्तुतिम् Sy.
४. हे सखायः ! परस्परं सखिभूताः ! अङ्गिरसः ! इत्यङ्गिरसां वचनम् Sy.
५. गवां निर्मात्री Sy.
६. या धीः Sy.
७. पणिभिरपहृतम् Sy.
८. अव P. अपावृणोत् Sy.
९. वित० P.
१०. विगतहनुं शत्रुम् Sy.
११. यद्वा मनुः सर्वस्य मन्तेन्द्रो विशिशिप्रो वृत्रः । स तमस्माभिः कृतया स्तोमलक्षणया धिया जिगाय Sy.
१२. ०स्तमानुः परिरा P.
१३. जितवान् Sy.
१४. नेन P., D. यया च Sy.
१५. अयम् is omitted by P. वणिगिवाल्पेन कर्मणा बहुफलाकांक्षी कक्षीवान् Sy.
१६. गुना० P. पंगुना० D. जलेच्छया वनगामी Sy. १७. पूरकमुदकम् Sy.
१८. आप । 'याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशः' (RV. I.112.11.) इति हि श्रुतम् Sy.
१९. हनूनोत् P.
२०. इन्द्रोस्य P. इन्द्रेस्य D.
२१. हस्तेन संहतः सन् Sy.
२२. अभिषवग्रावा Sy.
२३. अस्मिन् यज्ञे Sy.
२४. नौतिरत्र शब्दमात्रे वर्तते । अशब्दयत् Sy.
२५. ग्राव्णा तदभिषवेण Sy.
२६. नवमासपर्यन्तं गवार्थमनुतिष्ठन्तोऽङ्गिरसो नव-ग्वाः । नवगोयुक्ता वा Sy.
२७. दशमासपर्यन्तम् । यद्वा दशसंख्याकमासोपेता दशमासानुष्ठाना अङ्गिरसोऽपरे नवग्वाश्चैते सर्वेऽपि येनार्चन्ति । 'नवग्वासः सुतसोमास इन्द्रम्' (RV. V.29.12.) इति हि निगमः Sy. २८. अपूजयन्निन्द्रम् Sy.
२९. सत्यं यज्ञं वा Sy.
३०. प्राप्नुवती Sy.
३१. रसामा D. सरणशीला स्तुतिरूपा वागङ्गिरसां गवार्थमिन्द्रेण प्रहिता देवशुनी वा Sy.

[1]अथ पणिभिरुत्पादिता माया विनाशयन् सर्वाण्येव[2]। सत्यानि। अङ्गिराः। चकार यद्यथा दृश्यते तत्तथाविधमेव यथा भवति नानृतं तथा कृतवानिति।

**विश्वे॑ अ॒स्या व्यु॒षि माहि॑नायाः॒ सं यद्गोभि॒रङ्गि॑रसो॒ नव॑न्त।**
**उत्स॑ आसां पर॒मे स॒धस्थ॑ ऋ॒तस्य॑ प॒था स॒रमा॑ विद॒द्गाः॥ ८॥**

[3]**विश्वे**। यदा। [4]अस्या उषसः। [5]महत्याः। [6]व्युच्छने। आत्मीयाभिर्गोभिः। [7]सङ्गता आसन्। [8]तदानीमासां गवाम्। [9]उत्सः। [10]परमे दूरे। [11]स्थानेऽभूत्। ततः [12]सरमा। [13]गोधनसाधकेन। मार्गेण गत्वा। [14]अविदत्। [15]गा नष्टा इति। [16]

**आ सूर्यो॑ यातु स॒प्ताश्वः॒ क्षेत्रं॒ यद॑स्योर्वि॒या दी॑र्घया॒थे।**
**र॒घुः श्ये॒नः प॑तयद॒न्धो॒ अच्छा॒ युवा॑ क॒विर्दी॑दय॒द्गोषु॒ गच्छ॑न्॥ ९॥**

**आ सूर्यः**। यज्ञगृहं प्रति, [17]सूर्यः। [18]आगच्छतु। [19]सप्ताश्वः। [20]यत्। [21]अस्य। [22]क्षेत्रम्। [23]सूर्यविस्तीर्णे। [24]दीर्घे [25]मार्गे भवति। आगत्य च [26]लघुः। [27]श्येनो भूत्वा। [28]सोमलक्षणमन्नम्। [29]प्रति। [30]पततु। पीत्वा च [31]युवा। [32]कविः।

---

१. अथो P., D.
२. स्तुत्यादिलक्षणानि Sy.
३. विश्ये P., D.
४. अस्य P.
५. मंहनीयायाः Sy.
६. व्युच्छने सति गवामावरकेऽन्धकारेऽपवृते सति Sy.
७. सञ्जग्मिरे Sy.
८. तदा Sy.
९. क्षीराद्युत्स्रावः Sy.
१०. उत्कृष्टे Sy.
११. सहस्थाने यज्ञ उपयुक्तोऽभवदित्यर्थः Sy.
१२. वाग् देवशुनी वा Sy.
१३. सत्यस्य Sy.
१४. ०दं P., D. अलभत यद्वाऽऽसां गवां परमे स्थाने व्रजस्य निगूहनप्रदेश उत्स उदकस्य प्रस्रवणो वर्तते। बिलमित्यर्थः। तेन ऋतस्योदकस्य पथा मार्गेण सरमा गा विदत् Sy.
१५. गा निगूढाः Sy.
१६. VM. ignores विश्वे and अङ्गिरसः॥ विश्वे सर्वे Sy.
१७. सर्वस्य प्रेरको देवः Sy.
१८. अस्मदभिमुखमागच्छतु Sy.
१९. सर्पणस्वभावाश्वोपेतः सप्तसंख्याकाश्वो वा Sy.
२०. यस्मात् Sy.
२१. सूर्यस्य Sy.
२२. क्षत्रम् P., D. गन्तव्यप्रदेशः Sy.
२३. उरु अतिप्रभूतायामः। स एव देवः Sy.
२४. ०र्घो P. दीर्घगमने Sy.
२५. मार्गो P., D.
२६. लघु P., D. लघुगमनः सन् Sy.
२७. शंसनीयगमनः Sy.
२८. दीयमानं हविः Sy.
२९. अभिलक्ष्य Sy.
३०. आगच्छति Sy.
३१. सर्वत्र मिश्रयिता Sy.
३२. ०वि P. क्रान्तदर्शी सन् Sy.

दीप्तः[1]। गोषु[2] गच्छन्निति[3]।

**आ सूर्यो अरुहच्छुक्रमर्णोऽयुक्त यद्धरितो वीतपृष्ठाः।**
**उद्ना न नावमनयन्त धीरा आशृण्वतीरापो अर्वागतिष्ठन् ॥ १० ॥**

आ सूर्यः। आरुहत्[4] गमनार्थम्। रसाया देवनद्याः शुक्रम्[5]। उदकम्[6]। सूर्यः[7]। यदा[8]। स्वरथे योजितवान्[9]। अश्वाः[10]। कान्तपृष्ठाः[11]। तनह्निनम्[12] ?। उदकेन। इव। नावम्। शीघ्रं पारं प्रत्यनयन्त। धीराः[13]। तदानीं देवानां वचनम्, आभिमुख्येन[14] शृण्वत्यः। आपः। अर्वाक्[15]। अतिष्ठन्[16] अवहन्त्यः[17]।

**धियं वो अप्सु दधिषे स्वर्षां ययातरन्दश मासो नवग्वाः।**
**अया धिया स्याम देवगोपा अया धिया तुतुर्यामात्यंहः ॥ ११ ॥**

धियं वः[18]। युष्माकम्। अन्तरिक्षे[19]। उदकस्य सम्भक्त्रीम्[20]। धियं[21] कर्म[22]। त्वं धारयसि[23]। येन[24] कर्मणा। अङ्गिरसः। दश। मासान्[25]। अतरन्[26]। अनेन[27]। कर्मणा[28] त्वया क्रियमाणेन[29]। वयं देवैर्गुप्ताः[30]। स्याम[31]। तथा अनेनैव। कर्मणा। पापं च। अतितरेम।[32]

---

१. दीप्यते Sy.
२. रश्मिषु Sy.
३. मध्ये वर्तयन्। यद्वा श्येनः सुपर्णोऽन्धोऽच्छ पतयत् द्युलोकस्थं सोमलक्षणं देवानामन्नमस्मद्यागार्थमानेतुं तदभिमुखमागात् Sy.
४. सर्वतः प्रादुर्भवति Sy.
५. दीप्तम् Sy.
६. उदकं प्रति Sy.
७. देवः Sy.
८. यस्मात्, यदा वा Sy.
९. योतवान् P. रथेऽयोजयत्। तदा तं सूर्यम् Sy.
१०. अश्वान् Sy.
११. कान्तपृष्ठान् Sy.
१२. ०नाम् P.
१३. धीमन्तो यजमानाः Sy.
१४. सर्वतोऽनुज्ञां कुर्वाणाः Sy.
१५. अवाङ्मुखाः Sy.
१६. अभवन् Sy.
१७. ०त्यः P.
१८. हे देवाः! Sy.
१९. अग्निमित्ताम् Sy.
२०. सर्वस्य दात्रीम् Sy.
२१. ०त्रीं D.
२२. स्तुतिम् Sy.
२३. धारयामि। व्यत्ययेन मध्यमः Sy.
२४. यया धिया Sy.
२५. मासः Sy.
२६. अतरन् सत्रमनुतिष्ठन्तः Sy.
२७. अन्तरमनेके P. अन्तरन्ननेके D. अनया Sy.
२८. धिया Sy.
२९. ०णेनन P.
३०. ०वेर्गु० D.
३१. देवगुप्ता स्यम P. भवेम Sy.
३२. Ms. D. puts the figure ॥४५॥ here to indicate the end of the forty-fifth hymn. No such number is given in P.

V. 46.

**हयो॒ न वि॒द्वाँ अ॑युजि स्व॒यं धु॒रि तां व॑हामि प्र॒तर॑णीमव॒स्युव॑म् ।**
**नास्या॑ वश्मि वि॒मुचं॒ नावृतं॒ पुन॑र्वि॒द्वान्प॒थः पु॑रए॒त ऋ॒जु ने॑षति ॥ १ ॥**

**हयो न**[1] ॥ प्रतिक्षत्रः[2] ॥ अश्वः । इव । विद्वानहम्[3] । यज्ञधुरि[4] । युक्तोऽभवम्[5] । तां यज्ञधुरम्[6][7] । वहामि[8] । प्रतरणीम्[9] । रक्षिकाम्[10] । न । अस्याः[11] । विमोचनम्[12] । इच्छामि[13] । न च[14] । पुनः । आवर्तनम्[15] । प्रतिगमनमार्गम्[16] । विद्वान्[17] । अकुटिलम् । नयति[18] । पुरो गन्ता[19][20] ।

**अग्न॒ इन्द्र॒ वरु॑ण॒ मित्र॒ देवाः॒ शर्धः॒ प्र य॑न्त॒ मारु॑तो॒त वि॑ष्णो ।**
**उ॒भा नास॑त्या रु॒द्रो अध॒ ग्नाः पू॒षा भगः॒ सर॑स्वती जुषन्त ॥ २ ॥**

**अग्ने**[21] । हे अग्नीन्द्रादयः[22] ! मह्यम् । बलम्[23] । प्रयच्छताम्[24] । मरुतां गणः मारुतः[25] । उभौ । अश्विनौ[26] । रुद्रश्च । देवपत्न्यः[27] । च । पूषा च । भगश्च । सरस्वती च सेवन्तामिति[28][29] ।

---

१. 'हयो न' इत्यष्टर्चं द्वितीयं सूक्तं प्रतिक्षत्रस्यार्षम् । अष्टमी द्वितीया च त्रिष्टुभौ शिष्टाः षट् जगत्यः । आदितः षड् वैश्वदेव्यः सप्तम्यष्टम्योर्देवपत्न्यो देवता । तथा चानुक्रान्तम्—'हयोऽष्टौ प्रतिक्षत्रोऽन्त्यौ द्वृचो देवपत्नीस्तवोऽन्त्या त्रिष्टुप् द्वितीया च' (KSA. 26.46. p.20.) इति । सूक्तविनियोगो लैङ्गिकः Sy.
२. ०क्षेत्रः P., D. ३. सर्वज्ञः प्रतिक्षत्रः Sy.
४. यज्ञरधुरि D. धुरि यज्ञात्मिकायाम् Sy.
५. ०भव P. युक्तोऽभवत् Sy.
६. धुरम् Sy. ७. यज्ञंपुर P. यज्ञमपुर D.
८. धारयाम्यहमध्वर्युर्होता वा Sy.
९. ०णिम् P. प्रकर्षेण तारयित्रीम् Sy.
१०. रक्षकां P., D. रक्षयित्रीम् Sy.
११. धुरः Sy.
१२. विदोचनम् P. परित्यागम् Sy.
१३. कामये Sy. १४. व P., D.
१५. पुनः पुनरावरणं धारणमपि वश्मि Sy.
१६. यज्ञमार्गान् Sy.
१७. मार्गाभिज्ञोऽन्तर्यामी देवः Sy.
१८. प्रापयति Sy.
१९. पुरतो गन्ता सन् Sy.
२०. VM. ignores स्वयम् ॥ स्वयम् अनन्यप्रेरितः सन् Sy.
२१. प्रत्यक्षकृतोऽयमर्धर्चः । द्वितीयस्तु परोक्षकृतो वाक्यभेदात् U.
२२. अश्यान्मादयः P. By आदि VM. includes वरुण । मित्र । देव । and विष्णु ॥ हे अग्ने ! इन्द्र ! वरुण ! मित्र ! हे विष्णो ! हे सर्वे देवाः ! यूयम् Sy.
२३. बले P., D. बलमस्माकम् Sy. बलं सङ्गृह्य U.
२४. VM. explains प्र यन्त as प्रयच्छताम् and construes it with मरुताम् ॥ प्रापयत Sy. प्रयच्छत दत्त । 'यमेः शपो लुक्' Mah. प्रगच्छत । स्वामिनो गृहं सोमं पातुम् U.
२५. भारु P., D. हे मारुतानि मरुतां बलानि ! Sy. हे मारुत ! गण ! U.
२६. सत्यभूतौ Sy. एवं प्रत्यक्षमुक्त्वा परोक्षमाह Sy.
२७. ०वाप० P. एतेषां देवानां स्त्रियश्च Sy. अध अथ.... देवपत्न्यः Mah., U.
२८. सेवन्तामस्मदीयं यज्ञं स्तुतिं वा Sy. सेवन्तां हवींषि Mah. सेवन्ते यज्ञं पानाय U.
२९. This stanza=YV.33.48

इन्द्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः ।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥ ३ ॥

इन्द्राग्नी । एतान्[1] । आह्वयामि[2] । सवितारं च । शंसनीयम्[3] ।[4]

उत नो विष्णुरुत वातो अस्रिधो द्रविणोदा उत सोमो मयस्करत् ।
उत ऋभव उत राये नो अश्विनोत त्वष्टोत विभ्वानु मंसते ॥ ४ ॥

उत नः । अपि च । अस्मभ्यम्[5] । विष्णुः[6] । सुखम्[7] । करोतु । वातः[8] । च । अक्षीणः[9] । तथा[10] । द्रविणोदाः[11] । सोमश्च[12] । तथा । ऋभवः । च[13] । अपि च । धनाय । अस्माकम्[14] । अश्विनौ[15] भवताम् । अपि[16] च । त्वष्टा[17] । विभ्वा च तच्छिष्यः[18] । सर्वमिदं[19] मन्यताम्[20] ।

उत त्यन्नो मारुतं शर्ध आ गमद्दिविक्षयं यजतं बर्हिरासदे ।
बृहस्पतिः शर्म पूषोत नो यमद्वरूथ्यं वरुणो मित्रो अर्यमा ॥ ५ ॥

उत । अपि च । सः[21] । मारुतः[22] । वेगः[23] । अस्मान् । आगच्छतु । दिवि वर्तमानम्[24] । यष्टव्यमस्माकम्[25] ।[26] बर्हिः[27] ।[28]

---

१. इन्द्रादिसवित्रन्तान् चतुर्दश देवान् । स्वरित्यादित्य उच्यते स्वरणात् Sy.
वरुणौ च अदितिं च स्वः आदित्यं च पृथिवीं च द्यां च मरुतश्च पर्वतांश्च अपश्च । . . . विष्णुं च पूषणं च ब्रह्मणस्पतिं च सवितारं च U.
२. स्तौमि वा Sy. ३. सशं॰ P.
सशं D. स्तुत्यम् Mah. शंसितव्यम् U.
४. VM. ignores नु and ऊतये ॥ नु क्षिप्रम् । ऊतये अवनाय Mah., U.
This stanza=YV.33.49.
५. अस्माकम् Sy.
६. व्यापको देवः Sy.
७. मय इति सुखनाम Ngh. 3.6.
८. अपि च वायुः Sy.
९. अहिंसकः सन् मयस्करत् Sy.
१०. किं च Sy. ११. धनस्य दाता Sy.
१२. सोमोऽपि मयस्करत् Sy.
१३. द्रविणस्य P. अपि च Sy.
१४. अस्मभ्यम् Sy. १५. ॰नो P.
१६. ई P. १७. त्वष्टा देवः Sy.
१८. ऋभूणामन्यतमो देवः Sy.
१९. ॰द P., D. एते सर्वेऽप्यनुमंसते । यद्वा अनुमंस्त इति प्रत्येकं सम्बन्धनीयम् Sy.
२०. VM. ignores अनु ।
२१. तत् Sy. २२. मरुताम् Sy.
२३. वेगेन D. बलं सङ्घः Sy.
२४. द्युलोके Sy. २५. ॰नः P., D.
२६. पूज्यम् Sy. २७. बहु P. बहि D.
किमर्थमागमनमिति ? तदुच्यते बर्हिषि Sy.
२८. VM. ignores आसदे । बृहस्पतिः । शर्म । पूषा । आ । नः । यमत् । वरुथ्यम् । वरुणः । मित्रः and अर्यमा ॥ आसदे उपवेष्टुम् । उपविश्य हविःस्वीकारायेत्यर्थः । किंच बृहस्पतिः—देवः शर्म सुखं यमत् यच्छतु । उत नः अस्मभ्यं पूषापि यमत् । कीदृशं शर्म ? वरूथ्यम् । वारयति शीतवातादिकमिति वरूथं गृहम् । तदर्हं वरूथ्यम् । किं च वरुणादयस्त्रयोऽपि प्रत्येकं शर्म यच्छन्तु Sy.

उत त्ये नः पर्वतासः सुशस्तयः सुदीतयो नद्यस्त्रामणे भुवन् ।
भगो विभक्ता शवसावसा गमदुरुव्यचा अदितिः श्रोतु मे हवम् ॥ ६ ॥

[उत त्ये ।][1] अस्मान् आगच्छतु । अन्नेन[2] च । वहुव्याप्तिः[3] । अदितिश्च[4] । मम । आह्वानम्[5] । शृणोतु[6] ।

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥ ७ ॥

देवानाम्[7] । देवानाम्[8] । पत्न्यः[9] । उशत्यः[10] । अवन्तु[11] । नः[12] । प्रावन्तु[13] । नः[14] । अपत्यजननाय[15] । अन्नाय[16] च । याः[17] । पार्थिवासः[18] । याः । अपाम्[19] । अपि[20] । कर्मणि व्रत[21] उद्युक्ताः[22] । ताः । नः[23] । देव्यः[24] । स्वाह्वानाः[25] । मम[26] सुखम्[27] । प्रयच्छत[28] ।

१. The *pratīka* is supplied by the Editor. २. रक्षणेन च सह Sy.
३. प्रभूतव्याप्तिः Sy. ४. अदीना देवमाता Sy.
५. स्तुतिमाह्वानं वा Sy.
६. VM. ignores उत । त्ये । नः । पर्वतासः । सुशस्तयः । सुदीतयः । नद्यः । त्रामणे । भुवन् । भगः । विभक्ता and शवसा ॥ उत अपि च । त्ये ते । पर्वतासः पर्ववन्तोऽद्रयः । सुशस्तयः शोभनस्तुतयः । सुदीतयः सुदानाः । नद्यश्च । त्रामणे पालने । नः अस्माकम् । भुवन् भवन्तु । भगो देवः । विभक्ता धनानां विभागकर्ता दाता सन् शवसा अन्नेन Sy.
७. पत्नीसंयाजेषु देवपत्नीनां 'देवानां पत्नीः' इत्यादिके द्वे याज्यानुवाक्ये । सूत्रितञ्च—'देवानां पत्नीरुशतीरवन्तु न इति द्वे' (ĀSS. 1.10.) इति । आग्निमारुतशस्त्रेऽप्येते । 'देवानां पत्नीरुशतीरवन्तु न इति द्वे राकामहमिति द्वे' (ĀSS.5.20.) इति Sy. प्रतिक्षत्रस्येदमार्षम् Dur. प्रतिक्षत्रस्यार्षम् SKN.
८. देवानाम् इन्द्रादीनाम् Sy.
९. या एता देवपत्न्यः Dur. प्रथमार्थे द्वितीया । देवानां पत्न्यो भवत्यः SKN.
१०. अस्मदीयां स्तुतिं कर्म वा कामयमाना Sy. अस्मत्तो हविरुशन्ति कामयन्ते Dur. उशत्यो हविः स्तुतीश्च कामयमानाः SKN.
११. रक्षन्तु Sy. ता अस्मत्तो हविरुपभुज्य ततोऽस्मानवन्तु प्रतितर्पयन्तु धनेन Dur. अवतिर्गतिकर्मा, गच्छन्तु SKN. १२. अस्मान् Sy. अस्मान् प्रति SKN. १३. प्रवस्तु P. प्रकर्षेण रक्षन्तु गच्छन्तु वा Sy. प्रकर्षेणावन्तु रक्षन्तु Dur. गत्वा च प्रावन्तु प्रकर्षेण रक्षन्तु SKN. १४. अस्माकम् Sy. अस्मान् SKN.
१५. ०पत्यपत्यज० P., D. बलवते पुत्राय Sy. किमर्थम् ? . . . . तुजय इति तुक्शब्दस्यापत्यनाम्नो जनेश्च रूपमिदम् । तेनायमर्थः—अपत्यजननाय SKN. १६. अन्नायनाय P. अन्नलाभाय सङ्ग्रामाय वा Sy. अन्नसम्भजनाय Dur. सातिर्लाभार्थः, अन्नलाभाय SKN.
१७. कतमास्ताः ? याः Dur. १८. पृथिवीसम्बन्धिन्यः Sy. पृथिव्यां भवाः SKN., Dur.
१९. उदकानाम् Sy. अपां वृष्टिलक्षणानाम् SKN.
२०. अपिशब्दश्चार्थे SKN.
२१. अन्तरिक्षे वर्तन्ते Sy. कर्मणि वृषोत्सर्गे व्यापृताः सर्वाः Dur. कर्मणि जननाख्ये जन्मनीत्यर्थः । सप्तमीश्रुतेर्वर्तध्वमिति शेषः । वृष्टिं कुरुतेत्यर्थः SKN. २२. वत P., D.
२३. अस्मभ्यम् Sy., SKN. अस्माकम् Dur.
२४. देव्य P., D. Sy. २५. स्वाहना P. हे शोभनाह्वानाः ! यूयम् Sy. सुह्वानाः SKN.
२६. म P., D. २७. गृहं सुखं त्राणं वेत्येतदाशास्महे Dur. गृहं सुखनाम वा SKN.
२८. यच्छत Sy. ददतु Dur. देवानां पत्न्य उशत्योऽवन्तु नः । प्रावन्तु नः । (तुजये) अपत्यजननाय चान्नसंसननाय च । याः पार्थिवासो या अपामपि व्रते कर्मणि ता नो देव्यः सुहवाः शर्म यच्छन्तु शरणम् N.12.45., SKN. IV.145.

**उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ग्नाय्य१श्विनी राट्।**
**आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥ ८ ॥**

उत ग्नाः । अपि[1] च[2] । ग्नाः[3] । व्यन्तु[4] । देवपत्न्यः[5] । इन्द्राणीन्द्रपत्नी[6] । अग्नायी अग्नेः[7] पत्नी । अश्विनी अश्विनोः पत्नी । राट्[8] राजतेः दीप्तिः[9] । रोदसी द्यावापृथिवी[10] । "रुद्रस्य पत्नी"[11] इति यास्कः । वरुणानी च वरुणस्य पत्नी । शृणोतु[12] । व्यन्तु[13] । देव्यः[14] कामयन्ताम् । यः । ऋतुकालः[15] । जायानां[16] सोमपानस्य[17] ।

इति षड्विंशमध्यायं व्याख्यदार्येषु[18] कश्चन ।

दक्षिणापथमाश्रित्य वर्तमानेषु माधवः[19] ॥

---

१. पुरुषैः पीतमग्न्यादिभिरपि Dur. उताप्यर्थे SKN. २. Omitted by D.
३. स्त्रियः Sy. स्त्रियः Dur. ग्नाशब्दः स्त्रीवचनः । अपि स्त्रियः SKN.
४. हविर्भक्षयन्तु । ता विविच्योच्यन्ते Sy. पिबन्त्येतदाज्यम् Dur. कामयन्ताम् । किम् ? सामर्थ्याद् हविः SKN. ५. देवपत्न्यो देवाः पतयो यासां ताः Sy. कतमाः स्त्रियः ? ....देवानां पत्न्यः कामयमानाश्च SKN.
६. इन्द्रस्य पत्नी Sy., SKN. ७. ०ग्ने P.
८. राजमाना Sy. सा च राड् दीप्तिः । राडित्यस्य प्रत्येकं वा सम्बन्धः SKN.
९. रा सृजते दीप्ति P. रासृजतेर्दीप्ति D.
१०. 'रुद्रस्य पत्नी' (N.11.49.) इति यास्केनोक्तम् । एवं सति 'विषितस्तुका रोदसी' (RV.I.167.5.) इत्यत्र यथाद्युदात्तप्रगृह्यते न स्तस्तद्वदत्रापि भाव्यम् । तथापि शाकल्येन महर्षिणैवमुक्तत्वात्तथैव द्रष्टव्यम् Sy. आथर्वणे रोदसीति, अप्रगृह्यं पदं तदपेक्ष्यैकवचनेन भाष्यकारो निराह—रोदसी रुद्रस्य पत्नीति Dur. रुद्रस्य पत्नी । रोदसीति रुद्रस्य पत्नीवचनो व्याख्यातः । तत् किल नोपपद्यते । यतोऽन्तोदात्तो रोदसीशब्दो रुद्रपत्नीवचनो दृष्टः । 'विषितस्तुका रोदसी' (RV.I. 167.5.) 'मिम्यक्ष येषु रोदसी' (RV.I. 167.3.) इत्यादावन्तोदात्तस्य दर्शनात् । आद्युदात्तस्तु 'अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे' (RV.I.185.4.) इत्यादौ सर्वत्र द्यावापृथिवीवचनः । अस्याद्युदात्तत्वाद् द्यावापृथिवीवचन एव न रुद्रपत्नीवचनः । तथा च पदकारेण द्विवचनत्वं प्रदर्शितमिति । कर्मणा वा दानेन प्रशस्यताऽस्य दर्शितेति । भाष्यकारस्तु देवपत्नीप्रकरणानुविधानेन पदकारमनवेक्ष्य रोदसीशब्दं रुद्रपत्नीवचनमुदाजहारेति SKN.
११. रोदसी । रुद्रस्य पत्नी N.11.49.,12.46.
१२. आभिमुख्येन च स्थित्वा शृणोतु Dur. आकारः शृणोत्विति सम्बध्यते SKN.
१३. खादयन्तु हविः Sy. सर्वा अप्येता व्यन्तु पिबन्त्वेतदाज्यम् Dur.
१४. देव्य D. पत्नीसंयाजदेव्यः Sy.
१५. यामित० P., D. तदभिमानी देवोऽपि शृणोतु वेतु च Sy. भोजनकालः ।....तस्मिन् काले दीयमानम् । कश्चासौ ? भुक्तवत्सु पुरुषेष्विति Dur.
१६. जनायां P. जनीनां देवजायानाम् Sy.
१७. अपि च ग्ना व्यन्तु देवपत्न्यः । इन्द्राणीन्द्रस्य पत्नी । अग्नाय्यग्नेः पत्नी । अश्विन्यश्विनोः पत्नी । राड् राजतेः । रोदसी रुद्रस्य पत्नी । वरुणानी च वरुणस्य पत्नी । व्यन्तु देव्यः कामयन्तां य ऋतुकालो जायानां य ऋतुकालो जायानाम् N. 12.46., SKN. IV. 146.
१८. ०ख्यादा० P. १९. Ms. D. puts the figure ॥४६॥ here to indicate the end of the forty-sixth hymn. No such number is given in P.

# [ चतुर्थाष्टके तृतीयोऽध्यायः ॥ ][1]

'प्रयुञ्जती दिव एति'[2] व्याचिख्यासति माधवः ।
द्विरुच्यमानशब्देषु[3] वक्तव्यं सम्प्रदर्शयन् ॥१॥
पदद्विर्वचने वीप्सा[4] नित्यता वा प्रतीयते ।
ततो द्वितीयं न पदं तत्र स्यात् पादपूरणम्[5] ॥२॥
'पथस्पथः परिपतिं[6] वचस्या'[7] 'धीवतोधीवतः सखा'[8] ।
'शृण्वे वीर उग्रमुग्रम्'[9] 'पन्यंपन्यमित्[10] सोतारः'[11] ॥३॥
'यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे'[12] ।
'विशोविशो वो[13] अतिथिम्'[14] वीप्सा सर्वेषु विद्यते ॥४॥
प्रायेण व्यक्तिभेदस्य[15] वीप्सैकस्यामपि[16] क्वचित् ।
'अग्निमग्निं हवीमभिः'[17] इति तत्र निदर्शनम् ॥५॥
'देवंदेवं वोऽवस इन्द्रमिन्द्रं[18] गृणीषणि'[19] ।
'तंतमिद्राधसे[20] महे'[21] पादाश्चात्र निदर्शनम् ॥६॥

---

१. This line is supplied by the Editor.
२. RV. V.47.1.
३. विरम्यो नच श० P. विरच्यो न श० D.
४. दीप्सा P.
५. पादाश्रारणम् P.
६. ०तीं P. ०पथीं D.
७. RV. VI. 49.8.
८. RV. VI. 55.3.
९. उग्र अग्रं P. RV. VI. 47.16.
१०. वन्यं वन्य० P.
११. स्तोता० P., D. RV. VIII. 2.25.
१२. RV. VI. 48.1.
१३. पो D.
१४. अथिं P. RV. VIII. 74.1.
१५. ०दस्यात् D.
१६. द्विस्पेकस्यानपि P. ०स्या अपि R.
१७. RV. I.12.2.
१८. वोपसे चेन्द्र० D. वोवस्ये चेन्द्र० P. ०से चेन्द्र० R.
१९. RV. VIII.12.19.
२०. ०मिन्द्रा० R. D.
२१. RV. VIII. 68.7.

सुबन्तस्य द्विर्वचने तिङन्तस्यात्र नित्यता ।
एवंविधेऽपि नित्यार्थे[१] द्विरुक्तिरिति केचन ॥७॥
वदन्त्यन्ये कालभेदादग्निरेकोऽपि[२] भिद्यते ।
विद्यते[३] तत्र वीप्सेति देशभेदादथापरे[४] ॥८॥
संप्रोपोदां[५] द्विर्वचनं स्मर्यते पादपूरणे ।
'संसमिद्युवसे वृषन्[६]' 'प्रप्रं यज्ञं पृणीतन[७]' ॥९॥
'उपोप मे[८] परा मृश[९]' 'किं नोदुदु हर्षसे[१०]' च[११] ।
न पादपूरणा अन्ये परापाभीति[१२] ते त्रयः ॥१०॥
'अपाप शक्रः[१३]' 'अभ्यभि हि[१४]' 'मो षु णः[१५] परापरा[१६]' ।
वीप्साविशेष एतेषु द्विरुक्तेरवगम्यते[१७] ॥११॥
अधो ऽधो निर्ऋतिर्मास्मान् सर्वथा दुर्हणा[१८] वधीत् ।
एवमभ्यभि ह्रीत्यत्र[१९][२०] पुनः पुनरभिक्रमः ॥१२॥
योऽलङ्करिष्णुः पुरुषस्ततनुष्टिः स उच्यते ।
मघवा[२१] यजमानं तं पुनः पुनरपोहति[२२] ॥

---

१. नित्यर्थे D.
२. ०रेकापि P.
३. Omitted by D.
४. दश० P., D.- ५. ०दा P.
६. RV. X. 191.1.
७. वृणी० P. वृणीतन D. RV. V. 5.5. Cf. 'प्रसमुपोदः पादपूरणे' (Pa.8.1.6.)
८. उपोव मेव D.
९. RV. I.126.7.
१०. ०र्षते D. RV. IV.21.9.
११. ०र्ष न सदा च P.
१२. ०भिति P.
१३. RV. V. 34.3.
१४. RV. IX. 110.5
१५. णश्च P., D.
१६. RV. I.38.6.
१७. ०रेव ग० P.
१८. ०ति मास्मास्त्वन्नक्तं दूर्हणा P. ०तिर्मास्मास्त्व नक्तान्दुर्हणा D.
१९. RV. IX.110.5.
२०. ०ह्रीत्तत्र P.
२१. मेघवान P. २२. ०हिति P.

'इन्द्रावरुण नू नु वाम्'[1] इति नुः[2] पूरणो यथा ।
तद्वत् सर्वानिमानाहुरपरे[3] पादपूरणान् ॥
उदाहरणबाहुल्यात्[4] प्रादीनामेव पाणिनिः[5] ।
अनुशास्ति[6] द्विर्वचनमिति केचिदवस्थिताः ॥ इति ॥

V.47.

**प्रयुञ्जती दिव एति ब्रुवाणा मही माता दुहितुर्बोधयन्ती ।**
**आविवासन्ती युवतिर्मनीषा पितृभ्य आ सदने जोहुवाना ॥ १ ॥**

[7][8]प्रयुञ्जती । प्रतिरथः ॥ कार्येषु मानुष्यान्[9] प्रयुञ्जाना[10] । दिवः[11] । आगच्छति । प्रबुद्धानां शब्दैः शब्दं कुर्वाणा[12] । महती[13] । माता[14] । दुहितृस्थानीयां[15] सुप्तजनां पृथिवीम् । बोधयति[16] । परिचरन्ती मनुष्यान् । युवतिरुषाः[17][18] । प्रज्ञया[19] । पालयितृभ्यो देवेभ्यस्तदर्थम्[20] । अग्न्यायतने[21] । अग्निहोत्रेण हूयमाना[22] ।[23]

---

१. ०नू नपाम् P. RV. I.17.8.
२. Omitted by P.
३. ०निनाहु P. ०र्वनिनाहुर० D.
४. उदारहरण० D.
५. चाणिनिः D.
६. ०शस्ति D. Cf. 'प्रसमुपोदः पादपूरणे' (Pa. 8.1.6.)
७. अथ तृतीयोऽध्याय आरभ्यते । तत्र 'प्रयुञ्जती' इति सप्तर्चं तृतीयं सूक्तं प्रतिरथस्यार्षं त्रैष्टुभम् । पूर्वत्र 'वैश्वदेवं वै तत्' (KSA. 26. 41. p. 20.) इत्युक्तत्वादिदमपि वैश्वदेवम् । 'प्रयुञ्जती सप्त प्रतिरथः' (KSA. 27. 47. p. 20.) इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ।...एषोषस्या Sy. ८. पयं० D.
९. मनु० is suggested for मानु० ।
१०. प्रयुञ्जती प्राणिनः प्रस्तुतेषु कर्मसु Sy.
११. द्युलोकात् Sy. १२. ०णां P. स्तूयमाना । कर्मणि कर्तृप्रत्ययः Sy. १३. हती P.
१४. प्रकाशस्य देवानां वा निर्मात्री Sy.
१५. भूम्याः । तदुपजीव्यत्वाद् दुहितृत्वमुपचर्यते । यद्वा दुहितुर्दिव इति सम्बन्धः । उषसो दिवो दुहितृत्वं 'व्युच्छा दुहितर्दिवः' (RV.I.48.1.) इत्यादिषु प्रसिद्धम् । अन्यत्र च 'दिवो दुहिता भुवनस्य पत्नी' (RV.VII.75.4.) इत्युषसः द्युदुहितृत्वमाम्नातम् । अत इदमधिगम्यते । कदाचिद् द्यौरुषसो जायत उषाश्च दिव इति । 'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये (AB. 3. 33.) इति हि श्रूयते । लिङ्गं च दृश्यते कार्यकारणभावव्यत्यये 'अदितेर्दक्षो अजायत दक्षाद्वदितिः (RV. X.72.4.) इति Sy.
१६. बोधती D. बोधयन्ती is suggested for बोधयति ॥ बोधं कुर्वाणा Sy.
१७. युवदन्ति P. युवतीन्तिः D. मिश्रयन्ती सर्वत्र । नित्यतरुणी वा Sy.
१८. ०षा D. १९. स्तुतिमती Sy.
२०. तृतीयार्थे पञ्चमी । पितृभिः पालकैर्देवैः सह Sy. २१. अग्नयत० P. यागगृहे Sy.
२२. भूयमानाः P. भूय D. आहूयमाना । यद्वा पितृभ्यः कर्मणां पालकेभ्यो यजमानेभ्यः इष्टप्रापणेन पालकेभ्यो वा तेषामर्थाय जोहुवाना Sy.
२३. VM. ignores आ ॥ सर्वतः Sy.

**अजिरासस्तदप ईयमाना आतस्थिवांसो अमृतस्य नाभिम् ।**
**अनन्तास उरवो विश्वतः सीं परि द्यावापृथिवी यन्ति पन्थाः ॥ २ ॥**

**अजिरासः ।** गमनस्वभावाः[1] । गमनकर्माणो[2] मनुष्यान् । अभिगच्छन्तः[3] । अमृतस्य[4] । नाभिमादित्यम्[5] । बहवः[6] । विस्तीर्णाः[7] । सर्वत एव । द्यावापृथिवी[8] । परियन्ति[9] । पतनशीला रश्मयः[10] ।

**उक्षा समुद्रो अरुषः सुपर्णः पूर्वस्य योनिं पितुरा विवेश ।**
**मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यन्तौ ॥ ३ ॥**

**उक्षा[11] ।** "विक्रियमाणो[12] वा एष एषां लोकानामन्तान् पाति" इति वाजसनेयकम्[13] । सेक्ता[14] । समुद्द्रवन्त्यस्मादापः[15][16] । आरोचमानः[17] सवने । आदित्यभ्यः प्रत्नस्य[18] । पितुः[19] । स्वोत्पत्तिस्थानम्[20] । उदयायाविशति[21][22] ।

---

१. गमनशीलाः । अजिः इरच् प्रत्ययान्तः । 'अजिरशिशिर०' (Uṇādi 1.53.) इत्यादिना निपातितः Sy.

२. तदेव प्रकाशनरूपं कर्म यस्य तत्तादृशमहः Sy.

३. कर्मणो मनुष्या भिग० P. ०च्छतः D. गच्छन्तः Sy.

४. सूर्यस्य उदकस्य वा Sy.

५. संनाहकं मण्डलम् । अन्तरिक्षम् (वा) Sy.

६. अपरिमिताः Sy.

७. व्याप्ताः Sy.

८. दिवं च पृथिवीं चान्तरिक्षं च Sy.

९. गच्छन्ति Sy.

१०. VM. ignores आतस्थिवांसः and सीम् ॥ आतिष्ठन्तः । सीमिति पूरणः Sy.

११. सौर्योऽयं तृचः Sy.

१२. SB. reads विक्रममाणः ।

१३. SB. 9. 2. 3. 18. p. 717.

१४. उदकस्य कामानां वा सेक्ता Sy. वृष्टिद्वारा सेक्ता Mah. य उदयकाल उक्षा सेचनः U.

१५. ०मुद्र० P., D. समुन्दनः । यद्वा सम्मोदन्तेऽस्मिन् देवा इति समुद्रः Sy. समुनत्ति क्लेदयति समुद्रः । उदयकालेऽवश्यायपतनेन क्लेदनकर्ता Mah. समुद्रः समुन्दनो भवति तस्मिन् कालेऽवश्याया अतितरां पतन्ति तदभिप्राय-मेतत् U.

१६. ०स्मदा० P.

१७. उदयकालेऽरुणवर्णः Mah. अरुणो वर्णतो निर्देशः U.

१८. अवयवलक्षणेयम् । पूर्वदिगवयवस्य Sy. य आदित्यः पूर्वस्य पूर्वदिशि स्थितस्य Mah. यश्च पूर्वस्य द्युलोकस्य U.

१९. वितुः D. पालकस्यान्तरिक्षस्य Sy. पितुर्द्युलोकस्य....द्यौः पितेत्युक्तेः पितुःशब्देन द्युलोक उदयसमये द्युलोकाज्जायमान उपलभ्यते सूर्य इति द्युलोकपूर्वभागः सूर्यस्य पितृभूत उच्यते Mah. पितुः पितृभूतस्य । ततो हि जायमान उपलभ्यत आदित्य इति पिता द्युलोकः U.

२०. उत्पादकमवयवम् Sy. योनिं स्थानम् Mah., U.

२१. उदयाय is omitted by D.

२२. आविष्टवान् Sy.

मध्ये[1]। दिवः[2]। निहितः[3]। पृश्निवर्णः[4]। मणिभिरिवेत्यौपमिकम्, सोऽयमुदितः। लोकान्[5]। विचक्रमे[6]। लोकस्य पूरापरौ[7] पर्यन्तौ[8] च। रक्षति[9] प्रकाशनः[10][11]।

चत्वार ईं बिभ्रति क्षेमयन्तो दश गर्भं चरसे धापयन्ते।
त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान्॥ ४॥

चत्वारः[12]। देवाः[13]। आदित्यम्[14]। बिभ्रति[15]। क्षेममस्य कुर्वन्तः[16]। दिशश्च। पुत्रभूतम्[17]। चरणाय[18]।

१. उदितमात्रो यश्च मध्ये द्युलोकस्य U.

२. अवस्थितः Mah., U.

३. पृश्निपर्णौ P. प्राश्नुत एनं वर्ण इति पृश्निरादित्यः Sy. पृश्निर्विचित्रवर्णो नानारश्मिसङ्कुलः Mah. समस्तरश्मिसङ्कुलो विचित्रः U.

४. सर्वत्र व्याप्तः। लुप्तोपमा वा। अश्मसदृशः Sy. अश्नुते व्याप्नोति नभ इत्यश्मा व्यापकः। एवंविधः सन् Mah. अश्मा अशनो व्यापकः स्यात् U.

५. अन्तरिक्षस्य Sy. यश्च विक्रममाणो रजसो रञ्जनस्य लोकत्रयस्य Mah. रञ्जनस्य लोकत्रयस्य U. ६. विक्रमते Sy. विक्रमते नभः Mah. चङ्क्रममाणः U.

७. पूर्वापरौ is suggested for पूरापरौ।

८. पूर्वापरभागौ Sy. अन्तौ वचनव्यत्ययः। अन्तान् पर्यन्तान् Mah. अन्तान् U.

९. जगद्रक्षार्थं क्रमत इत्यर्थः Sy. यो ह्यन्तान् पाति स मध्यं पात्येवेत्यर्थः Mah. गोपायति U.

१०. अथाश्मपक्षे व्याख्यानम्। अयं पृश्निर्विचित्रवर्णोऽश्मा पाषाणः पितुः कर्मपालकस्य पूर्वस्य पूर्वदिग्वर्तिन आहवनीयस्य योनिं कारणभूतमाग्नीध्रमाविवेश प्रविष्टवान्। यदाऽऽहवनीयमुद्धरेदाग्नीध्रादुद्धरेदित्याहवनीययोनित्वमाग्नीध्रस्याम्नातमन्यत्र। अयमश्मा दिवो मध्ये, आग्नीध्रस्थानीयस्यान्तरिक्षस्य मध्ये निहितः स्थापितः सन् रजसो रञ्जनीयस्य जगतोऽन्तावुत्पत्तिप्रलयरूपकोटिद्वयं विचक्रमे पाति रक्षति च परमेश्वररूपेण। कीदृशः उक्षा सेक्ता यागद्वारेण फलाभिवर्षक इत्यर्थः। समुद्रो बहुव्यापकत्वात्समुद्रसदृश इत्यर्थः। अरुणः पूर्वमन्त्रे सूर्यसाम्यात् अरुणसदृशः। सुपर्णः स्वर्गं प्रत्युद्गमनहेतुत्वात्पक्षिसदृशः Mah. ११. VM. ignores सुपर्णः॥ सुपर्णः शोभनं पर्णं पतनं गमनं यस्य स सुपर्णः Mah. सुपर्णः सुपतनः U. उक्षा समुद्रोऽ[1]अरुणः सुपर्ण इति। उक्षा ह्येष समुद्रोऽरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेशेति पूर्वस्य ह्येष एतं योनिं पितुराविशति मध्ये दिवो निहितः पृश्निरश्मेति मध्ये ह्येष दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्ताविति विक्रममाणो वाऽएष एषां लोकानामन्तान्याति। SB.9.2.3.18.p.717.

This stanza=yv. 17.60.

१२. or D. १३. ऋत्विजः Sy.

१४. एनमादित्यम् Sy.

१५. धारयन्ति हविर्भिः स्तुतिभिश्च Sy.

१६. क्षेममात्मन इच्छन्तः Sy.

१७. गर्भवन्मध्ये उत्पन्नमेनम् Sy.

१८. चरणाय उदयास्तमयव्यवहाराय Sy.

[1] ऋचि 'अरुषः' इति, परं यजुषि 'अरुणः' इति YV.p.328.

स्वरमं पाययन्ति[1] । निर्धायमानवर्षातपहिमाः[2] । परमाः[3] । अस्य[4] । रश्मयः । दिवः[5] । अन्तान् । सद्यः[6] । परिचरन्ति[7] ।

**इदं वपुर्निवचनं जनासश्चरन्ति यन्नद्यस्तस्थुरापः ।**
**द्वे यदीं बिभृतो मातुरन्ये इहेह जाते यम्या सबन्धू ॥ ५ ॥**

**इदं वपुः** । इदम्[8] । अस्य रूपम्[9] । आभिमुख्येन वक्तव्यम्[10] । हे जनाः[11] ! यदिदमस्मिन्[12] । आपः[13] । निष्ठन्ति[14] । निश्चरन्ति[15] च ताभ्यः । नद्यः[16] । यच्च । एनम्[17] । मातुः[18] । अन्य । बिभ्रतः[19] । अहोरात्रे[20] । अत्र चात्र च सर्वत्र[21] । प्रादुर्भूते[22] । मिथुनभूते[23] । समानबन्धने[24] ।

**वि तन्वते धियो अस्मा अपांसि वस्त्रा पुत्राय मातरो वयन्ति ।**
**उपप्रक्षे वृषणो मोदमाना दिवस्पथा वध्वो यन्त्यच्छ ॥ ६ ॥**

**वि तन्वते** । वितन्वते[25] । ध्यातारः[26] । अस्मै[27] । कर्माणि । तेजांसि[28] । पुत्राय[29] । दिशः[30] । वयन्ति[31] । उपपर्चनाय[32] । मनुष्यान्[33] । अभिगच्छन्ति[34] । मोदमानाः[35] । आदित्यादस्मात्[36] । मार्गेण[37] । वध्व[38] इत्यभिप्रायम् ।

---

१. गमयन्ति Sy.
२. ०तवहिमा D. त्रिप्रकाराः शीतोष्णवर्षभेदेन त्रिविधाः Sy.
३. उत्कृष्टाः Sy.
४. आदित्यस्य Sy.
५. दिवः D. अन्तरिक्षस्य Sy.
६. उदयानन्तरमेव Sy.
७. परितो गच्छन्ति Sy.
८. पुरतो दृश्यमानम् Sy.
९. शरीरं मण्डलम् Sy.
१०. स्तुत्यं भवतीति शेषः Sy.
११. हे जनाः ! ऋत्विजः ! Sy.
१२. मण्डलम् Sy.
१३. आविः P.
१४. अधितस्थुः । मण्डलाधीनत्वात्तासाम् Sy.
१५. प्रवहन्ति Sy.
१६. यन्मण्डलमुपजीव्य नद्यः Sy.
१७. एतदुक्तलक्षणं यन्मण्डलम् Sy.
१८. निर्मातुर्मातृस्थानीयादन्तरिक्षात् Sy.
१९. बिभृतः is suggested for बिभ्रतः ॥ धारयतः Sy.
२०. अहोरात्रे seems to be the explanation of द्वे ।
२१. पात्र D. इह चेह च Sy.
२२. सूर्ये जाते निष्पन्ने Sy.
२३. यम्ये नियमनीये युग्मभूते वा Sy.
२४. समानबले समानबन्धने । उभयोरप्येकः सूर्यो बन्धकोऽक्षो ययोस्तादृश्यौ Sy.
२५. विस्तारयन्ति यजमानाः Sy.
२६. स्तुतीः Sy.
२७. सूर्याय Sy.
२८. वस्त्राणि Sy.
२९. पुत्रस्थानीयाय Sy.
३०. निर्मात्र्य उषसो दिशो वा Sy.
३१. निष्पादयन्ति । वस्त्रसदृशानि तेजांसि निबिडानि सम्पादयन्तीत्यर्थः Sy.
३२. उपवर्च० D. उपपर्चने सम्पर्के सति Sy.
३३. It seems to be the explanation of वृषणः ॥ सेक्तुः सूर्यस्य Sy.
३४. अस्मदभिमुखं यन्ति गच्छन्ति प्रसरन्ति Sy.
३५. हृष्यन्तः Sy.
३६. आदित्या अस्यद० P.
३७. Sy. explains दिवः and पथा together as सूर्यसम्बन्धिना मार्गेण ।
३८. वधूस्थानीया रश्मयः Sy.

**तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।**
**अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ ७ ॥**

तदस्तु[1] । मित्रावरुणौ ! तत् । अग्ने ! किमित्याहास्माभिः शस्त्रम्[2] । इदं सूक्तम् । अस्मभ्यम् । शं[3] च । योश्च[4] । अस्तु[5] तदुभयं करोतु । वयमशीमहि[6] । उदकमध्य[7] स्थलम्[8] । अपि च । प्रतिष्ठाम्[9] । नमः[10] । आदित्याय[11] । महते । सर्वेषां[12] वासयित्रे[13] ।

V.48.

**कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयम् ।**
**आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी ॥ १ ॥**

**कदु[14] प्रियाय** ॥ प्रतिभानुः[15] ॥ कदा[16] । वयम्[17] । खलु[18] । प्रियाय[19] । तेजसे[20] । स्तुतिं[21] कुर्मः[22] ।

---

१. अत्र लिङ्गसिद्धा देवताः Sy.
२. शस्तम् is suggested for शस्त्रम् ॥ स्तुतम् Sy.　३. सुखाय Sy.
४. यो श्च D. दुःखानाममिश्रणाय Sy.
५. भवतु Sy.　६. प्राप्नुयाम Sy.
७. ०शीमध्युक० P.
८. स्थितिम् Sy.
९. तिष्ठं P. तिष्ठां D. स्थितेरविच्छित्तिं च Sy.
१०. नमस्करोमि Sy. ११. द्योतमानाय सूर्याय Sy.
१२. आश्रयाय विश्वस्य Sy.
१३. VM. explains तत् and अस्तु once only. Ms. D. puts the figure ॥४७॥ wrongly after कदु प्रियाय प्रतिभानुः RV. V. 48.1. to indicate the end of the forty-seventh hymn. No such number is given in P.
१४. 'कदु प्रियाय' इति पञ्चर्चं चतुर्थं सूक्तम् । प्रतिभानुर्नामात्रेय ऋषिः। जगती छन्दः । विश्वे देवा देवता । अत्रानुक्रमणिका 'कदु पञ्च प्रतिभानुर्जागतम्' (KSA. 27.48.p.20.) इति । आभिप्लविके पञ्चमेऽहनि वैश्वदेवशस्त्रे इदं सूक्तं निविद्धानम्। सूत्रितञ्च—'कदु प्रियायेति वैश्वदेवम्' (ĀSS.7.7.) इति Sy.
१५. प्रतिभानोरात्रेयस्येदमार्षम् Dur. प्रतिभानोरार्षम् SKN.
१६. अत्र वैद्युताग्निसंस्तवः Sy. अत्र पुनः प्रायेणाप एव स्तूयन्ते । 'आपो वै विश्वे देवाः सर्वा एव वा देवताः' इत्यनेन ब्राह्मणदर्शनेनापां विश्वदेवत्वमुपपद्यते Dur.
१७. कमिति सुखनाम (Ngh. 3.6.) अतश्चतुर्थ्या अदादेशः ।....सुखाय SKN., Dur.
१८. य P. यः D.
१९. लखु P., D. उ इति पूरणः Sy. उकारः पदपूरणः SKN.
२०. यया P. सर्वेषां प्रियभूताय । वृष्टिद्वारा हविरादिप्रयोजकत्वात् सर्वप्रियत्वमस्य प्रसिद्धम् । तादृशाय Sy.
२१. वैद्युताय । उत्तरवाक्ये अभ्रे अपो वितनोति इति वक्ष्यमाणत्वादिदं लभ्यते । कीदृशाय ? Sy. धाम्नः स्थानाय स्वर्गाय, सुखं प्रियं च स्वर्गाख्यं स्थानं प्राप्तुमित्यर्थः SKN. स्थानाय वैश्वदेवाय, तत्प्राप्त्यर्थम् Dur.
२२. कुर्व P., D. स्तवाम Sy. तानेव च विश्वान्देवानपो मनामहे, त एव ह्युपास्यमानास्तत् स्थानं प्रापयितुं समर्था इत्यर्थं मनामहे Dur. याच्ञाकर्माऽयं याचामहे । कान् ? विश्वेदेवान् । कुत एतत् ? सूक्तस्य वैश्वदेवत्वात् SKN.

स्वबलाय[1] । स्वकीर्त्यै[2] । महत्यै[3] । सर्वतो मातव्यस्य[4] । अन्तरिक्षस्य[5] । यत्[6] तेजः ऐन्द्रं विद्युद्रूपेण[7] परिणतम् "विद्युदेवेन्द्रः"[8] इति वाजसनेयकम् । उदकानि[9] । प्रार्थयन्ती[10] । कर्मवती माध्यमिका वाक्[11] । अभ्रे[12] । विस्तारयति[13] ।[14]

---

१. स्वभूतबलाय Sy. धाम्ने स्वबलायेत्यर्थः । यत्र स्वमेव बलं भवति न तत्र परकीयं बलमाशास्यते यथेह लोके Dur. कीदृशाय धाम्ने ? उच्यते, स्वक्षत्राय, क्षत्रं धनं स्वयमेव यस्मिन्नाश्रितं धनम् SKN.

२. स्वभूतान्नाय । सर्वमप्यन्नं ह्यस्य स्वम् Sy. यत्र स्वमहिमकृतमेव यशो भवति न सांयौगिकद्रव्यकृतम् Dur.
स्वयमेव च यशः कीर्तिलक्षणं यस्मिंस्तस्मै SKN.

३. P. reads स्वमहरिम कीर्तीः ये for स्वकीर्त्यै । महत्यै ॥ D. reads स्वमहरिमकीर्त्याय ये for स्वकीर्त्यै । महत्यै ॥ महते पूज्याय Sy. महते धाम्ने । तत्प्राप्त्यर्थमेव ता एवापो वयं मनामहे मत्वा चोपास्मह इत्यभिप्रायः Dur.

४. माताप्यस्य P., D. समन्तान्मातव्यस्य Sy. मेना माध्यमिका वाक् सा यत्र तस्य Dur. मेन्यं मातव्यम्, अतिमहत्त्वात् । सर्वदेवाभिमुख्येन मातव्यं न कदाचिदपि मितं निर्मातृतया जगतः SKN.

५. अन्तरिक्षस्य अपरिमितमपि नभ इयदिति सर्वैर्मीयते । सम्बन्धिनि Sy.
रजो लोकः, अन्तरिक्षलोक इत्यर्थः । तस्य Dur.
रजोऽन्तरिक्षलोकस्तस्य रजसः, षष्ठीश्रुतेः सम्बन्धिनि SKN.

६. यत् । उत्तरत्र स्त्रीलिङ्गनिर्देशाद् या इति विपरिणमयितव्यम् । याग्नेयी शक्तिः । यस्य सम्बन्धिनी माध्यमिकी वागिति वा योज्यम् Sy. यो मेघः Dur. यदुक्तविशेषणं स्थानम् SKN.

७. विद्यान् रूपेण P.
विद्याद्रूपेण D.

८. Unt.

९. वृष्टिलक्षणानि Sy. तत्र या आपोऽवस्थितास्ता अपः Dur. उदकादीनि SKN.

१०. आच्छादयन्ती सेव्यमाना वा Sy. सम्भजमाना Dur. सम्भजमाना वृष्टिं ददतीत्यर्थः SKN.

११. प्रज्ञावती सती Sy. प्रज्ञावती माध्यमिका वाक् Dur.
माया प्रज्ञा प्रज्ञावती । का पुनरसौ ? सामर्थ्यान्माध्यमिका वाक् SKN.

१२. मेघे Sy. अभ्र एव ह्यधि आपो वर्तन्त इत्याङध्यर्थ इत्युपपद्यते Dur. रजस्सम्बन्धिनोऽभ्रस्याधि उपरि स्थितेति वाक्यशेषः SKN.
मायेति प्रज्ञानाम Ngh. 3.9.

१३. विस्तृणाति सर्वभावेन ।....ता अपो वयमेवमादिगुणयुक्तास्तासामेव सर्वगतस्य धाम्नः प्राप्त्यर्थं मनामहे याचामहे ।....अथवैवमन्यथाऽस्य मन्त्रस्यार्थः स्यात्—कद्रु प्रियाय सुखाय प्रियाय चैतस्मै धाम्ने स्थानाय यत्र वयं वर्तामहे । कथं नामैतत् स्थानं सुखं च प्रियं च स्वक्षत्रञ्च स्वमहत्त्वञ्च स्यादित्येवमर्थं विश्वान् देवान् मनामहे । 'मदेमहि मनामहे' इति याच्ञाकर्मसु पठितम् (Ngh. 3.19.) । कतमाः पुनरपो याचामह इति ? उच्यते, आमेन्यस्य रजस आभिमुख्येन मननीयस्य रजसोऽन्तरिक्षलोकस्य यदभ्रमुपरि वर्तते तस्मिन्नभ्रे, अपो वृणाना सम्भजमाना मायिनी माध्यमिका वाग् वितनोति वृष्टिभावेन ता मन्यामहे याचामहे Dur.
तत् प्राप्तिस्थितिहेतुभूतसम्पादनद्वारेण वितनोति विस्तारयति SKN.

१४. VM. ignores आ ॥ आ अधि, मेघस्योपरि Sy. आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः । अथाप्यध्यर्थे दृश्यते 'अभ्र आँ अपः' अभ्रा आ अपोऽभ्रे ध्यय इति । (अभ्रे आ अपोऽपोऽभ्रेऽधीति) । N. 5.5, SKN. II.316.

**ता अ॑त्नत व॒युनं॑ वी॒रव॑क्षणं समा॒न्या वृ॒तया॒ विश्व॒मा रजः॑ ।**
**अपो॑ अपा॑ची॒रप॑रा॒ अपे॑जते॒ प्र पूर्वा॑भिस्तिरते देव॒युर्जनः॑ ॥ २ ॥**

[1] ताः । उषसः । आतन्वन्ति [2] । ज्ञानसाधनं [3] तेजः । येन कर्मसूद्युक्तो [4] वीरो जन उह्यते [5] । समान्या [6] । छादयित्र्या [7] दीप्त्या । सर्वम् [8] । लोकम् [9] । आतन्वन्ति । तत्र [10] देवकामः । जनः । पूर्वा [11] उषसः । अपगमयन्ति [12] । पराङ्मुखीः [13] । वर्धते [14] । चाग्राऽऽगताभिः [15] कर्मयोग्याभिः, उषस्यागतायां कर्मपर आसीदिति [16] ।

**आ ग्राव॑भिरह॒न्ये॑भिर॒क्तुभि॒र्वरि॑ष्ठं॒ वज्र॒मा जि॑घर्ति मा॒यिनि॑ ।**
**श॒तं वा॒ यस्य॑ प्र॒चर॒न्त्स्वे दमे॑ संव॒र्तय॑न्तो॒ वि च॑ वर्तय॒न्नहा॑ ॥ ३ ॥**

[17] [18] आ ग्रावभिः । अभिषवग्रावभिः [19] । अह्नि भवैः [20] । सोमात्तैः [21] ? प्रीयमाण इन्द्रः । वरिष्ठम् [22] । वज्रम् । अभिमुखं [23] पातयति [23] । मायायुक्ते [24] शत्रौ । शतम् [25] । अपि [26] यजमानाः । यस्य [27] । स्वे स्वे [28] । दमे [29] । प्रचरन्ति सत्रेषु [30] । अहानि [31] । सङ्क्रमयन्तः [32], एकाहानामनुष्ठानाद् । वि [33] । च । वर्तयन् [34] [35] ।

---

१. इयमुषस्या Sy.
२. Sy. explains आ as अपि and अत्नत as वितन्वन्ति ।
३. प्रज्ञानम् Sy.
४. कर्मद्यु० P.
५. ऊह्यते P. वीरैर्ऋत्विग्भिर्वहनीयम् । यद्वा वक्षणाः कार्यवोढारो येन प्रेर्यन्ते तत्तादृशम् Sy.
६. न्यः D. एकरूपया Sy.
७. आवरकया दीप्त्या Sy.
८. सर्व P. ९. जगदत्नत Sy.
१०. एवं सति Sy.
११. अन्या आगामिनीरुषसः Sy.
१२. अवग० P. अपचालयति Sy.
१३. परम्मुखी P. अपाञ्चनाः प्रतिनिवृत्तमुखीः Sy.
१४. प्रपूर्वस्तिरतिर्वर्धनार्थः, वर्धयति स्वमनीषाम्, वर्धते वा स्वयम् Sy.
१५. पूर्वाभिस्ताभिः Sy.
१६. VM. ignores अपो ॥ अपरोऽपशब्दः पूरणः Sy. १७. अत्र पूर्वार्धे इन्द्र उच्यते, उत्तरार्धे इन्द्रात्मा सूर्यः Sy.
१८. अ D.
१९. साध्ये साधनशब्दः । ग्रावसाध्यैरभिषवैर्निमित्तभूतैः । आगत्यात्र सोमी सन् Sy.
२०. ०ह्निर्भ० D. अहनि सम्पादितैः Sy.
२१. सोमात्रैः is suggested for सोमात्तैः ॥ अक्तुभिः रात्रिभिः । तत्र निष्पन्नैरित्यर्थः । तथाविधैः Sy. २२. उरुतरम् Sy.
२३. सर्वतः जिघर्ति दीपयति Sy.
२४. वृत्रे निमित्ते सति Sy.
२५. गतम् P. शतसंख्याका रश्मयः Sy.
२६. किञ्च वाशब्दश्चार्थे Sy.
२७. इन्द्रात्मकस्यादित्यस्य Sy.
२८. स्वकीये Sy.
२९. मदे P. गृह आकाशे Sy.
३०. किं कुर्वन्तः ? संवर्तयन्तः Sy.
३१. दिवसान् Sy.
३२. संवर्तयन्तः प्राणिनो नाशयन्तः । यद्वा अहा अहानि दिवसान् सम्यक् प्रवर्तयन्तः Sy.
३३. ०काहानाह्नि P.
३४. ०यः P. ०य D. अहानि निवर्तयन्ति गतान्येव पुनः प्रापयन्ति च । तपनपरिस्पन्दाधीनत्वात् प्राणिनामायुःक्षयस्याहोरात्रादिव्यवहारस्य Sy.
३५. VM. ignores आ ॥ आ हूयते इति शेषः Sy.

**तामस्य रीतिं परशोरिव प्रत्यनीकमख्यं भुजे अस्य वर्पसः।
सचा यदि पितुमन्तमिव क्षयं रत्नं दधाति भरहूतये विशे ॥ ४ ॥**

**तामस्य**[1]। तत्[2]। अस्य युद्धे[3]। गमनमार्गम्[4]। अरण्ये परशोरिव मार्गम्[5]। प्रतिपश्यामि। तथानीकञ्च[6]। अस्य मरुल्लक्षणम्[7]। रक्षणायागतम्[8]। प्रतिपश्यामि[9]। शत्रून् आच्छादयतः[10]। सह[11]। यदि[12]। अन्नवन्तमिव। गृहम्[13]। रत्नम्[14]। प्रयच्छति[15]। या विधिन्द्रं ?[16] सङ्ग्रामार्थमाह्वयति[17] तस्यै। विश[18] यदि साहाय्यं कर्तुमागच्छति शत्रून्[19] विनाशयतीति।

**स जिह्वया चतुरनीक ऋञ्जते चारु वसानो वरुणो यतन्नरिम्।
न तस्य विद्म पुरुषत्वता वयं यतो भगः सविता दाति वार्यम् ॥ ५ ॥**

**स जिह्वया।** सः[20]। वरुणः[21]। काकुदेन जलं रक्षता। चतुरनीकस्तस्य[22] रश्मयोऽनीकानि[23] चतसृष्वपि दिक्षु स्थितानि। जगत्[24] प्रसाधयति[25]। चारु[26]। उदकमाच्छादयन्[27]। हिंसन्[28]। शत्रून्[29]। न। तमुपायम्[30]। वयम्। पौरुषेण[31]। जानीमः। येनोपायेन[32] रत्नप्रदौ[33]। भगः[34]। सविता च[35]। रत्नम्[36]। प्रददौ[37] भगः सविता च रत्नं प्रयच्छतः।[38]

---

१. इयमाग्नेयी Sy.
२. तम् P. तां प्रसिद्धाम् Sy.
३. अग्नेः Sy.
४. स्वभावं गतिं वा Sy.
५. परशोः प्रतिनिधिमिव पश्यामि। परशुर्यथा स्वस्वामिनोऽभिमतं साधयति तद्वदित्यर्थः Sy.
६. रश्मिसमूहम् Sy.
७. आदित्यस्य Sy.
८. लक्ष० P. भुजे भोगाय Sy.
९. कथयाम्यहम् Sy.
१०. ०त P. रूपवतः Sy.
११. अस्मत्सहायः सन् Sy.
१२. वदि P. यस्मात् स च देवः Sy.
१३. निवासमिव Sy.
१४. तत्न P. रमणीयं धनम् Sy.
१५. धारयति। उभयमपि ददातीत्यर्थः Sy.
१६. विडिन्द्रं is suggested for विधिन्द्रं।
१७. सङ्ग्रामे यज्ञे वाह्वानयुक्ताय Sy.
१८. यजमानाय Sy.
१९. ०न D.
२०. अग्निः Sy.
२१. तमोवारकः सन् Sy.
२२. चतुर्दिक्षु प्रसृतज्वालः सन् Sy.
२३. ०नीतका० P.
२४. जनत् P.
२५. गच्छति घृतादिकम्। यद्वा जिह्वया चतुरनीकः सन् ऋञ्जते अलङ्करोति स्वात्मानम् Sy.
२६. रमणीयं तेजः Sy.
२७. ०रुद० P.
२८. उद्धरन् Sy.
२९. अमित्रम् Sy.
३०. तस्य, तमित्यर्थः Sy.
३१. पौर्षेण P. पुरुषत्वेन कामानां पूरकत्वेन वा युक्तम्। अपरो भावप्रत्ययः पूरणः Sy.
३२. यतोऽयम् Sy.
३३. येनोवायौ P.
३४. अयं भगः महान् भजनीयः Sy.
३५. प्रेरको देवः Sy.
३६. रत्न P. वरणीयं धनम् Sy.
३७. प्रदौ P., D. यच्छति Sy.
३८. Ms. D. puts the figure ॥४८॥ wrongly after देवं वः प्रतिप्रभः (RV.V. 49.1.) to indicate the end of the forty-eighth hymn. No such number is given in P.

V. 49.

दे॒वं वो॑ अ॒द्य स॑वि॒तार॒मेषे॒ भगं॑ च॒ रत्नं॑ वि॒भज॑न्तमा॒योः ।
आ वां॑ नरा पुरुभुजा ववृत्यां दि॒वेदि॑वे चिदश्विना सखी॒यन् ॥ १ ॥

देवं वः[1] ॥ प्रतिप्रभः ॥ देवम्[2] । युष्माकम्[3] । अद्य[4] । सवितारम्[5] । आगमयामि[6] । तथा भगम्[7] । च देवम् । मनुष्यस्य[8] । रत्नम्[9] । विभजन्तम्[10] [11] ।

प्रति॑ प्रया॒णमसु॑रस्य वि॒द्वान्त्सू॒क्तैर्दे॒वं स॑वि॒तारं॑ दुवस्य ।
उप॑ ब्रुवीत॒ नम॑सा विजा॒नञ्ज्ये॒ष्ठं॑ च॒ रत्नं॑ वि॒भज॑न्तमा॒योः ॥ २ ॥

[प्रति प्रयाणम्][12]

---

१. 'देवं वः' इति पञ्चर्चं पञ्चमं सूक्तमात्रेयस्य प्रतिप्रभस्यार्षम् । त्रैष्टुभं वैश्वदेवम् । 'देवं वः प्रतिप्रभोऽन्त्या तृणपाणिः' (KSA. 27. 49.p.20.) इत्यनुक्रमणिका । विनियोगो लैङ्गिकः Sy.

२. द्योतमानम् Sy.

३. त्वामित्यर्थः । यद्वा होतुरिदं वाक्यम् । वो यजमानेभ्यो युष्मभ्यमर्थाय Sy.

४. इदानीम् Sy.

५. सर्वस्याभ्यनुज्ञातारम् Sy.

६. ०मिया० D.
उपगच्छामि Sy.

७. भजनीयं देवम् Sy.

८. मनुष्यस्य यजमानस्य । यद्वा चतुर्थ्यर्थे षष्ठी Sy.

९. रमणीयं हविः Sy.

१०. 'भगो वां विभजतु' इति हि भगस्य विभजनं प्रसिद्धम् । 'रायो वि॑भक्ता स॒म्भर॑श्च॒ वस्वः॑' (RV.IV.17.11.) 'भगो॑ वि॒भ॒क्ता शव॑सा' (RV. V.46.5.) इति च श्रुतिः । यद्वा चतुर्थ्यर्थे षष्ठी । यजमानार्थं रत्नं रमणीयं धनं विभजन्तम् Sy.

११. VM. ignores the second hemistich of this stanza ॥ हे नरा नेतारौ ! हे पुरुभुजा ! पुरु भुञ्जाते इति पुरुभुजौ । हे अश्विनौ ! वां युवाम् । दिवेदिवे प्रतिदिनम् । आववृत्यामावर्तयाम्यस्मदभिमुखम् । सखीयन् युवयोः सखित्वमिच्छन् । चिदिति पूरणः Sy.

१२. The *pratīka* is supplied by the Editor. The stanza is not explained in P., D.
असुरस्य शत्रूणां निरसितुः सवितुः प्रति प्रयाणं प्रत्यागतिम् । विद्वान् जानन् सूक्तैः सवितारं देवम् । दुवस्य परिचर हे अन्तरात्मन् ! किं च । आयोः मनुष्याय ज्येष्ठं रत्नं धनम् । विभजन्तम् । गमयन्तमित्यर्थः । नमसा नमस्कारेण हविषा वा विजानन् । विशेषेण भावयन्नित्यर्थः । यद्वान्तर्णीतण्यर्थोऽयम् । ज्ञापयन् । उप ब्रुवीत स्तौतु भवान् Sy.

अदत्रया दयते वार्याणि पूषा भगो अदितिर्वस्त उस्रः ।
इन्द्रो विष्णुर्वरुणो मित्रो अग्निरहानि भद्रा जनयन्त दस्माः ॥ ३ ॥

अदत्रया[1]। जिह्वया[2]। प्रयच्छति[3]। धनानि[4]। पूषा[5]। भगः[6]। अदितिश्च[7]। वस्ते[8] तेजांसि[9]। उत्सरण-शील[10]ः[11]। शिष्टं[12] स्पष्टम् ।

तन्नो अनर्वा सविता वरूथं तत्सिन्धव इषयन्तो अनु ग्मन् ।
उप यद्वोचे अध्वरस्य होता रायः स्याम पतयो वाजरत्नाः ॥ ४ ॥

तं[13] नः[14]। नम्। अस्मभ्यम्। शत्रुः[15]। सविता[16]। वरणीयम्[17]। अनुगच्छतु[18]। नद्यश्च[19]। गच्छन्तः[20]। यत्[21]। अरस्य[22]। होतास्मदर्थम्[23]। उपब्रवीति[24]। किं तत्? धनस्य[25]। पतयो[26] वयम्[27]। स्याम[28]। रमणीयान्नाः[29][30][31]।

---

१. त्ररयाः D.

२. अयमग्निः Sy.

३. ०ह्वाया P. अदत्रया अदनीयानि । अदेरौणादिकोऽत्रप्रत्ययः । 'सुपां सुलुक्०' इति याजादेशः । अथवात्तीत्यदत्रा जिह्वा तया Sy.

४. प्र याश्छ यच्छति P. प्रयाच्छ यच्छति D. दयतिरनेककर्मात्र दहने वर्तते । दहतीत्यर्थः सामर्थ्यादग्निरिति गम्यते । यद्वा अदनीयानि वरणीयान्यन्नानि दयते ददाति यजमानाय 'दय दानगतिहिंसाबलाख्यानेषु' Sy.

५. वरणीयानि काष्ठानि Sy.

६. पोषकः Sy.

७. भजनीयः Sy.

८. अखण्डनीयः । यद्वा पूषादयस्त्रयोऽपि प्रत्येकमदनीयानि वार्याणि चान्नानि दयते Sy.

९. ०ति च वस्तवः P. आच्छादयति सामर्थ्यात्तेजांसि Sy.

१०. जांसि D.

११. सूर्यः Sy.

१२. By शिष्टं VM. means the second hemistich of the stanza.
इन्द्रादयः पञ्चापि देवाः । दस्माः दर्शनीयाः । अहानि सर्वाण्यागन्तॄणि । भद्रा शोभनानि । जनयन्त जनयन्ति । दिवसानां यागदानादिविशिष्टत्वमेव भद्रत्वम् Sy.

१३. न P.

१४. तत् P.
तत् प्रसिद्धम् Sy.

१५. अप्रत्यृतः केनाप्यतिरस्कृतः Sy.

१६. देवः प्रयच्छत्विति शेषः Sy.

१७. अस्मदभिमतं धनम् Sy.

१८. अनुसृत्य गच्छन्तु । धनं दातुं गच्छन्त्वित्यर्थः Sy.

१९. स्यन्दनशीलाः Sy.

२०. गच्छन्त्यो नद्यः Sy.

२१. यस्मात् Sy.

२२. अध्वरस्य is suggested for अरस्य ॥
यागस्य Sy.

२३. होमनिष्पादकोऽहम् Sy.

२४. होस्म० P.

२५. उपेत्य ब्रवीमि तस्मात्तत्प्रयच्छन्त्विति शेषः Sy.

२६. बहुविधस्य Sy.

२७. स्वामिनः Sy.

२८. अत्रयः Sy.

२९. वयस्योद P. भवेम Sy.

३०. अन्नेन बलेन वा रमणीयाः । अथवा यद्यस्माद्वोचे स्तौमि तस्मात् सविता नो वरूथमागच्छतु । तस्मान्नद्यश्च नो वरूथं यज्ञमनु ग्मन् अनुगच्छन्त्विति वा योज्यम् Sy.

३१. VM. ignores तत् ।

**प्र ये वसुभ्य ईवदा नमो दुर्ये मित्रे वरुणे सूक्तवाचः ।**
**अवैत्वभ्वं कृणुता वरीयो दिवस्पृथिव्योरवसा मदेम ॥ ५ ॥**

**प्र ये ।** प्रयच्छन्ति[१] । ये[२] । वसुभ्यः[३] । गमनवत्[७] । अन्नं पशुम्[४] । ये च मित्रावरुणयोः[५] । सूक्तं वदन्ति[६] ते वयम् । द्यावापृथिव्योः । रक्षणे । माद्येम[७] । तेषामस्माकमपगच्छतु[८] । महदन्धकारम्[९] । कुरुत[१०] च । विस्तृतं[११] तेजो हे देवाः![१२]

## V. 50.

**विश्वो देवस्य नेतुर्मर्तो वुरीत सुख्यम् ।**
**विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे ॥ १ ॥**

**विश्वः**[१३] ॥ स्वस्त्यात्रेयः[१४] ॥ विश्वः[१५] । मनुष्यः[१६] । देवस्य[१७] । नेतुः[१८] । सख्यम्[१९] । वृणीते[२०] । विश्वश्चैनम्[१५] । धनार्थम्[२१] । इच्छति[२२] । विश्वश्चान्नम्[२३] । वृणीते[२४] । अस्मात् त्वं च सर्वं[२५] विश्वस्मै पुष्यसि[२६] सवितः ! इति ।

---

१. प्रादुः Sy. २. यजमानाः Sy.
३. यज्ञनिवासेभ्यो देवेभ्यः Sy.
४. पश्वात्मकम् Sy. ५. मित्रे देवे वरुणे च Sy.
६. वदति P. सूक्तवचसो भवन्ति तानस्मान् Sy.
७. हृष्येम Sy. ८. अवगच्छतु Sy.
९. महद्धनम् Sy. १०. कुरुत चैतेभ्यः Sy.
११. उरुतरं सुखम् Sy.
१२. VM. ignores आ ।
Ms. D. puts the figure ॥४९॥ here to indicate the end of the forty-ninth hymn. No such number is given in P.
१३. 'विश्वो देवस्य' इति पञ्चर्चं षष्ठं सूक्तं स्वस्त्यात्रेयमुनेरार्षं वैश्वदेवम् । पञ्चमी पङ्क्तिः, आद्याश्चतस्रोऽनुष्टुभः । तदुक्तमनुक्रमण्याम्—'विश्वः स्वस्त्यात्रेयः पङ्क्त्यन्तम्' (KSA. 27.50.p.20.) इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे विश्वो देवस्येति प्रतिपत्तृचस्याद्यः । सूत्रितञ्च—'विश्वो देवस्य नेतुरित्येका' (ĀSS.7.6.) इति । आभिप्लविकेषु द्वितीयचतुर्थषष्ठेष्वहःस्वेषैव वैश्वदेवस्य शस्त्रस्य प्रतिपत् । 'युग्मेष्वेवमभिप्लवे' (ĀSS.7.6.) इति सूत्रितत्वात् Sy.
१४. ०यं P. D.
१५. विश्वश्वन्नम P. सर्वः Sy., Mah., U.
१६. ०स्मा० P. मर्तः Sy. जनः U.
१७. सवितुरित्यर्थः Sy. दानादिगुणयुक्तस्य सवितुः Mah. दानादिगुणयुक्तस्य U.
१८. फलप्रापकस्य Mah. प्रणेतुः सवितुः U.
१९. सखिभावम् Mah. सखिताभावम् U.
२०. वृणीत Sy. वृणुते प्रार्थयते । 'वृञ् वरणे' Mah.
२१. धनस्य Sy. धनाय Mah., U.
२२. इषुध्यति । पञ्चमलकारः । ईशीत Sy. सवितारं प्रार्थयते । इषुध्यतिर्याच्ञाकर्मसु पठितः (Ngh.3.19.)Mah. प्रार्थयते सवितारम् U.
२३. तस्यानुग्रहात् सर्वो जनो धनम् Sy. द्युम्नं द्योततेः यशो वान्नं वा N.5.5.
२४. प्रार्थयते Mah. U.
२५. P. adds तत् before सर्वं ।
२६. पुष्ट्यै पर्याप्तं धनम् Sy. पोषाय स्वप्रजापालनाय । पुषेस्तुमर्थेऽसेप्रत्ययः Mah. पोषाय स्थितये U.
स जुहोति । विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति । SB. 3.1.4.18. p. 232. The stanza=YV.4.8.

ते ते॑ देव नेतु॒र्ये चे॒माँ अ॑नु॒शसे॑ । ते रा॒या ते ह्या॒३पृचे॒ सचे॑महि सच॒थ्यैः॑ ॥ २ ॥

ते ते । तव[1] स्वभूताः । देव ! नेतः[2] ! ये । च[3] । इमान्[4] । अनुशंसितुम्[5] आशंसितुमुपतिष्ठन्ति[6] । त[7] उभये वयम् । धनेन सम्पृक्ता[8] भवामः । ते । हि[9] । आपर्चनाय योग्याः[10] । तथा[11] सति सवनीयैर्धनैः[12] । संसृष्टा भवामेति[13] ।[14]

अतो॑ न॒ आ नॄनति॑थी॒नतः॒ पत्नी॑र्दशस्यत ।
आ॒रे विश्वं॑ पथे॒ष्ठां द्वि॒षो यु॑योतु॒ यूयु॑विः ॥ ३ ॥

अतो नः । अस्माद्[15] धनात् । अस्माकम्[16] । दासान्[17] । अतिथीन्[18] । पत्नीश्च[19] । आभिमुख्येन प्रयच्छत[20] देवाः । धनसम्भावेति सर्वत एव भवन्ति ? दूरे । विश्वम्[21] । मार्गवर्तिनं[22] स्तेनम्[23] । शत्रूंश्च[24] । पृथक् करोतु[25] । पृथक्करणशीलः[26] सविता पूषा वा ।[27]

---

१. त P.

२. नेः P. हे नेतः ! Sy.

३. अन्ये Sy.

४. विभक्तिव्यत्ययः । इमे होत्रादयः Sy.

५. शंसितुं प्रभवन्ति तेऽपि त्वदीयाः । यद्वा इमानन्यानिन्द्रादीननुशसे क्रमेण शंसितुं प्रभवन्ति । एकैव वा महानात्मा देवता स सूर्यः स हि सर्वभूतात्मा, इत्युक्तत्वादितरासां देवतानां तदन्तर्भावादिति भावः । न केवलं त्वच्छंसका एवेत्यर्थः Sy.

६. ०शासि० P., D.

७. ति P.

८. संपृणक्ता P. सचेमहीति सम्बन्धः Sy.

९. खलु Sy.

१०. आपर्चनीयाः कृत्यार्थे केन्प्रत्ययः 'कृन्मेजन्तः' इत्यव्ययत्वाद्विभक्तेरदर्शनम् Sy.

११. तथा तथा P. तथास्तथा D.

१२. समनी० P. सर्वैः कामैः Sy.

१३. सङ्गच्छेमहि Sy.

१४. VM. ignores ते ॥ ते वयं यजमानाः Sy.

१५. अस्मान् P. अस्मिन् यज्ञे । सार्वविभक्तिकस्तसिः Sy.

१६. अस्माकमृत्विजाम् Sy.

१७. नेतॄन् Sy.

१८. तद्वत् पूज्यान् देवान् Sy.

१९. देवानां पत्नीरपि दशस्यत हविष्प्रदानादिना, यद्वा, नः अस्मभ्यं नॄन् पुत्रभृत्यादीनतिथीन् पत्नीश्चैतत्त्रयमत्र दशस्यत । हे देवाः ! प्रयच्छत Sy.

२०. सर्वतः परिचरत Sy.

२१. सर्वम् Sy.

२२. ०र्गावि० P. मार्गे वर्तमानं वैरिणम् Sy.

२३. Omitted by P.

२४. शत्रुश्च P.
अन्यानपि द्विषो द्वेष्टॄन् Sy.

२५. पृथक् करोतु देवसङ्घः सविता वा Sy.

२६. सर्वस्यामिश्रयिता पृथक्कर्ता Sy.

२७. VM. explains अतः once only.

**यत्र वह्निरभिहितो दुद्रवद्द्रोण्यः पशुः ।**
**नृमणा वीरपस्त्योऽर्णा धीरेव सनिता ॥ ४ ॥**

**यत्र वह्निः ।** यत्र[1] । अग्निः[2] । अध्वर्युभिरभिहितः[3] । द्रवत्युत्तरवेदिम्[4] । द्रोण्यः[5] । पशुरित्यौपमिकम्, द्रोणदुग्धा धेनुरिव ह्यग्निस्तत्र । नृषु[6] मनोऽस्य[7] सवितुः । वीरयुक्तो गृहोऽस्य[8] । उदकानि[9] । दाता[10] भवति[11] । यथा धीरा स्त्री[12] स्तन्यं कुमाराय[13] प्रयच्छति ।

**एष ते देव नेता रथस्पतिः शं रयिः ।**
**शं राये शं स्वस्तय इषःस्तुतो मनामहे देवस्तुतो मनामहे ॥ ५ ॥**

**एषः ।** एषः । ते[14] । देव[15] ! नेतः । सवितः । स्वामी रथानाम्[16] । रयिः[17] । सुखकृत्[18] भवति । तं[19] सुखस्य कर्तारम्[20] । धनार्थम्[21] । भजामहे[22] । तम् । अनाशाय[23] । इच्छन्तः[24] । देवान् स्तुवन्तः[25][26] ।

---

१. यस्मिन् यज्ञे Sy.

२. यज्ञस्य वोढा Sy.

३. यूपं प्रापितः Sy.

४. दुद्रव P. गच्छति यूपं प्रति Sy.

५. यूपार्हः Sy.

६. सुषु P.

७. मनेस्य P.; D.
यजमानमनाः सविता Sy.

८. ०क्तगृहस्य P. ०क्तागृहस्य D. वीरा ऋत्विग्यजमानाः पुत्रभृत्यादयो वा तद्वत् पस्त्यं गृहं यस्य स तादृशः । प्रेरितगृहो वा । पुत्राद्युपेतगृहप्रद इत्यर्थः Sy.

९. अरणकुशलः Sy.

१०. सम्भक्ता दाता Sy.

११. भवन्ति P. भवन्ती D.

१२. Omitted by P. योषिदिव । यद्वा अर्णानि हवींष्यभि लक्ष्य सनिता भवति Sy.

१३. कामाराय P.

१४. तव Sy.

१५. सवितः ! Sy.

१६. सर्वस्य पालकः Sy.

१७. दातव्यधनवान्, मत्वर्थो लुप्यते Sy.

१८. रयि सुखकृध P. शं करोत्विति शेषः Sy.

१९. शम् is suggested for तम् ।

२०. सुखाय च Sy.

२१. धनस्य । यद्वा धनाय Sy.

२२. स्तुमः Sy.

२३. अविनाशाय Sy.

२४. एषणीयस्य सवितुः स्तोतारो वयम् Sy.

२५. इच्छतो देवा स्तुवन्तं P. देवानां देवस्य वा सवितुः स्तोतारः Sy.

२६. VM. explains मनामहे once only. Ms. D. puts the figure ॥५०॥ here to indicate the end of the fiftieth hymn. No such number is given in P.

V.51.

**अग्ने॑ सु॒तस्य॑ पी॒तये॒ विश्वै॒रूमे॑भि॒रा ग॑हि । दे॒वेभि॑र्ह॒व्यदा॑तये ॥ १ ॥**

अग्ने[1] । अग्ने[2] ! सोमस्य[3] । पानाय[3] । विश्वैः[4] । पित्रिभिः[5] । देवैः[6] । आगच्छ । "य॒जमानो॒ वै ह॒व्यदा॑तिः"[7][8] इति ब्राह्मणम् ।

**ऋ॒तधी॑तय॒ आ ग॑त॒ सत्य॑धर्माणो अध्व॒रम् । अग्नेः॒ पिब॑त जि॒ह्वया॑ ॥ २ ॥**

ऋतधीतयः । हे सत्यबुद्धयः[9] ! सत्यकर्माणः[10] । आगच्छत । यज्ञम्[11] । अग्ने[12] ! जिह्वया । पिबत सोमम्[13] ।

**विप्रे॑भिर्विप्र सन्त्य प्रात॒र्याव॑भि॒रा ग॑हि । दे॒वेभिः॒ सोम॑पीतये ॥ ३ ॥**

विप्रेभिः । मेधाविभिः[14] । प्रजननशील[15] ! प्रातर्यविभिः[16] । देवैः[17] । सोमपानाय । आगच्छ[18] ।

**अ॒यं सोम॑श्च॒मू सु॒तोऽम॑त्रे॒ परि॑ षिच्यते । प्रि॒य इन्द्रा॑य वा॒यवे॑ ॥ ४ ॥**

अयं सोमः । अयम्[19] । सोमः । अधिषवणफलकयोः[20] । सुतः[21] । पात्रे[22] । परिसिच्यते[23] । प्रियः[24] । इन्द्रवायुभ्याम्[25] ।

---

१. 'अग्ने सुतस्य' इति पञ्चदशर्चं सप्तमं सूक्तम् । अत्रेयमनुक्रमणिका—'अग्ने पञ्चोना चतस्रो गायत्र्यः षळुष्णिहस्तिस्रो जगत्यस्त्रिष्टुभो वान्त्ये अनुष्टुभौ' (KSA.27.51. p. 20.) इति । 'ऋषिश्चान्यस्मात्' (KSA.12.2.p.5.) इति परिभाषया स्वस्त्यात्रेय ऋषिः । आदितश्चतस्रो गायत्र्यः—पञ्चमाद्याः षडुष्णिह एकादश्याद्यास्तिस्रो जगत्यस्त्रिष्टुभो वा चतुर्दशीपञ्चदश्यावनुष्टुभौ । विश्वेदेवा देवता Sy.

२. Omitted by P.

३. सोमपानाय Sy. ४. सर्वैरपि Sy.

५. पानाश्वैर वित्रिभिः P. पितृभिः is suggested for पित्रिभिः ॥ ऊमैः रक्षकैः Sy.

६. इन्द्रादिभिः सह Sy.

७. Omitted by D.

८. SB. 1.4.1.24., p. 35. हस्यादा० P. हव्यादा० D. अस्माकं हविर्दानाय तद्दात्रे यजमानाय वा Sy.

९. हे सत्यस्तुतयोऽबाध्यकर्माणो वा देवाः ! Sy.

१०. त्यक० P. आगत्य च हे सत्यस्य धारयितारः ! यूयम् Sy. ११. अस्मद्यज्ञम् Sy.

१२. VM. reads अग्ने ! for अग्नेः ।

१३. आज्यसोमादिकम् Sy.

१४. ०भिषि P. उक्तलक्षणैः Sy.

१५. प्रजनशी० D. हे सन्त्य ! सम्भजनीयाग्ने ! Sy. १६. ०तर्वाविभिः P. प्रातःकाले आगन्तृभिः Sy.

१७. देवैः सार्धम् Sy.

१८. VM. ignores विप्र ॥ हे मेधाविन् ! विविधकामानां वा पूरक ! Sy.

१९. पुरतो वर्तमानः Sy.

२०. चम्वोरत्योः अधिषवणफलकयोः Sy.

२१. अभिषुतः सन् Sy. २२. पात्र P.

२३. पूर्यते Sy. २४. प्टुयः P. षुयः D.

२५. स चेन्द्राय वायवे च प्रियः । तं पातुं हे इन्द्रवायू ! आगच्छतमिति शेषः Sy.

वायवा याहि वीतये जुषाणो हव्यदातये ।
पिबा सुतस्यान्धसो अभि प्रयः ॥ ५ ॥

वायो । वायो ! आगच्छ[2] । पानाय[3] । प्रीयमाणः । यजमानाय[4] । पिब । सुतम्[5] । सोमम्[6] । अन्नम्[7] । प्राप्तुम्[8] ।

इन्द्रश्च वायवेषां सुतानां पीतिमर्हथः । ताञ्जुषेथामरेपसावभि प्रयः ॥ ६ ॥

इन्द्रश्च[9] । अपापौ[10]—अरेपसाविति[11] ।[12]

सुता इन्द्राय वायवे सोमासो दध्याशिरः ।
निम्नं न यन्ति सिन्धवोऽभि प्रयः ॥ ७ ॥

सुता इन्द्राय । यथा । निम्नम्[13] । प्रति[14] । नद्यः । गच्छन्ति तथा । इन्द्रवायू[15] प्रति । सोमः[16] ।[17]

---

१. 'वायवा याहि' इत्येषा पृष्ठचस्य तृतीयेऽहनि प्रउगशस्त्रे वायव्यतृचस्याद्या । सूत्रितं च वायवा याहि वीतये इत्येका वायो याहि शिवा दिव इति द्वे' (ĀSS. 7.10.) इति Sy.

२. आयाहि Sy.

३. भक्षणाय Sy.

४. हविर्दात्रे यजमानाय तदर्थम् Sy.

५. आगत्य च सुतस्य अभिषुतम् Sy.

६. अन्धसः अन्धः अन्नं सोमलक्षणम् Sy.

७. अन्नं सोमाख्यम् Sy.

८. प्रप्तवन्तुं P. प्राप्तुवन्तुं D. अभिलक्ष्य Sy.

९. पृष्ठचस्य तृतीयेऽहनि प्रउगशस्त्रे ऐन्द्रवायवतृचे 'इन्द्रश्च' (RV.V.51.6.) इत्यादिके द्वे ऋचौ शंसेत् । तयोः प्रथमां द्वितीयां वावर्त्य तृचं सम्पादयेत् । तथा च सूत्रितम्—'इन्द्रश्च वायवेषां सुतानामिति द्वयोरन्यतरां द्विः' (ĀSS. 7.10.) इति Sy.

१०. अपावौ D.

११. ०पपावि० P. अहिंसकौ Sy.

१२. VM. ignores all the words of this stanza except अरेपसौ ॥ Sy. explains the stanza in the following manner:—
हे वायो त्वं च । इन्द्रश्च एषां पुरतो गृहीतानां सुतानामभिषुतानां सोमानाम् । पीतिं पानमर्हथः । यस्मादेवं तस्मात् तान् सोमरसान् । जुषेथां सेवेथाम् । अरेपसावहिंसकौ । तदर्थं प्रयः सोमाख्यमन्नमभिलक्ष्यागच्छतमिति शेषः । यद्वा प्रयोऽन्नरूपान् ।

१३. गर्तम् Sy.

१४. प्रस्व P. प्रिस्व D. हे इन्द्रवायू ! युवामभि Sy.

१५. इन्द्राय वायवे च Sy.

१६. सोमाः is suggested for सोमः ।

१७. VM. ignores सुताः । दध्याशिरः । and प्रयः ॥ सुताः अभिषुताः सम्पादिताः । दध्याशिरः दध्याश्रयणाः । प्रयः अन्नरूपाः Sy.

सजूर्विश्वेभिर्देवेभिरश्विभ्यामुषसा सजूः । आ याह्यग्ने अत्रिवत्सुते रण ॥ ८ ॥

सजूः[1][2] । सहितः[3] । विश्वैः[4] । देवैः । अश्विभ्याम् । उषसा च । आगच्छ[5] । अत्रेरिव[6] यज्ञम् । सुते[7] च । रमस्व[8] ।[9]

उत्तरे सिद्धे[10] ।

सजूर्मित्रावरुणाभ्यां सजूः सोमेन विष्णुना । आ याह्यग्ने अत्रिवत्सुते रण ॥ ९ ॥

[सजूर्मित्रावरुणाभ्याम्[11] ।]

सजूरादित्यैर्वसुभिः सजूरिन्द्रेण वायुना । आ याह्यग्ने अत्रिवत्सुते रण ॥ १० ॥

[सजूरादित्यैः[11] ।]

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ ११ ॥

स्वस्ति नः[12] । स्वस्ति[13] । अस्माकम्[14] । कुर्वन्ति[15] । अश्विनौ । भगश्च । स्वस्ति[16] । देवी । अदितिः[17] करोतु । अशत्रोर्मम[18] । स्वस्ति । पूषा । प्राज्ञः[19] । दधातु । स्वस्ति[20] । सुप्रज्ञानेन[21][22] ।

---

१. तृतीयेऽह्नि प्रउगशस्त्रे 'सजूर्विश्वेभिः' इति वैश्वदेवस्तृचः । सूत्रितञ्च—'सजूर्विश्वेभिर्देवेभिरुत नः प्रिया प्रियासु' (ĀSS.7.10.) इति Sy.

२. सजु P.

३. सङ्गतः सन् , समानप्रीतिः सन् Sy.

४. सर्वैः Sy.

५. आयाहि Sy.

६. अरित्रे० P. अत्रेर्यज्ञे यथा तथेत्यर्थः । यद्वा अत्रिर्यथा यज्ञे रमते तद्वत् Sy.

७. अभिषुते सोमे Sy.

८. रंस्व P., D.

९. VM. explains सजूः once only and ignores अग्ने ॥

१०. उत्तरे द्वे नवमीदशम्यौ स्पष्टे Sy.

११. The *pratīka* is supplied by the Editor. VM. does not explain both the stanzas.

१२. पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्रे 'स्वस्ति नः' इति तृचः । सूत्रितञ्च—'स्वस्ति नो मिमीतामश्विना भग इति तृच इति वैश्वदेवम्' (ĀSS. 8. 1.) इति । बृहस्पतिसवे वैश्वदेवनिविद्धानार्थोऽयं तृचः । 'स्वस्ति नो मिमीतामश्विना भग इति वैश्वदेवम्' (ĀSS. 9.5.) इति सूत्रितत्वात् Sy.

१३. अविनाशं क्षेमम् Sy.

१४. अस्मभ्यम् Sy.

१५. कुरुताम् Sy.

१६. क्षेमं मिमीताम् Sy.

१७. अमिति P., ०ति D. अदितिश्च स्वस्ति मिमीताम् Sy.

१८. ०र्मम त्व P. अप्रत्यृतः Sy.

१९. शत्रूणां निरसिता प्राणानां बलानां दाता वा Sy.

२०. स्वस्ति मिमीताम् Sy.

२१. शोभनेन प्रज्ञानेन विशिष्टे Sy.

२२. VM. explains नः once only and ignores द्यावापृथिवी ॥ नः द्यावापृथिवी द्यावापृथिव्यावपि Sy.

उत्तरा निगदसिद्धा—

**स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।**
**बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ १२ ॥**

**[स्वस्तये वायुम्]**[1]

उत्तरे निगदसिद्धे[2]—

**विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।**
**देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ १३ ॥**

[3]**[विश्वे देवाः]**[4]

स्वस्तीति चतुर्थ्यन्तम्[5] ।

**स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।**
**स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ १४ ॥**

**[स्वस्ति मित्रावरुणा]**[6]

---

१. The *pratīka* is supplied by the Editor. Sy. explains this stanza in the following manner :— स्वस्तये क्षेमाय वायुमुपब्रवामहै स्तुम इत्यर्थः । सोमं चोपब्रवामहै । यश्च सोमः भुवनस्य पतिः पालकः । सर्वलोकजीवनस्य सोमायत्तत्वात् । तथा सर्वगणं सर्वदेवगणोपेतं बृहस्पतिं बृहतः कर्मणो मन्त्रस्य पालयितारं स्वस्तये स्तुमः । आदित्यासः आदित्या अदितेः पुत्राः सर्वे देवा अरुणादयो द्वादश वा । नः अस्माकं स्वस्तये भवन्तु ।

२. VM. does not explain these two stanzas (RV.V.51.13,14.) because they are very easy.

३. सत्रमध्ये दीक्षिते व्याधिते सति तस्मिन्नहनि वैश्वदेवशस्त्रेऽयं तृचो निविद्धानार्थः । सूत्रितं च—'स्वस्त्यात्रेये निविदं दध्यात्' (ĀSS. 6.9.) इति । स्वस्त्यात्रेयशब्देनायं तृचो विवक्षित इति तत्र व्याख्यातम् । तथा भयादिके सत्ययं तृचो जप्यः Sy.

४. The *pratīka* is supplied by the Editor. Sy. explains this stanza in the following manner :— विश्वे सर्वेऽपि देवाः । नोऽस्मान् । अद्य अस्मिन् यागदिने स्वस्तये क्षेमायावन्तु । वैश्वानरः । विश्व एनं नरा नयन्तीति वैश्वानरः । वसुः सर्वस्य वासयिता । अग्निः देवः । सोऽपि स्वस्तयेऽवतु । देवाः ऋभवोऽपि स्वस्तयेऽवन्तु, रुद्रः दुःखात् द्रावयिता देवोऽपि । अंहसः पापात् स्वस्ति पातु नोऽस्मान् Sy. 'अयमेवाग्निर्वैश्वानर इति शाकपूणिः' (N.7.23.)

५. It refers to स्वस्तये in the *mantra*.

६. The *pratīka* is supplied by the Editor ॥ हे मित्रावरुणा ! अहोरात्राभिमानिदेवौ ! स्वस्ति कुरुतम् । हे पथ्ये ! पन्था अन्तरिक्षमार्गः । तत्र हिता मार्गाभिमानिनी देवी हे तादृशि ! रेवति ! धनवति ! देवि ! स्वस्ति कृधि । इन्द्रश्चाग्निश्च प्रत्येकं नोऽस्मभ्यं स्वस्ति कृधि । हे अदिते ! देवि ! नः स्वस्ति कृधि कुरु Sy.

स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव ।
पुनर्ददताघ्नता जानता सं गमेमहि ॥ १५ ॥

स्वस्ति । अविनाशेन[1] । पन्थानम् । अनुगच्छामः । यथेमौ[2] स्वस्ति गच्छतः । तत्र[3] च पुनः पुनः । प्रयच्छतोदारेण[4] । अहिंसित्रा[5] । मदीयोऽयमिति जानता[6] । सङ्गमेमहि[7][8] ।

V.52.

प्र श्यावाश्व धृष्णुयार्चा मरुद्भिर्ऋक्वभिः ।
ये अद्रोघमनुष्वधं श्रवो मदन्ति यज्ञियाः ॥ १ ॥

प्र श्यावाश्व[9] ॥ श्यावाश्वः[10] ॥ प्रस्तुहि[11] । हे श्यावाश्व[12] ! धर्षणशीलेभ्यः[13] । मरुद्भ्यः[14] । रसाहरणशीलेभ्यः[15][16] । हे मरुतः[17] ! अद्रोग्धारम्[18] । हविषोऽनन्तरम्[19] । अन्नेन[20] । मादयन्ति[21] । यज्ञियाः[22] ।

---

१. क्षेमेण Sy.

२. सूर्याचन्द्रमसाविव । तौ यथा निरालम्बे मार्गे राक्षसादिभिरनुपद्रुतौ सञ्चरतस्तद्वत् Sy.

३. त P.

४. किञ्च वयं प्रवसन्तः पुनर्ददताभिमतम् Sy.

५. अभिसिता P. ०सिता D. चिरकालविलम्बकोपेनाहिंसिता Sy.

६. अविस्मरता मदीयश्चिरकालं गतः कोऽयमिति सन्देहमकुर्वता । मदीयोऽयमिति बुद्ध्यमानेनेत्यर्थः । उक्तलक्षणेन बन्धुजनेन Sy.

७. सङ्गच्छेमहि । यद्वा पूर्वार्धं प्रवसतां वाक्यमुत्तरार्धं बन्धूनाम् । वयं बन्धवो ददताभिमतमुपार्जितं यच्छताघ्नता प्रवासकोपेनाहिंसता जानता सस्नेहमधिगच्छता प्रवसता सङ्गमेमहि Sy.

८. Ms. D. puts the figure ॥५१॥ here to indicate the end of the fifty-first hymn. No such number is given in P.

९. 'प्र श्यावाश्व' इति सप्तदशर्चमष्टमं सूक्तम् । अत्रेयमनुक्रमणिका 'प्र श्यावाश्व त्र्यूना श्यावाश्वो मारुतं ह तत् पङ्क्तिः षष्ठ्यन्त्या च' (KSA. 27. 52. p. 20.) इति । आत्रेयः श्यावाश्व ऋषिः । 'ह तत्' इति प्रयोगात् इदमादीनि दशसूक्तानि मरुद्देवत्यानि । षष्ठी सप्तदशी च पङ्क्त्यौ शिष्टाः पङ्क्त्यन्त्यपरिभाषयानुष्टुभः । गतो विनियोगः Sy.

१०. ०श्वः D.

११. ०श्व P., D.

१२. अर्च Sy.

१३. हे एतन्नामक ऋषे ! Sy.

१४. ०लोभ्यः P. धृष्णुस्त्वम् Sy.

१५. मरुद्भिः मरुतः । द्वितीयार्थे तृतीया । एवं स्वयमेव सम्प्रेष्यति । यद्वा यजमानो होतारं श्यावाश्वं ब्रूते । यद्वा मरुद्भिर्मरुत्सदृशैर्ऋक्वभिः स्तोतृभिः सह स्तोत्रैर्वा अर्च स्तुहीत्यर्थः Sy.

१६. स्तुत्यान् स्तोतृभिः Sy.

१७. ये is suggested for हे ।

१८. अहिंसकम् Sy.

१९. प्रत्यहम् । हविर्लक्षणान्नप्रदानं स्वधा । अनु पश्चाद्वा Sy.

२०. अन्नं लब्ध्वा Sy.

२१. हृष्यन्ति Sy.

२२. ०यः D. यज्ञार्हाः Sy.

**ते हि स्थिरस्य शवसः सखायः सन्ति धृष्णुया ।**
**ते यामन्ना धृषद्विनस्त्मना पान्ति शश्वतः ॥ २ ॥**

**ते हि स्थिरस्य ।** ते । हि[1] । स्थिरस्य[2] । बलस्य । सखायः । भवन्ति[3] । धर्षणशीलाः[4] । ते[5] । आगमने[6] । धर्षणशीलबलयुक्ताः[7] । आत्मनैव[8] । रक्षन्ति । बहून्[9] ।

**ते स्पन्द्रासो नोक्षणोऽति ष्कन्दन्ति शर्वरीः ।**
**मरुतामधा महो दिवि क्षमा च मन्महे ॥ ३ ॥**

**ते स्पन्द्रासः ।** ते[10] । स्पन्दनशीलाः । इव[11] । वृषभाः अस्वपन्तः[12] । रात्रीः[13] । अतिगच्छन्ति[14] । सम्प्रति[15] । तेषां मरुताम् । दिवि[16] । भूम्याम्[17] । च वर्तमानम् । महः[18] । स्तुमः ।

**मरुत्सु वो दधीमहि स्तोमं यज्ञं च धृष्णुया ।**
**विश्वे ये मानुषा युगा पान्ति मर्त्यं रिषः ॥ ४ ॥**

**मरुत्सु[19] ।** युष्माकम्[20] । स्तोमम्[21] । दधीमहि[22] । यज्ञम्[23] । च । धर्षकेषु । व्याप्ताश्च[24] । ये[25] । मानुषाणि । युगानि[26] अहोरात्राणि । रक्षन्ति । मनुष्यम्[27] । हिंसकात्[28][29] ।

---

१. खलु Sy.
२. अविचलितस्य Sy.
३. भवन्ति मह्यम् Sy.
४. धृष्णवः Sy.
५. ०लाः स्ते P.
६. आ इति चार्थे । गमनेऽपि Sy.
७. धर्षणवन्तः Sy.
८. अनुग्रहेणैवास्मदुपकारमनपेक्ष्यैव Sy.
९. बहू P. बहून् अस्मान् पुत्रभृत्यादीन् Sy.
१०. मरुतः Sy.
११. नेति चार्थे । यस्मात् स्पन्द्रा अन्येषां तस्मात् Sy.
१२. जलस्य सेक्तारः Sy.
१३. शर्वर्यो रात्रयः । कालावयवानित्यर्थः Sy.
१४. तान् अतिक्रम्य गच्छन्ति । नित्या इत्यर्थः । यस्मादेत एवंविधास्तस्मात् Sy.
१५. अधुना Sy.
१६. द्युलोके Sy.
१७. क्षमायां भूमौ च Sy.
१८. तेजः Sy.
१९. हे अध्वर्युहोत्रादयः ! Sy.
२०. यूयम् Sy.
२१. स्तोत्रम् Sy.
२२. दधीमहि, व्यत्ययेनोत्तमः । धत्त Sy.
२३. इज्यतेऽनेनेति यज्ञं हविः । तदुभयं किमर्थं दीयत इति Sy.
२४. ०प्तस्ता P., D. विश्वे सर्वेऽपि Sy.
२५. ये मरुतः Sy.
२६. सर्वेषु कालेष्वित्यर्थः Sy.
२७. मरणधर्माणं यजमानम् Sy.
२८. कां P. ०काः D. हिंसकात् सकाशात् Sy.
२९. VM. ignores मरुत्सु ।

अर्हन्तो ये सुदानवो नरो असामिशवसः ।
प्र यज्ञं यज्ञियेभ्यो दिवो अर्चा मरुद्भ्यः ॥ ५ ॥

अर्हन्तः[1] । पूजार्हाः[2] । ये । सुदानाः[3] । नेतारः[4] । परिपूर्णबलाः[5] । तेभ्यः[6] । यज्ञियेभ्यः[7] । दिव[8] आगतेभ्यः[9] । हविः[10] । प्रयच्छ[11] ।

आ रुक्मैरा युधा नर ऋष्वा ऋष्टीरसृक्षत ।
अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः ॥ ६ ॥

आ रुक्मैः[12] । वक्षोऽलङ्करणैः[13] । योधनसाधनेनायुधेन[14] सह । दर्शनीयाः[15] । मरुतः[16] । अंसेषु शक्तीः[17] । आसृजन्ति[18] । ततो[19] विद्योतमानान् । मरुतः । एनान्[20] । एव[21] । स्वभानुः[22] । अनुगच्छति[23] । यथा[24] जभ्मशब्दं कुर्वाणा[25]

---

१. हर्षन्तः P.

२. हे होतः ! हे आत्मन् ! वा Sy.

३. पूज्याः Sy.

४. शोभनदानाः Sy.

५. नेतारः कर्मणाम् Sy.

६. परिपुस्तेबालाः P. अनल्पबलाः सन्ति तेभ्यः Sy.

७. VM. explains मरुद्भ्यः as तेभ्यः ।

८. यज्ञार्हेभ्यः Sy.

९. द्योतमानेभ्यः । विभक्तिवचनयोर्व्यत्ययः । यद्वा कर्मणि षष्ठी । दीप्तम् । अथवान्तरिक्षादागतेभ्य इति सम्बन्धः Sy.

१०. यज्ञसाधनं हविः Sy.

११. पूजय । प्रयच्छेत्यर्थः Sy.

१२. श्यावाश्वस्यार्षम् Dur.
श्यावाश्वस्य SKN.

१३. ०कार० D. रोचमानैराभरणविशेषैः । आरोचन्त इति शेषः । उपसर्गश्रुतेः सङ्गतक्रियाध्याहारः Sy. रुक्मैर्विकृतानि Dur. 'अंसे'षु व ऋष्टयः पत्सुखादयो वक्षःसु रुक्माः' (RV.V. 54.11.) इति दर्शनान्मरुतामुरस्स्थाः SKN.

१४. प्रहरणसाधनेनायुधेन Sy.
एतान्यायुधानि Dur.

१५. महान्तो मरुतः Sy. ज्ञातयितव्यान्मेघान्प्रति Dur.

१६. वृष्टेर्नेतारः Sy.
हे नरः ! मरुतः ! Dur.

१७. एते मरुतः ऋष्टीः आयुधविशेषान् Sy. एताश्च ....शक्तीः Dur.

१८. आभिमुख्येन Dur. एकोऽत्राकारोऽसृक्षतेत्येतेन सम्बध्यते । अपरः, अर्त इत्येतेन SKN.

१९. प्रक्षिपन्ति मेघभेदार्थम् Sy. असृजन्त Dur. 'सृज विसर्गे' आभिमुख्येन मेघस्योपरि विसृजन्ति विक्षिपन्ति SKN.

२०. एनान् प्रहारान् Dur. एतच्छक्तिविक्षेपलक्षणव्यापारादनन्तरमेवेत्यर्थः SKN.

२१. अहेति विनिग्रहार्थीयत्वादेवशब्देन समानार्थः । अन्वेव SKN.

२२. दीप्तिः Sy. आदित्यः Dur. स्वभूता भानुर्दीप्तिः SKN.

२३. अनुगच्छन्त्येव Sy. अपगच्छन्तु, मेघेभ्यो हन्यमानेभ्यस्तदन्वेव चापोऽपि, अर्त आगच्छन्तु Dur. अन्विति पश्चाद्भावे....छान्दसत्वाद् वर्तमाने लङ्, आत्मनेपदम् । आगच्छति SKN.

२४. यथ P. यथैव SKN.

२५. जज्ञुर्श० P. जज्ञंश० D. शब्दकारिण्य आप इव Sy. शब्दकारिण्य इव स्रोतस्या आप ऋष्वः प्रभूता इत्यर्थः । एवमत्र शब्दानुकरणादापो जज्झतीरित्युपपद्यते Dur. मेघस्था आप आयन्ति ततस्तथैव विद्युतः SKN.

धेनूर्ऋषभः[1] । स्वयमेव[2] । दिवः[3] । आगच्छति,[4] इन्द्रो भानुरग्निर्वेति[5] ।

**ये वावृधन्त पार्थिवा य उरावन्तरिक्ष आ ।**
**वृजने वा नदीनां सधस्थे वा महो दिवः ॥ ७ ॥**

**ये वावृधन्त ।** ये[6] । वर्धन्ते । पृथिव्यां वर्तमानाः[7] । ये । च[8] । विस्तीर्णे[9] । अन्तरिक्षे । नदीनाम्[10] । वा । वेगे[11] । महतः । वा[12] । दिवः[13] । स्थाने[14] उत्तरत्र सम्बन्धः ।

**शर्धो मारुतमुच्छंस सत्यशवसमृभ्वसम् ।**
**उत स्म ते शुभे नरः प्र स्पन्द्रा युजत त्मना ॥ ८ ॥**

**शर्धः ।**[15] मारुतम् । वेगम्[16] । सत्यबलम्[17] । महत्[18] । अन्तर्मुखः सन्[19] । स्तुहि । अपि च[20] । ते मरुतः[21] । नेतारः[22] । स्पन्दनशीलाः[23] । स्वयमेव[24] । शोभार्थम्[25] । प्रयुञ्जत[26] अभिगच्छन्तीत्यर्थः ।

---

१. ०नू ऋ० P. ०नू ऋषभ D.

२. आत्मनः Dur. 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपे, आत्मनैव SKN.

३. द्योतमानस्य मरुद्गणस्य Sy. द्युलोकात् Dur. कुत आगच्छति ? दिवो दीप्तादन्तरिक्षात् SKN.

४. दि आगति P., D. निरगात् Sy.

५. The passage, 'इन्द्रो भानुरग्निर्वा' should immediately follow स्वभानुः and precede अनुगच्छति ॥ जज्झतीरापो भवन्ति । शब्दकारिण्यः । 'मरुतो जज्झतीरिव' इत्यपि निगमो भवति N.6.16., SKN. II.446.

६. मरुतः Sy.

७. पृथिवीसम्बद्धाः सन्तः Sy.

८. च ववृधन्त । आ इति चार्थे Sy.

९. ये व पिस्त्रस्तीर्णे D. महति Sy.

१०. नदनवतीनाम् Sy.

११. बले ववृधन्त Sy.

१२. व P. उभयत्र वाशब्दश्चार्थे Sy.

१३. द्युलोकस्य Sy.

१४. सह स्थाने च ववृधन्त । एवं सर्वत्र वर्धमाना मरुतो वृष्ट्यर्थमृष्टीरसृक्षतेति पूर्वत्र सम्बन्धः Sy.

१५. हे स्तोतः ! Sy.

१६. बलम् Sy.

१७. सत्यवेगम् Sy.

१८. सत्यं महाबलम् P., D. अतिप्रवृद्धम् Sy.

१९. अन्तमुखमुः P. VM. seems to explain उत् as अन्तर्मुखः सन् ॥ उत्कृष्टम् Sy.

२०. अपि च refers to both उत and स्म.

२१. मेरुतः D.

२२. नेता P., D. वृष्टेर्नेतारः Sy.

२३. चलनस्वभावाः पृषतीरित्यर्थः Sy.

२४. आत्मनैव जगद्रक्षाबुद्ध्यैव Sy.

२५. उदकार्थम् Sy.

२६. प्रायुंज० P. समयोजयन् Sy.

उत स्म ते परुष्ण्यामूर्णा वसत शुन्ध्यवः ।
उत पव्या रथानामद्रिं भिन्दन्त्योजसा ॥ ६ ॥

उत[1]। अपि च[2]। स्म[3]। परुष्ण्यां नद्याम्[4]। प्रच्छन्नाः[5]। अवसमग्नन गर्वो[6] भूत्वा[7] ? अपि च। रथानाम्[8]। चक्रधारया गमने[9]। अद्रिमपि[10]। भिन्दन्ति[11]। बलेन[12]। मेघो वाद्रिः[13][14]।

आपथयो विपथयोऽन्तस्पथा अनुपथाः ।
एतेभिर्मह्यं नामभिर्यज्ञं विष्टार ओहते ॥ १० ॥

आपथयः। अभिमुखगमनादापथयो[15] नामानः[16]। एवम्[17] विपथयश्च[18]। मह्यम्[19]। एतैश्चतुर्भिः[20]।

---

१. ०तः P. श्यावाश्वस्यार्षम् Dur. SKN.
२. उतशब्दोऽप्यर्थे SKN.
३. स्मशब्दश्चार्थे SKN.
४. एतन्नामिकायां नद्यां वर्तन्ते ये Sy. हे मरुतो, येषां वस्तिरोभवितुमाविर्भवितुं च काले शक्तिरस्ति ते यूयम्...कस्मिंश्चित्काले...परुष्ण्यां नद्यां माध्यमिकायां वाचि पर्ववत्याम् Dur. ते प्रकृता मरुतः....इरावती परुष्णीत्याहुः। माध्यमिका वा वाक् परुष्णी पर्ववत्वात्, तस्याम्
५. प्रयच्छन्नाः P. दीप्तीः Sy. चित्रास्तिरोहिताः Dur. छन्नाः SKN.
६. आच्छादयन्ति Sy. मद्गव इव।...यूयमेव शुन्ध्यवः शोधयितारः।....वसथ, एतस्मिन्नन्तरिक्षलोके Dur. वसत, व्यत्ययेनायं मध्यमपुरुषः। वसन्ति व्यवतिष्ठन्तीत्यर्थः। शुन्ध्यवः शोधयितारो मेघस्य यावत्तत्रोदकं सञ्चार्यस्यापनेतार इत्यर्थः। अथवा शुन्ध्युर्मद्गुरुच्यते। लुप्तोपमं चेदं द्रष्टव्यम्, शुध्यव इव। यथा मद्गव इरावत्यां नद्यां छन्ना वसन्ति व्यवतिष्ठन्ते तद्वन्मरुत इत्यर्थः SKN.
७. गवो D. शोधिकाः Sy.
८. स्वकीयानां रथचक्रेण Sy. कस्मिंश्चिदभ्युद्गमनकाले प्राप्ते युष्माकं रथानाम् Dur. रथानामवयवभूतया SKN.
९. नेम्या Sy. या रथनेमयस्ता एव....एवमेत स्मिन्नर्थसंयोगात्पविशब्देन रथचक्रनेमिरभिसम्बध्यते Dur. नेम्या चक्रधारया SKN.
१०. अद्रिमवि P. मेघं गिरिं वा Sy. मेघम् Dur., SKN.
११. विदारयन्ति Sy. किमुत यूयमित्यभिप्रायः Dur. मेघस्योपरि रथेन चङ्क्रम्यमाणा रथचक्रधारया मेघान् विदारयन्तीत्यर्थः।.... कालभेदाद् द्वे कर्मणी मरुताम्। वर्षाभ्योऽन्यत्राष्टौ मासाञ्छन्ना वसन्ति न स्वयं दृश्यन्ते नाप्येषां किञ्चित्कर्मेत्यर्थः। वर्षासु त्वाविर्भूतरूपा रथचक्रधारयाऽद्रिं भिन्दन्ति। ब्राह्मणमप्यस्मिन्नर्थे उदाहरन्ति। सान्तपनीयं हविः प्रकृत्य श्रूयते 'देवा वै वृत्रस्य मर्म नाविन्दन्, तं मरुतः क्षुरवं तीक्ष्णधारया व्ययुः (Maitra. 5.1. 10. 14.)....विश्लिष्टसर्वाङ्गबन्धनं कृतवन्त इत्यर्थः SKN.
१२. बलेन च Sy.
१३. वाद्रिः P. ०द्रि D. The passage मेघो वाद्रिः should immediately follow अद्रिमपि।
१४. VM. ignores ते ॥ ते मरुतः Sy. पवी रथनेमिर्भवति। यद्विपुनाति भूमिम् N. 5.5., SKN. II. 311.
१५. अस्मदभिमुखा मार्गा येषां ते तादृशाः Sy.
१६. ०नादपथयो नामानम् P. ०नादवपथयो नामानम् D. १७. ऐवम् P.
१८. विश्वङ्मार्गाः Sy.
१९. मदर्थम् Sy.
२०. चतुर्विधैः Sy.

नामभिर्युक्तः[1] । मरुतां विस्तारः[2] । यज्ञम्[3] । वहति[4] ।

**अधा नरो न्योहतेऽधा नियुतं ओहते ।**
**अधा पारावता इति चित्रा रूपाणि दर्श्या ॥ ११ ॥**

**अध**[5] । मरुतः[6] । कदाचित्[7] । नरः[8] । वहन्ति[9] । कदाचित् । नियुतः[10] । कदाचित् । पारावताः[11] । इत्थम्[12] । चित्राणि[13] । एषां[14] दर्शनीयानि[15] । रूपाणि[16] पुमांसश्च[17] नरः[18] ।

**छन्दःस्तुभः कुभन्यव उत्समा कीरिणो नृतुः ।**
**ते मे के चिन्न तायव ऊमा आसन्दृशि त्विषे ॥ १२ ॥**

**छन्दःस्तुभः** । छन्दःस्तुवतः[19] । उदकमिच्छतो[20] गोतमस्य । कूपम्[21] । आनिन्युः[22] । करणशीलाः[23] । ते[24] । मे[25] । के । चन[26] । तस्कराः[27] । इव । रक्षकाः । चक्षुषि[28] । दीप्तये[29] । अभवन्[30] ।

---

१. नामकैः स्वरूपैः Sy.
२. विस्तृताः सन्तः Sy.
३. वहन्ति । यद्वैतैर्नामभिरुदकैः सार्धं यज्ञमोहते Sy.
४. VM. ignores अन्तःपथाः and अनुपथाः॥ अन्तस्पथाः दरीसुषिरादिमार्गाः । अनुपथाः अनुकूलमार्गाश्च ये मरुतः सन्ति ते Sy.
५. ०धः P.
६. ०त D.
७. कचित् P. कदाचित् seems to be the explanation of अध ॥ अथ Sy.
८. अभिमतवृष्ट्यादिनेतारः Sy.
९. वहन्ति जगत् Sy.
१०. स्वयमेव मिश्रयितारः सन्तः Sy.
११. अपारवताः P., D. परावद्दूरदेशः । तत्सम्बन्धिनश्चान्तरिक्षादिदूरदेशे ग्रहतारामेघादिधारकाः सन्त ओहत इत्यर्थः Sy.
१२. उक्तप्रकारेण Sy.
१३. नानाविधानि चायनीयानि वा Sy.
१४. ०षा P.
१५. स्वव्यापारैर्दर्शनीयानि भवन्त्विवति शेषः Sy.
१६. तेषां रूपाणि Sy.
१७. पुमश्वानरः P. पुमश्चानरः D.
१८. VM. ignores नि and ओहते ॥ नितरां वहन्ति Sy.
१९. छान्दा स्तु० D. छन्दोभिः स्तोतारः Sy.
२०. उदकेच्छवः Sy.
२१. उत्सं कूपमपेक्ष्य तृषिताय गोतमाय यान्मरुतः Sy.
२२. सर्वतोऽकुर्वन्ननयन् वा स्तोत्रम् । यद्वा ये छन्दःस्तुभश्छन्दोभिः स्तुत्याः । स्तोभतिः स्तुतिकर्मा । कुभन्यवः सेक्तारो वृष्ट्युदकस्य । कुभिरुन्दनकर्मा । कीरिणः स्तोतुर्गोतमस्य पानार्थमुत्सं कूपमानृतुः आनीतवन्तः । 'असिञ्चन्नुत्सं गोतमाय तृष्णजे" (RV. I.85.11.) इति ह्युक्तम् 'नृ नये' इत्यस्य वा नर्ततेर्वा विक्षेपमात्रार्थस्येदं रूपम् Sy.
२३. स्तोतारः Sy.
२४. मरुतः Sy.
२५. मह्यम् Sy.
२६. कवचन P., D.
२७. कदाचिदप्यदृश्यास्तस्करा इव स्थिताः Sy.
२८. चक्षुष P., D. दर्शने Sy.
२९. शरीरदीप्त्यै बलाय वाऽऽसन् । प्राणरूपेणेति भावः Sy.
३०. विषयभूता अभवन् Sy.

य ऋ॒ष्वा ऋ॒ष्टिवि॑द्युतः क॒वयः॒ सन्ति॑ वे॒धसः॑ ।
तमृ॑षे॒ मारु॑तं ग॒णं न॑म॒स्या र॒मया॑ गि॒रा ॥ १३ ॥

[य ऋष्वाः][1] हिरण्मयैरलङ्कृताः[2] । ये[3] महान्तः । ऋष्ट्या[4] विद्योतमानाः । कवयः[5] । भवन्ति[6] । वेधसः[7] । तमिति स्पष्टम्[8] ।

अच्छ॑ ऋषे॒ मारु॑तं ग॒णं दा॒ना मि॒त्रं न यो॒षणा॑ ।
दि॒वो वा॑ धृष्णव॒ ओज॑सा स्तु॒ता धी॒भिरि॑षण्यत ॥ १४ ॥

अच्छ ऋषे । अभिगच्छ[9] । ऋषे[10] ! मारुतम्[11] । गणम्[12] । धनदानाय[13] । मित्रम्[14] । इव । शत्रूणां पृथक्करणार्थम्[15] । दिवः[16] । च । हे धृष्णवो मरुतः[17] ! बलेन[18] । स्तुताः । कर्मभिः[19] । गच्छत[20] ।

नू म॑न्वा॒न ए॑षां दे॒वाँ अच्छा॒ न व॒क्षणा॑ ।
दा॒ना स॑चेत सू॒रिभि॒र्याम॑श्रुतेभिर॒ञ्जिभिः॑ ॥ १५ ॥

नू मन्वानः । क्षिप्रम् । मरुताम्[21] । स्तोत्रं कुर्वन्[22] । अन्यान् देवान्[23] । प्रति । न[24] गच्छति[25] । वक्षणाय[26] वक्षणं धनम्[27] । किन्तु दानाय[28] । सङ्गच्छते । प्राज्ञैः[29] । विश्रुतगमनैः[30] । उदकेनाञ्जद्भिः[31] ।

---

१. The *pratīka* is supplied by the Editor.
२. It seems to be the explanation of ऋष्वाः ॥ दर्शनीयाः Sy.
३. हे P. मरुतः Sy.
४. आयुधैर्विद्योतमानाः Sy.
५. मेधाविनः Sy. ६. सन्ति Sy.
७. विधाः P., D. सर्वस्य विधातारः Sy.
८. VM. ignores the second hemistich of the stanza. तं तेषां मारुतं गणं रमया रमणीयया गिरा स्तुत्या हे ऋषे ! श्यावाश्व ! नमस्य परिचर स्तुहि Sy.
९. अभिगच्छेति शेषः Sy.
१०. अभिगच्छ and ऋषे are omitted by D.
११. मारुतं मारुतं P.
१२. मरुत्सङ्घम् Sy.
१३. हविर्दानेन Sy. १४. आदित्यम् Sy.
१५. यौतेरिदं रूपम् । यौतीति योषा स्तुतिस्तया च Sy.
१६. द्युलोकाद्वा । वाशब्दश्रुतेरितरलोकद्वयाद्वा Sy.
१७. ऋषेरुत्तरार्धः प्रत्यक्षवादः । धर्षकाः ! मरुतः ! Sy. १८. बले P., D.
१९. अस्मदीयाभिः स्तुतिभिः Sy.
२०. गच्छः P. गच्छ D. गच्छत यज्ञम् Sy.
२१. एतान् मरुत इत्यर्थः Sy.
२२. स्तुवन् Sy.
२३. मरुद्व्यतिरिक्तान् Sy.
२४. अभिप्राप्तुम् Sy.
२५. Omitted by D. न मनुते Sy.
२६. वहनेन निमित्तेन Sy.
२७. ०णान्ध० P., D.
२८. दानोय P. अभिमतदानानि Sy.
२९. स स्तोता मेधाविभिः Sy.
३०. शीघ्रगमनेन विश्रुतैः Sy.
३१. फलस्य व्यञ्जकैर्मरुद्भिः । सर्वाः पञ्चम्यर्थे तृतीयाः । उक्तलक्षणेभ्यो मरुद्भ्यः Sy.

प्र ये मे॑ बन्ध्वे॒षे गां वोच॑न्त सू॒रयः॑ पृश्निं॑ वोचन्त मा॒तर॑म् ।
अधा॑ पि॒तर॑मि॒ष्मिण॑ रु॒द्रं वो॑चन्त॒ शिक्व॑सः ॥ १६ ॥

**प्र ये मे ।** प्रावोचन्[1] । ये[2] । मम[3] । बन्धूनामन्वेषणे[4] । पृश्निः[5] । गौः । अस्माकं मातेति ताम्[6] । पितरम्[8] । एषणशीलम्[9] । रुद्रम् । वोचन्त । शकुनशीलाः[10][11] ।

स॒प्त मे॑ स॒प्त शा॒किन॒ एक॑मेका श॒ता द॑दुः ।
य॒मुना॑या॒मधि॑ श्रु॒तमुद्राधो॒ गव्यं॑ मृजे॒ नि राधो॒ अश्व्यं॑ मृजे ॥ १७ ॥

**सप्त मे ।** एकोनपञ्चाशत्[12] । मरुतः[13] । मह्यम् । एकैकम्[14] । धनशतानि[15] । प्रयच्छन्तु[16] । यमुनायाः[17] । समीपे[18] वर्तमानाः । गव्यम्[19] । धनं मरुद्भिर्दत्तम् । उन्मृजे[20] । नितरां च मृजे । अश्व्यम्[21] पाणिना पृष्ठ उन्मार्जनम्[22], "कक्षीवन्त उदमृक्षन्त पज्रा[23]" इत्युक्तम्[24] ।

---

१. म D.  २. मरुतः Sy.

३. मह्यम् Sy.

४. स्वेषां बन्धूनामन्वेषणे सति Sy.

५. द्युदेवतां पृश्निवर्णां गां वा 'पृश्न्यै वै पयसो मरुतो जाताः' (TS.2.2.11.4.) इति श्रुतेः Sy.

६. ता P., D. गां माध्यमिकां वाचं गोदेवतां वा Sy.

७. अवशिष्टमृषेर्वाक्यम् । ऋषिर्मरुद्वाक्यमनुवदति । तस्मादुत्तरयोराख्यातयोर्यच्छब्दानन्वयान्निघातः Sy.

८. अथ स्वकीयं पितरम् Sy.

९. गमनवन्तमन्नवन्तं वा Sy.

१०. शकनशीलाः is suggested for शकुनशीलाः ॥ शक्तास्ते । मरुतां रुद्रेण पुत्रत्वपरिग्रहो बहुकृत्व उपपादितः Sy.

११. VM. ignores सूरयः and वोचन्त ॥ सूरयः प्रेरकाः । वोचन्त अब्रुवन् Sy.

१२. VM. seems to explain सप्त and सप्त together as एकोनपञ्चाशत् ॥ सप्तसङ्ख्याकाः सङ्घाः । 'सप्तगणा वै मरुतः' (TS.2.2.11.1.) इति श्रुतेः । अदितिगर्भे वर्तमानं वायुमिन्द्रः प्रविश्य सप्तधा विदार्य पुनरेकैकं सप्तधा व्यदारयत् त एकोनपञ्चाशन्मरुद्गणा अभवन्निति पुराणेषु प्रसिद्धम् । ते च सप्तसङ्ख्याकाः Sy.

१३. शाकिनः सर्वमपि कर्तुं शक्ताः Sy.

१४. एकैको गणः Sy.

१५. शतसङ्ख्याकानि गवाश्वयूथानि Sy.

१६. दत्तवन्तः । प्रयच्छन्त्विति वा आशीः Sy.

१७. यमुनायां नद्याम् Sy.

१८. अधि । अयं सप्तम्यर्थानुवादी Sy.

१९. गोसमूहात्मकं गोसम्बन्धि वा Sy.

२०. अमृ० P. उन्मार्जयामि Sy.

२१. अश्व्यां P., D. तथा तैर्दत्तम् अश्व्यम् अश्वसमूहात्मकं तत्सम्बन्धि वा Sy.

२२. इन्मा० P. निमार्ज्मि Sy.

२३. क्षीवन्त उदकमुक्षन्त वज्रः P. वज्रः D. RV. I. 126. 4ᵃ.

२४. VM. ignores श्रुतम् and राधः ॥ श्रुतं प्रसिद्धम् । राधो धनम् Sy. Ms. D. puts the figure ॥५२॥ here to indicate the end of the fifty-second hymn. No such number is given in P.

V.53.

**को वेद जानमेषां को वा पुरा सुम्नेष्वास मरुताम् । यद्युयुज्रे किलास्यः ॥ १ ॥**

को वेद । कः[1] । वेद[2] । जनम्[3] । एषाम्[4] । कः । वा । पुरा[5] । मरुताम्[6] । सुखेषु । अभूत्[7] । यदा[8] । युज्यन्ते[9] । श्वेता वडवाः[10] ।

**ऐतान्रथेषु तस्थुषः कः शुश्राव कथा ययुः ।**
**कस्मै सस्रुः सुदासे अन्वापय इळाभिर्वृष्टयः सह ॥ २ ॥**

ऐतान्[11] । आशुश्राव[12] । एतान्[13] । रथेषु[14] । स्थितवन्तः । कः । कथं[15] च । यान्ति[16] । कस्मै । शोभनदानाय[17] । बन्धवः[18] । अनुसस्रुः[19] । कस्मै[20] च मरुद्दत्ता[21] वृष्टयो[22] भवन्ति । अन्नैः[23] । सह[24] ।

---

१. 'को वेद जानम्' इति षोडशर्चं नवमं सूक्तम् । श्यावाश्व ऋषिः । आद्यापञ्चमीदशम्येकादशीपञ्चदश्यः ककुभः षष्ठीसप्तमीनवमीत्रयोदशीचतुर्दशीषोडश्यः सतोबृहत्योऽष्टमी द्वादशी च गायत्र्यौ द्वितीया बृहती तृतीयानुष्टुप्चतुर्थी पुरउष्णिक् । मरुतो देवता । तथा चानुक्रान्तम् 'को वेद षोळश ककुब्बृहत्यनुष्टुप् पुरउष्णिक् ककुप्सतोबृहत्यौ गायत्री सतोबृहती ककुभौ गायत्री सतोबृहत्यौ ककुप्सतोबृहती' (KSA. 27.53.p.20.) इति । विनियोगो लैङ्गिकः Sy.

२. पुमान् Sy.

३. जानाति Sy.

४. जाननम् P.

उत्पत्तिम् Sy.

५. मरुतां पूर्वसूक्ते प्रस्तुतत्वादत्रान्वादेशविषयत्वादेषामित्यस्य निघातता Sy.

६. पूर्वमपि Sy.

७. एषां मरुताम् Sy.

८. भवति Sy.

९. ताः रथे योजितवन्तः । तदैषां स्थितिं बललक्षणानि सुखानि च को जानातीत्यर्थः । वेगविषये सर्वत्र वायोरुपमास्पन्दत्वादिति भावः Sy.

१०. वधवाः P.

किलासीः पृषतीरित्यर्थः Sy.

११. ए० P., D.

१२. श्रावयेदित्यर्थः । यद्वा एतेषां क्रोशध्वनिं रथध्वनिं च कः शृणुयात् ? Sy.

१३. मरुतः Sy.

१४. ऋतेषु P.

१५. कञ्चन P., D.

१६. गच्छन्ति तदपि को जानाति ? यद्वा तान् कथमन्ये देवादयोऽनुगच्छेयुः ? Sy.

१७. सुदानाय Sy.

१८. बन्धुभूता व्याप्ताः Sy.

१९. अनुक्रमेणावतरेयुः Sy.

२०. तस्मै P.

२१. ०त्तां P.

२२. वर्षकाः । अयं कर्तरि क्तिच् Sy.

२३. अन्नैः P.

बहुविधैरन्नैः Sy.

२४. सहिताः Sy.

**ते म॑ आहु॒र्य आय॑युरुप॒ द्युभि॒र्विभि॒र्मदे॑ । नरो॒ मर्या॑ अरे॒पस॑ इ॒मान्पश्य॒न्निति॑ ष्टुहि ॥ ३ ॥**

ते मे[1] । ते[2] । मम[3] । आहुः । ये । उपगताः[4] । दीप्तैः[5] । अश्वैः[6] । सोमार्थम्[7] । नेतारः । मारकाः[8] । अपापाः[9] । इमानस्मान् । पश्यन्ति[10] । इत्थम्[11] । त्वं स्तुहीति ।

**ये अ॒ञ्जिषु॒ ये वाशी॑षु॒ स्वभा॑नवः स्र॒क्षु रु॒क्मेषु॑ खा॒दिषु॑ । श्राया रथे॑षु॒ धन्व॑सु ॥ ४ ॥**

ये[12] । ये[13] । आभरणेषु । ये च । वाश्यायुधेषु[14] । स्वदीप्तयः । मालासु[15] । रुक्मेषु[16] । पादाभरणेषु, आयुधविशेषो वा खादिः[17] । श्रयमाणा[18] भवन्ति, अन्नैः[19] सहन्ति ?[20] रथेषु । धनुःषु चोत्तरत्र[21] सम्बन्धः ।

**यु॒ष्माकं॑ स्मा॒ रथाँ॒ अनु॑ मु॒दे द॑धे मरुतो जीरदानवः । वृ॒ष्टी द्यावो॑ य॒तीरि॑व ॥ ५ ॥**

[युष्माकम्][22] । युष्माकम् । स्म[23] । रथान् । मुदे[24] । अनुधारयामि[25] । हे[26] मरुतः[27] ! क्षिप्रदानाय[28] । अथ[29] वर्षणाय[30] । रश्मयो[31] वो धारयन्ति ।[32]

---

१. ऋषिर्ऋग्द्वयाभ्यां मरुत्प्रादुर्भावमाख्यास्यन्ननया प्रादुर्भूतान् पश्यन्नाह Sy.  २. मरुतः Sy.

३. इत्थं लपते मह्यम् Sy.

४. मां प्राप्ताः Sy.  ५. द्योतमानैः Sy.

६. विभिः गन्तृभिरश्वैः Sy.  ७. मदाय सोमपानजनिताय किमाहुरिति तदनुब्रूते Sy.

८. माकाः P. मनुष्येभ्यो हिताः Sy.

९. अलेपास्ते । हे ऋषे ! Sy.

१०. तथा स्थितान् चक्षुषावलोकयन् Sy.

११. इत्थं P. स्थं D. इत्थं पश्यन् स्तुहीति Sy.

१२. अनया मरुतां स्वरूपं निरूपयति Sy.

१३. हे मरुतः ! युष्माकं ये प्रसिद्धाः Sy.

१४. वात्यायुधषु P. दास्यायु० D.

१५. माल्येषु Sy.

१६. रुक्षेषु P. क्षेषु D. उरोभूषणेषु Sy.

१७. हस्तपादस्थितकटकेषु । 'हस्तेषु खादिश्च कृतिश्च' (RV.I.168.3.) 'पत्सु खादयः' (RV.V.54.11.) इति हि श्रुती भवतः Sy.

१८. ०दि P., D.

१९. आश्रयभूताः सन्ति Sy.

२०. अन्नैः P., D.

२१. धन्वसु च ये च स्वभानवः श्रायाः सन्ति । 'सुधन्वान इषुमन्तः' 'सुरथाः पृश्निमातरः' (RV.V.57.2.) इति च निगमः । तान् सर्वान् स्तुम इति शेषः । यद्वा ये स्वभानवः स्वायत्तदीप्तयो मरुतोऽञ्जिष्वाभरणेषु निमित्तेषु श्राया आश्रया भविष्यामः । ये च वाशीषु निमित्तेषु । एवं सर्वत्र योज्यम् । तादृग्विधानियान् पश्यन् स्तुहीति पूर्वत्र सम्बन्धः । तेषामेव इदं वाक्यम् Sy.

२२. The *pratīka* is supplied by the Editor.

२३. स्व P. स्मेति पूरणः Sy.  २४. मोदाय Sy.

२५. उद्दिश्य धारयामि करोमीत्यर्थः । सामर्थ्यात् स्तुतीरिति लक्ष्यते Sy.  २६. ०थान् ममुद्वे निधा० P. ०थान् समुद्येन धा० D.

२७. P. adds ते ममाहुर्य उपगता दीप्तैरश्वैस्सोमार्थं नेतारः after मरुतः । The additional passage in P. has a striking resemblance with the commentary on RV.V.53.3.

२८. हे शीघ्रदानाः ! Sy.

२९. ०था D.  ३०. वृष्ट्या Sy.

३१. दीप्तीरिव दृश्यमानान् रथानिति सम्बन्धः Sy.

३२. VM. ignores यतीरिव ॥ यतीरिव सर्वत्र गच्छन्तीः Sy.

आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
वि पर्जन्यं सृजन्ति रोदसी अनु धन्वना यन्ति वृष्टयः ॥ ६ ॥

आ[1] यम् । आच्यावयन्ति[2] । यम् । मेघम्[3] । सुदानाः[4] । नेतारः[5] । यजमानाय[6] । द्युलोकात्[7] । ते[8] पर्जन्यम्[9] । विसृजन्ति[10] । द्यावापृथिव्योरर्थाय[11] । अन्तरिक्षेण[12] । यन्ति[13] । वृष्टयः[14] यं[15] मेघं च्यावयन्ति तस्मात् पर्जन्यं च सृजन्तीति[16][17] ।

ततृदानाः सिन्धवः क्षोदसा रजः प्र सस्रुर्धेनवो यथा ।
स्यन्ना अश्वाइवाध्वनो विमोचने वि यद्वर्तन्त एन्यः ॥ ७ ॥

ततृदानाः । रुजन्तः[18] । सिन्धवः[19] । उदकेन[20] । कूलस्थां मृदं रेणुशः । प्रसरन्ति । धेनवः[22] । इव[23] । गच्छन्त्यः[24] । अश्वाः इव[25] । अध्वनो गमनाय । विमोचने[26] । भवन्ति विगच्छन्ति[27] । यदा । नद्यः[28] एभिर्वृष्टेः सतीति ।

---

१. कारीर्या तिस्रः पिण्ड्यो होतव्याः । तत्र द्वितीयायाः 'आ यं नरः' इत्यनुवाक्या । सूत्रितं च— 'आ यं नरः सुदानवो ददाशुषे विद्युन्महसो नरो अश्मदिद्यवः' (ĀSS.2.13.) इति Sy.

२. आप्याव० P. आप्यापय० D. आच्यावयन्ति स्थानात् BB.

३. अपां कोशवद्धारकम् Sy. कोशमुदकस्याधारं मेघम् BB. कोशम्, मेघनामैतत् Ngh. 1.10.

४. शोभनदाना मरुतः Sy. शोभनहविषां दातारः BB.

५. दातारः D. ऋत्विजः BB.

६. हविर्दत्तवते यजमानाय Sy. हविषां दात्रे । तादर्थ्ये चतुर्थी यजमानार्थम् BB.

७. अन्तरिक्षात् Sy. यद्वा दिव आदित्याद् गृहीतं रश्मिषु नरो नेतारो मरुतश्च्यावयन्ति BB.

८. ०कार्ते P. ततः कोशात् पर्जन्याः BB.

९. मेघम् Sy. उदकम् BB.

१०. विमोक्षयन्ति Sy. मुञ्चन्ति BB.

११. द्यावापृथिव्यौ Sy., BB.

१२. सर्वत्र गच्छतोदकेन सह Sy. विसर्जनानन्तरं धन्वनाऽनुदकेन देशेन । विभक्तिव्यत्ययो वा । निरुदके देशे BB.

१३. सर्वत्र व्याप्नुवन्ति Sy. नद्यो भूत्वा प्रवहन्ति BB. १४. वृष्टिप्रदा मरुतः Sy. वृष्टानि जलानि BB. १५. य P.

१६. व्रज० P. पृज० D.

१७. VM. ignores अनु ॥ अनु अनुसृत्य Sy. लक्षयित्वा BB.
This stanza=TS.2.4.8.1.

१८. रुजः P. निर्भिन्दन्तो मेघान् मरुतः Sy.

१९. स्यन्दमाना अपः Sy.

२०. उदकेन सह Sy.

२१. अन्तरिक्षम् Sy.

२२. पयः सिञ्चन्त्यो नवप्रसूता गावः Sy.

२३. किञ्च दृष्टान्तान्तरम् Sy.

२४. आशुगतयः Sy.

२५. यथा Sy.

२६. ०नो P. मनुष्याणामध्वविमोकाय सञ्चरन्ति तथेत्यर्थः Sy.

२७. नद्यः वि वर्तन्ते विविधं सञ्चरन्ति । अथवा प्रतिनिवृत्य वर्तन्ते । प्रवर्धन्त इत्यर्थः । तदेवं कुर्वन्तीति पूर्वत्रान्वयः Sy.

२८. एन्य इति नदीनाम Ngh. 1.13.

आ यात मरुतो दिव आन्तरिक्षादमादुत । माव स्थात परावतः ॥ ८ ॥

**आ यात** । आगच्छत[1] । मरुतः ! दिवः[2] । अन्तरिक्षात्[3] । च[4] । अमशब्दो[5] गृहवचन इति, इह[6] तु पृथिवीमाह । मा । अवतिष्ठत[7] । अधिगन्तव्यदूरदेशात्[8] ।

मा वो रसानितभा कुभा क्रुमुर्मा वः सिन्धुर्नि रीरमत् ।
मा वः परि ष्ठात्सरयुः पुरीषिण्यस्मे इत्सुम्नमस्तु वः ॥ ९ ॥

**मा वः**[9] । एताः सप्त नद्यः[10] । मा । युष्मान् । आत्मनि रमयन्तु[11] । परिष्ठात्[12] निरोधनाय[13] भवति । अस्मासु । एव[14] । युष्माकम् । सुखम्[15] । अस्तु ।

तं वः शर्धं रथानां त्वेषं गणं मारुतं नव्यसीनाम् ।
अनु प्र यन्ति वृष्टयः ॥ १० ॥

**तं वः शर्धम्** । तम्[16] । युष्माकम्[17] । रथानाम् । शर्धम्[18] । तथा भवताम् । दीप्तम् । गणं[19] च । नवतराणामपाम्[20] । वृष्टयः[21] । अनुगच्छन्ति[22][23] ।

---

१. ०तः P., D.
२. द्युलोकात् Sy.
३. ०क्षत् P. अन्तरिक्षाद् आयात Sy.
४. उत अपि च Sy.
५. मश० (cf. Ngh. 3. 4.) अस्माल्लोकादायात Sy.
६. ह P.
७. अपात० P. अवस्थितिं (मा) कुरुत Sy.
८. व्यं दूरदेशाद् P. गन्तव्यदूरदेशाः D. परावतः अत्यन्त दूरदेशात् । परावत इत्यत्रापि वा योज्यम् । दूरदेशे तत्र तत्र द्युलोकादौ Sy.
९. हे मरुतः ! Sy.
१०. रसा । नदीनामैतत् । 'रसा नदी भवति' । रसनवती शब्दवती । अनितभा इता प्राप्ता भा यस्याः सा इतभा । न तादृश्यनितभा । कुभा कुत्सितदीप्तिश्च । क्रुमुः सर्वत्र क्रमणः । सिन्धुः समुद्रश्च । पुरीषिणी पुरीषमुदकम्, तद्वती । सरयुरपि Sy. रसा नदी रसतेः शब्दकर्मणः N. 11. 25.
११. निकृष्टं रमतु Sy.
१२. परिष्टायत् P. वरिष्ठानात् D. परितस्तिष्ठतु मा निरुणद्धु Sy.
१३. ०या P.
१४. युष्माकं सम्बन्धि युष्मत्स्वभूतम् Sy.
१५. त्वदागमनजनितं सुखम् Sy.
१६. तं मारुतमित्यनेन सम्बध्यते Sy.
१७. युष्माकं प्रेरकम् Sy.
१८. बलम् Sy.
१९. गवं P. मारुतं गणं च स्तौमि । यद्वा रथानां रंहणशीलानां वो युष्माकं शर्धं परेषामभिभावुकं गणं स्तौमीत्येकमेव वाक्यम् Sy.
२०. नवरा० P., D. नूतनानाम् Sy.
२१. अथ परोक्षकृतः Sy.
२२. युष्मान्, प्रकर्षेण गच्छन्ति । यद्वा वर्षका मरुतोऽनु अनुकूलं प्रकृष्टं यन्ति गच्छन्ति Sy.
२३. VM. ignores प्र ॥ प्र प्रकर्षेण, प्रकृष्टम् Sy.

**शर्धंशर्धं व एषां व्रातंव्रातं गणंगणं सुशस्तिभिः । अनु क्रामेम धीतिभिः ॥ ११ ॥**

**शर्धंशर्धम् ।** मरुतः ! शर्धंशर्धम्[1], आगच्छन्ति । तथा व्रातंव्रातम्[2] । गणंगणं[3] च । एषाम् । युष्माकं तत्सर्वम् । अनुगच्छामः[4] । सुस्तोत्रैः[5] । कर्मभिः[6] ।

उत्तरा[7] निगदव्याख्याता—

**कस्मा अद्य सुजाताय रातहव्याय प्र ययुः । एना यामेन मरुतः ॥ १२ ॥**

[कस्मा अद्य][8]

**येन तोकाय तनयाय धान्यं बीजं वहध्वे अक्षितम् ।**
**अस्मभ्यं तद्धत्तन यद्व ईमहे राधो विश्वायु सौभगम् ॥ १३ ॥**

**येन तोकाय ।** येन[9] धनेन[10] । पुत्राय । तत्पुत्राय[11] । धान्यम् । तत्कारणं वीजं च । अक्षितम्[12] । वहध्वे[13] । अस्मभ्यम् । तत्[14] । धत्त । धनम् । यत् । वः[15] । याचामहे । सर्वगम्[16] । सुभगत्वावहम्[17] ।

**अतीयाम निदस्तिरः स्वस्तिभिर्हित्वावद्यमरातीः ।**
**वृष्ट्वी शं योरापं उस्रि भेषजं स्याम मरुतः सह ॥ १४ ॥**

**अतीयाम ।** अतिगच्छाम[18] । निन्दित्रीः[19] । अरातीः[20] । अवद्यम्[21] । हित्वा[22] । स्वस्तिभिः[23] । तिरस्कुर्वन्तः[24] ।

---

१. तत्तद्बलम् Sy.
२. अविवक्षितगणो व्रातः । तं तं व्रातम् Sy.
३. Omitted by P. तं तं सप्तसप्तसमुदायात्मकम् Sy.
४. ०मं P. अनुगच्छेम Sy.
५. सुप्तोस्तो० P., D., शोभनस्तुतिभिः Sy.
६. कर्मभिर्हविष्प्रदानादिलक्षणैः Sy.
७. ०र P.
८. The *pratīka* is supplied by the Editor. VM. does not explain the stanza.
अद्यास्मिन् दिने कस्मै सुजाताय रातहव्याय दत्तहविष्काय । प्र ययुः प्रकर्षेण गच्छेयुः । एना अनेन यामेन रथेन मरुतः Sy.
९. हे मरुतः ! Sy.
१०. सदयेन मनसा Sy.
११. तत्पुत्राय धनाय वा Sy.
१२. अक्षीणम् Sy.
१३. धारयध्वे तेन चित्तेन Sy.
१४. तत्तद् D. धान्यं बीजम् Sy.
१५. युष्मान् Sy.
१६. सर्वान्नोपेतम् कृत्स्नायुष्योपेतं वा Sy.
१७. सौभाग्यं च तद्धत्तनेति सम्बन्धः Sy.
१८. अतिक्रम्य गच्छेम तिरस्कुर्म इत्यर्थः । अनेनानिष्टपरिहारः प्रार्थित उत्तरेणेष्टप्राप्तिरुच्यते Sy.
१९. नन्दितीः P. निन्दकान् Sy.
२०. नन्दितीरातीः D. शत्रून् Sy.
२१. पापम् Sy.
२२. अद्यं हत्वा P. परित्यज्य Sy.
२३. क्षेमैः Sy.
२४. प्राप्तान् । यद्वा तिरोऽन्तर्हितम् Sy.

व्याप्य[1]। शम्[2]। योः[3]। उदकानि[4]। गोयुक्तम्[5]। अन्नं च सर्वदा। तैः सह[6]। स्यामावियुक्ताः[7] [8]।

**सुदे॒वः स॑महासति सु॒वीरो॒ नरो॒ मरुतः स मर्त्यः।**
**यं त्राय॑ध्वे॒ स्याम॒ ते ॥ १५ ॥**

**सुदेवः**। हे पूजामसत[9]? मरुद्गण! सः। मर्त्यः। शोभनदेवः[10]। भवति। बन्वदाह[11]? हे नरः[12]! मरुतः! स सुपुत्रश्च[13] भवति। यम्[14]। त्रायध्वे[15]। स्वं[16] च तादृशाः[17]। स्याम त्रातव्याः[18]।

**स्तु॒हि भो॒जान्स्तु॑व॒तो अ॒स्य याम॑नि॒ रण॒न्गावो॒ न यव॑से।**
**य॒तः पूर्वाँ॑इव॒ सखीँ॒रनु॑ ह्वय॒ गि॒रा गृ॑णी॒हि का॒मिनः॑ ॥ १६ ॥**

**स्तुहि भोजान्**[19]। स्तुहि। भोजयितॄन्[20]। स्तोतुर्मरुतः[21]। अस्य मरुद्गणस्य[22]। आगमने[23]। मरुतो रमन्ताम्[24]। गावः। इव। यवसे[25] त्वयि। गच्छतः[26]। प्रत्नानिव[27]। सखीन्। अनुक्रमेण। आह्वय[28]। वाचा[29]। स्तुहि च। कामिनः[30] [31]।

---

१. वृष्टिषु युष्मत्प्रेरितासु सतीषु Sy.
२. सुखम् Sy.
३. पापानां यावनम् Sy.
४. आपः उदकानि। शसः स्थाने जस् Sy.
५. भेषजम्। यद्यप्येतदुदकनाम (Ngh.1.12.) तथापि पृथगपामभिधानादत्र तद्धेतुकार्यमन्नमुच्यते। तत् सर्वम् Sy.
६. सह स्याम लभेमहि—वयम्। यद्वा आपो युष्मत्प्रेरिता उक्तं सर्वं कुर्वन्तु। वयं सर्वे सहैव स्याम भवेम युष्मत्स्वभूताः Sy.
७. ०क्ता P.
८. VM. ignores मरुतः।
९. प्रशस्तवचनः समहशब्दः। हे पूजित! मरुतां गण! Sy.
१०. कल्याणमरुत्संज्ञकदेवोपेतः Sy.
११. बहुवदाह is suggested for बन्वदाह।
१२. हे नेतारः! Sy.
१३. शोभनपुत्राद्युपेतश्च Sy.
१४. मर्त्यम् Sy.
१५. पालयध्वे Sy.
१६. वयम् is suggested for स्वम्।
१७. ०श P. ०दृत D. एवं भवति ते वयम् Sy.
१८. स्याम युष्मदीयाः Sy.
१९. हे ऋषे! Sy.
२०. ०तॄं P. दातॄन् मरुतः Sy.
२१. स्तुतिं कुर्वतः Sy.
२२. अस्य यजमानस्य Sy.
२३. यज्ञे Sy.
२४. गावो यथा रमन्ते तद्वन्मरुतोऽपि Sy.
२५. तृणादि भक्षणाय गच्छन्त्यः Sy.
२६. गच्छगच्छतः P. मरुतः Sy.
२७. पुरातनान् Sy.
२८. ह्वय D.
२९. स्तुत्या Sy.
३०. स्तुतीच्छावतो मरुतः Sy.
३१. Ms. D. puts the figure ॥५३॥ here to indicate the end of the fifty-third hymn. No such number is given in P.

V.54.

**प्र शर्धाय मारुताय स्वभानव इमां वाचमनजा पर्वतच्युते ।**
**घर्मस्तुभे दिव आ पृष्ठयज्वने द्युम्नश्रवसे महि नृम्णमर्चत ॥ १ ॥**

[१]**प्र शर्धाय ।** प्रगमय[२] । मारुताय[३] । वेगाय[४] । स्वदीप्तये[५] । स्तुतिम् । इमाम्[६] । मेघानां च्यावयित्रे[७] । यज्ञे[८] स्तोतव्याय । दिवः[९] । आगत्य । स्पृष्ठयजमानाय[१०] पृष्ठं स्पृशतेः । द्योतमानायान्नाय[११] । महत्[१२] । धनम्[१३] । प्रयच्छत[१४] ।

**प्र वो मरुतस्तविषा उदन्यवो वयोवृधो अश्वयुजः परिज्रयः ।**
**सं विद्युता दधति वाशति त्रितः स्वरन्त्यापोऽवना परिज्रयः ॥ २ ॥**

[१५]**प्र वो मरुतः ।** प्र स्वरन्ति प्रगमयन्ति[१६] । युष्माकम्[१७] । हे मरुतः ! महान्तः[१८] । उदकमिच्छन्तः[१९] । अन्नवृधः[२०] । अश्वैर्युक्ताः[२१] । परितो गन्तारो रथाः । सन्दधति[२२] चोदकानि । विद्युता सम्भृताश्च । पृथिव्याम्[२३] । विसृजन्ति[२४] । इति मध्येऽपां सन्धारणानन्तरं प्राक् विसर्गात् त्रिस्थान[२५] इन्द्रः । गर्जितशब्दं करोति[२६] । परितो गन्त्र्यः । आप[२७] इति[२८] ।

---

१. 'प्र शर्धाय' इति पञ्चदशर्चं दशमं सूक्तं श्यावाश्वस्यार्षं मरुद्देवताकम् । चतुर्दशी त्रिष्टुप्, शिष्टा जगत्यः । 'प्र शर्धाय पञ्चोना जागतमुपान्त्या त्रिष्टुप्' (KSA.27.54.p.20.) इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः । आग्नेन्द्रामारुत्यां प्रधानस्य याज्या । सूत्रितञ्च 'प्र शर्धाय मारुताय स्वभानव इत्यैन्द्रीमनूच्य मारुत्या यजेत्' (ĀSS. 2.11.) इति Sy.
२. प्र अनजेति सम्बन्धः । प्रापय Sy.
३. मरुत्सम्बन्धिने Sy.
४. बलाय Sy.
५. स्वायत्ततेजसे Sy.
६. क्रियमाणाम् Sy.
७. पर्वतस्य च्यावयित्रे Sy.
८. घर्मस्य स्तोभयित्रे Sy.
९. द्युलोकादागच्छते Sy.
१०. षट् पृष्ठैः रथन्तरबृहदादिभिरीजानाय Sy.
११. ०नांयान्नय P. द्योतमानान्नाय Sy.
१२. प्रभूतम् Sy.
१३. धनं हविर्लक्षणम् Sy.
१४. ०तः P., D. ददतेत्यर्थः Sy.
१५. कारीर्यां प्रथमस्याः पिण्ड्याः 'प्र वो मरुतः' इति याज्या । सूत्रितञ्च—'प्र वो मरुतस्तविषा आ यं नरः' (ĀSS. 2.13.) इति Sy.
१६. प्रादुर्भवन्ति Sy.
१७. युष्माकं गणाः Sy.
१८. महदन्तः P. दीप्ताः महान्तो वा Sy.
१९. उदकेच्छवः Sy.
२०. ०च्छतो वृधः P. जगद्रक्षणार्थमन्नस्य वर्धयितारः Sy.
२१. गमनाय रथेऽश्वानां योक्तारः Sy.
२२. सङ्गच्छन्ते Sy.
२३. भूमौ Sy.
२४. स्वरन्ति अधः पतन्ति Sy.
२५. त्रिषु स्थानेषु तायमानो मेघो मरुद्गणो वा Sy.
२६. शब्दयति । अस्मिन् पक्षे सङ्ग्वादोऽयम् Sy.
२७. गन्त्रीरप P. गन्त्रीरपि D.
२८. इव P.

**विद्युन्महसो नरो अश्मदिद्यवो वातत्विषो मरुतः पर्वतच्युतः ।**
**अब्दया चिन्मुहुरा ह्रादुनीवृतः स्तनयदमा रभसा उदोजसः ॥ ३ ॥**

**विद्युन्महसः**[1] । विद्योतमानतेजसः । होतारः[2] । व्याप्तायुधाः[3] । निश्चरत्तेजसः[4] । मरुतः[5] । पर्वत-च्युतः[6] । अपां दातारः[7] । च[8] । मुहुः । आगच्छन्ति । ह्रादुनेर्वर्तयितारः[9] । शब्दायमानगृहाः[10] । वेगवन्तः[11] । उद्भूतबलाः[12] । शरीरं गृहमिति[13] ।

**व्यक्तून्रुद्रा व्यहानि शिक्वसो व्यन्तरिक्षं वि रजांसि धूतयः ।**
**वि यदज्राँ अजथ नाव ईं यथा वि दुर्गाणि मरुतो नाह रिष्यथ ॥ ४ ॥**

**व्यक्तून्**[14] । व्यजथ[15] । रात्रीः[16] । हे रुद्राः[17] ! तथाऽहानि च[18] । हे शक्ताः[19] ! तथाऽन्तरिक्षम् । तथा सर्वा-नेव लोकान्[20] । हे कम्पयितारः[21] ! यदा यूयम् । अज्रान् वृक्षान्[22] । व्यजथ[23] । यथा[24] । इमानि उदकानि । नावः[25] । यदा च दुर्गाणि[26] । व्यजथ । तदानीं न[27] । एव[28] । श्रमेण जीर्णा भवथ[29] ।[30]

---

१. 'विद्युन्महसः' इति तृतीया करीयमिव द्वितीयस्याः पिण्डया याज्या । सूत्रितञ्च 'विद्युन्महसो नरोऽश्मदिद्यवः कृष्णं नियानं हरयः सुपर्णाः' (ĀSS. 2. 13.) इति Sy.

२. वृष्ट्यादेर्नेतारः Sy.

३. अश्मसारमयायुधा वा Sy.

४. प्राप्तदीप्तयः Sy.

५. मरुतो वृष्ट्यर्थं प्रादुर्भवन्तीत्यर्थः Sy.

६. पर्वतः P. ०तोच्यु० D. पर्वतानां मेघानां वा च्यावयितारः Sy.

७. अब्दया उदकानां दातारः । जसो याजादेशः Sy.

८. चिदिति पूरणः Sy.

९. प्रादुने वर्तयितयः P. प्रादु० D. ह्रादुन्या अशनेः प्रवर्तकाः Sy.

१०. ०मानयनगृ० P. अमाशब्दः साहित्यवाची । शब्दोपेतगणा इत्यर्थः Sy.

११. वेगन्तः P.
वृष्ट्यर्थमुद्युञ्जानाः Sy.

१२. ०तबाला P.
उद्धतबलाः Sy.

१३. The passage शरीरं गृहम् should immediately follow शब्दायमानगृहाः and precede वेगवन्तः।

१४. व्याक्तून् P. व्या० D.

१५. व्याजहा P. व्याजथा D. वि अजथ इत्युत्तरार्धगतेन सम्बध्यते । एवं सर्वत्र । क्षिपथेति तस्यार्थः Sy.

१६. रात्रिः P.

१७. हे रुद्रपुत्राः ! मरुतः ! Sy.

१८. अहानि अपि व्यजथ Sy.

१९. शक्ताः सर्वमपि कर्तुम् Sy.

२०. सर्वानिवोकान् P.

२१. हे कम्पकाः ! Sy.

२२. अभ्यान् P., D.
मेघान् Sy.

२३. गमयथ Sy.

२४. यथा तद्वत् Sy.

२५. समुद्रम् Sy.

२६. शत्रुनगराणि Sy.

२७. Omitted by P.

२८. इव D.

२९. ०थः P., D. (नैव) हिंसथ Sy.

३०. VM. ignores मरुतः ।

तद्वीर्यं वो मरुतो महित्वनं दीर्घं ततान सूर्यो न योजनम् ।
एता न यामे अगृभीतशोचिषोऽनश्वदां यन्न्ययातना गिरिम् ॥ ५ ॥

तद्वीर्यम् । तत्[1] । वीर्यम्[2] । युष्माकम् । हे मरुतः ! महत्वम्[3] । विस्तृतम्[4] । तनोति[5] । सूर्यः । इव । तेजः[6] । अश्वाः । इव । गमने[7] । अन्यैरगृहीतबलाः[8] । अश्वस्यादातारम्[9] । गिरम्[10] । यत्[11] । न्ययातन[12] पणिभिरपहृतानश्वानाहर्तुम् ।

अभ्राजि शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः ।
अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम् ॥ ६ ॥

अभ्राजि[13] । दीप्यते[14] । बलम्[15] । हे मरुतः ! यदा[16] । उदकं मेघस्थम्[17] । शनैः शनैर्मेघम्[18] । मोषथ[19] । यथा वृक्षमन्तर्जातिः[20][21]

१. प्रसिद्धम् Sy.
२. सामर्थ्यम् Sy.
३. ०त्वम् is suggested for ०त्वम् ।
४. अत्यन्तमायतम् Sy.
५. तनोति लोके Sy.
६. एतवर्णा देवानामश्वास्ते यथा Sy.
७. गमने योजनं दीर्घं तन्वन्ति तद्वदित्यपरो दृष्टान्तः Sy.
८. अगृहीततेजस्काः । यद्वैतन्मरुतां विशेषणम् । हे मरुतः ! यूयमगृभीतशोचिषः सन्तः Sy.
९. व्यापकोदकादातारं पणिभिरपहृतानामश्वानाम-प्रदातारं वा Sy.
१०. गिर P., D. गिरिम् is suggested for गिरम् ॥ मेघं पर्वतं वा Sy.
११. य P., D. यदा Sy.
१२. निहतवन्तः स्थ Sy.
१३. श्यावाश्वस्यात्रेयस्यार्षम् Dur.
१४. भ्राजते Sy; Dur.; SKN.
१५. भवतां गणम् Sy. तद्बलम् Dur. बलं युष्मदीयं सेनालक्षणम् SKN.
१६. यस्मात् Sy. तृतीयाया अत्र लुक् । येन बलेन Dur., SKN.
१७. ०कं मेघ० P. उदकवन्तम् Sy. मेघं वृद्धमुदक-पूर्णमनुप्रविश्य Dur. अर्ण उदकम् । सकारो मत्वर्थीयः । उदकवन्तम्, कम् ? सामर्थ्यान्मेघम् SKN.
१८. वृक्षम् । वृश्च्यते विदार्यत इति वृक्षो मेघः । तम् Sy. कथं पुनर्मोषथेति ? वृक्षम् Dur. कथमिव ? वृक्षम् SKN.
१९. मेघमोष P. ताडयथेत्यर्थः Sy. मुष्णीथ यूयं, निरुदकं कुरुतेत्यभिप्रायः Dur. मुष्णीथ, निरुदकं कुरुतेत्यर्थः SKN.
२०. इवेत्यनर्थकः । कम्पनाः सन्तः । यद्वा कपनाः क्रमयो वृक्षं घुणादयः । ते यथा मुष्णन्ति तद्वत् Sy. इव Dur.
२१. ०तं P., D. यथा वृक्षमनुप्रविश्य क्रिमयोऽन्त-र्गतं दारुचूर्णं रसं वा मुष्णन्ति, एवं यूयमुदकं मुष्णीथ....एवमत्र वृक्षसम्बन्धात् क्रिमयः कम्पनाः। ते हि वृक्षं मुष्णन्ति मोषयन्ति च कम्पयन्ति च यं खादन्ति। स्वयमेव वा कम्पन्ते चलनस्वाभाव्यात् Dur. कम्पना घुणक्रिमयस्ते वृक्षं यथा मुष्णन्ति निस्सारीकुर्वन्ति तद्वत् SKN.

कृमिर्मुष्णाति। हे विधातारः![1] ततः।[2] अस्मान्।[3] सङ्गता यूयम्।[4] पर्याप्तमतिमुदारम्।[5] नयत।[6] यथा[7] चक्षुः। यन्तम्।[8] शोभनमार्गम्।[9] अनुनयति।[10] [11]

**न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति।**
**नास्य राय उप दस्यन्ति नोतय ऋषिं वा यं राजानं वा सुषूदथ ॥ ७ ॥**

**न स जीयते।** न।[12] सः।[13] शत्रुभिर्जीयते।[14] हे मरुतः![15] न च। हन्यते।[16] न। क्षीणो[17] भवति। न। चलति।[18] न च।[19] हिंसितो[20] भवति। न। अस्य। धनानि।[21] उपदस्तानि[22] भवन्ति। न च।[23] रक्षणम्।[24] ऋषिम्।[25] वा। यम्। राजानम्। वा। सुष्ठु प्रेरयथ।[26]

---

१. हे वृष्टेर्विधातारः! Sy. वेधसो वेद्धारः।....अथवा हे वेधसो मेधाविनः! इति मरुद्विषयमेतत् सम्बोधनं स्यात् Dur. मेधाविनो य ईदृग्बलाः SKN.

२. अपि च Sy. यस्माद्यूयमेवमादिना प्रभावेण युक्ता अथैतस्मात् कारणात् Dur. अस्मात् SKN.

३. मामित्यर्थः Sy. अस्माकम् Dur.

४. ०तो P. युष्मासु परस्परं समानप्रीतयो यूयम् Sy. हे सजोषसः! सह प्रीताः! Dur. हे सजोषसः सम्प्रीताः परस्परतः SKN.

५. ०मदिमु० P. आरमणं धनादिकं प्रति Sy. एताम्....अलमतिं पर्याप्तमतिम्। परिसमाप्तविद्यं यजमानम् Dur. व्यत्ययेनैकवचनं बहुवचनस्य स्थाने। अरमतीननल्पमतीन् पर्याप्तज्ञानान् स्वर्गापवर्गप्राप्तावधिकृतानित्यर्थः SKN.

६. अनुक्रमेण नयथ Sy. यूयमप्यनुनेषथ.... गमनानुग्रहेऽस्य वर्तध्वमित्यभिप्रायः Dur. अनुरत्र धात्वर्थानुवादी। नयथ SKN

७. तत्र दृष्टान्तः। चक्षुरिव तद्यथा मार्गप्रदर्शनेन नायकं भवति तद्वत् Sy. कथं च पुनर्नेषथ? ....यथा गच्छतः पुरुषस्य चक्षुः Dur.

८. गच्छन्तम् Sy. स्वकृतेनैव कर्मणा विद्यया वा यान्तमितो लोकादमुं लोकम् Dur. गच्छन्तं मनुष्यं नयेत् तद्वत् SKN.

९. ०नं मा० D. सुगमनं मार्गम् Sy. शोभनगमनं स्थानम् Dur. सुखगमनं, यत्र वा गतानां सुखं भवति स सुगः स्वर्गो मोक्षो वा तम् SKN.

१०. गमनानुग्रहे वर्तते, एवमनुनेषथैनं ·सुगमिति Dur. यथा स्वेनैव यत्नेन पथि गच्छन्तं मनुष्यं पथि प्रदर्शनमात्रेण चक्षुर्नयत्येवं स्वीकृतेन कर्मणा स्वर्गं मोक्षं वा गच्छतोऽस्माननुग्रहमात्रक्रियया यूयं नयतेत्यर्थः SKN.

११. VM. ignores स्म ॥ स्मेति पूरणः Sy. स्मशब्दः पूरणः SKN. कपनाः कम्पनाः क्रिमयो भवन्ति N. 6. 4., SKN. II. 400.

१२. Omitted by P.

१३. ऋषी राजा वा Sy.

१४. अन्यैर्न पराभाव्यते। 'जि जये' 'ज्या वयोहानौ' इत्यस्य वा रूपम् Sy.

१५. हे मरुतः! यूयम् Sy.

१६. हिंस्यते अत्यर्थं प्राणैर्न वियुज्यते Sy.

१७. क्षीयते Sy.

१८. वलति P. पीड्यते Sy.

१९. Omitted by P.

२०. हिंस्यते। अत्र हिंसा बाधमात्रम् Sy.

२१. धागानि P.

२२. नोपक्षीयन्ते Sy.

२३. व P.

२४. रक्षा अप्युप दस्यन्ति Sy.

२५. ०क्षन्मृषी P. ०णमृषिं· D. मन्त्रद्रष्टारं ब्राह्मणम् Sy.

२६. क्षारयथ प्रेरयथ सत्कर्मसु Sy.

**नियुत्वन्तो ग्रामजितो यथा नरोऽर्यमणो न मरुतः कवन्धिनः ।
पिन्वन्त्युत्सं यदिनासो अस्वरन्व्युन्दन्ति पृथिवीं मध्वो अन्धसा ॥ ८ ॥**

नियुत्वन्तः[1] । अश्ववन्तः[2] । सङ्ग्रामजितः[3] । मनुष्याः[4] सहाश्वानधिष्ठाय[5] गच्छन्ति । उदाराः[6] । इव । मरुतः । उदकवन्तः[7] । पिन्वन्ति[8] । मेघम्[9] । यदि[10] । ईश्वराः । निर्गच्छन्ति[11] । व्युन्दन्ति । पृथिवीम् । उदकस्य[12] । अन्नेन[13] हेतुना[14] ।

**प्रवत्वतीयं पृथिवी मरुद्भ्यः प्रवत्वती द्यौर्भवति प्रयद्भ्यः ।
प्रवत्वतीः पथ्या अन्तरिक्ष्याः प्रवत्वन्तः पर्वता जीरदानवः ॥ ९ ॥**

प्रवत्वती । विस्तीर्णा[15] । इयम् । पृथिवी । भवति । मरुद्भ्यः[16] कामं सञ्चरणाय । द्यौश्च । गच्छद्भ्यः[17] । प्रवत्वन्तः[18] । अन्तरिक्षस्थाः[19] । मार्गाः[20] । पर्वताश्च[21] । क्षिप्रोदकदानाः[22] ।

---

१. कारीर्यमिव तृतीयस्याः पिण्ड्या याज्या 'नियुत्वन्तः' इत्येषा । सूत्रितञ्च—'नियुत्वन्तो ग्रामजितो यथा नरोऽग्ने बाधस्व वि मृधो वि दुर्गहा' (ĀŚS.2.13.) इति Sy.

२. नियुत्संज्ञकैरश्वैस्तद्वन्तो मरुतः । अयं शब्दोऽत्राश्वसामान्ये वर्तते । नितरां यवनवन्तोऽश्ववन्तः Sy.

३. ०मिजि० P., D. सङ्घात्मकस्य पदार्थस्य विश्लेषयितारः. . . .ग्रामजितः, ग्रामस्य जेतारः Sy.

४. नराकारा नेतारो वा । मरुतो नियुत्वन्तः । नर इव मनुष्या इव तथा भवन्ति Sy.

५. यथाश्वा० is suggested for सहाश्वा०

६. अर्यमप्रभृतय आदित्याः इव । दीप्ता इति शेषः । तादृशाः Sy.

७. उदकवन्तो भवन्ति Sy.

८. पिबन्ति D.

• प्याययन्त्युदकेन Sy.

९. कूपादिनिम्नप्रदेशं मेघं वा Sy.

१०. यदा Sy.

११. शब्दयन्ति यदा Sy.

१२. मधुरस्योदकस्य Sy.

१३. सारेण तदेवं भवति । यद्वा यदास्वरन् तदा पिन्वन्त्युत्समिनासः तदान्धसः पृथिवीं व्युन्दन्तीति Sy.

१४. VM. ignores यथा ।

१५. प्रवन्तः प्रकर्षवन्तो विस्तीर्णाः प्रदेशा यस्यां सा प्रवत्वती । तादृशी । कृत्स्नापि भूमिर्मरुत्परा भवतीत्यर्थः । तां सर्वामपि व्याप्नुवन्तीति यावत् Sy.

१६. मरुतामर्थाय Sy.

१७. गच्छभ्यः P. प्रकर्षेण गच्छद्भ्यस्तेभ्यः Sy.

१८. प्रवत्वती भवति। सापि मरुतां सञ्चाराय Sy.

१९. अन्तरिक्षे भवाः Sy.

२०. स्नुगतयोऽपि Sy.

२१. अद्रयो मेघा वा Sy.

२२. प्रवत्वन्तो भवन्ति क्षिप्रदाना मरुद्भ्यः Sy.

यन्म॑रुतः सभरसः स्वर्णरः सूर्य॒ उदि॑ते॒ मद॑था दि॒वो नरः ।
न वोऽश्वाः श्रथय॒न्ताह॒ सिस्र॑तः स॒द्यो अ॒स्याध्व॑नः पा॒रम॑श्नुथ ॥ १० ॥

**यन् मरुतः ।** यत्[1] । मरुतः[2] । सभाराः[3] । सर्वनराः[4] । सूर्ये । उदिते[5] यज्ञे । दिव[6] आगत्य । मदथ[7] । नेतारः[8] । ततो[9] युष्माकम् । अश्वा मार्गे । न । एव । श्रथयन्त[10] । मरन्तः । तदानीमेव । अस्य । अध्वनः[11] । पारम् । प्राप्नुथ[12] तैरिति ।

अं॒सेषु॑ व ऋ॒ष्टयः॑ प॒त्सु खा॒दयो॒ वक्षः॑सु रु॒क्मा म॑रुतो॒ रथे॒ शुभः॑ ।
अ॒ग्निभ्रा॑जसो वि॒द्युतो॒ गभ॑स्त्योः शि॒प्राः शी॒र्षसु॒ वित॑ता हि॒रण्ययीः॑ ॥ ११ ॥

**अंसेषु ।** अंसेषु । युष्माकम् । शक्तयो[13] भवन्ति । पत्सु[14] च । खादयः[15] । तथा वक्षःसु । रुक्माः[16] । हे मरुतः ! भवतां रथे वा । अलङ्काराः[17] । अग्निदीप्तयः[18] । विद्युतः । बाह्वोः[19] । शिप्राश्च[20] । हिरण्मय्यः[21] । शिरसस्त्राणाय[22] । वितताः[23] ।

तं नाक॑म॒र्यो अगृ॑भीतशोचिषं॒ रुश॒त्पिप्प॑लं मरुतो॒ वि धू॑नुथ ।
सम॑च्यन्त वृ॒जनाति॑त्विषन्त॒ यत्स्वर॑न्ति॒ घोषं॒ वित॑तमृता॒यवः॑ ॥ १२ ॥

**तं नाकम् ।** तम्[24] । आदित्यम्[25] । गन्तारः[26] । शत्रुभिरगृहीतबलम्[27] । हे मरुतः ! शुक्लम्[28] । उदकम् ।

---

१. यदा Sy.
२. हे मरुतः ! Sy.
३. ०रा P. सहबलाः Sy.
४. सर्वस्य नेतारो यूयम् Sy.
५. उद्गते मध्याह्ने Sy.
६. द्युलोकस्य Sy.
७. मा० P., D. यदा सोमेन मदथ Sy.
८. हे नेतारः ! यदा सोमं पातुमिच्छथेत्यर्थस्तदा Sy.
९. ०ता P.
१०. श्लथयन्ति Sy.
११. देवयजनमार्गस्य Sy.
१२. व्याप्नुथ । यद्वा यदा सोमेन मदथ तदा त्वदीया अश्वा न शिथिला भवन्ति । यूयं च कृत्स्नस्य लोकत्रयमार्गस्य पारमश्नुथ Sy.
१३. आयुधानि भासन्त इति शेषः Sy.
१४. वात्सु P. वाक्सु D.
१५. याद० D. कटकाः Sy.
१६. रुग्माः D. हाराः Sy.
१७. मधुराप्रुषा आपः Sy.
१८. अग्निदीप्ताः Sy.
१९. P. reads बलो बाह्वाः for बाह्वोः ॥ हस्तयोर्भासन्त इत्यर्थः Sy.
२०. ०प्राश्व P. उष्णीषमय्यः Sy.
२१. ०ण्मयः P. हिरण्यमय्यः Sy.
२२. ०सःस्त्रा० D. VM. seems to explain शीर्षसु as शिरसस्त्राणाय ॥ शिरःसु Sy.
२३. विस्तृताः । प्रतिवाक्यं वितता इति वा सम्बन्धनीयम् Sy.
२४. प्रसिद्धम् Sy.
२५. नास्मिन्नकमस्तीति नाकः Sy.
२६. गन्तारो यूयम् Sy.
२७. असुरैरनपहृततेजस्कं तम् Sy.
२८. शुभ्रवर्णम् Sy.

कम्पयथ[१]। अथ परोक्षः—सङ्गतानि[२] भवन्ति। बलानि। दीप्यन्ते[३] च। यदा। स्वरन्ति[४]। शब्दम्[५]। विततम्[६]। उदकमिच्छन्तः[७]।

**युष्मादत्तस्य मरुतो विचेतसो रायः स्याम रथ्यो३ वयस्वतः।**
**न यो युच्छति तिष्यो३ यथा दिवो३स्मे रारन्त मरुतः सहस्रिणम्॥ १३॥**

**युष्मादत्तस्य।** युष्माभिर्दत्तस्य[८]। हे मरुतः! सुमतयः[९]। धनस्य। अन्नवतः। रथिनः[१०]। स्याम[११] लभेम[१२] धनेन पूर्णं रथम्। न[१३]। यो रयिः[१४]। गच्छति[१५]। यथा। तिष्यः प्रज्वलितः[१६]। दिवो[१७] न पतति[१८] तं रयिम्[१९]। अस्मासु। रमयन्तु[२०]। सहस्रपशुम्[२१][२२]।

**यूयं रयिं मरुतः स्पार्हवीरं यूयमृषिमवथ सामविप्रम्।**
**यूयमर्वन्तं भरताय वाजं यूयं धत्थ राजानं श्रुष्टिमन्तम्॥ १४॥**

**यूयं रयिम्।** यूयम्। धनम्। मरुतः[२३]। स्पृहणीयवीरम्[२४]। धत्त[२५]। यूयम्। ऋषिम्। रक्षथ[२६]। सामविप्रं[२७] नाम। यूयम्[२८]। अश्वम्। भरताय राज्ञे[२९]। बलवन्तम्[३०]। तथा श्रुष्टिमन्तं[३१] च। राजानं[३२] धृतवन्तः[३३]।

---

१. विविधं चालयथ। अयं द्विकर्मकः Sy.
२. सङ्गता बलिनो भवथ। हविर्भिरस्मद्दत्तैरिति भावः Sy. ३. दीप्ता भवथ। उभयत्र पुरुषव्यत्ययः। यद्वा यदासुरा वृजना बलैः समच्यन्त अतित्विषन्त तदा Sy.
४. कुरुतेत्यर्थः Sy.
५. भयजनकं शब्दम् Sy.
६. विस्तृतम् Sy.
७. उदकमिच्छन्तो यूयम्। यद्वा उत्तरार्धं ऋत्विग्यजमानपरतया व्याख्येयः। यत् यदा ऋतायवो यज्ञकामाः यजमानादयो यदा समच्यन्त सङ्गता वृजना बलान्यतित्विषन्त च स्वरन्ति घोषं स्तोत्रं विततं तदानीं पिप्पलं वि धूनुथेति सम्बन्धः Sy.
८. ०भिः तस्य P. ०भि तस्य D.
९. हे विविधप्रज्ञाः Sy.
१०. रथिन P. रथस्वामिनो वयम् Sy.
११. भवेम स्वामिनः Sy.
१२. लभेमहि is suggested for लभेम।
१३. P. and D. add यः before न।
१४. युष्माभिर्दत्तो राः Sy.
१५. च्यवते Sy.
१६. आदित्यो न युच्छति Sy.
१७. या तिष्यं प्रज्वलिता P., D.
१८. दिवः सकाशात् Sy.
१९. पति P. २०. रमन्तु P. रमयत Sy.
२१. अपरिमितम् Sy.
२२. VM. ignores मरुतः।
२३. हे मरुतः! Sy.
२४. स्पृहणीयैर्वीरैः पुत्रभृत्यादिभिरुपेतम् Sy.
२५. दत्थ Sy. २६. रक्ष P. ररक्ष D.
२७. ०मपिवं P. ०विपं D. साम्नां विविधं प्रेरयितारम्। यद्वा सामसहिता विप्रा यस्य तादृशम् Sy.
२८. हे मरुतः! यूयम् Sy.
२९. देवान् बिभ्रते श्यावाश्वाय धत्थ Sy.
३०. अन्नं च Sy.
३१. सुखवन्तं पुत्रमित्यर्थः Sy.
३२. दीप्तं स्वामिनं वा Sy.
३३. धत्थ Sy.

तद्वो यामि द्रविणं सद्यऊतयो येना स्वर्ण ततनाम नृँरभि ।
इदं सु मे मरुतो हर्यता वचो यस्य तरेम तरसा शतं हिमाः ॥ १५ ॥

**तद्वो यामि** । तत् । युष्मान् । याचामि[1] । धनम् । हे क्षिप्रगन्तारः[2] ! येन[3] । आदित्यः[4] । इव[5] । मनुष्येषु[6] । विस्तृता भवाम[7] । इदम्[8] । सुष्ठु कामयत[9] । मरुतः ! मदीयम्[10] । वचनम्[11] । यस्य धनस्य[12] । बलेन । शतसंवत्सरान्[13] । तीर्णा[14] भवाम[15] ।

V.55.

प्रयज्यवो मरुतो भ्राजदृष्टयो बृहद्वयो दधिरे रुक्मवक्षसः ।
ईयन्ते अश्वैः सुयमेभिराशुभिः शुभं यातामनु रथा अवृत्सत ॥ १ ॥

**प्रयज्यवः**[16] । प्रकर्षेण[17] यष्टव्याः[18] । मरुतः । दीप्यमानशक्तयः[19] । बृहत्[20] । अन्नम्[21] । प्रयच्छन्ति[22] । रुक्मालङ्कृतवक्षसः[23] । गच्छन्ति[24] । अश्वैः । सुयमैः[25] । क्षिप्रैः[26] । कल्याणम्[27] । गच्छतो मरुतः[28] । अनुवर्तन्ते । रथाः ।

---

१. याचामहे Sy
२. तदानीमेव रक्षा येषां ते तादृशाः । सद्योगमनाः ! वा Sy.
३. धनेन Sy.
४. आदित्य इव रश्मीन् Sy.
५. रश्मीन् Sy.
६. नॄन् अस्मत्पुत्रभृत्यादीन् Sy.
७. ०त P. ततनाम Sy.
८. अदेदं P. इदानीं क्रियमाणम् Sy.
९. कामयध्वम् Sy.
१०. मम स्वभूतम् Sy.
११. स्तोत्रम् Sy.
१२. स्तोत्रवचसः Sy.
१३. शस P. VM. seems to explain शतं हिमाः together as शतसंवत्सरान् ॥ शतसङ्ख्याकान् हेमन्तान् Sy.
१४. शतसंवत्सरं जीवेमेत्यर्थः Sy.
१५. VM. ignores अभि ।
Ms. D. puts the figure ॥५४॥ here to indicate the end of the fifty-fourth hymn. No such number is given in P.
१६. 'प्रयज्यवः' इति दशर्चमेकादशं सूक्तं श्यावाश्वस्यार्षं मारुतम् । दशमी त्रिष्टुप्, शिष्टा जगत्यः । 'प्रयज्यवो दशान्त्या त्रिष्टुप्' (KSA. 27.55.p.20.) इत्यनुक्रमणिका । आभिप्लविके षष्ठेऽहन्याग्निमारुत इदं सूक्तं मारुतनिविद्धानीयम् । सूत्रितं च—'प्रयज्यव इमं स्तोममित्याग्निमारुतम्' (ĀSS. 7.7.) इति Sy.
१७. प्रयवः P., D.
१८. प्रकर्षेण यष्टारः Sy.
१९. दीप्तायुधाः Sy.
२०. प्रभूतम् Sy.
२१. यौवनलक्षणं प्रभूतमन्नं वा Sy.
२२. धारयन्ति Sy.
२३. रुक्मालं० D. हारायतवक्षस्काः । ते मरुतः Sy.
२४. प्राप्यन्ते Sy.
२५. सुखेन नियमितुं शक्यैः Sy.
२६. शीघ्रगैः Sy.
२७. शोभनं यथा भवति तथा । यद्वा उदकमभिलक्ष्य Sy.
२८. यातां गच्छतां मरुताम् Sy.

**स्वयं दधिध्वे तविषीं यथा विद बृहन्महान्त उर्विया वि राजथ ।**
**उतान्तरिक्षं ममिरे व्योजसा शुभं यातामनु रथा अवृत्सत ॥ २ ॥**

**स्वयं दधिध्वे**[1] । स्वयमेव[2] परानपेक्षं यूयं सङ्घीभूताः[3] । बलम्[4] । धारयथ[5] । यथा । प्रत्यक्षमहं वेद्मि[6] । तथा बृहन्तः । महान्तः[7] । विस्तीर्णतया[8] । विराजथ । अपि च । अन्तरिक्षम् । बलेनैते[9] । परिच्छिन्दन्ति[10] ।

**साकं जाताः सुभ्वः साकमुक्षिताः श्रिये चिदा प्रतरं वावृधुर्नरः ।**
**विरोकिणः सूर्यस्येव रश्मयः शुभं यातामनु रथा अवृत्सत ॥ ३ ॥**

**साकं जाताः** । आदित्या एकस्मिन्[11] काले । जाताः[12] । शोभनभवनाः[13] । साकम्[14] । च[15] । निषक्ताः[16] । श्र्यर्थम्[17] । च[18] । शीघ्रम्[19] । वृद्धास्त्वामन्[20] । नेतारः[21] । विरोचमानाः । सूर्यस्येव । रश्मय[22] आभरणैः[23] ।

**आभूषेण्यं वो मरुतो महित्वनं दिदृक्षेण्यं सूर्यस्येव चक्षणम् ।**
**उतो अस्माँ अमृतत्वे दधातन शुभं यातामनु रथा अवृत्सत ॥ ४ ॥**

**आभूषेण्यम्**[24] । स्तुतिभिराभूषणीयम्[25] । वः[26] । मरुतः ! महत्वम्[27] । दर्शनीयं च । सूर्यस्येव । तेजः[28] । अपि[29] च । अस्मान् । अमृतत्वे[30] । स्थापयथ[31] ।

---

१. हे मरुतः ! यूयम् Sy.
२. असहायेनैव Sy.
३. सखीभू० P.
४. बलं सामर्थ्यम् Sy.
५. धारयध्वे कुरुध्व इत्यर्थः Sy.
६. जानीथ । अप्रतिबद्धसामर्थ्या इत्यर्थः Sy.
७. हे महान्तः ! यूयम् Sy.
८. उरवः सन्तः Sy.
९. वाले० P., D.
१०. ०च्छ० D. व्याप्नुथ Sy.
११. सहैव Sy.
१२. उत्पन्नाः Sy.
१३. सुष्ठु भवन्तः । महान्त इत्यर्थः Sy.
१४. कं D.
१५. एव Sy.
१६. सेक्तारो वर्षकाः Sy.
१७. श्रियर्थं P., D. शोभायाः Sy.
१८. आ सर्वतः Sy.
१९. प्रकृष्टतरम् Sy.
२०. अवर्धयन् Sy.
२१. कर्मणां नेतारः Sy.
२२. सूर्यरश्मय इव Sy.
२३. अभ० D.
२४. ०भूष० D.
२५. ०तिराभू० P., D. स्तुत्यम् Sy.
२६. युष्माकम् Sy.
२७. ०त्त्वम् is suggested for ०त्वम् ।
२८. तेजोभिः P. तेजोभि D.
रूपमिव Sy.
२९. वि D.
३०. मोक्षे स्वर्गे इत्यर्थः Sy.
३१. ०यत P.

**उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।**
**न वो दस्रा उप दस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत ॥ ५ ॥**

**उदीरयथ**[1] । उद्गमयथ[2] । हे मरुतः[3] ! समुद्रतः[4] । यूयम् । वृष्टिम्[5] । वर्षयथ[6] मेघान् । उदकवन्तः[7] ! न[8] । युष्माकम्[9] । दर्शनीयाः[10] मेघरूपाः । धेनवः[11] । शुष्यन्ति[12] ।[13]

**यदश्वान्धूर्षु पृषतीरयुग्ध्वं हिरण्ययान्प्रत्यत्काँ अमुग्ध्वम् ।**
**विश्वा इत्स्पृधो मरुतो व्यस्यथ शुभं यातामनु रथा अवृत्सत ॥ ६ ॥**

**यदश्वान्**[14] । यथा[15] । अश्वान् । रथधूर्षु[16] । पृषतीश्च[17] । अयुग्ध्वम्[18] । यदा च हिरण्मयान्[19] । अत्कान् कवचान् अङ्गेषु प्रत्यमुग्ध्वम्[20] । तदनन्तरं[21] सर्वान् । एव[22] । शत्रून्[23] । मरुतः ! उत्क्षिपथ[24] ।

---

१. कारीर्यां प्रथमस्याः पिण्डयाः 'उदीरयथा' इत्यनुवाक्या । सूत्रितञ्च—'उदीरयथा मरुतः समुद्रतः प्र वो मरुतस्तविषा उदन्यवः' (ĀSS.2.13.) इति Sy.

२. ०दीय० D.

३. ०मनय० P. प्रेरयथ Sy. प्रेरयथ वृष्टिम् BB.

४. समुद्द्रवणसाधनादन्तरिक्षात् Sy. समुन्दनान्मेघात् BB.

५. वृष्टीः P. अयमेवार्थः पुनरुच्यते Sy.

६. ततो वर्षयथ पर्जन्यात् BB.

७. अयमेवार्थः पुनरुच्यते—हे पुरीषिणः ! पृणतेः प्रीणातेर्वा पुरीषमुदकम् । हे तद्वन्तः ! यूयम् Sy. हे पुरीषिण उदकवन्तः ! उदकेन हि सर्वं पूर्यते BB.

८. न हि BB.

९. वो युष्मदीयाः BB.

१०. शत्रुणामुपक्षपयितारो वा Sy. दंसनशीला दानशीला वा BB.

११. प्रीणयितारो मेघाः Sy. प्रीणनहेतवोऽपः BB.

१२. उपक्षीयन्ते....अतो वर्षयतेति BB.

१३. VM. ignores शुभम् । etc. रथा रंहणशीला यातां गतिं कालानुकूलप्रवृत्तां शुभं शोभाम् । सम्पदादिलक्षणः क्विप् । अनुवर्तध्वम् । यद्वा यातां गतिं शुभमनुवर्तध्वम् । सुष्ठु अविच्छेदं कुरुध्वम् । पूर्वप्रवृत्तमार्गं मा मुञ्चत । यस्मादिदानीमपि रंहणाः स्थ । तस्माच्छक्तत्वात् स्वभावो न त्याज्य इति BB.
This stanza=TS.2.4.8.2.

१४. हे मरुतः ! यूयम् Sy.

१५. यदा is suggested for यथा ।

१६. रथसम्बन्धिनीषु Sy.

१७. वृष० P. ०तीश्व D. पृषत्यो मरुतामित्युक्तत्वात् (Ngh. 1.15.) । पृषद्वर्णा वडवाः । सारङ्गी वात्राश्वशब्दवाच्या Sy.

१८. युद्धं P. अयुध्वं D.
योजितवन्तः स्थ Sy.

१९. हिरण्यवर्णान् Sy.

२०. ०मुध्वं P. प्रत्यमुञ्चत Sy.

२१. तदन्तरं P. एवं कृत्वा Sy.

२२. अपि Sy.

२३. सङ्ग्रामान् Sy.

२४. विक्षिपथ Sy.

न पर्वता न नद्यो वरन्त वो यत्राचिध्वं मरुतो गच्छथेदु तत् ।
उत द्यावापृथिवी याथना परि शुभं यातामनु रथा अवृत्सत ॥ ७ ॥

न पर्वताः । न । वारयन्ति[1] । पर्वताः[2] । नद्यश्च । युष्मान्[3] । यत्र[4] गन्तुम् । सङ्कल्पयथ[5] । तत्र[6] । गच्छथ । एव । हे मरुतः ! अपि च । द्यावापृथिवी च । परितः । गच्छथ[7][8] ।

यत्पूर्व्यं मरुतो यच्च नूतनं यदुद्यते वसवो यच्च शस्यते ।
विश्वस्य तस्य भवथा नवेदसः शुभं यातामनु रथा अवृत्सत ॥ ८ ॥

यत् पूर्व्यम् । यत् । प्रत्नं[9] भवतां कर्म । यत्[10] । च । नूतनम् । हे वासयितारः[11] ! यद् ऋग्भिः[12] । अभिधीयते[13] । यत् । च । शस्त्रैः शस्यते[14] । सर्वस्य[15] । तस्य[16] । भवथ । ज्ञातारः[17][18] ।

मृळत नो मरुतो मा वधिष्टनास्मभ्यं शर्म बहुलं वि यन्तन ।
अधि स्तोत्रस्य सख्यस्य गातन शुभं यातामनु रथा अवृत्सत ॥ ९ ॥

मृळत[19] । सुखयत । अस्मान् । मरुतः ! मा च[20] । हत । अस्मभ्यम्[21] । सुखम् । बहुलम्[22] । विविधं[23] यच्छत । अधिगच्छत[24] च[25] । स्तोत्रम् । सख्यं च ।

यूयमस्मान्नयत वस्यो अच्छा निरंहतिभ्यो मरुतो गृणानाः ।
जुषध्वं नो हव्यदातिं यजत्रा वयं स्याम पतयो रयीणाम् ॥ १० ॥

यूयम् । यूयम् । अस्मान् । अभिनयत[26] । अभ्युदयम्[27] । प्रति । पापेभ्यः[28] । निर्नयत[29] । मरुतः !

---

१. पार० D. वारयन्तु Sy.
२. शिलोच्चयाः Sy. ३. ष्माकन् P.
४. यज्ञादिस्थाने Sy.
५. संकंप० P. जानीथ सङ्कल्पयथ Sy.
६. तत्स्थानम् Sy.
७. ०थः P. याथ वृष्टचर्यमिति Sy.
८. VM. ignores न । उ and शुभं etc.
९. पूर्वतनं पूर्वमनुष्ठितम् Sy.
१०. कर्मास्ति तदित्यर्थः Sy.
११. वास वास० P., D. हे वासकाः ! Sy.
१२. ऋभिः P.
१३. ऊर्ध्वं प्राप्यते स्तूयत इत्यर्थः Sy.
१४. शंसनं क्रियते Sy. १५. उक्तस्य Sy.
१६. Omitted by P. १७. जानन्तः Sy.
१८. VM. ignores मरुतः and शुभं etc.
१९. ०तः P.
२०. असम्यक्करणादिजनितेन कोपेन मा वधिध्वम् Sy. २१. हातस्म० P.
२२. ०हु० D. अत्यधिकम् Sy.
२३. P. reads विविधं बहुलं for बहुलम् । विविधम् ॥ कुरुत Sy. २४. स्तुतिमनुभूयास्मासु सख्यं कुरुतेत्यर्थः Sy. २५. व P.
२६. अभियत P. अभिलक्ष्य प्रापयत Sy.
२७. वस्यः वसीयो धनं स्वर्गादिलक्षणं स्थानं वा Sy.
२८. ०भ्य P. किञ्च पापेभ्यः Sy.
२९. निर्न्नमय P. निर्नमयत D. निर्गमयत Sy.

स्तूयमानाः[1] ! सेवध्वं च । नः[2] । हविषां दानम्[3] । हे यष्टव्याः[4] ! वयमिति गतम्[5] ।

V.56.

**अग्ने शर्धन्तमा गणं पिष्टं रुक्मेभिरञ्जिभिः ।**
**विशो अद्य मरुतामव ह्वये दिवश्चिद्रोचनादधि ॥ १ ॥**

**अग्ने[6]** । अग्ने ! वेगमनुतिष्ठन्तम्[7] । आभिमुख्येन[8] । दिवोऽवह्वयामि[9] । गणम्[10] । पिष्टम्[11] अलिप्तम् रुग्ममयैः[12] । आभरणैः । अस्मिन्नहनि[13] । दिवः[14] । रोचमाना[15] । मनुष्या[16] वयमिति[17] ?[18] ।

**यथा चिन्मन्यसे हृदा तदिन्मे जग्मुराशसः ।**
**ये ते नेदिष्ठं हवनान्यागमन्तान्वर्ध भीमसंदृशः ॥ २ ॥**

**यथा चित्** । अग्ने ! त्वम् । यथा[19] । पूजयसि[20] मरुतः । हृदयेन तथा । तदा[21] । एव । मे[22] । गच्छन्तु मरुतः । आशसनीयाः[23] । ये[24] । तव । समीपम्[25] । हवींषि[26] च । आगच्छन्ति । तान् । वर्धय[27] । भीमरूपान्[28] ।[29]

---

१. गृणानाः स्तूयमानाः । कर्मणि कर्तृप्रत्ययः Sy.
२. अस्माकम् Sy.
३. हविर्दानवन्तं यज्ञम् Sy.
४. हे यष्टव्याः ! यूयम् Sy.
५. VM. ignores वयम् । स्याम । पतयः । रयीणाम् ॥ वयं च रयीणां बहुविधानां धनानां पतयः स्याम भवेम Sy.
Ms. D. puts the figure ॥५५॥ here to indicate the end of the fifty-fifth hymn. No such number is given in P.
६. 'अग्ने शर्धन्तम्' इति नवर्चं द्वादशं सूक्तं श्यावाश्वस्यार्षं मारुतम् । तृतीयासप्तम्यौ सतोबृहत्यौ शिष्टा बृहत्यः । 'अग्ने नव बार्हतं तृतीयासप्तम्यौ सतोबृहत्यौ' (KSA.27.56.p.21.) इत्यनुक्रमणिका Sy.
७. शत्रूनभिभवन्तं यज्ञायोत्सहमानं वा Sy.
८. आह्वयेति शेषः Sy.
९. ०ह्वामि P. अवस्तादस्मदभिमुखं ह्वये आह्वयामि Sy.
१०. मरुतां गणम् Sy.
११. अवयवितम्, युक्तमित्यर्थः Sy.
१२. रुक्म० is suggested for रुग्म० ॥ रुक्मैः रोचमानैः Sy.
१३. अस्मिन् यागदिने Sy.
१४. द्युलोकात् Sy.
१५. ०मानात् is suggested for ०माना ।
१६. प्रजाः । गणानित्यर्थः Sy.
१७. यमि० P.
१८. VM. ignores मरुताम् । चित् and अधि ॥ अधीति पञ्चम्यर्थानुवादी । चित् पूरणः Sy.
१९. येन प्रकारेण Sy.
२०. अतिपूजितं जानासि । तेष्वादरं करोषीत्यर्थः Sy.
२१. तथा Sy.
२२. मदर्थम् Sy.
२३. ०शंस० is suggested for ०शस० ॥ आशंसितारं इच्छन्तः शत्रून् हिंसन्तो वा Sy.
२४. अनन्तरं ये मरुतः Sy.
२५. अत्यन्तान्तिकं सन्निधावेव Sy.
२६. आह्वानानि श्रुत्वा Sy.
२७. वर्धय हविष्प्रापणेन Sy.
२८. कालविलम्बासहनेन भयङ्करदर्शनान् Sy.
२९. VM. ignores चित् ॥ चिद् इति पूजायाम् Sy.

मीळ्हुष्मतीव पृथिवी पराहता मदन्त्येत्यस्मदा ।
ऋक्षो न वो मरुतः शिमीवाँ अमो दुध्रो गौरिव भीमयुः ॥ ३ ॥

मीळ्हुष्मतीव[1] । भर्तृमतीव स्त्री[2] । भवद्भिः पराहता[3] । पृथिवी[4] । माद्यन्ती[5] । आगच्छति । अस्मान् मन्यपूर्णा[6] । हे मरुतः ! भवताम्[7] । बलम्[8] । ऋक्षः[9] । इव भयङ्करम् । उत्क्षेपणकर्मवत्[10] । दुर्धरं[11] च । गौरिव[12] । भीमयुः[13] भययुक्तो भयङ्कर ऋषभ इव ।

नि ये रिणन्त्योजसा वृथा गावो न दुर्धुरः ।
अश्मानं चित्स्वर्यं पर्वतं गिरिं प्र च्यावयन्ति यामभिः ॥ ४ ॥

नि ये । निगच्छन्ति[14] । ये[15] । बलेन[16] । अनायासेन[17] । बलीवर्दाः[18] । इव । दुर्धुरः[19], ये युक्ता धुर उत्क्षिपन्ति ते दुर्धुर[20] उच्यन्ते ते । व्याप्तम् । स्वरणकुशलम्[21] । मेघम्[22] । गिलोच्चयम्[23] । च । प्रच्यावयन्ति[24] । गमनैः ।

उत्तिष्ठ नूनमेषां स्तोमैः समुक्षितानाम् ।
मरुतां पुरुतममपूर्व्यं गवां सर्गमिव ह्वये ॥ ५ ॥

उत्तिष्ठ[25] । उत्तिष्ठ[26] । क्षिप्रम्[27], आसीनेति समीपस्थामाह[28] । स्तोमैः[29] । संसिक्तानाम्[30] । एषाम्[31] ।

---

१. मीह्लुषः P. मीह्लुः D.
२. प्रबलस्वामिका Sy.
३. अन्यैरभिभूता Sy.
४. अत्र पृथिवीशब्दस्तदधिष्ठितां प्रजां लक्षयति । सा यथा स्वस्वामिनमुपद्रुताभिगच्छति तद्वदिति । मरुतां साकल्येन सर्वथा प्राप्तेर्दृष्टान्तः Sy.
५. हृष्यन्ती मरुत्सेना Sy.
६. ०र्णं P., D.
७. युष्माकम् Sy.
८. बलं गणः Sy.
९. अग्निः Sy.
१०. कर्मवान् Sy.
११. उक्षेपणकर्म दर्ध० P. दुर्धरः Sy.
१२. गो० P.
१३. भीमैर्वृषभैर्युक्तो गौरिव स यथा शिमीवान् कर्मवान् Sy.
१४. हिंसन्ति शत्रून् Sy.
१५. मरुतः Sy.
१६. स्वीयेन बलेन Sy.
१७. स्वसञ्चारमात्रेण Sy.
१८. बलि० P. गावः Sy.
१९. दुर्धरः P. दुःखेन हिंस्या अश्वा इव ते मरुतः Sy.
२०. दुर्धरः P., D.
२१. शब्दयन्तम् Sy.
२२. जगत्पूरकोदकवन्तम् । 'पर्ववान् पर्वतः । पर्व पुनः पृणातेः प्रीणातेर्वा' (N.1.20.) इति निरुक्तम् । तादृशम् Sy.
२३. मेघम् । यद्वा पर्वतमिति विशेष्यं गिरिमिति विशेषणम् । निगिरत्युदकमिति गिरिः । तम् Sy.
२४. प्रच्यावयन्ति उदकनिर्गमनार्थम् Sy.
२५. ०ष्ठः P.
२६. हे मरुतः ! यूयम् Sy.
२७. उत्तिष्ठत । व्यत्ययेनैकवचनम् Sy.
२८. निश्चयम् Sy.
२९. ०मह P.
३०. स्तोत्रैः । यद्वा स्तोमैरुपह्वय इति सम्बन्धः Sy.
३१. वर्धितानाम् Sy.

मरुताम्[१] । बहुतमम्[२] । नूतनं[३] गणम् । गवामिव[४] । सङ्घम् । आह्वयामि[५] ।

**युङ्ग्ध्वं ह्यरुषी रथे युङ्ग्ध्वं रथेषु रोहितः ।**
**युङ्ग्ध्वं हरी अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ॥ ६ ॥**

**युङ्ग्ध्वम्**[६] । युङ्ग्ध्वम्[७] । आरोचमाना[८] वडवाः । रथे[९] । रोहितवर्णाश्च[१०] । युङ्ग्ध्वं[११] च । अश्वौ[१२] । गमनशीलौ[१३] । धुरि[१४] । वहनाय । वोढृतमौ[१५][१६] ।

**उत स्य वाज्यरुषस्तुविष्वणिरिह स्म धायि दर्शतः ।**
**मा वो यामेषु मरुतश्चिरं करत्प्र तं रथेषु चोदत ॥ ७ ॥**

**उत स्य** । अपि च । सः । अश्वः[१७] । आरोचमानः । बहुशब्दः[१८] । इह[१९] धुरि । निधीयताम्[२०] । दर्शनीयः[२१] । मा । युष्माकम् । यामेषु[२२] । स[२३] वाजी कालदैर्घ्यम्[२४] । करोतु । तदर्थं तम्[२५] । रथेषु[२६] । प्रचोदत[२७] युङ्ग्ध्वमिति[२८] ।[२९]

---

१. तादृशां मरुताम् Sy.
२. ०तम P. प्रभूततमम् Sy.
३. न विद्यते पूर्वो येभ्यस्तमपूर्व्यम् Sy.
४. उदकानां प्रसिद्धानां गवां वा Sy.
५. आह्वये Sy.
६. युङ्ध्वं P., D.
 योजयध्वम् Sy.
७. हे मरुतः ! यूयम् Sy.
८. युङ्ध्वं P., D. योजयध्वम् Sy.
९. वधव P. वधब D.
१०. युष्मदीये । सर्वेषां साधारणभूते Sy.
११. होतितवर्णाश्व P. ०र्णाश्व D.
१२. श्वो P. अश्वो D.
१३. अजिरावाशुगमनौ Sy.
१४. ०लो P., D.
१५. अश्वौ Sy.
१६. VM. ignores हि and explains रथेषु । धुरि । युङ्ध्वम् and वोळ्हवे once only.
 तथा रथेषु युष्मदीयेषु । आदरार्थं पुनर्वचनम् Sy.
१७. वेजनवान् Sy.
१८. प्रभूतध्वनिरश्वः । अरुष इत्यनेन रोहित इत्युक्तं भवति। 'प्रष्टिर्वहति रोहितः' (RV.I. 39.6.) इति ह्युक्तम् Sy.
१९. इदानीम् Sy.
२०. ०ता P. रथे नियोजितः Sy.
२१. दृशनिश P. दर्शनीयः सन् Sy.
२२. गमनेषु Sy.
२३. अश्वः Sy.
२४. विलम्बम् Sy.
२५. त P., D.
२६. रथे युक्तमिति शेषः Sy.
२७. प्रयोदक P. प्रेरयत । यथा विलम्बं न कुर्यात्तथा प्रेरयत Sy.
२८. युङ्ध्व० P., D.
२९. VM. ignores स्म ॥ स्म इति पूरणः Sy.

**रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।**
**आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥ ८ ॥**

**रथम्**[1] । रथम्[2] । क्षिप्रम्[3] । मारुतम्[4] । वयम्[5] । स्तोतॄणामन्नेच्छम्[6] । आह्वयामः[7] । आतिष्ठति[8] । यस्मिन्[9] । सुरमणीयानि[10] धनान्युदकानि वा[11] । धारयन्ती[12] । सह[13] । मरुत्सु[14] । रुद्रस्य पत्नी[15] मरुतां माता[16] ।[17]

**तं वः शर्धं रथेशुभं त्वेषं पनस्युमा हुवे ।**
**यस्मिन्त्सुजाता सुभगा महीयते सचा मरुत्सु मीळ्हुषी ॥ ९ ॥**

**तं वः शर्धम्**[18] । तम्[19] । वः[20] । वेगम्[21] । रथे शोभमानम्[22] । दीप्तम्[23] । स्तुतिकामम्[24] । आह्वयामि[25] । यस्मिन्[26] । शोभनजनना[27] । सुधना[28] । स्तूयते[29] । सह । मरुत्सु स्थिता । मीळ्हुषः पत्नी[30] । निरुक्तं द्रष्टव्यम्[31] ।[32]

---

१. Omitted by P. श्यावाश्वस्यार्षम् Dur. श्यावाश्वस्य SKN.
२. रंहणस्वभावम् Sy. रंहतेर्गतिकर्मणो रथस्तं मेघम् SKN. ३. ०प्र P. नु अद्य Sy. स्तोता ब्रवीति नु क्षिप्रम् Dur.
४. मरुतां सम्बन्धिनं रथम् Sy. मरुत्संयुक्तम् Dur. मरुतां सम्बन्धिनम् SKN.
५. आत्रेयाः Sy.
६. यशस्विनम् Dur. तेन सम्बन्धेन घनकलकललक्षणेन....श्रवस्युं श्रवणीयम् SKN.
७. आह्वयः P. 'ह्वः सम्प्रसारणम्' बाहुलकेन गुणाभावेन । तत उवङ् । आह्वयामहे SKN.
८. आस्थितवती तं रथमाहुवे Sy. यस्मिन् किमिति? ....यस्मिन्नातिष्ठति Dur. आ तस्थाविति सम्बन्धः....आभिमुख्येन तिष्ठति SKN.
९. रथे Sy., SKN. रंहणे गमने Dur.
१०. सर० P. सुष्ठु रमणीयानि Dur., SKN.
११. सकान्यु० P. धकान्यु० D.
१२. जलानि Sy. कानि ? सामर्थ्यादुदकानि Dur., SKN.
१३. धारयन्त्यातिष्ठतीति । तं वयं मेघं रथमाह्वयामहे वर्षार्थम् Dur. १४. सहिता Sy.
१५. सहिता मरुद्भिः Dur. सप्तमी तृतीयार्थे । मरुद्भिः सह SKN.
१६. यद्वा रुद्रो वायुः । तत्पत्नी माध्यमिका देवी Sy. का ? रोदसी रुद्रस्य पत्नी माध्यमिका वाक् । अध्यायपरिसमाप्तिसूचनार्थः द्विरुक्तिरिति सिद्धम् SKN.
१७. रथं क्षिप्रं मारुतं (मेघं) वयं श्रवणीयमाह्वयामहे । आ यस्मिंस्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी ॥ N.11.50., SKN.IV.95. १८. त P.
१९. हे मरुतः ! Sy. २०. शर्धम् Sy.
२१. तपः P. युष्मदीयम् Sy.
२२. बलं गणम् Sy.
२३. शोभनमान P. रथे शोभनम् Sy.
२४. स्तुत्यम् Sy. २५. आह्वये Sy.
२६. शर्धे Sy. २७. सुष्ठु प्रवृद्धा Sy.
२८. शोभनभाग्यातिमहती Sy.
२९. पूज्यते तं शर्धमाहुवे Sy.
३०. 'मीळ्हुष्टम शिवतम' इत्यादौ दर्शनान्मीढ्वान् रुद्रःतत्पत्नी मीळ्हुषी । आपस्तम्बोऽपि रुद्रपत्नीं मीळ्हुषीसंज्ञया व्याजहार—'उत्तरया दक्षिणस्यामीशानमावाहयति लौकिक्या वाचोत्तरस्यां मीळ्हुषीं मध्ये जयन्तम्' (AGS.20.1.3.) इति Sy. ३१. The stanza is not found in the N. I wonder if the words निरुक्तं द्रष्टव्यम् are misplaced and originally were put after मरुतां माता in stanza no. 8.
३२. Ms. D. puts the figure ॥५६॥ here to indicate the end of the fifty-sixth hymn. No such number is given in P.

V.57.

**आ रु॒द्रास॒ इन्द्र॑वन्तः स॒जोष॑सो॒ हिर॑ण्यरथाः सुवि॒ताय॑ गन्तन ।**
**इ॒यं वो॑ अ॒स्मत्प्रति॑ हर्यते म॒तिस्तृ॒ष्णजे॒ न दि॒व उत्सा॑ उद॒न्यवे॑ ॥ १ ॥**

आ रुद्रासः[1] । आगच्छत । रुद्रपुत्राः ! इन्द्रेण सहिताः[2] । सङ्गताः[3] । हिरण्मयरथाः[4] । सुप्रसूताय कर्मणे[5] । युष्मान्[6] । अस्मदीया । इयम्[7] । स्तुतिः । प्रतिकामयते[8] । यथा । तृष्णजे तृष्णा जाता यस्य तस्मै[9] । उदकमिच्छते[10] । दिवः[11] । मेघा[12] आगच्छन्ति तद्वदागच्छतेति ।

**वाशी॑मन्त ऋष्टि॒मन्तो॑ मनी॒षिण॑ः सु॒धन्वा॑न॒ इषु॑मन्तो निष॒ङ्गिण॑ः ।**
**स्वश्वाः॑ स्थ सु॒रथा॑ः पृश्निमातरः स्वायु॒धा म॑रुतो याथना॒ शुभ॑म् ॥ २ ॥**

वाशीमन्तः[13] । वास्यायुधयुक्ताः[14] । शक्तिमन्तः[15] । प्रज्ञाः[16] । शोभनधनुष्काः । इषुमन्तः[17] । इषुधिमन्तः[18] । स्वश्वाः[19] । स्थ[20] । सुरथाः[21] । हे गोमातरः[22] ! इत्थम् । स्वायुधाः[23] । यूयम्[24] । गच्छथ[25] । कल्याणम्[26] ।

---

१. पञ्चमेऽनुवाके षोडश सूक्तानि। तत्र 'आ रुद्रासः' इत्यष्टर्चं प्रथमं सूक्तं श्यावाश्वस्यार्षं मारुतम् । सप्तम्यष्टम्यौ त्रिष्टुभौ शिष्टाः षट् जगत्यः । 'आ रुद्रासोऽष्टौ त्रिष्टुबन्तम्' (KSA.27.57. p.21.) इत्यनुक्रमणिका । विनियोगो लैङ्गिकः Sy.

२. इन्द्रेण युष्मत्स्वामिना तद्वन्तः Sy.

३. परस्परं समानप्रीतयः Sy.

४. हिरण्यमयरथाः सन्तः Sy.

५. सुगमनाय तत्साधनाय सुष्ठु सर्वैर्गन्तव्याय यज्ञाय तदर्थम् Sy.

६. ०ष्मद् P.

७. किमत्र विद्यते ? इति तदुच्यते इयमिति Sy.

८. तस्मादागच्छत Sy.

९. तस्य D. गोतमाय Sy.

१०. उदकेच्छवे Sy.

११. द्युलोकसकाशात् Sy.

१२. उत्सा उदकनिष्यन्दा यथा युष्माभिः प्रेरितास्तद्वदस्मदर्थमप्यागत्याभिमतं ददतेत्यर्थः Sy.

१३. हे मरुतः ! यूयम् Sy.

१४. वाशीति तक्षणसाधनमायुधम् । तद्वन्तः स्थ Sy.

१५. ऋष्टिर्नाम छुरिका तद्वन्तः स्थ, एवं सर्वत्र योज्यम् Sy.

१६. मनस ईश्वरा मनस्विनः Sy.

१७. ०मन्तः is suggested for ०मन्त ॥ बाणवन्तः Sy.

१८. निषङ्गवन्तः Sy.

१९. स्वश्वास्वस्व P. शोभनाश्वा भवथ Sy.

२०. भवथ Sy.

२१. शोभनरथाः Sy.

२२. पृश्नेः पुत्राः Sy.

२३. सायु० P. खड्गपरश्वादिसकलायुधोपेताः। एवं महात्मानः सन्तः Sy.

२४. यूयम् seems to be the explanation of मरुतः ।

२५. गच्छ P. रथेन गच्छथ Sy.

२६. शोभनं यथा भवति तथा शुभमुदकाय वा Sy.

धूनुथ द्यां पर्वतान्दाशुषे वसु नि वो वना जिहते यामनो भिया ।
कोपयथ पृथिवीं पृश्निमातरः शुभे यदुग्राः पृषतीरयुग्ध्वम् ॥ ३ ॥

धूनुथ[1] । कम्पयथ[2] । दिवम्[3] । मेघांश्च[4] । यजमानाय[5] । धनम्[6] । तथा युष्माकम् । गमनात्[7] । भयेन[8] । वृक्षाः[9] । निजहते[10] नीचीनं[11] गच्छन्ति । कोपयथ[12] । पृथिवीं वृक्षयुक्ताम् । गोमातरः[13] ! उदकाय[14] । यदा । उग्राः[15] । पृषतीः[16] । अयुग्ध्वम्[17] ।

वातत्विषो मरुतो वर्षनिर्णिजो यमाइव सुसदृशः सुपेशसः ।
पिशङ्गाश्वा अरुणाश्वा अरेपसः प्रत्वक्षसो महिना द्यौरिवोरवः ॥ ४ ॥

वातत्विषः[18] । निर्गच्छद्दीप्तयः[19] । मरुतः[20] । वर्षरूपाः[21] । यमलजाता इव[22] । अत्यन्तं सदृशाः[23] । सुरूपाः[24] । तेषु केचित् पिशङ्गाश्वाः[25] । केचिदरुणाश्वाः । अपापाः । प्रकर्षेण शत्रूणां तनूकर्तारः[26] । महत्त्वेन[27] । द्यौरिव[28] । विस्तीर्णा[29] ।

---

१. धूंनु० P.
२. हे मरुतः ! Sy.
३. प्रापयथ Sy.
४. दिवीत्यर्थः Sy.
५. हविर्दात्रे यजमानाय Sy.
६. धनानि च Sy.
७. गमनस्य Sy.
८. भीत्या Sy.
९. वनानि वृक्षादिसमूहाः Sy.
१०. निजिह० is suggested for निजह० ॥ नितरां कम्पन्ते अवनता भृशं शंसन्तीत्यर्थः Sy.
११. नियीनं P.
१२. अतिवृष्टया क्षोभयथ Sy.
१३. हे पृश्नेः पुत्राः ! 'पृश्न्यै वै पयसो मरुतो जाताः' (TS.2.2.11.8.) इति हि श्रुतिः Sy.
१४. उदकार्थम् Sy.
१५. ०ग्रा D. हे उद्गूर्णबलाः ! यूयम् Sy.
१६. वृष० P. युष्मदीया अश्वाः Sy.
१७. अयूयुग्ध्वम् P. योजयथ तदा कोपयथ पृथिवीम् Sy.
१८. पात० D.
१९. ०च्छन्ति दीप्तायः P. सर्वदा सम्प्राप्तदीप्तयः Sy.
२०. Omitted by P.
२१. वषरु० P. वृष्टेः शोधयितारः 'अथवा निर्णिगिति रूपनाम (Ngh. 3.7.1.) वर्षमेव रूपं येषां ते तादृशा वृष्टिप्रदा इत्यर्थः Sy.
२२. युगलोत्पन्ना इव Sy.
२३. परस्परबलरूपादिभिरत्यन्तं सरूपाः Sy.
२४. शोभनरूपाः Sy.
२५. विशगाः अश्वाः P. ०शंगा अश्वा D. पिशङ्गवर्णाश्वोपेताः Sy.
२६. प्रकृष्टं तनूकर्तारो द्वेष्टॄणाम् Sy.
२७. ०त्वेन is suggested for ०त्वेन ।
२८. अन्तरिक्षमिव Sy.
२९. ०र्णाः is suggested for ०र्णा ॥ विस्तीर्णाः। उक्तलक्षणा 'नाम भेजिरे' इत्युत्तरेण सम्बन्धः Sy.

पुरुद्रप्सा अञ्जिमन्तः सुदानवस्त्वेषसंदृशो अनवभ्रराधसः ।
सुजातासो जनुषा रुक्मवक्षसो दिवो अर्का अमृतं नाम भेजिरे ॥ ५ ॥

पुरुद्रप्साः । अनेकोदकबिन्दवः[1] । आभरणवन्तः । सुदानाः[2] । दीप्तसन्दर्शनाः[3] । अनपभ्रंशितयजमानधनाः[4] । जन्मनैव[5] । शोभनाः[6] । रुक्मालङ्कृतवक्षसः[7] । द्युलोकस्य[8] । अर्चनीयाः[9] । अमरणसाधनम् । उदकम्[10] । भजन्ते[11] ।

ऋष्टयो वो मरुतो अंसयोरधि सह ओजो बाह्वोर्वो बलं हितम् ।
नृम्णा शीर्षस्वायुधा रथेषु वो विश्वा वः श्रीरधि तनूषु पिपिशे ॥ ६ ॥

ऋष्टयः । युष्माकम् । अंसयोः । अधिहिताः[12] । ऋष्टयः[13] । तथा बाह्वोः[14] । सहः[15] । ओजः[16] । बलम् । इति त्रीणि निहितानि[17] तेषामल्पो भेदः[18] । शीर्षसु[19] । नृम्णानि निहितानि[20] नृम्णमिति[21] धननाम[22] हिरण्मयशिप्रा[23] हिता इत्यर्थः । रथेषु च । आयुधानि[24] । सर्वा[25] । युष्माकम् । अङ्गेषु[26] । श्रीः[27] । आश्लिष्टाभरणैरलङ्कृताना[28]-[29]मिति[30] ।[31]

---

१. प्रभूतोदकाः Sy.
२. शोभनदानाः Sy.
३. दीप्तरूपाः Sy.
४. आपभ्रंशितजनधनाधनाय P. अपभ्रंशितयजमानधनाधनाः D. अनवभ्रष्टधनाः Sy.
५. जन्मनैवोक्तरूपाः Sy.
६. ०न P. शोभनजननाः Sy.
७. लंकारव० P. हारवक्षस्काः Sy.
८. द्युलोकादागत्य Sy.
९. ०य P. पूज्या मरुतः Sy.
१०. उदकं नमनहेतुकमुक्तलक्षणं हविर्वा Sy.
११. लब्धवन्तः Sy.
१२. अधीति सप्तम्यर्थानुवादी । हिताः आश्रिताः । वक्ष्यमाणहितशब्दो विपरिणन्तव्यः Sy.
१३. आयुधविशेषाः Sy.
१४. अधि Sy.
१५. स P., D. शत्रूणामभिभावुकम् Sy.
१६. ओजो नामाष्टमो धातुः । तद्रूपम् Sy.
१७. निहितम् Sy.
१८. The passage तेषामल्पो भेदः refers to सहः, ओजः and बलम् ।
१९. शिरःसु Sy.
२०. हिरण्मयानि पट्टोष्णीषादीनि निहितानि Sy.
२१. P. reads ति only for निहितानि नृम्णमिति ।
२२. धनाम P. Ngh. 2.10.
२३. ०यः शि० P. ०यं शि० D.
२४. युद्धसाधनानि निहितानि Sy.
२५. सार्वा D.
२६. अङ्गेषु कामंगोषु P. तनूषु युष्मदीयेषु Sy.
२७. कान्तिः Sy.
२८. अधिष्ठिता आश्रिता Sy.
२९. ०ष्ट भ० P.
३०. The passage आभरणैरलङ्कृतानाम् should immediately follow युष्माकम् and precede अङ्गेषु ।
३१. VM. ignores मरुतः ।

गोम॑द॒श्वाव॒द्रथ॑वत्सु॒वीरं॑ च॒न्द्रव॒द्राधो॑ मरुतो ददा नः ।
प्रश॑स्तिं नः कृणुत रुद्रियासो भक्षी॒य वोऽव॑सो॒ दैव्य॑स्य ॥ ७ ॥

**गोमत्** । गवादियुक्तम्[1] । धनम्[2] । अस्मभ्यम् । मरुतः ! दत्त[3] चन्द्रं[4] हिरण्यम् । प्रशस्तिम्[5] । अस्माकम्[6] । कुरुत । रुद्रपुत्राः[7] ! जनेषु भजेयाहम् । युष्माकम्[8] । रक्षणम्[9] । देवार्हम्[10] ।

ह॒ये नरो॒ मरु॑तो मृ॒ळता॑ न॒स्तुवी॑मघासो॒ अमृ॑ता॒ ऋत॑ज्ञाः ।
स॒त्य॑श्रुतः॒ कव॑यो॒ युवा॑नो॒ बृह॑द्गिरयो॒ बृ॒हदु॒क्षमा॑णाः ॥ ८ ॥

**हये** ! हये इति निपातोऽयमामन्त्रितवत्[11] परं सम्बोधयत्यविद्यमानवच्च[12] भवति । हये[13] ! नेतारः ! मरुतः ! सुखयत[14] । अस्मान् । बहुधनाः[15] । अमरणाः[16] । सत्यप्रज्ञाः[17] । सत्यस्य श्रोतारः[18][19] । कवयः[20] । युवानः[21] । महामेघाः[22] । अत्यन्तम्[23] । सिञ्चन्तः[24][25] ।

V.58.

तमु॑ नू॒नं तवि॑षीमन्तमेषां स्तु॒षे ग॒णं मारु॑तं॒ नव्य॑सीनाम् ।
य आ॒श्व॑श्वा॒ अम॑व॒द्वह॑न्त उ॒तेशि॑रे अ॒मृत॑स्य स्व॒राजः॑ ॥ १ ॥

[26]**तमु नूनम्** । तम्[27] । एव[13] । सम्प्रति[28] । बलवन्तम्[29] । एषाम् । मरुताम्[30] । गणम् । स्तौमि[31] ।

---

१. आदि refers to अश्व, रथ, वीर and चन्द्र ॥ बहुभिर्गोभिरुपेतम् । अश्वावत्, बहुभिरश्वैरुपेतम् । रथवत् रथोपेतम् । सुवीरं सुष्ठु पुत्रोपेतम् । चन्द्रवत् हिरण्योपेतम् Sy.
२. अन्नम् Sy.
३. ददत । व्यत्ययेनैकवचनम् । अथवा लोडर्थस्य लिटो मध्यमबहुवचनम् Sy.
४. चन्द्रमिति हिरण्यनाम Ngh. 1.2.
५. समृद्धिमित्यर्थः । ताम् Sy.
६. अस्मां P., D. अस्मदीयाम् Sy.
७. हे मरुतः ! Sy. ८. युष्माकं स्वभूतम् Sy.
९. अवसः अवः रक्षणम् Sy.
१०. रक्षन्मेवाहं P. दैव्यस्य दैव्यम् Sy.
११. पातो० P., D. १२. ०मानर्च P.
१३. हे Sy. १४. सुखयत । अस्मभ्यं हिताय वा सुखिनो भवत Sy.
१५. प्रभूतधनाः Sy. १६. अमरणस्वभावाः Sy.
१७. Omitted by P. ऋतज्ञाः उदकस्य यज्ञस्य वा ज्ञातारः कर्तार इत्यर्थः Sy.
१८. सत्येन सत्यफलत्वेन प्रसिद्धाः Sy.
१९. श्रोतारुद P. २०. मेधाविनः Sy.
२१. नित्यतरुणाः Sy. २२. प्रभूतस्तुतयः Sy.
२३. अत्यधिकम् Sy. २४. ०न्त D. हविर्भिः सेविताः । उदकं वा सिञ्चन्तो यूयं मृळत Sy.
२५. Ms. D. puts the figure ॥५७॥ here to indicate the end of the fifty-seventh hymn. No such number is given in P.
२६. 'तमु नूनम्' इत्यष्टर्चं द्वितीयं सूक्तं श्यावाश्वस्यार्षं त्रैष्टुभं मारुतम् । 'तमु' (KSA. 27.58.p.21.) इत्यनुक्रमणिका, विनियोगो लैङ्गिकः Sy. २७. पूर्वं स्तुतमेव Sy.
२८. अद्य Sy. २९. दीप्तिमन्तम् Sy.
३०. मरुतां सम्बन्धिनं तम् Sy. ३१. स्तुषे Sy.

नवतराभिः[१] स्तुतिभिः । ये[२] । क्षिप्राश्वाः[३] । बलयुक्तं[४] धनम् । सहन्ते[५] । अपि च । ईश्वरा भवन्ति । अमृतत्वस्य[६]। स्वराजः[७]।

**त्वेषं गणं तवसं खादिहस्तं धुनिव्रतं मायिनं दातिवारम् ।**
**मयोभुवो ये अमिता महित्वा वन्दस्व विप्र तुविराधसो नॄन् ॥ २ ॥**

**त्वेषं गणम्** । दीप्तम्। गणम्[८]। बलिनम्[९]। खाद्यायुधहस्तम्[१०]। धनुनूकर्माणम्[११] ? धुनोति हि वृक्षादीन्। कर्मवन्तम्[१२] । दत्तधनम् । विप्र[१३] ! वन्दस्व[१४]। प्रकारान्तरेणाह—सुखस्य भावयितारः[१५]। ये[१६]। महत्वेन[१७]। अमिता अपरिच्छिन्नास्तान्[१८] वन्दस्व । बहुधनान्[१९] । नेतॄन् ।

**आ वो यन्तूदवाहासो अद्य वृष्टिं ये विश्वे मरुतो जुनन्ति ।**
**अयं यो अग्निर्मरुतः समिद्ध एतं जुषध्वं कवयो युवानः ॥ ३ ॥**

**आ वः** । आगच्छन्तु[२०] । युष्माकम्[२१] । उदकस्य वोढारः[२२] । तदानीम्[२३] । वृष्टिम्[२४] । ये । व्याप्ताः[२५] । मरुतः । प्रेरयन्ति[२६] । अयम् । यः[२७]। अग्निः[२८]। मरुतः । अन्तरिक्षे वैद्युतः[२९] समिद्धः[३०]। एतमिति[३१] स्पष्टम्[३२]।

---

१. कीदृशां मरुताम् ? नव्यसीनाम्—लिङ्गव्यत्ययः । नवतराणां स्तुत्यानां वा एषां मारुतं गणम् Sy.
२. गणावयवभूता मरुतः कीदृशाः ? इत्युच्यते मरुतः Sy.
३. शीघ्रगाम्यश्वोपेताः Sy.
४. बलवन्तो यथा भवन्ति तथा Sy.
५. वहन्ते is suggested for सहन्ते ॥ गच्छन्ति Sy.
६. उदकस्य Sy.
७. ०ज P. स्वायत्तदीप्तयः स्वयमेव राजमानास्तेषां गणं स्तुषे Sy.
८. गणं मारुतम् Sy.
९. बलवन्तम् Sy.
१०. कटकहस्तम् Sy.
११. धूननकर्माणम् is suggested for धनुनूकर्माणं ॥ कम्पयितृकर्माणम् Sy.
१२. प्रज्ञावन्तम् Sy.
१३. हे होतः ! Sy.
१४. स्तुहीति सम्बन्धः Sy.
१५. ०र P.
१६. मरुतः Sy.
१७. ०त्वे० is suggested for ०त्वे० ।
१८. ०रिछि० P.
१९. प्रभूतधनान् Sy.
२०. हे ऋत्विग्यजमानाः ! Sy.
२१. युष्मान् Sy.
२२. वोढाः P., D. उदकस्य वोढारो मरुतः Sy
२३. इदानीम् Sy.
२४. ०ष्टि P.
२५. ०प्त P.
२६. अथ प्रत्यक्षवादः Sy.
२७. प्रसिद्धः Sy.
२८. ०ग्नि P.
२९. ०द्युतमः P.
३०. समिधः P., D. सम्यग्दीपितः Sy.
३१. By एतमिति VM. means एतम् । जुषध्वम् । कवयः and युवानः ॥ एतम् अग्निम् । जुषध्वं सेवध्वम् । हे कवयः ! मेधाविनः ! हे युवानः ! नित्यतरुणाः ! सर्वत्र व्याप्ताः ! वा Sy.
३२. पृष्ठं P.

**यूयं राजानमिर्यं जनाय विभ्वतष्टं जनयथा यजत्राः ।**
**युष्मदेति मुष्टिहा बाहुजूतो युष्मत्सदश्वो मरुतः सुवीरः ॥ ४ ॥**

यूयं राजानम्[1] । यूयम् । राजानम्[2] । स्वामिनम्[3] । जनाय[4] । जनयथ[5] । महता कर्मणा कर्तारम्[6] । हे यष्टव्याः ! युष्मत्तः ! गच्छति । मुष्टिभिः शत्रूणां हन्ता[7] । आकृष्टशत्रुबाहुः[8] । युष्मत्त[9] एव । शोभनाश्वः[10] । हे मरुतः ! सुवीरः[11], मरुत्प्रेरिताः[12] कर्माणि कुर्वन्तीति ।

**अराइवेदचरमा अहेव प्रप्र जायन्ते अकवा महोभिः ।**
**पृश्नेः पुत्रा उपमासो रभिष्ठाः स्वया मत्या मरुतः सं मिमिक्षुः ॥ ५ ॥**

अराइवेत्[13][14] । यथा रथचक्रस्था अराः सदृशरूपा भवन्ति[15] । यथा वाहानि[16] । एवम् । अचरमाः[17] । प्रादुर्भवन्ति[18] ।

---

१. हे मरुतः ! Sy.

२. स्वामिनं राजमानं वा Sy.

३. शत्रूणां प्रेरकं च्यावयितारम् Sy.

४. यजमानाय Sy.

५. जनायन् जनयथा P. जनायञ्जनयथा D. उत्पादयथ Sy.

६. विभ्वा नाम ऋभूणां मध्यमः । स कुशली तेन निर्मितम् । अत्यन्तरूपवन्तमित्यर्थः । तादृशं पुत्रम् Sy.

७. कीदृशः ? मुष्टिशब्दो बाहूपलक्षकः । स्वभुजबलेनैव हन्ता शत्रूणाम् Sy.

८. ०हु P. बाहुः प्रेरकः शत्रूणां यस्य तादृशः पुत्र एति Sy.    ९. ०ष्मन्त P.

१०. ०नाश्वे P. ०नाश्चे D. विद्यमानाश्वः । बह्वश्व इत्यर्थः Sy.

११. शोभनवीर्यः पुत्र एति । जायत इत्यर्थः Sy.

१२. प्रातः P. मरु....प्रेरिताः D.

१३. वरुणप्रघासे मारुत्या आमिक्षायाः 'अराइव' इति याज्या । सूत्रितञ्च 'अराइवेदचरमा अहेवेमं मे वरुण श्रुधि (ĀSS.2.17.) इति । एकादशिने मारुते पशावेषैव पशुपुरोडाशस्य याज्या । सूत्रितञ्च 'अराइवेदचरमा अहेव या वः शर्म शशमानाय सन्ति' (ĀSS. 3.7.) इतिSy.

१४. श्यावाश्वो मरुतः स्तौति SKN.

१५. रथशङ्कव इव Sy. यथा अराश्चक्रस्य तुम्बस्य वा तद्वत् SKN.

१६. बाहा० P., D. अहानीव । दिवसा यथा सर्वेऽपि षष्टिघटिकात्मकास्तद्वत्सप्तसंख्योपेतसप्तगणरूपेण समा इत्यर्थः । अनेन दृष्टान्तद्वयेन वैसादृश्याभावः प्रतिपादितः Sy. अहानीव च संवत्सरस्य सहजातत्वाद्धि तुल्यकाला मरुतः । नैषामग्रिमो न पश्चिमोऽप्यस्ति कश्चित् SKN.

१७. अनिकृष्टाः । सर्वसमाः सहैवोत्पन्नाश्चेत्यर्थः Sy. चरमः पश्चिमः स येषां नास्ति तेऽचरमाः । पश्चिमाभावादेवाग्रिमस्याप्यभावः, अनग्रिमपश्चिमा इत्यर्थः SKN.

१८. प्रकर्षेण प्रादुर्भवन्ति । एकः 'प्रसमुपोदः पादपूरणे' (Pa.8.1.6.) इत्युपसर्गाभ्यासः स च पूरणः Sy. एकः प्रशब्दः 'प्रसमुपोदः पादपूरणे' इति पादपूरणः । अपरः प्रकर्षार्थः । प्रकृष्टा जायन्ते प्रतिदिवसं वर्द्धमानाः प्रकृष्टा भवन्तीत्यर्थः SKN.

अकुत्सिताः[1] । तेजोभिः[2] । पृश्नेः[3] । पुत्राः[4] । परस्परं सदृशाः[5] । वेगवन्तः[6] । स्वेन[7] । मानेन[8] । संमिता[9] भवन्ति[10] ।

**यत्प्रायासिष्ट पृषतीभिरश्वैर्वीळुपविभिर्मरुतो रथेभिः ।**
**क्षोदन्त आपो रिणते वनान्यवोस्रियो वृषभः क्रन्दतु द्यौः ॥ ६ ॥**

**यत् प्र** । यत्[11], प्रायासिष्ट[12] यदा प्रगच्छथ । पृषतीभिः[13] । अश्वैश्च[14] । तथा दृढचक्रपविभिः[15] । मरुतः । रथैश्च[16] । तदानीमापः । गच्छन्ति[17] । वृक्षाश्च[18] । उद्गच्छन्ति[19] । अर्थैकवदाह[20]—उस्राया गोः पुत्रः[21] । वृषभः[22] । मरुत् किं गणः[23] ? अवक्रन्दतु[24] । द्योतमानः[25] ।

**प्रथिष्ट यामन्पृथिवी चिदेषां भर्तेव गर्भं स्वमिच्छवो धुः ।**
**वातान्ह्यश्वान्धुर्यायुयुज्रे वर्षं स्वेदं चक्रिरे रुद्रियासः ॥ ७ ॥**

**प्रथिष्ट** । प्रथिता[26] भवति । पृथिवी । एषाम्[27] । गमने[28] । ओषधीभिर्भर्तेव[29] । गर्भं जायायाम्[30] । स्वम्[31] ।

---

१. ०तां P., D. अनल्पाः । यद्वा महोभिरित्यस्य विशेषणम् Sy.
२. स्वैर्माहात्म्यैः SKN.
३. माध्यमिकाया वाचो गोरूपाया अन्तरिक्षस्य वा पुत्रस्थानीयाः Sy. दिवः SKN.
४. ०त्रा P.
५. प्रत्येकं समानाः Sy. उपमाभूताः सर्वस्य । अथवा—उपमेत्यन्तिकनाम । (cf. Ngh. 2.16.) दिवः पुत्राः सन्निकृष्टाश्चेत्यर्थः SKN.
६. प्रकृष्टवेगाः । एवंमहानुभावा मरुतः Sy. अतिशयेन वेगवन्तः SKN.
७. स्वकीयया Sy.
८. अनुग्रहबुद्धया Sy. प्रज्ञया SKN.
९. वृष्टया सम्यक् सिञ्चन्ति Sy. मिक्षतेर्गतिकर्मण एतद्रूपं सङ्गच्छते । यादृश्येषां योग्या प्रज्ञा परानुग्रहात्मिका तादृश्येषामुत्पद्यत इत्यर्थः । अथवा मन्यतेरर्चतिकर्मणो मतिः स्तुतिस्तया सङ्गच्छन्ते स्तोतृभिः स्तूयन्त इत्यर्थः SKN.
१०. VM. ignores मरुतः and explains प्र once only ॥ एवम्महानुभावा मरुतः Sy. N.2.14., SKN. II.87.
११. प्रा P., D. १२. यत यत् P. यदा Sy.
१३. पृष्टती० P. पृषत्संज्ञकैः Sy.
१४. वाहनसाधनैरश्वैः । अश्वशब्दोऽत्र वाहनसामान्यवचनः । अतः पुंल्लिङ्गता । तथान्यत्र—'यदश्वान्धूर्षु पृषतीरयुग्ध्वम्' (RV.V.55.6.) रोहिदश्वोऽजाश्व इति सामानाधिकरण्यप्रयोगः । एवम्भूताश्वयुक्तैः Sy.
१५. दृढरथनेमिभिः Sy.
१६. रथैश्च प्रायासिष्ट । यद्वा अश्वै रथैश्च सह मरुतो यदा प्रायासिष्ट तदा Sy.
१७. क्षरन्ति Sy. १८. वृक्षसमूहाः Sy.
१९. हिंस्यन्ते वेगेन भज्यन्ते Sy.
२०. ऐक० P.
२१. सूर्यरश्मयः । तत्सम्बन्धी पर्जन्यः Sy.
२२. अपां वर्षिता Sy. २३. मरुत्क्रीगणः P.
२४. अवाङ्मुखं शब्दयतु वृष्टयर्थम् Sy.
२५. ०नाः P. द्यो द्योतमाना D.
२६. प्रख्याताऽभवत् । गर्भयोग्याऽभवदित्यर्थः । ते च मरुतः Sy.
२७. ०षा P. मरुताम् Sy.
२८. यामनि Sy.
२९. लौकिकः पतिः Sy.
३०. भार्यायास्तथा भूम्याः Sy.
३१. स्वभूतं गर्भं गर्भस्थानीयम् उदकम् Sy.

उदकम्[1] । पृथिव्यां निदधाति[2] । गच्छतः[3] । अश्वान्[4] । रथधुर्यौ[5] ? युञ्जन्ति[6] । ततो वर्षाख्यम्[7] । स्वेदम्[8] । चक्रिरे[9] । मरुतः[10] ।[11]

**इ॒ये नरो॒ मरु॑तो मृ॒ळता॑ नस्तु॒वीम॑घासो॒ अमृ॑ता॒ ऋत॑ज्ञाः ।**
**स॒त्यश्रु॑तः॒ कव॑यो॒ युवा॑नो॒ बृह॑द्गिरयो॒ बृ॒हदु॒क्षमा॑णाः ॥ ८ ॥**

[हये नरः][12]

## V. 59.

**प्र वः॒ स्पळ॑क्रन्त्सुवि॒ताय॑ दा॒वनेऽर्चा॑ दि॒वे प्र पृ॑थि॒व्या ऋ॒तं भ॑रे ।**
**उ॒क्षन्ते॒ अश्वा॒न्तरु॑षन्त॒ आ रजोऽनु॒ स्वं भा॒नुं श्र॑थयन्ते अर्ण॒वैः ॥ १ ॥**

प्र[13] वः[14] स्पट्[15] । स्तोतः ! युष्माकम्[16] । कल्याणाय[17] । दानाय[18] । वन्धनं मरुतः प्रकुर्वन्तु[19] । दीप्ताय[20] मरुद्गणाय । स्तुहि[21] । अहं पृथिव्यै[22] । अन्नम्[23] । मरुद्भ्यः प्रभरामि[24] । तदनन्तरं तत्र गमनायाश्वान्[25] । स्नापयन्ति[26] । तरन्ति[27] । च[28] । लोकान्[29] । अनु श्रथयन्ते[30] । स्वम्[31] । तेजः । मेघैः सह सम्पष्मयन्ति[32] ?

---

१. ०थिव्या P. २. स्थापितवन्तः Sy.
३. गन्तॄन् Sy.
४. गच्छाताश्वान् P. ०ताश्वान् D.
५. धुरि रथसम्बन्धिन्याम् Sy.
६. आयोजितवन्तः Sy.
७. वृष्टिसंस्त्यायम् Sy.
८. स्वे स्वे० P. तस्मात् स्वेदस्थानीयम् Sy.
९. कुर्वन्ति Sy. १०. रुद्रपुत्राः Sy.
११. VM. ignores चित् । इत् and हि ॥ चिदिति पूरणः । हि यस्मात् Sy. Ms. D. puts the figure ॥५८॥ here to indicate the end of the fifty-eighth hymn. No such number is given in P.
१२. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV.V.57.8.
१३. 'प्र वः स्पट्' इत्यष्टर्चं तृतीयं सूक्तं श्यावाश्वस्यार्षं मारुतम् । अष्टमी त्रिष्टुप्, शिष्टाः सप्त जगत्यः । 'प्र वः स्पट् त्रिष्टुबन्तम्' (KSA.27.59.p.21) इत्यनुक्रमणिका । विनियोगो लैङ्गिकः Sy.
१४. प्रवस्वः P. प्रवस्वदे D.
१५. हे मरुतः ! Sy.
१६. युष्मभ्यम् Sy.
१७. सुष्ठु प्राप्तव्याय Sy.
१८. हविष्प्रदानाय Sy.
१९. प्रकर्षेण क्रन्दति स्तौति Sy.
२०. द्योतमानाय द्युदेवाय Sy.
२१. प्रकर्षेण स्तुहि हे आत्मन् ! Sy.
२२. आपृ० P. पृथिव्याश्च द्यावापृथिव्यावपि मरुतामाधारत्वादत्र निपातभाजौ भवतः Sy.
२३. स्तोत्रम् Sy.
२४. सम्पादयामि, किंच ते मरुतः ! Sy.
२५. व्यापकानुदकसङ्घान् Sy.
२६. सिञ्चन्ति Sy.
२७. रुतूरन्ति P. रुरन्ति D. तरन्ति सञ्चरन्ति Sy.
२८. आ सर्वतः Sy. २९. अन्तरिक्षम् Sy.
३०. अनुश्लेषयन्ति, अनुकूलं प्रापयन्तीत्यर्थः Sy.
३१. ०कानस्य नु श्लथयस्तेश्वं P. ०कानश्व नु श्नथयन्ते स्वं D. स्वकीयम् Sy.
३२. संवष्मयन्ति P.

**अमादेषां भियसा भूमिरेजति नौर्न पूर्णा क्षरति व्यथिर्यती ।**
**दूरेदृशो ये चितयन्त एमभिरन्तर्महे विदथे येतिरे नरः ॥ २ ॥**

**अमादेषाम्** । बलात् । एषाम्[1] । भयेन । भूमिरोपधिवनस्पतियुक्ता । कम्पते[2] । नौः । इव । उदकपूर्णा[3] । जीर्णा[4] नद्याम्[5] । गच्छन्ती[6] । क्षरति[7] अवशीर्णा[8] भवति । दूरे पश्यन्तः[9] । ये[10] । गमनैः । जायन्ते[11] । ते नेतारः[12] । यज्ञे महतेऽन्नाय[13] । गच्छन्ति[14] ।[15]

**गवामिव श्रियसे शृङ्गमुत्तमं सूर्यो न चक्षू रजसो विसर्जने ।**
**अत्याइव सुभ्वश्चारवः स्थन मर्याइव श्रियसे चेतथा नरः ॥ ३ ॥**

**गवामिव**[16] । गवामिव । शृङ्गं[17] शिरसि स्थितम्[18] । श्रयणाय[19] भवति मरुतां[20] शृङ्गम्[21] । सूर्यः । इव[22] भवति । एषां तेजः[23] । उदकस्य[24] । विसर्जने । अश्वा[25] इव । शोभनभवना[26] यूयमागच्छन्तः[27] । कल्याणाः[28] । भवथ । मनुष्या[29] इव । श्रयणाय[30] । बुद्धिं कुरुथ । हे नेतारः[31] ! सहिताः ।[32]

---

१. ०षाम P., D. एषाम्—अन्वादेशविषयत्वादनुदात्तः । एषां मरुताम् Sy.
२. कं व P. कंप D.
३. पूर्णा प्राणिभिः । सा यथोदकमध्ये Sy.
४. व्यथिता Sy.
५. ञ्जीणा नद्यो P., D.
६. ०न्ति P. एतदुभयं नौविशेषणम् Sy.
७. रक्षति P., D. चलति Sy.
८. वशीर्णो P. विशतृणा D.
९. दूरे दृश्यमाना अपि Sy.
१०. मरुतः Sy.
११. ज्ञायन्ते is suggested for जायन्ते ॥ ज्ञायन्ते ते महान्तो मरुतः Sy.
१२. गन्तारः P.
ये मरुतः Sy.
१३. महते हविषे हविर्भक्षणाय Sy.
१४. यतन्ते Sy.
१५. VM. ignores अन्तः ॥ द्यावापृथिव्योर्मध्ये Sy.
१६. हे मरुतः ! यूयम् Sy.
१७. उष्णीषपट्टादिकम् Sy.
१८. स्थितिं P.
१९. श्रिये, धारयथेति शेषः Sy.
२०. ०ता P.
२१. शृंग P., D.
२२. स यथा Sy.
२३. दर्शनसाधनं मण्डलं धत्ते । तद्वद्रजसो वृष्टेविसर्जने विसर्जनाय चक्षुः सर्वस्य प्रकाशकं तेजो धारयथ Sy.
२४. तेजसः Sy.
२५. अश्व P.
२६. सुष्ठु सर्वत्र भवन्तो वेगवन्तः Sy.
२७. ०च्छत P.
२८. दर्शनीयाः Sy.
२९. मर्त्या यजमानाः । ते यथा Sy.
३०. जानन्ति यज्ञादिकं तद्वच्छ्रिये Sy.
३१. मरुतः Sy.
३२. VM. ignores उत्तमम् ॥ उत्कृष्टम् Sy.

को वो॑ म॒हान्ति॑ मह॒ताम॒ुद॑श्नव॒त्कस्का॒व्या॑ मरु॒तः को ह॒ पौंस्या॑ ।
यू॒यं ह॒ भूमिं॑ कि॒रणं॒ न रे॑जथ॒ प्र यद्भर॑ध्वे सुवि॒ताय॑ दा॒वने॑ ॥ ४ ॥

को वः[१]। कः[२]। वः[३]। महताम्[४]। महान्ति[५] धनानि। उद्व्याप्नोति[६]। कश्च[७]। कविकर्माणि[८]। कः। वा[९]। वीर्याणि[१०]। यूयम्। खलु। सूर्यः किरणम्[११]। इव। पृथिवीमोषधिवनस्पतियुक्ताम्। कम्पयथ। प्रगच्छथ[१२]। यदा[१३]। कल्याणाय[१४]। दानाय[१५]।

अश्वा॑इ॒वेद॑रु॒षासः॒ सब॑न्धवः॒ शूरा॑इव प्र॒युधः॒ प्रोत यु॑युधुः ।
मर्या॑इव सु॒वृधो॑ वावृधु॒र्नरः॒ सूर्य॑स्य॒ चक्षुः॒ प्र मि॑नन्ति वृ॒ष्टिभिः॑ ॥ ५ ॥

अश्वाइव[१६]। अश्वा इव[१७]। आरोचमानाः[१८]। समानबन्धवः[१९], एकस्मादुत्पन्नाः। शूरा[२०] इव। च[२१]। प्रकर्षेण योद्धारः[२२]। प्रयुयुधुर्मरुतः[२३]। यथाश्वा वीराश्चाजि[२४] प्रयुद्धार्थं[२५] प्रगच्छन्तीत्यर्थः, तथा राजान[२६] इव। सुष्ठु वर्धमानाः[२७]। वर्धन्ते। नेतारस्तदानीम्। सूर्यस्य[२८]। तेजः[२९]। प्रहिंसन्ति[३०]। वृष्टिभिः[३१][३२]।

---

१. वा P.
२. यजमानः Sy.
३. युष्माकम् Sy.
४. ०तं P. ०तम् D. पूज्यानाम् Sy.
५. श्रेयांसि Sy.
६. उत्कृष्टं प्राप्नुयात् Sy.
७. कश्च तदर्थम् Sy.
८. काव्यानि, कवीनां युष्माकं सम्बन्धीनि स्तोत्राणि उदश्नवत् Sy.
९. च Sy.
१०. पौंस्यानि पराक्रमान् उदश्नवत्। आदरार्थं पुनर्वचनम् Sy.
११. किरणं यथा वृष्ट्यर्थं चालयथ तद्वद्भूमिं रेजथ Sy.
१२. प्रकर्षेण सम्पादयथ वृष्टिम्। यस्माद्यूयमेवं कुरुथ तस्मात्क एवं करोतीत्यर्थः Sy.
१३. यस्मात् Sy.
१४. सुष्ठु प्राप्तव्याय। प्राप्तव्यस्येत्यर्थः। तादृशस्य धनस्य वृष्ट्युदकस्य वा Sy.
१५. VM. ignores मरुतः।
१६. मरुत एते Sy.
१७. शीघ्रगन्तारः Sy.
१८. रोमानाः P.
१९. समान एक एव बन्धुर्बन्धको रुद्रो येषां ते तादृशाः। परस्परं बन्धवः। स्नेहयुक्ता वा Sy.
२०. भटाः Sy.
२१. अपि च Sy.
२२. प्रयोद्धारो वैरिभिः सह तादृशाः Sy.
२३. प्रययुः P. प्रयुयुः D. प्रकर्षेण युध्यन्ते Sy.
२४. ०राश्वाजि D.
२५. ०र्थपा P.
२६. मनुष्या यथा वर्धन्ते तथा Sy.
२७. सुष्ठु वर्धयितारो वर्धमाना वा Sy.
२८. एवं महात्मानः Sy.
२९. तेजःसमूहं मण्डलं वा Sy.
३०. प्रकर्षेण हिंसन्ति। आवृण्वन्तीत्यर्थः Sy.
३१. ०भि D.
३२. VM. ignores इत्।

**ते अ॑ज्येष्ठा॒ अक॑निष्ठास उ॒द्भिदो॑ऽमध्यमासो॒ मह॑सा॒ वि वा॑वृधुः ।**
**सु॒जा॒तासो॑ ज॒नुषा॒ पृश्नि॑मातरो दि॒वो मर्या॒ आ नो॒ अच्छा॑ जिगातन ॥ ६ ॥**

**ते अज्येष्ठाः ।** ते[1] । ज्येष्ठरहिताः[2] । कनिष्ठानामपि मध्यमाः[3] । किं तर्हि ? सहोत्पन्नाः[4] । उद्भेत्तारः[5] शरीराणाम्[6] । तेजसा[7] । वर्धयन्ते[8] । सुजाताः[9] । जन्मना । गोमातरः[10] । दिवः[11] । पुत्राः[12] । अस्मान् । अभ्यागच्छत[13] [14] ।

**वयो॒ न ये श्रेणीः॑ प॒प्तुरोज॒सान्ता॑न्दि॒वो बृ॑ह॒तः सानु॑न॒स्परि॑ ।**
**अश्वा॑स एषामु॒भये॒ यथा॑ वि॒दुः प्र पर्व॑तस्य नभ॒नूँ॑रचुच्यवुः ॥ ७ ॥**

**वयो न ये ।** पक्षिणः । इव । स्वावासान्[15] प्रति । ये[16] । बलेन । पतन्ति । दिवः[17] । अन्तान्[18] प्रति । महतः । समुच्छ्रिताद्[19] दिवः । अश्वाः । एषाम् । शिलोच्चयस्य[20] । सानूनि[21] । प्रच्यावयन्ति । यथा । उभयपार्श्वस्था[22] जनाः[23] । विदुः[24], दक्षिणत उत्तरतश्चावासस्थानं संभवति पार्श्वयोरन्ययोः[25] पर्वत एव तिष्ठति[26] [27] ।

---

१. मरुतः Sy.
२. अज्येष्ठाः Sy.
३. अकनिष्ठाः Sy.
४. ०मा D.
५. अमध्यमाः सर्वप्रकारैः समाः Sy.
६. उद्भेदयितारः Sy.
७. तेसं P. तज० D.
८. विवर्धन्ते Sy.
९. ०जानाः P. सुष्ठु सम्भूताः Sy.
१०. गोतमात० P. पृश्नेः पुत्राः Sy.
११. दिवः सकाशात् Sy.
१२. मनुष्येभ्यो हिता यूयम् Sy.
१३. अभिमुखम् आ जिगातन सर्वतः प्रशंसत साध्वनुष्ठितमिति । उत्तरार्धः प्रत्यक्षकृतः । यद्वा ये सुजाता जनुषा पृश्निमातरश्च तान् दिव आगतान् हे ऋत्विजः ! मर्याः ! यूयमाजिगातन आगच्छत ते नोऽच्छ आगच्छतास्मदभिमुखम् Sy. १४. VM. ignores वि ।
१५. पङ्क्तयः सन्तः Sy.
१६. मरुतः Sy.
१७. अन्तरिक्षस्यादित्यस्य वा Sy.
१८. पर्यन्तान् Sy.
१९. समुन्नतस्याकाशवलयस्य Sy.
२०. मेघस्य Sy.
२१. नभनून् भनतेः शब्दकर्मणो नभ्राडितिवत् नभनवः । उदकानि Sy.
२२. ०स्थ P.
२३. जनना: P., D. देवा मनुष्याश्च Sy.
२४. जानन्ति तथा । मनुष्याणां ज्ञानं प्रसिद्धम् । देवाश्च वृष्टौ सत्यामाग्रयणादौ हविष्प्रदानेन जानन्ति । देवानां वृष्टिसम्पूर्तिपरिज्ञानमाश्वलायनेनोक्तम्—'यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेत' इत्युपक्रम्य 'अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याग्रयणेन हि यजते' (ĀSS.2.9.) इति Sy.
२५. वाश्व० D.
२६. ०न्ति P.
२७. VM. ignores परि ॥ परितः Sy.

मिमा॑तु॒ द्यौरदि॑ति॒र्वी॒तये॑ नः॒ सं दानु॑चित्रा उ॒षसो॑ यतन्ताम् ।
आचु॑च्यवुर्दि॒व्यं कोश॑मे॒त ऋषे॑ रु॒द्रस्य॑ म॒रुतो॑ गृणा॒नाः ॥ ८ ॥

मिमातु[1] । द्यावापृथिवी[2] । भक्षणाय[3] । अस्मान्[4] । सङ्गच्छताम्[5] । अस्मान् । चित्रदानाः[6] । उषसश्च । दिवि भवम् । मेघम्[7] । मरुतः । आच्यावयन्तु[8] । हे श्यावाश्विनः[9] । रुद्रसम्बन्धिनः[10] । मरुतः ! त्वया स्तूयमानाः, उक्त एकवचनबहुवचनयोः[11] समन्वयः[12] ।

## V. 60.

ईळे॑ अ॒ग्निं स्ववसं॒ नमो॑भिरि॒ह प्र॑स॒त्तो वि च॑यत्कृ॒तं नः॑ ।
रथै॑रिव॒ प्र भ॑रे वाज॒यद्भिः॑ प्रदक्षि॒णिन्म॒रुतां॒ स्तोम॑मृध्याम् ॥ १ ॥

[13]ईळे[14] । स्तौमि[15] । अग्निम् । सुरक्षणम्[16] । नमोभिः सह । अत्र[17] । प्रसन्नः सन्[18] । विचिनोतु[19] । कर्म[20] । अस्मदीयम्[21] । रथैरिव[22] । प्रभरामि[23] । अन्नं कुर्वद्भिः[24] स्तोमं यथा वह्नन्नं रथे प्रभरन्ति तद्वत् बहून् स्तोमान् प्रभराम्येतदेवाह—प्रदक्षिणम्[25] । मरुताम् । स्तोमम्[26] । वर्धयामीति[27] ।

---

१. कुता P., D.
२. द्यौरन्तरिक्षम् । कीदृशी ? अदीना । यद्वा द्यौर्मिमात्वदितिर्भूमिश्च मिमातु सुखम् Sy.
३. उत्पत्तये प्रजननाय वा Sy.
४. अस्मदर्थम् Sy.
५. ०न्ताम् P., D. निर्मिमातु वृष्टिम् । तदनुकूलं करोत्वित्यर्थः Sy.
६. ०दानायश्च P. ०दानायश्व D. विचित्रप्रकाशादिदानाः Sy.
७. उदकम् Sy.
८. आच्यावयन्ति । द्विकर्मकोऽयम् Sy.
९. हे ऋषे ! Sy.
१०. रुद्रस्य पुत्रा इति शेषः Sy.
११. ०योरन्वयः P. ०नयामन्वयः D.
१२. VM. ignores यतन्ताम् ।
१३. 'ईळे अग्निं स्ववसम्' इत्यष्टर्चं चतुर्थं सूक्तं श्यावाश्वस्यार्षम् । सप्तम्यष्टम्यौ जगत्यौ शिष्टाः षट् त्रिष्टुभः । मरुद्देवताकमग्निमरुद्देवताकं वा । 'ईळे द्विजगत्यन्तमाग्नेयं च वा' इति (KSA.27.60.p.21.) सूक्तविनियोगो लैङ्गिकः । आद्या कारीर्यां सामिधेनीषु याज्या । सूत्रितञ्च—'ईळे अग्निं स्ववसं नमोभिरिति धाय्ये' (ĀSS.2.13.) इति Sy.
१४. अहं श्यावाश्वः Sy.
१५. स्तो० D.
१६. स्वायत्तरक्षणम् Sy.
१७. स्तोत्रैः Sy.
१८. इदानीम् Sy.
१९. ०न्नाः P. प्रसन्नः प्रकर्षेण यज्ञं प्राप्तो वा सन् Sy.
२०. विजानातु Sy.
२१. तत्स्तोत्रं कृतम् Sy.
२२. अस्मदर्थम् Sy.
२३. रवैरिव D. रथैर्यथाभिमतं प्राप्नुवन्ति तद्वद्बृंहणसाधनैः Sy.
२४. प्रकर्षेण सम्पादयाम्यभिमतम् Sy.
२५. अन्नमिच्छद्भिः स्तोत्रैः Sy.
२६. Omitted by P.
२७. ०क्षिणि P. प्रादक्षिण्येन गच्छन् Sy.
२८. स्तोत्रम् Sy.
२९. वर्धयेयम् Sy.

**आ ये त॒स्थुः पृष॑तीषु श्रु॒तासु॑ सु॒खेषु॑ रु॒द्रा म॒रुतो॒ रथे॑षु ।**
**वना॑ चिदुग्रा जिहते॒ नि वो॑ भि॒या पृ॑थि॒वी चि॑द्रेजते॒ पर्व॑तश्चित् ॥ २ ॥**

**आ ये ।** आतिष्ठन्ति । ये । पृषद्वर्णासु[1] । विश्रुतासु[2] । सुद्वारेषु[3] च । मरुतः । रथेषु[4] । वृक्षाः[5] । च[6] । वः[7] । भयेन[8] । हे उद्गूर्णाः[9] ! निजिहते[10] । पृथिवी[11] । अपि । कम्पते । शिलोच्चयः[12] । च[13][14] ।

**पर्व॑तश्चिन्महि॑ वृ॒द्धो बि॑भाय दि॒वश्चि॒त्सानु॑ रेजत स्व॒ने वः॑ ।**
**यत्क्रीळ॑थ मरुत ऋष्टिमन्त॒ आप॑इव स॒ध्र्य॑ञ्चो धवध्वे ॥ ३ ॥**

**पर्वतः**[15] । शिलोच्चयः । च[16] । अत्यन्तम्[17] । वृद्धः[18] । विभेति । तथा पर्वतस्य , अन्तरिक्षात्[19] । सानु[20] । कम्पते[21] । भवताम्[22] । शब्दे[23] । यदा यूयम्[24] । क्रीडथ[25] । मरुतः[26] ! ऋष्टिमन्तः[27] । तदानीमुदकानीव[28] । सहाञ्चन्तः[29] । गच्छथ[30][31][32] ।

---

१. मरुतां वाहनेषु Sy.
२. श्रान्तासु प्रसिद्धासु वा Sy.
३. सु is omitted by P., D. खमाकाशं छिद्रम् । शोभनरथाक्षद्वारेषु Sy.
४. रथान् आ तस्थुः आतिष्ठन्ति Sy.
५. ०क्षः D. वनानि Sy.
६. अपि Sy.
७. युष्माकम् Sy.
८. भीत्या Sy.
९. ०र्ण P., D. हे उद्गूर्णबलाः ! मरुतः ! यूयं यदा रथमारूढाः स्थ तदानीम् Sy.
१०. ०जह० P., D. न्यग्गच्छन्ति Sy.
११. ०थिव्यापि P.
१२. पर्वतोऽपि रेजते कम्पते Sy.
१३. ०च्चय स्वं P. अपि रेजते कम्पते । उत्तरार्द्धः प्रत्यक्षकृतः, पूर्वार्द्धे य एवमकुर्वन् तेषां स्तोममृध्यामिति पूर्वत्रान्वयः Sy.
१४. VM. ignores रुद्राः ॥ रुद्रा रुद्रपुत्राः Sy.
१५. कारीर्यां मारुतस्य सप्तकपालस्य 'पर्वतश्चित्' इत्येषा याज्या । सूत्रितञ्च 'पर्वतश्चिन्महि वृद्धो बिभाय सृजन्ति रश्मिमोजसा' (ASS. 2.13.) इति Sy.
१६. अपि Sy. अप्यर्थे चिच्छब्दः BB.
१७. महान् Sy. महत् BB.
१८. वृद्धः सन्नपि Sy.
१९. अन्तरिक्षस्यापि Sy. उपरिगतस्य पर्वतस्य BB.
२०. सानुम् D. समुच्छ्रितः प्रदेशः Sy.
२१. कंपिते P., D. कम्पते स्वने युष्माकम् । 'रेजृ कम्पने' BB.
२२. भवनां P. युष्माकम् Sy.
२३. भयङ्करशब्दे सति Sy. गर्जिते BB.
२४. Omitted by P.
२५. ळित P. यूयं क्रीडथ, तदानीं युष्माकं गर्जितं श्रुत्वा पर्वतोऽपि बिभेति सान्वपि कम्पत इति BB.
२६. हे मरुतः ! Sy. यदा हे मरुतः ! BB.
२७. आयुधवन्तः सन्तः Sy. वज्रायुधवन्तः BB.
२८. तदा Sy. तस्मिन्काले BB.
२९. आप इव व्यापका इव BB.
३०. सहाञ्चनाः Sy. सहाञ्चन्त्यः BB.
३१. उदकानीमव सहाञ्चन्तो गच्छथः P. ०थः D. धावध्वे Sy. धावत । छान्दसं ह्रस्वत्वम् । धुनोतिर्वा गतिकर्मा । व्यत्ययेन शप् । तस्मादस्माकं वृष्टयर्थं गर्जन्तः क्रीडन्तश्च धावध्वमिति BB.
३२. VM. ignores चित् ॥ चिद् अपि Sy. This stanza=TS.3.1.11.5.

**वराइवेद्रैवतासो हिरण्यैरभि स्वधाभिस्तन्वः पिपिश्रे ।
श्रिये श्रेयांसस्तवसो रथेषु सत्रा महांसि चक्रिरे तनूषु ॥ ४ ॥**

**वराइवेत्** । कन्याया उद्वोढार इव[1] । रेवतः[2] पुत्राः[3] । अथा । हिरण्मयैराभरणैः[4] । उदकैश्च[5] । आत्मीयानि शरीराणि[6] । संश्लिष्टानि कुर्वन्ति[7] । प्रशस्ताः[8] । बलवन्तः[9] । रथेषु । श्रयणाय वा स्थातुम्[10] । सत्यमेव[11] । महनीयान्याभरणानि । अङ्गेषु[12] । कुर्वन्ति[13] ।

**अज्येष्ठासो अकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय ।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥ ५ ॥**

**अज्येष्ठासः** । अमी[14] । संववृधुः[15] । सुधनत्वाय[16] । नेषाम्[17] । सुकर्मा[18] । रुद्रः । पिता । अथैभ्यः[19] । सुदोहा[20] । पृश्निः[21] । सुदिनमिति सुखनाम[22] सुखकरी माता भवति[23] ।

**यदुत्तमे मरुतो मध्यमे वा यद्वावमे सुभगासो दिवि ष्ठ ।
अतो नो रुद्रा उत वा न्व१स्याग्ने वित्ताद्धविषो यद्यजाम ॥ ६ ॥**

**यदुत्तमे** । त्रयो[24] लोका भवन्ति तेषु यत्र इदानीं वर्तयध्वे । ततः[25] । अस्मान्[26] । हे रुद्राः[27] ! आगत्य ।

---

१. परा P., D. २. ०ढा P., D. विवाहयोग्या युवान इव ते यथा Sy.
३. धनवन्तः Sy. ४. हिरण्मयैराभरणविशेषैः Sy.
५. उेककै० D. ६. स्वीयानि Sy.
७. संयोजयन्ति । अलङ्कुर्वन्ति तद्वदेते मरुतोऽपि रैवतासो धनवन्तो हिरण्यैः हिरण्यस्थानीयैर्विद्युदाख्यैराभरणैः स्वधाभिश्च तन्वः स्वीयानि शरीराणि पिपिश्रे Sy. ८. श्रेष्ठाः Sy.
९. प्रस्तावलन्तः P., D. बलवन्तो मरुतः Sy.
१०. शोभायै Sy.
११. सत्यदेव P. सत्यं सह वा Sy.
१२. कृतवन्तः सर्वाभरणैरुदकैश्चोपेता रथानधिष्ठाय शरीरेषु तेजांस्यधारयन्नित्यर्थः Sy.
१३. VM. ignores इत् ।
१४. मरुतः Sy.
१५. संवर्धु P. संवृद्धुः D. वर्धन्ते Sy.
१६. मुभणत्वाया P. सुभगत्वाय Sy.
१७. मरुताम् Sy. १८. शोभनकर्मा Sy.
१९. तथा P. मरुदर्थम् Sy.
२०. सुष्ठु द्रोग्ध्री Sy.
२१. गोदेवता मातृभूता Sy.
२२. (Ngh. 3.6.) शोभनदिनानि । अकुरुतामिति शेषः Sy.
२३. VM. ignores अज्येष्ठासः । अकनिष्ठासः । भ्रातरः and युवा ॥ अज्येष्ठासः अकनिष्ठासः परस्परज्येष्ठकनिष्ठभावरहिताः सहैवोत्पन्नाः समानबलाः । परस्परं भ्रातृभूताः । युवा नित्यतरुणः Sy.
२४. By the passage त्रयो लोकाः....यत्र VM. seems to refer to उत्तमे, मध्यमे, अवमे दिवि ॥ यदुत्तमे उत्कृष्टे उत्तमे चरमे वा । दिवि द्युलोके । मध्यमे वा दिवि स्थ भवथ । 'त्रयो वा इमे त्रिवृतो लोकास्तिस्रो दिवः पृथिवीः' Cf.AB.2.17 इत्यादिश्रुतेर्द्युलोकस्य त्रैविध्यम् Sy.
२५. अस्मात् स्थानत्रयात् Sy.
२६. तथास्मान् P. तरोस्मान् D. अस्मदर्थम् Sy.
२७. हे रुद्राः ! आगच्छतेति शेषः Sy.

अस्य । हविषा[1] । क्षिप्रम्[2], जानीत[3] । हे अग्ने ! त्वं च । वेत्थ[4] हविः । यदा[5] । यजाम[6] ।[7]

**अग्निश्च यन्मरुतो विश्ववेदसो दिवो वहध्व उत्तरादधि ष्णुभिः ।**
**ते मन्दसाना धुनयो रिशादसो वामं धत्त यजमानाय सुन्वते ॥ ७ ॥**

**अग्निः ।** अग्निः । च । यदा[8] । हे मरुतः ! यूयं च । विश्वधनाः[9] । दिवः[10] । आगच्छथ[11] । समुच्छ्रितेभ्यः[12] प्रदेशेभ्य उच्छ्रितेषु वा देशेषु, इति स्पष्टम् ।[13]

**अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।**
**पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥ ८ ॥**

**अग्ने[14] ।[15]** अग्ने[16] ! मरुद्भिः[17] । अङ्गानि शोभयद्भिः[18] । रसाहरणपरैः[19] सह । मोदमानः[20] । सोमम्[21] । पिब ।

---

१. एतद्धविः Sy.
२. अद्य Sy.
३. विद्धि Sy.
४. वेत्थं D.
५. यद् हविः Sy.
६. प्रक्षिपाम Sy.
७. VM. ignores यत् । मरुतः । वा । सुभगासः । उत and वा ।
८. यूयम् Sy.
९. सर्वस्य ज्ञातारो विश्वधना वा Sy.
१०. विवः P. द्युलोकात् Sy.
११. ०थो P. ०थोत् D.
१२. उत्तरात् उत्कृष्टतरात् । अधि उपरि । सानुभिरुपरिप्रदेशे । वहध्वे उह्यध्वे । तत्र निवसथेत्यर्थः । यद्वा स्नुशब्देन तत्सदृशा अश्वा उच्यन्ते । तैर्वोह्यध्वे Sy.
१३. VM. ignores the second hemistich of the stanza॥ ते यूयम् । मन्दसाना मोदमाना अस्मदीयैः स्तोत्रैर्हविर्भिश्च । धुनयः शत्रूणां कम्पयितारः । रिशादसोऽस्मद्धिंसकानामत्तारः सन्तः । वामं वननीयं धनम् । धत्त दत्त यजमानाय सुन्वते अभिषवं कुर्वते Sy.
१४. 'अग्ने मरुद्भिः' इत्यष्टम्याग्निमारुतस्य याज्या । 'अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः' (ĀSS. 5.20.) इति सूत्रितत्वात् Sy.
१५. Omitted by D. आवास्यस्य ? (श्यावाश्वस्य) SKN.
१६. हे अग्ने ! Sy. हे भगवन्नग्ने ! वैश्वानर ! त्वम् Dur.
१७. मरुद्भिः सह Sy. मितरोचिभिरर्चिर्भिः.... अर्चिषोऽत्र मरुतः । अन्यथा ह्यनुदाहरणमेवैष मन्त्रोऽग्नेः सोमपाने स्यात् । इतरैर्मरुद्भिः सम्बन्धादृत्विजो वा मरुतः Dur.
१८. शोधयद्भिः P. शोभमानैरन्यान् शोभयद्भिर्वा Sy. शुम्भयद्भिर्भवन्तम् Dur. आत्मानं रुक्मभिराभरणविशेषैर्मण्डयद्भिः SKN.
१९. स्तुत्यैः Sy. रसहर्तृभिः Dur. अर्चनमृक् स्तुतिस्तया तद्वद्भिः सह SKN.
२०. ०हा D.
२१. माद० P., D. मन्दसानः सन् Sy.

गणभावं[1] ये श्रयन्ते । शोधकैः[2] । विश्वस्य प्रीणयितृभिः[3] । गन्तृभिः[4] । वैश्वानर[5] ! प्रत्नेन[6] । तेजसा[7] । सङ्गतः[8] ।[9]

V.61.

के ष्ठा नरः श्रेष्ठतमा य एकएक आयय । परमस्याः परावतः ॥ १ ॥

के ष्ठ[10] । शौनकः[11]—

राजर्षिरभवत् दार्भ्यो[12] रथवीतिरिति श्रुतः ।
स यक्ष्यमाणो राजर्षिरभिगम्य[13] प्रसाद्य च ॥
आत्मानं कार्यमर्थं च ख्यापयन्[14] प्राञ्जलिः स्थितः ।
अवृणीतार्षिमात्रेयमार्त्विज्यायार्चनानसम्[15] ॥

---

१. गणभ्यवं P., D. गणभावमाश्रयद्भिः Sy. गणशो भवन्तमाश्रयद्भिः Dur. गणत्वमाश्रितैः SKN.

२. पावयितृभिः Dur. पावनैः SKN.

३. विश्वं वृष्ट्या प्रीणयद्भिः Sy. सर्वमिदमागच्छद्भिः Dur. इन्वतेर्व्याप्तिकर्मण एतद्रूपम् । सर्वव्याप्तिभिः SKN.

४. आयुष्मद्भिः Sy. यद् दग्धुम्. . . .अयनशीलैः Dur. गन्तृभिश्चेत्यर्थः SKN.

५. ०रः P. हे विश्वनरहिताग्ने ! Sy.

६. पुराणेन Sy. चिरन्तनैः Dur. पुराणेन SKN.

७. ज्वालापुञ्जेन Sy. प्रज्ञया कर्मणा वा Dur. प्रज्ञानेन चरितया प्रज्ञयेत्यर्थः SKN.

८. संगत्स P. सहितः Sy. संयुक्तः Dur. संसेवमानः । अस्माद्वा सम्प्रीयमाणो वा SKN.

९. अन्ये तु—'अग्ने[1] मरुद्भिः' (RV.V.60.8.) इत्यत्राग्नेरर्चिष ऋत्विजो वा मरुत इति मन्यन्ते । इतरथा पार्थिवस्य मध्यमैः सह सोमपानेऽनुदाहरणमेष मन्त्रोऽग्नेः स्यादिति । तदसत् । मरुतां गुणभावात् सहस्तुतेश्चाविरोधात् । शौनकस्तु मारुतत्वान्मन्त्रस्य मरुता संसेव्यमानो न स्वतन्त्र इत्येवमग्नेरप्राधान्यं मन्यते । सर्वथा त्वग्नेः सोमपानसम्बन्धोऽस्तीत्येतावान् प्रकृत उपयुज्यत इति भाष्यकाराभिप्रायः SKN. N. 8.2., SKN. III. 121.

Ms. D. puts the figure ॥६०॥ here to indicate the end of the sixtieth hymn. No such number is given in P.

१०. 'के ष्ठा नरः' इत्येकोनविंशत्यृचं पञ्चमं सूक्तम् । अत्रानुक्रमणिका—'के ष्ठैकोना गायत्रं श्यावाश्वोऽत्र वैददश्वी तरन्तपुरुमीळ्हौ दार्भ्यं (दाल्भ्यं) रथवीतिं मरुतश्च दानतुष्टः प्रशशंस बुद्ध्वा च तरन्तमहिषीं शशीयसीं पञ्चम्यनुष्टुप् नवमी सतोबृहती' (KSA.27.61.p.21.) इति । श्यावाश्व ऋषिः । पञ्चम्यनुष्टुप् नवमी सतोबृहती शिष्टा गायत्र्यः । आद्याश्चतस्रो मरुद्देवताकाः । 'सनत्सा' इत्यादीनां चतसृणां शशीयसी नाम तरन्तस्य राज्ञो भार्या देवता । 'उत मेऽरपत्' इत्यस्या वैददश्विः पुरुमीळ्हो देवता । 'यो मे धेनूनाम्' इत्यस्या वैददश्विस्तरन्तो नाम राजा देवता । 'य ईं वहन्ते' इत्याद्याः षण्मारुत्यः । 'एतं मे' इत्यस्य तृचस्य दार्भ्यो रथवीतिर्नाम राजा देवता । विनियोगो लैङ्गिकः Sy.

११. DDN. reads तथा च बृहद्देवता (BD. 5.50-81.) for शौनकः ।

१२. दग्यो P. दादभ्यो D.

१३. राजात्रिमभि० BD.

१४. ख्यापत् D.

१५. ०ज्यायर्चनास्मान् P.

स[1] सपुत्रो[2]ऽभ्यगच्छत् तं राजानं यज्ञसिद्धये[3] ।
यज्ञे च वितते[4]ऽपश्यद् राजपुत्रीं[5] यशस्विनीम् ।
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत्[6] ॥
संयुज्यस्व मया राजन्निति याज्यं वचो[7]ऽब्रवीत्[8] ।
प्रत्याचष्ट[9] स तं राजा सह सम्मन्त्र्य भार्यया ।
अनृषिर्नो[10]ऽत्र जामाता कश्चिद् भवितुमर्हति ॥
प्रत्याख्यात ऋषिस्तेन[11] वृत्ते यज्ञे न्यवर्तत ।
श्यावाश्वस्य तु कन्याया[12] मनो नैव न्यवर्तत ॥
ततस्तौ[13] ? उनिव्याशु भावेनै[14]वाभिजग्मतुः[15] ।
तरन्तपुरुमीळ्हौ तु राजानौ[16] वैदद[17]श्विनौ[18] ।
ताभ्यां तौ चक्रतुः पूजाम् ऋषिभ्यां नृपती स्वयम् ॥
ऋषिपुत्रं महिष्याश्च दर्शयामास तं नृपः ।
तरन्तानुमता चैव प्रादाद् बहुविधं वसु ॥

---

१. Omitted by P. २. सुपु० P.

३. DDN. adds the following verses of BD.
श्यावाश्वश्चात्रिपुत्रस्य पुत्रः खल्वर्चनानसः॥५२॥
साङ्गोपाङ्गान् सर्ववेदान् यः पित्राध्यापितो मुदा।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत् ॥५३॥

४. ०श्य P. ५. राज्यो च (न् राज्ञः) पुत्रीं P.

६. DDN. adds the following verse of BD.
'श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः' ।

७. BD. reads च सोऽब्र० for वचोऽब्र० ।

८. DDN. adds, after this hemistich, the following verses of BD.
श्यावाश्वाय सुतां दित्सु-
र्महिषीं स्वां नृपोऽब्रवीत् ॥५५॥
किं ते मतमहं कन्यां
श्यावाश्वाय ददामि हि ।
अत्रिपुत्रोऽदुर्बलो हि
जामाता त्वावयोरिति ॥५६॥
राजानमब्रवीत्सापि
नृर्षिकुलजा ह्यहम् ।
नानृषिर्नौ तु जामाता
नैष मन्त्रान् हि दृष्टवान्॥५७॥
ऋषये दीयतां कन्या
वेदस्याम्बा भवेत्तथा ।
ऋषिं मन्त्रदृशं वेद
पितरं मन्यते यतः ॥५८॥

९. प्रत्याचष्टे BD., DDN.

१०. ०र्नैव BD., DDN.

११. ०तमृ० D. १२. ०यां D.

१३. त P. १४. भवे० P.

१५. BD. and DDN. read 'ततस्तौ तु निवर्तेतामुभावेवाभिजग्मतुः' and add after that 'शशीयसीं तरन्तं च पुरुमीळ्हं च पार्थिवम्'

१६. BD. adds तु before राजानौ ।

१७. वेद० P.

१८. वैददश्व्यृषी BD., DDN.

अजाविकं गवाश्वं च श्यावाश्वाय[1] गशीयसी[2] ।
ददर्श संस्थितान् पार्श्वे तुल्यरूपानिवात्मनः[3] ॥
समानवयसश्चैव[4] मरुतो रुक्मवक्षसः[5] ।
तान् तुल्यवयसो[6] दृष्ट्वा देवान् पुरुषविग्रहान् ॥
श्यावाश्वो विस्मितोऽपश्यत् के ष्ठेति मरुतस्ततः[7] ।
ततस्तु मरुतो देवान् रुद्रसूनूनबुध्यत[8] ॥
'य ई[9] वहन्त'[10] इत्याभिर्बुध्वा[11] तुष्टाव तांस्तथा ॥
अतिक्रमं हि तं मेने ऋषिर्विपुलमात्मनः ॥
यन्न दृष्ट्वैव तुष्टाव यत्[12] 'के ष्ठ' इति तु पृष्टवान् ।
स्तुताः स्तुत्यानया[13] प्रीता[14] गच्छन्तः[15] पृश्निमातरः[16] ॥
अवमुच्य स्ववक्षोभ्यो रुक्मं[17] तस्मै तदा ददुः ।
मरुत्सु तु[18] प्रयातेषु श्यावाश्वः सुमहायशाः ॥
रथवीतेर्दुहितरमगच्छन् मनसा तदा ।
स सद्य ऋषिरात्मानं[19] प्रवक्ष्यन् रथवीतये ॥

---

१. ०श्याध D.
२. DDN. adds, after this hemistich, the following verses of BD.
'अत्रि याज्यार्चितौ गत्वा पितापुत्रौ स्वमाश्रमम् ।६४।
अभ्यवादयतामत्रिं महर्षिं दीप्ततेजसम् ॥
श्यावाश्वस्य मनस्यासीन्मन्त्रस्यादर्शनादहम् ।६५।
न लब्धवाँस्तु तां कन्यां हन्त सर्वाङ्गसुन्दरीम् ।
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान्मम ।६६।
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः' ।
३. तुल्यरूपान् महात्मनः DDN.
४ समायसश्चैव (समानवयसश्चैव) P.
५. रुम्मव D.
६. स तास्तुल्य (तांस्तुल्य) वयसो P. तांस्तुल्यवयसो BD.
७. तदा DDN.; RV.V.61.1.
८. रुद्रस्तनूनं० P.
९. ई P., D.
१०. RV.V.61.11.
११. ०र्बुध्या D. बुद्ध्वा BD.; DDN.
१२. BD.; DDN. read यच्च के ष्ठेति पृष्टवान् RV.V.61.1.
१३. स्त्यान० D. स्तुत्या तया BD.
१४. प्रीत्या D.
१५. ०न्त D.
१६. ०मारुतः P.
१७. रुग्मं D.
१८. सु P. दरुत्सु सु D.
दार्भ्यो यो रथवीत्याख्यः सप्त ये मरुतां गणाः ।
ते तस्मै यद्ददुस्तुष्टास्तत्के ष्ठेत्यत्र वर्ण्यते ॥ Sy. DDN. also quotes the ślokas with a few variations.
१९. सद्यर्मर्षि० P. सद्यर्षि० D.

'एतं मे स्तोमम्'[1] इत्याभ्या दौत्ये[2] रात्रिं[3] न्यवेदयत् ।[4]
रथवीतिं तपस्यन्तं[5] सम्प्रेक्ष्यार्षेण[6] चक्षुषा ॥

रम्ये हिमवतः[7] पृष्ठे 'एष क्षेति'[8] इति चाब्रवीत् ।
ऋषेर्नियोगमाज्ञाय देव्या राज्या प्रचोदितः ॥

आदाय कन्यां तां दार्भ्यं[9] उपेयायार्चनानसम्[10] ।
पादौ तस्योपसङ्गृह्य[11] स्थित्वा प्रह्वकृताञ्जलिः[12] ॥

रथवीतिरहं दार्भ्य[13] इति नाम शशास च ।
मया[14] संयोगमिच्छन्तं[15] त्वां प्रत्याचक्षि यत् पुरा ॥

तं[16] क्षमस्व नमस्तेऽस्तु मा च मे भगवन् ! क्रुधः ।
ऋषेः पुत्रः स्वयमृषिः पितासि भगवन्नृषे[17] ॥

अतः[18] प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत् ।
पाद्यार्घ्यमधुपर्कैस्तमर्चयित्वा[19] स्वयं नृपः[20] ॥

---

१. RV.V.61.17. एतं मे स्तोममित्याभ्यां (RV.V.61.17,18) DDN.

२. दो॰ P. D.

३. रात्री P. रात्रीं न्ययोजयत् BD., DDN.

४. DDN. adds, after this hemistich, the following verse of VD.

रात्रावनिद्रां जानामि मम रात्रि महाद्युते ।
रथवीतिमहिष्या मां मन्त्रयुक्तं निवेदय ॥

५. BD., DDN. read रथवीतिमपश्यन्तीं ।

६. ॰प्रष्यार्षे॰ D.

७. रम्यति महतः D.

८. P. reads हिषा दक्षेति for एष क्षेतीति । D. reads एहिषाक्षेति for एष क्षेतीति । RV.V.61.19.

९. दभ्यः P. दाद्भ्यः D.

१०. ॰र्यना॰ P.

११. ॰स्योह(प)॰सं॰ P.

१२. प्रह्वः BD., DDN.

१३. दाभ्य P. दाद्भ्य D.

१४. मया D. मयासङ्गतिमिच्छन्तम् DDN.

१५. DDN. reads सङ्गति॰ for संयोग॰

१६. तत् BD., DDN.

१७. ऋषेः BD., DDN.

१८. हन्त BD., DDN.

१९. ॰पर्कैश्च पूजयित्वा BD., DDN. स्तमार्चना P. स्तमर्चना D.

२०. नृपम् P., D.

शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति ।
शशीयसीं तरन्तं च पुरुमीळ्हं च पार्थिवम् ॥
षड्भिः 'सनत्'[1] इति स्तुत्वा जगामर्षिरपि क्षयम् । ॥ इति ॥[2]

---

१. ०दित D. ०दिता P. RV. V.61.5.
२. BD.V.50-81.

अत्र वेदार्थदीपिकायां षड्गुरुशिष्यः—
पाद्यार्घ्यं मधुपर्कं च शुक्लमश्वशतं तथा ।
पूर्वं दत्त्वाऽत्रिपुत्राय श्यावाश्वाय ददौ सुताम् ।३२।
रुक्माभरणयुक्तं तु सोऽत्रिर्दृष्ट्वा स्वपौत्रकम् ।
महान्प्रसादो मरुतामिति हृष्टो बभूव ह ॥३३॥
अथात्रिः पुत्रमित्येव श्यावाश्वं बह्वमन्यत ।
श्यावाश्वः कृतदारोऽस्तौत् स्वोपकारकरान्बहून् ॥३४॥
[अतः प्रष्टव्यरूपेण वाच्यत्वे मरुतां स्तुतेः ।
चतुष्के देवताः के ष्ठ य ई षट्के च ते स्तुताः ॥
सनत्साश्व्यचतुष्के च तरन्तमहिषी स्तुता ।
उत मे पुरुमीळ्हस्तु स्तुतो यो मे तरन्तकः ॥
एतं मे तत्तृचे दाल्भ्यो रथवीतिः स्तुतस्तथा ।
उक्ता बृहद्देवतायां शौनकेन कथा त्वियम् ॥]
तथानुक्रमणिका—'के ष्ठैकोना गायत्रं श्यावाश्वोऽत्र बै ? (वैं०) ददश्वी तरन्तपुरुमीळ्हौ दाल्भ्यं रथवीतिं मरुतश्च दानतुष्टः प्रशशंस बुद्ध्वा च तरन्तमहिषीं शशीयसीं पञ्चम्यनुष्टुप् नवमी—सतोबृहती' इति (KSA. 5.61. or. 27.61.p.21.)
तथा पुरुषमेधे नाराशंसमेतत्सूक्तं विनियुक्तम् ।
तथा सूत्रम्, 'श्यावाश्वं तृतीयं यथा । श्यावाश्व अर्चनानसो बि ? (वि)ददश्वौ सनिं ससान । के ष्ठा नर इति च सूक्तमिति च (SSS. 16.11.7-9.)
येन नराः प्रशस्यन्ते स नराशंसो मन्त्रः (N. 9.9.) इति यास्कवचनान्नराशंससंज्ञा ज्ञेया DDN.

अत्राश्चर्यं पुरावृत्तमाहुरागमपारगाः ।
अर्चनानाः पुरात्रेयो दार्भ्येण (दाल्भ्येन) रथवीतिना ॥
आर्त्विज्याय वृतो यज्ञे वितते हौत्र आस्थितः ।
रथवीतिसुतां कन्यां ददर्श पितुरन्तिके ॥
ययाचे स्वकुमाराय श्यावाश्वाय च तां सुताम् ।
स प्रदात (सम्प्रदान०) मना भार्यामपृच्छत्किं प्रयच्छसि ॥
इति पृष्टा पुनः प्राह कथमस्मै प्रदास्यसि ।
इतः पूर्वं सुता दत्ता नासीदनृषये क्वचित् ॥
तत्तथैवेति निश्चित्य प्रत्याचष्टार्चनानसम् ।
श्यावाश्वः संस्थिते यज्ञे तेन राज्ञा निराकृतः ॥
तत्प्रत्याशान्वितो विप्रस्तपस्तेपे सुदारुणम् ।
ब्रह्मचर्यरतः शान्तो भिक्षार्थं पर्यटन् द्विजः ॥
तरन्तमहिषीं साध्वीं बिभिक्षेऽसौ शशीयसीम् ।
सा सम्प्राप्यान्तिकं पत्युः प्रोवाचागतवानृषिः ॥
इत्युक्तो नृपतिर्भार्यां प्रत्याहैनं प्रपूजय ।
सानुज्ञाता गवां यूथं प्रादादाभरणानि च ॥
तरन्तोऽपि पुनस्तस्मै प्रादाद्धनमपेक्षितम् ।
दत्वा च पुरुमीळ्हस्य स्वानुजस्यान्तिकं प्रति
प्रेरयामास (प्रेषयामास) तमृषिं सोऽपि त्वां मानयिष्यति ॥
तथेति राज्ञो वचनं निशम्य तद्भार्यया दर्शितसर्वमार्गः ।
गच्छन् शनैरर्धपथे मरुद्गणान् समानरूपान् (पांश्च) स्व दिदृक्षयागतान् ॥
विलोक्य विप्रः सभयः प्रणम्य कृताञ्जलिः कण्टकिताङ्गसङ्घः ।
तुष्टाव हृष्टान् (दृष्टान्) मरुतो विशिष्टैरर्थैर्वचोभिः परितुष्टचित्तः ॥
सम्प्राप्य सर्वं स्वमनीषितं तदा मरुद्गणेभ्यो मुदितात्मवद्भूयः ॥
तदाभवदृषिः सूक्तद्रष्टा श्यावाश्वनामकः ।
पश्चात्पुनर्गृहं गत्वा भूयो (पुरुमीळ्हगृहं पश्चाद्गत्वा) लब्ध्वा गवां शतम् ॥
दार्भ्यो (दाल्भ्यो) मन्त्रदृशे राज्ञा चोदितः स्वसुतां ददौ ।
पुरुमीळ्हस्तरन्तश्च, तद्भार्या च शशीयसी ॥
दार्भ्यो (दाल्भ्यो) यो रथवीत्याख्यः सप्त ये मरुतां गणाः ।
ते तस्मै यद् ददुस्तुष्टास्तत् के ष्ठेत्यत्र वर्ण्यते ॥
इति ॥ Sy., DDN.

के[1] यूयम्[2] । स्थ । हे नर[3]: ! श्रेष्ठतमा[4]: । ये यूयम् एते । एक[5]: । आगता[6]: स्यु: । तं मार्गेण परमस्या[7]: । परावत[7]: ।

**क्व[8] वोऽश्वाः क्वा३भीशंवः कथं शेंक कथा यय । पृष्ठे सदौ नसोर्यमः ॥ २ ॥**

**क्व वोऽश्वाः** । अश्वरुह्य तेनेव[9] वेषेण प्रायः दूरादभवत् तत्र पृच्छति[10]—क्व[11] । युष्माकम् । अश्वा स्थिताः । क्व च । अभीशव[12]: । कथम् । गन्तुं शक्नुथ[13] सभाराभ्यां पादाभ्याम् । कथम् । गच्छथ[14] । पृष्ठे[15] । ये सीदन्ति[16] । नासिकयो[17]: । यच्छन्त्यश्वान्[18] ते तथोक्ता[19]: ।

**जघने चोदं एषां वि सक्थानि नरों यमुः । पुत्रकृथे न जनयः ॥ ३ ॥**

**जघने** । जघने[20] । अश्वाजनि[21]: । एषामवलम्बते[22] । सक्थानि[23] । वियच्छन्ति[24] । यथा[25] । पुत्रकरणाय[26] । जाया[27]: सक्थिनी[28] वियच्छन्ति[29] ।

१. श्यावाश्वो गायत्र्या मरुतोऽपृच्छत् DDN.
२. भवथ । एवं स्वरूपानिश्चयात् सन्दिह्य ब्रवीति Sy. 'के ष्ठेति 'सितां सधस्तात्स्तनिहि०' (RPR.5.12.) इति षत्वे प्राप्ते '०अन्यै-रेकारात्' (RPR.5.1.) इति निषिद्धे '०सूरि-भिष्याम दिवि षन्तु के ष्ठ०' (RPR.5.17.) इति निपातनात्—षत्वम् । दधिम सदतादि-त्वाद्दीर्घः (Cf. RPR.8.15.) DDN.
३. स्थ हे नरः P. नर D. नेतारो मरुतः Sy., DDN.
४. अत्यन्तं श्रेष्ठा यूयम् Sy. अत्यन्तश्रेष्ठाः DDN.
५. प्रत्येकम् Sy., DDN.
६. ०ता स्यु D.; P. आगच्छथ Sy., DDN.
७. परमस्यास्यः P., D. अत्यन्तदूरदेशात् । अन्त-रिक्षादित्यर्थः Sy. कस्मादित्युच्यते DDN. परावत इति दूरनाम Ngh. 3.26.
८. क्वा P., D.
९. तेनैव is suggested for तेनेव ।
१०. हे मरुतः ! Sy.
११. कुत्रत्याः Sy.
१२. बन्धनरज्जवः Sy.
१३. शीघ्रं गन्तुं शक्ता भवथ Sy.
१४. याताः स्थ Sy.
१५. अश्वानां पृष्ठदेशे Sy.
१६. सीदति तिष्ठत्यत्रेति सदः पर्याणम् । तच्च दृश्यते Sy.
१७. संसिक० P., D.
१८. नियमिता पलायनप्रतिबन्धकारी पशोर्नासिक-योर्दृश्यते । तस्मादश्वादिलिङ्गैः कुत्रापि त्वरि-तगमना इव प्रतिभान्ति के यूयमिति देवत्व-मनवधार्याह Sy. १९. ०क्ता D.
२०. हन्तव्यप्रदेशे Sy.
२१. प्रेरिका कशा अराग्रकाष्ठविशेषो वा वर्तते । शीघ्रगमनाय ताडयन् वर्तत इत्यर्थः Sy.
२२. अश्वानाम् Sy.
२३. ऊरुप्रदेशान् Sy.
२४. विविच्य नियच्छन्ति । आशुधावनेन विवृता भवन्तीत्यर्थः । विवृतौ दृष्टान्तः Sy.
२५. इव Sy.
२६. पुत्रकरण उत्पादने Sy.
२७. अपत्योत्पादयित्र्यो योषितः इव । ता यथा पुत्रोत्पादनकामाः सङ्गमसमये ऊरू विवृतौ कुर्वन्ति तद्वदित्यर्थः Sy.
२८. ०नि D.
२९. VM. ignores नरः ॥ Sy. explains नरः as नेतारो मरुतः ।

**परा॑ वीरास एतन॒ मर्या॑सो॒ भद्र॑जानयः । अ॒ग्नि॒तपो॑ यथास॑थ ॥ ४ ॥**

**परा वीरासः**[1] । परागच्छत । हे वीराः[2] ! स्वगृहं प्रति । मर्याः[3] ! भद्रा[4] जाया येषां ते भद्रजानयः[5], आभरणैरलङ्कृता यूयम् । यथा[6] । भवथ[7] तथा । अग्नितप्ता[8] इव वर्णतः ।

**सन॒त्साश्व्यं॑ प॒शुमु॒त गव्यं॑ श॒ताव॑यम् ।**
**श्या॒वाश्व॑स्तुताय॒ या दोर्वी॒रायो॑प॒बर्बृ॑हत् ॥ ५ ॥**

**सनत् सा**[9] । प्रायच्छत्[10] । तरन्तभार्या[11] शशीयसी श्यावाश्वाय । अश्वसमूहम्[12] । पशुम्[13] । अपि[14] । शतावियुक्तम्[15] । गोसङ्घं[16] च । श्यावाश्वेन भिक्षमाणेन स्तुताय[17] । वीराय[18] तरन्ताय । स्वबाहुम्[19] । उपबर्हं कृतवती[20] तस्य भार्येत्यर्थः[21] ।

**उ॒त त्वा॒ स्त्री शशी॑यसी पुं॒सो भ॑वति॒ वस्य॑सी । अदे॑वत्रादरा॒धसः॑ ॥ ६ ॥**

**उत त्वा**[22] । अपि खलु[23] । एका[24] । स्त्री । शशीयसी नाम[25] । पुंसोऽपि[26] [27] । भवति । प्रशस्ता[28] । देवानामत्रातुः[29] । अधनात्[30] ।

---

१. कशाताडनादिलिङ्गेन जिगमिषून् मत्वा ब्रूते Sy.
२. ०रा P. हे वीराः ! अमित्राणामीरयितारः ! Sy.
३. हे मर्त्येभ्यो हिताः ! Sy.
४. भद्राय P. मद्राय D.
५. भद्रः स्तुत्यो जानिर्जन्म येषां ते तथोक्ताः । रुद्रपुत्रा इत्यर्थः Sy.
६. रथा P., D. यथा दीप्तास्तद्वत् प्रदीप्ताः Sy.
७. अथवाग्नितप्ता दग्धदेहा यथा पलायन्ते तथा भवथेति Sy.
८. अग्निना तप्तास्ताम्रादयः Sy.
९. साः D.
१०. प्रादात् Sy.
११. सा तरन्तमहिषी मह्यम् Sy.
१२. अश्वात्मकं तत्समूहात्मकं वा Sy.
१३. पशुम्—जातावेकवचनम् Sy.
१४. अपि च Sy.
१५. शतयुक्तं P., D. अनेकैरविभिर्युक्तं सनदिति Sy.
१६. गोसमूहात्मकं पशुम् Sy.
१७. ०वाश्वा P. ०श्वे D. श्यावाश्वेन मया स्तुताय Sy.
१८. वीरा P.
१९. स्वकीयं भुजम् Sy.
२०. उपोदयच्छदालिङ्गनाय सा सनदिति । यतो भर्तृप्रेमास्पदा तस्मादेव बहु धनं दातुं शक्तेत्यर्थः Sy.
२१. VM. ignores या ।
२२. श्यावाश्वो गायत्र्या शशीयसीं तुष्टाव DDN.
२३. अपि च । यद्वा । उतेत्ययमेवकारार्थे । स्त्रीषु सैव प्रशस्येत्यर्थः । 'त्वसमसिमनेमेत्यनुच्चानि' इति वचनात् त्वेति निघातः Sy.
२४. त्वशब्द एकपर्यायः, 'त्वसमसिमेत्यनुच्चानि' इति निघातः DDN. अप्येकः पश्यन् N.1.19.
२५. इत्येतन्महिष्या नाम Sy.
२६. पुरुषात् Sy., DDN.
२७. अपि is omitted by P.
२८. वसीयसी Sy. वरीयसी श्रेष्ठा भवति तस्माद् गुणेष्वेवादरं कुर्यादित्यर्थः DDN.
२९. कस्मात्पुंसः ? इत्युच्यते । देवा अनेन त्रायन्ते स्तुत्यादिना स देवत्रः । न देवत्रः अदेवत्रः । तस्मात् Sy. सा एव, देवान् यस्त्रायते स्तुत्यादिना स देवत्रः, ततोऽन्योऽदेवत्रः । तस्मात् DDN.
३०. अथनात् P., D. राधो धनम् । दानार्हधनरहितात् । लुब्धकादित्यर्थः Sy. न विद्यते यजनयोग्यं राधो धनं यस्य सः अराधाः । तस्मात् DDN.

**वि या जा॒नाति॒ जसु॑रिं॒ वि तृष्य॑न्तं॒ वि का॒मिन॑म् । दे॒व॒त्रा कृ॑णु॒ते मनः॑ ॥ ७ ॥**

**वि या जानाति** । विजानाति[2] । या[3] । उपक्षीणम्[4] । पिपासुम्[5] च । धनकामुकं[6] चातिथिम् । सा[7] । देवेषु । कृणुते[8] । मनः ।

**उ॒त घा॒ नेमो॒ अस्तु॑तः पु॒माँ॒ इति॑ ब्रुवे प॒णिः । स वैर॑देय॒ इत्स॒मः ॥ ८ ॥**

**उत घा नेमः**[9] । अपि च । खलु[10] । अस्या शशीयस्या अर्धभूतः[11] । पुमान् भर्ता । मयाऽस्तुतः । इति । तं च स्तौमि[12] । स्तोताहम्[13] । सः[14] । वीरस्य मम दत्ते धने[15] । समानः[16] । एव[17] भवति समानं साम्यमनयोरिति[18] ।

**उ॒त मे॑ऽरपद्यु॒व॒तिर्म॑म॒न्दुषी॒ प्रति॑ श्या॒वाय॑ व॒र्त॒निम् ।**
**वि रोहि॑ता पुरुमी॒ळ्हाय॑ येमतु॒र्विप्रा॑य दी॒र्घय॑शसे ॥ ९ ॥**

**उत मे** । अपि च । मह्यम् । प्रति । अकथयत्[19] । युवतिः[20] । माद्यन्ती[21] हृष्टा । श्यावाश्व एव

---

१. Omitted by P.

२. Omitted by D. अनुकम्पयाभिमतं दत्तवतीत्यर्थः Sy.

३. शशीयसी Sy.

४. यो पक्षिणं P. व्यथितम् । जसिस्ताडनकर्मा उपक्षपणकर्मा वा Sy.

५. तृष्यन्तम् Sy.

६. धनकाममुदक P. धनाद्यभिलाषवन्तम् Sy.

७. स P.

८. कुरुते देवप्रीत्यर्थं प्रदानबुद्धिं करोति या सैव स्त्रीति पूर्वत्र सम्बन्धः Sy.

९. श्यावाश्वस्तरन्तं गायत्र्या तुष्टाव DDN.

१०. घेति पूरणः Sy.

११. ०यस्यार्थभू० P., D. नेमोऽर्धः । जायापत्योर्मिलित्वैककार्यकर्तृत्वादेक एव पदार्थः । 'अर्धं शरीरस्य भार्या' इत्यादिस्मृतेः । शशीयस्या अर्धभूतस्तरन्तः Sy. शशीयस्या आदेशवर्तिन्या अर्धभूतः त्वो नेम इत्यर्धवाचिनौ (Cf.N.3.20.) जायापत्योर्मिलितयोरेककार्यकर्तृत्वादेक एव । 'अर्द्धो ह वा एष आत्मनो यज्जायेति' शतपथे (SB.5.2.1.10.) तस्मान्नेम इत्युक्तम् DDN.'त्वो नेम इत्यर्धस्य' N.3.20.

१२. बहुधा स्तुतोऽपि गुणस्यातिबाहुल्यादस्तुत एवेति ब्रुवे Sy.

१३. पणिः स्तोता । पण स्तुतौ DDN.

१४. सत P. सव D. तरन्तः Sy., DDN.

१५. वीरा धनानां प्रेरयितारो दानशीलाः । तैर्दातव्यं धनं देयं तस्मिन् धने Sy. अमित्रान् वारयन्तीति वीरास्तैर्दातव्यं धनं वैरदेयं तस्मिन् धने DDN.

१६. सर्वेभ्यो दातेत्यर्थः Sy.

१७. इदिति पूरणः Sy., DDN.

१८. The passage समानं साम्यमनयोः should immediately follow समानः and precede एव भवति ।

१९. ०कथंय० P., D. अलपत् । स्पष्टमाचष्ट Sy.

२०. प्रवृत्तयौवना Sy.

२१. ०न्ति P. प्रतिमोदमाना Sy.

श्यावस्तस्मै[1]। मार्गम्। अथ मा रोहितवर्णाविश्वौ[2]। दीर्घकीर्तिम्[3]। मेधाविनम्। पुरुमीह्ळं[4] च प्रति। भक्षणाय गन्तुं तेन मार्गेण वि येमतुः[5]।

**यो मे धेनूनां शतं वैददश्विर्यथा ददत्। तरन्तइव मंहना ॥ १० ॥**

यो मे[6]। यः[7]। मे[8]। धेनूनाम्। शतम्। विददश्वस्य पुत्रस्तरन्तः[9]। इव[10]। प्रायच्छत्[11] तं प्रति गन्तुं[12] नदेवाह[13] तरन्त इव[14]। महत्वेन[15]।

**य ईं वहन्त आशुभिः पिबन्तो मदिरं मधु। अत्र श्रवांसि दधिरे ॥ ११ ॥**

य ईम्[16]। ये[17]। यच्छन्ति[18]। आशुभिरश्वैः[19]। मदकरम्। मधु[20]। पिबन्तस्ते। अस्यां[21] पृथिव्याम्[22]। अन्नानि[23]। स्थापयन्ति[24]।

**येषां श्रियाधि रोदसी विभ्राजन्ते रथेष्वा। दिवि रुक्मइवोपरि ॥ १२ ॥**

येषां श्रिया। येषाम्[25]। श्रिया[26]। अधिष्ठिते[27]। द्यावापृथिवी[28]। ये च[29]। रथेषु। विभ्राजन्ते[30]। दिवि[31]। आदित्य इव[32], उत्तरत्र सम्बन्धः[33]।

---

१. श्यावञ्चवस्तस्मै P. श्यावाश्वाय Sy.

२. शशीयस्या दत्तौ Sy.

३. ०र्तिः P. प्रभूतान्नाय प्रभूतकीर्तये वा Sy.

४. एतन्नामकाय प्रभूतगृहाय। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (Pa.2.3.14.) इति चतुर्थी। पुरुमीळ्हं प्राप्तुमित्यर्थः Sy.

५. ०मतः P., D. धृतवन्तावित्यर्थः। या अश्वाभ्यां युक्ते रथे स्थापयित्वा पुरुमीळ्हगृहस्य मार्ग प्रदर्शयन्ती पुरतो गता सैव पुंसो भवति वस्यसीति पूर्वत्र सम्बन्धः Sy. ६. Omitted by D. ७. इयं पुरुमीळ्हस्तुतिः Sy.

८. मह्यम् Sy. ९. पुरुमीळ्होऽपि Sy.

१०. स यथा धेनुशतं बहुविधं च दत्तवान् तद्वद्वैददश्विः पुरुमीळ्होऽपि ददत्। तं स्तुव इति शेषः Sy.

११. This seems to be the explanation of यथा ॥ येन प्रकारेण Sy.

१२. दत्तवान् Sy. १३. प्रतु गन्त तदेवाह P.

१४. स यथा धेनुशतं बहुविधं च धनं दत्तवान् तद्वद्वैददश्विः पुरुमीळ्होऽपि ददत्। तं स्तुव इति शेषः Sy.

१५. ०त्वेन is suggested for त्वेन ॥ मंहनीयानि धनान्यपि ददत् Sy.

१६. इदानीं मरुत एवैत इति निश्चित्य जनप्रसिद्धैर्माहात्म्यैः स्तौति Sy.

१७. Omitted by D. मरुतः Sy.

१८. च्छन्ति P. उह्यन्ते Sy.

१९. शीघ्रगामिभिरश्वैः Sy.

२०. सोमरसम्। पाथेयत्वेन धृतं सोममित्यर्थः। ते मरुतः Sy. २१. अस्मिन् देशे Sy.

२२. स्तुतिजनितानि यशांसि Sy.

२३. ०ति D. धारयन्ति Sy.

२४. VM. ignores ईम् ॥ इदानीम् Sy.

२५. मरुताम् Sy. २६. कान्त्या Sy.

२७. अधिते P. भवत इति शेषः Sy.

२८. द्यावापृथिव्यौ Sy.

२९. आ इति चार्थे Sy.

३०. यस्मादेते मरुतः विशेषेण दीप्यन्ते Sy.

३१. द्युलोके Sy.

३२. तत्र दृष्टान्तः। रोचमान आदित्य इव Sy.

३३. VM. ignores उपरि ॥ उपरिभूते। यद्वा उपरि रथस्योपरीति वा योज्यम् Sy.

**युवा स मारुतो गणस्त्वेषरथो अनेद्यः । शुभंयावाप्रतिष्कुतः ॥ १३ ॥**

**युवा स मारुतः ।** युवा[1] । सः । मारुतः । गणः[2] । दीप्तरथः । अकुत्स्यः[3] । शुभं गच्छन्[4] । शत्रुभिर-प्रतिकृतः[5] ।

**को वेद नूनमेषां यत्रा मदन्ति धूतयः । ऋतजाता अरेपसः ॥ १४ ॥**

**को वेद[6] ।** कः । वेद[7] । एषां[8] तत् स्थानम् । यत्र[9] । मदन्ति[10] । कम्पयितारः[11] । यज्ञार्थं[12] जाताः । अपापाः[13] ।

**यूयं मर्तं विपन्यवः प्रणेतार इत्था धिया । श्रोतारो यामहूतिषु ॥ १५ ॥**

**यूयम् ।** यूयम् । मनुष्यम्[14] । हे मेधाविनः[15] ! प्रणयथ[16] । सत्यमेव[17] । कर्मणा[18] । श्रोतारश्च[19] तस्यागमनम् । आगमनार्थेषु[20] तस्याह्वानेषु ।

**ते नो वसूनि काम्या पुरुश्चन्द्रा रिशादसः । आ यज्ञियासो ववृत्तन ॥ १६ ॥**

**ते नः[21] ।** ते[22] । अस्मभ्यम् । वसूनि[23] । कमनीयानि[24] । बहूनां ह्लादयितारः[25] । रिशतामसितारः[26] । त आवर्तन[27] ? हे यज्ञियाः[28] !

---

१. सर्वत्र मिश्रयिता नित्यतरुणो वा Sy.
२. ०तोगणः D.
३. ०त्स्य D. अनिन्द्यः Sy.
४. शोभनं गन्ता Sy.
५. अप्रतिगतोऽप्रतिशब्दितो वा । एवं महानुभावो गणो दीप्यत इति Sy.
६. को वेद omitted by P.
७. जानाति Sy.
८. मरुताम् Sy.
९. स्थाने Sy.
१०. हृष्यन्ति Sy.
११. शत्रूणां कम्पकाः Sy.
१२. जलार्थमुत्पन्ना यज्ञे वा प्रादुर्भूताः Sy.
१३. VM. ignores नूनम् ॥ इदानीम् Sy.
१४. ०ष्या P. ०ष्य D. मरणस्वभावं यजमानम् Sy.
१५. हे स्तुतिकामाः ! मरुतः ! Sy.
१६. प्रणेतारः । प्रकर्षेण प्रापयितारोऽभिमतं स्वर्गादिकम् Sy.
१७. अनया Sy.
१८. इदानीं कृतप्रकारयानुग्रहबुद्ध्या ईदृशेन स्तुतिकर्मणा वा निमित्तेन Sy.
१९. श्रोतार आह्वानानाम् Sy.
२०. यामो गमनम् । तदर्था हूतयो यस्मिन्निति यामहूतयो यज्ञाः । तेषु Sy.
२१. न P., D. २२. यूयम् Sy.
२३. निवासयोग्यानि धनानि Sy.
२४. स्पृहणीयानि Sy.
२५. प्रभूताह्लादकधनाः Sy.
२६. हे हिंसकानां शत्रूणामस्तारः ! Sy.
२७. ०तनं D. आववृत्तन is suggested for आवर्तन ॥ आवर्तयथेत्यर्थः । मरुतां दानप्रशंसाया अपेक्षितत्वान्न प्रार्थनोचिता Sy.
२८. हे यज्ञार्हाः ! Sy.

**एतं मे स्तोममूर्म्ये दार्भ्याय परा वह । गिरो देवि रथीरिव ॥ १७ ॥**

**एतं मे ।** एतम् । मे । स्तोमम् । हे रात्रि ! दार्भ्याय राज्ञे रथवीतये । अवगमय । गिरश्चेमा दुहितृयाचनविषयाः । रथान् इव शीघ्रम् ।

**उत मे वोचतादिति सुतसोमे रथवीतौ । न कामो अप वेति मे ॥ १८ ॥**

**उत मे वोचतात् ।** अपि च । मे । ब्रूहि । इत्थम् । सुतसोमे । रथवीतौ । न । कामस्तव दुहितृविषयः । मम । अपगच्छतीति ।

---

१. श्यावाश्वो गायत्र्या रात्रिं विवाहदौत्ये प्रेरयति DDN.
सम्पन्नऋषिभावस्य श्यावाश्वस्यार्चनानसः ।
रथवीतिसुतायाश्च विवाहं शौनकोऽब्रवीत् ॥
मरुत्सु तु प्रयातेषु श्यावाश्वः सुमहायशाः ।
प्रादुर्भूतार्षमात्मानं ज्ञात्वात्रिकुलनन्दनः ॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा
स सत्यमृषिमात्मानं प्रवक्ष्यन् रथवीतये ॥
'एतं मे स्तोमम्' इत्याभ्यां दौत्ये रात्रिं न्यवेदयत् ।
ऋषेर्नियोगमाज्ञाय देव्या रात्र्या प्रचोदितः ॥
आदाय कन्यकां दातुमुपेयायार्चनानसम् ।
पादौ तस्योपसंगृह्य स्थित्वा प्रह्वः कृताञ्जलिः ॥
रथवीतिरहं दार्भ्य इति नाम शशंस सः ।
मया संयोगमिच्छन्तं त्वां प्रत्याचक्षि यत् पुरा ॥
तत्क्षमस्व नमस्तेऽस्तु मे मा स्म भगवन् क्रुधः ॥
ऋषेः पुत्रः स्वयमृषिः पितासि भगवन्नृषेः ।
हन्त प्रतिगृहाणेमां स्नुषामित्येनमब्रवीत् ॥
तस्मै ददावश्वशतं स राजा स्वलङ्कृतां चापि सुतां स्नुषार्थम् ।
विवाहकालेऽपि ददौ नरेन्द्रः शतं हयानां दुहितुः सहस्रम् ॥
गवां सहस्रं वसु च प्रभूतं तप्तुं तपोऽन्तेऽथ वनं जगाम ॥ इति Sy.
These stanzas are already quoted on RV.V.61.1. by VM. DDN. also quotes these stanzas with some variations.

२. मदीयम् Sy., DDN.

३. मरुद्भ्यः कृतं स्तोत्रमहं मन्त्रदृग् भूत्वा मरुतः स्तुतवानित्येवम् Sy. मदीयमेतं स्तोमं मरुद्भ्यः कृतं स्तोत्रमहं मन्त्रदृग्भूत्वा मरुदादीन् स्तुतवानित्येवंपरा मत्तः पराङ्मुखी दार्भ्याभिमुखी भूत्वा DDN.

४. रात्री P. रात्रि ! देवि ! Sy., DDN. ऊर्म्येति रात्रिनाम Ngh. 1.7.

५. दाह्वाय D., P. श्यावाश्वाय Sy.

६. अपगम P. अवगमि D. प्रापयेत्यर्थः । तदेवादरार्थमुच्यते Sy. प्रापय DDN.

७. स्तुतीर्मरुद्विषयाः Sy. तत्र दृष्टान्तः हे देवि ! स्तुतीः मरुद्विषयाः DDN.

८. रथी यथा रथेऽभिप्रेतं वसु स्थापयित्वाभिमतं देशं प्रापयति तद्वत् Sy. रथेऽभिप्रेतं वस्तु रथीर्यथा स्थापयित्वा अभिमतप्रदेशं प्रापयति तद्वत् । एवं प्रेरकात्कार्यसिद्धिर्जाता DDN.

९. VM. ignores देवि ।

१०. हे ऊर्म्ये ! Sy.

११. माम् Sy.

१२. ब्रूहि किमित्युच्यते Sy.

१३. कृतसोमयागे Sy.

१४. राज्ञि Sy.

१५. तत्पुत्रीविषयः Sy.

१६. ०न्तीति D. (न) अपगच्छति (न) विरमत इतीत्थं वोचतात् Sy.

एष चे॑ति रथवी॑तिर्म॒घवा॒ गोम॑ती॒रनु॑ । पर्व॑ते॒ष्वप॑श्रितः ॥ १९ ॥

एषः[1] । एषः । निवसति[2] । रथवीतिः धनवान् । गोमतीर्नदी:[3] । लक्षीकृत्य[4] गोमत्याः समीपेऽभि तस्या[5]-वासस्तत्र च तपोऽर्थम् । पर्वतेषु[6] । अपश्रितस्तं[7] गत्वा मदीयं वचनं ब्रूहीति ।[8]

V.62.

ऋ॒तेन॑ ऋ॒तमपि॑हितं ध्रु॒वं वां॒ सूर्य॑स्य॒ यत्र॑ वि॒मुच॒न्त्यश्वा॑न् ।
दश॑ श॒ता स॒ह त॑स्थु॒स्तदेकं॑ दे॒वानां॒ श्रेष्ठं॒ वपु॑षामपश्यम् ॥ १ ॥

ऋतेन[9] ॥ श्रुतवित् ॥ हे मित्रावरुणौ ! उदकेन । युवयोः[10] । स्थानम्[11] । अपिहितम्[12] उदकमध्ये[13] वर्तत इत्यर्थः । सूर्यस्य । यत्र[14] । अश्वान् पश्चिमायां दिशि । देवा विमुञ्चन्ति[15] सरथयोर्वा[16] तत्र[17] च । तत् स्थानमभव-दिति[18] । तच्च[19] । एकं स्थानम् । दश[20] । शतानि देवानाम् । सह । अधितिष्ठन्ति तेषां देवानां तस्मिन् स्थाने ।

---

१. कन्यां दत्वा कृतार्थं तं श्यावाश्वोऽथ वनं गतम् । रथवीतिं तपस्यन्तं सम्प्रेक्ष्यार्षेण चक्षुषा । रम्ये हिमवतः पृष्ठे 'एष क्षेति' इति सोऽब्रवीत् Sy., DDN.

२. तत्रान्ते वयसि निवासमकरोदित्यर्थः । एष क्षेति—'एषस्य स च०' इति 'ऊष्मा परिलुप्यते त्रयाणाम्०' (RPR. 2.8;11.) इत्यूष्मलोपः DDN.

३. गोमदतीर्न० P. उदकवतीः Sy., DDN.

४. अनुसृत्य नदीनां तीरे Sy. अनुसृत्य DDN.

५. तस्य वा० P.

६. हिमवत्पर्वतप्रान्तेषु Sy. हिमवत्प्रान्तेषु DDN.

७. र्वतेष्व व श्रित० P. आश्रितः Sy., DDN.

८. Ms. D. puts the figure ॥६१॥ here to indicate the end of the sixty-first hymn. No such number is given in P.

९. 'ऋतेन ऋतम्' इति नवर्चं षष्ठं सूक्तमात्रेयस्य श्रुतविद आर्षं त्रैष्टुभं मैत्रावरुणम् । तथा चानुक्रम्यते 'ऋतेन नव श्रुतविन्मैत्रावरुणं वै तत्' (KAS.27.62.p.21.) इति । 'वै तत्' इत्युभयोः प्रयोगात्तुह्यादिपरिभाषयैतदादीन्येकादश सूक्तानि मित्रावरुणदेवत्यानि (Cf. KSA.12.3.p.5.) । विनियोगो लैङ्गिकः Sy.

१०. यत्र वां युवाभ्यां स्थितिस्तदित्यर्थः । सूर्यमण्डले मित्रावरुणयोः स्थितिः 'चि॒त्रं दे॒वाना॒मुद॑गा॒दनी॑कं॒ चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः' (RV. I.115.1.) 'उद्वां॒ चक्षु॑र्वरुण सु॒प्रती॑कं दे॒वयो॑ः' (RV.VII.61.1.)इति 'चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्य' (RV.VII.63.1.) इत्यादिषु प्रसिद्धा Sy.

११. ऋतं सत्यभूतं मण्डलम् Sy.

१२. आच्छादितम् Sy.

१३. ० हितदक० D.

१४. यस्मिन् मण्डले स्थितान् Sy.

१५. देव D.

१६. विमोचयन्ति स्तोतारः । मन्देहादिभिर्निरुद्धानित्यर्थः । अथवा शीघ्रधावनाय स्तुत्या प्रेरयन्ति Sy.

१७. ०यो वा P., D.

१८. ०मभवति P.

१९. मण्डलम् Sy.

२०. यस्मिश्च मण्डले दशशता शतानि सहस्रसंख्याका रश्मयः Sy.

उप्तानाम् । श्रेष्ठं तन् स्थानम् । पश्यामि ।

**तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुहे ।**
**विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥ ३ ॥**

तत् सु वाम् । तत् । सुष्ठु । वाम् । दोग्धि । हे मित्रावरुणौ ! महत्त्वम् । आदित्यः । तत्र स्थिता अपः । अहभिः आदित्यो मैत्रावरुणं तेजो दोग्धीति । विश्वाः । पिन्वथश्च युवाम् । आदित्यस्य । अपः । तौ वाम् । आदित्यस्यैकः । रश्मिः । अनुवर्तते ।

**अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः ।**
**वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू ॥ ३ ॥**

[ अधारयतम् । ] अधारयतम् । पृथिवीम् । अपि च । द्याम् । हे मित्रावरुणौ ! राजानौ ! हविर्भिः ।

---

१. वपुष्मतां तेजोवतामग्न्यादीनाम् । मत्वर्थलक्षणा, अथवा व्यधिकरणषष्ठी । देवानां वपुषां शरीराणां श्रेष्ठम् । मण्डलं हि सूर्यस्य वपुःस्थानीयम् Sy.
२. प्रशस्यम् Sy.
३. अपश्यम् । अथवा वां युवयोर्मध्ये सूर्यस्य मण्डलमपश्यमिति व्याख्येयम् । 'मैत्रं वा अहः' (TB.1.7.10.1.) इति श्रुतेर्मित्रस्यैव सूर्यत्वादित्याशयेन Sy.
४. VM. ignores ध्रुवम् ॥ ध्रुवं शाश्वतमपश्यमिति सम्बन्धः Sy.
५. अतिप्रशस्तमित्यर्थः Sy.
६. वं P. युवयोः Sy.
७. दाश्वि P. दुग्धे Sy.
८. किं तदित्युच्यते । सततगन्ता सर्वस्य प्रेरको वादित्यः Sy.
९. महत्वानन्तादित्यन्तत्र P. दहत्वागन्तादित्यस्तत्र D. १०. स्थावरभूता अपः Sy.
११. अहोभिर्वर्षर्तुसम्बन्धिभिः Sy.
१२. अपो हभि रादित्य P. अपो हरादित्या D.
१३. सर्वाः Sy. १४. वर्धयथः Sy.
१५. स्वयं सर्तुरादित्यस्य Sy.
१६. अवस्तौ P. धेनाः लोकानां प्रीणयित्रीर्द्युतीः Sy. १७. युवयोः Sy.
१८. अप्रतियोगी Sy.
१९. पविः । पविरिति रथस्य नेमिः 'पवी रथनेमिर्भवति' (N.5.5.) इति यास्कवचनात् । तथाप्यत्र लक्षितलक्षणया रथे वर्तते केवलचक्रस्यावर्तनायोगात् । युवयोरेको रथः Sy.
२०. अनुक्रमेण परिभ्रमति Sy.
२१. VM. ignores आ ।
२२. The *pratīka* is supplied by the Editor.
२३. हे देवौ ! युवाम् । वरुणौ । प्रतियोग्यपेक्षया द्विवचनम् । अत्र पादादित्वादाद्यं पदं न निहन्यते । वरुणेत्येतस्य तु 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्याविद्यमानवत्त्वेनास्यैव पादादित्वादनिघातत्वं युक्तम् । नैवं भवति । 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति वरुणेत्येतस्यामन्त्रितसमानाधिकरणत्वादस्य च सामान्यवचनत्वादविद्यमानवत्त्वाभावेन पादादित्वाभावादुत्तरस्य निघातत्वं युक्तम् Sy.
२४. राजानौ P., D. मित्रभूताः स्तोतारो राजानः स्वामिन ईश्वरा भवन्ति ययोः सकाशात्तौ मित्रराजानौ Sy.
२५. Omitted by D. तेजोभिः स्वसामर्थ्यैः Sy.

वर्धयतम्[1] । ओषधीः । पशूश्चापि । पिन्वतम्[2] । वृष्टिं च । अवसृजतम्[3] । क्षिप्रदानौ !

**आ वामश्वासः सुयुजो वहन्तु यतरश्मय उप यन्त्वर्वाक् ।**
**घृतस्य निर्णिगनु वर्तते वामुप सिन्धवः प्रदिवि क्षरन्ति ॥ ४ ॥**

**आ वाम् ।** आवहन्तु[4] । वाम्[5] । अश्वाः । सुयुजः[6] । नियतप्रग्रहाः[7] । उपगच्छन्तु[8] । अभिमुखम्[9] ।
घृतस्य[10] । रूपम्[11] । वाम् । अनुवर्तते[12] । परिवृतेनावामुदकेन[13] ? उपक्षरन्ति युवयोः सकाशात्[14] । प्रदीप्तेऽन्तरिक्षे[15][16] ।

**अनु श्रुतामुमतिं वर्धदुर्वीं बर्हिरिव यजुषा रक्षमाणा ।**
**नमस्वन्ता धृतदक्षाधि गर्ते मित्रासाथे वरुणेळास्वन्तः ॥ ५ ॥**

**अनु श्रुताम् ।** विश्रुतम्[17] । भवतो रूपम्[18] । वर्धत्[19] । विस्तृतम् । बर्हिरिव[20] । यजुषाऽध्वर्युरूपम्[21][22] ।
रक्षमाणौ[23] हविष्मन्तौ[24] । धृतवलौ[25] । रथस्योपरि[26] । अन्वासाथे[27] । पृथिवीषु[28] । अन्तर्देवयजनेषु[29] ।[30]

**अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वन्तः ।**
**राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ ॥ ६ ॥**

**अक्रविहस्ता[31] ।** क्रविर्हिंसाकर्माऽहिंसितहस्तौ[32][33] । यजमानाय[34] । अत्यन्तं रक्षकौ[35] । हे मित्रावरुणौ[36] !

---

१. ०यत P., D. वर्धयत वृष्टिप्रेरणेन Sy.
२. ०तः D. गवाश्वादीन् वर्धयतम् Sy.
३. अवाङ्मुखं प्रेरयतम् Sy.
४. हे मित्रावरुणौ ! Sy. ५. युवाम् Sy.
६. सुष्ठु रथे युक्ताः सन्तः Sy.
७. निगत० P. सारथिनियतप्रग्रहास्ते Sy.
८. उपयन्तु Sy. ९. अर्वाक् Sy.
१०. पृघृतस्य P. प्रघृतस्य D. उदकस्य Sy.
११. रूपाः P. रूपाम् D.
१२. अनुगच्छति Sy. १३. ०तेनौवा० P.
१४. उपगच्छन्ति युवयोरनुग्रहात् Sy.
१५. पुराणाः Sy. 'प्रदिवि' इति पुराणनाम Ngh. 3.27. १६. VM. ignores सिन्धवः ।
१७. विश्रुताम् Sy.
१८. ०प P., D. शरीरदीप्तिमित्यर्थः Sy. अमतिम् । रूपनामैतत् Ngh. 3.7.
१९. वर्धतद् P. अनुवर्धयन्तौ Sy.
२०. यज्ञः । स यथा Sy.
२१. मन्त्रेण रक्ष्यते तद्वत् Sy.
२२. ०र्युपरु० P. ०र्युवरु० D.
२३. पालयन्तौ Sy. २४. अन्नवन्तौ Sy.
२५. हे आत्तबलौ ! Sy.
२६. रथे Sy. 'रथोऽपि गर्त उच्यते' (N. 3.5.) । 'आ रोहथो वरुण मित्र गर्तम्' (RV. V. 62.8.) इति Sy.
२७. उपर्च सा साथे P. उपविशथः Sy.
२८. यागभूमिषु Sy.
२९. ०वीस्वन्त दे० P. मध्ये Sy.
३०. VM. ignores मित्र and वरुण ॥ हे मित्रावरुणौ ! युवामुक्तलक्षणौ सन्तौ Sy.
३१. अकवि० D. ३२. ०विर्हिसाकर्मा हिंसाकर्मा हिं० P. कविर्हिसाकर्मा हिं० D.
३३. अकृपणहस्तौ । दानशूरावित्यर्थः Sy.
३४. शोभनस्तुतिकर्त्रे Sy.
३५. परस्तात् पातारौ रक्षितारौ Sy.
३६. हे मित्रावरुणौ ! युवाम् Sy.

यम् । रक्षथः । देवयजनेषु । तस्मै यजमानाय धनम् । अक्रुध्यन्तौ प्रयच्छथः । तौ युवाम् । सहस्रस्थूणम् । रथं च । सह । धारयथः ।

हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्य१श्वाजनीव ।
भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगर्त्यस्य ॥ ७ ॥

हिरण्यनिर्णिक् । हिरण्यरूपा । अयोमयी च । अस्य रथस्य । स्थूणा । विभ्राजते च । सान्तरिक्षे । अश्वाजनीव । अवलम्बमाना । भद्रे सुकल्याणे । उद्गतान्ने । प्ररूढसस्ये उप्तव ? वाशब्द उपमार्थीयः । निलतिर्गतिकर्मा । अन्नमिव । भजेम, उदकम् । रथे स्थितम् ।

हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥ ८ ॥

हिरण्यरूपम् । हिरण्यरूपम् । उषसि । व्युष्टायाम् । अयःस्थूणम् । सूर्ये । उदिते प्रातरित्यर्थः ।

---

१. यजमानम् Sy. २. तस्मै सुकृते अक्रविहस्ता परस्पा च भवथ इति सम्बन्धः Sy.

३. VM. seems to explain इलासु and अन्तः together as देवयजनेषु ॥ यागभूमिषु मध्ये Sy. ४. धन P.

५. द्वौ परस्परम् Sy. ६. अनेकावष्टम्भकस्तम्भोपेतं सौधादिरूपं गृहं च Sy.

७. साहित्येन Sy. ८. ०थ P., D. सुकृते यजमानाय । अथवा क्षत्रं बलमपरिमिताभिः स्थूणाभिरुपेतं रथं चागमनार्थं सह धारयथः Sy.

९. VM. ignores राजाना ॥ राजाना राजमानौ Sy. १०. अनयो रथो हिरण्यनिर्णिक् हिरण्यरूपः Sy. निर्णिगिति रूपनाम Ngh. 3.7. ११. ०पयो मयि D. अयोविकारा इत्यर्थः । अयोमया वा तादृशो रथः Sy. अय इति हिरण्यनाम Ngh. 1.2.

१२. कीलकादयः Sy. १३. चासावन्त० P.

१४. अश्वा व्यापनशीला मेघाः । तानजति गच्छतीत्यश्वाजनी विद्युत् । सेव दिवि भ्राजते Sy.

१५. स्थूणा यूपयष्टिरवस्थितः Sy.

१६. ०णा P. कल्याणे स्तुत्ये वा Sy.

१७. क्षेत्रे देवयजने Sy.

१८. 'तिल स्नेहने' । तिलुः स्निग्धा इला भूमिर्यस्य तत् क्षेत्रं तिल्विलं देवयजनम् । घृतसोमादिना स्निग्धे भद्रे च क्षेत्रे Sy.

१९. The passage, तिलतिर्गतिकर्मा should immediately follow प्ररूढसस्ये ।

२०. ०न्नभिला P. मध्वः मधुपूर्णम् Sy.

२१. सम्भजेम Sy.

२२. गर्तस्य गर्त रथम् । कर्मणि षष्ठ्यौ । अधीति पूरणः । अथवा गर्तस्याधि रथस्योपरि मध्वो मधु सोमरसं सनेम स्थापयेमेत्यर्थः Sy.

२३. श्रुतविदात्रेय एतया त्रिष्टुभा मित्रावरुणावस्तौत् । राजसूयेऽभिषेचनीयो नाम क्रतुः, तत्र यजमानस्य रथमारुरुक्षतो गृहीतेषुधनुष्कौ बाहू अनयाऽभिमन्त्र्येते । तावेवात्र मित्रावरुणावभिप्रेतावधिदेवताभिप्रायेण ।....इति तावुच्येते Dur. श्रुतविद आर्षम् SKN.

२४. हिरण्यसदृशवर्णम् Dur. २५. उषसः Dur.

२६. प्रातःकाल इत्यर्थः Sy. व्युच्छेदकाले Dur. व्युच्छनवेलायाम् SKN.

२७. अयोमयशङ्कुम् Sy. एवंरूपम् अयोमयं स्थूणम् Dur. अयोमयी स्थूणा, अतिस्थूला वा यस्य तम् SKN. २८. उदितौ उदये । स एव कालः प्रकारान्तरेणोक्तः Sy. उदयकाले Dur. उदयवेलायाम् SKN. २९. प्रेतरि० P.

हे मित्रावरुणौ[1] ! रथम्[2] । आरोहथः[3] । अस्माद् रथात्[4] । पश्यथः[5] । अदीनम्[6] । दीनम्[7] । च जनम्[8] ।

**यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा ।**
**तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्याम ॥ ९ ॥**

[10]**यद् बंहिष्ठम्** । यत् । अतिशयेन बहुलं[11] विस्तृतम् । न च । शत्रूणामतिविधातुं शक्यं[12] भवति । हे शोभनदानौ ! अच्छिद्रम्[13] । गृहम्[14] । हे भुवनस्य, गोपायितारौ[15] ! तेन[16] । अस्मासु[17] । हे मित्रावरुणौ ! रक्षतं शत्रून् । सम्भक्तुमिच्छन्तो[18] वयम्[19] । तेषां जेतारः[20] । स्याम[21] ।

इत्थं व्याख्यत् सप्तविंशमध्यायं माधवाह्वयः ।
जगतामेकवीरस्य विषये निवसन्[22] सुखम्[23] ॥

१. हे मित्र ! हे वरुण ! युवाम् Sy. हे वरुण ! हे मित्र ! SKN.
२. स्वम्...रथम् Dur. रथमात्मीयम् SKN.
३. आरोहथः यज्ञं प्राप्तुम् Sy. यौ युवामेतस्मिन् काले....आरोहथस्तौ युवां ब्रवीमि ममाप्येवं रथं गर्तमेतस्मिन् विधावङ्गभूतं तत्सरूपमेव साम्प्रतमारोहतम् Dur. आरोहथो युवाम् SKN.
४. अस्माद्धेतोः Sy. अत एनमारुह्य Dur. अनन्तरमिति शेषः SKN.
५. रथं P. रथां D.
६. कुरुतमित्यर्थः Dur. लोकपालौ हि मित्रावरुणौ, यश्च यत् करोति शुभमशुभं वा तत्सर्वं पश्यथः SKN.
७. ०दि० P. अदीनमनुपक्षीणमात्मपक्षम् Dur. 'दीङ् क्षये'....अक्षीणं च कर्म । अथवा, अदिति दिति चेति ददातेरेते रूपे । अदातारं दातारं च हविषाम् SKN.
८. खण्डितां प्रजादिकां च Sy. दीनं चोपक्षीणममित्रपक्षमित्यर्थः Dur. क्षीणम् SKN.
९. Omitted by D. गर्तः सभास्थाणुः । गृणातेः । सत्यसङ्गरो भवति ।....रथोऽपि गर्त उच्यते । गृणातेः स्तुतिकर्मणः । स्तुततमं यानम् । 'आ रोहथो वरुण मित्र गर्तम्' इत्यपि निगमो भवति N.3.5., SKN. II.132.
१०. दाक्षायणयज्ञे 'यद्बंहिष्ठम्' इति नवमी द्वितीयस्याममावास्यायां मैत्रावरुणस्य हविषो याज्या । सूत्रितञ्च—'आ नो मित्रावरुणा यद्बंहिष्ठं नातिविधे सुदानू' (ĀŚS. 2.14.) इति । मैत्रावरुणे पशौ हविष एषैव याज्या । सूत्रितञ्च—'यद्बंहिष्ठं नातिविधे सुदानू हिरण्यगर्भः समवर्तताग्रे' (ĀŚS.3.8.) इति Sy.
११. बहुतमम् Sy.
१२. अतिवेद्धुमशक्यं शर्मेति शर्मविशेषणम् । 'व्यध ताडने' इत्यस्मादत्युपपदे कृत्यार्थे केन् सम्प्रसारणं च । तादृशं शर्म धारयथः Sy.
१३. अनवच्छिन्नम् Sy.
१४. सुखं गृहं वा Sy.
१५. गोपा युवाम् Sy.
१६. शर्मणा Sy.
१७. ०स P. अस्मान् Sy.
१८. धनानि सम्भक्तुमिच्छन्तो वयम् Sy.
१९. ०तो P.
२०. शत्रूणां धनानि जेतुमिच्छन्तः Sy.
२१. भवेम Sy.
२२. ०सत् P.
२३. Ms. D. puts the figure ॥ ६२ ॥ here to indicate the end of the sixty-second hymn. No such number is given in P.

# [ चतुर्थोऽध्यायः ]

'ऋतस्य गोपौ'[1] अध्यायं व्याचिख्यासति माधवः ।
पूरणत्वापूरणत्वे वाच्यमेव प्रदर्शयन् ॥१॥
अवान्तरेषु वाक्येषु बहुष्वावर्तते क्रिया ।
'अश्याम तं काममग्ने'[2] इत्याद्यत्र निदर्शनम्[3] ॥२॥
'येनाव तुर्वशं[4] यदुं येन कण्वं धनस्पृतम्[5]' ।
एवंविधेऽनुषङ्गेण वाक्यार्थस्य प्रदर्शनम् ॥३॥
अनुषङ्गाय येनेति पुनरावर्तते पदम् ।
अतो न तादृशेष्वस्ति पूरणत्वमिति स्थितिः[6] ॥४॥
'नहि ते क्षत्रं न सहः[7]' 'न जातो न जनिष्यते[8]' ।
एवम् 'अन्वह[9] मासाः[10]' च तादृशाश्च न पूरणाः[11] ॥५॥
'भवन्तु नः सुत्रात्रासः सुगोपाः[12]' इति दृश्यते ।
त्राणगोपनयोर्भेदा[13]न्न गोपा इति पूरणः[14] ॥६॥
'समानो वां जनिता[15]' इति ततश्च[16] 'भ्रातरा युवम्[17]' ।
इत्यर्थो भ्रातरेत्येतत्ततश्चात्र न पूरणम् ॥७॥

---

१. पोध्या० D. वोध्या० P. गोपावध्या० R.
२. RV.VI.5.7.; RV.V.63.1.
३. P. reads अश्युग्निदर्शन and D. reads अश्युग्निदर्शनं for अश्याम तं काममग्ने इत्याद्यत्र निदर्शनम् ।
४. ०श P. तुवश D.
५. कण्ड्वन्धस्पृतं D. RV.VIII.7.18.
६. ०ति D.
७. RV.I.24.6.
८. P. reads न जात्र प्रकुष्याते and D. reads न जात्र प्रकुष्यते for न जातो न जनिष्यते । RV.I.81.5.
९. अन्वाह D.
१०. RV.X.89.13.
११. ०णः P.
१२. ०प D. RV.VI.51.11.
१३. त्राणनावनयोः D.
१४. ०णं P., D.
१५. RV.VI.59.2.
१६. तत P., D.
१७. RV.VI.59.2.

सूर्याश्वानामियं संज्ञा या 'भद्रा अश्वा हरितः'[1] ।
हरिन्नामधेया अश्वा अस्येत्यर्थं प्रदर्शयेत् ॥८॥
एवंविधेषु नैकस्य प्राज्ञा इच्छन्ति[2] निर्वचः[3] ।
'तूयं'[4] श्येनेभिराशुभिः'[5][6] निर्ब्रूयात्तादृशानिति[7] ॥९॥
'पशुं न नष्टमिव'[8] दृश्येते[9] नश्विनौ[10] सह ।
विशेषणे विशेष्ये च पशुमिव नष्टमिव ॥१०॥
तत्रैकं पूरणं केचिदिच्छन्त्यन्ये तु[11] मन्वते ।
ऋषिस्वभावाद्[12] दृश्येते विशेषणविशेष्ययोः ॥११॥
'अर्चन्तस्त्वा[13] हवामहेऽर्चन्तः समिधीमहि'[14] ।
तृतीयोऽर्चन्त इत्येष[15] केषांचित् पूरणो मतः ॥१२॥
ह्वानं[16] समिन्धनं चैव[17] कुर्महेऽर्चनपूर्वकम् ।
रक्षणायेति मन्त्रार्थस्तत्रैक[18]मतिरिच्यते[19] ॥१३॥
'न ते वर्तास्ति[20] राधस इन्द्र देवो[21] न मर्त्यः'[22] ।
पादस्य प्रथमस्यात्र प्रपञ्चस्तदनन्तरः ॥१४॥

---

१. हरतः P. हरित्व D. RV.I.115.3.
२. नेच्छ० D.
३. निर्वचि P. नर्वाचि D.
४. रूचं P.
५. श्येनाभि० D.
६. RV. VIII.5.7.
७. निब्रू० P., R.
८. RV.I.116.23.
९. दृश्यते P.
१०. नश्विजीवौ P., D.
११. ०चिमच्छन्त्य ते P. ०चिमिच्छन्त्य ते D.
१२. ऋषिप्रभावाद् P.
१३. ०स्त्वां D.
१४. RV.V.13.1.
१५. इत्येषः R.
१६. पानं R.
१७. पानसमिद्धेनञ्चप P. वानसमिद्धेनञ्चव D.
१८. ०क अति० R.
१९. ०रिव्यति P.
२०. वर्तात्रि P. वत्तास्ति D.
२१. देवे D.
२२. RV.VIII.14.4.

एवं पादो द्वितीयोऽत्र न पूरण इति स्थितिः ।
देवशब्दस्य पादेन मुख्येनैकेऽन्वयं विदुः ॥१५॥
'शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे' ।
दद्यामपि च दित्सेयमेवञ्चात्र न पूरणम् ॥१६॥
'विश्वे गन्त मरुतो विश्वे' विश्वे अद्य मरुतः ।
आवर्तते विश्वशब्दस्तं चेच्छति न पूरणम् ॥१७॥
गमने रक्षणे चैव सर्वेषां ह्यन्वयो मतः ।
व्युत्पत्त्यर्थमृचोऽस्माभिरित्थं बह्वृचः प्रदर्शिताः ॥१८॥इति॥

V.63.

**ऋतस्य गोपावधि तिष्ठथो रथं सत्यधर्माणा परमे व्योमनि ।**
**यमत्र मित्रावरुणावथो युवं तस्मै वृष्टिर्मधुमत्पिन्वते दिवः ॥ १ ॥**

**ऋतस्य गोपौ ।** अर्चनानाः ॥ सत्यस्य । गोपायितारौ । अधितिष्ठथः । रथम् । सत्यकर्माणौ । परमे । अन्तरिक्षे । यम् । अस्मिन् लोके । मित्रावरुणौ ! रक्षथः । युवम् । तस्मै । वृष्टिः । उदकवती । दिवः । पतति ।

---

१. एवञ्चनद्वितीयो नू P. एवञ्चनब....द्वि० D. २. तव० P. ०दव० D.
३. पादने P., D. ४. ०के ह्वयं P., D.
५. RV.VIII.14.2.
६. गन्त गन्त D.
७. RV.V.43.10. ८. विश्वेद्य P., D.
९. RV.X.35.13.
१०. ०त्यर्थं० P., D.
११. 'ऋतस्य गोपौ' इति सप्तर्चं सप्तमं सूक्तम् । अत्रेयमनुक्रमणिका 'ऋतस्य सप्तार्चनाना जागतम्' (KSA.28.63.p.21.) इति । आत्रेयोऽर्चनाना नाम ऋषिः । जगती छन्दः । तुह्यादिपरिभाषया (KSA.12.3.p.5.) मित्रावरुणौ देवता । विनियोगो लैङ्गिकः Sy.
१२. ०नानः P., D.
१३. हे ऋतस्य उदकस्य रक्षितारौ ! Sy.
१४. अधितिष्ठतिष्ठतः D. आरोहथोऽस्मद्यज्ञमागमनार्थम् Sy.
१५. सत्यधर्माणौ युवाम् Sy.
१६. निरतिशये Sy.
१७. आकाशे Sy.
१८. यजमानम् Sy.
१९. अस्मिन् यज्ञे Sy.
२०. युवाम् Sy. २१. यजमानाय Sy.
२२. पर्जन्यः Sy.
२३. उद्रक० P. उदकम् Sy.
२४. द्युलोकात् Sy.
२५. सिञ्चति वर्धयति Sy.

**सम्राजावस्य भुवनस्य राजथो मित्रावरुणा विदथे स्वर्दृशा ।**
**वृष्टिं वां राधो अमृतत्वमीमहे द्यावापृथिवी वि चरन्ति तन्यवः ॥ २ ॥**

**सम्राजौ** । अस्य । भूतजातस्य[1] । ईश्वरौ[2] । सर्वद्रष्टारौ[3] । हे मित्रावरुणौ । यज्ञे[4] । राजथः[5] नौ[6] वाम् । वृष्टिम्[7] । धनम्[8] । अमृतत्वं च । याचामहे[9] । द्यावापृथिवी । चरन्ति[10] । गर्जितशब्दाः[11] ।[12]

**सम्राजा उग्रा वृषभा दिवस्पती पृथिव्या मित्रावरुणा विचर्षणी ।**
**चित्रेभिरभ्रैरुप तिष्ठथो रवं द्यां वर्षयथो असुरस्य मायया ॥ ३ ॥**

**सम्राजौ** । सम्राजौ[13] । उद्गूर्णौ[14] । वर्षितारौ । दिवः[15] । पती[16] । पृथिव्याश्च[17] । मित्रावरुणौ । विद्रष्टारौ[18] । चित्रैः[19] । मेघैः सह । गर्जितशब्दम्[20] । उपतिष्ठथः । वर्षयथश्च । पर्जन्यस्य[21] । कर्मणा[22] । द्युलोकम् ।

**माया वां मित्रावरुणा दिवि श्रिता सूर्यो ज्योतिश्चरति चित्रमायुधम् ।**
**तमभ्रेण वृष्ट्या गूहथो दिवि पर्जन्य द्रप्सा मधुमन्त ईरते ॥ ४ ॥**

माया वाम् । कर्म[23] । युवयोः । हे मित्रावरुणौ ! दिवि । श्रितम्[24] । किं च भवत्प्रेषितः सूर्यः[25] । ज्योतिः[26] । विसृजति[27] । चित्रम्[28] । आयुधमन्तरिक्षे[29] । तम्[30] । अभ्रेण[31] । वृष्ट्या च[32] । गूहथः[33] । दिवि तत्र । पर्जन्य[34] ! उदकद्रप्साः । मधुमन्तः । पतन्ति[35] ।

---

१. भुवनस्य Sy.
२. सम्यग्राजमानौ युवाम् Sy.
३. स्वर्गस्य द्रष्टारौ युवाम् Sy.
४. अस्मद्यज्ञे सम्राजाविति सम्बन्धः Sy.
५. ईशाथे Sy.
६. यज्ञारायथस्तौ P. युवाम् Sy.
७. वृष्ट्याख्यं धनम् Sy.
८. स्वर्गं च Sy. ९. प्रार्थयामहे । अथवा वृष्टिं धनममृतत्वं चेमहे Sy.
१०. वि is omitted by P., D. विविधं प्राप्नुवन्ति Sy. ११. ०शब्दां P., D. युवयोः विस्तृता रश्मयः Sy.
१२. VM. ignores वि ।
१३. सम्यग् राजमानौ Sy.
१४. उद्गूर्णबलौ Sy.
१५. द्युलोकस्य Sy. १६. स्वामिनौ Sy.
१७. पृथिव्याश्च पती Sy. १८. सर्वस्य द्रष्टारौ मित्रावरुणौ । एवं महानुभावौ Sy.
१९. चायनीयैः Sy. २०. स्तोत्रम् Sy.
२१. उदकनिरसितुः पर्जन्यस्य Sy.
२२. प्रज्ञया सामर्थ्येन Sy. २३. माया Sy.
२४. आश्रिता, कैषा युवयोर्माया ? उच्यते Sy.
२५. ०तःस्सू० D. सूर्यः सर्वस्य प्रेरकः Sy.
२६. ०ति P. दीप्यमानः Sy.
२७. परिभ्रमत्यन्तरिक्षे Sy.
२८. चायनीयम् Sy.
२९. चितामायायुधं P. उक्तलक्षणायुधरूपः । शत्रुमारकत्वादायुधमुच्यते Sy. ३०. सूर्यम् Sy.
३१. अभ्रेषण D. मेघेन Sy.
३२. Omitted by P.
३३. ०थे च D. गोपायथः Sy.
३४. हे पर्जन्य ! देव ! मित्रावरुणाभ्यां वृष्ट्यर्थं प्रेरितेन त्वया Sy.
३५. ईर्यन्ते । त्वत्सृष्टा वा गच्छन्ति Sy.

**रथं॑ युञ्जते म॒रुतः॑ शु॒भे सु॒खं शूरो॒ न मित्रावरुणा॒ गवि॑ष्टिषु ।**
**रजां॑सि चि॒त्रा वि च॑रन्ति त॒न्यवो॑ दि॒वः स॑म्राजा॒ पय॑सा न उक्षतम् ॥ ५ ॥**

रथं युञ्जते[1] [2]। रथम्[3] । युञ्जते । मरुतः । उदकाय[4] । सुद्वारम्[5] । शूरः[6] । इव युद्धाय । हे मित्रा-वरुणौ ! दिवसागमनेषु[7] । ततो लोकान् । चित्रा[8] । विचरन्ति[9] । तन्यवः[10] । दिवः[11] । सम्राजौ[12] । पयसा[13] । अस्मान् । सिञ्चतम् ।

**वाचं॒ सु मि॑त्रावरुणा॒विरा॑वतीं प॒र्जन्य॑श्चि॒त्रां व॑दति॒ त्विषी॑मतीम् ।**
**अ॒भ्रा व॑सत म॒रुतः॒ सु मा॒यया॒ द्यां व॑र्षयतमरु॒णाम॑रे॒पस॑म् ॥ ६ ॥**

वाचं सु[14] [15]। वाचम्[16] । सुष्ठु । वदति[17] । हे मित्रावरुणौ[18] ! अन्नवतीम्[19] । पर्जन्यः[20] । चित्राम्[21] । दीप्ति-मतीम् । अभ्राणि[22] । आच्छादयत[23] । हे मरुतः ! सुकर्मणा[24] । द्याम् । वर्षयतम् । अरुणवर्णाम्[25] । निर्मलां[26] मित्रावरुणौ !

**धर्म॑णा मित्रावरुणा विपश्चिता व्र॒ता र॑क्षेथे॒ असु॑रस्य मा॒यया॑ ।**
**ऋ॒तेन॒ विश्वं॒ भुव॑न॒ वि रा॑जथः॒ सूर्य॒मा ध॑त्थो दि॒वि चित्र्यं॒ रथ॑म् ॥ ७ ॥**

धर्मणा । कर्मणा[27] । हे मित्रावरुणौ ! प्राज्ञौ[28] ! व्रतानि[29] । रक्षेथे[30] । पर्जन्यस्य[31] । प्रज्ञया च ।

---

१. रथं युञ्जते omitted by P.
२. हे मित्रावरुणौ ! युवयोरनुग्रहात् Sy.
३. अश्वैर्योजयन्ति Sy.
४. उदकार्थम् Sy.
५. शोभनाक्षद्वारम् Sy.
६. स यथा युद्धार्थं रथं युनक्ति तद्वत् Sy.
७. गवामुदकानामेषणेषु निमित्तेषु Sy.
८. चायनीयानि Sy.
९. विविधं चरन्ति Sy.
१०. ततास्ते मरुतः Sy.
११. द्युलोकात् Sy.
१२. ०जो P. तस्मात्तैः सहितौ हे सम्राजौ ! युवाम् Sy.
१३. उदकेन Sy. १४. पापं P.
१५. सु पं P. सुं वा D.
१६. गर्जनशब्दम् Sy.
१७. ०न्ति P., D. शब्दयति वृष्ट्यर्थम् Sy.
१८. हे मित्रावरुणौ ! युवयोरनुग्रहात् Sy.
१९. अन्नसाधिकाम् Sy. २०. मेघः Sy.
२१. ०त्रा D. चायनीयाम् Sy.
२२. मेघान् Sy. २३. आच्छादयन्ति Sy.
२४. ०र्मम् P. In padapātha सु । मायया । cf. Sy. (RV.V.64.2. and V.65.3.) on सुचेतुना which he analyses in PP. as सुऽचेतुना and सु । चेतुना respectively. ॥ स्वप्रज्ञया युवां पर्जन्येन मरुद्भिश्च सह Sy.
२५. ०र्तमरुण० D. ०र्णम् P.
२६. ०ला P., D. अपापां वृष्ट्यविघातिनीम् Sy.
२७. जगद्धारकेण वृष्ट्यादिलक्षणेन कर्मणा Sy.
२८. प्रज्ञौ D. प्राज्ञौ युवाम् Sy.
२९. व्रा० P. यज्ञादिकर्माणि Sy.
३०. पालयथः Sy.
३१. वर्जं P. मेघानां निरसितुः पर्जन्यस्य Sy.

तेजसोदकेन[1] वा । विश्वम्[2] । भुवनम्[3] । विराजयथः[4] । दिवि[5] । आधत्थः[6] । सुवीर्यम्[7] । चित्रवर्णम्[8] । रथम्[9] ।

V.64.

**वरुणं वो रिशादसमृचा मित्रं हवामहे ।**
**परि व्रजेव बाह्वोर्जगन्वांसा स्वर्णरम् ॥ १ ॥**

**वरुणम्**[11] । वरुणम्[12] । युष्माकम्[13] । रिशतामसितारम्[14] । स्तुत्या[15] । मित्रं चान्येभ्यः[16] । परिभवामहे[17] । बाह्वोः[18] । व्रजानीव यथा बाहुभ्यां कश्चिद् गच्छन्तं निरुणद्धि[19] । गच्छन्तौ[20] । सर्वजनोपेतं तं देशम्[21] ।

**ता बाहवा सुचेतुना प्र यन्तमस्मा अर्चते ।**
**शेवं हि जार्यं वां विश्वासु क्षासु जोगुवे ॥ २ ॥**

**ता बाहवा** । तौ[23] । बाहू[24] । सुप्रज्ञानौ[25] । प्रयच्छतम्[26] । अस्मै । स्तुवते[27] । सुखकरम्[28] । हि । स्तोत्रम्[29] । युवयोः[30] । सर्वासु । भूमिषु । शब्द्यते[31] ।

---

१. उदकेन यज्ञेन वा निमित्तेन Sy.
२. सर्वम् Sy. ३. भूतजातम् Sy.
४. ०था P. विदीपयथ इत्यर्थः Sy.
५. द्युलोके Sy.
६. VM. construes आ with धत्थः but Sy. explains आ as च ॥ सूर्यं च Sy.
७. बाधात्थः P. धाबाधत्थंत्थ D. धारयथो जगदुपकारार्थम् Sy. ८. सू० D.
९. पूज्यम् Sy. १०. रंहणस्वभावम् Sy. Ms. D. puts the figure ॥६३॥ here to indicate the end of the sixty-third hymn. No such number is given in P.
११. 'वरुणं वः' इति सप्तर्चमष्टमं सूक्तमर्चनानस आर्षं मैत्रावरुणम् । पङ्क्त्यन्तपरिभाषयानुष्टुभम् । अन्त्या पङ्क्तिः । 'वरुणं पङ्क्त्यन्तं तु' (KSA.28.64.p.21.) इत्यनुक्रमणिका, विनियोगो लैङ्गिकः Sy.
१२. एवंविधं वरुणम् Sy.
१३. युवयोर्मध्ये । व्यत्ययेन बहुवचनम् Sy.
१४. ०शाम० P., D. रिशन्ति हिंसन्तीति रिशाः शत्रवः । तेषां प्रेरकम् Sy. १५. मन्त्रेण Sy.
१६. उक्तलक्षणं मित्रं च Sy.
१७. ०रिहवा० is suggested for परिभवा० ॥ आह्वयामः Sy.
१८. माह्वो P. ०ह्वो D. बाह्वोर्बलेन Sy.
१९. प्रजने P. ब्रजेने D. अथ अवयुत्योच्यते गोयूथानीव Sy. २०. निरुद्धि D.
२१. परिगच्छन्तौ Sy.
२२. ०नोवेकान्तं P. स्वर्गस्य नेतारम् । एतद् व्यवहितमप्युभयत्र सम्बध्यते. Sy.
२३. युवाम् Sy. २४. बहु P. बाहुना Sy.
२५. सुप्रजानौ D. सुष्ठु प्रज्ञात्रा । प्रयासभूयस्त्वं जानता इत्यर्थः । यद्यप्यात्मैव ज्ञाता न हस्तस्तथापि तद्धर्ममत्रारोप्य स्तूयते । यद्वैतत् ताविल्यस्य विशेषणम् । सुज्ञानावित्यर्थः । शोभनहस्तेन Sy.
२६. अभिमतं सुखं प्रगमयतम् । अन्तर्भावितण्यर्थो द्रष्टव्यः । यमिर्दानकर्मा वा द्रष्टव्यः । प्रयच्छतमित्यर्थः Sy. २७. स्तुवते मह्यम् Sy.
२८. सुखम् Sy. २९. स्तुत्यम् Sy.
३०. युवयोः सम्बन्धि युवाभ्यां कृतं वा Sy.
३१. गच्छति व्याप्नोति । अयं गतिकर्मा । अथवा जोगुवे सर्वत्र शब्दयामीत्यर्थः Sy. अवते गवते इति गतिकर्माणौ Ngh. 2.14.

**यन्नूनमश्यां गतिं मित्रस्य यायां पथा ।**
**अस्य प्रियस्य शर्मण्यहिंसानस्य सश्चिरे ॥ ३ ॥**

**यन्नूनम्** । यदि[1] । खलु[2] । गतिम्[3] । प्राप्नुयाम्[4] । तदानी[5] मित्रप्रदिष्टेन[6] । पथा[7] । यायाम्[8] । अस्य । प्रियस्य[9] । मुखे हि[10] । अहिंमतः[11] । सक्ता भवन्ति[12] स्तोनाग्म्[13] ।

**युवाभ्यां मित्रावरुणोपमं धेयामृचा ।**
**यद्ध क्षये मघोनां स्तोतॄणां च स्पूर्धसे ॥ ४ ॥**

**युवाभ्याम्** । हे मित्रावरुणौ ! युवाभ्याम्[14] । उपमानभूतं[15] हविः प्रयच्छामि[16] । ऋचा[17] । यत् । खलु[18] हविष्मताम्[19] । स्तोतॄणाम् । च । गृहे । भवतोः पूरणा[20] भवति तदिति[21] ।

**आ नो मित्र सुदीतिभिर्वरुणश्च सधस्थ आ ।**
**स्वे क्षये मघोनां सखीनां च वृधसे ॥ ५ ॥**

**आ नः** । आगच्छतम् । अस्मान्[22] । सुदानैः[23] । मित्रावरुणौ[24] ! गृहे[25] तदेवाह—स्वे[26] । गृहे । हविष्मताम्[27] । स्तोतॄणाम्[28] । चास्माकम् । वर्धनायेति[29] ।

---

१. यासुनम P. यासूनम D.
२. यदा Sy. ३. इदानीम् Sy.
४. गमनम् Sy.
५. अश्यां प्राप्नुयाम् । यद्योगादनिघातः Sy.
६. तदा मित्रभूतस्य Sy.
७. मार्गेण । मित्रप्रापकेण मार्गेण Sy.
८. गच्छेयम् । 'मित्रो नयतु विद्वान्' (RV. I.90.1.) इत्यादिषु मित्रस्येष्टदेशगमयितृत्वं प्रसिद्धम् । न केवलमहमेक एव गन्ता किन्तु सर्वेऽपि तथागमन्नित्याह Sy.
९. मित्रस्येत्यर्थः Sy.
१०. गृहे स्थाने वा Sy.
११. ०त P., D. यतोऽयमहन्ता अतः प्रिय इत्यर्थः । तस्य Sy. १२. सङ्गताः Sy.
१३. स्तोरम् P.
१४. दातव्यम् Sy.
१५. उप समीपे मीयमानं धनम् Sy.
१६. धारयामि Sy.
१७. उचा D. स्तुत्या साधनेन Sy.
१८. युवाभ्यां सकाशादाप्तं धनम् Sy.
१९. धनवतामदातॄणाम् Sy.
२०. स्पर्धनाय भवति । धनिकानां स्तोतॄणां च धनाधिक्यविषये स्पर्धा भवतीत्यर्थः । अपरिमितं धनं भवतीति भावः Sy.
२१. Omitted by P. २२. अस्माकम् Sy.
२३. सुदीप्तियुक्तौ युवाम् Sy.
२४. VM. explains मित्र and वरुण together as मित्रावरुणौ but Sy. explains them separately as हे मित्र ! त्वं च वरुणश्च ।
२५. सहस्थाने यज्ञे Sy.
२६. Omitted by P. स्वकीये Sy.
२७. धनवताम् Sy.
२८. युवयोः सखिभूतानाम् Sy.
२९. VM. explains आ and च once only. द्वितीय आकारोऽनर्थक आदरार्थो वा Sy.

युवं नो येषु वरुण क्षत्रं बृहच्च बिभृथः ।
उरु णो वाजसातये कृतं राये स्वस्तये ॥ ६ ॥

**युवम्** । युवाम् । अस्मभ्यम्[1] । येषु स्तोत्रेषु सत्सु[2] । बलम्[3] । महत्[4] । च धनम् । विभृथः[5] । तेषु सत्स्विदानीमस्माकम्[6] । सङ्ग्रामार्थम्[7] । वहु कर्तव्यम्[8] । कृणुतम्[9] । धनाय । अविनाशाय च[10] ।[11]

उच्छन्त्यां मे यजता देवक्षत्रे रुशद्गवि ।
सुतं सोमं न हस्तिभिरा पड्भिर्धावतं नरा बिभ्रतावर्चनानसम् ॥ ७ ॥

**उच्छन्त्याम्** । उच्छन्त्यामुषसि[12] । मम[13] । यष्टव्यौ[14] । देवक्षत्र आदित्यस्तस्मिन्[15] । दीप्यमानतेजसि[16] । पाणिभिः[17] ? हस्तवद्भिः[18] । सुतसोममाधातुम्[19][20] । बिभ्राणौ[21] । पतद्भिरश्वैरिति[22][23] ।

---

१. अस्माकम् Sy.

२. येषु स्तोत्रेषु निमित्तेषु Sy.

३. सं सु P., D.

४. ब्रह्म परिवृढमन्नम् Sy.

५. विभ्रथ० P. विभ्रत० D.
धारयथः Sy.

६. युवाभ्यां धृतमन्नं च नः अस्मभ्यम् Sy.

७. अन्नस्य लाभाय यज्ञाय वा Sy.

८. विस्तीर्णम् Sy.

९. कुरुतम् Sy.

१०. Omitted by P.
क्षेमाय च Sy.

११. VM. ignores वरुण ॥ हे मित्रावरुणौ ! Sy.

१२. उच्छन्त्याम् उषसि मे सोममिति सम्बन्धः Sy.

१३. मदीयम् Sy.

१४. य व्यौ D.

१५. देवानां क्षत्रं बलं यस्मिन् यज्ञे तद्देवक्षत्रम् । तस्मिन् Sy.

१६. रोचमानरश्मौ प्रातःसवने Sy.

१७. पड्भिः is suggested for पाणिभिः ॥ पादवद्भिश्च । पादचतुष्टयोपेतैरश्वैः Sy.

१८. हस्तिभिः हस्तवद्भिः । हन्तेर्गतिकर्मणो हस्तशब्दः । गमनसाधनपादवद्भिरित्यर्थः Sy.

१९. सुतं सोममा० is suggested for सुतसोममा० ॥ अभिषुतं सोमम् Sy.

२०. आधावतम् is suggested for आधातुम् ॥ आगच्छतम् Sy.

२१. धारयन्तौ युवाम् Sy.

२२. VM. seems to explain पड्भिः as पतद्भिरश्वैः । Therefore पतद्भिरश्वैः should follow पाणिभिः and precede हस्तवद्भिः ।

२३. VM. ignores न । नराः and अर्चनानसम् ॥ नेति सम्प्रत्यर्थे । इदानीम् । हे नेतारौ ! मित्रावरुणौ ! अर्चनानसमृषिम् Sy.
Ms. D. puts the figure ॥६४॥ here to indicate the end of the sixty-fourth hymn. No such number is given in P.

V.65.

**यश्चिकेत स सुक्रतुर्देवत्रा स ब्रवीतु नः ।**
**वरुणो यस्य दर्शतो मित्रो वा वनते गिरः ॥ १ ॥**

यश्चिकेत[1] ॥ रातहव्यः[2] ॥ यः[3] । जानाति[4] । सः । सुप्रज्ञः[5] । देवौ[6] मित्रावरुणौ । सः[7] । अस्माकम् । ब्रवीतु[8] यदि जानाति । किं वक्तव्यमित्याह—वरुणः[9] । मित्रः[10] । वा[11] । दर्शनीयः[12] । यादृशस्य[13] । स्तुतीः[14] । भजते[15], कस्य स्तुतीरेतौ[16] शृणुतः ? इति प्रश्नः ।

**ता हि श्रेष्ठवर्चसा राजाना दीर्घश्रुत्तमा ।**
**ता सत्पती ऋतावृध ऋतावाना जनेजने ॥ २ ॥**

ता हि । तौ । हि[17] । श्रेष्ठतेजसौ[18] । राजानौ[19] । अतिशयेन दीर्घश्रुतौ[20] । सत्पती[21] । यज्ञवृधौ[22] । सत्यकर्माणौ[23] भवतः । जने[24] जने[25] ।

**ता वामियानोऽवसे पूर्वा उप ब्रुवे सचा ।**
**स्वश्वासः सु चेतुना वाजाँ अभि प्र दावने ॥ ३ ॥**

ता वाम् । तौ । वाम्[26] । गच्छन् । रक्षणमुख्यौ[27] युवाम्[28] । स्तौमि[29] । सह[30] । स्वश्वा युवयो रथाः[31] ।

---

१. 'यश्चिकेत' इति षडृचं नवमं सूक्तं रातहव्यस्यात्रेयस्यार्षं मैत्रावरुणम् ।' यश्चिकेत षड्रातहव्यः' (KSA.28.65.p.21.) । इत्यनुक्रमणिका 'पङ्क्त्यन्तं तु' इत्युक्तत्वात् पङ्क्त्यन्तपरिभाषयाऽऽनुष्टुभम् । अन्त्या पङ्क्तिः । विनियोगो लैङ्गिकः Sy.
२. राहव्यः P., D. ३. स्तोता Sy.
४. जानाति स्तुतिं युवयोः Sy.
५. शोभनकर्मा Sy.
६. देवेषु स्तोतृमध्ये । यद्वा देवेषु मध्ये । युवयोरेव स्तुतिं यश्चिकेत स सुक्रतुरिति Sy.
७. सुकर्मा Sy. ८. स्तुतिपरमुपदिशतु Sy.
९. वरुणो दर्शनीयः Sy. १०. मित्रश्च Sy.
११. व P. वाशब्दश्चार्थे Sy. १२. ०य P.
१३. Sy. seems to take यस्य as यश्च ।
१४. अस्मदीयाः स्तुतीः Sy.
१५. सम्भजते Sy. १६. ०ताः D.
१७. खलु मित्रावरुणौ Sy.
१८. श्रेष्ठो तेजसो P. प्रशस्ततेजस्कौ Sy.
१९. ईश्वरौ Sy.
२०. दीघ्रश्रु० D. दूरदेशादाह्वानश्रोतृतमौ Sy.
२१. सतां यजमानानां स्वामिनौ Sy.
२२. ०वृद्धो P. ०वृद्धौ D. यज्ञस्योदकस्य वा वर्धयितारौ Sy.
२३. ०कर्मणो P. गमनवन्तौ Sy.
२४. सर्वेषु स्तोतृषु निमित्तेषु Sy.
२५. VM. ignores ता ॥ ता तौ Sy.
२६. युवाम् Sy.
२७. ऋक्षणामुख्या P., D. VM. seems to explain अवसे and पूर्वौ together as रक्षणमुख्यौ ॥ रक्षणाय पुरातनौ Sy.
२८. युव P., D.
२९. उपेत्य स्तौमि Sy. ३०. सवि P.
३१. श्वा P., D. वयमात्रेयाः Sy.

सुप्रज्ञौ[1] भवतः । हवींषि[2] । प्रतिदानाय[3] । प्रणयन्तु[4] ।

**मित्रो अंहोश्चिदादुरु क्षयाय गातुं वनते ।**
**मित्रस्य हि प्रतूर्वतः सुमतिरस्ति विधतः ॥ ४ ॥**

**मित्रः ।** मित्रः[5] । पापस्य[6] । अपि भजमानस्य[6] । विस्तीर्णम्[7] । पन्थानम्[8] । गृहं प्रति गन्तुम्[9] । ददाति[10] । मित्रस्य[11] । हि[12] । प्रहिंसतः[13] । सुमतिः[14] । अस्ति[15] । परिचरतः[16] । पयति परिचरति[17] ये यातं[18] युनक्ति[19] ?[20]

**वयं मित्रस्यावसि स्याम सप्रथस्तमे ।**
**अनेहसस्त्वोतयः सत्रा वरुणशेषसः ॥ ५ ॥**

**वयं मित्रस्य ।** वयम्[21] । मित्रस्य[22] । रक्षणे । भवाम[23] । सर्वतः पृथुतमे[24] । अनुपद्रवाः[25] । त्वद्रक्षकाः[26] । सत्रा[27] । वरुणशेषसश्च[28] वरुणः[29] शासिता[30] येषाम् ।

---

१. शोभनप्रज्ञानौ युवाम् Sy.
२. हर्विषि D. अन्नान्यभिलक्ष्य Sy.
३. दानाय Sy.
४. The passage beginning with युवयोः and ending with प्रणयन्तु is omitted by P. प्रकर्षेण स्तुम इति शेषः। यद्वा स्वश्वासः स्वश्वौ । द्वितीयाद्विवचनस्य जसादेशः । उप ब्रुव इति सम्बन्धः Sy.
५. देवः Sy.
६. अंहस्वतोऽपि स्तोतुः Sy.
७. उरवे Sy.
८. उपायम् Sy.
९. गृहाय निवासाय वा Sy.
१०. The passage beginning with मित्रः (first) and ending with ददाति is omitted by P. प्रयच्छति Sy.
११. देवस्य Sy.
१२. खलु Sy.
१३. ०हिंसितः P., D. प्रकर्षेण हिंसतोऽपि Sy.
१४. शोभनबुद्धिः Sy.
१५. भवति खलु Sy.
१६. रपरचमता P. रपचरतः D. शुश्रूषकस्य Sy.
१७. पयदि P. प० D.
१८. ०त P..
१९. The passage : पयति....युनक्ति is doubtful and unnecessary.
२०. VM. ignores आत् ॥ आत् अनन्तरमेव Sy.
२१. यजमानाः Sy.
२२. दुःखनिवारकस्य देवस्य Sy.
२३. भवेम Sy.
२४. प्रथुन्ते D.
२५. अपापाः Sy.
२६. त्वया रक्षिताः Sy.
२७. मित्रत्य P. वयं सर्वे सहैव भवेम Sy.
२८. ०षः सश्वर P. ०षः सश्च D. वरुणशेषसः वारकाः पुत्रा येषां ते । तादृशाः Sy. शेष इत्यपत्यनाम Ngh. 2.2.
२९. वरणः P.
३०. शाप्तो P. शास्तो D.

युवं मित्रेमं जनं यतथः सं च नयथः ।
मा मघोनः परि ख्यतं मो अस्माकमृषीणां गोपीथे न उरुष्यतम् ॥ ६ ॥

युवं मित्रा ; हे मित्रावरुणौ ! युवाम् । इमम् । जनम् । पृथक् कुरुथो विश्लिष्टम् । च । संनयथः । मा । हविष्मतोऽस्मान् । वर्जयतं स्तुतीः । सोमपाने । अस्मान् । रक्षतम् ।

V.66.

आ चिकितान सुक्रतू देवौ मर्त रिशादसा ।
वरुणाय ऋतपेशसे दधीत प्रयसे महे ॥ १ ॥

आ चिकितान । हे जानन् ! मर्त्य ! आगतौ ! सुप्रज्ञौ । रिशादसौ । परोक्ष उत्तरार्धः—तयोर्वरुणाय । सत्यपेशसे मित्राय च सत्यरूपाय । महते । अन्नाय महदन्नं लब्धुम् । हविः प्रयच्छतु यजमानेस्तववाहेतेति ?

---

१. स्तोतारं मां प्रति Sy.

२. यतथः गच्छथः Sy.

३. आगत्य च संनयथश्च । कामान् प्रापयथः । यद्वा, यतथ इत्यन्तर्णीतण्यर्थोऽयम् । अहनि यतथः व्यापारेषु गमयथः । रात्रौ च संनयथः । निर्व्यापारं कारयथः Sy.

४. म P.

५. हावि० P. हविर्लक्षणान्नवतोऽस्मान् Sy.

६. वर्जणां P. पर्ज....णां D. परित्यजतम् Sy.

७. गौः सोमरसः । तस्य पानं यस्मिन् स गोपीथो यज्ञः तस्मिन् Sy.

८. ०पानस्मा० P., D. ९. रतं P.

१०. VM. ignores मो । अस्माकम् and ऋषीणाम् ॥ मो मैव । ऋषीणामस्माकं पुत्रानपि परिख्यतम् Sy.
Ms. D. puts the figure ॥६५॥ here to indicate the end of the sixty-fifth hymn. No such number is given in P.

११. 'आ चिकितान' इति षडृचं दशमं सूक्तं रातहव्यस्यार्षमानुष्टुभं मैत्रावरुणम् । अत्रानुक्रमणिका 'आ चिकितानानुष्टुभं तु' (KSA. 28.66. p. 21.) इति । आद्यस्तृचो दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे मैत्रावरुणस्य । सूत्रितञ्च —'आ चिकितान सुक्रतू त्यमु वो अप्रहणम्' (ĀSS. 7.11.) इति Sy.

१२. ०नः P. चिकेतानः D.

१३. जानन् स्तुतिम् Sy.

१४. हे मनुष्य ! रातहव्य ! त्वमिति तस्यैव सम्बोधनम् Sy.

१५. आकारयेति शेषः Sy.

१६. शोभनकर्माणौ Sy.

१७. हिंसकानां हिंसकौ Sy.

१८. ०त्यवेश० P., D. आहूय च ऋतमुदकम् । उदकमेव रूपं यस्य तादृशाय Sy. पेश इति रूपनाम Ngh. 3.7.

१९. महते पूज्याय Sy.

२०. प्रयसे । मत्वर्थो लुप्यते । हविर्लक्षणान्नवते Sy.

२१. ०ब्धं P.

२२. ०त D. दद्याः हविरिति शेषः । द्वितीयार्थे वा चतुर्थी । महद्धविर्दधीत । महतोऽन्नस्य लाभायेति वा योज्यम् Sy.

२३. ०वपाहे० P. The reading is doubtful. यजमानो रातहव्य इति is suggested for यजमानेस्तववाहेतेति ।

२४. VM. ignores देवौ ।

ता हि क्षत्रमविंह्रुतं सम्यगंसुर्यं१माशाते ।
अधं व्रतेव मानुंषं स्व१र्ण धायि दर्शुतम् ॥ २ ॥

**ता हि**। तौ। हि[1]। बलम्। अबाधितम्[2]। सम्यक्। असुरगणां[3] हन्तुं[4]। प्राप्नुतः[5]। तदानीम्[6]। यथा, मानुषम्[7]। कर्म[8]। दर्शनीयं[9] भवति। यथा वा। आदित्यस्तथा[10] तद् बलमनयोः[11]। निहितमिति[12]।

ता वामेषे रथानामुर्वीं गव्यूतिमेषाम् ।
रातहंव्यस्य सुष्टुतिं दृधृक्स्तोमैर्मनामहे ॥ ३ ॥

**ता वाम्**।[13] तौ[14]। वाम्[15]। एषाम्[16]। रथानाम्[17]। विस्तीर्णम्[18]। मार्गम्। हन्तुम्[19]। रातहव्यस्य[20]। सुष्टुतिं[21] प्रति। धृष्टम्[22]। स्तोमैश्च। पूजयामः[23]।

अधा हि काव्यां युवं दक्षंस्य पूर्भिरंद्भुता ।
नि केतुना जनानां चिकेथे पूतदक्षसा ॥ ४ ॥

**अधा हि**। अथ[24]। खलु[25]। काव्या[26]। युवाम्। दक्षस्य[27] प्रजापतेः[28]। पूरकैर्हविर्भिः[29] सह। हे आश्चर्यभूतौ[30]! नियमेन जानीथः[31]। जनानां[32] चापि वा जनानां मध्ये समर्थस्येति। हे पूतबलौ[33][34]! प्रज्ञानेन[35]।

---

१. हीति हेतौ। यस्मात् Sy.
२. अहिंस्यम् Sy.
३. असुरविघाति। महद्बलम् Sy.
४. हर्तुं P. ५. व्याप्नुतः Sy.
६. अतो हेतोः Sy.
७. मनुष्येषु प्रवृत्तम् Sy.
८. व्रतेव कर्मेव तद्यथा मनुष्येषु नियतम् Sy.
९. दर्शनीयं बलम् Sy.
१०. सूर्य इव स यथा दिवि दृश्यते तद्वत् Sy.
११. ०मन्नयोः P.
१२. यज्ञे निहितम् Sy.
१३. हे मित्रावरुणौ! Sy.
१४. प्रसिद्धौ Sy. १५. युवाम् Sy.
१६. पुरतो वर्तमानानाम् Sy.
१७. अस्मदीयानाम् Sy.
१८. प्रभूतमतिविस्तृतं मार्गम् Sy.
१९. गन्तुम्। मार्गरक्षणायेत्यर्थः। तुमर्थेऽसेन्प्रत्ययः। तदर्थं वाम् Sy.
२०. राहतस्तस्य P. रातहव्यस्य ऋषेः रातहव्यसम्बन्धिभिः Sy.
२१. ०ति P. सुष्टुतिं सुष्टुतिभिः शोभनस्तुतिसाधनैः Sy.
२२. धर्षकौ युवाम् Sy.
२३. स्तुमः Sy.
२४. ०था D. अपि च Sy.
२५. हि प्रसिद्धौ Sy.
२६. काव्यानि P. स्तुत्यौ Sy.
२७. प्रवृद्धस्य मम Sy.
२८. ०ते D.
२९. पूरकैः स्तवैः Sy.
३०. ०तो D. हे महान्तौ! आश्चर्यभूतौ! सन्तौ! Sy. ३१. नितरां जानीथः Sy.
३२. यजमानानामित्यर्थः। स्तोत्रम् Sy.
३३. हे शुद्धबलौ! युवाम् Sy.
३४. ०लो P., D.
३५. प्रज्ञानेनानुकूलेन मनसा Sy.

तदृतं पृथिवि बृहच्छ्रवएष ऋषीणाम् ।
ज्रयसानावरं पृथ्वति क्षरन्ति यामभिः ॥ ५ ॥

तदृतम् । तत्[1] । सत्यभूतम्[2] । पृथिवि[3] ! महत्[4] । अन्नम्[5] । ऋषीणाम्[6] । एषम्[7] ? विस्तीर्णम्[8] । पर्याप्तम्[9] । अन्तरिक्षं प्रति गच्छन्तौ[10] मित्रावरुणौ । स्तोनार उदकानि क्षारयन्ति[11] । गमनैः ।

आ यद्वामीयचक्षसा मित्र वयं च सूरयः ।
व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ॥ ६ ॥

आ यद् वाम्[12] । आगच्छामः[13] । यदि[14] । वाम्[15] । हे गच्छत्तेजसौ[16] ! वयम् । चास्मदीयाः[17] सूरयश्च[18] । ततो विस्तीर्णे[19] । वहुरक्ष्ये[20] । स्वराज्ये[21] । वर्तेमहि[22] ।[23]

V.67.

बळित्था देव निष्कृतमादित्या यजतं बृहत् ।
वरुण मित्रार्यमन्वर्षिष्ठं क्षत्रमाशाथे ॥ १ ॥

[24]बळित्था । यजतम्[25] ॥ सत्यम्[26] । इत्थम्[27] । हे देवौ[28] ! संकृतः[29] सूनं[30] यजतो वद्धः[31] सद्यौवनमलभत[32] ?

---

१. सर्वैरर्थ्यमानत्वेन प्रसिद्धम् Sy. २. उदकम् Sy.
३. ०वी P., D. हे पृथिवि ! देवि ! त्वयि Sy.
४. प्रभूतम् Sy. ५. अन्नस्य Sy.
६. ०न्नं मृषी० P. स्तोतॄणामस्माकम् Sy.
७. Padapāṭha reads श्रवःऽएषे but VM. explains separately, श्रवः by अन्नम् and एषे by एषम् ॥ एष्टम् D. एषणे सति Sy. ८. पृथु यथा भवति तथा Sy.
९. अलमत्यर्थम् Sy.
१०. ०न्तं P. ज्रयसानौ गच्छन्तौ । 'छन्दस्यसानच् शुजृभ्याम्' (Uṇādi. 2.243.) इत्यसानच् ज्रयतेरपि भवति । 'चितः' इत्यन्तोदात्तः Sy.
११. अत्यर्थं वर्षतः । व्यत्ययेन बहुवचनम् Sy.
१२. आश्वां P. यश्वां D.
१३. ०च्छा D. आह्वयामः Sy. १४. ये Sy.
१५. युवाम् Sy. १६. हे व्याप्तदर्शनौ ! Sy.
१७. ०या P., D. १८. ०र श्व P. स्तोतारः Sy.
१९. अत्यन्तविस्तृते Sy.
२०. बहुभिर्गन्तव्ये बहुभी रक्षितव्ये वा Sy.
२१. स्वराज्ये स्वराट्त्वायैवंविधराज्यार्थम् Sy.
२२. गच्छेम Sy.
२३. VM. ignores मित्रा ॥ हे मित्रावरुणौ ! Sy. Ms. D. puts the figure ॥ ६६ ॥ here to indicate the end of the sixty-sixth hymn. No such number is given in P.
२४. 'बळित्था देव' इति पञ्चर्चमेकादशं सूक्तम् । अत्रेयमनुक्रमणिका—'बळित्था पञ्च यजतः' (KSA.28.67.p.21.) इति । यजतो नामात्रेय ऋषिः । 'आनुष्टुभं तु' (KSA. 28.66.p.4.) इत्युक्तत्वादिदमप्यानुष्टुभम् । मित्रावरुणौ देवता । विनियोगो लैङ्गिकः Sy.
२५. बलित्था D. २६. यजतः, the name of a saint, is suggested for यजतम् ।
२७. बट् इति सत्यनाम Ngh. 3.10.
२८. इदानीं वर्तमानप्रकारेण Sy. २९. हे द्योतमानौ ! Sy. ३०. निष्कृतम् अबाध्यम् Sy.
३१. वर्धः P. ३२. ०द्यौरवन० P.

अदितेः पुत्रौ ! यजमानेन साम् । महान्तम् । वृद्धतमम् । क्षत्रियम् । मित्रावरुणौ । आगाथे । अर्यमन् ! त्वं च ताभ्यां सहितः ।

**आ यद्योनिं हिरण्ययं वरुण मित्र सदथः ।**
**तर्धारा चर्षणीनां यन्तं सुम्नं रिशादसा ॥ २ ॥**

आ यत् । आसीदथः । यदि । गृहम् । हितरमणीयम् । हे मित्रावरुणौ ! मनुष्याणाम् । धतारौ भवथः । यच्छतम् । सुखम् । रिशतामसितारौ !

**विश्वे हि विश्ववेदसो वरुणो मित्रो अर्यमा ।**
**व्रता पदेव सश्चिरे पान्ति मर्त्यं रिषः ॥ ३ ॥**

विश्वे । सर्वे । हि । सर्वधनाः । वरुणादयः । यज्ञान् । गृहानिव । गच्छन्ति । रक्षन्ति च । मर्त्यम् । हिंसायाः ।

**ते हि सत्या ऋतस्पृश ऋतावानो जनेजने ।**
**सुनीथासः सुदानवोऽंहोश्चिदुरुचक्रयः ॥ ४ ॥**

ते हि । ते । हि । सत्याः । यज्ञस्पृशः । सत्यकर्माणः । सर्वेषु जनेषु । सुनयनाः । शोभनदानाः ।

---

१. यष्टव्यम् Sy.
२. अतिप्रवृद्धम् Sy.
३. प्रवृद्धतमम् Sy.
४. ०त्र P. बलम् Sy.
५. हे देव ! हे वरुण ! युवाम् Sy.
६. ०थे ने P., D.
अश्नुवाथे Sy.
७. हे अरीणां नियमितः ! यद्वार्यमा पृथगेव निर्देष्टव्यः । द्विवचनं बहुवचनीकर्तव्यम् Sy.
८. आगच्छथस्तस्मात् Sy.
९. यस्मात् Sy.
१०. यज्ञभूमिम् Sy.
११. हे वरुण ! हे मित्र ! Sy.
१२. धारकौ च Sy.
१३. कुरुतमित्यर्थः Sy.
१४. हे हिंसकानां क्षेप्तारौ ! युवामस्मभ्यम् Sy.
१५. सर्वेऽपि Sy.
१६. हीति चार्थे Sy.
१७. सर्वविदः सर्वधना वा Sy.
१८. आदि refers to मित्रः and अर्यमा ॥ वरुणो मित्रोऽर्यमा चैते त्रयः सर्वे Sy.
१९. अस्मदीयानि कर्माणि Sy.
२०. पदानीव स्थानानीव Sy.
२१. सङ्गता भवन्ति Sy.
२२. आगत्य च मां मर्त्यम् Sy.
२३. हिंसकात् Sy.
२४. P. adds सत्याः after हि ।
२५. खलु । हीति प्रसिद्धवाची सर्वत्र सम्बन्धनीयः Sy.
२६. सत्यभूताः सत्यफला वा Sy.
२७. उदकस्पर्शस्य कर्तारः Sy.
२८. यज्ञवन्तः Sy.
२९. सर्वेषु यजमानेषु Sy.
३०. सुदानाः । एवं महानुभावा वरुणादयः Sy.

दरिद्रस्य । महद् धन कर्तार. ।

**को नु वां मित्रास्तुतो वरुणो वा तनूनाम् ।**
**तत्सु वामेषते मतिरत्रिभ्य एषते मतिः ॥ ५ ॥**

को नु । हे मित्र ! वरुणः । च । वाम् । अङ्गानाम् । किमङ्गम् । अस्तुतमृषिभिः । युवयोः । तद् अङ्गम् स्तोतुम् । अत्रिभ्य । स्तुतिः । सुष्टु । आभिमुख्येन गच्छति ।

V.68.

**प्र वो मित्राय गायत वरुणाय विपा गिरा । महिक्षत्रावृतं बृहत् ॥ १ ॥**

प्र वः । प्रगायत । मित्रावरुणाभ्याम् । मेधया । गिरा । महाधनौ । महत् । उदकं प्रयच्छतः ।

---

१. पापिनोऽपि स्वस्तोतुः Sy.
२. कतारः D. प्रभूतधनादिकर्तारः Sy.
३. VM. ignores चित् ॥ चिदप्यर्थे Sy.
४. मित्रा D. अत्र मित्रशब्देन मित्रस्यैकस्यैव सम्बोधनम् । 'वरुणेळास्वन्तः' (RV.V.62.6.) इत्यत्रेवात्र द्विवचनसूचकस्याकारस्यानाम्नानात् । लोकेषु बहुषु संनिहितेषु एकमेव सम्बोध्य युवयोरिदं युष्माकमिदमिति प्रयुञ्जते Sy.
५. युवयोर्मध्ये त्वं च Sy.
६. तनूनामिति तृतीयार्थे षष्ठी । तनुभिः स्तुतिभिः अस्तुत इति सम्बन्धः । तनूनामल्पमतीनामस्माकम् । तनूनामित्येतद् व्यवहितमप्युत्तरत्र वा योज्यम् Sy.
७. को नु Sy.
८. स्तुतिमृ० P. अस्तुतः । सर्वैरस्तूयमानः कोऽस्ति । उभावपि स्तुत्यावित्यर्थः Sy.
९. ०भि D.
१०. तत् तस्मात् यस्मात्सर्वे स्तुवन्ति तस्मात् Sy.
११. ततंग P. तदंग D.
१२. अत्रिगोत्रेभ्योऽस्मभ्यम् Sy.
१३. ०ति P.
१४. सोष्वभि० P. सोष्ट्वाभि० D.
१५. अभिगच्छति Sy.
१६. VM. ignores नु and the repeated words as आ । ईषते । मतिः ॥ एषते आदरार्थं पुनर्वचनम् Sy.
Ms. D. puts the figure ॥ ६७ ॥ here to indicate the end of the sixty-seventh hymn. No such number is given in P.
१७. 'प्र वो मित्राय' इति पञ्चर्चं द्वादशं सूक्तमात्रेयस्य यजतस्यार्षं गायत्रं मैत्रावरुणम् । तथा चानुक्रम्यते 'प्र वो गायत्रम्' (KSA. 28.68. p. 21.) इति । अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रे एतत्सूक्तम् । सूत्रितञ्च—'प्र वो मित्राय प्र मित्रयोर्वरुणयोः' (ĀSS.5.10.) इति । अभिप्लवषडहे पृष्ठ्यषडहे च स्तोमनिमित्तावापार्थमिदमादीनि द्वितीयवर्जितानि चत्वारि सूक्तानि । तथैव सूत्रितम्—'प्र वो मित्रायेति चतुर्णां द्वितीयमुद्धरेत्' (ĀSS.7.5.) इति Sy.
१८. हे मदीया ऋत्विजः ! Sy.
१९. ०तं P., D. स्तुतिं कुरुत । स्तुत्या स्तुवतेत्येतत् पाकं पचतीतिवत् Sy.
२०. मित्राय वरुणाय च Sy.
२१. व्याप्तया Sy.
२२. स्तुत्या Sy.
२३. महान्तौ P. प्रभूतबलौ युवाम् Sy.
२४. अतिप्रशस्तम् । स्तुत्यर्थमागच्छतमिति शेषः । अथवा महत् प्रभूतमृतं स्तोत्रं शृणुतमिति शेषः Sy.
२५. यज्ञम् Sy.
२६. VM. ignores वः ॥ वः यूयमित्यर्थः Sy.

**सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च । देवा देवेषु प्रशस्ता ॥ २ ॥**

सम्राजा । सम्राजौ[1] । यौ । उदकस्थानौ[2] । मित्र.[3] । च[4] । वरुणः । च[4] । उभौ । देवौ[5] । देवेषु[6] । प्रशस्तावुत्तरत्र[7] सम्बन्धः ।

**ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य । महि वां क्षत्रं देवेषु ॥ ३ ॥**

ता नः शक्तम् । नौ[8] । अस्मभ्यम्[9] । दत्तम्[10] । पार्थिवम्[11] । रयिम्[12] । दिव्य[13] च । महान्तम्[14] । महद्[15] हि[16] । युवयोः । देवानां[17] मध्ये । धनम्[18] ।

**ऋतमृतेन सपन्तेषिरं दक्षमाशाते । अद्रुहा देवौ वर्धेते ॥ ४ ॥**

ऋतमृतेन । यज्ञम् । यज्ञेनानुस्यूतम्[19][20] । स्पृशन्तौ । एषणशीलम्[21] । बलम्[22] । आशाते[23] । अद्रोग्धारौ । वर्धयतः[24] स्तोतॄन्[25] ।

**वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहन्तं गर्तमाशाते ॥ ५ ॥**

वृष्टिद्यावा[26] । वृष्टिमती[27] ययोर्द्यौर्भवति[28] । श्रितजला[29] च पृथिवी तौ तथोक्ताविति वाजसनेयक उक्तम् । अन्नस्य । दानवत्याः[30] प्रजायाः । महान्तम्[31] । रथम् । आशाते[32][33] ।

---

१. सर्वस्य स्वामिनौ Sy.
२. उदकस्योत्पादकौ Sy.
३. ०त्राः D.
४. परस्परापेक्षया चशब्दः Sy.
५. द्योतमानौ Sy.
६. देवेषु मध्ये Sy.
७. प्रकर्षेण स्तुत्यौ । तौ गायतेति पूर्वत्रान्वयः Sy.
८. तौ देवौ Sy. ९. अस्मदर्थम् Sy.
१०. समर्थौ भवतम् । दातुमिति शेषः Sy.
११. पृथिवीसम्बद्धस्य Sy.
१२. पात्नीयं (वरणीयं) रयि P. धनस्य Sy.
१३. दिवि भवस्य च Sy. १४. महतः Sy.
१५. पूज्यम् Sy. १६. हे देवौ ! Sy.
१७. देवेषु प्रसिद्धं स्तुम इति शेषः Sy.
१८. बलम् Sy. १९. उदकेन निमित्तेन Sy.
२०. अनुसूतं P. अनुस्सूतं D.
२१. एक्षण० P., D. एषणवन्तम् Sy.
२२. दक्षं प्रवृद्धं यजमानं हविर्दा Sy.
२३. व्याप्नुतः Sy. २४. प्रबृद्धौ भवतः Sy.
२५. VM. ignores देवौ ॥ मित्रावरुणौ युवाम् Sy. २६. ०ष्टिव्याव P.
२७. ०मत P., D. वृष्ट्यर्था द्यौः स्तुतिर्ययोस्तौ वृष्टिद्यावा । अथवा वृष्टिर्वर्षिका द्यौरन्तरिक्षं याभ्यां तौ तादृशौ Sy. २८. ययो द्यौः D.
२९. रीत्यापा । 'री गतिरेषणयोः' । रीतिः प्राप्तिः सैव आपा आप्तिः अभिमतप्राप्तिर्ययोस्तौ तादृशौ Sy. ३०. वनस्पत्याः P. पनवत्याः D. दातुमुचिताया इत्यर्थः । एतदिड्विशेषणम् Sy.
३१. महतं P., D.
३२. व्याप्नुतः । अधितिष्ठतो यागार्थम् Sy.
३३. VM. ignores पती ॥ पती स्वामिनौ । वृष्टिप्रदत्वात् स्वामित्वम् Sy.
Ms. D. puts the figure ॥६८॥ here to indicate the end of the sixty-eighth hymn. No such number is given in P.

V.69.

**त्री रो॑च॒ना व॑रुण॒ त्रीँरु॒त द्यून्त्रीणि॑ मित्र धारयथो॒ रजां॑सि ।**
**वा॒वृ॒धा॒नाव॒मतिं॑ क्ष॒त्रिय॒स्यानु॑ व्र॒तं रक्ष॑माणावजु॒र्यम् ॥ १ ॥**

त्री रोचना ॥ उरुचक्रिः ॥ रोचयन्तीति लोका रोचनान्युच्यन्ते । द्योतनाद् द्यावः । रजनाद् रजांसि । त्रीन् । लोकान् । धारयथ इत्यर्थः । वर्धयन्तौ । बलं मम । क्षत्रियस्य । अमिरभिभवकर्मा । कर्मणि । रक्षमाणौ । शत्रून् जरयितुमशक्यम् ।

**इरा॑वती॒र्वरुण धे॒नवो॑ वां॒ मधु॑मद्वां॒ सिन्ध॑वो मित्र दुह्रे ।**
**त्रय॑स्तस्थुर्वृष॒भास॑स्तिसृ॒णां धि॒षणा॑नां रेतो॒धा वि द्यु॒मन्तः॑ ॥ २ ॥**

इरावतीः । अन्नवत्यो हि । वरुण ! युवयोः । धेनवः । तदेवाह—मधूदकम् । युवयोः स्वभूताः । सिन्धवः । क्षरन्ति । त्रयः । ऋषभा अग्निवायुसूर्याः । तिसृणाम् । धिषणानां धारका लोका धिषणा उक्ताः ।

---

१. 'त्री रोचना' इति चतुर्ऋचं त्रयोदशं सूक्तम् । उरुचक्रिर्नामात्रेय ऋषिः । त्रिष्टुप् छन्दः । मित्रावरुणौ देवता । अनुक्रम्यते च—'त्री रोचना चतुष्कमुरुचक्रिः' (KSA.28.69.p.21.) इति । विनियोगो लैङ्गिकः Sy.
२. त्रि P. श्री D.
३. ०क्रीः P.
४. रोचना रोचनानि द्युलोकान् धारयथ इति सम्बन्धः Sy.
५. लोचनन्यव्यते P.
६. ०ना P., D.
७. द्यून् द्योतमानानन्तरिक्षलोकान् Sy.
८. ऋजा० P.
९. रजांसि भूलोकान् Sy.
१०. त्रिलोकं P.
११. वर्धमानौ Sy.
१२. बल P. रूपम् Sy. अमतिरिति रूपनाम Ngh. 3.7.
१३. क्षत्रं बलम् । तद्वत इन्द्रस्य । यद्वा क्षत्रियजातीयस्य यजमानस्य Sy.
१४. मिर० P. This passage should immediately follow बलं मम and precede क्षत्रियस्य ।
१५. कर्म च Sy.
१६. अजीर्णमविरतं वा Sy.
१७. VM. ignores वरुण । त्रीन् । उत । त्रीणि and मित्र ॥ हे वरुण ! अपि च हे मित्र ! युवाम् । उत अपि च Sy.
१८. ०ती P., D.
१९. ०त्यौ D. इरा क्षीरलक्षणा । तद्वत्यो भवन्ति Sy.
२०. युवयोराज्ञया Sy.
२१. गावः Sy.
२२. ०स्तेदे० D.
२३. मधुररसमुदकम् Sy.
२४. Omitted by P. स्यन्दनशीला मेघा नद्यो वा Sy.
२५. दुहन्ति Sy.
२६. त्रिसंख्याकाः Sy.
२७. वर्षितारः Sy.
२८. ०सृ० P., D. त्रिसंख्याकानाम् Sy.
२९. स्थानानां पृथिव्यन्तरिक्षद्युलोकानां स्वामिनः सन्तः Sy.

तासां[1] रेतसो[2] निधातारः, अग्निः पृथिव्या[3] गर्भं दधाति वायुरन्तरिक्षस्यादित्यो दिवः[4]। दीप्तिमन्तः[5]।

**प्रातर्देवीमदितिं जोहवीमि मध्यंदिन उदिता सूर्यस्य ।**
**राये मित्रावरुणा सर्वतातेळे तोकाय तनयाय शं योः ॥ ३ ॥**

**प्रातर्देवीम्**[6]। [7]मित्रावरुणसाहचर्याददितेराह्वानम्[8]। धनार्थम्[9]। हे मित्रावरुणौ[10]! यज्ञे। पुत्राय। तत्पुत्राय[11]। शं[12] च। योश्च[13]। याम[14]। शिष्टं[15] स्पष्टमिति।

**या धर्तारा रजसो रोचनस्योतादित्या दिव्या पार्थिवस्य ।**
**न वां देवा अमृता आ मिनन्ति व्रतानि मित्रावरुणा ध्रुवाणि ॥ ४ ॥**

**या धर्तारा**। यौ। धर्तारौ। दीप्तस्य[16]। लोकस्य[17]। अपि च। आदित्यौ[18]। दिवि भवौ[19]। पार्थिवस्य लोकस्य भर्तारौ[20]। न। युवयोः। देवाः[21]। व्रतानि[22]। हिंसन्ति[23]। अमृताः[24]। मित्रावरुणौ! स्थिराणि वर्षादीनि[25]।

---

१. उक्ताः सा P. उक्तासां D.
२. रेधसो P., D. उदकस्य धारकाः Sy.
३. ०थिव्यां D.
४. ०न्ते D. अग्निवाय्वादित्याः Sy.
५. VM. ignores मित्र। वि and तस्थुः ॥ हे मित्र ! विविधं प्रत्येकम् । तिष्ठन्ति । युवयोरनुग्रहात् त्रयोऽपि देवास्त्रिषु स्थानेषु वर्तन्त इत्यर्थः Sy.
६. ०तदे० P.
७. अहमृषिः Sy.
८. मित्रवरुणसहपर्याददि० P. ०र्याददितिते० D.
९. धनप्राप्तये Sy.
१०. युवाम् Sy. ११. ०त्रा D.
१२. अरिष्टशमनाय Sy.
१३. सुखस्य मिश्रणाय चेळे इति Sy.
१४. यामि is suggested for याम ॥ स्तौमि Sy. Cf. Ngh. 3.19. यामि इति याच्ञाकर्मा।
१५. By शिष्टं VM. means प्रातः। देवीम्। अदितिम्। जोहवीमि। मध्यन्दिने। उदिता and सूर्यस्य ॥ प्रातः प्रातःकाले । अदितिम् अखण्डनीयां देवानां जननीम् देवीं द्योतमानां जोहवीमि आह्वयामि । तथा मध्यन्दिने सूर्यस्य । उदिता उदितौ तत्समृद्धिकाले माध्यन्दिने सवने जोहवीमि Sy.
१६. रोचमानस्य Sy.
१७. लोकस्य स्वर्गाख्यस्येत्यर्थः Sy.
१८. अदितेः पुत्रौ Sy.
१९. दिवि भवौ is omitted by P. तौ युवामीळ इति पूर्वत्र सम्बन्धः Sy.
२०. ०रो P. पार्थिवस्य रजसः यौ धर्तारौ Sy.
२१. अन्ये इन्द्रादयः Sy.
२२. वृता० D. कर्माणि Sy.
२३. (न) हिंसन्ति यतो ध्रुवाण्यत इत्यभिप्रायः Sy.
२४. मात्रा P. मित्रा D. अमरणधर्माणोऽपि Sy.
२५. Ms. D. puts the figure ॥६९॥ here to indicate the end of the sixty-ninth hymn. No such number is given in P.

V.70.

**पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र वंसि वां सुमतिम् ॥ १ ॥**

**पुरूरुणा**[1] । पुरुणोरुत्वेनात्यन्तव्याप्त्या लक्षितम्[2] । पालनम्[3] । युवयोः[4] । हि[5] । अस्ति । तथा सति भजेयाहम्[6] । युवयोः[7] । सुमतिम्[8] ।[9]

**ता वां सम्यगद्रुह्वाणेषमश्याम धायसे । वयं ते रुद्रा स्याम ॥ २ ॥**

**ता वाम्**[10] । तौ[11] । वाम्[12] । भर्तुम्[13] । हे अद्रोग्धारौ ! अन्नम्[14] । प्राप्नुयाम । हे स्तुत्यौ[15] ! ते[16] । वयम् । युवयोः परिचारकाः समृद्धा[17] भवेम ।[18]

**पातं नो रुद्रा पायुभिरुत त्रायेथां सुत्रात्रा । तुर्याम दस्यून्तनूभिः ॥ ३ ॥**

**पातम्** । रक्षतम् । अस्मान् । स्तुत्यौ[19] । रक्षणैः[20] । अपि च । रक्षतमस्मान्[21] । शोभनेन त्राणेन । तरेम[22] । शत्रून् । अङ्गैः[23] ।

---

१. 'पुरूरुणा' इति चतुर्ऋचं चतुर्दशं सूक्तमुरुचक्रेरार्षं गायत्रं मैत्रावरुणम् । 'पुरूरुणा गायत्रं तु' (KSA.28.70.p.21.) इत्यनुक्रमणिका । पृष्ठ्याभिप्लवषडहयोः प्रातःसवने आवापार्थत्वेनेदमपि सूक्तं पूर्वसूक्तेन सह । 'प्र वो मित्रायेति चतुर्णां द्वितीयमुद्धरेत्' (ĀŚS.7.5.) इति ह्युक्तम् । चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणशस्त्रे आद्यस्तृचः षडहस्तोत्रियसंज्ञकः । सूत्रितञ्च 'पुरूरुणा चिद्ध्यस्ति प्रति वां सूर उदिते' (ĀŚS.7.2.) इति Sy.

२. हे मित्रावरुणौ ! Sy.

३. पुरूरुणा । अत्र सोः 'सुपां सुलुक्०' इत्याकारः । पुरोरपि बहु उरु बहुतरम् । अथवा पुरु च तदुरु च पुरूरु । अत्यन्तमुरुतरमित्यर्थः तादृक् Sy.

४. रक्षणम् Sy.

५. हि प्रसिद्धौ Sy.

६. सम्भजेय । यस्मादवोऽस्ति तस्माद्वंसीति भावः Sy.

७. युवतया P.

८. अनुग्रहबुद्धिम् Sy.

९. VM. ignores चित् । नूनम् । वरुण and मित्र ॥ चिदिति पूरणः । नूनं निश्चयेन । हे वरुण ! हे मित्र ! युवयोः Sy.

१०. वा P.

११. प्रसिद्धौ Sy.

१२. युवाम् Sy.

१३. धायसे पानाय भोजनाय Sy.

१४. स्तोतारो वयम् इषम् अन्नम् Sy.

१५. हे रुद्रा ! दुःखात् द्रावयितारौ ! रुदद्भिर्द्रवणीयौ ! वा Sy.

१६. स्तोतारः Sy.

१७. सम्राडा P. स्याम भवेम । समृद्धा इति शेषः । युवाभ्यां स्वभूता वा स्याम Sy.

१८. VM. ignores सम्यक् ॥ सम्यक् स्तुम इति शेषः Sy.

१९. स्तुत्येन D. हे उक्तरूपौ ! देवौ ! युवाम् Sy.

२०. ०णौः P.

२१. पालयेथाम् । इष्टप्राप्त्यनिष्टपरिहारभेदेन भेदः । स्तोत्रादिवैकल्यात् शत्रोर्वा त्रायेथामभिमतप्रापणेन रक्षतमित्यर्थः Sy.

२२. हिंस्याम तरेम वा Sy.

२३. वयं च पुत्रादिभिः सहिताः स्वीयैरङ्गैर्वा Sy.

**मा कस्याद्भुतक्रतू यक्षं भुजेमा तनूभिः । मा शेषसा मा तनसा ॥ ४ ॥**

मा कस्य[1] । मा । कस्यचिदन्यस्य[2] । हे आश्चर्यकर्माणौ ! विद्धि[3] याञ्चया[4] ? भुजेम[5] । शरीरैः[6] । मा च । पुत्रेण[7] । मा च[8] । नप्त्रेणात्मार्थं[9] सन्तानार्थं[10] वा[11] पर न याचेमहि[12] ।

V.71.

**आ नो गन्तं रिशादसा वरुण मित्र बर्हणा । उपेमं चारुमध्वरम् ॥ १ ॥.**

आ नः[13] । आगच्छतम्[14] । अस्मान्[15] । हे रिशतामसितारौ[16] ! मित्रावरुणौ[17] ! वृद्धचा[18] । यज्ञं[19] च । उपागच्छतम् । कल्याणम्[20] । अस्माकं[21] यज्ञमुपागच्छतमिति वा[22] ।

**विश्वस्य हि प्रचेतसा वरुण मित्र राजथः । ईशाना पिप्यतं धियः ॥ २ ॥**

विश्वस्य । सर्वस्य । एव[23] जगतः[24] । प्रवृद्धज्ञानौ[25] । मित्रावरुणौ[26] । राजथस्तथाविधौ[27] । आप्याययतम्[28] । कर्माणि[29] ।[30]

---

१. Omitted by P.

२. अन्यस्य कस्यचन Sy. ३. विद्धि P.

४. यज्ञया P. यक्षं पूजितं धनम् Sy.

५. तुजेम P., D. मा भुञ्जीमहि Sy.

६. अस्मदीयैरवयवैः । युवयोरनुग्रहात् समृद्धा वयमन्ययाचितधनेन शरीरपोषं न कुर्म इत्यर्थः Sy.

७. अपत्येन सहिता मा भुजेम Sy.

८. P. reads मास्सोमन्तदेवाहा च for मा च ।

९. पौत्रादिना सहिता मा भुजेम । अस्मत्कुले न केऽपि भुञ्जीमहीत्यर्थः Sy.

१०. सन्तनार्थं सन्तानार्थं D.

११. चा P.

१२. Ms. D. puts the figure ॥७०॥ here to indicate the end of the seventieth hymn. No such number is given in P.

१३. 'आ नो गन्तम्' इति तृचात्मकं पञ्चदशं सूक्तं बाहुवृक्तस्यात्रेयस्यार्षं गायत्रं मैत्रावरुणम् । 'आ नस्तृचं बाहुवृक्तः' (KSA. 28.71.p.21.) इत्यनुक्रमणिका । उक्तः सूक्तविनियोगः । अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रे अयमनुरूपस्तृचः । सूत्रितं च—'आ नो मित्रावरुणा नो गन्तं रिशादसा' (ĀSS.5.10.) इति Sy.

१४. उपागच्छतम् Sy. १५. अस्माकम् Sy.

१६. शत्रूणां प्रेरकौ युवाम् Sy.

१७. हे मित्र ! हे वरुण ! Sy.

१८. वृध्या P., D. बर्हणा परिबर्हणौ निबर्हणौ हन्तारौ शत्रूणाम् Sy.

१९. अहिंसकं यज्ञम् Sy.

२०. चरणीयम् Sy.

२१. अस्माकम् seems to be another explanation of नः (अस्मान्) ।

२२. VM. ignores इमम् ।

२३. हीति प्रसिद्धौ Sy.

२४. ए जतः for एव जगतः P.

२५. प्रकृष्टज्ञानौ युवाम् Sy.

२६. हे मित्र ! हे वरुण ! Sy.

२७. स्वामिनौ भवथः Sy.

२८. प्यायायतं फलैः Sy.

२९. अस्मदीयानि कर्माणि Sy.

३०. VM. ignores ईशाना ॥ हे ईशाना ! अस्माकमीश्वरौ युवाम् Sy.

उप॑ नः सु॒तमा ग॑तं॒ वरु॑ण॒ मित्र॑ दा॒शुषः॑ । अ॒स्य सोम॑स्य पी॒तये॑ ॥ ३ ॥

उप नः । उपागच्छतम्[1] । अस्माकम् । अम्य । यजतोऽध्वर्योः[2] । सोमं[3] तदेवाह[4]—अस्य सोमस्य पानाय[5] ।

V.72.

आ मि॒त्रे वरु॑णे व॒यं गी॒र्भिर्जु॑हुमो अत्रि॒वत् । नि ब॒र्हिषि॑ सदतं॒ सोम॑पीतये ॥ १ ॥

आ मित्रे[6] । मित्रे[7] । वरुणे[8] च । वयम्[9] । स्तुनिभिः[10] । आह्वानं कुर्मः[11] । नो यथाऽत्रिराजुहाव[12] । शिष्टं[13] स्पष्टम् ।

व्र॒तेन॑ स्थो ध्रु॒वक्षे॑मा॒ धर्म॑णा यात॒यज्ज॑ना ।
नि ब॒र्हिषि॑ सदत॒ सोम॑पीतये ॥ २ ॥

व्रतेन[14] । कर्मणा[15] । भवथः[16] । ध्रुवरक्षणौ[17] । कर्मणैव[18] । निहितशत्रुजनौ[19] चरतः[20] ।

---

१. व P.

२. जयतो० D. हविर्दातुर्मम Sy.

३. अभिषुतं सोमं प्रति Sy.

४. सोन्तदे० D.

५. VM. ignores वरुण and मित्र ॥ हे वरुण ! हे मित्र ! युवाम् Sy.
Ms. D. puts the figure ॥७१॥ here to indicate the end of the seventy-first hymn. No such number is given in P.

६. 'आ मित्रे वरुणे' इति तृचात्मकं षोडशं सूक्तं बाहुवृक्तस्यार्षमौष्णिहं मैत्रावरुणम् । 'आ मित्र औष्णिहम्' (KSA.28.72.p.21.) इत्यनुक्रमणिका । दशरात्रे तृतीयेऽहनि प्रउगशस्त्रेऽयं मैत्रावरुणस्य तृचः । सूत्रितञ्च 'आ मित्रे वरुणे वयमश्विनावेह गच्छतम्' (ĀSS.7.10) इति Sy.

७. मित्रा P.

८. मित्रावरुणयोरर्थाय Sy..

९. भयं P. आत्रेयाः Sy.

१०. स्तुतिः P. स्तुतीः D. मन्त्रैः Sy.

११. आजुहुमः Sy.

१२. ०त्रीरा० P. अस्मद्गोत्रप्रवर्तकोऽत्रिरिव· Sy.

१३. Omitted by P. By शिष्टं VM. means नि । बर्हिषि । सदतम् and सोमपीतये ॥ तस्माद्धे मित्रावरुणौ ! सोमपीतये बर्हिषि नि सदतं निषीदतम् Sy.

१४. हे मित्रावरुणौ ! युवाम् Sy.

१५. कर्मणा योगेन Sy.

१६. भवेथः P., D.

१७. ०णे P. अविचलितस्थानौ भवथः Sy.

१८. Omitted by P. जगद्धारकेण Sy.

१९. वहित० P. निहत० is suggested for निहित० ॥ यातयन्तः कर्मसु प्रवर्तयन्तो जना ऋत्विजो ययोस्तौ यातयज्जनौ । अथवा यातयन्तः शत्रून् हिंसन्तो जना भृत्या ययोस्तौ Sy.

२०. चरतौ P. चरत D.

उत्तरा सिद्धा

मि॒त्रश्च॑ नो॒ वरु॑णश्च जु॒षेतां॑ य॒ज्ञमि॒ष्टये॑ ।
नि ब॒र्हिषि॑ सदतां॒ सोम॑पीतये ॥ ३ ॥

[मित्रश्च[1]] याग इतीष्टिः[2] ।

V.73.

यद॒द्य स्थः प॑रा॒वति॒ यद॑र्वा॒वत्य॑श्विना ।
यद्वा॑ पु॒रू पु॑रुभुजा॒ यद॒न्तरि॑क्ष॒ आ ग॑तम् ॥ १ ॥

[3] यदद्य स्थः[4] ॥ पौरः[5] ॥ यत्[6] । इदानीम्[7] । दूरे[8] । भवथः । यद्वा । अन्तिके[9] । हे पुरुभोजनौ[10] ! विस्तीर्णेऽन्यस्मिन्[11] । वा[12] देशे । यदि वा । अन्तरिक्षे[13] । तत[14] आगच्छतम् ।[15]

इ॒ह त्या पु॑रु॒भूत॑मा पु॒रू दंसां॑सि॒ बिभ्र॑ता ।
व॒र॒स्या या॒म्यध्रि॑गू हु॒वे तु॒विष्ट॑मा भु॒जे ॥ २ ॥

इह त्या । इह[16] । तौ । बहूनां भावयितारौ[17] । बहूनि[18] । कर्माणि । धारयन्तौ । धनेच्छया[19] । याचामि[20] ।

---

१. The *pratīka* is supplied by the Editor. मित्रश्च वरुणश्चोभौ नोऽस्माकम् । यज्ञम् । इष्टयेऽभीष्टाय जुषेतां सेवेताम् । आगत्य च बर्हिषि नि सदतां निषीदतां सोमपानाय Sy.

२. इति ष्टि P.
Ms. D. puts the figure ॥७२॥ here to indicate the end of the seventy-second hymn. No such number is given in P.

३. षष्ठेऽनुवाके पञ्चदश सूक्तानि । तत्र 'यदद्य स्थः' इति दशर्चं प्रथमं सूक्तमात्रेयस्य पौरनाम्न आर्षमानुष्टुभमाश्विनम् । अनुक्रान्तञ्च 'यदद्य दश पौर आश्विनं तदानुष्टुभं तु' (KSA. 28.73.p.21.) इति । 'तत्' इत्युक्तत्वादिदमादीनि षट् सूक्तान्याश्विनानि । 'आनुष्टुभं तु' इति तुशब्दादिदमुत्तरं च द्वे आनुष्टुभे । प्रातरनुवाक आश्विने क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चेदमादिके द्वे सूक्ते । 'यदद्य स्थ इति सूक्ते' (ĀSS.4.15.) इति सूत्रितम् Sy.

४. स्थ D.

५. ०र P.

६. यदि Sy.

७. अस्मिन् काले Sy.

८. अत्यन्तं दूरदेशे द्युलोके Sy.

९. अरणवति गन्तुं शक्ये प्रदेशेऽन्तिके स्थः Sy.

१०. हे बहुषु यज्ञेषु भोक्तारौ ! अधिकं रक्षितारौ ! वा Sy.

११. बहुप्रदेशेषु स्थः Sy.

१२. अथवा Sy.

१३. अन्तरिक्षे स्थः Sy.

१४. त P. तस्मात्सर्वस्मादद्य Sy.

१५. VM. ignores अश्विना ।

१६. अस्मिन् यज्ञे Sy.

१७. पुरूणां बहूनां यजमानानां भावयितृतमौ Sy.

१८. पुरूणि Sy.

१९. वरणीयौ Sy.

२०. उपागच्छामि Sy.

अधृतगमनौ[1] । ह्वयामि[2] । बहुतमौ[3] । भोगाय[4] ।

ईर्मान्यद्वपुषे वपुश्चक्रं रथस्य येमथुः ।
पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः ॥ ३ ॥

ईर्मन्वित्[5] । गमितम्[7] । अन्यत् । उदकार्थम् । उप्यमानम्[8] । रथस्य[9] । चक्रम् । अश्विनौ[6] ! येमथुः[10] । परिगच्छथः[11] । अन्येन[12] । महता[13] । अहोरात्राणि[14] । लोकाद्वत्. द्विकर्मको वा लोकेष्विति[15] ।

तदू षु वामेना कृतं विश्वा यद्वामनु ष्टवे ।
नाना जातावरेपसा समस्मे बन्धुमेयथुः ॥ ४ ॥

तदू[17] षु । तत् । सुष्ठु । एतत्[18] । युवयोः[19] । कर्म[20] । व्याप्तौ[21] । यत्[22] । वाम्[23] । अहमनु स्तौमि[24] । पृथक्[25] । उत्पन्नौ[26] । अपापौ[27] । अस्मासु[28] । धनम्[29] । सङ्गमयथः[30] ।

---

१. अधृत० P. अन्यैरधृतगमनकर्माणौ Sy.
२. आह्वयामि Sy.
३. प्रभूततमौ Sy.
४. भोगाय पालनाय वा Sy.
५. ईर्म्मा० D.
६. हे अश्विनौ ! युवाम् Sy.
७. समीतम् P. ईर्मा । अर्तेः ईर्मा इति रूपम् । गन्तर्यावित्यै Sy.
८. अव्यमानं P. तस्य शोभायै Sy.
९. रथस्य युष्मदीयस्य Sy.
१०. येमधु D. नियमितवन्तौ स्थः Sy.
११. ०च्छतः D. परिगच्छथः । 'न्यऽ१न्यस्य मूर्धनि चक्रं रथस्य येमथुः' (RV.I.30.19.) इत्युक्तम् Sy.
१२. चक्रेण Sy.
१३. महत्त्वेन स्वसामर्थ्येन Sy.
१४. युगा युगोपलक्षितान् कालान् प्रातरादिसवनान-होरात्रादिकालान् वा Sy.
१५. कोवांश्च P.
१६. VM. ignores नाहुषा ॥ नहुषा मनुष्याः । तेषाम् Sy.
१७. कदुष P. कदुषु D.
१८. अनेन पौरेण Sy.
१९. युवाभ्याम् Sy.
२०. कृतं सम्पादितं भवतु Sy.
२१. हे व्याप्तौ ! Sy.
२२. येन स्तोत्रेण Sy.
२३. युवाम् Sy.
२४. अहस्तौमि P. अनुस्तुवे Sy.
२५. पृथगेव Sy.
२६. समृद्धौ Sy.
२७. ०न्ना च पा० D.
२८. अस्मभ्यम् Sy.
२९. अन्नं धनं वा Sy.
३०. सहग० D. सम्यक् गमयथः । सम्यक् प्रयच्छतमित्यर्थः Sy.
३१. VM. ignores उ and आ ॥ उ इति पूरणः Sy.

आ यद्वां सूर्या रथं तिष्ठद्रघुष्यदं सदा ।
परि वामरुषा वयो घृणा वरन्त आतपः ॥ ५ ॥

आ यद्वाम्[1] ।[2] आतिष्ठत्[3] । यदा । युवयोः । सूर्यस्य[4] दुहिता । रथम् । सर्वदा । शीघ्रं गच्छन्तम्[5] । तदा[6] वाम् । पर्यवृण्वन्[7] । आरोचमानाः । गन्तारो रश्मयः[8] छन्दांसि[9] वा[10] । दीप्त्या[11] । तापयितारः[12] ।

युवोरत्रिश्चिकेतति नरा सुम्नेन चेतसा ।
घर्मं यद्वामरेपसं नासत्यास्ना भुरण्यति ॥ ६ ॥

युवोः[13] । युवाम्[14] । अत्रिः । जानाति[15] । हे नरौ[16] ! सुखयुक्तेन[17] । चेतसा[18] । यदा[19] । अग्निम्[20] । अरेपसं[21] गतौष्ण्यम्[22] । हे नासत्यौ ! आस्येन[23] । भुरण्यति[24] बिभर्ति[25] । आस्यमुदकम्[26] । अश्विभ्यामस्तमिति ।

उग्रो वां ककुहो ययिः शृण्वे यामेषु संतनिः ।
यद्वां दंसोभिरश्विनात्रिर्नराववर्तति ॥ ७ ॥

उग्रः । उद्गूर्णः[27] । युवयोः । महान्[28] । रथः[29] । श्रूयते । गमनेषु[30] । सन्तन्यमानः[31] । यदा[32] । वाम्[33] ।

---

१. यद्वा P.
२. हे अश्विनौ ! Sy.
३. आस्थितवती Sy.
४. युवयोः पत्नी Sy.
५. ०न्त P., D. शीघ्रगम् Sy.
६. दा D.
७. परितो वृण्वन्ति Sy.
८. वयः अश्वाः Sy.
९. ०सी D.
१०. वाम् P.
११. दीव्या P. दीप्ताः Sy.
१२. आतपनाः शत्रूणाम् । अथवा आतप इति विशेष्यम् । वयो गन्तारः उक्तलक्षणा आतपः सर्वतस्तापयित्र्यो दीप्तयः परिवरन्ते Sy.
१३. युवयोः । युवामित्यर्थः Sy.
१४. अस्मत्पिता ऋषिः Sy.
१५. जानाति स्तुतवानित्यर्थः । सति दुःखे सुखमपेक्षते Sy.
१६. हे नेतारावश्विनौ ! Sy.
१७. ०क्तौ P. सुखेनाग्निदाहोपशमरूपेण हेतुना Sy.
१८. आदरयुक्तेन मनसा Sy.
१९. दुःखस्य कः प्रसङ्गः ? इत्यत आह यस्मात् Sy.
२०. दीप्तं दहन्तमग्निम् Sy.
२१. अरेवसं P., D. असुरः स्वदाहाय प्रक्षिप्तम् अरेपसम् अपापं सुखकरम् Sy.
२२. ०ण्या P.
२३. आस्येन तन्निष्पन्नेन स्तोत्रेण Sy.
२४. प्राप्तवान् । भुरण्यतिर्गतिकर्मा । अत्रेरग्नेः सकाशात् रक्षणम् 'हिमेनाग्निं घ्रंसम्' (RV. I.116.8.) 'युवमृबीसमुत तप्तमत्रये' (RV.X.39.9.) इत्यादिभिः स्पष्टं प्रदर्शितम् Sy.
२५. ०ति P.
२६. The passage आस्यमुदकम् should immediately follow आस्येन and precede भुरण्यति ।
२७. उद्गूर्णबलः Sy.
२८. उच्छ्रितो महान् Sy.
२९. गन्ता Sy.
३०. गमनेषु यज्ञेषु वा Sy.
३१. सततं गच्छन् रथः Sy.
३२. यस्मात् Sy.
३३. युवाम् Sy.

कर्मभिः । हे अश्विनौ ! अत्रिः[1] । आवर्तयति[2] स्म ।[3]

**मध्व ऊ षु मधूयुवा रुद्रा सिषक्ति पिप्युषी ।**
**यत्समुद्राति पर्षथः पक्वाः पृक्षो भरन्त वाम् ॥ ८ ॥**

**मध्वः**[4] । हे सोमेच्छौ[5] ! स्तुत्यौ[6] ! वाम्[7] । सोमस्य[8] धारा । सेवते । प्याययन्ती[9] । यदा युवाम् । अन्तरिक्षम्[10] । अभिगच्छथः[11] । तदानीं पक्वानि[12] । अन्नानि[13] । वाम् । ददति[14] ।[15]

**सत्यमिद्वा उ अश्विना युवामाहुर्मयोभुवा ।**
**ता यामन्यामहूतमा यामन्ना मृळयत्तमा ॥ ९ ॥**

**सत्यम्** । सत्यम् । एव । हे अश्विनौ ! युवाम् । आहुः[16] । सुखस्य भावयितारौ । गमने[17] । अतिशयेन[18] गमनार्थं स्तोतृभिर्ह्वातव्यौ[19] भवथः । एवं सुखयितृतमौ[20] च ।[21]

**इमा ब्रह्माणि वर्धनाश्विभ्यां सन्तु शंतमा ।**
**या तक्षाम रथाँइवावोचाम बृहन्नमः ॥ १० ॥**

**इमा ब्रह्माणि**[22] । इमानि[23] । स्तोत्राणि[24] । वर्धनानि[25] । अश्विभ्याम् । सन्तु । सुखतमानि । यानि ।

---

१. अस्मत्पिता Sy.
२. आवर्तयति Sy.
३. VM. ignores नरा ॥ हे नरा ! नेतारौ ! Sy.
४. ०ध्व D.
५. ०च्छ D., P. हे मधुरस्य सोमादेर्मिश्रयितारौ ! Sy.
६. न्तुत्यौ P. रुत् स्तुतिः । तया द्रवणीयौ रुद्रपुत्रौ वा Sy.
७. वा P.
८. मधुररसेन Sy.
९. ०यन्ति P. प्याययन्ती स्तुतिरस्मत्कृता Sy.
१०. समुद्द्रवणसाधनान्यन्तरिक्षाणि Sy.
११. अतिपारयथः । यज्ञं प्राप्नुथ इत्यर्थः Sy.
१२. पक्वाः Sy.
१३. अन्नानि हविर्लक्षणानि Sy.
१४. भ्रियन्ते यजमानैः Sy.
१५. VM. ignores उ and सु ॥ सुष्ठु Sy.
१६. आहुः पुराविदः Sy.
१७. अस्मद्यज्ञेऽस्मदर्थागमने वा Sy.
१८. P. and D. repeat the word अतिशयेन ।
१९. ०भिह्वा० D. गमनार्थं भृशमाह्वातव्यौ भवतमिति शेषः Sy.
२०. अतिशयेन सुखयितारौ भवतम् Sy.
२१. VM. ignores वै । उ । ता । यामन् and आ ॥ वै इति पूरणः । ता तौ सुखकरत्वेन प्रसिद्धौ युवाम् । यामन् यज्ञे । आकारश्चार्थे Sy.
२२. अथ स्तुतिं निगमयति Sy.
२३. इमानि इदानीं कृतानि Sy.
२४. परिवृढानि स्तोत्राणि Sy.
२५. समर्धकानि Sy.

कृतवन्तौ[1] वयम् । रथानिव[2] । अवोचाम[3] । आभ्यां महान्तम्[4] । नमस्कारं[5] स्तुतिं वा ।[6]

V.74.

**कूष्ठो॑ दे॒वाव॑श्विना॒द्या दि॒वो म॑नावसू ।**
**तच्छ्र॑वथो वृषण्वसू अत्रि॑र्वा॒मा वि॑वासति ॥ १ ॥**

[7] कूष्ठः । क्व स्थितौ[8] । देवौ ! अश्विनौ ! अद्य[9] । दिवः[10] । मा वर्तयति[11] ? हे पूजनीयधनौ[12] ! तत्[13] । शृणुतम्[14] । हे वृष्यमाणधनौ[15] ! अयमत्रिकुलजातः[16] । वाम् । परिचरति स्तोत्रेण, तत्स्तोत्रमिति[17] ।[18] [19]

**कुह॒ त्या कुह॒ नु श्रु॒ता दि॒वि दे॒वा नास॑त्या ।**
**कस्मि॒न्ना य॑तथो॒ जने॒ को वां॑ न॒दीनां॒ सचा॑ ॥ २ ॥**

कुह त्या । कस्मिन् । दीप्ते[20] लोके । तौ । नासत्यौ[21] भवतः[22] । कस्मिन्[23] । वा[24] । विश्रुतौ[25] । कस्मिन्[26]

---

१. कृतवन्तो० is suggested for कृतवन्तौ ॥ सम्पादयाम Sy.

२. रथा इव P. राथा इव D. रथानिव शिल्पी तद्वत्तक्षाम तानि सन्तु Sy.

३. अवाचाम P.

४. वयं प्रभूतं प्रभूतफलप्रदम् Sy.

५. नमस्कारोक्तिम् Sy.

६. Ms. D. puts the figure ॥७३॥ here to indicate the end of the seventy-third hymn. No such number is given in P.

७. 'कूष्ठः' इति दशर्चं द्वितीयं सूक्तं पौरस्यार्षम् । 'कूष्ठः' (KSA. 28.74.p.21.) इत्यनुक्रमणिका । पूर्वत्र तुशब्दात्—इदमप्यानुष्टुभम् । 'आश्विनं तत्' (KSA.28.73.p.21.) इति पूर्वोक्तत्वात् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः Sy.

८. ०तो P., D. कूष्ठः—व्यत्ययेनैकवचनम् । कौ भूमौ तिष्ठन्तौ सन्तौ । अथवा कू इत्यस्य निपातस्य स्थ इत्याख्यातेन 'सह' इति योगविभागात् समासः । ऐकस्वर्यं चाध्येतृसमयप्राप्तम् । 'अराइव' (RV.V.58.5.) इत्यत्र यथेवशब्दः । 'कूचिज्जायते' (RV.X.4.5.) 'कूचित्सन्तम्' (RV.X.93.11.) इत्यादिवदत्रापि द्रष्टव्यम् । क्व स्थितौ भवथः Sy.

९. यद्य P. अस्मिन् यागदिने Sy.

१०. द्युलोकादागत्य Sy.

११. मा वर्तयति seems to be unnecessary.

१२. हे स्तुतिधनौ ! Sy.

१३. स्तोत्रम् Sy.

१४. शृणुथः Sy.

१५. हे वर्षकधनौ ! Sy.

१६. अत्रेः पुत्रः Sy.

१७. अत्रिर्युवां स्तौति तं शृणुथ इत्यर्थः Sy.

१८. स्तोत्रं should immediately follow तत् and precede शृणुतम् ।

१९. VM. ignores आ ॥ आ सर्वतः Sy.

२०. द्युलोके निवसत इति शेषः Sy.

२१. अश्विनौ Sy.

२२. तिष्ठतः Sy.

२३. कुत्र Sy.

२४. वा seems to be the explanation of नु ॥ अद्य Sy.

२५. ०तो P. श्रुतौ Sy.

२६. Omitted by P., D. अथ प्रत्यक्षकृतः, हे देवौ ! युवां कस्मिन् Sy.

वा । जने[1] । आगच्छथः । कस्य[2] । युवयोः । स्तुतीनाम् । वेदिता । स्तुतयो[4] नद्यः[5] ।

**कं याथः कं ह गच्छथः कमच्छा युञ्जाथे रथम् ।**
**कस्य ब्रह्माणि रण्यथो वयं वामुश्मसीष्टये ॥ ३ ॥**

**कं याथः[6]** । कम्[7] । आप्नुथः[8] । कम् । च[9] प्राप्तुम् । गच्छथः[10] । कं च । अभिगन्तुम्[11] । युञ्जाथे[12] । रथम्[13] । कस्य वा ब्रह्माणि[14] । कामयेते[15] । वयमिदानीम् । वाम्[16] । कामयामहे[17] । यज्ञार्थम्[18] ।

**पौरं चिद्ध्युदप्रुतं पौर पौराय जिन्वथः ।**
**यदीं गृभीततातये सिंहमिव द्रुहस्पदे ॥ ४ ॥**

**पौरम्** । पौरो मेघः[19] पूरणात् तम् । उदप्रुतम्[20] । पौरेत्यामन्त्रितं[21] वाक्येनान्वितमित्युक्तम् । पौरनाम्ने[22] मह्यमुदकेन । पूरयथः[23] । यदि[24] । एनमनुदके[25] देशे । शत्रोः[26] । स्थाने[27] । सिंहमिव[28] लीनम्[29] । युद्धार्थं[30] प्रापयथः ।

---

१. यजमाने Sy.
२. स्तोता Sy.
३. सहायः स्यात् Sy.
४. वो P., D. The passage स्तुतयो नद्यः should immediately follow स्तुतीनाम् and precede वेदिता । Cf. Ngh. 3.16. नद इति स्तोतृनाम and also cf. N.5.2. ऋषिर्नदो भवति । नदतेः स्तुतिकर्मणः ।
५. VM. ignores देवा ।
६. हे अश्विनौ ! युवाम् Sy.
७. कं यजमानं यज्ञं वा प्रति Sy.
८. अध्वानमुल्लङ्घ्य याथः Sy.
९. प्राप्नु P. च seems to be the explanation of ह ॥ ह कं च प्रति Sy.
१०. ०च्छतः P., D. गत्वा च केन सह सङ्गतौ भवथः Sy.
११. अभिप्राप्तुम् Sy.
१२. योजयथः Sy.
१३. रथम् अश्वैः Sy.
१४. परिवृढानि स्तोत्राणि Sy.
१५. कामयते P. कामयेथे is suggested for कामयेते ॥ रमेथे Sy.
१६. वा P. युवाम् Sy.
१७. कामयामहे । तस्मात् कस्यचन यागं प्रति न गन्तव्यमित्यर्थः Sy.
१८. गमनायैषणाय वा Sy.
१९. मेघ P. पौरेण वृष्ट्यर्थं प्रार्थ्यमानत्वेन सम्बन्धात् मेघोऽपि पौरः । तम् Sy.
२०. उदकप्लावकं मेघम् Sy.
२१. हे पौर ! इदमश्विनोः सम्बोधनम् । पौरेण स्तुत्यत्वेन सम्बन्धात् । अश्विनावपि पौरौ । उभयोः छान्दसमेकवचनम् । हे पौरसम्बन्धिनावश्विनौ ! युवाम् Sy.
२२. पौराय ऋषये मह्यम् Sy.
२३. प्रेरयथः Sy.
२४. यौ युवाम् Sy.
२५. मेघं प्रति गच्छथः Sy.
२६. द्रोहस्य Sy.
२७. अरण्यदेशे Sy.
२८. गर्जन्तं प्रबलं सिंहं यथा बलाच्च्यावयन्ति शूरास्तद्वत् जिन्वथ इति Sy.
२९. लिनं P.
३०. प्र० P.

सङ्गृहीतं[1] धनं तायते यत्र[2] सटेश्वस्तत्रेति[3][4] ।

**प्र च्यवानाज्जुजुरुषो वव्रिमत्कं न मुञ्चथः ।**
**युवा यदी कृथः पुनरा काममृण्वे वध्वः ॥ ५ ॥**

**प्र च्यवानात्**[5] । प्रमुञ्चथः[6] । दीप्ता । च्यवनात्[7] । जराम्[8] । कवचम् । इव कायन्ति[9] । यदाऽयं च्यवानः[10] । पुनः । युवा[11] । स्वच्छन्दं कृथ[12], औणादिकः प्रत्ययः । अनन्तरं[13] तं[14] युवतीः[15] यथाकाममात्मानम्[16] । प्रापयामास[17] प्राप्तयौवनः । "जुजुरुषो[18] नासत्या" इत्युक्तम्[19] ।

**अस्ति हि वामिह स्तोता स्मसि वां संदृशि श्रिये ।**
**नू श्रुतं म आ गतमवोभिर्वाजिनीवसू ॥ ६ ॥**

**अस्ति हि**[20] । भवति[21] । हि[22] । वाम् । अत्र । स्तोता[23] । तथा ननि भवामः[24] । युवयोः । सुदर्शने[25] । श्रयत्थमुत्तमे[26], उक्तमेकवचनबहुवचनयोः[27] समन्वयः[27] । क्षिप्रम्[28] । श्रूयमाणम्[29] । मदीयं[30] स्तोत्रम् । आगच्छतम् । पालनैः[31] । हे अन्नधनौ[32] !

---

१. ०हीतिं P.
२. ०यत्रे P.
३. The passage, सङ्गृहीतं...तत्र seems to be the explanation of गृभीततातये which VM. has already explained by युद्धार्थम् । The passage should therefore immediately follow युद्धार्थम् ॥ गृहीतयज्ञसन्तानाय पौराय Sy.
४. VM. ignores चित् and हि ॥ चिदिति पूरणः Sy.
५. ०नत् D.
६. प्रामुञ्चतः P., D. प्रमुञ्चतम् । 'प्रामुञ्चतं द्रापिमिव च्यवानात्' (RV.I.116.10.) इत्यादि मन्त्रान्तरम् Sy.
७. ऋषेः Sy.
८. हेयं पुराणं रूपम् Sy
९. कार्यन्ते P.        १०. ०ना P.
११. युवानम् Sy.
१२. कुरुथ इत्यर्थः Sy.
१३. ०प्रत्योन्तरं D.        १४. तं P. सं D.
१५. सुरूपाया: स्त्रियः Sy.
१६. कामयात्मानम् P. कमनीयं रूपम् Sy.
१७. प्रापयतम् Sy.
१८. जुजू० P., D.
१९. RV.I.116.10.
२०. हे अश्विनौ ! Sy.
२१. वर्तते Sy.        २२. खलु Sy.
२३. Sy. adds पौरः.
२४. स्मो भवेम Sy.
२५. सन्दर्शने सन्निधाने Sy.
२६. श्र्यर्थम् is suggested for श्रयत्थमुत्तमे ॥ किमर्थम् ? श्रिये Sy.
२७. उक्त एकवचनबहुवचनयोः समन्वयः is suggested for उक्तमेकवचनबहुवचनयो समन्वयः ॥
२८. अद्य Sy.
२९. शृणुतम् Sy.
३०. मदीयमाह्वानम् Sy.
३१. किं तूष्णीम् ? नेत्याह—अवोभिः रक्षणैः सह Sy.        ३२. अन्नवसू Sy.

को वा॑म॒द्य पु॑रू॒णामा व॑व्ने॒ मर्त्या॑नाम् ।
को विप्रो॑ विप्रवाहसा॒ को य॒ज्ञैर्वा॑जिनीवसू ॥ ७ ॥

को वाम् । बहूनाम्[1] । मनुष्याणां[2] मध्ये । कः । वाम्[3] । अद्य[4] । भजते[5] । कः । मेधावी स्तोत्रेण । हे विप्रैरुह्यमानौ[6] ! को वा यजमानः[7] । यज्ञैः[8] । अन्नवम्[9] !

आ वां॒ रथो॒ रथा॑नां॒ येष्ठो॑ यात्वश्विना ।
पु॒रू चि॑दस्म॒युस्ति॒र आ॑ङ्गू॒षो मर्त्ये॒ष्वा ॥ ८ ॥

आ वाम् । आयातु । युवयोः । रथः[10] । रथानां[11] मध्ये । अतिशयेन गन्ता[12] । बहु[13] धनम् । अस्मभ्यं प्रयच्छतु[14] । अस्मत्कामः[15] प्राप्तः[16] । तस्य रथस्य स्तोमः[17] । मर्त्येषु[18] भवति[19] ।

शमू॒ षु वां॑ मधूयुवा॒स्माक॑मस्तु च॒र्कृतिः॑ ।
अ॒र्वा॒ची॒ना वि॑चेतसा॒ विभिः॑ श्ये॒नेव॑ दीयतम् ॥ ९ ॥

शमू षु । सुखकर्त्री[20] । एव[21] । सुष्ठु । भवतु । युवयोः[22] । हे सोमेच्छू[23] ! अस्माकम् । कृतिः पुनः पुनः क्रियमाणा[24] । अभिमुखौ[25] ! सुमती[26] ! युवाम् । अश्वैः[27] । श्येनाविव । आगच्छतम्[28] ।[29]

---

१. पुरूणाम् Sy.
२. मर्त्यानाम् Sy.
३. युवाम् Sy.
४. अस्मिन् दिने Sy.
५. भजति Sy.
६. ०रू० P., D. हे विप्रैर्मेधाविभिर्वहनीयौ ! Sy.
७. यजमानो यजमानः P.
८. यज्ञैर्वव्ने । अत्यन्तविलम्बमसहमानः पुनः पुनर्ब्रूते Sy.
९. VM. ignores आ ॥ सर्वतः Sy.
१०. एको रथः Sy.
११. रथ P. रथाम् D. इतरदेवरथानां मध्ये Sy.
१२. अतिशयेन गन्ता सन् Sy.
१३. बहूनपि अस्मद्विरोधिनः Sy.
१४. प्रयच्छतु seems to be the explanation of तिरः ॥ तिरः हिंसकः, तिरस्कर्ता वा Sy.
१५. अस्मान् कामयमानः Sy.
१६. प्राप्तस्य P.
१७. आङ्गूषः स्तुत्यः । आकारः पूरणः । अथवा आङ्गूषः स्तोमः । स्तवोऽस्मयुरस्मान् बलैर्योक्तुं कामयमानो मर्त्येषु मर्त्यैरस्मदीयैर्ऋत्विग्भिः प्रेरितः सन् । उक्तलक्षणाश्विनो रथस्य वा स्तुतिरा सर्वतः पुरु चित् पुरूण्यपि शत्रुबलानि तिरः तिरस्करोति Sy.
१८. सर्वेषु यजमानेषु मध्ये Sy.
१९. VM. ignores अश्विना । चित् and आ ॥
२०. सुखकरम् Sy.
२१. सु कव P. सुकर्तेव D.
२२. युवाभ्याम् Sy. २३. हे मधुमन्तौ ! Sy.
२४. पुनः पुनः करणं युवाभ्यामर्थाय पुनः पुनः क्रियमाणं स्तोत्रं युवयोरागमनस्याभ्यासो वा Sy.
२५. ०खेन D. हे अर्वागस्मदभिमुखाञ्चनौ ! Sy.
२६. हे विशिष्टप्रज्ञौ ! Sy.
२७. विभिः गन्तृभिरश्वैः Sy.
२८. गच्छतम् Sy.
२९. VM. ignores उ

अश्विना यद्ध कर्हिं चिच्छुश्रूयातमिमं हवम् ।
वस्वीरू षु वां भुजः पृञ्चन्ति सु वां पृचः ॥ १० ॥

अश्विना । अश्विनौ[1] ! यदि[2] । कदा । चित्[3] । इमम्[4] । आह्वानम् । शृणुयातम्[5] । प्रशस्तानि[6] । भोजनानि[7] । सुष्ठु । युवाभ्याम्[8] । पृञ्चन्ति[9] तदेवाह पृञ्चन्तीति[10] । सुष्ठु । वाम्[11] । अन्नानि प्रयच्छन्तीति[12] ।[13]

V.75.

प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवम् ॥ १ ॥

[14]प्रति प्रियतमम्[15] ॥ अवस्युः[16] ॥ प्रतिभूषति स्तुतिभिरलङ्करोति[17] । प्रियतमम्[18] । रथम् । वर्षितारम्[19] । धनानां प्रापयितारम्[20] । युवयोः[21] । स्तोताऽयम् । ऋषिः[22] । हे अश्विनौ ! हे मधुमन्तौ[23] ! मम । शृणुतम् । ह्वानम्[24][25] ।

---

१. हे अश्विना ! युवाम् Sy.
२. यत्र Sy.
३. कर्हिचित् स्थितवन्तौ भवथः Sy.
४. इववम् P. तत्र इमं मे Sy.
५. शृणुतम् । श्रुत्वागच्छतमित्यर्थः Sy.
६. किमर्थम् ? इत्युच्यते प्रशस्याः Sy.
७. धनानि हविर्लक्षणानि Sy.
८. युवाम् Sy.
९. वृञ्चति P., D.
मिश्रयन्ति प्राप्नुवन्ति Sy.
१०. पिबन्तीति P. पृबन्तीति D.
११. युवाम् Sy.
१२. P. reads पानानि and D. reads वानन्नानि for वाम् । अन्नानि ॥ पृचः सम्पर्चनाः । युवां प्राप्तुं कामयमाना इत्यर्थः । अथवा सुपृचः सुसम्पर्चनाः स्तोतारो वस्वीर्भुजो वां सुष्ठु पृञ्चन्ति सम्पर्चयन्ति Sy.
१३. VM. ignores ह and उ ॥ उ इति पूरणः Sy.
Ms. D. puts the figure ॥७४॥ here to indicate the end of the seventy-fourth hymn. No such number is given in P.
१४. 'प्रति प्रियतमम्' इति नवर्चं तृतीयं सूक्तम् । अवस्युर्नामात्रेय ऋषिः । पङ्क्तिश्छन्दः । अश्विनौ देवता । अनुक्रान्तं च—'प्रति नवावस्युः पाङ्क्तम्' (KSA.28.75.p.21.) इति । प्रातरनुवाके आश्विने क्रतौ पाङ्क्ते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । 'प्रति प्रियतममिति पाङ्क्तम्' (ĀSS.4.15.) इति हि सूत्रितम् Sy.
१५. प्रयतं D.
१६. अपस्युः D.
१७. ०रखंक० P.
१८. प्रय० P.
१९. वर्षितारं फलानाम् Sy.
२०. ०नां अप्रा० P. ०नामप्रा० D. धनानां वाहकम् Sy.
२१. ईदृशं रथमागमनाय स्तौतीत्यर्थः Sy.
२२. ऋषिभिः P., D.
ऋषिः अवस्युः Sy.
२३. तस्माद्धे मधुविद्यावेदितारौ ! Sy.
२४. आह्वानम् Sy.
२५. VM. ignores प्रति and स्तोमेन ॥ एकः प्रतिशब्दोऽनुवादः Sy.

**अत्यायातमश्विना तिरो विश्वा अहं सना ।**
**दस्रा हिरण्यवर्तनी सुषुम्ना सिन्धुवाहसा माध्वी मम श्रुतं हवम् ॥ २ ॥**

अत्यायातम् । अत्यागच्छतम्[1] । अश्विनौ ! तिरस्कृत्य[2] । अन्याः प्रजाः[3] । अहं हि[4] । युवयोः पुरातनः[5] । दस्रौ[6] हिरण्ययुक्तमार्गौ[7] । सुसुखौ[8] । सिन्धूनां प्रापयितारौ[9] ।

**आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।**
**रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवम् ॥ ३ ॥**

आ नः । आगच्छतम् । अस्माकम्[10] । रत्नानि[11] । धारयन्तौ । अश्विनौ ! युवाम् । रुद्रपुत्रौ[12] । हिरण्यवर्तनी[13] । प्रीयमाणौ[14] । अन्नवसू[15] ।

**सुष्टुभो वां वृषण्वसू रथे वाणीच्याहिता ।**
**उत वां ककुहो मृगः पृक्षः कृणोति वापुषो माध्वी मम श्रुतं हवम् ॥ ४ ॥**

सुष्टुभः । कल्याणस्य स्तोतुः[16] । युवयोः । हे वृष्यमाणधनौ[17] ! रथे । स्तुतिः[18] । आहिता[19] । वाणीचीति[20] वाङ्नाम । अपि च । युवयोः[21] । उच्छ्रितः[22] । अश्वः[23] । अन्नम्[24] । कृणोति[25] । उदकहितम्[26] ।

---

१. अतिग० P., D. सर्वान् यजमानानतिक्रम्यागच्छतम् Sy.
२. सदा तिरस्करोमि । अथवाहं तिरः । 'तिरः सत इति प्राप्तस्य' (N.3.20.) इति निरुक्तम् । प्राप्ता विश्वाः सर्वाः क्रिया युष्मदीया अनुतिष्ठेयमित्यर्थः । सना सनातनौ Sy.
३. सर्वा अस्मद्विरोधिप्रजाः Sy.
४. यथा अहम् ऋषिः Sy.
५. युवां याद P.
६. दस्रे P., D. शत्रूणामुपक्षपयितारौ Sy.
७. हिरण्यरथौ Sy.
८. सुधनौ Sy.
९. नदीनां प्रवाहयितारौ वृष्टिप्रेरणेन । तादृशौ युवामत्यायातम् Sy.
१०. अस्मभ्यम्, अस्मान् वा Sy.
११. रमणीयानि धनानि Sy.
१२. रुद्रपुत्रौ स्तुत्यौ वा Sy.
१३. हिरण्यरथौ Sy. १४. प्रय० P.
यज्ञं सेवमानौ सन्तौ आगच्छतमिति Sy.
१५. ०सूः P. १६. सुस्तोतुर्मम Sy.
१७. हे वर्षधनौ ! वर्षितारौ ! वा वसूनां हे अश्विनौ ! Sy. १८. वाग्रूपा स्तुतिः Sy.
१९. ०त P., D. स्थापिता । अस्माभिः कृतेत्यर्थः Sy.
२०. पाणीवीति P., D. The passage वाणीचीति वाङ्नाम (Ngh. 1.11.) should immediately follow स्तुतिः and precede आहिता ।
२१. युवाभ्याम् Sy. २२. ककुहः महान् Sy.
२३. मृगयिता Sy.
२४. अन्नं हविः Sy.
२५. करोति । तस्मान्मम हवं श्रुतमिति Sy.
२६. ०कमहितः P. उदकहितम् seems to be the explanation of वापुषः । cf. N. 1.12 वपुरिति जलनाम ॥ वपुष्मान् यजमानः Sy.

बोधिन्मनसा रथ्येषिरा हवनश्रुता ।
विभिश्च्यवानमश्विना नि याथो अद्वयाविनं माध्वी मम श्रुतं हवम् ॥ ५ ॥

बोधिन्मनसा । बुध्यमानमनसौ[1] । रथ्यौ[2] । गन्तारौ[3] । स्तुतेः । श्रोतारौ[4] । च्यवनमृषिम् । अश्वैः । नयाथः[5] । असहायम्[6] ।

आ वां नरा मनोयुजोऽश्वासः प्रुषितप्सवः ।
वयो वहन्तु पीतये सह सुम्नेभिरश्विना माध्वी मम श्रुतं हवम् ॥ ६ ॥

आ[7] वां[8] नरा । आवहन्तु । वाम्[9] । नेतारौ[10] ! मनोवेगाः[11] । अश्वाः[12] । प्रुषितरूपा[13] बिन्दुभिर्युक्ताः[14] । गन्तारः[15] । सोमपानाय । सह । सुखैः[16] ।

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवम् ॥ ७ ॥

अश्विनौ[17] । अश्विनौ ! इह[18] । आगच्छतम् । नासत्यौ ! मा । विगतकामौ[19] भवतम् । तिरस्कृत्यान्यान्[20] यजमानान् । स्वामिनौ[21] ! मार्गम्[22] । परियातम्[23] । हे अहिंसितौ[24] [25] ।

---

१. ध्यमानसौ D. बुध्यमानमनस्कौ Sy.
२. रक्ष्यौ P. रथस्वामिनौ Sy.
३. शीघ्रगन्तारौ सर्वैर्गन्तव्यौ वा Sy.
४. ०ते स्तोतारौ P. हवनस्य स्तुतेः श्रोतारौ युवाम् Sy.
५. यथा तमृषिं प्राप्तवन्तौ तद्वत् मां प्रति पथि नियाथः नितरामागच्छतम् । 'प्र च्यवानाज्जुजुरुषो वव्रिम्' (RV. V. 74.5.) इति ह्युक्तम् Sy.
६. अद्वयाविनं मायारहितम् Sy.
७. वा D.
८. आपन्नराः P.
९. त्वां D. युवाम् Sy.
१०. हे नरा ! कर्मणां नेतारौ ! Sy.
११. मनोमात्रेण युज्यमानाः सुशिक्षिता इत्यर्थः Sy.
१२. अश्वां D.
१३. प्रुतरूपाः P. विचित्ररूपाः Sy.
१४. वि० D.
१५. शीघ्रगन्तारः Sy.
१६. ०खै D. अस्मभ्यं देयैः सुखैस्तत्साधनैर्धनादिभिर्वा सह वहन्तु Sy.
१७. Omitted by D.
१८. अस्मिन् यज्ञे Sy.
१९. वेनतिः कान्तिकर्मा N. 10.38.
२०. तिरश्चित् अन्तर्हिताद्दूरदेशादपि युवाम् Sy.
२१. ०नो P. अर्यया अर्यौ स्वामिनौ युवाम् । 'सुपां सुलुक्०' इत्यादिना सुपो याजादेशः Sy.
२२. अस्मद्यज्ञगृहम् Sy.
२३. आगच्छतम् Sy.
२४. अहिंस्यौ पूज्यौ Sy.
२५. VM. ignores चित् ।

अस्मिन्यज्ञे अदाभ्या जरितारं शुभस्पती ।
अवस्युमश्विना युवं गृणन्तमुप भूषथो माध्वी मम श्रुतं हवम् ॥ ८ ॥

अस्मिन् यज्ञे[1]। अस्मिन् । यज्ञे । अहिंसितौ[2] ! स्तोतारम् । उदकपती[3] । अवस्युम्[4] । अश्विनौ ! युवाम् । स्तुवन्तम्[5] । उपभवथः[6], मध्यमपुरुषेऽपि सन् दृश्यते ।

अभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः ।
अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवम् ॥ ९ ॥

अभूत् । अभूत् । उषाः[7] । दीप्तपशुः[8] । आहितश्च[9] । अग्निः[10] । प्राप्तकालो होमाय[11] । युक्तश्च[12] तस्मिन् । युवयोः । रथः । दर्शनीयौ[13] ! अमरणः[14] । [15]

V.76.

आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥ १ ॥

आ भाति[16] ॥ अत्रिः ॥ प्रकाशयति[17] । अग्निः[18] । उषसाम् । मुख्यम्[19] । उदस्थुः[20] । स्तोतॄणाम्[21] । देवान्

---

१. Omitted by P.
२. हे अहिंस्यौ ! Sy.
३. उदकमती P., D. हे उदकस्य स्वामिनौ ! Sy.
४. अपस्युर्मा P., D.
५. सुन्वम् P. माम् Sy.
६. उप प्राप्नुतम् Sy.　　७. व्युष्टिः Sy.
८. अग्निश्च दीप्तपशुमान् । प्रकाशितहविरित्यर्थः । अथवा पशवः किरणाः । रुशद्रश्मिः सन् Sy.
९. वेद्यामधीयत Sy.　　१०. आहवनीयः Sy.
११. ऋतौ काले भवः Sy.
१२. अश्वैर्युक्तो भवत्वित्यर्थः । 'छन्दसि लुङ्लङ्लिटः' इत्यनेकेष्वर्थेषु लुङ् भवति । इह प्रार्थनायाम् Sy.　　१३. हे दस्रौ ! Sy.
१४. अमरणधर्मा ध्रुवः Sy.　　१५. VM. ignores वृषण्वसू ॥ हे प्रदत्तधनौ ! Sy. Ms. D. puts the figure ॥७५॥ here to indicate the end of the seventy-fifth hymn. No such number is given in P.
१६. 'आ भात्यग्निः' इति पञ्चर्चं चतुर्थं सूक्तं भौमस्यात्रेरार्षं त्रैष्टुभमाश्विनम् । अत्रानुक्रमणिका —'आ भाति पञ्चात्रिः' (KSA. 28.76. p.21.) इति । प्रवर्ग्येऽभिष्टवार्थमिदं सूक्तम् । सूत्रितञ्च—'आ भात्यग्निर्ग्रावाणेव' (ĀSS. 4.6.) इति । प्रातरनुवाके आश्विने क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदमादिके द्वे सूक्ते । सूत्र्यते हि—'आ भात्यग्निरिति सूक्ते' (ĀSS. 4.15.) इति । अप्तोर्यामे होतुरतिरिक्तोक्थ्ये इदं सूक्तम् । सूत्रितं च—'आ भात्यग्निः क्षेत्रस्य पतिना वयमिति परिधानीया' (ĀSS. 9.11.) इति । प्रवर्ग्येऽस्य सूक्तस्य विनियोगः Sy.
१७. दीप्यते । यद्वा उषसां मुखमाभाति दीपयति । उषःकाले ह्यग्नयः प्रतिबोध्यन्ते Sy.
१८. अग्नि P.　१९. अनीकभूतः । अनीकं मुखम् । उषसि प्रबुद्ध्यमान इत्यर्थः । तादृशः Sy.
२०. ०सा मुखमुदस्तुः P. उत्तिष्ठन्ति यस्मादेवं तस्मात् Sy.　२१. मेधाविनां स्तोतॄणाम् Sy.

गच्छन्त्यौ[1] । वाचः[2] । अभिमुखौ[3] । इदानीम्[4] । रथ्या[5] । इह । यातम्[6] । यज्ञम्[7] । प्रति[8] ।[9]

**न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।**
**दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठा ॥ २ ॥**

**न संस्कृतम्**[10][11] । न । संस्कृतं सोमम्[12] । प्रहिंसतः[13] । गन्तारौ[14] । अन्तिके[15] । इदानीम् । अश्विनौ । मयोपस्तुतौ[16] । अत्र दिवसे[17] । पराह्णे च[18] । रक्षणेन[19] । आगन्तृतरौ[20] । यजमानस्य[21] । अवर्तिम्[22] । प्रति । सुखस्य भावयितारौ[23] ।

**उता यातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य ।**
**दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥ ३ ॥**

**उतायातम्**[24] । अपि च । आगच्छतम् । सङ्गवकाले[25] । प्रातःकाले च । अह्नः । तथा मध्यन्दिने[26] ।

---

१. ०न्तौ D. ०न्त्यः is suggested for ०न्त्यौ ॥ देवकामाः Sy.

२. स्तोत्राणि Sy.

३. अस्मदभिमुखाञ्चनौ Sy.

४. अद्यास्मिन् यागदिने Sy.

५. हे रथस्वामिनौ ! अश्विनौ ! Sy.

६. आयातम् Sy.

७. प्रदीप्तं यज्ञम् । यद्वा प्रवर्ग्यम् Sy.

८. अभिलक्ष्येह यातम् Sy.

९. VM. ignores पीपिवांसम् and अश्विना ॥ पीपिवांसं स्वाङ्गैः परिवृढम् । यद्वा पीपिवांसम् आप्यायितं वसतीवरीभिः क्षरद्रूपं सोमरसम् । अथवा घृतादिना पीपिवांसम् Sy.

१०. Omitted by P.

११. अश्विनौ Sy.

१२. संस्कृतं घर्मम् Sy.

१३. हिंस्ताम् Sy.

१४. गन्तृतमौ Sy.

१५. घर्मसमीपे Sy.

१६. उपस्तुतौ भवतः Sy.

१७. यज्ञे Sy.

१८. VM. seems to explain दिवा and अभिपित्वे together as पराह्णे च ॥ दिवसस्याभिपतने प्रातःकाले Sy.

१९. रक्षणेन सह Sy.

२०. आगन्तृतमौ Sy.

२१. आगत्य च हविर्दत्तवते यजमानाय Sy.

२२. अवर्त्ति P. द्वन्द्वभूतौ । वर्तिर्जीवनम् । तदभावोऽवर्तिः । तद्रहितमन्नं यथा भवति तथा गन्तृतमौ Sy.

२३. सुखस्य भावयितारौ भवतम् Sy.

२४. अह्नो द्वेधा त्रेधा पञ्चधा पञ्चदशधा समाना विभागाः सन्ति । इह पञ्चधा विभाग आत्तः Sy.

२५. सङ्गपका० P. सङ्गवकाले सङ्गच्छन्ते गावो दोहभूमिं यस्मिन् काले स सङ्गवः । रात्र्यपरकाले हि गावो वने हिमतृणानि भक्षयित्वा पुनर्दोहाय सङ्गवे प्रतिनिवर्तन्ते Sy.

२६. ०ध्यदि० D. मध्यकाले Sy.

सूर्यस्य[1] । उदये च । दिवा[2] । नक्तं च । रक्षणेन[3] । सुखतमेन । न । इदानीं[4] सायङ्काले । सोमपीतिः[5] । अश्विनौ[6] । आतनोति[7] ।

**इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।**
**आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्ता ॥ ४ ॥**

इदं हि । इदम् । हि । युवयोः । पुराणेन[8] । यज्ञे स्थानम्[9] । सेव्यमानम्[10] । तथेमे । गृहाः[11] । इदं च । दुरोणम्[12], इत्यल्पो भेदम्[13] । आयातम्[14] । अस्मान्[15] । द्युलोकात् । महतः[16] । पर्वतात्[17] । अन्तरिक्षाद्[18] वा । अन्नम्[19] । रसं च । वहन्तौ[20] ।

उत्तरा गता

**समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।**
**आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५ ॥**

[समश्विनोः[21] ।[22]]

१. उदितावभ्युदयेऽत्यन्तप्रवृद्धसमयेऽपराह्ण इत्यर्थः। सायाह्नस्याप्युपलक्षणम् Sy.
२. न केवलमुक्तेष्वेव कालेषु, किं तर्हि ? दिवा नक्तं सर्वदा Sy.
३. रक्षणेन हविषा वा निमित्तेन आयातम् । किमर्थमागम्यते ? पूर्वमेवान्यैर्देवैः स्वीकृतत्वात् नेत्याह Sy.
४. इदानीमपि Sy.
५. इतरदेवानां पानम् Sy.
६. अश्विनौ विहायेति शेषः Sy.
७. आतानो० P., D. (न) तनोति Sy.
८. पुराणम् Sy.
९. स्थानम् उत्तरवेद्याख्यम् Sy.
१०. ओकः निवासयोग्यम् Sy.
११. ०हम् P. अथ सौमिकवेद्यभिप्रायेणाह इमे गृहाः प्राचीनवंशादयः Sy.
१२. देवयजनगृहम् Sy.
१३. भेदः is suggested for भेदम् ।
१४. आगच्छतम् Sy.
१५. अस्मा P., D. अस्मदर्थम् Sy.
१६. बृहतः Sy.
१७. पर्ववतो मेघात् Sy.
१८. अक्षिद्वा P. अपां कारणादन्तरिक्षात् Sy.
१९. सं P. ऊर्जं बलं च । बलसाधनमन्नं सारभूतमित्यर्थः । तादृशम् Sy.
२०. VM. ignores अश्विना and आ ।
२१. The *pratīka* is supplied by the Editor. The stanza has already been explained by VM. See, RV. V. 42.18. Sy. explains again the stanza in the following manner:—वयं सं गमेम सङ्गच्छेम । अश्विनोः । नूतनेन अवसा अनन्यकृतेन रक्षणेन । मयोभुवा सुखस्य भावयित्र्या । सुप्रणीती सुप्रणीत्या सुष्ठ्वागमनेन च । अपि वैते उभे अवसो विशेषणे । उक्तलक्षणेन सं गमेम । नोऽस्मभ्यम् । रयिम् । आ वहतम् । उत वीरान् पुत्रादीन् । आ वहतम् । हे अमृता ! अमरणधर्माणौ ! विश्वानि सौभगानि सुभगत्वानि आ वहतम् ।
२२. Ms. D. puts the figure ॥७६॥ here to indicate the end of the seventy-sixth hymn. No such number is given in P.

V.77.

**प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।**
**प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥ १ ॥**

[1] प्रातर्यावाणा ।[2] प्रातर्गन्तारौ ।[3] मुख्यावश्विनौ ।[4] यजध्वम् ।[5] अप्रयच्छतोऽपि कदर्यात् ।[6] सोमपानमभिकाङ्क्षतो यजमानात् ।[7] क्षिप्रम् ।[8] अश्विनौ सोमं पिबतः ।[9] प्रातः । हि । यज्ञम् ।[10] अश्विनौ । धारयतः ।[11] कवयः[12] प्रातरश्विनौ । प्रशंसन्ति । पूर्वमेव भजमानाः ।[13]

**प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।**
**उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ॥ २ ॥**

प्रातर्यजध्वम् ।[14] प्रातः ।[15] यज्ञं कुरुत ।[16] तस्मिन् यज्ञेऽश्विनौ ।[17] प्रापयत ।[18] न ।[19] सायम् ।[20] अस्ति ।[21] देवयजनम् ।[22]

---

१. 'प्रातर्यावाणा' इति पञ्चर्चं पञ्चमं सूक्तमात्रेयं त्रैष्टुभमाश्विनम् । 'प्रातर्यावाणा' (KSA. 28.77.p.21.) इति ह्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः । अप्तोर्यामे मैत्रावरुणातिरिक्तोक्थ्ये इदमेव शस्यम् । तथा च सूत्रितम् —'प्रातर्यावाणा क्षेत्रस्य पते मधुमन्तमूर्मिम्' (ĀSS.9.11.) इति Sy.

२. हे मदीया ऋत्विजः ! Sy.

३. प्रातरेव यज्ञं गन्तारौ Sy.

४. अत एवेतरेभ्यो देवेभ्यः पूर्वभाविनौ प्रकृष्टतमौ वा Sy.

५. प्रय० D. किमर्थं प्रथमयागविनियोगः ? उच्यते अदातू रक्षःप्रभृतेः Sy.

६. ०र्याव P., D.

७. ०मानान् P.
अभिकाङ्क्षतः Sy.

८. VM. seems to explain पुरा as क्षिप्रम् ॥ पूर्वम् Sy.

९. पिबताम् ॥ अनागतौ कथं यष्टुं शक्यौ ? इत्यत आह Sy.

१०. यजम् P.

११. धारयतः सम्भजतः Sy.

१२. अनचाना ऋषयः प्रातरेवैतौ । 'ये वानूचानास्ते कवयः' (AB.2.38.) इति हि निगमः Sy.

१३. यज P. पूर्वकालीनाः Sy.

१४. हे मदीयाः पुरुषाः ! Sy. अत्रेरार्षम् ।.... हे स्तोतारो यूयमुच्यध्वे ! Dur. अत्रेः ।.... हे ऋत्विजः ! SKN.

१५. प्रातरेव Sy., SKN., Dur.

१६. पूजयध्वं स्तुध्वम् Sy.

१७. तावश्विनौ Dur.
कौ ? अश्विनौ SKN.

१८. प्रहिणुत हवींषि Sy. कथमिति ? यतो ब्रवीमि प्रहिणोत प्रकर्षेण तौ प्रति स्तुतीर्हवींषि च गमयतेति Dur. तदर्थं च हिनोत, 'हि गतौ' हिनुत गच्छत, आहवनीयं प्रति मा विलम्बध्वम् SKN.

१९. Omitted by P. किमित्येवं ब्रवीमि प्रातर्यजध्वमिति ? इतो यस्माद्, न Dur.

२०. साम् P., D.
सायङ्काले हविः Sy.

२१. विद्यते । देवा (न) स्वीकुर्वन्तीत्यर्थः Sy.

२२. देवगामि Sy. अनयोर्देवयोः Dur. किम् ? देवया, देवावश्विनौ तयोर्या यानं गतिर्देवयाः । यजेर्वा न यातेः । देवयोरश्विनोर्यागो देवयाः । यतः प्रातरश्विनोर्यज्ञं प्रति गतिरिज्या वा नास्तीत्यर्थः SKN.

तत्रत्यं हि यजमानमजुष्टं[1] देवैः। अस्मत्तः। अपि[2] च। यजते[3] तथाविधं चाह्वयति। आवः[4] यजमानस्तत्र। पूर्वःपूर्वः[5]। यजमानः[6]। अश्विनोरत्यन्तं[7] सम्भक्ता[8] भवति तस्मात् प्रातरेव[9] यजध्वमिति[10]।

**हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम्।**
**मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा॥ ३॥**

हिरण्यत्वक्[11]। हिरण्यरूपः[12]। हिरण्यच्छविः[13]। क्षरदुदकः[14]। अन्नम्[15]। वहन्[16]। आवर्तते[17]।

---

१. जुष्टं D. असेव्यं तद्भवति 'पूर्वाह्णो वै देवानाम्' ŚB. 2.4.2.8. P. 170 इति हि श्रुतिः Sy. यद्यपि कथञ्चित् स्यादजुष्टमनासेवितं च तदश्विभ्यां कर्म Dur. कुतः? यदजुष्टम्, लिङ्गव्यत्ययः। अजुष्टा अप्रियाऽऽवासाव-श्विनोः। अन्यकालत्वात्। अन्याद्यसेवितपूर्वा वा ताभ्यामित्यर्थः SKN.

२. Omitted by P., D. अपि चानादृते त्वयि Dur.

३. यजेत सोमेन Sy. एतावश्विनौ यजते Dur. यजत एवाश्विनौ SKN.

४. आपः P. वितर्पयेच्च हविषा। अतोऽस्मास्व-न्येषु च मध्ये Sy. व्यावयति च तर्पयति हविर्भिः Dur. वि चावो वि च आवः, विविधं चाधितर्पयन्ति सोमेन SKN.

५. प्रथमःप्रथमः Dur. बहूनां च यजतां मध्ये पूर्वःपूर्वः SKN.

६. यष्टा भवति सः Sy. बहूनां यजमानानां मध्ये यश्च यश्च पूर्वो यजते स चाश्विनौ यजते सादरत्वाच्च तस्यैव यज्ञमश्विनौ गच्छतो नेत-रस्येत्यर्थः SKN.

७. अश्विनो अश्विनौः P., D.

८. देवानां सम्भजनीयः सम्भाव्यो भवति Sy. सम्भक्तृतमः आदृतत्वात्तस्यैव हविरासेवेते अश्विनौ नेतरस्येति Dur. अश्विनोः सम्भ-क्तृतरः SKN.

९. एतदुभयं ज्ञात्वा प्रातरेव यजध्वम्। तयो कालः प्रागुक्तः। ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुवि-ष्टम्भमिति सम्प्रति तु परावधिप्रदर्शनाय तयोः स्तुतिकाल ऊर्ध्वमर्धरात्राद्यः सूर्योदयपर्यन्तो द्रष्ट-व्यः। उदिते यागकालः। तत्र वोषसां प्रकाश-प्रभृति यावत्सूर्योदयस्तावदन्या देवता आश्विने शस्त्रे स्तुतिं लभन्ते, ता अप्यन्ते? (ओप्यन्ते) स तासामावापकालः। काः पुनस्ताः? उषःप्रभृतयः। तत्रोषाः प्रथममुच्यते। उषः कस्मात्? वष्टेः कान्त्यर्थस्य। कान्ता ह्यसौ। उच्छतेर्वा। यथोक्तम् 'उषः कस्मात्? उच्छ-तीति सत्याः? (सतः)' (N.2.18.) इति द्युस्थानाया विकल्पः। मध्यमस्थाना उच्छते-रेव। तदाह उच्छतेरितरेति। सा ह्युदकानि विवासयति, विवास्यते वा मेघान् मध्यमेन। तस्या एषा प्रकृतत्वात्तस्या उत्तमस्या एषा SKN. प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्टमेतत्। अप्यन्यो अस्मद्यजते वि चावः। पूर्वःपूर्वो यजमानो वनीयान् वनयितृतमः N. 12. 5., SKN. IV.100.

१०. VM. ignores अन्यः। वि and च॥ अन्यः कोऽपि Sy.

११. 'हिरण्यत्वक्' इत्येषाश्विने पशौ हविषो याज्या। 'हिरण्यत्वङ्मधुवर्णो घृतस्नुरभि क्रत्वेन्द्र भूरध ज्मन् (ĀSS. 3. 8.) इति हि सूत्रितम् Sy.

१२. ०ण्यक् P. ण्यकः D.

१३. हिरण्याच्छादितरूपो हिरण्यावृतः Sy.

१४. मनोहरवर्णः Sy.

१५. उदकस्य प्रस्नवनः Sy.

१६. अन्नममृतम् Sy.

१७. P. and D. read अन्नवन् for अन्नम्। वहन्।

१८. अस्मदभिमुखमागच्छति। कीदृशो रथः? Sy.

युवयोः । रथः । मनोवेगः । हे अश्विनौ ! वातसदृशवेगः । येन[1] । अतिगच्छथः[2] । विश्वानि[3] । दुरितानि[4] ।

**यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे ।**
**स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात् ॥ ४ ॥**

**यो भूयिष्ठम्** । यः[5] । बहुतरम्[6] । अन्नम्[7] । नासत्याभ्याम्[8] । प्रापयति[9] । यो वा चनिष्ठम्[10] अन्नम् । प्रयच्छति[11] । देवेभ्योऽन्ने विभज्यमाने[12] । स यजमानः । पुत्रम् । कर्मभिः । अस्यान्नस्य[13] । पूरयति[14] पुत्रस्यान्नं कर्मभिः साधयति । तथानुच्छ्रिततेजस्कान्[15] शत्रून् । सदा । एव । तरति[16] चनिष्ठमाज्यमाहुराल्पमित्यपरमिति[17] ।[18]

**समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।**
**आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५ ॥**

[समश्विनोः][19]

---

१. रथेन Sy.
२. ०च्छतः D.
अतिक्रम्य गच्छथः Sy.
३. सर्वाणि Sy.
४. दुर्गमनान् मार्गान् Sy.
५. यजमानः Sy.
६. भूयिष्ठम् Sy.
७. पित्वः । कर्मणि षष्ठी । अन्नम् Sy.
८. अश्विभ्याम् Sy.
९. विवेष करोति Sy.
१०. चतिष्ठम् P., D. बह्वन्नं कर्म Sy. चन इत्यन्ननाम Ngh. 6.16.
११. ददाति Sy.
१२. हविर्विभागवति यागे Sy.
१३. अस्य आत्मन एव Sy.
१४. पालयेत् Sy.
१५. अनुन्नततेजस्कान् । यद्वा ऊर्ध्वभासोऽग्नयः । अग्निरहितानयष्टॄन् Sy.
१६. हिंस्यात् Sy.
१७. ०रप्पमित्य० P.
०रल्प० D.
१८. Ms. D. puts the figure ॥७७॥ here to indicate the end of the seventy-seventh hymn. No such number is given in P.
१९. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV. V. 42. 18,76.5.

V.78.

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
हंसाविव पततमा सुताँ उप ॥ १ ॥

अश्विनौ[1] ॥ सप्तवध्रिः ॥ तिस्रो[2] गतार्थाः ।

अश्विना हरिणाविव गौराविवानु यवसम् । हंसाविव पततमा सुताँ उप ॥ २ ॥

[ अश्विना[3] ]

अश्विना वाजिनीवसू जुषेथां यज्ञमिष्टये । हंसाविव पततमा सुताँ उप ॥ ३ ॥

[ अश्विना[4] ]

अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा ।
श्येनस्य चिज्जवसा नूतनेनागच्छतमश्विना शंतमेन ॥ ४ ॥

अत्रिर्यत् । अत्रिः[5] । यदा । वाम्[6] । असुरैः क्षिप्यमाण ऋबीसम्[7] । प्रत्यवरोहन्[8] । आजुहाव[9] । याचमानेव[10] ।

---

१. 'अश्विनावेह' इति नवर्चं षष्ठं सूक्तम् । अत्रानुक्रमणिका 'अश्विनौ नव सप्तवध्रिस्त्र्युष्णिगादि चतुर्थी त्रिष्टुप्पञ्चानुष्टुभः' (KSA. 28.78.p.21.) इति । सप्तवध्रिर्नामात्रेय ऋषिः । आदितस्तिस्र उष्णिहश्चतुर्थी त्रिष्टुप् शिष्टाः पञ्चानुष्टुभः । प्रातरनुवाक आश्विने क्रतौ औष्णिहे छन्दसि आश्विने शस्त्रे चाद्यस्तृचो विनियुक्तः । सूत्रितञ्च—'अश्विना वर्तिरस्मदाश्विनावेह गच्छतमिति तृचौ' (ĀSS. 4.15.) इति । दशरात्रे तृतीयेऽहनि प्रउगशस्त्रेऽयमाश्विनस्तृचः । सूत्रितञ्च—'अश्विनावेह गच्छतमा याह्यद्रिभिः सुतम्' (ĀSS. 7.10.) इति Sy.

२. VM. does not explain the three stanzas. Sy. explains this stanza in the following manner:—
हे अश्विनौ ! इह अस्मिन् यागे । आगच्छतम् । हे नासत्या ! मा वि वेनतम् । वेनतिः कान्तिकर्मा । मा विकामौ भवतम् । निःस्पृहावकामौ वा न भवतमित्यर्थः । हंसाविव तौ यथा निर्मलोदकमागच्छतस्तद्वत् । सुतान् अभिषुतान् सोमान् । उप आ पततम् उपागच्छतम् ।

३. The *pratīka* is supplied by the Editor. Sy. explains the stanza in the following manner:—
हे अश्विनौ ! हरिणाविव गौराविव गौरमृगाविव च । तौ यथा यवसं घासम् । अनुधावतस्ताविव हंसाविव च सोममागच्छतम् ।

४. The *pratīka* is supplied by the Editor. Sy. explains the stanza in the following manner:—
हे वाजिनीवसू ! अन्नार्थं वासयितारौ ! अश्विना ! यज्ञमस्मदीयम् । इष्टयेऽभीष्टायैषणाय वा जुषेथां सेवेथाम् ।

५. अस्मत्पिता Sy.

६. युवाम् Sy.

७. ०बीषं D. तुषाग्निमग्निकुण्डे क्षिप्तः सन् Sy.

८. विमुञ्चन् अजोहवीत् Sy.

९. अस्तौषीत् Sy.

१०. यजमानेव P. यजचमानेव D.

स्त्री[1] परित्राणम् । तदा श्येनस्य[2] । इव[3] । जवसा[4] । नवतरेण[5] । आगच्छतम् । अश्विनौ ! सुखतमेन[6] ।

**वि जिहीष्व वनस्पते योनिः सूष्यन्त्याइव ।**
**श्रुतं मे अश्विना हवं सप्तवध्रिं च मुञ्चतम् ॥ ५ ॥**

**वि[7] जिहीष्व[8]** । शौनकः—

सप्तकृत्वोऽपराद्धे[9] तु विफलो दारसङ्ग्रहे ।
ऋषिः कृतोऽश्वमेधेन[10] भारतेनेति[11] वै श्रुतिः ॥
तमष्टमेऽपराद्धे[12] तु वृक्षद्रोण्यां स पार्थिवः ।
ऋबीषे[13] ह विनिक्षिप्य स्विन्नं[14] रात्रौ न्यधापयत्[15] ॥
सो "ऽश्विनावि"ति[16] सूक्तेन तुष्टावर्षिः शुभस्पती ।
तौ तं तस्मात्समुत्सृज्य[17] चक्रतुः सफलं पुनः ॥
तृचस्तस्यैष[18] गर्भार्थी[19] स्वपतस्तस्य गर्भवत् ।
यथा वात इति ज्ञेये अश्विभ्यामितरे[20] ऋचौ[21] ॥ इति ॥

---

१. स्त्रि P. योषिदिव । सा यथा पतिं प्रीणयति तद्वत् कुर्वन् Sy.
२. गरुत्मतः Sy.
३. चिदित्युपमार्थे Sy.
४. वेगेन Sy.
५. प्रथमोत्पन्नेन सततं गच्छतः श्येनस्य प्रथमजवेन Sy.
६. अस्माकं सुखतमेन च रथेन तं रक्षितुम् Sy.
७. अत्र ब्रुवन्तीतिहासं सप्तवध्रेः पुराविदः । भ्रातृव्याः पेटिकायां तमृषिं प्रक्षिप्य यत्नतः ॥ मुद्रां कृत्वा गृहे स्वीये रक्षयित्वा न्यवेशयन् । न सङ्गच्छेत भार्यां स्वां यथा रात्रौ तथा कृतम् ॥ प्रातःप्रातः समुद्घाटय निर्मथिष्यन्ति तं मुनिम् । एवं स्थित्वा चिरं कालं पेटायां दुःखितः कृशः ॥ उपायं चिन्तयामास निर्गमस्य चिरं मुनिः । हृदि निश्चित्य नासत्यावस्तौषीद् धृष्टमानसः ॥ तमश्विनौ समागत्य समुद्घाटय च पेटिकाम् । उद्धृत्य तमृषिं शीघ्रं तावदृष्टौ बभूवतुः ॥ स ऋषिर्भार्यया सार्धं रमित्वाथ पुनर्भयात् । प्रातरेत्य पुनः पेटां प्रविश्य प्रागिव स्थितः ॥ पेटानिवाससमये दृष्टवानृग्द्वयं तदा Sy., DDN.
८. विजीगीष्व D.
९. ०राधे P. ०राद्धे D. BD. reads सप्तकृत्वापराधान् वै विफले ।
१०. कृणोऽश्व० P.
११. भर० P.
१२. ०राधे P. BD. reads ०ऽपराधे०
१३. BD. reads ऋबीसे ।
१४. ०सेनातिसंस्विन्नं रात्रौ रात्रौ P. ऋबि सनादि संस्थिस्थिन्न रात्रौ रात्रौ D.
१५. ०धावयत् P. BD. reads स्कन्नं रात्रौ न्यधारयत् ।
१६. RV.V.78.
१७. ०त्समुद्धृत्य BD.
१८. त्रच० P. तृचः स्वस्यैव BD.
१९. ०भार्त्थिः P. गर्भर्त्थं D.
२०. ०योश्वि P., D. ०ये त्वश्वि० BD.
२१. BD. V.82cd.—86ab.

विवृतद्वारो[१] भव[२] । वनस्पते[३] ! योनिरिव[४] । सूष्यन्त्याः[५] । श्रुतमिति स्पष्टम्[६] ।

**भीताय नाधमानाय ऋषये सप्तवध्रये ।**
**मायाभिरश्विना युवं वृक्षं सं च वि चाचथः ॥ ६ ॥**

**भीताय** । भीताय[७] । याचमानाय[८] । मह्यम् । ऋषये । कर्मभिः[९] । अश्विना[१०] ! युवम्[११] । मञ्जूषां[१२] वृक्षकृताम् । निर्गमनार्थं पुनः प्रवेशार्थं च । विघटयतम्[१३] । सङ्गमयतम्[१४] । च । अग्नौ मञ्जूषां निधाय सायं निर्गच्छन्त्यक्षा निर्गतेषु तेषु मञ्जूषा विघटिता भवति तत ऋषिश्च निर्गत्य भार्यया सह रमते प्रातश्च विशति[१५] रक्षिणां प्रवेशात् पूर्वमेव[१६] ततः सङ्घटिता मञ्जूषा भवतीति ।

**यथा वातः पुष्करिणीं समिङ्गयति सर्वतः ।**
**एवा ते गर्भ एजतु निरैतु दशमास्यः ॥ ७ ॥**

**यथा**[१७] । यथा । वातः । पुष्करिणीम्[१८] । सञ्चालयति[१९] । सर्वतः । एवम् । तव । गर्भः । चालयतु[२०] । निर्गच्छतु[२१] च सम्भृतः । दशमास्य[२२] इति भार्यामिहाधृतगर्भामश्विभ्यां[२३] सफलः कृतः ।

---

१. सप्तवध्रिरश्विनावनुष्टुभा तुष्टाव । तथा ऋग्विधाने-विजिहीष्व वनस्पते तदिदं च्यावनं स्मृतम् । यं च्यावयितुकामः स्याच्च्यावयेत्तदिदं जपन् ॥ RVidh. 2.87[cd].88[ab] • DDN.

२. विगच्छ । विवृता भव Sy., DDN.

३. हे वनस्पतिविकाररूपे ! पेटिके ! Sy., DDN.

४. भगो यथा विव्रियते तथा त्वमपि विवृता भवSy. प्रसवकाले यथा स्त्रिया योनिर्विवृता भवति तथा भवेति । 'षूङ् प्राणिप्रसवे' लृटि शतरि रूपम्' प्रसोष्यन्त्या इति DDN.

५. ०न्त्या P., D. प्रसवोन्मुख्याः स्त्रियाः Sy. प्रसोष्यमाणायाः स्त्रियाः DDN.

६. VM. ignores श्रुतम् । मे । अश्विना । हवम् । सप्तवध्रिम् । च and मुञ्चतम् ॥ तदर्थं हे अश्विना ! अश्विनौ ! मे हवम् । शृणुतम् । श्रुत्वा च सप्तवध्रिं च मामृषि मुञ्चतं मोचयतम् Sy. तदर्थं हे अश्विनौ ! मम आह्वानं शृणुतम् । श्रुत्वा आगत्य च सप्तवध्रिं मामृषिं मोचयतमिति DDN.

७. निर्गमात् बिभ्युषे Sy.

८. विमोक्षं याचमानाय Sy.

९. मायाभिः Sy.

१०. हे अश्विनौ ! Sy.

११. युवाम् Sy.

१२. वृक्षविकारां पेटिकाम् Sy.

१३. ०यत D. च विभक्तं कुरुथः Sy.

१४. ०तां D. मम निर्गमार्थं सङ्गच्छथः Sy.

१५. विशरति P., D.

१६. पूर्वमेव पूर्वमेव P.

१७. एतदादि ऋक्त्रयं गर्भस्राविण्युपनिषत् । एतदाद्यृक्त्रयेणासौ सप्तवध्रिः स्वयोषितः । गर्भिण्या प्रसवायाशु स्तुतवानश्विनावृषिः ॥ Sy.

१८. सरआदिकम् Sy.

१९. सम्यक् चालयति Sy.

२०. कम्पताम् । इतस्ततः सञ्चरतु Sy.

२१. Omitted by P.

२२. दश मासान् गर्भे स्थितः Sy.

२३. ०धृतगामश्वि० P.

यथा वातो यथा वनं यथा समुद्र एजति ।
एवा त्वं दशमास्य सहावेहि जरायुणा ॥ ८ ॥

[यथा][1] यथा[2] । वातः[3] । यथा । वृक्षः[4] । यथा । सिन्धुः[5] । चलति[6] । एवम्[7] । त्वम् । दशमास्यो[8] भूत्वा । जरायुणा[9] । सह[10] । सम्पूर्णो[11] भव । गच्छति[12] निषिक्तं रेतो वदति[13] ।

उत्तरा[14] निगदसिद्धेति[15]

दश मासाञ्छशयानः कुमारो अधि मातरि ।
निरैतु जीवो अक्षतो जीवो जीवन्त्या अधि ॥ ९ ॥

[दश मासान्][16]

V.79.

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १ ॥

[17]महे नः ॥ सत्यश्रवाः ॥ महतः[18] । अस्मान् । अद्य[19] । बोधय[20] । धनाय[21] । उषः[22] ! दीप्ता[23] त्वम्[24] । यथा ।

---

१. The *pratīka* is supplied by the Editor. सप्तवध्रिरात्रेयोऽपश्यद्देतामनुष्टुभम् Dur. सप्तवध्रेरार्षम् । प्रमूढगर्भाया गर्भच्यावनेऽस्या विनियोगः SKN.

२. वातो यथा कम्पमानो वनं कम्पयति स्वयम् । यथा समुद्रश्चलति चाल्यते वाथ वायुना ॥ स्थित्वा दशैव मासांस्त्वं गर्भोल्बेन सुवेष्टितः । निर्गच्छ जठरान्मातुर्जरया सहितः पतेत् ॥ Sy.

३. वातवनसमुद्राः Dur. वायुः SKN.

४. वनमुदकं निम्नप्रदेशं प्रति SKN.

५. यथा च समुद्रो नदीमुखानि प्रति SKN.

६. कम्पते Dur. गच्छति SKN.

७. चलनदेवं P.

८. ०मस्यः D. दशमाससम्भूत ! गर्भ ! Dur. दशभिर्मासैर्निष्पन्न ! गर्भ ! SKN.

९. उल्बेन प्रजायस्व । मा स्थास्त्वमेतस्मिन्नुदर इत्यभिप्रायः Dur. १०. समम् SKN.

११. एतस्माद् मातुरुदराददुःखयन्नेतामेजञ्चलन्नवेहि, अर्वाङ् एहि Dur. १२. ०न्ति D.

१३. वदाति P. यथेति कर्मोपमा N.3.15., SKN. II.167. १४. अक्ता P. उक्ता D.

१५. Ms. D. puts the figure ॥७८॥ here to indicate the end of the seventy-eighth hymn. No such number is given in P.

१६. The *pratīka* is supplied by the Editor. Sy. puts a śloka for the explanation of the stanza. दश मासानुषित्वासौ जननीजठरे सुखम् । निर्गच्छतु सुखं जीवो जननी चापि जीवतु ॥

१७. 'महे नो अद्य' इति दशर्चं सप्तमं सूक्तमात्रेयस्य सत्यश्रवस आर्षं पाङ्क्तमुषस्यम् । अनुक्रम्यते च 'महे दश सत्यश्रवा उषस्यं तु पाङ्क्तम्' (KSA.28.79.p.21.) इति। प्रातरनुवाके उषस्ये क्रतौ पाङ्क्ते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्र्यते हि—'महे नो अद्येति पाङ्क्तम्' (ĀŚS.4.14.) इति Sy. १८. महते Sy.

१९. अस्मिन् यागदिने Sy. २०. प्रज्ञापय । प्रकाशयेत्यर्थः । सति प्रकाशे क्रतुद्वारा द्रव्यस्योपार्जयितुं शक्यत्वात् Sy. २१. धनप्राप्तये Sy.

२२. ०षा D. हे उषोदेवि ! Sy.

२३. दीप्तिमती Sy. २४. दीप्तित्वं P., D.

वा[1]। अस्मानेव। पुरा बोधयसि[2]। सत्यश्रवसि मयि[3]। वय्यकुलजे[4]। शोभनजनने[5]। मदर्थं कल्याणनिर्गच्छ[6]च्छब्दे कल्याणा[7] अश्वे वा[8]।

**या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः।**
**सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ २ ॥**

**या सुनीथे।** या त्वम्। सुनीथे[9] राजनि। शुचद्रथपुत्रे[10]। व्युष्टासि[11]। दिवः[12]। दुहितः[13]! कल्याणम्। सा तथाद्य[14]। व्युच्छ[15]। अत्यन्तं[16] बलवति। मयि[17]।

**सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः।**
**यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥**

**सा नः।** अस्माकम्। अद्य[18]। आह्रियमाणधना[19]। व्युच्छ[20]। दिवः। दुहितः[21]! यैव[22]। पुरा। व्यौच्छः[23]! मयि[24]।

**अभि ये त्वा विभावरि स्तोमैर्गृणन्ति वह्नयः।**
**मघैर्मघोनि सुश्रियो दामन्वन्तः सुरातयः सुजाते अश्वसूनृते ॥ ४ ॥**

**अभि ये त्वा।** अभिगृणन्ति[25]। ये। त्वा[26]। उषः[27]! स्तोमैः[28]। वोढारः[29]। हे धनैः, धनवति[30][31]!

---

१. यथैव पूर्वम् Sy. २. ०यति D. अतीतेषु दिवसेषु यथा बोधितवती तद्वदद्यापीत्यर्थः Sy.
३. सत्यषति P. सत्यवति D. सत्यश्रवसि मय्यनुगृहाणेत्यर्थः Sy. ४. वर्यकु० P. वय्यपुत्रे Sy. ५. हे शोभनप्रादुर्भूते ! Sy.
६. कल्याणं जते निर्ग० P. ७. कल्याणाश्वे is suggested for कल्याणा अश्वे।
८. ०व P. अश्वार्था प्रियसत्यात्मिका स्तुतिवाक् यस्याः सा। हे तादृशि ! देवि ! Sy.
९. एतन्नामके Sy.
१०. ०चन्द्रथ० P. शुचद्रथस्यापत्ये Sy.
११. पूर्वं व्यवासयस्तमांसि Sy. १२. सूर्यस्य Sy.
१३. हे पुत्रि ! उषः ! Sy. १४. सा त्वम् Sy.
१५. पूर्वं तमो विवासय। 'उच्छी विवासे'। विवासो वर्जनम् Sy. १६. अतिशयेन बलवति Sy.
१७. VM. ignores वाय्ये। सुजाते and अश्वसूनृते ॥ वय्यपुत्रे, शिष्टमुक्तम् Sy.
१८. अस्मिन् दिने Sy.
१९. ह्रिय० P. आहृतधना Sy.
२०. तमो विवासय Sy.
२१. हे दुहितः ! उषः ! Sy.
२२. उकारोऽनर्थकः। या त्वम् Sy.
२३. या त्वं पूर्वं व्यौच्छः साद्यापीति Sy.
२४. ०च्छे P.D.
२५. ०गृह्णन्ति D. प्रतिस्तुवन्ति ते स्तोतारः Sy.
२६. त्वाम् Sy.
२७. हे विभावरि ! प्रकाशोपेते ! विभाशब्दात् 'छन्दसीवनिपौ' इति वनिप्। भातेर्वा कर्तरि वनिप् Sy.
२८. त्वे स्तोमेः P. त्वेष स्तोमेः D. स्तोत्रैः Sy.
२९. वोढार ऋत्विजः स्तोतारः Sy.
३०. भवति P., D.
३१. ते स्तोतारः त्वदनुग्रहात् सुष्ठ्वर्थिभिराश्रयणीया भवन्ति Sy.

शोभनश्रीकाः । दानवन्तः[1] । शोभनज्ञातिकाः शोभनदाना[2] वा ।

**यच्चिद्धि ते गणा इमे छदयन्ति मघत्तये ।**
**परि चिद्वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अश्वसूनृते ॥ ५ ॥**

**यच्चिद्धि**[3] । यत्[4] । चित् । हि[5] । ते[6] । गणाः[7] । इमे[8] । छन्नं[9] कुर्वन्ति । धनदानाय[10] । तदानीं परितो धारयन्ति । कामिनः[11] । प्रयच्छन्तः[12] । धनं याचमानेभ्यः[13] । अलज्ज[14] प्रभूतम् ।

**ऐषु धा वीरवद्यश उषो मघोनि सूरिषु ।**
**ये नो राधांस्यह्वया मघवानो अरासत सुजाते अश्वसूनृते ॥ ६ ॥**

**ऐषु धाः**[15] । आधेहि[16] । एषु[17] । वीरवत्[18] । अन्नम् । उषः[19] ! धनवति[20] ! प्राज्ञेषु[21] । ये । अस्मभ्यम्[22] । धनानि । बहूनि[23] । अथाऽऽढ्याः[24] । प्रयच्छन्ति[25] ।

**तेभ्यो द्युम्नं बृहद्यश उषो मघोन्या वह ।**
**ये नो राधांस्यश्व्या गव्या भजन्त सूरयः सुजाते अश्वसूनृते ॥ ७ ॥**

**तेभ्यो द्युम्नम्** । तेभ्यः[26] । द्योतमानम्[27] । महत्[28] । अन्नम्[28] । उषः ! मघोनि[29] ! आवह[30] । ये[31] । अस्मभ्यम् ।

---

१. दानवन्तो भवन्ति Sy.
२. ०दानो P. रातिर्दानम् । सुदानाश्च भवन्ति Sy.
३. हे उषः ! Sy.
४. ये केचन Sy.
५. हीति पूरणः Sy.
६. तव स्वभूताः Sy.
७. सङ्घभूताः Sy.
८. पुरतो वर्तमानाः Sy.
९. चन P. च्चन D. उपच्छन्दयन्ति ते सर्वेऽप्यस्मान् Sy.
१०. धनदाधानाय P. धनदातये धनदानाय धनवत्त्वाय वा Sy.
११. अस्मानेव कामयमानाः Sy.
१२. यजन्त इत्यर्थः । अर्थिभ्योऽक्षीणं ददतो वा । ये त्वां हविर्ददतः स्तुवन्ति ते सर्वेऽप्यस्मदर्थमेव फलं धारयन्ति । स्तुवन्तीत्यर्थः । अथवा यच्चिद्धीत्यत्र यद्यपीति व्याख्येयम् । तस्मिन् पक्षे उत्तरवाक्ये तथापीत्यध्याहार्यम् Sy.
१३. धनं हविर्लक्षणम् Sy.
१४. अलज्ञं P. अह्रियमाणमक्षीणमलज्जावहं वा Sy.
१५. ऐष P., D.
१६. अधे० P. आदेहि । आनय Sy.
१७. ०ष P.
१८. वीरैः पुत्रादिभिरुपेतमन्नं यशो वा Sy.
१९. हे उषः ! देवि ! Sy.
२०. धवति P., D. हे मघवति ! त्वम् Sy.
२१. स्तोतृषु वा Sy.
२२. ०न्न येषुषेस्म० P. तव स्तोतृभ्यः Sy.
२३. अक्षीणानि Sy.
२४. धनवन्तः सूरयः Sy.
२५. ददुस्तेष्वित्यर्थः Sy.
२६. यजमानेभ्यः Sy.
२७. द्योतमानं हिरण्यादिरूपं धनम् Sy.
२८. महतीं कीर्तिं वा Sy.
२९. मनि P. Sy. adds त्वम् ।
३०. तेभ्यो यजमानेभ्यः आवह Sy.
३१. आढ्याः Sy.

धनानि । अश्वसमूहान्[1] । गोसमूहांश्च[2] । प्रापयन्ति[3] ।[4]

उत्तरा निगदसिद्धा

**उत नो गोमतीरिष आ वहा दुहितर्दिवः ।**
**साकं सूर्यस्य रश्मिभिः शुक्रैः शोचद्भिरर्चिभिः सुजाते अश्वसूनृते ॥ ८ ॥**

[उत नः][5]

**व्युच्छा दुहितर्दिवो मा चिरं तनुथा अपः ।**
**नेत्त्वा स्तेनं यथा रिपुं तपाति सूरो अर्चिषा सुजाते अश्वसूनृते ॥ ९ ॥**

व्युच्छा दुहितः । व्युच्छ[6] । दिवः । दुहितः[7] ! मा । चिरम्[8] । कुरु[9] । उदयलक्षणं कर्म[10] शीघ्रं व्युच्छेत्यर्थः । न । एव । त्वाम् । यथा[11] । स्तेनम्[12] । रिपुं च पुरुषो[13] बाधते एवम्[14] । सूर्यः । अर्चिषा[15] । तपतु[16] व्युष्टायां[17] तापोऽत्यन्तं न भवत्विति ।

**एतावद्वेदुषस्त्वं भूयो वा दातुमर्हसि ।**
**या स्तोतृभ्यो विभावर्युच्छन्ती न प्रमीयसे सुजाते अश्वसूनृते ॥ १० ॥**

एतावत् । यावदस्मिन् सूक्त उक्तमेतावत् । वा[18] । भूयः[19] । वा । त्वम्[20] । उषः[21] ! दातुम् । अर्हसि[22] ।

---

१. अश्वैर्युक्तानि Sy.
२. गोभिर्युक्तानि Sy.
३. यति P. भजेरन्, ददुः Sy.
४. VM. ignores सूरयः ॥ सूरयः दातारः Sy.
५. The *pratīka* is supplied by the Editor. Sy. explains this stanza in the following manner :— उत अपि च । नोऽस्मभ्यम् । गोमतीः गोभिरुपेतानि । इषः अन्नानि । आवह आनय । हे दिवः, दुहितः ! उषः ! कदा । सूर्यस्य रश्मिभिः साकं शोचद्भिः दीपयद्भिः । शुक्रैर्निर्मलैः । अर्चिभिः अग्नेस्तेजोभिश्च साकम् । सूर्योदयकालेऽग्नीन्धनकाले चेत्यर्थः ।
६. विभातं कुरु Sy.
७. हे उषः ! त्वम् Sy.
८. विलम्बम् Sy.
९. कृथाः Sy.
१०. अस्मदीयं कर्म प्रति Sy.
११. सन्तापयन्ति राजादिस्तद्वत् Sy.
१२. स्तेनम् is suggested for स्त्नेनम् ।
१३. पुर्षो P.
१४. एव P.
१५. तेजसा Sy.
१६. तवत P. तप्यात् शीघ्रं नोदेत्वित्यर्थः Sy.
१७. व्युष्टां P.
१८. वो P. अथवा दित्सितं किम् Sy.
१९. दातुमर्हसि ! अप्रार्थितमपि यद्दातव्यमस्ति तत्सर्वं देहीत्यर्थः Sy.
२०. त्वाम P.
२१. हे उषः ! त्वमस्मभ्यम् Sy.
२२. अर्हसि P.

या त्वम्। स्तोतृभ्यः[१]। उषः! व्युच्छन्ती[२]। न। शत्रुभिर्हिंस्यने[३] सा[४]।[५]

V.80.

द्युतद्यामानं बृहतीमृतेन ऋतावरीमरुणप्सुं विभातीम्।
देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥ १ ॥

[६]द्युतद्यामानम्। दीप्तगमनाम्[७]। महतीम्[८]। उदकेन[९]। उदकवती[१०] सत्यमृतम्। अरुणरूपाम्। व्युच्छन्तीम्। देवीम्[११]। उषसम्। कल्याणम्[१२]। आवहन्तीम्[१३]। प्रति। स्तुवन्ति। मेधाविनः[१४]। स्तुतिभिः।

एषा जनं दर्शता बोधयन्ती सुगान्पथः कृण्वती यात्यग्रे।
बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अह्नाम् ॥ २ ॥

एषा जनम्। एषा[१५]। सुप्तं जनम्[१६]। दर्शनीया। बोधयन्ती। सुगमान्[१७]। मार्गान्[१८]। कृण्वती। गच्छति। अग्रे[१९]। महारथा[२०]। महती। सर्वव्यापिनी[२१]। उषाः[२२]। ज्योतिः[२३]। नियच्छति। अह्नाम्। अग्रे[२४]।

---

१. तेषां लौकिकवैदिकव्यवहारार्थम् Sy.

२. ०न्ति P., D. तमो विवासयन्ती Sy.

३. हिंस्यसे is suggested for हिंस्यते ॥ न हंसि। न क्रुध्यसीत्यर्थः। स त्वं दातुमर्हसीति। 'मीञ् हिंसायाम्' इत्यस्मात् श्नास्थाने व्यत्ययेन श्यन् Sy.

४. सः P., D.

५. VM. ignores इत् ॥ इच्छब्द एवकारार्थः। अस्मिन् सूक्ते प्रार्थितमेवेत्यर्थः Sy.
Ms. D. puts the figure ॥७९॥ here to indicate the end of the seventy-ninth hymn. No such number is given in P.

६. 'द्युतद्यामानम्' इति षड्डचमष्टमं सूक्तम्। अत्रानुक्रमणिका 'द्युतद्यामानं षट्' (KSA. 28.80.p.21.) इति। सत्यश्रवा ऋषिः। अनुक्तत्वात् त्रिष्टुप्। 'उषस्यं तु' (KSA. 28.79.p.21.) इत्युक्तत्वात् उषा देवता। प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तम्। सूत्रितञ्च—'द्युतद्यामानमुषो वाजेन' (ĀŚS.4.14.) इति Sy.

७. दीप्तरथाम् Sy.

८. ०नामही P. महीं D.

९. सत्येन यज्ञेन वा Sy.

१०. ऋतवतीम् Sy.

११. द्योतमानाम् Sy.

१२. सूर्यम् Sy.

१३. गच्छन्तीम्। एवंमहानुभावामुषसम् Sy.

१४. मेधाविन ऋत्विजः Sy.

१५. उषाः Sy.

१६. कम्? प्रसुप्तमित्यर्थः Sy.

१७. सुगमनान् Sy.

१८. पथः Sy.

१९. सूर्यस्य पुरस्तात् Sy.

२०. प्रभूतरथा Sy.

२१. विश्वं व्याप्नुवाना विश्वतर्पणा वा Sy.

२२. Omitted by P. & D.

२३. तेजः Sy.

२४. नयच्छन्नामग्रे P. ०च्छह्नामग्रं D.

एषा गोभिररुणेभिर्युजानास्रेधन्ती रयिमप्रायु चक्रे ।
पथो रदन्ती सुविताय देवी पुरुष्टुता विश्ववारा वि भाति ॥ ३ ॥

एषा गोभिः । एषा[1] । गोभिः[2] । अरुणवर्णैः[3] । युज्यमाना[4] । अक्षीयमाणा[5] । रयिम्[6] । अप्रगमनस्वभावम्[7] । स्तोतृभ्यः करोति । मार्गान् । तेजसा विलिखन्ती[8] । धनाय[9] । देवी[10] । बहुभिः स्तुता । विश्वैर्वरणीया[11] । व्युच्छति[12] ।

एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात् ।
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ ४ ॥

एषा व्येनी[13] । एषा[14] । अत्यन्तं श्वेतवर्णा[15] । प्रादुर्भवति[16] । द्वयोः स्थानयोः परिवृढा[17] । आविष्कृण्वाना[18] । शरीरम्[19] । प्राच्याम्[20] । आदित्यस्य । पन्थानम् । अनुगच्छति । साधु[21] । प्रागेवावगच्छन्ती[22] । दिशः । न । हिनस्ति[23] यथा रात्रिरन्धकारेण[24] दिशो हिनस्ति नैवं हिनस्ति ।

एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् ।
अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥ ५ ॥

एषा शुभ्रा । एषा[25] । शोभमानालङ्कृता[26] । इव स्त्री । शरीराणि[27] । ज्ञापयन्ती[28] । उदस्थात्[29] । यथा

---

१. उषाः Sy.
२. बलीवर्दैः Sy.
३. ०र्णैं D.
४. रथं योजयन्ती Sy.
५. अशुष्यन्ती अक्षीणा वा Sy.
६. धनम् Sy.
७. ०भावा P. प्रगमनस्वभाव D. अप्रगन्तृ अविचलितम् Sy.
८. प्रकाशयन्ती Sy.
९. सुष्ठु गमनाय Sy.
१०. दवी P., D. द्योतमाना Sy.
११. सर्वैर्वरणीया Sy.
१२. प्रकाशं करोति Sy.
१३. व्येति P.
१४. उषाः Sy.
१५. विशेषेण श्वेता Sy.
१६. भवति Sy.
१७. प्रथममध्यमयोः स्थानयोः परिवृढोषाः Sy.
१८. पश्चात् प्रकटीकुर्वती Sy.
१९. स्वीयां तनूम् Sy.
२०. प्राप्याम् D.
पूर्वस्यां दिशि Sy.
२१. सम्यक् Sy.
२२. अपगच्छन्ति P. विश्वं प्रज्ञापयन्ती । इवेति सम्प्रत्यर्थे Sy.
२३. प्रत्युत दिशः प्रकाशयति । अथवा प्रजानतीव अनुगन्तव्यमिति प्रकर्षेणावगच्छन्ती च ऋतस्य पन्थामन्वेति Sy.
२४. रात्रीर० P.
२५. उषाः Sy.
२६. शुभ्रवर्णा निर्मला स्वलङ्कृता योषिदिव Sy.
२७. अङ्गानि Sy.
२८. प्रज्ञापयन्ती Sy.
२९. उन्नतेव स्नानादुत्तिष्ठन्तीव Sy.

वा ज्ञानं[1] कुर्वाणा[2] जलात्। दर्शनाय[3]। ऊर्ध्वमुत्तिष्ठति[4]। शत्रून्[5]। बाधमाना। तमांसि। ज्योतिषा[6]। अपगमयति[7]। उषाः। दिवः। दुहितेति[8]।

**एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते अप्सः।**
**व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः॥ ६॥**

**एषा प्रतीची**। एषा[9]। अभिमुखा[10]। दिवः। दुहिता। मनुष्यानभ्येति[11]। योषेव[12]। भजनीया[13]। निर्गमयति[14]। रूपम्। प्रकाशयन्ती[15]। यजमानाय[16]। धनानि[17]। पुनश्च[18]। ज्योतिः[19]। युवतिः[20]। गतेवोषाः[21]। करोति[22]।

## V.81.

**युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।**
**वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः॥ १॥**

**युञ्जते**[23]॥ श्यावाश्वः॥ युञ्जते[24]। मनः[25] सवितुः। अपि च। युञ्जते[26]। कर्माणि[27]।

---

१. स्नानं is suggested for ज्ञान॥
२. ०णां P.
३. सर्वेषां दर्शनाय Sy.
४. पूर्वस्यां दिशि उत्तिष्ठति Sy.
५. द्वेष्याणि Sy.
६. तेजसा सह Sy.
७. अवग० P. आगच्छति Sy.
८. VM. ignores नः and आ॥ अस्मदर्थमस्माकं पुरतो वा Sy.
९. उषाः Sy.
१०. एषामुखा P., D. अभिमुखा सती Sy.
११. सर्वान् प्राणिनः प्रति Sy.
१२. योषिदिव Sy.
१३. कल्याणवेषा Sy.
१४. प्रेरयति Sy.
१५. प्रयच्छन्ती Sy.
१६. किञ्च हविर्दात्रे यजमानाय Sy.
१७. वरणीयानि धनानि Sy.
१८. अद्यापि Sy.
१९. तेजः Sy.
२०. नित्ययौवना सर्वत्र मिश्रयन्ती वा Sy.
२१. पूर्वमिव Sy.
२२. Ms. D. puts the figure ॥८०॥ here to indicate the end of the eightieth hymn. No such number is given in P.

२३. 'युञ्जते मनः' इति पञ्चर्चं नवमं सूक्तम्। अत्रेयमनुक्रमणिका—'युञ्जते पञ्च श्यावाश्वः सावित्रं तु जागतम्' (KSA.28.81.p.21.) इति। श्यावाश्वो नामात्रेय ऋषिः। जगती छन्दः। सविता देवता। पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम्। सूत्रितञ्च 'युञ्जते मन इहेह व इति तृचः' (ASS. 7.5.) इति। अच्छा ग्रावस्तोत्रेऽपि। सूत्रितञ्च—'युञ्जते मन उत युञ्जते धिय आ तू न इन्द्र क्षुमन्तम्' (ASS. 5.12.) इति Sy.
२४. सर्वेषु कर्मसु योजयन्ति। सवितुरनुग्रहाय सङ्कल्पं कुर्वन्तीत्यर्थः Sy. लौकिकचिन्ताभ्यो मनो निवार्य यज्ञचिन्तायां नियमयन्ति Mah. विषयेभ्यः प्रत्याहृत्येष्टे विषये स्थापयन्ति BB.
२५. मनः स्वीयम् Sy. मनांसि U.
२६. प्राप्नुवन्ति Sy. यज्ञार्थेषु नियमयन्ति Mah. प्रेरयन्ति U.
२७. कर्माण्यपि Sy. इन्द्रियाण्यपि Mah. धियो वाचः U. वागादिलक्षणानि कर्माणि कुर्वते। यद्वा धियः प्रज्ञा धर्मार्थकाममोक्षविषया युञ्जते भावयन्ति। यद्वा धिय इतीन्द्रियाण्युच्यन्ते तानि युञ्जत इष्टे विषये प्रवर्तयन्ति, अनिष्टेभ्यश्च निवर्तयन्ति BB.

मेधाविनः[१] । विप्रस्य[२] । महतः[३] । स्तोत्रविदः[४] । विदधे[५] । सप्त होत्राः[६] । मार्गवित्[७] । एकः । एव[८] सवितेत्थम्[९] । महती[१०] । देवस्य[११] । सवितुः[१२] । परितः[१३] क्रियमाणा[१४]

१. मेधा P. ऋत्विग्यजमानाः Sy. ब्राह्मणा ऋत्विजः Mah. कथम्भूता ऋत्विजः प्रेरयन्ति ? विप्रा ब्राह्मणाः शुश्रुवांसोऽनूचानाः U.

२. कस्यानुज्ञया ? इत्युच्यते मेधाविनः Sy. ब्राह्मणस्य यजमानस्य सम्बन्धिनः Mah. प्राप्तक्रियाशक्तेः फलदानं प्रति यज्ञस्य कर्मणि ब्राह्मणस्य। श्रुतौ वैश्यक्षत्रियावपि यजमानावग्निष्टोमे दीक्षितोऽयं ब्राह्मण इत्युच्यतेऽतस्तावपि ब्राह्मणशब्देनोच्येते U. विप्रस्य मेधाविनः BB.

३. बृहतो यजमानस्य सम्बन्धिनः BB.

४. स्तुत्यस्य ज्ञानवतो वा सवितुरनुज्ञयेति। 'सविता वै प्रसवानामीशे' (AB.7.16.) इति हि श्रुतिः Sy. सर्वज्ञस्य। अधीतवेदत्वाद् बृहत्त्वमर्थाभिज्ञत्वाद्विपश्चित्त्वम् Mah. मेधाविनः सर्वस्य यज्ञस्य U. विपश्चितः पण्डिता ऋत्विजः। .....एवमेतत्कुर्वाणा बृहतो विपश्चितो भवन्ति BB.

५. करोति । पृथक् पृथगवधारयति Sy. तदिदं विप्राणां मनोनियमनादिसामर्थ्यम्....ससर्ज Mah. किञ्च त एव सवित्रा प्रसूता ऋत्विजः...विदधत इति वचनविपर्ययः U. विदधे विदधाति विविधमुत्पादयति। छान्दसो लिट्। यद्वा-होत्रा ऋत्विग्विशेषान् होमस्य कर्तॄन् मैत्रावरुणादीन् विदधाति विभज्य स्थापयति BB.

६. स एव सविता सप्तहोत्रकाणामुचिताः क्रियाः Sy. होत्रा होमकर्तारः Mah. सप्त वषट्कर्तारो होत्रा इत्युच्यन्ते । 'अथ होत्राः संयोजयन्ति' इति श्रुतिः 'सौत्येऽहनि सप्त होतारो वषट् कुर्वन्ति' तदेतदुच्यते U. होत्राः स्तुतिलक्षणा वाचः BB.

७. तत्तदनुष्ठानविषयप्रज्ञावेत्ता Sy. वयुनं प्रज्ञां सर्वभूतानां मनोवृत्तिं वेत्तीति वयुनवित्। संहितायां दीर्घः। सर्वधीसाक्षीत्यर्थः Mah. त्रिवेदज्ञानान्वितो भैषज्यं करोति U. वयुनानां ज्ञानोपायानां वेदिता BB. वयुनमिति प्रज्ञानाम Ngh. 3.9. 'वयुनं वेत्तेः कान्तिर्वा प्रज्ञा वा' N. 5.14.

८. इच्छब्द एवार्थे U.

९. सर्वेषामेवर्त्विजां मध्ये सवित्रा प्रसूतो ब्रह्माख्य एक एव ऋत्विक् U. एतत्तु कर्त्तुं न सर्वे शक्नुवन्ति, एक एव वयुनविदेवंविधं कर्तुं शक्नोतीति BB.

१०. अतिप्रभूता। स्तुत्यगोचरेत्यर्थः Sy. महनीया खलु BB.

११. दानादिगुणयुक्तस्य U.

१२. देवस्य Sy. नन्वेकस्य सर्वसृष्टौ कथं सामर्थ्यम्? तत्राह यतः सवितुः प्रेरकस्यान्तर्यामिणो देवस्य Mah. सर्वस्य प्रसवितुः U.

१३. सर्वदा Mah. सर्वतः BB.

१४. ०माण P. उक्ता स्तुतिः।....तथा चाथर्वणिकाः—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इति । बृहदारण्यकेऽपि 'स एव सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च' (Bṛh. U. 4.4.22; Ibid. 5.6.1.) Mah. परिष्टुतिः परिस्तवनम्। को हि नाम यज्ञं प्रेत्यर्त्विजः प्रस्तूय समाप्स्यति यज्ञम्। यज्ञो हि वृष्टिद्वारेण समस्तं जगद्बिभर्तीति सवितुर्महती स्तुतिरित्युक्तम् U. रूपकर्मबान्धवाध्यवसायेन कर्तुं न शक्यते, तस्मादेक एव वयुनविद् होत्रा विधातुं शक्नोति । तस्मान्महानयं देव इति सवितुः प्रशंसा BB.

स्तुतिः[१]।

विश्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे ।
वि नाक॑मख्यत्सवि॒ता वरे॑ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति ॥ २ ॥

विश्वा[२] । नानाविधानि[३] । रूपाणि[४] । प्रतिमुञ्चते[५] । कविः[६] । प्रस्तौति[७] च । भद्रम्[८] । द्विपदे[९] । चतुष्पदे[१०][११] ।

---

१. यद्वा अस्य मन्त्रस्यार्थान्तरम् । विप्रा ऋत्विजो विपश्चितो यज्ञस्य कर्मणीति शेषः । मनो धियो वाचश्च युञ्जते प्रयुञ्जते । 'यज्ञो वै विपश्चित्' (ŚB. 3.5.3.12. p. 273) इति श्रुतेः । किम्भूतस्य विपश्चितः ? विप्रस्य विशेषेण प्राति पूरयति फलमिति विप्रस्तस्य । फलदानं प्रति प्राप्तक्रियाशक्तेः । 'प्रा पूर्तौ' । तथा बृहतो महतः सर्वसाधनसम्पन्नस्य । होत्रा होतारः सप्त वषट्कर्तारो विदधे विदधते स्वस्वकर्माणीति शेषः । पुरुषवचनव्यत्ययः । तन्मध्ये वयुनविदेकवित् त्रिवेदज्ञानवान् ब्रह्माख्य एक एव । सवितुर्देवस्य मही महती परिष्टुतिः स्तवनम् । ब्रह्माद्या ऋत्विजो यत्कर्म कुर्वते तत्सवितुः प्रेरणेनैवेति सवितुर्महती स्तुतिरित्यर्थः Mah. अन्य आह—मेधाविनो यजमानस्य सम्बन्धिनो विपश्चितो विप्रा युञ्जते । एक एव वयुनविद् होत्रा विदधाति । सा खलु सर्वा देवस्य सवितुर्महती परिष्टुतिः सर्वतः प्रस्तुतिः प्रेरणेति यावत् । तस्मात्तदनुज्ञाता वयमिदं कर्मारभामह इति भावः BB.

स॒ जु॒होति । यु॒ञ्जते॑ म॒न उ॒त यु॒ञ्जते॒ धिय॒ इति॒ मनसा च वै वाचा च य॒ज्ञं तन्वते स यदाह यु॒ञ्जते म॒न इति तन्मनो युनक्त्युत युञ्जते धिय इति तद्वाचं युनक्ति धिया धिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथाभिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते ŚB.3. 5.3.11.p.273.

This stanza=YV.5.14.=TS.1.2. 13.1.

२. हविर्धानप्रवर्तने रराटयामवनद्धायां 'विश्वा रूपाणि' इत्येषानुवचनीया । सूत्रितञ्च—'विश्वा रूपाणि प्रति मुञ्चते कविरिति व्यवस्तायाम्' (ĀŚS. 4.9.) इति Sy. श्यावाश्वस्यार्षम् Dur. श्यावाश्वस्य SKN.

३. विश्वाः P., D.

४. सर्वाणि Sy., Mah., U. यान्यनेन सञ्छन्नता तमसा पिहितानि, अनुपलभ्यमानत्वादगृहीतानि....तानि विश्वानि सर्वाणि SKN.

५. रूपवत्स्वर्थेषु Dur. रूपाणि घटपटस्तम्भादीनि SKN.

६. आत्मनि बध्नाति धारयति Sy. द्रव्येषु प्रतिबध्नाति । रात्रितमोऽपहृत्य रूपाणि प्रकाशयतीत्यर्थः Mah. द्रव्येष्वपहृत्य शार्वरं तमः प्रकाशयतीत्यर्थः U. आबध्नाति तमोऽपघ्नन् रूपाण्याविष्कुर्वन् Dur. मनाक् क्रमापनयेनोपलभन् प्रतिमुञ्चतीव SKN.

७. मेधावी सविता Sy. विद्वान् क्रान्तदर्शनः Mah. क्रान्तदर्शनः U. क्रान्तदर्शनः । अथवा कवतेर्धातोर्गत्यर्थस्य कविः । कवति गच्छत्यसौ नित्यम् Dur. मेधावी SKN.

८. अनुजानाति Sy. प्रेरयति Mah. कवित्वादेव ....जनयति, अभ्यनुजानाति च Dur. प्रसवोऽभ्यनुज्ञा । अभ्यनुजानाति च....सर्वं हि भद्रं कर्म उदिते सवितरि क्रियते नानुदिते तदुदयेनानुजानातीव SKN.

९. कल्याणं गमनादिविषयम् Sy. कल्याणं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः Mah. भन्दनीयम् U. यद्यत्तेषां भद्रं कल्याणं तत्तत् प्रसुवति Dur. स्वं स्वं कर्म SKN. १०. मनुष्याय Sy., SKN. द्विपाद्भ्यः U. मनुष्यादिभ्यः Dur.

११. गवाश्वादिकाय Sy. द्विपाद्भ्यश्चतुष्पाद्भ्यो मनुष्यपश्वादिभ्यः Mah. चतुष्पाद्भ्यश्च U. गवादिभ्यः Dur. गवादये च । सर्वेभ्यो द्विपाद्भ्यश्चतुष्पाद्भ्यश्च SKN.

व्यख्यच्च[1]। नाकलोकम्[2]। सविता[3]। वरणीयः सोऽयम्[4]। उषसि[5]। गतायाम्, स्वकाले[6]। विराजति[7]।[8]

**यस्य॑ प्र॒याण॒मन्व॒न्य इद्य॒युर्दे॒वा दे॒वस्य॑ महि॒मान॒मोज॑सा ।**
**यः पार्थि॑वानि वि॒म॒मे स एत॑शो॒ रजां॑सि दे॒वः स॑वि॒ता म॑हित्व॒ना ॥ ३ ॥**

यस्य प्रयाणम्। यस्य[9]। प्रयाणम्[10]। अनुगच्छति[11]। अन्ये। देवाः[12]। देवस्य[13]। महिमानमात्मीयम्[14]।

---

१. ख्यापयति प्रकाशयति Sy. विख्याति प्रकाशयति Mah. विख्यापयति प्रकाशयति U. विख्यापयति....विदर्शयति, तदा हि तस्यां विकीर्णरश्मयो भवन्ति Dur. ख्यातिरत्रान्तर्णीतण्यर्थः। विख्यापयति प्रकाशयतीत्यर्थः SKN.

२. नास्मिन्नकं दुःखमस्तीति नाकः स्वर्गः। यजमानार्थं स्वर्गं प्रकाशयतीत्यर्थः Sy. यश्च नाकं स्वर्गम् Mah. द्युलोकम् U. द्यां च Dur. दिवम् SKN.

३. सर्वस्य प्रेरको देवः Sy. सर्वस्य प्रसविता सूर्यः Mah., U. कः ? सविता SKN.

४. ०यं D. वरणीयः सन् Sy. वरेण्यः श्रेष्ठः Mah. .

५. उषःकालस्य Mah. उषसः Dur.

६. उदयम् Sy. प्रयाणं गमनमनु पश्चात्, उषःकाले व्यतीते सति Mah. प्रयाणं प्रगमनमनु पश्चात् U. प्रयाणमनु Dur. व्यतीतायामित्यर्थः SKN.

७. प्रकाशते। सवितुरुदयात् पूर्वं ह्युषा उदेति Sy. विशेषेण दीप्यते। 'उषाः सवितुः पुरोगामिनी' इति सवितुः स्तुतिः। ईदृशः सविता शिक्यं प्रति मुञ्चत्विति शेषः Mah. दीप्यते। ....य इत्थम्भूतः सविता स शिक्यं प्रतिमुञ्चत्वित्यर्थः U. प्रकाशते सोऽस्माकं नामेदं करोत्वित्याशिषा स्तुतिर्निराकाङ्क्षा Dur. अनु पश्चात् प्रयाणस्य....विराजति विशेषेण दीप्यते SKN.

८. भाष्ये सर्वाणि प्रज्ञानानीति घटपटादिरूपाविष्कृतेस्तद्विषयाणि प्रज्ञानानि प्रतिमुञ्चतीत्याह। कविः कस्मात् ? क्रान्तदर्शन इत्यादि क्रमतेः कवतेर्वा गतिकर्मण इदं रूपम्। क्रान्तं दूरं गतं दर्शनं प्रकाशरूपं विज्ञानमस्य। यदा कवतेस्तदा कविर्गन्ता गच्छत्यसौ नित्यम्। अवगन्ता वा सर्वस्य ज्ञाता। क्वचित्तु कवतेः शब्दकर्मणः। अस्मिन्नेव नामकरणे शब्दकारी कविरुच्यते SKN. सर्वाणि प्रज्ञानानि प्रतिमुञ्चते। मेधावी। कविः क्रान्तदर्शनो भवति। कवतेर्वा। प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च। व्यचिख्यपन्नाकं सविता वरणीयः। प्रयाणमनूषसो विराजति N.12.13., SKN. IV.111.

अथ शिक्यपाशं प्रतिमुञ्चते। विश्वा रूपाणि प्रतिमुञ्चते कविरित्यसौ वाऽआदित्यः कविर्विश्वा रूपा शिक्यं प्रासावीद्भद्रं द्विपदे चतुष्पदऽइत्युद्यन्वाऽएष द्विपदे चतुष्पदे च भद्रं प्रसौति वि नाकमख्यत्सविता वरेण्य इति स्वर्गो वै लोको नाकस्तमेष उद्यन्नेवानुविपश्यत्यनु प्रयाणमुषसो विराजतीत्युषा वाऽअग्रे व्युच्छति तस्याऽएष व्युष्टिं विराजन्नुदेति SB. 6. 7. 2. 4. p. 557.

This stanza=YV.12.3.

९. यस्य सवितुः Mah. देवस्य U.

१०. प्राप्नुवन्ति Sy. प्रयाणं प्रवृत्तिम् Mah. प्रगमम् U.

११. अनुययुरित्, अवश्यमनुगच्छन्त्येव। यत् प्रवृत्तिमनुवर्तन्त इत्यर्थः Mah. अनु....ययुर्जग्मुः। इच्छब्दोऽनर्थकः U. १२. अग्न्यादयः Sy.

१३. देवस्य D. द्योतमानस्य सवितुः Sy.

१४. महत्त्वम्। सवितुरुदयाभावेऽग्निहोत्राद्यनिष्पत्तेस्तेषां हविःस्तुत्याद्यभावात् Sy. महत्त्वं च Mah. महाभाग्यं विभूतिम् U.

सवितुर्बलेन[१] । यश्च[२] । पार्थिवान्[३] लोकान् । निर्ममे[४] । सः[५] । श्वेतवर्णः[६] । सर्वान् लोकान् । महत्त्वेन[७] । विमिमीते[८] ।[९]

**उत यासि सवितस्त्रीणि रोचनोत सूर्यस्य रश्मिभिः समुच्यसि ।**
**उत रात्रीमुभयतः परीयस उत मित्रो भवसि देव धर्मभिः ॥ ४ ॥**

उत यासि । अपि च । गच्छसि[१०] । सवितः[११] ! त्रीणि । तेजांसि[१२] लोकान् वा । अपि च । सूर्यस्य[१३] । रश्मिभिः । सङ्गच्छसे[१४] स्वरूपेण । अपि च । रात्रिम्[१५] । उभयतः[१६] । परिगच्छसि । उत[१७] । मित्रश्च[१८] । देवः[१९] । भवति । कर्मभिः[२०] ।

---

१. बलेन च युक्ता भवन्ति Sy.
२. सविता Mah. सविता देवः U.
३. पृथिव्यादिलोकान् Sy. पृथिवीप्रभृतींस्त्रींल्लोकान् Mah. पृथिवीप्रभृतींल्लोकान् U. 'लोका रजांस्युच्यन्ते' N.4.19.
४. निर्मध P. परिच्छिनत्ति Sy. मिमीते Mah., U.
५. देवः Mah.
६. ०र्ण P., D. एतवर्णः शोभमानः सन् । राजत इति शेषः । 'युवशा ताकृणोतन (RV.I. 161.7.) इत्यादिवत् एतश इत्यादिशकारोपजनश्छान्दसः Sy.
एतज्जगत्त्रयं स्थावरजङ्गमं प्राणभावेन शेते व्याप्नोतीत्येतशः ।....यद्वा एतश इत्यश्वनामसु पठितम् । स देव एतशोऽश्वरूपेण सर्वं जगदवष्टभ्य स्थितः । 'उषा वाऽश्वस्य मेध्यस्य शिरः (SB.10.6.4.1.p.807) इति श्रुतेः Mah. एतज्जगत्स्थावरजङ्गमं प्राणभावेन शेत इति सविता एतश इत्युच्यते । यद्वा एतश इत्यश्वनामसु पठितम् । सोऽश्वरूपेण समस्तमेतज्जगदवष्टभ्य स्थितस्तदुक्तम् U.
७. ०त्वेन P., D. स्वमहत्त्वेन Sy. स्वकीयेन महाभाग्येन ।....महेर्महतो भावो महित्वं तेन । भावे छान्दसस्त्वन्प्रत्ययः Mah. स्वकीयेन महाभाग्येन U.
८. विमिमीयते P., D.
९. VM. ignores इत् । देवः and सविता । यस्य प्रयाणमन्वन्यऽइद्ययुरिति । प्रजापतिर्वाऽएतदग्रे कर्माकरोत्ततो देवा अकुर्वन्देवा देवस्य महिमानमोजसेति यज्ञो वै महिमा देवा देवस्य यज्ञं वीर्यमोजसेत्येतद्यः पार्थिवानि विममे स एतश इति यद्वै किं चास्यां तत्पार्थिवं तदेष सर्वं विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति रजाꣳसि देवः सविता महित्वनेतीमे वै लोका रजाꣳस्यसावादित्यो देवः सविता तानेष महिम्ना विमिमीते SB. 6.3.1.18.p.520.
This stanza=YV. 11.6.
१०. 'तिस्रो दिवः पृथिवीः' (RV.IV. 53.5.) इत्युक्तम् Sy.
११. हे देव ! Sy.
१२. रोचमानान् द्युलोकान् Sy.
१३. सूर्यश्च P.
१४. सङ्गच्छसि 'उच समवाये' इत्यस्येदं रूपम् । उदयात् पूर्वभावी सविता उदयास्तमयवर्ती सूर्य इति Sy.
१५. रात्रीम् P.
१६. ०यन्तः P. उभयपार्श्वे Sy.
१७. अपि च Sy.
१८. मित्राख्यो देवो भवसि । अथवा प्रकाशादिप्रदानेन सखा जगताम् Sy.
१९. VM. seems to read देवः for देव ॥ हे देव ! सवितः ! त्वम् Sy.
२०. Omitted by P. जगद्धारकैः कर्मभिः Sy.

उ॒तेशि॑षे प्रस॒वस्य॒ त्वमेक॒ इदु॒त पू॒षा भ॑वसि दे॒व॒ याम॑भिः ।
उ॒तेदं विश्वं॒ भुव॑नं॒ वि रा॑जसि श्या॒वाश्व॑स्ते सवि॒तः स्तोम॑मानशे ॥ ५ ॥

उतेशिषे[१]। अपि च । ईशिषे[२]। अनुज्ञायाः[३]। त्वम् । एकः । एव । अपि च । पूषा[४]। भवसि । देव[५]। आगमनैः । अपि च । इदम् । विश्वम् । भुवनम्[६]। विराजसि[७]। श्यावाश्वः[८]। ते[९]। सवितुः[१०]! स्तोमम्[११]। व्याप्नोति[१२] कुरुते[१३]।

V.82.

तत्स॑वि॒तुर्वृ॑णीमहे व॒यं दे॒वस्य॒ भोज॑नम् । श्रेष्ठं॑ सर्व॒धात॑मं॒ तुरं॒ भग॑स्य धीमहि ॥ १ ॥

तत् सवितुः[१४]। तत्[१५]। सवितुः[१६]। वृणीमहे[१७]। वयम्[१८]। देवस्य[१९]। भोजनम्[२०]। श्रेष्ठम्[२१]। सर्वेषामतिशयेन

---

१. हे सवितः ! Sy.

२. समर्थो भवसि । ये लौकिकं गमनादिरूपं वैदिकमग्निहोत्रादिरूपं कर्मानुतिष्ठन्ते तेषां सर्वेषामनुज्ञातुमेक एव प्रभवसि Sy.

३. ०याम् D.
सर्वकर्मानुज्ञाकरणस्य Sy.

४. पोषकः Sy.

५. देवैः P.

६. भूतजातम् Sy.

७. ईशिषे धारयितुम् । यस्मादेवंमहानुभावस्तस्मात् Sy.

८. ०वाश्च P.
ऋषिः Sy.

९. तुभ्यम् Sy.

१०. VM. takes सवितुः for सवितः ।। हे सवितः ! Sy.

११. स्तोत्रम् Sy.

१२. करोति इत्येवमात्मानं परोक्षतया निर्दिशन्नाह Sy.

१३. Ms. D. puts the figure ।।८१।। here to indicate the end of the eighty-first hymn. No such number is given in P.

१४. 'तत्सवितुः' इति नवर्चं दशमं सूक्तं श्यावाश्वस्यार्षम् । अत्रेयमनुक्रमणिका—'तत्सवितुर्नव गायत्रमाद्यानुष्टुप्' (KSA. 28.82.p.21.) इति । प्रथमानुष्टुप्, शिष्टा गायत्र्यः । 'सावित्रं तु' (KSA. 28.81.p.21.) इत्युक्तत्वात्सावित्रम् । अग्निष्टोमे वैश्वदेवशस्त्रस्याद्यस्तृचः प्रतिपत् । 'अद्या नो देव' इत्यनुचरः । सूत्रितञ्च—'तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ' (ĀSS.5.18.) इति Sy.

१५. प्राप्यत्वेन प्रसिद्धम् Sy.

१६. प्रेरकस्य Sy.

१७. प्रार्थयामः Sy.

१८. मय D.
स्तोतारः Sy.

१९. देवस्य स्वभूतम् Sy.

२०. भजना P. ०ना D.
भोग्यं धनम् Sy.

२१. प्रशस्यम् Sy.

धारकम्[1] । भजनीयस्य सवितुः[2] । प्रेरकं[3] तेजश्च । धारयामः[4] ।

**अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् । न मिनन्ति स्वराज्यम् ॥ २ ॥**

**अस्य हि** । अस्य । हि । अत्यन्तं[5] स्वभूतयशस्कम् । सवितुः । कदा[6] । चिदपि । प्रियम्[7] । न । हिंसन्ति । स्वराज्यम्[8] ।[9]

**स हि रत्नानि दाशुषे सुवाति सविता भगः । तं भागं चित्रमीमहे ॥ ३ ॥**

**स हि रत्नानि** । सः । हि[10] । रत्नानि[11] । यजमानाय[12] । प्रसौति[13] । सविता । भजनीयः[14] । तत्[15] । धनम्[16] । चित्रम्[17] । याचामहे ।

**अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुःष्वप्न्यं सुव ॥ ४ ॥**

**अद्या नः**[18] । अद्य[19] । अस्माकम्[20] । देव ! सवितः ! प्रजायुक्तम्[21] । धनम् । देहि[22] । विनाशय[23] च । दुःस्वप्न्यम्[24] ।

---

१. सर्वधाततमम् । सर्वभोगप्रदमित्यर्थः Sy.
२. भजनीयस्य सवितुरनुग्रहात् Sy.
३. शत्रूणां हिंसकम् । धनेन शत्रून् हन्तुं शक्यत्वात् । तादृशं धनम् Sy.
४. प्रेरकं तेजश्च and धारयामः are omitted by P. धारयाम । उपभोगं करवामेत्यर्थः । अथवा धनं वृणीमहे, अर्थित्वाच्च लभेमहीति Sy.
५. स्वय ? (स्व)मसाधारणं यशो यस्यातिशयेन भवति तत्तादृशम् Sy.
६. केचिदप्यसुरादयः Sy.
७. सर्वेषां प्रियभूतम् Sy.
८. स्वयमेव राजमानत्वमैश्वर्यम् Sy.
९. The commentary on this stanza is omitted by P.
१०. खलु Sy.
११. रमणीयानि धनानि Sy.
१२. P. omits upto नाय प्रसौति ॥ हविर्दात्रे मह्यम् Sy.
१३. प्रेरयति प्रयच्छति Sy.
१४. भजनीयो देवः Sy.
१५. तं देवम् Sy.
१६. भजनीयम् Sy.
१७. चायनीयं धनम् Sy.
१८. 'अद्या नः' इति चतुर्थीपञ्चमीभ्याममनोज्ञस्वप्नदर्शने प्रत्यृचं जुहुयात् । 'अद्या नो देव सवितरिति द्वाभ्याम्' (AGS. 3.6.6.) इति हि सूत्रितम् Sy.
१९. अस्मिन् यागदिने Sy.
२०. अस्मभ्यम् Sy.
२१. पुत्राद्युपेतम् Sy.
२२. प्रेरय Sy. २३. दूरे प्रेरय Sy.
२४. दुस्वप्नम् P. दुदुस्वप्नम् D. दुःस्वप्नं दुःस्वप्नवद्दुःखकरं दारिद्र्यम् Sy.

उत्तरा निगदसिद्धा[1]

**विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव । यद्भ॒द्रं तन्न॒ आ सु॑व ॥ ५ ॥**

[विश्वानि देव ।][2]

**अना॑गसो॒ अदि॑तये दे॒वस्य॑ सवि॒तुः स॒वे । विश्वा॑ वा॒मानि॑ धीमहि ॥ ६ ॥**

अनागसः[3][4] । अनागसः[5] । अस्यै पृथिव्यै[6] । देवस्य । सवितुः[7] । प्रसवे[8] । विश्वानि[9] । धनानि[10] । धीमहि[11] ।

---

१. The commentary on this stanza is omitted by P.

२. The *pratīka* is supplied by the Editor. Sy. explains the stanza in the following manner:—

हे सवितः ! देव ! त्वम् । विश्वानि । दुरितानि । परासुव । यद्भद्रं प्रजापशुगृहादिकम् । तत् । नोऽस्मभ्यम् । आ सुव अस्मदभिमुखं प्रेरय । 'प्रजा वै भद्रं पशवो भद्रं गृहं भद्रम्' इति श्रुतिः ॥

हे देव ! सवितः ! विश्वानि सर्वाणि दुरितानि पापानि परासुव दूरे गमय । यद्भद्रं कल्याणं तन्नोऽस्मान्प्रति, आसुवागमय Mah.

विश्वानि सर्वाणि हे देव ! सवितः ! दुरितान्यसत्यानि परासुव पराञ्चि गमय । यच्च भद्रं भन्दनीयं तन्नोऽस्माकमासुवागमय U.

त॒स्यै सप्त॒दश सामि॒धेन्यो भवन्ति । स॒द्वन्ता॒वा॒ज्यभागौ स॒देवा॒वरुन्द्धे वि॒श्वानि देव सवितः स॒ घा नो दे॒वः सविता॒ सहाव॒ेत्युपांशु ह॒विषो याज्यानु॒वा॒क्ये॒ऽनु॒ष्टु॒भौ संया॒ज्ये रजतं हि॒रण्यं द॒क्षिणा नानारू॒पतायाऽ॒थोऽ उत्क्रमायान॒पक्रमाय श॒तमानं भवति श॒तायु॒र्वै पु॒रुषः श॒तेन्द्रि॒य आ॒यु॒रे॒वेन्द्रि॒यं वी॒र्यमा॒त्मन्धत्ते SB.13.4.2.10.p.982.

[ अत्रास्या ऋचः 'विश्वानि देव सवितः' एतावानेव भागः, 'स घा नो _वः सविता सहावा' (RV.VII.45.3.) इत्यृचा साकमस्ति ।]

This stanza=YV.30.3.

३. Omitted by P.

४. वयमनुष्ठातारः Sy.

५. अनागसः स्याम अनपराधिनो भवेम । भूम्यां हि पापाः सम्भवन्ति Sy.

६. ०गस्येस्यै D. अखण्डनीयायै देव्यै भूम्यै Sy.

७. प्रेरकस्य Sy.

८. अनुज्ञायां सत्याम् Sy.

९. अपगतेष्वागःसु सर्वाणि Sy.

१०. The passage, सवितुः प्रसवे विश्वानि धनानि is written twice in P. वननीयानि धनानि Sy.

११. निधी० P. धारयाम Sy.

उत्तरा निगदसिद्धा[1]

**आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे । सत्यसवं सवितारम् ॥ ७ ॥**

[2][ आ विश्वदेवम् । ][3]

**य इमे उभे अहनी पुर एत्यप्रयुच्छन् । स्वाधीर्देवः सविता ॥ ८ ॥**

**य इमे** । यः । इमे । उभे । अहोरात्रे[4] । पुरः[5] । एति[6] । अप्रमाद्यन्[7] । सुकर्मा[8] । देवः । सविता[9] ।

**य इमा विश्वा जातान्याश्रावयति श्लोकेन । प्र च सुवाति सविता ॥ ९ ॥**

[10]**य इमा** । यः[11] । इमानि । विश्वानि[12] । जातानि[13] । शौनकः[14] श्रावयति । प्रसौति[15] । च देवः[16] । सविता

---

१. P. repeats निगदसिद्धा ।

२. चातुर्मास्येषु वैश्वदेवे पर्वणि सावित्रस्य द्वादशकपालस्य 'आ विश्वदेवम्' इत्यनुवाक्या । सूत्रितञ्च—'आ विश्वदेवं सत्पतिं वामद्य सवितः' (ĀSS.2.16.) इति । प्रायणीये एषैव सवितुरनुवाक्या । सूत्रितञ्च—'आ विश्वदेवं सत्पतिं य इमा विश्वा जातानि' (ĀSS.4.3.) इति । देवसुवां हविःषु एषैव सवितुरनुवाक्या । सूत्रितञ्च—आ विश्वदेवं सत्पतिं न प्रमिये सवितुर्दैव्यस्य तत्' (ĀSS.4.11.) इति Sy.

३. The stanza is not explained by VM. Sy. explains this stanza in the following manner:—
विश्वदेवम् । विश्वे देवा यस्य वशे भवन्ति तं तादृशम् । स हि सर्वात्मा, 'इन्द्रं मित्रं वरुणमग्निमाहुः' (RV.1.164.46.) इत्यादि श्रुतेरितरेषां तद्विभूतित्वात् । सत्पतिं सतामनुष्ठातॄणां पालकम् । सत्यसवं सत्यानुज्ञं सवितारं देवम् । अद्यास्मिन् यागदिने सूक्तैरावृणीमहे सम्भजामहे ॥
विश्वदेवं विश्वेऽपि देवा दीव्यन्तेऽस्मिन्निति विश्वदेवः सविता ।....सत्पतिं सतां विदुषां पातारम् ।....सूक्तैस्सम्यगुक्तैः स्तोत्रैरद्यास्मिन्यज्ञे वृणीमहे सत्यसवं सत्यानुज्ञं सवितारं देवम् BB.
This stanza=TS.3.4.11.2.

४. रात्र्यहनी Sy.

५. तयोः पुरस्तात् Sy.

६. गच्छति । तमावृणीमह इति सम्बन्धः Sy.

७. पुर हित्यप्र० P., D.

८. शोभनाध्यानः सुकर्मा वा सन् Sy.

९. P. reads भजनीयस्य सवितुः प्रसवे विश्वानि धनानि निधीमह्युत्तरा निगदसिद्धा य इमे य इमे उभे...सुकर्मा नाय प्रसौति...पृथिव्यै देवस्य सवितुः प्रसवे विश्वानि धनानि निगदसिद्धा देवस्सविता । (RV.V.82.1–8.)

१०. प्रायणीये 'य इमा विश्वा' इति सवितुर्याज्या । सूत्रितं च—'य इमा विश्वा जातानि सुत्रामाणं पृथिवीं द्यामनेहसम्' (ĀSS.4.3.) इति । अश्वमेधेऽश्वमुत्सृज्यानुसवनं सावित्रीष्टिः कार्या । तस्यामेषा माध्यन्दिने सवनेऽनुवाक्या । सूत्रितञ्च—'य इमा विश्वा जातान्या देवो यातु सविता सुरत्नः' (ĀSS.10.6.) इति Sy.

११. देवः Sy. १२. सर्वाणि Sy.

१३. उत्पन्नान् प्राणिनः । जङ्गमानित्यर्थः । तान् Sy.

१४. ०का P. श्लोकेन is suggested for शौनकः ।

१५. सर्वेऽप्यस्य स्तुतिं शृण्वन्तीत्यर्थः । अथवा गर्जनशब्देन सर्वाणीमान्युत्पन्नान्याश्रावयति वृष्ट्युन्मुखः सन् Sy.

१६. प्रेरयति तं वृणीमहे इति Sy.

तमावृणीमह इति।[1]

V.83.

अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास।
कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम् ॥ १ ॥

अच्छ[2] ॥ अत्रिः[3] ॥ अभिवद[4]। वृद्धम्[5]। गीर्भिः[6]। आभिः। स्तुहि। पर्जन्यम्[7]। नमसा[8] च। परिचर। शब्दं[9] कुर्वन्। वर्षिता[10]। क्षिप्रदानः। उदकम्। दधाति[11]। ओषधीषु। गर्भं[12] च गर्भहेतुं वोदकम्[13]।

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात्।
उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः ॥ २ ॥

वि[14] वृक्षान्। 'विहन्ति[15]। वृक्षान्। विहन्ति[16]। च[17]। रक्षांसि। सर्वाणि चास्मात्[18]। भूतानि[19]। बिभ्यति।

---

१. VM. ignores आ and श्लोकेन ॥ श्लोकेन यशसा Sy.
Ms. D. puts the figure ॥८२॥ here to indicate the end of the eighty-second hymn. No such number is given in P.

२. 'अच्छा वद' इति दशर्चमेकादशं सूक्तं भौमस्यात्रेरार्षम्। अत्रेयमनुक्रमणिका 'अच्छ दशात्रिः पार्जन्यमुपाद्यास्तिस्रो जगत्य उपान्त्यानुष्टुप्' (KSA. 28.83.p.21.) इति। 'यत्पर्जन्य' इत्येषा नवम्यनुष्टुप्। 'वि वृक्षान्' इत्याद्यास्तिस्रो जगत्यः, शिष्टाः षट् त्रिष्टुभः। पर्जन्यो देवता। अनेन सूक्तेन प्रत्यृचं वा दिशः उपस्थेयाः। सूत्रितञ्च—'संस्थितायां सर्वा दिश उपतिष्ठेताच्छा वद तवसं गीर्भिराभिरिति चतसृभिः प्रत्यृचं सूक्तेन वा' (ASS. 2.13.) इति Sy.

३. ०च्छः P.

४. अभिप्राप्य प्रार्थय Sy.

५. वृद्धं P. हे स्तोतः! बलवन्तम् Sy.

६. स्तुतिवाग्भिः Sy.

७. पर्जन्यस्तृपेः आद्यन्तविपरीतस्य। तर्पयिता जन्यः। परो जेता वा। जनयिता वा। प्रार्जयिता वा रसानाम् N. 10.10.

८. अन्नेन हविर्लक्षणेन Sy.

९. गर्जनशब्दं कुर्वन् Sy.

१०. वर्षिदा D. यः पर्जन्यः वृषभः अपां वर्षिता Sy.

११. स्थापयति तं स्तुहि Sy.

१२. गर्भस्थानीयम् Sy.

१३. VM. ignores आ ॥ आ सर्वतः Sy.

१४. अत्रेरार्षम् Dur. For the commentary on this stanza Sy. quotes N. 10.12.

१५. वह० P., D. विहन्ति. .अशनिपातैः Dur. विविधं हन्ति SKN.

१६. वह० D. विविधं हन्ति क्रूरकर्मणः Dur.

१७. अपि च SKN.

१८. ०स्मान् P. सर्वस्मात् SKN.

१९. त्रिभुवनं भूतजातं न केवलं हन्यमानानि रक्षांसि SKN.

महावधात्[1], महान् ह्यस्य वधः। अपि[2]। अनपराधः[3]। भीतः पलायते[4][5]। वर्षकर्मवतः[6]। यत्[7]। पर्जन्यः[8]। स्तनयन्[9]। हन्ति[10]। दुष्कृतः पापकृतः[11]' इति यास्कः[12]।

**रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान्कृणुते वर्ष्याँ अह ।**
**दूरात्सिंहस्य स्तनथा उदीरते यत्पर्जन्यः कृणुते वर्ष्यं नभः ॥ ३ ॥**

**रथीव**। सारथिरिव[13]। कशया। अश्वान्[14]। अधिक्षिपन्[15]। आविष्कृणुते[16]। वर्षणनिमित्तान्[17]। मरुत्प्रभृतीन्[18]। अहेत्याश्चर्ये[19]। दूरादेव। सिंहसदृशस्य मेघस्य[20]। शब्दाः[21]। उद्गच्छन्ति। यदा[22]। पर्जन्यः। करोति[23]। वर्षणहेतुम्[24]। आशम्[25]।

**प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।**
**इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥ ४ ॥**

प्र वाताः[26]। प्रवान्ति[27]। वाताः[28]। विद्युतश्च। पतन्ति[29]। ओषध्यश्च[30]। उद्गच्छन्ति[31]। सर्वं[32] च।

---

१. पर्जन्यात् Dur. महान् दृढो वधः प्रहारो यस्य तस्माद् दृढप्रहारादित्यर्थः SKN.
२. उतशब्दोऽपि चेत्यस्यार्थे SKN.
३. एवं नाम महावधादस्मात् सर्वाणि भूतानि बिभ्यति येनानागा अपि अनपराधोऽपि सन् सर्व एव Dur. अनपराधोऽपि चास्मात् SKN. ४. ०त D.
५. पलायते मामयं स्तनयन् हन्तीति मन्यमानः Dur. ईषति हन्तीति गतिकर्माणौ (Ngh. 2.14.) इह भीतिपूर्विकायां गतौ पलायने वर्तते। भीतः सन् पलायते गच्छतीति SKN.
६. स्तनयित्नुशब्दैरशनिं मुञ्चतः Dur. वृष्ण्यं वर्षकर्म बलं वा तेन तद्वतः SKN.
७. कदैतत् सर्वं भवति ? उच्यते यत् यदा Dur., SKN. ८. योऽयमेवमतिमहानुभावो भगवान् पर्जन्यः स वर्षत्वस्माकमिति Dur.
९. गर्जितलक्षणं शब्दं कुर्वन् SKN.
१०. वर्षेण, ओषधीरभिनिष्पादयन् स्तनयन् हन्ति, उपशमयति सुभिक्षं कुर्वंस्तदा Dur. अशनिपातैर्हन्ति SKN. ११. तस्करादीननाकालप्रभवान् Dur. पापकारिणः SKN.
१२. N. 10.11., SKN. IV. 14.
१३. रथस्वामीव। स यथा कशयाश्वानभिक्षिपन् दूतान् भटानाविष्करोति तद्वदसौ पर्जन्योऽपि Sy. १४. मेघान् Sy.
१५. अभिप्रेरयन् Sy.
१६. अवि० D. प्रकटयति Sy.
१७. वर्षकान् Sy.
१८. दूतवत् वृष्टिप्रेरकान् मेघान् मरुतो वा Sy.
१९. अह्येत्या० P., D. अह इति पूरणः Sy.
२०. सहतेर्हिंसतेर्वा शब्दकर्मणः सिंहशब्दः। अवर्षणेनाभिभवितुः शब्दयितुर्वा मेघस्य Sy.
२१. गर्जनशब्दाः Sy.
२२. कदा ? यत् यदा Sy.
२३. करोति तदा Sy. २४. वर्षोपेतम् Sy.
२५. आकाशम् is suggested for आशम् ॥ अन्तरिक्षम् Sy.
२६. पाता P.
२७. प्रावन्ति P.
२८. पाता P. Sy adds वृष्ट्यर्थम्।
२९. तन्ति P. गच्छन्ति समन्तात् सञ्चरन्ति Sy.
३०. ओषधयः Sy.
३१. प्रवर्धन्ते Sy.
३२. अन्तरिक्षम् Sy.

स्वरसं रक्षन्ति[1] । अन्नं[2] च । विश्वस्मै[3] । भुवनाय[4] । जायते[5] । यदा । पर्जन्यः[6] । पृथिवीम् । उदकेन । रक्षति[7] ।

**यस्य॑ व्र॒ते पृ॑थि॒वी नन्न॑मीति॒ यस्य॑ व्र॒ते श॒फव॒ज्जर्भु॑रीति ।**
**यस्य॑ व्र॒त ओष॑धीर्वि॒श्वरू॑पाः॒ स नः॑ पर्ज॒न्य॒ महि॒ शर्म॑ यच्छ ॥ ५ ॥**

यस्य व्रते । यस्य[8] । कर्मणि । पृथिवी । अत्यन्तमार्द्रीभूता[9] नमति । यस्य । कर्मणि । शफवत्[10] पश्वादि[11] । पुष्टं[12] भवति । यस्य[13] । व्रते[14] । ओषध्यः[15] । विश्वरूपा[16] जायन्ते[17] । स त्वम्[18] । नः[19] । पर्जन्य ! महत् । सुखम् । प्रयच्छ ।

**दि॒वो नो॑ वृ॒ष्टिं म॑रुतो ररीध्वं॒ प्र पि॑न्वत॒ वृष्णो॒ अश्व॑स्य॒ धाराः॑ ।**
**अ॒र्वाङे॒तेन॑ स्तनयि॒त्नुनेह्य॒पो नि॑षि॒ञ्चन्नसु॑रः पि॒ता नः॑ ॥ ६ ॥**

दिवः । दिवः[20] । नः[21] । वृष्टिम्[22] । मरुतः[23] ! प्रयच्छत[24] । प्रप्यायत[25] । वर्षितुः[26] । अश्वस्य[27] पर्जन्यस्य । धाराः[28] । अर्वाङ्[29] । एतेन[30] । स्तनयित्नुना[31] । एहि[32] । अपः[33] । निषिञ्चन्[34] । प्राज्ञः[35] । पालयिता[36] । अस्माकम्[37] ।

---

१. क्षरति is suggested for रक्षन्ति ॥ cf. 'पिवि सेचने' DP.
२. भूमिः Sy.
३. सर्वस्मै Sy.
४. सर्वजगद्धिताय Sy.
५. समर्था भवति । कदैवमिति ? Sy.
६. देवः Sy.
७. रक्षति अभिगच्छति वा तदैवं भवति Sy.
८. पर्जन्यस्य Sy.
९. अत्यर्थं नमति, सर्वेषामधो भवति Sy.
१०. पादोपेतं गवादिकम् Sy.
११. पश्चात् P.
१२. भ्रियते पूर्यते गच्छतीति वा Sy.
१३. ०स्यं P.
१४. कर्मणि Sy.
१५. व्रतदष० D.
१६. नानारूपाः Sy.
१७. भवन्ति Sy.
१८. महांस्त्वम् Sy.
१९. त्वंन्नः D. अस्मभ्यम् Sy.
२०. अन्तरिक्षसकाशात् Sy.
२१. अस्मदर्थम् Sy., BB.
२२. वृष्टीः P.
२३. हे मरुतः ! यूयम् Sy., BB.
२४. प्राय० P., D. दत्त Sy. स्रावयत । 'रीङ् स्रवणे' व्यत्ययेन शपश्श्लुः । वर्णव्यत्ययेनाभ्यासस्येत्वम् BB.
२५. प्राप्या० P., D. प्रक्षरत Sy. प्रकर्षेणासिञ्चत । 'पिवि मिवि सेचने' BB.
२६. वर्षकस्य Sy. इन्द्रस्य BB.
२७. व्यापकस्य मेघस्य सम्बन्धिन्यः Sy. व्याप्तिमतः BB.
२८. उदकधाराः Sy. वर्षधाराः BB.
२९. अस्मदभिमुखम् Sy., BB.
३०. हे पर्जन्य ! त्वम् मेघेन सह Sy. हे वृषन्निन्द्र ! त्वमपि मेघेन BB.
३१. गर्जता मेघेन सह Sy. शब्दयता सह BB.
३२. आगच्छ Sy., BB. ३३. अम्भांसि Sy.
३४. निषिञ्चन् स देवः Sy. निषिञ्चन् वर्षन् BB.
३५. उदकानां निरसितापि सन् Sy. असनकुशलः । असेरुरन् । असुमान् वा । असुप्रदो वा BB.
३६. पालकश्च Sy. पाता BB.
३७. प्रजानाम् BB.
This stanza=TS.3.1.11.2

**अभि क्र॑न्द स्त॒नय॒ गर्भ॒मा धा॑ उद॒न्वता॒ परि॑ दीया॒ रथे॑न ।
दृतिं॒ सु क॑र्ष॒ विषि॑तं॒ न्य॑ञ्चं स॒मा भ॑वन्तू॒द्वतो॑ निपा॒दाः ॥ ७ ॥**

अभिक्रन्द[१] । अभिक्रन्द[२] । स्तनितशब्दं च कुरु[३] । ओषधीनां गर्भम्[४] । आधेहि । परितो गच्छ[५] उदकवता । रथेन[६] । दृतिसदृश[७] मेघम्[८] । सुष्ठु[९] । कर्ष[१०] । विषितास्यम्[११] । नीचीनमुखम्[१२] । समाः[१३] । भवन्तु । उदकेनोच्छ्रिताः[१४] । निम्नाश्च[१५] देशाः ।

**म॒हान्तं॒ कोश॒मुद॑चा॒ नि षि॑ञ्च॒ स्यन्द॑न्तां कु॒ल्या विषि॑ताः पु॒रस्ता॑त् ।
तेन॒ द्यावा॑पृथि॒वी व्यु॑न्धि सुप्रपा॒णं भ॑वत्व॒घ्न्याभ्यः॑ ॥ ८ ॥**

महान्तम्[१६] । महान्तम्[१७] । मेघम्[१८] । उत्सिञ्च[१९] । उत्सिक्तमुदकं च पृथिव्यां[२०] निषिञ्च[२१] । स्यन्दन्ताम्[२२] । कुल्याः[२३] । विमुक्ताः[२४] । पुरस्तात्[२५] । उदकेन । द्यावापृथिवी[२६] । विविधं[२७] क्लेदय । सुप्रपाणम्[२८] । भवतु । गोभ्यः ।

---

१. Omitted by P.
२. भूम्यभिमुखं शब्दय Sy. अभितः सर्वतः शब्दं कुरु BB.
३. तदेव पुनरुच्यते दाढर्याय, गर्ज Sy. उच्चैर्गर्ज BB.
४. गर्भस्थानीयमुदकम् ओषधीषु Sy. ततश्च गर्भं मेघस्योदकम् BB.
५. परिदीय सर्वतो गच्छ। दयतिश्छान्दसो गतिकर्मा BB.
६. रंहणेन BB.
७. दृतिवदुदकधारकं मेघम् Sy. चर्ममयो जलाधारविशेषो दृतिस्तद्वत् BB.
८. ततस्तं मेघम् BB.
९. सुखेन BB.
१०. कर्षत P. आकर्ष वृष्ट्यर्थम् । यद्वा विषितं विमुक्तबन्धनमेवं कर्ष Sy. निपादा निम्ना उदकेन सर्वं समीकृतमस्तु एवमश्वात्मनाऽग्निः स्तूयते BB.
११. विषता० P. वर्षितास्य D. विशेषेण सितं बद्धम् Sy. विमुक्तद्वारम् BB.
१२. सीची० D. न्यगधोमुखम् Sy. अवाङ्मुखीकृतम् BB.
१३. एकस्थाः उदकपूर्णा भवन्त्वित्यर्थः Sy. ततश्चैवं त्वया कृते समा भवन्तु । तुल्या भवन्तु BB.
१४. एवं कृते, ऊर्ध्ववन्त उन्नतप्रदेशाः Sy. उन्नतेन स्थलेन BB.
१५. न्यग्भूतपादा निकृष्टपादा वा निम्नोन्नतप्रदेशाः Sy.
This stanza=TS.3.1.11.6.
१६. हे पर्जन्य ! त्वम् Sy.
१७. प्रवृद्धम् Sy.
१८. कोशस्थानीयं मेघम् Sy.
१९. उद्गच्छ । उद्गमय वा Sy.
२०. ०थिव्या P.
२१. तथा कृत्वा नीचैः क्षारय Sy.
२२. प्रवहन्तु Sy.
२३. नद्यः Sy.
२४. ०क्ता D. विष्यूताः सत्यः Sy.
२५. पूर्वाभिमुखम् । प्रायेण नद्यः प्राच्यः स्यन्दन्ते Sy.
२६. दिवं च पथिवीं च Sy.
२७. अत्यधिकम् Sy.
२८. सुप्राणं D. सुष्ठु प्रकर्षेण पातव्यमुदकम् Sy.

यत्प॑र्जन्य॒ कनि॑क्रदत्स्त॒नय॒न् हंसि॑ दु॒ष्कृतः॑ ।
प्रतो॒दं विश्वं॑ मोद॒ते यत्किं च॑ पृथि॒व्यामधि॑ ॥ ६ ॥

यत् पर्जन्यः[१] । यदा[२] । पर्जन्यः[३] । शब्दं कुर्वन्[४] । स्तनयंश्च[५] । हंसि[६] । रक्षांसि[७] । प्रमोदते तदा[८] । एनम्[९] । विश्वम्[१०] । यत् । किम् । चित्[११] । पृथिव्याम्[१२] । अधिवसति ।

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उं ।
अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषाम् ॥ १० ॥

अवर्षीः[१३] । अवर्षीः[१४] । वर्षम्[१५] । सुष्ठु । च । उद्गृहीतवानसि[१६] ! तथा[१७] निरुदकानपि देशान्[१८] । करोति[१९] । गन्तुम्[२०] । तथौषधीश्च । भोजनाय[२१] । अजीजनः[२२] । उत[२३] । प्रजाभ्यः[२४] । प्रज्ञाम्[२५] । अलम्भयः[२६][२७] ।

---

१. VM. seems to take पर्जन्य as पर्जन्यः।
२. यदा त्वम् Sy.
३. ०न्य P., D.
हे पर्जन्य ! Sy.
४. अत्यर्थं शब्दयन् Sy.
५. स्तनयित्वंश्च P.
६. विदारयसि Sy.
७. पापकृतो मेघान् Sy.
८. तदानीं प्रति मोदते Sy.
९. तदेनं D. एनत् is suggested for एनम् ॥
इदम् Sy.
१०. जगत् Sy.
११. च P.
१२. भूम्यामधिष्ठितं यच्चराचरात्मकं तदिदं विश्वं मोदते हृष्यति । वृष्टेः सर्वजगत्प्रीतिकारणत्वं प्रसिद्धम् Sy.
१३. Omitted by D.
१४. इयमतिवृष्टिविमोचनी । हे पर्जन्य ! त्वम् Sy.
१५. ०र्षी D.
वृष्टवानसि Sy.
१६. उत्कृष्टं गृहाण । परिहरेत्यर्थः Sy.
१७. यथा P.
१८. निरुदकप्रदेशान् Sy.
१९. अन्तरोपि P. करोषि is suggested for करोति ॥ जलवतः कृतवानसि Sy.
२०. अतिक्रम्य गन्तुम् Sy.
२१. धनाय भोगाय वा Sy.
२२. उदपादयः Sy.
२३. अपि च Sy.
२४. प्रजाभ्यः सकाशात् Sy.
२५. स्तुतिम् Sy.
२६. ०य P.
प्राप्तवानसि Sy.
२७. VM. ignores कम् ॥ कम् इत्ययं 'शिशिरं जीवनाय कम्' इतिवत्पादपूरणः (N. 1.10.) Sy.
Ms. D. puts the figure ॥८३॥ here to indicate the end of the eighty-third hymn. No such number is given in P.

V.84.

**ब॒ळि॒त्था पर्व॑तानां खि॒द्रं बि॑भर्षि पृथिवि ।**
**प्र या भूमिं॑ प्रवत्वति म॒ह्ना जि॒नोषि॑ महिनि ॥ १ ॥**

बळित्था[1] । सत्यं त्वम्[2] । मेघानाम्[3] । छेदनम्[4] । अमुत्र[5] । धारयसि[6] । पृथिवी[7] ! प्रजिन्वसि[8] । या[9] । भूमिम्[10] । प्रवणवति[11] । महत्वेन[12] । उदकवति[13] ! इति पृथिव्या अधिदेवतां मध्यस्थानपठितां पृथिवीमाह[15] ।

---

१. 'बलित्था' इति तृचात्मकं द्वादशं सूक्तं भौमस्यात्रेरार्षं पृथिवीदेवताकमानुष्टुभम् । अनुक्रान्तञ्च 'बळित्था तृचं पार्थिवमानुष्टुभम्' (KSA.28. 84.p.21.) इति । सूक्तविनियोगो लैङ्गिकः । आद्या देवीनां हविःषु पृथिव्या अनुवाक्या । 'बळित्था पर्वतानां दृळ्हा चिद्या वनस्पतीन्' (ĀSS.6.14.)इति हि सूत्रितम् । भूमिस्तोमे चैषा मरुत्वतीयशस्त्रे सूक्तमुखीया' (ĀSS.9. 5.) इति Sy. अत्रेरार्षम् Dur., SKN.

२. द्विरूपा पृथिवी चैषा प्रत्यक्षा देवतापि च । मध्यस्थाना देवतोक्ता सा च सम्बोध्य वर्ण्यते Sy.

३. यथाभूतम् Dur. सत्यम् SKN. बळिति सत्यनाम Ngh. 3.10. ४. पर्वतानाम् P. पर्वतानां मेघानां वा । येन पर्वता मेघाः Dur. मेघानाम् SKN. मेघनामैतत् Ngh.1.10.

५. च्छे० D. खेदनं भेदनम् Sy. बिलं हिरण्यादिपूर्णम् BB. छेत्तुं शक्यन्ते तद्बलम् Dur. खेदनकरम् । किम् ? सामर्थ्याद् बलम् SKN.

६. ०त्रं P. इत्थम् अमुत्र अन्तरिक्षे वा Sy. इत्थमिदं यद्वक्ष्यामः BB. अमुत्रेत्यर्थः, . . . . अमुष्मिन्नन्तरिक्षलोके वर्तमानाः Dur. इत्थाशब्दोऽमुत्रेत्यस्मिन्नर्थे । . . . . अमुत्रान्तरिक्षे वर्तमानानाम् SKN. ७. या त्वं द्रविणवती धारय विस्तीर्णा खलु त्वम् BB.

८. VM. seems to take पृथिवि as पृथिवी ॥ हे प्रथनवति ! मध्यस्थानदेवते ! Sy. विस्तीर्णे BB. हे पृथिवि ! माध्यमिके ! Dur. विद्युत्स्तनयित्नुलक्षणया वाचोऽधिदेवते SKN.

९. ०ज० P. प्रकर्षेण प्रीणयसि Sy. प्रकर्षेण प्रजास्तर्पयसि, यस्मात् प्रवणवती, अत एव पूजिता 'जिवि प्रीणने' BB. प्रजिन्वसि वर्षमुत्सृजन्ती Dur. प्रजिनोषीति सम्बन्धः । . . . . जिन्वतेः प्रीतिकर्मण इदं रूपम् । प्रजिन्वसि प्रकर्षेण प्रीणयसीत्यर्थः SKN.

१०. या त्वम् BB., Dur., SKN.

११. प्रत्यक्षां पृथिवीम् Sy. हे भूमे ! BB.

१२. ०णपति P. हे प्रकर्षवति ! प्रवणोदकवति ! वा Sy. प्रवत् प्रगतम् । प्रवणम् । . . . हे तद्वति ! BB. गमनवति Dur. प्रवणार्थस्य प्रवत इति । प्रवद्गात्रोदकम् । प्रवणमागमनम् । तेन तद्वति हे उदकवति ! गमनवति ! वेत्यर्थः SKN. १३. ०त्वे० is suggested for ०त्वे० ॥ महत्त्वेन महतोदकेन वा Sy. या त्वं मह्ना माहात्म्येन BB. महतोदकेन SKN.

१४. अन्नवति P. महति ! Sy. महेरौणादिको निप्रत्ययः BB. महति ! अथवा, उदकवति ! या त्वमेवं भूमिं प्रजिन्वसि सा कथं न मेघानां पर्वतानां छेदनसमर्थं बलं धारयिष्यसि ? अवश्यं धारयसीत्यभिप्रायः Dur. महो महत्त्वमुदकं वा प्रभूतं तेन तद्वति । तदाह भाष्यकारः—'महतीत्युदकवती वेति' SKN.

१५. केचिदाहुः । सत्यमित्थं पर्वतानां मेखलानां खिन्द्रं छेदनप्रवहमुदकं बिभर्षि । पृथुत्वात्प्रभूतं वर्षोदकं बिभर्षि । या त्वं प्रवणवती प्रवणगामिनी, उदकेन मह्ना महता विश्वमिदं प्रकर्षेण जिनोषि तर्पयसि, अत एव महनीयासि । अनेनैव क्रमेण सर्वहिरण्यादिलाभहेतुत्वात् BB. सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं (भेदनं) बलममुत्र धारयसि पृथिवि ! प्रजिन्वसि या भूमिम् । प्रवणवति । महत्त्वेन । महतीत्युदकवतीति वा N. 11.37.; SKN. IV.84. This stanza=TS.2.2.12.2.

स्तोमा॑सस्त्वा विचारिणि॒ प्रति॑ ष्टोभन्त्य॒क्तुभिः॑ ।
प्र या वाजं॒ न हेष॑न्तं पेरुमस्य॑स्यर्जुनि ॥ २ ॥

स्तोमासः । स्तोमासः[1] । त्वा[2] । विचरणस्वभावे[3] ! प्रत्यर्चन्ति[4] । हविर्भिः सह[5] । प्रक्षिपसि[6] । या[7] । अश्वम्[8] । इव । शब्दं[9] कुर्वन्तम् । पूरकं[10] मेघम् । शुक्लवर्णे[11] !

दृ॒ळ्हा चि॒द्या वन॒स्पती॑न्क्ष्म॒या दर्ध॒र्ष्योज॑सा ।
यत्ते॑ अ॒भ्रस्य॑ वि॒द्युतो॑ दि॒वो वर्ष॑न्ति वृ॒ष्टयः॑ ॥ ३ ॥

दृढा चित्[12] । दृढान्[13] । अपि[14] । वनस्पतीन्[15] । अनया पृथिव्या[16] । यान्[17] । त्वं धारयसि[18] । बलेन[19] । यदा[20] । तव[21] । अभ्रस्य[22] । विद्योतमानस्य[23] । द्युलोकस्य[24] । वर्षन्ति[25] । उदकानि पर्जन्यः[26] पतन्ति वोदकानि[27] तदा धारयसि ।[28]

---

१. स्तोतारः Sy. स्तोमास्स्तोत्राणि BB.

२. त्वाम् Sy.

३. पिचर॰ P. हे विविधं चरणशीले ! पृथिवि ! देवि ! Sy. विविधं चरणं गमनं भक्षणं वा विचारः । हे तद्वति ! BB.

४. प्रत्यर्धन्ति D. अभिष्टुवन्ति Sy. प्रत्येकं प्रतिमुखा वा स्तुवन्ति BB.

५. गमनशीलैः स्तोत्रैः Sy. त्वदीयैः कर्मभिरपदानैः स्तुतिभिः स्तोत्रभक्तिभिः BB.

६. प्रतिक्षि॰ D.

७. त्वम् Sy. या त्वं तथा स्तूयमाना BB.

८. उद्वृत्तम् Sy. यथा दुष्टो वाजी निरर्थकाञ्छब्दान्करोति, एवं निरर्थकशब्दाभिधायिनममन्त्रार्थज्ञमिति । किञ्च वाजमिव बलमिव पेरुमश्वमिव पानशीलमुपलक्षणत्वात् पानाशनमात्रकृतार्थमयज्ञार्हं पुरुषं प्राप्स्यसि त्वं खल्वर्जुनीति । सर्वे स्तोत्रादयस्त्वामेव स्तुवन्ति । तेषां च मध्ये वाजिनमिव हेषन्तमिव पेरुं त्वं नाद्रियसे तस्मात्तादृशानस्मांस्त्वामेव स्तुवतो हिरण्यादिदानेन तृप्तान् कुर्विति BB.

९. शब्दयन्तम् Sy. शब्दवन्तम् BB.

१०. दुष्टम् BB.

११. हे शुभ्रवर्णे ! गमनशीले ! वा Sy. हे अर्जुनि ! निर्मले ! BB.

This stanza=TS.2.2.12.3.

१२. देवानां हविःषु 'दृळ्हा चित्' इति पृथिव्या याज्या । एषैव भूमिस्तोमे निष्केवल्ये सूक्तमुखीया । सूत्रं तु पूर्वमेवोदाहृतम् Sy.

१३. हे पृथिवि ! Sy.

१४. दृळ्हा । 'सुपां सुलुक्॰' इति तृतीयाया आकारः । दृढया Sy.

१५. वृक्षान् Sy.

१६. भूम्या सह Sy.

१७. या Sy.

१८. धारयसि । अथवा दृढेति विधेयविशेषणम् । वनस्पतीन् दृढान् कृत्वा धारयसीत्यर्थः Sy.

१९. बालो P.

२०. यस्याः Sy.

२१. तव सम्बन्धिनः Sy.

२२. पञ्चम्यर्थे षष्ठी । अभ्रादपां हर्तुः Sy.

२३. विद्योतमानात् Sy.

२४. अन्तरिक्षादादित्याद्वा Sy.

२५. द्वर्ष॰ D. वर्षति is suggested for वर्षन्ति ।

२६. द्वर्षन्त्वयि तानि P. वर्षका मेघाः Sy.

२७. चोद॰ P. अथवा । यत् यस्यास्ते तवाभ्रस्य मेघस्य वृष्टय उदकसङ्घाता विद्युतो विद्योतमानाया दिवः सकाशाद् वर्षन्ति पतन्ति Sy.

२८. Ms. D. puts the figure ॥८४॥ here to indicate the end of the eighty-fourth hymn. No such number is given in P.

V.85.

प्र स॒म्राजे॑ बृ॒हद॑र्चा ग॒भी॒रं ब्रह्म॑ प्रि॒यं वरु॑णाय श्रु॒ताय॑ ।
वि यो ज॒घान॑ शमि॒तेव॒ चर्मो॑प॒स्तिरे॑ पृथि॒वीं सूर्या॑य ॥ १ ॥

प्र[1] सम्राजे[2] । प्रोच्चारय[3] । सर्वेषां राज्ञे[4] । बृहत्[5] । गम्भीरम्[6] । प्रियम्[7] । ब्रह्म[8] । वरुणाय[9] । श्रुताय[10] । विहन्ति[11] । यः[12] । शमितेव[13] । मध्यमस्थानपठितां पृथिवीम्[14] । सूर्याय[15] पर्जन्याय । उपस्तरणार्थमविभिः[16] पृथिवीं छादयितुम्[17], अपि वा मेघश्चर्म तं विहन्ति[18] पृथिवी[19] तेजसा छादयितुमिति ।

वने॑षु॒ व्य॑१॒न्तरि॑क्षं ततान॒ वाज॒मर्व॑त्सु॒ पय॑ उ॒स्रिया॑सु ।
हृ॒त्सु क्रतुं॒ वरु॑णो अ॒प्स्व॑१॒ग्निं दि॒वि सूर्य॑मदधा॒त्सोम॒मद्रौ॑ ॥ २ ॥

वनेषु । वनेषु हीदमेषु वृक्षाग्रेषु[20] । अन्तरिक्षम्[21] । विततम्[22] । तस्मादाह—'व॒नेषु॒ व्यन्तरिक्षं ततान'[23] । इत्यादि

---

१. 'प्र सम्राजे' इत्यष्टर्चं त्रयोदशं सूक्तमात्रेयं त्रैष्टुभं वारुणम् । अनुक्रम्यते च 'प्र सम्राजेऽष्टौ वारुणम्' (KSA. 28.85. p. 21.) इति । विनियोगो लैङ्गिकः Sy.

२. अत्रिः स्वात्मानं सम्बोध्य ब्रवीति । हे अत्रे ! त्वम् Sy.

३. प्रार्चय । प्रोच्चारयेत्यर्थः Sy.

४. सम्यग्राजमानायेश्वराय Sy.

५. प्रभूतम् Sy.

६. दुरवगाहं बह्वर्थोपेतम् Sy.

७. प्रियभूतम् Sy.

८. स्तोत्ररूपं कर्म Sy.

९. उपद्रवस्य निवारकाय जनानामावरकाय चैतन्नामकाय देवाय Sy.

१०. श्रुता P.
सर्वत्र श्रूयमाणाय Sy.

११. विस्तारयामास । विस्तृतं हि व्यवहारयोग्यं भवति, तस्मात् व्यवहारायान्तरिक्षं विस्तारितवान् । 'उरुं हि राजा वरुणश्चकार' (RV. I. 24.8.) इति ह्युक्तम् Sy.

१२. वरुणः Sy.

१३. शिवतेव P. शमिता पशुविशसनकर्ता यथोपस्तरणाय चर्म हन्ति तद्वत् Sy.

१४. विस्तीर्णमन्तरिक्षम् । 'तृतीयस्यां पृथिव्याम्' (TS. 1.2.12.1.) इति श्रुतेरन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वम् Sy.

१५. सूर्यस्य Sy.

१६. ०मविभि P., D.

१७. छापितुम् P. छादितुम् D.
आस्तरणाय Sy.

१८. वहृ० P., D.

१९. ०वी P.

२०. वृक्षाग्रेषु Sy. वनगतवृक्षाग्रेषु Mah. वृक्षेषु वृक्षखण्डेषु वा BB.

२१. अन्तरिक्षमाकाशम् Mah., U. भूताकाशम् BB.

२२. बन्धनहेतुना वस्त्रेण परितो वेष्टयित्वेत्यर्थः । वि उपसर्गस्तततानेत्यनेन सम्बध्यते ।.... यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र मूर्तद्रव्याभावादत्यन्तं विस्तारितवान् Mah. वीत्ययमुपसर्गस्तततानेत्यनेन सम्बध्यते ।....वितनोति ।....यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र मूर्तद्रव्याभावादुपलभ्यत एव U. विस्तारितवान् BB.

२३. ०दाह पतेषु ह्यन्तरिक्षं तदान P. Cf. SB. 3.3.4.7 p. 253. विस्तारितवान् Sy.

वाजसनेयकम्[1]। वलम्[2]। अश्वेषु[3]। पयः। गोषु[4]। प्रज्ञानम्[5]। वरुणः[6]। अप्सु[7]। अग्निम्[8]। दिवि[9] च। अर्यमणम्[10]। अदधात्[11]। सोमं[12] च। अद्रौ[13]। तत्र ब्राह्मणम्—'अद्रिषु[14] ह्रीदमेषु गिरिषु सोमो हितः' इति[15]।

१. वाजं बलं विततानेत्यनुवर्तते। यद्वाऽर्वत्सु पुरुषेषु वाजं वीर्यं वितताना। 'व॒ी॒र्यं वै वा॒जः पु॒मांसो-ऽर्वन्तः' (SB. 3.3.4.7.p.253) इति श्रुतेः Mah. वाजं वीर्यम् U.
वाजं वेगम् BB.

२. अश्वेषु विततान Sy. BB.
पुरुषेषु ततानेत्यनुवर्तते U.

३. क्षीरम् Sy., Mah.,U., BB.

४. उस्रियेति गोनाम (Ngh.2.11.)। उत्स्राविणोऽस्यां भोगा इति तद्व्युत्पत्तिः Sy. उस्रियाशब्दो गोनामसु पठितः Mah. अहन्तव्या अघ्नियाः BB.

५. कर्मसङ्कल्पम्। यद्धि मनसा ध्यायति तत्कर्मणा करोति Sy. क्रतुं सङ्कल्पं तच्छक्तियुक्तं मनः Mah. क्रतुः सङ्कल्पः, हृदयेषु सङ्कल्पम् U.
विज्ञानम् BB.

६. अयं वरुणः Sy. य एवं मन्त्रद्वयोक्तद्युलोकस्तम्भनादिसामर्थ्यवान् परब्रह्मलक्षणो वरुणस्तं वयं स्तुम इति शेषः Mah. य एवं परब्रह्मलक्षणो वरुणस्तं वयं स्तुम इति शेषः U.
वरुणशब्दवाच्यः सोमः BB.

७. वरुणेषु P. वरुणेप्सु D. उदकेषु Sy. प्रजासु Mah.,U. मर्त्येषु BB.

८. वैद्युतमौर्वं वा सर्वत्र विततानेति सम्बन्धः Sy.
जठराग्निम् Mah.

९. द्युलोके Sy., Mah.,U.

१०. P. reads चर्यम् for च। अर्यमणम्॥
चार्यमम् D. सूर्यम् Sy.

११. स्थापितवान् Sy. स्थापितवान्। पर्वतपाषाणसन्धिषु सोमवल्ल्योत्पद्यमानत्वादद्रौ सोमस्थापनमुक्तम्। तदाह तित्तिरिः—'सोममद्रावित्याह ग्रावाणो वाऽद्रयस्तेषु वा एष सोमं निदधाति' इति Mah. स्थापितवान् U., BB.

१२. सोमं वल्लीरूपम् Mah. लतारूपमात्मानम् BB.

१३. अत्रौ P. पर्वते Mah. अद्रिषु U. अद्रावदधादित्येव। त्वमेव यथैतत्सर्वमकरोस्तथा वाससाऽत्मानं वेष्टयामि BB.

१४. अद्रिषु P., D.
पर्वतेऽदधात् Sy.

१५. VM. ignores हृत्सु॥ हृत्सु हृदयेषु Sy., Mah.
स पर्याणह्यति। वनेषु व्यन्तरिक्षं ततानेति वनेषु ह्रीदमन्तरिक्षं विततं वृक्षाग्रेषु वाजमर्वत्सु पय उस्रियास्विति वीर्यं वै वाजाः पुमाꣳसोऽर्वन्तः पुꣳस्वेवैतद्वीर्यं दधाति पय उस्रियास्विति पयो ह्रीदमुस्रियासु हितꣳ हृत्सु क्रतुं वरुणो विक्ष्वग्निमिति हृत्सु ह्ययं क्रतुर्मनोजवः प्रविष्टो विक्ष्वग्निमिति विक्षु ह्ययं प्रजास्वग्निर्दिवि सूर्यमदधात्सोममद्राविति दिवि ह्यसौ सूर्यो हितः सोममद्राविति गिरिषु हि सोमस्तस्मादाह दिवि सूर्यमदधात्सोममद्राविति SB.3.3.4.7. p.253.
This stanza=YV. 4. 31.=TS. 1. 2. 8. 1.

नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ३ ॥

नीचीनद्वारम्[1] । नीचीनद्वारम्[2] । वरुणः[3] । मेघम्[4] । प्रसृजति[5] । त्रीन् लोकान्[6] प्रति । तेन[7] । सर्वस्य । भुवनस्य[8] । राजा[9] । यवम्[10] । इव । वृष्टिः[11] । व्युनत्ति[12] । पृथिवीम्[13] ।

---

१. अत्रेरार्षम् Dur. VM. reads ०द्वारम् for ०बारम् of the text.

२. अधोमुखबिलम् Sy. न्यगच्यते द्वारं यस्य स भवति नीचीनद्वारोऽधोद्वारस्तम्. . . . अधोबिलं कृत्वा Dur. नीचीनमधोमुखं वारं द्वारं सदादिलोपेन वर्णव्यापत्त्या च वारमुदकनिर्गमनम् । नीचं वारं यस्य स नीचीनवारोऽधोमुखबिलस्तम् SKN. ३. मध्यमः Dur.

४. कवनमुदकं तत् धीयतेऽत्रेति कवन्धो मेघः । तं तथाकरोत् । अथवा कवन्धमुदकम् । तदुदकं निर्गमनबिलं चकार । मेघं विदार्योदकमधोमुखं चकारेत्यर्थः Sy. कवन्धो मेघः कवतेर्गतिकर्मणः । कवनमुदकं तस्मिन्धीयत इति । द्वितीयाश्रुतेः कृत्वेति शेषः । अधोमुखबिलं कृत्वा वरुणः SKN. अत एव मेघसम्बन्धात् कवनमुदकम् Dur.

५. कृतवान् Sy. प्रसृजति महत्त्वेन, नह्यमहानेतच्छक्नुयात् कर्तुम् Dur. प्र इत्येष वीत्येतस्य स्थाने । विसृजति विक्षिपति । किम् ? सामर्थ्यादुदकम् । अथवा—कवन्ध इत्येतेनोदकमेवोच्यते । उदकनामसु पाठात् (Ngh. 1.12.) नीचीनवारमित्येषा द्वितीया पञ्चम्यर्थे । नीचीनवारमेघाद् वरुणः कवन्धमुदकं मुञ्चति SKN.

६. VM. seems to explain रोदसी and अन्तरिक्षम् together as त्रीन् लोकान् ॥ द्यावापृथिव्यावन्तरिक्षं च प्रति लोकत्रयहितायेत्यर्थः Sy. द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन सर्वमापूरयिष्यन्निव Dur. द्वितीयाश्रुतेरत्र कर्मप्रवचनीयप्रतिशब्दाध्याहारः । द्यावापृथिव्यौ प्रति SKN.

७. प्रति तौ P. उदकेन Sy. ततस्तेनातिप्रभूतेनोदकेन विसृष्टेन Dur. यत्तेन चोदितेन SKN.

८. भवस्य P. भूतजातस्य Sy. SKN. भूतजातस्योदकस्य वा Dur.

९. स्वामी Sy. ईश्वरः Dur. ईश्वरो वरुणः SKN.

१०. यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वद्भूमिं सर्वत्रोनत्ति । अथवा वृष्टिर्वरुण इति सम्बन्धः । वर्षकः पर्जन्य इत्यर्थः । अस्मिन् पक्षे यवं पुरुष इवेति पुरुषशब्दोऽध्याहार्यः Sy. यवग्रहणमत्र यवादेर्धान्यबीजस्योपलक्षणार्थम् । यथा यवादिधान्यबीजम् SKN.

११. सेक्ता पुमान् Sy.

१२. वृष्टिं व्युनक्ति P., D. क्लेदयति Sy. कश्चित्सत्कर्षी स्वल्पं. . . . व्युनत्ति विविधमुनत्ति क्लेदयति Dur. विविधं क्लेदयति SKN.

१३. भूमिम् Sy. भूमिं कृत्स्नां यः सोऽस्माकमिदं नाम करोतु । अथ चैवमन्यथा योज्यम्—प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च प्रकर्षेण सृजत्युत्पादयति महत्त्वेन । यस्माच्चोत्पादयति तस्मात् स एव भुवनस्य राजा विश्वस्य भुवनस्य भूतजातस्य तेन हेतुना तदनुग्रहाय नीचीनद्वारमधोबिलं मेघं कृत्वा यवमिव वृष्टिर्व्युनत्ति भूमिमिति समानं पूर्वेण Dur. भूमिशब्दपर्यायोऽयमत्र द्रष्टव्यो बहुशब्दपर्यायो वा । भूमि समस्तां बहुधा यावत् किञ्चित्प्रसङ्गात्पठ्यमानस्यैव निर्वचनार्थमुपक्षेपः SKN. नीचीनद्वारं वरुणः । कवन्धं मेघम् । कवनमुदकं भवति । तदस्मिन् धीयते । उदकमपि कवन्धमुच्यते । वन्धिरनिभृतत्वे । कमनिभृतं च । प्रसृजति । द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन । तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिम् N. 10.4.; SKN. IV. 5.

उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् ।
समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः ॥ ४ ॥

उनत्ति[1] । क्लेदयति । पृथिवीम्[2] । अन्तरिक्षं च[3] । दिवम्[4] । च[5] । यदा[6] । वृष्ट्युदकम्[7] । कामयते । वरुणः । अनन्तरम्[8] । एव । संवासं कुर्वन्ति[9] । शिलोच्चयाः[10] । मेघेन । शत्रुषु बलमिच्छन्तः[11] । पार्थिवाः । वर्षसद्भावाय श्लथनं कुर्वन्ति[12] भिन्नाः[13] स्वेषु राष्ट्रेषु गच्छन्ति ।

इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम् ।
मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण ॥ ५ ॥

इमाम् । इमाम् । एव[14] । सुष्ठु । असुराणां हन्तुः[15] । विश्रुतस्य । वरुणस्य । महतीम् । मायाम्[16] । प्रब्रवीमि[17] । मानदण्डेनेव । तस्थिवान्[18] । अन्तरिक्षे । परिच्छिनत्ति[19] । यः[20] । सूर्येण । अन्तरिक्षम्[21] ।

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥ ६ ॥

इमाम्[22] । इमाम्[23] । खलु[24] । कवितमस्य[25] । मायाम्[26] । महतीम्[27] । देवस्य[28] । न कश्चित्[29] । आधर्षयति[30] ।

---

१. ०क्ति P., D. २. प्रथितम् Sy.
३. अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुक्तम् Sy. ४. द्युलोकम् Sy.
५. अपि च Sy. ६. यदा अयम् Sy.
७. उदकपूरणं अथवा दुग्धमुदकम् । तेन तत्कार्यमोषध्यादिकं लक्ष्यते । ओषध्यादयः प्रवर्धन्तामिति यदा कामयते Sy.
८. ०नरम् D.
९. समाच्छादयन्ति Sy.
१०. पर्ववन्तोऽद्रयः Sy.
११. ०लिमि० P., D.
१२. श्रथयन्ति मेघान् Sy.
१३. ०न्ना P. विशेषेण वृष्टेः प्रेरयितारो मरुतः Sy.
१४. ए P.
१५. सुराणां हन्तु P. असुरसम्बन्धिनः । असुराणामस्य च वध्यघातकभावः सम्बन्धः । असुरहन्तुरित्यर्थः । अथवासुरो मेघः प्राणदानात् तत्सम्बन्धिनः Sy. १६. प्रज्ञाम् Sy.
१७. कैषा माया ? सोच्यते Sy.
१८. तिष्ठन् Sy.
१९. परिच्छिनत्ति तस्यैषा माया Sy.
२०. वरुणः Sy. २१. ०रिक्षयं P.
२२. अत्रेरार्षम् Dur.
२३. सर्वप्रसिद्धाम् Sy.
२४. It seems to be the explanation of उ ॥ ऊनू पादपूरणौ SKN.
२५. प्रकृष्टप्रज्ञस्य Sy. मेधावितमस्य Dur. अतिशयेन मेधाविनः SKN.
२६. प्रज्ञाम् Sy., Dur., SKN.
२७. महतीं मायाम् Dur.
२८. द्योतमानस्य स्तुत्यस्य वा वरुणस्य Sy. द्योतमानस्य Dur. वरुणस्य समुद्राधिपतेः SKN.
२९. कञ्चित् D. नैव Sy. न कश्चिदपि Dur. कश्चिदपि SKN.
३०. हिनस्ति कश्चिदपि Sy. आधर्षयितुं शक्नोति Dur. आधर्षत्यभिभवति SKN.

यत्[1]। एकम्[2]। समुद्रम्[3]। उदकेन[4]। पूरयन्ति[5]। गच्छन्त्यश्चैतवर्णाः[6]। आभिमुख्येन गच्छन्त्यः[7]। नद्यः।

अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा।
वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत् ॥ ७ ॥

अर्यम्यम्। अर्यमैवार्यम्यो[10] योऽस्मभ्यम् प्रयच्छति यः। वा[11]। मित्रं[12] भवति। यो वा[13]। समानख्यानः[14]। यो वा। भ्राता। यो वा। समीपगृहस्थः[15]। यो वा। गृहस्थः। यो वा। गृहमागतः[16] एतान् सर्वान्। यद् वयम्। पापम्[17]। कृतवन्तः। तत्[18]। विश्लथय[19]।

१. यस्मात् Sy.
२. कतमां मायामिति ? एकमेतं सन्तं वरुणमादित्यम् Dur. एकं सन्तम् SKN.
३. उदधिम् SKN.
४. एता उध्ना उदकेन रश्मिना Dur.
५. न पूरयन्ति Sy. न प्रीणयन्ति बुद्धया Dur. न पूरयन्ति SKN.
६. एन्यः शुभ्रा गमनशीला वा Sy. नद्य एनीर्गमनशीलाः सततमुदकमादायादित्यमण्डलं गच्छन्तेत्येवं नामाहर्निशमेता गच्छन्त्यः Dur. 'इण् गतौ' इत्यस्यैतद्रूपम्। एनशब्दस्य च शुक्लपर्यायस्य 'वर्णादनुदात्तात्०' (Pa.4.1.39.) इत्येवमीकारः। व्यत्ययेन द्वितीया प्रथमस्यार्थे। एन्यो गमनस्वभावाः शुक्लवर्णा वा। अधोभिगमनस्वभावाः शुक्लोदकवर्णस्वभावत्वाच्छुक्लवर्णाः SKN.
७. ०न्त्यश्चैतवर्णाभि० P., D. उदकमासेचयन्त्यः Sy. समुद्रं सिञ्चन्त्यः Dur. आभिमुख्येन सिञ्चत्यः पूरयन्त्य इत्यर्थः SKN.
८. बह्व्यो नद्यः सर्वदोदकेन पूरयन्त्योऽपि नैकमपि समुद्रं पूरयन्तीति। इदं वरुणस्य महत्कर्मेति। अत्रान्तरिक्षविस्तारादिसमुद्रापूरणपर्यन्तं कर्म परमेश्वरस्यैवोचितं न वरुणस्येति न वाच्यं तस्य वरुणादिरूपावस्थानात्। एष ब्रह्मेत्यादिश्रुतेः Sy. नद्य इव।....तेषां रश्मीनां मायामेवंलक्षणां भगवतो वरुणस्याधर्षयितुमभिभवितुं विज्ञातुं न शक्नोति कश्चिदपि कथयितुम्। कथमप्ययं न सम्पूर्यत इति। एवमत्र वरुणः प्रज्ञया स्तूयते Dur. नदीनामेदम् (Ngh. 1.13.)। गङ्गाद्या नद्यः।.... गङ्गाद्या हि नद्यः प्रभूतेन स्वेन स्वेनोदकेन सततमापूरयन्त्यस्तत् समुद्रं जलाद् धारयन्ति। सैषा वरुणस्य माया एतां न कश्चिदभिभवति SKN. N. 6.13; SKN. II.432.
९. VM. ignores नु and न ॥ ऊनु इति पूरणौ Sy.
१०. ०र्यमेवा० P. प्रदातारमित्यर्थः। अथवेरणात् मननाच्च शास्तीत्यर्यमा गुरुः। तम्। स्वार्थिको यत्। अर्तेरिदं रूपम् Sy.
११. अथवा Sy.
१२. 'ञिमिदा स्नेहने' इत्यस्मात् मित्रम्। स्वार्थिको यत्, अनुरक्तमित्यर्थः Sy.
१३. अथवा Sy.
१४. समानख्यानम् Sy.
१५. ०ग्रह० P. निकटनिकेतनवर्तिनम् Sy.
१६. ग्रह० P. अरणं वा अशब्दमित्यर्थः। अथवारणमदातारं वा Sy.
१७. अपराधम् Sy.
१८. अस्मत्तो विनाशय Sy.
१९. VM. ignores वरुण and इत् ॥

क्<u>ति</u>तवा<u>सो</u> यद्रि॑रि<u>पु</u>र्न दी॒वि यद्वा॑ घा स॒त्यमु॒त यन्न वि॒द्म ।
सर्वा॒ ता वि ष्य॑ शिथि॒रेव॑ दे॒वाधा॑ ते स्याम वरुण प्रि॒यास॑: ॥ ८ ॥

कितवासः[१] । कितवाः[२] । अस्मासु दलितं पणिमिव पापम्[३] । देवने[४] तत्रत्यं यदृणमस्माकमस्तीत्यर्थः । तत्र तस्यावश्यकर्तव्यत्वान्न शब्दः,[५] तथा च मन्त्रः—'यददीव्यन्नृणमहं बभूव'[६] इति[७] । यत्[८] । वा[९] । खलु[१०] । सत्यमृणं[११] वा बुद्धिपूर्वं कृतम् । अपि वा[१२] । यत्[१३] । न । जानीमः[१४] । सर्वाणि । तानि[१५] । विश्लथय[१६] । शिथिलानीव बन्धनानि[१७] । अत ऊर्ध्वम्[१८] । तव[१९] । स्याम[२०] । वरुण[२१] । प्रियासः[२२] ।

## V.86.

इन्द्रा॑ग्नी॒ यमव॑थ उ॒भा वाजे॑षु॒ मर्त्य॑म् ।
दृ॒ळ्हा चि॒त्स प्र भे॑दति द्यु॒म्ना वाणी॑रिव त्रि॒तः ॥ १ ॥

इन्द्राग्नी[२३] । हे इन्द्राग्नी ! पालयथः[२४] । उभौ सहितौ[२५] । सङ्ग्रामेषु । मनुष्यम्[२६] । दृढानि । अपि ।

---

१. सं P., D. २. किता P. कितवा द्यूतकृतः । किं तवास्ति सर्वं मया जितमिति वदतीति कितवः Sy. स्वार्थसाधनतत्पराः कितवेति प्रवर्तमाना ऋत्विजः BB. ३. पणिनिव D.

४. द्यूते यथा यद्रिरिपुः लेपयन्ति पापमारोपयन्ति तथास्मासु द्वेष्टारो मयि त्वमेतत् पापमकरोः इत्याक्षिपन्ति । अत्र पुरस्तादुपचारोऽपि नकार उपमार्थीयः Sy. न तु देवने सम्यग्व्यवसिताः प्रवर्तन्ते । दिवेरौणादिकेक्सिचि छान्दसं दीर्घत्वम् BB. ५. तत्रस्तस्यावश्याप्रति॰P., D.

६. ॰दीप्यन्नृ॰ P., D. यद् येन रिरिपुर्नाशितवन्तोऽस्मान् BB. ७. AV.VI.119.1[a]; TA.2.4.1[a]. AV reads कृणोमि for बभूव ८. पापम् Sy.

९. अथवा Sy. च BB. १०. घ इति पूरणः Sy. घ इति पादपूरणः प्रसिद्धौ वा BB.

११. आरोपमन्तरेण कृतवन्तः स्मः Sy. बुद्धिपूर्वमेव कृतं पापमश्रद्धादिना BB. १२. अपि च BB.

१३. अपि चायम् P. कृतं पापम् Sy. कृतमपि BB.

१४. न जानीमः सौकर्म्यात् BB.

१५. तानि तस्माद्दुश्चरितानि । 'शेश्छन्दसि' इति लोपः BB.

१६. विमोचय । स्यतिरुपसृष्टो विमोचने Sy. विमुक्तबन्धनानि कुरु क्षमस्वेति यावत् BB.

१७. शिथिलबन्धनानि फलानीव Sy. सुमोचनानीव विमुञ्च । कपिलकादित्वाल्लत्वविकल्पः BB.

१८. अध अनन्तरम् Sy. अथानन्तरं विमुक्तैनसो वयम् BB. १९. स्मा P., D. भवेम Sy. BB.

२०. हे देव वरुण ! BB.

२१. प्रयास P. प्रियाः Sy. इष्टाः BB.

२२. This stanza=TS. 3.4.11.6. MS. D. puts the figure ॥ ८५ ॥ here to indicate the end of the eighty-fifth hymn. No such number is given in P.

२३. 'इन्द्राग्नी यम्' इति षडृचं चतुर्दशं सूक्तमत्रेरार्षमानुष्टुभमैन्द्राग्नम् । षष्ठी विराट्पूर्वा । 'आद्यौ दशकावष्टकास्त्रयः' (KSA. 9.11. p. 4.) इति परिभाषितत्वात् । तथा चानुक्रान्तम्—'इन्द्राग्नी षळैन्द्राग्नमानुष्टुभं विराट्पूर्वान्तम्' (KSA. 28.86.p.21.) इति । विनियोगो लैङ्गिकः Sy. २४. रक्षथः Sy.

२५. ॰भे P., D. परस्परावियुक्तौ युवाम् Sy.

२६. मर्त्यम् Sy.

सः[1]। प्रभिनत्ति[2]। शत्रूणामन्नानि[3]। उदकानीव[4]। त्रितः ऋषिजननकाले स ह्यद्भ्य उत्पन्नः।[5]

**या पृत॑नासु दु॒ष्टरा॒ या वाजे॑षु श्र॒वाय्या॑।**
**या पञ्च॑ चर्ष॒णीर॒भीन्द्रा॒ग्नी ता ह॑वामहे ॥ २ ॥**

**या पृतनासु।** यौ। सेनासु[6]। दुष्टरौ[7]। यौ[8]। सङ्ग्रामे[9]। श्रवणीयौ[10]। पञ्च। जनान्[11]। अभिभवतः[12]। तौ[13]। इन्द्राग्नी। हवामहे[14]।

**तयो॒रिद॒मव॒च्छव॑स्ति॒ग्मा दि॒द्युन्म॒घोनोः॑।**
**प्रति॒ द्रुणा॒ गभ॑स्त्यो॒र्गवां॑ वृत्र॒घ्न एष॑ते ॥ ३ ॥**

**तयोरित्[15]।** तयोः। एवेदम्। अभिभवत्[16]। बलम्। तीक्ष्णं च[17]। आयुधम्[18]। धनवतोः[19]। तत्र[20] हस्तयोः स्थितेन। द्रुममयेन[21] चमसेनाध्वर्युः। प्रत्यभिमुखं गच्छति[22]। इन्द्राय[23]। गोसिद्ध्यर्थम्[24]।

**ता वा॒मेषे॒ रथा॑नामिन्द्रा॒ग्नी ह॑वामहे।**
**पती॒ तु॒रस्य॒ राध॑सो वि॒द्वांसा॒ गिर्व॑णस्तमा ॥ ४ ॥**

**ता वाम्[25]।** तौ[26]। वाम्[27]। रथेन[28]। आगमनाय[29]। अस्मदीयाम्[30]। इन्द्राग्नी[31]। हवामहे[32]। स्वामिनौ।

---

१. मर्त्यः Sy.
२. भिनत्ति Sy.
३. अन्नाम्म् D. द्योतमानानि धनानि शत्रुसम्बन्धीनि Sy.
४. प्रतिवादिवाक्यानीव । अथवा त्रिषु स्थानेषु वर्तमानोऽग्निः शत्रूणां वाक्यानीव Sy.
५. VM. ignores यम्।
६. पृतनासु Sy.
७. अनभिभाव्यौ Sy.
८. येन P.
९. सङ्ग्रामेष्वन्नेषु वा Sy.
१०. श्रवाय्यौ स्तुत्यौ Sy.
११. चर्षणयो मनुष्याः। तान् Sy.
१२. अभिरक्षत इति शेषः Sy.
१३. महानुभावौ Sy.
१४. स्तुमः Sy.
१५. ०रिदिति P. ०रिति D.
१६. अभिभावुकम् Sy.
१७. तीक्ष्णं वर्तते Sy.
१८. वज्रम् Sy.
१९. मघवतोरन्नवतोः धनवतोर्वा तयोः Sy.
२०. ०वतोस्तोत्र P.
२१. द्रुमविकारेण गमनशीलेन वा एकेन रथेन Sy.
२२. ०न्ति P. प्रतिगच्छतः Sy.
२३. आवरकमेघहननाय तथाविधवृत्रासुरवधाय वा Sy.
२४. ०सिध्य० D., P. एवम्भूतौ देवौ उदकानां पणिभिरपहृतानां वा गवां लाभाय Sy.
२५. हे देवौ! Sy.
२६. वक्ष्यमाणगुणौ Sy.
२७. युवाम् Sy.
२८. रथानाम् Sy.
२९. युद्धे रथानां प्रेरणाय Sy.
३०. स्म० P.
३१. इन्द्रमग्निं च परस्परयुग्मभूतौ Sy.
३२. स्तुमः Sy.

तारकस्य[1] । धनस्य[2] । विद्वांसौ[3] । अतिशयेन गीर्भिर्वननीयौ[4] ।

**ता वृधन्तावनु द्यून्मर्ताय देवावदभा ।**
**अर्हन्ता चित्पुरो दधेंऽशेव देवावर्वते ॥ ५ ॥**

ता वृधन्तौ । तौ । वर्धमानौ[5] । दिवसेषु[6] । मनुष्याय । देवौ[7] । हिंसारहितौ[8] । पूज्यौ[9] । पुरः[10] । स्थापयामि । अंशाविव[11] । देवौ यथैकस्यांशौ समानाकारौ[12] तथेन्द्राग्नी भवतो[13] यद्वद्वाश्वश्च[14] भगश्चादित्यौ द्वौ । भ्रातृव्याय[15] मर्ताय[16] ।

**एवेन्द्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभिः ।**
**ता सूरिषु श्रवो बृहद्रयिं गृणत्सु दिधृतमिषं गृणत्सु दिधृतम् ॥ ६ ॥**

एवेन्द्राग्निभ्याम्[17] । एवम्[18] । इन्द्राग्निभ्याम्[19] । हव्यम्[20] । हूयते[21] । वलकरम्[22] । घृतम् । इव । ग्रावभिः । अभिषुतम् । सोममयम् । तौ[23] । स्तोतृषु[24] । महतीम्[25] । कीर्तिम्[26] । धनं च । सुन्वत्सु[27] । धारयतम् । अन्नम् । च ।

---

१. जङ्गमरूपस्य Sy.
२. धनादिलक्षणस्य Sy.
३. सर्वज्ञौ Sy.
४. गीर्भिर्वननीयतमौ । ईदृशौ युवां हवामहे Sy.
५. सर्वदा प्रवृद्धावित्यर्थः । वर्धने दृष्टान्तः । मनुष्याविव । तौ यथा वर्धेते Sy.
६. प्रतिदिनम् Sy.
७. द्योतमानौ Sy.
८. अहिंस्यौ Sy.
९. प्रकर्षेण पूज्यौ तादृशौ महानुभावौ Sy.
१०. पुरस्कुर्वे Sy.
११. अंशो नाम द्वादशादित्यमध्यवर्ती देवः । स भगस्याप्युपलक्षकः अंशाविवादित्याविव । दीप्तावित्यर्थः Sy.
१२. ०मानामकरौ P.
१३. भतो P.
१४. यद्यद्वा० P.
१५. अर्वतेऽश्वलाभाय Sy.
१६. VM. ignores चित् ॥ चिदिति पूजायाम् Sy.
१७. ०ग्नी० P., D.
१८. इदानीं क्रियमाणप्रकारेण स्तुतिसाहित्येनेत्यर्थः Sy.
१९. ०ग्नी० D.
२०. हविः Sy.
२१. भूयते P. परित्यक्तमासीत् Sy.
२२. सोमरसमिव । तद्यथा युवाभ्यां प्रदीयते तद्वच्चरुपुरोडाशादिकमपि Sy.
२३. देवौ Sy.
२४. मेधाविष्वस्मासु Sy.
२५. प्रभूतम् Sy.
२६. अन्नं यशो वा Sy.
२७. VM. ignores गृणत्सु । दिधृतम् ॥ स्तुवत्सु । पुनरुक्तिरादरार्था Sy.
Ms. D. puts the figure ॥८६॥ here to indicate the end of the eighty-sixth hymn. No such number is given in P.

## V.87.

**प्र वो॑ म॒हे म॒तयो॑ यन्तु॒ विष्ण॑वे म॒रुत्व॑ते गिरि॒जा ए॑व॒याम॑रुत् ।
प्र शर्धा॑य॒ प्रय॑ज्यवे सु॒खाद॑ये त॒वसे॑ भ॒न्दद्इ॑ष्टये॒ धुनि॑व्रताय॒ शव॑से ॥ १ ॥**

प्र वो महे ॥ एवयामरुत् ॥ प्रगच्छन्तु[1] । युष्माकम्[2] । स्तुतयः । विष्णवे[3] । मरुत्वते[4] । गिरेर्जनयिता भवत्ययम्[5] । एवयामरुत्[6], गिरिति[7] वाचमाह[8] । प्रगच्छन्तु[9] । प्रकृष्टयज्ञाय[10] । मारुताय शर्धाय[11] । शोभनखादये[12] । वृद्धाय[13] । स्तूयमानयज्ञाय[14] । धूननकर्मणे[15] । वेगवते[16] मारुतं सूक्तम्, विष्णुत्यङ्गमिति[17] ।

**प्र ये जा॒ता म॑हि॒ना ये च॒ नु स्व॒यं प्र वि॒द्मना॑ ब्रु॒वत॑ ए॒व॒याम॑रुत् ।
क्रत्वा॒ तद्वो॑ मरुतो॒ नाधृ॑षे॒ शवो॑ दा॒ना म॒ह्ना तदे॑षा॒मधृ॑ष्टासो॒ नाद्र॑यः ॥ २ ॥**

प्र ये जाताः[18] । प्रब्रुवते[19] । महता यज्ञेन । प्रादुर्भूताः । ये । च । स्वयम्[20] । एव प्रादुर्भूताः[21] । प्रब्रुवते[22] । वेदनेनैव[23] । अथ प्रत्यक्षः[24]—कर्मणा[25] । तत्[26] । वः[27] । मरुतः[28] । न । आधर्षणाय भवति[29] । बलम् । दानेन[30] । महता[31] ।

---

१. 'प्र वो महे' इति नवर्चं पञ्चदशं सूक्तमेवयामरुदाख्यस्य आत्रेयस्य मुनेरार्षं मरुद्देवताकमतिजगतीच्छन्दस्कम् । तथा चानुक्रमणिका—'प्र वो नवैवयामरुन्मारुतमतिजागतम्' (KSA. 28. 87.p.21.) इति । दशरात्रे षष्ठेऽहनि तृतीयसवनेऽच्छावाकशस्त्रे इदं सूक्तम् । सूत्रितञ्च 'एवयामरुदुक्तो वृषाकपिना' (ĀSS. 8. 4.) इति Sy. २. तुभ्यम् । वचनव्यत्ययः Sy.

३. व्याप्तायेन्द्राय विष्णवे वा Sy.

४. मरुत्त्वते P. मरुद्भिस्तद्वते । कस्य स्तुतयः ? इत्युच्यते Sy. ५. वाचि निष्पन्नाः Sy.

६. एतन्नामकस्य ऋषेः । षष्ठ्या लुक् । अथवायमृषिर्गिरिजाः स्तुतेर्जनयिता भवति । उत्तरार्धे मरुत्स्तुतिः Sy. ७. गीरिति or गिरिरिति is suggested for गिरिति ।

८. The passage गिरिति वाचमाह should immediately follow गिरेर्जनयिता भवत्ययम् ।

९. प्रयन्तु स्तुतयः । कस्मै ? Sy.

१०. प्रकर्षेण यष्टव्याय Sy.

११. बलाय मारुताय । इतरत् सर्वं बलविशेषणम् Sy.

१२. ०खादाय D. शोभनाभरणाय । खादिराभरणविशेषः । 'हस्तेषु खादिश्च' (RV. I.168.3.) 'पत्सु खादयः' (RV. V.54.11.) इति च श्रुतेः Sy. १३. बलवते Sy.

१४. ०मानायज्ञा० P., D. स्तुतिरूपेष्टिर्यस्य तद्भन्ददिष्टि । तस्मै Sy. १५. कर्म P., D. मेघानां चालनं कर्म यस्य तादृशाय Sy.

१६. गमनवते Sy. १७. VM. ignores महे ।

१८. ०ता D.

१९. महता विष्णुना इन्द्रेण वा सह Sy.

२०. नु क्षिप्रम् Sy. २१. ०ता P., D.

२२. ब्रुवत इति व्यत्ययेन बहुवचनम् । एकवचने वा छान्दसः शः । निघाताभावश्छान्दसः । प्रेत्यमाख्यातेन वा सम्बन्धनीयः Sy.

२३. यज्ञगमनविषयज्ञानेन सह Sy.

२४. अथ प्रत्यक्षवादः Sy.

२५. चालनादिरूपेण कर्मणा युक्तम् Sy.

२६. प्रसिद्धम् Sy.

२७. युष्माकम् Sy. २८. ०तौ P., D.

२९. कैश्चिदप्याधर्षणीयं न भवति । अन्येषामसुरादीनां क्रत्वा कर्मणा वानभिभाव्यं भवति । कृत्यार्थे केन् Sy. ३०. अभिमतदानेन Sy.

३१. महत्त्वेन चोपेतम् । यूयं प्रबलाः Sy.

तत् । एषां बलं प्राप्यते तेऽमी भवन्ति । अनाधृष्टाः[१] । इव[२] । अद्रयः । प्राबल्येनैतदिदमेवयामरुतोक्तमित्युक्त-मेवयामरुदिति[४] ।

**प्र ये दिवो बृहतः शृण्विरे गिरा सुशुक्वानः सुभ्व एवयामरुत् ।**
**न येषामिरी सधस्थ ईष्ट आँ अग्नयो न स्वविद्युतः प्र स्पन्द्रासो धुनीनाम् ॥ ३ ॥**

**प्र ये दिवः ।** प्रश्रूयन्ते[५] । ये[६] । शब्देन । महतः । दिव आगन्तः[७] । सुष्ठु शोचयितारः[८] । महान्तः[९] । न । येषाम्[१०] । शत्रुः[११] । ईश्वरो[१२] भवति । स्थाने[१३] । च[१४] । अग्नयः । इव । स्वयमेव दीप्ताः[१५] । नदीनाम् । कम्पयितारः[१६] । प्रकर्षेण ते[१७] भवन्ति । समानमेवयामरुदिति[१८] ।

**स चक्रमे महतो निरुरुक्रमः समानस्मात्सदस एवयामरुत् ।**
**यदायुक्त त्मना स्वादधि ष्णुभिर्विष्पर्धसो विमहसो जिगाति शेवृधो नृभिः ॥ ४ ॥**

**स चक्रमे ।** सः[१९] । निश्चक्रमे[२०] । महतः[२१] । समानात्[२२] । स्थानात्[२३] । उरुक्रमणः[२४] । एवयामरुदित्युक्तार्थम्[२५] । यदा । युक्तः[२६] । स्वयमेव[२७] । स्वस्मात् स्थानात्[२८] । गन्तृभिः । अश्वैः[२९] । विगतस्पर्धाम्[३०] । विशिष्टपूजाम्[३१] । गच्छति[३२] । सुखस्य वर्धयिता स गणो यजमानानां[३३] तदानीमिति[३४] ।

---

१. ०न्त्येना० P. भन्त्येना० D. अधर्षणीयाः Sy.
२. तत्र दृष्टान्तः । ते यथा अधृष्यास्तद्वत् यूयमपि Sy.
३. ०ल्येख्यनतदिद० P.
४. ०मरुतोदि० P.
५. शृण्वन्ति तान् मरुतः Sy.
६. मरुतः Sy.
७. ०तः P. आगच्छन्तः is suggested for आगन्तः ॥ द्युलोकादागच्छन्तः Sy.
८. ०रौ P., D. दीप्ताः Sy.
९. सुष्ठु भवन्तः Sy.
१०. मरुताम् Sy.
११. ईरिता प्रेरिता Sy.
१२. ईशते च चालयितुम् Sy.
१३. सहस्थाने स्वकीये निवासे तिष्ठताम् Sy.
१४. आ इति चार्थे Sy.
१५. स्वयमेव विद्योतमानाः Sy.
१६. वर्षणेन चालयितारश्च Sy.
१७. Omitted by D.
१८. समानवेयाम० P. समानमेयाम० D. एवयामरुत् स्तुतवान् Sy.
१९. मरुद्गणः Sy.
२०. निरगच्छत् Sy.
२१. प्रवृद्धात् Sy.
२२. सर्वेषां साधारणात् Sy.
२३. अन्तरिक्षात् Sy.
२४. ०मेणः P., D. विस्तीर्णक्रमणः सन् Sy.
२५. एव मरुद्भिरित्यु० P. ऋषिः Sy.
२६. युक्तोऽभवदागमनप्रार्थनाय Sy.
२७. आत्मनैव Sy.
२८. स्वकीयस्थानात् Sy.
२९. स्वनेतृभिरश्वैः Sy.
३०. वगतस्पर्धान् D. अथ बहुवदुच्यते तदानीं विविधस्पर्धाः । अहं पुरतो गच्छाम्यहं पुरतो गच्छामीति तेषां स्पर्धा । अथवा विगतस्पर्धाः, न ह्येषां सार्धं स्पर्धकाः सन्ति Sy.
३१. विशिष्टबलाः Sy.
३२. निर्गच्छन्ति । व्यत्ययेनैकवचनम् Sy.
३३. ०मानान् P. ०मानां D.
३४. VM. ignores अधि ॥ अधि इति पञ्चम्यर्थानुवादी Sy.

स्व॒नो न वो॒ऽम॑वान्रेजय॒द्वृषा॑ त्वे॒षो य॒यिस्त॑वि॒ष ए॑व॒यामरु॑त् ।
येना॒ सह॑न्त ऋ॒ञ्जत॒ स्वरो॑चिष॒: स्थार॑श्मानो हिर॒ण्यया॑: स्वायु॒धास॑ इ॒ष्मिण॑: ॥ ५ ॥

स्वनो न वः।[1] स्वनः।[2] न। युष्माकम्। बलवान्।[3] कम्पयतु।[4] वर्षिता।[5] दीप्तः। गन्ता। वृद्धः।[6] एवयामरुदित्युक्तार्थम्। येन।[7] शत्रून् सहन्ते।[8] तमलङ्कारं कुर्वन्ति।[9] स्वदीप्तयः।[10] स्थिरतरश्मयः।[11] हिरण्मयालङ्काराः।[12] शोभनायुधाः।[13] गमनशीलाः।[14]

अ॒पा॒रो वो॑ महि॒मा वृ॒द्धश॑वसस्त्वे॒षं शवो॒ऽव॑त्वेव॒यामरु॑त् ।
स्थाता॑रो॒ हि प्रसि॑तौ सं॒दृशि॒ स्थन॒ ते न॑ उरुष्यता नि॒दः शु॑शु॒क्वांसो॒ नाग्नय॑: ॥ ६ ॥

अपारः।[15] अपर्यन्तः।[16] वः।[17] महिमा। हे वृद्धबलाः![18] दीप्तम्। बलम्।[19] रक्षतु। माम्।[20] स्थातारः।[21] हि।[22] प्रबद्धे।[23] सन्दर्शने।[24] भवथ। ते। अस्मान्। रक्षत।[25] निन्दितुः।[26] दीप्ताः।[27] इव। अग्नयः।

ते रु॒द्रास॒: सुम॑खा अ॒ग्नयो॑ यथा तुविद्यु॒म्ना अ॑वन्त्वेव॒यामरु॑त् ।
दी॒र्घं पृ॒थु प॑प्रथे॒ सद्म॒ पार्थि॑वं॒ येषा॒मज्मे॒ष्वा म॒हः शर्धां॒स्यद्भु॑तैनसाम् ॥ ७ ॥

ते रुद्रासः। ते।[28] रुद्रपुत्राः। सुयज्ञाः।[29] अग्नयः। इव। बहुदीप्तयः।[30] रक्षन्तु। दीर्घाकारम्।[31] विस्तीर्णम्। प्रथते।[32] पार्थिवम्।[33] सद्मौषध्यादिकम्।[34] येषाम्। गमनेषु। महान्ति। बलानि। तेषामभूतपापानाम्।[35][36][37]

---

१. हे मरुतः! Sy. २. वेगजनितः शब्दः Sy.
३. Omitted by D.
४. कम्पयत्वेवयामरुतं माम्। 'सुपां सुलुक्०' इति द्वितीयाया लुक् Sy. ५. वर्षिता वृष्टेः Sy.
६. वृद्धः D. प्रवृद्धः Sy. ७. स्वनेन Sy.
८. शत्रूनभिभवन्तो यूयम् Sy.
९. ऋञ्जथ प्रसाधयथ। लडर्थे लोट् Sy.
१०. स्वायत्तरश्मयः Sy.
११. स्थिररश्मयः Sy. १२. हिरण्याभरणाः Sy.
१३. ०ध P., D. स्वायत्तायुधाः Sy.
१४. अन्नवन्तो गमनवन्तो वा Sy.
१५. हे मरुतः! Sy.
१६. अनवधिकः Sy. १७. युष्माकम् Sy.
१८. हे प्रवृद्धबलाः! Sy. १९. युष्माकं बलम् Sy.
२०. एवयामरुतं माम्। द्वितीयैकवचनस्य लुक् Sy.
२१. स्थाननियमेन तिष्ठन्तो भवथ Sy.
२२. खलु Sy.
२३. प्रबलबन्धने नियमनवति यज्ञे Sy.
२४. निमित्ते Sy. २५. ऋक्षत P. ०तं D.
२६. ०तु P., D. निन्दकात् शत्रोः सकाशात् Sy.
२७. शुशुक्वांसो यूयमिति Sy.
२८. मरुतः Sy. २९. शोभनयज्ञाः Sy.
३०. प्रभूतदीप्तयः। अथवाग्निसदृशास्तुविद्युम्नाः प्रभूतधनाः Sy. ३१. आयतम् Sy.
३२. मरुद्भिः प्रथितमभूत् Sy.
३३. पृथिव्यत्रान्तरिक्षम्। तत्सम्बन्धि Sy.
३४. संमौष० P., D. सदनम् Sy.
३५. तषाम् P.
३६. अपूतवयानाम् P. अपूतपा० D. अपापानाम् Sy.
३७. VM. ignores एवयामरुत् and आ ॥ एवयामरुत् एतन्नामकमृषिं माम्। आ गच्छन्तीति शेषः Sy.

**अद्वेषो नो मरुतो गातुमेतन श्रोता हवं जरितुरेवयामरुत् ।**
**विष्णोर्महः समन्यवो युयोतन स्मद्रथ्यो न दंसनाप द्वेषांसि सनुतः ॥ ८ ॥**

**अद्वेषः** । द्वेषवर्जिताः[1] । अस्माकम् । हे मरुतः ! गमनम्[2] । आभिमुख्येन प्राप्नुत[3] । शृणुत च । स्तोत्रम् । जरितुः[4] । विष्णोः[5] । महतः[6] । समानस्तुतिकाः[7] हे मरुतः ! अस्मत्तः । शत्रून्[8] । अन्तर्हितान्[9] [10] । अपयुयोत[11] । रथिनः[12] । इव । कर्मभिः[13] ।

यद्वा लुप्तविभक्तिकमेवयामरुदिति,[14] येनान्वितं भवति तत्तदनुगुणं विभक्तिरनुषञ्जनीया यथा जरितुरेवयामरुत इति, यत्र[15] तु न कथञ्चिदप्यन्वयः तत्र स्वयमेव वाऽऽक्षिपतीति ।

**गन्ता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवयामरुत् ।**
**ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्तवो निदः ॥ ९ ॥**

[16][**गन्ता नः**][17] गच्छत । अस्माकम् । यज्ञम्[18] । हे यज्ञियाः ![19] सुकर्माणः[20] । शृणुत च । स्तुतिम्[21] । राक्षसवर्जिताः[22] । एवयामरुत्[23] । श्रेष्ठाः[24] । इव । मेघाः[25] । अन्तरिक्षे[26] । यूयम् । तस्य शत्रा[27] भवत । हे सुमतयः । शत्रोर्मदीयस्य भवत । दुर्धराः । निन्दितुः[28] [29] ।

---

१. अद्वेषसो यूयम् Sy.
२. नम० D. गमनस्वभावं स्तोत्रं प्रति Sy.
३. आगच्छत Sy.
४. स्तोतुः Sy.
५. ०ष्णो P. व्यापकस्येन्द्रस्य Sy.
६. ०त P.
७. समानयज्ञा यूयम् Sy.
८. स्मत् । अयं प्रशस्तनाम । प्रशस्ताः Sy.
९. द्वेष्टॄन् Sy.
१०. ०न्तरिहि० P. सनुतरिति अन्तर्हितनाम Ngh. 3.25.
११. ०र्हिता न च यूयं यात न D. दूरे वियोजयत पृथक्कुरुत Sy.
१२. योद्धार इव । ते यथा शत्रूनपाकुर्वन्ति तद्वदस्माकम् Sy. १३. कर्मणा Sy.
१४. ०क्तितमेव० P.
१५. त्र P.
१६. अध्यायोपाकरणोत्सर्गयोर्विनियुक्ता (AGS. 3.5.) Sy.
१७. The *pratīka* is supplied by the Editor.
१८. आगच्छत Sy.
१९. हे यज्ञियाः ! मरुतः ! यूयम् Sy.
२०. शोभनकर्म यथा भवति तथा सुकर्मत्वायेत्यर्थः । तदर्थम् Sy.
२१. अस्मदीयमाह्वानम् Sy.
२२. ०तो P. रक्षोवर्जिता यूयम् Sy.
२३. यमस्तुपेपयामरुत् P. यमस्तुवेवयामरुत् D. लिङ्गवचनयोर्व्यत्ययः Sy.
२४. ज्येष्ठाः Sy.
२५. विन्ध्यादय इवातिप्रवृद्धाः Sy.
२६. अन्तरिक्षे वर्तमानाः Sy.
२७. श्रता P. शत्रवः is suggested for शत्रा ।
२८. निन्दकस्य Sy.
२९. Ms. D. puts the figure ॥८७॥ here to indicate the end of the eighty-seventh hymn. No such number is given in P.

VI.1.

# ॥ अथ षष्ठं मण्डलम् ॥

त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥ १ ॥

त्वं ह्यग्ने[1] ॥ बार्हस्पत्यो भरद्वाजः षष्ठं[2] मण्डलमपश्यत्[3] ॥ त्वम् । हि[4] । अग्ने ! मुख्यः[5] । मनोता[6] यस्मिन्[7] देवानां मनास्युतानि[8] स मनोता[9] । अस्य । कर्मणः । अभवः[10] । भो दर्शनीय[11] ! होता[12] । त्वम् । सर्वतः[13] । कृणोषि[14] । वर्षितः[15] । तरितुमशक्यम्[16] । बलम् । विश्वस्मै[17] । बलाय[18] । शत्रूणां[19] सोढवे[20] ।

अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मन् ॥ २ ॥

अधा होता[21] । अथ[22] । होता[23] । निषण्णो भवसि[24] । यष्टृतमः[25] । इडायाः[26] । पदे[27] वेद्याम्[27] ।

---

१. भारद्वाजे षष्ठे मण्डले षडनुवाकाः । तत्र प्रथमेऽनुवाके पञ्चदश सूक्तानि । तत्र 'त्वं ह्यग्ने' इति त्रयोदशर्चं प्रथमं सूक्तम् । 'त्वं ह्यग्ने सप्तोनेति बार्हस्पत्यो भरद्वाजः षष्ठं मण्डलमपश्यत्' (KSA. 28.1. p. 22.) इत्यनुक्रान्तत्वात् । मण्डलद्रष्टा स एव भरद्वाज ऋषिः । अनादेशपरिभाषया (KSA.12. 6.p.5.) त्रिष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता (KSA.12.12.p.5.) । पशोर्हविष्यवदीयमाने मैत्रावरुणेनानुवचनीयमिदं मनोतासूक्तम् । सूत्रितञ्च 'त्वं ह्यग्ने प्रथम इत्यन्वाह' (ĀSS.3.6.) इति । प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दस्येतदादिसूक्तषट्कं द्वितीयवर्जम् । सूत्रितञ्च—'त्वं ह्यग्ने प्रथम इति षण्णां द्वितीयमुद्धरेत्' (ĀSS. 4.13.)इति । आद्योपाकरणे विनियुक्ता । सूत्रं तु पूर्वे मन्त्र उक्तम् (cf. AGS.3.5.) Sy.

२. ०ष्ठ P.

३. The passage बार्हस्पत्यो० ०पश्यत् is a fragment of KSA.28.1.p.22.

४. हिशब्दः 'अग्निः सर्वा मनोताग्नौ मनोता सङ्गच्छन्ते' (AB.2.10.) इत्यादिब्राह्मणप्रसिद्धिद्योतनार्थः Sy.

५. देवानां मध्ये प्रथमः प्रतमः प्रकृष्टतमः पूर्वभावी वा Sy.

६. देवानां मनो यत्रोतं सम्बद्धं भवति तादृशो भवसि Sy.

७. ०ना P.

८. मनांस्यो० is suggested for मनास्यु० ।

९. मानो० P., D.

१०. Omitted by P. भ D. भवसि Sy.

११. हे Sy.

१२. हेता P. देवानामाह्वाता Sy.

१३. त्वा पर्वतः P., D.

१४. अकरोः Sy.

१५. हे कामानां वर्षितः ! त्वम् Sy.

१६. दुर्हिस्यमहिंस्यम् Sy.

१७. सर्वस्यापि Sy.

१८. बलवतः Sy.

१९. शत्रोः Sy.

२०. शत्रून् सोढुम् or शत्रूणां सहनाय is suggested for शत्रूणां सोढव ॥ अभिभवनाय Sy.

२१. भरद्वाजस्यार्षम् SKN.

२२. अध P. अधुना हे अग्ने ! Sy. एतस्मादेव पूर्वोक्ताद् रक्षोऽसुराभिभवनसमर्थबलत्वात्कारणात् SKN.

२३. होमनिष्पादकः सन् Sy. त्वं होता SKN.

२४. निषण्णवानसि Sy. निषण्णो निषीदसि वा SKN.

२५. अतिशयेन यष्टा त्वम् Sy. यष्टृतरः SKN.

२६. भूम्या वेदिलक्षणायाः Sy. इळाशब्दस्य छान्दसत्वादाकारलोपः । इळायाः पृथिव्याः SKN.

२७. स्थाने Sy. अवयवभूते पदे स्थाने वेद्याख्ये SKN.

हविरिच्छन् । स्तुत्यः । सन् । तम् । त्वाम् । मनुष्याः । प्रथममेव यज्ञेषु मुखे । देवकामाः । महते । धनाय । बुध्यमानाः । अनुगच्छन्ति ।

**वृतेव यन्तं बहुभिर्वसव्यैस्त्वे रयिं जागृवांसो अनु ग्मन् ।**
**रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसम् ॥ ३ ॥**

वृतेव[10] । मार्गेणेव[11] । गच्छन्तम्[12] । बहुभिः[13] । धनसमूहैः सह[14] । उदारं[15] त्वयि स्थितम्[16] । धनम् । सर्वेऽनुगच्छन्ति[17] । जागरणशीलाः[18] । दीप्यमानम्[19] । अग्निम्[20] । दर्शनीयम्[21] । महान्तम् । अन्नवन्तम्[22] । सर्वदा[23] । क्रीडन्तमनुगच्छन्ति[24] धनार्थमिति ।

**पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।**
**नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ ॥ ४ ॥**

पदं[25] देवस्य । स्थानम्[26] । देवस्य[27] । हविषा[28] । गच्छन्तः[29] । अन्नमिच्छ-

---

१. पुरोडाशादिलक्षणमन्नमिच्छन् Sy. इषयन्, अकार उपजनः । अन्नानि हविर्लक्षणानीच्छन् SKN.
२. Omitted by P. तन् D. ईड्यः सन् य एवङ्कर्मासि SKN. ३. तादृशम् Sy.
४. नेतारो मनुष्या ऋत्विग्यजमानाः Sy.
५. इतरदेवताभ्यः पूर्वम् Sy. अन्याभ्योऽपि देवताभ्यः प्रथमम् SKN. ६. देवं त्वामात्मन इच्छन्तः Sy. देवान् यष्टुमिच्छन्तः SKN.
७. महः, चतुर्थ्यर्थ एषा प्रथमा । महते SKN.
८. जानन्तः स्तुत्या ज्ञापयन्तो वा Sy. चेतयन्तो जानन्तः । किम् ? सामर्थ्यात् तव माहात्म्यम् SKN. ९. अन्वगच्छन् पूर्वम् Sy. अनुगच्छन्ति त्वामेवाश्रयन्तीत्यर्थः SKN. N.2.7., SKN.II.57.
१०. प्रतेव P. ११. वृतेव मार्गेण । इवेति सम्प्रत्यर्थे लोकद्वयमध्यगतेन मार्गेण Sy.
१२. गच्छन्तं त्वाम् Sy. १३. अनेकैः Sy.
१४. वसुभिः । स्वार्थिकस्तद्धितप्रत्ययः । यजमानानां निवासयोग्यैर्वा सार्धम् Sy. १५. सहोदरं D.
१६. देवे Sy. १७. सम्भजन्ते यजमानाः Sy.
१८. प्रयच्छन्त इत्यर्थः Sy. १९. दीप्तवर्णम् Sy.
२०. अङ्गनादिगुणविशिष्टम् Sy. २१. व्य P.
२२. अन्ववन्त P., D. वपावन्तम् Sy.
२३. सर्वेषु कालेषु Sy. २४. दीप्यमानम् Sy.
२५. भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्य SKN.
२६. आहवनीयस्थानम् Sy. अवस्थानं याथात्म्यमग्नेः Dur. स्थानमग्निलोके स्वर्गे वा SKN.
२७. द्योतमानस्याग्नेः Sy. दानादिगुणयुक्तस्य Dur. भगवतोऽग्नेः SKN.
२८. हविषा स्तोत्रेण वा Sy. केन ? नमसा नमस्कारेण स्तुत्या मन्त्रेणेत्यर्थः । मन्त्रार्थपरिज्ञानादेव ह्यग्नेराध्यात्माधिदैवाधिभूताधियज्ञेष्ववस्थानं याथात्म्यतो दृश्यते । पदशब्दो हि स्थाने प्रसिद्धः । पदस्थोऽयमिति हि वक्तारो भवन्ति लोके । अथवा नमसा, अन्नेन हविराख्येनाभ्युद्यतेनेति योज्यम् Dur. स्तुत्या मन्त्रलक्षणया SKN.
२९. पश्यन्तो जानानाः Dur. पश्यन्तो जानन्त इत्यर्थः । देवानां हि यावत्किञ्चित् तत्सर्वं स्तुतिपूतेभ्यो मन्त्रेभ्यो ज्ञायते, अत एतदुच्यते पदं स्तुत्या जानन्त इति SKN.

मानाः[1] । अन्नम्[2] । प्राप्नुवन्तः[3] । अहिंसितं[4] शत्रुभिर्देवाः । नामानि । च[6] । दधिरे[7] । यज्ञार्हाणि[8] । भद्रायाम्[9] । ते[10] सन्दृष्टौ[11] सन्दर्शने । रमन्ते[12], 'पश्वा[13] न तायु'मित्युक्तम् ।

**त्वां व॑र्धन्ति क्षि॒तयः॑ पृथि॒व्यां त्वां राय॑ उ॒भया॑सो॒ जना॑नाम् ।**
**त्वं त्रा॒ता त॑रणे॒ चेत्यो॑ भूः पि॒ता मा॒ता सद॒मिन्मानु॑षाणाम् ॥ ५ ॥**

त्वाम्[14] । त्वाम्[15] । वर्धयन्ति । मनुष्याः[16] । पृथिव्याम्[17] । त्वामाश्रयन्ते[18] । जनानाम्[19] । धनानि । उभयविधानि[20] स्थावरजङ्गमात्मकानि[21] । त्वम् । रक्षकः[22] । हे क्षिप्र[23] ! ज्ञातव्यः[24] । भवसि[25] । पिता[26] । माता च[26] । सदा[27] । एव । मानुषाणाम्[28] ।

---

१. ०इच्छन्तः is suggested for ०इच्छमानाः॥ अन्नमिच्छन्तः पूर्वे यजमानाः Sy. श्रव इच्छमानाः अन्नमात्मनः प्रार्थयमानाः । यमेवमग्नेः स्तुतिर्विद्वांसो याथात्म्यम्, अन्नैर्वाऽभ्युद्यतैः श्रव इच्छमानाः पश्यन्तोऽग्निमुपासते Dur. श्रवोऽन्नं यशो वा SKN.

२. सर्वत्र श्रूयमाणमन्नम् Sy.

३. आप्नुवन्ति Sy. किं तेषामिति ? उच्यते, श्रव आपन् Dur. प्राप्नुवन्तम् SKN.

४. अन्यैरपरिबाध्यम् Sy. किंलक्षणं पुनराप्नुवन्ति ? अमृक्तम्, अमृदितमनुपभुक्तमन्यैः Dur. कीदृशम् ? अमृक्तम् । अमृतशब्दस्यायं छान्दसः ककारः उपजनः । अमृतसदृशम् । अथवा 'मृजू शुद्धौ' इत्यस्येदं रूपम् । 'व्रश्चभ्रस्जसृजमृज०' (Pa. 8.2.36.) इति षत्वे प्राप्ते छान्दसं 'चोः कुः' (Pa. 8.2.30) इति कुत्वम् । शुद्धं केवलं धनादिभिः सहितमित्यर्थः । अमृतं वा परैरपरामृष्टमित्यर्थः । अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ SKN.

५. नमनीयानि वैश्वानरो जातवेदा इत्यादीनि । अथवा नमनसाधनानि स्तोत्राणि दधिरे Sy. ये चैते ग्रन्थमात्राध्येतारः केवलच्छान्दसाः नामान्यपि च मन्त्रभावेनावस्थितानि Dur. किं बहुना....जना नामान्यपि SKN.

६. चिदप्यर्थे Dur.

७. धारयन्ति Sy. धारयन्त्यनर्थज्ञाः Dur. भगवतोऽग्नेर्धारयन्ति कीर्तयन्तीत्यर्थः SKN.

८. यज्ञयोग्यानि Sy.

९. स्तुत्यायाम् Sy. भन्दनीयायाम् Dur.

१०. हे अग्ने ! तव Sy. तेऽपि Dur., SKN.

११. Omitted by P. सन्दृष्टौ निमित्तायाम् Sy. अनुग्रहबुद्धावित्यर्थः । सप्तमीश्रुतेः स्थिता इति शेषः SKN. अग्नेः....सन्दर्शने Dur.

१२. ०न्तत P. ०न्त D. रमयन्ति Sy. रमयन्त्येवात्मानम् । तानपि भद्रेण चक्षुषः पश्यत्येवाग्निरित्यभिप्रायः Dur. त्वयानुगृह्यमाणाः सुखिनो भवन्तीत्यर्थः SKN.

१३. वश्वा० D. RV. 1.65.1. व्यन्त इत्येषोऽनेककर्मा । 'पदं देवस्य नमसा व्यन्तः' इति पश्यतिकर्मा N. 4.19., SKN.II.253.

१४. हे अग्ने ! Sy. १५. त्वा P.

१६. मनुष्या ऋत्विजः Sy.

१७. वेदिलक्षणायाम् Sy.

१८. ऋत्विजोऽध्वर्य्वादयस्त्वामुद्दिश्य वर्धन्ति प्राप्तुं त्वां वर्धन्ति Sy.

१९. यजमानानां सम्बन्धीनि, पुत्रादीनामर्थाय (वा) Sy. २०. पश्वपशुरूपाणि । अथवोभयविधानि धनानि गवादीनि Sy.

२१. ०त्मि० P. २२. रक्षिता Sy.

२३. हे दुःखात्तारकाग्ने ! त्वं च Sy.

२४. ज्ञातव्यः स्तुत्यः सन् Sy.

२५. ०ति D. २६. मातृपितृस्थानीयः Sy.

२७. सर्वदा Sy.

२८. मनुष्याणां स्तोतॄणामस्माकम् Sy.

सपर्येण्यः स प्रियो विक्ष्वग्निर्होता मन्द्रो नि षसादा यजीयान् ।
तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥ ६ ॥

सपर्येण्यः[1] । परिचरणीयः[2] । सः[3] । प्रियश्च[4] । मनुष्येषु[5] । अग्निः । निषीदति[6] । होता[7] । मादयिता[8] । यजीयान्[9] । तम्[10] । त्वा[11] । वयम्[12] । गृहे । दीप्यमानम् । उपसीदेम[13] । जान्वो बोधितारः[14]—सम्भग्नजानुकाः[15] । नमस्कारेण[16][17] ।

तं त्वा वयं सुध्यो३ नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ ७ ॥

तं त्वा वयम् । तम्[18] । त्वा[19] । वयम् । सुकर्माणः[20] । स्तुत्यम् । अग्ने ! सुखकामाः[21] । याचामहे[22] । देवानिच्छन्तः[23] । त्वम् । मनुष्यान्[24] । नयसि[25] । दीप्यमानः[26] । द्युलोकात्[27] । अग्ने ! महता । तेजसा[28] ।

विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।
प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं रयीणाम् ॥ ८ ॥

विशाम् । बह्वीनाम्[29] । विशाम्[30] । विश्पतिं स्वामिनम् । कविम्[31] । हन्तारं[32] शत्रूणाम् । वर्षितारं[33]

---

१. सवर्ये० P.
२. पूज्यः Sy. ३. अग्निः Sy.
४. कामानां पूरकः Sy.
५. प्रजासु Sy.
६. निषण्णोऽभूत् Sy.
७. होमनिष्पादकः Sy.
८. मद० P. मदनीयः Sy.
९. यजनीयं P. यजनीयान् D. अतिशयेनेतरदेवानां यष्टा यजनीयो वा । एवं महानुभावोऽग्निर्निषसाद Sy.
१०. अथ प्रत्यक्षकृतः । तादृशम् Sy.
११. त्वाम् Sy.
१२. वयं D. यजमानाः Sy.
१३. ०सदे० D. आसादयेम । अथवोपासीदेमेत्येवमाशास्ते Sy.
१४. जन्वो बो० or जान्वोर्बाधि० is suggested for जान्वो बोधि० ॥ जानुनी बाधयन्तोऽवनतजानवः प्रणताः सन्तः Sy.
१५. संभजनजा० D.
१६. स्तोत्रेण Sy.
१७. VM. ignores आ ।
१८. तादृशं महानुभावम् Sy.
१९. त्वाम् Sy.
२०. सुष्ठु क० P. शोभनबुद्धयः Sy.
२१. सुखमिच्छन्तः Sy.
२२. स्तुम इत्यर्थः Sy.
२३. देवं त्वामिच्छन्तः Sy.
२४. प्रजाः स्तोतॄनस्मान् Sy.
२५. अगमयः Sy.
२६. दीप्यमानः सन् Sy.
२७. स्वर्गम् Sy.
२८. रोचमानेन तेजसा । रोचनेनादित्येन दिवमगमय इति वा सम्बन्धः । आदित्यमार्गेणेत्यर्थः Sy. २९. नित्यानाम् Sy.
३०. ०शाम D. विशाम् ऋत्विग्यजमानलक्षणानाम् Sy.
३१. कान्तदर्शिनम् Sy.
३२. हिंसकम् Sy. ३३. वर्षकम् Sy.

कामानाम्। मनुष्याणाम्[1]। प्रेतिर्गमनं तस्मिन्निच्छा यस्य तम्[2]। गच्छन्तम्[3]। पावकम्[4]। राजन्तम्[5]। अग्निम्[6]। दातारम्[7]। धनानाम्[8]।

**सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम्।**
**य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वोतः॥ ९॥**

**सो अग्ने।** स एव। अग्ने[9]! ईजे[10]। तुष्टाव[11]। च। मर्तः। यः[12]। तुभ्यम्[13]। प्रापयति[14]। हविषो दातिम्[15]। यः[16]। आहुतिम्[17]। परितो लम्भयिता[18]। नमस्कारैः[19]। विश्वानि[20]। एव[21]। धनानि[22]। धारयति। त्वया रक्षितः[23][24]।

**अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः।**
**वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम॥ १०॥**

**अस्मा उ।** अस्मै। एव। तुभ्यम्। महते। पूजाम्[25]। विधेम[26]। नमोभिः[27]। अग्ने! समिधा। अपि च। हव्यैः[28]। वेद्याम्। हे सहसः, पुत्र[29]! स्तोत्रशस्त्रैः[30]। आगच्छेम[31]। तव। कल्याण्याम्[32]। सुमतौ[33]।

---

१. स्तोतॄणाम् Sy.
२. ०मं P. प्राप्तगमनम् Sy.
३. अन्नं कुर्वन्तम् Sy.
४. शोधकम् Sy.
५. जातं तम् P.
   दीप्यमानं दीपयन्तं वा Sy.
६. अग्निं स्तुम इति शेषः Sy.
७. यजतं यष्टव्यम् Sy.
८. रयीणां लाभाय Sy.
९. हे अग्ने! त्वाम् Sy.
१०. यजते Sy.
११. स्तौति Sy. Cf Ngh. 3.14. शशमान इति स्तुतिकर्मा।
१२. यजमानः Sy.
१३. तव Sy.
१४. करोति Sy.
१५. हविषां दानम् Sy.
१६. यज्ञः P., D.
१७. आज्यादिलक्षणाम् Sy.
१८. परितो वेत्ति। ददातीत्यर्थः Sy.
१९. स्तुतिभिः Sy.
२०. सर्वाणि Sy.
२१. ०रैश्वान्येव P., D.
२२. वननीयानि Sy.
२३. ०तं D.
   त्वया रक्षितः सन् Sy.
२४. VM. ignores समिधा and सः॥ समिधा सह यजमानः Sy.
२५. महि महदत्यधिकम् Sy.
२६. परिचरेम Sy.
२७. नमस्कारैः Sy.
२८. अवि वैः P. अवि पैः D.
   हविर्भिः Sy.
२९. सूनो! Sy.
३०. स्तोत्रैः शस्त्रैश्च। विधेमेति सम्बन्धः Sy.
३१. आगच्छेम भवेमेत्यर्थः Sy.
३२. स्तुत्यायाम् Sy.
३३. शोभनानुग्रहबुद्धौ Sy.

आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्य१स्तरुत्रः ।
बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं वि भाहि ॥ ११ ॥

आ यः । व्याततन्थ[1] । यस्त्वम् । रोदसी[2] । तेजसा[3] । अन्नैः[4] । च । अन्नहितः[5] । तारकः[6] । बृंहितैः[7] । अन्नैः । वृद्धैः[8] । अस्माकम्[9] । अग्ने ! धनयुक्तैः[10] । अत्यन्तम्[11] । दीप्यस्व[12] ।

नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारेअघा अस्मे भद्रा सौश्रवसानि सन्तु ॥ १२ ॥

नृवद्वसो । नृयुक्तम्[13] । प्रशस्य[14] । सदा[15] । एव । प्रयच्छ[16] । अस्मभ्यम्[17] । पुत्राय[18] । तत्पुत्राय च । पशोः[19] । भूरि[20], पशुसङ्घं प्रयच्छेत्यर्थः । बहूनि[21] । अन्नानि[22] । बृंहितानि[23] । दूरे पापं येषां तानि[24] । अस्मासु । सौश्रवसानि[25] । कल्याणानि[26] । सन्तु[27] ।

पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥ १३ ॥

पुरूणि[28] । बहूनि । अग्ने ! बहुधा[29] । त्वत्कामनया[30] । वसूनि[31] । राजन्[32] ! वसुतायै[33] निवासार्थम्[34] ।

---

१. व्यातत P. ०ततथ D. व्यतनोः Sy.
२. द्यावापृथिव्यौ Sy.
३. दीप्त्या Sy.
४. स्तुतिभिः Sy.
५. श्रवस्यश्च भवसि हे तादृशाग्ने ! Sy.
६. तारकस्त्वम् Sy.
७. बृहि० D. महद्भिः Sy.
८. वर्धैः P. स्थविरैः स्थूलैः Sy.
९. अस्मदर्थम् Sy.
१०. रयिमद्भिः Sy.
११. विशिष्टतरम् Sy.
१२. विशेषेण दीप्यस्व Sy.
१३. मनुष्यैरुपेतम् Sy.
१४. हे वसो ! वासक ! धनवन् ! वाग्ने ! Sy.
१५. सर्वदा Sy.
१६. स्थापय Sy.
१७. अस्मासु Sy.
१८. अस्मत्पुत्राय Sy.
१९. पशो P. पशंश्च धेहि Sy.
२०. प्रभूतान् Sy.
२१. पूरयित्र्यः कामानाम्, बह्वचो वा Sy.
२२. उक्तलक्षणान्यन्नानि Sy.
२३. महत्यः Sy.
२४. वापं D. आरे दूरे अघानि यासु ताः । तादृश्यः Sy.
२५. सुश्रवस्त्वानि Sy.
२६. भद्राणि Sy.
२७. भवन्तु Sy.
२८. 'पुरूण्यग्ने' इति त्रयोदश्युखासम्भरणीयेष्टावग्नेः क्षत्रवतोऽनुवाक्या । सूत्रितञ्च—'पुरूण्यग्ने पुरुधा त्वाया स चित्र चित्रं चितयन्तमस्मे' (ĀSS.4.1.) इति Sy.
२९. गवाश्वादिरूपेण बहुप्रकाराणि Sy.
३०. त्वं का० P.
३१. धनानि Sy.
३२. राज P., D.
३३. वसुमत्त्वाय Sy.
३४. निवसार्थं P. वसार्थं D.

त्वत्तः[1] । प्राप्नुयाम्[2] । बहूनि । हि[3] । त्वयि । हे बहुभिर्वरणीय ! सन्ति[4] । अग्ने ! वसूनि । परिचरते[5] । राजनि[6] । पुनस्त्वयीति[7] पूरणम् ।

इत्थं व्याख्यदष्टाविंशमध्यायं माधवाह्वयः ।
चोलेषु निवसन् कश्चित् सस्यमालिषु सर्वदा ॥

# [ अथ पञ्चमोऽध्यायः ॥ ]

'त्वं हि क्षैतवद्यशो[8]' अथ व्याचिख्यासति माधवः ।
पादभेदे पूरणेषु वक्तव्यं सम्प्रदर्शयन् ॥१॥

अवान्तराः केचिदर्था ऋक्पादेषु व्यवस्थिताः ।
समुदायस्तु तेषां यः स वाक्यार्थ इति स्थितिः ॥२॥

क्रियापदान्वयः पादे यावतापीह सिध्यति ।
अवान्तरार्थं तं[9] प्राहुः 'अग्निमीळे पुरोहितम्[10]' ॥३॥

अपेक्षा जायते[11] पादे 'यज्ञस्य देवमृत्विजम्[12]' ।
कं किं च तस्य कर्तव्यं तत्रैतदुपतिष्ठति[13] ॥४॥

पुरोहिते रहितमग्निमीळे[14] पदद्वयम् ।
पश्येत् तयोरन्यतरत् पादे ऽन्यस्मिन्नवस्थितम्[15] ॥५॥

---

१. तव Sy.
२. व्याप्नुयां भुञ्जीय वा । अत्र भरतस्वामी 'वसुताते' इत्येकपदं सप्तम्यन्तं चकार । भट्टभास्करमिश्रोऽप्येकपदं सम्बुद्ध्यन्तं चकार Sy.
३. P. reads त्वं हे for हि । त्वयि ॥ त्वाम् Sy.
४. सत्वम् P. सति D.
५. परिचरते मह्यं दातव्यानि सन्ति Sy.
६. राजमाने Sy.
७. ०स्त्वमिति P.
८. RV.VI.2.1[a]. ०वद्येशो० D. ०वदेशो० P. अथ is omitted by R.
९. तत् D.
१०. RV.I.1.1.
११. यायते P.
१२. देमृ० P. RV.I.1.1.[b].
१३. ०त्रैकमु० P.
१४. R. reads पुरोहितेन रहितम० ।
१५. ०स्मिन्यव० P.

नापेक्षते पदं पूर्वं[१] नैतरामुभयं यदि ।
तस्मात् पादान्तरेणैतदुभयं[२] पूरणं विदुः ॥६॥
ता मित्रस्य[३] प्रशस्तय इन्द्राग्नी ता हवामहे[४] ।
न पूरणो ऽत्र तच्छब्दः पादे[५] यस्मिन् व्यवस्थितः[६] ॥७॥
'अस्माकमद्य वामयं[७] स्तोमो वाहिष्ठो अन्तमः'[८] ।
पुनर्युवाभ्यामित्युक्तं[९] न तदिच्छन्ति पूरणम् ॥८॥
'यदा ते मारुतीर्विशस्तुभ्यमिन्द्र[१०] नियेमिरे'[११] ।
आवर्तते पदं तेऽत्र[१२] नोभयोः पूरणे पदे ॥९॥
वेत्था[१३] हि वेधो अध्वनः पथश्च[१४] देवाञ्जसा[१५] इति ।
पथो ऽध्वनश्च भेदश्च[१६] चकारेण प्रतीयते ॥१०॥
'प्रोतये वरुणं मित्रमिन्द्रं'[१७] 'कृष्वावसे'[१८] इति ।
पुनः प्रयुज्यते तत्र भेदः सूक्ष्मोऽस्ति कश्चन ॥११॥
'स नो' नियुद्भिरा पृण[१९] कामं वाजेभिरश्विभिः[२०] ।
स्त्रीपुंविभेदादत्रापि[२१] नास्ति कश्चन पूरणः[२२] ॥१२॥

---

१. ०र्वं P.
२. ०रे नैत० P., D.
३. ०य: D.
४. RV.I.21.3.
५. पदे D.
६. पादे यस्मिन् व्यवस्थितः is omitted by P.
७. वमयं D. वयं P.
८. ०ष्ठोन्त० D. RV.VIII.5.18.
९. पुनः युवाभिमि० P.
१०. यदा ते मारुतश्च न पूरणः मारुतीर्विशस्तुल्यमिन्द्र P.
११. RV.VIII.12.29.
१२. आववर्तदवसेवाम्रो० P. आमवर्तदवसेवाम्रो०D.
१३. वेर्त्था P., D.
१४. रथश्च P.
१५. सेवा० P., D. RV.VI.16.3.
१६. भेदोऽत्र R.
१७. RV.VI.21.9.
१८. मित्रस्य मुव्यवसे P. मित्रस्य मृच्यवसे D. RV. VI.21.9.
१९. वृण P., D.
२०. ०रश्व० D. RV.VI.45.21.
२१. स्त्रींपुंविभेदोत्रापि P. ०दात्रा० D.
२२. ०णं P.

'पुरूण्यग्ने पुरुधा'[1] इति मन्त्रान्ते श्रूयते पदम् ।
त्वे इत्येतत् पादभेदाद् बहवः सन्ति तादृशाः ॥१३॥
'वयं शूरेभिरस्तृभिरिन्द्र त्वया[2] युजा वयम्'[3] ।
आवर्तते वयमिति[4] सन्ति चान्येऽपि तादृशाः ॥१४॥
इत्थं व्युत्पत्तिसिद्ध्यर्थमृचोऽस्माभिरुदाहृताः ।
तासामाकृतिविद्विप्रो न मन्त्रार्थेषु मुह्यति इति[5] ॥१५॥

## VI.2.

**त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।**
**त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ १ ॥**

त्वं हि क्षैतवत्[6] ॥ भरद्वाजः ॥ त्वम् । हि[7] । निवासवत्[8] । धनम्[9] । अग्ने ! सखा[10] । इव । पातयसि[11] । त्वम् । विद्रष्टः[12] ! अन्नम्[13] । वासयितः[14] ! पुष्टिम्[15] । च[16] । पोषयसि[17] ।

---

१. RV.VI.1.13.
२. त्वा P.
३. RV.I.8.4.
४. वयति P.
५. Omitted by P.
६. अथ पञ्चमोऽध्याय आरभ्यते। षष्ठमण्डलस्य षडनुवाकात्मकस्य प्रथमेऽनुवाके पञ्चदश सूक्तानि । तत्र 'त्वं हि' इत्येकादशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । अन्या षट्पञ्चाशदक्षरा शक्वर्यादितो दशानुष्टुभः । अनुक्रम्यते हि 'त्वं ह्येकादशानुष्टुभं शक्वर्यन्तम्' (KSA. 29.2.p.22.) इति । प्रातरनुवाक आग्नेये क्रतावानुष्टुभे छन्दसीदं सूक्तमुत्तमावर्जं विनियुक्तम् । सूच्यते हि—'त्वं हि क्षैतवदग्ना यो होताजनिष्ट (ĀSS. 4.13.) इति । आश्विनशस्त्रे चैतत् शंसनीयं प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात् । अङ्गिरसां द्विरात्रे द्वितीयेऽह्नीदमेव सूक्तमाज्यशस्त्रम् । सूत्रितञ्च— 'त्वं हि क्षैतवदिति चाज्यम्' (ĀSS. 10.2.) इति Sy.
७. खलु Sy.
८. क्षितिः क्षयोऽपचयः । तत्सम्बन्धि क्षैतं शुष्कं काष्ठं तद्युक्तम् Sy.
९. ०स वर्धनम् P. ०सं वर्द्धनम् D. अन्नं हविर्लक्षणम् Sy.
१०. तत्र दृष्टान्तः । अहरभिमानी देवो मित्रः । स इव । यद्वा यश इति गृहनाम । (cf Ngh. 1.12.,2.7.,2.10.) क्षैतवत् । क्षैतं निवासकं हविर्लक्षणमन्नम् । तद्युक्तं यजमानगृहं मित्रभूतः पुरुष इवाभिपतसि । यद्वा पत्यतिरैश्वर्यकर्मा । ईदृशमन्नं पत्यसे ईशिषे Sy.
११. पालय० D. अभिपतसि, गच्छसि Sy.
१२. हे विशेषेण सर्वस्य द्रष्टः ! Sy.
१३. श्रवणीयमन्नं यजमानगृहस्थम् Sy.
१४. वासितः P., D. वासकाग्ने ! त्वम् Sy.
१५. वष्टिम् P. अन्नकार्यभूतां पुष्टिम् Sy.
१६. अयं नशब्दश्चार्थे Sy.
१७. वर्धयसि Sy.

त्वां हि ष्मा चर्षणयो यज्ञेभिर्गीर्भिरीळते ।
त्वां वाजी यात्यवृको रजस्तूर्विश्वचर्षणिः ॥ २ ॥

त्वां हि ष्म[1] । त्वाम्[2] । हि[3] । खलु । मनुष्याः । हविर्भिः[4] । स्तुतिभिश्च । स्तुवन्ति । त्वाम् । वेगवान्[5] । अनुगच्छति[6] । स्तेनवर्जितः[7] । लोकानां तरिता[8] । सर्वस्य द्रष्टा वायुः ।

सजोषस्त्वा दिवो नरो यज्ञस्य केतुमिन्धते ।
यद्ध स्य मानुषो जनः सुम्नायुर्जुह्वे अध्वरे ॥ ३ ॥

सजोषः[9] । सङ्गताः[10] । त्वाम् । दिवः[11] । नेतारो मरुतः[12] । यज्ञस्य[13] । क्रतुभूतिम्[14] । इन्धते[15] । यदा । खलु । अयम्[16] । मानुषः[17] । जनः[18] । सुखमिच्छन्[19] । आह्वयति[20] । यज्ञे[21] ।

ऋधद्यस्ते सुदानवे धिया मर्तः शशमते ।
ऊती ष बृहतो दिवो द्विषो अंहो न तरति ॥ ४ ॥

ऋधत्[22] । ऋद्धम्[23] । यः[24] । तुभ्यम् । शोभनदानाय[25] । कर्मणा[26] । मनुष्यः[27] । अर्चनं करोति[28] । सः[29] ।

---

१. ष्मा P.
२. हे अग्ने ! Sy.
३. एव Sy.
४. यज्ञसाधनैर्हविर्भिः Sy.
५. वाजो गमनम् । तद्वान् सूर्यः Sy.
६. गच्छति प्रविशतीत्यर्थः । तथा च श्रूयते 'अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे' इति । वाजिशब्दश्च सूर्यवाचकत्वेन क्वचित् श्रूयते—'अग्निर्वायुः सूर्यस्ते वै वाजिनः' (TB.1.6.3.9.) इति वायुः सप्तिरादित्यो वाजीति च Sy.
७. हिंसकरहितः Sy.
८. ०कानन्त० D. उदकमत्र रज उच्यते (N. 4.19.) तस्य वृष्टिलक्षणस्य प्रेरयिता यद्वा रजसां लोकानां तरिता गन्ता Sy.
९. हे अग्ने ! Sy.
१०. सजोषसः सह प्रीयमाणाः Sy.
११. स्तुतेः Sy.
१२. ऋत्विजः Sy.
१३. ०ते D.
१४. कतुभूतिम् D. केतुभूतम् is suggested for क्रतुभूतिम् ॥ प्रज्ञापकम् Sy.
१५. इद्धते P., D. समिद्धं कुर्वन्ति कदेति चेत् ? उच्यते Sy.
१६. सः Sy.
१७. मनोरपत्यभूतः Sy.
१८. जातो यजमानो होता वा Sy.
१९. सुम्नं सुखमात्मन इच्छन् Sy.
२०. त्वामाह्वयति तदेत्यर्थः Sy.
२१. हिंसाप्रत्यवायरहिते यज्ञे Sy.
२२. ऋधक् P.
२३. ऋधत् स यजमान ऋध्नुयात् हे अग्ने ! Sy.
२४. यत् D.
२५. सुदानवे शोभनदानाय तुभ्यम् । षष्ठ्यर्थे चतुर्थी । तव सम्बन्धिना Sy.
२६. ०ण D.
२७. मरणधर्मा यजमानः Sy.
२८. ०र्च्येर्च्च० D. शाम्यति । यद्वा शमतिः स्तुतिकर्मा । त्वदर्थं कर्मणा युक्तः सन् स्तौति Sy.
२९. यजमानः Sy.

दीप्तस्य । महतः । तव पालनेन[1] । शत्रून्[2] । पापम्[3] । च[4] । तरति[5] ।

समिधा यस्त आहुतिं निशितिं मर्त्यो नशत् ।
वयावन्तं स पुष्यति क्षयमग्ने शतायुषम् ॥ ५ ॥

समिधा[6] । समिधा[7] । यः । तुभ्यम्[8] । आहुतिम्[9] । मन्त्रेण संस्कृताम्[10] । प्रापयति[11] । सः[12] । कान्तिमन्[13] । गृहम्[14] । पुष्यति । अग्ने ! वह्वन्नं[15] शरीरम्[16] ।

त्वेषस्ते धूम ऋण्वति दिवि षञ्छुक्र आततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ ६ ॥

त्वेषः[17] । दीप्तः[18] । ते[19] । धूमः । गच्छति[20] । अन्तरिक्षे । सन् । शुक्लवर्णः[21] । विस्तृतः[22] । सूर्यः । इव । दीप्तया[23] । त्वम् । ज्वालया[24] । पावक[25] ! रोचसे[26][27] ।

अधा हि विक्ष्वीड्योऽसि प्रियो नो अतिथिः ।
रण्वः पुरीव जूर्यः सूनुर्न त्रययाय्यः ॥ ७ ॥

अधा हि । अथ[28] । हि[29] । मनुष्येषु[30] । स्तोतव्यः[31] । असि[32] । प्रियश्च । अस्माकम् । अतिथिः[33] ।

---

१. तव सम्बन्धिन्या ऊत्या रक्षया Sy.
२. द्वेष्टॄन् Sy.
३. आहननशीलं पापम् Sy.
४. इव Sy.
५. अतिक्रामति Sy.
६. ०धां P., D.
७. हे अग्ने ! समिधा समिन्धनहेतुभूतेनेध्मेन सह Sy.
८. त्वदीयाम् Sy.
९. ०तिः D.
१०. निशितां तनूकृतां मन्त्रसंस्कृताम् Sy.
११. व्याप्नुयात् Sy. नशतिर्व्याप्तिकर्मा Ngh. 2.18.
१२. मनुष्यो यजमानः Sy.
१३. वयाः शाखाः पुत्रपौत्रादिलक्षणाः । तद्युक्तम् Sy.
१४. पोषयति वर्धयति । तत्र चिरकालमवतिष्ठत इत्यर्थः Sy.
१५. बहुविधान्नं चिरकालजीवनं वा Sy.
१६. VM. ignores मर्त्यः ॥ मर्त्यः मनुष्यः Sy.
१७. हे अग्ने ! Sy.
१८. त्वेषो दीप्तस्य Sy.
१९. तव Sy.
२०. मेघात्मना परिणतो गच्छति Sy.
२१. सच्छुक्लवर्णा P., D. निर्मलः शुभ्रवर्णो वा Sy.
२२. विस्तीर्णः सन् Sy.
२३. दीप्ताया D. दीप्त्या Sy.
२४. अभिमुखीकरणसमर्थया स्तुत्या स्तूयमानस्त्वम् Sy.
२५. हे शोधकाग्ने ! Sy.
२६. दीप्यसे Sy.
२७. VM. ignores हि ॥ हि खलु Sy.
२८. अपि च Sy.
२९. यस्मादर्थे । यस्मादेवं तस्मात् Sy.
३०. प्रजासु हे अग्ने ! त्वम् Sy.
३१. स्तुत्यः Sy.
३२. भवसि Sy.
३३. लुप्तोपममेतत् । अतिथिरिव प्रियोऽसि । यद्वा हविर्वहनाय सततगामी भूत्वास्माकं प्रियोऽसि Sy.

रमणीयस्त्वं[1] भवसि। पूर[2] इव राजा। स्तोतव्यः[3]। सूनुः[4]। इव च। त्रिभिर्यातिव्यः[5] पित्रादिभि[6]। यथा[7] त्रिषु जीवत्सु जातः पुत्रो लालनीयः[8]।

**क्रत्वा हि द्रोणे अज्यसेऽग्ने वाजी न कृत्व्यः।**
**परिज्मेव स्वधा गयोऽत्यो न ह्वार्यः शिशुः॥ ८॥**

क्रत्वा हि[9]। कर्मणा[10]। हि[11]। गृहे[12]। त्वमाज्येन अज्यसे[13]। अग्ने ! अश्वः[14]। इव। कर्मणि साधुः[15]। परितो गन्तेव[16]। अन्नार्थम्[17]। गयो गौर्वा[18] रथो वा। अतनशीलः[19]। इवाश्वः। युवा[20] त्वमिति[21]।

**त्वं त्या चिदच्युताग्ने पशुर्न यवसे।**
**धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः॥ ९॥**

त्वं त्या[22]। त्वम्[23]। तानि[24]। अच्युतानि[25]। अपि[26] काष्ठानि भक्षयसि। अग्ने[27] ! पशुः[28]।

---

१. रमणीयो गन्तव्यो वा Sy.
२. नगर्याम् Sy.
३. जीर्णो वृद्धो हितोपदेष्टा राजेव Sy.
४. तथा पुत्रः Sy.
५. ०तव्य D. त्रययाय्यः यजमानैस्त्रातव्यः पालयितव्यो भवसि। त्रायतेरेतद् रूपम्। यद्वैतत् सूनोर्विशेषणम्। विद्यातपःकर्मलक्षणं त्रयं यातीति त्रययाय्यः। यातेरौणादिक आय्यप्रत्ययः स्पृहयाय्य इति यथा। अथवा त्रययाय्यः जन्मत्रयं प्राप्तः। जन्मत्रयं स्मर्यते 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रयं स्मृतम्। (Manu 2.169.) इति। तादृशः पुत्र इति Sy.
६. पित्रादिभिः is suggested for पित्रादिभि।
७. यथ P. ८. जातनीयः P.
९. भिः P. कृत्वा भिः D.
१०. कर्मणा मन्थनरूपेण Sy.
११. खलु Sy.
१२. द्रुमे काष्ठेऽरण्यां विद्यमानस्त्वम् Sy.
१३. व्यज्यसे Sy. १४. वेजनवानश्वः Sy.
१५. कृत्वीति कर्मनाम। हविर्वहनादीनां कर्मणां कर्ता। स यथा पुरुषं वहति तद्वद्धविर्वहनमग्नेरश्वसादृश्यम् Sy. १६. सर्वत्र गन्ता वायुरिव दावानलादिरूपेण सर्वत्र गन्ता त्वम् Sy.
१७. अन्नमित्यर्थः Sy. स्वधा अन्ननामैतत् Ngh. 2.7. १८. गौर्वोवा P. गृहं च भवसि। उभयोर्दातेत्यर्थः Sy.
१९. ०तेनशी० P., D. सततगामी जात्यश्वः Sy.
२०. शिशुर्जातमात्रो बालोऽपि Sy.
२१. VM. ignores ह्वार्यः॥ ह्वार्यः कुटिलमितस्ततो गन्तासि। 'ह्वृ कौटिल्ये' इत्यस्यैतद्रूपम् Sy.
२२. कारीर्यामग्नेर्धामिच्छदो वैकल्पिक्यनुवाक्या 'त्वं त्या' इति। सूत्रितञ्च—'त्वं त्या चिदच्युता धामन्ते विश्वं भुवनमधिश्रितम्' (ASS. 2.13.) इति Sy.
२३. हे अग्ने ! त्वम् Sy. त्वमेव BB.
२४. काष्ठानि Sy. तान्यपि BB.
२५. P., D. read ताप्युतानि for तानि। अच्युतानि॥ अच्युतानि च्यावयितुमशक्यानि। अस्तीति शेषः Sy. 'अच्युता' इति प्रथमपादान्तः।....अच्युतान्यविनाशीनि BB.
२६. चिच्छब्दोऽपिशब्दसमानार्थो भिन्नक्रमः Sy.
२७. अग्ने इति पादादित्वान्न निहन्यते। हे अग्ने ! BB.
२८. पशुरेव भवति सोऽपि पश्वात्मनाऽवतिष्ठते BB.

इव[1] । यवसे[2] विसृष्टः । तेजांसि[3] । यथा[4] । जरावर्जित[5] ! वृक्षान्[6] । छिन्दन्ति[7] । शक्तस्य[8] ।[9]

**वेषि ह्यध्वरीयतामग्ने होता दमे विशाम् ।**
**समृधो विश्पते कृणु जुषस्व हव्यमङ्गिरः ॥ १० ॥**

वेषि हि[10] । गच्छसि[11] । हि[12] । अध्वरमिच्छताम्[13] । अग्ने ! होता[14] । गृहे । मनुष्याणाम्[15] । समृद्धान्[16] । विशां पते[17] ! कृणु[18] । सेवस्व । हविश्च[19] । अङ्गिरः[20] !

**अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।**
**वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥११॥**

अच्छ[21] । हे मित्राणां पूजयितः[22] ! अग्ने ! अस्माकम् । दिवि पृथिव्यां च[23] । देवान्[24] । प्रति[25] । सुमतिम्[26] । ब्रूहि । कामयस्वास्मदर्थम्[27] । दिवः[28] । नेतॄन् देवान्[29] । स्वस्ति[30] । सुनिवासं च[31] । शत्रून्[32] । पापानि । दुरितानि[33]

---

१. तत्र दृष्टान्तः । स यथा सर्वं भक्षयति तथा त्वं प्रौढकाष्ठादीनि क्षणमात्रेण दहसीत्यर्थः Sy.

२. यवसे D. घासे Sy. यथा यवसे घासे भक्षिते ....यद्वा तान्यपि त्वमेव यवसे मिश्रयसि स्थापयसि BB.

३. धामानि तेजांसि Sy. तस्मात्तवैवात्र धाम जन्म स्थानं वा, त्वमेव तत्तदात्मना जायसे तिष्ठसि वा BB.

४. यस्य 'सुपां सुलुक्०' इति षष्ठ्या लुक् Sy.

५. राजावर्जित P. हे जरारहिताग्ने ! Sy. हे अजर ! विनाशरहित ! त्वं खल्वविनाश उदकात्मना वर्षकाले जायसे अथवा तान्यप्युपसंहृत्य स्वरूपेणावतिष्ठस इति....स त्वमस्मदर्थं वर्षेति BB.

६. वननीयानि सम्भजनीयान्यरण्यानि Sy. तानि यानि वनानि BB.

७. छन्द० D. भक्षन्ति स त्वमिति पूर्वेणान्वयः Sy. वृश्चन्ति भक्षयन्ति, तानि त्वमेव भूत्वाऽच्युतानि तिष्ठन्ति BB.

८. दीप्तस्य Sy. तव शिक्वसोऽर्चींषि BB.

९. VM. ignores ह and ते ॥ ते तव । हेत्येतत्पादपूरणम् Sy.
This stanza=TS. 3.1.11.6.

१०. वेष P. पेष D. ११. हे अग्ने ! Sy.

१२. स्तुतिं हवींषि वा यतः कामयसे । अतः कारणात् Sy.

१३. ०तम् P. यज्ञमात्मन इच्छताम् Sy.

१४. त्वं देवानामाह्वाता सन् Sy.

१५. यजमानानाम् Sy.

१६. समिद्धिः P., D. समृद्धान् अस्मान् यजमानान् Sy. १७. विशां पालकाग्ने ! Sy.

१८. कुरु Sy. १९. अस्मदीयं हविः Sy.

२०. हविश्चागिरः P. कृत्वा च हे अङ्गनादिगुणयुक्त ! अङ्गाररूप ! वाग्ने ! Sy.

२१. अच्छः P., D.

२२. पूजपूजयितः P., D. हे अनुकूलदीप्ते ! Sy.

२३. द्यावापृथिव्योर्वर्तमानस्त्वम् Sy.

२४. यष्टव्यानिन्द्रादीन् Sy.

२५. आभिमुख्येन Sy.

२६. स्तुतिम् Sy.

२७. गमय । वेतिरत्रान्तर्भावितण्यर्थो द्रष्टव्यः Sy.

२८. स्तुतेः Sy. २९. नेतॄन् अस्मान् Sy.

३०. अविनाशम् Sy.

३१. शोभननिवासयुक्तम् Sy.

३२. वयञ्च द्वेष्टॄन् शत्रून् Sy.

३३. तत्फलरूपाणि दुर्गमनानि Sy.

च । तरेम[1] । अत्यन्तं च तरेम[2] । तव । रक्षणेन[3] । तरेम[4] ।

VI.3.

**अग्ने स क्षेषदृतपा ऋतेजा उरु ज्योतिर्नशते देवयुष्टे ।**
**यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्तमंहः ॥ १ ॥**

अग्ने सः[5] । अग्ने ! सः[6] । निवसति[7] । यज्ञस्य पालयिता[8] । यज्ञार्थं जातः[9] । विस्तीर्णम् । ज्योतिः[10] । प्राप्नोति । यस्ते[11] । देवकामयामिच्छति[12] ? यः[13] । त्वम् । मित्रेण । सहितः[14] । वारयिता[15] । देव[16] ! रक्षसि[17] । क्रोधेन[18] । मनुष्यम्[19] । आहन्तुः शत्रोः[20] ।

**ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश ।**
**एवा चन तं यशसामजुष्टिर्नांहो मर्तं नशते न प्रदृप्तिः ॥ २ ॥**

ईजे[21] । यजते[22] । यज्ञैः[23] । स्तौति[24] च[25] । स्तुतिभिः[26] । समृद्धवरणीयधनाय[27] । अग्नये[28] । हविश्च[29] प्रयच्छति[30] ।

---

१. अतिक्रामेम Sy.
२. द्वेष्टृप्रभृतीन् अत्यन्तं तरेम Sy.
३. क्षणेन P., D. उक्त एवार्थो दाढर्चाय पुनरुच्यते । हे अग्ने ! Sy.
४. VM. ignores देव ॥ ता तानि व्यवहितानि जन्मान्तरकृतानि च पापादीनि । दानादिगुणयुक्ताग्ने ! Sy.
५. 'अग्ने स क्षेषत्' इत्यष्टर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । अनुक्रान्तञ्च 'अग्नेऽष्टौ' (KSA 29.3.p.22.) इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.
६. यजमानः Sy.
७. क्षियति निवसति । चिरकालं जीवेदित्यर्थः Sy.
८. ऋतस्य यज्ञस्य पालकः Sy.
९. यज्ञनिमित्तं जातः Sy.
१०. जाति P., D. सूर्याख्यम् Sy.
११. उषित्वा च त्वदीयम् Sy.
१२. देवानात्मन इच्छन् Sy.
१३. यम् Sy.
१४. सह प्रीयमाणस्त्वम् Sy.
१५. वरुणः—तृतीयार्थे प्रथमा । वरुणेन च Sy.
१६. हे द्योतमानाग्ने ! Sy.
१७. स यजमान इति पूर्वत्र सम्बन्धः Sy.
१८. त्याजनसाधनेनायुधेन Sy.
१९. यजमानम् Sy.
२०. ०त्रो P. अंहसः पापात् Sy.
२१. भरद्वाजस्त्रिष्टुभाग्निं तुष्टाव DDN.
२२. नजे P.
२३. यो यजमानः Sy., DDN.
२४. जयते P., D. इष्टवान् भवति Sy., DDN.
२५. यज्ञे P. स यजमानः यज्ञेभिः सर्वैर्यज्ञैः Sy. स यजमानः सर्वैर्ज्योतिष्टोमादिभिः DDN.
२६. शान्तश्च भवति । आग्नेयेन यागेन सर्वं फलं लभत इत्यर्थः Sy. अग्निहोत्रहोमात्सर्वं फलं भवतीत्यर्थः । अपि च तं यजमानम् DDN.
२७. तथा कर्मभिः कृच्छ्रचान्द्रायणादिभिः Sy. तीर्थकृच्छ्रचान्द्रायणादिभिः कर्मभिः DDN.
२८. ०द्धंव० P. ऋधत्समृद्धं वारं वरणीयं धनं यस्य तादृशाय Sy. ऋधत्समृद्धं वारं वरणीयं धनं यस्यासौ ऋधद्वारोऽग्निः तस्मै अग्नये DDN.
२९. हवींषि Sy.
३०. ददाति Sy. प्रातराहुत्यादिना निमित्तेन ददाति DDN.

एवम्[1] । च क्रियमाणे । अन्नानाम्[2] । अपर्याप्तिः[3] । पापम् । दृप्तिरित्येतानि[4] । न । व्याप्नुवन्ति[5] ।[6]

**सूरो न यस्य दृशतिररेपा भीमा यदेति शुचतस्त आ धीः ।**
**हेषस्वतः शुरुधो नायमक्तोः कुत्रा चिद्रण्वो वसतिर्वनेजाः ॥ ३ ॥**

**सूरो न** । सूर्यः[7] । इव । यस्य[8] । दर्शनम्[9] । अपापम्[10] । यस्य च[11] । तव । दीप्तिः[12] । भीमा[13] । आगच्छति[14] । दीप्यमानस्य[15] । शब्दवतः[16] । तेजसो रोधयितुः[17] । काष्ठानामङ्क्तुरग्नेः[18] । वने जातः[19] । निवासः[20] । अयम्[21] । कुत्र । चिदपि[22] । न[23] । रमणीयो भवति ।

**तिग्मं चिदेम महि वर्पो अस्य भसदश्वो न यमसान आसा ।**
**विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत् ॥ ४ ॥**

**तिग्मं चित्** । तिग्मम्[24] । खलु । अस्य[25] । गमनम्[26] । महच्च[27] । रूपं दावभूतस्य । भक्षयति[28] । अश्वः । इव ।

---

१. 'एवा चन भजा राये०' (RPR. 8.35.) इति दीर्घः DDN.
२. यशस्विनां पुत्राणाम् Sy. यशोयुक्तानां पुत्राणां वा DDN.
३. अप्राप्तिः Sy.
४. अनर्थहेतुः प्रदर्पश्च तं न प्राप्नोति Sy. प्रदृप्तिः गर्वश्च DDN.
५. व्याप्युव० D. (नैव) प्राप्नोति । पुत्रवान् भवत्येवेत्यर्थः DDN.
६. VM. ignores तम् । न and मर्तम् ॥ अपि च तं यजमानम् Sy. तं मर्त मनुष्यं यजमानम् ॥ तथा च महाभारते—
गजाश्वरथदानानि हेमभारशतानि च ।
गवां कोटिसहस्राणि तुल्यानि प्रातराहुतेः ॥१॥
यो दद्यात्काञ्चनं मेरुं पृथिवीं च ससागराम् ।
तत्सायंप्रातर्होमस्य तुला भवति वा न वा ॥२॥
स य एवंविधं विराट्सम्पन्नमग्निहोत्रं जुहोति सर्वान् कामानाप्नोति' (Kau. B. 2.3.) इति श्रुतेः DDN.
७. सूर्यस्य Sy.
८. अग्नेः Sy.
९. दिशम् P. दिशनम् D.
१०. पापरहितम् Sy.
११. हे अग्ने ! यस्य Sy.
१२. ०प्ति P., D.
धीः धारयित्री ज्वाला Sy.
१३. भिमा P. भयङ्करा सती Sy.
१४. समन्तात् गच्छति Sy.
१५. ज्वलतः Sy.
१६. योऽयमग्निः शब्दयुक्ताः Sy.
१७. धयितुः P. शुचः शोकस्य रोधयित्रीर्गाश्च Sy.
१८. अक्तुरिति रात्रिनाम (Ngh. 1.7.) । तेन च तत्र सञ्चारी राक्षसादिर्लक्ष्यते राक्षसादेः स्वभूता । ददातीति शेषः Sy.
१९. अरण्ये जायमानः Sy.
२०. सोऽयं सर्वेषामावासभूतः Sy.
२१. ०सायायां P. ०सायं D.
२२. क्वचिदेव स्थाने पर्वताग्रादौ Sy.
२३. Omitted by D.
२४. तीक्ष्णं स्प्रष्टुमशक्यत्वात् Sy.
२५. अग्नेः Sy.
२६. एम गमनभूतो मार्गः Sy.
२७. प्रभूतम् Sy.
२८. दीप्यते । 'भस भर्त्सनदीप्त्योः' इति धातुः Sy.

यच्छन्[1] । आस्येन । विगमयन्[2] । परशुः[3] । इव । अस्य ज्वालाम्[4] । छेत्ता[5] । इव । गमयति । दारु[6] । दहन् ।

**स इदस्तेव प्रति धादसिष्यञ्छिशीत तेजोऽयसो न धाराम् ।**
**चित्रध्रजतिररतिर्यो अक्तोर्वेर्न द्रुषद्वा रघुपत्मजंहाः ॥ ५ ॥**

स इत् । सोऽग्निः । वेद्धेव[7] । शरान् क्षेप्स्यन्[8] । प्रतिदधाति[9] तेजः । तीक्ष्णीकरोति[10] । तेजः । परशोः[11] । इव । धाराम् । चित्रगमनः[12] । अभिगन्ता[13] । यः । रात्रेः । पक्षी । इव । द्रुमं प्रति गच्छन्[14] । शीघ्रगमनजङ्घः[15] [16] ।

**स ईं रेभो न प्रति वस्त उस्राः शोचिषा रारपीति मित्रमहाः ।**
**नक्तं य ईमरुषो यो दिवा नॄनमर्त्यो अरुषो यो दिवा नॄन् ॥ ६ ॥**

स ईम्[17] । सः । अयम्[18] । ज्वालाः[19] । आच्छादयति । वन्दी[20] । इव वस्त्राणि सङ्घं प्रविशन् । तेजसा । अत्यन्तं[21] शब्दं करोति । मित्राणां[22] पूजनीयः[23] । रात्रौ । यः । अयम्[24] । दीप्यमानो[25] भवति । यो[26] वा । दिवा[27] । नेतॄन्[28] देवान् । अमर्त्यः[29] । आरोचमानो[30] यज्ञं प्रति नयतीति[31] ।

---

१. तृणादिकं नियच्छन् Sy.
२. तरुगुल्मादौ प्रक्षिपन् Sy.
३. यथा परशुः स्वकीयां धारां काष्ठे प्रक्षिपति तथा Sy.
४. स्वकीयां ज्वालाम् Sy.
५. द्रविद्रावयिता स्वर्णकारः । स यथा स्वर्णादिकं द्रावयति तथा सर्वं वनं द्रावयति मूर्तभूतं भस्मसात्करोतीत्यर्थः Sy.
६. काष्ठम् Sy.
७. वर्धेव P. वद्धेव D. बाणादेः क्षेप्तेव Sy.
८. प्रतिधाय च ज्वालां प्रक्षेप्स्यन् Sy.
९. स्वकीयज्वालां प्रतिधत्ते । यथा धन्वी लक्ष्याभिमुख्येन बाणं सन्धत्ते तथा ज्वालां सन्धत्त इत्यर्थः Sy.
१०. निश्यति । तीक्ष्णीकरोति Sy.
११. तत्र दृष्टान्तः । यथाऽयोमयस्य परश्वादेर्धारां प्रक्षेप्तुकामस्तीक्ष्णीकरोति तद्वत् Sy.
१२. तीक्ष्णीकृत्य च विचित्रगतिः Sy.
१३. अभि is omitted by D.
१४. वृक्षेषु सीदन् Sy.
१५. लघुपतनसमर्थपादः । एवम्भूतः सन् योऽग्निर्वर्तते स इति पूर्वत्रान्वयः Sy.
१६. VM. ignores इत् ॥ इत् खलु Sy.
१७. ई P., D.
१८. ०य P., D. अग्निः Sy.
१९. दीप्ता ज्वालाः Sy.
२०. स्तुत्यः सूर्यः Sy.
२१. भृशं शब्दं करोति Sy.
२२. मित्रौणां P.
२३. ०यौ D. सर्वेषामनुकूलप्रकाशः सन् Sy.
२४. अग्निः Sy.
२५. आरोचमानः सन् Sy.
२६. पुनर्यच्छब्दः पूरकः Sy.
२७. देवा P., D. अहनीव Sy.
२८. मनुष्यान् स्वस्वकार्ये प्रेरयति । यः अग्निः दिवा द्योतमानेन तेजसा नेतॄनात्मीयान्रश्मीन् प्रेरयति स इति पूर्वत्र सम्बन्धः । यद्वा नक्तं रात्रौ योऽयमग्निररुष आरोचमानो यश्च मरणरहितोऽग्निर्दिवाह्नि नॄन् नेतॄन् देवान् हविर्भिः संयोजयति ।
२९. तथा अमरणधर्मा Sy.
३०. आरोचमानः रोषरहितो वा Sy.
३१. VM. ignores यः । दिवा and नॄन् ॥ यो दिवा नॄनिति पुनरुक्तिरादरार्था Sy.

**दि॒वो न यस्य॑ विध॒तो नवी॑नो॒द्वृषा॑ रु॒क्ष ओष॑धीषु नूनोत् ।**
**घृणा॒ न यो ध्रज॑सा॒ पत्म॑ना॒ यन्ना रोद॑सी॒ वसु॑ना॒ दं सु॒पत्नी॑ ॥ ७ ॥**

**दिवो न**[1] । द्युलोकस्य[2] । इव । यस्य[3] । देवान् परिचरतो[4] महत्वम्[5] । स्तोता स्तौति[6] । स वृषाग्निः[7][8] । दीप्तः[9] । ओषधीषु । शब्दं करोति[10] । तेजसा[11] । वेगेन[12] । च[13] । सह यः । मार्गेण[14] च । गच्छन्[15] । आपूरयति[16] । शोभनपतिके । द्यावापृथिवी[17] । मदयिता[18] । वासयितॄणां[19] तेजसाम्[20] ।

**धायो॑भिर्वा॒ यो युज्ये॑भिर॒र्कैर्वि॒द्युन्न द॑विद्यो॒त्स्वेभि॒ः शुष्मैः॑ ।**
**शर्धो॑ वा॒ यो म॒रुतां॑ त॒तक्ष॑ ऋ॒भुर्न त्वे॒षो र॑भसा॒नो अ॑द्यौत् ॥ ८ ॥**

**धायोभिः**[21] । धारकैः[22] । इव मित्रैः । योऽग्निः । अर्चनीयैः[23] । तेजोभिर्युक्तः[24] सः । विद्युत् । इव । विद्योतते । स्वैः[25] । शोषकैस्तेजोभिः । यश्च । मरुताम्[26] । अपि[27] । बलम् । करोति[28] । स आदित्यः[29] । इव । दीप्तः । बलमाचरन्[30] । द्योतते[31] ।

---

१. नः P.
२. दीप्तस्य सूर्यस्य Sy.
३. अग्नेः Sy.
४. विधातू रश्मीकुर्वतः Sy.
५. ०त्वम् is suggested for ०त्वम् ।
६. भृशं शब्दोऽभूत् । एतदेव व्याचष्टे Sy.
७. कामानां वर्षिता Sy.
८. ०ग्नि P. ०ग्निः D.
९. ओषधीषु दह्यमानासु Sy.
१०. भृशं शब्दमकरोत् Sy.
११. सञ्चलनशीलेन दीप्तेन Sy.
१२. गमनशीलेन तेजसा Sy.
१३. इव Sy.
१४. इतस्ततः उत्पतता Sy.
१५. गच्छन् वर्तते सोऽग्निः Sy.
१६. आपूरयति Sy.
१७. द्यावापृथिव्यौ Sy.
१८. दमिता D. दमयिता is suggested for मदयिता ॥ अस्मच्छत्रून् दमयन् Sy.
१९. वासयितॄणा is suggested for वासयितॄणाम् ।
२०. धनेन Sy.
तेजसा is suggested for तेजसाम् ॥
२१. धारयोभिः P. धारयाभिः D.
२२. धारकैरश्वैः Sy.
२३. दीप्तिभिर्गच्छति सोऽग्निः Sy.
२४. ०भियु० P. स्वयमेव युज्यमानैः Sy.
२५. स्वकीयैः Sy.
२६. मरुताम् एतत्संज्ञकानां देवानाम् Sy.
२७. वा इव Sy.
२८. तनूकरोति, सर्वं तीक्ष्णीकरोति । शोषयतीति यावत् Sy.
२९. सोऽयमृभुः उरु भासमानः सूर्यः Sy.
३०. वेगं कुर्वन् Sy.
३१. विद्योतते प्रकाशते Sy.

## VI.4.

**यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि ।**
**एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान् ॥ १ ॥**

[१] यथा होतः । यथा[२] । होतः[३] ! पुरा । मनुषः[४] । यज्ञे देवान्[५] । हविर्भिः[६] । हे सहसः[७], पुत्र[८] ! अयजः[९] । एवम् । अस्माकम् । अद्य यज्ञे[१०] । समानकालीनान्[११] । कामयमानस्त्वम् । अग्ने ! यज । देवान्[१२] ।[१३]

**स नो विभावा चक्षणिर्न वस्तोरग्निर्वन्दारु वेद्यश्चनो धात् ।**
**विश्वायुर्यो अमृतो मर्त्येषूषर्भुद्भूदतिथिर्जातवेदाः ॥ २ ॥**

स नः[१४] । दीप्तिमान्[१५] । आदित्यः[१६] । इव । अह्नि[१७] । अग्निः । वन्दनीयम्[१८] । अन्नम्[१९] । दधातु[२०] । विदितः[२१] । सर्वान्नः[२२] । यः[२३] । अमरणधर्मा[२४] । मनुष्येषु[२५] । उषसि बुध्यमानः[२६] । भवति । अतिथिः[२७] । जातप्रज्ञः[२८] ।[२९]

**द्यावो न यस्य पनयन्त्यभ्वं भासांसि वस्ते सूर्यो न शुक्रः ।**
**वि य इनोत्यजरः पावकोऽश्नस्य चिच्छिश्नथत्पूर्व्याणि ॥ ३ ॥**

द्यावः[३०] । दीप्ता देवाः[३१] । च[३२] । यस्य[३३] । स्तुवन्ति । महत्वम्[३४] । स[३५] तेजांसि । आच्छादयति । सूर्यः ।

---

१. 'यथा होतः' इत्यष्टर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । 'यथा होतः' (KSA. 29. 4.p.22.) इत्यनुक्रान्तम् प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.
२. येन प्रकारेण Sy. ३. हे देवानामाह्वातः! Sy.
४. मा० P. मनोः प्रजापतेर्यजमानस्य Sy.
५. देवताता इति यज्ञनाम Ngh. 3.17.
६. ०भि P. यजमानसाधनैर्हविर्भिः Sy.
७. बलस्य Sy. ८. पुत्र ! अग्ने ! Sy.
९. देवान् यजसि Sy.
१०. अत्र D. अस्मिन् यज्ञे Sy.
११. त्वत्सदृशानिन्द्रादीन् Sy.
१२. ०वान् न D. यष्टव्यान् देवान् Sy.
१३. VM. ignores समना and उशतः ॥ समना क्षिप्रम् । यद्वा समानं मन्यन्तेऽस्मिन् देवानिति समनो यज्ञः । तस्मिन्निति योज्यम् । उशतः कामयमानान् Sy.
१४. ०दः P. १५. विशेषेण दीप्यमानः Sy.
१६. प्रकाशकः सूर्यः Sy.
१७. अहनि Sy.
१८. इव ह्यर्व० P. स्तुत्यम् Sy.
१९. ०न्न P. २०. प्रयच्छत्वित्यर्थः Sy.
२१. सर्वैर्ज्ञातव्यो लम्भनीयो वा Sy.
२२. सर्वान्नः सर्वेषां जीवनहेतुर्वा Sy.
२३. अग्निः Sy. २४. मरणरहितः Sy.
२५. मनुष्येषु यजमानेषु Sy.
२६. उषःकालेऽग्निहोत्रहोमार्थं प्रबुद्धो भवति स इति पूर्वत्रान्वयः Sy.
२७. हविर्वहनाय सततगामी Sy.
२८. जातानां वेदिता जातधनो वा Sy.
२९. VM. ignores सः and नः ॥ सः अग्निः । नः अस्मभ्यम् Sy. ३०. Omitted by P.
३१. स्तोतारः Sy.
३२. ०वश्च P. नेति सम्प्रत्यर्थे । सम्प्रतीदानीम् Sy. अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः N.7.31.
३३. अग्नेः Sy.
३४. ०त्त्वम् is suggested for ०त्वम् ॥ महत्कर्म Sy. ३५. अग्निः Sy.

इव । दीप्यमानः[1] । विविधम्[2] । यः । गच्छति[3] । अजरः । पावकः[4], प्रीणयति[5] वा । स मेधस्य[6] । अपि । श्नथति[7] । चिरन्तनान्युदकानि[9] ।

**वद्मा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषाज्मान्नम् ।**
**स त्वं न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः ॥ ४ ॥**

वद्मा हि[10] । वदिता[11] । हि । हे सहसः सूनो[12] ! भवसि त्वम् । अन्नेषु सीदन्[13] । अथ परोक्षः[14], करोति[15] । अन्नम्[16] । जन्मना[17] । अभिगन्तव्यम्[18] । सः[19] । त्वम् । अस्मभ्यम् । अन्नस्य दातः[20] ! अन्नम्[21] । धेहि[22] । राजेव[23] ।

---

१. शुक्लवर्णः सन् Sy.
२. भासा सर्वं व्याप्नोति Sy.
३. जरारहितः Sy.
४. सर्वस्य शोधकोऽग्निः Sy.
५. प्रीणयति should immediately follow गच्छति and precede अजरः ।
६. अयम् Sy.
७. व्यापनशीलस्य राक्षसादेः Sy.
८. ०थाति D. हिनस्ति । 'श्नथ क्नथ हिंसायाम्' इति धातुः Sy.
९. ०रन्त० P.
चिरन्तनानि पुराणि Sy.
१०. विद्वा P.
११. वदनीयः स्तुत्योऽसि Sy. स त्वं वद्मासि, वदत्यनयेति वद्मा वाक्, त्वं वागिन्द्रियम् । तस्यापि कारणं प्राणो वा त्वया हि सर्वे वदन्ति । असीत्यस्य 'हि च' इति निघातप्रतिषेधः । वद्माशब्द उञ्छादिषु द्रष्टव्यः BB.
१२. हे सूनो ! सहसः पुत्र ! यद्वा 'षू प्रेरणे' सर्वस्य प्रेरकाग्ने Sy. हे सूनो पुत्र ! कस्य ? सहसो यजमानस्य वा । यद्वा पुत्रवत्सर्वेषामभिमतकारिन् ! सूनुवत् सूनुः, उपचारपदं वा । अथवा सोता सूनुः सर्वस्योत्पादकः । सूतेः 'सुवः कित्' इति नुप्रत्ययः BB.
१३. अद्मस्वदनीयेषु हविःषु सीदन् हविःस्वीकरणायोपविशन्नग्निः Sy.
पुनश्चाग्निर्विशेष्यते । अद्मसद्वा, अद्यत इत्यद्म अन्नम् । अदेर्मनिन् प्रत्ययः । अद्मनि सीदन्तीत्यद्मसद्वा ।...'सोऽग्रभुग्विभजंस्तिष्ठन्नाहारमजरः कविः' इति जन्तूनां स्थितिहेतुत्वेन प्रवर्तक इत्यर्थः । यद्वा हवीरूपेऽन्ने प्राणिनां स्थित्यर्थमेव त्वं सीदसीति । यस्मादेवमत एव खलु, अग्निर्भगवान् BB.
१४. परः पादः परोक्षकृतः Sy.
१५. चक्र उत्पादितवान् । मध्यमस्य वा प्रथमव्यत्ययः BB.
१६. अज्मेति गृहनाम । Ngh. 3.4. गृहमन्नं च यजमानानाम् Sy.
१७. स्वभावत एव Sy. जायमान एव BB.
१८. कीदृशमन्नम् ? अज्म, अजन्त्येतत्सर्वेऽपि भोक्तृत्वेनेत्यज्म, सर्वाभिलषितमित्यर्थः । अजेर्मनिन् BB.
१९. तादृशः Sy. यस्मादेवं त्वं सर्वेषां प्राणभूतोऽसि प्राणस्य च स्थित्यर्थमन्नमुत्पादितवान्, तस्मात्स तादृग्विधस्त्वम् BB.
२०. ऊर्जस्यान्नस्य दातः अग्ने ! Sy. ऊर्जसाऽन्नस्य दाता सम्भक्ता वा ।....पृषोदरादित्वाद् व्यञ्जनस्य लोपः । यद्वा ऊर्जा रसेन तद्वतां रसवतामन्नादीनां दातः ! ऊर्क्शब्दान्मत्वर्थीयोऽकारः BB.
२१. अन्नं रसं वा BB.
२२. दातारन्धेहि P. देहि Sy.
२३. पुनरपि प्रार्थितस्य शीघ्रप्रदानार्थं प्ररोचयन् स्तौति । हे अग्ने ! राजेव जेः, यथा राजा सन्निधिमात्रेणानायासेन शत्रुं जयत्येवम् BB.

शत्रून् जय[1] । स्तेनरहिते गृहे[3] । अन्तः[4] । निवसेति[5] ।[6]

**नितिक्ति यो वारणमन्नमत्ति वायुर्न राष्ट्यत्येत्यक्तून् ।**
**तुर्याम यस्त आदिशामरातीरत्यो न हुतः पततः परिहुत् ॥ ५ ॥**

**नितिक्ति ।** मन्त्रेण संस्कृतम्[7] । यः[8] । वरणीयम्[9] । अन्नम्[10] । अत्ति[11] । स वायुः[8] । इव । राष्ट्रवान्[12] । अतिगच्छति[13] । तमांसि शत्रून् वा[14] । तन्माततिरमाभियान्ति[15] । तुभ्यम्[16] । आभिमुख्येन हवींषि दिशतामस्माकम्[17] । अरातीश्च[18] । इव । हिंसितः[19] । अभिगच्छतः सैनिकान्[20] । सर्वतो हिंसिता[21][22]

**आ सूर्यो न भानुमद्भिरर्कैरग्ने ततन्थ रोदसी वि भासा ।**
**चित्रो नयत्परि तमांस्यक्तः शोचिषा पत्मन्नौशिजो न दीयन् ॥ ६ ॥**

**आ सूर्यः ।** आततन्थ[23] । सूर्यः[24] । इव । दीप्तिमद्भिस्तेजोभिः[25] । अन्नैः[26] । द्यावापृथिवी[27] । तेजसा[28] ।

---

१. अस्मच्छत्रून् Sy.

२. त्वं शत्रुं जयसि BB.

३. एतत्सर्वार्थमवृके राक्षसादिभिर्बाधकैर्वियुक्तेऽस्मदीयेऽन्यागारे Sy. वृकाः हिंसकाः कामक्रोधादयः, तद्रहिते पुरुषे स्वात्मनिरते BB.

४. Omitted by P. मध्ये Sy. मध्ये तदीये हृदये BB.

५. क्षयसि निवससि तमनुगृहीतुम् । 'क्षि निवासगत्योः' पूर्ववच्छपो लुक् । स त्वं यजमानमन्नवन्तं कुर्विति BB.

६. VM. ignores अग्निः ॥
This stanza=TS.1.3.14.7.

७. निश्यति तीक्ष्णीकरोति । 'तिज निशाने' इति धातुः Sy.

८. अग्निः Sy.

९. तमसां निवारकं स्वकीयं तेजः Sy.

१०. यश्च अन्नं यष्टृभिर्दीयमानं हविर्लक्षणम् Sy.

११. भक्षयति । तथा च श्रूयते 'अन्नादो वा एषोऽन्नपतिर्यदग्निः' (AB. 1.8) इति Sy.

१२. ष्टुवान् P. अष्ट्रवान् D. राष्ट्रं राज्यं तद्वान् । वायुर्यथा स्वमाहात्म्येन सर्वमीष्टे तद्वत् । सर्वस्येश्वर इत्यर्थः । तादृशः सन् Sy. राष्ट्रीति ईश्वरनाम Ngh. 2.22.

१३. अतिक्रामति तद्गतमन्धकारं तिरस्करोतीत्यर्थः Sy.

१४. रात्रीः Sy.

१५. वयञ्च त्वत्प्रसादात् तुर्याम तं हिंस्याम यो जनः Sy.

१६. ०न्तिस्तु० P., D.

१७. तुभ्यमादिश्यमानानां दीयमानानां हविषाम् Sy.

१८. अरातिरदाता । छान्दसो दीर्घः । यद्वा अरातीर्धनस्यादातॄन् । ते त्वां प्रत्यादिशामादेष्टॄणामाचक्षाणानामस्माकं यो जनः विरोधी तं हिंस्याम Sy.

१९. हिंसतः P. हिंसकान् Sy.

२०. आभिमुख्येन गच्छतः शत्रून् Sy.

२१. ०ताः P. परिगत्य हन्ता भव । ह्वरतेर्हिंसार्थस्येदं रूपम् Sy.

२२. VM. ignores अत्यः ॥ अत्यः शीघ्रगामी जात्यश्व इव Sy.

२३. ०न्ध P. ०न्थे D. विशेषेणाच्छादयसि Sy.

२४. तत्र दृष्टान्तः । यथा सूर्य आतनोति तद्वत् Sy.

२५. प्रभावद्भिः Sy.

२६. ०न्नै D. अर्चनीयैः किरणैः Sy.

२७. द्यावापृथिव्यौ Sy.

२८. दीप्त्या Sy.

परोक्षः[1] शेषः—चित्रवर्णः[2]। परितो नयति[3] विनाशयति। नमांसि[4]। हविर्भिरक्तः[5]। नेजना[6]। दिवि गच्छन्। स्तोतॄणां[7] कामानाम्। प्रदाता[8]। इव[9]।

**त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने।**
**इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥ ७ ॥**

त्वां हि[10]। त्वाम्[10]। हि[11]। स्तुत्यतमम्[12]। अर्चनीयैस्तेजोभिः[13]। भजामहे[14]। महत्[15]। स्तोत्रमस्माकम्[16]। शृणोषि हि[17]। अग्ने[18]! त्वाम्[19]। इन्द्रः[20]। इव[21]। बलेन[22]। देवना[23]। गन्तारम्[24]। पूरयन्ति[25]।

---

१. परोऽर्धर्चः परोक्षकृतः Sy.
२. चायनीयोऽग्निः Sy.
३. परिणयति। परितो गमयति सर्वस्मादपि दिग्भागान्निवर्तयतीत्यर्थः Sy.
४. नैशान्यन्धकाराणि Sy. ५. संश्लिष्टः Sy.
६. It seems to be the explanation of पत्मन्॥ पतत्यस्मिन्निति पत्म मार्गः। तस्मिन् Sy. ७. उशिजः स्तोतारः। स्तुत्यतया तत्सम्बन्ध्यौशिजः सूर्यः! स इव Sy.
८. It seems to be the explanation of दीयन्॥ गच्छन् Sy.
९. VM. ignores अग्ने।
१०. त्वं P. बार्हस्पत्यस्य भरद्वाजस्यार्षम् Dur. भरद्वाजस्यार्षम् SKN.
११. यस्मात् Sy., Mah. एव U., Dur. हिर्यस्मादर्थे। यस्मात् SKN.
१२. त्यत० P. अतिगम्भीरम् Mah. मन्दनीयतमं मृदुहृदयं वा U. मृदुतमं सुखाराध्यतमम् Dur. अतिशयेन स्तुत्यम् SKN.
१३. ०नीयस्ते० P. अर्चनीयैः पूजनीयैः शोकैर्दीप्तिभिर्युक्तम् Sy. अर्कवच्छोचन्तेऽर्कशोका मन्त्रास्तैरविप्लुतब्रह्मचर्यैः। यथोक्तमधीता मन्त्रा अर्कवद् दीप्ताः स्युः Mah. मन्त्रैर्दीप्तैः यथोक्तस्थानकर्णानुप्रदानवद्भिः देवताद्यात्मवित्तसन्तानगर्भगुरुशुश्रूषाधिगताविप्लावितब्रह्मचर्यैः। एवं हि मन्त्रा दीप्ताः स्युः U. एकपदमेतत्। अर्चनैर्मन्त्रैः शौकैर्दीप्तैर्यथोक्तब्रह्मचर्यजनितवीर्यैः Dur. अर्को मन्त्रः शोको दीप्तिः। अर्काश्च ते शोकाश्चार्कशोकास्तैः स्वदीप्त्या दीप्तैर्मन्त्रैरित्यर्थः SKN.
१४. वृणीमहे। सम्भजामहे। यद्वा अर्कशोकैरर्चनीयैः प्रशस्यैर्दीप्तिकरणैः स्तोत्रैः साधनभूतैस्त्वां सम्भजामहे। तस्मात् Sy. ववृमहे वृतवन्तः Mah. वृतवन्तो वयम् U. त्वं हि देवेषु सर्वेषु मृदुहृदयतमो यतोऽतस्त्वामेव....सम्भजामहे Dur. सम्भजामहे नित्यं स्तुम इत्यर्थः SKN.
१५. महत्स्तोत्रं तैरेव मन्त्रैर्युष्मद्गुणानुस्मृतिसन्तानगर्भैरुपग्रथितम् Dur. यस्मादिति श्रुतेस्तस्मादित्यध्याहार्यम्। तस्मान्महि महत्स्तुतिरूपम् SKN. १६. अस्मदीयम् Sy. अतस्त्वं भज्यमानस्तैर्मन्त्रैः संसेव्यमानो नोऽस्माकम् Dur.
१७. शृणु Sy. शृणोषि। विकरणव्यत्ययः Mah. .....श्रुत्वा च प्रभावयसि कर्म U. शृणु Dur., SKN. १८. त्वं च वृतः सन् U.
१९. इन्द्रम् Sy. इन्द्रमिव वायुमिव च स्थितम् Mah. कतम उच्यते ?...इन्द्रमिव Dur., SKN.
२०. VM. seems to take इन्द्रम् as इन्द्रः।
२१. न इवार्थे। उभयोः सम्बध्यते Mah. उपमार्थीयो नकारः U. २२. बलवतीभिः स्तुतिभिरभ्यर्चन्ति। किं पुनः स्वैः कर्मभिः Dur. शव इति बलनाम (Ngh. 2.9.) अन्तर्हितमत्वर्थं चेह द्रष्टव्यम्। बलवता सारवतेत्यर्थः SKN.
२३. ०ता D. देवतात्मानं त्वाम्। देवताशब्दाद् द्वितीयायाः 'सुपां सुलुक्०' इति लुक् Sy.
२४. यद्वा वायुमिव शवसा युक्तम् Sy. लुप्तोपममेतत्। वायुसदृशम् SKN.
२५. प्रीणयन्ति Sy. वायुमिव च पूरयन्ति U. तेऽपि च त्वामेव पृणन्ति पालयन्ति पूरयन्ति वा Dur. प्रीणयन्ति SKN.

नेतृतमाः[1] । अन्नेन[2] ।

नू नो॑ अग्ने॒ऽवृके॑भिः स्व॒स्ति वेषि॑ रा॒यः प॒थिभि॒ः पर्ष्यंहः॑ ।
ता सू॒रिभ्यो॑ गृण॒ते रा॑सि सु॒म्नं मदे॑म श॒तहि॑माः सु॒वीराः॑ ॥ ८ ॥

नू[3] नः[4] । क्षिप्रम् । अस्माकम् । अस्तेनैः[5] । पथिभिरागत्य[6] । अविनाशेन[7] । धनानि[8] । कामयस्व[9] । पर्षि[10] । रक्षः सः[11] । देवेभ्यः[12] । स्तुवते मह्यम् । सुखम्[13] । प्रयच्छ[14] । मोदेम[15] । शतसंवत्सराः[16] । सुपुत्राः[17][18] ।

## VI.5.

हु॒वे वः॑ सू॒नुं सह॑सो॒ युवा॑न॒मद्रो॑घवाचं म॒तिभि॒र्यवि॑ष्ठम् ।
य इन्व॑ति॒ द्रवि॑णानि॒ प्रचे॑ता वि॒श्ववा॑राणि पु॒रुवा॑रो अ॒ध्रुक् ॥ १ ॥

हुवे वः सूनुम्[19] । ह्वयामि[20] । युष्माकम्[21] । सहसः[22] । सूनुम्[23] । युवानम्[24] । अहिंसितवाचम्[25] । स्तुतिभिः[26] ।

---

१. हे अग्ने ! नृतमाः स्तुतीनां नेतृतमा ऋत्विजः Sy. मनुष्यश्रेष्ठाः Mah. मनुष्यतमाः U. येऽपि च केचिदन्ये त्रिलोके नृणां मध्ये बलधनश्रुतैर्नृतमाः Dur. प्रकृष्टनराः SKN.

२. हविर्लक्षणेन धनेन Sy. हवीरूपेणान्नेन Mah. हविर्लक्षणेन धनेन U. हविर्लक्षणेन धनेन । एवं सदेवमनुष्यस्य जगतः पूज्यस्त्वं न केवलमस्माकमिति Dur. धनेन हविर्लक्षणेन SKN. अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति । तदेतेनोपेक्षितव्यम् । ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति । 'इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति' । इति । वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे N. 1.17.SKN. I. 108.

३. नाः P.

४. हे अग्ने ! Sy.

५. ०क P. अस्मान् Sy.

६. स्तेनैः P., D. वृकाः स्तेनाः । तद्रहितैः Sy.

७. ०रग० P., D. मार्गैः Sy.

८. अविनाविनाशेन P. क्षेमेण Sy.

९. वेषि गमय प्रापय Sy.

१०. पर्षी P. वषि D. उक्तलक्षणैर्मार्गैः पारय चास्मान् Sy.

११. सत् D. रक्षसः or राक्षसात् is suggested for रक्षःसः ॥ पापात् Sy.

१२. देव्यभ्यः P. यानि त्वया स्तोतृभ्यः देयानि Sy.

१३. सुम्नानि सुखानि Sy.

१४. देहि Sy.

१५. हृष्याम Sy.

१६. वयं च शतं हेमन्तान् संवत्सरान् Sy.

१७. संपु० P. वीर्याज्जायन्त इति वीराः पुत्रादयः । शोभनपुत्रपौत्रादिसहिताः सन्तः Sy.

१८. VM. ignores अग्ने and ता ॥ ता तानि Sy.

१९. 'हुवे वः' इति सप्तर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । तथा चानुक्रम्यते 'हुवे (वः) सप्त' (KSA.29.5.p.22.) इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

२०. ह्वायत्यमि P. आह्वयामि Sy.

२१. वः, व्यत्ययेन बहुवचनम् । त्वाम् Sy.

२२. बलस्य Sy.

२३. पुत्रम् । अग्निर्हि बलेन मथ्यमानो जायते Sy.

२४. नित्यतरुणं फलस्य मिश्रयितारं वा Sy.

२५. अद्रोग्धव्या प्रशस्ता स्तुतिरूपा वाक् यस्मिन् प्रयुज्यते तादृशम् Sy.

२६. मननीयैः स्तोत्रैः Sy.

युवतमम्[1] । यः[2] । प्रयच्छति[3] । धनानि । सुमतिः[4] । सर्वैर्वरणीयानि[5] । बहुभिर्वरणीयः[6] । अद्रोग्धा[7] ।

**त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः ।**
**क्षामेव विश्वा भुवनानि यस्मिन्त्सं सौभगानि दधिरे पावके ॥ २ ॥**

त्वे वसूनि । त्वयि[8] । धनानि[9] । बहुरश्म्यनीक[10] ! ह्वातः[11] । अह्नि[12] । रात्रौ च स्थितानि । आभिमुख्येन प्रापयन्ति[13] । यजमानाः[14] । क्षीणानीव भूतानि[15] । आढ्ये विश्वानि[16] । भूतानि[17] । सन्दधिरे[18] । यस्मिन् । पावके[19] । वसूनि[20] ।

**त्वं विक्षु प्रदिवः सीद आसु क्रत्वा रथीरभवो वार्याणाम् ।**
**अत इनोषि विधते चिकित्वो व्यानुषग्जातवेदो वसूनि ॥ ३ ॥**

त्वं विक्षु[21] । त्वम् । मनुष्येषु[22] । पुराणः[23] । सीदसि[24] । कर्मणा[25] । रथी च[26] । भवसि[27] । धनानां[28] नेता[29] ।

---

१. युवमं P., D. अतिशयेन युवानम् Sy.
२. अग्निः Sy.
३. प्रेरयति स्तोतृभ्यो ददातीति यावत् । तं त्वां हुव इति पूर्वत्र सम्बन्धः Sy.
४. प्रकृष्टज्ञानः Sy.
५. सर्वैर्वरणीयानि सम्भजनीयानि प्रशस्यानि Sy.
६. पुरुभिर्बहुभिर्वरणीयः सम्भजनीयः Sy.
७. ०णीयानिद्रो० P., D. अद्रोग्धा यजमानानामेवम्भूतः Sy.
८. त्वयि खलु BB.
९. हविर्लक्षणानि धनानि Sy. वासहेतुत्वाद्वरिष्ठानि वा धनानि हविर्लक्षणानि BB.
१०. ०रश्यनिकं P. ०कं D. हे बहुज्वाल ! Sy. बहुबल ! BB.
११. देवानामाह्वातः ! अग्ने ! Sy.,BB.
१२. अहनि Sy.
१३. ०न्ती D. आभिमुख्येन प्रेरयन्ति । प्रापयन्ति । जुह्वतीत्यर्थः Sy. प्रक्षिपन्तीत्यर्थः BB.
१४. यज्ञार्हा यजमानाः Sy. यज्ञार्हाः BB.
१५. दक्षिणा० P. क्षमायां भूम्यामिव Sy. त्वदनुग्रहात्पूर्वं किमिवावस्थितानीति चेत् ? उच्यते—क्षामेव क्षामं क्षीणं दग्धबहुलमस्माकं शत्रुबलं (बलेन) यादृशं बलं, पूर्वापरजनमरणं वा यादृशं, गृहं वा दग्धं यादृशं तदिव पूर्वमसुभगानि भुवनानि त्वत्प्रसादेन सुभगानि भवन्तीति । तस्मादस्माकं शत्रुबलं पूर्वापरमरणं गृहदाहं च शमयित्वा सुभगानस्मान्कुरु श्रीमतो यशस्विनश्च कुरु BB.
१६. सर्वाणि Sy., BB.
१७. भूतजातानि Sy.
१८. देवाः सम्यग्निहितवन्तः । 'अग्नौ वामं वसु सं न्यदधत' (TS.1.5.1.1.) इति ब्राह्मणम् । तस्मिंस्त्वयीति पूर्वत्र योज्यम् Sy. सम्यग् धारयन्ति BB.
१९. शोधकेऽग्नौ Sy. पावके त्वयि सति BB.
२०. धनानि Sy. सौभाग्यानि BB.
This stanza=TS. 1.3.14.2.
२१. हे अग्ने ! Sy. २२. प्रजासु Sy.
२३. ०ण P. पुरातनकालीनासु Sy. प्रदिव इति पुराणनाम Ngh. 3.27.
२४. वैश्वानरात्मना वर्तसे Sy.
२५. तथात्मीयेन कर्मणा Sy.
२६. रथिश्च P. रंहयिता यजमानेभ्यः प्रापयिता Sy.
२७. अभवः Sy.
२८. वरणीयानां धनानाम् Sy.
२९. नेता seems to be the explanation of रथीः ॥

अत आदाय[1] । प्रयच्छसि[2] । परिचरते[3] । ज्ञातः[4] ! विविधमनुपक्तम्[5] । जातधन[6] ! वसूनि[7][8] ।

**यो नः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो वनुष्यात् ।**
**तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥ ४ ॥**

यो नः सनुत्यः[9][10] । यः[11] । अस्मान् । अन्तर्हिते देशे दूरे वर्तमानः[12] । अभिदासति[13] । अग्ने ! बाधते[14] । यः[15] । समीपस्थः । मित्राणां पूजयितः[16] ! हन्ति[17] । तम्[18] । जरारहितैः । वर्षितृभिः[19] । तव । स्वभूतैस्तेजोभिः[20] । तप[21] । तप्तृतम[22] ! तेजसाम् । तपसा[23] । सन्तापवान्[24] ।

**यस्ते यज्ञेन समिधा य उक्थैरर्केभिः सूनो सहसो ददाशत् ।**
**स मर्त्येष्वमृत प्रचेता राया द्युम्नेन श्रवसा वि भाति ॥ ५ ॥**

यस्ते यज्ञेन । यः[25] । तुभ्यम्[26] । यज्ञेन[27] । समिधा[28] । दानं करोति[29] । यश्च[30] । स्तोत्रशस्त्रैः[31] । सहसः[32], सूनो[33] ! सः[25] । मनुष्येषु । अमृत[34] ! प्रकृष्टज्ञानः[35] । धनेन । अन्नेन[36] । कीर्त्या[37] च । विभाति[38] ।

---

१. नेतः त P. २. विविधं प्रेरयसि Sy.
३. परिचरते यजमानाय Sy.
४. अतः कारणात् हे विद्वन् ! Sy.
५. सततं यथा भवति तथा वीनोषि विविधं प्रेरयसि Sy. ६. ज्ञातधनं P. ०नं D. जातानां प्राणिनां वेदितरग्ने ! Sy.
७. धनानि Sy.
८. VM. ignores आसु ॥ आसु परिदृश्यमानासु Sy.
९. प्रवर्ग्येऽभिष्टवे 'यो नः सनुत्यः' इति द्वृचः। सूत्रितञ्च—'यो नः सनुत्यो अभिदासदग्ने भवा नो अग्ने सुमना उपेताविति द्वृचाः' (ĀSS.4.6.) इति Sy. १०. सुनु० D.
११. शत्रुः Sy.
१२. अन्तर्हिते देशे वर्तमानः-सन् Sy. सनुतरित्यन्तर्हितनाम Ngh. 3.25.
१३. ०माभि० P. उपक्षपयति बाधते Sy.
१४. बाधते should immediately follow अभिदासति and precede अग्ने।
१५. यश्च अभ्यन्तरवर्ती सन् Sy.
१६. ०त P. हे अनुकूलदीप्ते ! मित्राणां महयितः ! वाग्ने ! Sy.
१७. हिंस्यात् Sy.
१८. उभयविधम् Sy.
१९. वृष्टिहेतुभूतैः Sy.
२०. असाधारणैस्तेजोभिः Sy.
२१. तव P., D. दह Sy.
२२. ०प्तत P. तमुभयविधं हे तप्तृतमाग्ने ! Sy.
२३. तेजसा Sy.
२४. न्तपवान् P. तेजस्वी त्वम् Sy.
२५. यजमानः Sy.
२६. त्वाम् Sy.
२७. यागेन Sy.
२८. समिन्धनसाधनेनेध्मेन Sy.
२९. समिदाधानं P. परिचरति Sy.
३०. यच्च P., D.
३१. शस्त्रैः, अर्चनीयैः स्तोत्रैश्च परिचरति Sy.
३२. बलस्य Sy.
३३. सूः P. सूनोः D. हे पुत्राग्ने ! Sy.
३४. ०तः D. हे मरणधर्मरहिताग्ने ! Sy.
३५. प्रकृष्टज्ञानः सन् Sy.
३६. द्योतमानेन Sy.
३७. श्रवणीयेनान्नेन यशसा वा Sy.
३८. विशेषेण प्रकाशते Sy.

**स तत्कृ॑धीषि॒तस्तूय॑मग्ने॒ स्पृधो॑ बाधस्व॒ सह॑सा॒ सह॑स्वान् ।**
**यच्छ॒स्यसे॑ द्यु॒भिर॑क्तो॒ वचो॑भि॒स्तज्जु॑षस्व जरि॒तुर्घोषि॒ मन्म॑ ॥ ६ ॥**

स तत् कृधि । सः[1] । तत्[2] । कुरु[3] । प्रेषितः[4] । क्षिप्रम् । अग्ने ! किमित्याह, शत्रून्[5] । बाधस्व[6] । बलेन[7] । बलवान्[8] । यदा । स्तूयसे[9] । दीप्तैः[10] । वचोभिः[11] । अक्तः[12] । तदानीं तत् । स्तोत्रम्[13] । घुष्यमाणम्[14] । स्तोतुः[15] । सेवस्व ।

**अ॒श्याम॒ तं काम॑मग्ने॒ तवो॒ती अ॒श्याम॑ र॒यिं र॑यिवः सु॒वीर॑म् ।**
**अ॒श्याम॒ वाज॑म॒भि वा॒जय॑न्तो॒ऽश्याम॑ द्यु॒म्नम॑जराज॒रं ते ॥ ७ ॥**

**अश्याम**[16] । प्राप्नुयाम[17] । तम् । कामम्[18] । अग्ने ! तव[19] । रक्षणेन[20] । अश्याम[21] । धनम्[22] । धनवन्[23] ! सुपुत्रम्[24] । अभ्यश्याम[25] । अन्नम्[26] । अन्नमिच्छमानाः[27] ।

---

१. तस्कृ० P. स तधत् कृधिः D.
२. त्वम् Sy.
३. तत् किं तत् ? इत्यत आह Sy.
४. प्रेषितः सन् Sy.
५. स्पर्धमानान् Sy. ६. विनाशय Sy.
७. परेषामभिभवनसामर्थ्येन तेजसा वा Sy.
८. बलवांस्त्वम् Sy.
९. त्वामुद्दिश्य यत् स्तोत्रं स्तोतृभिः क्रियत इत्यर्थः Sy. १०. द्योतमानैस्तेजोभिः Sy.
११. स्तुतिरूपैर्वाक्यैः Sy.
१२. संसिक्तस्त्वम् Sy.
१३. मननीयम् Sy.
१४. ०ण P. ०णः D. घोषणीयम् Sy.
१५. जरितुः स्तोत्रम् Sy.
१६. अग्नये कामाय पुरोडाशमष्टाकपालमित्यस्य 'अश्याम' इत्येषा याज्या। सूत्रितञ्च—'अश्याम तं काममग्ने तवोतीति कामाय' (ĀSS.2.10.) इति Sy.
१७. प्राप्नुयाम तमेव कामं विवृणोति Sy. प्राप्नुयाम यमिच्छाम इत्यर्थः Mah. तं काममश्याम, अश्नुवीमहि BB.
१८. अभिलाषम् Mah. यत्कामा एतत्कुर्मः U. यदर्थमात्मा तुभ्यं निवेदितः BB.
१९. तव सम्बन्धिन्या Sy.
२०. ऊत्या रक्षया Sy. ऊत्या अवनेन पालनेन Mah. अवनेन तर्पणेन च U. तवोती तव रक्षया BB.
२१. प्राप्नुयाम Sy. 'अशूङ् व्याप्तौ' विकरणव्यत्ययेन लोटि श्यन्प्रत्ययः Mah. 'अशू व्याप्तौ' व्यत्ययेन परस्मैपदम् BB.
२२. पुत्रसहितं धनम् Mah. पुत्रपौत्रादिसमृद्धिहेतुधनम् BB.
२३. हे धनवन्नग्ने ! Sy. रयि धनमस्यास्तीति रयिवांस्तत् सम्बुद्धौ हे रयिवः ! धनवन् ! Mah. हे रयिवो रयिमन् ! BB.
२४. शोभनपुत्रादियुक्तम् Sy. शोभना वीराः पुत्राः यत्र तम् Mah. कल्याणपुत्रम् U. शोभना वीराः पुत्रादयो यस्मिंस्तम् BB.
२५. आभिमुख्येन प्राप्नुयाम Sy. वयं प्राप्नुयाम Mah. प्राप्नुयाम BB.
२६. त्वया दत्तमन्नम् Sy.
२७. इच्छन्तः is suggested for इच्छमानाः ॥ अन्नमात्मन इच्छन्तो वयम् Sy. वाजयतिरर्चतिकर्मा । वाजयन्तो वह्निमर्चयन्तः सन्तो वयम् Mah. वाजतिरर्चतिकर्मा । अभिपूजयन्तोऽग्निमन्यानपि पूजयितव्यान् U. वाजमन्नमात्मन इच्छन्तः । . . . .यद्वा वाजमाचक्षत इति णिच् BB.

अश्याम[१] । यशः[२] । जरावर्जितम्[३] । त्वत्तस्तव[४] स्वभूतम्[५][६] ।

VI.6.

**प्र नव्य॑सा सह॑सः सू॒नुमच्छा॑ य॒ज्ञेन॑ गा॒तुमव॑ इ॒च्छमा॑नः ।**
**वृ॒श्चद्व॑नं कृ॒ष्णया॑मं॒ रुश॑न्तं वी॒ती होता॑रं दि॒व्यं जि॑गाति ॥ १ ॥**

प्र नव्यसा[७] । प्रगच्छति[८] । नवतरेण[९] । अग्निम्[१०] । प्रति[११] । यज्ञेन[१२] । गमनीयम्[१३] । अन्नम्[१४] । इच्छमानः[१५] ।
छिद्यमानवृक्षम्[१६] । कृष्णगमनमार्गम्[१७] । श्वेतम्[१८] । कामेन[१९] । दैव्यम्[२०] । होतारं[२१] मनुष्यः ।

**स श्वि॑ता॒नस्त॑न्य॒तू रो॑च॒नस्था अ॒जरे॑भि॒र्नान॑दद्भि॒र्यवि॑ष्ठः ।**
**यः पा॑व॒कः पु॑रु॒तमः॑ पु॒रूणि॑ पृ॒थून्य॒ग्निर॑नु॒याति॒ भर्व॑न् ॥ २ ॥**

स श्वितानः[२२] । स[२३] दावरूपः । शुक्लवर्णोऽभवत्[२४] । विस्तारयिता[२५] । रोचनेऽन्तरीक्षे[२६] तिष्ठन् । जरा-

---

१. समन्तात् प्राप्नुयाम Mah. यदा वयं वाजं लिप्सामहे तदा वाजमन्नमाभिमुख्येनाश्नुवीमहि लिप्सीमहि । स्वरानवग्रहौ दुर्घटौ BB.

२. द्योतमानं यशः Sy. द्युम्नं यशो वयमश्याम । सर्वदा यशस्विनो भवामेत्यर्थः Mah.

३. जरारहितम् Sy. नास्ति जरा यस्य सोऽजरः । अजरमक्षीणम् Mah. अजरं द्युम्नविशेषणमेतत् । अक्षीणं द्युम्नम् U. अजरमक्षयं द्युम्नं यशः BB.

४. त्वदीयम् Sy. तव प्रसादात् U. त्वत्प्रसादादश्याम बिभृयाम BB.

५. वस्तुभू० P. वास्तुभू० D.

६. VM. ignores अजर । हे जरारहिताग्ने ! Sy., Mah., U., BB.
This stanza=YV.18.74.; TS. 1.3.14.3.
RV.VI.5.7.=SB.9.5.2.7.p.748.
अश्याम तं काममग्ने तवोतीति । एकया कामवत्यैतद्व देवाः षड्चेन पाप्मानमपहत्यैकया कामवत्यैकधान्ततः सर्वान्कामानात्मन्नकुर्वत तथैवैतद्यजमानः षड्ऋचेन पाप्मानमपहत्यैकया कामवत्यैकधान्ततः सर्वान्कामानात्मन्कुरुते ।
'प्र नव्यसा' इति सप्तर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । 'प्र नव्यसा' (KSA.29.6.p.22.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

८. प्रकर्षेण गच्छति Sy. ९. नवतरेण Sy.

१०. अग्निम् seems to be the explanation of सहसः सूनुम् ॥ बलस्य पुत्रम् Sy.

११. आभिमुख्येन Sy. १२. यज्ञेन युक्तः सन् Sy.

१३. उपगन्तव्यं स्तोतव्यं वा Sy. १४. अन्नं रक्षणं वा Sy. १५. ०ना P. इच्छन् स्तोता Sy.

१६. छिद्यामनवृक्षम् P. वृक्णं छिन्नं दग्धं वनं येन तादृशम् Sy. १७. कृष्णवर्त्मानम् Sy.

१८. श्वेतवर्णम् Sy. १९. वीत्या कान्तेन यज्ञेन Sy. २०. दिवि भवम् Sy.

२१. यष्टारम् Sy. २२. श्चितासः D.

२३. अग्निः Sy. स खल्वयमग्निर्हविःप्रियोऽस्माभिर्हविषाऽऽराध्यत इत्यर्थः । तस्मादयमस्मच्छत्रून् विनाशयत्विति भावः BB.

२४. श्वेतमानः श्वेतवर्णो वर्तते Sy. अधुना तस्यैव हवींषि भुञ्जानस्य गुणानाह । श्वितानो दीप्यमानः । श्विता वर्णे अनुदात्तेत् । ताच्छीलिकश्चानश् BB. २५. शब्दकारी Sy. तनिता विस्तारयिता सिद्धीनां दीप्तीनां वा BB.

२६. रोचन्तेऽस्मिन् ग्रहनक्षत्रादीनीति रोचनमन्तरिक्षम् । तत्र स्थितः Sy. रोचनेषु दीप्तिमत्स्थानेषु स्थितः ।....रोचनेषु तिष्ठतीति वा । तिष्ठतेः क्विप् BB.

वर्जितैस्तेजोभिः[1] । शब्दं[2] कुर्वद्भिः । युवतमः । यः[3] । पावकः[4] । बहूनां ग्लपयिता । बहूनि[5] काष्ठानि । अनु-गच्छति[6] । विस्तीर्णानि[7] । भक्षयन्[8] ।[9]

**वि ते॒ विष्व॒ग्वात॑जूतासो अग्ने॒ भामा॑सः शुचे॒ शुच॑यश्चरन्ति ।**
**तु॒वि॒म्र॒क्षासो॑ दि॒व्या नव॑ग्वा॒ वना॑ वनन्ति धृष॒ता रु॒जन्तः॑ ॥ ३ ॥**

**वि ते विष्वक्**[10] । विचरन्ति[11] । तव[12] । इतस्ततः[13] । वाताकृष्टाः[14] । अग्ने ! रश्मयः[15] । दीप्यमान[16] ! दीप्यमानाः[17] । बहूनां स्रष्टारः[18] । दिवि भवाः[19] । नवगमनाः[20] । अरण्यानि[21] । भजन्ते[22] । धृष्टेन तेजसा[23] । भञ्जन्तु[24] ।

---

१. जरारहितैः Sy. अक्षीणैः BB.

२. शतं P. अत्यर्थं शब्दं कुर्वद्भिर्मरुद्भिर्युक्तो रश्मिभिर्वा Sy. अत्यर्थं नदद्भिः स्तुवद्भिर्ऋत्विग्भिर्यजमानगणैर्वा परिवृतः BB.

३. दयः P., D. सोऽयमेवंविधोऽस्मदीयेन हविषा तृप्तोऽस्मच्छत्रून् विनाशयत्विति शेषः BB.

४. शोधकोऽग्निः Sy. पावयिता शोधयिता BB.

५. अतिशयेन प्रभूतः सन् Sy. बहुतमः । सर्वात्मकत्वात् ।....यद्वा पुरूणां पूरणः । छान्दसस्तमप्प्रत्ययः BB.

६. अनुगच्छति । स इत्थमित्थं वर्तत इति पूर्वत्र सम्बन्धः Sy. अनुक्रमेण गच्छति यजमानगृहान् BB.

७. स्थूलानि काष्ठानि Sy. विस्तीर्णानि पुरोडाशादीनि हवींषि BB.

८. 'भर्व हिंसायाम्' BB.

९. VM. ignores अग्निः ॥
This stanza=TS. 1.3.14.4.

१०. गार्हपत्यादीनां मिथः संसर्गेऽग्नये विविचय इष्टिः कर्तव्या। तत्र 'वि ते' इत्येषानुवाक्या (ĀSS. 3.13.) इति Sy.

११. विचरन्ति, विविधं गच्छन्ति Sy. विचरन्ति विश्वग्गमनाः BB.

१२. त्वदीयाः Sy.

१३. सर्वतः Sy. विष्वग् नानागतिः BB.

१४. वातेन प्रेरिताः Sy. वातेन जूताः प्रेरिता वातजूतासः। जु इति सौत्रो धातुः।....यद्वा वातस्येव जूतं वेगो येषामिति वातजूतासः BB.

१५. निर्मलाः Sy. शुचयो दीप्तयस्तव BB.

१६. ०माना P. ०मानाः D. हे शुद्ध ! दीप्त ! वाग्ने ! Sy. हे शुचे ! दीप्त ! BB.

१७. प्यमान P. दप्यमा० D. दीप्तयः Sy. भासनशीलाः क्रूररूपा वा BB.

१८. स्पृ० P., D. बहुकाष्ठानि स्पृशन्तः Sy. बहुशुद्धयो बहूनां वा शोधनाः । बहुसेचका वृष्ट्या BB.

१९. भा० P. दिवि द्योतमानेऽग्नौ भवाः Sy. दिवमर्हतीति दण्डादिभ्यो यत् BB.

२०. नूतनगमनास्ते रश्मयः Sy. नवगतयो नित्याभिनवाः BB.

२१. वनानि Sy. उदकानि BB.

२२. सम्भजन्ते दहन्तीत्यर्थः Sy. वनन्ति सम्भव ? (ज)न्ति BB.

२३. धर्षकेण तेजसा Sy. धर्षणेन प्रसहनेन BB.

२४. वनानि भञ्जयन्तः Sy. रुजन्तो वैगुण्यं भजन्तः। तया समृद्ध्या वृष्टिमुत्पादयन्तु तव शुचय इति BB.
This stanza=TS. 3.3.11.1.

ये ते शुक्रासः शुचयः शुचिष्मः क्षां वपन्ति विषितासो अश्वाः ।
अध भ्रमस्त उर्विया वि भाति यातयमानो अधि सानु पृश्नेः ॥ ४ ॥

ये ते शुक्रासः[1] । ये । ते[2] । शोचमानाः[3] । रश्मयः[4] । दीप्तिमन्[5] ! पृथिवीमोषधिवनस्पतियुक्ताम्[6] । वपन्ति[7] । विमुक्ताः । अश्वा इत्यौपमिकम्[8] । तदनन्तरम्[9] । उरुः[10] । तव[11] । भ्रमः[12] । विभाति[13] । पृथिव्याः[14] । सानूनि स्थितं स्थावरम्[15] । गमन्[16] ।

अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना ।
शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि ॥ ५ ॥

अध जिह्वा[17] । अथ[18] । ज्वाला[19] । पतति[20] । अग्ने[21] । गोनिमित्तं युध्यतः[22] शूरस्य । इव[23] । आयुधम्[24] । सृज्यमानम्[25] । किं च शूरस्येव[26] । बाहुः[27] । अग्नेः[28] ।

---

१. शुक्रा P. शुक्राः D. २. तव Sy.
३. शुभ्राः Sy. ४. दीप्तयः Sy.
५. ०मान् P. हे दीप्तिमन् ! अग्ने ! Sy.
६. भूमिम् Sy.
७. मुण्डयन्ति । केशस्थानीयानोषधिवनस्पतीन् दहन्तीत्यर्थः । 'अग्निर्ह दाति रोमा पृथिव्याः' (RV.I.65.4.) इति निगमान्तरम् Sy.
८. अश्वा इव इतस्ततो गच्छन्तीति शेषः Sy.
९. अस्मिन् काले Sy. १०. अरुः P. बहुलम् Sy.
११. त्वदीयः Sy. १२. भ्रमणशीलो ज्वालासमूहः Sy. १३. विशेषेण प्रकाशते Sy.
१४. नानारूपाया भूमेः Sy.
१५. समुच्छ्रितं देशं पर्वताग्रादिकं प्रति Sy.
१६. गमयन् is suggested for गमन् ॥ स्वकीयमग्रं व्यापारयन् Sy.
१७. भरद्वाजस्यार्षम् Dur. भरद्वाजस्यार्षम् । दावरूपस्याग्नेः स्तुतिरेषा SKN.
१८. अध P. अपि च Sy. अथानन्तरमेव Dur. प्रवृत्तश्च दावरूपोऽग्निः । अथानन्तरमेव SKN.
१९. उपज्वलितस्याग्नेः....तस्य जिह्वा ज्वाला Dur. अस्य. . . .जिह्वास्थानीया ज्वाला SKN.
२०. प्रकर्षेण पुनः पुनः पतति । गच्छति Sy. दारुषु पापतीति पुनः पुनः पतति Dur. वीप्सेत्यर्थः । प्रपतति गच्छति SKN.
२१. वर्षितुरग्नेः Sy. प्रवर्षितुरिन्द्रस्य Dur. हविर्वहनद्वारेण वर्षितुः SKN.
२२. तत्र दृष्टान्तः । असुरैरपहृतासु गोषु युध्यन्निन्द्रो गोषुयुत् । तस्मात् सृज्यमानाशनिर्वज्र इव Sy. गवार्थं वा देवपणिभिः सहासुरैर्युध्यतः । अथवा गोष्वप्सु मेघेन सह युध्यत इत्यर्थः Dur. गाव आपः । तासु निमित्तभूतासु योद्धृत्वाद् गोषुयुदिन्द्र उच्यते SKN.
२३. नेत्युपमा । इन्द्रस्य गोषु युध्यत इव Dur.
२४. वज्रः Dur. तस्यैव स्वभूताऽशनिः SKN.
२५. तेनैव सृज्यमाना यथा पतति. . . .तथाऽग्नेर्ज्वाला दारुषु पापतीतीति Dur. तेन विसृज्यमाना क्षिप्यमाणेत्यर्थः SKN.
२६. शौर्योपेतस्य नरस्य Sy. यथा कस्यचिच्छूरस्य विक्रान्तस्य वाऽप्रतिहतगतेः Dur. यादृशी शूरस्य मनुष्यस्य SKN.
२७. प्रबन्धनं यथान्यैर्दुःसहम् Sy. प्रसहनं सङ्ग्रामानुप्रवेशमार्गश्छिन्नभिन्नावरणैः शत्रुभिः प्रकीर्णः स्यात् Dur. स्यतेरिदं रूपम् । स्यतिश्चोपसृष्टो विमोचने । हता हताः शत्रवो यत्र विमुच्यन्ते सा प्रसितिः सङ्ग्रामभूमिः सा हताहतैः शत्रुभिराकीर्णा SKN.
२८. ०ग्ने P. एवमस्याग्नेः Dur. अग्नेर्दावरूपस्य SKN.

ज्वाला[2] । प्रसितिर्बाहुः प्रबन्धनात्[2] । क्षातिर्विनाशनात्[3] । दुर्वारः[4] । भीमः[5] । भक्षयति । काष्ठानि[6] । दहति[7] वा[8] ।

**आ भानुना पार्थिवानि ज्रयांसि महस्तोदस्य धृषता ततन्थ ।**
**स बाधस्वाप भया सहोभिः स्पृधो वनुष्यन्वनुषो नि जूर्व ॥ ६ ॥**

**आ भानुना**[9] । आततन्थ[10] । तेजसा[11] । पार्थिवानि वनानि[12] । ज्रयतिर्गतिकर्मा[13], पृथिव्या उत्थितानि[14] । महतः । व्यथयितुस्तव[15] स्वभूतेन । सः । अपबाधस्व[16] । भयानि[17] । बलैः[18] । शत्रून्[19] । हिंसन्[20] । हन्तॄन्[21] । निजहि[22] ।

---

१. **सोढुमशक्येत्यर्थः । क्षीयन्ते दह्यन्तेऽस्यामोषधिवनस्पतय इति क्षायतेरधिकरणे क्तिन्** Sy. **दहनमार्गः । ईषत्प्लुष्टार्धदग्धभस्मीभूतैर्वृक्षैर्गुल्मादिभिराकीर्यते** Dur. **ईदृशी क्षातिः, क्षिप्यन्ते द्रव्यमाना ओषधिवनस्पतयो यस्यां सा क्षातिर्भोगभूमिः । सा दग्धादग्धैरोषधिवनस्पतिभिराकीर्णा** SKN.

२. The passage **'प्रसितिर्बाहुः प्रबन्धनात्'** should immediately follow **बाहुः** and precede **अग्ने ।**

३. **०ना** P. **क्षातिविनाशना** D. The passage **क्षातिर्विनाशनात्** should immediately follow **ज्वाला ।**

४. **अन्यैर्वारयितुमशक्यः** Sy. **कदा पुनरेतद् भवति ?....दुर्वारो दावाग्नीभूतः** Dur. **दुर्वारो दावरूपोऽग्निः** SKN.

५. **भयङ्करोऽग्निः** Sy.
**सर्वप्राणिभयङ्करः** Dur.
**भयानकः** SKN.

६. **कानि** P., D. **वनानि** Sy. **किम् ? वनानि** Dur.

७. The passage **दहति वा** should immediately follow **भक्षयति ॥ दयतिरत्र दहतिकर्मा** Sy. **यदाऽयमग्निर्दयते दहति।....** **एवमयमाग्नेये मन्त्रे वनशब्दसन्निकर्षे श्रूयमाणे दयतिशब्दो दहनादन्यत् किमभिदध्यात् ? तस्मात् सामर्थ्यादिहायं दहनकर्मा इत्युपपत्तिः** Dur. **दुर्वर्तुर्भीमो दयते वनानि । इति दहतिकर्मा । दुर्वर्तुर्दुर्वारः** N.4.17.; SKN. II.241.

८. VM. ignores **प्र ॥ प्र प्रकर्षेण** Sy.

९. **हे अग्ने !** Sy.

१०. **०न्थं** P., D. **आस्तृणासि आच्छादयसि । स त्वम्** Sy.

११. **दीप्त्या** Sy.

१२. **पृथिव्यां भवानि** Sy.

१३. Omitted by P.

१४. **ज्ञय०** P., D.
**गन्तव्यानि स्थानानि** Sy.

१५. **प्रेरकस्य** Sy.

१६. **अवबा०** P.

१७. **भयकरणानि** Sy.

१८. **अभिभवनसमर्थैस्तेजोभिर्वा** Sy.

१९. **स्पर्धमानान्** Sy.

२०. **हिंसकान् । शत्रूनिति** Sy.

२१. **जूर्वतिर्हन्तिकर्मा** Sy.

२२. VM. ignores **धृषता ॥ धृषता धर्षकेण रश्मिना सह** Sy.

स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् ।
चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥ ७ ॥

स[१] चित्र[२] । स त्वम्[३] । चायनीय ! चायनीयम्[४] । महत्तया जनान् बोधयन्तम्[५] । मह्यम्[६] । चित्रबल[७] ! अतिशयेन चित्रम्[८] । अन्नस्य धारकम्[९] । कान्तम्[१०] । रयिम्[११] । बहुपुत्रम्[१२] । महान्तम्[१३] । ह्लादकम्[१४] । चन्द्राभिर्ज्वालाभिः[१५] । स्तुवते[१६] । मिश्रय देहि[१७] ।[१८]

VI.7.

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ १ ॥

मूर्धानम्[१९] । [२०] द्युलोकस्य । उच्छ्रितम्[२१] । ततः पृथिव्याश्च[२२] । गन्तारम्[२३] ।

१. उखासम्भरणीयेष्टावग्नेः क्षत्रवतः 'स चित्र' इत्येषा याज्या । सूत्रितञ्च—'स चित्र चित्रं चितयन्तमस्मे अग्निरीशे बृहतः क्षत्रियस्य' (ĀSS.4.1.) इति Sy.
२. मित्रः P. मित्र D. ३. तादृशस्त्वम् Sy.
४. यंनि P. ०यं D. हे चायनीय ! Sy.
५. ०नियं P. ६. ज्ञापयन्तम् । धनेन हि पुरुषः प्रख्यायते Sy. ७. अस्मभ्यं दातुम् Sy.
८. हे विचित्रबल ! चायनीयधन ! वा Sy.
९. अतिशयेन आश्चर्यभूतम् Sy.
१०. ०का D. धातारं प्रदातारम् Sy.
११. तं P. आह्लादकम् Sy. १२. धनम् Sy.
१३. पुरुभिर्बहुभिर्वीरैः पुत्रपौत्रादिभिर्युक्तम् Sy.
१४. ईदृशं धनमस्मभ्यं प्रयच्छेत्यर्थः Sy.
१५. हे आह्लादकाग्ने ! Sy.
१६. ०भिज्वाभिः P. आह्लादयित्रीभिः स्तुतिभिः Sy. १७. गृणते स्तुवते । वचनव्यत्ययः । स्तुवद्भ्यः Sy. १८. पृथक्कुरु Sy.
१९. 'मूर्धानम्' इति सप्तर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकम् । षष्ठीसप्तम्यौ जगत्यौ शिष्टा पञ्च त्रिष्टुभः । तथा चानुक्रान्तम् 'मूर्धानं वैश्वानरीयं हि द्विजगत्यन्तम्' (KSA.29.7.p.22.) इति । गतः सूक्तविनियोगः । विषुवत्याग्निमारुत आद्यस्तृचो वैकल्पिकः स्तोत्रियः । तथैव सूत्रितं 'मूर्धानं दिवो अरतिं पृथिव्या मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा' (ĀSS.8.6.) इति Sy.
२०. वैश्वानरश्चात्र सर्वात्मना स्तूयते Mah., U.
२१. शिरोभूतम् Sy. शिरोवदुन्नतप्रदेशे सूर्यरूपेणावस्थाय भासकम् Mah. सूर्यात्मनावस्थितं मूर्धानं शिर आहुर्ब्रह्मविदः U. मूर्धानं शिरोभूतम् BB.
२२. प्रथिताया भूमेः Sy. पृथिवीशब्देनात्रान्तरिक्षमभिधीयते । पठितञ्चैतदन्तरिक्षनामसु U. एतद् अन्तरिक्षम् । आकाशम् । आपः । पृथिवी इत्यन्तरिक्षनामानि Ngh. 1.3.
२३. गन्तारम् । यद्वा गन्तव्यं स्वामिनम् Sy. रतिरुपरतिस्तद्रहितम् । नहि पृथिव्या उपरि कदाचिदप्यग्निरुपरमते किन्तु दाहपाकप्रकाशैः सर्वाननुगृह्णन् सर्वदा वर्तत एव । यद्वा पृथिवीशब्देनान्तरिक्षमुच्यते । आकाशमापः पृथिवीत्यन्तरिक्षनामसु पठितत्वात् पृथिव्या अन्तरिक्षस्यारतिमलमतिं पर्याप्तमतिं पूरकमित्यर्थः । तत्र स्थितोऽसौ यथाकालं वृष्ट्या भूतानि पुष्णाति Mah. अलमतिं पर्याप्तमतिं पृथिव्या अन्तरिक्षलोकस्याहुः । तत्र ह्यसौ स्थितो यथाकालं वृष्ट्या पुष्णाति भूतानि U. अरतिं गन्तारम् ।.... पृथिव्याश्च गन्तारं प्रजानां रक्षणार्थं पृथिव्यामपि वर्तमानम् BB.

वैश्वानरम्[१] । यज्ञपूजितम्[२] । अग्निम् । कविम्[३] । सम्राजम्[४] । अतिथिस्थानीयम्[५] । जनानामस्माकम्[६] । आस्येन[७] । जनयन्त[८] । देवाः[९] । भुक्तस्य पात्रभूतम्[१०] ।[११]

---

१. विश्वेषां नराणां सम्बन्धिनम् Sy. विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितो वैश्वानरस्तम् । जठराग्निरूपेणान्नपाचकत्वात् Mah. यं वैश्वानरम् U. विश्वेषां नराणां सम्बन्धिनम् BB.

२. VM. seems to explain ऋते and आ जातम् together as यज्ञपूजितम् ॥ ऋतमिति सत्यस्य यज्ञस्य वा नाम । निमित्तसप्तम्येषा । ऋतनिमित्तम् आ आभिमुख्येन जातं सृष्ट्यादावुत्पन्नम् Sy. यज्ञे यज्ञनिमित्तमाजातमुत्पन्नमरणिद्वयात् Mah. यज्ञ आजातमुत्पन्नमरणिद्वयादग्निमाहुः U. ऋताय सत्याय यज्ञाय वा जातम् BB.

३. क्रान्तदर्शिनम् Sy. कविं क्रान्तदर्शनं स्वभक्ताननुग्रहीतुमभिज्ञमित्यर्थः Mah. यं च कविं क्रान्तदर्शनमाहुः U.
मेधाविनम् BB.

४. सम्यग्राजमानम् Sy. सम्यग्दीप्यमानमैश्वर्येण युक्तमित्यर्थः Mah.
सम्यगैश्वर्येण युक्तमाहुः U.
सम्यग्राजन्तम् BB.

५. हविर्वहनाय सततं गन्तारम्, यद्वा, अतिथिवत्पूज्यम् Sy. हविर्भिः सत्कारयोग्यम् । विज्ञायते ह्यग्निरतिथिरूपेण गृहान् प्रविशति तस्मात्तस्योदकमाहरन्ति Mah.,U. यजमानगृहान् सातत्येन गच्छन्तम् ।....यजमानगृहेष्वतन्तमित्यर्थः BB.

६. यजमानानाम् Sy., Mah. यजमानलक्षणानाम् BB.

७. अस्ये P. आसनि आस्ये । द्वितीयार्थे सप्तमी । आस्यभूतम् । अग्निलक्षणेनास्येन हि देवा हवींषि भुञ्जते Sy. आसनि, आस्ये मुखे Mah.,U. कीदृशं तत्पात्रमित्यत आह—आसन्नास्ये । द्वितीयार्थे सप्तमी । तस्याश्च लुक् । अग्निमास्यं कृतवन्त इति यावत् ।....यद्वा निमित्तसप्तम्येषा, आस्यनिमित्तमास्यत्वाय, अग्निरस्माकमास्यमिव भूयादिति । अग्निना ह्यास्येन देवा आहुतीः पिबन्ति । अग्निमुखत्वात्तेषाम् BB.

८. यज्ञाभिमुख्येनाजीजनन् । अरण्योः सकाशादुदपादयन् Sy. ईदृशमग्निं जनयन्त उत्पादितवन्तः । अडागमाभाव आर्षः Mah. योऽयमुक्तगुणो वैश्वानरस्तम्....जनयन्त U. ईदृशमग्निम्....आभिमुख्येन जनितवन्तः । ....सोमं पातुं तत्पात्रतयाऽग्निं कृतवन्त इत्यर्थः BB.

९. देव P. स्तोतार ऋत्विजो देवा एव वा Sy. ईदृशमग्निं देवा इन्द्रादयोऽजनयन्तेत्यर्थः Mah. देवा इन्द्रादयः U.

१०. पातारं रक्षकम् । यद्वा आस्येन धारकम् । एवंगुणविशिष्टं वैश्वानराग्निम् Sy. आभिमुख्येन पीयतेऽनेनेत्यापात्रम् । विज्ञायते हि चमसो देवपान इति 'चमसेन ह वा एतेन भूतेन देवा भक्षयन्ति' (1.4.2.14.) इति श्रुतेः Mah. पीयतेऽनेनेति पात्रम् U. पिबत्यनेनेति पात्रम् BB.
This stanza=YV. 7. 24.=TS.1. 4.13.1.

११. अथातो गृह्णात्येव । मूर्धानं दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआ जातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं [१]जनयन्त देवाः । उपयामगृहीतोऽसि । ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वेति सादयति व्यूह्य न तूर्णं चनान्तर्धाय वैश्वानराय ह्येनं गृह्णाति ŚB.4.2.4.24.p.363.

---

१. अत्र 'जनयन्त देवाः' इत्यन्ताया ऋचः पाठ एव, अग्रे YV.7.25. इति मन्त्रस्य पूर्वार्द्धभागः समुपात्तः ।

**नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त ।**
**वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥ २ ॥**

**नाभिं यज्ञानाम् ।** नाभिस्थानम्[1] । यज्ञानाम्[2] । आवासस्थानम्[3] । रयीणाम्[4] । महान्तम् । आहावभूतं निपानमाहावस्तम्[5] । अभिपतन्ति[6] । वैश्वानरम्[7] । नेतारम्[8] । यज्ञानाम् । यज्ञस्य । केतुभूतम्[9] । अजनयन्त[10] । देवाः[11] ।[12]

**त्वद्विप्रो जायते वाज्यग्ने त्वद्वीरासो अभिमातिषाहः ।**
**वैश्वानर त्वमस्मासु धेहि वसूनि राजन्त्स्पृहयाय्याणि ॥ ३ ॥**

**त्वद्विप्रः ।** त्वत्तः[13] । मेधावी । अश्वः[14] । जायते[15] । अग्ने ! त्वत्त एव । अभिमातीनां सोढारः[16] । नरः[17] । वैश्वानर[18] ! त्वम् । अस्मासु[19] । धेहि[20] । धनानि । राजन्[21] । स्पृहणीयानि[22] ।

**त्वां विश्वे अमृत जायमानं शिशुं न देवा अभि सं नवन्ते ।**
**तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः ॥ ४ ॥**

**त्वां विश्वे ।** दीदेतिर्दीप्तिकर्मा[23] । शिष्टः स्पष्टः[24] ।

---

१. ना P. नहनं बन्धकम् Sy.
२. ज्योतिष्टोमादियागानाम् Sy.
३. स्थानमेकनिलयम् Sy. ४. तथा धनानाम् Sy.
५. महान्तं महान्तमावहनभूतन्निपानमहात् स्तम् P. आहावम् आहूयन्तेऽस्मिन्नाहुतय इत्याहावः । तादृशम् । यद्वा वृष्ट्युदकधारणमाहावं निपानस्थानीयम् । एवम्भूतम् Sy.
६. अभितः स्तोतारः सम्यक् स्तुवन्ति Sy.
७. विश्वेषां नराणां सम्बन्धिनम् Sy.
८. रथिनम् । यथा रथी स्वरथं नयति तद्वन्नेतारं ग्राहयितारं गमयितारम् Sy.
९. प्रज्ञापकम् । एवंविधमग्निम् Sy.
१०. जनयन्ति । मथनेनोत्पादयन्ति Sy.
११. The passage beginning with यज्ञानाम् and ending with देवाः is omitted by P. स्तोतार ऋत्विजो देवा एव वा Sy. १२. VM. ignores सम् ।
१३. त्वत्तः सकाशात् Sy.
१४. हविर्लक्षणान्नवान् पुरुषः Sy.
१५. जायते । तुभ्यं हविर्दानेन मेधावी भवति Sy.
१६. शत्रूणामभिभवितारो जायन्ते । यस्मादेवं तस्मात् Sy. १७. वीराः Sy.
१८. सोढा नरो श्वानर D. १९. त्वद्भक्तेषु Sy.
२०. निधेहि Sy. २१. राजमानाग्ने ! Sy.
२२. The commentary on this stanza is omitted by P.
२३. तिदी० P. दीप्यसे Sy.
२४. हे अमृत ! मरणधर्मरहिताग्ने ! विश्वे सर्वे देवाः स्तोतारो जायमानमरण्योः सकाशादुत्पद्यमानं त्वां शिशुं न पुत्रमिवाभि सं नवन्ते । अभिसंस्तुवन्ति । यद्वा दीव्यन्तीति देवा रश्मयः । ते सर्वे जायमानं त्वामभि सं नवन्ते, अभिसङ्गच्छन्ते यथा पितरः पुत्रमभिगच्छन्ति । अपि च हे वैश्वानराग्ने ! यद्यदा पित्रोः पालयित्र्योर्द्यावापृथिव्योर्मध्येऽदीदेः दीप्यसे तदानीं तव त्वदीयैः क्रतुभिः कर्मभिर्ज्योतिष्टोमादिभिर्यागैरमृतत्वं देवत्वमायन् । यजमानाः प्राप्नुवन्ति Sy.

वैश्वानर तव तानि व्रतानि महान्यग्ने नकिरा दधर्ष ।
यज्जायमानः पित्रोरुपस्थेऽविन्दः केतुं वयुनेष्वह्नाम् ॥ ५ ॥

[वैश्वानर][1] वैश्वानर[1] ! तव[2] । तानि[3] । कर्माणि[4] । महान्ति । अग्ने ! न कश्चित्[5] । आधर्षयति[6] । यदा[7] । जायमानः[8] । द्यावापृथिव्योः[9] । उपस्थे प्रातः सूर्यात्मना । लम्भयसि[10] । प्रज्ञानम्[11] । अह्नाम्[12] । गमनेषु[13] ।

वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना ।
तस्येदु विश्वा भुवनाधि मूर्धनि वयाइव रुरुहुः सप्त विस्रुहः ॥ ६ ॥

वैश्वानरस्य[14] । वैश्वानरस्य[15] । निर्मितानि[16] । तेजसा[17] । प्रज्ञापकेन[18] । समुच्छ्रितानि[19] तेजांसि ।

---

१. The *pratīka* is supplied by the Editor.

२. हे विश्वेषां नराणां सम्बन्धिन्नग्ने ! Sy.

३. त्वदीयानि Sy.

४. प्रसिद्धानि Sy.

५. न कश्चनान्यः Sy.

६. धर्षयति । बाधते Sy.

७. यदा त्वम् Sy.

८. जायमानः सन् Sy.

९. ०थिवीचरुप० P. उपस्थानेऽन्तरिक्षे Sy.

१०. अलम्भयः । तमोरूपमसुरं स्वतेजसा निवारयन्नस्थापय इत्यर्थः । तदा तानि व्रतानीति पूर्वत्रान्वयः Sy.

११. प्रज्ञापकं सूर्यं स्वर्भानुनावृतम् Sy.

१२. अह्नो D.

१३. गन्तव्येषु मार्गेषु Sy.

१४. भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्यार्षम् SKN.

१५. विश्वनरहितस्याग्नेः Sy. भगवतोऽग्नेः Dur., SKN.

१६. निर्मितानि । यद्वा दिवोऽन्तरिक्षस्य सानूनि समुच्छ्रितप्रदेशा मेघात्मका विमितानि निर्मिताः । धूमविकारत्वात्तेषाम् Sy. तानि विनिर्मितानीत्यर्थः । अग्निप्रकाश्यमानविषयो हि लोकः कर्मणि प्रवर्तते साधुन्यसाधुनि वा । साधुभ्यः साधुना च पापेभ्यः पापेन च सार्वलौकिकेन कर्मणा स्वकर्मफलभोगायेदं सर्वं विनिर्मीयत इत्यनयापेक्षयोक्तम् Dur. निर्मितान्युत्पादितानि SKN.

१७. चक्षुषा दर्शनेन Dur. दर्शनेन देवतामाहात्म्याद‌तिशयवत्या कयापि प्रज्ञयेत्यर्थः SKN.

१८. कर्मणा Dur. न च केवलया प्रज्ञया किं तर्हि ? केतुना कर्मणा व्यापारेण च हविर्वहनादिना । एतदुक्तं भवति—तदधीनत्वाद् यागादेर्धर्मस्य धर्माधीनत्वाच्च कृत्स्नस्य जगतो निर्माणस्य । अथवा अपि च सत्त्वानां प्रकृतिभूता ऋषयः स्तुवन्तीत्याहुरिति प्रकृतिमाहात्म्येनेयं विकारस्य स्तुतिः । यो हि जगतः स्रष्टा कारणात्मा तस्य प्रज्ञाव्यापाराभ्यां दिवः सानूनि निर्मितान्युच्यन्ते SKN.

१९. समुच्छ्रितस्थलानि नक्षत्ररूपाणि Sy. यानि सानूनि समुच्छ्रितानि स्थानानि Dur. समुच्छ्रिताः प्रदेशाः SKN.

द्युलोकस्य । तस्य[1] । एव[2] । विश्वानि[3] । भुवनानि[4] । मूर्धनि[5] । अधिरुरुहुः[6] । शाखा इव[7] । सप्त च[8] । नद्यः[9] ।[10]

**वि यो रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः ।**
**परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा अमृतस्य रक्षिता ॥ ७ ॥**

**वि यो रजांसि** । विममे[11] । यः[12] । लोकान्[13] । सुप्रज्ञः[14] । वैश्वानरः[15] । विममे सः । दिवः[16] । रोचनानि[17] । कविः[18] । परिपप्रथे[19] । यः[20] । विश्वानि । भुवनानि[21] । अहिंसिता[22] । गोपायिता[23] । उदकस्य[24] । रक्षिता[25] ।

---

१. वैश्वानरस्य Sy. अग्निरेव वाच्यधिदेवताभावेनावस्थितः सर्वमिदं ख्यापयति ततः कर्म प्रतायते । तदुक्तम्—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इति ।....तस्यैव वैश्वानरस्य पृथिवीभावेनावस्थितस्य । अयं चाग्निर्वैश्वानर इत्युक्तम् Dur. तस्यैव वैश्वानरस्य पृथिव्यामनुप्रविष्टस्य SKN.

२. इच्छब्द एवार्थे SKN.

३. व्याप्तानि Sy. सर्वाणि SKN.

४. भुवनान्युदकान्यधिवसन्ति । यद्वा वैश्वानरात्मकस्य परब्रह्मणो मूर्धन्युपरि प्रदेशे सर्वाणि भूतजातान्यधिवसन्ति Sy. सर्वभूतभावयितॄण्युदकानि । भुवनमिति ह्युदकनामसु पठितम् । (Ngh. 1.12.) भुवनशब्देन भूतान्येवोच्यन्त इति केचिद् वर्णयन्ति । चतुर्विधश्च भूतग्रामः Dur. भूतजातानि SKN.

५. मूर्धस्थानीय उपरि वर्तमाने धूमे मेघात्मना परिणते Sy. उपरि Dur. मूर्ध्नि उपरि तस्य प्रकृतत्वाद् वैश्वानरस्यैव SKN.

६. अद्धरुरुहु P. रोहन्ति । अस्मादेव वैश्वानरात् प्रादुर्भवन्ति । आहुतिद्वारा सकलं जगदग्नेः सकाशादुत्पद्यत इत्यर्थः Sy. रुहिर्जन्मार्थः, विरोहन्ति जायन्त इत्यर्थः ।....कथं पुनरिदमुभयं वैश्वानरस्य मूर्धनि विरोहति ? उच्यते, उभयमिदं पृथिव्या मूर्धनि तथा 'ऋबीसे अत्रिमश्विनौ' (RV.I.116.8.) इति मन्त्रवर्णः SKN.

७. शाखा इव वृक्षस्य SKN.

८. सर्पणशीलाः सप्तसंख्याका वा Sy. सप्त सर्पणाः ।....सप्तशब्देनापि समुद्रानेव केचिद् वर्णयन्ति । ते हि पृथिव्याः शाखा इव लक्ष्यन्ते विस्रवन्ति च Dur. न च भूतान्येव केवलानि, किं तर्हि ?....सप्तसङ्ख्याकाः ।....कथं पुनरपां सप्तसङ्ख्याकत्वम् ? उच्यते, आधारभेदात् प्रधानभूता गङ्गाद्याः सप्त नद्यः । तासां समुद्राणां सप्तसङ्ख्याकत्वं प्राधान्याच्च । तत्स्थानामपां भूयस्त्वाद् गणनान(?)र्हत्वादिति SKN.

९. गङ्गाद्याः Sy. विविधस्रवणा भूत्वा ततः शाखा इव रुरुहुरस्यां पृथिव्यां नद्यादिभावेन, ततः शाखा इव ह्येता पृथिव्या उपरि यथा निम्नं विस्रवमाणा आपो लक्ष्यन्ते इत्येतद् दृष्ट्वैवमवोचत् ।....एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च विस्रुह आपो भवन्तीत्युपपद्यते Dur. आपः SKN. विस्रुह आपो भवन्ति विस्रवणात् N.6.3., SKN. II.3.94.

१०. VM. ignores अमृतस्य and उ॥ अमृतस्य उदकस्य Sy.

११. निर्मितवान् Sy.

१२. अग्निः Sy.

१३. उदकानि लोकान् वा Sy.

१४. ०ज्ञे D. सुकर्मा Sy.

१५. विश्वेषां नराणां हितः Sy.

१६. दिवोद P., D. द्युलोकस्य सम्बन्धीनि Sy.

१७. रोचमानानि दीप्यमानानि नक्षत्रादीनि Sy.

१८. क्रान्तदर्शी सन् Sy.

१९. परिवृढो P. परितोऽप्रथयत् Sy.

२०. सर्वाणि Sy.

२१. भूतजातानि व्याप्तान्युदकानि वा Sy.

२२. केनाप्यहिंसितः Sy.

२३. सर्वस्य गोपायिता Sy.

२४. ०यितो यस्य P. अमरणहेतोरुदकस्य Sy.

२५. पालयिता सन् वर्तत इति शेषः Sy.

VI.8.

पृक्षस्य वृष्णो अरुषस्य नू सहः प्र नु वोचं विदथा जातवेदसः ।
वैश्वानराय मतिर्नव्यसी शुचिः सोमइव पवते चारुरग्नये ॥ १ ॥

पृक्षस्य[1] । सम्पर्चयितुः[2] । वृष्णः[3] । आरोचनस्य[4] । क्षिप्रम्[5] । सहः[6] । प्र वोचम्[7] । विज्ञानेन[8] । जातवेदसः[9] । एको नुः पूरणः[10] । वैश्वानराय[11] । स्तुतिः[12] । नवतरा । शुचिः[13] । सोम इव[14] । चारु[15] । निर्गच्छति[16] ।[17]

उत्तरा निगदसिद्धा

स जायमानः परमे व्योमनि व्रतान्यग्निर्व्रतपा अरक्षत ।
व्य१न्तरिक्षममिमीत सुक्रतुर्वैश्वानरो महिना नाकमस्पृशत् ॥ २ ॥

[ स जायमानः ][18]

---

१. 'पृक्षस्य' इति सप्तर्चमष्टमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकम् । आदितः षड् जगत्यः सप्तमी त्रिष्टुप् । तथा चानुक्रान्तम् 'पृक्षस्यान्त्या त्रिष्टुप्' (KSA.29.8.p.22.) इति । चातुर्विंशिकेऽहन्याग्निमारुत इदं सूक्तं वैश्वानरीयनिविद्धानम् । सूत्रितञ्च—'पृक्षस्य वृष्णो वृष्णे शर्धाय' (ĀSS. 7.4.) इति । आभिप्लविके पृष्ठ्याभिप्लवषडहयोः पञ्चमेऽहनीदमेव सूक्तं वैश्वानरनिविद्धानम् । सूत्रितञ्च—'पृक्षस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्निमारुतम्' (ĀSS. 7.7.) इति । विषुवत्याग्निमारुत आद्यौ तृचौ स्तोत्रियानुरूपौ' (ĀSS. 8.6.) इति Sy.

२. वृक्षस्य P., D.

३. संवर्च० P., D. सम्पृक्तस्य व्याप्तस्य । यद्वा पृक्षं हविर्लक्षणमन्नम् । तद्वतः Sy.

४. वर्षितुः Sy.

५. आरोचमानस्य Sy.

६. बलमभिभवनसमर्थम् Sy.

७. प्रब्रवीमि । प्रकर्षेण स्तौमीत्यर्थः Sy.

८. विदथे यज्ञे Sy.

९. ०दः P. जातानां वेदितुर्वैश्वानराग्नेः Sy.

१०. एको नुशब्दः पूरकः Sy.

११. अस्मै वैश्वानराय Sy.

१२. मतिर्मननीया स्तुतिः Sy.

१३. ०चि P., D. निर्मला यद्वा स्तोतॄणां शोधयित्री Sy.

१४. यथा सोमो दशापवित्रात्स्रवति तद्वत् Sy.

१५. शोभना Sy.

१६. मत्सकाशात् स्रवति । स्वयमेव निर्गच्छतीत्यर्थः Sy. १७. VM. ignores अग्नये ।

१८. The *pratīka* is supplied by the Editor. स वैश्वानरोऽग्निर्व्रतपा व्रतस्य पालकः परम उत्कृष्टे व्योमनि व्योम्न्याकाशे जायमानः सूर्यात्मना प्रादुर्भवन् व्रतानि कर्माणि लौकिकानि वैदिकानि चारक्षत । अन्तरिक्षं च व्यमिमीत । एतदुपलक्षितांस्त्रीन् लोकान्निर्मितवान् । तथा सुक्रतुः शोभनकर्मा वैश्वानरोऽग्निर्महिना स्वमहिम्ना । तेजसा नाकं द्युलोकमस्पृशत् । स्पृशति स्म Sy.

व्य१॒॑स्तभ्नाद्रोद॑सी मि॒त्रो अद्भु॑तो॒ऽन्त॒र्वाव॑दकृणो॒ज्ज्योति॑षा॒ तमः॑ ।
वि चर्म॑णीव धि॒षणे॑ अवर्तयद्वैश्वान॒रो विश्व॑मधत्त॒ वृष्ण्य॑म् ॥ ३ ॥

व्यस्तभ्नात् । अधस्चोर्ध्वं[1] च चकार । द्यावापृथिव्यौ । मित्रभूतः[2] । महान्[3] । अन्तर्गतम्[4] । अकरोत्[5] । ज्योतिषा[6] । तमः[7] । विवर्तयति । द्वे चर्मणीइव[8] । द्यावापृथिवी[9] । विश्लिष्टे करोति[10] । वैश्वानरः[11] । विश्वम्[12] । धारयति[13] । वर्षणनिमित्तम्[14] ।

अ॒पामु॒पस्थे॑ महि॒षा अ॑गृभ्णत॒ विशो॒ राजा॑नमु॒प त॑स्थुर्ऋ॒ग्मिय॑म् ।
आ दू॒तो अ॒ग्निम॑भरद्वि॒वस्व॑तो वैश्वान॒रं मा॑त॒रिश्वा॑ परा॒वतः॑ ॥ ४ ॥

अपाम्[15] । अन्तरिक्षे[16] । महान्तो देवा वैश्वानरम्[17] । धारयन्ति[18] । तत्र विशः[19] । राजानम्[20] । उपतस्थुः[21] ।

---

१. विशेषेण स्तम्भितवान् । यथाधो न पततस्तथा स्वकीयदेशे स्थापितवानित्यर्थः Sy.

२. ०ते P., D.

३. सर्वेषामद्भुतो महान् आश्चर्यभूतो वा Sy.

४. अन्तर्हितं तिरोहितम् । वावदिति वातेर्गतिकर्मणो यङ्लुगन्तस्य रूपम् Sy.

५. ०रो P.

६. तेजसा Sy.

७. अन्धकारम् Sy.

८. यथा पशोर्विशसिता द्वे चर्मणी शोषणार्थं प्रसारयति तथा Sy.

९. अपि च धारयित्र्यौ द्यावापृथिव्यौ Sy.

१०. The passage विश्लिष्टे करोति refers to विवर्तयति ॥ विवृते विस्तृतेऽकरोत् Sy.

११. किं बहुना, अयमग्निः Sy.

१२. सर्वम् Sy.

१३. धत्ते धारयति Sy.

१४. वीर्यम् Sy.

१५. भरद्वाजस्यार्षम् Dur.

१६. VM. seems to explain अपामुपस्थे together as अन्तरिक्षे ॥ अपामन्तरिक्षस्य, उपस्थाने मध्ये Sy. यत्रोपगम्य तिष्ठन्त्यापः सोऽपामुपस्थोऽन्तरिक्षलोकः । तस्मिन्नपामुपस्थे Dur. आप इत्यन्तरिक्षनाम (Ngh. 1.3.)

१७. महान्तो मरुतः Sy. महति विस्तीर्णे सन्ना महिषा माध्यमिका देवगणाः । अथवा महिषास्त एव महान्तः Dur. महिषा महन्नामैतत् । (वा) महान्तो माध्यमिका देवगणाः SKN. महिषा इति महन्नाम Ngh. 3.3.

१८. धार P. अगृह्णन् । इमं वैश्वानरं वैद्युतात्मना वर्तमानमजानन्नित्यर्थः Sy. किं कुर्वन् ? अगृह्णन् Dur. परिगृह्णन्ति परिचारयन्तीत्यर्थः SKN.

१९. गृहीत्वा च प्रजाः Sy. गृहीत्वा च मनुष्या इव Dur. परिचार्य च विशो, मनुष्यनामैतत्, लुप्तोपमं च मनुष्या इव SKN. विश इति मनुष्यनाम Ngh. 2.3.

२०. स्वामिनम् Sy.
राजानं परिवार्य Dur.

२१. अस्तुवन् Sy. उपपूर्वस्तिष्ठतिः स्तुतौ । स्तुतवन्तः स्तुवन्ति वा SKN.

स्तुत्यम्[१] । इमम्[२] । अग्निम् । दूतः[३] । मातरिश्वा[४] । दूराद्[५] दिवः । विवस्वतः[६] । आहृनवान्[७][८] ।

१. अर्चनीयम् Sy. ऋग्भिः स्तुतिभिस्तद्वन्तम्.... अर्चनार्हं वा Dur. अर्चतेः स्तुतिकर्मण ऋक् ततो मत्वर्थीयो नामकरणः । तया ऋचा तद्वन्तं स्तुतिमन्तमित्यर्थः । अर्चार्हं वा स्तुत्यमित्यर्थः SKN.

२. इमम् seems to stand for वैश्वानरम् ॥ अपि चेमं वैश्वानरमग्निं पुरा सूर्यसमीपे विद्यमानम् Sy. कतममिति ? यम् Dur. अत्रैकवाक्यतायै भाष्यकारेण तच्छब्दोऽध्याहृतः । तच्छ्रुतेश्च यच्छब्दोऽध्याह्रियते । यमुपतस्थुः.. ..तम् । वैश्वानरमग्निविशेषणमेतत् SKN.

३. वेगवान् देवानां दूतो वा Sy. दूतो देवानाम् Dur. दूतः । कस्य ? सामर्थ्याद् देवानाम् SKN.

४. वायुः Sy. मातरिश्वा वायुः ।....स हि मातर्यन्तरिक्षेऽप्रतिबध्यमानशक्तिः श्वसिति गच्छति । अथवा मातरि, आशु अनिति गच्छति Dur. कतमो दूतः ? उच्यते मातरिश्वा वायुः ।....मातर्यन्तरिक्षे । श्वसितिः शब्दकर्मा । मातर्युपपदे श्वसेर्धातोः 'श्वन्नुक्षन् पूषन्०' (Uṇādi. 1.159.) इत्यादिनिपातनात् ।....यद्वा मातरि शुशब्दे चोपपदे, अनितेर्गतिकर्मणो विच् । शुशब्दस्य वाशुशब्देनार्थवचनम् SKN.

५. दूरदेशात् Sy. प्रकर्षेणेरितवतः प्रेरिततरात् 'परागताद्वा' दूरतरात् Dur दूरनामैतत् । दूरादर्चनीयमित्यर्हार्थे दर्शयितुं कृत्यः । प्रपूर्वस्येरयतेः परापूर्वस्य वा वेतेर्गतिकर्मणः परावच्छब्द इति दर्शयति प्रेरितवत इत्यादिना 'पञ्चम्यास्तसिल्' (Pā.5.3.7.) । प्रकर्षेणेरितादादित्यात् परागतादस्याग्नेरित्यादिना SKN.

६. आदित्यात् Sy. आदित्यात् विवासनक्रिया या तमसां तद्वतस्तं पर्यगृह्णन्नन्तरिक्षे लोके गृहीत्वा चोपतस्थुर्विश इव राजानम् Dur. विवस्वत आदित्यस्य सकाशात् ।....विवासनमपनयनं तमसां तेन तद्वान्।....आह्रियमाणस्य चाग्नेर्वैश्वानरत्वविशिष्टस्य यतश्चाह्रियते विवस्वतस्तेषामन्यत्वमाह मन्त्रः । अतश्च मध्यमोत्तमाभ्यामन्यत्वं सिद्धं वायुरित्यभिधेयवचनम् SKN.

७. इमं लोकं प्रत्याजहार Sy. एवमेतस्मिन्मन्त्रे यत आह्रियते येन चाह्रियते यश्चाह्रियते सर्वे ते पृथग् व्यपदिष्टाः । अत्र विवस्वत आह्रियते मातरिश्वना वैश्वानर इति । तस्मादेतयोर्विवस्वन्मातरिश्वनोः सन्निधानव्यपदेशे सति साक्षाद् वैश्वानरशब्देन पार्थिव उक्त इति व्यवतिष्ठते पार्थिवो वैश्वानर इति Dur. आकारोऽभरदित्येतेन सम्बध्यते ।....अभरत् हरतेर्हकारस्य भकारः । आहरत्, आहृतवान् SKN.

८. अपामुपस्थ उपस्थाने महत्यन्तरिक्षलोक आसीना महान्त इति वाऽगृह्णत माध्यमिका देवगणाः । विश इव राजानमुपतस्थुः । ऋग्मियमृग्मन्तमिति वा । अर्चनीयमिति वा (पूजनीयमिति वा ।) आहरद्यं दूतो देवानां विवस्वत आदित्यात् । विवस्वान् विवासनवान् । प्रेरितवतः परागताद्वा (अपि वा) अस्याग्नेर्वैश्वानरस्य मातरिश्वानमाहर्तारमाह । मातरिश्वा वायुः । मातर्यन्तरिक्षे श्वसिति । मातर्याश्वनितीति वा N. 7. 26., SKN. III. 104,105.

**यु॒गेयु॑गे वि॒द॒थ्यं॑ गृ॒णद्भ्यो॒ऽग्ने॑ र॒यिं य॒शसं॑ धेहि॒ नव्य॑सीम् ।**
**प॒व्येव॑ राजन्न॒घशं॑समजर नी॒चा नि वृ॑श्च व॒निनं॒ न तेज॑सा ॥ ५ ॥**

युगे युगे[1]। दिवसे दिवसे[2]। गृहयोग्यम्[3]। स्तुवद्भ्यः[4]। अग्ने ! रयिम्[5]। अन्नं[6] च । प्रयच्छ[7]। तथा नवतरां[8] भार्यां च । आयुधेनेव[9]। राजन्[10]! अगर[11]! तेजसा[12]। स्तेनम्[13]। नीचा[14]। विवृश्च[15]। यथा । वृक्षवद्[16]-रण्यमायुधेनेति ।

**अ॒स्माक॑मग्ने म॒घव॑त्सु धार॒याना॑मि क्ष॒त्रम॒जरं॑ सु॒वीर्य॑म् ।**
**व॒यं ज॑येम श॒तिनं॑ सह॒स्रिणं॒ वैश्वा॑नर॒ वाज॑मग्ने॒ तवो॒तिभिः॑ ॥ ६ ॥**

अस्माकम् । अस्माकम्[17]। अग्ने[18]! धनवत्सु[19] शत्रुषु । धारय[20]। अनतम्[21]। बलम्[22]। जरारहितम्[23]। शोभनवीर्यम्[24]। वयम् । जयेम[25]। शतिनम्[26]। सहस्रिणं[27] च । सङ्ग्रामम्[28]। तव । रक्षणैः[29][30]।

---

१. हे अग्ने ! Sy.
२. काले काले Sy.
३. विदथो यज्ञः । तदर्हं त्वामुद्दिश्य Sy.
४. उच्चारयितृभ्योऽस्मभ्यम् Sy.
५. धनम् Sy.
६. यशसं यशस्विनं पुत्रं च Sy.
७. विधेहि, कुरु Sy.
८. तवतराम P., D. नवतरां स्तुतिम् Sy.
९. युधे० P. वज्रेणेव Sy.
१०. हे राजमान ! Sy.
११. अगरं D. अजर ! is suggested for अगर ॥ हे जरारहित ! Sy.
१२. आत्मीयेन तेजसा Sy.
१३. स्ते P., D. It seems to be the explanation of अघशंसम् ॥ अघस्यानर्थस्य शंसितारं शत्रुम् Sy.
१४. नीच P. नीचीनो न्यग्भूतो यथा भवति तथा Sy.
१५. वृश्च P. विवृच्छ D. निजहि Sy.
१६. वृक्षमिव Sy.
१७. अस्माकम्, सप्तम्यर्थे षष्ठी । अस्मासु Sy. अस्माकं पुत्रादीन् BB.
१८. हे अग्ने ! Sy. हे अग्ने ! हे अञ्जनादिगुण ! वैश्वानर ! BB.
१९. हविर्लक्षणेन धनेन युक्तेषु Sy. प्रथमं तावद्धनवतः कुरु ततो मघवत्सु धनवत्सु कृतेषु BB.
२०. स्थापय Sy., BB.
२१. अतनम् P., D. अनमनीयमनपहार्यम् Sy. अनमनशीलम् BB.
२२. धनम् Sy. क्षत्रमिति धननाम Ngh.2.10.
२३. अनश्वरम् Sy. अविनाशम् BB.
२४. शोभनवीर्योपेतम् Sy. अनभिभवनीयपुत्रादिपुरुषकर्मकम् BB.
२५. लभेमहि Sy.
२६. शतसङ्ख्यायुक्तं शतपुरुषयुक्तं वा Sy. शतपोषवन्तम् BB.
२७. सहस्रपोषवन्तं च BB.
२८. अन्नम् Sy., BB.
२९. त्वत्सम्बन्धिभी रक्षणैः Sy. रक्षाविशेषैस्तृप्तिविशेषैर्वा BB.
३०. VM. ignores वैश्वानर and अग्ने ॥ This stanza=TS. 1.5.11.2.

अद॑ब्धेभि॒स्तव॑ गो॒पाभि॑रिष्टे॒ऽस्माक॑ं पाहि त्रिषधस्थ सू॒रीन् ।
रक्षा॑ च नो द॒दुषां॒ शर्धो॑ अग्ने॒ वैश्वानर॒ प्र च॑ तारीः॒ स्तवा॑नः ॥ ७ ॥

अदब्धेभिः[1] । अहिंसितैः[2] । तव[3] । गोपनैः[4] । हे यष्टव्य[5] ! अस्माकम्[6] । पाहि । हे त्रिस्थान[8] ! स्तोतॄन्[9] पुत्रान् । रक्ष । च । अस्माकम् । यजमानानाम्[10] । बलम् । अग्ने ! वैश्वानर ! प्रतारय[11] । चास्मान् । स्तूयमानः ।

VI.9.

अह॑श्च कृ॒ष्णमह॒रर्जु॑नं च॒ वि व॑र्तेते॒ रज॑सी वे॒द्याभिः॑ ।
वै॒श्वा॒न॒रो जाय॑मानो॒ न राजावा॑तिर॒ज्ज्योति॑षा॒ग्निस्तमां॑सि ॥ १ ॥

अहश्च[12] । अहः[13] । च । कृष्णवर्णम्[14] । अहः[15] । श्वेतवर्णम्[16] । चेत्यहोरात्रे[17] वदति[18] । ते विवर्तेते[19] तेजसा

---

१. ०भि P. २. केनाप्यहिंसितैः Sy.
३. त्वदीयैः Sy.
४. ०नै P. गोपकै रक्षकैस्तेजोभिः Sy.
५. हे यष्टव्य ! एषणीय ! वा Sy.
६. ०कम P. अस्मदीयान् Sy.
७. रक्ष Sy.
८. त्रिषु लोकेषु सहावस्थायिन् ! यद्वाहवनीयादिषु त्रिष्वायतनेषु यष्टव्यैर्देवैः सहावतिष्ठमानाग्ने ! Sy. ९. ०तृ P.
१०. ०माना D. हवींषि दत्तवताम् Sy.
११. वताय P., D. प्रवर्धय च Sy.
१२. 'अहश्च इति सप्तर्चं नवमं सूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकम् । अनुक्रान्तञ्च 'अहश्च' (KSA.29.9.p.22.) इति । व्यूळ्हे दशरात्रे षष्ठेऽहन्याग्निमारुतशस्त्रे वैश्वानरनिविद्धानमिदम् । सूत्र्यते हि 'अहश्च कृष्णं मध्वो वो नाम' (ĀSS.8.8.) इति Sy. भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्यार्षम् SKN.
१३. आहरति पुरुषोऽस्मिन् कर्माणीत्यहः, रात्रिश्च Sy. आद्योऽत्राहशब्दो रात्रिवचनः SKN.
१४. कृष्णं कृष्णवर्णम् । एतत्सामानाधिकरण्यादहःशब्दो रात्रिवाचकः । तमसा कृष्णवर्णा Sy. कुत एतत् ? कृष्णमिति विशेषणात् । रात्रेश्च तमस्सम्बन्धात् कृष्णत्वम् SKN.
१५. ०ह P., D. दिवसश्च Sy.
१६. श्चत P. सौरेण तेजसा शुक्लवर्णम् Sy. अर्जुनशब्दो हि शुक्लपर्यायः Dur. अर्जुनशब्दो रूपनाम । कृष्णप्रतियोगित्वेनोपादानात् । शुक्लमत्र रूपमाह न यत्किञ्चित् । शुक्लपर्याय एव वाऽर्जुनशब्दः SKN. अर्जुनमिति रूपनाम Ngh. 3.7.
१७. त्येहो० P. कृष्णं चाहः शुक्लञ्च । रात्रिश्च दिवसश्चेत्यर्थः SKN. १८. यदति P.
१९. विविधं पर्यावर्तेते Sy. विपर्ययेण वर्तेते । रात्रिरतीता, अहरायातम् । अहरतीतं रात्रिरायाता, इत्येवम् Dur. किं कुरुतः ? उच्यते, विवर्तेते । विशब्दोऽत्र विविधवचनोऽसहायार्थो वा । विविक्ते वर्तेते उपजायेते क्रमेण वा न सह । यदा रात्रिर्न तदाहः, यदाऽहर्न तदा रात्रिः SKN.

तमसा[१] च। रञ्जके[२]। 'वेदितव्याभिः[३] प्रवृत्तिभिः[४]' इति यास्कः। वैश्वानरः[५]। जायमानः[६]। इवोद्यन्। आदित्यः[७]। सर्वेषां ज्योतिषा[८]। विनाशयति[९]। अग्निः। तमांसि[१०]।

---

१. P. reads समासा तेजसा for तेजसा तमसा।

२. स्वस्वभासा सर्वं जगद्रञ्जयन्तौ। यद्वा, रजसी द्यावापृथिव्यौ। उपलक्षणमेतत्। लोकत्रयं प्रत्यावर्तेते। एतच्च वैश्वानरस्याग्नेराज्ञयेति शेषः। स हि देवतात्वेनात्र प्रतिपाद्यः Sy. ज्योतिषा हि भूतान्यहो रञ्जयति तमसा रात्रिः Dur. यथाकालं स्वेन तमसा ज्योतिषा च रञ्जके भूतानाम् SKN.

३. विदि० P. वेद्याभिर्वेदितव्याभिरनुकूलतया ज्ञातव्याभिः स्वप्रवृत्तिभिः Sy. नहि तासां प्रवृत्तीनामन्तोऽस्ति, अहनि च रात्रौ च प्राणिनामतस्ता वेदितव्या एव भवन्ति, बहुत्वात्। न हि विदितानामन्ताः कदाचित् Dur. स्त्रीलिङ्गनिर्देशात् प्रवृत्तिभिरिति वाक्यशेषः। तृतीयानिर्देशाच्च युक्ते इति। वेदितव्याभिः प्रवृत्तिभिर्युक्ते। कस्य प्रवृत्तिभिः ? सामर्थ्यादनयोरेव। कथं पुनरेतत् प्रवृत्तीनां वेदितव्यत्वम् ? उच्यते, आनन्त्याद् वैचित्र्याद्वा। अवश्यं तदेकरूपत्वं विदितत्वान्न वेदितव्यम्। यत्त्वनन्तं विचित्रं वा तदेकस्मिन्विदितेऽन्यदविदितमस्त्येवेति सर्वदैव वेदितव्यम्। अहोरात्रयोश्च प्रवृत्तयोऽनन्ता विचित्राश्च, अतस्ता वेदितव्याः। अथवा शुभेषु कर्मसु याः प्राणिनां प्रवृत्तयस्ता अत्र शोभनत्वाद् वेद्या इत्युच्यन्ते। सहयोगलक्षणा च तृतीया। वेदितव्याभिः प्राणिप्रवृत्तिभिः सह विवर्तेते इति। सूक्तस्य वैश्वानरीयत्वात् केवलस्य चार्धर्चस्य वैश्वानरस्तुत्यर्थस्यासम्भवात्। उत्तरार्धर्चेनैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ। ये शुक्लकृष्णे अहनी विवर्तेते तयोर्द्वयोरपि SKN.

४. पृपृभिः P. प्रवर्तिभिः D. N. 2.21.

५. अग्निः Sy., Dur.

६. प्रादुर्भवन् प्रवर्धमानः Sy. कथं पुनरपहन्ति ? ....जायमान इवोद्यन् Dur. जन्मात्रोदयोऽभिप्रेतः SKN.

७. It seems to be the explanation of राजा॥ राजेति चादित्यार्थ उच्यते। सर्वभूतानां राजाऽऽदित्यः। दीप्तत्वात् सर्वेषां ज्योतिषामधिपत्वाच्च। उद्यन्निवादित्य इत्यर्थः SKN.

८. आनित्य सर्वे षे ज्योतिषि P. ज्योतिषि D. तेजसा Sy. स्वेन ज्योतिषा SKN.

९. विशाययति P. अवतिरतिर्वधकर्मा। अवतिरति Sy. यथा ह्युद्यन्नादित्यस्तमांस्यपहन्ति दिवा, एवमग्निरपि रात्रावपहन्तीत्यग्निरादित्येन तमउपघातं प्रत्युपमीयते Dur. अवतिरतिर्वधकर्मा। अपहन्ति, अपनयति स्वेन ज्योतिषा तमांसि दिवा, एवमग्नी रात्रावपहन्ति SKN.

१०. अहः कस्मात् ? उपाहरन्त्यस्मिन् कर्माणि। तस्यैष निपातो भवति वैश्वानरीयायामृचि। ....अहश्च कृष्णं रात्रिः। शुक्लं चाहरर्जुनम्। विवर्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः। वैश्वानरो जायमान इव। उद्यन्नादित्यः। सर्वेषां ज्योतिषां राजा। अवाहन्नग्निर्ज्योतिषा तमांसि N.2.21., SKN. II.102.

**नाहं तन्तुं न वि जानाम्योतुं न यं वयन्ति समरेऽतमानाः ।**
**कस्य स्वित्पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥ २ ॥**

नाहं[1] तन्तुम् । वैश्वानरस्य रश्मिभिरिदं[2] भूतजातं प्रोतम्, तत्रेदमाह[3]—न । अहम्[4] । पटस्य[5] दीर्घतन्तुम्[6] । जानामि । न । तिर्यक्[7] तन्तुम् । न । यं[8] तन्तुम् । वयन्ति[9] । तन्तुवायसङ्घे[10] प्रति । गच्छन्तः[11] । कस्य । वा[12] । पुत्रः[13] । इह[14] । वक्तव्यानि[15] वाक्यानि । परस्मिन् स्थाने स्थितः[16] । अपरस्मिन् स्थाने स्थितेन[17] । पित्रा[18] । वदति[19][20] ।

---

१. ०हस्त० D.

२. ०श्मिरि० D.

३. वैश्वानरस्य महत्त्वमाख्यास्यन्नृषिस्तदर्थं यज्ञं वस्त्रात्मकतया रूपयन् तस्य दुर्ज्ञानत्वमनया प्रतिपादयतीति यज्ञवादिनो मन्यन्ते Sy.

४. प्रोतन्त्रैदो नहाहं P.
प्रोततन्त्रे तदा नहाहं D.

५. पदस्य P.

६. तन्तवः पटस्य प्रागायतानि सूत्राणि । तानि च यज्ञात्मकस्य वस्त्रस्य गायत्र्यादीनि छन्दांसि स्तुतशस्त्राणि च, तानि Sy.

७. ०र्यक्षन्तुं P., D. ओतवस्तिरश्चीनानि सूत्राणि । तानि चात्र यजूंष्याध्वर्यवाणि कर्माणि च । तान्यहं न विजानामि । अपि चैतदुभयसाध्यं तं पटं यज्ञलक्षणं न विजानामि Sy.

८. ययन्ततु P. पटं यज्ञलक्षणम् Sy.

९. तन्तूनोतूंश्च सन्तन्वन्ति वस्त्ररूपेण निष्पादयन्तीत्यर्थः Sy.

१०. न्तुवयवाय सं P. It seems to be the explanation of समरे ॥ सङ्गमने देवयजने Sy.

११. सततं चेष्टमाना ऋत्विजः Sy.

१२. स्विदिति वितर्के । खलु Sy.

१३. मनुष्यः Sy.

१४. अस्मिन् लोके Sy.

१५. वक्तव्यानि तानीमानि Sy.

१६. परस्तादमुष्मिन् लोके वर्तमानो यः सूर्यस्तस्य Sy.

१७. स्थितोन P. अवस्तादस्मिन् लोके वर्तमानेन Sy.

१८. चित्रं P. चित्रा D. वैश्वानराग्निनानुशिष्टः सन् Sy.

१९. वदेत् । न कश्चिदपि प्रवदितुं शक्नोतीत्यर्थः । एतच्च सम्प्रदायविद्भिरुक्तम्—,
वैश्वानरस्य पुत्रोऽसौ परस्ताद्दिवि यः स्थितः ।
छन्दांस्यध्वरवस्त्रस्य स्तुतशस्त्राणि तन्तवः ॥
यजूंषि चेष्टाश्चौतुः स्याद्वस्त्रं वातव्यमध्वरः ।
परः परः स्थितः सूर्यः पिताग्निः पार्थिवो मतः ॥
इति ॥
रूपकतया जगत्सृष्टेर्दुर्ज्ञानत्वमनया प्रतिपादयतीत्यात्मविदो मन्यन्ते । तन्तुं तन्तून् तन्तुस्थानानि सूक्ष्माणि वियदादीन्यपञ्चीकृतानि भूतानि न विजानामि । ओतुमोतून् पञ्चीकृतानि स्थूलान्योतुस्थानीयान्यपि वियदादीनि न विजानामि । न च तत्कार्यं पटस्थानीयं प्रपञ्चं विजानामि यं प्रपञ्चं समरे तन्तूनामोतूनां च सङ्गमनेऽतमाना सततं चेष्टमानाः संसारिणो वयन्ति उत्पादयन्ति । तेषां भोगार्थमीश्वरः सृजतीति कर्तृत्वमुपचर्यते । इहास्मिन् विषये परः परस्ताद्बुद्धेरविषये वर्तमानानि वक्त्वानि वक्तव्यानि इमान्यवरेणार्वाचीनेन सृष्ट्युत्तरकालमुत्पन्नेन पित्रा स्वजनकेनानुशिष्टः सन् कस्य खलु पुत्रो वदाति वदेत् । स्वोत्पत्तेः प्राचीनं वृत्तान्तमजानानः कश्चिदपि न वदेदित्यर्थः Sy.

२०. VM. ignores वि ।

स इत्तन्तुं स वि जा॑नात्योतुं स वक्त्वा॑न्यृतुथा व॑दाति ।
य ईं॒ चिके॑तद॒मृत॑स्य गो॒पा अ॒वश्च॑रन्प॒रो अ॒न्येन॑ पश्य॑न् ॥ ३ ॥

स इत्[1] । सः । एव वैश्वानरः[2] । तन्तुम्[3] । विजानाति । ओतुं[4] च । स एव । वाक्यानि[5] । ऋतौ[6] । वदति[7] पर्जन्यो भूत्वाऽन्तरिक्षे शब्दं कुर्वन् । यो वैश्वानरः[8] । एतं[9] तन्तुमोतुं च । वेत्ता[10] । अमृतस्य[11] । गोपायिता[12] । पृथिव्याम्[13] । वर्तमानः[14] । परो[15] भूत्वा । अन्येनादित्यरूपेण[16] । सर्वं जगत्[17] पश्यन् वैश्वानरोऽह्लयादित्यो भूत्वा जगत् पश्यतीति तं तस्य[18] पुत्रमाह तथा स एव पर्जन्यो भूत्वा । वर्षतीति ।

अ॒यं होता॑ प्रथ॒मः पश्य॑ते॒ममि॒दं ज्योति॑र॒मृतं॒ मर्त्ये॑षु ।
अ॒यं स ज॑ज्ञे ध्रु॒व आ निष॒त्तोऽम॑र्त्यस्त॒न्वा॒३॑ वर्ध॑मानः ॥ ४ ॥

अयं होता । अयम्[19] । होता[20] । प्रथमः[21] । पश्यत[22] । इमम्[22] । इदम्[23] । ज्योतिः[24] । अमृतम्[25] ।

---

१. यद्यप्युक्तेन प्रकारेण दुर्ज्ञानानि तथाप्येतानि वैश्वानरोऽग्निर्जानाति वदति चेत्यनया प्रतिपादयति Sy.
२. वैश्वानरोऽग्निः Sy.
३. तन्तुस्थानीयानि गायत्र्यादीनि छन्दांसि स्तुतशस्त्राणि Sy.
४. ओतुस्थानीयानि यजूंष्याध्वर्यवाणि च कर्माणि विजानाति Sy.
५. वक्तव्यानि च तानि Sy.
६. काले काले तत्तदनुष्ठानसमये Sy.
७. वदेत् Sy.
८. योऽयं वैश्वानरः Sy.
९. ईम् इमानि परिदृश्यमानानि सर्वाणि भूतानि Sy.
१०. वेता P. जानाति स एवेति पूर्वत्र सम्बन्धः Sy.
११. उदकस्य Sy.
१२. रक्षिता Sy.
१३. अवस्ताद् भूलोके Sy.
१४. ०न D. पार्थिवाग्निरूपेण सञ्चरन् Sy.
१५. परस्ताद्दिवि Sy.
१६. सूर्यात्मना Sy.
१७. सर्वं जगत् प्रकाशयन् यद्वा स इत् स एव तन्तुं तन्तुस्थानीयानि सूक्ष्मभूतानि विजानाति नान्यः कश्चित् । तथौतुमोतुस्थानीयानि स्थूलभूतानि स एव विजानाति । स एव वक्त्वानि वक्तव्यान्युपदेष्टव्यानि इमान्यृतुथा काले काले यदा यदा विद्यासम्प्रदायोच्छेदस्तदा तदा वदाति वदेत् । कोऽसौ यो विजानीयाद्वदेच्चेत्यत आह, यो वैश्वानरो विश्वनरात्मकः परमात्मामृतस्यामृतत्वस्य विमोक्षणस्य गोपा रक्षितावोऽवस्तात्संसारदशायां चरन्, अन्तःकरणोपेतो जीवात्मभावेन सञ्चरन् परः परस्तादविद्यायाः ऊर्ध्वं वर्तमानेनान्येनोक्तविलक्षणेन निरुपाधिकेन सच्चिदादिलक्षणेन रूपेण पश्यन् सर्वं जगत् प्रकाशयन् ईमिमानि चिकेतत् जानाति। तथा च परमात्मानं प्रकृत्य श्रूयते । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (Śve.U.6.14.) इति Sy.
१८. P. reads तत्रस्य for तं तस्य ।
१९. वैश्वानरोऽग्निः Sy.
२०. होता । मानुषो हि होता द्वितीयः Sy.
२१. आद्यः Sy.
२२. हे मनुष्याः ! तमिमं भजतेत्यर्थः Sy.
२३. वैश्वानराख्यम् Sy.
२४. जाठररूपेण वर्तत इत्यर्थः Sy.
२५. मरणरहितम् Sy.

मरणधर्मिषु[1] । अयम्[2] । सः । जायते । मेधीभूतः[3] । सर्वतः[4] । निषण्णः[5] । अमरणधर्मा[6] । शरीरेण[7] । वर्धमानः[8] ।

**ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः ।**
**विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु ॥ ५ ॥**

**[ध्रुवम्]**[9] ध्रुवम्[10] । ज्योतिर्वैश्वानराख्यम् । स्थापितम्[11] । दर्शनाय[12] । कमिति पूरणम् । मनसोऽपि[13] । वेगवत्तरम्[14] । जङ्गमेषु[15] । अन्तः[16] । विश्वे[17] । देवाः । समनसः[18] । सप्रज्ञाः[19] । एकं[20] वैश्वानरम् । कर्तारम्[21] । अभि विविधं गच्छन्ति[22] । कल्याणम्[23] ।

---

१. मरणस्वभावेषु शरीरेषु Sy.

२. अपि च सोऽयमग्निः Sy.

३. निश्चलः Sy.

४. समन्तात् Sy.

५. ०तो धिष० P.
सर्वव्यापी Sy.

६. ०धर्म P. अत एव मरणरहितोऽपि Sy.

७. शरीरेण सम्बन्धात् Sy.

८. जायते वर्धमानश्च भवतीत्युपचर्यते Sy.

९. The *pratīka* is supplied by the Editor.

१०. निश्चलम् Sy.

११. प्रजापतिना स्थापितम् Sy.

१२. दर्शनार्थम् Sy.

१३. मनसस्तस्मादपि Sy.

१४. अतिशयेन वेगवत् Sy.

१५. गच्छत्सु जङ्गमेषु प्राणिषु Sy.

१६. मध्ये Sy.

१७. सर्वे Sy.

१८. समानमनस्काः Sy.

१९. वश्वे देवस्समानं सस्स ए प्रज्ञा P. स एप्रज्ञाः D. समानप्रज्ञाश्च सन्तः Sy.

२०. मुख्यं गन्तारं वा Sy.

२१. कर्मणां कर्तारम् Sy.

२२. ०ति P. ०णः P. आभिमुख्येन विविधं प्राप्नुवन्ति । सेवन्त इत्यर्थः । यद्वा पतयत्सु गच्छत्सु प्राणिष्वन्तर्मध्ये हृदये मनो जविष्ठं मनसोऽप्यतिशयेन वेगयुक्तं ध्रुवं निश्चलं निर्विकल्पकम् । तथा च वाजसनेयकम् । 'अनेजदेकं मनसो जवीयः' ( YV. 40.4. ) इति । ज्योतिर्ब्रह्म चैतन्यं निहितम् । न केनचित् स्थापितम् । 'यो वेद निहितं गुहायां परमे व्योमन्' (TA.8.1.) इति हि श्रूयते । किमर्थम् ? दृशये दर्शनार्थम् । ज्ञानेन हि सर्वं जानन्ति । अपि च दीव्यन्तीति देवा इन्द्रियाणि । विश्वे सर्वे देवाः सर्वाणीन्द्रियाणि चक्षुराद्याः समनसो मनसा सह वर्तमानाः सकेताः सतेजस्काः सन्त एकमद्वितीयं क्रतुं सृष्ट्यादीनां कर्मणां कर्तारं विश्वनरात्मकं परमात्मानमभिलक्ष्य साधु सम्यक् वियन्ति । विविधं गच्छन्ति । देवा एव वेममभि वियन्ति । आभिमुख्येन विविधमुपयन्ति । उपासत इत्यर्थः । तथा च श्रूयते 'तद्देवा ज्योतिषां ज्योतिरायुर्ह्योपासतेऽमृतम्' (SB. 14. 7. 2. 20. p. 1090) इति Sy.

२३. सम्यक् Sy.

वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत् ।
वि मे मनश्चरति दूरआधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये ॥ ६ ॥

वि मे कर्णा । विपततः[1] । मम[2] । कर्णौ श्रोतव्यं प्रति वैश्वानरेणाधिष्ठितस्य[3] । विपतति[4] । चक्षुश्च[5] । तथेदम् । ज्योतिश्च[6] । हृदये[7] । आहितं[8] परब्रुद्धचाख्यम् । तथा मनश्च । विचरति[9] । यन् मनः । दूरे[10] आधीयते[11] तस्मिन्नाश्चर्ये । किम् । स्विदहम्[12] । वक्ष्यामि[13] । किम्[14] । वा[15] । मनिष्ये[16] बोधनकर्मा मनिः ।[17]

विश्वे देवा अनमस्यन्भियानास्त्वामग्ने तमसि तस्थिवांसम् ।
वैश्वानरोऽवतूतये नोऽमर्त्योऽवतूतये नः ॥ ७ ॥

विश्वे देवाः[18] । विश्वे[19] । देवाः । अनमस्यन्[20] । बिभ्यतः[21] । त्वाम् । अग्ने ! तमस्युदकस्यान्तरपक्रम्य[22] । तस्थिवांसम्[23] । स[24] वैश्वानरः[25] । गच्छतु[26] । रक्षणाय[27] । अस्मान्[28] । मरणवर्जितः[29] ।[30]

---

१. वितपेततः P.

२. वैश्वानरं श्रोतुकामस्य मम Sy.

३. ०णधितिषितस्य P., D.

४. विविधं गच्छतः । श्रोतव्यानां तदीयगुणानां बहुत्वात् Sy.

५. ०क्ष० D. तथा वैश्वानरं दिदृक्षमाणस्य मम चक्षुरिन्द्रियं विविधं गच्छति द्रष्टव्यानां तदीय-रूपाणां बहुत्वात् Sy.

६. प्रकाशकम् Sy.

७. हृदयपुण्डरीके Sy.

८. निहितं यद्बुद्धचाख्यं तत्त्वमिदमपि विपतयति । विविधं गच्छति वैश्वानरात्मानं ज्ञातुम् Sy.

९. विविधं प्रवर्तते Sy.

१०. दूरे विप्रकृष्टे विषये आधीराध्यानं यस्य तादृशम् । छान्दसो लिङ्गव्यत्ययः Sy.

११. आनीय० P.

१२. एवमहमहमिकया सर्वेष्विन्द्रियेषु प्रवृत्तेषु किं स्विदहं वैश्वानरस्य रूपमिति Sy.

१३. कक्ष्या० P.

१४. Omitted by P.

१५. खलु Sy.

१६. निष्येव P. ०ष्येव D. मनसा प्रपत्स्ये । वैश्वानरस्य गुणानामनन्तत्वान्मन्दप्रज्ञेन मया ज्ञातुं न शक्यत इत्यर्थः Sy.

१७. VM. ignores वि । मे and नु ॥ मे मदीयम् Sy.

१८. हे वैश्वानर ! Sy.

१९. सर्वे Sy.

२०. अनमस्य P. नमस्कुर्वन्ति Sy.

२१. कुतो हेतोः ? अन्धकाराद्भीताः Sy.

२२. अन्धकारे Sy.

२३. स्थितवन्तम् Sy.

२४. Omitted by P.

२५. अग्निः Sy.

२६. रक्षतु Sy.

२७. ऊत्या रक्षणेन Sy.

२८. ०णायां P. ०णायान् D.

२९. तादृशो मरणरहितः Sy.

३०. VM. explains अवतु । ऊतये and नः once only.

VI.10.

पुरो वो मन्द्रं दिव्यं सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वम् ।
पुर उक्थेभिः स हि नो विभावा स्वध्वरा करति जातवेदाः ॥ १ ॥

पुरो वः[1] । पुरः[2] । दधिध्वम्[3] यूयम् । मदयितारम्[4] । दिवि भवम् । सुष्टुतिम्[5] । वर्तमाने[6] । यज्ञे[7] । अग्निम्[8] । अहिंसिते[9] । अग्रतः[10] । अस्मान् । अग्निः । दीप्तिमान्[11] । सुयज्ञान्[12] । करोति[13] । सञ्जातप्रज्ञः[14] ।[15]

तमु द्युमः पुर्वणीक होतरग्ने अग्निभिर्मनुष इधानः ।
स्तोमं यमस्मै ममतेव शूषं घृतं न शुचि मतयः पवन्ते ॥ २ ॥

तमु । तं स्तोमं शृणु[16] । दीप्तिमन्[17] ! बहुज्वालानीक[18] ! होतः[19] ! अग्ने ! अन्यैरग्निभिः सह[20] । मनुष्यस्यार्थम्[21] । दीप्यमानः[22] । स्तोमम्[23] । यम् । अस्मै[24] तुभ्यम् । दीर्घतमसो माता ममतेव[25] । सुखकरम् । घृतम्[26] । न[27] । शुद्धम् । स्तोतारः[28] । प्रेरयन्ति[29] ।[30]

---

१. 'पुरो वः' इति सप्तर्चं दशमं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । सप्तमी विंशिका द्विपदा विराट् शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम् 'पुरो वा द्विपदान्तम्' (KSA. 29.10.p.22.) इति । प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दसीदमादीनि चत्वारि सूक्तानि । सूत्रितञ्च—'पुरो वा मन्द्रमिति चत्वारि तं सुप्रतीकमिति षट्' (ĀSS.4.13.) इति Sy.
२. हे ऋत्विग्यजमानाः ! Sy.
३. पुरस्तात् Sy.
४. आहवनीयरूपेण धारयत । यद्वा पुरोधसं कुरुत Sy.
५. मोदनं स्तुत्यं वा Sy.
६. सुष्ठु दोषैर्वर्जितं सुखेनावर्जनीयं वा Sy.
७. प्रगच्छति प्रवर्तमाने Sy.
८. अस्मिन् यज्ञे Sy.
९. एवङ्गुणमग्निम् Sy.
१०. अग्निसिते P., D. रक्षःप्रभृतिभिरहिंस्ये हिंसाप्रत्यवायरहिते वा Sy.
११. विशेषेण दीप्यमानः Sy.
१२. शोभनयागान् Sy.
१३. करोति । तस्मात् पुरो दधिध्वमित्यन्वयः Sy.
१४. जातानां वेदिता Sy.
१५. VM. ignores उक्थेभिः and हि ॥ उक्थेभिः स्तुतशस्त्रैश्च पुरो दधिध्वम् । हि यस्मात् Sy.
१६. तं स्तोमं शृण्विति शेषः Sy.
१७. हे दीप्तिमन् ! Sy.
१८. ज्वानिक P. बहुज्ञानिक D. बहुज्वाल ! Sy.
१९. देवानामाह्वातः ! Sy.
२०. तवावयवभूतैरन्यैरग्निभिः सार्द्धम् Sy.
२१. स्तोतुः Sy.
२२. ०ना P. समिध्यमानो दीप्तः सन् Sy.
२३. स्तोत्रम् Sy.
२४. अग्नये Sy.
२५. ममता नाम ब्रह्मवादिनी दीर्घतमसो माता, सेव Sy.
२६. ०त P., D. पवित्राभ्यामुत्पूतं घृतम् Sy.
२७. इव Sy.
२८. मन्तारः स्तोतारः Sy.
२९. पुनन्ति संस्कुर्वन्ति । दोषवर्जितमुच्चारयन्तीत्यर्थः । तं स्तोममित्यन्वयः Sy.
३०. VM. ignores उ ॥ उ इति पादपूरणम् Sy.

**पीपाय स श्रवसा मर्त्येषु यो अग्नये ददाश विप्र उक्थैः ।**
**चित्राभिस्तमूतिभिश्चित्रशोचिर्व्रजस्य साता गोमतो दधाति ॥ ३ ॥**

पीपाय[1] । वर्धते । सः[2] । अन्नेन । मनुष्येषु[3] । यः । अग्नये । हविः प्रयच्छति[4] । मेधावी । उक्थैः[5] सह । चित्रैः[6] । तम्[7] । रक्षणैः[8] । चित्रदीप्तिः[9] । गोमतः[10] । व्रजस्य[11] । लाभे[12] । स्थापयति[13] ।

**आ यः पप्रौ जायमान उर्वी दूरेदृशा भासा कृष्णाध्वा ।**
**अध बहु चित्तम ऊर्म्यायास्तिरः शोचिषा ददृशे पावकः ॥ ४ ॥**

आ यः पप्रौ[14] । आपूरयति । यः[15] । जायमानः[16] । द्यावापृथिव्यौ[17] । दूरे दृश्यमानया । भासा[18] । कृष्णवर्त्मा । अथ[19] । बहु । चित्[20] । तमः[21] । रात्रेः[22] । तिरस्कृत्य[23] । शोचिषा[24] । दृश्यते । पावकः ।

**नू नश्चित्रं पुरुवाजाभिरूती अग्ने रयिं मघवद्भ्यश्च धेहि ।**
**ये राधसा श्रवसा चात्यन्यान्त्सुवीर्येभिश्चाभि सन्ति जनान् ॥ ५ ॥**

नू नश्चित्रम्[25][26] । क्षिप्रम् । अस्मभ्यम् । हविः, चित्रम्[27] । वह्वन्नैः[28] । रक्षणैः सह । अग्ने ! धनम् । प्रयच्छ[29] । ये । धनेन । अन्नेन । च[30] । अति[31] । अन्यान् । अभिभवन्ति[32] । जनान्[33] । सुवीर्यैः[34] । चाभिभवन्ति[35]

---

१. पीवाय P. वीपायः D.
२. यजमानः Sy.
३. मनुष्येषु मध्ये Sy.
४. हवींषि प्रयच्छति Sy.
५. मेधास्सुक्थैः P. स्तुतिभिः सार्धम् Sy.
६. आश्चर्यभूताभिः Sy.
७. यजमानम् Sy.
८. P., D. read तनुः क्षणैः for तम् । रक्षणैः ॥ रक्षाभिः Sy.
९. ०प्त P. ०प्तैः D. विचित्रदीप्तिरग्निः Sy.
१०. गोभिर्युक्तस्य Sy.
११. प्रज्ञस्य P., D. गोष्ठस्य Sy.
१२. सातौ सम्भजने Sy.
१३. धारयति Sy.
१४. पव्रौ P.
१५. अग्निः Sy.
१६. प्रादुर्भवन् Sy.
१७. विस्तीर्णे द्यावापृथिव्यौ Sy.
१८. दीप्त्या Sy.
१९. अनन्तरम् Sy.
२०. अपि Sy.
२१. P. reads बलितमः and D. reads बपितमः for बहु । चित् । तमः ॥ अन्धकारम् Sy.
२२. रात्रः P. रात्रेः सम्बन्धि Sy. ऊर्म्येति रात्रिनाम Ngh. 1.7.
२३. तिरस्कुर्वन् Sy.
२४. शोषय P., D.
२५. ०श्चितं D.
२६. हे अग्ने ! Sy.
२७. चायनीयम् Sy.
२८. बह्वानैः P., D.
२९. देहि Sy.
३०. चशब्दो वक्ष्यमाणेन समुच्चयार्थः Sy.
३१. Omitted by P. अतिशयेन Sy.
३२. अतिभ० P., D.
३३. जनात् P. मनुष्यान् Sy.
३४. शोभनैर्वीर्यैश्च Sy.
३५. चाभव० P., D. तादृशान् पुत्रांश्चास्मभ्यं देहीत्यर्थः Sy.

तेभ्योऽस्मभ्यम्,[1] इति ।[2]

**इमं यज्ञं चनो धा अग्न उशन्यं त आसानो जुहुते हविष्मान् ।**
**भरद्वाजेषु दधिषे सुवृक्तिमवीर्वाजस्य गध्यस्य सातौ ॥ ६ ॥**

**इमं यज्ञम्** ।[3] इमम् ।[4] यज्ञम् ।[5] चनश्च ।[6] धारय ।[7] अग्ने ![8] कामयमानः ।[9] यं सोमाख्यं यज्ञम् ।[10] तुभ्यम् ।[11] आसीनो होता ।[12] प्रयच्छति ।[13] हविष्मान् ।[14] भरद्वाजेषु ।[15] धारयसि ।[16] स्तुतिम् ।[17] रक्षिता ।[18] अन्नस्य । त्वयि क्षेप्तव्यस्य ।[19] भजने ।[20] गधिर्मिश्रीभावकर्मा ।[21]

**वि द्वेषांसीनुहि वर्धयेळां मदेम शतहिमाः सुवीराः ॥ ७ ॥**

**वि द्वेषांसि** ।[22] शत्रून् ।[23] विगमय ।[24] वर्धय । अन्नमस्माकम् ।[25] मदेमहि ।[26] शतसंवत्सराः ।[27] सुपुत्राः ।[28]

VI.11.

**यजस्व होतरिषितो यजीयानग्ने बाधो मरुतां न प्रयुक्ति ।**
**आ नो मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः ॥ १ ॥**

**यजस्व**[29] ।[30] यजस्व । होतः ![31] प्रेषितः ।[32] यष्टृतरस्तत्र[33] त्वम् । यथा ।[34] मरुताम् ।[35]

---

१. ०भ्य P., D. २. VM. ignores मघवद्भ्यः ॥ हविर्लक्षणधनयुक्तेभ्यः Sy.
३. हे अग्ने ! Sy. ४. पुरोवर्तिं Sy.
५. यागसाधनम् Sy.
६. चगश्च P., D. हविर्लक्षणमन्नम् Sy.
७. धेहि । स्वात्मनि धारय Sy.
८. अग्ने म P., D. ९. कामयमानस्त्वम् Sy.
१०. पुरोडाशादिकम् Sy.
११. तुभ्यं त्वदर्थम् Sy. १२. उपविशन् Sy.
१३. जुहोति तमिममित्यन्वयः Sy.
१४. हविर्युक्तो यजमानः Sy.
१५. अपि च भरद्वाजेषु ऋषिषु Sy.
१६. धारय Sy.
१७. स्तुति P. सुष्ठु दोषैर्वर्जितां स्तुतिम् Sy.
१८. अवीः । तानृषीन्रक्ष च Sy.
१९. ०प्तस्य P. मिश्रणीयस्य प्राप्यस्य Sy. गध्यतिर्मिश्रीभावकर्मा N. 5.15.
२०. सम्भजने निमित्तभूते Sy.
२१. गतिर्मि० P. The passage गधिर्मिश्रीभावकर्मा should immediately follow त्वयि क्षेप्तव्यस्य and precede भजने ।
२२. हे अग्ने ! Sy. २३. द्वेष्टॄन् Sy.
२४. विविधं गमय Sy.
२५. अन्नं चास्मदीयम् Sy.
२६. मेदे० P. मोदेम तृप्ता भूयास्म Sy.
२७. शतं हेमन्तान् संवत्सरान् Sy.
२८. शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेताः सन्तः Sy.
२९. 'यजस्व होतः' इति षड्चमेकादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । अनुक्रम्यते च 'यजस्व षट्' (KSA.29.11.p.22.) इति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.
३०. Omitted by P., D. ३१. ०ता D.
३२. प्रो० D. अस्माभिः प्रार्थितः सन् Sy.
३३. यष्टृतमस्त्वम् Sy.
३४. नेति सम्प्रत्यर्थे cf N.7.31. सम्प्रति Sy.
३५. देवानाम् Sy.

शर्धः[1] । प्रयुज्यमानं[2] प्रादुर्भवन् । यथा देवानां वर्तयति[3] तद्वदावर्तय[4] । अस्माकम् । मित्रावरुणौ[5] । अश्विनौ[6] । द्यावापृथिव्यौ[7] च[8] यथा[9] तान् यजस्वेति[10] ।

**त्वं होता मन्द्रतमो नो अध्रुगन्तर्देवो विदथा मर्त्येषु ।**
**पावकया जुह्वा३ वह्निरासाग्ने यजस्व तन्वं१ तव स्वाम् ॥ २ ॥**

त्वं होता । त्वम्[11] । होता[12] । मादयितृतमः[13] । अस्माकम् । अद्रोग्धा[14] । मनुष्येषु । अन्तः[15] । यज्ञे[16] । देवो[17] वर्तसे[18] । स शोधयित्र्या । ज्वालया[19] । आस्यभूतया[20] । वह्निस्त्वम्[21] । अग्ने[22] ! तव । स्वभूताम्[23] । तन्वम्[24] । यजस्व ।

**धन्या चिद्धि त्वे धिषणा वष्टि प्र देवाञ्जन्म गृणते यजध्यै ।**
**वेपिष्ठो अङ्गिरसां यद्ध विप्रो मधुच्छन्दो भनति रेभ इष्टौ ॥ ३ ॥**

धन्या चिद्धि । धननिमित्ता[25] । स्तुतिः । त्वाम् । कामयते । तथा[26] सति प्रगच्छ[27] । देवान्[28] । जन्मनि

---

१. शत्रूणां बाधकं गणं यजस्व । यद्वैतद्वाक्यद्वयम् । हे होतरग्ने ! यजस्व देवानित्येकं वाक्यम् । प्रयुज्यत इति प्रयुक्ति बलम् । मरुतां न प्रयुक्ति मरुतां बलमिवास्मच्छत्रून् बाधः बाधस्वेति द्वितीयं वाक्यम् Sy.

२. ०नः P.
प्रयुक्तौ प्रयुज्यमाने यज्ञे Sy.

३. देवानावर्त० is suggested for देवानां वर्त० ।

४. आवहेत्यर्थः Sy.

५. वरुणौ P. अपि च मित्रावरुणौ अहरभिमानी देवो मित्रो वरुणो रात्र्यभिमानी तौ च Sy.

६. सत्यस्य नेतारौ सत्यस्वभावावेव वा नासिकाप्रभवौ वाश्विनौ Sy.

७. दिवं च पृथिवीं च एतांश्च देवान् Sy.

८. Omitted by P.

९. याथ D.

१०. VM. ignores अग्ने and होत्राय ॥ होत्राय अस्मद्यज्ञाय तदर्थम् Sy.

११. हे अग्ने ! त्वम् Sy.

१२. देवानामाह्वाता भवसि Sy.

१३. स्तुत्यतमः Sy.

१४. अद्रोग्धा, अस्मदर्थं द्रोहरहितो वा । सर्वदा मित्रभूत इत्यर्थः Sy.

१५. मध्ये वर्तमानः Sy.

१६. विदथे यज्ञे Sy.

१७. दानादिगुणयुक्तः Sy.

१८. वर्धसे P.

१९. हूयन्तेऽस्यामाहुतय इति जुहूर्ज्वाला । तया Sy.

२०. ज्वालाचस्य० P. ज्वालास्य० D. देवानामास्यभूतया Sy.

२१. वहनिस्त्वमृ P., D.
हविषां वोढा Sy.

२२. अपि च हे अग्ने ! Sy.

२३. स्विष्टकृदाख्याम् Sy.

२४. तनुवं P., D. तनूम् Sy.

२५. धनमिच्छन्ती धनहेतुभूता Sy.

२६. था D.

२७. प्रकर्षेण यष्टुम् Sy.

२८. यष्टव्यानिन्द्रादीन् Sy.

जातस्त्वम्[1]। स्तुवते मह्यम्[2]। यष्टुम्। अङ्गिरसाम्[3]। अत्यन्तं कम्पयिता[4]। यस्मात्[5]। खलु। विप्रो[6] भरद्वाजः। मधुसदृशम्[7]। छन्दः[8]। उच्चारयति[9]। स्तोता। यज्ञे[10]।

**अदि॑द्युतत्स्वपा॑को वि॒भावाग्ने॒ यज॑स्व॒ रोद॑सी उरू॒ची ।**
**आ॒युं न यं नम॑सा रा॒तह॑व्या अ॒ञ्जन्ति॑ सुप्र॒यसं॒ पञ्च॒ जनाः॑ ॥ ४ ॥**

अदिद्युतत्[11]। द्योतते[12]। सुष्ठु[12]। अपक्तव्यप्रज्ञः[13]। दीप्तिमान्। प्रत्यक्षोऽग्निरथ[14] त्वमग्ने[15]! यजस्व[16]। द्यावापृथिव्यौ। विस्तीर्णे[17]। मनुष्यम्[18]। इव। अन्नेन[19]। यं[20] त्वाम्। दत्तहविष्काः[21]। आज्येनाञ्जन्ति[22]। शोभनान्नम्[23]। पञ्च[24]। जनाः[25] संयजस्वेति।

**वृ॒ञ्जे ह॒ यन्नम॑सा ब॒र्हिर॒ग्नावया॑मि॒ स्रुग्घृ॒तव॑ती सुवृ॒क्तिः ।**
**अम्य॑क्षि॒ सद्म॒ सद॑ने पृथि॒व्या अश्रा॑यि य॒ज्ञः सूर्ये॒ न चक्षुः॑ ॥ ५ ॥**

वृञ्जे ह[26]। स्तृणामि[27]। अन्नेन सह[28]। यदा[29]। बर्हिः। अग्निसमीपे। तदा हस्ताभ्यां यथा[30] भवति[31]।

---

१. त्वदीयं प्रादुर्भाविम् Sy.
२. यजमानाद्येदृग्भूतयजमानार्थम् Sy.
३. यष्टृतमं गिरसाम् P.
ऋषीणां मध्ये Sy.
४. अतिशयेन स्तुतेः प्रेरयिता Sy.
५. यस्मात् P. यदा Sy.
६. मेधावी Sy.
७. मधुमन्मदकरम् Sy.
८. ०दश उञ्छदन्तः P. स्तोत्रम् Sy.
९. उच्चारयति। तदा धिषणा वष्टीत्यन्वयः Sy.
१०. VM. ignores चित् and हि ॥ चिद्धीत्येतत् पादपूरणम् Sy.
११. अभिद्युत् तत् D.
१२. ०न्ते D. अयमग्निः सुष्ठु दीप्यते Sy.
१३. वक्तव्य० P. अवक्त० D. पाकः पक्तव्यप्रज्ञो मूर्खः, तद्विलक्षणोऽपाकः Sy.
१४. शेषः प्रत्यक्षकृतः Sy.
१५. हे अग्ने ! स त्वम् Sy.
१६. हविषा पूजय Sy.
१७. उरु विस्तीर्णमञ्चन्त्यौ विस्तृते Sy.
१८. मनुष्यमतिथिम् Sy.
१९. अन्नेन हविर्लक्षणेन Sy.
२०. ये D.
२१. दत्तहविष्काः सन्तः Sy.
२२. सिञ्चन्ति तर्पयन्ति। स त्वं यजस्वेत्यन्वयः Sy.
२३. शोभनहविर्लक्षणान्नमग्निम् Sy.
२४. मनुष्या ऋत्विग्यजमानलक्षणाः Sy.
२५. तं यजस्वेति is suggested for संयजस्वेति।
२६. पृथञ्जे P. पृञ्जे D.
२७. तृ० P. वृजिरछेदनार्थः। छिद्यते। आह्नियत इत्यर्थः Sy.
२८. हविषा Sy.
२९. दा P.
३०. यता is suggested for यथा ॥
३१. अयामि, नियम्यते, बर्हिष्यासाद्यते Sy.

स्रुक्[१]। घृतवती[२]। सुप्रवृत्ता[३]। गम्यते[४]। स्वं स्वं स्थानम्[५]। देवैर्वेद्याम्[६]। अथ तत्र यज्ञश्च। श्रितोऽभितो[७] भवति। सूर्ये[८]। इव[९]। तेजः[१०][११]।

दशस्या नः पुर्वणीक होतर्देवेभिरग्ने अग्निभिरिधानः।
रायः सूनो सहसो वावसाना अति स्रसेम वृजनं नांहः॥ ६॥

दशस्य। देहि[१२]। अस्मभ्यम्। पुर्वनीक[१३]! होतः[१४]! दीप्यमानैरन्यैः[१५]। अग्निभिस्त्वानुचरैः[१६] सह। दीप्यमानः[१७]। धनानि। हे सहसः, सूनो[१८]! स्वगृहे वर्तमानाः[१९]। अतितरेम[२०]। उपद्रवम्[२१]। च[२२]। आहन्तृ[२३][२४]।

VI.12.

मध्ये होता दुरोणे बर्हिषो राळग्निस्तोदस्य रोदसी यजध्यै।
अयं स सूनुः सहस ऋतावा दूरात्सूर्यो न शोचिषा ततान॥ १॥

मध्ये होता[२५]। मध्ये[२६]। होता[२७]। गृहे[२७][२८][२९]। यज्ञस्य। राजा। अग्निः। हविषः[३०] प्रेरयितुः[३१]। यज्ञाय[३२]। दीप्यमानौ द्यावापृथिवी[३३] तेजसा तनोति[३४] तदेवाह—अयम्। सहसः। सूनुः[३५]। यज्ञवान्[३६]। दूरे स्थितोऽपि ततः[३७]।

---

१. सु P. २. घृतपूर्णा Sy.
३. सुष्ठु दोषैर्वर्जिता Sy.
४. म्यक्षतिर्गतिकर्मा। गम्यते परिगृह्यते Sy.
५. हविरासादनार्था वेदिः Sy.
६. वद्याम् P. VM. seems to explain पृथिव्याः and सदने together as वेद्याम्॥ तथा भूमेः स्थाने Sy.
७. ०भतो D. यजमान आश्रितो भवति Sy.
८. आर्ये P. सर्वस्य प्रेरक आदित्ये Sy.
९. तत्र दृष्टान्तः। यथा Sy.
१०. प्रकाशकं तेजः समवैति तद्वत् Sy.
११. VM. ignores ह॥ ह खलु Sy.
१२. प्रयच्छ Sy.
१३. हे बहुज्वाल ! Sy.
१४. पर्वनीक तोतद् P., D. देवानामाह्वातरग्ने ! Sy.
१५. ०रन्नैः D. द्योतमानैः Sy.
१६. त्वद्विभूतिभूतैः सार्धम् Sy.
१७. इध्यमानो दीप्यमानः सन् Sy.
१८. हे बलस्य पुत्राग्ने ! Sy.
१९. हविषा त्वामाच्छादयन्तो वयम् Sy.
२०. अतिगच्छेम। अतिक्रामेमेत्यर्थः Sy.
२१. उपद्रवोवम् P. शत्रुम् Sy.
२२. इव Sy. २३. पापम् Sy.
२४. VM. ignores अग्ने।
२५. 'मध्ये होता' इति षडृचं द्वादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम्। 'मध्ये' (KSA. 29. 12.p.22.)। इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.
२६. Omitted by P.
२७. निषीदतीति शेषः Sy.
२८. देवानामाह्वाता Sy.
२९. गृहे मध्ये निषीदतीति शेषः Sy.
३०. ०षा P.
३१. तुद्यते तपसा पीड्यत इति तोदो यजमानः। तस्य Sy. ३२. यष्टुम् Sy.
३३. द्यावापृथिव्यौ Sy.
३४. तनेताति P. ३५. पुत्रः Sy.
३६. सत्यवान् यज्ञवान् वाग्निः Sy.
३७. दूरत एव Sy.

सूर्यः । इव । तेजसा । तनोति ।

**आ यस्मिन्त्वे स्वपाके यजत्र यक्षद्राजन्त्सर्वतातेव नु द्यौः ।**
**त्रिषधस्थस्ततरुषो न जंहो हव्या मघानि मानुषा यजध्यै ॥ २ ॥**

**आ यस्मिन् ।** आभिमुख्येनेज्यते । यस्मिन् । त्वयि । सुष्ठु । अपक्वव्यप्रज्ञे । यष्टव्य ! दीप्यमान ! यज्ञ इव । द्युलोकम् । त्रिस्थानः स त्वम् । द्युलोकं तरत आदित्यस्य । इव । वेगः । हवींषि । महनीयानि । मनुष्यसम्बन्धीनि । यष्टुं वेगयुक्तो भवसि ।

**तेजिष्ठा यस्यारतिर्वनेराट् तोदो अध्वन्न वृधसानो अद्यौत् ।**
**अद्रोघो न द्रविता चेतति त्मन्नमर्त्योऽवर्त्र ओषधीषु ॥ ३ ॥**

**तेजिष्ठा ।** अतिशयेन तेजस्विनी । यस्य । ज्वाला । वने राजते । तुद्यमानोऽश्वः । इव । अध्वनि शीघ्रं गच्छन् । वर्धमानोऽग्निः । द्योतते । द्रोहरहितः । इव वायुः । गच्छन् । आत्मनैव भक्ष्यम् । जानाति ।

---

१. आतनोति विस्तारयति । दूरदेशे वर्तमानोऽपि सूर्य इव सर्वं जगद्भासयतीत्यर्थः Sy.
२. VM. ignores सः ॥ स तादृशः Sy.
३. आयजति हवींषि जुहोति Sy.
४. अत्यन्तम् Sy.
५. अवक्त० P., D. प्राज्ञे Sy.
६. हे यष्टव्य ! Sy.
७. यष्टव्य दीप्यमाना यष्टव्यन्दीप्यमाना P. यष्टव्य दीप्यमाना यष्टव्य दीप्यमान D. राजमानाग्ने ! Sy.
८. इवशब्दः पूरकः । सर्वतातौ सर्वैस्तायमाने यज्ञे । यद्वा सर्वशब्दात्स्वार्थिकस्तातिल्प्रत्ययः । सर्वः स्तोता Sy. सर्वतातेति यज्ञनाम Ngh. 3.17.
९. ०के P. स्तोता Sy.
१०. ०न P. त्रिषु लोकेषु सह स्थितः । यद्वा गार्हपत्यादिरूपेण त्रिधावस्थितः Sy.
११. त्व P.
१२. तरिता सूर्यः । यद्वा तरतुः सूर्यस्य 'तॄ प्लवनतरणयोः' इत्यस्मात् क्वसौ रूपं ततर्वानिति, तस्य षष्ठ्यां रूपं ततरुष इति Sy.
१३. आदित्य व P., D.
१४. शीघ्रं गन्ता भव । जंह इति हन्तेर्गतिकर्मणो रूपम् । यद्वा जंहो वेगस्तव भवत्वित्यर्थः Sy.
१५. हव्यानि हवींषि Sy.
१६. मंहनीयानि प्रशस्यानि Sy.
१७. ०ष्यास० P. मनुष्याणां सम्बन्धीनि Sy.
१८. ०ष्टु P., D. देवेभ्यो दातुम् Sy.
१९. वैग० P., D.
२०. VM. ignores नु ॥ क्षिप्रम् Sy.
२१. अतिशयेन तेजस्विनी सती Sy.
२२. अग्नेः Sy.
२३. गन्त्री ज्वाला Sy.
२४. दावरूपेणारण्ये राजमाना वर्तते Sy.
२५. तुभ्यमा० P. तोदः सर्वस्य प्रेरकः सूर्यः Sy.
२६. Omitted by D. स्वमार्गेऽन्तरिक्षे Sy.
२७. अग्निः is omitted by P. वर्धमानः सोऽग्निः Sy. २८. प्रकाशते Sy.
२९. अपि च अद्रोग्धव्यः, यद्वा प्राणरूपेण सर्वेषामद्रोग्धा वायुः Sy.
३०. द्रविता शीघ्रगामी सन् Sy.
३१. आत्मना स्वप्रकाशेनैव Sy.
३२. जना० P., D. चेतयति । सर्वं जगत् ज्ञापयति Sy.

अमर्त्यः[१] । ओषधीषु[२] शुष्कासु । आवरणीयः[३] ।

**सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः ।**
**द्रवन्नो वन्वन् क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः ॥ ४ ॥**

सास्माकेभिः[४] । सः । अग्निः । अस्मदीयैर्वचनैः[५] । सुखकरैः[६] । स्तूयते[७] । यज्ञगृहे[८] । जातवेदाः[९] । यथा । एतृनामधेय[१०] ऋषौ । दार्वन्नः[११] । भजमानः[१२] । प्रज्ञया[१३] । इव । अश्वः[१४] । सङ्ग्रामम् । बलीवर्दः[१५] । इव[१६] । पालयिता[१७] गोयूथस्य । जातयान्येव(?)[१८]बलीवर्देनाधिष्ठितां[१९] गोवधू[२०] गच्छन् यज्ञानुद्दिश्य[२१] शीघ्रं गच्छतीत्यर्थः । ह्रस्वश्छान्दसः[२२] ।

---

१. मरणरहितः Sy.
२. ओषः पाकः एषु धीयत इत्योषधयो वनानि । तेषु Sy.
३. ०य P. केनाप्यवारणीयश्च भवन् Sy.
४. भरद्वाजस्यार्षम् Dur. भरद्वाजस्य SKN.
५. स्तोतृभिः Sy. छान्दसमात्वम् Dur. अस्मदीयैः पुत्रपौत्रादिभिर्ऋग्भिर्वा SKN.
६. सुखकरैः स्तोत्रैः Sy. सुखैः स्तोत्रैः Dur. शूषमिति सुखनाम । (Ngh. 3.6.) सुखैः सुखहेतुभिः । कैः ? सामर्थ्यात्स्तोत्रैः SKN.
७. आभिमुख्येनावस्थितैः स्तूयते Dur. व्यत्ययेनेदं कर्मणि प्रथमैकवचनस्य स्थान उत्तमैकवचनं द्रष्टव्यम् । स्तूयते, आकारः स्तव इत्येतेन सम्बध्यते । आभिमुख्येन मर्यादया वा यथाशास्त्रं स्तूयते SKN.
८. अस्मदीये यज्ञगृहे Sy. यज्ञगृहे यज्ञे Dur. यज्ञे तद्गृहे SKN.
९. जातधनो जातप्रज्ञो वा Sy. जातविद्यो जातधनो वा Dur., SKN.
१०. ०एतृना० P. गन्तरि याचमाने पुरुषे विद्यमानानि स्तोत्राणि यथात्यन्तं सुखकराणि तथा Sy. अतिथिरिव Dur. एताऽत्र सततगामित्वादतिथिरुच्यते । प्रथमार्थे चेयं सप्तमी । गन्तेव सततगामीवातिथिर्गृहस्थैः SKN.
११. द्रुर्द्रुमः । स एवान्नं यस्य स तथोक्तः Sy. द्रुमान्नः Dur. काष्ठान्नः काष्ठभक्ष इत्यर्थः SKN.
१२. ०न P. वनानि सम्भजन् Sy. वन्वन्निति 'वन षण सम्भक्तौ' इत्यस्य रूपम् ।....सम्भज्यमानः SKN.
१३. क्रतुनात्मीयेन कर्मणा Sy. वननीयकर्मा वननीयप्रज्ञानो वा Dur. क्रत्वेति कर्मनाम । (Ngh. 2.1.) कर्मणेव शीघ्रगमनलक्षणेन SKN.
१४. अश्व P., D. गन्ता च भवति Sy. अनर्वाऽनाश्रितः कश्चिदन्यम् Dur. अर्वेत्यश्वनाम Ngh. 10.14.
१५. वृषभः Sy.
१६. तत्र दृष्टान्तः । वत्सानां जनको वोस्रो वृषभ इव । स यथा मैथुनार्थं शीघ्रं गच्छति तद्वत् Sy. साण्ड इव Dur. उपमानानन्तरं चेदम् । उस्र इति गोनाम (Ngh. 2.11.) यथा च गौर्बलीवर्दः SKN.
१७. गवां पिता Dur. पिता गोपायिता स्वापत्यानां पालयिता वा स्वकर्मणा स्तूयते तद्वत् SKN.
१८. यज्ञैर्यज्ञवद्भिर्यजमानैश्च जारयायि । स्तूयते । जरतेः स्तुतिकर्मण एतद्रूपम् Sy. यथा साण्डः पुत्रपौत्रादिभिरनेकधा प्रजायते ।....एवमत्र 'जारयायि' इत्यस्य 'अजायि' इत्यर्थप्रतीतिः Dur. अजायत, जायतेऽग्निराहवनीयात्मना SKN.
१९. ०नधि० D.
२०. Omitted by P. शोव० D.
२१. एवं यज्ञेषु विह्रियमाणोऽनेकधा जायतेऽग्निः Dur. यज्ञेषु यज्ञैर्वा सह SKN. उस्र इव गोपिताजायि यज्ञैः N.6.15., SKN.II.441.
२२. VM. ignores आ ॥ आभिमुख्येन Sy.

**अध॑ स्मास्य पनयन्ति॒ भासो॒ वृथा॒ यत्तक्ष॑दनु॒याति॑ पृ॒थ्वीम् ।**
**स॒द्यो यः॑ स्प॒न्द्रो विषि॑तो॒ धवी॑यानृ॒णो न ता॒युरति॒ धन्वा॑ राट् ॥ ५ ॥**

**अध स्म ।** अथ[1]। खलु[2]। एनम्[3]। स्तुवन्ति[4]। दीप्यमानम्[5]। अनायामेन । यदा। छिन्दन्[6]। अनुयाति[7]। भूतिम्[8]। सद्य एव[9]। यः[10]। स्यन्दनशीलः[11]। विमुक्तः[12]। अत्यन्तं गन्ता[13]। मनुष्यमकाशाद् गच्छन्[14]। इव[15]। स्तेनः[15]। धन्व[16]। अतिक्रम्यारण्यं प्राप्य । राजते[17]।

**स त्वं नो॑ अर्व॒न्निदा॑या॒ विश्वे॑भिरग्ने अ॒ग्निभि॒रिधा॒नः ।**
**वेषि॑ रा॒यो वि या॑सि दु॒च्छुना॒ मदे॑म श॒तहि॑माः सु॒वीराः॑ ॥ ६ ॥**

**स त्वं नः ।** सः[18]। त्वम् । अस्मान् । गन्तः[19] ! निन्दित्र्याः[20] प्रजायाः परिरक्ष । विश्वेभिः[21]। अग्ने ! अग्निभिः शाखाभूतैः । दीप्यमानः[22]। कामयस्व[23] च । धनानि । विजहि[24] च । शत्रून्[25]। मदेम[26]। शतहिमाः[27]। सुवीराः[28]।

---

१. अस्मिँल्लोके Sy.
२. स्मेति पूरकः Sy.
३. अस्याग्नेः Sy.
४. स्तोतारः स्तुवन्ति Sy.
५. दिव्यम् P.
भासो रश्मीन् Sy.
६. तक्षन् तनूकुर्वन् । वनानि सम्यग्दहन् Sy.
७. अनुगच्छति तदानीं पनयन्तीत्यन्वयः Sy.
८. भूरि P. भूमिम् is suggested for भूमिम् ॥ विस्तीर्णमरण्यभुवम् Sy.
९. अत एव शीघ्रम् Sy.
१०. य D. अग्निः Sy.
११. स्पन्द० P., D.
स्पन्दनवान् Sy.
१२. प्रतिबन्धरहितः Sy.
१३. अन्ता P., D.
गन्तृतमो भवति Sy.
१४. ऋणोतिर्गतिकर्मा । शीघ्रं गन्ता भवति Sy.
१५. यथा स्तेनः, तद्वत् Sy. तायुरिति स्तेननाम Ngh. 3.24.
१६. मरुभूमिम् । यद्वा धन्वन्त्यस्मादाप इति धन्वान्तरिक्षम् । अतिशयेनान्तरिक्षमाक्रम्य Sy.
१७. रज० D.
१८. तादृशः Sy.
१९. हे अर्वन् ! गन्तः ! अग्ने ! Sy.
२०. ०न्तन्निन्द्रीत्र्याः P. ०न्तन्निन्दि० D. निन्दाया एव वा पाहीति शेषः Sy.
२१. सर्वैः Sy.
२२. इध्यमानः सन् Sy.
२३. गमय । यद्वा हविर्लक्षणानि धनानि वेषि कामयसे Sy.
२४. विविधं गमयसि च Sy.
२५. दुःखकारिणीः शत्रुसेनाः Sy.
२६. मोदेम Sy.
२७. शतं संवत्सरान् Sy.
२८. वयं च सुवीराः शोभनपुत्रपौत्राः सन्तः Sy.

VI.13.

त्वद्विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः ।
श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम् ॥ १ ॥

त्वद्विश्वा[1] । त्वत्तः । विश्वानि[2] । सुभग[3] ! सौभाग्येन[4] । विविधं गच्छन्ति[5] । वृक्षादिशाखाः[6] । क्षिप्रम् । बलम्[7] । धनं[8] च । सङ्ग्रामे[9] त्वत्तो भवति । तथा[10] त्वत्प्रसादादेव दिवः[11] । वृष्टिर्निपतति[12] । स्तुत्यस्त्वं[13] भवसि । अपाम्[14] । प्रेरयिता[15] ।[16]

त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः ।
अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेः ॥ २ ॥

त्वं भगो नः[17] । त्वम् । भजनीयः । अस्माकम्[18] । त्वत्तो हि[19] । रत्नम्[20] । आभिमुख्येनेष्यते[21] । वायुरिव[22]

---

१. 'त्वद्विश्वा' इति षड्चं त्रयोदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयम् । 'त्वद्विश्वा' (KSA. 29.13.p.22.) । इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

२. विश्वा P., D. सर्वाणि Sy.

३. हे शोभनधनाग्ने ! Sy.

४. ०ग्यानि is suggested for ०ग्येन ॥ धनानि Sy.

५. विविधं निर्गच्छन्ति । हिरण्यमूलत्वात्सर्वेषां धनानाम् । हिरण्यं चाग्नेः सकाशादुत्पन्नम् । 'तस्य रेतः परापतत्तद्धिरण्यमभवत्' (TB. 1.1.3.8.) इति श्रुतेः Sy.

६. ०खा D. वृक्षात् । इव । शाखाः is suggested for वृक्षादिशाखाः ॥ निर्गमने दृष्टान्तः । यथा वृक्षाच्छाखा विविधं निर्गच्छन्ति तद्वत् Sy.

७. बलम् seems to be the explanation of वाजः ॥ Sy. also explains वाजः by बलम् ॥

८. तथा पशुसङ्घश्च त्वत्सकाशादेव श्रुष्टी क्षिप्रं निर्गच्छति । 'पशवो वै रयिः पशूनेवावरुन्धे' (TS.1.5.7.2) इति तैत्तिरीयकम् Sy.

९. वृत्रतूर्ये वृत्राणां हिंसके सङ्ग्रामे शत्रून् जेतुम् Sy.

१०. यथा P.

११. अन्तरिक्षात् Sy.

१२. या वृष्टिः सापि त्वत्त एव व्येति । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' । (Manu. 3. 76; Maitr U. 6.37) इति स्मरणात् Sy.

१३. अतस्त्वमीड्यः सर्वैः स्तुत्यः सन् Sy.

१४. उदकानाम् Sy.

१५. गमयिता भवसि Sy.

१६. VM. ignores अग्ने and न ।

१७. हे अग्ने ! Sy.

१८. अस्मभ्यम् Sy.

१९. हीति पूरकः Sy.

२०. रमणीयं धनम् Sy.

२१. त्वत्तोभिमुख्यानिष्येते P. ०ष्येते D. आगमय । प्रयच्छ । 'इण् गतौ' इत्यस्यैतद्रूपम् Sy.

२२. परितो गन्ता वायुरिव Sy.

त्वम् । सर्वत्र निवससि[1] । दर्शनीयतेजाः[2] । अग्ने ! सखा[3] । इव । बृंहितस्य[4] । सत्यभूतस्य[5] । भवसि । दाता[6] । धनस्य[7] । देव[8] ! बह्वोः[9] ।

**स सत्पतिः शवसा हन्ति वृत्रमग्ने विप्रो वि पणेर्भर्ति वाजम् ।**
**यं त्वं प्रचेत ऋतजात राया सजोषा नप्त्रापां हिनोषि ॥ ३ ॥**

**स सत्पतिः ।** सः[10] । सत्पतिः[11] । बलेन[12] । हन्ति[13] । शत्रुम्[14] । अग्ने ! मेधावी[15] । विविधं हरति[16] । पणेः[17] । अन्नम्[18] । पणिः पणनादयजमानः[19] । यम्[20] । प्रकृष्टज्ञान ! यज्ञार्थं[21] जात ! अपाम् । नप्त्रा[22] देवेन । सहितः[23] । सङ्ग्रामे प्रेरयसि[24] । धनार्थम्[25] ।

**यस्ते सूनो सहसो गीर्भिरुक्थैर्यज्ञैर्मर्तो निशितिं वेद्यानट् ।**
**विश्वं स देव प्रति वारमग्ने धत्ते धान्यं१ पत्यते वसव्यैः ॥ ४ ॥**

**यस्ते ।** यः । तुभ्यम्[26] । हे सहसः, सूनो[27] ! स्तोत्रशस्त्रैः[28] । सर्वं[29] वेद्याम्[30] । संस्कृतं[31] हविः । सोमैः[32] सह ।

---

१. यद्वा क्षयतिरैश्वर्यकर्मा । सर्वस्येशिषे Sy.

२. दर्शनीयदीप्तिस्त्वम् Sy.

३. मित्रः प्रमीतेस्त्रायको देव इव Sy.

४. प्रहितस्य P. बृंहि D. महतः Sy.

५. उदकस्य यज्ञस्य वा Sy.

६. क्षदतिरत्र दानकर्मा Sy.

७. वननीयस्य धनस्य च दाता भवतीत्यनुषङ्गः Sy.

८. हे द्योतमानाग्ने ! Sy.

९. बहुलस्य Sy.

१०. सन्पतिः P.

११. पुरुषः Sy.

१२. सतां पालयिता Sy.

१३. ०ति ब० D.

१४. आवरकं शत्रुम् Sy.

१५. ०वि P. स च मेधावी सन् Sy.

१६. वि भर्ति वियुज्य हरति । 'हृग्रहोर्भः' इति भत्वम् Sy.

१७. वणिजः एतन्नाम्नोऽसुरस्य Sy.

१८. अन्नं बलं वा Sy.

१९. The passage पणिः पणनादयजमानः should immediately follow पणेः and precede अन्नम् ।

२०. पुरुषम् Sy.

२१. ऋतमिति यज्ञनाम । तदर्थं जाताग्ने ! Sy.

२२. अवन्नप्ता P. अवान्नप्ता D. न पातयित्रा पुत्रेण मध्यमस्थानेन वैद्युताग्निना Sy.

२३. सङ्गतस्त्वम् Sy.

२४. प्रेरयसि स हन्तीत्यन्वयः Sy.

२५. वनार्थं P., D. चतुर्थ्यर्थे तृतीया Sy.

२६. तव Sy.

२७. हे बलस्य सूनो ! पुत्राग्ने ! Sy.

२८. ०त्रं श० P., D. स्तुतिभिः शस्त्रैः Sy.

२९. स D.

३०. यज्ञभूमौ Sy.

३१. तैक्ष्ण्यम् Sy.

३२. यजमानसाधनैर्हविर्भिश्च Sy.

प्रापयति । सर्वविधम्[१] । मः[२] । देव[३] ! पर्याप्तिम्[४] । धान्यम् । आत्मानं प्रति च[५] । धत्ते[६] । तथा वसुसमूहैः[७] सह[८] च । गच्छति[९][१०] ।

**ता नृभ्य॒ आ सौ॑श्रव॒सा सु॒वीरा॒ग्ने॑ सू॒नो स॑हसः पु॒ष्यसे॑ धाः ।**
**कृ॒णोषि॒ यच्छव॑सा॒ भूरि॑ प॒श्वो वयो॒ वृका॑याऽरये॒ जसु॑रये ॥ ५ ॥**

ता नृभ्यः । अन्धहितानि[२५] तानि । नृभ्यः[११] । धनानि[१२] । सुपुत्राणि[१३] । अग्ने ! सहसः । सूनो[१४] ! पुष्टचर्थम्[१५] । करोषि[१६] । यस्त्वम् । बलेन[१७] । बहु[१८] । पशोः[१९] । अभिगन्ता[२०] । स्तेनाय[२१] । अभिगन्त्रे[२२] । उपक्षपित्रे[२३] जयाय[२४][२५] ।

**व॒ध्रा सू॑नो सहसो नो॒ विहा॑या॒ अग्ने॑ तो॒कं तन॑यं वा॒जि नो॑ दाः ।**
**विश्वा॑भिर्गी॒र्भिर॒भि पू॒र्तिम॑श्यां॒ मदे॑म श॒तहि॑माः सु॒वीराः॑ ॥ ६ ॥**

वध्रा[२६] सूनो[२७] । वदिता[२८] । सहसः । सूनो ! महान्[२९] । अस्माकम्[३०] । अग्ने ! पुत्रम्[३१] । तत्पुत्रं च । अन्नवत्[३२] । अस्माकम्[३३] । धारय[३४] । सर्वाभिः । स्तुतिभिः[३५] । पूर्ति[३६] पूरणम् । अभिप्राप्नुयाम्[३७] ।

---

१. सर्वम् Sy.
२. मर्तः Sy.
३. हे द्योतमानाग्ने ! Sy.
४. ०प्त P., D.
५. धन्यमात्मी च P. ०मात्मी D.
६. प्रतिधारयति Sy.
७. वसुभिश्च Sy.
८. स P. ९. सङ्गच्छते Sy.
१०. VM. ignores मर्तः । वा and अग्ने ॥ मनुष्यो यजमानः । वाशब्दश्चार्थे । हे अग्ने ! Sy.
११. शत्रुजनेभ्यः । यद्वा नृभ्यः स्तुतीनां नेतृभ्य आहृत्य Sy.
१२. सुश्रवांसि शोभनान्यन्नानि Sy.
१३. शोभनैः पुत्रैरुपेतानि Sy.
१४. हे सहसः सूनो ! पुत्राग्ने ! Sy.
१५. पोषार्थम् Sy.
१६. करोषि । तदन्नमाहृत्य प्रयच्छेत्यर्थः Sy.
१७. बाले P. वाले D.
बलेन युक्तस्त्वम् Sy.
१८. बहुलम् Sy.
१९. पशोः सम्बन्धि दध्यादिलक्षणं यत् Sy.
२०. ०न्तृ P., D. दध्यादिलक्षणं यद् अन्नम् Sy.
२१. अदात्रे Sy.
२२. शत्रवे Sy.
२३. उपक्षपयित्रे Sy.
२४. जनाय is suggested for जयाय ।
२५. अस्मासु धेहि । आभिमुख्येन प्रयच्छ । अस्मभ्यमाधेहि Sy.
आनिहितानि is suggested for अन्धहितानि ।
२६. पध्र P. वध्र D.
२७. स्तनो P.
२८. दिता P.
वदिता हितोपदेष्टा भव Sy.
२९. महन्नामैतत् Ngh. 3.3.
३०. अस्मोदकम् P.
३१. अपि च पुत्रम् Sy.
३२. अन्नयुक्तम् Sy.
३३. अस्मभ्यम् Sy.
३४. देहि Sy.
३५. गीर्भिः त्वद्विषयाभिः Sy.
३६. कामानां पूर्तिम् Sy.
३७. अहं स्तोता अभिप्राप्नुयाम् । अन्यद्गतम् Sy.

VI.14.

अ॒ग्ना यो मर्त्यो॒ दुवो॒ धियं॑ जु॒जोष॑ धी॒तिभिः॑ ।
भस॒न्नु ष प्र पू॒र्व्य इषं॑ वु॒री॒ताव॑से ॥ १ ॥

अग्ना यः[1] । अग्नौ[2] । यः । मनुष्यः[3] । परिचर्याम्[4] । कर्म च[5] । सेवते[6] । प्रज्ञाभिः[7] । प्रदीप्यते[8] । क्षीप्रम्[9] ।
सः[10] । मुख्यः[11] । अन्नं च । वृणीते[12] । रक्षणाय पुत्रादीनाम्[13] ।[14]

अ॒ग्निरिद्धि प्रचे॑ता अ॒ग्निर्वे॒धस्त॑म॒ ऋषिः॑ ।
अ॒ग्निं होता॑रमीळते य॒ज्ञेषु॒ मनु॑षो॒ विशः॑ ॥ २ ॥

अग्निरित् । मनुषः[15] । विश[16] ऋत्विजः । स्पष्टं शिष्टम्[17] ।

---

१. 'अग्ना यः' इति षड्चं चतुर्दशं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । षष्ठी शक्वरी, शिष्टाः पञ्चानुष्टुभः । तथा चानुक्रान्तम् 'अग्ना य आनुष्टुभं शक्वर्यन्तम्' (KSA. 29.14.p.22.) इति । प्रातरनुवाक आग्नेये क्रतावाश्विनशस्त्रे चेदं सक्तम् । सूत्रितञ्च—'अग्ना यो होताजनिष्ट' (ĀSS. 4.13.) इति । अत्रेश्चतुर्वीराख्ये चतूरात्रेऽह्नीने तृतीयेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्रितञ्च—'अग्ना यो मर्त्यो दुव इति तृतीये' (ĀSS. 10. 2.) Sy.

२. अग्नौ अग्निविषयम् Sy.

३. ०ष्य D.

४. परिचरणम् Sy.

५. कर्म च यज्ञादिलक्षणम् Sy.

६. सेवते । आचरति Sy.

७. स्तुतिभिः सार्धम् Sy.

८. प्रकाशते प्रकृष्टप्रकाशवान् भवेत् Sy.

९. क्षिप्रम् Sy.

१०. मर्त्यः Sy.

११. पूर्वेषां मुख्यः सन् Sy.

१२. वृणीत । सम्भजेत । शत्रुसकाशाल्लभेतेत्यर्थः Sy.

१३. पुत्रादीनां रक्षणार्थम् Sy.

१४. VM. ignores प्र ।

१५. मनुष्यस्य यजमानस्य Sy.

१६. प्रजा ऋत्विग्लक्षणाः Sy.

१७. By शिष्टम् VM. means अग्निः । इत् । हि । प्रचेताः । अग्निः । वेधस्तमः । ऋषिः । अग्निम् । होतारम् । ईळते and यज्ञेषु ॥ अग्निरेव प्रचेताः प्रकृष्टज्ञानवान् नान्यः कश्चित् । हि यस्मादेवं तस्माद्वेधस्तमो विधातृतमोऽतिशयेन हविर्वहनादीनां कर्ता ऋषिः सर्वस्य द्रष्टा च भवति ।....होतारं देवानामाह्वातारं तादृशमग्निं यज्ञेषु यागेष्वीळते स्तुवन्ति Sy.

नाना ह्य१ग्नेऽवसे स्पर्धन्ते रायो अर्यः ।
तूर्वन्तो दस्युमायवो व्रतैः सीक्षन्तो अव्रतम् ॥ ३ ॥

नाना हि । नाना[1] । हि[2] । अग्ने ! रक्षणाय[3] । स्पर्धन्ते[4] । त्वया दत्ता रायः[5] । अभिगन्तारः[6] । स्तोतृषु तथा त्वया हिंसन्तः । शत्रुम्[7] । मनुष्याः[8] । कर्मभिः[9] । सहमाना भवन्ति[10] । अयजमानम्[11] ।

अग्निरप्सामृतीषहं वीरं ददाति सत्पतिम् ।
यस्य त्रसन्ति शवसः संचक्षि शत्रवो भिया ॥ ४ ॥

अग्निः । अग्निः[12] । कर्मणः सम्भक्तारम्[13] । हिंसायाः सोढारम्[14] । पुत्रम् । ददाति[15] । सतां पतिम्[16] । यस्य पुत्रस्य[17] । बलात्[18] । त्रस्यन्ति[19] । सन्दर्शने[20] । शत्रवः[21] । भयेन[22] ।

अग्निर्हि विद्मना निदो देवो मर्तमुरुष्यति ।
सहावा यस्यावृतो रयिर्वाजेष्ववृतः ॥ ५ ॥

अग्निः । अग्निः । हि[23] । प्रज्ञानेन[24] । निन्दितुः[25] । स्तोतारं मनुष्यम्[26] । देवः[27] । रक्षति । शत्रूणां सोढा[28] । यस्य[29] । रयिः[30] । सङ्ग्रामेषु[31] । अनावृतो[32] भवति धृष्णुभ्यो दीयते ।

---

१. नना D.
२. शत्रुसकाशात्पृथग्भूताः Sy.
३. त्वत्स्तोतॄणां रक्षणार्थम् Sy.
४. अहमेव पालयान्यहमेव पालयानीति स्पर्धां कुर्वन्ति Sy.
५. धनानि Sy.
६. अरेः शत्रोः Sy.
७. उपक्षपयितारं शत्रुम् Sy.
८. ष्या दु P., D. ते च स्तोतारः Sy.
९. त्वद्दैवत्यैर्यागैः Sy.
१०. सोढुमभिभवितुमिच्छन्तो भवन्ति Sy.
११. व्रतविरोधिनं च पुरुषम् Sy.
१२. अयमग्निः Sy.
१३. आप्तव्यानां कर्मणां सनितारं सम्भक्तारम् Sy.
१४. ऋतीनामरातीनां सोढारमभिभवितारम् Sy.
१५. स्तोतृभ्यः प्रयच्छति Sy.
१६. सतां कर्मणां पालयितारम् Sy.
१७. वीरस्य Sy.
१८. बला P.
१९. त्रसन्ति D. उद्विजन्ते तं वीरमित्यन्वयः Sy.
२०. सन्दर्शने सति Sy.
२१. शत्रवो भवो P., D.
२२. भीत्या Sy.
२३. हीति पूरकः Sy.
२४. व्रज्ञानेन P.
ज्ञानेन युक्तः सन् Sy.
२५. तः P., D. निन्दकात् Sy.
२६. तं मनुष्यं यजमानम् Sy.
२७. दानादिगुणयुक्तः Sy.
२८. सहो बलम्, तद्वान् Sy.
२९. मर्तस्य Sy.
३०. ०यि P., D. हविर्लक्षणं धनम् Sy.
३१. यज्ञेष्ववृतोऽन्यैर्यजमानैरसम्भक्तं तं हविष्मन्तं यजमानमुरुष्यतीत्यन्वयः Sy.
३२. ०मेर्धना० P. रक्षःप्रभृतिभिरनाच्छादितम् Sy.

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥६॥

[ अच्छा नः ][1]

VI.15.

इममू षु वो अतिथिमुषर्बुधं विश्वासां विशां पतिमृञ्जसे गिरा ।
वेतीद्दिवो जनुषा कच्चिदा शुचिर्ज्योक्चिदत्ति गर्भो यदच्युतम् ॥ १ ॥

इमम्[2] ॥ वीतहव्यस्य[3] भरद्वाजस्य[4] वेदं सूक्तम्[5] ॥ इमम्[6] । एव । युष्माकम्[7] । अतिथिम्[8] । उषसि बुध्यमानम्[9] । विश्वासाम्[10] । विशाम्[11] । पतिम्[12] । ऋषे ! स्तुत्या । अलङ्कुर्वित्यात्मन एवानुशासनम्[13] । सोऽयं शुचिरग्निः[14] । अरण्योर्जन्मना[15] । यदि । आगच्छति[16] । यदि दिव[17] आगत्यारण्योः प्रादुर्भवति । चिरं[18] गृहे स्थित्वा ।

---

१. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV.VI.2.11. Sy. explains it again in the following manner:— व्याख्यातेयम् । अक्षरार्थस्तु—अनुकूलदीप्ते ! दानादिगुणयुक्ताग्ने ! द्यावापृथिव्योरभिगतस्त्वमस्मदीयां सुष्टुतिं यष्टव्यान् देवान् प्रति वोचः प्रब्रूहि । स्तुतेर्नॄनस्मांश्च सुनिवासमविनाशं गमय । वयं च त्वत्प्रसादाद् द्वेष्टॄन् पापानि तत्फलानि दुर्गमनानि चातिक्रामेम । व्यवहितानि जन्मान्तरकृतानि च तान्यतिक्रामेम । त्वदीयेन रक्षणेनात्यन्तमतिक्रामेमेति ।

२. 'इममू षु वः' इत्येकोनविंशत्यृचं पञ्चदशं सूक्तमाङ्गिरसस्य वीतहव्यस्य भरद्वाजस्य वार्षमाग्नेयम् । आदौ नव जगत्यस्तृतीयाषष्ठ्यौ तु शक्वर्यतिशक्वर्यौ पञ्चदशी शक्वरी सप्तदश्यनुष्टुबष्टादशी बृहती दशमाद्याः पञ्च षोडश्येकोनविंशी चेति सप्त त्रिष्टुभः । तथा चानुक्रान्तम् 'इममू ष्वेकोना वीतहव्य ऋषिर्वा जागतं प्राग्दशम्यास्तृतीयापञ्चदश्यौ शक्वर्यौ षष्ठ्यतिशक्वर्यनुष्टुब्बृहत्या उपान्त्ये' (KSA. 29.15.p.22.) इति । प्रातरनुवाक आग्नेये क्रतावाश्विनशस्त्रे चादितो नवर्चः । सूत्रितञ्च—'इममू षु वो अतिथिमुषर्बुधमिति नव' (ĀŚS.4.13.) इति । दशरात्रे पञ्चमेऽहनि नवर्चमाज्यशस्त्रम् । सूत्रितञ्च—'इममू षू वो अतिथिमुषर्बुधमिति नवाज्यम्' (ĀŚS. 7.12.) इति ।

३. इदम् P.

४. Omitted by P., D.

५. हे वीतहव्य ! ऋषे ! भरद्वाज ! वा Sy.

६. अग्निम् Sy.

७. वा त्वम् । विभक्तिवचनयोर्व्यत्ययः Sy.

८. सततं गन्तारम् । यद्वा अतिथिवत् पूज्यम् Sy.

९. उषसि प्रबुद्धम् Sy.

१०. सर्वासाम् Sy.

११. प्रजानाम् Sy.

१२. पालयितारम् Sy.

१३. ०र्वत्या० D. प्रसाधय Sy. ऋञ्जतिः प्रसाधनकर्मा । N.6.21.

१४. शुद्धो निर्मलो वाग्निः Sy.

१५. जन्मना स्वत एव Sy.

१६. आगच्छति । तदानीं प्रसाधयेत्यन्वयः Sy.

१७. द्युलोकात् Sy.

१८. चिरकालम् Sy.

पुत्रभूतः[1]। अच्युतमग्निहोत्रं सायं प्रातश्च हवनाद् यदच्युतं[2] भवति तत्। भक्षयति[3]।

**मित्रं न यं सुधितं भृगवो दधुर्वनस्पतावीड्यमूर्ध्वशोचिषम्।**
**स त्वं सुप्रीतो वीतहव्ये अद्भुत प्रशस्तिभिर्महयसे दिवेदिवे ॥ २ ॥**

**मित्रं न यम्।** सुहृदम्[4]। इव। यम्[5]। सुनिहितम्[6]। भृगवः[7]। निदधुः[8]। वानस्पत्येषु[9] सम्भारेषु। स्तुत्यम्। ऊर्ध्वतेजसम्[10]। सः[11]। त्वम्। सुप्रीतः[12]। वीतहव्य[13] ऋषौ। आश्चर्यभूत[14]! स्तुतिभिः[15]। पूज्यसे। अन्वहम्[16]।

**स त्वं दक्षस्यावृको वृधो भूरर्यः परस्यान्तरस्य तरुषः।**
**रायः सूनो सहसो मर्त्येष्वा छर्दिर्यच्छ वीतहव्याय सप्रथो भरद्वाजाय सप्रथः ॥ ३ ॥**

**स त्वं दक्षस्य।**[17] सः[18]। त्वम्। स्तुत्या प्रवृद्धस्य[19] मम। स्तेनरहितः[20]। वर्धयिता। अभवः[21]। अरेः[22]। परस्य[23]। हिंसकस्य[24]। तरिता च भव[21]। धनानि च। हे[25] सहसः, सूनो! मदीयेषु[26] मर्त्येषु। आधेहि। गृहम्। प्रयच्छ[27]। सर्वतः पृथुतमम्[28]। दत्तहविष्काय[29]। भरद्वाजाय, भरद्वाजकुलजाताय[30] वा वीतहव्याय।

---

१. ०भूताच्यु P., D. च्युतिरहितं नित्यमग्निहोत्रादिसाधनभूतं पयःप्रभृतिकम् Sy.
२. युत् P. हविः Sy.
३. VM. ignores सु। कत् and चित् ॥ सु सुष्ठु। कत् चित् कदाचित् कस्मिंश्चिद् यागकाले Sy.
४. सखिभूतम् Sy.
५. अग्नि त्वाम् Sy.
६. सुष्ठु निहितम् Sy.
७. महर्षयः Sy.
८. आदधुः गृहे स्थापितवन्तः Sy.
९. अरण्याम् Sy.
१०. ०र्ध्वं ते० D. उच्छ्रिततेजस्कम् Sy.
११. तादृशः Sy.
१२. सुष्ठु प्रीयमाणो भव Sy.
१३. वीतहव्य एतत्संज्ञे ऋषौ भरद्वाज ऋषिश्चेत् वीतहव्ये दत्तहविष्के भरद्वाज इति योजनीयम् Sy.
१४. हे महन्नग्ने! Sy.
१५. प्रकृष्टैः स्तोत्रैः Sy.
१६. ०न्वतं D. यतः प्रतिदिनम् Sy.
१७. हे अग्ने! Sy.
१८. तादृशः Sy.
१९. प्रवर्द्धस्व D. अनुष्ठानसमर्थस्य Sy.
२०. बाधकरहितस्त्वम् Sy.
२१. भवसि Sy.
२२. वर्धयति भावारेः P., D. शत्रोः Sy.
२३. विप्रकृष्टस्य Sy.
२४. अन्तिकतरस्य सन्निकृष्टस्य शत्रोः Sy.
२५. अतः कारणात् हे सहसः सूनो! Sy.
२६. मनुष्येषु मध्ये Sy.
२७. ०च्छत P.
२८. सर्वतः पृथुस्त्वम् Sy.
२९. वीतं गमितं हव्यं हविर्येन तादृशाय भरद्वाजायेति वा योज्यम् Sy.
३०. भरद्वाया P. सम्भृतहविर्लक्षणायान्नाय Sy.

द्युतानं वो अतिथिं स्वर्णरमग्निं होतारं मनुषः स्वध्वरम् ।
विप्रं न द्युक्षवचसं सुवृक्तिभिर्हव्यवाहमरतिं देवमृञ्जसे ॥ ४ ॥

द्युतानम् । स्तोतः[1] ! दीप्यमानम्[2] । युष्माकम् । अतिथिम्[3] । सर्वमनुष्यम्[4] । दीप्तम् । ह्वातारम्[5] । मनुष्यस्य[6] । शोभनयज्ञम्[7] । मेधाविनम्[8] । इव । दीप्तवचसम्[9] । स्तुतिभिः[10] । हव्यवाहम्[11] । अलङ्कुरु[12][13] ।

पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच उषसो न भानुना ।
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥ ५ ॥

पावकया । शोधयित्र्या[14] । यः[15] । प्रज्ञापयन्त्या[16] । ज्वालया[17] । शुष्केऽरण्ये[18] । रोचते[19] । यथा[20] । उषसः[21] । भानुना रोचते[22] परिचरन्निव[23] । गमने[24] । यथा[25] । हिंसको हिंस्यं प्रति शीघ्रं गच्छति तथा गच्छन्[26] । एतशस्य ऋषेः[27] ।

---

१. हे वीतहव्य ! त्वम् Sy.
२. स्तोत व्यमानम् P., D.
३. अतिथिवत्पूज्यम् Sy.
४. स्वर्गस्य नेतारम् Sy.
५. देवानामाह्वातारम् Sy.
६. मनोः प्रजापतेर्यज्ञे Sy.
७. ०ज्ञ P.
८. मेधाविनं विपश्चितम् Sy.
९. दीप्तेर्निवासभूतं द्युक्षम् । तादृशवाक्योपेतम् Sy.
१०. शोभनाभिः स्तुतिभिः Sy.
११. हविषां वोढारम् Sy.
१२. प्रसाधय Sy.
१३. VM. ignores अरतिम् and देवम् ॥ अरतिमर्यं स्वामिनम् Sy.
१४. किम्भूतया कृपा ? पावकया, पावयतीति पावका तया पावयित्र्या Mah. पावयित्र्या U.
१५. अग्निः Sy.
१६. चेतयन्त्या प्रज्ञापयन्त्या Sy. चेतयन्त्या । यद्वा चित्तं करोति चितयन्ती तया दृढचयकारिण्या Mah.॰ परिदृढकारिण्या U.
१७. दीप्त्या Sy. 'कृपू सामर्थ्ये' कल्पनं कृप्, क्विप् । तया कल्पनया सामर्थ्येन दीप्त्या वा Mah. कृपा समर्थया । 'कृपू सामर्थ्ये' अस्य क्विपि तृतीया U.
१८. भूम्याम् Sy. क्षाम्णि पृथिव्याम् Mah. क्षामेति पृथिवीनाम U. (cf. N.2.6.)
१९. दीप्यते Sy.,U. शोभते Mah.
२०. रोचने दृष्टान्तः । न इवार्थे Mah. इव U.
२१. ०चते थोष P. ०चंते रथोष० D. उषसः कालाः Mah.
२२. प्रकाशेन भासन्ते तद्वत् Sy. स्वप्रकाशेन रोचन्ते तद्वत् Mah. ज्योतिषा U.
२३. रोचसं परिचरतिन्निव P. रोचसं परिचरन्निव D.
२४. अपि च यामनि सङ्ग्रामे Sy. यामनि नियामको...यद्वा यामञ्शब्दः कर्मवाचकः।... यामनि कर्मणि तुर्वन्न त्वरमाण इव Mah. आधानकर्मणि । यामशब्दः कर्मवचनः U.
२५. न इवार्थे Mah. इव U.
२६. शत्रून् हिंसन् पुरुष इव Sy. 'तूर्व हिंसायाम्' परबलानि हिंसन् ।....शत्रून्हिंसन्निव रोचते Mah. त्वरमाणः U.
२७. एतत्संज्ञकस्य Sy. एतीत्येतशो गमनकुशलस्याश्वस्य Mah. एतशस्याज्यस्य U.

सूर्येण[1] सह युद्धे[2] । यः[3] । क्षिप्रम् । आजगाम[4] । निरुदके[5] इव देशे । तृष्यन्[6], अध्वगो यथा ततः शीघ्रमागच्छति तद्वत् । जरावर्जित[7] उत्तरत्र[8] सम्बन्धः ।

**अग्निमग्निं वः समिधा दुवस्यत प्रियंप्रियं वो अतिथिं गृणीषणि ।**
**उप वो गीर्भिरमृतं विवासत देवो देवेषु वनते हि वार्यं देवो देवेषु वनते हि नो दुवः ॥६॥**

अग्निमग्निम्[9] । तमग्निमेव[10] । यूयम् । समिधा[11] । परिचरत । प्रियम्[12] । अतिथिम्[13] । स्तुत्या जने गृणी[14] स्तुतीस्तस्यामतिथिरयमागच्छति[15] । यूयम् । उपपरिचरत[16] । स्तुतिभिः । अमृतम्[17] । देवः[18] । देवेषु[19] । वनते[20] । हि[21] । धनम्[22] । अस्माकम्[23] ।[24]

---

१. सङ्ग्रामे सहायार्थम् Sy. रणे रमणीये पद आहितोऽध्वर्युणा Mah. रमणीये पदे U.

२. यं P. अग्निः Sy. य ईदृशोऽग्निस्तं कृषाम इत्यर्थः Mah. अध्वर्युणाऽऽहितश्च यः U.

३. नु निश्चितं रुरुच इत्यनुषङ्गः ।....यद्वा नु अनर्थकम् Mah. नू अनर्थकः U.

४. आदीप्यते । 'प्रैतशं सूर्ये पस्पृधानम्' (RV. 1.61.15.) इति निगमान्तरम् । नूनं सर्वे देवास्तस्य साहाय्यमकार्षुः Sy. आसमन्तात् Mah. आधीयते U.

५. यश्चाग्निर्घृणिः । घृणिरिति दीप्तिनाम ।.... घृणिना दीप्त्या....नकारश्चार्थः Mah. घृणिरिति दीप्तिनाम । न इत्यनर्थकः U.

६. तृषितः प्रभावेन सर्वभक्षणशीलः Sy. तृष्यतीति ततृषाणः । 'ञितृषा पिपासायाम्'....पूर्णाहुतिं पिपासुः Mah. तृष्यन् पिपासुः U.

७. जरारहितश्च भवति तं देवमृञ्जस इति पूर्वस्यामृचि सम्बन्धः Sy. जरारहितः Mah. पीत्वा चाजरः सम्पद्यते U.

८. P. adds इव before उत्तरत्र ॥ This stanza=YV.17.10. RV.VI.15.5.=SB.9.1.2.30.p.708. See RV. V. 26.1.=SB.9.1.2.30. p.708.

९. हे अस्मदीयाः स्तोतारः ! Sy.

१०. अग्निमेव । नान्यं देवमित्यर्थः Sy.

११. समिन्धनेन समिद्भिर्वा Sy.

१२. अत्यन्तं प्रियम् Sy.

१३. अतिथिवत्पूज्यम् Sy.

१४. शब्दनीयं स्तुत्यम्, यद्वा गृणीषणीति सप्तम्यन्तम् । गृणीषणि स्तोत्रे विषयतया वर्तमानम् Sy. १५. ०स्यमतिथरयमानगच्छति P.

१६. उपेत्य परिचरत Sy.

१७. अमरणमग्निम् Sy.

१८. दानादिगुणयुक्तोऽग्निः Sy.

१९. देवेषु मध्ये Sy.

२०. सम्भजते Sy.

२१. यस्माच्च देवेषु मध्ये देवोऽग्निर्नोऽस्माकं दुवः परिचरणं वनते सम्भजते तस्माद्दुवस्यतेत्यन्वयः Sy. २२. वरणीयं समिदादिकम् Sy.

२३. देवो देवहिते नः अस्माकम् P. देवो देवेहि भतेनमस्माकम् D.

२४. VM. ignores वः । देवः । देवेषु । वनते । हि and दुवः ।

समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम् ।
विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम् ॥ ७ ॥

समिद्धम्[1] । समिद्धम्[2] । अग्निम्[3] । समिद्धया[4] । स्तुत्या । स्तौमि । शुचिम्[5] । पावकम्[6] । पुरः[7] । यज्ञे[8] । निश्चलमाहवनीयम् । विप्रम्[9] । होतारम्[10] । बहूनां वरणीयम्[11] । अद्रोग्धारम्[12] । कविम्[13] । सुम्नैः[14] स्तोत्रैरभिलषितम् । याचामहे[15] । जातप्रज्ञम्[16] ।

त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम् ।
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥ ८ ॥

त्वां दूतम् । त्वाम् । दूतम् । अग्ने ! अमृतम्[17] । अहन्यहनि[18] । हव्यवाहम्[19] । धारयन्ति[20] । पालकम्[21] । स्तुत्यम् । देवाः । च । मनुष्याः[22] । च । जागरणशीलम्[23] । विभुम्[24] । विश्पतिम्[25] । अन्नेन[26] । निषीदन्ति[27] ।

विभूषन्नग्न उभयाँ अनु व्रता दूतो देवानां रजसी समीयसे ।
यत्ते धीतिं सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव ॥ ९ ॥

विभूषन्[28] । व्रतेषु[29] । देवमनुष्यान्[30] । विविधं भावयितुमिच्छन्[31] । देवानाम् । दूतस्त्वम्[32] । द्यावा-

---

१. दशमेऽहन्याग्निमारुते 'समिद्धम्' इति तृचो जातवेदस्यनिविद्धानार्थः। सूत्रितञ्च—'समिद्धमग्निं समिधा गिरा गृण इति तृचश्च' (ĀŚS.8.12.) इति Sy.
२. समिधं P.
३. सम्यग्दीप्तं सम्यगिद्धम् Sy.
४. समिन्धनहेतुभूतया, यद्वा समिधा समिद्भिर्दारुभिः Sy. ५. स्वयं शुद्धम् Sy.
६. सर्वेषां शोधकम् Sy.
७. पुरस्करोमीति शेषः Sy.
८. यज्ञ P. ९. मेधाविनम् Sy.
१०. देवानामाह्वातारम् Sy.
११. बहुभिर्वरणीयम् Sy.
१२. द्रो० P., D. सर्वेषामनुकूलम् Sy.
१३. क्रान्तदर्शिनम् Sy.
१४. सुखकरैः । यद्वा द्वितीयार्थे तृतीया । सुम्नानि धनानि Sy. १५. सम्भजामहे Sy.
१६. जातानां वेदितारमग्निम् Sy.
१७. ०ग्ने वीतम् P., D. अमरणम् Sy.
१८. कालेकाले । तत्तद्यागानुष्ठानसमये Sy.
१९. हव्यानां हविषां वोढारम् Sy.
२०. विदधिरे । कृतवन्तः Sy.
२१. पालयितारम् Sy.
२२. अपि च त उभयविधाः Sy.
२३. ०रशी० P., D.
२४. व्याप्तम् Sy.
२५. विशां प्रजानां पालयितारं तमग्निम् Sy.
२६. अग्नेन P., D. नमस्कारेण हविर्लक्षणेनान्नेन वा Sy.
२७. निषदन्ति P. उपसेदिरे Sy.
२८. ०षं P., D.
२९. वृतेतेषु P. वृतेषु D. व्रतान्यनु कर्मसु यागेषु Sy.
३०. उभयविधान् देवान् मनुष्यांश्च Sy.
३१. विशेषेण भूषयन्नलङ्कुर्वन् Sy.
३२. दूतस्य P. दूतः सन् Sy.

पृथिव्यौ । सञ्चच्छसे[1] दिवः[2] पृथिव्यामागच्छति[3] पृथिव्या दिवम् । यदा[4] । ते[5] । कर्म । सुस्तुतिं[6] च । आभिमुख्येन वृणीमहे[7] । अथ[8] । खलु[9] । अस्माकम् । त्र्यायतनस्त्वम्[10] । शिवः[11] । भव[12] ।[13]

**तं सुप्रतीकं सुदृशं स्वञ्चमविद्वांसो विदुष्टरं सपेम ।**
**स यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ॥ १० ॥**

तं[14] सुप्रतीकम् । तम्[15] । शोभनावयवम्[16] । सुदर्शनम्[17] । सुगमनम्[18] । अविद्वांसः[19] । अतिशयेन विद्वांसम्[20] । स्तुत्या स्पृशेम[21] । सः[22] । यजतु[23] । विश्वानि[24] । भूतानि[25] । विद्वान्[26] । प्रब्रवीतु[27] च । अग्निः । हव्यम्[28] । देवेषु[29] ।

**तमग्ने पास्युत तं पिपर्षि यस्त आनट्कवये शूर धीतिम् ।**
**यज्ञस्य वा निशितिं वोदितिं वा तमित्पृणक्षि शवसोत राया ॥ ११ ॥**

तमग्ने । तम्[30] । अग्ने ! रक्षसि । अपि च । तम्[31] । पारयसि[32] । यः[33] । तुभ्यम्[34] । प्रापयति[35] । हे शूर[36] !

---

१. सञ्चरसि । देवानानेतुं द्युलोकं गच्छसि, हवींषि च नेतुमिमं लोकम् Sy.
२. मवः P. मिवः D.
३. ०थिव्या ग० P. ४. यस्मात् Sy.
५. तुभ्यं त्वदर्थम् Sy.
६. शोभनां स्तुतिम् Sy.
७. वयं सम्भजामहे Sy.
८. अतः कारणात् Sy.
९. स्मेत्येतत्पादपूरणम् Sy.
१०. त्रिस्थानस्त्वम् Sy.
११. सुखकरः Sy. १२. भावः P., D.
१३. VM. ignores अग्ने ।
१४. प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसि 'तं सुप्रतीकम्' इत्याद्याः षडृचः । सूत्रितञ्च—'तं सुप्रतीकमिति षट्' (ĀSS. 4.13.) इति Sy.
१५. अग्निम् Sy., BB.
१६. शोभनाङ्गम् Sy. शोभनोपक्रमं वा BB.
१७. शोभनद्रष्टारम् Sy. सुष्ठु द्रष्टारमभिमतानाम् ....शोभनदृष्टिं वा BB.
१८. ०मन P., D. सुष्ठ्वञ्चन्तं गच्छन्तम् Sy. शोभनगतिम् BB.
१९. वि० D. वैदुष्यरहिता अल्पमतयो वयम् Sy.
२०. विद्वांस ति० P. विद्वत्तरं सर्वज्ञम् Sy. विद्वत्तमम् BB.
२१. परिचरेम Sy. भजेम वा । षप समवाये BB.
२२. ०स्पृश सम P. तादृशोऽग्निः Sy. स चाग्निः BB. २३. देवान् यजतु Sy. सर्वार्थसाधनो वा यज्ञः BB. २४. सर्वाणि Sy.
२५. भूताभूतानि D. वयुनानि । ज्ञाननामैतत् । इह तु ज्ञातव्ये वर्तते । ज्ञातव्यान्यर्थजातानि Sy. ज्ञानानि BB. वयुनमिति प्रज्ञानाम Ngh. 3.9. २६. जानन्नग्निः Sy.
२७. युष्मदर्थं हविः कल्पितं तदर्थं यूयमागच्छतेत्येवं कथयतु Sy. देवसदसि ख्यापयतु वा BB.
२८. अस्मदीयं हविः Sy. मदीयं च हव्यम् BB.
२९. देवे P., D. मरणरहितेषु Sy. This stanza=TS.2.5.12.5.
३०. पुरुषम् Sy.
३१. भूतः P. अपि भू च तः D.
३२. कामैः पूरयसि Sy. ३३. पुरुषः Sy.
३४. ०भ्यां D. तुभ्यं त्वदर्थम् Sy.
३५. प्राप्नोति । यद्वा 'क्रियाग्रहणं कर्तव्यम्', इति कर्मणः सम्प्रदानत्वाच्चतुर्थी । कविं त्वां धीतिमानट् प्रापयति, तं पासीत्यन्वयः Sy.
३६. हे शौर्यवन्नग्ने ! Sy.

कर्म[1]। यज्ञस्य[2]। वा[3]। संस्कृतं[4] हविः। स्तुतिम्[5]। वा[6]। तम्। एव। पूरय[7]। बलेन। अपि च। धनेन[8,9]।

त्वम॑ग्ने वनुष्य॒तो नि पा॑हि॒ त्वमु॑ नः सह॒सावन्नव॒द्यात् ।
सं त्वा॑ ध्व॒स्मन्व॒द॒भ्ये॑तु॒ पाथः॒ सं र॒यिः स्पृ॑ह॒याय्यः॑ सह॒स्री ॥ १२ ॥

**त्वमग्ने**। त्वम्। अग्ने! घ्नतोऽस्मात्[10]। निपाहि[11]। त्वम्। एव। अस्मान्। बलवन्![12] गर्ह्यात्[13]। समभ्येतु[14]। त्वाम्। ध्वंसनक्रियानुक्तम्[15]। अन्नम्[16]। धनं च[17]। स्पृहणीयम्[18]। सहस्रसङ्ख्याकम्[19] मदीये गृहे वर्तमानं[20] त्वामन्नमभ्येतु धनं चेति।[21]

अ॒ग्निर्होता॑ गृ॒हप॑तिः॒ स राजा॒ विश्वा॑ वेद॒ जनि॑मा जा॒तवे॑दाः ।
दे॒वाना॑मु॒त यो मर्त्या॑नां॒ यजि॑ष्ठः॒ स प्र य॑जतामृ॒तावा॑ ॥ १३ ॥

**अग्निर्होता**[22]। अग्निः[23]। होता[24]। गृहपतिः[25]। सः[26]। राजा[27]। विश्वानि[28]। जातानि भूतानि[29]। जातप्रज्ञः[30]। देवानाम्[31]। अपि च। यः। मर्त्यानां यः[32]। यष्टृतरः[33]। सः। प्रकर्षेण यागं करोतु[34]। सत्यवान्[35,36]।

---

१. स्तुतिं वा Sy.
२. यज्ञस्य यागस्य वा तत्साधनभूतस्य हविषो वा Sy.
३. आनट् प्रापयति Sy.
४. निशितिः संस्कारः । तम् Sy.
५. उद्गमनम् Sy.
६. आनट् प्रापयति Sy.
७. पूरयसि Sy.
८. धनेन पूरयसि Sy.
९. VM. ignores कवये and वा ॥ कवये क्रान्तदर्शनाय Sy.
१०. हिंसकाच्छत्रोः Sy.
११. नितरामस्मान् रक्ष Sy.
१२. हे बलवन् ! अग्ने ! Sy.
१३. गर्ह्यां P., D. पापात् निपाहि Sy.
१४. सम्यगभिगच्छतु Sy.
१५. ध्वंसनवत् ध्वस्तदोषम् Sy.
१६. हविर्लक्षणमस्माभिर्दत्तमन्नम् Sy.
१७. त्वया दत्तं धनम् Sy.
१८. स्पृहणीयः सम्यगभिगच्छतु Sy.
१९. ०क P. सहस्रसङ्ख्यायुक्तः Sy.
२०. ०न P., D.
२१. VM. explains सम् once.
२२. व्यूळ्हे दशरात्रे पञ्चमेऽहन्याग्निमारुते 'अग्निर्होता' इति तृचो जातवेदसनिविद्धानीयः । सूत्रितञ्च 'अग्निर्होता गृहपतिः स राजेति तिस्रः' (ĀSS. 8.8.) इति । पत्नीसंयाजेषु गृहपतिराद्यानुवाक्या । सूत्रितञ्च 'अग्निर्होता गृहपतिः सः राजा हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजाः' (ĀSS. 1.10.) इति । आश्विनशस्त्रस्यैषैव प्रतिपत् । सूत्रितञ्च—'अग्निर्होता गृहपतिः स राजेति प्रतिपदेकपातिनी पच्छः' (ĀSS. 6.5.) Sy.
२३. Omitted by P.
२४. देवानामाह्वाता Sy.
२५. धनप० P. गृहाणां पतिरधिपतिर्भवति Sy.
२६. अग्निः Sy.
२७. राजमानः Sy.
२८. सर्वाणि Sy.
२९. जन्मानि जन्मवन्ति भूतजातानि Sy.
३०. जातप्रज्ञः सन् Sy.
३१. इन्द्रादीनाम् Sy.
३२. मनुष्याणां च मध्ये Sy.
३३. अतिशयेन यष्टा भवति Sy.
३४. प्रकर्षेण देवान् यजतु Sy.
३५. ऋतं सत्यं यज्ञो वा । तद्वान् Sy.
३६. VM. ignores वेद ॥ वेद वेत्ति जानाति Sy.

अग्ने यद॒द्य वि॒शो अ॑ध्वरस्य होत॒ः पाव॑कशोचे॒ वेष्ट्वं हि यज्वा॑ ।
ऋ॒ता य॑जासि महि॒ना वि यद्भूर्ह॒व्या व॑ह यविष्ठ॒ या ते॑ अ॒द्य ॥ १४ ॥

अग्ने । कर्म । यत् । अद्य । मनुष्यस्य । यजन्य । होतः ! हे शोधकदीप्ते ! जानासि कर्तव्यम् । [illegible] । [illegible] यज्वा नाम्नो मनुष्यः । काले । यजः । महत्त्वेन । यत् त्वम् । विविधं भवसि । ततो हव्यानि । [illegible] । [illegible] । [illegible] [illegible] हव्यानि ।

अभि प्रयां॑सि॒ सुधि॑ताति॒ हि ख्यो नि त्वा॑ दधीत॒ रोद॑सी॒ यज॑ध्यै ।
अवा॑ नो मघव॒न्वाज॑साता॒वग्ने॒ विश्वा॑नि दुरि॒ता त॑रेम॒ ता त॑रेम॒ तवाव॑सा तरेम ॥१५॥

अभि प्रयांसि । अभिपश्य । हि । अन्नानि । सुनिहितानि । त्वाम् । द्यावापृथिव्योः । निदधे प्रजापतिः । यज्ञार्थम् । अवेति स्पष्टः ।

---

१. 'अग्ने यदद्य' इति दर्शपूर्णमासयोः स्विष्टकृतो याज्या। सूत्रितञ्च 'अग्ने यदद्य विशो अध्वरस्य होतरित्यनवानं यजति' (ĀSS.1.6.) इति Sy.
२. Omitted by P.
३. एवम्भूत ! हे अग्ने ! Sy.
४. अयम् P. कर्तव्यं तत् Sy.
५. अस्मिन् काले Sy.
६. मनुष्यस्य यजमानस्य Sy.
७. हे निष्पादक ! Sy.
८. कामयस्व Sy.
९. P. reads कर्तः for कर्तव्यं ततः ।
१०. यस्मात्त्वम् Sy.
११. देवानां यष्टा भवसि तस्मात्त्वम् Sy.
१२. ०ष्य P.
१३. यज्ञे Sy.
१४. देवान्यज Sy.
१५. महत्वे P. ०त्त्वेन is suggested for ०त्वेन॥ महिम्ना स्वमाहात्म्येन Sy.
१६. य P., D. यस्मात् Sy.
१७. विभवसि व्याप्तो भवसि Sy.
१८. अतः कारणात् Sy.
१९. हवींषि Sy.
२०. विह P. स्वकीयां स्विष्टकृदाख्यां तनुं प्रापय Sy.
२१. तुभ्यं त्वदर्थम् Sy.
२२. अद्यस्ये P. इदानीं जुहुमस्तानि Sy.
२३. VM. ignores यविष्ठ ॥ हे यविष्ठ ! युवतमाग्ने ! Sy.
२४. हे अग्ने ! Sy.
२५. अभिपश्यसि Sy.
२६. हि पूरकः Sy.
२७. अन्नानि हविर्लक्षणानि Sy.
२८. वेद्यामासादितानि Sy.
२९. तादृशं त्वाम् Sy.
३०. द्यावापृथिव्यावेतदुपलक्षितान् सर्वान् देवान् Sy.
३१. अयं यजमानो निहितवान् Sy.
३२. यष्टुम् Sy.
३३. By अवेति स्पष्टः VM. refers to the words अवा नः । मघवन् । वाजसातौ । अग्ने । विश्वानि । दुरिता । तरेम । ता । तरेम । तव । अवसा and तरेम ॥
Sy. explains these words in the following manner:—हे मघवन्नग्ने ! नोऽस्मान्वाजसातौ सङ्ग्रामेऽन्नस्य सम्भजने वा निमित्तभूते ! अव रक्ष । वयं च विश्वानि सर्वाणि दुरिता दुरितानि दुःखानि तरेम । अतिक्रामेम । अन्यद्गतम् ।

अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिम् ।
कुलायिनं घृतवन्तं सवित्रे यज्ञं नय यजमानाय साधु ॥ १६ ॥

[1] अग्ने[2] । अग्ने ! विश्वैः[3] । देवैः[4] । हे शोभनज्वालानीक ! ऊर्णास्तुकावन्तम्[5] । मुख्यः[6] । सीद[7] । स्थानमुत्तरवेदिम्[8] [कैः सम्भक्तारो वौतु दवादि ?[9]] कुलायिनम्[10] । घृतवन्तम्[11] । प्रेरयित्रे[12] । यजमानाय[13] । यज्ञम्[14] । नय[15] । कल्याणम्[16] ।

इममु त्यमथर्ववदग्निं मन्थन्ति वेधसः ।
यमङ्कूयन्तमानयन्नमूरं श्याव्याभ्यः ॥ १७ ॥

इमम् त्यम् । तम्[19] । इमम्[20] । यथाऽथर्वा[21] । निर्मन्थति[22] । ऋत्विजः[23] । यम्[24] । अङ्गेननामञ्जनमिच्छन्तम्[25] । आनयन्[26] । अमूढम्[27] । श्याववर्णाभ्य ओषधीभ्यः, देवरात्रिभ्यो वा[28] ।[29]

१. अग्निप्रणयने 'अग्ने विश्वेभिः' इत्येषानुवाक्या । सूत्रितञ्च 'अग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्च आरमेत्' (ĀSS.2.17.) इति Sy.
२. Omitted by P., D.
३. सर्वैः Sy., BB. ४. देवैः सह Sy.
५. हे सुज्वालाग्ने ! Sy. सुसेनामुखो विश्वैर्देवैः सह BB.
६. ०स्तुकालन्त P. ऊर्णास्तुकया तद्वन्तम् BB.
७. सर्वेषु देवेषु मुख्यस्त्वम् Sy. मुख्यस्त्वम् BB.
८. उपविश Sy. आस्स्व BB.
९. ०दि P., D. उत्तरवेदिलक्षणं स्थानम् Sy. योनिस्थानम् BB. १०. ०रैः D.
११. The passage within the brackets is doubtful.
१२. कुलायो नीडम् । तत्सदृशं गुग्गुल्वादिसम्भारेणोपेतम् । तथा च श्रूयते 'कुलायमिव ह्येतद्यज्ञे क्रियते तत्पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगन्धितेजनानि' (AB.1.28.) इति Sy. सम्भारैस्तद्वन्तम् BB.
१३. व्याघारणाज्ययुक्तम् Sy. व्याघारणभूतेन तद्वन्तम् BB.
१४. एवमुत्तरवेद्यां निषण्णस्त्वं हविषां प्रेरयित्रे Sy. तत्रासीनस्त्वं सवित्र आदित्याय BB.
१५. षष्ठ्यर्थे चतुर्थ्येषा । ईदृशस्य यजमानस्य Sy.
१६. इष्टं हविः BB.
१७. देवान् प्रापय Sy. प्रापय । सर्वमिष्टं कुर्वित्ति यावत् । यथोक्तम् 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' BB.
१८. आर्जवेन Sy. साधु यथा यजमानार्थं साधयेद्यागफलम् । . . . . यद्वा यजमानस्य फलावाप्तये यज्ञं साधु सवितारं नय BB.
१९. पूर्वोक्तगुणमग्निम् Sy.
२०. दृश्यमानम् Sy.
२१. अथर्वाख्य ऋषिः पुरामथ्नात् तथा मन्थन्ति Sy.
२२. निरम० P., D. मथ्नन्ति । अरण्योः सकाशाज्जनयन्ति Sy.
२३. कर्मणां विधातारः Sy.
२४. अग्निम् Sy.
२५. अङ्गन० P. कुत्सितमञ्चनं गमनमङ्कु । तदात्मन इच्छन्तं देवेभ्यो निर्गत्येतस्ततः पलायमानम् Sy.
२६. आनयान् P. अनायन् D. आगमयन् । तं मन्थन्तीत्यन्वयः Sy.
२७. ०ढ D.
२८. श्यावीति रात्रिनाम (Ngh.1.7.) तत्र भवास्तमसः संहतयः श्याव्याः । ताभ्यः सकाशात् Sy.
२९. VM. ignores उ ।

जनि॑ष्वा दे॒ववी॑तये स॒र्वता॑ता स्व॒स्तये॑ ।
आ दे॒वान्व॑क्ष्य॒मृताँ॑ ऋता॒वृधो॑ य॒ज्ञं दे॒वेषु॑ पिस्पृशः ॥ १८ ॥

जनिष्व[1] । जायस्व[2] । देवानां भक्षणार्थम्[3] । यज्ञे[4] । अविनाशं[5] च । आवह । देवान् । अमृतान्[6] । यज्ञस्य वर्धयितॄन् । अथ[7] तेषु[8] । यज्ञम्[9] । स्पर्शय[10] ।

व॒यमु॑ त्वा गृहपते जनाना॒मग्ने॒ अक॑र्म स॒मिधा॑ बृ॒हन्त॑म् ।
अ॒स्थू॒रि नो॒ गार्ह॑पत्यानि सन्तु ति॒ग्मेन॑ न॒स्तेज॑सा॒ सं शि॑शाधि ॥ १९ ॥

वयमु त्वा । वयम् । त्वा[11] । जनानाम्[12] । गृहपते[13] ! अग्ने ! समिन्धनेन[14] । महान्तम् । कर्मः[15] । अस्थूरीणि[16] । अस्माकम्[17] । गार्हपत्यानि[18] । भवन्तु । तीक्ष्णेन । अस्मान्[19] । तेजसा[20] । तीक्ष्णीकुरु[21] अश्वेनैकेन[22] युक्तो[23] रथः स्थूरिरुच्यते बहुभिर्युक्तोऽस्थूरिः[24] बहुभिः प्रजापशुभिर्युक्तानि[25] गृहैश्वर्याण्यस्थूरीण्युच्यन्ते[26] ।[27]

---

१. हे अग्ने ! Sy.

२. प्रादुर्भव Sy.

३. देवकामाय यजमानाय । षष्ठ्यर्थे चतुर्थ्येषा । ईदृशस्य यजमानस्य Sy.

४. सर्वैस्तायमाने यज्ञे मथ्यमानस्त्वम् Sy.

५. अविनाशार्थम् Sy.

६. देवानां भृता P., D. जनित्वा चामृतान् मरणरहितान् Sy.

७. तदनन्तरम् Sy.

८. देवेषु Sy.

९. अस्मदीयं यज्ञम् Sy.

१०. स्पर्शय प्रापयेत्यर्थः Sy.

११. त्वाम् Sy.

१२. प्राणिनां मध्ये Sy.

१३. हे यज्ञानां पालक ! Sy.

१४. समिद्धमिन्धनेन P., D.

१५. कृतवन्तः स्मः Sy.

१६. एकाश्वयुक्तः शकटः स्थूरिरित्युच्यते तद्विपरीतो बहुभिरश्वैरुपेतः शकटोऽस्थूरिः । तेन च सम्पूर्णता लक्ष्यते । अस्थूरीणि पुत्रपशुधनादिभिः सम्पूर्णानि भवन्तु Sy.

१७. अतः कारणात् नोऽस्माकम् Sy.

१८. गृहपतित्वानि Sy.

१९. अपि च नोऽस्मान् Sy.

२०. Omitted by P.

२१. सम्यङ् निश्य सम्यक् तीक्ष्णीकुरु । संयोजयेत्यर्थः Sy.

२२. अश्वेने० P.
अश्वनै० D.

२३. यज्ञो P.

२४. ०क्त स्थूरी P. ०रि D.

२५. ०शुर्यु० P.

२६. ०र्यण्य० D.

२७. VM. ignores उ ॥ उ एव Sy.

VI.16.

**त्वम॑ग्ने य॒ज्ञानां॒ होता॒ विश्वे॑षां हि॒तः । दे॒वेभि॒र्मानु॑षे॒ जने॑ ॥ १ ॥**

[1]त्वमग्ने । त्वम् । अग्ने ! सर्वेषाम्[2] । यज्ञानाम् । होता[3] । देवैः । मानुषे[4] । जने[5] । निहितः[6] ।

**स नो॑ म॒न्द्राभि॑रध्व॒रे जि॒ह्वाभि॑र्यजा म॒हः । आ दे॒वान्व॑क्षि॒ यक्षि॑ च ॥ २ ॥**

स नो मन्द्राभिः । सः[7] । अस्माकम्[8] । मदयित्रीभिः[9] । ज्वालाभिः । यज्ञे । यज[10] । महतः । देवान्[11] तदेवाह—आवह देवान् यज[12] । चेति[13] ।

**वेत्था॒ हि वे॑धो॒ अध्व॑नः प॒थश्च॑ दे॒वाञ्ज॑सा । अग्ने॑ य॒ज्ञेषु॑ सुक्रतो ॥ ३ ॥**

[14]वेत्था हि । जानासि । मेधाविन्[15] ! अध्वनः[16] । पथः[17] । च, अल्पोऽन्ययोर्भेदः[18] । देव[19] ! अञ्जसा[20] । अग्ने ! यज्ञे[21] स्थितान् । सुप्रज्ञ[22] !

---

१. द्वितीयेऽनुवाकेऽष्ट सूक्तानि । तत्र 'त्वमग्ने यज्ञानाम्' इत्यष्टाचत्वारिंशदृचं प्रथमं सूक्तं भरद्वाजस्यार्षमाग्नेयम् । आद्या षष्ठी च वर्धमाना गायत्री षट्कसप्तकाष्टकाः सा वर्धमानेत्युक्तलक्षणोपेतत्वात् । सप्तविंश्यनुष्टुप् । 'आ ते अग्ने, अग्निं देवासः' इत्येते ऋचावनुष्टुभौ । तयोः पूर्वा 'वीती यो देवम्' इति त्रिष्टुप् । शिष्टा द्वाचत्वारिंशदृचो गायत्र्यः । तथा चानुक्रम्यते—'त्वमग्नेऽष्टाचत्वारिंशद् गायत्रं वर्धमानाद्या षष्ठी च सप्तविंश्यनुष्टुप् त्रिष्टुप्पूर्वे चान्त्ये' (KSA. 29.16. p.22.) इति । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ गायत्रे छन्दसीदं सूक्तमुच्यते । तत्रान्त्यास्तिस्र ऋच उद्धर्तव्याः । सूत्र्यते हि—'त्वमग्ने यज्ञानामिति तिस्र उत्तमा उद्धरेत्' (ĀSS. 4.13.) इति विश्वजित्याग्निमारुते बृहत्साम यद्यग्निष्टोमसाम स्यात्तदानीमाद्याः षडृचः स्तोत्रियानुरूपार्थाः । सूत्रितं हि—'त्वमग्ने यज्ञानामिति स्तोत्रियानुरूपौ' (ĀSS.8.7.) इति Sy.

२. सप्तसंस्थारूपेण भिन्नानाम् Sy.

३. होमनिष्पादकोऽसि । यद्वा यज्ञानां सम्बन्धी देवानामाह्वाता भवसि Sy.

४. म० P. कुत इति ? अत आह—यस्मात् त्वं मनोः सम्बन्धिनि मनुष्ये Sy.

५. यजमाने Sy.　　६. ०त P. होतृत्वेन निहितोऽसि तस्मादित्यर्थः Sy.

७. हे अग्ने ! Sy.　　८. त्वम् Sy.

९. ०भि P., D. मदकरीभिः स्तुत्याभिर्वा Sy.

१०. हविर्भिस्तर्पय कथं तत् ? इत्युच्यते Sy.

११. देवानां P., D. यष्टव्यानिन्द्रादीन् Sy.

१२. ततो यज च हवींषि तेभ्यो देहीत्यर्थः Sy.

१३. यजतेति य चेति P.

१४. पाथिकृत्यामग्ने पथिकृतोऽनुवाक्या 'वेत्था' इत्येषा । सूत्रितञ्च—'वेत्था हि वेधो अध्वन आ देवानामपि पन्थामगन्म (ĀSS.3.10.) इति Sy.　　१५. हे विधातः ! Sy.

१६. महामार्गान् Sy.

१७. क्षुद्रमार्गांश्च Sy.

१८. ०ल्पेन० P. The passage 'अल्पोऽनयोर्भेदः' refers to अध्वनः and पथः ।

१९. देवान् P., D. दानादिगुणयुक्ताग्ने ! त्वम् Sy.

२०. आर्जवेन Sy.

२१. यज्ञेषु दर्शपूर्णमासादियागेषु Sy.

२२. VM. ignores हि ॥ हि यस्मादेवं तस्मात्कारणाद्यज्ञमार्गाद् भ्रष्टं यजमानं पुनस्तं मार्गं प्रापयेत्यर्थः Sy.

त्वामी॑ळे॒ अध॑ द्वि॒ता भ॑र॒तो वा॒जिभि॑: शु॒नम् । ई॒जे य॒ज्ञेषु॑ य॒ज्ञिय॑म् ॥ ४ ॥

त्वामीळे[1] । त्वाम् । अस्तौत्[2] । द्विधावस्थितं[3] गार्हपत्याहवनीयरूपेण । दुष्यन्तपुत्रः[4] । ऋत्विग्भिः[5] । सुखावहम्[6] । ईजे[7] । जपयज्ञेषु[8] । यज्ञार्हम्[9] ।[10]

त्वमि॒मा वार्या॑ पु॒रु दिवो॑दासाय सुन्व॒ते । भ॒रद्वा॑जाय दा॒शुषे॑ ॥ ५ ॥

त्वमिमा[11] । त्वम् । इमानि[12] । धनानि[13] । पुरूणि[14] । दिवोदासाय[15] । यजमानाय । भरद्वाजाय[16] । प्रयच्छते[17] देहि[18] दिवोदासकुलजो भरद्वाजोऽपि सोभाभ्यां प्रायच्छ[19] इति ।

त्वं दू॒तो अम॑र्त्य॒ आ व॑हा॒ दैव्यं॒ जन॑म् । शृ॒ण्वन्विप्र॑स्य सुष्टु॒तिम् ॥ ६ ॥

त्वं[20] दूतः[20] । त्वम् । देवदूतः[21] । अमर्त्यः[22] । आवह[23] । दिवि भवम्[24] । जनन्[25] । शृण्वन्[26] । भरद्वाजस्य । स्तुतिम्[27] ।

त्वाम॑ग्ने स्वा॒ध्यो॒३॑ मर्ता॑सो दे॒ववी॑तये । य॒ज्ञेषु॑ दे॒वमी॑ळते ॥ ७ ॥

त्वामग्ने[28] । त्वाम् । अग्ने ! सुकर्माणः[29] । मनुष्याः । देवानां भक्षणाय[30] । यज्ञेषु । देवम्[31] । स्तुवन्ति[32] ।

---

१. हे अग्ने ! Sy.
२. ०स्तौ P., D. स्तुतवान् Sy.
३. ०स्थित्व P. द्विविधमिष्टप्राप्त्यनिष्टपरिहाररूपेण द्विधा भिन्नम् Sy.
४. दस्पन्तयु० P. दौष्यन्तिरेतत्संज्ञो राजा Sy.
५. ०क्भिः P. वाजो हविर्लक्षणमन्नम् । तद्वद्भिर्ऋत्विग्भिः सह Sy.
६. सुखमुद्दिश्य Sy.
७. इष्टवान् । तस्मै त्वमुभयविधं सुखं प्रादा इत्यर्थः Sy.
८. जचयज्ञयु P. यज्ञेषु—तृतीयार्थे सप्तमी । यज्ञैः Sy.
९. स्तुत्वा च यज्ञार्हं त्वाम् ।
१०. VM. ignores अधः ।
११. हे अग्ने ! Sy.
१२. इमानि दृश्यमानानि Sy.
१३. वार्याणि वरणीयानि सम्भजनीयानि धनानि Sy.
१४. पुरूणि बहूनि Sy.
१५. दिवोदासाय सुन्वते । लुप्तोपममेतत् । यथा सोमाभिषवं कुर्वते दिवोदासाख्याय राज्ञे प्रादास्तथा Sy.
१६. भरद्वाजाय ऋषये Sy.
१७. हवींषि दत्तवते Sy.
१८. देहीति शेषः Sy.
१९. प्रयच्छ is suggested for प्रायच्छ ।
२०. Omitted by P.
२१. दूतो भूत्वा Sy.
२२. अमरणधर्मः Sy.
२३. अस्मद्यज्ञ आनय Sy.
२४. देवसम्बन्धिनम् Sy.
२५. जनम् is suggested for जनन् ।
२६. मेधाविनो भरद्वाजस्य Sy.
२७. VM. ignores सु of सुष्टुतिम् ॥ शोभनां स्तुतिम् Sy.
२८. Omitted by D.
२९. शोभनाध्यानाः Sy.
३०. देवानां तर्पणार्थम् Sy.
३१. द्योतमानम् Sy.
३२. स्तुवन्ति याचन्ते वा Sy.

तव॒ प्र य॑क्षि सं॒दृश॑मु॒त क्रतुं॑ सु॒दान॑वः । विश्वे॑ जुषन्त का॒मिनः॑ ॥ ८ ॥

तव प्रयक्षि[1] । तव । प्रकर्षेण यजामि[2] । सन्दर्शनम्[3] । अपि च[4] । प्रज्ञाम्[5] । शोभनदानाः[6] दानुदानम्[6] । मत्तो व्यतिरिक्ताश्च[7] । कामिनस्तदुभयम्[8] । सेवन्ते[9] ।

त्वं होता॒ मनु॑र्हितो॒ वह्नि॑रा॒सा वि॒दुष्ट॑रः । अग्ने॒ यक्षि॑ दि॒वो विशः॑ ॥ ९ ॥

त्वं होता । त्वम् । होता[10] । मनुनाहितः[10] । वोढा हविषाम् । आस्येन[11] । अतिशयेन विद्वान् । अग्ने[12] ! यक्षि[13] । द्युलोकस्य[14] । निवेशयितुन्[15] देवान् ।

अग्न॒ आ या॑हि वी॒तये॑ गृणा॒नो ह॒व्यदा॑तये । नि होता॑ सत्सि ब॒र्हिषि॑ ॥ १० ॥

अग्ने[16] । अग्ने[17] ! आगच्छामुष्मिन्[18] लोके स्थित ! "लोकानां विधृत्यर्थमग्निरमुष्मिन्[19] लोक आसीदादित्योऽस्मिन्" इत्याद्यध्वर्युब्राह्मणम् । "गृणानो[20] हव्यदातय[21] इति यजमानो यजमानायेत्येतदाह[22]" इति विज्ञायते ।

---

१. हे अग्ने ! Sy.

२. प्रयजे प्रकर्षेण पूजयामि Sy.

३. ०र्शम् D. सम्यग्दर्शनीयं यद्वा सम्यग्द्रष्टारं सर्वस्य भासकं तेजः Sy.

४. Omitted by P.

५. ०ज्ञा P.
कर्म प्रज्ञानं वा पूजयामि Sy.

६. सुदानोः शोभनदानस्य तव Sy.

७. अमर्तो P. मर्त्तो D. न केवलमहमेव किन्त्वन्ये सर्वेऽपि यजमानाः Sy.

८. कमि० P., D. त्वदनुग्रहात्तैस्तैः कामैरुपेताः सन्तः Sy.

९. त्वदीयं सन्दृशं क्रतुं च सेवन्ते Sy.

१०. होतृत्वेन मनुनाहितोऽसि Sy.

११. आस्यभूतया ज्वालया Sy.

१२. आग्ने P.

१३. यज Sy.

१४. अतः कारणात्त्वं दिवः द्युलोकसम्बन्धिनीः Sy.

१५. दैवीः प्रजाः Sy.

१६. दर्शपूर्णमासयोः सामिधेनीषु 'अग्न आ याहि' इत्याद्यास्तिस्रः । सूत्रितञ्च 'अग्न आ याहि वीतये गृणान ईळेन्यो नमस्यस्तिरः' (ĀSS. 1.2.) इति । गार्हपत्याहवनीययोर्मिथः संसर्गेऽग्नये वीतयेऽष्टाकपालः पुरोडाशः । तस्य 'अग्न आ याहि' इत्येषानुवाक्या । सूत्रितञ्च— 'अग्न आ याहि वीतये यो अग्निं देववीतये' (ĀSS. 3.13.) इति Sy.

१७. अयं सेक्ताऽग्निर्वृष्टिहेतुः BB.

१८. ०आगामु० P.

१९. ०ग्निमसु० P.

२०. स्तूयमानस्त्वम् Sy.

२१. ०व्यादा० P. हव्यानि हवींषि देवेभ्यो दातुम् Sy.

२२. ०मानयेत्येतदाह P. ०मान येन्य तदाह D.

निषीद[1] । बर्हिषि[2] । [illegible] । "अग्न आयाहि वीतये[3] इत्याह्वानयोर्लोकयोर्वीत्यै" इति च विज्ञायते ।

**तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥ ११ ॥**

तं त्वा समिद्भिः[4] । तम्[5] । त्वा[6] । समिद्भिः[7] । अङ्गिरसामेक[8] ! घृतेन[9] च । वर्धयामः[10] । अत्यन्तम्[11] । दीप्यस्व । युवतम[12] !

---

१. निषीद उपविश Sy.

२. आस्तीर्णे दर्भे Sy.

३. हविषां भक्षणार्थम् Sy. हविरुपभोगाय U. वीतिः प्रजननशक्तिः....अनयोर्लोकयोः प्रजानां प्रजननार्थमायाहीति वचनात् BB.
सोऽन्वाह । प्र वो वाजा अभिद्यव इति तन्नु प्रेति भवत्यग्नऽआयाहि वीतयऽइति तद्वेति भवति SB. 1.4.1.7.p.34.
तदुहैक आहुः । उभयं वाऽएतत्प्रेति सम्पद्यतऽइति तदु तदातिविज्ञान्यमिव प्र वो वाजा अभिद्यव इति तन्नु प्रेत्यग्नऽआयाहि वीतयऽइति तद्वेति SB. 1.4.1.7.p.34.
अग्नऽआयाहि वीतयऽइति । तद्वेति भवति वीतयऽइति समन्तिकमिव ह वाऽइमेऽग्रे लोका आसुरित्युन्मृश्या हैव द्यौरास SB. 1.4.1.22.p.35.
अथापादत्ते । अग्नऽआयाहि वीतयऽइत्यवितवऽइत्येतत्तदेनं ब्रह्मणा यजुषैतस्माच्छौद्राद्वूर्णादपादत्ते SB. 6.4.4.9.p.534.
This stanza=YV.11.46.=TS.2.5.7.3.

४. ०द्भि D.

५. पूर्वोक्तगुणम् Sy. तं य उक्तगुणस्तथाविधम् Mah. यस्त्वमुक्तगुणस्तम् U. तस्य तदनुवचनं स एव तासामेको वर्णः । तमेवार्थं समर्थयते, तं त्वेति BB.

६. त्वाम् Sy., Mah., U:

७. समिन्धनहेतुभिर्दारुभिः Sy. यज्ञसम्बन्धिकाष्ठैः Mah.

८. ०साकै P. हे अङ्गनादिगुणयुक्त ! अङ्गाररूप ! वाङ्गिरसः पुत्र ! वाग्ने ! Sy. अङ्गतिर्गत्यर्थः । अङ्गिर्गतिरस्यास्तीत्यङ्गिराः । रसुप्रत्ययो मत्वर्थीयः । तत्तद्यागेषु गमनवन्नग्ने ! 'अङ्गिरा उ ह्यग्निः' (SB. 1.4.1.25.) इति श्रुतेः कदाचिदपि स्थविरत्वरहित इत्यर्थः ।.... अतिशयेन युवा यविष्ठः....यविष्ठ एव यविष्ठ्यः । Mah. अगतिर्गत्यर्थः । रो मत्वर्थीयः । गमनवन् ! U.

९. आज्येन च Sy. संस्कृताज्येन Mah. घृतेनाभिधेयेन तद्वत्पदं घृतवद् घृतशब्द एव । यद्वा घृतशब्दवत्पदम्....ज्योतिष्मत्त्वमासां घृतसम्बन्धेन क्रियते तेजो घृतमिति BB.

१०. पर्धयामः P. वर्धयामः प्रवृद्धं कुर्मः Mah.

११. महदत्यन्तम् Sy. तथाविधाग्ने !....महत् प्रवृद्धं यथा तथा Mah.

१२. ०मः P., D. अतो हे युवतमाग्ने ! Sy.
तं त्वा समिद्भिरङ्गिर इति । समिद्भिर्ह्येतमङ्गिरस ऐन्धताङ्गिर इत्यङ्गिरा उ ह्यग्निर्घृतेन वर्धयामसीति तत्सामिधेनं पदवृ्‌ समेवैनं तेनेन्धे वीर्यमेवास्मिन्दधाति SB. 1.4.1.25.p.35.
This stanza=YV.3.3.=TS.2.5.8.1.

स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ॥ १२ ॥

स नः पृथुः । अदो गमय[1] । अस्मानिति[2] ।

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ १३ ॥

त्वामग्ने[3] । त्वाम् । अग्ने । पुष्करपर्णात्[4] । अधि[5] । अथर्वा[6] ऋषिः । निरमन्थत[7] । मूर्ध्नः[8] । सर्वस्य[9] । वोढुः[10] "पुष्करपर्णे[11] ह्येनमुपश्रितमविन्दत्[12]" इति ब्राह्मणम्[13] ।

---

१. गैमय P., D. अभिगमय Sy.

२. VM. does not explain the stanza fully. Sy. explains this stanza in the following manner:— हे देव ! द्योतमानाग्ने ! स पूर्वोक्तगुणस्त्वम् । पृथु विस्तीर्णम् । श्रवाय्यं श्रवणीयं प्रशस्यं बृहन्महत् सुवीर्यं शोभनवीर्योपेतं धनं नोऽस्मान् अच्छ विवाससि । अभिगमय । अत्र वाजसनेयकम्—'अच्छा देव विवाससीति तन्नो गमयेत्येवैतदाह' इति ।

३. अग्निमन्थने 'त्वामग्ने पुष्करादधि' इत्याद्यास्तिस्र ऋचोऽनूच्याः । सूत्रितञ्च—'त्वामग्ने पुष्करादधीति तिसृणामर्धर्चे शिष्ट्वारमेत्' (ĀŚS.2.16.) इति Sy.

४. ०रवर्णात् D. उदकात् Mah.,U.

५. पुष्करादधि पुष्करपर्णे Sy. सकाशात् Mah., U. उपरि BB.

६. अध्यङ्थर्वः P. एतत्संज्ञक ऋषिः Sy. अथर्वा प्राणः 'आपो वै पुष्करं प्राणोऽथर्वा' (ŚB.6.4.2.2.) इति श्रुतेः Mah. अतनवान् प्राणः U.

७. अरण्योः सकाशादजनयत् Sy. निश्शेषेण मथितवान् Mah. निर्जनितवान् U. पुष्करपर्णस्थं मन्थनेन ततो निष्कृष्यालभत । यथोक्तम्—'पुष्करपर्णे ह्येनमुपाश्रितमविन्दत्' (TS.5.1.4.4.) इति BB.

८. मूर्धवद्धारकात् Sy. मूर्ध्नोऽर्थादरणेः शिरसो निरमन्थतेति व्यत्ययः Mah. शिरस्तोऽरण्योर्जनयति U. मूर्धस्थानीयात् प्रधानभूतात् पुष्करपर्णात् BB.

९. सर्वस्य जगतः Sy. सर्वस्य जगतः सम्बन्धिनः । ....यद्वा विश्वस्येति षष्ठ्येकवचनं प्रथमाबहुवचनार्थे । विश्वे सर्वे वाघत इत्यर्थः Mah. सर्वस्य कर्मणोऽङ्गभूतम् U.

१०. वाहकात् । 'पुष्करपर्णे हि प्रजापतिर्भूमिमप्रथयत् तत्पुष्करपर्णेऽप्रथयत्' (TB. 1.1.3.6.) इति श्रुतेः । भूमिश्च सर्वजगत आधारभूतेति पुष्करपर्णस्य सर्वजगद्धारकत्वम् । अत्र पुष्करशब्देन पुष्करपर्णमभिधीयत इति । एतच्च तैत्तिरीयके विस्पष्टमाम्नातम् । 'त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमविन्दत् (TS.5.1.4.4.) इति Sy. वाघत इति ऋत्विङ्नामसु (Ngh. 3.18.) पठितम् । ....वाघत ऋत्विजः Mah.,U. ऋत्विक्समुदायस्य (वाहकात्) उदकात् प्राणो निरमन्थदित्येके BB.

११. ०वर्णे D.

१२. ह्येनमुपा० P. ह्येन D.

१३. तै० P. TS.5.1.4.4. यद्वा—ऋचोऽयमर्थः । हे अग्ने ! अथर्वाख्य ऋषिः पुष्करादधि पद्मपत्रस्योपरि त्वां निरमन्थत । कीदृशात्पुष्करात् । मूर्ध्न उत्तमाङ्गवत्प्रशस्ताद् विश्वस्य वाघतः सर्वस्य जगतो वाहकात् पुष्करपर्णमग्निमन्थनयज्ञनिष्पादनद्वारेण सर्वं जगन्निर्वहति Mah. अथैनं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतस्त्वामग्ने पुष्करादध्यथर्वा निरमन्थतेत्यापो वै पुष्करं प्राणोऽथर्वा प्राणो वाऽएतमग्नेऽद्भ्यो निरमन्थन्मूर्ध्नो विश्वस्य वाघत इत्यस्य सर्वस्य मूर्ध्न इत्येतत् ŚB.6.4.2.2.p.531.

This stanza=YV.15.22.=TS. 3.5.11.3.

[illegible]

तमु॑ त्वा द॒ध्यङ्ङृषि॑ः पु॒त्र ई॑धे॒ अथ॑र्वणः । वृ॒त्र॒हणं॑ पुरंद॒रम् ॥ १४ ॥

[तमु त्वा ।][1]

तमु॑ त्वा पा॒थ्यो वृषा॒ समी॑धे दस्यु॒हन्त॑मम् । ध॒नं॒ज॒यं रणे॑रणे ॥ १५ ॥

तमु त्वा । तम् । एव । त्वाम् । पथ्यायाः पुत्रः[2] दध्यङ् । वृषा[3] । समीधे[4] । दस्यूनामतिशयेन हन्तारम्[5] । धनस्य जेतारम्[6] । युद्धे युद्धे[7] 'पूर्वमेवोदितमुत्तरेणाभिश्टृणोति' इति ब्राह्मणम् ।

---

१. The *pratīka* is supplied by the Editor.

हे अग्ने ! य उक्तगुणस्तमु तमेव त्वामथर्वणः पुत्रो दध्यङ् एतत्संज्ञ ऋषिरीधे । दीपितवान् । कीदृशम् ? वृत्रहणमावरकाणां शत्रूणां हन्तारं पुरन्दरम् असुरपुराणां दारयितारम् Sy. हे अग्ने ! अथर्वण ऋषेः पुत्रो दध्यङ्नामक ऋषिस्तमु त्वा, उ एवार्थे । तमेव त्वामीधे प्रज्वालितवान् । कीदृशं त्वाम् ? वृत्रहणं वृत्रस्य पाप्मनो हन्तारम् ।....पुरन्दरं रुद्ररूपेणासुरसम्बन्धिनां त्रयाणां पुराणां विदारयितारम् Mah. अत्राप्युकार एतस्मिन्नर्थे उत्तरेणेत्युकारः, तमेव त्वां दध्यङ्नामा ऋषिर्मन्त्राणां द्रष्टा पुत्र ईधे, अथर्वणः, व्यवहितोऽत्र सम्बन्धः । अथर्वणः पुत्र ईधे । 'इन्धी दीप्तौ' आदीपयति । कथम्भूतं त्वामादीपयति ? वृत्रहणं पाप्मनो हन्तारम् । पुरन्दरमसुरपुरां च दारयितारं वा । दध्यङ्ङाथर्वणः इति श्रुतिः U. तमेव त्वा दध्यङ्नामर्षिरथर्वणः पुत्र ईधे दीपयामास । ....वृत्रस्यासुरस्य पाप्मनो वा हन्तारं पुरन्दरं पुरामसुरसम्बन्धिनीनां दारयितारम् BB. तमु त्वा दध्यङ्ङृषिः । पुत्र ईधेऽअथर्वण इति वाग्वै दध्यङ्ङाथर्वणः स एनं तत ऐन्ध वृत्रहणं पुरन्दरमिति पाप्मा वै वृत्रः पाप्महनं पुरन्दरमित्येतत् SB.6.4.2.3.p.531.

This stanza=YV.11.33.=TS.3.5.11.3.

२. पथि वर्तमानः पाथ्यः सन्मार्गवर्ती, यद्वा पाथस्यन्तरिक्षे हृदयाकाशे भवः पाथ्यः ।....मनसा हि ब्रह्मपन्था उपलभ्यतेऽतः पाथ्यः । 'मनसैवानुद्रष्टव्यम्' इति श्रुतेः Mah. मनसा हि मुक्तेः पन्था उपलभ्यते U.
पाथ्यो नामर्षिः BB.

३. पाथ्यो वृषा नाम कश्चिदृषिः Sy. सेक्ता ।....'मनसैवाभिलष्य स्त्रियां रेतः सिञ्चति' इति वृषा हि मनः । 'मनो वै पाथ्यो वृषा' (SB.6.4.2.4.p.531) इति श्रुतेः Mah., U. वृषा प्रधानभूतः BB.

४. हे अग्ने ! समैन्ध । समदीपयत् Sy. सन्दीपयति Mah., U. दीपितवान् BB.

५. अतिशयेन उपक्षपयितॄणां शत्रूणां हन्तारम् Sy. दस्यून् हन्तीति दस्युहा, अतिशयेन दस्युहा दस्युहन्तमस्तम्....अतिशयेन शत्रूणां हन्तारम् Mah. शत्रुहन्तृतमम् U. दस्यूनां हन्तृतमं हन्तारम् BB.

६. धनानां जेतारम् BB.

७. ०द्ध P. तेषु तेषु सङ्ग्रामेषु Mah. सङ्ग्रामे सङ्ग्रामे U. सङ्ग्रामे BB.
This stanza=YV.11.34.=TS.3.5.11.4.

**एह्यू॒ षु ब्र॑वाणि॒ तेऽग्न॑ इ॒त्थेत॑रा॒ गिरः॑ । ए॒भिर्व॑र्धास॒ इन्दु॑भिः ॥ १६ ॥**

एहि[1] । आगच्छ । सुष्ठु । ब्रवाणि[2] । ते[3] । स्तुतीः[4] । अग्ने[5] ! असुरासुरेषु[6] वर्तमाना[7] भवन्ति । इतरा[8] अदेवजुष्टा अश्रोतव्याः[9] । एभिरस्मदीयैः[10] । स्तोमैः[11] । वर्धस्व, "असुर्या ह वा इतरा गिरः" इति ब्राह्मणम्[12] ।[13]

**यत्र॒ क्व॑ च ते॒ मनो॒ दक्षं॑ दधस॒ उत्त॑रम् । तत्रा॒ सदः॑ कृणवसे ॥ १७ ॥**

[यत्र ।][14] यत्र[15] । क्व[16] । चित्[17] । तव तत्र । पूजा[18] भवति । तत्र[19] । वृद्धिम्[20] । उद्धततराम्[21] । करोषि[22] । तथा तत्र स्थानं च । करोषि स्तोतरि[23] ।

---

१. उक्थ्ये क्रतौ तृतीयसवने मैत्रावरुणस्य 'एह्यू षु' इत्यादिकौ तृचौ स्तोत्रियानुरूपौ । (ĀŚS. 6.1.) आभिप्लविकेषूक्थ्येषु त्वेतौ वैकल्पिकौ स्तोत्रियानुरूपौ । आभिप्लविकेषूक्थ्येषु सूत्रितञ्च—'एह्यू षु ब्रवाणि त आग्निरगामि भारतः' (ĀŚS.7.8.) इति । पौनराधेयिक्यामिष्टावुत्तराज्यभागस्य 'एह्यू षु' इत्यनुवाक्या । सूत्रितं च—'एह्यू षु ब्रवाणि त इत्याग्नेयावाज्यभागौ' (ĀŚS.2.8.) इति Sy.

२. ताः स्तुतीः शृण्वित्यर्थः Sy. सुतरां वदानि Mah. ऊकारोऽहेतुरिति चेत्....साधु ब्रवाणि U.

३. तुभ्यं त्वदर्थम् Sy. तव Mah.,U.

४. ०ती D. वाणीः स्तुतिलक्षणाः Mah. गिरो वाचः U.

५. हे भगवन्नग्ने U.

६. ०सुरेषुरेषु D.

७. ०नो D. इत्थमनेन प्रकारेण Sy., Mah. इत्थं त्वदीयैर्नामिबन्धकर्मरूपैर्ग्रथिताः U.

८. असुरैः कृताः स्तुतीः शृण्विति शेषः । तथा च ब्राह्मणम् 'अग्ने तथेतरा गिर इत्यसुर्या ह वा इतरा गिरः' (AB.3.49.) इति Sy. इतरा अन्याः Mah. इतराः स्तुतिलक्षणाः । ....यद्वेत्थमुद्गातृस्तोत्रजनिता इतरा अन्या गिरो वा गीयन्ते U.

९. अश्रृणोतव्या P.

१०. अपि चागतस्त्वम्, एतैः Sy. हेतुं न्यस्यति । एभिश्च U.

११. सोमैः is suggested for स्तोमैः ॥ अध्वर्युणाभिषुतैः सोमैः U.

१२. AB. 3.49. The quotation from AB. should immediately follow इतरा ।

१३. VM. ignores उ ॥ उ इत्येतत् पूरकम् Sy. अथ यद्यग्नयऽइन्दुमते ध्रियेरन् । अग्नयऽइन्दुमतेऽनुब्रूहीति ब्रूयात्सोऽन्वाहेह्यू षु ब्रवाणि तेऽग्नऽइत्थेतरा गिरः । एभिर्वर्धसऽइन्दुभिरिति तथा हाग्नेयो भवति सोमो वाऽइन्दुस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निरिन्दुमानाज्यस्य वेत्विति यजत्येवमु सर्वमाग्नेयं करोति SB.2.2.3.23.p.150 This stanza=YV. 26.13.

१४. The *pratīka* is supplied by the Editor.

१५. हे अग्ने ! Sy.

१६. यस्मिन् देशे Sy.

१७. कस्मिंश्चिद्यजमाने Sy.

१८. मनोऽनुग्रहात्मकमन्तःकरणम् Sy.

१९. वर्तते Sy.

२०. तस्मिन् यजमाने Sy.

२१. बलकरमन्नं वा Sy.

२२. उद्धततरं श्रेष्ठम् Sy.

२३. धारयसि Sy.

नहि ते॑ पू॒र्तम॑क्षि॒पद्भुव॑न्नेमानां वसो । अथा॒ दुवो॑ वनवसे ॥ १८ ॥

नहि ते[1]। नहि। ते[2]। दानम्[3]। अक्ष्णः पानकम्[4]। भवति[5], अनवरतं प्रवर्तमानं न चक्षुः[6] पतति सन्ततं प्रवर्तन इत्यर्थः। हे नेमानाम्[7], वासयितः[8]! नेमा नमानात्[9] पूजकाः[10]। ततश्च[11]। परिचर्याम्[12]। मनुष्येभ्यो भजस्व[13]।

अ॒ग्निर॑गामि॒ भार॑तो वृत्र॒हा पु॑रु॒चेत॑नः । दिवो॑दासस्य॒ सत्प॑तिः ॥ १९ ॥

आग्नि[14]। आभिमुख्येन गम्यते[15]। अग्निः[16]। 'भारतेन्येषहैष हि देवेभ्यो हव्यं भरति[17]' इति ब्राह्मणम्[18]। शत्रूणां हन्ता[19]। बहुप्रज्ञः[20]। दिवोदासार्थं[21] मया। सतां पतिः[22]।

स हि विश्वाति॒ पार्थि॑वा र॒यिं दाश॑न्महित्व॒ना । व॒न्वन्नवा॑तो॒ अस्तृ॑तः ॥ २० ॥

[स हि।][23] सः[24]। हि[25]। विश्वानि[26]। पार्थिवानि[27] भूतानि। अतिक्रान्तः[28]। रयिम्[29]। प्रयच्छति[30]। महत्वेन[31]। भजमानो[32] हवींषि। अनभिगतः[33]। शत्रुभिरहिंसितश्च[34]।

---

१. हे अग्ने ! Sy.
२. त्वदीयम् Sy.
३. मानम् P. पूरकं तेजः Sy.
४. अक्ष्णोः पातकं विनाशकम् Sy.
५. भवतु । सर्वदास्माकं दर्शनसामर्थ्यं करोतु Sy.
६. चक्षः P., D.
७. नेमशब्दोऽल्पवाची । मनुष्याणां मध्ये कतिपयानां यजमानानाम् Sy.
८. ०नामपासयितुः P. ०नामवासयितुः D. वासक ! Sy.
९. नमनात् is suggested for नमानात् ।
१०. नेमानामानात् पूजकाश्च P. The passage नेमा....पूजकाः refers to नेमानाम् ।
११. Omitted by P. अतः कारणात् Sy.
१२. पर्यचर्यं P., D. अस्माभिर्यजमानैः कृतं परिचरणम् Sy.
१३. दजसे P. सम्भजस्व Sy.
१४. आग्निः P., D.
१५. अस्माभिः स्तुतिभिरगम्यत Sy.
१६. अग्निः P. अयमग्निः Sy.
१७. हविषां भर्ता Sy.
१८. वहति P.
१९. वृत्राणां शत्रूणां हन्ता Sy.
२०. पुरूणां बहूनां चेतयिता ज्ञाता । सर्वज्ञ इत्यर्थः Sy.
२१. एतत्संज्ञस्य राज्ञः Sy.
२२. यजमानानां पालयिता Sy.
२३. The *pratīka* is supplied by the Editor.
२४. अग्निः Sy.
२५. खलु Sy.
२६. Omitted by P. सर्वाणि Sy.
२७. पातमिवा P. पृथिव्यां भवानि भूतजातानि Sy.
२८. अपिति० P. अतिक्रामन् Sy.
२९. रति P. धनम् Sy.
३०. ददातु । यद्वा विश्वं सर्वं पार्थिवं पृथिव्यां विद्यमानं रयिं धनमति अतिशयेन दाशत् ददातु Sy.
३१. ०त्त्वे० is suggested for ०त्वे० ॥ स्वमहिम्ना Sy.
३२. काष्ठानि शत्रून्वा हिंसन् Sy.
३३. अन्यैः शत्रुभिरप्रतिगतः Sy.
३४. केनाप्यहिंसितः Sy.

**स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता । बृहत्ततन्थ भानुना ॥ २१ ॥**

स प्रत्नवत्[1] । सः[2] । पुराणेनेव[3] । नवीयसाधुना[4] प्रादुर्भूतेन । सङ्गच्छमानः[5] । अग्ने[6] ! द्योतमानेन[7] । तेजसा[8] । विस्तृतमन्तरिक्षम्[9] । ततन्थ[10] ।

**प्र वः सखायो अग्नये स्तोमं यज्ञं च धृष्णुया । अर्च गाय च वेधसे ॥ २२ ॥**

प्र वः सखायः[11] । प्रार्चत[12] । गायत । च । यूयम् । ये । सखायः[13] । अग्नये । स्तोमम्[14] । यज्ञम्[15] । च । धृष्णवे[16] । विधात्रे[17] ।

**स हि यो मानुषा युगा सीदद्धोता कविक्रतुः । दूतश्च हव्यवाहनः ॥ २३ ॥**

स हि[18] । सः[19] । हि[20] । यः[19] । मानुषान्[21] । कालान्[22] दर्शपूर्णमासाद्याधारभूतान् । सीदति[23] । होता[24] भूत्वा । क्रान्तप्रज्ञः[25] । दूतः[26] । च भवतीति । हविषां वोढा ।

**ता राजाना शुचिव्रतादित्यान्मारुतं गणम् । वसो यक्षीह रोदसी ॥ २४ ॥**

ता राजाना । तौ[27] । मित्रावरुणौ[28] । शुचिकर्माणौ[29] । आदित्यांश्चान्यान्[30] । मरुतां[31] च । गणम्[32] ।

---

१. Omitted by P.
२. तादृशस्त्वम् Sy. स त्वम् BB.
३. प्रत्नेन पुराणेन Sy. पुराणाहम् । यद्वा प्रागिव । यद्वा पुरातनेनेव BB.
४. निपीयसा P. नवतरेण Sy., BB.
५. सङ्गमनः P. सङ्गमानः D. सङ्गच्छता सम्यग् व्याप्नुवता Sy. त्वामेव सङ्गच्छता ।.... यद्वा त्वयैव संयता धनेन BB.
६. हे अग्ने ! यः पूर्वोक्तगुणविशिष्टः Sy.
७. यशसा धनेन वा BB.
८. ईदृशेन द्युम्नेन भानुना भासनशीलेन BB.
९. महद् अन्तरिक्षम् Sy. महदिदं विश्वम् BB.
१०. ततत्थ P. विस्तारयसि Sy. विस्तारय छान्दसो लिट् । यद्वा विश्वं बृहद् भृशं ततन्थ तथा कुर्वंश्चास्माकं हिरण्यलाभहेतुर्भवेति BB.
११. ०य D.
१२. पा० P. प्रयच्छ ? (प्रयच्छत) Sy.
१३. हे सखायः ! समानख्याना ! ऋत्विजः ! Sy.
१४. P. adds च after स्तोमम् ॥ स्तोत्रम् Sy.
१५. यजनसाधनं हविश्च Sy.
१६. धृष्ण० D. शत्रूणां धर्षकाय Sy.
१७. विधोत्रे P.
१८. ति P.
१९. अग्निः Sy.
२०. खलु Sy.
२१. मानुषाणि Sy.
२२. युगानि । मनुष्यसम्बन्धिनो यज्ञार्हान् कालविशेषान् तेषु यागा अनुष्ठीयन्ते । अत्यन्तसंयोगे द्वितीया । एतावन्तं कालम् Sy.
२३. सीदतु । अस्मदीये यज्ञे बर्हिष्युपविशतु Sy.
२४. देवानामाह्वाता Sy.
२५. क्रान्त० is suggested for कान्त० ।
२६. देवानां दूतः Sy.
२७. प्रसिद्धौ Sy.
२८. राजमानौ Sy.
२९. शुचिकर्माणौ मित्रावरुणौ Sy.
३०. अदितेः पुत्रान् धात्रादीन् Sy.
३१. मारुताश्च P. मारुतां च D.
३२. सङ्घम् Sy.

चार्मिन्ः । इत्र । द्यावापृथिवी च ।

**वस्वी ते अग्ने संदृष्टिरिषयते मर्त्याय । ऊर्जो नपादमृतस्य ॥ २५ ॥**

वस्वी ते । प्रशस्या । तव । अग्ने ! सन्दृष्टिः । अन्नमिच्छते । मनुष्याय । अन्नस्य । पौत्र ! अमृतस्य तव ।

**क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन्त्सुरेक्णाः ।**
**मर्त आनाश सुवृक्तिम् ॥ २६ ॥**

क्रत्वा दाः । कर्मणा । दाता । अस्तु तुभ्यम् । श्रेष्ठः । अद्य । त्वाम् । याचमानः । सुधनः । मनुष्यः । व्याप्नोति । सुप्रवृत्तां स्तुतिम् ।

**ते ते अग्ने त्वोता इषयन्तो विश्वमायुः ।**
**तरन्तो अर्यो अरातीर्वन्वन्तो अर्यो अरातीः ॥ २७ ॥**

ते ते अग्ने । ते । तव । अग्ने ! त्वया रक्षिताः । विश्वम् । अन्नम् । इच्छन्तः । तरन्ते । गन्तारः । शत्रून् । वन्वन्तश्च भवन्ति वधकर्मा वनिरिति ।

---

१. हे वासकाग्ने ! Sy.
२. द्यावापृथिव्यौ चैतान्देवान् Sy.
३. VM. ignores इह ॥ अस्मिन् यज्ञे Sy.
४. वन्वी D.
५. वासयित्री । प्रशस्येत्यर्थः Sy.
६. दीप्तिः Sy.
७. अन्नमिच्छति । ददातीत्यर्थः Sy.
८. सा मनुष्याय यजमानाय Sy.
९. हे बलस्य पुत्राग्ने ! Sy.
१०. धोतायस्य P. मरणरहितस्य Sy.
११. हे अग्ने ! Sy.
१२. कर्मणा परिचरणात्मना Sy.
१३. कर्मणां दातः P. हवींषि दाता यजमानः Sy.
१४. अतिशयेन प्रशस्योऽस्तु Sy.
१५. इदानीम् Sy.
१६. सम्भजन् Sy.
१७. शोभनधनस्त्वास्तु Sy.
१८. तथा स मनुष्यः Sy.
१९. प्या P. व्याप्नोतु तव सर्वदा स्तोता भवत्वित्यर्थः Sy.
२०. सुप्रपृत्नक्तंतां P. ०वृक्तां D.
२१. ०तिः P. त्वद्विषयां सुष्टुतिम् Sy.
२२. स्तोतारः Sy.
२३. त्वदीया ये त्वां स्तुवन्ति Sy.
२४. ०क्ष० D. २५. सर्वम् Sy.
२६. अन्नं लभन्त इति शेषः। आयुरेव वा शतवर्षलक्षणमिषयन्त इच्छन्तः प्राप्नुवन्तीति शेषः Sy.
२७. इषमात्मन इच्छन्तः सन्तः Sy.
२८. अतिक्रामन्तः Sy.
२९. ०र P. अरीनभिगन्त्रीः Sy.
३०. काश्चिच्छत्रुसेना; Sy.
३१. वसन्त० P. हिंसन्तश्च Sy.
३२. मनि० P.
३३. VM. explains अर्यः and अरातीः once only.

अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्य१त्रिणम् ।
अग्निर्नो वनते रयिम् ॥ २८ ॥

अग्निः । अग्निः[1] । तिग्मेन[2] । तेजसा[3] । निहन्तु[4] । विश्वम्[5] । रक्षः[6] । अग्निः[7] । अस्मभ्यम्[8] । प्रयच्छतु[9] । धनम् ।

उत्तरा निगदसिद्धा

सुवीरं रयिमा भर जातवेदो विचर्षणे । जहि रक्षांसि सुक्रतो ॥ २९ ॥

[ सुवीरम् । ][10]

त्वं नः पाह्यंहसो जातवेदो अघायतः । रक्षा णो ब्रह्मणस्कवे ॥ ३० ॥

त्वं नः । त्वम् । अस्मान् । पाहि[11] । रक्षसः[12] । जातवेदः[13] ! अक्षमिच्छतः[14] । रक्ष । अस्मान् । हे स्तोत्रस्य[15], कर्तः[15] !

---

१. अस्ति P. अयमग्निः Sy.

२. तीक्ष्णेन Sy. उत्साहवता U. 'तिग्मं तेजतेरुत्साहकर्मणः' N. 10.6.

३. दीप्त्या U.

४. नितरां क्षीणं करोतु । 'यस उपक्षये' लेट् Mah. उपक्षयति U.

५. सर्वम् Sy., Mah., U.

६. अत्तारं राक्षसादिकम् Sy. राक्षसम्.... अत्रादनं भक्षणमस्यास्तीत्यत्री भक्षकस्तम् Mah. नितरामत्त्रिणमत्तारं खादकमुपद्रवकारिणम् U.

७. ०क्षाग्निः P. अग्निश्च U.

८. अपि च नोऽस्मभ्यम् Sy.

९. ददातु Sy., Mah. वनतिर्दानार्थः । ददाति U.

स वै पञ्चगृहीतं गृह्णीते । पञ्चधाविहितो वाऽअयꣳ शीर्षन्प्राणो मनो वाक् प्राणश्चक्षुः श्रोत्रमेतमेवास्मिन्नेतत्पञ्चधाविहितꣳ शीर्षन्प्राणं दधात्यग्निस्तिग्मेन शोचिषेति तिग्मवत्या शिर एवास्यैतया सꣳश्यति तिग्मतायै । SB. 9.2.2.5. p. 714.

This stanza=YV. 17.16.

१०. The *pratīka* is supplied by the Editor.

हे जातवेदः ! जातप्रज्ञान ! जातधन ! वा । विचर्षणे विशेषेण द्रष्टरग्ने ! सुवीरं शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेतं रयिं धनमाभर । आहर । तथा हे सुक्रतो ! सुकर्मन्नग्ने ! रक्षांसि च जहि विनाशय Sy.

११. रक्ष Sy.

१२. पापात् Sy.

१३. हे जातवेदः ! त्वम् Sy.

१४. अघम् is suggested for अक्षम् ॥ अघमनर्थमस्माकमिच्छतः शत्रोश्च Sy.

१५. हे स्तुतिरूपस्य मन्त्रस्य कवे ! कावयितः ! शब्दयितरग्ने ! अग्निर्हि शब्दमुत्पादयति । तथा च स्मर्यते 'मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्' इति तादृशाग्ने ! Sy.

**यो नो अग्ने दुरेव आ मर्तो वधाय दाशति । तस्मान्नः पाह्यंहसः ॥ ३१ ॥**

यो नः[1] । नः । अस्मान् । अग्ने ! दुष्टागमनः[2] ! मनुष्यः । हन्त्रे[3] । आभिमुख्येन प्रयच्छति[4] । तस्मात्[5] । अस्मान् । रक्ष । आहन्तुः[6] ।

उत्तरा निगदसिद्धा

**त्वं तं देव जिह्वया परि बाधस्व दुष्कृतम् । मर्तो यो नो जिघांसति ॥ ३२ ॥**

**[त्वं तम्]**[7]

**भरद्वाजाय सप्रथः शर्म यच्छ सहन्त्य । अग्ने वरेण्यं वसु ॥ ३३ ॥**

[भरद्वाजाय ।][8] भरद्वाजाय[9] । सहनशील[10] ! सहन्त्यो[11] ? गृहम्[12] । सर्वतः पृथुतमम्[13] । धनं च । प्रयच्छ[14], अवशिष्टं[15] स्पष्टम् ।

**अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः ॥ ३४ ॥**

अग्निः[16] । अग्निः । शत्रून्[17] । हन्तु[18] । धनमिच्छन्[19] तुभ्यम् । समिद्धः[20] । शुक्लवर्णः[21] ।

---

१. न P. २. ०मेनः P. दुष्टाभिप्रायः Sy.
३. हन्तृ D. स्वस्यायुधाय Sy.
४. अभिप्रयच्छति । आयुधेनास्मान्हन्तीत्यर्थः Sy.
५. मनुष्यात् Sy. ६. ०न्तुम् P., D. पापाच्च Sy. ७. The *pratīka* is supplied by the Editor.
हे देव ! द्योतमानाग्ने ! त्वं तं वक्ष्यमाणं दुष्कृतं दुष्कर्मकारिणं मनुष्यं जिह्वया ज्वालया परिबाधस्व सर्वतो जहि । यो मर्तो मनुष्यो नोऽस्मान् जिघांसति हन्तुमिच्छति Sy. ८. The *pratīka* is supplied by the Editor.
९. मह्यमृषये Sy. १०. ०शी P. हे सहन्त्य ! शत्रूणामभिभवितरग्ने ! Sy.
११. The reading is doubtful.
१२. शर्म सुखं गृहं वा Sy.
१३. सर्वतः पृथु विस्तीर्णम् Sy. १४. देहि Sy.
१५. By अवशिष्टम् VM. refers to अग्ने and वरेण्यम् ॥ वरेण्यं वरणीयम् Sy.
१६. पौर्णमास्यामाग्नेयाज्यभागस्यानुवाक्या 'अग्निर्वृत्राणि' इत्येषा । सूत्रितञ्च—'अग्निर्वृत्राणि जङ्घनदिति पूर्वस्याज्यभागस्यानुवाक्या' (ĀSS. 1.5.) इति । इष्टिपशुसोमेषु च यत्र वृधन्वन्तौ पुष्टिमन्तावित्यादिविशेषविधिर्न दृश्यते तत्र सर्वत्रैषैव प्रथमाज्यभागानुवाक्या । उपसद्याग्नेयस्यैषानुवाक्या सायङ्कालीनस्य त्वेषैव याज्या । सूत्रितञ्च—'अग्निर्वृत्राणि जङ्घनद्य उग्रइव शर्यहेति विपर्यासो याज्यानुवाक्यानाम्' (ĀSS.4.8.) इति Sy.
१७. आवरकाणि रक्षःप्रभृतीनि तमांसि वा Sy. पापानि Mah. यजमानस्य वृजिनानि U.
१८. भृशं हन्तु Sy. अत्यर्थं हन्ति Mah., U.
१९. द्रविणं धनं स्तोतॄणामिच्छन् । यद्वा हविर्लक्षणं धनमात्मन इच्छन्नग्निः Sy. द्रविणो धनमिच्छति द्रवणस्यति. . . .हविर्लक्षणं धनमिच्छन् Mah. धनं हविर्लक्षणमिच्छन् U.
२०. सम्यग्दीप्तः Sy. दीप्तः Mah., U.
२१. अत एव शुक्लवर्णः Sy. शुक्रः शुद्धः Mah. शुक्लः U.

आहुतः[1]।

गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे। सीदन्नृतस्य योनिमा ॥ ३५ ॥

गर्भे[3]। द्यावापृथिव्योः[4]। गर्भे[5] अन्तरिक्षे[6]। पालयिताग्निः[7]। विद्योतमानः[8]। उदकम्[9]। आच्छादयन्ति[10]।

अक्षं प्रजावदा भर जातवेदो विचर्षणे। अग्ने यद्दीदयद्दिवि ॥ ३६ ॥

ब्रह्म[11]। अन्नम्। प्रजायुक्तम्[12]। देहि[13]। जातवेदः[14]। विद्रष्टः[15]! अग्ने! यत्[16]। दीप्यते[17]। दीप्ते त्वयि[18]।

उप त्वा रण्वसंदृशं प्रयस्वन्तः सहस्कृत। अग्ने ससृज्महे गिरः ॥ ३७ ॥

उप त्वा। उप[19] ससृज्महे[20]। त्वाम्। रमणीयसन्दर्शनम्[21]। अन्नवन्तः[22]। हे सहसोत्पादित[23]! अग्ने!

स्तुतीः[24]।

उपच्छायामिव घृणेरगन्म शर्म ते वयम्। अग्ने हिरण्यसंदृशः ॥ ३८ ॥

उपच्छायाम्। उपगच्छाम। छायामिव[25]। तेजः[26]। सुखम्[27]। अग्ने! हिरण्यरूपस्य[28]। तव[29]।

---

१. हविर्भिरभिहुतः Sy. निमन्त्रितः Mah. अभिहुतः सन् U.

२. VM. ignores विपन्यया ॥ स्तुत्या स्तूयमानः Sy. पनतिरर्चतिकर्मा। विविधया पूजया पापं हन्ति Mah. विपनिरर्चतिकर्मा। यजमानपूजया निमित्तभूतया U.
This stanza=YV.33.9.=TS.5.5.6.1.

३. गर्हे P. हे D.

४. अत्र मातृपितृशब्दाभ्यां भूर्द्यौश्चाभिधीयेते 'द्यौर्मे पिता पृथिवी माता' (RV.1.191.6.) इति श्रुतेः मातुर्भूम्याः Sy.

५. गर्भस्थाने मध्ये Sy.

६. क्षरणरहिते वेद्याख्ये स्थाने Sy.

७. द्युलोकस्य पालयिता हविषां प्रदानेन एवम्भूतोऽग्निः Sy.

८. ०ना P. विशेषेण दीप्यमानः Sy.

९. ०दकेम् P. VM. seems to explain ऋतस्य and योनिम् together as उदकम् ॥ उत्तरवेद्याख्यं धिष्ण्यम्। सप्तम्यर्थे द्वितीया Sy.

१०. ०न्ति P. आ सीदन् उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घ्नदिति सम्बन्धः Sy.

११. ०ह्मा P.

१२. पुत्रपौत्रसहितम् Sy.

१३. आहर Sy.

१४. हे जातानां वेदितः! Sy.

१५. विशेषेण द्रष्टरग्ने! Sy.

१६. ब्रह्म Sy.

१७. देवेषु मध्ये यत्प्रशस्तमन्नं राजते तदाहरेत्यर्थः Sy.

१८. द्युलोके Sy.

१९. प्रति Sy.

२०. सृज्म P. सृज्महे D. विसृजामः। उच्चारयाम इत्यर्थः Sy.

२१. रमणीयसन्दर्शनं स्तोतव्यसन्दर्शनं वा Sy.

२२. हविर्लक्षणान्नवन्तो वयम् Sy.

२३. हे सहसा बलेनोत्पन्न! Sy.

२४. स्तुहि P.

२५. तत्र दृष्टान्तः। यथा घर्मार्ताः सन्तप्ताश्छायामुपगच्छन्ति तद्वत् Sy.

२६. दीप्तस्य Sy.

२७. शरणमाश्रयणम् Sy.

२८. हितरमणीयतेजसो हिरण्यवद्रोचमानतेजसो वा Sy.

२९. VM. ignores वयम्।

य उग्रइंव शर्य॒हा ति॒ग्मशृं॑ङ्गो न वंसंगः । अग्ने॒ पुरो॑ रु॒रोजि॑थ ॥ ३९ ॥

य उग्रः । [illegible] । उद्गूर्ण इव वीरः[3] । शत्रुहिंसकानां[4] हन्ता । तीक्ष्णशृङ्गः[5] । इव च । ऋषभः[6] । अग्ने । [illegible] । रुरोजिथ[8], पूर्ववत् सम्बन्धः उत्तरत्र वा[9] ।

आ यं हस्ते॒ न खा॒दिनं॒ शिशुं॑ जा॒तं न बिभ्र॑ति । वि॒शाम॒ग्निं स्व॑ध्व॒रम् ॥ ४० ॥

आ यम् । [illegible] । हस्ते[12] । खादिनम् आयुधम्[13] । धारयन्ति[14] । यथा वा[15] । जातम्[16] । शिशुम्[17] एवम् । [illegible] बिभ्रति । विशाम्[19] । अग्निम् । सुयज्ञम्[20], उत्तरत्र सम्बन्धः[21] ।

---

१. उपमदि प्रातःकालीनस्याग्नेयस्य 'य उग्रइव' इति याज्या । सायङ्कालीनस्य त्वेषैवानुवाक्या । सूत्रितञ्च—'अग्निर्वृत्राणि जङ्घनद्य उग्रइव शर्यहा' (ĀSS. 4.8.) इति Sy.

२. अग्निः Sy. हे अग्ने ! यस्त्वम् BB.

३. ०रा P. उद्गूर्णबलो धन्वीव Sy. उद्गूर्णबलतयोग्र इव भवसि BB.

४. शर्यैर्बाणैः शत्रूणां हन्ता Sy. छान्दसः कर्तरि कृत्यः। 'तत्र साधुः' इति यत्। शर्याणां हिंसकानां हन्ता शर्यहा । छान्दसो डः । भ्रातृव्याणां हन्ता वृष्टेरुत्पादनेन वा सर्वाभिमतकारी BB.

५. तीक्ष्णज्वालस्तिग्मशृङ्ग इव BB.

६. वननीयगतिर्वृषभ इव Sy. वननीयानि वनानि गच्छति वनसङ्गः । वननीयेषु वनेषु सक्त इति वा वनसङ्गः । पृषोदरादित्वादिष्टस्वरूपलाभः BB.

७. आसुरीस्त्रिस्रः पुरीः Sy. असुराणां पुरीर्मेघान्वा BB.

८. ०थः D. भग्नवानसि । 'रुद्रो वा एष यदग्निः' (TB. 2.1.3.1.) इति श्रुतेः । रुद्रकृतमपि त्रिपुरदहनमग्निकृतमेवेत्यग्निः स्तूयते । यद्वा त्रिपुरदहनसाधनभूते बाणेऽग्नेरनीकत्वेनावस्थानादग्निः पुराणि भग्नवानित्युच्यते । 'देवासुरा वा एषु लोकेषु समयतन्त' (AB. 1.23.) इत्यादिकं ब्राह्मणमनुसन्धेयम् Sy. एवं मृगवत्सौम्यस्वभाव उग्रस्वभावश्च त्वम्. . . . रुरोजिथ, अघाक्षीः BB.

९. इव P.

This stanza=TS. 2.6.11.4.

१०. अग्निमन्थने जायमानेऽग्नौ 'आ यं हस्ते' इत्येषानुवाक्या । सूत्रितञ्च 'आ यं हस्ते न खादिनमित्यर्धर्च आरमेत्' (ĀSS.2.16.) इति Sy.

११. पूर्वो नशब्दः पुरस्तादुपचारोऽप्युपमार्थीयः, यद्वा सम्प्रत्यर्थे, सम्प्रतीदानीम् Sy.

१२. हस्तेषु Sy. अञ्जलौ BB.

१३. भक्षकं व्याघ्रादिमिव । यथा तं बिभ्रतः पुरुषा अवहितास्तथाभूता इत्यर्थः । खादिनं हविषां भक्षकम् Sy. 'ससाधनां क्रियामुपसर्ग आह' इत्यागतोऽग्निरुच्यते । आगतमेवाग्निं बिभर्ति, न खादिनं हविर्भुञ्जानं ज्वलदवस्थमित्यर्थः BB.

१४. अभिमुखं धारयन्त्यध्वर्यवः Sy. विभक्तिवचनव्यत्ययः BB.

१५. इव BB.

१६. यथाऽऽहुः—'जातमध्वर्युरञ्जलिना गृह्णाति' BB.

१७. पुत्रम् Sy. यथा मात्रादयो जातमात्रमेव शिशुं हस्ते बिभ्रति BB.

१८. मन्थनोत्पन्नं यमग्निम् Sy. यमग्निमध्वर्युः BB.

१९. विश्वाम् P., D. जनानाम् Sy. मनुष्याणाम् BB.

२०. शोभनयागस्य निष्पादकं तमग्निं हे ऋत्विजः ! परिचरतेति शेषः Sy. शोभनयज्ञम् । अवितथफलसाधनत्वात् । . . . . सोऽयमग्निरुदजनीति BB.

२१. VM. ignores आ ।

This stanza=TS.3.5.11.4.

**प्र दे॒वं दे॒ववी॑तये॒ भर॑ता वसु॒वित्त॑मम् । आ स्वे योनौ॒ नि षी॑दतु ॥ ४१ ॥**

प्र[1] देवम्[2]। प्रभरत[3] आहवनीये[4]। देवम्। देवानां भक्षणाय[5]। वसूनां धनानां लम्भयितारम्[6]। अभिनिषी-दतु[7] सः[8]। स्वे। स्थाने[9] आहवनीये।

**आ जा॒तं जा॒तवे॑दसि प्रि॒यं शि॑शी॒ताति॑थिम् । स्यो॒न आ गृ॒हप॑तिम् ॥ ४२ ॥**

आ जातम्। [illegible]त्र हरणे[10] दृष्टः 'जात इतरो जातवेदाः'[11] इत्यादिब्राह्मणम्[12]।

**अग्ने॑ यु॒क्ष्वा हि ये तवाश्वा॑सो देव सा॒धवः॑ । अरं॑ वह॑न्ति म॒न्यवे॑ ॥ ४३ ॥**

अग्ने। अग्ने! रथे युङ्क्ष्व[13] तान्[14]। ये। तव[15]। अश्वा[16]। देव[17]! साधयितारः[18]। पर्याप्तम्[19]।

---

१. अग्निसन्धने जातस्याग्नेराहवनीये प्रहरणसमये 'प्र देवं देववीतये' इति तृचोऽनुवक्तव्यः। सूत्रितञ्च 'प्र देवं देववीतय इति द्वे अग्निनाग्निः समिध्यते' (ĀŚS.2.16.) इति Sy.

२. हे अध्वर्यवः ! Sy.

३. प्रहरत। आहवनीयेऽग्नौ प्रक्षिपत Sy. सांहितिकं दीर्घत्वम् BB.

४. ०नीयमेवं P. द्योतमानम् Sy. देवमग्निम् U.

५. देवानां भक्षणार्थम्। तथा च ब्राह्मणम् 'प्र देवं देववीतये भरता वसुवित्तममिति प्रह्रियमाणायाभिरूपा यद्यज्ञेऽभिरूपं तत् समृद्धम्' (AB.1.16.) इति Sy. देवानां यागाय देवा वियन्ति भुञ्जन्तेऽस्मिन्निति BB.

६. वसूनां धनानां वेदयितारं लम्भयितारमग्निम् Sy. धनानां लब्धृतमम् BB.

७. अभिनिषण्णो भवतु Sy. आगत्यास्ताम् BB.

८. चाग्निः Sy. अयम् BB.　　९. कारणे स्थान आहवनीये। ब्राह्मणं च भवति—'एष ह वा अस्य स्वो योनिर्यदग्निरग्नेः' (AB.1.16.) इति Sy. योनावाहवनीयस्थान आहवनीये BB. This stanza=TS.3.5.11.4.

१०. ०त्राहर० P.　　११. AB.1.16.

१२. VM. does not explain the stanza. हे अध्वर्यवः ! जातं प्रादुर्भूतमतिथिम्। लुप्तोपममेतत्। अतिथिमिव प्रियम्। अत एव गृहपतिं गृहाणां स्वामिनमग्निं जातवेदसि जातप्रज्ञे स्योने सुखकर आहवनीयेऽग्नावा शिशीत। अन्तर्णीतण्यर्थस्य शीङ एतद्रूपम्। शाययत। स्थापयत। यद्वा 'श्यैङ् गतौ' इत्यस्य छान्दसं रूपम्। गमयत। प्रापयतेत्यर्थः। 'शो तनूकरणे' इत्यस्य वा रूपम्। श्यत तीक्ष्णीकुरुत। संस्कुरुत। प्रहरतेति यावत्। द्वितीय आकारः पूरकः। 'जात इतरो जातवेदा इतरः' (AB.1.16.) इत्यादिकं ब्राह्मणमत्रानुसन्धेयम् Sy. जातमिममग्निं जातवेदसि, आहवनीयेऽग्नौ। आशिशीत, आनीय तीक्ष्णं कुरुत। अध्यर्थे वाऽऽकारः। आहवनीयस्योपरि तीक्ष्णं कुरुतेति। ज्वालावत्तीक्ष्णत्वं महत्त्वं वा प्रियमतिथिमिव, यथा प्रियमतिथिमागतं पूजया तर्पयन्त्येवममुं गृहपतिं गृहाणां पातारमग्निं स्योने स्थाने वा आशिशीत। आकारस्समुच्चये। शेतेर्लोटि शपश्श्लुः BB. This stanza=TS.3.5.11.4.

१३. युङ्क्ष्व P. युंक्ष्व D. आत्मीये रथे योजय Sy., Mah.　१४. तन् D. अश्वान् Sy., Mah.

१५. त्वदीयाः Sy. तव स्वभूताः U.

१६. अश्च P. हयाः Mah. अश्वा एवाश्वासः U.

१७. हे द्योतमान ! Sy. हे देव ! दीप्यमान ! Mah. हे देव ! दानादिगुणयुक्त ! U.

१८. साधकाः सुशीला वा Sy. साधवो दान्ताः Mah. जातिगुणसमन्विताः प्रशस्ताः U.

१९. अलं पर्याप्तम् Sy. अलमत्यर्थम् Mah.

अपहन्ति[1] । स्तुवन्ति[3] ।

**अच्छा नो याह्या वहाभि प्रयांसि वीतये । आ देवान्त्सोमपीतये ॥ ४४ ॥**

अच्छ[4] । अभिगच्छ[5] । अस्मान् । अभ्यावह[6] च । अन्नानि[7] । भक्षणाय[8] । आवह च । देवान् ।

सोमपानाय ।

**उदग्ने भारत द्युमदजस्रेण दविद्युतत् । शोचा वि भाह्यजर ॥ ४५ ॥**

उदग्ने । उच्छोच[10] । अग्ने ! 'एष वा एष प्राणो भूत्वा प्रजा बिभर्त्ति तस्मादाह भारतः[11]' इति वाजसनेयकम् । दीप्तियुक्तम्[12] । अजस्रेण शोचिषा[13] । अत्यन्तं दीप्यमानः[14] । विभाहि[15] च । जरारहित[16] !

**वीती यो देवं मर्तो दुवस्येदग्निमीळीताध्वरे हविष्मान् ।**
**होतारं सत्ययजं रोदस्योरुत्तानहस्तो नमसा विवासेत् ॥ ४६ ॥**

वीती[17] । हविषा[18] । यः । देवम्[19] । मर्तः[20] । परिचरति[21] । स हविष्मान्[22] । अग्निम् । स्तोतुमर्हति[23] ।

---

१. आवहन्ति is suggested for अपहन्ति ॥ वहन्ति Sy. प्रापयन्ति देवानिति शेषः Mah.

२. मन्यते यष्टव्यत्वेन देवानत्रेति मन्युर्यागः । तदर्थं तानश्वान् रथे युङ्क्ष्वेत्यर्थः Sy. यज्ञाय Mah. दीप्तये क्रोधाय वा U.

३. VM. ignores हि ॥ खलु Sy. हिः पादपूरणः Mah. हिशब्दः पादपूरणः U. अग्ने युक्ष्वा हि ये तव । युक्ष्वा हि देवहूतमानिति युक्तवतीभ्यामिदमेवैतद्योनौ रेतो युनक्ति तस्माद्योनौ रेतो युक्तं न निष्पद्यते SB. 7.5.1.33.p.613.

This stanza=YV.13.36.=TS.5.5.3.1.

४. हे अग्ने ! Sy.

५. आभिमुख्येनागच्छ Sy.

६. अभिलक्ष्य देवानावह Sy.

७. हविर्लक्षणान्यन्नानि Sy.

८. तेषां हविषां स्वादनार्थम् Sy.

९. सोमपानार्थं च Sy.

१०. उद्गततरं दीप्यस्व । तदेव विवृणोति Sy.

११. हे भारत ! हविषां भर्तः ! Sy.

१२. द्युमता दीप्तिमता । 'सुपां सुलुक्०' इति तृतीयाया लुक् Sy.

१३. अविच्छेदेन तेजसा Sy.

१४. भृशं द्योतमानस्त्वम् Sy.

१५. विशेषेण प्रकाशस्व । यद्वा भातिरत्रान्तर्णीतण्यर्थः । त्वं प्रथममुद्दीप्यस्व । पश्चादात्मीयेन तेजसा सर्वं जगत् प्रकाशयेति योजनीयम् Sy.

१६. रहि० P. ०तः D.

१७. वीतिः P., D.

१८. वीत्या कान्तेन हविर्लक्षणेनान्नेन Sy.

१९. यङ्कञ्चन देवम् Sy.

२०. मनुष्यः Sy.

२१. परिचरेत् Sy.

२२. हविर्भिर्युक्तो यजमानः Sy.

२३. स्तुवीत । सर्वेषु यागेष्वग्निः पूज्यत इत्यर्थः Sy.

यज्ञे । हविर्वहनाय होतारम् । सत्येन यष्टारम् । द्यावापृथिव्योः । उत्तानहस्ताः यजमानाः । नमस्कारेण हविषा वा । परिचरेदिति ।

**आ ते॑ अग्न ऋ॒चा ह॒विर्हृ॒दा त॒ष्टं भ॑रामसि ।**
**ते ते॑ भवन्तू॒क्षण॑ ऋष॒भासो॑ व॒शा उ॒त ॥ ४७ ॥**

[आ ते ।] आभराम । त्वदर्थम् । अग्ने ! ऋचैव । हविः मेयमृक् भवतु हविः समर्पितम् । तच्चेदं हविर्हृदयेन । संस्कृतम्, हृदयेन हि स्तोत्रं क्रियते । ते । ते । भवन्तु । उक्षादयो मदीया स्तुतिः उक्षादिसमा भवन्तु इति समुदायार्थः । इत्थमियमाश्वलायनगृह्ये व्याख्यातेति । तत्रोक्षादिभिः सामानाधिकरण्यात् तच्छब्दस्य लिङ्गवचनभेदः ।

**अ॒ग्निं दे॒वासो॑ अग्रि॒यमि॒न्धते॑ वृत्र॒हन्त॑मम् ।**
**येना॒ वसू॒न्याभृ॑ता तृ॒ळ्हा रक्षां॑सि वा॒जिना॑ ॥ ४८ ॥**

अग्निम् । अग्निम् । देवाः । मुख्यम् । इन्धते । वृत्रस्य हन्तारम् । येन । धनानि । आहृतानि स्तोतृभ्यः । येन च तृळ्हानि । रक्षांसि । बलिनेति ।

एकोनत्रिंशमध्यायं व्याचकारेति माधवः ।
नदीमाश्रित्य निवसन् कावेरी लोकमाश्रिताम् ।

---

१. आह्वातारम् Sy.
२. सत्येनावितथेन हविषा यष्टारम् Sy.
३. द्यावापृथिव्योर्लोकद्वये वर्तमानानाम् Sy.
४. किञ्चायं यजमानः उत्तानहस्तः कृताञ्जलिपुटः सन् Sy. ५. नमस्कारेण हविषा वा Sy.
६. The *pratīka* is supplied by the Editor.
७. अनयाध्ययनं प्रशस्यत इत्याश्वलायनो मन्यते (AGS.1.1.5.) Sy.
८. आहरामः Sy.
९. P. reads अग्न चव for अग्ने ऋचैव ॥ ऋग्रूपेण वर्तमानम् Sy.
१०. ऋचमेव हविः कृत्वा Sy.
११. समन्ति P. १२. संस्तुम् P.
१३. त इति तच्छब्देन प्रकृतमृग्रूपं हविः परामृश्यते । प्रतिनिर्दिश्यमानापेक्षया पुंस्त्वबहुत्वे । ऋग्रूपं तद्धविः Sy. १४. तुभ्यम् Sy.
१५. ०वन्त्राक्षा० D. आदि refers to ऋषभासः and वशाः ॥ उक्षाणः सेचनसमर्थाः, ऋषभाः वशाश्च भवन्तु । ऋषभवशारूपेण परिणतं सत् त्वद्भक्षणाय भवत्विति शेषः Sy.
१६. दयो समां D. उक्षादिसमाः is suggested for उक्षादिसाम ।
१७. VM. ignores उत ॥ अपि च Sy.
१८. इन्थते P. इद्धते D. दीपयन्ति Sy.
१९. अतिशयेन वृत्रस्य हन्तारम् Sy.
२०. अग्निना Sy. २१. असुरैरपहृतानि धनानि हविर्लक्षणान्यन्नानि वा Sy.
२२. असुरसकाशाद्यजमानाद्वाहृतानि Sy.
२३. तृर्णानि P. तृष्णानि D. तृढानि हिंसितानि तमग्निमिन्धत इत्यन्वयः Sy.
२४. यज्ञविरोधीनि Sy. २५. बलवताग्निना Sy.

# [ अथ षष्ठोऽध्यायः ॥ ]

अथ[1] 'पिबा सोममभि'[2] व्याचिख्यासति माधवः ।
पादे समाप्ते वक्तव्यं पूरणेषु प्रदर्शयन् ॥१॥

तस्मिन् पादे यदा पश्येत् तमेवाविकृतं[3] पुनः ।
तं पादपूरणं ब्रूयादिति वृद्धेभ्य आगतः ॥२॥

किमुदाहरणं तत्र तु[4] 'यातिं देवः प्रवता'[5] ।
नापि 'ये चाकनन्त'[6] इति भिन्ने वाक्ये यतस्तयोः[7] ॥३॥

'आ याहि पूर्वीरति'[8] इति पादो[9] नात्र निदर्शनम् ।
दृश्यते[10] पूरणो ह्येष आकारः केवलोऽपि सन् ॥४॥

'त्वमग्ने[11] व्रतपा[12] असि'[13] मन्त्रस्तत्र निदर्शनम् ।
तत्र प्रथम आकारो निरर्थक इति स्थितिः ॥५॥

ननु देवस्त्वमागत्य[14] मर्त्येष्वपि[15] च वर्तसे[16] ।
इति मार्थोऽत्र आकार इदं तस्मिन्निदर्शनम् ॥६॥

'अयं नो अस्तु हर्यतः'[17] 'को वो वर्षिष्ठ[18] आ नरः'[19] ।
निपातव्यतिरेकेण[20] तस्माद्[21] द्वौ च निदर्शनम् ॥७॥

---

१. ०था P.
२. ०मपि D. RV.6.17.1[a]
३. ०श्येत्तमेपापिकृ० P. ०श्येत्तमेवा० D.
४. नः P.   ५. प्रपता P. RV.I.35.3.
६. यें पाकन० D. येञ्चाकन० P. RV.V. 31.13.
७. याति देव उद्वतेति भिन्ने वाक्ये यतस्ततः R.
८. ०रिती० RV.III.43.2.
९. पादे नात्र निधानम् P.
१०. दृश्यन्ते P., D.
११. P., D. add स before त्वम् ।
१२. प्रतपा P. प्रतापा D.
१३. P., D. add इति after असि । RV. VIII. 11. 1.
१४. देवस्त्वानत्य D.
१५. अपि is omitted by D.
१६. P. reads ननु देवानेष्विति पूरणं देवस्त्वा ननत्यं मर्त्येषु च वर्तसे for the third and fourth *pādas*.
१७. हर्यन्त P. ०त D. RV.III.44.1.
१८. वर्षी D.   १९. ०रा D. RV.I.37.6.
२०. ०तो व्य० P., D.   २१. ०स्माद्वाच्च P., D.

स यन्ता विप्र[1] एषां स यज्ञानामथा हि षः ।
पादे द्वितीये तच्छब्द एकस्तर्ह्यस्मिन् पूरणः[3] ॥८॥
'अस्मा एतन्मह्याङ्गूषम्[4]' एकोऽस्मा इति पूरणः ।
सर्वनामानि पादेषु समानेष्विति पूरणम् ॥९॥
नास्ति निर्वचनं येषां[6] रूपभेदे ऽपि तान् विदुः ।
पूरणानेव कवय 'एमेनं सृजता सुते[7]' ॥१०॥
'स यजात्[8] सेदु होता[9]' इति समानार्थाविदू[10] श्रुतौ ।
तत्रैकं पूरणं विद्याद् बहवः सन्ति तादृशाः ॥११॥
अद्धेत्थेति[11] द्वौ पठितौ सत्यनामसु वैदिकैः[12] ।
न तावत्यन्त[13]पर्यायौ सत्येनेति[14] विपश्चितः ॥१२॥
'सत्यमद्धा नकिरन्यः[15]' 'सत्यमित्था वृषेदसि[16]' ।
सत्यं तथा सत्यमित्थमित्यर्थ[17]स्तत्र दर्शितः[18] ॥१३॥
'पुत्रिणा ता कुमारिणा[19]' कुमारा अर्भका इति ।
न पौनरुक्त्यमत्रास्ति तेनैको नात्र पूरणः ॥१४॥
उदाहरणविद्विप्रः परिषत्सु न सीदति[20] ।
प्रदर्शितास्ततो ऽस्माभिरित्थं[21] नानाविधा ऋचः । इति[22] ॥१५॥

---

१. स यन्ता विप्र एषां स यन्ता विप्र एषां P. स यन्ता विप्र येषां स यन्ता विप्र एषां D.
२. RV. III.13.3.
३. ०णं P.
४. RV. VI.34.5.
५. ०ह्यावगूषं स्विन्यकास्मा P. ०ह्याद्रषस्मिस्मकास्मा D.
६. तद् P., D.
७. RV.I.9.2.
८. यजान् P., D.
९. RV.X.2.3.
१०. समात्थीविदुः P. समर्थाविदू D.
११. अत्थेत्थेति P., अद्धेत्थेति D. Ngh. 3.10.
१२. वैकः P., D.
१३. ०त्यान्त P.
१४. सत्येतेनिहेति P.
१५. Omitted by P., D. RV. I. 52. 13.
१६. RV. VIII.33.10.
१७. ०मित्य इत्यर्थ० P. ०मित्थ इत्यर्थ० D.
१८. निद० D.
१९. RV. VIII.31.8.
२०. नि षीदति for न सीदति P.
२१. ०भि इ० P.
२२. Supplied by the Editor.

VI.17.

**पिबा सोममभि यमुग्र तर्द ऊर्वं गव्यं महि गृणान इन्द्र ।**
**वि यो धृष्णो वधिषो वज्रहस्त विश्वा वृत्रममित्रिया शवोभिः ॥ १ ॥**

[1]पिबा सोमम् ॥ भरद्वाजः ॥ पिब । सोमम् । यं सोमम्[2] । अभि[3] यं पीत्वा । उग्र[4] ! तृणवानसि[5] । गव्यम्[6] । सङ्घम्[7] । स्तूयमानः[8] । इन्द्र ! पणिभिरपहृताः[9] । विविधं[10] च । अवधीः[11] । यस्त्वम् । हे धृष्णो[12] ! वज्रहस्त[13] ! विश्वम् । उपद्रवम्[14] । अमित्रभवम्[15] । बलैः[16] [17] ।

**स ईं पाहि य ऋजीषी तरुत्रो यः शिप्रवान्वृषभो यो मतीनाम् ।**
**यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इन्द्र चित्राँ अभि तृन्धि वाजान् ॥ २ ॥**

[स ईम् ।][18] सः[19] । एनं सोमम् । पिब । यः[20] । ऋजीषेण तद्वान्[21] हर्यरस्य स भागो भवति । तरिता

---

१. चतुर्थाष्टके षष्ठोऽध्याय आरभ्यते । षष्ठे मण्डले द्वितीयेऽनुवाके प्रथमं सूक्तं व्याख्यातम् । तत्र 'पिबा सोमम्' इति पञ्चदशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभम् । अन्त्या द्विपदा त्रिष्टुप् । तथा चानुक्रान्तम् —'पिब पञ्चोनैन्द्रं त्रैष्टुभं द्विपदान्तम्' (KSA.30.17.p.22.) इति । अभिजिति मरुत्वतीयशस्त्र एतन्निविद्धानम् । सूत्रितञ्च—'पिबा सोमं तमु ष्टुहीति मध्यन्दिनः' (ĀSS.8.5.) इति । समूळ्हे दशरात्रेऽष्टमेऽहनि मरुत्वतीयशस्त्र एतत्सूक्तम् । सूत्रितञ्च—'पिबा सोममभि तमस्य द्यावापृथिवी' (ĀSS.8.7.) इति । सूर्यस्तुन्नाम्न्येकाहे मरुत्वतीय एतत्सूक्तं निविद्धानम् । सूत्र्यते हि—'सूर्यस्तुता यशस्कामः पिबा सोममभि' (ĀSS.9.8.) इति । महाव्रतेऽपि मरुत्वतीय एतत्सूक्तम् । तथैव पञ्चमारण्यके सूत्रितम्—'पिबा सोममभि यमुग्र तर्दः कया शुभा सवयसः सनीळाः' (AĀ.5.1.1.) इति । माध्यन्दिने सवन आद्यास्तिस्रो होतृमैत्रावरुणब्राह्मणाच्छंसिनां प्रस्थितयाज्याः । सूत्रितञ्च 'पिबा सोममभि यमुग्र तर्द इति तिस्रोऽर्वाङेहि सोमकामं त्वाहुः' (ĀSS.5.5.) इति Sy.

२. ०बा P. तं सोमं पानं कुरु Sy.

३. यं सोममुद्दिश्य । पातुमित्यर्थः Sy.

४. उग्र P., D. हे उद्गूर्णबलेन्द्र ! Sy.

५. प्रकाशितवानसि । तृर्दिर्हिंसाकर्मात्र प्रकाशनार्थः Sy.

६. गोसम्बन्धि Sy.

७. पणिभिरपहृतं समूहम् Sy.

८. अङ्गिरोभिः स्तूयमानस्त्वम् Sy.

९. पणिभिरपहृतम् as an epithet of सङ्घम् is suggested for पणिभिरपहृताः ।

१०. विविञ्च P., D.

११. व्यवधीः, स त्वं सोमं पिबेति सम्बन्धः Sy.

१२. धृष्टो P. स्रष्टो D. हे शत्रूणां धर्षक ! Sy.

१३. वज्रपाणे ! Sy.

१४. उद्र० D. आवरकम् Sy.

१५. अमित्रं शत्रुम् । अमित्रशब्दाद् द्वितीयैकवचनस्येयादेशः Sy.

१६. बलैः सहितः सन् Sy.

१७. VM. ignores महि ॥ महि महत् Sy.

१८. The *pratīka* is supplied by the Editor.

१९. त्वम् Sy.

२०. यस्त्वम् Sy.

२१. ऋजीषशब्देन गतरसः सोमोऽभिधीयते । तद्वान् Sy.

शत्रूणाम्[1]। यः। महान्[2]। यश्च। स्तोतॄणाम्[3]। वर्षिता[4]। यः[5]। मेघानां[6] भेत्ता[7]। यश्च। हर्योरधिष्ठाता[8]। स त्वम्। इन्द्र! नानारूपान्[9]। पणिभिरपहृतान्। अन्नसाधनान्[10] पशून्। अभितृन्धि[11][12]।

**एवा पाहि प्रत्नथा मन्दतु त्वा श्रुधि ब्रह्म वावृधस्वोत गीर्भिः।**
**आविः सूर्यं कृणुहि पीपिहीषो जहि शत्रूँरभि गा इन्द्र तृन्धि॥ ३॥**

**एवा पाहि**। एवम्[13]। पिबाद्यतनं सोमम्। प्रत्नमिव[14]। स सोमस्त्वाम्[15]। मन्दतु[16]। शृणु। स्तुतिम्[17]। अपि च। वर्धस्व। स्तुतिभिः[18]। आविष्कुरु च। सूर्यम्[19]। कृत्वा चाप्यायय[20]। अन्नानि[21][22] गोलक्षणानि। विनाशय[23] च। पणीन्[24]। तैरपहृता गाश्च[25]। अभितृन्धि[26][27]।

**ते त्वा मदा बृहदिन्द्र स्वधाव इमे पीता उक्षयन्त द्युमन्तम्।**
**महामनूनं तवसं विभूतिं मत्सरासो जर्हृषन्त प्रसाहम्॥ ४॥**

**ते त्वा मदाः**[28]। ते[29]। त्वा[30]। सोमाः[31]। बृहन्तम्[32]। इन्द्र! अन्नवन्[33]! इमे[34]। पीताः[35]। पूरयामासुः[36]।

---

१. शत्रूणां तारकोऽसि Sy.
२. हमन् P. महन् D. शोभनहनुरसि Sy.
३. मतीनां स्तोतॄणाम्। मन्यतेः स्तुतिकर्मणः कर्तरि क्तिच् Sy.
४. ०त P. कामानां वर्षिता स त्वम् Sy.
५. य P. त्वम् Sy.
६. गोत्राणां पर्वतानां मेघानां वा Sy.
७. भोक्ता P.
८. ०धिष्ठता P. स्थातासि Sy.
९. विचित्रान् Sy.
१०. अन्नानि Sy.
११. अस्मभ्यं प्रकाशय Sy.
१२. VM. ignores वज्रभृत्॥ वज्रभृत् वज्रधरः Sy.
१३. एव एवमिममस्मदीयं सोमम् Sy.
१४. प्रयमिव P., D. प्रत्नान् पुराणान् सोमान् यथापिबस्तथा Sy.
१५. स च सोमस्त्वया पीतः सन् Sy.
१६. मदयतु Sy.
१७. अस्माभिः कृतं स्तोत्रम् Sy.
१८. स्तुतिरूपाभिर्वाग्भिः Sy.
१९. वयं सूर्यं यथा पश्येम तथा कुर्वित्यर्थः Sy.
२०. सर्वस्य प्रेरकं देवम् Sy.
२१. अस्मभ्यं प्यायय Sy.
२२. ञानि P.
२३. नाशय Sy.
२४. अस्मत्सपत्नान् Sy.
२५. पणिभिः Sy.
२६. प्रकाशय Sy.
२७. VM. ignores इन्द्र।
२८. ०दा P., D.
२९. इमे पीताः सोमाः Sy.
३०. त्वाम् Sy.
३१. मदकराः Sy.
३२. अत्यन्तम् Sy.
३३. अपि च हे इन्द्र! त्वाम् Sy.
३४. इयम P., D.
३५. ०ता P.
३६. ०सु P., D. सेचयन्तु Sy.

दीप्तिमन्तम[1] । महान्तम्[2] । अनूनम्[3] । बलवन्तम्[4] । विविधभूतिम्[5] । मदकराः । अत्यन्तं हर्षयन्ति[6] । प्रकर्षेण शत्रूणामभिभवितारम् ।

**येभिः सूर्यमुषसं मन्दसानोऽवासयोऽप दृळ्हानि दर्द्रत् ।**
**महामद्रिं परि गा इन्द्र सन्तं नुत्था अच्युतं सदसः परि स्वात् ॥ ५ ॥**

येभिः । यैः सोमैः । मोदमानः[7] । सूर्यम्[8] । उषसं च[9] । असूरैति नाशेन स्थाने[10] ? निवासयति[11] । दृळ्हानि तमांस्यसुरेत्यादिनानि । अवदारयन्[12] । महान्तम् । मेघं वलम्[13] । गाः[14] । परितः । सन्तम्[15] । इन्द्र ! स्वस्मात्[16] । स्थानात् । अच्युतम्[17] । प्रेरय[18][19] ।

**तव क्रत्वा तव तद्दंसनाभिरामासु पक्वं शच्या नि दीधः ।**
**और्णोर्दुर उस्रियाभ्यो वि दृळ्होदूर्वाद्गा असृजो अङ्गिरस्वान् ॥ ६ ॥**

**तव क्रत्वा**[20] । तव[21] । प्रज्ञानेन[22] । तव[23] । कर्मभिश्च । तत् कृतम् , किं तदित्याह । आमासु[25] गोषु[24] । पक्वं पयः[26] । बुद्ध्या[27] । निहितवानसि[28] । विघटितवानसि[29] । द्वाराणि शिलोच्चयस्य । गवार्थम्[30] । दृढानि[31] । तत उदसृजः[32] । ऊर्वात् महतः शिलोच्चयात्[33] । पशून्[34] । अङ्गिरोभिर्युक्तः[35] ।

---

१. महान्तं प्रभूतम् Sy.
२. सर्वैर्गुणैर्न्यूनतारहितम् । सम्पूर्णगुणमित्यर्थः Sy.
३. प्रवृद्धम् Sy.
४. ०तिः P. विभवन्तम् Sy.
५. मदकराः सोमाः Sy.
६. भृशं हर्षयन्तु Sy.
७. मोदमानस्त्वम् Sy.
८. सर्वस्य प्रेरकं देवम् Sy.
९. उसं P. उषोदेवताम् Sy.
१०. अस्तरैति नाशौ P. The reading is doubtful.
११. स्वस्थाने व्यवासयः । अथवा सूर्योषसौ यथा तमांसि विवासयतस्तथाकार्षीः Sy.
१२. अपदारयन् Sy.
१३. पर्वतम् Sy.
१४. पणिभिरपहृताः Sy.
१५. ०तस्यन्तम् P. विद्यमानम् Sy.
१६. स्वकीयात् Sy.
१७. अविचालितं विनाशरहितम् । स्थिरमित्यर्थः Sy.
१८. अनुदः Sy.
१९. VM. explains परि once only.
२०. हे इन्द्र ! Sy.
२१. त्वदीयया Sy.
२२. प्रज्ञया Sy.
२३. त्वदीयैः Sy.
२४. प्रसिद्धं पयः Sy.
२५. अपक्वासु Sy.
२६. परिणतम् Sy.
२७. P., D. read बुयो बुध्या for बुद्ध्या ॥ सामर्थ्येन Sy.
२८. नितरां धारयसि Sy.
२९. उद्घाटितवानसि Sy.
३०. अपि च हे इन्द्र ! त्वं गोभ्यः । गा निर्गमयितुमित्यर्थः Sy.
३१. बलेन पाषाणादिभिर्दृढीकृतानीत्यर्थः Sy.
३२. उदगमयः Sy.
३३. उ० D. समूहात् । गोष्ठादित्यर्थः Sy.
३४. ०यान् D.
३५. गाः Sy.

**प्प्राथ॒ क्षां महि॒ दंसो॒ व्यु१॒॑र्वीमुप॒ द्यामृ॒ष्वो बृ॒हदि॑न्द्र स्तभायः ।**
**अधा॑रयो॒ रोद॑सी दे॒वपु॑त्रे प्र॒त्ने मा॒तरा॑ य॒ह्वी ऋ॒तस्य॑ ॥ ७ ॥**

**पप्राथ** । विपप्रथे[1] । पृथिवीम्[2] । विस्तीर्णाम् । महता । कर्मणा[3] । इन्द्रः[4] । उपास्तभ्नात्[5] च । द्याम्[6] महतीम्[7] । महानिन्द्रः[8] । अथ प्रत्यक्षः—धारयसि[9] । द्यावापृथिवी[10] । ययोर्देवाः पुत्राः । महत्यौ[11] । पुराणे । यज्ञस्य[12] । मातरौ[13] ।

**अध॑ त्वा॒ विश्वे॑ पु॒र इ॑न्द्र दे॒वा एकं॑ त॒वसं॑ दधिरे॒ भरा॑य ।**
**अदे॑वो॒ यद॒भ्यौहि॑ष्ट दे॒वान्त्स्व॑र्षाता वृण॒त इन्द्र॒मत्र॑ ॥ ८ ॥**

**अध** । अध[14] । त्वाम् । विश्वे[15] । देवाः[16] समर्थम्[17] । पुरः[18] । दधिरे[19] । एकम्[20] । बलवन्तम्[21] । वृत्रः[22] । देवान् । अभ्यौहिष्ट[23], पदेरिदं[24] छान्दसं रूपम्, ऊहिर्वा वहिना समः, अभिजगाम । तदा सङ्ग्रामे[25] । अस्मिन्[26] देवाः । इन्द्रम्[27] । वृणते[28][29] ।

---

१. विशेषेण पूरितवानसि । 'प्रा पूरणे' इति धातुः Sy.
२. भूमिम् Sy.
३. कर्मणा D. दंससा कर्मणा Sy.
४. VM. takes इन्द्रः nom. for इन्द्र voc. हे इन्द्र ! त्वम् Sy.
५. उपस्तभ्नासि । निरालम्बं वितिष्ठन्ती द्यौर्यथा न पततीन्द्रस्तथा करोतीत्यर्थः Sy.
६. दिवम् Sy.
७. बृहतीम् Sy.
८. महाँस्त्वम् Sy.
९. पोषणैर्धारयसि Sy.
१०. अपि च त्वं द्यावापृथिव्यौ Sy.
११. यह्वयौ महत्यौ । यद्वा विश्वस्य मातरावृतस्य ब्रह्मणो यह्वी पुत्र्यौ Sy. यहुरित्यपत्यनाम Ngh.2.2. यह्व इति महन्नाम Ngh.3.3.
१२. उदकस्य यज्ञस्य वा Sy.
१३. यातारौ P., D. निर्मात्र्यौ Sy.
१४. अधुनास्मिन्काले Sy.
१५. सर्वे Sy.
१६. वज्रचादयः Sy.
१७. ०मार्त्थं D. १८. पुरस्तात् Sy.
१९. चक्रिरे Sy.
२०. मुख्यम् Sy.
२१. बलवान् P., D. प्रवृद्धं बलवन्तम् Sy.
२२. पुत्रः P. असुरः Sy.
२३. अद्योविष्ट P. सङ्ग्रामार्थमभिगतवान् । 'ओहतिर्गतिकर्मा' Sy.
२४. ०रिष्टं D. वहेरिदम् is suggested for पदेरिदम् ।
२५. किञ्चास्मिन् काले स्वर्षातौ सङ्ग्रामे Sy.
२६. अस्मिन् काले Sy.
२७. इदं P., D.
२८. सम्भजन्ते स्म मरुत इति शेषः । मरुतो हीन्द्रं देवेषु पलायितेषु समभजन्नित्यर्थः । अधुना पुरो दधिर इति सम्बन्धः Sy.
२९. VM. ignores इन्द्र । भराय and यत् ॥ हे इन्द्र ! भराय सङ्ग्रामाय । यद् यदा Sy.

अध॒ द्यौश्चि॑त्ते अप॒ सा नु वज्रा॑द्द्वि॒तान॑मद्भि॒यसा॒ स्वस्य॑ म॒न्योः ।
अहिं॒ यदिन्द्रो॑ अ॒भ्योह॑सानं॒ नि चि॑द्वि॒श्वायुः॑ श॒यथे॑ ज॒घान॑ ॥ ९ ॥

[अध ।][1] अध[2] वृत्रे हते । द्यौः[3] । इव[4] । सा[5] । क्षिप्रम्[6] । द्विधा[7] । अपानमत्[8] । तव[9] । वज्रात्[10] । बिभ्यती[11] । त्वदीयस्य[12] । क्रोधस्य[13] । अहिम्[14] । यदा । इन्द्रः । आभिमुख्येन निजघान[15] । गच्छन्तम्[16] । सर्वगामी[17] । पृथिव्यां शाययितुम्[18][19] ।

अध॒ त्वष्टा॑ ते म॒ह उ॑ग्र॒ वज्रं॑ स॒हस्र॑भृष्टिं ववृतच्छ॒ताश्रि॑म् ।
निका॑मम॒रम॑णसं॒ येन॒ नव॑न्त॒महिं॒ सं पि॑णगृजीषिन् ॥ १० ॥

अध त्वष्टा[20] । अध[21] । त्वष्टा[22] । ते[23] महतः । उद्गूर्ण[24] ! वज्रम् । सहस्रधारम् । शताश्रिम्[25] । वर्तयामास प्रदात्[26] । अथ निर्वर्तितकामम्[27] । पर्याप्तमनसम्[28] । येन वज्रेण । अभिगच्छन्तम्[29] । अहिम्[30] । पिष्टवानसि[31] । ऋजीषिन्[32][33] !

---

१. The *pratīka* is supplied by the Editor.

२. अधुनास्मिन् काले Sy.

३. द्युलोकः Sy.

४. अपि, (द्वितीयः) चिदिति पूरणः Sy.

५. प्रसिद्धा देवानामाश्रयत्वेन Sy.

६. नु इति पूरणः Sy.

७. द्विप्रकारात् Sy.

८. अवनमदत P. अपनमेदेत D. अपननाम Sy.

९. त्वदीयात् Sy.

१०. ०ज्रात् D.

११. भयेन Sy.

१२. आत्मीयात् Sy.

१३. क्रोधाच्च Sy.

१४. वृत्रम् Sy.

१५. D. adds न after निजघान ॥ न्यवधीत् Sy.

१६. अभिगच्छन्तम् Sy.

१७. बह्वन्नः Sy.

१८. शयननिमित्ते । मरणायेत्यर्थः । यदा वृत्रं जघानास्मिन् काले द्यौर्ननामेति सम्बन्धः Sy.

१९. VM. explains चित् once only.

२०. त्वाष्टा D.

२१. अधुना Sy.

२२. देवशिल्पी Sy.

२३. तव Sy.

२४. हे उद्गूर्णबलेन्द्र ! Sy.

२५. शतपर्वाणम् Sy.

२६. प्रादात् is suggested for प्रदात् ॥ न्यवर्तयत् । निष्पन्नं कृतवान् Sy.

२७. नियतः कामो यस्य तम् Sy.

२८. शत्रूणामरमभिगन्तृ मनो यस्य तम् Sy.

२९. शब्दायमानम् Sy.

३०. वृत्रमसुरम् Sy.

३१. सम्पिष्टवानसि । तं वज्रं कृतवानित्यर्थः Sy.

३२. अभिगच्छपिष्टाचाग्नस्यृजनषीन् P. ऋजन्नषीत् D. हे गतरससोमवन् ! इन्द्र ! त्वम् Sy.

३३. VM. ignores सम् ।

वर्धा॒न्यं विश्वे॑ म॒रुतः॑ स॒जोषाः॒ पच॑च्छ॒तं म॑हि॒षाँ इ॑न्द्र॒ तुभ्य॑म् ।
पू॒षा विष्णु॒स्त्रीणि॒ सरां॑सि धाव॑न्वृत्र॒हणं॑ म॒दिर॑मं॒शुम॑स्मै ॥ ११ ॥

वर्धान्[1] । अवर्धयन्[2] । यम्[3] । विश्वे[4] । मरुतः[5] । सङ्गताः[6] । तस्मै तुभ्यं वृत्रवधाय । शतम्[7] । महिषान्[8] । अपचत्[9] । पूषा । विष्णुश्च[10] । तथा त्रीणि । सरांसि[11] । अधावयन्[12], तदेवाह—वृत्रहणम्[13] । मदकरम् । अंशुम्[14] । इन्द्राय[15] ।

आ क्षोदो॒ महि॑ वृ॒तं न॒दीनां॒ परि॑ष्ठितमसृज ऊ॒र्मिम॒पाम् ।
तासा॒मनु॑ प्र॒वत॑ इन्द्र॒ पन्थां॒ प्रार्द॑यो॒ नीची॑र॒पसः॑ समु॒द्रम् ॥ १२ ॥

आ क्षोदः । आसृजः[16] । उदकम्[17] । महत् । वृत्रेण[18] । वृत्रादीनाम्[19] । तदेवाह परितः स्थितम्[20] । अपाम्[21] । ऊर्मिमादृश सृज इति[22] । तासामपाम्[23] । प्रवणाभिमुखस्य वेगस्य[24] । समुद्रम्[25] । अपगन्तुम्[26] । नीचीनम्[27] । मार्गं[28] च[29] । प्रार्दयः[30] ।

---

१. Omitted by P.
२. वर्धयन् P., D. स्तोत्रैर्वर्धयन्ति Sy.
३. त्वाम् Sy.
४. सर्वे Sy.
५. देवाः Sy.
६. सह प्रीयमाणाः Sy.
७. शतसङ्ख्याकान् Sy.
८. पुंपशून् Sy.
९. पचेत् Sy.
१०. एतन्नामको देवः Sy.
११. अपि चास्मै तुभ्यम् । द्रोणकलशपूतभृदाधवनीयाख्यानि पात्राणि Sy.
१२. अधवयन् P. अधर्षयन् D. अगच्छन् । सोमैः पात्राणि पूर्यन्त इत्यर्थः Sy.
१३. वृत्राणां शत्रूणां हन्तारम् । अत्र वृत्रहञ्शब्देन सोमोऽभिधीयते । पीते हि सति वृत्राणि हन्तुमिन्द्रः समर्थो भवतीति यावत् Sy.
१४. सोमम् Sy.
१५. VM. ignores इन्द्र !
१६. आ समन्तात् सृष्टवानसि येन नद्यः पूर्णाः प्रवहेयुस्तदित्यर्थः Sy.
१७. क्षोद इत्युदकनाम Ngh. I.12.
१८. वृत्रेण परिवृतम् Sy.
१९. ०त्रदी० D. वृत्रेण वृतम् । नदीनाम् । is suggested for वृत्रेण वृत्रादीनाम् ॥ सिन्धूनां सम्बन्धि Sy.
२०. आच्छादितम् Sy.
२१. उदकानाम् Sy.
२२. दृशः seems to be unnecessary. Therefore the reading should be ऊर्मिमासृज इति ॥ समूहं सृष्टवानसि । पुनर्वचनमादरार्थम् Sy.
२३. हे इन्द्र ! तासां नदीनां सम्बन्धिनः Sy.
२४. ०भिमुख्यस्य P. ०भिख्यस्य D. प्रवणानन्वकार्षीरिति शेषः । अन्वित्युपसर्गयोग्यक्रियाध्याहारः Sy.
२५. उदधिम् Sy.
२६. ०न्तु P. अप उदकानि । अपस इत्यप एवार्थे वर्तते Sy.
२७. प्रवणाभिमुखीः वेगयुक्ता इत्यर्थः Sy.
२८. पथो मार्गान् Sy.
२९. प्रादुमयः P. प्रादूर्मयः D. प्रागमयः । अत्रार्दयतिर्नयनकर्मा Sy.
३०. VM. ignores अनु and इन्द्र ॥ हे इन्द्र ! त्वम् । अन्वकार्षीरिति शेषः । अन्वित्युपसर्गयोग्यक्रियाध्याहारः Sy.

एवा ता विश्वा चकृवांसमिन्द्रं महामुग्रमंजुर्यं संहोदाम् ।
सुवीरं त्वा स्वायुधं सुवज्रमा ब्रह्म नव्यमवंसे ववृत्यात् ॥ १३ ॥

एवा ता[1]।[2] एवम्[3]। तानि[4]। विश्वानि[5] कर्माणि । कृतवन्तम् । इन्द्रम्[6]। महान्तम् । उग्रम्[7]। अहिंस्यम्[8]। बलस्य[9] दातारम् । सुवीरम्[10]। त्वाम् । शोभनायुधम् । शोभनवज्रम्[11]। आवर्तयतु । नवतरम्[12]। स्तोत्रम्[13]। रक्षणाय[14]।

स नो वाजाय श्रवस इषे च राये धेहि द्युमत इन्द्र विप्रान् ।
भरद्वाजे नृवत इन्द्र सूरीन्दिवि च स्मैधि पार्ये न इन्द्र ॥ १४ ॥

स नः । सः[15]। अस्मान् । बलाय । कीर्तये[16]। अन्नाय । धनाय । च । कुरु[17]। दीप्तिमतः[18]। मेधाविनः । तथा भरद्वाजे मयि । मनुष्ययुक्तान्[19]। स्तोतॄन् कुरु[20]। दिवि[21]। च[22]। खलु[23]। पारयितव्ये[24] त्वम् । अस्माकम् । इन्द्र ! पारयितेति[25][26]।

अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ १५ ॥

अया[27]। अनया स्तुत्या । अन्नम् । लभेमहि[28]। यच्च देवैर्निहितमस्ति[29]। मदेम[30]। शतहिमाः[31] सुवीराः[32]।

---

१. P., D. repeat एवा ता ।
२. हे इन्द्र ! Sy.
३. एव P., D. उक्तप्रकारेण Sy.
४. प्रसिद्धानि Sy.
५. सर्वाणि कर्माणि Sy.
६. ईश्वरम् Sy. ७. ओजस्विनम् Sy.
८. अजरम् Sy.
९. सहसो बलस्य दातारम् Sy.
१०. स्थिरं P. स्त्वीरं D. शोभना वीरा मरुतो यस्य तम् Sy.
११. शोभनवज्रोपेतम् Sy.
१२. नूतनमन्यैरकृतपूर्वम् Sy.
१३. अस्माभिः कृतं स्तोत्रम् Sy.
१४. अस्माकं रक्षणाय Sy.
१५. त्वम् Sy. १६. कीर्ये D. यशसे Sy.
१७. धारय Sy. १८. ०प्तम० P., D.
१९. ०क्तां P. मनुष्यवतः । परिचारकयुक्तानित्यर्थः Sy.
२०. तव स्तोतॄन् पुत्रपौत्रान् कुर्विति शेषः Sy.
२१. Omitted by P.
२२. दिवसे Sy.
२३. म P.
२४. चार० P., D. पारणीये आगामिनि Sy.
२५. अस्माकं रक्षिता खलु भवेत्यर्थः Sy.
२६. VM. explains इन्द्र once only and ignores एधि ।
२७. षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिशस्त्रेऽनुरूपतृचस्य 'अया वाजम्' इति तृतीया । सूत्रितञ्च 'अया वाजं देवहितं सनेमेति स्तोत्रियानुरूपौ' (ĀSS.8.3.) इति Sy.
२८. वयं सम्भजेम Sy.
२९. P., D. read यच्च याच यच्च for यच्च ॥ देवेन द्योतमानेनेन्द्रेण दत्तम् Sy.
३०. हृष्याम Sy.
३१. ०तम्रिमाः D. शतसंवत्सरान् Sy.
३२. शोभनपुत्रोपेता वयम् Sy.

VI.18.

**तमु॑ ष्टुहि॒ यो अ॒भिभू॑त्योजा व॒न्वन्नवा॑तः पुरुहू॒त इन्द्रः॑ ।**
**अषा॑ळ्हमु॒ग्रं सह॑मानमा॒भिर्गी॒र्भिर्व॑र्ध वृष॒भं च॑र्षणी॒नाम् ॥ १ ॥**

तमु ष्टुहि[1] । तम्[2] । एव । स्तुहि । यः[3] । अभिभवितृबलः[4] । भजमानः शत्रून्[5] । अनभिगतः शत्रुभिः[6] । पुरुहूतः[7] । इन्द्रः । अषाळ्हमिति स्पष्टम्[8][9] ।

**स यु॒ध्मः सत्वा॑ खज॒कृत्स॒मद्वा॑ तुविम्र॒क्षो न॑दनु॒माँ ऋ॑जी॒षी ।**
**बृ॒हद्रे॑णु॒श्च्यव॑नो॒ मानु॑षीणा॒मेकः॑ कृष्टी॒नाम॑भवत्स॒हावा॑ ॥ २ ॥**

स युध्मः[10] । सः[11] । युद्धशीलः[12] । दाता[13] । सङ्ग्रामकृत्[14] । सङ्ग्रामवान्[15] । बहूनामामर्शकः[16] । शब्दवान् । ऋजीषी[17] । बृहद्रेणुः[18] महाधूलिः[19] । च्यावयिता[20] । अभवत्[21] । एकः[22] । बह्वीनां मानुषीणाम्[23] । प्रजानाम्[24] । बलवान् ।

---

१. 'तमु ष्टुहि' इति पञ्चदशर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रम्यते—'तमु ष्टुहि' (KSA.30.18.p.22.) इति । अभिजिति निष्केवल्य एतन्निविद्धानम् । सूत्रितञ्च—'तमु ष्टुहीति मध्यन्दिनः' (ĀSS. 8.5.) इति । इन्द्राग्न्योः कुलायनाम्न्येकाहेऽपि निष्केवल्य एतन्निविद्धानम् । सूत्रितञ्च—'तिष्ठा हरी तमु ष्टुहीति मध्यन्दिनः' (ĀSS.9.7.) इति । महाव्रतेऽपि निष्केवल्ये । तथैव पञ्चमारण्यके सूत्रितम्—'तमु ष्टुहि यो अभिभूत्योजाः सुत इत्त्वं निमिश्ल इन्द्र सोम इति त्रीणि' (AĀ.5.2.2.) इति Sy.

२. हे भरद्वाज ! तमेवेन्द्रम् Sy.

३. इन्द्रोऽस्तीति शेषः Sy.

४. अभिभावुकतेजाः Sy.

५. शत्रून् हिंसन् Sy.

६. अभिगतः P. शत्रुभिर्हिंसितः । वनोतेर्निष्ठान्तस्य नञ्पूर्वस्य रूपम् । यद्वा वातेर्वातम् । अनभिगतः Sy.

७. बहुभिराहूतः Sy.

८. ०षाढमि P., D. By. अषाळ्हमिति स्पष्टम् VM. refers to the second hemistich of the stanza.

९. अपि चाभिर्वक्ष्यमाणाभिः गीर्भिः स्तुतिरूपाभिर्वाग्भिस्तमिन्द्रं वर्ध । वर्धय । कीदृशम् ? अषाळ्हमनभिभूतम्, उग्रमुद्गूर्णमोजस्विनं वा सहमानं शत्रूनभिभवन्तं चर्षणीनां प्रजानां सम्बन्धिनं वृषभं वर्षितारम् Sy.

१०. यध्म P. युध्म D.

११. इन्द्रः Sy.

१२. योद्धा Sy.

१३. सत्वा दाता । सनोतेरिदं रूपम् Sy.

१४. स्नग्रा० D. खजानां सङ्ग्रामाणां कर्ता Sy. खज इति सङ्ग्रामनाम Ngh. 2.17.

१५. यजमानैः सह मदः समत् तद्वान् Sy.

१६. तुविम्रक्षः, म्रक्षतिः संस्नेहनकर्मा । तुवीनां बहूनां वर्षणेन संस्नेहनकर्ता Sy.

१७. ऋजीषशब्देन सवनद्वयाभिषुतः पुनस्तृतीयसवनेऽप्यभिषुतः सोम उच्यते । तद्वान् Sy.

१८. ०णुम् P. बृहतो महतो रेणोः पांसोरुत्थापकः । सङ्ग्रामेष्विति यावत् Sy.

१९. ०ली D.

२०. अभिगन्ता Sy.

२१. आसीत् Sy.

२२. मुख्यः Sy.

२३. मनोः सम्बन्धिनीनाम् Sy.

२४. व्रजानम P. प्रजानां यजमानानाम् Sy.

त्वं ह नु त्यदंदमायो दस्यूँरेकः कृष्टीरवनोरार्याय ।
अस्ति स्विन्नु वीर्यं१ तत्त इन्द्र न स्विदस्ति तदृतुथा वि वोचः ॥ ३ ॥

त्वं[1] ह नु[2] । त्वम्[3] । खलु । एतत्[3] । दस्यून्[4] । अदमयः[5] । असहाय एव[6] । अवधीः[7] । प्रजाः[8] । यजमानाय[9] शत्रुभूताः[10] । वीर्यम्[11] । इन्द्र ! इदानीम्[12] । तव । अस्ति[13] । स्वित्[14] । आहोस्वित्[15] । न । अस्ति । तत्[16] । सम्प्रति[17] । विस्पष्टं ब्रूहि[18] ।[19]

सदिद्धि ते तुविजातस्य मन्ये सहः सहिष्ठ तुरतस्तुरस्य ।
उग्रमुग्रस्य तवसस्तवीयोऽरध्रस्य रध्रतुरो बभूव ॥ ४ ॥

सदिद्धि[20] । विद्यमानम् । एव । तव । बहुजनस्य[21] । जानामि[22] । बलम् । अतिशयेन बलवन्[23] ! हिंसितुः[24] । हिंसकस्य[25] । उद्गूर्णम् । उद्गूर्णस्य[26] । वृद्धस्य[27] । अतिशयेन वृद्धं तत्[28] । भवति[29] । असमृद्धस्य[30] । यजमानस्यार्थम् समृद्धं[31] तच्छत्रुं यो हंसि[32] ।

१. त्वा D.
२. हशब्दः पूरणार्थः Sy.
३. त्यत् स्य स त्वम् । त्यदिति तच्छब्दपर्यायः । अत्र लिङ्गव्यत्ययः Sy.
४. कर्महीनान् जनान् Sy.
५. दान्तानकरोः Sy.
६. अपि च मुख्यस्त्वम् Sy.
७. अददाः Sy.
८. व्रजाः P. पुत्रदासादीन् Sy.
९. कर्मकृते जनाय Sy.
१०. एवं स्तुवन्नृषिरिन्द्रं यदा नाद्राक्षीत्तदा तस्य वीर्यसद्भावे विचिकित्समानः परार्धर्चमाह Sy.
११. तुवीरम् P., D. सामर्थ्यम् Sy.
१२. दानीं P., D. क्षिप्रम् Sy.
१३. भवति Sy.
१४. किंस्वित् । स्विन्न्विति विचिकित्सायाम् Sy.
१५. अहो० P., D. यद्वा (नास्ति) स्वित् Sy.
१६. बलम् Sy.
१७. काले काले Sy.
१८. विशेषेण ब्रूहि Sy.
१९. VM. explains नु and तत् once only.
२०. पूर्वमन्त्र इन्द्रस्य बलसदसद्भावं सन्दिह्यानया बलमस्त्येवेत्यवधारयन्नाह Sy.
२१. बहुयज्ञेषु प्रादुर्भूतस्य Sy.
२२. अहं मन्ये Sy.
२३. ०वान् P. हे बलवत्तमेन्द्र ! Sy.
२४. हिंसितुं P. अस्मान् हिंसतः Sy.
२५. शत्रूणां हिंसितुर्बलवतो वा Sy.
२६. ओजस्विनः Sy.
२७. प्रवृद्धस्य Sy.
२८. प्रवृद्धतरम् । यतस्त्वं वृत्रादीन् शत्रून् हंस्यतस्ते बलं विद्यत एवेत्यर्थः Sy.
२९. भवत्येव Sy.
३०. शत्रुभिर्वशीकर्तुमशक्यस्य । रधेर्वशीकरणार्थस्य रूपम् Sy.
३१. वशीकरणीयानां सपत्नानां हिंसकस्य Sy.
३२. VM. ignores हि ॥ यस्मादर्थे । यस्मात् कारणात् Sy.

तन्नः प्रत्नं सख्यमस्तु युष्मे इत्था वदद्भिर्वलमङ्गिरोभिः ।
हन्नच्युतच्युद्दस्मेषयन्तमृणोः पुरो वि दुरो अस्य विश्वाः ॥ ५ ॥

तन्नः प्रत्नम् । तत्[1] । अस्माकम्[2] । पुराणम्[3] । सख्यम्[4] । अस्तु । त्वयि स्तोत्रम्[5] । सत्यम् । वदद्भिः[6] । अङ्गिरोभिः[7] । वलम्[8] । हतवानसि । अच्युतां च्यावयितः[9] ! दर्शनीय[10] ! गच्छन्तम्[11] । विगमितवानसि[12] । तस्य[13] । पुरः[14] । द्वाराणि[15] । सर्वाणि[16][17] ।

स हि धीभिर्हव्यो अस्त्युग्र ईशानकृन्महति वृत्रतूर्ये ।
स तोकसाता तनये स वज्री वितन्तसाय्यो अभवत्समत्सु ॥ ६ ॥

स हि धीभिः । सः[18] । हि[19] । प्रज्ञाभिः[20] । आह्वातव्यः[21] । भवति । उद्गूर्णः[22] । ईश्वरं कुर्वन्[23] । महति[24] । सङ्ग्रामे[25] । सः[26] । पुत्रभजने[27] । पौत्रभजने च ह्वातव्यः[28] । सः[18] । वज्री[29] । सङ्ग्रामेषु । वितन्तसाय्यः[30], भवति, अत्यन्तं[31] तान्तैः सेवितव्यो भवति ।

---

१. प्रसिद्धम् Sy.

२. अस्मदीयम् Sy.

३. चिरकालानुवर्तीत्यर्थः Sy.

४. स्तुत्यस्तोतृलक्षणं सखित्वम् Sy.

५. P. adds त्वं after त्वयि ॥ हे इन्द्र ! युष्मासु । पूजार्थं बहुवचनम् Sy.

६. त्वां स्तुवद्भिः Sy.

७. सत्यमवदञ्छ्रिरिगिरोभिः P. अङ्गिरोभिः सह Sy. ८. एतन्नामानमसुरम् Sy.

९. अच्युतानाम् is suggested for अच्युताम् ।

१०. ०यितृ P. हे अच्युतानामविचलितानां च्यावक ! Sy. ११. हे दर्शनीयेन्द्र ! Sy.

१२. आयुधानि प्रेरयन्तम् Sy.

१३. व्यगमयः वियुक्तान्यकार्षीरित्यर्थः Sy.

१४. वलस्य Sy.

१५. नगराणि Sy.

१६. पुरीणां द्वारश्च व्यृणोः Sy.

१७. सर्वाः Sy.

१८. इन्द्रः Sy.

१९. हिशब्दः पादपूरणः Sy.

२०. स्तोतृभिः स्तुतिभिर्वा Sy.

२१. जयार्थिभिराह्वातव्यः Sy.

२२. ओजस्वी Sy.

२३. ०रः P. स्तोतॄन् ईशानान् समर्थान् करोतीति ईशानकृत् Sy.

२४. प्रभूते Sy.

२५. वृत्रतूर्य इति सङ्ग्रामनाम Ngh. 2.17.

२६. सु P., D.

२७. तोकस्य पुत्रस्य सातौ लाभे निमित्ते Sy.

२८. व D. तत्पुत्रे निमित्ते सति आह्वातव्योऽस्ति Sy. २९. वज्रवान् Sy.

३०. विशेषेण विस्तार्यः । स्तोत्रैर्वन्दनीयोऽभवत् भवति । यद्वा वितन्तसाय्यः शत्रूणां हिंसकः । तन्तस इति धातुर्हिंसाकर्मा । तस्य कर्तरि रूपम् Sy.

३१. अन्यन्तं D.

स म॒ज्मना॑ जनि॑म॒ मानु॑षाणा॒मम॑र्त्येन॒ नाम्नाति॒ प्र स॑र्स्रे ।
स द्यु॒म्नेन॒ स शव॑सो॒त रा॒या स वी॒र्ये॑ण॒ नृत॑म॒: समो॑का: ॥ ७ ॥

स मज्मना । सः[1] । बलेन[2] । मनुष्याणाम्[3] । जन्मानि[4] । अमरणधर्मणा[5] । परेषां[6] नमयित्रा । अतिप्रसरति[7] । सः । तेजसा[8] । सः[9] । वेगेन[10] । स धनेन । सः । वीर्येण[11] । नेतृतमः[12] । सङ्गत[13] इति[14] ।

स यो न मु॒हे न मिथू॒ जनो॒ भूत्सु॒मन्तु॑नामा॒ चुमु॑रि॒ धुनिं॑ च ।
वृ॒णक्पिप्रुं॒ शम्ब॑रं॒ शुष्ण॒मिन्द्र॑: पु॒रां च्यौ॒त्नाय॑ श॒यथा॑य॒ नू चि॑त् ॥ ८ ॥

स यः[15] । नः[16] । य इन्द्रः । मोहाय[17] । न भवति । न च कदाचित् । मिथ्या[18] । प्रादुर्भवति । सुमन्तुरिति[19] नाम यस्य सः । इन्द्रः । पिप्रुप्रभृतीन्[20] । अहन्[21] । पुराम्[22] । च्यावयित्रे[23] । क्षिप्रम्[24] । शयथः[25] शयः कुत्स इत्याहुः[26] ।

उ॒दाव॑ता॒ त्वक्ष॑सा॒ पन्य॑सा च वृत्र॒हत्या॑य॒ रथ॑मिन्द्र तिष्ठ ।
धि॒ष्व वज्रं॒ हस्त॒ आ द॑क्षिण॒त्राभि प्र म॑न्द पुरुदत्र मा॒याः ॥ ९ ॥

उदावता । उद्गच्छता[27] । शत्रूणां तनूकरणशीलेन[28] । बलेन[29] सह । वृत्रं हन्तुम्[30] । रथम्[31] । इन्द्र !

---

१. इन्द्रः Sy.
२. मज्मनेति बलनाम Ngh. 2.9.
३. मनुष्या P. मनुष्यां D.
४. जानि P., D. जन्म । सङ्घमित्यर्थः Sy.
५. विनाशरहितेन Sy.
६. परेक्षाम् D. शत्रूणां नमयित्रा Sy.
७. अतिप्रपेदे Sy.
८. तेजता D. यशसा Sy.
९. सा D.
१०. बलेन Sy.
११. सामर्थ्येन च समोका भवति Sy.
१२. नेतृमः P.
१३. समानस्थानः भवति Sy.
१४. VM. ignores उत ॥ अपि च Sy.
१५. य D.
१६. इन्द्रः Sy.
१७. सङ्ग्रामे कदापि न मुह्यति Sy.
१८. यश्च मिथ्या वृथा Sy.
१९. प्रज्ञाननामा । प्रख्यातनामेत्यर्थः Sy.
२०. पिप्रु॰ P., D. प्रभृति refers to चुमुरिम् । धुनिम् । शम्बरम् and शुष्णम् ॥ शम्बरम् एतन्नामकान् त्रीनसुरान् । तथा चुमुरिं धुनिं चैतन्नामकावसुरौ Sy.
२१. वृणक् । 'अवृणक् हिंसितवानसि । वृणक्ति-हिंसाकर्मा । हिंसितवानसि Sy.
२२. शत्रुसम्बन्धिनीनां पुरीणाम् Sy.
२३. च्यवनाय नाशनाय Sy.
२४. Sy. explains नू चित् together as शीघ्रमेव ।
२५. P., D. read शय क्षिप्रं शयथः for क्षिप्रम् । शयथः शयः ॥ शत्रूणां मारणाय च Sy.
२६. If VM. does not explain जनः and भूत् together as प्रादुर्भवति, then he ignores जनः and चित् ॥ जनः जनयिता । एव कर्म कुरुत इति शेषः Sy.
२७. ॰त D. उद्गच्छता । अवतिरत्र गतिकर्मा Sy.
२८. शत्रूणां तनूकर्त्रा Sy.
२९. स्तुत्यतरेण बलेन युक्तस्त्वम् Sy.
३०. शत्रुहननाय Sy.
३१. रक्षम् P., D. स्वकीयं रथम् Sy.

प्रातिष्ठ[1]। आधेहि[2]। च। वज्रम्[3]। दक्षिणे। हस्ते[4]। अभिप्रगच्छ[5]। हे पुरुदान[6]! शत्रूणां मायाः[7].

**अग्निर्न शुष्कं वनमिन्द्र हेती रक्षो नि धक्ष्यशनिर्न भीमा।**
**गम्भीरयं ऋष्वया यो रुरोजाध्वानयद्दुरिता दम्भयंच ॥ १० ॥**

**अग्निर्न**[8]। अग्निः। इव[9]। हन्ता[10]। शुष्कम्[11]। वनम्[12]। रक्षः[13]। निदह[14]। यथा[15]। अशनिः[16]। भीमः[17]। दिवः[18] पतिता विनाशयति[19]। गम्भीरया[20]। महत्या[21]। यः[22]। शक्त्या[23]। शत्रून्[24]। रुरोज[25]। शब्दापयति[26]। च। विनाशयतीति परोक्ष उत्तरार्धः[27]।

**आ सहस्रं पथिभिरिन्द्र राया तुविद्युम्न तुविवाजेभिरर्वाक्।**
**याहि सूनो सहसो यस्य नू चिददेव ईशे पुरुहूत योतोः ॥ ११ ॥**

**आ सहस्रम्**। आयाहि[28]। सहस्रेण[29]। धनेन सह[30]। मार्गैः[31]। बहुधन! बहुबलैरश्वैः[32]। अभिमुखम्[33]। सहसः[34]। सूनो[34]! माहेन्द्रबलवत्तया। यस्य[35] यजमानस्य। क्षिप्रम्। असुरः[36]। ईश्वरो भवति। पृथक् कुरु[37] रणस्य

१. आरोह Sy.
२. आ is omitted by P. आधत्स्व Sy.
३. स्वकीयमायुधम् Sy.
४. पाणौ Sy. ५. अभिगम्य प्रकर्षेण जहि। अत्र मन्दतिर्वधकर्मा Sy.
६. पुर० P., D. हे बहुधनेन्द्र! त्वम् Sy.
७. मायया P. मायय D. आसुरीर्मायाः Sy.
८. अग्निर्न्नः P. अग्निर्नः D.
९. नशब्द उपमार्थीयः। यथा Sy.
१०. त्वदीयं वज्रं तद्वच्छत्रून् नाशयति Sy.
११. नीरसम् Sy.
१२. व P. वं D. वृक्षसमूहं दहति Sy.
१३. राक्षसम् Sy.
१४. वज्रेण नितरां दह Sy.
१५. यथाशनिर्भीमा भवति तद्वद् भयङ्करस्त्वम् Sy.
१६. यदाशनि P., D.
१७. भिमा D. १८. ०व D.
१९. P. and D. add गम्भीरया पतिता विनाशयति after विनाशयति।
२०. शत्रुभिरधर्षणीयया Sy.
२१. ऋष्व इति महन्नाम Ngh. 3.3.
२२. न्द्रः P., D. इन्द्रः Sy.
२३. Omitted by P., D.
२४. शत्रून् seems to be the explanation of दुरिता॥ तथा च दुरिता दुरितानि दम्भयच्च भिनत्ति च। स त्वं रक्षो निधक्षीति पूर्वेणान्वयः Sy.
२५. शत्रुग्रोज P. शत्रुग्रं राज D. बभञ्ज Sy.
२६. शब्दोप० D. युद्धे गर्जनलक्षणं शब्दं करोति Sy.
२७. VM. ignores इन्द्र।
२८. आगच्छ Sy.
२९. सहस्रेण। बहुभिरित्यर्थः Sy.
३०. सहस्रेण धनेन सहस्रेण धनेन D. धनेन युक्तस्त्वम् Sy.
३१. मार्गे P. पतन्ति गच्छन्त्यमीभिरिति पन्थानो वाहाः। तैः Sy.
३२. बलै० P. बहुलै० D.
३३. मदभिमुखः सन् Sy.
३४. सूनु P., D. हे बलस्य पुत्रेन्द्र! 'ओजसो जातमुत मन्य एनम्' (RV. X.73.10.) इति निगमान्तरे बलपुत्रत्वं सिद्धम् Sy.
३५. तव Sy. ३६. कश्चिदसुरः Sy.
३७. योतोः बलादिभिः पृथक्कर्तुम् Sy.

यमबाधिमसुर[१] आगच्छति[१] तत आगच्छेति[२] ।

**प्र तुविद्युम्नस्य स्थविरस्य घृष्वेर्दिवो ररप्शे महिमा पृथिव्याः ।**
**नास्य शत्रुर्न प्रतिमानमस्ति न प्रतिष्ठिः पुरुमायस्य सह्योः ॥ १२ ॥**

प्र[३] तुविद्युम्नस्य । बहुधनस्य[४] । स्थविरस्य[५] । घर्षणशीलस्य[६] । महत्त्वम्[७] । दिवः[८] । पृथिव्याश्च[९] । प्ररिरिचे,[१०] रप्शतिर्महद्भावकर्मा[११] । न । अस्य[१२] । शत्रुः[१३] कश्चित् । अस्ति । न च । प्रतिमानम्[१४] । न । प्रतिष्ठाता[१५] । अभिगन्ता । बहुप्रज्ञस्य । अभिभवतः[१६] ।

**प्र तत्ते अद्या करणं कृतं भूत्कुत्सं यदायुमतिथिग्वमस्मै ।**
**पुरू सहस्रा नि शिशा अभि क्षामुत्तूर्वयाणं धृषता निनेथ ॥ १३ ॥**

प्र[१७] तत्ते[१८] । प्रभवति[१९] । इदानीमुत्फुल्लं[२०] भवति जनेषु । तत् । ते[२१] । कृतम् । कर्म । यत्[२२] त्वम् । अस्मै[२३] कर्मणे । कुत्सादीनृषीन्[२४] रक्ष्यानस्यकरोस्ततस्तैरुक्तैर्मन्त्रैर्दृश्यत[२५] इति[२६] । तेषां कुत्सादीनां शत्रूणां बहूनि[२७]। सहस्राणि[२८]।

---

१. यं मार्गमसुरः is suggested for यमबाधिमसुर ॥ आ is omitted by P.
२. VM. ignores इन्द्र । चित् and पुरुहूत ॥ अत्र नू चिदिति निषेधार्थे वर्तते । हे बहुभिराहूतेन्द्र ! Sy.
३. वि० D.
४. बहुयशसो बहुधनस्य वा Sy.
५. प्रवृद्धस्य Sy.
६. शत्रूणां घर्षकस्येन्द्रस्य Sy.
७. ०त्वं P., D.
८. द्युलोकात् Sy.
९. भूमेश्च Sy.
१०. प्रतिरिचे D.
११. ०रच्छतिमहत्० P., D. विरप्शीति महन्नामसु पाठात् नाम्नां च प्रायेण धातुजन्यत्वात् रप्शतिरत्रातिशयवाची Sy.
१२. इन्द्रस्य Sy.
१३. शातयिता नास्ति Sy.
१४. प्रतिनिधिर्नास्ति Sy.
१५. प्रतिप्रतिष्ठाता P. प्रतिष्ठाता D. अस्य प्रतिष्ठाश्रयः । स एव सर्वस्य प्रतिष्ठेत्यर्थः Sy.
१६. ०भवतवं P. ०भवतदन् D. शत्रूणामभिभवितुः Sy.
१७. व्र D.
१८. दत्ते P.
१९. ०भति P., D. प्रभवति प्रकाशते Sy.
२०. इदानीमपि Sy.
२१. Omitted by P. त्वया Sy.
२२. य P., D.
२३. अपि चास्मा अनन्तरोक्तायातिथिग्वाय Sy.
२४. आदि refers to आयुम् and अतिथिग्वम् ॥ शुष्णाद्राक्षसाद् एतन्नामानमृषिं चायुं शत्रुभ्यः सकाशादेतत्संज्ञकं पौरुरवसमतिथिग्वमतिथीनामभिगन्तारं दिवोदासं च शम्बराद्ररक्षिथेति यत्करणं तत्प्रभवतीति पूर्वेण सम्बन्धः । ररक्षिथेति द्वितीयाश्रुतेरुचितक्रियाध्याहारः Sy.
२५. ०क्ष्याननस्य D. स्य seems to be unnecessary. The reading should be रक्ष्यानकरोः ॥
२६. ०रोततस्तैरुक्तेर्म० D.
२७. पुरूणि Sy.
२८. शम्बरस्य धनानि Sy.

पृथिव्याम्[1] । तनूकृतवानसि[2] । तूर्वयाण[3] च । धृष्टेन[4] वलेन । उदकाद् उन्नीतवानसि[5][6] ।

अनु त्वाहिघ्ने अध देव देवा मदन्विश्वे कवितमं कवीनाम् ।
करो यत्र वरिवो बाधिताय दिवे जनाय तन्वे गृणानः ॥ १४ ॥

[7]अनु त्वा । अन्वमदन्[8] । त्वाम् । अहिहननाय[9] । अथ[10] । सर्वे । देवाः[11] । अत्यन्तं कविम् । कृतवानसि[12] ।
यदा[13] । धनम् । बाधिताय[14] । स्तोत्रे । जनाय । तनूकर्त्रे[15] च । स्तूयमानः[16][17] ।

अनु द्यावापृथिवी तत्त ओजोऽमर्त्या जिहत इन्द्र देवाः ।
कृष्वा कृत्नो अकृतं यत्ते अस्त्युक्थं नवीयो जनयस्व यज्ञैः ॥ १५ ॥

अनु । अनुगच्छतः[18] । द्यावापृथिवी । तत्[19] । तव[20] । बलम् । तथामरणाः[21] । देवाश्च । अनुगच्छन्ति ।
कुरु[22] । हे करणशील[23] ! अकृतम् । यदि[24] । ते[25] किंचित् । अस्ति । नवतरम् । स्तोत्रम् । यज्ञैः[26] सह । जनयस्व,
कृते हि कर्मणि कृते नवानि च कथयन्त्यृषयो यज्ञेष्विति[27][28] ।

---

१. पृथिवीम् Sy.

२. अददाः । इन्द्रः शम्बरं हत्वा तस्य धनानि दिवोदासाय ददावित्यर्थः Sy.

३. तूर्व० P. पृथिव्यां वर्तमानं त्वरितगमनं दिवोदासम् Sy.

४. धर्षणेन त्वदीयेन वज्रेण शम्बरं हत्वा Sy.

५. आपश्च उदगमयः Sy.

६. VM. ignores अभि ॥ अभिलक्ष्य Sy.

७. अनुक्रीनाम्न्येकाहे मरुत्वतीयशस्त्रे 'अनु त्वाहिघ्ने' इति सूक्तमुखीया—। सूत्रितञ्च 'अनु त्वाहिघ्ने अध देव देवा अनु ते दायि मह इन्द्रियाय' (ĀSS.9.5.) इति Sy.

८. अनुमदन्ति । अनुस्तुवन्ति Sy.

९. मेघहननाय । वृष्टिप्रदानायेत्यर्थः Sy.

१०. अस्मिन् काले Sy.

११. स्तोतारः Sy.

१२. अकरोः अददाः । अथवा हे देवेन्द्र ! अधास्मिन् काले विश्वे सर्वे देवाः सुराः । अहिर्वृत्र एवोच्यते । तस्य हननाय कवीनां कवितमं त्वामनुमदन्ति । यत्र यस्मिन् स्तोत्रे सति बाधितायासुरैः पीडिताय दिवे द्युलोकनिवासाय जनाय तन्वे शोभायै वृत्रहननेन तव शोभार्थं वरिवश्चकर्थ Sy.

१३. यस्मिन् काले Sy.

१४. दारिद्र्यादिभिः पीडिताय Sy.

१५. तनु is omitted by P., D. स्तोतॄणां तनयाय च Sy.

१६. स्तोतृभिः स्तूयमानस्त्वम् Sy.

१७. VM. ignores देव and कवीनाम् ॥ हे द्योतमानेन्द्र ! कवीनां मेधाविनां मध्ये Sy.

१८. अग० P. अनुजिहाते Sy.

१९. प्रसिद्धम् Sy.

२०. त्वदीयम् Sy.

२१. अमरणधर्माणः Sy.

२२. कुरुष्व Sy.

२३. हे बहूनां कर्मणां कर्तः ! Sy.

२४. यत्कर्मास्ति Sy.

२५. त्वदीयम् Sy.

२६. यज्ञेषु Sy.

२७. यज्ञोषि P.

२८. VM. ignores इन्द्र ।

VI.19.

मुहाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥ १ ॥

[1]महान् । यथा शत्रुं विजित्यान्यो[2] महाराजो[3] भवति मनुष्य[4] एवम् । इन्द्रो[5] वृत्रं हत्वा । महानभवत्[6] । 'इन्द्रो ह वा एष पुरा वृत्रस्य वधादथ वृत्रं जघ्निवान् महेन्द्रो यथा महाराजोऽन्यो विजित्य'[7] इति[8] वाजसनेयकम् । किं च[9] मनुष्याणां पूरयिता[10] । अपि च[11] ।

---

१. 'महाँ इन्द्रः' इति त्रयोदशर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रान्तं च 'महान्त्सप्तोना' (KSA.30.19.p.22.) इति । माध्यन्दिने सवने सोमातिरेके शस्त्रं भवति । तत्रेदं सूक्तम् । सूत्रितञ्च—'महाँ इन्द्रो नृवद्विष्णोर्नु कम्' (ĀSS.6.7.) इति । समूळ्हे द्वितीये छन्दोमे मरुत्वतीयशस्त्र एतत् सूक्तम् । सूत्रितञ्च—'महाँ इन्द्रो नृवदिति मरुत्वतीयम्' (ĀSS.8.7.) इति Sy. भरद्वाजस्य बार्हस्पत्यस्यार्षम् Dur. भरद्वाजस्य SKN.

२. विजिग्यानो P., D. ३. ०जा P., D.

४. यथा नेता राजा भृत्यादीनां कामानां पूरयिता तद्वत् Sy. तथापि नृवन्मनुष्यवदाहूयमानः आगच्छति । यद्वा नृवन्मनुष्यवत् Mah., U. यथा मनुष्या आराधयितॄन् कामैः पूरयन्ति तद्वत्BB. मनुष्यवत् Dur. मनुष्यवत् । यथा राजा, अन्योऽपि कश्चिदीश्वरो मनुष्यस्तद्वत् SKN.

५. इत्रो P., D. ६. प्रभूतः Sy. महाप्रभावः Mah. महान्प्रभावत इन्द्रः U. महानयमिन्द्रः BB. महान् प्रभावतः Dur.

७. महाजोन्यविजि P. महाजोन्यः विजि D.

८. Omitted by P.D. ९. चित् P. D.

१०. चर्षणीनां स्तोतृजनानां कामानां पूरकः Sy. आ समन्ताच्चर्षणीन् मनुष्यान् प्रति अभीष्टकामैः पूरयत्याचर्षणिप्राः । 'प्रा पूरणे' क्विप् । यथा राजा, अमात्यादिमनुष्यान्सेवकानभीष्टकामैः पूरयति तद्वत् Mah. चर्षणयो मनुष्याः । ....आगत्य च चर्षणीनां मनुष्याणां पूरयिता कामैः U. यश्चर्षणिप्राः, चर्षणयो मनुष्यास्तेषां पूरयित. कामैः।....यद्वा चर्षणीनां चर्षणवतामाचारवतां कामैः पूरयिता । समन्तादित्यर्थ आकारः । सर्वत्र पूरयिता तस्मान्महान् । यद्वा नृवद् एकस्मिन्निव नरे समन्तात् सर्वेष्वपि लोकेषु चरणशीलानां पूरयिता । ततोऽयं महान्, इति । चरेरनिप्रत्ययो बहुलवचनात्सुडागमः । यद्वा 'कृषेरादेश्च चः' इति कृषेरेतद्रूपम् । आङापि कृष्यर्थो विशेष्यते । उदात्तश्रुतेश्चायमसमस्त एव कृष्यर्थं विशिनष्टि ; हविःप्रदानादिनाऽऽकर्षवतां वशीकुर्वतां कामैः पूरयितेति BB. आपूरयिता चर्षणीनां मनुष्याणां कामैः । यथा हि मनुष्य ईश्वरः परितुष्टः कामैरवश्यं भृत्यमापूरयति, एवमिन्द्रोऽपि स्तोतारम् Dur. चर्षणयो मनुष्याः । 'प्रा पूरणे' आकार उपसर्गश्छान्दसत्वादसमस्तोऽपि प्रातिपदिकेनैव सम्बध्यते । ततः 'आतो मनिन्' (Pā.3.2.74) इत्येवं विच् द्रष्टव्यः । स्तोतॄणां यष्टॄणां मनुष्याणां च पूरयिता कामैः SKN.

११. Omitted by P.

द्वयोः परिवृळ्हः[1] । अहिंसितः[2] । बलैः[3] । सोऽयं मदभिमुखम्[4] । वीर्यकरणार्थम्[5] । वर्धते च । अयं शोभनकर्मणः[6] ।

---

१. ०बृंळ्हः D. द्वयोर्लोकयोः परिवृढः Sy. 'बृहि वृद्धौ' बर्हणं बर्हो वृद्धिः । असुन्प्रत्ययः । द्वयोः प्रकृतिविकृतिरूपयोः सोमयागयोर्बर्हो यस्य स द्विबर्हाः । यद्वा द्वयोः स्थानयोर्बर्हा वृद्धः परिवृढः प्रभुर्मध्यमे स्थान उत्तमे च Mah. द्वयोः स्थानयोः परिवृढो मध्यमे च स्थान उत्तमे च परिवृढः प्रभुः U. द्वयोर्लोकयोर्बृंहितः प्रवृद्धस्तेजसाऽस्मिन्नमुष्मिंश्च BB. द्वयोः स्थानयोर्मध्यमोत्तमयोः परिवृढः Dur. बृहेर्वृद्ध्यर्थस्येदं रूपम् । द्वयोः स्थानयोर्वीर्येण परिवृद्धोऽपि. . . .। मध्यमे च स्थानेऽन्तरिक्षे, उत्तमे च दिवि । तस्याः सर्वदेवानां साधारणत्वात् । देवराजत्वेन च प्रसिद्धेः । इतिहासपक्षे तु नान्योऽन्तरिक्षे वीर्येण परिवृद्धः शक्नोति वर्षितुं नापि दिव्यादित्याद् रसान् परिगृहीतुम् SKN.

२. अहिंसनीय इन्द्रः Sy. अमित उपमारहितः । अतोलितबल इत्यर्थः ।. . . .यद्वा सहोभिः शतबलैरमिनः, अप्रक्षिप्तोऽनुपहिंसित इत्यर्थः । 'डुमिञ् प्रक्षेपे' । 'मीञ् हिंसायाम्' इत्यस्य वा प्रयोगः । पूर्वपक्षे माने सर्वत्र निष्ठानत्वमार्षम् Mah. अमिनोऽमितमात्रः ।. . . .अप्राक्तोलितबलः । यद्वा—अनुपहिंसितः शत्रुबलैः U. अमिनोऽपरिच्छेदः । मानं मिनम् । मातेर्निष्ठा छान्दसं निष्ठानत्वम् । तदस्य नास्तीत्यमिनः । न ह्यस्यैतादृग् बलमस्तीति निश्चेतुं शक्यते । यद्वा सहोभिरमिनः सङ्गतः-। 'अम गत्यादिषु' BB. अमितमात्रः । अथवा—अनभिहिंसितः केनचित्. . . .एवमत्रामिनशब्देनामितमात्रोऽनभिहिंसितमात्रो वा, इत्युच्यते शब्दसारूप्यादर्थोपपत्तेश्च Dur. अपरिमितः SKN.

३. शत्रुबलैः Sy. केन पुनरमिनः ? इत्युच्यते, सहोभिर्बलैरित्यर्थः । न हीन्द्रस्य बलमात्राः केनचिन्मितपूर्वा इत्यर्थः । अनभिहिंसितपूर्वो वा केनचिदिन्द्रः Dur. शारीरैः सांयोगिकैर्वा बलैर्महाबल इत्यर्थः । अथवा अभ्यमितोऽहिंसितपूर्वः सहोभिर्बलैः परकीयैः SKN.

४. अस्मदभिमुखं यथा भवति तथा Sy. अस्मान्प्रत्यञ्चतीत्यस्मद्र्यगस्मदभिमुखः Mah. अस्मद्दर्शनोत्सुकः सन् U. अस्मा (अस्मान्) स्वञ्चतीत्यस्मद्र्यक् ।. . . .क्रियाविशेषणत्वान्नपुंसकत्वम् BB. अस्मदनुग्रहायास्मद्दर्शनाय Dur. 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' (Pa.6.3.92) इत्येवमयमस्मदोऽञ्चताबद्र्यादेशः । तत्र कर्माधिकारानस्मान्प्रत्यञ्चित आगतोऽस्मदभिमुख इत्यर्थः SKN.

५. वीरकर्मकरणाय Sy. इन्द्रो वीर्याय वीरकर्मणे Mah. वर्धते वीर्याय वीरकर्मणे य इन्द्रः U. ईदृश इन्द्रो वीर्याय वीर्यार्थम् । यद्वा कर्म पुत्रवधादि तदर्थम् BB. वीरकर्मणे वर्षार्थम् Dur. वीर्यकर्मणे वृष्ट्यादिकाय SKN.

६. ववृधे Mah. वर्धताम् ।. . . . .अस्माभिर्यजमानैर्दत्तानि हवींषि गृहीत्वा वर्धतामिति यावत् BB.

७. सुष्ठु परिचरितः Sy. सुकृतः साधुकृतः सत्कृतः पूजित इत्यर्थः Mah. शोभनकृत्यभिप्रायः U. सुष्ठु कृतो वशीकृतश्च BB. सुकृतः स्तुतिभिः Dur. अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । करोतिश्च क्रियासामान्यवचनः । क्रियाविशेषः स्तुतौ द्रष्टव्यः । य ईश्वरः स सुष्ठु स्तुतः SKN.

कर्मभिः[१] । उरुः[२] । पृथुश्च[३] । भवति[४,५] ।

**इन्द्रमेव धिषणा सातये धाद्बृहन्तमृष्वमजरं युवानम् ।**
**अषाळ्हेन शवसा शूशुवांसं सद्यश्चिद्यो वावृधे असामि ॥ २ ॥**

इन्द्रम् । इन्द्रम् । एव । बुद्धिः[६] । लाभाय[७] । निदधाति[८] । महान्तम् । दर्शनीयम्[९] । अजरम्[१०] । युवानम्[११] । शत्रुभिरसोढेन[१२] । बलेन । वर्धमानम्[१३] । सद्यो जातः[१४] । यः[१५] । ववृधे[१६] । अन्यूनः[१७,१८] ।

---

१. यजमानैः Sy. कर्तृभिर्यजमानैः Mah. सोऽस्मदीयैः कर्तृभिः स्तूयमानः U. कर्तृभिः परिचरद्भिरस्माभिर्यजमानैः BB. एतैः कर्तृभिर्ऋत्विग्भिः Dur.

२. शरीरेण विस्तीर्णः Sy. यशसा विपुलः Mah. उरुः प्रमाणतः U. उरुर्विस्तीर्णो बलेन BB. महान् परिमाणतः Dur. वीर्येण विस्तीर्णः SKN.

३. गुणैः प्रथितः Sy. पृथुर्बलेन विस्तृतः Mah. पृथुश्च विस्तारेण U. प्रथितः सर्वत्र यशसः BB. विस्तीर्णो यः सोऽस्माकं प्रत्यभिमुखो दानायाभिप्रेतानामर्थानाम् Dur. शरीरेण महाकायः SKN.

४. स वर्धमान इन्द्र ईदृशो भूद् भवतु । लोडर्थे लुङ् । अडभावश्छान्दसः Mah. भूयात् U. भवतु । भवतेर्लुङि पूर्ववच्छपो लुक् । . . . . यद्वा कर्तृभिरस्माभिस्सुकृतः सम्यक्कृतोऽयमुरु पृथुश्च भवतु BB. भूयादित्यर्थः Dur. लोडर्थे लुङ् । भवतु, इत्याशास्महे SKN.

५. VM. ignores आ ॥ आगच्छतु । आ इत्युपसर्गदर्शनाद् गच्छत्वित्याख्यातस्याध्याहारः Sy. For the explanation of आ by Mah., U., BB., Dur. and SKN. see footnote no. 10. (p. 468.) अमिनोऽमितमात्रो महान्भवत्यभिमितो वा N.6.16.; SKN. II. 445—446.

This stanza=YV. 7.39.=TS. 1.4. 21.7.

अथातो गृह्णात्येव : महाँ२॥ऽइन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । "[१]उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा' इति सादयति महेन्द्राय ह्येनं गृह्णाति । SB.4.3.3.18.p.372.

६. अस्मदीया स्तुतिः Sy.

७. बुद्धिर्ल॰ P. दानाय Sy.

८. धारयति Sy.

९. गन्तारम् Sy.

१०. जरारहितम् Sy.

११. नित्यतरुणम् Sy.

१२. ॰ढे P., D. शत्रुभिरनभिभूतेन Sy.

१३. ॰नं P. शूशुवांसम्—प्रवृद्धम् । श्वयतेरिदं रूपम् Sy.

१४. जातमात्रः सन् Sy.

१५. इन्द्रः Sy.

१६. वर्धते Sy.

१७. ॰ना P. अनल्पमधिकं यथा भवति तथा Sy.

१८. VM. ignores चित् ॥ एव Sy.

---

१. उपयामेत्यादिभागः केवलं यजुर्वेदीयः ।

पृथू कुरस्ना बहुला गभस्ती अस्मद्र्य१क्सं मिमीहि श्रवांसि ।
यूथेव पश्वः पशुपा दमूना अस्माँ इन्द्राभ्या ववृत्स्वाजौ ॥ ३ ॥

पृथू । पृथू[1] । करौ[2] । दीर्घौ[3] । बाहू[4] । स त्वस्मदभिमुखम् । सम्मिमीहि[5] । अन्नानि[6] । पशोः[7] । यूथानीव[8] । पशुपालः[9] । दममनाः[10] । अस्मान् । इन्द्र[11] ! अभ्यावर्तयस्व[12] । आजौ[13] ।

तं व इन्द्रं चतिनमस्य शाकैरिह नूनं वाजयन्तो हुवेम ।
यथा चित्पूर्वे जरितार आसुरनेद्या अनवद्या अरिष्टाः ॥ ४ ॥

तं वः[14] । तम्[15] । युष्माकम्[16] । इन्द्रम्[17] । शत्रूणां चातयितारम्[18] । अस्य[19] । सहायैर्मरुद्भिः सह[20] । इदानीम्[21] । युद्धं कुर्वन्तः[22] । ह्वयामः[23] । यथा । एव । पूर्वे[24] । स्तोतारः । अभूवन्[25] । प्रशस्याः[26] । अनिन्द्याः[27] । अहिंसितास्तद्वद्[28] वयमपि भूयास्मेति[29] ।

धृतव्रतो धनदाः सोमवृद्धः स हि वामस्य वसुनः पुरुक्षुः ।
सं जग्मिरे पथ्या३ रायो अस्मिन्त्समुद्रे न सिन्धवो यादमानाः ॥ ५ ॥

धृतव्रतः । धृतकर्मा । धनस्य दाता[30] । सोमेन वृद्धः[31] । सः[32] । हि[33] । प्रशस्यस्य[34] । धनस्य[34] । बहोर्वक्ता[35] ।

---

१. ०थु P. विस्तीर्णौ Sy.
२. कर्मणां कर्तारौ Sy.
३. बहुप्रदौ Sy.
४. त्वदीयौ बाहू Sy.
५. समीमीहि P. कुरु Sy.
६. अन्नानि । दातुमिति शेषः Sy.
७. पशूनाम् Sy.
८. यूथानिव P. तत्र दृष्टान्तः ; यूथानि यथा-वर्तयति तद्वत् Sy.
९. पशूनां पालकः Sy.
१०. दान्तमनास्त्वम् Sy.
११. किञ्च हे इन्द्र ! Sy.
१२. अभ्यावर्तस्व Sy.
१३. सङ्ग्रामे Sy.
१४. व P. त वं D.
१५. प्रसिद्धम् Sy.
१६. त्वाम् Sy.
१७. परमेश्वरम् Sy.
१८. ०शात० D. चातकम् । नाशकमित्यर्थः Sy.
१९. तव Sy.
२०. शक्तैः समर्थैः मरुद्भिः सहितम् Sy.
२१. It seems to be the explanation of इह ॥ अस्मिन् यज्ञे Sy.
२२. अन्नमिच्छन्तो वयं स्तोतारः Sy.
२३. स्तुमः Sy.
२४. पुरातनाः Sy.
२५. बभूवुः । हे इन्द्र ! त्वत्प्रसादाद्वयमपि तथैव भवेमेत्यर्थः Sy.
२६. अनिन्द्याः Sy.
२७. पापरहिताः Sy.
२८. हिं० P., D.
२९. VM. ignores नूनम् ॥ नूनम् अद्य Sy.
३०. स एव धनप्रदः Sy.
३१. स एव सोमेन प्रवृद्धः Sy.
३२. इन्द्रः Sy.
३३. खलु Sy.
३४. कीदृशस्य धनस्येत्याकाङ्क्षायामुपसर्जनीभूतस्यापि धनस्य विशेषणे वामस्य वसुन इति । वामस्य वननीयस्य वसुनः श्रेष्ठस्य । यद्वा वसुनो धनस्य । स्वामीति शेषः Sy.
३५. बह्वन्नः स एव Sy.

सङ्गच्छन्ते । मनुष्यहितानि[1] । धनानि । अस्मिन्[2] । समुद्रे । इव[3] । सिन्धवः[4] । नानादिग्भ्यः समागता[5] वा पथ्या[6] इति ।

**शविष्ठं न आ भर शूर शव ओजिष्ठमोजो अभिभूत उग्रम् ।**
**विश्वा द्युम्ना वृष्ण्या मानुषाणामस्मभ्यं दा हरिवो मादयध्यै ॥ ६ ॥**

शविष्ठम् । बलवत्तमम् । अस्मभ्यम् । आहर । शूर[7] ! बलम् । ओजस्वितमम् । ओजश्च[8] । उद्गूर्णम्[9] । शत्रूणामभिभवितः[10] ! विश्वानि[11] च । अन्नानि[12] । वर्षणनिमित्तानि[13] । शत्रूणां मनुष्याणामादाय[14] । अस्मभ्यम् । देहि[15] । हे हरिवः[16] ! अस्मान् मादयितुम् ।

**यस्ते मदः पृतनाषाळमृध्र इन्द्र तं न आ भर शूशुवांसम् ।**
**येन तोकस्य तनयस्य सातौ मंसीमहि जिगीवांसस्त्वोताः ॥ ७ ॥**

यस्ते । यः । ते[17] । मदः[18] । अभिभविता[19] । अहिंसितः[20] । इन्द्र ! तम्[21] । अस्माकम्[22] । आहर । प्रवृद्धम् । येन मदेन[23] शत्रुजयार्थं त्वया भूतेन लब्धधनाः[24] । पुत्रस्य च । तत्पुत्रस्य[25] । भजने[26], तेन[27] धनप्रदानेन । अर्चयामः[28] । शत्रून् जिगीवांसः[29] । त्वया रक्षिताः ।

---

१. स्तोतॄणां हितानि Sy.
२. इन्द्र एव Sy.
३. तत्र दृष्टान्तः । यथा Sy.
४. नद्यः Sy.
५. यादमाना अभिगच्छन्त्यस्तद्वत् Sy.
६. पत्थ्य P., D.
७. हे विक्रान्तेन्द्र ! Sy.
८. दीप्तिमस्मभ्यमाभर Sy.
९. अप्रसह्यम् Sy.
१०. हे शत्रूणामभिभावुकेन्द्र ! Sy.
११. सर्वाणि Sy.
१२. द्युम्नानि द्योतमानानि यानि धनानि Sy.
१३. सेचनसमर्थानि Sy.
१४. मनुष्याणां भोग्यतया कल्पितानि तानि धनानि Sy.
१५. प्रयच्छ Sy.
१६. हे हरिवन्निन्द्र ! Sy.
१७. त्वया देयः Sy.
१८. हर्षः Sy.
१९. ०देभि० P. शत्रुसेनानामभिभविता Sy.
२०. ०सि D.
२१. म् P. मदम् Sy.
२२. अस्मभ्यम् Sy.
२३. हर्षेण Sy. २४. ०ना P.
२५. तं पु० D..
२६. लाभे निमित्तभूते सति Sy.
२७. तौ P.
२८. त्वां स्तुवीमहि, तमा भरेति पूर्वेणान्वयः Sy.
२९. शत्रुं जिवासः P. ०वासः D. जितवन्तो वयम् Sy.

**आ नो॑ भर॒ वृष॑णं॒ शुष्म॑मिन्द्र धन॒स्पृतं॑ शूशु॒वांसं॑ सु॒दक्ष॑म् ।**
**येन॒ वंसा॑म॒ पृत॑नासु॒ शत्रू॒न्तवो॒तिभि॑रु॒त जा॒मीँरजा॑मीन् ॥ ८ ॥**

आ नः । आभर[1] । अस्मभ्यम् । वर्षितृ[2] । बलम्[3] । इन्द्र ! धनस्य स्प्रष्टारम्[4] । वृद्धम्[5] । शोभनोत्साहम्[6] । येन । हनाम[7] । पृतनासु[8] । शत्रून् । तव[9] । रक्षणैः[10] । अपि च[11] । ज्ञातीन्[12][13] ।

**आ ते॒ शुष्मो॑ वृष॒भ ए॑तु प॒श्चादोत्त॒राद॑ध॒रादा पु॒रस्ता॑त् ।**
**आ वि॒श्वतो॑ अ॒भि समे॑त्व॒र्वाङिन्द्र॑ द्यु॒म्नं स्व॑र्वद्धेह्य॒स्मे ॥ ९ ॥**

आ ते । त्वदीयम् । बलम् । अस्मान्[14] । सर्वतः[15] । अभिगच्छतु[16] । इन्द्र ! अन्नम्[17] । अभ्युदययुक्तम्[18] । अस्मासु[19] । धेहि[20][21] ।

**नृ॒वत्त॑ इन्द्र॒ नृत॑माभिरू॒ती वं॑सी॒महि॑ वा॒मं श्रोम॑तेभिः ।**
**ईक्षे॒ हि वस्व॑ उ॒भय॑स्य राजन्धा॒ रत्नं॒ महि॑ स्थू॒रं बृ॒हन्त॑म् ॥ १० ॥**

नृवत्[22] । मनुष्ययुक्तम्[23] । त्वत्तः[24] । इन्द्र ! नेतृतमैः[25] । रक्षणैः[26] । भजेमहि[27] । वननीयं धनम्[28] ।

---

१. आहर Sy. २. वर्षितारम् Sy.
३. सेनालक्षणं बलम् Sy.
४. स्पृष्टारं P., D. धनस्य पालकम् Sy.
५. प्रवृद्धम् Sy. ६. शोभनबलम् Sy.
७. ०नोत्सहायेस P., D. बलेन शत्रून् Sy.
८. सङ्ग्रामेषु Sy. पृतना इति सङ्ग्रामनाम Ngh. 2.17. ९. हे इन्द्र ! त्वदीयाभिः Sy.
१०. रक्षाभिः Sy. ११. उतेत्यत्र भिन्नक्रमः Sy.
१२. जामीन् बन्धून् । उतापि च जामीन् शत्रूंश्च येन शुष्मेण वंसाम तं शुष्ममा भरेति पूर्वेण सम्बन्धः Sy.
१३. VM. ignores अजामीन् ।
१४. अस्मदभिमुखः सन् Sy.
१५. सर्वस्माद्दिग्भागात् Sy.
१६. अस्मान् । अभिलक्ष्यागच्छतु Sy.
१७. धनम् Sy. १८. सुखयुक्तम् Sy.
१९. अस्मभ्यम् Sy. २०. प्रयच्छ Sy.
२१. VM. ignores आ । वृषभः । एतु । पश्चात् । आ । उत्तरात् । अधरात् । आ । पुरस्तात् । आ and सम् ॥ वृषभो वर्षिता । पश्चात् पश्चिमभागात् । आगच्छतु । उत्तरादुत्तरभागादागच्छतु । अधराद्दक्षिणभागाच्चैतु । पुरस्तात्पूर्वभागाच्चागच्छतु सम्यक् Sy.
२२. भरद्वाजस्यार्षम् Dur. भरद्वाजस्य SKN.
२३. मनुष्यैः परिचारकजनैर्युक्तम् Sy. यथा मनुष्याः केचिदुत्पन्नप्रणयाः कञ्चिदीश्वरं मनुष्यं स्तुतिभिः सम्भजेरन् Dur. मनुष्यमतिथिमन्यं वा कञ्चित् प्रियं मित्रं भ्रातरं वा तद्वत् SKN.
२४. एवं वयं त्वाम् Dur. ते—द्वितीयार्थे षष्ठी, त्वाम् SKN.
२५. नेतृतमाभिः Sy. मनुष्यतमयोग्याभिः Dur. अत्र स्वसम्बन्धियोग्यत्वं लक्षयन् नृतमयोग्या यास्ताभिः प्रकृष्टमनुष्ययोग्याभिरित्यर्थः SKN.
२६. ऊतिभी रक्षाभिः Sy. अवन्तीभिस्तर्पयन्तीभिः स्तुतिभिः Dur. काभिः ? अवतेस्तृप्तिकर्मण ऊतिः । ततस्तृतीयायाः पूर्वसवर्णः । ऊतिभिस्तर्पणैः सोमैः SKN.
२७. वयं सम्भजेमहि Sy. सम्भजेमहि Dur. 'वन षण सम्भक्तौ' सम्भजेमहीत्याशास्महे SKN.
२८. ०न D. प्रशस्यम् SKN.

श्रोतव्यैः[1]। ईशिषे[2]। वसुनः[3]। दिव्यस्योत पार्थिवस्य[4]। राजन्[5]! धेहि[6]। रत्नम्[7]। महान्तम्[8]। परिणाहवत्[9]। बृंहितम्[10]। [11]

उत्तरा निगदव्याख्यातेति ।

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥ ११ ॥

[मरुत्वन्तम्[12]।]

---

१. श्रोतव्यैर्यशोभिः सहितम् Sy. श्रवणीयतमैः शब्दैः Dur. न केवलाभिरूतिभिः । किं तर्हि ? श्रोमतेभिः, शृणातेरयम् 'अन्येभ्योऽपि दृश्यन्ते' (Pa.3.2.75.) इत्येवं कर्मणि विच् । आतिशायिकस्य तमपः प्रथमद्वितीयाक्षरविपर्ययाच्छान्दसत्वाच्छ्रोतव्यतमैरतिशयेन श्रोतव्यैः शस्त्रैरित्यर्थः SKN.

२. केन पुनरर्थेन वंसीमहि ? इतो यस्मादीक्षे ईशिषे त्वम् Dur. हिशब्दो यस्मादर्थे । यस्मादीशिषे त्वम् SKN.

३. वसुनः Dur., SKN.

४. उभयलक्षणस्य दिव्यस्य पार्थिवस्य च वसुनः Dur. कतमस्य ? दिव्यस्य च पार्थिवस्य च । कुत एतत् ? 'अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य' (RV. II.14.11.) इत्यादौ दर्शनात् SKN.

५. हे राजमानेन्द्र ! त्वम् Sy. त्वं हे राजन् ! Dur. दीप्त ! ईश्वर ! वा SKN.

६. धहि P. यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्माद् धा देहि Dur., SKN.

७. रमणीयं धनम् । अत्र रत्नशब्दः पुँल्लिङ्गः Sy. धनम् Dur., SKN.

८. तस्मात् कारणात् महान्तम् Sy. कीदृशं पुनर्देहि ? महि महद् वस्तुभूतम् Dur. महत् सारतरम् SKN.

९. विपुलम् Sy. बहु Dur. स्थूलं परिमाणतः SKN.

१०. गुणैः परिवृढम् Sy. बहुकालं यत् स्यात् तद्देहि Dur. नेदं रत्नविशेषणं महीत्यनेन पौनरुक्त्यप्रसङ्गात्पुंलिङ्गत्वाच्च । किं तर्हि कालप्रतिनिर्देशार्थमेतत् । 'कालाध्वनोरत्यन्तसंयोगे द्वितीया' (Pa.2.3.5.)। महान्तं कालं यावज्जीवितव्यमित्यर्थः SKN.

११. VM. ignores हि ॥ हि यस्मात् कारणात् Sy.

एवमत्र वसुसम्बन्धात् 'ईक्षे' इत्येष शब्दः 'ईशिषे' इत्येवमुपपद्यते Dur. ईक्ष ईशिषे N.6.6.; SKN. II. 409.

१२. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV.III.47.5. Sy. explains this stanza again in the following manner:—

इहास्मिन् यज्ञे नूतनायाभिनवायावसे रक्षणाय तं प्रसिद्धमिन्द्रं हुवेम । स्तुमः । आह्वयामो वा । कीदृशम् ? मरुत्वन्तं मरुद्भिर्युक्तं वृषभं कामानां वर्षितारं ववृधानं प्रवृद्धमकवारिमकुत्सितशत्रुं दिव्यं द्योतमानं शासं शासितारं विश्वसहं विश्वस्य लोकस्याभिभवितारमुग्रमोजस्विनं सहोदां बलप्रदम् ।

**ज॒नं॑ वज्रि॒न्महि॑ चि॒न्मन्य॑मानमे॒भ्यो नृभ्यो॑ रन्धया॒ येष्वस्मि॑ ।
अधा॒ हि त्वा॑ पृथि॒व्यां शूर॑साता॒ै हवा॑महे॒ तन॑ये॒ गोष्व॒प्सु ॥ १२ ॥**

**जनम्** । अग्रत: स्थित्वा युध्यन्तं जनम् । वज्रिन्[1] ! महान्तम्[2] । मन्यमानम्[3] । एभ्य: । नृभ्य:[4] । वशीकुरु । येषु[5] योद्धृषु । अहमस्मि[6] । अथ[7] । हि । त्वा[8], दिव: पृथिव्याम्[9] । युद्धे[10] । पुत्राद्यर्थम्[11] । हवामहे[12] इति[13] ।

**व॒यं त॑ ए॒भिः पु॑रुहूत स॒ख्यैः श॒त्रोःश॑त्रो॒रुत्त॑र॒ इत्स्या॑म ।
घ्नन्तो॑ वृ॒त्राण्यु॒भया॑नि शूर रा॒या म॑देम बृह॒ता त्वोता॑ः ॥ १३ ॥**

**वयं त[14] एभि:** । वयम् । ते[15] । एभि:[16] स्तोत्रकृतै: । पुरुहूत[17] ! सख्यै:[18] सह । असमच्छत्रो:[19] । उत्कृष्टतर:[20] । एव । भवाम[21] । घ्नन्त:[22] । शत्रून्[23] । प्रत्यक्षान् परोक्षांश्च[24] । शूर[25] ! राया[26] । मदेम[27] । बृहता[28] । त्वया रक्षिता:[29] ।

---

१. हे वज्रवन्निन्द्र ! त्वम् Sy.
२. ०न्त P.
   महदत्यन्तमात्मानम् Sy.
३. बहुमन्यमानमित्यर्थ: Sy.
४. मनुष्येभ्य: Sy.
५. येषां नृणां मध्ये Sy.
६. एको भवामि Sy.
७. अधुना Sy.
८. त्वां द्युलोके स्थितम् Sy.
९. भूम्याम् Sy.
१०. युद्धे प्रवृत्ते सति Sy.
११. पृथिव्या युद्धात्यर्थम् P.D. आदि refers to गोषु and अप्सु ॥ पुत्रे निमित्ते च गोषु पशुषु, अप्सूदकेषु च निमित्तेषु Sy.
१२. वयमाह्वयाम: Sy.
१३. VM. ignores चित् ॥ चिदिति पादपूरण: Sy.
१४. तं P., D.
१५. तं D. त्वया सह Sy.
१६. प्रसिद्धै: Sy.
१७. हे बहुभिराहूतेन्द्र ! Sy.
१८. सख्ये P.
   स्तोत्रलक्षणै: सखिकर्मभि: Sy.
१९. अस्मात् शत्रो: D.
   सर्वस्माच्छत्रो: Sy.
२०. अधिका: Sy.
२१. भवेम Sy.
२२. हिंसन्त: Sy.
२३. अमित्राणि Sy.
२४. उभयानि जामिरूपाण्यजामिरूपाणि Sy.
२५. हे विक्रान्तेन्द्र ! Sy.
२६. या P., D.
   धनेन Sy.
२७. हृष्याम Sy.
२८. महता Sy.
२९. वयं त्वया रक्षिता: सन्त: Sy.

VI.20.

**द्यौर्न य इ॑न्द्रा॒भि भूमा॒र्यस्त॒स्थौ र॒यिः शव॑सा पृ॒त्सु जना॑न् ।**
**तं नः॑ स॒हस्र॑भरमुर्वरा॒सां द॒द्धि सू॑नो सहसो वृत्र॒तुर॑म् ॥ १ ॥**

द्यौर्न[1] यः[2] । आदित्यः[3] । इव । यः । इन्द्र ! अभितिष्ठति[4] । पृथिवीम्[5] । अरीन्[6] । जनान्[7] । बलेन । रयिः[8] । सङ्ग्रामेषु । तम्[9] । अस्मभ्यम् । सहस्रस्य भर्तारम्[10] । सर्वस्या भूमेर्दातारम्[11] । दद्धि[12] । सहसः सूनो[13] ! शत्रूणां हिंसितारम्[14] ।

**दि॒वो न तुभ्य॒मन्वि॑न्द्र स॒त्रासु॒र्यं॑ दे॒वेभि॑र्धायि॒ विश्व॑म् ।**
**अहिं॒ यद्वृ॒त्रम॒पो व॑व्रि॒वांसं॒ हन्नृ॑जीषि॒न्विष्णु॑ना सचा॒नः ॥ २ ॥**

**दिवो न** । आदित्यस्य[15] । इव । तुभ्यम् । अन्वधायि नु[16] । महद् । बलम्[17] । सर्वम्[18] । देवैः[19] । अहिम्[20] । यदा[21] । वृत्रम्[22] । अपः[23] । निरुन्धानम्[24] । हतवानसि[25] । ऋजीषिन्[26] ! विष्णुना सहायेन । सेव्यमानः[27] ।[28]

---

१. 'द्यौर्न य इन्द्र' इति त्रयोदशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षमैन्द्रं त्रैष्टुभम् । 'वि पिप्रोः' इत्येषा सप्तमी दशाक्षरचतुष्टययुक्ता विराट् । अनुक्रम्यते च—'द्यौर्न वि पिप्रोर्विराट्' (KSA. 30.20.p.22.) इति । पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवन उक्थ्यस्तोत्राणि यदि द्विपदासु स्तुवीरन्, यदि वाग्निष्टोमसंस्थः स्यात्तदानीं माध्यन्दिने सवनेऽच्छावाकः स्वशस्त्र आरम्भणीयाभ्य ऊर्ध्वमेतत् सूक्तं शंसेत् । सूत्रितञ्च—'द्यौर्न इन्द्रेत्यच्छावाकः' (ĀSS.8.4.) इति । इदमेव सूक्तमिन्द्राविष्णवोरुत्क्रान्तिनाम्न्येकाहे निष्केवल्यनिविद्धानम् । 'द्यौर्न इन्द्रेति मध्यन्दिनः' (ĀSS.9.7.) इति Sy.

२. ०र्म्न D.

३. तत्र दृष्टान्तः । द्योतमानः सूर्यो यथा Sy.

४. आक्रामेत् Sy.

५. भूतान्याक्रामति तद्वत् Sy.

६. शत्रून् Sy.

७. अरिञ्जनात् D.

८. ०यि P., D. पुत्ररूपं धनम् Sy.

९. पुत्रम् Sy.

१०. सहस्रस्य धनस्य भर्तारम् Sy.

११. ०स्य भूमैर्दा० P. उर्वराणां सस्याढ्यानां भूमीनां सनितारं सम्भक्तारम् Sy.

१२. द्धि P. देहि Sy.

१३. हे बलस्य पुत्रेन्द्र ! Sy.

१४. वृत्राणां शत्रूणां तरितारं तुर्वितारं वा Sy.

१५. सूर्याय Sy.

१६. ०यी D. व्यधायि । अकारि । स्तोत्रैः स्तूयमाना देवता बलवती भवतीत्यर्थः Sy.

१७. असुरत्वं बलम् Sy.

१८. व्याप्तम् Sy.

१९. देवः स्तोतृभिः Sy.

२०. आगत्य हन्तारम् Sy.

२१. येनासुर्येण Sy.

२२. असुरम् Sy.

२३. उदकानि Sy.

२४. परिवृण्वन्तम् Sy.

२५. अवधीः, तद्बलं व्यधायीति पूर्वेण सम्बन्धः Sy.

२६. हे विगतरससोमेन्द्र ! Sy.

२७. सङ्गच्छमानस्त्वम् । 'षच समवाये' इति धातो रूपम् Sy.

२८. VM. ignores इन्द्र and सत्रा ॥ हे इन्द्र ! सत्यमेव Sy.

तूर्वन्नोजीयान्तवसस्तवीयान्कृतब्रह्मेन्द्रो वृद्धमहाः ।
राजाभवन्मधुनः सोम्यस्य विश्वासां यत्पुरां दर्त्नुमावत् ॥ ३ ॥

तूर्वन्नोजीयान्[1] । तरन्[2] । अतिशयेन बलवान्[3] । वृद्धादपि । वृद्धः[4][5] । कृतस्तोत्रः[6] । इन्द्रः । वृद्धतेजाः[7] । राजा[8] । अभूत्[9] । सोममयस्य[10] । मधोः । विश्वासाम्[11] । पुराम्[12] । यदा । दारयितारं[13] वज्रम् । अभ्यगच्छत्[14] ।

शतैरपद्रन्पणय इन्द्रात्र दशोणये कवयेऽर्कसातौ ।
वधैः शुष्णस्याशुषस्य मायाः पित्वो नारिरेचीत्किं चन प्र ॥ ४ ॥

शतैः । शतैर्वधैस्त्वया कृतैः[15] । युद्धेऽपद्रन्[16] । असुराः[17] । अस्मिन् युद्धे । द्रविर्गतिकर्मा[18], कस्मिन्नित्याह—दशावासत्वात् कुत्सः[19] कविः[20], दशोणिस्तन्निमित्तम्[21] । त्वया कृते युद्धे[22] । वधैः[23] । शुष्णस्य[24] । शोषयितुमशक्यस्य[25] । मायाः[26] । अन्नानि[27] । न । किम् । चिदपि । प्रारेचयः[28] सर्वं विनाशितवानिति[29] ।

---

१. ०वर्नोजी० D.
२. हिंसकान् हिंसन् Sy.
३. अतिशयेन ओजस्वी Sy.
४. बलवतः Sy.
५. पृथु P. वृद्ध D. बलवत्तरः Sy.
६. ०तः स्तो० P. कृतं ब्रह्म स्तोत्रं यस्मै स्तोतृभिः सः । अथवा कृतं दत्तं ब्रह्मान्नं येन स्तोतृभ्यः सः Sy.
७. ०तेराज D. वृद्धतेजाः । एवम्भूत इन्द्रो राजाभवदिति Sy.
८. राजाम् P. स्वामी Sy.
९. आसीत् Sy.
१०. सोमो P. समोः D. मधुररसस्य Sy.
११. सर्वासाम् Sy.
१२. पुरीणाम् Sy.
१३. ०रः P., D. दारकं वज्रम् Sy.
१४. प्रापत् तदा Sy.
१५. शतसङ्ख्याकैर्बलैः सार्धम् Sy.
१६. युद्धोदवद्रन् P., D. अपाद्रवन् । अपलायन्त ? (पलायन्त) Sy.
१७. असुरा असुरा P., D. त्वत्सहायात् कुत्साद् बिभ्यतः पणयः एतन्नामकासुराः Sy.
१८. वदिर्ग० P., D. The passage 'द्रविर्गतिकर्मा' should immediately follow अपद्रन् and precede असुराः ।
१९. कृत्सः P.
२०. कवये—मेधाविनः । पञ्चम्यर्थे चतुर्थी Sy.
२१. ०शोर्णस्त० P., D.
२२. अर्कोऽन्नं प्राप्यतेऽस्मिन्नित्यर्कसातिर्युद्धम् । तस्मिन् Sy.
२३. हननसाधनैरायुधैः Sy.
२४. वधै शुष्ण P., D. एतन्नामकासुरस्य कुत्सस्य शत्रोः Sy.
२५. अशुष्कस्य । सम्पूर्णबलस्येत्यर्थः Sy.
२६. कपटान् Sy.
२७. ०यान्ना P., D. अन्नस्य Sy. पितुरित्यन्ननाम-Ngh. 2.7.
२८. प्रातरे० P., D. अरिक्तानतिरिक्तान् अकरोत् । तदीयमन्नं सर्वमप्यपाहारयत् Sy.
२९. VM. ignores इन्द्र ।

**म॒हो द्रु॒हो अप॑ वि॒श्वायु॑ धायि॒ वज्र॑स्य॒ यत्पत॑ने॒ पादि॒ शुष्णः॑ ।**
**उ॒रु ष स॒रथं॒ सार॑थये॒ क॒रिन्द्रः॒ कुत्सा॑य॒ सूर्य॑स्य सा॒तौ ॥ ५ ॥**

महः[1] । महतः । द्रोग्धुः[2] । अपधायि[3] । सर्वगं शरीरम्[4] । वज्रस्य[5] । यदा । पतने[6] । पतितः[7] । शुष्णा-सुरः[8] । बहु कार्यम्[9] । नः । इन्द्रः । एकं रथमास्थाय[10] । सारथ्यं कुर्वते[11] । कुत्साय । अकरोत् । सूर्यस्य । सम्भजने[12] । "प्रैतशं सूर्ये"[13] इत्युक्तम्[14] ।

**प्र श्ये॒नो न म॑दि॒रम॒ंशुम॑स्मै॒ शिरो॑ दा॒सस्य॒ नमु॑चेर्मथा॒यन् ।**
**प्राव॒न्नमीं॑ सा॒प्यं स॒सन्तं॑ पृ॒णग्रा॒या समि॒षा सं स्व॒स्ति ॥ ६ ॥**

प्र श्येनः[15] । यथा[16] । इन्द्राय । श्येनः[17] । मदिरम्[18] । सोममद्रेरमथ्नात् । एवं नमेः[19] । सपपुत्रस्य[20] । स्वपतः[21] । बाधायामुद्युक्तस्य[22] । नमुचेरमुरस्य[23] । शिरः[24] । मथायन्[25] । तं प्रकर्षेणारक्षः[26] । ततस्तं नमीं[27] धनेन[28] । अन्नेन । स्वस्तिना[29] च । समयोजयत्[30][31] ।

---

१. ०ह P., D.
२. शुष्णस्य सम्बन्धि Sy.
३. अव D. अपहितमकारि। तिरस्कृतमित्यर्थः Sy.
४. सर्वगतं बलमिति शेषः Sy.
५. वर्जस्य P., D.
६. पनते D. पाते Sy.
७. अगच्छत् । अम्रियतेत्यर्थः । तदा Sy.
८. स शुष्णोऽसुरः Sy.
९. विस्तीर्णं यथा भवति तथा Sy.
१०. समानरथम् Sy.
११. सारथिभूताय Sy.
१२. भजने निमित्तभूते Sy.
१३. RV.I.61.15.
१४. तथा चोक्तम् ।
कुत्सायेन्द्रोऽसुरं शुष्णं जिघांसुः कुत्समात्मनः ।
सारथिं कल्पयित्वास्य शत्रुं शुष्णमहंस्ततः ।
कुत्सस्य रक्षां बहुलां चकारेत्यनयोच्यते । Sy.
१५. ०न P., D.
१६. नेत्ययं शब्दः समुच्चये वर्तते Sy.
१७. सुपर्णश्च Sy.
१८. मदकरम् Sy.
१९. VM. seems to explain नमीम् । साप्यम् and ससन्तम् as नमेः । सपपुत्रस्य and स्वपतः ॥ नमीम् एतत्संज्ञमृषिम् Sy.
२०. सवपु० P. सपस्य पुत्रम् Sy.
२१. ०पदः P. स्वपन्तम् Sy.
२२. बाधायामुद्युक्तस्य seems to be the explanation of दासस्य ॥ किञ्चायमिन्द्रोऽपि दासस्य प्राणिनामुपक्षपयितुः Sy.
२३. एतन्नाम्नोऽसुरस्य Sy.
२४. शीर्षम् Sy.
२५. मन्थनं कुर्वन् Sy.
२६. प्रारक्षत् Sy.
२७. ०स्तनमस् P. ०स्तन्नमिम् D.
२८. पश्वादिधनेन Sy.
२९. अविनाशेन Sy.
३०. ०योचयत D. मयोचयत् P. तमृषिं समयोजयत् Sy.
३१. VM. explains प्र and सम् once only. प्रेति 'आ' इत्यस्यार्थे वर्तते । आहरत् । उपसर्गदर्शनाच्चाख्यातमध्याह्रियते Sy.

**वि पिप्रोरहिमायस्य दृळ्हाः पुरो वज्रिञ्छवसा न दर्दः ।**
**सुदामन्तद्रेक्णो अप्रमृष्यमृजिश्वने दात्रं दाशुषे दाः ॥ ७ ॥**

**वि पिप्रोः**[1] । विदारितवानसि । पिप्रोः[2] । आहन्तृमायस्य[3] । दृढाः[4] । पुरः[5] । वज्रिन्[6] ! बलेन । नेति[7] समुच्चयार्थीयः । शोभनदानम्[8] । पिप्रोस्तत्[9] । धनम् । अन्यैरनभिभवनीयम्[10] । बहुत्वाद्[11] ऋजिश्वने[12] । यजमानाय[13] । दत्तवानसि[14] । बन्धुभ्यो दातव्यम्[15] ।

**स वेतसुं दशमायं दशोणिं तूतुजिमिन्द्रः स्वभिष्टिसुम्नः ।**
**आ तुग्रं शश्वदिभं द्योतनाय मातुर्न सीमुप सृजा इयध्यै ॥ ८ ॥**

**स वेतसुम्** । सः । इन्द्रः । सुष्ठ्वभ्येषणीयसुखः[16] । द्योतमानायर्षये[17] । वेतसुप्रभृतीन्[18] । उपसृष्टानकरोत्[19] । बहूनेतान्[20] । यथा[21] । मातुः[22] पुत्राय वशवर्तिने एवं[23] वशमनयत् । आकारः समुच्चये[24] । सीमिति परिग्रहार्थीयः[25] । इयध्यै प्रदानाय[26] गन्तुम्[27] ।

---

१. विप्रोः P., D.
२. विप्रोः P., D. एतन्नाम्नोऽसुरस्य सम्बन्धिनीः Sy.
३. ०न्तमा० P., D.
आहन्त्र्यो माया यस्य Sy.
४. दृढानि Sy.
५. प्राकारादीनि दुर्गाणि Sy.
६. हे वज्रवन्निन्द्र ! त्वम् Sy.
७. नेति पादपूरणः । 'त्वं पिप्रोर्नृमणः प्रारुजः पुरः' (RV.I.51.5.) 'शतं पूर्भिरायसीभिर्नि पाहि' (RV.VII.3.7.) इति दर्शनात् Sy.
८. हे शोभनदानेन्द्र ! Sy.
९. तस्य स्वभूतम् Sy.
१०. अभि० D.
केनाप्यबाध्यम् Sy.
११. ०त्वान् D.
१२. एतन्नामकाय राजर्षये Sy.
१३. दत्तवते Sy.
१४. अदाः । दत्तवानसि Sy.
१५. The passage beginning with धनम् and ending with दातव्यम् is omitted by P. हविर्लक्षणं धनम् Sy.
१६. सुष्ठ्वभ्येषणीयान्यभिगम्यानि सुम्नानि सुखानि देयानि येन Sy.
१७. एतत्संज्ञाय राज्ञे Sy.
१८. प्रभृति refers to दशमायम् । दशोणिम् । तूतुजिम् । तुग्रम् and इभम् ॥ वेतसुनामानमसुरम् । दशमायं बहुवञ्चनम् । दशोणिमेतन्नामकं च । तूतुजिं तूतुजिनामकं च । आ अपि च तुग्रं तुग्रनामकमसुरं तथेभमेतन्नामकमसुरम् Sy.
१९. उपासृजत् । वशीचकार Sy.
२०. ०हून्येतान् D.
२१. तत्र दृष्टान्तः । जनन्या इव पुत्रम् । यथा मात्रे पुत्रो वशीभवति तद्वद्वशं चकार Sy.
२२. The passage beginning with सवेतसुं and ending with मातुः is omitted by P.
२३. एव P., D.
२४. अपि च Sy.
२५. पादपूरणः Sy.
२६. ०ध्येकरप्र० P.
०ध्यैकं प्र० D.
२७. एतुम् Sy.

स ईं॑ स्पृधो॑ वनते॒ अप्र॑तीतो॒ बिभ्र॒द्वज्रं॑ वृत्र॒हणं॒ गभ॑स्तौ ।
तिष्ठ॒द्धरी॒ अध्यस्ते॑व॒ गर्ते॑ वचो॒युजा॑ वहत॒ इन्द्र॑मृ॒ष्वम् ॥ ९ ॥

स ईम्[1]। सः[2]। एतान्[3]। शत्रून्[4]। स्वयं भजते[5]। शत्रुभिरप्रतिगतः। बिभ्रत्[6]। वज्रम्[7]। शत्रूणां[8] हन्तारम्। बाहौ[9]। आतिष्ठति[10] च। अश्वौ[11]। योद्धेव[12]। रथम्[13]। वचोयुजौ[14] तौ[15]। इन्द्रम्। वहतः। दर्शनीयम्[16] ।[17]

स॒नेम॒ तेऽव॑सा॒ नव्य॑ इन्द्र॒ प्र पू॒रवः॑ स्तवन्त ए॒ना य॒ज्ञैः ।
स॒प्त यत्पुरः॒ शर्म॒ शार॑दी॒र्दर्द्धन्दासीः॑ पुरु॒कुत्सा॑य॒ शिक्ष॑न् ॥ १० ॥

सनेम। भजेमहि[18]। नवतरं धनम्[19]। तव। रक्षणेन[20]। अनेन[21] धनेन हेतुना। हविर्भिः सह। मनुष्या-[22]स्त्वाम्। प्रकर्षेण स्तुवन्ति। सप्त[23]। यदा[24]। विशरणीयाः[25]। शरन्नाम्नः[26]। पुरीः। दारितवान्[27]। तदा हतवान्[28] इन्द्रः। पुरुकुत्साय[29]। दासीः[30] सेनाः। वशं नयन् धनं[31] वा प्रयच्छन्[32]।

---

१. ई P. रं D.
२. इन्द्रः Sy.
३. इमान् वृत्रप्रभृतीन् Sy.
४. स्पर्धमानान् Sy.
५. हन्ति Sy.
६. धारयन् Sy.
७. स्वकीयमायुधम् Sy.
८. वृत्राणां शत्रूणां हन्तारम् Sy.
९. हस्ते Sy.
१०. बहावति॰ P. अति॰ D. आरोहति Sy.
११. स्वकीयावश्वौ Sy.
१२. योद्वेव P. तत्र दृष्टान्तः। यथा क्षेप्ता शूरः Sy.
१३. रथेऽधितिष्ठति तद्वत् Sy.
१४. पवोयु॰ P. ववोयुंजौ D. वचोमात्रेण युज्यमानौ। यद्वा स्तोतॄणां स्तुतिभिर्युज्यमानौ Sy.
१५. तावत् P., D. हरी च Sy.
१६. महान्तम् Sy.
१७. VM. ignores अधि।
१८. वयं स्तोतारो भजेमहि Sy.
१९. नवीयो नवतरं त्वया दीयमानं धनम् Sy.
२०. त्वदीयेन Sy.
२१. अनेन स्तोत्रेण युक्तैः Sy.
२२. मनुष्याः स्तोतारः Sy.
२३. सप्तसङ्ख्याकाः Sy.
२४. दा P.
यस्मात् कारणात् Sy.
२५. विरणी॰ P. विशणी॰ D. शर्म शर्मणा वज्रेण Sy.
२६. शरीर्नाम्नः P. शरन्नाम्नोऽसुरस्य सम्बन्धिनीः Sy.
२७. विदारितवानसि तस्मात्कारणात्त्वां स्तोतारः स्तुवन्तीत्यर्थः Sy.
२८. घ्नन् हिंसन् Sy.
२९. एतन्नामकाय राज्ञे Sy.
३०. कर्मणामुपक्षपयित्रीः शत्रुप्रजाः Sy.
३१. धनानि प्रयच्छन् Sy.
३२. VM. ignores इन्द्र।

**त्वं वृध इन्द्र पूर्व्यो भूर्वरिवस्यन्नुशने काव्याय ।**
**परा नववास्त्वमनुदेयं महे पित्रे ददाथ स्वं नपातम् ॥ ११ ॥**

त्वं वृधः । त्वम् । वर्धयिता[1] । इन्द्र ! मुख्यः[2] । अभूः[3] । धनमिच्छन् । कविपुत्राय । उशनसे[4] । तथा परादत्तवानसि[5] । महते । पित्रे[6] । स्वनुत्रम्[7] युद्धे त्वया गृहीतमहत्त्वयाचनाय[8] । नववास्तुनामानम्[9] । अनुदातव्यम्[10] ।

उत्तरा व्याख्याता[11] ।

**त्वं धुनिरिन्द्र धुनिमतीर्ऋणोरपः सीरा न स्रवन्तीः ।**
**प्र यत्समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥ १२ ॥**

[त्वं धुनिः[12] ।]

**तव ह त्यदिन्द्र विश्वमाजौ सस्तो धुनीचुमुरी या ह सिष्वप् ।**
**दीदयदित्तुभ्यं सोमेभिः सुन्वन्दभीतिरिध्मभृतिः पक्थ्यर्कैः ॥ १३ ॥**

तव । तव । एव । इन्द्र ! सङ्ग्रामे । एतत्[13] । विश्वं[14] कर्म[15] भवति यत् सूक्त उक्तम् । तथा धुनिश्च

---

१. स्तोतॄणां वर्धकः Sy.

२. पुरातनः Sy.

३ ०भूद् P. भवसि Sy.

४. उशनसे भार्गवाय Sy.

५. वरंद० P. तस्य शत्रुं हत्वा प्रकर्षेण दत्तवानसि Sy.

६. पालयितव्यायोशनसे Sy.

७. पुत्रे P. VM. explains स्वं and नपातम् together as स्वपुत्रम् ॥ स्वकीयमौशनसं नपातं युद्धे शत्रुभिर्गृहीतं पुत्रम् Sy.

८. ०स्त्व० is suggested for ०त्व० ।

९. नवपास्तु० D. एतन्नामकमसुरं पराहत्य Sy.

१०. अनुदातव्यं धनम् Sy.

११. उत्तर व्याख्यातव्यः P.

१२. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV. I.174.9. Sy. explains it again in the following manner:--
हे इन्द्र ! धुनिः शत्रूणां कम्पयिता त्वं धुनिमती-र्धुनिर्नामासुरो यासु निरोधकतया विद्यते ता अप उदकानि सीरा न नदीरिव स्रवन्तीः प्रव-हन्तीर्ऋणोः । अगमयः । धुनिं हत्वा तेन निरोधितान्युदकानि प्रवाहयतीत्यर्थः । हे शूर ! वीरेन्द्र ! यद्यदा समुद्रमति अतिक्रम्य प्र पर्षि प्रतीर्णो भवसि तदा समुद्रपारे तिष्ठन्तौ तुर्वशं यदुं च स्वस्ति क्षेमेण पारय । अपारयः । समुद्रमतारयः ।

१३. तादृशम् Sy.

१४. व्याप्तम् Sy. १५. किमु P.

चुमुरिंश्चासुरौ[1] । अद्यापि[2] । स्वपतः[3] । त्वं यौ । अस्वापयः[4] । दीप्यते[5] । एव[6] । तुभ्यम्[7] । सोमैः । सुन्वन्[8] । दभीतिर्नाम[9] । अग्निमिध्मैर्विभ्रत्[10] । पचन्[11] पक्तव्यान्[12] । स्तुतिभिः[13] सह[14] ।

## VI.21.

**इमा उं त्वा पुरुतमस्य कारोर्हव्यं वीर हव्या हवन्ते ।**
**धियो रथेष्ठामजरं नवीयो रयिर्विभूतिरीयते वचस्या ॥ १ ॥**

इमा उ त्वा[15] । इमाः[16] । खलु[17] । त्वा[18] । बहुतमस्य[19] । स्तोतुः[20] । हवाहम्[21] । हवनकुशलाः[22] । स्तुतयः । हवन्ते[23] । रथे स्थितम्[24] । अजरम् । नवतरम्[25] । रयिः[26] । विभूतिश्च[27] । प्राप्यते[28] । तव स्तुत्येति[29] ।[30]

---

१. धुनिश्चासुरौ D. युनिश्वासुरौ P. इत्येतन्नामकावसुरौ Sy.
२. द्वितीयो हशब्दः पादपूरणः Sy.
३. सङ्ग्रामे सुप्तवन्तौ मृतावित्यर्थः । भूतार्थे व्यत्ययेन लट् Sy.
४. यापस्वा० P.
५. धुनिं चुमुरिं तस्मै जघन्थेत्यर्थः । 'त्वं नि दस्युं चुमुरिं धुनिं च' (RV.VII.19.4.) इति दर्शनात् Sy.
६. द्वितीयो हशब्दः पादपूरणः Sy.
७. तदनन्तरं हे इन्द्र ! त्वदर्थम् Sy.
८. सोमानभिषुण्वन् Sy.
९. राजर्षिः Sy.
१०. इध्मैबि० P., D. इध्मानां भर्ताऽऽहर्ता वा Sy.
११. वचत् P. पक्ववान् हवींषि पक्तवान् Sy.
१२. वक्तव्यां P. पक्तव्यां D.
१३. हविर्लक्षणैरन्नैः Sy.
१४. सहत् D.
१५. 'इमा उ त्वा' इति द्वादशर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । नवम्येकादशी च वैश्वदेव्यौ । तथाचानुक्रम्यते—'इमा उ द्वादश नवम्येकादश्यौ वैश्वदेव्यौ' (KSA. 30.21. p.22.) इति । उपहव्यनाम्न्येकाह इदं सूक्तं मरुत्वतीयनिविद्धानम् । सूत्रितञ्च—'इमा उ त्वा य एक इदिति मध्यन्दिनः' (ĀSS. 9.7.) इति । इन्द्राविष्ण्वोरुत्क्रान्तिनाम्न्येकाहेऽपीदं मरुत्वतीयनिविद्धानम् । सूत्रितञ्च—'इमा उ त्वा द्यौर्न य इन्द्रेति मध्यन्दिनः' (ĀSS. 9.7.) इति । तृतीये छन्दोमेऽपि मरुत्वतीय इदं सूक्तम् । सूत्रितञ्च—'प्र मन्दिन इमा उ त्वेति मरुत्वतीयम्' (ĀSS. 8.7.) इति Sy.
१६. ०मा P.
१७. उ इति पूरणः Sy.
१८. त्वाम् Sy.
१९. पुरुतमस्य बहुलं कामं काङ्क्षत । 'तमु अभिकाङ्क्षायाम्' इति धातुः Sy.
२०. स्तोतुर्भरद्वाजस्य सम्बन्धिन्यः Sy.
२१. हवाहं P. हव्यम् Sy.
२२. स्तुत्याः प्रशस्याः Sy.
२३. ह्वयन्ति Sy.
२४. जरारहितम् Sy.
२५. नवीयांसम् Sy.
२६. ०यि P. ०यि D. हविर्लक्षणं धनम् Sy.
२७. ०तिश्वाश्च P. जगतो विभवहेतुः Sy.
२८. त्वामभिगच्छति Sy.
२९. अपि च स्तुत्या Sy.
३०. VM. ignores वीर ॥ हे वीर ! शूरेन्द्र ! Sy.

**तमु॒ स्तु॑ष॒ इन्द्रं॒ यो विदा॑नो॒ गिर्वा॑हसं गी॒र्भिर्य॒ज्ञवृ॑द्धम् ।**
**यस्य॑ दि॒वमति॑ म॒ह्ना पृ॑थि॒व्याः पु॑रु॒माय॑स्य रिरि॒चे म॑हि॒त्वम् ॥ २ ॥**

तमु स्तुषे : तम् । एव । स्तौमि[1] । इन्द्रम्[2] । यः[3] । विद्वान्[4] । इन्द्रस्तम् । गीर्भिः । यज्ञे[5] वर्धितम् । यस्य[6] । महत्वम्[7] । महत्वेन[8] । दिवम्[9] । अतिरिरिचे[10] । पृथिव्याश्चातिरिक्तं[11] भवति[12] । बहुप्रज्ञस्य[13] [14] ।

**स इ॒त्तमो॑ऽवयु॒नं त॑त॒न्वत्सूर्ये॑ण व॒युन॑वच्चकार ।**
**क॒दा ते॒ मर्ता॑ अ॒मृत॑स्य॒ धामेय॑क्षन्तो॒ न मि॑नन्ति स्वधावः ॥ ३ ॥**

स इत्तमः[15] । सः[16] । एव[17] यः[18] [19] । तमः[20] । प्रज्ञानरहितम्[21] । विस्तारवत्[22] । सूर्येण[23] । प्रज्ञानवत्[24] । चकार[25] [26] ।

---

१. स्तुवे Sy.
२. स्तौदीन्द्र P.
३. इन्द्रः Sy.
४. सर्वं विद्वान् सर्वैर्ज्ञायमानो वा Sy.
५. यज्ञैः प्रवृद्धम् Sy.
६. यज्ञ P. इन्द्रस्य Sy.
७. ०त्व० is suggested for ०त्व० ।। माहात्म्यम् Sy.
८. ०त्वे० is suggested for ०त्वे० ।। महिम्ना Sy.
९. दिविम् D. दिवो द्युलोकात् । पञ्चम्यर्थे द्वितीया Sy.
१०. अतिरिच्यते तं स्तुत्र इति सम्बन्धः Sy.
११. भूलोकात् Sy.
१२. ०क्तमतिरति P.
१३. बहुप्रज्ञस्य बहुवञ्चनस्य वा Sy.
१४. VM. ignores गिर्वाहसम् । गिर्वाहसं गीर्भिर्वहनीयम् Sy.
१५. उत्तमः P., D. भरद्वाजस्यार्षम् Dur.; SKN.
१६. अत्रेतिहासमाचक्षते । वृत्रः किल महत्तमस्ततान । तेनावृतं सर्वमप्रज्ञानं बभूव । तं ततन्वत्सूर्यं दिवि, आरोपयाञ्चकारेति । तदेतेनर्धर्चेनोच्यते SKN.
१७. इन्द्रः Sy. स त्वम् Dur. स एव प्रकृत इन्द्रः SKN.
१८. एतत् Dur. इदेवार्थे SKN.
१९. यस्त्वमेवंगुणविशिष्टो हे भगवन्निन्द्र ! यथा गुणं त्वामवोचाम Dur.
२०. स येव य तुमः P.,D. अन्धकारम् Sy. शार्वरं तमः Dur.
२१. अप्रज्ञानम् । प्रज्ञाननाशनमित्यर्थः Sy. अप्रज्ञानलक्षणम् Dur. अकान्तमप्रज्ञानं वा निरुद्धसर्वदृष्टिपथमित्यर्थः SKN.
२२. वृत्रेण विस्तीर्यमाणम् Sy. स एव तं सर्वमेवैनं लोकं. . . .सन्तनोति Dur. अत्यन्तं ततवद् विस्तीर्यमाणमित्यर्थः SKN.
२३. दिव्यारोपितेन देवेन Sy. स्वेन प्रकाशाख्येन रूपेण Dur.
२४. प्रकाशवत् Sy. 'प्राणो हीन्द्रः तस्मात्सूर्य उदेति प्राणाद्धैष उदेति, प्राणेऽस्तमेति' इति ह्युक्तम् । तस्मात् प्राण इन्द्रः सूर्यस्योदयहेतुः । स तं सूर्यमुदगमयत् । तेन सूर्येण वयुनवत् प्रज्ञानवत् Dur. कान्तिमत् प्रज्ञानवद्वा SKN.
२५. ०नवच्यका० P. ०नच्च० D. कृतवान् Sy. एतज्जगज्ज्ञानवत्करोति । तस्मात्स एवेन्द्र एवमुच्यते सूर्येण त्वमेतज्जगद्वयुनवत्—प्रज्ञानवच्चकार कृतवानसीत्यर्थः Dur. वृत्रं हत्वा सूर्यं दिवि, आरोपितवान् । कः ? इन्द्रः, प्रातः प्रातश्च सूर्यमुद्गमयन्नस्तं च नयति SKN.
२६. परोऽर्धर्चः प्रत्यक्षकृतः Sy. परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् SKN.

कदाचिदपि[1] । मर्ताः[2] । अमृतस्य[3] । तव[4] । धाम[5] । यष्टुमिच्छन्तः[6] । शत्रुभिर्न । हिंस्यन्ते[7] । अन्नवन्[8] ![9]

**यस्ता चकार स कुह स्विदिन्द्रः कमा जनं चरति कासु विक्षु ।**
**कस्ते यज्ञो मनसे शं वराय को अर्क इन्द्र कतमः स होता ॥ ४ ॥**

**यस्ता चकार**[10] । यः[11] । तानीमानि कर्माणि[12] । चकार[13] । सः । इन्द्रः । कुह[14] । स्विद् भवति[15] । कं वा । जनपदम्[16] । आभिमुख्येन चरति । कासु वा । प्रजासु[17] । कः[18] । तव । यज्ञः[19] । मनसे[20] । वरणीयाय[21] । सुखकरो भवति । को वा[22] । मन्त्रः[23] । कतमो वा । सः । होतेति[24] ।[25]

---

१. D. adds कदापि before कदाचिदपि ॥ सर्वदेत्यर्थः Sy. कस्मिन् काले Dur.; SKN.

२. मनुष्याः Sy., SKN. मरणधर्माणो मनुष्याः Dur.

३. नित्यस्य Sy. अमरणधर्मिणः Dur. अमरणधर्मणः SKN.

४. त्वदीयम् Sy. यस्त्वमेवम्प्रभावस्तस्य तव Dur. तव स्वभूतम् SKN.

५. स्वर्गाख्यं स्थानम् । तत्रस्थान्देवानित्यर्थः Sy. स्थानम् Dur.
स्थानं वेद्याख्यमभिप्रेतं SKN.

६. इयक्षन्तम् इत्यपि यजतेः सन्नन्तस्यादिलोपेन रूपम् । तव स्थानं वेद्याख्यमियक्षन्तः SKN.

७. किमपि प्राणिजातं न हिंसन्ति Sy. न श्रयन्ति Dur. सर्वदाऽन्नादिसंस्कारैः संस्कुर्वन्तीत्यर्थः SKN.

८. हे बलवन्निन्द्र ! Sy. अन्नवन् ! सर्वदैव तवापरिक्लिष्टं स्थानम् । कृतावकाशस्त्वं यज्ञेष्वित्यभिप्रायः Dur. स्वधाऽन्नमुदकं वा तेन तद्वत् SKN.

९. एवमिह 'तमस्ततन्वत् सूर्येण' 'वयुनवच्चकार' इत्यनेन सम्बन्धाद् वयुनशब्देन प्रज्ञानमित्युच्यत इत्युपपत्तिः । कान्त्यर्थत्वमपि क्वचिदुपेक्ष्यमिहैव वा पक्षेण योज्यम् Dur. स तमोऽप्रज्ञानं ततन्वत् । स तं सूर्येण प्रज्ञानवच्चकार N.5.15.,II.347.

१०. चकरः D.

११. इन्द्रः Sy.

१२. उक्तानि प्रसिद्धानि वृत्रवधादीनि कर्माणि Sy.

१३. अकरोत् Sy.

१४. क्व Sy.

१५. वर्तते Sy.

१६. देशम् Sy.

१७. प्रजासु वर्तत इतीन्द्रस्य विभूतिमहत्त्वान्न निश्चेतुं शक्यते Sy.

१८. अथ प्रत्यक्षस्तुतिः । कीदृशः ? Sy.

१९. यज्ञे P., D.

२०. चेतसे Sy.

२१. वरणाय Sy.

२२. को वा को वा P.

२३. मन्त्रः समर्थो भवति Sy.

२४. होति P.D. आह्वाता । तव वरणाय यः समर्थो भवति स होता कतमश्च भवति Sy.

२५. VM. ignores इन्द्र ।

इ॒दा हि ते॒ वेवि॑षतः पु॒रा॒जाः प्र॒त्नास॑ आ॒सुः पु॑रुकृ॒त्सखा॑यः ।
ये म॑ध्य॒मास॑ उ॒त नूत॑नास उ॒ताव॒मस्य॑ पुरुहूत बोधि ॥ ५ ॥

इदा हि । इदानीम्[1] । खलु[1] । तव । सर्वं जगद् व्याप्नुवानस्य[2] । प्रत्नाः[3] । अभवन्[4] । बहूनां कर्मणां कर्तः[5] ! स्तोतारः । ततः पूर्वे[6] च । ये । मध्यमाः[7] । अपि च । नूतनाः[8] । अपि च । अवमस्य[9] मम स्तुतिम् । पुरुहूत[10] ! बुध्यस्व ।

तं पृ॒च्छन्तोऽव॑रासः॒ परा॑णि प्र॒त्ना तं इन्द्र॒ श्रुत्यानं ये॒मुः ।
अर्चा॑मसि वीर ब्रह्मवाहो॒ यादे॒व वि॒द्म तात्त्वा॑ म॒हान्त॑म् ॥ ६ ॥

तं[11] पृच्छन्तः । तं[12] त्वा । कीदृश इन्द्र इति पृच्छन्तः[13] । अवराः[14] । तव[15] । पराणि[16] । प्रत्नानि[17] । श्रवणीयानि[18] कर्माणि । अनुयच्छन्ति[19]—स्तुतिभिर्बध्नन्ति । अर्चामः[20] । वीर[21] ! गीर्वाहः[22] । त्वाम्[23] । महान्तम्[24] । यानि[25] । एव चरितानि । जानीमः[26] । तैः[27], द्वितीयाया[28] आदादेशस्तृतीयायाश्चेति । [29]

---

१. इदानीमिव । हिशब्द उपमार्थे वर्तते Sy.

२. कर्माणि प्राप्नुवन्तः Sy.

३. पुराणा अङ्गिरःप्रभृतयः Sy.

४. बभूवुः Sy.

५. कर्ता D.

६. पूर्वस्मिन् काले जाताः Sy.

७. मध्यमकालजाः Sy.

८. ये अद्यतना यतस्तेऽपि सर्वे ते स्तोतारो बभूवुः, अतः कारणात् Sy.

९. व० P.D. अर्वाचीनस्य ममापि स्तोत्रम् Sy.

१०. बहुभिराहूतेन्द्र ! Sy.

११. तम D.

१२. उक्तगुणोपेतम् Sy.

१३. अर्चन्तः । पृच्छतिरर्चतिकर्मा Sy.

१४. अपरः P. अपराः D. अर्वाचीना मनुष्याः Sy.

१५. त्वदीयानि कर्माणि Sy.

१६. वरा० P. प्रकृष्टानि Sy.

१७. प्रश्नानि P., D. पुराणानि Sy.

१८. श्रोतव्यानि Sy.

१९. अनुयमनं निबन्धनम् । स्तुतिरूपाभिर्वाग्भिर्नि-बबन्धुः Sy.

२०. अर्चाह P. अर्चाहा D. अर्चामः स्तुमः Sy.

२१. हे शूर ! Sy.

२२. ब्रह्मभिर्मन्त्रैर्वहनीयेन्द्र ! Sy.

२३. गीर्वाहस्त्व P.

२४. ०न्त P. महान्ति D. तथा वयमपि महान्तं प्रभूतम् Sy.

२५. यन्यव P. अव D. कर्माणि Sy.

२६. तैः कर्मभिः स्तुम इति सम्बन्धः Sy.

२७. ०तीयया P.

२८. आदेश० D. द्वितीयायाः...याश्च—refers to यात् and तात् ॥

२९. VM. ignores इन्द्र !

अभि त्वा पाजो रक्षसो वि तस्थे महि जज्ञानमभि तत्सु तिष्ठ ।
तव प्रत्नेन युज्येन सख्या वज्रेण धृष्णो अप ता नुदस्व ॥ ७ ॥

अभि त्वा । अभिवितिष्ठते[1]–अभिभवति । त्वा[2] । रक्षसः[3] । बलम्[4] । महत्[5] । तत्[6] । प्रादुर्भूतम्[7], अवः[8] ? त्वम् । अभिभव[9] । तव[10] । पुराणेन । योग्येन[11] । सख्या[12] । वज्रेण । हे धृष्णो[13] ! तानि[14] रक्षांसि । अपनुदस्व[15] [16] ।

स तु श्रुधीन्द्र नूतनस्य ब्रह्मण्यतो वीर कारुधायः ।
त्वं ह्या३पिः प्रदिवि पितॄणां शश्वद्बभूथ सुहव एष्टौ ॥ ८ ॥

स तु श्रुधि[17] । सः[18] । तु[19] । शृणु । इन्द्र[20] । सम्प्रतितनस्य[21] । स्तुतिमिच्छतः[22] । वीर ! स्तोतॄणां धर्तः[23] । त्वम् । हि[24] । आप्तः[25] । पुराणे[26] कालेऽस्मभ्यम्[27] । पितॄणाम्[28] । सर्वदा[29] । बभूथ[30] । स्वाह्वानः[31] । आभिमुख्येन यागे[32] ।

---

१. ०ष्ठेते P.
अभिमुखं प्रतिष्ठते Sy.
२. हे इन्द्र ! त्वाम् Sy.
३. रक्षसां सम्बन्धि Sy.
४. सेनालक्षणं बलम् Sy.
५. महः D.
६. बलम् Sy.
७. प्रादुर्भवत् Sy.
८. अवः is doubtful.
९. अभिमुखः सन् तिष्ठ स्थिरो भव Sy.
१०. त D. त्वदीयेन Sy.
११. नियोज्येन Sy.
१२. पव्या D.
नित्यसहायेन Sy.
१३. हे शत्रूणां धर्षकेन्द्र ! Sy.
१४. तद्बलम् Sy.
१५. एवनु P. D. अपगतं प्रेरय । छिन्धीत्यर्थः Sy.
१६. VM. ignores सु ॥ सु सुष्ठु Sy.
१७. ०धिः D.
१८. प्रसिद्धस्त्वम् Sy.
१९. क्षिप्रम् Sy.
२०. शृणीन्द्र P.
२१. इदानीन्तनस्य Sy.
२२. ०मिच्छान्ता P., D. ब्रह्म स्तोत्रं कर्तुमिच्छतो मम स्तोत्रम् Sy.
२३. हे कारूणां स्तोतॄणां धारक ! Sy.
२४. यस्मात् कारणात् Sy.
२५. बन्धुः Sy.
२६. पूर्वस्मिन् काले Sy.
२७. कास्म० P.
२८. अङ्गिरसाम् Sy.
२९. चिरकालम् Sy.
३०. बहूथ P., D. अभूः । तस्मात् कारणान्मदीयं स्तोत्रं श्रुधीति सम्बन्धः Sy.
३१. ०हानः P., D.
शोभनाह्वानः सन् Sy.
३२. आयजनेऽभिकामने वा सति Sy.

प्रोतये वरुणं मित्रमिन्द्रं मरुतः कृष्वावसे नो अद्य ।
प्र पूषणं विष्णुमग्निं पुरंधिं सवितारमोषधीः पर्वतांश्च ॥ ९ ॥

प्रोतये । स्तोतः[1] ! वरुणादीन्[2] । अस्माकम् । रक्षणाय[3] । प्रकुरुष्व[4] । पुनरवस इति पूरणम्[5] । वाक् पुरन्धिः । वरुणादिदेवतेयमिति[6] ।

इम उ त्वा पुरुशाक प्रयज्यो जरितारो अभ्यर्चन्त्यर्कैः ।
श्रुधी हवमा हुवतो हुवानो न त्वावाँ अन्यो अमृत त्वदस्ति ॥ १० ॥

इम उ[7] त्वा । इमे । त्वाम् । बहुधन[8] ! प्रकर्षेण यष्टव्य[9] ! स्तोतारः । अभ्यर्चन्ति[10] । स्तोत्रैः[11] । आश्रुधि[12] । हवम्[13] । हूयमानस्त्वम्[14] । न । त्वत्सदृशः । अन्यः । त्वत्तः कश्चित् । अस्ति । अमृतः[15][16] ।

नू म आ वाचमुप याहि विद्वान्विश्वेभिः सूनो सहसो यजत्रैः ।
ये अग्निजिह्वा ऋतसाप आसुर्ये मनुं चक्रुरुपरं दसाय ॥ ११ ॥

नू म आ[17] वाचम्[18] । क्षिप्रम् । मदीयाम्[19] । वाचम्[20] । उपागच्छ[21] । जानन्[22] । सर्वैः[23] । देवैः[24] । हे बलस्य,

---

१. अस्यामृचि विश्वे देवाः स्तूयन्ते । हे भरद्वाज ! Sy.

२. ०णदीन् P. D. आदि refers to मित्रम् । इन्द्रम् । मरुतः । पूषणम् । विष्णुम् । अग्निम् । पुरन्धिम् । सवितारम् । ओषधीः and पर्वतान् ॥ रात्र्यभिमानिनं च मित्रमहरभिमानिनं चेन्द्रं च प्रसिद्धं मरुतो मरुद्गणांश्च पूषणमेतत्संज्ञकं च विष्णुं सर्वव्यापिनं देवं पुरन्धिं पुरुधियं पुरुकर्माणमग्निम्, सवितारं सर्वस्य प्रेरकं देवमोषधीरोषध्यभिमानिनो देवान् पर्वतांश्चाद्रीनित्येतान् देवानस्माकं तर्पणाय रक्षणाय च प्रकुरुष्व । स्तुत्याभिमुखीकुरु Sy.

३. तर्पणाय Sy.

४. अभिमुखीकुरुष्व Sy.

५. पुनः स P.

६. VM. ignores अद्य ॥ अद्य इदानीम् Sy.

७. इमम् D.

८. हे बहुशक्ते ! Sy.

९. हे प्रकृष्टेन यजनीयेन्द्र ! Sy.

१०. अभिष्टुवन्ति Sy.

११. अर्चनीयैः स्तोत्रैः Sy.

१२. अश्रु० P. शृणु Sy.

१३. हवं व P. हवं व D. स्तोत्रम् Sy.

१४. स्तूयमानस्त्वम् Sy.

१५. VM. reads अमृतः for अमृत ॥ हे अमरणशीलेन्द्र ! Sy.

१६. VM. ignores उ and हुवतः ॥ अभिष्टुवतो मम Sy.

१७. P. reads नू for आ ।

१८. इयं च वैश्वदेवीत्युक्तम् Sy.

१९. मदीयाः Sy.

२०. स्तुतिरूपाणि वचांसि Sy.

२१. आगच्छ । एवम्भूतमिन्द्रं प्रार्थयत । ऐन्द्रत्वात्सूक्तस्य Sy.

२२. सर्वज्ञस्त्वम् Sy.

२३. सर्वैर्देवैः Sy.

२४. यजनीयैः Sy.

पुत्र ! ये देवाः । अग्न्यास्याः । यज्ञस्पृशः । भवन्ति । ये वा । मनुष्यम् । कुर्वन्ति । उप्तमवस्थितं शत्रूणाम् । उपक्षपणाय ।

स नो॑ बोधि पुरए॒ता सु॒गेषू॒त दु॒र्गेषु॑ पथि॒कृद्वि॒दानः॑ ।
ये अश्र॑मास उ॒रवो॒ वहि॑ष्ठा॒स्तेभि॑र्न इन्द्रा॒भि व॑क्षि॒ वाज॑म् ॥ १२ ॥

स नः । नः अस्माकम् । बुध्यस्व । पुरोगन्ता । सुगेषु । दुर्गेषु । च पथिषु । पथां कर्ता । विद्वान् पथः । ये । अश्रमाः श्रान्तिमगच्छन्तः । वोढृतमा अश्वाः । तेभिः । इन्द्र ! अस्माकम् । सङ्ग्रामम् । अभिवह ।

VI.22.

य एक॒ इद्धव्य॑श्चर्षणी॒नामिन्द्रं॒ तं गी॒र्भिर॒भ्य॑र्च आ॒भिः ।
यः पत्य॑ते वृष॒भो वृष्ण्या॑वान्त्स॒त्यः सत्वा॑ पुरुमा॒यः सह॑स्वान् ॥ १ ॥

य एकः । यः । एकः । एव । आह्वातव्यः । मनुष्याणाम् । इन्द्रम् । तम् । आभिः । स्तुतिभिः ।

---

१. हे सहसः सूनो ! बलस्य पुत्र ! इन्द्र ! Sy.
२. ०स्य P. अग्निर्जिह्वास्थानीयो येषां ते Sy.
३. ऋतं यज्ञं स्पृशन्तः Sy.
४. ये च देवाः Sy.
५. मनुं राजर्षिम् Sy.
६. कृतवन्तः। तैः सहागच्छेति पूर्वेण सम्बन्धः Sy.
७. ०तः P. दस्यूनामुपरिभवम् Sy.
८. ०क्ष(प)णा० D. शत्रूणामुपक्षपणाय Sy.
९. त्वम् Sy.
१०. भव । बोधीति भवतेर्लोण्मध्यमपुरुषैकवचनस्य छान्दसं रूपम् Sy.
११. सुखेन गन्तव्येषु Sy.
१२. Omitted by P. दुःखेन गन्तव्येषु Sy.
१३. D. adds च after पथिषु ॥ मार्गेषु Sy.
१४. पथा D. वर्त्मनाम् Sy.
१५. सर्वं विद्वान् Sy.
१६. अश्वाः सन्ति Sy.
१७. ०मा P., D. श्रमरहिताः Sy.
१८. ०न्तिग० P.
१९. येऽश्वाः सन्ति Sy.
२०. तैरश्वैः Sy.
२१. अस्मभ्यम् Sy.
२२. अन्नम् Sy.
२३. VM. ignores उरवः ॥ उरवः महान्तः Sy.
२४. 'य एक इत्' इत्येकादशर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तम्—'य एक एकादश' (KSA.30.22.p.22.) इति । आभिप्लविके प्रथमेऽहनि दशरात्रस्य प्रथमेऽहनि च माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रेऽहीनसूक्तस्य स्थाने त्रीणि सम्पातसूक्तानि । तेष्विदं द्वितीयं सूक्तम् । सूत्रितञ्च—'य एक इद्यस्तिग्मशृङ्गः' (ĀSS.7.5.) इति । उपहव्यनाम्न्येकाहेऽपीदं निष्केवल्यनिविद्धानम् । 'सूत्रितञ्च—'य एक इदिति मध्यन्दिनः' (ĀSS.9.7.) इति Sy.
२५. इन्द्रः Sy.
२६. एष P., D.
२७. ह्वातव्यः Sy.
२८. प्रजानामापत्सु Sy.
२९. ०न्द्रः D.
३०. ०भि D. स्तुतिरूपाभिः Sy.
३१. सूतिभिः D. वाग्भिः Sy.

अभिष्टौमि[1]। यः। पतति[2]। स्तोतृषु वर्षिता[3]। वीर्यवान्[4]। सत्यकर्मा[5]। सादयिता[6]। बहुप्रज्ञः। बलवान्[7]।

**तमु॑ नः॒ पूर्वे॑ पि॒तरो॒ नव॑ग्वाः स॒प्त विप्रा॑सो अ॒भि वा॒जय॑न्तः ।**
**न॒क्ष॒द्दा॒भं तत॑रिं पर्व॒ते॒ष्ठामद्रो॑घवाचं म॒तिभि॒ः शवि॑ष्ठम् ॥ २ ॥**

तम्[8]। तम्[9]। एव[10]। अस्माकम्। पितरः[11]। पूर्वे[12]। सप्त[13]। अङ्गिरसः[14]। अभ्यर्चन्ति[15]। अन्नमिच्छमानाः[16]। व्याप्तानामसुराणां दम्भितारम्[17]। तरणशीलम्[18]। मेघस्थितम्[19]। अनतिक्रमणीयवचनम्[20]। स्तुतिभिः।

---

१. अभिष्टौमि P., D.
२. वतति D. स्तोतॄनभिगच्छति। यद्वा लोकानामीष्टे Sy.
३. कामानां वर्षिता Sy.
४. बलवान् Sy.
५. अविसम्वादी Sy.
६. शत्रूणां सादयिता कामानां दाता वा। सदेर्वा सनोतेर्वेदं रूपम् Sy.
७. अभिभवनवान्। तमिन्द्रमभिष्टौमीति सम्बन्धः Sy.
८. भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्य SKN.
९. इन्द्रम् Sy., Dur. तं प्रकृतमिन्द्रम् SKN.
१०. उ इति पादपूरणः SKN.
११. एवम्भूताः पितरः अङ्गिरसः Sy. पितृगणाः Dur. अङ्गिरःप्रभृतयः SKN.
१२. प्रत्नाः Sy. पूर्वजाः SKN.
१३. सप्तसङ्ख्याकाः Sy. सप्तसङ्ख्याकाः। ये पुराणेषु पठ्यन्ते। अथवा 'सप्त' सृप्ताः पूर्वतरमस्माल्लोकादमुं लोकं ते च Dur. सप्तसङ्ख्याकाः SKN.
१४. It seems to be the explanation of नवग्वाः ॥ नवभिर्मासैः सत्रमनुष्ठितवन्तः Sy. नवगतयः, अभिनवा हि तेषां गतिः, अर्द्धमासेऽर्द्धमासे भवति पितृयज्ञं प्रत्यागन्तुम्। अथवा नवनीतगतयो नवगतयः। नवनीते हि तेषां मनसो गतिर्भवति 'इदमस्माकं स्यादिति' Dur. पार्वणाङ्गभावेन प्रतिमासमागमनाद् नवगतयः। तथा च 'अङ्गि॑रसो नः पि॒तरो॒ नव॑ग्वाः' (RV. X.14.6.) इत्यादौ सर्वत्र नवभिर्मासैः सिद्धिगतत्वाद् नवग्वा अङ्गिरस उच्यन्ते SKN.
१५. तुष्टुवुरिति शेषः Sy.
१६. वाजमन्नं हविर्लक्षणमिन्द्रस्य कुर्वन्तः। इन्द्रं वा वाजिनं बलिनं कुर्वन्तः 'तत्करोति' इति णिच् Sy. स्तुवन्त आसते Dur. अभीष्टं ते धनं याचितवन्त इति शेषः। कुत एतद् वाजयन्त इति? 'लक्षणहेत्वोः क्रियायाः' (Pa 3.2.126.) इति श्रुतेः साकाङ्क्षत्वात् परस्यां चर्चि स्वयं धनस्य याचमानत्वात् SKN.
१७. मसु० P. नक्षद्दाभम्। नक्षतिर्गतिकर्मा। अभिगच्छतां शत्रूणां दम्भितारं हिंसितारम् Sy. किंलक्षणं पुनरिन्द्रं मतिभिरभिवाजयन्त आसत इति? उच्यते,....योऽभिव्यापनमात्रेणापि दभ्नोति, किमुत वधेन तम्....एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च योऽभ्यशनेन दभ्नोति स नक्षद्दाभ उच्यते Dur. कीदृशम्? उच्यते, ....दभ्नातिर्वधकर्मा। युद्धार्थं नक्षतामभिगच्छतां प्राप्नुवतां वा, केषाम्? सामर्थ्याच्छत्रूणां हन्तारम् SKN.
१८. तमरण० P. तरितारम् Sy. यश्च त्वरणशीलस्तम् Dur. त्वरितारम् SKN.
१९. मेघे स्थि० P. पर्वतेष्ववस्थितम् Sy. यश्च मेघस्थायी तम् Dur. पर्वतो मेघस्तस्मिन् हन्तव्ये स्थातारम् SKN.
२०. अति० P., D. अद्रोग्धव्यानतिक्रमणीया वागाज्ञारूपा यस्य तम् Sy. यस्य चाद्रोग्धव्या वाक्, अनतिक्रमणीयेत्यर्थः। तम् Dur. अद्रोग्धव्यवचनमनतिक्रमणीयवाचमित्यर्थः SKN.

वलवत्तमम्[१][२] ।

तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः ।
यो अस्कृधोयुरजरः स्ववान्तमा भर हरिवो मादयध्यै ॥ ३ ॥

तमीमहे । तम्[३] । याचामहे । इन्द्रम्[४] । इमम्[५] । रयिम्[६] । बहुवीरम्[७] । पुरुषवन्तम्[८] । बहुशब्दम्[९] । यः[१०] । अस्कृधोयुः[११], अत्र यास्कः 'नक्षद्दाभम् । अश्नुवानदाभम् । अभ्यशनेन दभ्नोतीति[१२]' 'अस्कृधोयुरकृध्वायुः[१३] । कृध्विति[१४] ह्रस्वनाम[१५] । निकृत्तं[१६] भवति' इति[१७] । अजरः[१८] । स्ववान्[१९] । तं रयिम्[२०] । आभर[२१] । हे हरिव[२२] !

---

१. यश्च बलिष्ठस्तम् । य एवंगुणविशिष्ट इन्द्रस्तं मतिभिरभिवाजयन्त आसते । सोऽस्माकमिदं नाम करोत्वित्येवमाशीर्योज्या Dur.

२. VM. ignores विप्रासः ॥ विप्रासः मेधाविनः Sy. विप्राः प्राप्तप्रज्ञाः पितृलोकेऽवस्थिताः Dur. मेधाविनः SKN.
नक्षद्दाभम् । अश्नुवानदाभम् । अभ्यशनेन दभ्नोतीति वा । 'नक्षद्दाभं ततुरिं पर्वतेष्ठाम्' इत्यपि निगमो भवति N. 6. 3., SKN. II.396.

३. वयमात्मनः पुत्रम् Dur. यमङ्गिरसोऽपि याचितवन्तस्तम् SKN.

४. ईश्वरम् Dur.

५. इदम् Sy. आह यः किंलक्षणः पुत्र इति ? सोऽस्य Dur. अत्र निर्धारणे षष्ठी । अस्य सर्वस्य स्तोत्रभिलषितस्य SKN.

६. धनम् Sy. धनस्य परिपालने भोगे च समर्थः Dur. रायो धनस्य SKN.

७. बहुपुत्रपौत्रयुक्तस्य Sy. बहुवीरैस्तद्वतः Dur. बहुभिर्वीरैः पुत्रैः पौत्रैश्चोपेतस्य SKN.

८. परिचारकजनसहितस्य Sy. दासैस्तद्वतः Dur. परिचारकमनुष्यैस्तद्वतः SKN.

९. बह्वन्नस्य बहुयशसः । द्वितीयार्थे षष्ठी Sy. बहुनिवासस्य, अनेकप्रकारस्येत्यर्थः Dur. 'क्षि निवासगत्योः' प्रहृत्य बहुषु स्थानेषु निवसितुः स्थापयितव्यस्येत्यर्थः । धर्मादिषु वा विनियोग । गन्तुरेवं हि गुणस्य धनस्य मध्ये SKN.

१०. रयिः Sy. न च परिपालनसमर्थ एव यः केवलमल्पकालस्तमीमहे, किं तर्हि ? यश्च Dur.

११. अविच्छिन्नः Sy. अकृध्वायुर्दीर्घायुरित्यर्थः । ....एवमत्र 'अस्कृधोयुः' इत्यनेन दीर्घायुरुच्यते तस्याभीष्टत्वाच्च शब्दसारूप्याच्च Dur. चिरस्थायी पुत्रपौत्रानुगत इत्यर्थः । अथवा अन्यथा व्युत्पाद्यते—अस्कृ, इत्येतत्तावत् करोते रूपं न कृन्ततेः । धोशब्दस्तु दधातेर्वा दानार्थस्य । अकृतदानो यादृशो न कस्मैचिदपि त्वया दत्तपूर्व इत्यर्थः । अकृतपानो नाऽभुक्तपूर्वो वा केनचिदित्यर्थः SKN.

१२. नक्षदाभमश्नुवानदभशनेन दभ्नेतीति P. नक्षदाभमश्नवानदभशनेन दभ्नेतीति D.
N.6.3. adds वा after इति । The passage 'नक्षत्...दभ्नोतीति' should be put in the commentary on the previous stanza.

१३. ०रस्कृ० P.

१४. D. adds कृध्वायुः before कृध्विति ।

१५. ०स्वाना० P., D.

१६. निरुक्तं P., D.

१७. भजतीति P. भजतिति D. N.6.3.

१८. जराहानिरहितः Sy. यो दृढशरीर इत्यर्थः Dur. जरा हानिस्तद्वर्जितोऽक्षय इत्यर्थः SKN.

१९. सर्वान् P., D. सुखयुक्तः Sy. यः सुष्ठु शत्रूणामीरयिता Dur. सर्वैः सर्वविशेषैर्युक्तं याच्यमानश्च SKN.

२०. य एवंगुणविशिष्टः पुत्रस्तम् Dur. तमेवमर्थम् SKN.

२१. आहर Sy. देहि SKN.

२२. हे हरिवन् ! स्वकीयाश्वोपेतेन्द्र ! त्वम् Sy. हरी अश्वौ ताभ्यां तद्वन् ! SKN.

मादयितुमस्मान्[1][2]।

**तन्नो॒ वि वो॑चो॒ यदि॑ ते पु॒रा चि॑ज्जरि॒तार॑ आन॒शुः सु॒म्नमि॑न्द्र ।**
**कस्ते॑ भा॒गः किं वयो॑ दुध्र खिद्वः॒ पुरु॑हूत॒ पुरू॑वसोऽसुर॒घ्नः ॥ ४ ॥**

तन्नः । तत्[3] । अस्माकम्[4] । विविच्य[5] । ब्रूहि । यदि । ते[6] । पूर्वस्मिन् काले । स्तोतारः । आनशुः । सुखम् । इन्द्र ! कः । तव । सुखहेतुभागः[7] । किं वा । अन्नम्[8] । हे दुर्धर ! खेदयितः[9] ! शत्रूणाम् । पुरुहूत ! बहुधन[10] ! असुराणां हन्तुः[11] ।

**तं पृ॒च्छन्ती॒ वज्र॑हस्तं रथे॒ष्ठामिन्द्रं॒ वेपी॒ वक्व॑री॒ यस्य॒ नू गीः ।**
**तु॒वि॒ग्रा॒भं तु॑विकू॒र्मिं र॑भो॒दां गा॒तुमि॑षे॒ नक्ष॑ते॒ तुम्र॒मच्छ॑ ॥ ५ ॥**

तं पृच्छन्ती[12] । तमिन्द्रम्[13] । पृच्छन्ती[14] क्व वर्तत[15] इति प्रश्नः । वज्रहस्तम्[16] । रथे स्थातारम्[17] । बहूनां ग्रहीतारम्[18] । बहूनां कर्तारम्[19] । बलस्य दातारम्[20] । गन्तव्यम्[21] । इच्छति[22] । अभिगच्छति । प्रेरयितारम्[23] कमित्याह[24] । इन्द्रम्[25] । वेपनशीला[26] । उच्यमाना[27] । स्तुतिः[28] । यस्य[29] स्तोतृभिः । क्षिप्रम्[30] । अभि गच्छतीति[31] ।

---

१. अस्माकमात्मनश्च मदनाय तर्पणायेत्यर्थः Dur. मोदनाय तर्पणाय वाऽस्माकम् SKN.

२. अथवा अस्य राय इति द्वितीयार्थे षष्ठी न निर्धारणे ; योऽस्कृधोयुरित्यादिरप्यायुस्सम्बन्धात्त्द्दीर्घत्वं. . . .मनुष्याणां प्रसिद्धतरत्वात् पुत्रस्य प्रतिनिर्देशोऽयं न धनस्य । तेनायमर्थः—अस्य राय इदमभिलषितं धनं पुरुवीरादियुक्तं याचामहे । किञ्च योऽस्कृधोयुर्दीर्घायुर्जरावर्जितः स्ववर्वान् सर्वैश्च गुणैस्तद्वान्, तद्वतः पुत्रमाहरेति समानम् SKN.
N.6.3., SKN. II. 396–397.

३. तम् P., D. सुखम् Sy.

४. D. adds अपि after अस्माकम् ।

५. विब्रूहि Sy. ६. तव Sy.

७. ०गं P., D. यज्ञेषु को भागः क्लृप्तः Sy.

८. हविर्लक्षणमन्नं किं क्लृप्तम् ? यदि केचिच्चिरन्तनाः पूर्वकालेऽपि त्वत्तः सकाशात् सुखं लेभिरे तर्ह्यहमपि तत्सुखं लप्स्य इति विचार्य सुखप्राप्तिविलम्बो ममासोढव्यो भवेदित्यर्थः Sy. ९. हे शत्रूणां खेदयितः ! Sy.

१०. Omitted by P., D. हे पुरुवसो ! इन्द्र ! Sy. ११. ०न्तु P., D.

१२. ०न्ति P.

१३. पूर्वयोपलब्ध इन्द्र ऋषये कामान्प्रायच्छत् ततः स कामपूर्ण ऋषिराह Sy.

१४. ०न्द च्छति P. ०न्ति D. अर्चयन्ती । पृच्छतिरर्चतिकर्मा Sy. १५. वर्त P.

१६. वज्रपाणिम् Sy. १७. स्थितम् Sy.

१८. गृ० P., D. तुवीनां बहूनां ग्रहीतारम् Sy.

१९. बहुकर्माणम् Sy. २०. रभसो दातारम् Sy.

२१. स यजमानः गातुं सुखम् Sy.

२२. गच्छति Sy.

२३. वब्रेरयि० P. पप्रे० D. म्लापयितारं शत्रुम् Sy.

२४. किमि० P. २५. इन्द्र P., D.

२६. वेपो यागादिलक्षणं कर्म । तद्वती Sy.

२७. उच्चमा० P. गुणानां वक्त्री Sy.

२८. ईदृशी स्तुतिः Sy.

२९. यजमानस्य भवति Sy.

३०. नु इति पूरणः Sy.

३१. अभिमुखं गच्छति Sy.

अया ह त्यं मायया वावृधानं मनोजुवा स्वतवः पर्वतेन ।
अच्युता चिद्वीळिता स्वोजो रुजो वि दृळ्हा धृषता विरप्शिन् ॥ ६ ॥

अया ह । अनया । खलु । तम्[1] । मायया । वर्धमानं वृत्रम् । मनोवेगेन[2] । वज्रेण[3] । हे स्वभूतवेग[4] ! वि रुजः[5] । अच्युतानि[6] । दृढानि तस्य पुराणि । च । शोभनवल[7] । अधृष्टेन[8] । दृढानि[9] । महन्[10] !

तं वो धिया नव्यस्या शविष्ठं प्रत्नं प्रत्नवत्परितंसयध्यै ।
स नो वक्षदनिमानः सुवह्नेन्द्रो विश्वान्यति दुर्गहाणि ॥ ७ ॥

तं वो धिया । तम् । यूयम्[11] । स्तुत्या । नवतरया । बलवत्तरम्[12] । प्रत्नम्[13] । यथा प्रत्ना[14] ऋषयः पर्यगृह्णन् तथा । परितंसयितुमिच्छत[15] । सः[16] । अस्मान्[17] । अतिवहतु[18] । अमात्रः[19] । सुष्ठु वोढा[20] इन्द्रः । विश्वानि[21] । दुःखेन गाहितव्यानि[22] ।

आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयोऽन्तरिक्षा ।
तपा वृषन्विश्वतः शोचिषा तान्ब्रह्मद्विषे शोचय क्षामपश्च ॥ ८ ॥

आ जनाय । आदीपय[23] प्रज्वलय[24] । मनुष्याणां द्रोग्धे[25] । राक्षसजनाय[26] । दिव्यानि[27] । अन्तरिक्ष्याणि[28] ।

---

१. प्रसिद्धम् Sy.

२. मनोवद्गच्छता Sy.

३. अनेन बहुपर्वणा स्वकीयेनायुधेन वज्रेण । 'वज्रेण शतपर्वणा' (RV.I.80.6.) इति दर्शनात् Sy.

४. हे स्वभूतबलेन्द्र ! त्वम् Sy.

५. विशेषेणाभाङ्क्षीः भग्नवानसि Sy.

६. P., D. read द्युरुच्युतानि for वि रुजः अच्युतानि ॥ विनाशरहितान्यपि Sy.

७. हे शोभनतेजः ! Sy.

८. धर्षकेण वज्रेण Sy.

९. Omitted by P. धृढानि D. वीळितान्यशिथिलीकृतानि Sy.

१०. महत् P., D. हे महन् ! इन्द्र ! त्वम् Sy.

११. त्वाम् Sy.

१२. or P., D. बलवत्तमम् Sy.

१३. प्रश्नम् P., D. पुराणम् Sy.

१४. प्रश्ना P., D. चिरन्तना ऋषय इव Sy.

१५. पर्यरितंस० P., D. परितो विस्तारयितुम् । अहं प्रवृत्तोऽस्मीति शेषः Sy.

१६. इन्द्रः Sy.

१७. अस्मभ्यम् Sy.

१८. ०हततु P.

१९. अपरिमाणः Sy.

२०. शोभनवहनः Sy.

२१. समस्तानि Sy.

२२. दुर्गाणि Sy.

२३. आसमन्तात्तापय Sy.

२४. आजीवय प्रज्व P.

२५. साधुजनानां द्रोग्धुः Sy.

२६. जनस्य राक्षसादेः । षष्ठ्यर्थे चतुर्थी Sy.

२७. दिवि भवानि Sy.

२८. आन्त० P. अन्तरिक्षे भवानि Sy.

पार्थिवानि[1] च स्थानानि यथा राक्षसजनस्तेषु[2] न तिष्ठेत् । तप[3] च । तान्[4] । वर्षितः[5] ! तेजसा[6] । सर्वतः[7] । कर्मद्विषे[8] । शोचय[9] पृथिवीम् । अन्तरिक्षम्[10] । च ।

**भुवो जनस्य दिव्यस्य राजा पार्थिवस्य जगतस्त्वेषसंदृक् ।**
**धिष्व वज्रं दक्षिण इन्द्र हस्ते विश्वा अजुर्य दयसे वि मायाः ॥ ९ ॥**

भुवः । भवसि । जनस्य । दिवि भवस्य । राजा[11] । तथा पार्थिवस्य च । जङ्गमस्य च । हे दीप्तसन्दर्शन[12] ! धारय[13] । वज्रम् । इन्द्र ! हस्ते । दक्षिणे । विश्वाश्च[14] । शत्रूणां मायाः । क्षपयेति[15] ।[16]

**आ संयतमिन्द्र णः स्वस्तिं शत्रुतूर्याय बृहतीममृध्राम् ।**
**यया दासान्यार्याणि वृत्रा करो वज्रिन्त्सुतुका नाहुषाणि ॥ १० ॥**

आ संयतम्[17] । आकुरु[18] । अस्माकम्[19] । सङ्ग्रामम्[20] । अविनाशहेतुम्[21] । शत्रूणां तरणाय[22] । महान्तम्[23] । अहिंसितम्[24] । येन सङ्ग्रामेण[25] । असुरांश्च[26] । आर्यांश्च[27] । नहुषैर्मनुष्यैरस्माकमुपपादितानि[28][29] । वृत्राणि[30] । सुतुकानि[31] । करोषि[32] । तुकस्तजतेर्हिंसाकर्मणोऽनायासेन[33] हिंसितानि करोषीति[34] ।

---

१. पृथिव्यां भवानि Sy.
२. सज्जन० P. सजन० D.
३. तव P. दह Sy.
४. राक्षसादीन् Sy.
५. हे कामानां वर्षितरिन्द्र ! त्वम् Sy.
६. त्वदीयया दीप्त्या Sy.
७. सर्वतो विद्यमानान् Sy.
८. ब्राह्मणद्वेष्ट्रे राक्षसादये । ब्रह्मद्विषं दग्धुमित्यर्थः Sy. ९. दीपय Sy.
१०. आप इत्यन्तरिक्षनाम Ngh. 1.3.
११. ईश्वरः Sy.
१२. हे दीप्तदर्शनेन्द्र ! Sy.
१३. निधेहि Sy.
१४. तेन च वज्रेण विश्वाः सर्वाः Sy.
१५. विबाधसे । 'दय दानहिंसागतिरक्षणेषु' इति धातुः Sy.
१६. VM. ignores अजुर्य and वि ॥ हे जरयितुमशक्येन्द्र ! त्वम् Sy.
१७. भं च तं P. भंयतं D.
१८. आभर Sy.
१९. अस्मभ्यम् Sy.
२०. स्रम् P. स्रमम् D. संयन्तीं सङ्गच्छमानाम् Sy.
२१. क्षेमलक्षणां सम्पदम् Sy.
२२. शत्रूणां तारणाय Sy.
२३. महतीम् Sy.
२४. अहिंसिताम् Sy.
२५. यया स्वस्त्या Sy.
२६. कर्महीनानि मनुष्यजातानि Sy.
२७. सुरैराश्चर्यैश्च P. असुरैराश्चर्यैश्च D. आर्याणि कर्मयुक्तानि Sy.
२८. ०हु० P. मनुष्यसम्बन्धीनि Sy. नहुषा इति मनुष्यनाम Ngh. 2.3.
२९. ०मुपादि० P.
३०. शत्रून् Sy.
३१. सुतानि P., D. शोभनहिंसोपेतानि Sy.
३२. अकरोः Sy.
३३. ०तेहिं० P., D.
३४. VM. ignores इन्द्र and वज्रिन् ॥ हे वज्रवन्निन्द्र ।

स नो॑ नि॒युद्भिः॑ पुरुहूत वेधो वि॒श्ववा॑राभि॒रा ग॑हि प्रयज्यो ।
न या अदे॑वो॒ वर॑ते॒ न दे॒व आभि॑र्याहि॒ तूय॒मा म॑द्र्य॒द्रिक् ॥ ११ ॥

स नः । सः[1] । अस्मान् । आगच्छ । अश्वैः[2] । विश्ववरणीयैः[3] । पुरुहूत ! विधातः ! प्रकर्षेण यष्टव्य[4] ! न । या[5] नियुतः[6] । वारयति । असुरः । नापि । देवः । आभिर्नियुद्भिः[7] । क्षिप्रम् । आयाहि[8] । मदभिमुखम्[9] ।[10]

VI.23.

सु॒त इत्त्वं निमि॑श्ल इन्द्र॒ सोमे॒ स्तोमे॒ ब्रह्म॑णि श॒स्यमा॑न उ॒क्थे ।
यद्वा॑ यु॒क्ताभ्यां॑ मघव॒न्हरि॑भ्यां॒ बिभ्र॒द्वज्रं॑ बा॒ह्वोरि॑न्द्र॒ यासि॑ ॥ १ ॥

सुत[11] इत्त्वम्[12] । सुते[13] । एव । सोमे । त्वम् । इन्द्र[14] । आत्मानमभिमुखं[15] श्रयसि[16] । बृहति[17] वा । स्तोमे[18] । गीयमाने[19] । उक्थे[20] वा शस्यमाने । यत् वा युद्धार्थं गच्छसीति वदति, यद्वेति[21] स्पष्टम् ।

---

१. त्वम् Sy.
२. ०श्वै P.
३. ०वर० P. विश्वैर्वरणीयाभिः सम्भजनीयाभिः Sy. ४. प्रकृष्टेन यजनीयेन्द्र ! Sy.
५. न य न याः P., D. यान् Sy.
६. अश्वान् Sy.
७. ०भिर्नयुद्भिः P. नद्भिः D.
८. आगच्छ Sy.
९. ०र्भि० P. मदभिमुखः सन् । अद्र्यागमस्य द्विर्वचनं छान्दसम् Sy.
१०. VM. explains आ once only.
११. 'सुत इत्' इति दशर्चमष्टमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'सुत इद्दश' (KSA.30.23. p.22.) इत्यनुक्रान्तम् । विषुवति निष्केवल्य इदं सूक्तम् । सूत्रितञ्च—'सुत इत्त्वमेष प्र पूर्वीः' (ĀSS.8.6.) इति । महाव्रतेऽपि इदमादीनि त्रीणि सूक्तानि । तथैव पञ्चमारण्यके सूत्रितम्—'सुत इत्त्वं निमिश्ल इन्द्र सोम इति त्रीणि' (AĀ.5.22.) इति Sy.
१२. इत्वं P., D.
१३. अभिषुते सति Sy.
१४. त्वान्द्र D.
१५. ०त्म० P.
१६. श्रेयसि P. आत्मानमभिमुखं श्रयसि seems to be the explanation of निमिश्लः ॥ निमिश्रः सन् हरी संयोजयन् Sy.
१७. बृहति महति Sy.
१८. स्तोत्रे Sy.
१९. उच्चार्यमाणे सति Sy.
२०. शस्त्रे Sy.
२१. By यद्वा VM. refers to the second hemistich ॥ हे मघवन् ! धनवन्निन्द्र ! त्वं बाह्वोर्हस्तयोर्वज्रं स्वकीयमायुधं बिभ्रद्धारयन् युक्ताभ्यां रथे नियुक्ताभ्यां हरिभ्यामश्वाभ्यां यासि यद्वाऽऽगच्छसीति यच्च तत्सोमेऽभिषुत इति सम्बन्धः Sy.

**यद्वा दिवि पार्ये सुष्विमिन्द्र वृत्रहत्येऽवसि शूरसातौ ।**
**यद्वा दक्षस्य बिभ्युषो अबिभ्यदरन्धयः शर्धत इन्द्र दस्यून् ॥ २ ॥**

यद्वा । यदा । वा[1] । दिवसे[2] । युद्धस्य[3] । अभिषोतारमेतरं[4] सूर्येण[5] वस्पृधानम्[6] । संग्रामे । रक्षसि । शूरैः[7] सम्भजनीये । यदा । वा[8] । दक्षस्य[9] प्रजापतेः । दस्युभ्यो बिभ्युषः[10] । अबिभ्यत्[11] । तान्[12] दस्यून्[13] । त्वेगं कुर्वाणान्[14] । वशमनयः[15] तदा च न मिश्रयति[16] ।

**पाता सुतमिन्द्रो अस्तु सोमं प्रणेनीरुग्रो जरितारमूती ।**
**कर्ता वीराय सुष्वय उ लोकं दाता वसु स्तुवते कीरये चित् ॥ ३ ॥**

पाता । सुतम्[17] । सोमम् । इन्द्रः । पाता[18] । भवतु ताच्छील्येन । तथा स्तोतारं च । अत्यन्तं[19] प्रणयतु । रक्षणेन[20] । उद्गूर्णः । कर्ता[21] । वीराय[22] । सुन्वानाय[23] । लोकम्[24] । दाता[25] । च[26] । अन्नम्[27] । स्तुवते[28] । स्तोत्रे[29]ऽस्त्विति[30] ।

---

१. वेति समुच्चये Sy.
२. ०सेन्तिमे P.
३. पार्ये प्राप्तव्ये सति Sy.
४. ०तरम् P. अभिषोतारं यजमानम् Sy.
५. सूर्ये P.
६. वस्पृधान P. वस्पृ० D.
७. भटैः Sy.　　८. वेति समुच्चये Sy.
९. यज्ञादिषु समर्थस्य Sy.
१०. ०ष P., D. शत्रुभ्यो बिभ्यतो जनस्य Sy.
११. समभ्यन् P. समभ्यत् D. भीतिरहितः सन् Sy.
१२. Omitted by P.
१३. उपक्षपयितॄन् शत्रून् Sy.
१४. सङ्ग्राम उत्सहमानान् Sy.
१५. शम P., D. वशीकरोषीति यच्च तत्सर्वं सोमेऽभिषुत इति पूर्वेण सम्बन्धः । तथा चोक्तम् ।
यद्वाह्वोर्धारयन् वज्रं हरिभ्यां यासि वृत्रहन् !
यच्च रक्षसि सङ्ग्रामे नूनं सोममभिषुण्वतः ॥
यच्च कर्मसु दक्षस्य यजमानस्यापारयः ।
वशीकरोषि तांस्तस्मै बिभ्यते भीतिवर्जितः ॥
तत्सोमेऽभिषुते स्तोत्रशस्त्रयोश्च प्रवृत्तयोः ।
इति द्वृचोऽयमेकार्थः सुत इत्त्वमिति द्वयम् ॥इति.। Sy.
१६. VM. ignores इन्द्र ।
१७. सु P. सुं D. अभिषुतम् Sy.
१८. पानशीलः । तृन्नन्तत्वात् 'न लोकाव्ययनिष्ठा० इति षष्ठीप्रतिषेधः Sy.
१९. प्रकर्षेण नेता Sy.
२०. ऊत्या मार्गेण Sy.
२१. कर्ता । दातेत्यर्थः Sy.
२२. यज्ञादिकर्मसु दक्षाय Sy.
२३. सोमाभिषवं कुर्वते यजमानाय Sy.
२४. स्थानम् Sy.
२५. दा P.　　२६. चिदिति चार्थे Sy.
२७. धनम् Sy.　　२८. स्तोत्रं कुर्वते Sy.
२९. कीरिरिति स्तोतृनाम Ngh. 3.16.
३०. VM. ignores उ ॥ उ इति पादपूरणः Sy.

गन्तेयन्ति सवना हरिभ्यां बभ्रिर्वज्रं पपिः सोमं ददिर्गाः ।
कर्ता वीरं नर्यं सर्ववीरं श्रोता हवं गृणतः स्तोमवाहाः ॥ ४ ॥

गन्तेयन्ति । त्रीणि[1] । सवनानि । अश्वाभ्याम्[2] । बभ्रिरिति स्पष्टम्[3] । कर्ता[4] । पुत्रम् । नृहितम्[5] । सर्ववीरम्[6] । श्रोता[7] । आह्वानम्[8] । स्तुवतः[9] । स्तोत्रैरुह्यमानः[10] ।[11]

अस्मै वयं यद्वावान तद्विविष्म इन्द्राय यो नः प्रदिवो अपस्कः ।
सुते सोमे स्तुमसि शंसदुक्थेन्द्राय ब्रह्म वर्धनं यथासत् ॥ ५ ॥

अस्मै । इन्द्रप्रीत्यर्थम्[12] । वयम् । यदिन्द्रः[13] । भजते[14] । तानि । आप्नुमः परिगृह्णीमः[15] । इन्द्राय । यः[16] । पुराणः । उदकानि[17] । करोति । सुते[18] । सोमे । स्तुम[19] इमम् । अथ[20] तदर्थं होता चोक्थानि[21] । शंसतु[22] । यथा । इन्द्राय[23] । स्तोत्रम्[24] । वर्धनम्[25] । भवति[26] ।

ब्रह्माणि हि चकृषे वर्धनानि तावत्त इन्द्र मतिभिर्विविष्मः ।
सुते सोमे सुतपाः शंतमानि रान्द्र्या क्रियास्म वक्षणानि यज्ञैः ॥ ६ ॥

ब्रह्माणि । स्तोत्राणि । हि[27] । करोषि[28] । आत्मनो वर्धनानि[29] । यावत् तव पर्याप्तं भवति स्तोत्रं तावत्[30] ।

---

१. It seems to be the explanation of इयन्ति ॥ हृदयस्थानि त्रीणि Sy.
२. आश्वा० P., D. हरिभ्यां स्वकीयाभ्याम् Sy.
३. बभ्रीरि० P. By बभ्रिरिति VM. means बभ्रिः । वज्रम् । पपिः । सोमम् । ददिः and गाः ॥ भर्ता धारकः । वज्रं स्वकीयमायुधम् । सोममभिषुतम् । पपिः पाता । गाः । ददिर्दाता Sy. ४. यजमानाय दाता Sy.
५. मनुष्यहितम् Sy.
६. पुत्रेण हितं स्वभूत सर्वर P. पुत्रेण हितं स्वभूत सर्ववीर D. बहुपुत्रोपेतम् Sy.
७. श्रावकः Sy.
८. ०त ह्वानम् P. स्तोत्रम् Sy.
९. स्तोतुः सम्बन्धि Sy.
१०. ०त्रैरुह्यमानं P. ०नं D. स्तोमैः स्तोत्रैर्वहनीयः Sy.
११. VM. ignores गन्ता ॥ इन्द्रः गन्ता गमनशीलो भवतु Sy.
१२. इन्द्र (वेगं कुर्वाणा) प्रीत्यर्थम् D. इन्द्राय Sy.
१३. यदिदिन्द्रः P., D. अयमिन्द्रो यत्स्तोत्रादिकम् Sy. १४. कामयते Sy.
१५. त व्याप्नुमः P. व्याप्नुमः कुर्म इत्यर्थः Sy.
१६. योमः P. इन्द्रः Sy.
१७. पोषणादिकं कर्म Sy.
१८. अभिषुते सति Sy.
१९. इन्द्राय स्तोत्राणि कुर्मः Sy.
२०. इमथ P., D. २१. शस्त्राणि Sy.
२२. शंसन्तः । प्रथमाबहुवचनस्य लुक् Sy.
२३. इन्द्रार्थम् Sy.
२४. हविर्लक्षणमन्नम् Sy.
२५. यथा वृद्धिकरं स्यात् तथा कुर्म इत्यर्थः Sy.
२६. VM. ignores नः ॥ नः अस्मदर्थम् Sy.
२७. यस्मात्कारणात् Sy.
२८. कृतवानसि तस्मात्कारणात् Sy.
२९. स्वयमेव वृद्धिकराणि Sy.
३०. तावन्ति तादृशानि स्तोत्राणि Sy.

ते[1] । इन्द्र ! बुद्धिभिः । परिगृह्णीमः[2] । सुते । सोमे । सुतस्य पातः[3] ! सुखतमानि[4] । रमणीयानि[5] । कुर्मः[6] । तव वाहकानि[7] ब्रह्माणि[8] । हविर्भिः[9] सह ।

**स नो॑ बोधि पुरो॒ळाश॒ं ररा॑णः पिबा॒ तु सोम॒ं गोऋ॑जीकमिन्द्र ।**
**एदं ब॒र्हिर्यज॑मानस्य सीदो॒रुं कृ॑धि त्वाय॒त उ॑ लो॒कम् ॥ ७ ॥**

**स नो बोधि ।** सः[10] । अस्मदीयम् । बुध्यस्व । पुरोडाशम्[11] । रममाणः । पिब[12] । इन्द्र ! सोमम् । गोमिश्रणमृजुतमं[13] पयसा मिश्रितम् । आसीद[14] । इदम् । बर्हिः । यजमानस्य[15] । विस्तीर्णम् । कुरु । त्वत्कामस्य[16] मम[17] । लोकम्[18] ।

**स म॑न्दस्वा॒ ह्यनु॒ जोष॑मुग्र॒ प्र त्वा॑ य॒ज्ञास॑ इ॒मे अ॑श्नुवन्तु ।**
**प्रेमे ह॒वास॑ः पुरुहू॒तम॒स्मे आ त्वे॒यं धीरव॑स इन्द्र यम्याः ॥ ८ ॥**

**स मन्दस्व[19] ।** सः[20] । पर्याप्तिम्[21] । अनुमन्दस्व[22] । उद्गूर्ण[23] ! त्वाम्[24] । इमे । सोमाः[25] । प्राप्नुवन्तु च । इमानि । स्तोत्राणि[26] । अस्मदीयानि[27] । आयच्छतु[28] । त्वाम् । इन्द्र ! कर्मास्मिदीयम्[29] । रक्षणायास्माकम्[30] ।

---

१. तुभ्यम् Sy.
२. ०म P. व्याप्नुमः । वर्धनानि स्तोत्राणि मम यथा भवेयुस्त्वं तादृशानि कल्पितवानसि Sy.
३. हे अभिषुतस्य सोमस्य पातः ! त्वाम् Sy.
४. सुखमातमानि P., D. सुखकृत्तमानि Sy.
५. P. adds कुर्वित्यर्थः वयं यदिदिन्द्रो भजते तद् व्याप्नुमः परिगृह्णीम इन्द्राय यो नः पुराण after रमणीयानि । The additional passage in P. has a striking resemblance with the commentary on the previous stanza. रान्द्रयाणि रमणीयानि Sy.
६. करवाम Sy.
७. वाहकानि स्तोत्राणि Sy.
८. ब्राह्मणि D.
९. हविर्भिर्युक्तानि Sy.
१०. त्वम् Sy. ११. एतल्लक्षणं हविः Sy.
१२. पिन्वशीम् P., D. पिबेः Sy.
१३. ०तम P. गामि० ०तम D. गोविकारदध्यादिभिः संस्कृतमभिषुतम् Sy.
१४. अभिविश Sy.
१५. तदर्थं च यजमानस्य सम्बन्धि Sy.
१६. का० P. त का० D. त्वामिच्छतो यजमानस्य Sy. १७. स्थानम् Sy.
१८. VM. ignores तु and उ ॥ तु क्षिप्रम् । उ इति पूरणः Sy.
१९. मन्द्रस्व P., D.
२०. त्वम् Sy.
२१. कामानुगुणं यथा भवति तथा Sy.
२२. मोदस्व Sy.
२३. हे उद्गूर्णबलेन्द्र ! Sy.
२४. P. and D. add प्रा अवन्तु before त्वाम् ।
२५. यज्ञाः सोमाः Sy. २६. हवाः Sy.
२७. आस्म० D. २८. नियच्छतु Sy.
२९. कमा० P. स्तुतिः Sy.
३०. VM. ignores हि । प्र । पुरुहूतम् and इयम् ॥ हिशब्दः पादपूरणः । हियोगे मन्दस्वेत्याख्यातस्य व्यत्ययात्सर्वानुदात्तत्वम् । हे बहुभिराहूतेन्द्र ! Sy.

तं वः सखायः सं यथा सुतेषु सोमेभिरीं पृणता भोजमिन्द्रम् ।
कुवित्तस्मा असति नो भराय न सुष्विमिन्द्रोऽवसे मृधाति ॥ ९ ॥

तं वः । नम्[1] । यूयम् । हे सखायः[2] ! यथान्येषु[3] । सोमेषु[4] । एनं[5] पूरयामासुः[6] । एवमेनं भोजयितारम्[7] । इन्द्रम्[8] । सोमैः । सम्पूरयत[9] । वहु[10] । अस्माकम् । विद्यते[11] । इन्द्रस्य । भरणार्थम्[12] । न च[13] । सुष्विम्[14] । इन्द्रः[15] । रक्षितुम्[16] । क्लिष्टो[17] भवति अनायासेन रक्षति[18] ।

एवेदिन्द्रः सुते अस्तावि सोमे भरद्वाजेषु क्षयदिन्मघोनः ।
असद्यथा जरित्र उत सूरिरिन्द्रो रायो विश्ववारस्य दाता ॥ १० ॥

एवेदिन्द्रः । एवम् । इन्द्रः । सुते[19] । सोमे । स्तुतः[20] । भरद्वाजेषु[21] । निवसन्[22] । एव सोमम् । इन्द्रस्य[23] । भवति । यथा । सूरिः[24] । इन्द्रः । जरित्रे[25] । भवति[26] सः । धनस्य[27] । विश्वैर्वरणीयस्य । दाता[28] स्तथान्ताविति[29][30] ।

---

१. इन्द्रम् Sy.
२. हे स्तोतारः ! Sy.
३. थास्येषु P.
४. सोमेषु अभिषुतेषु सत्सु Sy.
५. एतम् Sy.
६. पूरमा० D.
पूरयिता० P.
७. दातारम् Sy.
८. इन्द्राय Sy.
९. यथाकामं सम्पूरयत Sy.
१०. बहूपकरणम् Sy. कुविदिति बहुनाम Ngh.3.1.
११. अस्तु Sy.
१२. भरणाय पोषणाय Sy.
१३. Omitted by P.
१४. अभिषवणशीलं यजमानम् Sy.
१५. सुष्ठ्विन्द्रः P., D.
१६. तर्पणाय Sy.
१७. अक्लिः P., D.
१८. न बाधते Sy.
१९. अभिषुते सति Sy.
२०. स्तुतोऽभूत् Sy.
२१. भरद्वाजे मयि Sy.
२२. ग्निववसन् P.
निववसन् D.
ईश्वरः Sy.
२३. धनवतो हविष्मतो यजमानस्य Sy.
२४. सन्मार्गे प्रेरकः Sy.
२५. ०त्रेव P., D.
स्तोत्रे Sy.
२६. भवेत् Sy.
२७. नस्य P. स्य D.
२८. यथा दाता भवेत् Sy.
२९. ०स्ताविः P. तथा स्तावीति is suggested for स्तथान्ताविति ।
३०. VM. ignores इत् ।

VI.24.

**वृषा मद इन्द्रे श्लोक उक्था सचा सोमेषु सुतपा ऋजीषी ।**
**अर्चत्र्यो मघवा नृभ्य उक्थैर्द्युक्षो राजा गिरामक्षितोतिः ॥ १ ॥**

वृषा[1] । वर्षिता[2] । सोमः[3] । स्तोत्रम्[4] । उक्थानि च[5] । इन्द्रे[6] । सङ्गच्छन्ते[7] सङ्गता भवन्ति[8] । सोमेषु[9] । सुतस्य[10] पातेन्द्रः[11] ! ऋजीषवान्[12] । अर्चनीयः । मघवान्[13] । मनुष्येभ्यः[14] । शस्त्रैः । दीप्तः[15] । स्तुतीनाम् । राजा[16] । अक्षीणरक्षणः[17] । अर्चमर्चनन्तदहस्तथोक्तः[18] ?

**ततुरिर्वीरो नर्यो विचेताः श्रोता हवं गृणत उर्व्यूतिः ।**
**वसुः शंसो नरां कारुधाया वाजी स्तुतो विदथे दाति वाजम् ॥ २ ॥**

ततुरिः[19] । सङ्ग्रामं ततुरिः[20] । वीरः[21] । नृहितः[22] । विशिष्टचेताः[23] । स्तुवतः[24] । स्तोत्रम्[25] । श्रोता । विस्तीर्णरक्षणः[26] । वासयिता । नराम्[27] । शंसनीयः । स्तोतॄणां धर्ता[28] । बलवान्[29] । स्तुतः[30] । यज्ञे । प्रयच्छति[31] । अन्नम् ।

---

१. तृतीयेऽनुवाके विंशति सूक्तानि । तत्र 'वृषा मदः' इति दशर्चं प्रथमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'वृषा' (KSA. 30.24.p. 22.) इत्यनुक्रान्तम् । विषुवति निष्केवल्य एतत्सूक्तम् । सूत्रितञ्च—'वृषा मदः प्र मंहिष्ठाय' (ĀSS.8.6) इति Sy.
२. यजमानस्य कामानां वर्षको भवति । यद्वा सर्वजनह्लादकस्य वर्षणस्य कर्ता भवति Sy.
३. सोमपानजनितो मदः Sy.
४. स्तोत्ररूपः शब्दो वृषा भवति Sy.
५. उक्थेन शस्त्रेण Sy.
६. इन्द्र P., D.
७. सह Sy.
८. सङ्गच्छतो भवति P., D.
९. सोमवत्सु यागेषु Sy.
१०. अभिषुतस्य सोमस्य Sy.
११. पात्रेन्द्रः P., D.
१२. ऋजीषं गतरसमपि सोमं न परित्यजन् Sy.
१३. धनवान् स चेन्द्रः Sy.
१४. स्तुतीनां नेतृभ्यः Sy.
१५. द्युलोकनिवासी Sy.
१६. ईश्वर इन्द्रः Sy.
१७. ०रक्षिणम् P. ०रक्षिणः D. अक्षीणरक्षश्च भवति Sy.
१८. The passage अर्च....थोक्तः should immediately follow अर्चनीयः ॥ तदर्हः is suggested for तदहः ।
१९. ततूरिः D.
२०. शत्रूणां हिंसकः Sy.
२१. वीर D. विक्रान्तः Sy.
२२. ०ते P. नरहितः Sy.
२३. ०ष्टेचे० P. विविक्तज्ञानः Sy.
२४. स्तुवतः स्तोतृजनस्य Sy.
२५. अस्मदीयं स्तोत्रम् Sy.
२६. विस्तृतरक्षः Sy.
२७. नरा P. नृणां स्तोतृजनानाम् Sy.
२८. स्तोतॄन् P. कारूणां स्तोतॄणां धारयिता एवम्भूत इन्द्रो वाजं ददातीति सम्बन्धः Sy.
२९. ०वां P. अन्नवानिन्द्रः Sy.
३०. अस्माभिः स्तुतः सन् Sy.
३१. अस्मभ्यं ददाति Sy.

अक्षो न चक्र्योः शूर बृहन्प्र ते मह्ना रिरिचे रोदस्योः ।
वृक्षस्य नु ते पुरुहूत वया व्यूतयो रुरुहुरिन्द्र पूर्वीः ॥ ३ ॥

[1]अक्षः । [2]यथा । [3]महान् । [4]अक्षः । [5]चक्रयोर्निगच्छत्येवम् । [6]द्यावापृथिवी [7]भित्वा । [8]तव । [9]महत्वमुभयतः । [10]निर्जगाम । वृक्षस्य । [11]इव । [12]ते । [13]पुरुहूत ! [14]शाखास्तव । [15]ऊतयः । [16]विरुरुहुः । इन्द्र ! [17]बह्वृचः । [18]

१. भरद्वाजो बार्हस्पत्यः पारिक्षितोऽस्यास्त्रिष्टुभः पूर्वेणार्द्धर्चेनेन्द्रं स्तुत्वा उत्तरेणोपालब्धवान् Dur. भरद्वाजस्यार्षम् SKN.
२. अत्र दृष्टान्तः Sy. इव Dur.
३. अन्तरेणापि भावप्रत्ययं बृहत्त्वेऽयं बृहच्छब्दः । बृहत्त्वं महत्त्वं देवैश्वर्यलक्षणम् SKN.
४. रथसम्बन्ध्यक्षः यथा चक्राभ्यां बहिर्गतस्तद्वत् Sy.
५. चक्रयोः सकाशात् SKN.
६. द्यावापृथिव्योः Sy. कुतोऽतिरिच्यते ? रोदस्योर्द्यावापृथिव्योः Dur. द्यावापृथिव्योः सकाशात् SKN.
७. भित्त्वा is suggested for भित्वा ॥ विनिर्भिद्य द्यावापृथिव्यौ तयोः परितोऽप्यस्तीत्यर्थः SKN.
८. तव तव D. त्वदीयः Sy. तव स्वभूतम् SKN.
९. ०त्त्व० is suggested for ०त्व० ॥ महिमा Sy. महत्त्वेन विभूतिः Dur. मह्ना—अयमपि महत्त्वे महच्छब्दः, महत्त्वेन । अथवा बृहन्नित्यक्षस्य विशेषणम् । मह्नेत्यपि प्रथमार्थे तृतीया । महान् योऽक्षः स यथाऽतिरिच्यते, एवं तव महत्त्वम् SKN.
१०. अतिरिच्यते द्यावापृथिवीभ्यामित्यर्थः Sy. प्रकर्षेणातिरिच्यते Dur. प्रत्येषोऽति, इत्यस्य स्थाने । विरिरिचे, अतिरिच्यते SKN.
११. तत्र दृष्टान्तः । नु यथा Sy.
१२. त्त P. त्वदीयाः Sy. एते तव स्वभूताः SKN.
१३. हे बहुभिराहूतेन्द्र ! Sy.
१४. शाखा विरोहन्ति तद्वत् Sy. तथापि चैवं विभूतियुक्तस्य सतस्तव त्वद्भक्तानामेवास्माकं सतां वृक्षस्येव वयाः शाखाः. . . .वयाः शाखाः इति पर्यायवचनः । वेतेर्वया इति निगमप्रसक्तस्य निर्वचनम् : शाखाः खशया इति पर्यायप्रसक्तस्य Dur. 'वयाः शाखाः' वेतेर्गत्यर्थस्य । ता हि वृक्षस्य स्कन्धतो जनित्वा तिरश्चीना अन्तरिक्षे गच्छन्ति । 'वातायना भवन्ति' इति द्वितीयं निर्वचनम् । वातोऽयनो यासां वातेन याश्चाल्यन्त इत्यर्थः । वातायनाः, पृषोदरादित्वाद्वाशब्दस्य ह्रस्वत्वेन ताशब्दस्य च लोपेन नकारस्य च वया उच्यन्ते । यथाऽत्रैतदस्माभिर्दर्शितमेव सर्वत्र निर्वाच्येऽर्थे दर्शिते तद्वचनस्य शब्दस्य वर्णानां पृषोदरादित्वाल्लोपविकारविपर्ययादिना यथा रूपसिद्धिस्तद्दर्शयितव्यम् । . . . .'शाखाः खशयाः शक्नोतेर्वा' इति । वया इत्यस्यार्थस्य प्रदर्शनार्थमुपात्तस्य शाखाशब्दस्य प्रसङ्गेनैते निर्वचने । शाखा वृक्षस्य स्कन्धतो जनित्वा ख आकाशे शेरते व्यवतिष्ठन्ते । शक्नुवन्ति च पक्षिणः स्वं च पुष्पफलं धारयितुम् SKN.
१५. रक्षाः Sy. अस्मद्यज्ञागमनमार्गाः Dur. त्वयि धनमददति दारिद्र्यादस्मास्वयजत्सु इदानीं तवागमनादूतयोऽस्मद्यज्ञागमनमार्गाः SKN.
१६. विरु० D. विशेषेण रोहन्ति Sy. खिलीभूतास्तवात्रागमनात् । अहो कष्टं मन्दभागधेयताऽस्माकम् । येषां नो धनं तदस्ति येन त्वा यजेमहि । किमत्र त्वां यक्ष्याम इति Dur. विरूढास्तृणादिभिराच्छादिता इत्यर्थः SKN.
१७. बाह्वं P. बह्वयं D. पूर्वाः Dur. पूर्वे, यैस्त्वमतीते काल आगतवानसि SKN.
१८. VM. ignores शूर ॥ हे विक्रान्तेन्द्र ! Sy. वृक्षस्येव ते पुरुहूत शाखाः । वयाः शाखाः वेतेः । वातायना भवन्ति । शाखाः खशयाः । शक्नोतेर्वा N. 1.4., SKN. I. 50.,51.

शचीवतस्ते पुरुशाक शाका गवामिव स्रुतयः संचरणीः ।
वत्सानां न तन्तयस्त इन्द्र दामन्वन्तो अदामानः सुदामन् ॥ ४ ॥

शचीवतः । प्रज्ञावतः । ते[1] । बहुसहाय[2] ! सहाया भवन्ति[3] । गवामिव[4] । सञ्चरणाधिकरणभूताः[5] । मार्गा[6] गोभिः परिवृता भवन्ति त्वां यजन्त इति । वत्सानाम् । इव[7] । तन्तयः[8] शत्रूणां बन्धनाय[9] । दामन्वन्तः[10] । तव शाकाः[11] । स्वयमबन्धका[12] भवन्ति । शोभनदान ! शोभनबन्धन[13] ! इति[14] ।

अन्यदद्य कर्वरमन्यदु श्वोऽसच्च सन्मुहुराचक्रिरिन्द्रः ।
मित्रो नो अत्र वरुणश्च पूषार्यो वशस्य पर्येतास्ति ॥ ५ ॥

अन्यत् । अन्यत् । अद्य[15] । कर्म[16] । अन्यत्[17] । एव[18] । श्वः[19] । अकल्याणम्[20] । च शत्रुम् । मित्रविषयम्[21] । मुहुः[22] । आभिमुख्येन करोति[23] । इन्द्रः[24] । तस्मिन्नस्मिन्[25] कर्मणि । ईश्वरस्येन्द्रस्य[26] । मित्रादिदेवः[27] । ईश्वरः[28]

---

१. त्वदीयाः Sy.
२. हे बहुकर्मन्निन्द्र ! Sy.
३. शक्तयः कर्माणि वा सर्वतः सञ्चरन्तीति शेषः Sy.
४. गवायामिव P. गवयामिव D. तत्र दृष्टान्तः । धेनूनां यथा Sy.
५. सर्वत्र सञ्चारिणो भवन्ति तद्वत् Sy.
६. मार्ग P., D.
७. वत्साहामितिव P. वत्साहामिव D.
८. तन्तिर्नाम दीर्घप्रसारिता रज्जुः । यत्र नियतैर्विशाखदामभिर्बहवो वत्सा बध्यन्ते । तथा तन्तयो बहूनां वत्सानां बन्धकाः Sy.
९. ०णामबन्धनाय P. ०णामबलन्धानाय D.
१०. बन्धनवन्तः । बहूनां शत्रूणां बन्धकाः Sy.
११. त्वदीयाः शाकाः Sy.
१२. स्वयमन्यैरबद्धाः Sy.
१३. बलन्धनवेति P. ०बलन्धनवेति D.
१४. VM. ignores इन्द्र ।
१५. अस्मिन् दिवसे Sy.
१६. कर्म करोति Sy. कर्वरमिति कर्मनाम Ngh. 2.1.7.
१७. उक्तविलक्षणमेव कर्म Sy.
१८. अन्यस्तदे P., D.
१९. परस्मिन् दिने करोति Sy.
२०. एतदेव विव्रियते । असच्चाशुभमशनिपातनादिकम् Sy.
२१. शत्रूमिवत्रविषय P. ०त्रुमिवत्रवि० D. वर्षणादिकं शोभनं कर्म च । यद्वा त्रिशिरसो विश्वरूपस्य वधादिकमसत्कर्म लोकोपद्रवकारिणो वृत्रादेरसुरस्य वधादिरूपं सत्कर्म च Sy.
२२. पुनः पुनः Sy.
२३. कर्ता भवति । एवं परस्परविलक्षणं कर्म स्वमहिम्ना पुनः पुनरावर्तयन् प्रतिदिवसमन्यदेव परेषामसाधारणं कर्म करोतीत्यर्थः Sy.
२४. एवंविध इन्द्रः Sy.
२५. अस्मिन् यज्ञे Sy.
२६. वशस्य कामयितव्यस्य फलस्य स्वर्गादेः Sy.
२७. आदि refers to मित्रः । वरुणः and पूषा ॥ मित्रः अहरभिमानी देवः । वरुणो रात्र्यभिमानी देवः । पूषा पोषको देवः Sy.
२८. अर्यः प्रेरकः सवितैते चेन्द्रेण नियम्यमाना अस्मदीयस्य कामस्य परिगमयितारः सन्तु ः यद्वा मित्रादयोऽप्यत्र स्वप्राधान्येनाभिधीयन्ते । मित्रादय इन्द्रः प्रत्येकमस्मदीयस्य कामस्य पर्येतास्तु । तथा बृहद्देवतायामुक्तम्—'प्रोतयेऽन्यदिति त्वेते वैश्वदेव्यावृचौ स्मृते' इति Sy.
BD. V.106. reads 'प्रोतये नू म इत्येते वैश्वदेव्यावृचौ स्मृते' ।

अभवत्[1] । परितो गन्ता[2] । भवति साहाय्यार्थम्[3] ।

**वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरिन्द्रानयन्त यज्ञैः ।**
**तं त्वाभिः सुष्टुतिभिर्वाजयन्त आजिं न जग्मुर्गिर्वाहो अश्वाः ॥ ६ ॥**

**वि त्वदापः ।** व्यनयन्[4] । त्वत्तः[5] । कामान् स्तोत्रैः[6] । हविर्भिश्च । उदकानि[7] । इव[8] । मेघस्य[9] । पृष्ठात्[10] । तम्[11] । त्वा[12] । आभिः[13] । सुष्टुतिभिः[14] । बलिनं कुर्वाणाः स्तोतारः[15] । गच्छन्ति[16] । सङ्ग्रामम्[17] । इव । अश्वाः[18] । हे गीर्भिरुह्यमान[19] ![20]

**न यं जरन्ति शरदो न मासा न द्याव इन्द्रमवकर्शयन्ति ।**
**वृद्धस्य चिद्वर्धतामस्य तनूः स्तोमेभिरुक्थैश्च शस्यमाना ॥ ७ ॥**

**न यम् ।** न । यम्[21] । जरयन्ति[22] । मासाः । शरदः[23] । च । यं च[24] । तेजांसि[25] । न । अवकर्षयन्ति[26] । वृद्धस्य[27] । अपि । वर्धताम्[28] । तनूः[29] । स्तोमैः[30] । उक्थैः[31] । च । शस्यमाना[32][33] ।

---

१. परिगमयिता Sy.
२. ०न्ति P., D. भवतु । अस्ति—अस्तेर्नेटि रूपम् Sy.
३. VM. ignores नः and च ॥ नोऽस्माकम् Sy.
४. स्तोतारः कामान् आत्मनो विविधं प्रापयन्ति Sy.
५. त्वत्सकाशात् Sy.
६. कामांस्तो P. कामं स्तो० D. उक्थैः शस्त्रैः Sy.
७. ०कान् P.
८. तत्र दृष्टान्तः । यथा तद्वत् Sy.
९. अद्रेः Sy.
१०. उपरिभागात् Sy.
११. प्रसिद्धम् Sy.
१२. त्वाम् Sy.
१३. पूर्वोक्ताभिः Sy.
१४. ०ष्ठात् त्वत्तान्त्वाभिस्सुष्ठुति० P. ०ष्ठात् त्वत्तस्त्वाभिष्टुति० D. शोभनाभिः स्तुतिभिः Sy.
१५. बलिनं कुर्वन्तः । यद्वा वाजमन्नमिच्छन्तः भरद्वाजाः स्तोतारः Sy.
१६. प्रापुः Sy.
१७. क्षिप्रगमने दृष्टान्तः । यथा शीघ्रं प्रापुस्तद्वत् Sy.
१८. वाहाः Sy.
१९. ०रुह्य P. ०रुंह्यः D. गीर्भिः स्तुतिरूपाभिर्वाग्भिर्वहनीयेन्द्र ! Sy.
२०. VM. ignores इन्द्र ।
२१. इन्द्रम् Sy.
२२. अपक्षीणयन्ति Sy.
२३. संवत्सराः Sy.
२४. इन्द्रम् Sy.
२५. दिवसाश्च यमिन्द्रं नावकर्शयन्ति नाल्पीभावयन्ति Sy.
२६. ०कर्हहयन्ति P. अपक० D. नाल्पीभावयन्ति Sy.
२७. वृत्रस्य P., D. प्रवृद्धस्य Sy.
२८. पुनर्धातामनु P. पुनर्धातामनु D. for वर्धताम् ॥ प्रवृद्धा भवतु Sy.
२९. तनुः P., D. शरीरम् Sy.
३०. अस्मदीयैः स्तोत्रैः Sy.
३१. शस्त्रैश्च Sy.
३२. ०नाः P. स्तूयमाना सती Sy.
३३. VM. ignores अस्य ॥ अस्य इन्द्रस्य Sy.

**न वी॒ळवे॒ नम॑ते॒ न स्थि॒राय॒ न शर्ध॑ते॒ दस्यु॑जूताय स्त॒वान् ।**
**अज्रा॒ इन्द्र॑स्य गि॒रय॑श्चिदृ॒ष्वा ग॑म्भी॒रे चि॑द्भवति गा॒धम॑स्मै ॥ ८ ॥**

न वीळवे । न । दृढाय[1] । नमते[2] । न च[3] । स्थिराय[4] । न च । उत्सहमानाय[5] । दस्युभिः परिवृताय[6] । स्तवान्[7] स्तूयमान[8] ! अवक्षेपणीयाः[9] । इन्द्रस्य[10] । पर्वताः । अपि । महान्तो भवन्ति । अगाधे । अपि तीर्थे[11] । गाधम्[12] । इन्द्राय[13] । भवति, इच्छते[14] ।

**ग॒म्भी॒रेण॑ न उ॒रुणा॑मत्रि॒न्प्रेषो य॑न्धि सुतपाव॒न्वाजा॑न् ।**
**स्था ऊ॒ षु ऊ॒र्ध्व ऊ॒ती अरि॑षण्यन्न॒क्तोर्व्यु॑ष्टौ॒ परि॑तक्म्यायाम् ॥ ९ ॥**

गम्भीरेण । हे अमत्रवन्[15] ! अस्मभ्यम् । अगाधेन[16] । विस्तीर्णेन[17] । प्रयच्छ[18] । अन्नानि[19] । सुतस्य पातः[20] ! ऊर्ध्वः[21] । तिष्ठ । अहिंसन् । रक्षणायास्माकम्[22] । रात्रेः[23] । व्युष्टौ, अह्नि[24] । परितक्म्यायां[25] रात्रौ च[26] ।

**सच॑स्व ना॒यमव॑से अ॒भीक॑ इ॒तो वा॒ तमि॑न्द्र पाहि रि॒षः ।**
**अ॒मा चै॑न॒मर॑ण्ये पाहि रि॒षो मदे॑म श॒तहि॑माः सु॒वीराः॑ ॥ १० ॥**

सचस्व । सेवस्व । नेतारम्[27] । रक्षणाय । युद्धे[28] । तथेतः[29] । च[30] । हिंसितुः[31] । तम्[32] । रक्ष । तथा गृहे[33] ।

---

१. दृढगात्राय यजमानाय Sy.
२. नगमते P.D. वशीभवति Sy.
३. Omitted by D.
४. युद्धेऽविचलिताय न नमते Sy.
५. ०त्साह० D.
६. कर्मवर्जितैः प्रेरिताय यजमानाय न वशीभवति । यद्यपि स्तोतारो बहुगुणाः सन्ति तथापीन्द्रस्तेभ्यो न वशीभवतीत्यर्थः Sy.
७. स्तोत्रवान् P., D.
८. अस्माभिः स्तूयमान इन्द्रः Sy.
९. अवाक्षे० P., D. अज्राः सुगमनाः क्षेपणीया भवन्ति Sy.
१०. इन्द्रा P. इन्द्र D.
११. स्थाने Sy.
१२. गाथम् P. गाधं स्थानम् Sy.
१३. इन्द्रा P., D.
१४. It is an epithet of इन्द्राय or अस्मै ।
१५. अमत्रं बलम् । तद्वन् ! Sy.
१६. केनापि दुरवगाहेन Sy.
१७. ०र्णे P., D. विस्तीर्णेन मनसा Sy.
१८. प्रा० D. १९. प्राच्छन्नानि P.
२०. हे सुतस्य सोमस्य पातः ! इन्द्र ! Sy.
२१. उद्युक्तः Sy.
२२. ०ष्ठं हिंसन्नक्ष० P. रक्षायै Sy.
२३. ०त्रे D. २४. विवासेऽह्नि Sy.
२५. ०तत्म्यायां P.
२६. VM. ignores वाजान् । उ and सु ॥ वाजान् बलानि च । सु सुष्ठु Sy.
२७. कर्मणां स्तुतीनां च नेतारम् Sy.
२८. सङ्ग्रामे Sy.
२९. अस्मात् सनिकृष्टाच्च रिषः शत्रोः, अमुतो विप्रकृष्टाच्छत्रोश्च Sy.
३०. चा P. वाशब्दोऽनुक्तेन विवक्षितेन समुच्चयार्थः Sy. ३१. शत्रोः Sy.
३२. त P., D. स्तोतारम् Sy.
३३. अमेति गृहनाम Ngh. 3.4.

अरण्ये । च । एतम् । रक्ष । हिंसितुः । मदेमेति गतम् ।

VI.25.

या त॑ ऊ॒तिर॑व॒मा या प॑र॒मा या म॑ध्य॒मेन्द्र॑ शुष्मि॒न्नस्ति॑ ।
ताभि॑रू॒ षु वृ॑त्र॒हत्ये॑ऽवीर्न॑ ए॒भिश्च॒ वाजै॑र्म॒हान्न॑ उग्र ॥ १ ॥

या ते । अवममध्यमोत्तमानि । यानि । भवन्ति । तव । रक्षणानि । तैः । अस्मान् । सङ्ग्रामे । सुष्ठु । रक्ष । अन्नैः । च । एभिः । महान् । अस्मान् । उद्गूर्णः ।

आ॒भिः स्पृधो॑ मिथ॒तीररि॑षण्यन्न॒मित्र॑स्य व्यथया म॒न्युमि॑न्द्र ।
आ॒भिर्विश्वा॑ अ॒भियुजो॒ विषू॑चीरार्या॑य॒ विशोऽव॑ तारी॒र्दासीः॑ ॥ २ ॥

आभिः । आभिः स्तुतिभिः । स्पृधः । आक्रोशन्तीः । अहिंसन् अस्मान् । अमित्रस्य । व्यथय । तथा मन्युं च तस्य व्यथय । आभिः । विश्वाः । अभियोक्त्रीः । विष्वगञ्चनाः । आर्याय । विशः । विनाशय । आसुरीः ।

---

१. कानने Sy.
२. हिंसित P. हिंसि D. शत्रोः Sy.
३. By. मदेमेति VM. refers to शतहिमाः and सुवीराः ॥ हुव्याम। सुवीराः शोभनपुत्रा वयम्। शतहिमाः शतसंवत्सरान् Sy.
४. VM. ignores इन्द्र !
५. 'या त ऊतिः' इति नवर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रान्तम्—'या ते नव' (KSA.30.25.p.22.) इति। पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनीदं सूक्तं निष्केवल्यनिविद्धानम्। सूत्रितञ्च—'या त ऊतिरवमेति मध्यन्दिनः' (ĀSS.7.6.) इति Sy.
६. VM. explains अवमा। परमा and मध्यमा together as अवममध्यमोत्तमानि and या as यानि ॥ या अधमास्ति, या परमोत्कृष्टास्ति, या मध्यमास्ति Sy.
७. त्वदीया Sy. ८. या रक्षा Sy.
९. युद्धे Sy. १०. अत्यन्तं पालय Sy.
११. रक्षणार्णैः P. रक्षणान्नैः D.
१२. भोज्यसाधनैः Sy. १३. महांस्त्वम् Sy.
१४. अस्मान् संयोजयेति शेषः Sy.
१५. VM. reads उग्रः for उग्र ॥ हे उद्गूर्ण ! इन्द्र ! Sy.
१६. VM. ignores इन्द्र । शुष्मिन् and उ ॥ हे शुष्मिन् ! बलवन् ! इन्द्र Sy.
१७. अस्मदीयाभिः स्तुतिभिः Sy.
१८. अस्मदीयाः सेनाः Sy.
१९. ०न्तिः P. शत्रुसैन्यानि हिंसन्तीः Sy.
२०. अहिंसन् । पालयन्नित्यर्थः Sy.
२१. अमस्मान् P., D.
२२. शत्रोः Sy. २३. नाशय Sy.
२४. सङ्ग्रामादिषु विद्यमानं कोपम् Sy.
२५. स्तुतिभिः Sy. २६. सर्वाः Sy.
२७. विश्वाभिर्योक्त्रीं P. विश्वाभियोक्त्री D.
२८. सर्वतो विद्यमानाः Sy.
२९. यज्ञादिकर्मकृते यजमानाय Sy.
३०. प्रजाः Sy.
३१. विनायासुरीत् P. ०शायासुरीत् D. कर्मणामुपक्षपयित्रीः Sy.
३२. VM. ignores इन्द्र ।

इन्द्रं जामयं उत येऽजामयोऽर्वाचीनासों वनुषों युयुज्रे ।
त्वमेषां विथुरा शवांसि जहि वृष्ण्यानि कृणुही परांचः ॥ ३ ॥

इन्द्र[1] । इन्द्र ! ज्ञातयः[2] । अपि च[3] । ये[4] । अज्ञातयः[5] । अर्वाचीना अभिमुखाः[6] । हिंसाः[7] । योजयन्ति[8] । त्वम्[9] । एषाम्[10] । विथुराणि[11] चालकानि[12] । बलानि[13] । जहि[14] । वीर्याणि[15] च । कुरु च तान् । पराङ्मुखान्[16] ।

शूरो वा शूरं वनते शरीरैस्तनूरुचा तरुषि यत्कृण्वैते ।
तोके वा गोषु तनये यदप्सु वि क्रन्दसी उर्वरासु ब्रवैते ॥ ४ ॥

शूरः । शूरः[17] । एवम्[18] । अङ्गैः[19] । भजते[20] । तन्वा रोचमानौ[21] । सङ्ग्रामे[22] । यदा परस्परम् । हिंस्तः[23] । यदा । वा । तोकाद्यर्थम्[24] । क्रन्दमाने[25] परस्परम् । विब्रूतः[26] परुषाणि[27] ।

---

१. इन्द्रः P. इन्द्रं D.
२. ज्ञातिरूपाः सन्निकृष्टाः ये शत्रवः Sy.
३. वा D.
४. शत्रवः Sy.
५. P. adds अपि ये ज्ञातयः after अज्ञातयः । D. adds अपि च ये ज्ञातयः after अज्ञातयः ॥ दूरदेशे स्थिताः Sy.
६. अर्वाश्चीन P.
७. अस्मदभिमुखाः Sy.
८. हिंसन्तः Sy.
९. उद्युक्ता भवन्ति Sy.
१०. उभयविधानां शत्रूणां सम्बन्धीनि Sy.
११. विधुरा० D.
हीनानि त्वं कुर्विति शेषः Sy.
१२. चलकानि P.
०काणि D.
१३. खलानि P.
१४. नाशय Sy.
१५. एषां वीर्याणि Sy.
१६. किञ्च उभयविधान् शत्रून् पराङ्मुखान् Sy.
१७. त्वदनुगृहीतो वीरः Sy.
१८. अपि । वेत्ययमपीत्यस्यार्थे वर्तते । यद्वा वेत्यनेन विकल्पाभिधायकेनाशूरो वा त्वदनुगृहीतः सन् Sy.
१९. अगैः D.
२०. हन्ति Sy.
२१. तवारोचमानैः P. तवारो D. शरीरेण शोभमानौ परस्परविरोधिनौ Sy.
२२. युद्धे Sy.
२३. सङ्ग्रामं कुर्वाते Sy.
२४. ताका० P. ताकाम्यर्थं D. आदि refers to गोषु । तनये । अप्सु and उर्वरासु ॥ पुत्रनिमित्ते वा, गोषु निमित्तभूतासु वा, तनये पौत्रे निमित्तभूते, वाप्सूदकेषु निमित्तेषु वा, सर्वसस्याढ्यासु भूमिषु उर्वरासु Sy.
२५. क्रन्दमानावाक्रोशन्तौ Sy.
२६. विवदेते । हे इन्द्र ! पुत्रादिलाभजयस्त्वदनुगृहीतस्य भवतीत्यर्थः Sy.
२७. VM. ignores शूरम् ॥ वीरम् Sy.

**नहि त्वा शूरो न तुरो न धृष्णुर्न त्वा योधो मन्यमानो युयोध ।**
**इन्द्र नकिष्ट्वा प्रत्यस्त्येषां विश्वा जातान्यभ्यसि तानि ॥ ५ ॥**

किमत इत्याह[1] । [नहीति][2] नहि । त्वादृशः[3] । शूरः[4] । नापि[5] । तरिता[6] । न च[7] । धृष्णुः[8] । न च । योद्धान्यः[9] । अभिमानं[10] कुर्वन् । युध्यति[11] । इन्द्र ! न कश्चित् । एषामन्यतमः[12] । प्रतिभवति[13] । त्वाम्[14] । विश्वानि । तानि[15] । भूतानि[16] । त्वमभिभवसीति ।

**स पत्यत उभयोर्नृम्णमयोर्यदी वेधसः समिथे हवन्ते ।**
**वृत्रे वा महो नृवति क्षये वा व्यचस्वन्ता यदि वितन्तसैते ॥ ६ ॥**

**स पत्यते** । सः[17] । गच्छति[18] । द्यावापृथिव्योरुभयोः[19] । बलभूतः[20] । यद्येनम्[21] । दिव्याः पार्थिवा वा । स्तोतारः[22] । सङ्ग्रामार्थम्[23] । हवन्ते[24] । उपद्रवे[25] । वा । महति[26] । मनुष्ययुक्ते[27] । वा । यज्ञगृहे[28] । व्याप्तिमत्यौ[29] द्यावापृथिव्यौ । यद्येनम्[30] । विस्तारयितुमिच्छतस्तत्र[31] च पत्यत इति ।[32]

---

१. किमुतमित्याह P. किम् ? अत आह refers to the previous stanza.
२. The *pratīka* is supplied by the Editor.
३. ०शाः D. हे इन्द्र ! त्वया सह Sy.
४. विक्रान्तजनः Sy.
५. स्नापि P., D.
६. तरित P. तरि D. अन्येषां शत्रूणां हिंसकः सः त्वया न युयोध Sy.
७. Omitted by P.
८. धर्षको न युयोध Sy.
९. भटस्त्वया न युयोध Sy.
१०. ०न्येभि० P., D. युद्धे क्रुध्यन् Sy.
११. न युध्यते Sy.
१२. शूरादीनां मध्ये कश्चन Sy.
१३. प्रतिनिधिर्नास्ति Sy.
१४. तव Sy.
१५. शूरादीनि Sy.
१६. प्रादुर्भूतानि Sy.
१७. जनः Sy.
१८. ईष्टे Sy.
१९. ०यो P. उभयोर्मध्ये Sy.
२०. ०भूतेता P. नृम्णं धनम् Sy.
२१. कयोर्मध्ये ? क ईष्टे ? इत्येतदुभयमाह । यस्य जनस्य । यदीति निपातो यस्यार्थे वर्तते Sy.
२२. कर्मणां विधातार ऋत्विजः Sy.
२३. यज्ञे Sy.
२४. इन्द्रं स्तुवन्ति स ईष्ट इति सम्बन्धः Sy.
२५. निरोधे निमित्ते वा Sy.
२६. महति प्रभूते Sy.
२७. परिचारकमनुष्ययुक्ते Sy.
२८. गृहनिमित्ते वा Sy.
२९. व्याप्तिमशक्यौ P.
३०. यौ जनौ । यदीति यावित्यर्थे वर्तते Sy.
३१. वियुध्येते तयोर्मध्य इति सम्बन्धः । तसेरुपक्षयकर्मणो विपूर्वाद् वितन्तसैते इति भवति । यद्वा तन्तस इति धातुः कण्ड्वादिषु पठ्यते तस्मादिदं रूपमिति Sy.
३२. VM. seems to explain अयोः as द्यावापृथिव्योः । If not, he ignores it ॥ अयोरनयोः Sy.

अर्ध स्मा ते चर्षणयो यदेजानिन्द्र त्रातोत भवा वरूता ।
अस्माकासो ये नृतमासो अर्य इन्द्र सूरयो दधिरे पुरो नः ॥ ७ ॥

अध[1] ; अथ[2] । खलु । मनुष्याः[3] । यदा सङ्ग्रामार्थम् । चलन्ति[4] तदा । तेषां त्राता[5] । भव । सम्भक्ता[6] । च । अस्मदीयाः । ये[7] । नेतृतमाः । गन्तारः[8] । इन्द्र[9] ! प्राज्ञाः[10] । अस्मान्[11] । पुरः । दधिरे[12] तेषामिति[13] ।

अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये ।
अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये ॥ ८ ॥

अनु[14] ते । अनु[15] । दायि[16] । तुभ्यम् । महत्[17] । बलं दृष्ट्वा तदर्थम्[18] देवैः[19] करः । तथा सत्यमेव[20] । सर्व-धनम्[21] । त्वया[22] वृत्रे हते[23] । तुभ्यम्[24] । अन्वदायि[25] । तथा त्वयि बलम्[26] । अभिभवसामर्थ्यं[27] च दृष्ट्वा । अन्वदायि । यजनीय[28] ! देवैः[29] । तथान्वदायि । तुभ्यम् । नृणामभिभवे[30] ।[31]

---

१. अथ P. २. अपि च Sy.
३. पुरुषाः Sy.
४. एजेयुर्भीत्या कम्पेयुः Sy.
५. त्वं तेषां पालकः Sy.
६. सम्भक्ता भव Sy.
७. मनुष्याः Sy.
८. अरयः । प्रापयितार इत्यर्थः । तेषां त्राता भव Sy. ९. हे इन्द्र ! त्वाम् Sy.
१०. ये स्तोतारः Sy.
११. प्रज्ञास्मान् P. प्राज्ञास्मान् D.
१२. चक्रिरे तेषां च त्राता भवेति Sy.
१३. VM. ignores ते and इन्द्र ॥ ते त्वदीयाः । हे इन्द्र ! Sy.
१४. साकमेधेषु माहेन्द्रयामिष्टाविन्द्रस्य वृत्रघ्नो याज्या । सूत्रितञ्च—'अनु ते दायि मह इन्द्रियाय विश्वकर्मन् हविषा वावृधानः' (ĀSS. 2.18.) इति । अनुक्रीनाम्न्येकाहे निष्केवल्य एषैव सूक्तमुखीया । सूत्रितञ्च—'अनु ते दायि मह इन्द्रियाय कथो नु ते परि चराणि विद्वानिति द्वे' (ĀSS.9.5.) इति Sy.
१५. महदिन्द्रियहेतुभावमनुशब्दो द्योतयति BB.
१६. अन्वदायि । अनुदीयते स्म Sy. दीयते ।.... सामर्थ्याद्धविरिति गम्यते BB.
१७. महते Sy. देवतान्तरेभ्य इन्द्रस्य विशेषानाचष्टे । महे महते BB.
१८. स्तद० P., D. ऐश्वर्यार्थम् Sy. इन्द्रियाय वीर्याय....द्वितीयार्थे चतुर्थी....महतेन्द्रियेण तद्वानयमिति कृत्वा तुभ्यमेव दीयते BB.
१९. देवै P. ऋत्विग्भिः BB.
२०. सत्रेषु सर्तव्येषु यज्ञेषु सर्वेष्वपि । सप्तम्या आकारः BB. २१. कृत्स्नमपि BB.
२२. सर्वधनं D. समस्तम् Sy.
२३. वृत्रवधे निमित्ते Sy. वृत्रहत्याम् ।....वृत्रं हतवानयमिति कृत्वा BB.
२४. तुभ्यमेव BB.
२५. दीयते । त्वत्प्रधानत्वाद्देवानाम् । यद्वा विश्वं हविस्तुभ्यमेव दीयतां किमन्यैर्देवैः ? छान्दसो लुङ् BB.
२६. येन विश्वं बिभर्ति तद् बलम् Sy. क्षत्रं धनम् । धनवानिति कृत्वा BB.
२७. येन शत्रूनभिभवति तद्गुणविशिष्टं सहो बलम् Sy. सहो बलं बलवानिति कृत्वा BB.
२८. हे इन्द्र ! Sy. हे इन्द्र ! यजत्र ! यष्टव्य ! यजेरत्रः BB. २९. सर्वैर्देवैरेतत्सर्वम् Sy.
३०. युद्धे Sy. नृणां शत्रूणामभिभवितृत्वम् । सर्वेषां नृणामयमभिभवितेति कृत्वा BB.
३१. VM. ignores इन्द्र ॥ This stanza = TS.1.6.12.1.

एवा नः स्पृधः समजा समत्स्विन्द्र रारन्धि मिथतीरदेवीः ।
विद्याम वस्तोरवसा गृणन्तो भरद्वाजा उत त इन्द्र नूनम् ॥ ६ ॥

एव । एवम्[1] । अस्माकम्[2] । सम्प्रेरय[3] । शत्रून्[4] । सङ्ग्रामेषु । इन्द्र ! उपरमय[5] । आक्रोशन्तीः[6] । आसुरीः[7] प्रजाः । लभेमहि । धनम्[8] । रक्षणार्थम्[9] । स्तुवन्तः । भरद्वाजाः[10] । तव । इदानीम्[11] । इन्द्रेति ।[12]

VI.26.

श्रुधी न इन्द्र ह्वयामसि त्वा महो वाजस्य सातौ वावृषाणाः ।
सं यद्विशोऽयन्त शूरसाता उग्रं नोऽवः पार्ये अहन्दाः ॥ १ ॥

[13]श्रुधि । शृणु । अस्माकं स्तुतीः[14] । इन्द्र ! ह्वयामसि[15] । त्वाम्[16] । महतः । वाजस्य[17] । लाभार्थम् । वर्धमानाः[18] । सङ्गच्छन्ते । यदा । शूराः[19] । सङ्ग्रामे[20] । तदानीमन्तिमे[21] । अहनि[22] । उद्गूर्णम् । रक्षणम् । अस्माकम्[23] । देहीति[24] ।

त्वां वाजी हवते वाजिनेयो महो वाजस्य गध्यस्य सातौ ।
त्वां वृत्रेष्विन्द्र सत्पतिं तरुत्रं त्वां चष्टे मुष्टिहा गोषु युध्यन् ॥ २ ॥

त्वां वाजी । त्वाम् । अन्नवान्[25] हविष्मान् । भरद्वाजो वाजिन्याः पुत्रः[26] । हवते[27] । महतः । बलस्य[28] ।

---

१. एवं स्तुतस्त्वम् Sy.
२. अस्मदीयाः Sy.
३. शत्रुवधार्थं प्रेरय Sy.
४. शत्रुसेनाः Sy.
५. पर० P. अस्मदर्थं वशीकुरु Sy.
६. हिंसन्तीः Sy.
७. प्रा० D. सेनाः Sy.
८. वासस्य । निवासमित्यर्थः Sy.
९. अन्नेन सह Sy.
१०. भरः P. भरद्वाजा वयम् Sy.
११. अवश्यम् Sy.
१२. VM. ignores उत ॥ अपि च Sy.
१३. 'श्रुधी न इन्द्र' इत्यष्टर्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रम्यते 'श्रुधी नोऽष्टौ' (KSA. 30.26.p.22.) इति । विनियोगो लैङ्गिकः Sy.
१४. आह्वानम् Sy.
१५. ०यासमि P. आह्वयामः Sy.
१६. त्वा P. १७. अन्नस्य Sy.
१८. सोमैस्त्वां सिञ्चन्तो वयं स्तोतारः Sy.
१९. जनाः Sy. २०. युद्धे Sy.
२१. तदान्तिमे Sy.
२२. दिवसे Sy. २३. अस्मभ्यम् Sy.
२४. अदाः प्रयच्छ Sy.
२५. हविर्लक्षणान्नवान् Sy.
२६. ०न्यां P.
२७. हतवते P. स्तौति Sy.
२८. अन्नस्य Sy.

अभिकाङ्क्षितस्य[१] । लाभाय[२] । त्वाम् । वृत्रेषु[३] । इन्द्र[४] ! सतां पतिम्[५] । तारकम्[६] । पश्यति[७] । तथा त्वामेव पश्यति । मुष्टिभिः शत्रूणां हन्ता[८] । गोनिमित्तम्[९] । युध्यन्[१०] ।

**त्वं कविं चोदयोऽर्कसातौ त्वं कुत्साय शुष्णं दाशुषे वर्क् ।**
**त्वं शिरो अमर्मणः पराहन्नतिथिग्वाय शंस्यं करिष्यन् ॥ ३ ॥**

**त्वं कविम्**[११][१२] । त्वम् । कविं कुत्सम्[१३] । अचोदयः[१४] । युद्धे[१५] । त्वमथ[१६] । कुत्साय । यजमानाय[१७] । शुष्णम्[१८] । जितवानसि[१९] । तथा त्वम् । तिरोहितमर्मस्थानस्य[२०] शम्बरस्य । शिरः[२१] । पराहतवानसि[२२] । दिवोदासाय[२३] । शंसनीयं[२४] सुखम् । करिष्यन् ।

**त्वं रथं प्र भरो योधमृष्वमावो युध्यन्तं वृषभं दशद्युम् ।**
**त्वं तुग्रं वेतसवे सचाहन्त्वं तुजिं गृणन्तमिन्द्र तूतोः ॥ ४ ॥**

**त्वं रथम्** । त्वमेव[२५] । रथम्[२६] । योद्धारम्[२७] । दर्शनीयम्[२८] । प्रहृतवानसि[२९] । तथा रक्षितवानसि[३०] ।

---

१. सर्वैः प्राप्यस्य Sy.
२. लाभे निमित्ते Sy.
३. सु P. उपद्रवेषु निमित्तेषु भरद्वाजो हवते Sy.
४. अपि च हे इन्द्र ! Sy.
५. सज्जनानां पालकम् Sy.
६. दुर्जनानां तारकम् Sy.
७. भरद्वाजस्त्वां प्रतिपालयते Sy.
८. मुष्टिबलेन शत्रूणां हन्ता Sy.
९. गोषु निमित्तभूतासु Sy.
१०. शत्रुभिः सह युद्धं कुर्वन् Sy.
११. P. reads किं for त्वं कविम् ।
१२. हे इन्द्र ! Sy.
१३. भार्गवमृषिम् Sy.
१४. अयो P. अयोदयः D.
प्रैरयः Sy.
१५. अन्नलाभार्थम् Sy.
१६. तमथ P., D.
१७. ०या D.
हविर्दत्तवते Sy.
१८. असुरम् Sy.
१९. छेदितवानसि । वर्गिति वृणक्तेश्छेदनार्थस्य लुङि रूपम् Sy.
२०. मर्महीनमात्मानं मन्यमानस्य Sy.
२१. शीर्षम् Sy.
२२. अवधीः Sy.
२३. अतिथीनामभिगन्त्रे दिवोदासाय Sy.
२४. स्तुत्यम् Sy.
२५. हे इन्द्र ! त्वं वृषभसंज्ञकाय राज्ञे Sy.
२६. The words त्वमेव रथम् are omitted by P.
२७. युद्धसाधनम् Sy.
२८. महान्तम् Sy.
२९. स्पृहत० P. प्रापयः Sy.
३०. युद्धादपीपलः Sy.

युध्यन्तम्[1] । वर्पिनारम्[2] । दशद्युनामानम्[3] ।[4]

**त्वं तदुक्थमिन्द्र बर्हणा कः प्र यच्छता सहस्रा शूर दर्षि ।**
**अव गिरेर्दासं शम्बरं हन्प्रावो दिवोदासं चित्राभिरूती ॥ ५ ॥**

त्वम् । अवाहन्[5] । प्रकर्षेण[6] रक्षितवानसि । दिवोदासं[7] शम्बरभीतम्[8] । चित्रैः[9] । रक्षणैः[10] ।[11]

**त्वं श्रद्धाभिर्मन्दसानः सोमैर्दभीतये चुमुरिमिन्द्र सिष्वप् ।**
**त्वं रजिं पिठीनसे दशस्यन्षष्टिं सहस्रा शच्या सचाहन् ॥ ६ ॥**

त्वं श्रद्धाभिः । त्वम् । सोमैः । मन्दसानः[12] । दभीतये[13] । श्रद्धाभिः[14] श्रद्दधान एव[15] । चुमुरिं[16] नाम । अस्वापयः[17]—अमारयः । त्वम् । राज्यम्[18] । पिठीनसनाम्ने[19] । प्रयच्छन्[20] । शत्रूणां षष्टिम्[21] । सहस्राणि[22] । प्रज्ञया ।

---

१. शत्रुभिः सह युद्धं कुर्वन्तम् Sy.

२. एतदाख्यं राजानम् Sy.

३. दश दिवसा युध्यतो यस्य गतास्तम् Sy.

४. VM. ignores the second hemistich of the stanza. Sy. explains this hemistich in the following manner:—
किं च त्वं वेतसव एतन्नाम्ने राज्ञे सचा सहायभूतः सन् तुग्रमसुरमहन् हतवानसि । वेतसुर्नाम कश्चिदसुरः । अत्र तस्मादन्योऽसावुच्यते । यद्वा वेतसव इति तृतीयार्थे चतुर्थी । वेतसुनासुरेण सहितं तुग्रं हतवानसि । तथा च मन्त्रान्तरे श्रूयते 'अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम्' (RV.X. 49.4.) इति । हे इन्द्र ! त्वं गृणन्तं त्वां स्तुवन्तं तुजिमेतदाख्यं राजानं तूतोः । अवर्धयः ।

५. ०हत् P., D. अवावधीः Sy.

६. कर्षेण P. प्रकर्षेण पालयसि Sy.

७. राजानम् Sy.

८. दभीतिं P.

९. विचित्राभिः Sy.

१०. ऊतिभी रक्षाभिः Sy.

११. VM. ignores त्वम् । तत् । उक्थम् । इन्द्र ! बर्हणा । कः । प्र । यत् । शता । सहस्रा । शूर । दर्षि । गिरेः । दासम् । and शम्बरम् ॥ हे इन्द्र ! बर्हणा बर्हणः शत्रूणां हिंसकस्त्वमुक्थं प्रशस्यं तत्कर्म कः अकरोः । किं तत्कर्मेत्युच्यते । हे शूर ! वीरेन्द्र ! त्वं शता शतानि सहस्रा सहस्राणि च शम्बरस्यानुचरान् भटान् प्रदर्षि विदारितवानसि । तथा च निगमान्तरे 'अध्वर्यवो यः शतं शम्बरस्य' (RV.II. 14.6.) इति । तथा त्वं दासं यज्ञादिकर्मणामुपक्षपयितारं गिरेः पर्वतान्निर्गतं शम्बरमसुरमवहन् अवावधीः । तथापि श्रूयते 'यः शम्बरं पर्वतेषु क्षियन्तम्' (RV. II. 12. 11.) इति Sy.

१२. मोदमानः Sy.

१३. P. adds प्रीयते and D. adds प्रीतये after दभीतये ॥ एतन्नामकाय राजर्षये Sy.

१४. Omitted by P. श्रद्धापुरःसरमादरातिशयेनानुष्ठितैः कर्मभिः यच्छ्रद्धया युक्तं कर्म तत्सारवद्भवति । तथा च श्रूयते 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (Chā U.1.1.10.) Sy.

१५. ०ना P.

१६. एतदाख्यमसुरम् Sy.

१७ स्वा० P. अस्वापयः । अवधीरित्यर्थः Sy.

१८. एतदाख्यां कन्यां वा राज्यं वा Sy.

१९. पठिन० P. पठीन D. एतन्नामकाय Sy.

२०. ०च्छत P., D.

२१. षष्टिसङ्ख्याकानि Sy.

२२. भटानां सहस्राणि Sy.

सह[1]। हतवान्[2] सहायो वा तस्य भूत्वेति[3]।[4]

**अहं चन तत्सूरिभिरानश्यां तव ज्याय इन्द्र सुम्नमोजः।**
**त्वया यत्स्तवन्ते सधवीर वीरास्त्रिवरूथेन नहुषा शविष्ठ ॥ ७ ॥**

अहम्। अहम्[5]। अपि। तत्[6]। स्तोतृभिः पुत्रपौत्रैः सह[7]। प्राप्नुयाम्। तव[8]। प्रशस्यतरम्[9]। सुखम्। बलं च। त्वया। दृढेन सुखेन[10] दत्तम्। यत्। स्तुवन्ति। वीराः[11] मनुष्याः। वीरैः सहित! बलवत्तम[12][13]!

**वयं ते अस्यामिन्द्र द्युम्नहूतौ सखायः स्याम महिन प्रेष्ठाः।**
**प्रातर्दनिः क्षत्रश्रीरस्तु श्रेष्ठो घने वृत्राणां सनये धनानाम् ॥ ८ ॥**

वयम्। वयम्। तव[14] सम्बन्धिनि। अस्मिन्। अर्थाह्वाने[15]। सखायः[16]। स्याम[17]। पूज्य[18]! प्रियतमाः[19]। प्रतर्दनस्य पुत्रः[20]। क्षत्रश्रीर्नाम राजास्मदीयः[21]। अस्तु[22]। प्रशस्यतमः[23]। हनने[24]। शत्रूणाम्। धनानां[25] च। भजन इति[26]।[27]

---

१. युगपदेव Sy.
२. अवधीः Sy.
३. The words सहायो वा तस्य भूत्वा refer to सचा (सह)।
४. VM. ignores इन्द्र।
५. भरद्वाजः Sy.
६. सुम्नमोजः Sy.
७. मदीयैः स्तोतृभिः सह Sy.
८. त्वया दत्तम् Sy.
९. अतिशयेन प्रशस्यम् Sy.
१०. दृढसुखेन D. VM. seems to explain त्रिवरूथेन and नहुषा as दृढेन and सुखेन ॥ त्रिवरूथेन त्रीणि वरूथान्यावरकाणि भुवनानि यस्य तेन। नहुषा शत्रूणां बन्धकेन Sy.
११. स्तोतारः Sy.
१२. ०मः P. शविष्ठ! बलवत्तम! इन्द्र! Sy.
१३. VM. ignores इन्द्र!
१४. त्वदर्थम् Sy.
१५. आर्ताह्वा० P. आर्त्थ० D. धननिमित्ते स्तोत्रे Sy.
१६. ०य P. स्तोतारः Sy.
१७. भवेम Sy.
१८. हे पूजनीयेन्द्र! Sy.
१९. ०मा D. अतिशयेन प्रियाः Sy.
२०. प्रतर्दनो नाम राजा। तस्य पुत्रः Sy.
२१. एतन्नामको मम याज्यो राजा Sy.
२२. भवतु Sy.
२३. सर्वेषामुत्कृष्टः Sy.
२४. वधाय Sy.
२५. वसूनाम् Sy.
२६. सम्भजनाय च श्रेष्ठोऽस्त्विति सम्बन्धः Sy.
२७. VM. ignores इन्द्र।

VI.27.

किमस्य मदे किम्वस्य पीताविन्द्रः किमस्य सख्ये चकार ।
रणा वा ये निषदि किं ते अस्य पुरा विविद्रे किमु नूतनासः ॥ १ ॥

[1] [किमस्य ।][2][3] किम् । अस्य सोमस्य । मदे[4] । किम् । वा । अस्य । पीतौ[5] । किं वा । अस्य[6] । सख्ये[7] । इन्द्रः । चकार[8] । स्तोतारः । वा । ये । निषदने[9] प्रवर्तन्ते[10] । सोमस्य । ते[11] । इन्द्र[12] ! किम् । अलभन्त[13] । पुरा पुरातनाः[14] । किम् । वा सम्प्रति । नूतना[15] इति ।

सदस्य मदे सद्वस्य पीताविन्द्रः सदस्य सख्ये चकार ।
रणा वा ये निषदि सत्ते अस्य पुरा विविद्रे सदु नूतनासः ॥ २ ॥

प्रश्नस्योत्तरम्[16]—सदस्येति[17] । कल्याणमेव करोतीति[18] ।

---

१. 'किमस्य मद' इत्यष्टर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षम् । अनुक्रान्तञ्च 'किमस्यान्त्या चायमानस्याभ्यावर्तिनो दानस्तुतिः' (KSA.30. 27.p.22.) । भरद्वाज ऋषिः । त्रिष्टुप् छन्दः । अन्त्यायास्तु दानस्तुतिरूपत्वात् 'या तेनोच्यते' (KSA. 2.5.p.1.) इति न्यायेन दानमेव देवता । विनियोगो लैङ्गिकः Sy.

२. The *pratīka* is supplied by the Editor.

३. भरद्वाज ऋषिः फलविलम्बनासहिष्णुः सन् अनयेन्द्रमाक्षिपति Sy.

४. मदे सति Sy.

५. सोमस्य Sy.

६. पाने सति Sy.

७. सखित्वे Sy.

८. कृतवान् । पानात्पूर्वमिन्द्रः सोमेन सह वसतीत्यर्थः Sy.

९. नतिष P., D. गृहे Sy.

१०. सन्ति Sy.

११. त्वत्तः Sy.

१२. इन्द्रा D.

१३. लेभिरे Sy.

१४. पूर्वम् Sy.

१५. इदानीन्तनाः स्तोतारश्च किमु लेभिरे Sy.

१६. प्रतनस्यो॰ D. एवमाक्षिप्त इन्द्रस्तस्मा ऋषय ईप्सितं धनं प्रददौ । तदनन्तरमृषिरिन्द्रसकाशात् सम्पूर्णकामः सन् पुरा यान्युपालम्भप्रतिपादकानि वाक्यान्युवाचेदानीं तानि निराकरोति Sy.

१७. सशस्य P. सदृशस्य D.

१८. VM. explains only सत् । विविद्रे by कल्याणमेव करोतीति ।
इन्द्रोऽस्य सोमस्य मदे सत् शुभं कर्म चकार । अस्य सोमस्य पीतौ पाने सत् शुभं कर्म चकार । अस्य सख्ये सत् शुभं कर्म चकार । ये रणा वा स्तोतारश्च ते निषदि गृहे । यज्ञगृह इत्यर्थः । पुरा पूर्वं हे इन्द्र ! ते त्वत्तः सत् शुभं कर्म विविद्रे लेभिरे । नूतनास इदानीन्तनाः स्तोतारः सदु शुभमेव कर्म लेभिरे Sy.

नहि नु ते महिमनः समस्य न मघवन्मघवत्त्वस्य विद्म ।
न राधसोराधसो नूतनस्येन्द्र नकिर्ददृश इन्द्रियं ते ॥ ३ ॥

नहि । नहि । खलु[1] । सर्वम्[2] । महिमानं[3] वयम् । जानीमः । न च सर्वम् । धनवत्वम्[4] । न च । नूतनम्[5] । राधकस्य[6] । न कश्चित्[7] । अपश्यत्[8] । तव[9] । वलम्[10] ।[11]

एतत्त्यत्त इन्द्रियमचेति येनावधीर्वरशिखस्य शेषः ।
वज्रस्य यत्ते निहतस्य शुष्मात्स्वनाच्चिदिन्द्र परमो ददार ॥ ४ ॥

एतत्[12] । तम्[13] । एतत्[14] । बलमिन्द्र[15] ! लोके विख्यातमासीत्[16] । येन[17] । हतवान्[18] । वरशिखासुरस्य[19] ।

---

१. कलु D. नुशब्दः पूरणः Sy.
२. समस्तस्य Sy.
३. महिम्नः, महिमानम् Sy.
४. ०त्वम् is suggested for ०त्वम् ॥ तथा त्वदीयस्य धनिकत्वस्य च वयं न जानीमः Sy.
५. स्तुत्यस्य Sy.
६. राधसोराधसः त्वदीयं सर्वं धनं च न जानीमः । सर्वत्र द्वितीयार्थे षष्ठी Sy.
७. केनापि न Sy.　　८. दृश्यते Sy.
९. त्वदीयम् Sy.　　१०. सामर्थ्यम् Sy.
११. VM. ignores ते । मघवन् and इन्द्र ॥ ते त्वदीयस्य । हे मघवन् ! धनवन्निन्द्र ! Sy.
१२. अत्र बृहद्देवता
अभ्यावर्ती चायमानः प्रस्तोकश्चैव साञ्जयः ।
आजग्मतुर्भरद्वाजं जितौ वारशिखैर्युधि ।१२४।
अभिगम्योचतुस्तौ[a] तु प्रणम्याख्याय[b] नामनी ।
युधि वारशिखैर्ब्रह्मन्नावां विद्धि विनिर्जितौ ।१२५।
भवत्पुरोहितावावां क्षत्रबन्धून् जयेवहि ।
क्षत्रं तदेव[c] विज्ञेयं ब्रह्म यत् पाति सर्वतः[d] ।१२६।
ऋषिः स्तुतस्तथेत्युक्त्वा पुत्रं पायुमभाषत[e] ।
अधर्षणीयौ शत्रूणां कुरुष्वैतौ नृपाविति ।१२७।
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ।
जीमूतस्येति[f] सूक्तेन पृथक्त्वेनान्वमन्त्रयत् ।१२८।
सूक्तेनानेन[g] तुष्टाव सङ्ग्रामाङ्गान्यृषिस्तयोः ।
ततः प्रस्थापयामास पुनर्वारशिखान् प्रति ।१३६।
एतत्त्यत्ते[h] चतसृभी राज्ञोः[i] साहाय्यकाम्यया ।
भरद्वाजोऽपि[j] तुष्टाव प्रीतस्तेन पुरन्दरः ।१३७।
अभ्यावर्तिनमभ्येत्य हर्यूपीयानदीतटे[k] ।
सहितश्चायमानेन जघानैनान्[l] शचीपतिः ।१३८।
( BD. V. 124.–128., 136–138. )
तुष्ट इन्द्रोऽभ्यावर्तिना सहितोऽरीञ्जघानेति तदर्थं भरद्वाजस्त्रिष्टुभेन्द्रं तुष्टाव DDN.
१३. तत् is suggested for तम् ।
१४. इदम् Sy.　　१५. वीर्यम् Sy.
१६. अस्माभिरज्ञायि Sy.
१७. वीर्येण Sy., DDN.
१८. अहिंसीः Sy., DDN.
१९. वरशिखो नाम कश्चिदसुरस्तस्य Sy., DDN.

---

[a] तम् BD.　[b] प्रसाद्य BD.　[c] तदपि BD.　[d] शाश्वतम् BD.　[e] ऋषिस्तौ तु तथेत्युक्त्वा पायुं पुत्रमभाषत BD.　[f] RV.VI.75.　[g] तु स्तुत्वा BD.　[h] RV. VI. 27. 4., 7.　[i] राज्ञो ? BD.　[j] ०ऽभितुष्टाव BD.　[k] हर्यूपीया० BD.　[l] ०नैनाञ्छची० BD.

पुत्रम्[1] । वज्रस्य[2] । यस्मात् । त्वया । निहितस्य[3] तस्मिन्[4] । बलात् । शब्दात्[5] । च[6] । उत्कृष्टः[7] सोऽसुरः[8] । दीर्णवानिति[9][10] ।

वधीदिन्द्रो वरशिखस्य शेषोऽभ्यावर्तिने चायमानाय शिक्षन् ।
वृचीवतो यद्धरियूपीयायां हन्पूर्वे अर्धे भियसापरो दर्त् ॥ ५ ॥

वधीत्[11] । वधीत्[12] । इन्द्रः[13] । वरशिखस्य[14] । पुत्रम्[15] । अभ्यावर्तिनाम्ने[16] । चयमानपुत्राय[17] । वशं नयन्[18] । हितावतोऽसुरान्[19] । यदा । हरियूपीयाख्यायां नगर्याम्[20] । पूर्वे[21] । अर्धे युद्धार्थं निर्गतो वा । हतवानिन्द्रः[22] । तदानीमपरः[23] परार्धे स्थितः[24] वरशिखस्य पुत्रः[25] । दीर्ण[26] इति[27] ।

---

१. शेषः शेषांसि पुत्रान् Sy., DDN. शेष इत्यपत्यनाम Ngh.2.2.

२. त्वदीयवज्रस्य Sy.

३. हित० P. प्रेरितस्य Sy., DDN.

४. तस्मि बालत् P. शुष्ममिति बलनाम Ngh. 2.9.

५. ध्वनेः Sy. स्वन इति वाङ्नाम Ngh.1.11.

६. एव Sy.

७. वरशिखस्य पुत्राणां मध्ये बलाद्याधिक्येनोत्कृष्टः कश्चित्पुत्रः Sy.

८. सौसुरः P.

९. अदीर्यत Sy. वज्रशब्दं श्रुत्वा स्वयमेव दीर्णोऽभवदित्यर्थः DDN.

१०. VM. ignores ते and इन्द्र ॥ ते त्वदीयम् । हे इन्द्र ! Sy.

११. पूर्वोक्तमेवार्थमनया विवृणोति Sy. भरद्वाजस्त्रिष्टुभा इन्द्रं तुष्टाव DDN.

१२. अवधीत् । अहिंसीत् Sy. 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । कथमवधीदित्युच्यते DDN.

१३. अयमिन्द्रः Sy.

१४. असुरस्य Sy., DDN.

१५. पुत्रान् Sy. शेषोऽभ्याव०—'एकीभवति पादादिरकारः' (RPR. 2.34.) इत्येकीभावः DDN.

१६. एतन्नामकाय राज्ञे Sy., DDN.

१७. चयमानस्य राज्ञः पुत्राय Sy. चयमानस्य (राज्ञः) पुत्राय DDN.

१८. शन्नयत् P. ईप्सितानि वसूनि प्रयच्छन् Sy. ईप्सितार्थान् प्रयच्छन् DDN.

१९. हितवातो० P. वृचीवान् नाम वरशिखस्य कुलोत्पन्नः पूर्वजः, तद्गोत्रजान् वरशिखस्य पुत्रान् Sy., DDN.

२०. ०पीतायां० P. हरियूपीया नाम काचिन्नदी काचिन्नगरी वा तस्याम् Sy. नद्याम् । हरियूपीयायामित्यज्ञानां निवारणार्थम् 'ऊष्मान्तस्था०' इत्यनेन 'हरियोजनाय हरियूपीयायाम्' (RPR.14.40.) इति शौनकेन यत्नः कृतः DDN.

२१. प्राग्भागे स्थितान् Sy., DDN.

२२. ०त P., D.

२३. अवधीत् Sy.

२४. अपरभागे स्थितो वरशिखस्य श्रेष्ठः पुत्रः Sy., DDN.

२५. परः शि० P., D.

२६. दीर्णोऽभूत् Sy.

२७. VM. ignores भियसा ॥ भियसा भीत्या Sy.

**त्रिंशच्छ॑तं व॒र्मिण॑ इन्द्र सा॒कं य॒व्याव॑त्यां पुरुहूत श्रव॒स्या ।**
**वृ॒चीव॑न्तः॒ शर॑वे॒ पत्य॑माना॒ः पात्रा॑ भिन्दा॒ना न्य॒र्थान्या॑यन् ॥ ६ ॥**

त्रिंशच्छतम् [1]। त्रिंशच्छतम् [2]। कवचिनः [3]। इन्द्र ! साकम् [4]। यव्यावत्यां नगर्याम् [5]। पुरुहूत [6]! अन्नेच्छया [7]। वृचीवन्नामानः [8]। युद्धार्थम् [9]। निर्गच्छन्तः [10]। त्वया [11] भिद्यमानानि [12]। न्यर्थानि [13]। पतनानि [14]। प्राप्नुवन् [15] पराङ्मुखा आसन्नित्यर्थः [16]।

**यस्य॒ गावा॑वरु॒षा सू॑यव॒स्यू अ॒न्तरू॒ षु चर॑तो॒ रेरि॑हाणा ।**
**स सृञ्ज॑याय तु॒र्वशं॒ परा॑दाद्वृ॒चीव॑तो दैववा॒ताय॒ शिक्ष॑न् ॥ ७ ॥**

यस्य । यस्य [17]। अश्वौ । रोचमानौ [18]। शोभनं घासमिच्छन्तौ [19]। द्यावापृथिव्योरन्तः [20]। सुचरतः [21] घासम् [22]। रेरिहाणौ [23]। सः [24]। सृञ्जयाय राज्ञे [25]। तुर्वशं [26] नाम । परादात् [27]। वृचीवतः [28]। दैववाताय [29]। प्रयच्छन् [30]।

---

१. इदानीमुक्तमेवार्थं विवृणोति Sy.
२. ०शच्चतं P. ०शश्चतं D. त्रिंशदधिकशत-सङ्ख्याकाः Sy.
३. कवचभृतः Sy.
४. युगपदेव Sy.
५. पूर्वोक्तायां हरियूपीयायाम् Sy.
६. हे बहुभिराहूतेन्द्र ! Sy.
७. श्रवोऽन्नं यशो वा, तद्वाञ्छया युद्धे त्वां जित्वान्नं प्राप्नुयाम यशो वा प्राप्नुयामेति कामयमानाः Sy.
८. पृचीन्ना० P. वृचीन्ना० D. वरशिखस्य पुत्राः Sy.
९. हिंसायै त्वां हिंसितुमित्यर्थः Sy.
१०. निर्गच्छ P. ०न्त D. अभिपतन्तोऽभिगच्छन्तः Sy.
११. त्वयान्य P.
१२. ०माना P., D. भिन्दन्तः Sy.
१३. अर्थशून्यानि Sy.
१४. Omitted by P. पात्राणि यज्ञसाधनानि Sy.
१५. अगच्छन् । विनाशं प्रापुरित्यर्थः Sy.
१६. ०सीदित्य० P.
१७. इन्द्रस्य सम्बन्धिनौ Sy.
१८. अरुषारुषौ रोचमानौ Sy.
१९. शोभनतृणानीच्छन्तौ Sy.
२०. अन्तरः P., D. मध्येऽन्तरिक्षे Sy.
२१. उ सु इतीमौ पूरणौ Sy.
२२. गच्छतः Sy.
२३. रेतिहाणौ P., D. लेलिहानौ पुनः पुनर्घास-मास्वादयन्तौ । यद्वा गतिविशेषं कुर्वन्तौ Sy.
२४. इन्द्रः Sy.
२५. एतन्नामकाय राज्ञे Sy.
२६. तुर्वशं राजानम् Sy.
२७. प्रददौ Sy.
२८. वारशिखान् Sy.
२९. ०वते देवपाताय P., D. देववातवंशोत्पन्नाय Sy.
३०. प्रायच्छत् P. शिक्षन् वशीकुर्वन् । तेषां धनानि प्रयच्छन्निति वा Sy.
३१. VM. ignores उ ।

**द्व॒याँ अ॑ग्ने र॒थिनो॑ विंश॒तिं गा व॒धूम॑तो म॒घवा॒ मह्यं॑ स॒म्राट् ।**
**अ॒भ्या॒व॒र्ती चा॑यमा॒नो द॑दाति दू॒णाशे॒यं दक्षि॑णा पार्थ॒वाना॑म् ॥ ८ ॥**

द्वयान्[1] । रथवधूयुक्तत्वाद्[2], द्विविधाः[3] । विंशतिम्[4] । गाः[5] । धनवान्[6] प्राज्ञः[7] । मह्यम् । सम्राट्[8] । अभ्यावर्ती[9] । चायमानः[10] । अग्ने ! ददाति[11] । दुर्नशा[12] । नाशयितुमशक्या । इयम् । दक्षिणास्तु सर्वदा फलप्रदा । पृथुकुलजातानामित्यभ्यावर्तिनश्चायमानस्य[13] दानस्तुतिः ।

---

१. वारशिखहननानन्तरं यत्कृतं तदुच्यते । तत्र बृहद्देवता
एव[a] वारशिखाञ्जित्वा ततोऽभ्यावर्तिसाञ्जयौ ।
भरद्वाजाय गुरवे ददतुर्विविधं वसु ॥१३६॥
ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु ।
ऋचैकया द्वयाँ अग्ने सम्राट् ख्याति जगौ तदा[b] ॥१४१॥
भरद्वाजो दानदमभ्यावर्तिनं सम्राजं त्रिष्टुभा अग्नये प्रकथयति । किमस्यान्त्या चायमानस्याभ्यावर्त्तिनो दानस्तुतिरित्यनुक्रमणी । (KSA. 30.27. p.22.) DDN.

२. अधुना भरद्वाजः स्वस्मा अभ्यावर्तिना दत्तं धनजातमग्नये प्रकथयति Sy.

३. ०त्वा P. VM. does not explain रथिनः and वधूमतः but only affords the proof of द्वयान् ।
रथसहितान् स्त्रीयुक्तान् Sy. रथसहितान् स्त्रीसहितान् DDN.

४. मिथुनभूतान् Sy., DDN.

५. विंशतिसङ्ख्याकान् Sy., DDN.

६. पशून् Sy., DDN.

७. धनवान् प्रभूतदानो वा Sy., DDN.

८. राजसूययाजी Sy.
वाजपेययाजी 'अपरं वै राज्यं परं साम्राज्यम्' इति शातपथी श्रुतिः । सम्राडिति 'रेफोष्मणो०' (RPR.4.15.) इति परिपन्ने प्राप्ते 'सम्राट् शब्दः परिपन्नापवादः' (RPR.4.23.) इति न DDN.

९. ०र्ति D.
एतदाह्वयो राजा Sy.

१०. चयमानस्य पुत्रः Sy.
चयमानपुत्रः DDN.

११. प्रायच्छत् Sy.
प्रयच्छति DDN.

१२. दुशा P. केनापि नाशयितुमशक्या भवति Sy.
दूणाशेति 'इढचदूणाशदूळभ०' (RPR.5.55.) इति दीर्घणत्वे । 'दूणाशः, उक्थशासश्च०' (RPR.9.36,37.) इति णकारस्य दीर्घः DDN.

१३. ०जातमित्य० P., D. पृथोर्वंशजस्याभ्यावर्तिनो राज्ञः सम्बन्धिनीः । पूजार्थं बहुवचनम् Sy., DDN.

---

[a] तौ तु BD. [b] दत्तं सङ्कीर्तयन् स्वयम् BD.

VI.28.

**आ गावो॑ अग्मन्नु॒त भ॒द्रम॑क्र॒न्त्सीद॑न्तु गो॒ष्ठे र॒णय॑न्त्व॒स्मे ।
प्र॒जाव॑तीः पुरु॒रूपा॑ इ॒ह स्यु॒रिन्द्रा॑य पू॒र्वीरु॒षसो॒ दुहा॑नाः ॥ १ ॥**

[1] आ गावः ॥ गव्यसूक्तम् । द्वितीयैन्द्री[2] वान्त्यश्च[3] पादः[4] ॥ आगता अभ्यावर्तिनश्चायमानान्[5] मयि । गावः । अपि च । कल्याणम्[6] । अकुर्वन्[7] । सीदन्तु[8] च । अस्मद्गोष्ठे[9] । रमयन्तु[10] च । अस्मान्[11] । वत्सयुक्ताः[12] । श्वेतैः कृष्णैश्च वत्सैर्बहुरूपाः[13] । इह[14] । स्युः[15] । इन्द्रार्थम् । बह्वीः[16] । उषसः[17] । पयो दुहानाः[18] ।

**इन्द्रो॒ यज्व॑ने पृण॒ते च॑ शिक्ष॒त्युपेद्द॑दाति॒ न स्वं मु॑षायति ।
भूयो॑भूयो र॒यिमिद॑स्य व॒र्धय॒न्नभि॑न्ने खि॒ल्ये नि द॑धाति देव॒युम् ॥ २ ॥**

इन्द्रः । इन्द्रः । यज्वने[19] । दरिद्रेभ्यः प्रयच्छते[20] । च धनं[21] च[22] तस्मै । प्रयच्छति[23] । न कदाचित् । तस्य स्वम्[24] । मुष्णाति[25] । भूयो भूयः[26] । रयिम्[27] । एव । अस्य[28] । वर्धयन्[29] । शत्रुभिरभिन्ने[30] । अप्रतिहते[31] च स्थाने ।

---

१. 'आ गावः' इत्यष्टर्चं पञ्चमं सूक्तम् । अत्रेयमनुक्रमणिका—'आ गावो गव्यं द्वितीयैन्द्री वान्त्यश्च पादोऽन्त्यानुष्टुब्जागतस्तृचो द्वितीयादिः' (KSA.30.28.p.22.) इति । भरद्वाज ऋषिः । 'इन्द्रो यज्वने' इत्याद्यस्तृचो जागतः, 'उपेदम्' इत्यन्त्यानुष्टुप्, शिष्टाश्चत्वारस्त्रिष्टुभः । कृत्स्नस्य गौर्देवता द्वितीयायाः सूक्तान्त्यपादस्य च विकल्पेनेन्द्रो देवता । गवामुपस्थान एतत् सूक्तम् । सूत्रितञ्च—'आगावीयमेके' (AGS.2.10.7.) इति Sy.

२. ०न्द्रि P. D.

३. व्यान्तश्च P.

४. The passage द्वितीयै....पादः is a fragment of KSA.30.28.p.22.

५. अस्मदीयं गृहमागच्छन्तु Sy.

६. भजनीयं शुभम् Sy.

७. कुर्वन् P., D. कुर्वन्तु Sy.

८. उपविशन्तु Sy.

९. अस्मत् P. ०गेष्ठे D. तथास्मदीये गवां स्थाने Sy.

१०. रमन्ताम् Sy.

११. रमयन्तु च । अस्मान् is omitted by P. तदनन्तरमस्मासु Sy.

१२. ०क्ता P., D. प्रजावत्यः सन्ततिसहिताः Sy.

१३. नानावर्णा गावः Sy.

१४. अपि चास्मिन् गोष्ठे Sy.

१५. स्वः P. भवेयुः Sy.

१६. बह्वयः Sy.

१७. उषःकालान् प्रति Sy.

१८. ०नः P.

१९. यजनशीलाय Sy.

२०. स्तुतिभिः प्रीणयित्रे च स्तोत्रे Sy.

२१. अपेक्षितं धनम् Sy.

२२. व D.

२३. ददाति Sy.

२४. यज्वनः स्तोतुश्च स्वभूतं धनम् Sy.

२५. अपहरति Sy.

२६. भूयो भूयो भूयः P., D. पुनः पुनः Sy.

२७. धनमात्मना दत्तम् Sy.

२८. अपि च उभयविधस्य Sy.

२९. वृद्धिं प्रापयन् Sy.

३०. शत्रुभिरभेद्ये Sy.

३१. ०न्नेवृहते P.. ०न्नेपृहते D. खिलमप्रतिहतं स्थानम्, तदेव खिल्यम् । स्वार्थिको यत् । अन्यैर्गन्तुमशक्ये स्थले Sy.

स्थापयति[1] । देवकामम्[2] ।[3]

**न ता नंशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति ।**
**देवाँश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ॥ ३ ॥**

[4]न ताः । न । ताः[5] । नशन्ति[6] । न च । ता हिनस्ति[7] । तस्करः न चोरयति[8] । न[9] । तासाम्[10] । अमित्र-भवः[11] । व्यथिः[12] । आधर्षणं[13] करोति । देवान्[14] । च । आभिः[15] । यजते[16] । याश्च[17] दरिद्रेभ्यः । प्रयच्छति । दीर्घकालम्[18] । ताभिः[19] । सह । सचनं[20] करोति । गोपतिः[21] सर्वदा फलप्रदा भवन्त्यस्मा इति ।[22]

**न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप यन्ति ता अभि ।**
**उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरन्ति यज्वनः ॥ ४ ॥**

न ता अर्वा । कटिर्भेदनकर्मा[23] भिद्यमानरेणुः । शत्रूणामश्वः[24] । न[25] । ता[26] हर्तुम्[27] । प्राप्नोति[28] याभिर्देवान् यजते । नच । संस्कृतत्रम्[29] । उपाभिगच्छन्ति[30] संस्कारं त्राणं च नापेक्षन्ते । तस्य । यज्वनः[31] । मर्तस्य[32] ।

---

१. निक्षिपति । निवासयतीत्यर्थः Sy.
२. देवमिन्द्रमात्मन इच्छन्तं तं जनम् Sy.
३. VM. ignores उप । इत् and ददाति॥ न केवलं सकृदेव दानमपि तु सर्वदैवेत्याह, उपेद्ददाति उपेत्य सर्वदा ददात्येव Sy.
४. दैवीनां हविःषु 'न ता नशन्ति, न ता अर्वा' इति गोदेवताया याज्यापुरोऽनुवाक्ये' (ĀSS. 6.14.) । गोस्तोमेऽपि मरुत्वतीयनिष्केवल्ययोरेते सूक्तमुखीये । सूत्रितञ्च—'न ता अर्वा रेणुककाटो अश्नुते न ता नशन्ति न दभाति तस्करः' (ĀSS.9.5.) इति Sy.
५. गावः Sy.
६. नचन्ति P., D. अस्मत्सकाशात् (न) नश्यन्तु Sy.
७. अस्मदीया गा न हिंस्यात् Sy.
८. Omitted by P. चोरोऽपि Sy.
९. Omitted by P., D.
१०. इमा गाः Sy.
११. अमित्रस्य शत्रोः सम्बन्धि Sy.
१२. शस्त्रम् Sy.
१३. ०ण D. आक्रामतु Sy.
१४. इन्द्रादीनुद्दिश्य Sy.
१५. भिः D. गोभिः Sy.
१६. यजनं करोति Sy.
१७. गा इन्द्रार्थम् Sy.
१८. चिरकालम् Sy.
१९. तादृशीभिर्गोभिः सह Sy.
२०. सङ्गच्छताम् Sy.
२१. एवम्भूतानां गवां स्वामी यजमानः Sy.
२२. VM. ignores इत् ॥ इदेव Sy.
२३. अभिभे० P., D. रेणोः पार्थिवस्य रजस उद्भेदकः । कटिर्भेदनकर्मा Sy.
२४. युद्धार्थमागतोऽश्वः Sy.
२५. र P.
२६. गावः Sy.
२७. हर्त्तुं D.
२८. प्राप्नुयात् Sy.
२९. संस्कृत्वम् P. संस्कृत्वत्वम् D. विशसनादि-संस्कारम् Sy.
३०. अभिगच्छन्तु Sy.
३१. यागशीलस्य Sy.
३२. मनुष्यस्य Sy.

बहुभिः स्तोतव्यम्[1] । भयाभावम्[2] । प्रति[3] । गावः[4] । विचरन्ति[5] ।[6]

**गावो भगो गाव इन्द्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः ।**
**इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ ५ ॥**

**गावः** । गाव[7] एव । भगो[8] देवः । गाव[9] एव[10] । इन्द्रः । तादृशो भग इन्द्रश्च माम्[11] । आगच्छतु[12] । गावः । सोमस्य[13] क्रीतस्य । मुख्यस्य[14] । भक्षः[15] 'अत्र राजानमाहृत्य पयसौदनौ परिवेविषन्त्यक्रयात्'[16] इत्युक्तम् । इमाः[17] । याः[18] । गावो यज्ञस्य साधयित्र्यः । ता[19] एव । हे जनाः ! इन्द्रो भवति[20] । इच्छामि[21] । हृदयेन[22] । मनसा भूतम् । इन्द्रम्[23] ।[24]

**यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम् ।**
**भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥ ६ ॥**

**यूयम्** । यूयम् । गावः ! पीनं कुरुथ[25] । कृशम्[26] । अपि । अशोभनावयवम्[27] । अपि[28] । कुरुथ । शोभनावयवम्[29] । भद्रं[30] च । गृहम्[31] । कृणुथ[32] । हे भद्रवाचः[33] ! महत् ! वः[34] । अन्नम् । उच्यते[35] । सङ्घातेषु[36] क्षीरादिकम् ।

---

१. स्तोम्यं D. विस्तीर्णगमनम् Sy.
२. ०वः P., D. भयवर्जितं प्रदेशम् Sy.
३. उद्दिश्य Sy.
४. गा P.
५. विशेषेण गच्छन्तु Sy.
६. VM. explains ताः once only.
७. गवा P.
८. भगवो P. धनं भवन्तु Sy.
९. गाः Sy.
१०. इव P.
११. मह्यम् Sy.
१२. ०च्छ P., D. यच्छतु Sy.
१३. ०स्याक्री० D.
१४. मुखस्य P., D. हविषां श्रेष्ठस्य Sy.
१५. भक्षणं भवन्तु । अभिषुतस्य हि सोमस्य गव्येनाज्यादिना संस्क्रियमाणत्वात् Sy.
१६. ०वेपिषन्त्याक्र० D.
१७. एवम्भूताः Sy.
१८. यां P. गावः सन्ति Sy.
१९. स ता इत्यर्थः, ता एव गावः Sy.
२०. भवन्ति । दधिघृतादिरूपेणेन्द्रस्याप्यायनत्वात् Sy.
२१. कामये । साधनभूताभिर्गोभिरेवंभूतमिन्द्रं यष्टुमिच्छामीत्यर्थः Sy.
२२. श्रद्धायुक्तेन Sy.
२३. एवम्भूतमिन्द्रम् Sy.
२४. VM. ignores इत् and चित् ॥ इद् एव । चिदित्यप्यर्थे Sy.
२५. आप्यायनं कुरुथेत्यर्थः Sy.
२६. क्षीणम् Sy.
२७. शो० P. Omitted by D. अश्लीलम् Sy.
२८. Omitted by D.
२९. ०यव P., D. शोभनाङ्गम् Sy.
३०. कल्याणम् Sy.
३१. कृशम् D. अस्मदीयं गृहम् Sy.
३२. गोभिरुपेतं कुरुथ Sy.
३३. हे कल्याणध्वन्युपेताः ! गावः ! Sy.
३४. युष्माकम् Sy.
३५. सर्वैर्दीयत इत्यर्थः Sy.
३६. यागपरिषत्सु Sy.

प्र॒जाव॑तीः सू॒यव॑सं रि॒शन्तीः॑ शु॒द्धा अ॒पः सु॑प्रपा॒णे पिब॑न्तीः ।
मा वः॑ स्ते॒न ई॑शत॒ माघशं॑सः॒ परि॑ वो हे॒ती रु॒द्रस्य॑ वृ॒ज्याः ॥ ७ ॥

प्रजावतीः[1][2] । वत्सवतीः[3] । शोभनं घासम्[4] । भक्षयन्तीः[5] । शुद्धानि[6] । उदकानि । शोभने तीर्थे[7] । पिबन्तीः[8] । वः[9] । रुद्रस्य[10] । हेतिः[11] । परिवृणक्तु[12] । बुभुक्षापिपासाशनिरिति रुद्रस्य हेतयः तासां[13] मा[14] । ईशिष्टेति[14][15] ।

उपे॒दमु॑पपर्च॑नमा॒सु गोषूप॑ पृच्यताम् । उप॑ ऋष॒भस्य॒ रेत॒स्युपे॑न्द्र॒ तव॑ वी॒र्ये॑ ॥ ८ ॥

उपेदम् । उपपृच्यताम्[16] । इदम् । अन्नस्योपपर्चनं[17] पयः । गोषु[18] । आसु । तथा उपपृच्यताम्[19] । ऋषभस्य[20] । रेतसि ? पश्वावोऽप्यृषभस्य[21] तेः[22] । तथा उपपृच्यताम्[23] । इन्द्र ! तव[24] । वीर्यभूतासु[25] गोष्विति ।

व्याकरोत् त्रिंशमध्यायं माधवो नाम कश्चन ।
तीरमाश्रित्य निवसन् कावेर्या दक्षिणे[26] सुखम् ।

---

१. ०ती D.
२. हे गावः ! यूयम् Sy.
३. प्रजावत्यो वत्साभिर्युक्ता भवतेति शेषः Sy.
४. शोभनतृणम् Sy.
५. रिशन्त्यो भक्षणार्थं हिंसन्त्यो भवत Sy.
६. निर्मलाः Sy.
७. सुखेन पातव्ये तटाकादौ Sy.
८. तीर्थे पिबन्तीः तीर्थे पिबन्तीः P. पिबन्त्यश्च भवत Sy.
९. युष्मान् Sy.
१०. कालात्मकस्य परमेश्वरस्य Sy.
११. आयुधम् Sy.
१२. परिहरतु Sy.
१३. तास P. The passage बुभुक्षा...तासाम् refers to हेतिः, so it should immediately follow हेतिः ।
१४. ईश्वरो माभूत् Sy.
१५. VM. ignores मा । वः । स्तेनः and अघशंसः ॥ वो युष्मान् । स्तेनस्तस्करः । अघशंसः व्याघ्रादिः शत्रुर्मेशत Sy.
१६. ०पवृच्य० D. सम्पृच्यताम् Sy.
१७. ०पवर्चं० D. आप्यायनम् Sy.
१८. गोषु ह्याप्यायितासु सतीषु तत्सम्बन्धिक्षीरादिहविर्द्वारेणेन्द्र आप्यायितो भवतीत्यर्थः Sy.
१९. ०पवृच्य० D.
२०. गवां गर्भमादधानस्य वृषभस्य Sy.
२१. ०वो वृष० D.
२२. रेतः is suggested for तेः ।
२३. ०पवृच्य० D. उपेति पुनर्वचनं पादभेदानां पूरणार्थमिति Sy.
२४. त्वदीये Sy.
२५. वीर्ये निमित्ते Sy.
२६. ०णं P.

Ms. D. puts the figure ॥२८॥ here to indicate the end of the twenty-eighth hymn. No such number is given in P.

# ॥ अथ सप्तमोऽध्यायः ॥[1]

'इन्द्रं वो नरः सख्याय'[2] व्याचिख्यासति माधवः ।
मत्वर्थीयेषु वक्तव्यं पूरणेषु प्रदर्शयन् ॥१॥

मत्वर्थीयान्मत्वर्थीयो न तु लोके प्रदृश्यते[3] ।
प्रयुज्यते[4] स वेदे तु पादं पूरयितुं पुनः ॥२॥

'वाजेभिर्वाजिनीवती'[5] 'रक्षोहत्याय वज्रिवः'[6] ।
'मा यातुर्यातुमावताम्'[7] इति पादा निदर्शनम् ॥३॥

मत्वर्थीयो बहुव्रीहेर्नेष्यते शाब्दिकैरिह ।
'अर्यमा सुदानवः'[8] इति दृष्टो वेदेषु तादृशः ॥४॥

'दस्रा दंसिष्ठ'[9] इति पदे तथा 'रथ्या रथीतमा'[10] ।
दस्रा रथ्येति[11] तत्राहुः[12] पूरणे नेति माधवः ॥५॥

स्तुतिर्विरम्याभिधानादर्थाभेदेऽपि गम्यते ।
दर्शनीयाविमौ देवावित्युक्त्वा भाषते[13] पुनः ॥६॥

न दर्शनीयावपि तु दर्शनीयतमाविति ।
तथा न रथ्यावपि तु रथनेतृतमाविति ॥७॥

---

१. Supplied by the Editor.
२. RV.VI.29.1.
३. Omitted by D.
४. Omitted by P.
५. RV.I.3.10.
६. RV.VI.45.18.
७. ०र्यतुमा० P. RV.VIII.60.20.
८. RV.I.141.9.
९. RV.I.182.2.
१०. रथित० P. RV.I.182.2.
११. P. reads रथ्या रेयेति for दस्रा रथ्येति ।
१२. ०त्राह R.
१३. भाषिते P., D.

दूरप्रयुक्तोपसर्गस्मरणार्थं पुनः क्वचित् ।
उपसर्गाः प्रयुज्यन्ते न[1] ते केवलपूरणाः ॥८॥
'आ वामश्वासः शुचयः'[2] 'आ भारती भारतीभिः'[3] ।
पादे चतुर्थ आकारः प्रयुक्त उभयोरपि ॥९॥
'अभि त्वा गोतमा गिरा'[4] बहवः सन्ति तादृशाः ।
प्रागाख्यातात्[5] प्रयुज्यन्ते ततः प्रागपि केचन ॥१०॥
'त्वं नो अग्ने तव देव'[6] 'मरुतो मारुतस्य नः'[7] ।
एवंविधेषु मन्त्रेषु पूरणत्वं न विद्यते ॥११॥इति॥

## VI.29.

**इन्द्रं वो नरः सख्याय सेपुर्महो यन्तः सुमतये चकानाः ।**
**महो हि दाता वज्रहस्तो अस्ति महामु रण्वमवसे यजध्वम् ॥ १ ॥**

इन्द्रं वः[8] ॥ भरद्वाजः ॥ इन्द्रम्[9] । युष्माकम्[10] । ऋत्विजः[11] । सख्याय[12] । स्पृशेयुः[13] । महान्तम्[14] । गच्छन्तः[15] । इन्द्रस्य सुमतये[16] । कामयमानाः[17] । महतः[18] । हि[19] । दाता[20] । वज्रहस्तः[21] । भवति । महान्तम् । एव । रमणीयम् । रक्षणाय । यजध्वम्[22] ।

---

१. Omitted by P.
२. RV.I.181.2.
३. RV.III.4.8.
४. ०राः D. RV.I.78.1.
५. ०तान् D.
६. RV.I.31.12.
७. RV.VIII.20.23.
८. अथ सप्तमोऽध्याय आरभ्यते । षष्ठस्य मण्डलस्य तृतीयेऽनुवाके पञ्च सूक्तानि व्याकृतानि । 'इन्द्रं वः' इति षडृचं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च—'इन्द्रं षट्' (KSA.31.29.p.22.) इति । गतो विनियोगः Sy.
९. हे यजमानाः ! Sy.
१०. युष्माकं सम्बन्धिनः Sy.
११. नेतार ऋत्विजः Sy.
१२. सखिभावार्थम् Sy.
१३. ०शे P. परिचरन्ति स्पृशन्ति वा Sy.
१४. महान्ति स्तोत्राणि Sy.
१५. उपयन्तः प्राप्नुवन्तः । कुर्वन्त इत्यर्थः Sy.
१६. सुतमयेत P., D. सुमतिः शोभनानुग्रहात्मिका तदीया बुद्धिः । ताम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानसंज्ञा Sy.
१७. ०मंय० D. यद्वा महो महत्कर्म यन्तोऽनुतिष्ठन्तः सुमतये सुमतिं शोभनां स्तुतिं चकानाः शब्दयन्तः । चकाना इति कामयतेश्छान्दसं रूपम् । यद्वा 'कै गै शब्दे' इत्यस्माल्लिटः कानचि रूपम् Sy.
१८. महतो धनस्य Sy.
१९. यस्मात् Sy.
२०. ता P.
२१. वज्रपाणिरिन्द्रः Sy.
२२. तस्मात् हविर्भिः पूजयत Sy.

आ यस्मिन्हस्ते नर्या मिमिक्षुरा रथे हिरण्यये रथेष्ठाः ।
आ रश्मयो गभस्त्योः स्थूरयोराध्वन्नश्वासो वृषणो युजानाः ॥ २ ॥

आ यस्मिन् । अपि[1] । यस्मिन्निन्द्रे[2] । हस्ते । नृहिता अर्थाः । तिष्ठन्ति[4] । अपि[1] च यः[5] । हिरण्मये[6] । रथे तिष्ठति[7] । अपि[1] च यस्य । स्थूलयोः[8] । बाह्वोः[9] । अश्वग्रहा[10] भवन्ति । अपि[1] च । अध्वनि[11] । अश्वाः । पुमांसः[12] । युञ्जाना[13] भवन्ति ।

श्रिये ते पादा दुव आ मिमिक्षुर्धृष्णुर्वज्री शवसा दक्षिणावान् ।
वसानो अत्कं सुरभिं दृशे कं स्व१र्ण नृतविषिरो बभूथ ॥ ३ ॥

श्रिये[14] ते[15] । श्रयणाय[16] मनुष्याणाम् । तव[17] । पादानि[18] तेजांसि । मनुष्याणां परिचर्याम्[19] । कुर्वन्ति[20] प्रकाशं कुर्वन्ति गमनाय । धर्षिता[21] । बलेन[22] । वज्री[23] । दानवान्[24] । आच्छादयन् । रूपम्[25] । शोभनगन्धम्[26] । दर्शनाय[27] त्वाम् । आदित्यः[28] । इव । गमनशीलः[29] । भवसि । नेतः[30] ।[31]

---

१. VM. explains आ as अपि and अपि च ।

२. इन्द्रे कुत्र ? इति चेत्—तदीये बाहौ । यद्वा एतत्समानाधिकरणमिन्द्रस्य विशेषणम् । हस्ते हन्तर्यस्मिन्निन्द्र इत्यर्थः । यद्वा ईदृशे यस्मिन्निन्द्रे वर्तमानाः रायः आसिञ्चन्ति आपूरयन्ति स्तोतॄन् Sy. हस्तो हन्तेः । प्राशुर्हनने N. 1.7.

३. नृभ्यो हिता रायः Sy.

४. आसिच्यन्ते आपूर्यन्ते । मिमिक्षुः—व्यत्ययेन कर्मणि कर्तृप्रत्ययः Sy.

५. इन्द्रः Sy.

६. सुवर्णमये Sy.

७. ०न्ति D. VM. explains रथे and रथेस्थाः together as रथे तिष्ठन्ति ॥ रथे स्थाता तत्स्वभावः सन् रथे आतिष्ठति । यद्वा रथेष्ठा रथेऽवस्थिता रायो धनानि हिरण्मये रथे तिष्ठन् आसिञ्चति अभिवर्षति Sy.

८. विस्तृतयोः Sy.

९. गभस्तिरिति बाहुनाम Ngh. 2.4.

१०. अभीशव आयम्यन्ते Sy.

११. अध्वनि मार्गे आ मिमिक्षुः आसिञ्चन्ति आपूरयन्ति । आगच्छन्तीत्यर्थः । तमिन्द्रं स्तुम इति शेषः Sy. १२. सेक्तारो युवानः Sy.

१३. युजुञ्जाना P. जुयुञ्जाना D. रथे युज्यमानाः Sy. १४. ०य D.

१५. हे इन्द्र ! Sy.

१६. ऐश्वर्यार्थम् Sy.

१७. त्वदीययोः Sy.

१८. पदा० D. पादयोः Sy.

१९. परिचरणम् Sy.

२०. आसिञ्चन्ति, समर्पयन्ति । भरद्वाजः समर्पयति । व्यत्ययेन बहुवचनम् । यद्वा ते तव पादौ श्रिये श्रयितुं सेवितुम् आ मिमिक्षुः आसिञ्चन्ति अनुतिष्ठन्ति Sy.

२१. शत्रूणां धर्षकः Sy.

२२. यस्त्वं शवसा बलेन Sy.

२३. वज्रवान् Sy.

२४. दक्षिणा स्तोतृभ्यो दातव्यं धनं तद्वान् Sy.

२५. सततगमनशीलमात्मीयं रूपम् Sy.

२६. प्रशस्तम् Sy.

२७. सर्वेषां दर्शनार्थम् Sy.

२८. सूर्यः Sy.

२९. गन्तैषणीयो वा Sy.

३०. हे नेतः ! इन्द्र ! स त्वम् Sy.

३१. VM. ignores कम् ॥ कमिति पूरकः Sy.

स सोम॒ आमि॑श्लतमः सु॒तो भू॒द्यस्मि॒न्पुक्तिः॑ प॒च्यते॒ सन्ति॒ धा॒नाः ।
इन्द्रं॒ नरः॑ स्तु॒वन्तो॑ ब्रह्मका॒रा उ॒क्था शंस॑न्तो दे॒ववा॑ततमाः ॥ ४ ॥

**स सोमः** । सः[1] । सोमः[2] । आभिमुख्येनेन्द्रस्य मिश्रयिता[3] । सुतः[4] । अभवत्[5] । यस्मिन्[6] । पुरोडाशः[7] । पच्यते सवनीयः । सन्ति च[8] । धानाः[9] इन्द्रम् । नरः[10] । स्तुवन्तः[11] । स्तोत्रस्य कर्तारः[12] । उक्थानि च[13][14] । शंसन्तः[15] । देवैरतिशयेनाभिगम्यन्ते[16] स्तोत्रशस्त्रशुश्रूषुभिः ।

न ते॒ अन्तः॒ शव॑सो धाय्य॒स्य वि तु बा॑बधे॒ रोद॑सी महि॒त्वा ।
आ ता सू॒रिः पृ॑णति॒ तूतु॑जानो यू॒थेवा॒प्सु स॒मीज॑मान ऊ॒ती ॥ ५ ॥

**न ते अन्तः**[17][18] । न । तव । अस्य[19] । बलस्य । अन्तः[20] । केनचित्[21] क्रियते[22] । महत्त्वेन[23] तच्छ्वः[24] । द्यावापृथिवी[25] । विबाधते[26] । शीघ्रम्[27] । आप्रयच्छन्ति[28] । तानि धनानि[29] । त्वरमाणः[30] । गोयूथानिव गोवृषः[31] । अप्सु[32][33] । सङ्गच्छमानः[34] । रक्षणार्थम्[35][36] ।

---

१. ०म D.
२. यः सोमो वक्ष्यते स सोमः Sy.
३. आभिमुख्येन मिश्रतमः भूत् । इन्द्रेणात्यर्थं सङ्गच्छते Sy.
४. अभिषुतः सन् Sy.
५. ०तो भवन् P., D.
६. सोमेऽभिषुते सति Sy.
७. पुरोपाशः P. ०शं D. पक्तव्यः पुरोडाशादिः Sy.
८. हविरर्थं संस्कृता भवन्ति Sy.
९. ध P. धनाः D. भृष्टयवाः Sy.
१०. नेतारः Sy.
११. स्तोत्रैः स्तुवन्तः Sy.
१२. कर्ता नि P. ब्रह्मणोऽन्नस्य हविर्लक्षणस्य कर्तार ऋत्विजः Sy.
१३. उक्थानि शस्त्राणि Sy.
१४. Omitted by P.
१५. शंस्यन्तः P. उच्चारयन्तः Sy.
१६. देवानतिशयेनोपगता भवन्ति स सोम इन्द्रेण सम्मिश्रितोऽभूदित्यन्वयः Sy.
१७. ग P.
१८. हे इन्द्र ! Sy.
१९. उक्तगुणस्य Sy.
२०. अवसानम् Sy.
२१. के D.
२२. अत्र केवलोऽपि दधातिरवपूर्वार्थो द्रष्टव्यः । (न) अवाधायि । अस्माभिः (न) अज्ञायीत्यर्थः Sy.
२३. ०त्त्वे० is suggested for ०त्वे० ।
२४. यद्बलम् Sy.
२५. द्यावापृथिव्यौ Sy.
२६. यस्माद्बलाद् द्यावापृथिव्यौ बिभीत इत्यर्थः Sy.
२७. क्षिप्रम् Sy.
२८. आपूरयति Sy.
२९. तद्बलम् Sy.
३०. धनि P.
३१. त्वरितः सन् Sy.
३२. तत्र दृष्टान्तः । यथा गोपालोऽपः पाययन्नद्भिस्तर्पयति तद्वत् Sy.
३३. उदकेषु Sy.
३४. ऊत्या तर्पकेण हविषा Sy.
३५. सम्यग्यजन् Sy.
३६. VM. ignores सूरिः ॥ सूरिः स्तोता Sy.

एवेदिन्द्रः सुहवं ऋष्वो अस्तूती अनूती हिरिशिप्रः सत्वा ।
एवा हि जातो असमात्योजाः पुरू च वृत्रा हनति नि दस्यून् ॥ ६ ॥

एवेत्[1] । एवम् । एव[2] । इन्द्रः[3] । स्वाह्वानः[4] । दर्शनीयः[5] । भवतु । रक्षणायास्माकम्[6] । अरक्षणाय[7] च शत्रूणाम् । हरणशीलहनुः[8] । सदनशीलः[9] । एवम् । हि । जात इन्द्रः[10] । असमात्योजाः[11] समातिबलौ यौ[12] भवतः स समात्योजा अतादृश आसीत् । पुरूणि[13] । च । वृत्राणि[14] । हन्ति[15] । नि[16] च हन्ति । असुरानिति[17] ।

## VI.30.

भूय इद्वावृधे वीर्याय एको अजुर्यो दयते वसूनि ।
प्र रिरिचे दिव इन्द्रः पृथिव्या अर्धमिदस्य प्रति रोदसी उभे ॥ १ ॥

भूयः[18] । भूयः[19] । एव[20] । वर्धते[21] । वीर्यकरणाय[22] । स्वयमेव[23] । जरयितुमशक्यः[24] । प्रयच्छति[25] । धनानि । सोऽयमिन्द्रः । पृथिव्याः[26] । दिवश्च[27] । अतिरिक्त आसीत्[28] । अर्धम् । एव । प्रति[29] । अस्येन्द्रस्य[30] । द्यावापृथिवी भवतः[31] ।

---

१. उक्तेन प्रकारेण Sy.
२. इदिति पूरणः Sy.
३. ०न्द्र P., D.
४. सुखेनाह्वातव्यः Sy.
५. महान् Sy.
६. आगमनेन Sy.
७. र० P., D. अनागमनेन वा Sy.
८. शिप्रे हनू नासिके वा । हरितवर्णे शिप्रे यस्य तादृश इन्द्रः Sy.
९. गमयिता भवति धनानाम् । स्वयमागतोऽनागतोऽपि स्तोतृभ्यो धनं प्रयच्छतीत्यर्थः Sy.
१०. प्रादुर्भूतोऽयमिन्द्रः Sy.
११. ०न्द्रे समान्त्योजाः P. ०न्द्रे स० D. असमात्यसमानमनुपममुत्कृष्टतरमोजो बलं यस्य तादृशः सन् Sy.
१२. य य P. य D.
१३. बहूनि Sy.
१४. आवरकाणि रक्षःप्रभृतीनि Sy.
१५. हिनस्तु Sy.
१६. न P., D. निहन्तु Sy.
१७. उपक्षपयितृन् शत्रूंश्च Sy.
१८. 'भूय इत्' इति पञ्चर्चं सप्तमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'भूयः पञ्च' (KSA. 31.30.p.22.) इत्यनुक्रान्तम् । अग्निष्टोमे माध्यन्दिनसवनेऽच्छावाकशस्त्र एतत्सूक्तं शंसनीयम् । सूत्रितञ्च—'उदिन्न्वस्य रिच्यते भूय इत्' (ĀSS. 5.16.) इति । महाव्रतेऽपि निष्केवल्य एतत्सूक्तम् । तथैव पञ्चमारण्यके सूत्रितम्—'भूय इद्वावृधे वीर्याय नृणामु त्वा' (AĀ.5.1.6.) इति Sy.
१९. अयमिन्द्रः Sy.
२०. बहुतरम् Sy.
२१. प्रवृद्धोऽभूत् Sy.
२२. वीरकर्माणि वृत्रवधादीनि कर्तुम् Sy.
२३. मुख्यः Sy.
२४. जायि० P., D.
२५. स्तोतृभ्यो ददाति Sy.
२६. भूमेश्च Sy.
२७. द्युलोकात् Sy.
२८. अतिरिच्यते Sy.
२९. वृति P., D.
३०. अस्येन्द्रस्यार्धो भागो द्यावापृथिव्योः प्रतिनिधिर्भवतीत्यर्थः Sy.
३१. VM. ignores उभे ।

अधा मन्ये बृहदसुर्यमस्य यानि दाधार नकिरा मिनाति ।
दिवेदिवे सूर्यो दर्शतो भूद्वि सद्मान्युर्विया सुक्रतुर्धात् ॥ २ ॥

अध । अतः[1] । जानामि[2] । बृहत्[3] । इन्द्रस्य । बलमिति[4] । यान्यसौ[5] । धारयति । न तानि कश्चित् । हिनस्ति व्रतानि । तत्रैतदेकं व्रतम्[6], अन्वहम्[7] । दर्शनीयः । सूर्यः[8] । भवति । तथा सुकर्मेन्द्रः[9] । सद्मानि[10] । उरूणि[11] पृथिव्यादीनि । विधारयतीति[12] ।

अद्या चिन्नू चित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र ।
नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि ॥ ३ ॥

अद्या चित्[13] । अद्य[14] । पुरा[15] । च[16] । तत्रैव[17] । वेगः[18] । नदीनाम्[19] । यत्र[20] । आभ्यः[21] । मार्गम्[22] । वज्रेणारदः[23] ।

---

१. अधुना Sy.

२. स्तौमि । मन्यतिः स्तुतिकर्मा Sy.

३. महत् Sy.

४. असुरहननकुशलं बलम् Sy.

५. स चेन्द्रो यानि कर्माणि Sy.

६. कानि पुनस्तानि ? आवरकस्यासुरस्य वधेन सूर्यं प्रकाशितवानित्येकं कर्म Sy.

७. प्रतिदिनम् Sy.

८. वृत्रेणावृतः सूर्यः Sy.

९. ०न्द्र P. ०कर्म्मेन्द्र० D. शोभनकर्मा स इन्द्रः Sy.

१०. सत्मानि P., D.
भुवनानि Sy.

११. उतूणि P.
विस्तीर्णानि Sy.

१२. व्यधात् । अकार्षीत् । इदमपरं कर्म । एतदादीनि बहूनि कर्माणि कृतवानित्यर्थः Sy.

१३. भरद्वाजस्येदमार्षम् Dur.
भरद्वाजस्य SKN.

१४. हे इन्द्र ! अद्यापि Sy. अद्या, इति सांहितिकं दीर्घत्वम् SKN.

१५. नू पुरा Sy.

१६. अपि Sy., Dur.

१७. तदेव SKN.

१८. कर्म वर्तते Sy. कर्म प्रवर्तते Dur. कर्म SKN.

१९. नदीनां सम्बन्धि Sy., Dur.

२०. यद् आभ्यः व्यत्ययेनैते चतुर्थीद्वितीयार्थयोर्द्वितीयाचतुर्थ्यौ । यस्मै इमाः SKN.

२१. नदीभ्यः Sy., Dur. यदर्थमेता नदीरित्यर्थः SKN.

२२. अत्रापि चतुर्थ्यर्थ एव द्वितीया । यस्मा इत्यनेन सामानाधिकरण्यम् । यस्मै गातवे सर्वत्र प्राणिनामुपकारार्थमुदकपर्णानामासां गमनायेत्यर्थः SKN.

२३. प्रवहणार्थं व्यलिख इति यत् कर्म तत्सर्वदानुपक्षीणं सद्वर्तत इत्यर्थः Sy. प्रवहणार्थं व्यलिख इति यत् कर्म तत्सर्वमनुपक्षीणं वर्तत इत्यर्थः Dur. 'रद विलेखने' । खातवान् वृष्ट्युदकद्वारेणाखनस्त्वम् SKN.

इन्द्र ! तथा गिलोच्चयाश्च[1] । आत्मनैव स्वस्थाने सीदन्तः[2] । निषीदन्ति[3] । त्वया । दृढा भवन्ति[4] । सुकर्मन्[5] ! लोका[6]ः[7] ।

**सत्यमित्तन्न त्वावाँ अन्यो अस्तीन्द्र देवो न मर्त्यो ज्यायान् ।**
**अहन्नहिं परिशयानमर्णोऽवासृजो अपो अच्छा समुद्रम् ॥ ४ ॥**

सत्यमित्[8][9] । सत्यम्[10] । इत्[11] । तत्[12] । न । त्वत्सदृशः[13] । इन्द्र ! अन्यः कश्चित् । अस्ति । देवः । मर्त्यो[14]

१. अपि च त्वदाज्ञया गिरयः Sy.
अपि च त्वदाज्ञया पर्वता गिरयः Dur.
मेघाः SKN.

२. अद्यादनीयमन्नम् । तदर्थं सीदन्तः पुरुषा इव । यथा ते भोजनार्थं नैश्चल्येनासते तथेत्यर्थः Sy.
अद्यमदनीयमन्नं तदर्थं सीदन्तः पुरुषा इव । यथा ते भोजनार्थं नैश्चल्येनासत इत्यर्थः Dur.
अद्यानामर्थाय निषण्णा औदरिका आत्मम्भरयोऽद्यसदस्त इव SKN.

३. निषण्णाः । उत्पतनं परित्यज्य क्वचिदेव स्थाने नैश्चल्येनोपविष्टा बभूवुः Sy. निषण्णाः । उत्पन्नं ? (उत्पतनं) परित्यज्य क्वचिदेव स्थाने नैश्चल्येनोपविष्टा बभूवुः Dur. निशब्दः सेदुरित्यनेन सम्बन्धयितव्यः ।. . . .त्वया हन्यमाना निषीदन्ति । यथा भोजनप्रधाना दैवपित्र्यकर्मवर्जिता अनन्याः पुरुषा नरकान्नरकं पतन्तोऽधो गच्छन्ति, तद्वत् त्वया हन्यमाना मेघा इत्यर्थः SKN.

४. दृंहितानि स्थिरीकृता आसन् Sy. अतः कारणात्. . . .दृढानि दृढीकृतानीत्यर्थः Dur.
सुस्थितानि SKN.

५. अतः कारणात् हे शोभनकर्मन्निन्द्र ! Sy.
शोभनकर्मन् ! Dur. हे सुकर्मन् ! सुप्रज्ञ ! वा SKN.

६. सर्वे लोकाः Sy., Dur.
लोकाः, अथो लोका अपि त्वामाश्रिता इत्यर्थः SKN.

७. VM. ignores न and explains चित् once only.
अद्य च पुरा च तदेव कर्म नदीनां वर्तते। कतमत् ? यदुद्दिश्य वहनं कर्म, कथं नाम ? अस्य लोकस्योपकारायाजस्रमेता वहेयुरिति । गातुं गमनमार्गमाभ्यो नदीभ्योऽर्थाय त्वमरदः, अखनस्त्वम् । किम् ? गमनम्, गच्छत्यनेनेति गमनम् । हे इन्द्र ! तदेव कर्म, अद्यापि वर्तते तासां नदीनां यथा व्यादिष्टमेव त्वया । ताभिरद्यापि तदनुष्ठीयत इत्यभिप्रायः ।. . . .एवं तावदयं त्वयैव नद्यधीनेनोपकारेणानुगृह्यते लोकः ।. . . .य एते पर्वताः पर्ववन्तो मेघा अद्मसदो निष्पादयितव्यमन्नमस्माभिरित्येतमर्थमुद्दिश्य, अन्तरिक्षलोके सीदन्ति, अव तिष्ठन्ते गच्छन्ति वा तेऽपि युष्मद्वीर्योपमृदिता एवोदकभूता नीचैर्भूम्यामन्ननिष्पत्त्यर्थं सेदुः सीदन्तीत्यर्थः । तदेवं कृत्वा किं बहुना, सर्वथाप्युदकप्रदानद्वारेण त्वयैवैतानि हे सुकर्मन् ! दृळ्हानि दृढीकृतानि रजांसि लोका इत्यर्थः । त्वं चेदेषामेवमन्नमुदकं च न व्यधास्यः सर्व एवैते लोका नाभविष्यन्नित्यभिप्रायः । इहाद्यैतस्य सन्निधौ वर्तमानो नूचिदित्येष पुराणाभिधायी, इत्युपपद्यते Dur.
नू चिदिति निपातः । पुराणनवयोः नू चेति च ; 'अद्या चिन्नू चित्तदपो नदीनाम्' । अद्य च पुरा तदेव-कर्म नदीनाम् । N.4.17., SKN. II.243.

८. ०मिव P., D.

९. हे इन्द्र ! Sy.

१०. सम् P.

११. एव । नानृतम् Sy.

१२. वक्ष्यमाणम् Sy.

१३. अन्यो देवः Sy.

१४. त्वत्सदृशोऽन्यो मनुष्योऽपि नैव विद्यते Sy.

वा। न[1] च। ज्यायानिति[2]। हतवानसि[3]। अहिम्[4]। उदकम्। परिवृत्य शयानम्। हत्वा च समुद्रम्[5]। प्रति[6]। अवासृजः[7]। अपः[8]।

त्वम॒पो वि दुरो॒ विषू॑चीरिन्द्र॑ दृ॒ळ्हम॑रुजः॒ पर्व॑तस्य।
राजा॑भवो॒ जग॑तश्चर्षणी॒नां सा॒कं सूर्यं॑ ज॒नय॒न्द्यामु॒षास॑म् ॥ ५ ॥

त्वमपः। त्वम्। उदकानि[9]। मेघस्य[10]। द्वाराणि[11]। व्यरुजः[12]। विष्वगञ्चनानि[13]। इन्द्र ! दृढमपां निर्गमनद्वारं च[14]। राजा[15]। अभवः[16]। जगतः[17]। मनुष्याणाम्[18]। सूर्यम्। दिवम्[19]। उषसं च[20]। सह[21]। जनयन्[22]।

VI.31.

अभू॒रेको॑ रयिपते रयी॒णामा हस्त॑योरधिथा इन्द्र कृ॒ष्टीः।
वि तो॒के अ॒प्सु तन॑ये च॒ सूरेऽवो॑चन्त चर्ष॒णयो॒ विवा॑चः ॥ १ ॥

अभूः[23] ॥ सुहोत्रो भरद्वाजः ॥ त्वमेवैकः[24]। धनानामीश्वरः[25]। अभवः[26]। तथा तव हस्तयोः[27] समीपे।

१. न खल्वस्ति। इति यद् गीयते तत् सत्यमेव Sy.
२. ज्यानिति P. जानिति D. अधिकोऽपि देवो मनुष्यो वा Sy.
३. अवधीः Sy.
४. मेघम् Sy.
५. अन्तरिक्षं जलधिं वा Sy.
६. आभिमुख्येन Sy.
७. अवाङ्मुखतया विसृष्टवानसीत्यर्थः Sy.
८. उदकानि Sy.
९. अपः Sy.
१०. पर्ववतो मेघस्य Sy.
११. वृत्रेणावृताः Sy.
१२. व्यरु D. अभाङ्क्षीः Sy.
१३. विविधमञ्चन्त्यो यथा सर्वतः प्रसृता भवन्ति तथा व्यसृजः Sy.
१४. बन्धकप्रदेशम् Sy.
१५. अधिपतिः Sy.
१६. भवसि Sy.
१७. अपि च जगतः सम्बन्धिनीनाम् Sy.
१८. प्रजानाम् Sy.
१९. द्युलोकम् Sy.
२०. तमसा प्रावृतमेतत्त्रितयम् Sy.
२१. युगपदेव Sy.
२२. यत् P.D. प्रादुर्भावयन् प्रकाशयन्नित्यर्थः Sy.
२३. 'अभूरेकः' इति पञ्चर्चमष्टमं सूक्तं भरद्वाजस्य सुहोत्रस्यार्षम्। उपान्त्या शक्वरी शिष्टाश्च-तस्रस्त्रिष्टुभः। इन्द्रो देवता। अनुक्रम्यते च—'अभूरेकः सुहोत्रस्तु चतुर्थी शक्वरी' (KSA. 31.31.p.22.)इति। महाव्रतस्य निष्केवल्य इदमादीन्यष्ट सूक्तानि शंसनीयानि। तथा पञ्चमारण्यकम्—'अभूरेको रयिपते रयीणामित्यष्टौ सूक्तानि' (AĀ. 5.2.2.) इति। पृष्ठ्यस्य षष्ठेऽहनि निष्केवल्य इदं सूक्तं निविद्धानम्। सूत्रितञ्च—'एन्द्र याह्युप नः प्र घा न्वस्याभूरेक इति निष्केवल्यम्' (ĀSS 8.1.) इति। विश्वजिति माध्यन्दिनेऽच्छावाकशस्त्रे सामसूक्ताख्यमेतच्छंसनीयम्। सूत्रितञ्च—'अभूरेको रयिपते रयीणामिति सामसूक्तानि' (ĀSS. 8.7.) इति Sy.
२४. प्रधानभूतस्त्वम् Sy.
२५. स्वामी Sy.
२६. भवसि। यद्वा रयीणां रयिपते ! इति सम्बन्धः। एको रयिशब्दोऽनुवादो यथा 'गवामसि गोपतिरेक इन्द्रः' (RV. VII.98.6.) इति। तदानीमेको मुख्यस्त्वं भवसीति योजनीयम् Sy.
२७. त्वम्, आत्मीययोर्बाह्वोः Sy.

प्रजाः[1] । करोषि । धनकामाः[2] । त्वां तनयादिनिमित्तम्[3] । विविक्षम् । आह्वयन्ते[4] । सूरः[5] सूर्यः[6] ।

**त्वद्भियेन्द्र पार्थिवानि विश्वाच्युता चिच्च्यावयन्ते रजांसि ।**
**द्यावाक्षामा पर्वतासो वनानि विश्वं दृळहं भयते अज्मन्ना ते ॥ २ ॥**

**त्वद् भिया**[7] । त्वत्तः । भयेन । अच्युतानि[8] । अपि । पार्थिवानि[9] । रजांसि लोकाः[10] । स्वस्थानात् च्यवन्ते[11] । द्यावापृथिवी[12] । शिलोच्चयाः[13] । वनानि[14] । विश्वं[15] च । दृढम्[16] । तव । गमने[17] । विभेति[18][19] ।

**त्वं कुत्सेनाभि शुष्णमिन्द्राशुषं युध्य कुयवं गविष्टौ ।**
**दश प्रपित्वे अध सूर्यस्य मुषायश्चक्रमविवे रपांसि ॥ ३ ॥**

**त्वं कुत्सेन** । त्वम् । कुत्सेन सह । अभ्ययोधीः[20] । शोषयितुमशक्यम्[21] । शुष्णमसुरम्[22] । इन्द्र ! कुयवं चासुरम्[23] । गवामन्वेषणे[24] । दश[25] चासुरान् तत्सहायान् । प्रातःकाले[26] । सूर्यस्य । चक्रम्[27] ।

---

१. आधत्से । सर्वं जगत्तवाज्ञायां वर्तत इत्यर्थः Sy.

२. VM. seems to explain **चर्षणयः** as **धनकामाः** ॥ **चर्षणयो मनुष्याः** Sy.

३. **आदि** refers to **तोके** and **अप्सु** ॥ **तोके पुत्रे । अप्सूदकेषु तनये पौत्रेषु चैतेषु निमित्तभूतेषु सत्सु** Sy.

४. **आह्वयन्ते** seems to be the explanation of **अवोचन्त** ॥ **ब्रुवन्ति** Sy.

५. VM. seems to take **सूरे** as **सूरः** । Sy. construes **सूरे** with **तनये** and explains it as **शत्रूणां प्रेरके** ।

६. VM. ignores **रयिपते** । **इन्द्र** । **च** and **विवाचः** ॥ **हे रयिपते ! हे इन्द्र ! विवाचः विशिष्टाः स्तुतीः** Sy.

७. **भीत्वा** P.

८. **च्यावयितुमशक्यानि** Sy.

९. **'पृथिव्यन्तरिक्षनाम'** (Ngh. 1.3.) **तत्र भवानि** Sy.

१०. **०का** D. **उदकानि** Sy. **रजो रजतेः । ज्योती रज उच्यते । उदकं रज उच्यते । 'लोका रजांस्युच्यन्ते । असृगहनी रजसी उच्येते** N.4.19.

११. **मेघाः प्रच्यावयन्ति । वर्षन्तीत्यर्थः** Sy.

१२. **द्यावापृथिव्यौ** Sy.

१३. **गिरयः** Sy.

१४. **वृक्षाश्च भयं प्राप्नुवन्ति** Sy.

१५. **वश्वं** P. **वश्वः** D. **किम्बहुना ? सर्वम्** Sy.

१६. **स्थिरं प्राणिजातम्** Sy.

१७. **आगमने सति** Sy.

१८. **वि०** P.

१९. VM. ignores **इन्द्र । विश्वा** and **आ** ॥ **हे इन्द्र ! विश्वानि व्यापकानि** Sy.

२०. **अभ्ययुध्यः । कुत्सस्य साहाय्यार्थं तेनासुरेण सह युद्धं कृतवानसीत्यर्थः** Sy.

२१. **अशुषं शोषयितुमशक्यं प्रबलम्** Sy.

२२. **शुष्णासु०** P. **शुष्णं सर्वस्य शोषकमेतत्संज्ञमसुरम्** Sy.

२३. **एतत्संज्ञमसुरम्** Sy.

२४. **गावो बाणा इष्यन्ति गच्छन्तीति गविष्टिः सङ्ग्रामः । तस्मिन्** Sy.

२५. P. adds **भवो** before **दश** ॥ **अदशः हिंसितवानसि । 'दंश दशने' इत्येतस्माच्छान्दसे लोटि रूपम्** Sy.

२६. **प्रपतने युद्धे** Sy.

२७. **रथावयवभूतम्** Sy.

अमुष्णाः[1] । नेन चक्रेण तान्[2] दश[2] । अविवेः[3], अपागमयः[4] । रपःशब्दोऽसुरवचनः[5][6][7] ।

**त्वं शतान्यव शम्बरस्य पुरो जघन्थाप्रतीनि दस्योः ।**
**अशिक्षो यत्र शच्या शचीवो दिवोदासाय सुन्वते सुतक्रे भरद्वाजाय गृणते वसूनि ॥ ४ ॥**

त्वं शतानि[8] । त्वम् । शम्बरासुरस्य[9] । शतानि[10] । पुरः[11] । हतवानसि[12] । शत्रुभिरप्रतिगतानि[13] । उपक्षपयितुः[14] । प्रायच्छः[15] । यत्र[16] । प्रज्ञावन्[17] ! प्रज्ञया । दिवोदासाय । सुन्वते[18] । हे सुतक्रे[19] ! सुतमिन्द्रः[20] फलप्रदानेन क्रीणाति । भरद्वाजकुलजाय[21] । स्तुवते । धनानि[22] । तदानीमवजघन्थेति[23] ।

**स सत्यसत्वन्महते रणाय रथमा तिष्ठ तुविनृम्ण भीमम् ।**
**याहि प्रपथिन्नवसोप मद्रिक्प्र च श्रुत श्रावय चर्षणिभ्यः ॥ ५ ॥**

स सत्यसत्वन्[24] । सः[25] । सत्यबल[26] ! महते । सङ्ग्रामाय[27] । रथम्[28] । आतिष्ठ । बहुबल[29] ! भीमम्[30] ।

---

१. अमुष्णाः । तदाप्रभृति सूर्यस्य रथ एकचक्रोऽभूत् । तथा चाम्नातम् । 'सप्त युञ्जन्ति रथमेकचक्रम्' (RV.I.164.2.) इति । एतशाख्यस्य ऋषेः सूर्येण सह युद्धे तत्साहाय्यार्थमागत इन्द्रः सूर्यस्य चक्रमपहृतवानित्याख्यातम् । 'सूरश्चक्रं प्र बृहज्जात ओजसा' (RV.I.130.9.) इति निगमान्तरम् Sy.

२. दर्श P. तान् दश refers to असुरान् । It seems to be the explanation of रपांसि ॥ पापकारीणि रक्षःप्रभृतीनि Sy.

३. अपिवेः P. अस्माल्लोकादगमयः । अवधीरित्यर्थः Sy.

४. ०मया D.

५. रवश० P. ०पश० D.

६. The passage रपःशब्दोऽसुरवचनः should immediately follow तान् दश ।

७. VM. ignores अध ॥ अपि च Sy.

८. हे इन्द्र ! Sy.

९. एतत्संज्ञस्य Sy.

१०. शतसङ्ख्यानि Sy.

११. पुरीः Sy.

१२. अवाहन् Sy.

१३. अप्रतीनि—लिङ्गव्यत्ययः । केनाप्यप्रतिगताः Sy.

१४. ०यितः P. ०यितं D. उपक्षपयितुरसुरस्य Sy.

१५. प्रय० P. धनानि प्रादाः Sy.

१६. यस्मिन् काले Sy.

१७. ०वान् P., D.
हे प्रज्ञावन् ! Sy.

१८. सोमाभिषवं कुर्वते Sy.

१९. हे सुतक्रे ! अभिषुतेन सोमेन क्रीतेन्द्र ! Sy.

२०. तमि० P.

२१. ०कुलाय P., D.

२२. धनानि प्रादाः Sy.

२३. ०घंन्थे० D. तस्मिन् काले ; शाम्बरीः पुरोऽवजघन्थेत्यन्वयः Sy.

२४. ०त्वत् P.

२५. Omitted by P. स त्वम् Sy.

२६. हे सत्यसत्वन् ! सत्याः सत्वानो भटा यस्य स तथोक्तः Sy.

२७. सङ्ग्रामाय तदर्थम् Sy.

२८. बलम् D. आत्मीयं रथम् Sy.

२९. हे तुविनृम्ण ! तुवि बहुलं नृम्णं धनं यस्य स तथोक्तः । हे तादृशेन्द्र ! Sy.

३०. भयङ्करम् Sy.

उपयाहि[1] । प्रशस्तमार्ग[2] ! रक्षणार्थम्[3] । मदभिमुखम्[4] । प्रत्यापय[5] चास्मान् । मनुष्येभ्यः[6] । हे विश्रुत !

## VI.32.

**अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।**
**विरप्शिने वज्रिणे शंतमानि वचांस्यासा स्थविराय तक्षम् ॥ १ ॥**

अपूर्व्या[7] । नूतनानि[8] । बहुतमानि । अस्मै[9] । महते । वीराय[10] । वृद्धाय[11] । क्षिप्राय[12] । स्तुतिमते[13] । वज्रिणे[14] । सुखतमानि[15] । वचांसि[16] । आस्येन । करोमि[17] । स्थविराय[18] ।

**स मातरा सूर्येणा कवीनामवासयद्रुजदद्रिं गृणानः ।**
**स्वाधीभिर्ऋक्वभिर्वावशान उदुस्रियाणामसृजन्निदानम् ॥ २ ॥**

स मातरा । सः[19] । द्यावापृथिवी[20] । सूर्येण । स्तोतॄणामर्थाय[21] । वासयति[22] । भिनत्ति च[23] । मेघम्[24] । स्तूयमानः[25] । सुकर्मभिः[26] । स्तुतिमद्भिर्मरुद्भिः सह[27] । कामयमानः[28] । गवामसुरापहृतानाम्[29] । बन्धनम्[30] । उदसृजदिति[31] ।

---

१. आगच्छ Sy.
२. हे प्रकृष्टमार्गेन्द्र ! Sy.
३. रक्षणेन सह तेन च रथेन Sy.
४. मदभिमुखः Sy.
५. प्रत्यावय P. प्रश्रावय is suggested for प्रत्यापय ॥ अस्मान् प्रख्यापय च । सर्वासु प्रजासु मध्येऽस्मान् प्रख्यातान् कुर्वित्यर्थः Sy.
६. प्रजाभ्यः Sy.
७. 'अपूर्व्या' इति पञ्चर्चं नवमं सूक्तं त्रैष्टुभमैन्द्रम् । 'अपूर्व्या' (KSA. 31.32.p.22.) इत्यनुक्रान्तम् । द्वितीये छान्दोमिकेऽहनि निष्केवल्य एतत्सूक्तम् । सूत्रितञ्च—'अपूर्व्या पुरुतमानि तां सु ते कीर्तिम्' (ĀSS. 8.7.) इति। महाव्रतेऽपि निष्केवल्येऽस्य सूक्तस्य विनियोग उक्तः Sy.
८. अपूर्व्याणि पूर्वैरकृतानि नूतनानि Sy.
९. इन्द्राय Sy.
१०. विविधं शत्रूणां मारयित्रे Sy.
११. तवस्विने बलवते Sy.
१२. विप्राय P. त्वरमाणाय Sy.
१३. विशेषेण स्तुत्याय Sy.
१४. वज्रवते Sy.
१५. सुखकृत्तमानि Sy.
१६. स्तुतिरूपाणि वाक्यानि Sy.
१७. अतक्षं करोमि Sy.
१८. प्रवृद्धाय Sy.
१९. इन्द्रः Sy.
२०. मातरौ दिवं च पृथिवीं च Sy.
२१. क्रान्तदर्शिनामङ्गिरसामर्थाय । यद्वा कवीनामङ्गिरसामिति तृतीयार्थे षष्ठी । अङ्गिरोभिर्गृणानः स्तूयमान इति सम्बन्धः Sy.
२२. प्राकाशयत् Sy.
२३. भञ्जन् Sy.
२४. गवामदर्शनाय बलेन स्थापितं पर्वतम् Sy.
२५. ०नाः P.
२६. अपि च शोभनध्यानैः Sy.
२७. स्तोतृभिरङ्गिरोभिः Sy.
२८. पुनः पुनः काम्यमानः सन् Sy.
२९. वलस्य भृत्यैः पणिभिरपहृतानां गवाम् Sy.
३०. स्तुति महद्भिरन्नैर्महद्भिश्च बलैः कामानां वर्षितः बन्धनम् P. Cf. the commentary on RV.VI.32.4.
३१. ०जेति P. अमोचयत् Sy.

स वह्निभिर्ऋक्वभिर्गोषु शश्वन्मितज्ञुभिः पुरुकृत्वा जिगाय ।
पुरः पुरोहा सखिभिः सखीयन्दृळ्हा रुरोज कविभिः कविः सन् ॥ ३ ॥

स वह्निभिः । सः[1] । वोढृभिः[2] । मरुद्भिः[3] सह । गोषु[4] । सर्वदा । क्षिप्तजानुभिः[5] विक्षिप्तपादैः । बहूनां कर्मणां कर्ता[6] । गच्छति[7] । पुरः[8] । पुरो हन्ता[9] । सखिभिः[10] । सखिभिरिच्छन्[11] । दृढाः[12] । भञ्जयति[13] । कविभिर्मरुद्भिः[14] सह । कविः[15] । सन्निति[16] ।

स नीव्याभिर्जरितारमच्छा महो वाजेभिर्महद्भिश्च शुष्मैः ।
पुरुवीराभिर्वृषभ क्षितीनामा गिर्वणः सुविताय प्र याहि ॥ ४ ॥

स नीव्याभिः । स त्वम् । पुरुवीराभिः[17] । बन्धनसमर्थाभिर्नियुद्भिः[18] । स्तोतारम् । प्रति[19] । महद्भिः । अन्नैः[20] । महद्भिः । च । बलैः । कामानां वर्षितः[21] ! गीर्भिर्वननीय[22] ! अभिप्रयाहि[23] । अभ्युदयाय[24] । मनुष्याणां[25] मध्ये जरितारमिति ।

स सर्गेण शवसा तक्तो अत्यैरप इन्द्रो दक्षिणतस्तुराषाट् ।
इत्था सृजाना अनपावृदर्थं दिवेदिवे विविषुरप्रमृष्यम् ॥ ५ ॥

स सर्गेण । उत्साहेन[26] । बलेन च । सङ्गतः[27] । अश्वैः[28] । स्तोत्रलक्षणं कर्म युद्धं यज्ञं वा । दक्षिणतः[30] ।

---

१. इन्द्रः Sy.
२. हविषां वोढृभिः Sy.
३. महद्भिः P. स्तोतृभिः Sy.
४. गोषु निमित्तभूतेषु Sy.
५. सङ्कुचितजानुभिरङ्गिरोभिः सह Sy.
६. ०र्त्तः D. बहुकर्मकृत् Sy.
७. असुरान् जितवान् Sy.
८. पुनः P. आसुरीः पुरीः Sy.
९. जित्वा च पुराणां हन्ता स इन्द्रः Sy.
१०. समानख्यानैः Sy.
११. सखीभिरच्छन् P. सखित्वमात्मन इच्छन् Sy.
१२. स्थिराः Sy.
१३. रुरोज Sy.
१४. क्रान्तप्रज्ञैरङ्गिरोभिः सह Sy.
१५. स्वयमपि क्रान्तप्रज्ञः Sy.
१६. भवन् Sy.
१७. पुरूणां बहूनां वीरयित्रीभिर्वडवाभिः Sy.
१८. ०भिर्न्नियु० P. ०भिर्नयु० D. नव्याभिर्नवतराभिः Sy.
१९. आभिमुख्येन Sy.
२०. वाजेभिः Sy.
२१. हे कामानां वर्षक ! Sy.
२२. हे गिरा स्तुत्या सम्भजनीय ! Sy.
२३. ०भिः प्र० P. ०भिः प्रिया० D. आगच्छ Sy.
२४. शोभनाय । सुखप्राप्त्यर्थमित्यर्थः Sy.
२५. प्रजानाम् Sy.
२६. सर्वदोद्युक्तेन Sy.
२७. सङ्गतः सन् Sy.
२८. अश्वो P. सततगामिभिस्तेजोभिर्वा Sy.
२९. ०द्ध P. अप उदकानि । विसृजतीति शेषः Sy.
३०. दक्षिणायने Sy.

तूर्णमभिभविता[1] सेवते[2] । इत्थम्[3] । स्तुतिं सृजन्तः[4] । अनपवरणीयम्[5] । धनम्[6] । दिवेदिवे[7] । प्राप्नुवन्ति[8] । शत्रुभिरप्रमृष्यमिति[9] ।[10]

## VI.33.

**य ओजिष्ठ इन्द्र तं सु नो दा मदो वृषन्त्स्वभिष्टिर्दास्वान् ।**
**सौवश्व्यं यो वनवत्स्वश्वो वृत्रा समत्सु सासहदमित्रान् ॥ १ ॥**

य ओजिष्ठः[11] ॥ शुनहोत्रो[12] भरद्वाजः ॥ यः[13] । ओजस्वितमः[14] शुष्मः । तम्[15] । इन्द्र ! अस्मभ्यम् । सुष्ठु । देहि । मादयस्व[16] च । वर्षितः[17] ! सुष्ठ्वभ्येषणीयः[18] । दानवान्[19] प्रदाता । सौवश्व्यस्य[20] युद्धम् । यः । भजते[21] । शोभनाश्वः । युद्धेषु[22] । उपद्रवान्[23] । अमित्रांश्च[24] । अत्यन्तं सहमान[25] !

**त्वां हीन्द्रावसे विवाचो हवन्ते चर्षणयः शूरसातौ ।**
**त्वं विप्रेभिर्वि पणीँरशायस्त्वोत इत्सनिता वाजमर्वा ॥ २ ॥**

त्वां हि । त्वाम् । हि[26] । इन्द्र ! रक्षणाय[27] । विविधवाचः[28] । हवन्ते[29] । चर्षणयः[30] । युद्धे[31] । त्वं च ।

---

१. तुराणां हिंसकानां सोढाभिभविता Sy.
२. सेवतेत D.
३. अनेन प्रकारेण Sy.
४. सृजानाः सृज्यमानास्ता आपः Sy.
५. अनववर० P. अनवावर० D. अपवर्तनं पुनरागमनं यथा न भवति तथा Sy.
६. अर्थं गन्तव्यम् । अर्तेस्थन्प्रत्ययान्तस्य रूपमर्थमिति Sy.
७. प्रतिदिनम् Sy.
८. व्याप्नुवन्ति Sy.
९. ०प्रधृष्यं P. ०प्रमिष्य D. अन्यैरक्षोभ्यं समुद्रम् Sy.
१०. VM. ignores सः ।
११. 'य ओजिष्ठः' इति पञ्चमे दशमं सूक्तं शुनहोत्रस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च—'य ओजिष्ठः शुनहोत्रस्तु' (KSA. 31. 33. p. 22.) इति । महाव्रतेऽपि निष्केवल्य उक्तो विनियोगः Sy.
१२. आजि० P.
१३. पुत्रः Sy.
१४. ओजिष्ठतमः P., D. बलवत्तमः Sy.
१५. एवङ्गुणविशिष्टं तं पुत्रम् Sy.
१६. तव मादयिता । स्तुतिभिः स्तोतेत्यर्थः Sy.
१७. ०त P. हे कामानां वर्षितः ! इन्द्र ! त्वम् Sy.
१८. शोभनाभ्येषणः Sy.
१९. हविषां दानं दाः । तद्वान् Sy.
२०. ०वश्यस्य P. शौपश्व्यस्य D. शोभनाश्वानां समूहम् Sy.
२१. भोजत P., D. हिंस्यात् Sy.
२२. सङ्ग्रामेषु Sy.
२३. वृत्रान् वारयितॄन् Sy.
२४. शत्रूंश्च Sy.
२५. ०न: P. अत्यर्थमभिभवेत् । तं दा इत्यन्वयः Sy.
२६. एव Sy.
२७. रक्षणार्थम् Sy.
२८. विविधाः स्तुतिरूपा वाचो येषां तादृशाः Sy.
२९. आह्वयन्ति Sy.
३०. ०णशयः P., D. मनुष्याः Sy.
३१. शूरैः सम्भजनीये सङ्ग्रामे Sy.

मरुद्भिः सह। असुरान् युद्धे। विविधं गाययसि। त्वोतः। एव। भजते। गन्ता योद्धा पुरुषः। सङ्ग्रामम्।

**त्वं ताँ इन्द्रोभयाँ अमित्रान्दासा वृत्राण्यार्या च शूर।**
**वधीर्वनेव सुधितेभिरत्कैरा पृत्सु दर्षि नृणां नृतम॥ ३॥**

त्वं तान्। त्वम्। तान्। इन्द्र! उभयान्। अमित्रान्। अवधीः, दासान्, आर्यांश्च। तदेवाह—दासा। वृत्राणि। आर्या। च। शूर! वधीः। अरण्यानीव। सुतीक्ष्णैः। आयुधैः। आ दर्षि च। नॄन्। युद्धेषु। नेतृतम!

**स त्वं न इन्द्राकवाभिरूती सखा विश्वायुरविता वृधे भूः।**
**स्वर्षाता यद्ध्वयामसि त्वा युध्यन्तो नेमधिता पृत्सु शूर॥ ४॥**

स त्वम्। सः। त्वम्। अस्माकम्। इन्द्र! अकुत्सितैः। रक्षणैः। सखा। सर्वाङ्गः। रक्षिता। वर्धनाय। भव। यदा। सर्वैः सम्भजनीये। नेमधितौ सङ्ग्रामे। त्वाम्। ह्वयामः। पृतनासु। युध्यन्तः। शूरेति।

१. विप्रैर्मेधाविभिरङ्गिरोभिः सार्धम् Sy.
२. वलस्यानुचरा असुराः पणयः। तान् Sy.
३. विशेषेणाशाययः। हतवानित्यर्थः Sy.
४. त्वया रक्षितः Sy.
५. सम्भक्ता पुरुषः Sy.
६. अभिगन्ता भवति Sy.
७. अन्नम् Sy.
८. तत् P.
९. उभयविधान् Sy.
१०. शत्रून् Sy.
११. अहिंसीः Sy.
१२. दासान् आर्यांश्च refers to उभयान्।
१३. ०वाहासा P. के.त उभयविधाः? दासोपक्षपयितॄन् कर्मविरोधिनो बलप्रभृतीनसुरान् 'सुपां सुलुक्०' इति शस आकारः Sy.
१४. वृत्रस्यणि P., D. आवरकाणि विश्वरूपादीनि च तानुभयविधान् Sy.
१५. आर्याणि कर्मानुष्ठातृत्वेन श्रेष्ठानि Sy.
१६. हे शूर! त्वम् Sy.
१७. अव P. हतवानित्यर्थः Sy.
१८. निव P. तत्र दृष्टान्तः। वनानीव। यथा वृक्षजातानि कुठारादिभिश्छिनत्ति तद्वत् Sy.
१९. सुष्ठु निहितैः Sy.
२०. आत्मीयैरायुधैः Sy.
२१. ०युधैर्धरादर्षी D. अन्यानपि शत्रूनादृणासि विदारयसि Sy.
२२. नृणां मध्ये Sy.
२३. सङ्ग्रामेषु Sy.
२४. नेतृषुतमः P., D. अतिशयेन नेतः! हे इन्द्र! Sy.
२५. तादृशः Sy.
२६. अकुत्सिताभिः Sy.
२७. ऊतिभी रक्षाभिः Sy.
२८. सर्वतो गन्ता त्वम् Sy.
२९. स्वः सुष्ठ्वरणीयं धनं तस्य सम्भजनार्थम् Sy.
३०. नेमशब्दोऽर्धवाची। अर्धाः कतिपयाः पुरुषाः धीयन्त एष्विति नेमधितयः सङ्ग्रामाः। तादृशेषु Sy. त्वो नेम इत्यर्धस्य N. 3.20.
३१. ०मा D. आह्वयामः। तदानीं त्वमविता सखा च भवेत्यर्थः Sy.
३२. सङ्ग्रामेषु Sy.
३३. ०न्तं P., D. युद्धं कुर्वन्तो वयम् Sy.

नूनं न इन्द्रापराय च स्या भवा मृळीक उत नो अभिष्टौ ।
इत्था गृणन्तो महिनस्य शर्मन्दिवि ष्याम पार्ये गोषतमाः ॥ ५ ॥

नूनम् । अस्माकम्[1] । इन्द्र ! अस्मा अह्ले[2] । अपरस्मै[3] । च । स्या अद्य च श्वश्च भव[4][5][6] । अपि च । सुखयिता ; भव । अस्माकम् । अभ्येषणे[7] । इत्थम्[8] । स्तुवन्तः[9] । महतस्तव[10] । सुखे[11] । अह्नि[12] । पारे भवे[13] उत्तमे । स्याम्[14] । अतिशयेन पशूनां सम्भक्तारः ।

VI.34.

सं च त्वे जग्मुर्गिर इन्द्र पूर्वीर्वि च त्वद्यन्ति विभ्वो मनीषाः ।
पुरा नूनं च स्तुतय ऋषीणां पस्पृध्र इन्द्रे अध्युक्थार्का ॥ १ ॥

सं[15] च । इन्द्र ! त्वयि । बह्वयः । स्तुतयः । सङ्गच्छन्ते सहाभिगच्छन्ति । तथा[16] विविधम्[17] । च । त्वयि । गच्छन्त्यैकैकशः[18] । महत्यः[19] स्तुतयः । अपि वा त्वत्तः, स्तोतॄणाम्, बह्वयः, सुमतयो[20] विगच्छन्ते[21] । पुरा[22] । सम्प्रति[23] । च । स्तुतयः[24] । ऋषीणाम्[25] । इन्द्रे । स्पर्धन्तेऽहमहमिकयोपतिष्ठन्ति[26][27] । उक्थैरर्चनीये[28][29] ।

---

१. अस्मदीयः Sy.
२. VM. seems to explain नूनम् as अस्मा अह्ले ॥ अद्य Sy.
३. अपरस्मिन्नन्यस्मिन्नपि काले Sy.
४. भव Sy.
५. अस्य P., D.
६. श्च P.
७. अभिगमने सति Sy.
८. इत्थं D. अनेन प्रकारेण Sy.
९. स्तुवन्तो वयम् Sy.
१०. सम्बन्धिनि Sy.
११. शर्मणि सुखे Sy.
१२. द्योतमाने Sy.
१३. दुःखस्य पारके Sy.
१४. स्याम is suggested for स्याम् ॥ वर्तमाना भवेम Sy.
१५. 'सं च त्वे जग्मुः' इति पञ्चर्चमेकादशं सूक्तं शुनहोत्रस्यार्षं त्रैष्टुभमैन्द्रम् । 'सं च त्वे' (KSA. 31.34. p. 22.) इत्यनुक्रान्तम् । तृतीये छान्दोमिकेऽहनीदमादिके द्वे सूक्ते । सूत्रितञ्च—'सं च त्वे जग्मुरिति सूक्ते' (ĀSS. 8.7.) इति । महाव्रतेऽपि निष्केवल्य उक्तो विनियोगः Sy.
१६. यथा P.
१७. विधं D.
१८. ०न्त्येकै० is suggested for ०न्त्यैकै० ॥ निर्गच्छन्ति Sy.
१९. विभवो विस्तृताः Sy.
२०. मतयश्च Sy.
२१. अपिगच्छन्तः P. ०न्त D. विविधं निर्गच्छन्ति Sy.
२२. शेषः परोक्षकृतः । पूर्वस्मिन् काले Sy.
२३. अद्य च Sy.
२४. स्तोत्राणि Sy.
२५. अतीन्द्रियार्थदर्शिनां भरद्वाजादीनाम् Sy.
२६. अस्पर्धन्त । अहमहमिकयेन्द्रस्य स्तवने त्वरिता बभूवुरित्यर्थः Sy.
२७. ०कयावति० D.
२८. उक्षैर० P., D. उक्थं शस्त्रम् । तद्रूपाण्यर्काण्यर्चनसाधनानि स्तोत्राणि चास्पर्धन्त Sy.
२९. VM. ignores च and अधि ॥ अधि अधिकम् Sy.

पुरुहूतो यः पुरुगूर्त ऋभ्वाँ एकः पुरुप्रशस्तो अस्ति यज्ञैः ।
रथो न महे शवसे युजानो३ऽस्माभिरिन्द्रो अनुमाद्यो भूत् ॥ २ ॥

पुरुहूतः[१] । बहुभिराहूतः । यः[२] । यश्च बहुभिरुद्योजितः[३] । भवति । महान् । एक एव[४] । बहुभिश्च प्रशस्तः[५] । स्वैर्यज्ञैर्नृभिः[६] । सोऽयं रथः । इव । महते । बलाय । युञ्जानः[७] । अस्माभिः[८] । इन्द्रः । अनुमदनीयः[९] । भवतु ।

न यं हिंसन्ति धीतयो न वाणीरिन्द्रं नक्षन्तीदभि वर्धयन्तीः ।
यदि स्तोतारः शतं यत्सहस्रं गृणन्ति गिर्वणसं शं तदस्मै ॥ ३ ॥

न यम् । न । यम्[१०] । हिंसन्ति[११] । कर्माणि[१२] । न च । स्तुतिशब्दाः[१३] । यमिन्द्रम्[१४] । अभिगच्छन्ति । एव[१५] । वर्धयन्त्यः । यदि । स्तोतारः । शतम्[१६] । यदि वा । सहस्रम्[१७] । स्तुवन्ति । गीर्भिर्वननीयम्[१८] । तत् सर्वम्[१९] । अस्मै[२०] । सुखकरमेव भवति न हिंसकम्, अनाढ्यो हि हिंस्यते स्तुतिरशक्नुवन्[२१] दातुमिति ।

अस्मा एतद्दिव्य१र्चेव मासा मिमिक्ष इन्द्रे न्ययामि सोमः ।
जनं न धन्वन्नभि सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः ॥ ४ ॥

अस्मै । अस्मै[२२] । एतत्[२३], नियम्यते[२४] । दिवि स्थिताः[२५] । मासश्चन्द्रमसः सम्बन्धिनी[२६] । दीप्तिरिव[२७]

---

१. ०ह्न P.D.
२. इन्द्रः Sy.
३. ०भिरद्योतिजितः P. ०भिरद्योजितः D. बहुभिरुद्यमितः Sy.
४. एक P. प्रधानभूत एवङ्गुणविशिष्टः Sy.
५. ०स्त P., D. बहुधा प्रशस्तः स्तुतो भवति Sy.
६. यष्टृभिः पुरुषैर्यजनसाधनैः स्तोत्रैर्वा Sy.
७. अस्मत्स्तुतिभिर्युज्यमानः सन् Sy.
८. स्तोतृभिः Sy.
९. सर्वदा स्तुत्यः Sy.
१०. इन्द्रम् Sy.
११. बाधन्ते । दातुमसमर्थः पुरुषोऽन्यकृतैः परिचरणैः स्तुतिभिश्च भृशं खिद्यतेऽत्र चेन्द्रस्य बहुधनत्वाद्दातृत्वाच्च तस्मिन् प्रयुज्यमानानि परिचरणानि स्तोत्राणि च बाधहेतवो नाभूवन्नित्यर्थः Sy.
१२. कर्मणि D. परिचरणानि Sy.
१३. वाण्यः स्तुतयश्च यं न बाधन्ते Sy.
१४. य न्द्रम् P.
१५. ०च्छन्त्यो P. एच D.
१६. शतसङ्ख्याकाः स्तोतारो गृणन्ति Sy.
१७. सहस्रसङ्ख्याकाः स्तोतारः स्तुवन्ति Sy.
१८. गिरां सम्भक्तारमिन्द्रम् Sy.
१९. स्तोत्रम् Sy.　　२०. इन्द्राय Sy.
२१. ०तिर० D. स्तुतिभिः, अ० is suggested for स्तुतिर०
२२. विभक्तिव्यत्ययः । अस्मिन्निन्द्रे । यद्वा अस्मा इन्द्राय एतत् स्तोत्रं ब्रवाणीति शेषः Sy.
२३. एवं तत् P. एव तत् D. एतस्मिन् Sy.
२४. नियतोऽभूत् Sy.
२५. दिवसे सौत्येऽहनि Sy.
२६. मानेन 'इन्द्राय त्वा वृत्रघ्ने' इत्यादिमन्त्रसाध्येन युक्तः Sy.
२७. अर्चनसाधनेन स्तोत्रेणेव Sy.

तदेवाह—सिच्यमानः[1] । सोमः । इन्द्रार्थम्[2] । नियम्यत[3] इति । धन्वनि[4] स्थितम् । जनम्[5] । यदा । आपः[6] । न । अभिसङ्गच्छन्ते[7] । तदानीं सत्यमेव[8] । हवनानि[9] इन्द्रविषयाणि । वर्धयन्ति[10] । यज्ञैः[11] सहेति ।

**अस्मा एतन्मह्याङ्गूषमस्मा इन्द्राय स्तोत्रं मतिभिरवाचि ।**
**असद्यथा महति वृत्रतूर्य इन्द्रो विश्वायुरविता वृधश्च ॥ ५ ॥**

अस्मै । अस्मै[12] । एतत् । महत् । स्तोत्रम् । पुनरस्मा इति पूरणम् । इन्द्राय । स्तोत्रम्[13] । स्तोतृभिः । उक्तमासीत्[14] । भवति[15] । यथा[16] । महति[17] । सङ्ग्रामे । इन्द्रः । विश्वान्नः[18] । रक्षिता[19] । वर्धकः[20] । चेति ।

VI.35.

**कदा भुवन्रथक्षयाणि ब्रह्म कदा स्तोत्रे सहस्रपोष्यं दाः ।**
**कदा स्तोमं वासयोऽस्य राया कदा धियः करसि वाजरत्नाः ॥ १ ॥**

कदा[21] ॥ नरो भारद्वाजः ॥ कदा[22] । भविष्यन्ति[23] । रथनिवासानि[24] । अन्नानि[25] बहूनि बहु चेन्द्र[26] ! रथ-वाह्यमन्नं[27] भवति । कदा वा । स्तोत्रे[28] । सहस्रपोषनिमित्तं[29] धनम् । दास्यसि[30] । कदा वा । स्तोमम्[31] । अस्य[32] ।

---

१. वसतीवर्यैकधनाख्याभिरद्भिरासिक्तः Sy.
२. यद्वा दिवि द्युलोकेऽर्चेवार्कः सूर्य इव मासा । लुप्तोपममेतत् । माति परिच्छिनत्तीति मासश्चन्द्रमाः । स इव मिमिक्षो वृष्ट्युदकानां सेक्ता य इन्द्रो वर्ततेऽस्मिन्निन्द्रेऽभिषुतो सोमो नियम्यते स्म Sy.
३. ०र्थन्निमित्त P. निमित्त D. दिवि Sy.
४. धन्वनि मरुदेशे Sy.
५. प्राणिनमिव । यथा मरुदेश उपलभ्यमाना आपः प्राणिनं वर्धयन्ति तद्वत् Sy.
६. आवः D.
७. अभिमुखं सम्यग्गच्छन्त्यः Sy.
८. सार्धं सह Sy.
९. स्तोत्राणि Sy.
१०. अवर्धयन् Sy.
११. यजनसाधनैः पुरोडाशादिभिः Sy.
१२. इन्द्राय Sy.
१३. अस्मा इन्द्राय स्तोत्रमिति पुनरुक्तिरादरार्था Sy. १४. उक्तमभूत् Sy.
१५. भवेत् तथाऽवाचीत्यन्वयः Sy.
१६. येन प्रकारेण Sy.
१७. प्रभूते Sy.
१८. सर्वत्र गन्ता Sy.
१९. अस्माकमविता रक्षकः Sy.
२०. वर्धयिता Sy.
२१. 'कदा भुवन्' इति पञ्चर्चं द्वादशं सूक्तं नरस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तम् 'कदा नरस्तु' (KSA. 31.35. p.22.) इति । तृतीये छन्दोमे महाव्रते च निष्केवल्य उक्तो विनियोगः Sy. २२. कस्मिन् काले Sy.
२३. भवेयुः । रथेऽवस्थितं त्वां कदा प्राप्नुवन्तीत्यर्थः Sy. २४. ०वानि P., D.
२५. ब्रह्माणि स्तोत्राण्यस्मदीयानि Sy.
२६. चेद्र D.
२७. रवा० *D.
२८. स्तुवते मह्यम् Sy.
२९. सहस्रसङ्ख्याकपुरुषपोषकं गोसमूहं पुत्रं वा Sy.
३०. दाः Sy.
३१. स्तोत्रम् Sy.
३२. मम स्तोतुः Sy.

धनेन[1]। छादयिष्यसि[2]। कदा वा। करिष्यसि[3]। कर्माणि[4]। रमणीयान्नानि[5]।

**कर्हि स्वित्तदिन्द्र यन्नृभिर्नॄन्वीरैर्वीरान्नीळयासे जयाजीन् ।**
**त्रिधातु गा अधि जयासि गोष्विन्द्र द्युम्नं स्वर्वद्धेह्यस्मे ॥ २ ॥**

कर्हि[6]। कदा। स्वित्[7]। तत्। इन्द्र! भवति[8]। यत्[9] त्वम्। परकीयैर्नेतृभिः[10]। अस्मदीयान् नेतॄन्[11]। वीरैश्च[12]। वीरान्[13]। सङ्गमयसि[14]। जयसि[15] चास्मदर्थम्। आजीन्[16]। गोषु[17]। गन्त्रीः सेनास्त्वम्[18]। त्रिधातु[19]। अधिजयसि[20] त्रिगुणं जयसि। तथा सत्यस्मासु। इन्द्र! अन्नम्[21]। सर्वमनुष्ययुक्तम्[22]। धेहीति[23]।

**कर्हि स्वित्तदिन्द्र यज्जरित्रे विश्वप्सु ब्रह्म कृणवः शविष्ठ ।**
**कदा धियो न नियुतो युवासे कदा गोमघा हवनानि गच्छाः ॥ ३ ॥**

कर्हि[24]। कदा[25]। स्वित्[26]। तत्। इन्द्र! भवति[27]। यस्त्वम्[28]। जरित्रे[29]। विश्वरूपम्[30]। अन्नम्। करोषि[31]। बलवत्तम! कदा। बुद्धिः[32]। इव[33]। अश्वाः[34]। मिश्रयसि[35] गमनार्थमधितिष्ठसि। कदा वा। गोधनानि[36]। अस्मदाह्वानानि[37]। गच्छसि[38]।

---

१. सनेन P., D.
२. व्यापयेः Sy.
३. कर्ष्यसि D. कुर्याः । एवं स्तोता फलस्य विलम्बमसहमान इन्द्रमनया पृष्टवान् Sy.
४. कर्माणि अग्निहोत्रादीनि Sy.
५. वाजैरन्नै रमणीयाः Sy.
६. फलस्य विलम्बमसहमान ऋषिरनयापीन्द्रं पृच्छति Sy. ७. खलु Sy.
८. भवेत् Sy.
९. य P.
१०. वरणीयैः P. अस्मदीयैः पुरुषैः Sy.
११. शत्रुपुरुषान् Sy.
१२. अस्मदीयैः पुत्रैः Sy.
१३. शत्रुपुत्रांश्च Sy.
१४. संश्लेषयेः संयोजयेः । नीळयतिः संश्लेषणकर्मा । ईदृशं युद्धे यत्संश्लेषणं तत्कदा भवेदिति वितर्कः Sy. १५. यजसि P. जयेः Sy.
१६. सङ्ग्रामान् Sy.
१७. अभिगन्तृषु शत्रुषु विद्यमानाः Sy.
१८. गाः Sy.
१९. त्रिधातूनां क्षीरदधिघृतानां त्रयाणां धारयित्रीः Sy. २०. अधिकं जयेः Sy.
२१. धनम् Sy.
२२. व्याप्तिमत् Sy. २३. धारयेः Sy.
२४. The *pratīka* is supplied by the Editor.
२५. अनयापि कतिचित्प्रश्नाः क्रियन्ते Sy.
२६. खलु Sy. २७. भवेत् Sy.
२८. य P. २९. स्तोत्रे Sy.
३०. बहुविधरूपम् Sy.
३१. करोषीति यत् तत्कदा भवेदिति वितर्कः Sy.
३२. बद्धिः P. बुद्धीः is suggested for बुद्धिः ॥ कर्माणि Sy.
३३. नेति समुच्चये । च Sy.
३४. स्तुतीः Sy.
३५. आत्मनि योजयेः Sy.
३६. गोमघानि गवां दातॄणि । मंहतेर्दानार्थस्य रूपमुत्तरपदम् Sy.
३७. स्तोत्राणि Sy.
३८. अभिगच्छेः Sy.

स गोमघा जरित्रे अश्वश्चन्द्रा वाजश्रवसो अधि धेहि पृक्षः ।
पीपिहीषः सुदुघामिन्द्र धेनुं भरद्वाजेषु सुरुचो रुरुच्याः ॥ ४ ॥

**स गोमघाः** । सः[1] । गोधनाः[2] । जरित्रे[3] । ह्लादकाश्वा[4] । श्रयणीयबलाः[5] । अधिधेहि[6] । इषः[7] । तथा पयःप्रभृतिक[8] इषश्च[9] । सुदुग्धाम्[10] । धेनुम्[11] । पीपिहि क्षारय[12] । भरद्वाजेषु[13] । सुदीप्तिः[14] । रुरुच्याः रोचसीति[15] ।[16][17]

तमा नूनं वृजनमन्यथा चिच्छूरो यच्छक्र वि दुरो गृणीषे ।
मा निररं शुक्रदुघस्य धेनोराङ्गिरसान्ब्रह्मणा विप्र जिन्व ॥ ५ ॥

**तमा नूनम्** । तं स्तोतारं वर्तमानं भवति नाशाभिमुखो भवति सत्योपद्रव इत्यर्थः । यदा त्वमस्य । द्वाराणि[18] । विविधं[19] वेदसि[20] । शूरस्त्वम्[21] । शक्र ![22] मा । निर्गमः[23] । उदकस्य दोग्धुस्तव[24] । धेनोः मेघात्[25] । अङ्गिरसकुले जातान्[26] । मेधाविन् ![27] अन्नेन । प्रीणय[28] ।

---

१. ०घा D. २. त्वम् Sy.
३. गवां दात्रीः Sy.
४. स्तोत्रे Sy.
५. ०काश्चा D. ०काश्वाः is suggested for ०काश्वा ॥ अश्वैराह्लादयन्तीः Sy.
६. वाजैर्बलैः प्रसिद्धा एवम्भूताः Sy.
७. धारय Sy.
८. षः P. पृक्षोऽन्नानि Sy.
९. वयप्रभृतिक D. ०प्रभृतिकाः is suggested for ०प्रभृतिक ॥ तान्यन्नानि Sy.
१०. शोभनदोग्ध्रीम् Sy.
११. गाम् Sy.
१२. वीविहि P. पिपीषि D. प्यायय Sy.
१३. भरद्वाजपुत्रेष्वस्मासु Sy.
१४. दीप्तिः D. सुदीप्तीः is suggested for सुदीप्तिः ॥ अपि च ता इषो गौश्च सुरुचः शोभनदीप्तयो यथा भवन्ति तथा Sy.
१५. दीपयेः । शोभनदीप्तियुक्ताश्च ताः सन्त्वित्यर्थः Sy.
१६. रोचस इति or रोचयसीति is suggested for रोचसीति ।
१७. VM. ignores इन्द्र !
१८. विशेषेण दारयिता शत्रूणाम् । यद्वा दुरो द्वाराणि शत्रुसम्बन्धीनि विघटयंस्त्वम् Sy.
१९. ०ध P. Sy. construes वि with दुरः ।
२०. यस्माद् गृणीषेऽस्माभिः स्तूयसे तस्मात्कारणात् Sy. २१. शौर्योपेतः Sy.
२२. हे सर्वकार्येषु शक्तेन्द्र ! Sy.
२३. निर्गच्छेयम् । अरमित्याख्यातम् 'ऋ गतौ' इत्यस्य रूपम् Sy.
२४. शुक्राणां निर्मलानां दोग्धुरिन्द्रस्य Sy.
२५. वाचः स्तोत्रात् । मा निररम् । यद्वा शुक्रस्य पयसो दोग्ध्र्या धेनोस्त्वया दत्ताया गोः सकाशान्मा निर्गच्छेयम् । सा सर्वदाऽस्मासु निवसत्वित्यर्थः Sy.
२६. अङ्गिरोगोत्रजानस्मान् Sy.
२७. ०विनः P. हे प्राज्ञेन्द्र ! Sy.
२८. VM's explanation of the first verse seems to be incomplete. He probably explains तं as स्तोतारम्, आ as अभिमुखः, वृजनम् as उपद्रवः, and अन्यथा चित् as नाशः ॥ हे इन्द्र ! त्वं नूनमद्यतनं वृजनं बाधकमस्मदीयं शत्रुमन्यथा चिदन्येनैव प्रकारेण योजय । येन प्रकारेण सर्वे जीवन्ति तद्विलक्षणं प्रकारं मरणाख्यं प्रापयेत्यर्थः । आकारः पूरकः Sy.

VI.36.

**स॒त्रा मदा॑स॒स्तव॒ वि॒श्वज॑न्याः स॒त्रा रायोऽध॒ ये पार्थि॑वासः ।**
**स॒त्रा वाजा॑नामभवो विभ॒क्ता यद्दे॒वेषु॑ धा॒रय॑था असु॒र्य॑म् ॥ १ ॥**

सत्रा[1] । सत्यमेव[2] । मदाः[3] । तव[4] । विश्वजनहिताः[5] । सत्यमेव । तव दिव्या रायः[6] । सन्ति पार्थिवाः[7]। च[8] । सत्यमेव[9] । अन्नानाम् । अभवः[10] । दाता । यस्मात्[11] । देवेषु[12] । धारयसि[13] । बलम्[14] ।

**अनु॒ प्र ये॑जे॒ जन॒ ओजो॑ अस्य स॒त्रा द॑धिरे॒ अनु॑ वी॒र्या॑य ।**
**स्यू॒म॒गृभे॒ दु॒धये॒ऽर्व॑ते च॒ क्रतु॑ वृ॒ञ्ज॒न्त्यपि॑ वृत्र॒हत्ये॑ ॥ २ ॥**

अनु प्र । अनुक्रमेण[15] । प्रकर्षेण च । अस्य[16] । ओजः[17] । देवजनः[18] । ईजे[19] । तथा महत्त्वे[20] । च । अनुदधिरे[21] । वीर्यकरणायैनं देवाः[22] । अनुस्यूतं शत्रून् गृह्णते[23] । कम्पयते[24] । अभिगच्छते[25] । प्रज्ञानम्[26] । अपि[27] । व्रजन्ति[28] । वृत्र-वधाय[29] तेन सहैकतमसो भवन्तीत्यर्थः ।

---

१. 'सत्रा मदासः' इति पञ्चर्चं त्रयोदशं सूक्तं नरस्यार्षं त्रैष्टुभमैन्द्रम् । 'सत्रा' (KSA. 31.36.p.22.) इत्यनुक्रान्तम् । पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्य एतत्सूक्तं शस्यम् । सूत्रितञ्च—'प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यम्' (ĀSS.7.12.) इति । विश्वजिति माध्यन्दिनसवने प्रशास्तुः शस्त्र इदं सामसूक्ताख्यं शंसनीयम् । सूत्रितञ्च—'सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानि' (ĀSS.8.7.) इति । महाव्रतेऽपि निष्केवल्य उक्तो विनियोगः Sy.

२. हे इन्द्र ! Sy.

३. सत्रेति सत्यनाम Ngh. 3.10.

४. सोमपानजनिता मदाः Sy.

५. त्वदीयाः Sy.

६. सर्वजनहिता भवन्ति । यद्वा सत्रेति महन्नामैतत् । महान्तस्तव मदा इति योज्यम् Sy.

७. धनसमूहाः सन्ति तेऽपि सत्यं विश्वजनहिता भवन्तीत्यन्वयः Sy.

८. पृथिव्युपलक्षिते लोकत्रये भवाः Sy.

९. अपि च Sy. १०. भवसि । यद्वा सत्रा महतां वाजानामिति योज्यम् Sy.

११. यस्म P. १२. देवेषु मध्ये Sy.

१३. धारयथाः । अतः कारणात् त्वमेवं करोषीत्यर्थः Sy.

१४. VM. ignores ये ।

१५. अक्र० D. सन्ततम् Sy.

१६. इन्द्रस्य Sy.

१७. बलम् Sy. १८. यजमानः Sy.

१९. ईजते D. यजते । पूजयति Sy.

२०. ०त्त्वे is suggested for ०त्वे ॥ सत्यम् । यद्वा महान्तमिन्द्रमिति योज्यम् Sy.

२१. पुरो दधिरे यजमानाः Sy.

२२. अपि च तमिन्द्रं वीरकर्म कर्तुम् Sy.

२३. स्यूम्नः स्यूतानविच्छेदेन वर्तमानान् शत्रून् गृह्णते Sy.

२४. दुधये । दुधिर्हिंसाकर्मा । तेषां हिंसकाय Sy.

२५. शत्रूणामभिगन्त्रे च तस्मा इन्द्राय Sy.

२६. कर्म परिचरणात्मकम् Sy.

२७. अभि P.

२८. व्रजति P. वृञ्जन्ति is suggested for व्रजन्ति ॥ निष्पादयन्ति Sy.

२९. किमर्थम् ? वृत्रहत्ये वृत्रस्य वारकस्य शत्रोर्हनननिमित्तम् Sy.

तं सध्रीचीरूतयो वृष्ण्यानि पौंस्यानि नियुतः सश्चुरिन्द्रम् ।
समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसं गिर आ विशन्ति ॥ ३ ॥

[तं सध्रीचीः ।][1] तम्[2] । सङ्गताः[3] । मरुतः[4] । बलकराणि[5] । वीर्याणि[6] । अश्वाश्च[7] । सङ्गच्छन्ति[8] । समुद्रम्[9] । इव । नद्यः । वक्तव्यवेगाः[10] । बहुव्याप्तिम्[11] । स्तुतयश्च । आविशन्ति[12] । वृत्रवधोद्युक्तम्[13] ।

स रायस्खामुप सृजा गृणानः पुरुश्चन्द्रस्य त्वमिन्द्र वस्वः ।
पतिर्बभूथासमो जनानामेको विश्वस्य भुवनस्य राजा ॥ ४ ॥

स रायः । सः । त्वम् । वासयितः[14] । बहूनामाह्लादकस्य । धनस्य । नदीम्[15] । उपवर्तय[16] । स्तूयमानस्तत् तव युक्तमिति । वदति पतिरिति[17] ।[18]

स तु श्रुधि श्रुत्या यो दुवोयुर्द्यौर्न भूमाभि रायो अर्यः ।
असो यथा नः शवसा चकानो युगेयुगे वयसा चेकितानः ॥ ५ ॥

स तु श्रुधि ।[19] सः[20] । क्षिप्रम् । शृणु । श्रोतव्यानि[21] स्तोत्राणि । यस्त्वं भवसि । परिचर्येच्छुः[22] ।

---

१. The *pratīka* is supplied by the Editor.
२. इन्द्रम् Sy.
३. सहाञ्चन्त्यः सङ्गता भूत्वा । यद्वा सह वर्तमानानि भूत्वा Sy.
४. मरुतः । यद्वा ऊतयस्तर्पकाण्यन्नानि Sy.
५. वीर्याणि Sy.
६. बलानि Sy.
७. रथे युज्यमाना वडवाश्च तमिन्द्रं सेवन्ते Sy.
८. सचन्ते सेवन्ते Sy.
९. तत्र दृष्टान्तः । यथा स्यन्दनशीला नद्यः समुद्रमाविशन्ति, आविश्य च विभक्ततया न दृश्यन्ते एवं सर्वा अपि स्तुतय इन्द्रेणैकीभवन्तीत्यर्थः Sy.
१०. अपि चोक्थशुष्माः । उक्थं शस्त्रं तदेव बलं यासां तादृशाः Sy.
११. विस्तीर्णव्याप्तिकम् Sy.
१२. तमिन्द्रं प्रविशन्ति Sy.
१३. वृत्रवधोद्युक्तम् seems to be the epithet of इन्द्रम् ।
१४. VM. takes वस्वः as Voc. but Sy. and Padapāṭha take it as Gen. ॥ निवासकस्य Sy.
१५. खा इति नदीनाम Ngh.1.13. अत्र तत्सम्बद्धा धारा लक्ष्यते । धाराम् Sy.
१६. विमुञ्च । अस्माभिः संयोजयेत्यर्थः Sy.
१७. अधिपतिः Sy.
१८. VM. ignores इन्द्र । बभूथ । असमः । जनानाम् । एकः । विश्वस्य । भुवनस्य and राजा ॥ हे इन्द्र ! अपि चासमोऽनुपमः सर्वोत्कृष्टस्त्वं जनानां सर्वेषां प्राणिनां पतिरधिपतिर्बभूथ । तथा विश्वस्य सर्वस्य भुवनस्य भूतजातस्यैकोऽसाधारणो राजेश्वरश्च बभूविथ Sy.
१९. हे इन्द्र ! Sy.
२०. त्वम् Sy.
२१. श्रुत्यानि श्रोतव्यानि स्तोत्राणि Sy.
२२. अस्मदीयं परिचरणमात्मन इच्छन् Sy.

अस्मदीयानि धनानि । आदित्यः[१] । इव । भूमीः[२] । रीन्[३] । अभितिष्ठन्तु । भवसि[४] । अस्माकमेव[५][६] । यथा[७] त्वम् । बलेन[८] । दीप्यमानः[९] । वहं[१०] हविषा[११] । बुध्यमानस्तथा[१२] श्रुधीति ।

## VI.37.

**अर्वाग्रथं विश्ववारं त उग्रेन्द्र युक्तासो हरयो वहन्तु ।**
**कीरिश्चिद्धि त्वा हवते स्वर्वानृधीमहि सधमादस्ते अद्य ॥ १ ॥**

अर्वाक्[१३] ॥[१४] भरद्वाजः ॥ अभिमुखम्[१५] । रथम् । विश्वैर्वरणीयम् । ते[१६] । उग्र[१७] ! इन्द्र ! युक्ताः[१८] । अश्वाः । वहन्तु[१९] । स्तोता[२०] । हि[२१] । त्वाम् । हवते[२२] । कल्याणहविष्काः[२३] । ऋद्धा भवाम[२४] । सह माद्यन्तः[२५] । त्वया वयम् । अद्येति[२६] ।[२७]

**प्रो द्रोणे हरयः कर्माग्मन्पुनानास ऋज्यन्तो अभूवन् ।**
**इन्द्रो नो अस्य पूर्व्यः पपीयाद्द्युक्षो मदस्य सोम्यस्य राजा ॥ २ ॥**

प्रो द्रोणे[२८] । प्रगच्छन्तु[२९] । द्रोणकलशे धनानां[३०] खादलक्षणम् । कर्म[३१] । हरयः[३२] । पुनानाः[३३] सोमाः ।

---

१. सूर्यः Sy.
२. भूमिः D. बहुतराणि Sy.
३. रिन् P. अरीन् is suggested for रीन् ॥ अरेः सम्बन्धीनि Sy.
४. अभिभवसि Sy. ५. स्याः Sy.
६. अस्माकमसाधारणोऽसि Sy.
७. येन प्रकारेण Sy.
८. आत्मीयेन बलेन स्तोतव्येन युक्तः Sy.
९. स्तूयमानः Sy.
१०. अन्वहम् is suggested for वहम् । If अन्वहम् is the correct reading then it can be taken as the explanation of युगेयुगे; otherwise युगेयुगे is ignored by VM. Sy. explains युगेयुगे as कालेकाले ।
११. हविर्लक्षणेनान्नेन Sy.
१२. प्रज्ञायमानस्त्वम् Sy.
१३. 'अर्वाग्रथम्' इति पञ्चर्चं चतुर्दशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'अर्वाग्रथम्' (KSA.31.37.p.22.) इत्यनुक्रान्तम् महाव्रते निष्केवल्य उक्तो विनियोगः Sy.
१४. अवाक् P. १५. अस्मदभिमुखम् Sy.
१६. त्वदीयम् Sy. १७. हे उद्गूर्णबल ! Sy.
१८. रथेन युक्ताः Sy. १९. आनयन्तु Sy.
२०. स्तोता भरद्वाज ऋषिः Sy.
२१. यस्मात् Sy.
२२. आह्वयति । तस्मात्कारणात्त्वदीयं रथमभिमुखं वहन्त्वित्यर्थः Sy. २३. स्वर्वान् स्वः सुष्ठ्वरणीयं गुणजातम् । तद्वान् Sy.
२४. समृद्धा भवेम Sy. २५. मान्यन्तः P.
२६. अन्येति P., D. इदानीम् Sy.
२७. VM. ignores चित् ।
२८. तृतीये पर्यायेऽच्छावाकस्य 'प्रो द्रोणे' इत्येषा शस्त्रयाज्या । सूत्रितञ्च--'प्रो द्रोणे हरयः कर्माग्मन्निति याज्या' (ĀSS.6.4.) इति Sy.
२९. प्रयच्छन्तु P., D. प्रकर्षेण गच्छन्ति प्राप्नुवन्ति Sy. ३०. धा० P.
३१. यज्ञम् Sy.
३२. हरहरयः P. हरितवर्णाः सोमाः Sy.
३३. ०ना P. प्राप्य च पूयमानाः Sy.

ऋजुगच्छन्तः[1] । भवन्तु[2] । इन्द्रः । अस्माकम्[3] । इमं रसम्[4] । पिवतु । मुख्यः[5] । दीप्तः[6] । मदकरम्[7] । सोमम्[8] । राजेति[9] ।

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥ ३ ॥

आसस्राणासः[10] । आभिमुख्येन सरन्तः[11] । वलमपरं तम्[12] । प्रति[13] । इन्द्रम् । शोभनचक्रे रथे[14] । रथ्याः[15] । अश्वाः । सोमलक्षणमन्नम्[16] । अभिवहेयुः[17] । ऋजु गच्छन्तः[18] । क्षिप्रम्[19] । पात्रात्[20] । अमृतम्[21] । इन्द्रपानेऽपि विदस्तं[22]

---

१. ऋजूग० D. २. भवन्ति Sy.

३. अस्मदीयम् Sy.

४. सरं P., D. सोमम् Sy.

५. पुरातनः Sy.

६. ०प्ते P., D. दीप्तेर्निवासभूतो द्युस्थानो वा Sy.

७. मदकरस्य Sy.

८. सोयमं P., D. सोमस्य Sy.

९. ईश्वरः Sy.

१०. आसह्लाणा P. भरद्वाजस्यार्षम् Dur. भरद्वाजस्य SKN.

११. परितो गच्छन्तः Sy. नित्यमासर्पन्ति ये तान् युक्त्वा रथेऽस्माकमायाहि सोमपानाय यज्ञमिति Dur. अत्रैकवाक्यतायै यत्तदध्याहारः । ....सर्तेः कानजयम् । आगतवन्तः SKN.

१२. बलमिवाचरन्तम् Sy. अभिबलायमानमधिकबलमात्मानं मन्यमानम् Dur. शवःशब्दाद् बलवचनादन्तर्णीतिमत्वर्थात् 'उपमानादाचारे' 'कर्तुः क्यङ् सलोपश्च' (pa. 3.1.10-11.) इति क्यङ्प्रत्ययः । तदन्तात्ताच्छील्ये शानच् । छान्दसत्वादार्धधातुकत्वम् । अतोलोपयलोपौ । शवसानं बलाचरणशीलं तम् SKN.

१३. आभिमुख्येन Sy. अच्छ, अभेरर्थे । अभि प्रति SKN.

१४. शोभनचक्रे रथेऽवस्थितम् Sy. रथे योगार्थम् Dur. रथे योगादात्मन इति SKN.

१५. रथे युक्ताः Sy. रथस्य वोळ्हारस्ते SKN.

१६. श्रवणीयमस्मदीयं हविः Sy. अन्नं सोमाख्यमेतदस्मद्यज्ञे यत्....श्रव इत्येतदन्ननाम । तद्धि सर्वत्र श्रूयते Dur. सोमाख्यमन्नं प्रति ....श्रूयत इति कर्मणि कारके । अन्नं वर्ण्यमानं श्रूयते SKN.

१७. आवहेयुः Sy. अभिः कर्मप्रवचनीयः प्रतिना समानार्थः SKN.

१८. ऋजूग० D. ऋजुगमनाः सन्तः Sy. किमस्माकं ते कुर्वन्तु ?....ऋजुगामिनो भूत्वा Dur.

१९. इदानीम् Sy.

२०. वायोर्हेतोः Sy. अस्य वायोर्गन्तुरिन्द्रस्य स्वभूतम् SKN.

२१. अमरणहेतुभूतं सोमलक्षणं हविः Sy. एष सोमभक्षः Dur. अमृतसदृशं दृष्टं मरणवर्जितं वा सोमाख्यमन्नम् SKN.

२२. ०पिद० P. ०न्द्रवाने विद० D. क्षयं (न) प्राप्नुयात् । पात्रे गृहीतः सोमो वायुना शुष्यति ततः पुरैव तत्पानार्थमश्वा इन्द्रमभिवहेयुरित्यर्थः Sy. अविदस्तेऽनुपक्षीणे, एतस्मिन् सोमभक्षेऽभिवहेयुरित्येतदाशास्महे Dur. विशब्दो विगमे, दस्यतिः क्षयार्थः । विगतक्षयं भवेत् प्राक् प्रदानात् क्षयं मा गमदित्यर्थः । वायोश्चास्य भक्षो यथा न विदस्येत् तथा वहेयुरित्यस्य विवरणम् SKN.

भवतु । वायुदेवत्यं पात्रं वायुरुक्तमिति[1] ।[2]

**वरिष्ठो अस्य दक्षिणामियर्तीन्द्रो मघोनां तुविकूर्मितमः ।**
**यया वज्रिवः परियास्यंहो मघा च धृष्णो दयसे वि सूरीन् ॥ ४ ॥**

वरिष्ठः । ऽरुतमो महान् । इन्द्रः[3] । सम्बन्धिनीम्[4] । दक्षिणाम्[5] । आत्मनि प्रेरयति[6] प्रापयत्यात्मानमिन्द्रः । हविष्मताम्[7] । अत्यन्तं बहोः कर्ता[8] । अथ प्रत्यक्षः[9]—यया दक्षिणया[10] । स्तोतॄणामवर्तिम्[11] । परितो

---

१. अयुरुक्त० P. The passage वायुदेवत्यं पात्रं वायुरुक्तम्, refers to पात्रात्, so it should immediately follow that and precede अमृतम् ।

२. VM. ignores नु and चित् ॥
'नूचित्' इति निपातो निषेधेऽत्र वर्तते । नैव Sy. नू चित् 'नवं च पुराणं च' तत्पानायैनमिन्द्रमभिवहेयुः ।....नूचिदिति नवपुराणाभिधायकौ निपातौ । नवं यः सोमो गृहीत्वा तत्कालमेवाहूयते । पुराणं पुनर्यः प्रातःसवने गृहीत्वा माध्यन्दिने सवने हूयते तृतीयसवने वा । एवमेतस्मिन् मन्त्रे, ऐन्द्रसूक्तमध्यपातित्वादिन्द्रप्रधाने यद् वाय्वभिधानं तन्नैघण्टुकमिन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रम् इत्येके : अपरे पुनः, उभयप्रधानेयमृगिति मन्यन्ते भेदपक्षवादिनः । तत्पुनरयुक्तम्—निष्केवल्ये विनियोगात् Dur. नूशब्दो नववचनः । चिच्छब्दश्चार्थे । अद्या चिन्नूचिदिति यथा । चार्थश्रुतिसामर्थ्याच्च द्वितीयो नुशब्दः पुराणवचनः । यच्चेदानीं गृह्यते तन्नवम् । यत्पूर्वं गृहीतं तत्पुराणम् । तदुभयमपि नवं च पुराणं च । एवमिन्द्रप्रधानेयमृगित्येके मन्यन्ते । निहितमात्रत्वेन वायुकर्म वायुरित्यर्थः । न पृथक्कर्मात्मना वायुः स्तुत्य इत्यभिप्रायः । उभयप्राधान्येन परमन्यद्दर्शनम् । अधिष्ठात्रधिष्ठेयभेदेन । 'अपि वा पुरुषविधानामेव सतां कर्मात्मानः' N. 7. 7. इत्येवं भेदमुररीकृत्याह । वायोश्चास्य द्विरूपोऽपि सोमभक्षः क्षयं मा गादिति SKN. आससृवांसः । अभिबलायमानमिन्द्रम् । कल्याणचक्रे रथे योगाय । रथ्या अश्वा रथस्य वोढारः । ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुः । नवं च पुराणं च । श्रव इत्यन्ननाम । श्रूयत इति सतः । वायोश्चास्य भक्षो यथा न विदस्येदिति । इन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्म । उभयप्रधानेत्यपरम् N. 10. 3., SKN. IV. 3.

३. ०न्द्र P.

४. समं बन्धिनि P. सम्बन्धिनीम् is incomplete. Something probably, अस्य is missing here. यजमानस्य Sy.

५. यज्ञे दातव्याम् Sy.

६. P. adds प्रापयति after प्रेरयति ।

७. अविष्मता P. मघवतां हविर्लक्षणधनोपेतानाम् । यद्वा मघोनामित्यस्य (अस्य)इत्यनेन समानाधिकरणम् । वचनव्यत्ययः । मघोनो हविष्मतोऽस्य यजमानस्येत्यर्थः Sy.

८. अतिशयेन बहुविधकर्मा Sy.

९. शेषः प्रत्यक्षकृतः Sy.

१०. यया दक्षिणया दत्तया Sy.

११. पापं यज्ञसम्बन्धि Sy.

हंसि,[1] अतिर्वधकर्मा । नानाविधानि धनानि[2] । च । प्रयच्छसि[3] विशिष्टांश्चाकरोः[4][5] । स्तोतॄनिति ।[6][7]

**इन्द्रो॒ वाज॑स्य॒ स्थवि॑रस्य दा॒तेन्द्रो॑ गी॒र्भिर्व॑र्धतां वृ॒द्धम॑हाः ।**
**इन्द्रो॑ वृ॒त्रं हनि॑ष्ठो अस्तु॒ सत्वा ता सू॒रिः पृ॑णति॒ तूतु॑जानः ॥ ५ ॥**

इन्द्रः । इन्द्रः[8] । वाजस्य[9] । प्रवृद्धस्य । दाता[10] । इन्द्रः । स्तुतिभिः[11] । वर्धताम् । वृद्धतेजाः[12] । इन्द्रः । वृत्रम्[13] । अतिशयेन हतवान्[14] । अस्तु[15] । सदनशीलः सोऽयम्[16] । आपूरयति[17] । तानि धनानि । सूरिः[18] । त्वरमाणः[19] ।

VI.38.

**अपा॑दि॒त उदु॑ नश्चि॒त्रत॑मो म॒हीं भ॑र्षद्द्यु॒मती॒मिन्द्र॑हूतिम् ।**
**पन्य॑सीं धी॒तिं दैव्य॑स्य॒ याम॒ञ्जन॑स्य रा॒तिं व॑नते सु॒दानुः॑ ॥ १ ॥**

अपात्[20][21] । उद्रक्षतु[22] । अस्मान्[23] । इतोऽवर्तेरिन्द्रः[24] । पूजनीयतमः[25] । महतीम् । बिभर्तु[26] । दीप्तिमतीम् । इन्द्रस्य हूतिम्[27] । स्तुतिम्[28] । इन्द्रः शोभनदानः[29] । स्तुत्यतमाम्[30] । हविश्च दानम्[31] । दैव्यस्य[32] । जनस्य । गमने[33] । स्वयं भजते[34][35] ।

१. हन्सि P. विनाशयसि Sy.
२. Omitted by P. मघानि धनानि Sy.
३. यया - दक्षिणया विदयसे प्रयच्छसि तादृशीं दक्षिणां प्रेरयसीत्यर्थः Sy.
४. ०शिष्टां० D.
५. ०श्च काको: P.
६. स्तोतॄन् पुत्रांश्च Sy.
७. VM. ignores वज्रिवः and धृष्णो ॥ हे वज्रवन्निन्द्र ! हे धर्षक ! Sy.
८. अयमिन्द्रः Sy.
९. अन्नस्य बलस्य वा Sy.
१०. ०द्धस्याता P., D. दाता भवतु Sy.
११. अस्मदीयाभिः स्तुतिभिः Sy.
१२. वृत्रतेजाः P., D. प्रवृद्धतेजस्कः सन् Sy.
१३. आवरकं शत्रुम् Sy.
१४. ०वान् न् P., D. हन्तृतमः Sy.
१५. भवतु Sy. १६. शत्रूणां शातयिता Sy.
१७. अप्रयति P., D. अस्मभ्यं प्रयच्छतु Sy.
१८. पूरीः P. पूरिः D. प्रेरकः Sy.
१९. त्वमणः P. ०ण D.
२०. 'अपादितः' इति पञ्चर्चं पञ्चदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'अपात्' (KSA. 31.38.p.22.) इत्यनुक्रान्तम् । महाव्रते निष्केवल्य उक्तो विनियोगः Sy.
२१. अवात् P.
२२. सोमं पिबतु । यद्वा इतोऽस्माच्छत्रोर्नोऽस्मान् पातु रक्षतु Sy.
२३. अस्मदीयात् Sy.
२४. अस्माद् ग्रहचमसादेः Sy.
२५. चायनीयतम आश्चर्यतमो वा स इन्द्रः Sy.
२६. बिभर्तु । धारयतु Sy.
२७. भूतिम् P., D. स्तुतिम् Sy.
२८. धीतिं परिचरणरूपां क्रियाम् Sy.
२९. ०न्द्रं P., D. ३०. ०माकं P., D.
३१. ०षाञ्च P. ०षञ्च D.
३२. दे० P. देवसम्बन्धिनो जनस्य दातव्यं हविश्च Sy.
३३. आग० D. यामनि यज्ञे क्रियमाणाम् Sy.
३४. सम्भजतु Sy.
३५. VM. ignores उ ॥ उदुइत्येतौ पूरणौ Sy.

दूराच्चिदा वसतो अस्य कर्णा घोषादिन्द्रस्य तन्यति ब्रुवाणः ।
एयमेनं देवहूतिर्ववृत्यान्मद्र्यगिन्द्रमियमृच्यमाना ॥ २ ॥

दूराच्चित्[1] । इन्द्रस्य । कर्णौ[2] । दूरात्[3] । आगत्य । स्तोतृसमीपे वसतः[4] । तथा[5] । इन्द्रस्तुतिम्[6] । ब्रुवाणः[7] पुरुषः । सोऽत्तन्यति[8] उद्घुष्य ब्रूते । आववृत्यात्[9] । इयम् । देवस्येन्द्रस्य स्तुतिः[10] । एनम् । इन्द्रम् । मदभिमुखम् । मया स्तूयमाना, उच्यमाना[11] । पुनरियमिति[12] पूरणम्[13] ।

तं वो धिया परमया पुराजामजरमिन्द्रमभ्यनूष्यर्कैः ।
ब्रह्मा च गिरो दधिरे समस्मिन्महांश्च स्तोमो अधि वर्धदिन्द्रे ॥ ३ ॥

तं वः[14] । तम्[15] । युष्माकम्[16] । बुध्या[17] । उत्तमयाऽहम्[18] । प्रत्नम्[19] । अजरम्[20] । अभिष्टौमि । मन्त्रैः[21] । अन्नम्[22] । च । स्तुतीश्च[23] । अस्मिन्[24] । सन्दधिरे[25] । महान्[26] । स्तोमः । च । इन्द्रे । अभिवर्धने[27][28] ।

वर्धाद्यं यज्ञ उत सोम इन्द्रं वर्धाद्ब्रह्म गिर उक्था च मन्म ।
वर्धाहैनमुषसो यामन्नक्तोर्वर्धान्मासाः शरदो द्याव इन्द्रम् ॥ ४ ॥

वर्धाद्यम्[29] । वर्धयति । यम्[30] । यज्ञः[31] । अपि च[32] । सोमः[33] । इन्द्रम् । वर्धयति । हविः[34] । स्तुतयः[35] ।

---

१. ०राच्चि० P., D.
२. कर्णौ D.
३. दूरदेशात् Sy.
४. स्तोत्रश्रवणार्थमागच्छतः Sy.
५. अपि Sy.
६. VM. seems to explain इन्द्रस्य and घोषात् together as इन्द्रस्तुतिम् ॥ इन्द्रस्य घोषणीयात्स्तोत्राद्धेतोः Sy.
७. स्तुवन् स्तोता Sy.
८. तन्यति शब्दं करोति । यद्वा सर्वत्र विस्तारयति Sy. ९. ०ववर्त्या० P. आवर्तयतु Sy.
१०. देवस्येन्द्रस्याह्वानरूपेयं स्तुतिः Sy.
११. स्वयं प्रेर्यमाणा सती Sy.
१२. पुनरियमिति पूरणः Sy.
१३. VM. ignores चित् ॥ चिद् अपि Sy.
१४. हे इन्द्र ! Sy.
१५. तादृशम् Sy.
१६. वः त्वाम् । व्यत्ययेन बहुवचनम् Sy.
१७. बुद्ध्या is suggested for बुध्या ॥ स्तुत्या Sy. १८. उत्कृष्टतमया Sy.
१९. पुराजां पूर्वस्मिन् काले जातं चिरन्तनम् Sy.
२०. जरारहितं नित्यम् Sy.
२१. अर्चनसाधनैर्हविर्भिः सार्धम् Sy.
२२. ब्रह्माणि हविर्लक्षणान्यन्नानि Sy.
२३. ०तिश्च D. स्तुतीश्च is suggested for स्तुतींश्च ॥ स्तुतयश्च Sy.
२४. अतः कारणात् अस्मिन् इन्द्रे Sy.
२५. सन्धीयन्ते संश्लिष्यन्ते Sy.
२६. प्रवृद्धः Sy. २७. अधिकं वर्धते Sy.
२८. VM. ignores इन्द्रम् ।
२९. ०म D.
३०. D. omits यम् ।
३१. यागः Sy. ३२. ०ज्ञेपि D.
३३. सोमम् P. तत्साधनभूतः सोमश्च Sy.
३४. हविर्लक्षणमन्नं च पुरोडाशादिकम् Sy.
३५. स्तोत्राणि Sy.

शस्त्राणि । च । मननीयानि[1] । वर्धयन्ति । एव । एनम्[2] । उपमः । गात्रीः[3] । गमने[4] । वर्धयन्ति[5] । मासाः । शरदश्च[6] । दीप्ताः[7] । इन्द्रम् ।

**एवा जज्ञानं सहसे असामि वावृधानं राधसे च श्रुताय ।**
**महामुग्रमवसे विप्र नूनमा विवासेम वृत्रतूर्येषु ॥ ५ ॥**

**एवा जज्ञानम्** । एवम् । जायमानम्[8] । बलकरणाय[9] । अखण्डितम्[10] । वर्धमानम् । धनाय[11] । च । विश्रुताय । महान्तम् । उद्गूर्णम्[12] । रक्षणाय । मेधाविन्[13] ! इदानीम्[14] । परिचरेम । सङ्ग्रामेषु[15] त्वामिति ।[16]

## VI.39.

**मन्द्रस्य कवेर्दिव्यस्य वह्नेर्विप्रमन्मनो वचनस्य मध्वः ।**
**अपा नस्तस्य सचनस्य देवेषो युवस्व गृणते गोअग्राः ॥ १ ॥**

[17]**मन्द्रस्य** । मोदनस्य[18] । कवेः[19] । दिव्यस्य[20] । वोढुः[21] । मेधाविस्तोतृकस्याग्नेः[22] । देवानां वक्तुः[23] । सोमम्[24] । यम्[25] । अपिबः[26] । अस्मदीयस्य[27] । हविषां सचनशीलस्य[28] । देव[29] ! अन्नानि । पृ कुरु[30] । स्तुवते[31] । गोमुखानि[32] ।

---

१. मननी P.		२. इन्द्रम् Sy.

३. रात्रेः Sy.

४. भमन P. भमने D. यामनि गमने सति Sy.

५. ०न्तीति P.

६. शरश्च P. संवत्सराश्च Sy.

७. दिवसाश्च Sy.

८. ज्ञाय० P. प्रादुर्भवन्तम् Sy.

९. शत्रूणामभिभवार्थम् Sy.

१०. बहुलम् Sy.		११. ५ D.

१२. ०र्णः P. उद्गूर्णबलम् Sy.

१३. हे मेधाविन् ! इन्द्र ! Sy.

१४. अद्य Sy.

१५. वृत्रतूर्येषु Sy.

१६. VM. ignores आ ।

१७. 'मन्द्रस्य कवेः' इति पञ्चर्चं षोडशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'मन्द्रस्य' (KSA. 31.39.p-22.) इत्यनुक्रान्तम् । गतो विनियोगः Sy.

१८. मोदनस्य मदकरस्य वा Sy.

१९. विक्रान्तस्य Sy.

२०. दिवि भवस्य Sy.

२१. ०ढु D.

२२. विप्रा मेधाविनो मन्मानः स्तोतारो यस्य स तथोक्तः । तस्य Sy.

२३. वचनीयस्य स्तुत्यस्य Sy.

२४. एवम्भूतस्य मधुनो सोमस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी Sy.

२५. It seems to be the explanation of तस्य ॥ तस्य सर्वत्र प्रसिद्धस्य Sy.

२६. अपाः पिब Sy.

२७. अषिबास्म० P. ०बास्म० D. एवम्भूतं नोऽस्मदीयं सोमम् Sy.

२८. सवन० P., D. सेव्यस्य Sy.

२९. हे द्योतमानेन्द्र ! Sy.

३०. Omitted by P. पृथक्कुरु is suggested for पृकुरु ॥ संयोजय Sy.

३१. गृणते स्तुवते । तृतीयार्थे चतुर्थी । स्तुवता मया Sy.

३२. गावोऽग्रे प्रमुखे यासां तादृशाः Sy.

अयमुशानः पर्यद्रिमुस्रा ऋतधीतिभिर्ऋतयुग्युजानः ।
रुजदरुग्णं वि वलस्य सानुं पणींर्वचोभिरभि योधदिन्द्रः ॥ २ ॥

**अयमुशानः** । अयम्[1] । कामयमानः । शिलोच्चयम्[2] । प्रति स्थिताः[3] । पणिभिरपहृता गाः । सत्यकर्मभिः । सत्ययुक्[4] । अङ्गिरोभिर्युज्यमानः[5] । व्यरुजत्[6] । अन्यैररुग्णम्[7][8] । वलासुरस्य[9] । समुच्छ्रितं[10] देशम् । पणीन्[11] । वचोभिश्च[12] । अभ्ययोधयद्[13] भर्त्सनपरैः[14][15] ।

अयं द्योतयदद्युतो व्यक्तूंन्दोषा वस्तोः शरद इन्दुरिन्द्र ।
इमं केतुमदधुर्नू चिदह्नां शुचिजन्मन उषसश्चकार ॥ ३ ॥

**अयम्** । अयम् । व्यद्योतयत्[16] । अचाकृताः[17] । रात्रीः[18] । शरदश्च[19] । अक्तून्[20] इतनैघण्युदकम्[20] । सोमः[21] । इन्द्र ! तथैनं सोमम्[22] । अह्नाम्[23] । केतुम्[24] । अदधुः[25] । पुरा[26] । तथा निर्दोषाः[27] । यदोषसः[28] । करोतीति[29] हविषः स्तुतिः[29][30] ।

---

१. इन्द्रः Sy.
२. वलेन गोपिधानाय निर्मितं शिलोच्चयम् Sy.
३. ०तः D. परितः पर्वतसमीपे विद्यमानाः Sy.
४. ऋतेन तत्कृतेन स्तोत्रेण युक्तश्च भूत्वा Sy.
५. सङ्गच्छमानः Sy.
६. व्यभाङ्क्षीत् Sy.
७. एन्यैः P.
८. उरक्तं P. उरक्णं D. अन्यैरभग्नम् Sy.
९. वलस्यासुरस्य स्वभूतम् Sy.
१०. उच्छ्रितं पर्वतम् Sy.
११. वलानुचरानेतत्संज्ञानसुरान् Sy.
१२. स्तुत्यैरायुधैः सन्तर्जनरूपैर्वाक्यैरेव वा Sy.
१३. अद्ययोधयत् P. अभ्ययुध्यत् Sy.
१४. भत्सभरैः P. भर्त्सनपरैः refers to वचोभिः so it should immediately follow वचोभिः ॥
१५. VM. ignores इन्द्रः ।
१६. व्यदीपयत् Sy.
१७. ०तयच्च कृता P. VM. seems to explain अद्युतः as अचाकृताः ॥ अव्याकृताः is suggested for अचाकृताः ॥ अद्योतमानाव् Sy.
१८. रात्रिम् Sy.
१९. संवत्सरांश्च Sy.
२०. अकून् P. इति नैघण्टुकम् is suggested for इतनैघण्युदकम् ॥ 'अक्तुरिति रात्रिनाम' (Ngh. 1. 7.) अत्र च तत्सम्बन्धात्पक्षमासादयो लक्ष्यन्ते । पक्षमासादीन् Sy.
२१. त्वया नियम्यमानः पीयमानो वा सोमः Sy.
२२. सोम् D. सोमं चन्द्रात्मना नभसि वर्तमानम् Sy.
२३. दिवसानाम् Sy.
२४. प्रज्ञापकम् Sy.
२५. देवाः यस्मात् व्यदधुः, अकुर्वन् तस्मादनेन पक्षमासादयः सर्वे प्रकाश्यन्ते । चन्द्रगत्यधीनत्वात्तिथिविभागानाम् Sy.
२६. पुरा seems to be the explanation of नू चित् ।
२७. ०षो P. D. निर्दोषाः seems to be the explanation of शुचिजन्मनः ॥ आत्मीयेन तेजसा शुद्धोदयान् करोति Sy.
२८. अपि चायं सोमः उषःकालान् Sy.
२९. करातीति ति D.
३०. VM. ignores वस्तोः ॥ वस्तोर्दिवसम् Sy.

**अयं रोचयदरुचो रुचानोऽयं वासयद्व्यृतेन पूर्वीः ।**
**अयमीयत ऋतयुग्भिरश्वैः स्वर्विदा नाभिना चर्षणिप्राः ॥ ४ ॥**

अयम् । अयम्[1] । अरोचयत्[2] । अरोचमानान्[3] । स्वयं रोचमानः[4] । अयम्[5] । विवासयति[6] । तेजसा[7] । बह्वीरुषसः । अयम्[8] । गच्छति । सत्येन युक्तैः[9] । अश्वैः[10] । स्वर्गलोकज्ञे[11] । नाभिमता रथेन[12] । मनुष्याणां पूरयिता[13] ।

**नू गृणानो गृणते प्रत्न राजन्निषः पिन्व वसुदेयाय पूर्वीः ।**
**अप ओषधीरविषा वनानि गा अर्वतो नॄनृचसे रिरीहि ॥ ५ ॥**

नू[14] गृणानः । क्षिप्रम् । स्तूयमानः[15] । स्तुवते । प्रत्न[16] ! राजन्[17] ! अन्नानि । पिन्व[18] । दातव्यधनाय[19] । बहूनि[20] । अपः[21] । ओषधीः[22] रयीणां दातः[23] । वननीयानि धनानि[24] । गाः । अश्वान् । मनुष्यान्[25] । स्तुवते मह्यम्[26] । प्रयच्छ[27] ।

---

१. इन्द्रः Sy.
२. प्रकाशयति Sy.
३. प्रकाशरहितान् । तमसा मलीमसान् सर्वाँल्लोकान् Sy.
४. सूर्यात्मना दीप्यमानः Sy.
५. पियं P.
६. व्यापयति । तत्रत्यानि तमांसि निवर्तयतीत्यर्थः Sy.
७. सत्यभूतेन सर्वत्र गमनशीलेन वा तेजसा Sy.
८. अयमेवेन्द्रः Sy.
९. ऋतेन स्तोत्रेण युज्यमानैः Sy.
१०. ०श्वै P.
११. ०लोकज्ञेन is suggested for ०लोकज्ञे ॥ सुष्ठ्वरणीयस्य धनस्य लम्भकेन Sy.
१२. सन्नद्धेन Sy.
१३. चर्षणीनां मनुष्याणां कामैः पूरयिता सन् Sy.
१४. आ P.
१५. Sy. adds त्वम् ।
१६. हे पुरातन ! Sy.
१७. राजान् P. राजमानेन्द्र ! Sy.
१८. पिव P., D. सिञ्च । प्रयच्छेत्यर्थः Sy.
१९. ०तव्यं ध० P. वसूनि धनानि त्वया देयानि यस्मै तादृशाय Sy.
२०. बह्वीः Sy.
२१. वृष्टिलक्षणान्युदकानि Sy.
२२. व्रीह्यादीन् Sy.
२३. अविषा विषरहितानि रक्षकाणि वा वनानि Sy. रयीणां दातः seems to be the explanation of अविषा ; VM. seems to derive षा from √ षण् to give and construe it as अवीनां साता, (अवीन् सनोति), i.e. 'giver of sheep.' Wealth was probably counted in sheep also as it was certainly counted in kine. Or अवीनाम् is suggested for रयीणाम् ।
२४. वृक्षजातानि चूतपनसादीनि Sy.
२५. कर्मकरान् Sy.
२६. तपते P. अर्चयित्रे स्तोत्रे Sy.
२७. देहि Sy.

VI.40.

**इन्द्र पिब तुभ्यं सुतो मदायाव स्य हरी वि मुंचा सखाया ।**
**उत प्र गाय गण आ निषद्याथा यज्ञाय गृणते वयो धाः ॥ १ ॥**

[1]इन्द्र पिब । इन्द्र । पिब[2] सोमम् । तुभ्यम् । मदाय[3] । अयं[4] सुतः सोमो[5] अपि विष्य[6] । अथ । सखायौ[7] अश्वौ । रथाद् विमुञ्च । अस्मिन उद्गातृगणे[8] । निषद्य[9] गायतस्तस्य । प्रगाणमुपगायनं[10] कुरु । ततः[11] । यज्ञार्थम्[12] । स्तुवते मह्यम् । अन्नम् । धेहि[13][14] ।

**अस्य पिब यस्य जज्ञान इन्द्र मदाय क्रत्वे अपिबो विरप्शिन् ।**
**तमु ते गावो नर आपो अद्रिरिन्दुं समह्यन्पीतये समस्मै ॥ २ ॥**

[15]अस्य पिब । अमुम्[16] । पिब । यम्[17] । जायमान[18] एव । इन्द्र ! मदाय[19] । प्रज्ञानाय[20] । अपिबः[21] । महन् ! तम्[22] । एव । इन्दुम्[23] । गावश्चर्मप्रदाः[24] । अर्यवः[25] । वसतीवर्यः[26] । ग्रावा[27] च । सहागमयन्[28] ।

---

१. 'इन्द्र पिब' इति पञ्चर्चं सप्तदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । 'इन्द्र पिब' (KSA. 31.40.p.22.) इत्यनुक्रान्तम् । गतः सूक्तविनियोगः । प्रथमे रात्रिपर्यायेऽच्छावाकस्याद्या शस्त्रयाज्या । सूत्रितञ्च—'इन्द्र पिब तुभ्यं सुतो मदायेति याज्या' (ĀSS.6.4.) इति Sy.

२. तं सोमं पिब Sy.

३. यः सोमः मदार्थम् Sy.

४. ०य यं D. अभिषुतः । यतस्त्वया सोमः पातव्योऽतः कारणात् Sy.

५. ०मे ग्र० P.

६. अवस्थापय Sy.

७. समानख्यानौ मित्रभूतौ वा Sy.

८. अस्मत्स्तोतृसङ्घे Sy.

९. उपविश्य Sy.

१०. अस्माभिः कृतं स्तोत्रमुपश्लोकय Sy.

११. अपि च Sy.

१२. यज्ञाय यजमानाय Sy.

१३. देहि Sy.

१४. VM. ignores आ ॥ आ आभिमुख्येन Sy.

१५. द्वितीये रात्रिपर्यायेऽच्छावाकस्य 'अस्य पिब' इति शस्त्रयाज्या । सूत्रितञ्च—'अस्य पिबेति याज्या' (ĀSS. 6.4.) इति Sy.

१६. इमं सोमम् Sy.

१७. य P.
सोमम् Sy.

१८. ज्ञायमाना P. ०ना D. जायमान एव त्वम् Sy.

१९. हर्षाय Sy.

२०. कर्मणे वृत्रवधादिलक्षणं वीर्यकर्म कर्तुं च Sy.

२१. पूर्वं पीतवानसि Sy.

२२. तादृशम् Sy.

२३. सोमम् Sy.

२४. गवि भवाः श्रपणसाधनाः क्षीरादयः Sy.

२५. अध्वर्यवः is suggested for अर्यवः ॥ नेतारोऽध्वर्यवः Sy.

२६. ०तीपयः P.
वसतीवर्याख्याः Sy.

२७. अभिषवार्थो ग्रावा, एते सर्वे Sy.

२८. सह निशमयन् P., D. समगमयन् । 'हि गतौ' इत्यस्यतद्रूपम् Sy.

अशो:[1] पीतये[2] । अस्मै[3] तुभ्यम्[4] ।

उत्तरा निगदसिद्धा ।

**समि॑द्धे अ॒ग्नौ सु॒त इ॑न्द्र॒ सोम॒ आ त्वा॑ वहन्तु॒ हर॑यो॒ वहि॑ष्ठाः ।**
**त्वा॒य॒ता मन॑सा जोहवी॒मीन्द्रा या॑हि सु॒वि॒ताय॑ म॒हे नः॑ ॥ ३ ॥**

[ समिद्धे[5] । ]

**आ या॑हि॒ शश्व॑दुश॒ता य॑या॒थेन्द्र॑ म॒हा मन॑सा सोम॒पेय॑म् ।**
**उप॒ ब्रह्मा॑णि शृणव इ॒मा नोऽथा॑ ते य॒ज्ञस्त॒न्वे॒३॒॑ वयो॑ धात् ॥ ४ ॥**

**आ याहि** । अद्य चागच्छ[6] पुरा[7] च त्वम् । शश्वत्[8] । कामयमानेन[9] । महता । मनसा[10] । पातव्यं सोमम्[11] । प्राप्तोऽसि आगतश्च[12] । उपशृणुहि[13] । स्तोत्राणि । इमानि[14] । अस्माकम्[15] । अथ[16] वाऽस्माभिरनुष्ठी-[17]यमान: । यज्ञ:[18] । पुत्राय[19] । अन्नम्[20] । प्रयच्छतु[21][22] ।

---

१. **अंशो:** is suggested for **अशो:** ।

२. **पानार्थम्** Sy.

३. **०तयस्मै** P. **अस्येन्द्रस्य** Sy.

४. VM. ignores **ते** and explains **सम्** once only ॥ **ते तव । पुनः समिति पूरकः** Sy.

५. The *pratīka* is supplied by the Editor. Sy. explains this stanza in the following manner :— **अग्नौ समिद्धे दीप्ते सोमे सुतेऽभिषुते सति हे इन्द्र ! त्वा त्वां वहिष्ठा वोढृतमा हरयोऽश्वा आ वहन्तु । इमं यज्ञं प्रत्यानयन्तु । अहं च त्वायता त्वां कामयमानेन मनसा जोहवीमि पुनः पुनराह्वयामि । हे इन्द्र ! त्वं नोऽस्माकं महे महते सुविताय कल्याणाय आयाहि । आगच्छ ।**

६. **अभिगच्छ** Sy.

७. **ग** P. ८. **बहुकृत्वः** Sy.

९. **०मान** D. **अतः कारणात् उशता अस्मान् कामयमानेन** Sy.

१०. **मनसा सह** Sy.

११. Omitted by P. **सोमः पीयते यस्मिन् तादृशमस्मदीयं यज्ञम्** Sy.

१२. It seems to be the explanation of **ययाथ** ॥ **सोमपानार्थं यज्ञं गतवानसि** Sy.

१३. **उपशृणु** Sy.

१४. **इदानीं प्रयुज्यमानानि** Sy.

१५. **अस्मदीयानि** Sy.

१६. **अथ अनन्तरम्** Sy.

१७. **अनुतिष्ठी०** P.

१८. **यजमानः** Sy.

१९. **शरीराय त्वच्छरीरपोषार्थम्** Sy.

२०. **अन्नं सोमात्मकम्** Sy.

२१. **ददातु** Sy.

२२. VM. ignores **इन्द्र** and **ते** ॥ **हे इन्द्र ! ते तव** Sy.

**यदि॑न्द्र दि॒वि पार्ये॒ यदृध॒ग्यद्वा॒ स्वे सद॑ने॒ यत्र॒ वासि॑ ।**
**अतो॑ नो य॒ज्ञमव॑से नि॒युत्वा॑न्त्स॒जोषा॑: पाहि गिर्वणो म॒रुद्भि॑: ॥ ५ ॥**

[यदिन्द्र[1] ।] द्युलोके[2] । पारभवे[3] भवसि । यदि वा[4] । अन्यत्र, ऋधगिति[5] पृथग्भावमाचष्टे[6] । यत्[7] । वा । स्वे[8] । गृहे[9] । यत्र[10] । वा । असि[11] । अतः[12] । अस्माकम्[13] । रक्षणाय[14] । अश्ववान्[15] । मरुद्भिः । सहित[16] आगत्य । पिब[17] । सोमम्[18] । गीर्भिर्वननीय[19] ![20]

---

१. The *pratīka* is supplied by the Editor. भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्य SKN.

२. के P., D. द्युलोकाख्ये Sy. हे भगवन्निन्द्र ! यद् यदि त्वं दिवि द्युलोके Dur. यदि त्वं हे इन्द्र ! दिवि द्युलोके SKN.

३. वा भरवे P. वारभवे D. पारगे दूरदेशे वर्तसे Sy. पारणीये स्थानेऽवस्थितः Dur. पारयितव्ये दूरवर्तित्वाद् यत्नेन गन्तव्य इत्यर्थः SKN.

४. व्या P., D.

५. ०त्रधनिति P. ०त्रधगिति D. एतत् पृथक् शब्देन समानार्थम् । पृथगन्यस्मिन् देशे वर्तसे Sy.

६. पृथुवा० P. यद्वृधक् पृथग् दिव इत्यर्थः Dur. पृथग् द्युलोकात् SKN. ऋधगिति पृथग्भावस्य प्रवचनं भवति । अथाप्यृध्नोत्यर्थे दृश्यते N. 4.25..

७. यदि Dur.; SKN.

८. स्थे P., D. स्वकीये Sy.

९. अन्तरिक्षलोकेऽवस्थितः Dur. अन्तरिक्षे SKN.

१०. यत्रस्य P. यस्य D. अथवा किमनेन विशेषणेन यस्मिन् देशे Sy. क्वचिदन्यत्रैव स्थानेऽवस्थितः को हि तत्त्वतो वेद तव स्थानं यत्रासीति Dur. क्व चाप्यसि SKN.

११. भवसि Sy. किं बहुना यत्रास्यवस्थितः Dur.

१२. अस्मात्स्थानादागत्य Sy. तत आगत्य Dur. आगत्येति शेषः SKN.

१३. अतोरस्मा० P., D. अस्माकं स्वभूतम् SKN.

१४. रक्षसि Dur. तर्पणायात्मनः SKN.

१५. नियुतोऽश्वाः । तद्वान् Sy. त्वं नियुत्वान् वायुर्भूत्वा Dur. नियुतोऽश्वास्तैस्तद्वान् SKN.

१६. सह प्रीयमाणस्त्वम् Sy. सह जोषणः सहप्रीतिः Dur. सम्प्रीयमाणः SKN.

१७. रक्ष, यद्वा पिब Sy. पाहि रक्षआदिभ्यो रक्ष । यद्वा 'पा पाने' इत्यस्येदं छान्दसत्वात् पिबादेशाभावे रूपम् SKN.

१८. अस्मदीयं यागम् । यद्वा यज्ञं यजनसाधनमस्मदीयं....सोममवसे तर्पणाय Sy. एतं सोममस्मत्प्रत्तम् Dur.

१९. ०यं P., D. हे गिरां सम्भक्तरिन्द्र ! Sy. यस्त्वमेवंप्रभावः । तं त्वां ब्रवीमि हे गिर्वणो गीर्भिः सम्भजित !, स हि स्तुतीः सम्भजति । स्तुतिभिर्वा सम्भज्यते ।....एवमेके पृथग्भावोदाहरणमेतामृचं व्याचक्षते । अपरे पुनः य एवैष भाष्यकारेण नियमः पठितः 'ऋधगयाः' इति । अत्रैवैतौ द्वावप्यर्थाविति मन्यन्ते Dur. गीर्भिर्वननीय ! आभिः सहेत्यर्थः SKN. ऋधगिति पृथग्भावस्य प्रवचनं भवति । अथाप्यृध्नोत्यर्थे दृश्यते "ऋधगया ऋधगुताशमिष्ठाः" (TS.1.4.44.2.) ऋध्नुवन्नयाक्षीः । ऋध्नुवन्नशमिष्ठा इति च N.4.25., SKN.II. 273.

२०. VM. ignores इन्द्र !

VI.41.

अहे॑ळमान॒ उप॑ याहि य॒ज्ञं तुभ्य॑ं पवन्त॒ इन्द॑वः सु॒तासः॑ ।
गावो॒ न व॑ज्रि॒न्त्स्वमोको॒ अच्छेन्द्रा ग॑हि प्रथ॒मो य॒ज्ञिया॑नाम् ॥ १ ॥

[1]अहेळमानः । [2]अक्रुध्यन् । उपगच्छ । [3]यज्ञं । [4]तुभ्यम् । [5]पवन्ते । [6]इन्द्रवः । अभिषुताः । [7]पाशवः । इव । [8]वज्रिन् ! [9]स्वम् । [10]गृहम् । [11]प्रति । [12]इन्द्र ! आगच्छ । [13]मुख्यः । [14]यज्ञार्हाणाम् ।

या ते॑ का॒कुत्सुकृ॑ता॒ या वरि॑ष्ठा॒ यया॒ शश्व॒त्पिब॑सि॒ मध्व॑ ऊ॒र्मिम् ।
तया॑ पाहि॒ प्र ते॑ अध्व॒र्युर॑स्था॒त्सं ते॒ वज्रो॑ वर्ततामिन्द्र ग॒व्युः ॥ २ ॥

[15][या [16]ते ।] [17]या । [18]ते । [19]जिह्वा काकुत् । उरुतरा [20]वरिष्ठा । [21]अवशिष्टं स्पष्टम् ।

---

१. 'अहेळमानः' इति पञ्चर्चमष्टादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रान्तञ्च 'अहेळमानः' (KSA. 31.41.p.22.) इति । गतो विनियोगः Sy.

२. अक्रुध्यंस्त्वम् Sy.

३. अस्मदीयं यज्ञम् Sy.

४. यतः कारणात् तुभ्यं त्वदर्थम् Sy.

५. वदन्ते P. वपन्ते D. पूयन्ते । दशापवित्रेण शोध्यन्ते Sy.

६. इन्द्रः D. इन्दवः is suggested for इन्द्रवः ॥ सोमाः Sy.

७. पशवः is suggested for पाशवः ॥ स्वकीयं गोष्ठमिव Sy.

८. वज्रवन्निन्द्र ! Sy.

९. स्वकीयम् Sy.

१०. स्थानं द्रोणकलशादिलक्षणम् Sy.

११. आभिमुख्येन । प्राप्नुवन्तीति शेषः Sy.

१२. अतः कारणाद्धे इन्द्र ! Sy.

१३. मुख्यस्त्वम् Sy.

१४. यज्ञार्हाणां देवानां मध्ये Sy.

१५. The *pratīka* is supplied by the Editor.

१६. हे इन्द्र ! Sy.

१७. य P., D.

१८. तैः P. तव Sy.

१९. जह्वाकाकद् P. जह्वा० D.

२०. विरि० P. उरुतमा विस्तीर्णतमा Sy.

२१. ०ष्ठवशि० D. By अवशिष्टम् VM. refers to सुकृता । या । यया । शश्वत् । पिबसि । मध्वः । ऊर्मिम् । तया । पाहि । प्र । ते । अध्वर्युः । अस्थात् । सम् । ते । वज्रः । वर्तताम् । इन्द्रः and गव्युः ॥ सुकृता—सुष्ठु धात्रा निर्मिता । यया च मध्वो मधुनः सोमस्योर्मिं रसं शश्वद्बहुकृत्वः पिबसि तया जिह्वयास्मदीयं सोमं पाहि । पिब । तदर्थमध्वर्युरध्वरस्य नेता ऋत्विग्गृहीतसोमः सन् प्रास्थात् । हविर्धानादुत्तरवेदिदेशं प्रत्यगमत् । अपि च हे इन्द्र ! गव्युः शत्रुसम्बन्धिनीर्गा आत्मन इच्छन् ते त्वदीयो वज्रः संवर्तताम् । शत्रुभिः सङ्गतो भवतु । तान् हन्त्वित्यर्थः Sy.

एष द्रप्सो वृषभो विश्वरूप इन्द्राय वृष्णे समकारि सोमः ।
एतं पिब हरिवः स्थातरुग्र यस्येशिषे प्रदिवि यस्ते अन्नम् ॥ ३ ॥

एषः । द्रप्सो द्रवणशीलः।[1] प्रदिवीति पुराणनामधेयम्[2] । प्रजापतेरिन्द्रः सोममात्मनोऽन्नं वव्रे । शिष्टं स्पष्टम्[3] ।

सुतः सोमो असुतादिन्द्र वस्यानयं श्रेयाश्चिकितुषे रणाय ।
एतं तितिर्व उप याहि यज्ञं तेन विश्वास्तविषीरा पृणस्व ॥ ४ ॥

सुतः । सुतोऽयम्[4] । सोमः । असुतान्[5] निहितात्[6] सोष्यमाणान् । वसीयान्[7] भवति । प्रशस्यश्च[8] । अयम् । प्राज्ञाय[9] तुभ्यम् । रक्षणकर्मणे[10] । तमेतम् । सोमम्[11] । उत्तरितः ! उपद्रवाणाम्[12] । उपगच्छ[13] । तेन सोमेन पीतेन । विश्वानि[14] । आत्मनो बलानि । आपूरय ।[15]

उत्तरा निगदसिद्धा ।

ह्वयामसि त्वेन्द्र याह्यर्वाङरं ते सोमस्तन्वे भवाति ।
शतक्रतो मादयस्वा सुतेषु प्रास्माँ अव पृतनासु प्र विक्षु ॥ ५ ॥

[ ह्वयामसि ।[16] ]

---

१. विणशीलं P. द्रप्नो पिणशीलं D.

२. Ngh. 3.27.

३. VM. does not explain the stanza except two or three words of it. For full explanation see Sy.'s commentary:— द्रप्सो द्रवणशीलो वृषभः कामानां वर्षिता विश्वरूपो बहुविधरूपोपेत ईदृग्विध एष सोमो वृष्णे कामानां वर्षित्र इन्द्रायेन्द्रस्य पानार्थं समकारि । अभिषवादिभिः संस्कृतोऽभूत् । हे हरिवः ! हरी अश्वौ । तद्वन् ! हे स्थातः ! सर्वेषामधिष्ठातरुग्रोद्‌गूर्णबलेन्द्र ! एतमीदृशं सोमं पिब । प्रदिवि । जातावेकवचनम् । प्रभूतेषु दिवसेषु प्रगतेष्वहःसु वा ईशिषे त्वमेवेश्वरो भवसि । यश्च सोमस्ते तवान्नमन्नत्वेन परिकल्पित एतं पिबेत्यन्वयः ।

४. अभिषुतः Sy. ५. ०तान् D.

६. सेव्यमा० P. ०णात् is suggested for ०णान् ॥ अकृताभिषवात्सोमादन्यदीयात् Sy.

७. वसीयान् वसुमत्तरः प्रशस्यतरः Sy.

८. श्रेष्ठश्च भवति। त्वामतिशयेन रमयितेत्यर्थः Sy.

९. प्र० D. तथा विदुषेऽभिज्ञाय तुभ्यम् Sy.

१०. रमणीयाय तदर्थम् Sy.

११. यजनसाधनं सोमम् Sy.

१२. ०रितव्रद्र० D. हे शत्रूणां तरितरिन्द्र ! Sy.

१३. उपागच्छ Sy.

१४. सर्वाणि Sy.

१५. VM. ignores इन्द्र ।

१६. The *pratīka* is supplied by the Editor. हे इन्द्र ! त्वा त्वां ह्वयामसि । आह्वयामः । अतः कारणात्त्वमर्वाङस्मदभिमुखः सन् आ याहि । आगच्छ । अस्मदीयः सोमश्च ते तन्वे तव शरीरायारं पर्याप्तं भवाति भवतु । त्वदीयं शरीरं यथाभिलाषं तर्पयत्वित्यर्थः । हे शतक्रतो ! बहुविधकर्मन्निन्द्र ! त्वं च सुतेष्वभिषुतेष्वस्मदीयेषु सोमेषु मादयस्व तृप्यस्व । 'मद तृप्तियोगे' । तदनन्तरं पृतनासु सङ्ग्रामेष्वस्मान्प्राव । प्रकर्षेण रक्ष । न केवलं पृतनासु किन्तु विक्षु सर्वासु प्रजास्वस्मान्प्राव । प्ररक्ष Sy.

VI.42.

प्र॒त्य॑स्मै॒ पिपी॑षते॒ विश्वा॑नि वि॒दुषे॑ भर।
अ॒रं॒ग॒माय॒ जग्म॑येऽपश्चाद्द॒घ्वने॒ नरे॑ ॥ १ ॥

[1] प्रत्यस्मै । [2] प्रतिभर । [3] अस्मै । [4] पातुमिच्छते । [5] विश्वान्यन्नानि । [6] विदुषे धनादीनि । [7] पर्याप्तिगामिने । [8] गमनशीलाय । तदानीमेव [9] दहने । [10] नराय नेता नरः ।

एमे॑नं प्र॒त्येत॑न॒ सोमे॑भिः सोम॒पात॑मम्।
अम॑त्रेभिर्ऋजी॒षिण॒मिन्द्रं॑ सु॒तेभि॒रिन्दु॑भिः ॥ २ ॥

[11] एमेनम् । [12] [13] एनमिन्द्रम् । [14] प्रत्यागच्छत । [15] सोमैः । [16] सोमपानम् । [17] पात्रैः । [18] ऋजीष्यन्तम् । [19] इन्द्रः । सुतैः । [20] सोमैः ।

---

१. 'प्रत्यस्मै' इति चतुर्ऋचमेकोनविंशं सूक्तं भरद्वाजस्यार्षमैन्द्रम् । चतुर्थी बृहती शिष्टा अनुष्टुभः । तथा चानुक्रान्तम् 'प्रत्यस्मै चतुष्कमानुष्टुभं बृहत्यन्तम्' (KSA.31.42.p.22.) इति । प्रातःसवनेऽच्छावाकस्येदमुन्नीयमानसूक्तम् । सूत्रितञ्च--'प्रत्यस्मा इत्युन्नीयमानायानूच्य' (ASS.5.7.) इति Sy.

२. हे अध्वर्यो ! Sy.

३. अभिहर । सोमं प्रयच्छेत्यर्थः Sy.

४. इन्द्राय Sy.

५. सर्वाणि नैद्यानि Sy.

६. जानते Sy.

७. पर्याप्तगमनाय Sy.

८. यज्ञेषु गमनशीलाय Sy.

९. दघिर्गतिकर्मा । अपश्चाद्गमनाय सर्वेषामग्रगामिने Sy.

१०. नेत्रे यज्ञानाम् Sy.

११. तृतीये स्वरसाम्नि निष्केवल्ये 'एमेनम्' इति स्तोत्रियस्तृचः । सूत्रितञ्च--'एमेनं प्रत्येतनेत्याद्यो वा सर्वेषाम्' (ASS.8.5.) इति Sy.

१२. ०नमा P.

१३. हे अध्वर्यवः ! Sy.

१४. ०च्छथ P. आ अभिमुखं प्रतिगच्छत Sy.

१५. सोषैः D. सोमैः करणभूतैः Sy.

१६. ०पान D. अतिशयेन सोमस्य पातारम् Sy.

१७. अमत्रैः सोमपात्रैर्ग्रहचमसादिभिः Sy.

१८. ऋजीषवन्तम् is suggested for ऋजीष्यन्तम् ॥ ऋजीषं शत्रूणामुपार्जकं बलम् । तद्वन्तम् । यद्वा ऋजीषिणमित्युत्तरत्र सम्बन्धनीयम् । सुतेभिरभिषुतैरिन्दुभिः सोमैर्ऋजीषिणम् । गतसारः सोम ऋजीषः । तद्वन्तम् । अथवामत्रेभिरमत्रैरमात्रैरपरिमितैः सोमैर्ऋजीषिणम् । ऋजेर्गत्यर्थाद्भावसाधन ऋजीषशब्दः । ततो मत्वर्थीय इनिः । सङ्गतमित्यर्थः । एवंविधमिन्द्रं प्रतिगच्छतेत्यन्वयः । अन्य आह । अमत्रेभिर्ग्रहचमसादिगतैरभिषुतैः सोमैर्ऋजीषिणं बलवन्तमेनमिन्द्रं प्रतिगच्छतेति Sy.

१९. इन्द्रम् is suggested for इन्द्रः ।

२०. VM. ignores ईम् ॥ ईमिति ऽनर्थकः Sy.

यदीं सुतेभिरिन्दुंभिः सोमेंभिः प्रतिभूषंथ ।
वेदा विश्वंस्य मेधिरो धृषत्तंतमिदेषते ॥ ३ ॥

यदि[1] । यदि । सुतैः[2] । दीप्तैः[3] । सोमैरिन्द्रम्[4] । प्रतिभवथ[5] । वेत्यभिलषितम्[6] । विश्वम्[7] । प्राज्ञः[8] । धृष्टः[9] । तं[10] तम् । एव । प्रापयति ।

अस्माअंस्मा इदन्धसोऽध्वर्यो प्र भंरा सुतम् ।
कुवित्संमस्य जेन्यंस्य शर्धतोऽभिशंस्तेरवस्परंत् ॥ ४ ॥

अस्मै । अस्मा[11] अस्मै । एव । सोमान्नस्य[12] । सुतम्[13] । अध्वर्यो[14] ! प्रभर[15] । सर्वस्य । जेतव्यस्य शत्रोः । वेगं कुर्वतः[16] । अभिशस्तेरस्मानिन्द्रः[17] । बहु[18] । अवस्परति[19] तारयति ।

VI.43.

यस्य त्यच्छम्बंरं मदे दिवोंदासाय रन्धयंः ।
अयं स सोमं इन्द्र ते सुतः पिबं ॥ १ ॥

यस्य[20] । यस्य[21] पीतस्य[22] । मदे[23] । तत्[24] त्वं पुरा । दिवोदासाय[25] । शम्बरम्[26] ।

---

१. हे अध्वर्यवः ! Sy. २. अभिषुतैः Sy.
३. उन्दनशीलैर्दीप्तैर्वा Sy.
४. सोमैः is omitted by D.
५. इन्द्रं प्रति यूयं प्रतिगच्छथ । 'भू प्राप्तौ' इत्यस्यैतद्रूपम् Sy.
६. वेत्य० is suggested for वेत्य ॥ जानाति Sy. ७. स इन्द्रः सर्वं भवदीयं कामम् Sy.
८. प्र० D. तदानीं मेधिरो मेधावी । मेधो यज्ञस्तद्वान् वा Sy.
९. ०ष्टं P. ज्ञात्वा च धृषत् शत्रूणां धर्षकः सन् Sy. १०. त P., D. कामम् Sy.
११. Omitted by P. अस्मा एवेन्द्राय नान्यस्मै Sy.
१२. ०मान० P. सोमलक्षणस्यान्नस्य Sy.
१३. अभिषुतं रसम् Sy.
१४. हे अध्वर्यो ! त्वम् Sy.
१५. भर P. सम्प्रहर प्रयच्छेति यावद् Sy.
१६. उत्सहमानस्य शत्रोः Sy.
१७. अभिशंसनात् तत्कृताद्धिंसनात् Sy.
१८. बहुशः Sy.
१९. अप० D. अस्मान् पालयतु Sy.
२०. 'यस्य त्यत्' इति चतुर्ऋचं विंशं सूक्तं भरद्वाजस्यार्षमौष्णिहमैन्द्रम् । अनुक्रम्यते च—'यस्यौष्णिहम्' (KSA. 31.43. p. 22.) इति । महाव्रतेऽपि निष्केवल्येऽप्याष्णिहतृचाशीतावेतत्सूक्तम् । तथैव पञ्चमारण्यके सूत्रितम्—'यस्य त्यच्छम्बरं मद इति त्रयस्तृचा गायत्र्यः' (AA.5.2.5.) इति Sy.
२१. हे इन्द्र ! Sy.
२२. सोमस्य Sy.
२३. पानेन जनिते हर्षे सति Sy.
२४. Omitted by P. त्यदिति क्रियाविशेषणम् । त्यत्तत् प्रसिद्धं यथा भवति तथा रन्धय इत्यर्थः Sy.
२५. राज्ञे Sy.
२६. असुरम् Sy.

वशमनयः[1] । अयमिति[2] सिद्धम् ।

यस्य॑ ती॒व्रसु॑तं॒ मदं॒ मध्य॒मन्तं॑ च॒ रक्ष॑से ।
अ॒यं स सोम॑ इन्द्र ते सु॒तः पिब॑ ॥ २ ॥

यस्य । यस्य[3] । तीक्ष्णसुतम्[4] । मदकरं[5] रसम्[6] । वर्जयसि[7] । तथा[8] मध्यमरसम् । नीचरसम्[9] । च वर्जयसि । सम्यक् सुतमेव पिब[10] ।

यस्य॒ गा अ॒न्तरश्म॑नो॒ मदे॑ दृ॒ळ्हा अ॒वासृ॑जः ।
अ॒यं स सोम॑ इन्द्र ते सु॒तः पिब॑ ॥ ३ ॥

यस्य गाः । यस्य[11] । मदे[12] । शिलोच्चयस्य[13] । अन्तः[14] । पणिभिरपहृताः, दृढाः[15] । गाः । अवासृजः[16] ।

यस्य॑ मन्दा॒नो अन्ध॑सो॒ माघो॑नं दधि॒षे शव॑ः ।
अ॒यं स सोम॑ इन्द्र ते सु॒तः पिब॑ ॥ ४ ॥

यस्य मन्दानः[17] । यस्य । अन्धसः[18] । तृप्यन्[19] । नघवतस्तव[20] सम्बन्धि[21] । बलम्[22] । धारयसि[23] ।

---

१. अहिंसीः । वशीकृतवानसि Sy. रध्यतिर्वश-गमने N.6.32.

२. By अयमिति VM. refers to अयम् । सः । सोमः । इन्द्र । ते । सुतः and पिब ॥ हे इन्द्र ! सोऽयं सोमस्ते त्वदर्थं सुतोऽभिषुतः । अतस्तं पिब Sy.

३. हे इन्द्र ! त्वम् Sy.

४. सोमस्यावयवभूतम् Sy.

५. तीक्ष्णं P. तीक्ष्णं सुतमभिषवो यस्य स तीव्रसुतः प्रातःसवनिकः । तम् Sy.

६. सोमरसम् Sy.

७. रक्षसि Sy.

८. ०यस्ययथा P. मध्यन्दिनसवनगतम् Sy.

९. नीतर० P. तृतीयसवनगतं च सोमरसम् Sy.

१०. सोऽयं सोमस्त्वदर्थमभिषुतस्तं पिब Sy.

११. सोमस्य Sy.

१२. मदकरे रसे पीते सति Sy.

१३. वलासुरेण निहितस्य पर्वतस्य Sy.

१४. मध्ये विद्यमानाः Sy.

१५. दृढपिधानाश्च Sy.

१६. वलस्य बन्धनाद्व्यसृजः स सोम इत्यादि गतम् Sy.

१७. हे इन्द्र ! त्वम् Sy.

१८. सोमलक्षणस्यान्नस्य Sy.

१९. पानेन मन्दानो मन्दमानो हृष्टः सन् Sy.

२०. ०वतस्तस्य D. ऐन्द्रम् Sy.

२१. पसंधि P.

२२. असाधारणं बलम् Sy.

२३. धारयसि । येन सोमेन तवेन्द्रत्वं जातमित्यर्थः । सोऽयं सोमः सुतोऽभिषुतस्तं पिब Sy.

VI.44.

**यो रयिवो रयिंतमो यो द्युम्नैर्द्युम्नवत्तमः ।**
**सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ १ ॥**

[1]यो रयिवः । ॥ शंयुर्बार्हस्पत्यः[2] ॥ यः[3] । धनवन्[4] ! धनवत्तमः[5] । यश्च । अन्नैः[6] । अन्नवत्तमः[7] । सोमः । सुतः[8] । इन्द्र ! त्वदर्थम् । ततश्च स्वधापते[9] ! तव । अस्ति[10] । मदः[11][12] ।

**यः शग्मस्तुविशग्म ते रायो दामा मतीनाम् ।**
**सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ २ ॥**

यः शग्मः । यः[13] । सुखतरः[14] । बहुसुख[15] ! ते[16] । धनम्[17] । मतीनां स्तोतृविषयाणाम्[18] । दाता ।

**येन वृद्धो न शवसा तुरो न स्वाभिरूतिभिः ।**
**सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ ३ ॥**

येन वृद्धः । येन[19] । वृद्धे[20] । न[21] । सेनाबलेन[22] । शत्रून् तरसि[23] । न च[21] । स्वैः[24] । मरुद्भिः[25], अपि तात्मनैव[26] तुरो भवसि ।

---

१. चतुर्थेऽनुवाके षट् सूक्तानि तत्र 'यो रयिवः' इति चतुर्विंशत्यृचं प्रथमं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षमैन्द्रम् । आदितः षडनुष्टुभः सप्तम्यष्टमीनवम्यो विराजोऽष्टम्येकैव वा विराट्, शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—'यो रयिवश्चतुर्विंशतिः शंयुर्बार्हस्पत्यो ह्यादौ षळनुष्टुभस्तिस्रश्च विराजो मध्यमैव वासाम्' (KSA. 31.44.p.22.) इति। गतः सूक्तविनियोगः Sy.

२. ०हस्प० P.

३. सोमः Sy.

४. धनं P., D. हे धनवन् ! इन्द्र ! Sy.

५. अतिशयेन रयिमान् धनवान् Sy.

६. द्योतमानैर्यशोभिः Sy.

७. ०म P. अतिशयेन यशस्वी Sy.

८. अभिषुतः सन् Sy.

९. ०वते P. हे स्वधापते ! स्वधाया अन्नस्य सोमलक्षणस्य पालक ! Sy.

१०. भवति Sy.

११. ०दा P. मदकरः Sy.

१२. VM. ignores सः ॥ सोमः Sy.

१३. सोमः Sy.

१४. सुखकरः Sy.

१५. हे बहुसुखेन्द्र ! Sy.

१६. त्वदीयः Sy.

१७. धनस्य दाता भवति। हे स्वधापते ! इन्द्र ! स सोमोऽभिषुतस्तव मदकरो भवति Sy.

१८. धनमृतीनां D. स्तोतॄणाम् Sy.

१९. पीतेन सोमेन Sy.

२०. वृद्धः is suggested for वृद्धे ॥ प्रवृद्धश्च सन् Sy.

२१. इमौ नशब्दौ समुच्चयार्थौ Sy.

२२. बलेन Sy.

२३. शत्रूणां हिंसकश्च भवसि Sy.

२४. आत्मीयैः Sy.

२५. मरुद्भिः सार्धम् Sy.

२६. त्वात्मनैव is suggested for तात्मनैव ।

त्यमु॑ वो॒ अप्र॑हणं गृणी॒षे शव॑स॒स्पति॑म् ।
इन्द्रं॑ विश्वा॒साहं॒ नरं॒ मंहि॑ष्ठं वि॒श्वच॑र्षणिम् ॥ ४ ॥

त्यमु वः[1] । तम्[2] । एव । युष्माकम्[3] । प्रहन्तारम्[4] । स्तुहि स्तोतः[5] ! बलस्य पतिम्[6] । इन्द्रम्[7] । सर्वसह[8] । नेतारम्[9] । दातृतमम् । सर्वस्य द्रष्टारम् ।

यं व॒र्धय॒न्तीद्गिरः॒ पतिं॑ तु॒रस्य॒ राध॑सः ।
तमिन्न्व॑स्य॒ रोद॑सी दे॒वी शुष्मं॑ सपर्यतः ॥ ५ ॥

यं वर्धयन्ति । यम्[10] । वर्धयन्ति । एव । स्तुतयः । पतिम्[11] । तारकस्य[12] । धनस्य[13] । तम् । एव । इन्द्रस्य । शुष्णं[14] बलम् । दवी[15] । द्यावापृथिवी[16] । पूजयितः[17] ।[18]

तद्व॑ उ॒क्थस्य॑ ब॒र्हणे॒न्द्रायो॑पस्तृणी॒षणि॑ ।
विपो॒ न यस्यो॒तयो॒ वि यद्रोह॑न्ति स॒क्षितः॑ ॥ ६ ॥

तद् वः[19] । सा । युष्माकम्[20] । उक्थस्य[21] । बर्हणा[22] । इन्द्राय[23] । उपस्तरीरणीयाः[24] । मेधाविनः[25] । इव

---

१. पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रउगशस्त्रे 'त्यमु वः' इत्यैन्द्रस्तृचः । सूत्रितञ्च—'त्यमु वो अप्रहणमप त्यं वृजिनं रिपुम्' (ĀSS. 7.11.) इति Sy.
२. हे ऋत्विग्यजमानाः ! Sy.
३. इन्द्रम् Sy.
४. युष्मदर्थम् Sy.
५. प्रहस्तारं P. अप्रहन्तारम् is suggested for प्रहन्तारम् ॥ अप्रहन्तारं भक्तानामनुग्राहकम् Sy.
६. स्तौमि । यद्वा वो यूयं गृणीषे गृणीत स्तुत, वचनव्यत्ययः Sy.
७. पालकम् Sy.
८. ०सहम् is suggested for ०सह ॥ विश्वस्य शत्रोरभिभवितारम् Sy.
९. हेतारं P.
१०. इन्द्रसम्बन्धिनम् Sy.
११. ईश्वरम् Sy.
१२. ०कस्येव P. हिंसकस्य शत्रोः Sy.
१३. धनस्य । शत्रुधनानामपहर्तारमित्यर्थः Sy.
१४. शुष्मम् is suggested for शुष्णम् ॥ शोषकं बलम् Sy.
१५. दिवी P. देवी is suggested for दवी ॥ देवनशीले Sy.
१६. द्यावापृथिव्यौ Sy.
१७. ०यतः is suggested for ०यितः ॥ परिचरतः Sy.
१८. VM. ignores नु ॥ क्षिप्रम् Sy.
१९. हे स्तोतारः ! Sy.
२०. युष्मदीयस्य Sy.
२१. उक्थ P. स्तोत्रस्य Sy.
२२. बहुत्वं माहात्म्यम् Sy.
२३. इन्द्रोय P. इन्द्रार्थम् Sy.
२४. उपस्तरणीयाः is suggested for उपस्तरीरणीयाः ॥ उपस्तरणीयम् । उपेत्य विस्तरणीयम् । इन्द्रो यथा स्तोत्रस्य माहात्म्यं जानीयात् तथा विस्तार्यत इत्यर्थः Sy.
२५. मेधाविनः । सर्वकार्यकुशला इत्यर्थः । यद्वा नेति पूरकः । विपो विप्रस्य मेधाविनो यस्येन्द्रस्येति योज्यम् Sy.

भवन्ति । यस्य[1] । रक्षणानि[2] जागरणशीलानि । यस्माच्च[3] । विरोहन्ति[4] । सक्षितः[5] समान इन्द्रे निवसन्तः[6] सप्तान्य आदित्याः 'आ यस्मिन् सप्त वासवाः'[7] इत्युक्तम् ।

**अविंदद्दक्षं मित्रो नवीयान्पपानो देवेभ्यो वस्यो अचैत् ।**
**ससवान्स्तौलाभिर्धौतरीभिरुरुष्या पायुरभवत्सखिभ्यः ॥ ७ ॥**

**अविदत्**[8] । जानाति । प्रवृद्धम्[9] । यजमानस्य[10] मित्रभूत[11] इन्द्रः, पुल्लिङ्ग[12] मित्रशब्दश्छन्दसीत्युक्तम्[13] । नवतरः[14] । सोमं पिबन् इन्द्रः । देवेभ्यः[15] । अभ्युदयम्[16] । चिनोति[17] । अन्नवान्[18] । स्तरणशीलाभिश्छादयित्रीभिः[19] । धवन्तीभिरूतिभिर्मरुद्भिः[20] ! रक्षणेच्छायाम्[21] । रक्षकः[22] । भवति । यजमानेभ्यो[23] देवेभ्यो वेति ।

**ऋतस्य पथि वेधा अपायि श्रिये मनांसि देवासो अक्रन् ।**
**दधानो नाम महो वचोभिर्वपुर्दृशये वेन्यो व्यावः ॥ ८ ॥**

**ऋतस्य** । सत्यस्य[24] । मार्गे यज्ञे[25] । सोमः[26] । पीतये[27] । तत्र यणाय[28] । मनांसि[29] । देवाश्च[30] । कुर्वन्ति[31] ।

---

१. इन्द्रस्य Sy.
२. रक्षाः Sy.
३. यस्मिंश्चेन्द्रे Sy.
४. प्रादुर्भवन्ति । तस्मा इन्द्रायेत्यर्थः Sy.
५. समाननिवासाः संहता ऊतयः Sy.
६. ०सतः P.
७. TS.I.6.12.2.
८. स इन्द्रः Sy.
९. वृद्धं P. कर्मसु समर्थं प्रवृद्धं वा यष्टारम् Sy.
१०. ०न D.
११. ०तं P.
१२. पुंलिङ्गश्च P. पुंल्लिङ्गश्च is suggested for पुल्लिङ्ग ।
१३. मित्रशब्दः is omitted by D.
१४. ०रस्मिन् P., D. कल्याणतरः स्तुत्यतरो वा Sy.
१५. स्तोतृभ्यः Sy.
१६. वसीयः श्रेष्ठं धनम् Sy.
१७. उपचितं करोति ।. ददातीति यावत् Sy.
१८. हविर्लक्षणान्नोपेतः । यद्वा ससवानिति सनतेः क्वसौ रूपम् । सम्भजमान इति सम्बन्धः Sy. ससमित्यन्ननाम Ngh. 2.7.
१९. स्थूलाभिः प्रवृद्धाभिः Sy.
२०. ०न्तिभिः P. कम्पनकारिणीभिर्वडवाभिरीदृशैर्मरुद्भिर्वा युक्तः सन् Sy.
२१. रक्षणेच्छयाऽऽगत्य Sy.
२२. रक्षणः P.
२३. स्तोतृभ्यः Sy.
२४. यज्ञस्य Sy.
२५. यज्ञ P.
२६. विधाता सर्वस्य द्रष्टा सोमः Sy.
२७. पीयते is suggested for पीतये ॥ इन्द्रेण पीतोऽभूत् । यद्वा वेधा विधातेन्द्रोऽपायि । सोमं पिबतु । व्यत्ययेन कर्तरि चिण् Sy.
२८. श्रयणाय is suggested for यणाय ॥ श्रयितुम् Sy.
२९. इन्द्रस्य मनांसि Sy.
३०. स्तोतार ऋत्विजः Sy.
३१. कर्माणि कुर्वन्ति Sy.

तस्मिन् यज्ञे स्तुतिभिः[1] । नमनम्[2] । दधानः[3] । महानिन्द्रः[4] । स्वः[5] वपुः[6] । दर्शनाय[7] । कमनीयः[8] । विवृणोति 'छन्दस्यपि दृश्यते'[9] इत्याधाग[10] ?

द्युमत्तमं दक्षं धेह्यस्मे सेधा जनानां पूर्वीररातीः ।
वर्षीयो वयः कृणुहि शचीभिर्धनस्य सातावस्माँ अविड्ढि ॥ ९ ॥

द्युमत्तमम्[11] । दीप्ततमम्[12] । बलम् । अस्मभ्यम्[13] । धेहि[14] । निषेध[15] च । जनानामस्माकम्[16] । इमा[17] वह्वीः[18] । अराती[19] । वृद्धतरम्[20] । अन्नं च । कुरु । प्रज्ञाभि[21] । धनलाभार्थम्[22] । अस्मान् । रक्षेति[23] ।

इन्द्र तुभ्यमिन्मघवन्नभूम वयं दात्रे हरिवो मा वि वेनः ।
नकिरापिर्ददृशे मर्त्यत्रा किमङ्ग रध्रचोदनं त्वाहुः ॥ १० ॥

इन्द्र तुभ्यमित् । इन्द्र ! तुभ्यम् । एव । नवन्[24] ! अभूम । वयम्[25] । दात्रे[26] । हरिवः[27] ! तथा सति

---

१. ०भि P.
२. शत्रूणां नामकम् Sy.
३. धारयन् Sy.
४. ०न्द्र P. महत् Sy.
५. स्वं is suggested for स्वः ॥ आत्मीयम् Sy.
६. शरीरम् Sy.
७. दर्शनार्थम् Sy.
८. वननीयः सम्भजनीयश्च सन् । यद्वा वेन्य इति वेनतेः कान्तिकर्मणो रूपम्, वपुरिति च रूपनाम (Ngh. 3.7.) वेन्यः कमनीयो वपुर्भास्वरं रूपं दृशये दर्शनार्थं व्यावः विवृणोतु वचोभिः स्तूयमानः सन् Sy.
९. Pa.6.4.73. P. reads छन्दस्यचोदकमाहुः माजस्वने मा हिंसित्रे विदृश्यत इत्याग । The additional passage in P. has a striking resemblance with a part of the commentary on RV. VI.44.10.,11. (चोदकम् । आहुः ॥ मा जस्वने । मा । हिंसित्रे)
१०. इत्याट् is suggested for इत्याधाग । This is to explain the formation of the word आवः ।
११. हे इन्द्र ! Sy.
१२. दीप्तिमत्तमम् Sy.
१३. अस्मासु Sy.
१४. धारय Sy.
१५. निषीद P. निवारय Sy.
१६. स्तोतॄणाम् Sy.
१७. ०मं P. ०नामस्मामि० D.
१८. बह्वीं P.
१९. ०ति P. अरातीः is suggested for अराती ॥ शत्रुसेनाः Sy.
२०. कुरुतरम् P., D.
२१. ०ज्ञाभः P. ०भिः is suggested for ०भि ॥ आत्मीयाभिः प्रज्ञाभिः Sy.
२२. VM. seems to explain धनस्य and सातौ together as धनलाभार्थम् ॥ धनस्य सातौ सम्भजने । यद्वा धनस्य सम्भजनार्थम् Sy.
२३. ०स्मान्रक्षे० P. गमय, रक्ष Sy.
२४. धनवन् is suggested for नवन् ।
२५. वयं शेषभूताः । यद्वा त्वदर्थमेव वर्तमानाः Sy.
२६. कामानां दात्रे Sy.
२७. हे हरिवन्निन्द्र ! Sy.

मा। विगतकामोऽभूः[1]। न कश्चिदन्यस्त्वत्तः। बन्धुः। मर्त्येषु[2]। दृश्यते त्वं च नागच्छसि। कथम्। त्वाम्[3]। क्षिप्रम्। रन्ध्रस्यापेतस्य[4] चोदकम्[5]। आहुः[6]।

**मा जस्वने वृषभ नो ररीथा मा ते रेवतः सख्ये रिषाम।**
**पूर्वीष्ट इन्द्र निष्षिधो जनेषु जह्यसुष्वीन्प्र वृहापृणतः॥ ११॥**

मा जस्वने[7]। मा। हिंसित्रे। वृषभ[8]! अस्मान्[9]। दाः। मा। ते[10]। धनवतः। सख्ये[11] वर्तमानाः। हिंस्या भूम[12]। बहूनि[13]। ते[14]। इन्द्र! निषेधनानि[15], आयुधानि विद्यन्ते। जनेषु[16]। जहि[17]। अयजमानान्[18]। प्रवृह[19]। अप्रयच्छतः[20]।

**उदभ्राणीव स्तनयन्नियतीन्द्रो राधांस्यश्व्यानि गव्या।**
**त्वमसि प्रदिवः कारुधाया मा त्वादामान आ दभन्मघोनः॥ १२॥**

उदभ्राणीव[21]। उदीययति[22]। स्तनयति स्तनयन्[23] इव पर्जन्यः। मेघान्। इन्द्रः। धनानि। अश्वसमूहान्[24]। गोसमूहांश्च[25]। त्वम्[26]। असि[27]। पुराणः। स्तोतॄणां धर्ता[28]। मा। त्वा[29]। अदातारोऽयजमानाः[30]।

---

१. विशत॰ D. विगतकामोऽभूः। अस्मान् सर्वदा कामयस्व Sy. वेनतिः कान्तिकर्मा N. 10. 38.
२. मर्त्येषु मनुष्येषु मध्ये Sy.
३. किमनेन विशेषकथनेन? अङ्ग हे इन्द्र! Sy.
४. ॰स्यावेक्षि॰ P. रध्रस्य राधकस्य समृद्धस्य धनस्य चोदनं चोदयितारम् Sy.
५. मोद॰ P.
६. कथयन्ति पुराजाः Sy.
७. जसिरुपक्षयकर्मा। उपक्षपयित्रे राक्षसादये Sy.
८. हे कामानां वर्षितरिन्द्र! Sy.
९. अस्यान् D.
१०. तव Sy.
११. सख्ये सखित्वे वर्तमाना वयम् Sy.
१२. हिंसिता मा भूम Sy.
१३. बह्वीः Sy.
१४. त्वदीयाः Sy.
१५. निःषेधा निवारणानि Sy.
१६. शत्रुषु निहिताः सन्ति। यद्वा निष्षिधो निषेधार्था रज्जवः। ताः शत्रुजनेषु तव बह्वचो विद्यन्ते। अतः कारणात् Sy.
१७. मारय Sy.
१८. अनभिषोतॄन् अयजमानान् Sy.
१९. उन्मूलय Sy.
२०. हवींष्यप्रयच्छतश्च। 'पृण दाने' इति धातुः Sy.
२१. ॰भ्राणि D.
२२. उदिययति P. उदीरयति is suggested for उदीययति॥ उद्गमयति स्तोतृभ्यो दातुम् Sy.
२३. गर्जयन् पर्जन्यो यथा मेघानुद्गमयत्येवम् Sy.
२४. अश्वसम्बन्धीनि Sy.
२५. गव्यानि गोसम्बन्धीन्येतत्समूहद्वयरूपाणि Sy.
२६. उत्तरार्धः प्रत्यक्षकृतः। हे इन्द्र! त्वम् Sy.
२७. भवसि Sy.
२८. कारूणां स्तोतॄणां धारयिता Sy.
२९. त्वाम् Sy.
३०. हविषामदातारः Sy.

अ[1] दभन् उदपसर्पन्तु[2]। धनवन्तः[3]।

**अध्वर्यो वीर प्र महे सुतानामिन्द्राय भर स ह्यस्य राजा।**
**यः पूर्व्याभिरुत नूतनाभिर्गीर्भिर्वावृधे गृणतामृषीणाम् ॥ १३ ॥**

**अध्वर्यो।** वीरो[4] वीरयति सोमम्। भर[5]। महते। सोमान्[6]। इन्द्राय। सः[7]। हि[8]। अस्य[9] सुतस्य। राजा[10] भवति। यः[7]। प्रत्नाभिः[11]। अपि च। नूतनाभिः[12]। गीर्भिः[13]। वावृधे[14]। स्तुवताम्। ऋषीणाम्[15][16]।

**अस्य मदे पुरु वर्पांसि विद्वानिन्द्रो वृत्राण्यप्रती जघान।**
**तमु प्र होषि मधुमन्तमस्मै सोमं वीराय शिप्रिणे पिबध्यै ॥ १४ ॥**

**अस्य मदे[17]।** सोमस्य[18]। मदे[19]। बहूनि[20]। वारकाणि[21]। विद्वान्[22]। इन्द्रः। वृत्राणि शत्रून्। अप्रतिगतोऽन्यैः[23]। जघान[24]। तम्[25]। एव। अस्मै। मधुमन्तम्[26]। प्रजुहुधि[27]। सोमम्। वीराय[28]। शिप्रिणे[29]। पातुम्[30]।

---

१. अ P. ०मना (र्वषितूरश्मयो न शीला अस्मदभिमुखा वृषणोभिमुखावृषणो वेग) अ D. The additional passage in D. has a striking resemblance with a part of the commentary on RV. VI.44.19. (०मानाः। र्वषितूरश्मयः। नशीलाः। अस्मदभिमुखाः। वृषणोऽभिमुखा वृषणो वेग०) अ। is suggested for अ।
२. उदवस० P. हिंसिषुः Sy.
३. धनवन्तः कृपणाः। यद्वा वचनव्यत्ययः। मघवानं धनवन्तं त्वामिति सम्बन्धः Sy.
४. हे हविषां विशेषेण प्रेरयितः! Sy.
५. प्रहर प्रगमय Sy.
६. सुतानाम्। कर्मणि षष्ठी। सुतानभिषुतान् सोमान् Sy.
७. इन्द्रः Sy.
८. खलु Sy. ९. सोमस्य Sy.
१०. स्वामी Sy.
११. पूर्वकाले कृताभिः Sy.
१२. इदानीं क्रियमाणाभिः Sy.
१३. उभयविधाभिः स्तुतिभिः Sy.
१४. वावृधः P. ववृधे is suggested for वावृधे॥ वर्धते। स इन्द्रो यस्मात् सोमस्य राजा तस्मादस्मै सोमः प्रदेय इत्यर्थः Sy.
१५. ऋषीणां सम्बन्धिनीभिः Sy.
१६. VM. ignores अध्वर्यो and प्र।
१७. प्रथमे रात्रिपर्याये मैत्रावरुणस्य 'अस्य मदे' इति शस्त्रयाज्या। सूत्रितञ्च—'अस्य मदे पुरु वर्पांसि विद्वानिति याज्या' (ĀŚS. 6. 4.) इति Sy.
१८. सोमस्य पानेन Sy.
१९. हर्षे सति Sy.
२०. बहूनि पुरूणि Sy.
२१. आवरकाणि Sy.
२२. अभिज्ञः Sy.
२३. प्र० D. स्वयमन्यैरप्रतिगतः सन् Sy.
२४. हतवान्। यद्वा वर्प इति रूपनाम (Ngh.3.7.)। बहूनि वर्पास्यसुरमायया निर्मितानि रूपाणि विद्वान् जानन्निन्द्रो वृत्राण्यावरकाणि रक्षःप्रभृतीनि इतः पूर्वमन्यैरप्रतिगतानि जघान Sy.
२५. सोमम् Sy.
२६. माधुर्यवन्तम् Sy.
२७. हे अध्वर्यो! प्रजुहुधि Sy.
२८. शत्रूणां वीरयित्रे इन्द्राय Sy.
२९. शोभनहनुकाय Sy.
३०. वातुम् D.

उत्तरा निगदसिद्धा ।

पाता॑ सु॒तमिन्द्रो॑ अस्तु॒ सोमं॑ ह॒न्ता वृ॒त्रं वज्रे॑ण मन्दसा॒नः ।
गन्ता॑ य॒ज्ञं प॑रा॒वत॑श्चि॒दच्छा॒ वसु॑र्धी॒नाम॑वि॒ता का॒रुधा॑याः ॥ १५ ॥

[१] [ पाता सुतम् । ][२]

इ॒दं त्यत्पात्र॑मिन्द्र॒पान॒मिन्द्र॑स्य प्रि॒यम॒मृत॑मपायि ।
मत्स॒द्यथा॑ सौमन॒साय॑ दे॒वं व्य१॒॑स्मद्द्वेषो॑ यु॒यव॒द्व्यंहः॑ ॥ १६ ॥

[३] इदं त्यत् । तत् । इदम् । पानीयम्[४] । इन्द्रस्य पानार्हम् । इन्द्रस्य । प्रियम्[५] । सोमात्मकममृतम् । इन्द्रेण पीतमस्तु[६] । मादयेत्[७] । यथा[८] । सुमनस्त्वाय[९] । देवम्[१०] । इन्द्रः[११] करोति च[१२] । अस्मत्तः । द्वेषः[१३] । अहश्च[१४][१५] ।

ए॒ना म॑न्दा॒नो ज॒हि शू॑र॒ शत्रू॑ञ्जा॒मिमजा॑मिं मघवन्न॒मित्रा॑न् ।
अ॒भि॒षे॒णाँ अ॒भ्या॒३॒॑देदि॑शाना॒न्परा॑च इन्द्र॒ प्र मृ॑णा ज॒ही च॑ ॥ १७ ॥

एना मन्दानः[१६] । सोमेन[१७] । माद्यन्[१८] । जहि[१९] । शूर[२०] ! शत्रून् । तत्र च जामिम्[२१] । अजामिं च[२२] ।

---

१. द्वितीये रात्रिपर्याये मैत्रावरुणस्यैव 'पाता सुतम्' इति शस्त्रयाज्या । सूत्रितञ्च—'पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रमिति याज्या' (ĀSS. 6. 4.) इति Sy.

२. The *pratīka* is supplied by the Editor. अयमिन्द्रः सुतमभिषुतं सोमं पातास्तु। साधु पाता भवतु । साधुकारिणि तृन् । अत एव 'न लोकाव्यय०' इति षष्ठीप्रतिषेधात् द्वितीया । एवं हन्तेत्यादावपि द्रष्टव्यम् । तेन च सोमेन मन्दसानो माद्यन् वज्रेणायुधेन वृत्रमावरकं शत्रुं हन्तास्तु भवतु । एतदुभयार्थं परावतश्चित् दूरदेशादपि यज्ञमच्छास्मदीयं यज्ञमभिगन्ता भवतु । दूरदेशस्थोऽपि शीघ्रमस्मद्यज्ञे सोमपानाय गच्छत्वित्यर्थः । कीदृश इन्द्रः ? वसुः सर्वेषां निवासयिता । धीनां ध्यातॄणां स्तोतॄणां कर्मणां वाविता रक्षिता । कारुधायाः कारूणां कर्तॄणां यजमानानां धारयिता Sy.

३. तृतीये रात्रिपर्याये प्रशास्तुः 'इदं त्यत्' इति शस्त्रयाज्या । सूत्रितञ्च—'इदं त्यत्पात्रमिन्द्रपानमिति याज्या' (ĀSS.6.4.) इति Sy.

४. पातव्यम् Sy. ५. अनुकूलम् Sy.

६. इन्द्रः पिबतु । व्यत्ययेन कर्तरि चिण् । यद्वा एतदमृतमपायि । इन्द्रेण पीयताम् Sy.

७. मादयेत् तथा पीयतामित्यर्थः Sy.

८ यथ P. येन प्रकारेण पीतः सोमः Sy.

९. सुमरस्त्वाय D. १०. इन्द्रम् Sy.

११. स पीतसोम इन्द्रश्च Sy.

१२. पृथक् seems to be omitted before करोति ॥ वियोजयतु Sy.

१३. द्वेष्टॄन् Sy.

१४. अंहः is suggested for अह० ॥ पापं च वियोजयतु Sy.

१५. VM. ignores वि ।

१६. एषा D.

१७. एनेन प्रकृतेनानेन सोमेन Sy.

१८. मन्दमानो माद्यन् Sy.

१९. हिंसितान् कुरु Sy.

२०. शौर्यवन्निन्द्र ! Sy.

२१. ज्ञातिम् Sy.

२२. तद्विलक्षणमेवमुभयविधान् Sy.

अमित्रान्[2] । अभिगतसेनान्[2] । अस्मान्[3] प्रति । आयुधान्याभिमुख्येनातिसृजति[4] । पराचः[5] । इन्द्र ! प्रमृणीयहि[6]—सञ्चूर्णय । चेहि[7] । चेति[8] ।

**आसु ष्मा णो मघवन्निन्द्र पृत्स्व१स्मभ्यं महि वरिवः सुगं कः ।**
**अपां तोकस्य तनयस्य जेष इन्द्र सूरीन्कृणुहि स्मा नो अर्धम् ॥ १८ ॥**

आसु[9] । एषु । अस्मभ्यम् । सङ्ग्रामेषु[10] । धनम् । कुरु । सुखं[11] च कुरु । उदकानाम्[12] । पुत्रस्य[13] । तत्पुत्रस्य[14] च । जयार्थम्[15] । इन्द्र ! स्तोतॄन् । अस्मान् । अर्धभूतानात्मनः[16] । कुरु[17] ।

**आ त्वा हरयो वृषणो युजाना वृषरथासो वृषरश्मयोऽत्याः ।**
**अस्मत्राञ्चो वृषणो वज्रवाहो वृष्णे मदाय सुयुजो वहन्तु ॥ १९ ॥**

आ त्वा हरयः[18] । आवहन्तु । त्वा[19] । हरयः[20] । वर्षितारः[21] । युज्यमानाः[22] । वर्षितृरश्मयः[23] । नशीलाः[24] । अस्मदभिमुखाः[25] । वृषणोऽभिमुखा[26] वृषणो वेगस्य[27] । वोढार आयुधानां पार्श्वनिहितानाम्[28] । वृष्णे[29] । सोमाय[30]

---

१. अस्मत्प्रतिकूलाचरणपरान् Sy.
२. अमित्रंनहिगतासेनन् P. अहिगतसेनान् D. अस्मान्प्रत्यभिगताः सेना येषां तादृशान् Sy.
३. अस्मदभिमुखम् Sy.
४. ०सृजतः is suggested for सृजति ॥ आयुधानि पुनः पुनरादिशतो विसृजतः शत्रून् च Sy.
५. ते यथा पराङ्मुखा भवन्ति तथा Sy.
६. ०णीहि is suggested for ०णीयहि ॥ बाधस्व Sy.
७. जहि is suggested for चेहि ॥ तदनन्तरं तान् जहि च Sy.
८. VM. ignores मघवन् ॥ हे मघवन् ! धनवन् ! Sy.
९. ०सुः P.
१०. पृतनासु सङ्ग्रामेषु Sy.
११. सुखेन प्राप्यम् Sy.
१२. आप्तव्यानां धनानां वा उदकानां वा Sy.
१३. दकानां कुत्रस्य च P.
१४. पौत्रस्य च Sy.
१५. यजार्थम् P.
१६. अस्मा द्धभू० P. अस्मार्द्धभू० D. समृद्धान् । यद्वा अर्धकारिणः शत्रूणां खण्डयितॄन् Sy.
१७. VM. ignores स्म । नः । मघवन् । and महि ॥ स्मेति पूरणः । नः अस्मदीयासु । हे धनवन्निन्द्र ! महि महत् Sy.
१८. हे इन्द्र ! Sy.
१९. त्वाम् Sy.
२०. अश्वाः Sy.
२१. कामानां वर्षितारः Sy.
२२. स्वयमेव रथे युज्यमानाः Sy.
२३. ०षितूर० P. वर्षितारो रश्मयः प्रग्रहा येषां तादृशाः Sy.
२४. अतनशीलाः is suggested for नशीलाः ॥ सततगामिनः Sy.
२५. अस्मान्प्रत्यञ्चन्तो गच्छन्तः Sy.
२६. वृषणोऽभिमुखाः is doubtful.
२७. नित्यतरुणाः Sy.
२८. वज्रादीन्यायुधानि वहन्तः Sy.
२९. वर्षित्रे Sy.
३०. मदकराय सोमाय, ईदृशं सोमं पाययितुम् Sy.

पुमांसं सोमापातुम्[१] । सुयुजः[२] । वहन्तु[३] ।

**आ ते॑ वृष॒न्वृष॑णो॒ द्रोण॑मस्थुर्घृत॒प्रुषो॒ नोर्मयो॒ मद॑न्तः ।**
**इन्द्र॒ प्र तुभ्यं॒ वृष॑भिः सु॒तानां॒ वृष्णे॑ भरन्ति वृष॒भाय॒ सोम॑म् ॥ २० ॥**

आ ते । आतिष्ठन्तु[४] । तव[५] । वर्षितः[६] ! अश्वाः[७] । द्रोणकलशम्[८] । उदकबिन्दुक्षारिणः[९] । इव । सिन्धोरूर्मयः[१०] । माद्यन्तः[११] । इन्द्र ! प्रभरन्ति[१२] । तुभ्यम् । ग्रावभिः[१३] । सुतानाम्[१४] । वृष्णे[१५] । कामानां वर्षित्रे[१६] अभिषुतं सोमं[१७] नृहितमम्[१८] ।

**वृषा॑सि दि॒वो वृ॑ष॒भः पृ॑थि॒व्या वृषा॒ सिन्धू॑नां वृष॒भः स्तिया॑नाम् ।**
**वृष्णे॑ त॒ इन्दु॑र्वृषभ पीपाय स्वा॒दू रसो॑ मधु॒पेयो॒ वरा॑य ॥ २१ ॥**

वृषासि[१९] । वर्षिता[२०] । भवसि[२१] । द्यावापृथिव्योः[२२] । सिन्धूनां स्यन्दमानानाम्[२३] । स्तियायां[२४] सङ्घीभूतानाम्[२५]

---

१. सोमं पाययितुम् is suggested for सोमापातुम् ।
२. शोभनयोजनाः Sy.
३. VM. ignores वृषरथासः ॥ वृषरथासः । वृषा कामाभिवर्षको रथो येषां ते तथोक्ताः Sy.
४. आतिष्ठन्त । अतस्त्वमागच्छेति भावः Sy.
५. त्वदीयम् Sy.
६. हे कामानां वर्षितः ! इन्द्र ! Sy.
७. वर्षितारश्च P. सेक्तारो युवानस्त्वदीया अश्वाः Sy.
८. द्रुममयं रथम् Sy.
९. घृतमुदकं सिञ्चन्तः Sy.
१०. ऊर्पं मयः P.
सामुद्रास्तरङ्गा इव Sy.
११. हृष्यन्तः मत्ताः सन्तः Sy.
१२. यस्मादध्वर्यवः प्रहरन्ति होमार्थं प्रणयन्ति तस्मादागच्छेत्यर्थः Sy.
१३. कामानामभिवर्षकैर्ग्रावभिः Sy.
१४. अभिषुतानां सोमानां मध्ये Sy.
१५. यूने नित्यतरुणाय Sy.
१६. कामानां वर्षयित्रे तुभ्यम् Sy.
१७. त्वद्भागरूपं सोमम् Sy.
१८. गृहीतमं P. नृहितम् is suggested for नृहितमम् ।
१९. शंयोर्बार्हस्पत्यस्येदमार्षम् Dur. शंयोरार्षम् SKN.
२०. हे इन्द्र ! हविर्भिः सेक्ता Sy. हे इन्द्र ! वृषा असि दिवो वर्षितासि Dur. इन्द्र उच्यते वृषा वर्षिता SKN.
२१. त्वमसि SKN.
२२. ०थिव्यो P. द्युलोकस्य भूमेश्च Sy. दिवः, षष्ठीश्रुतेरर्थयेति शेषः । वृषभो वर्षिता पृथिव्या अर्थाय SKN.
२३. स्यन्दनशीलानां च नदीनाम् Sy. स्यन्दनानामपां च वर्षिता Dur. सिन्धवो नद्यः । नदीनामप्यर्थाय । द्यावापृथिव्योर्हि नदीनां च स्थितिर्वृष्टिः (वृष्टौ) प्रसिद्धा । अत एवमुच्यते द्युलोकादीनामर्थाय वर्षितेति SKN.
२४. स्तियानां is suggested for स्तियायाम् ।
२५. स्थावरजङ्गमात्मनां प्राणिनाम् । यद्वा स्तियाः सङ्घीभूता आपस्तासां वर्षितासि Sy.
संहन्त्रीणामपाम् । अथवा—संहतानामात्मनैव हिमभावेन । यावत्किञ्चित् सेचनकर्म, तत्सर्वं त्वदधीनमित्यभिप्रायः Dur.
कस्य पुनर्वर्षिता ? उच्यते, वृषभः स्तियानाम् SKN.

स्थावराणाम्[1]। वृष्णे[2]। तुभ्यम्[3]। इन्दुः[4]। वर्षितः ![5] प्यायते[6]। स्वादुः[7]। रसः[8]। मधुवत्पेयः[9]। वरणीयाय[10]।

**अयं देवः सहसा जायमान इन्द्रेण युजा पणिमस्तभायत् ।**
**अयं स्वस्य पितुरायुधानीन्दुरमुष्णादशिवस्य मायाः ॥ २२ ॥**

अयम्[11]। अयम्[12]। देव इन्द्रः[13]। सहसः[14]। जायमानः[15]। इन्द्रेण त्वया। सहायेन[16]। पणि वलसुरम्[17]। अस्तभात्[18]। अयम्। गोधनस्य[19]। पालयितुः वलस्य। आयुधानि[20]। इन्दुः। अमुष्णात्[21]। अशिवस्य[22]। मायाश्च[23]।

**अयमकृणोदुषसः सुपत्नीरयं सूर्ये अदधाज्ज्योतिरन्तः ।**
**अयं त्रिधातु दिवि रोचनेषु त्रितेषु विन्ददमृतं निगूळ्हम् ॥ २३ ॥**

अयम्[24]। अयमिन्दुः[25]। करोति, इन्द्रेण पितः[26]। उषसम्[27]। शोभनपतिकाः[28]। अयम्। सूर्ये[29]। ज्योतिः[30]।

---

१. सेक्त्रे Sy. तस्मा एवंगुणविशिष्टाय वृष्णे वर्षित्रे Dur. एवं चोक्तेन रूपेण वृष्णे वर्षित्रे SKN.
२. त्वदर्थम् Sy. तुभ्यमर्थाय SKN.
३. सोमः Sy. SKN. एष इन्दुः सोमः Dur.
४. कामानां वर्षकेन्द्र ! Sy.
५. व्यायते D. प्यायते वर्धते । अतस्त्वमागत्य तं सोमं पिबेति भावः Sy. पुनः पुनराप्याय्यते । अथवा पानाय संस्कृतः Dur. 'स्फायी ओप्यायी वृद्धौ' आप्यायिता, आप्यायते वा सम्यक् संसारवृद्ध्या वर्धत इत्यर्थः SKN.
६. ०दु P. मधुरः Sy. स्वादुरससंयुक्तः Dur. कीदृशः ? स्वादुर्मृष्टः SKN.
७. रसनीयः प्रशस्यो रसवान्वा रसात्मको वा Sy. रसरूपो द्रवः SKN.
८. ०मधुवत् वेयः D. मधुवत्पातव्यः Sy. मधुरपेयः Dur. न मनाक् स्वादुः, किं तर्हि ? मधुपेयो मध्विव यः पीयते स मधुपेयोऽत्यन्तमृष्ट इत्यर्थः SKN.
९. श्रेष्ठाय Sy. तुभ्यं श्रेष्ठायेत्यर्थः Dur. कीदृशाय तुभ्यम् ? वराय वरस्य श्रेष्ठस्य वरणीयस्य वा तवार्थायेत्यर्थः SKN.
१०. स्तिया आपो भवन्ति स्त्यायनात् N.6.17, SKN. II.453.
११. अय P.
१२. इन्दुः सोमः Sy.
१३. द्योतमानः Sy.
१४. बलेन Sy.
१५. प्रादुर्भवन् Sy.
१६. सख्या सह Sy.
१७. वणिजं गवामादातारं वलाख्यमसुरम् । यद्वा पणीनां स्वामित्वात् पणिरित्युच्यते । तमसुरम् Sy.
१८. ०भ्नात् is suggested for ०भात् ॥ न्यरुधत् Sy.
१९. धनस्य गोरूपस्य Sy.
२०. वज्रादीनि Sy.
२१. ०धानिन्द्रुरष्णात् P. अष्णात् D. अपाहरत् Sy.
२२. ०वश्च P., D. असुखकरस्य Sy.
२३. तदीया मायाश्चामुष्णात् । हे इन्द्र ! त्वत्सख्यबलादेतत् सर्वं सोमः कृतवान् । अतस्तव महिमा केन वर्णयितुं शक्यत इतीन्द्रस्तुतिः Sy.
२४. दुः D. सोमः Sy.
२५. अकरोत् Sy.
२६. पीतः is suggested for पितः ।
२७. ०सः is suggested for सम् ॥ उषःकालान् Sy.
२८. शोभनः पतिः पालकः सूर्यो यासां तादृशीः Sy.
२९. सूर्यमण्डले Sy.
३०. तेजः Sy.

अदधात्[1]। अन्तः[2]। अयम्[3]। दिवि[4]। नक्षत्रेषु[5]। त्रिगुणमदधा ज्योतिः[6]। अयं त्रिस्थानेषु[7]। निहितम्[8]। अमृतम्[9]। अविन्दत्[10]।

**अयं द्यावापृथिवी वि ष्कंभायदयं रथमयुनक्सप्तरंश्मिम्।**
**अयं गोषु शच्यां पक्वमन्तः सोमो दाधार दर्शयन्त्रमुत्संम् ॥ २४ ॥**

अयम्। अयम्[11]। द्यावापृथिवी[12]। विष्कम्भे अकरोद्[13] अन्तरिक्षेण। अयम्[14]। रथम्[15]। युयोज[16]। आदित्य[17] सप्तर्तुरश्मि[18] संवत्सरात्मकम्। अयम्। पशुषु[19]। अन्तः[20], आमेषु[21]। पक्वं पयः[22]। कर्मणा[23]। सोमोऽकरोत्[24]। अयं धारयति। दशयन्त्रम्[25]। उत्समीति[26] शरीरमाह तथान्तरा[27] खैलिकी[28] भवत्यृक्[29]।

---

१. निहितवान् Sy.
२. मध्ये Sy.
३. धातरियं P. ०धातरयं D. लतारूपः सोमः Sy. ४. द्युलोके Sy.
५. रोचमानेषु Sy.
६. ०धाज् is suggested for ०धा P., D. सवनत्रयरूपेण त्रिप्रकारम् Sy.
७. तृतीये स्थाने ततेषु विस्तृतेषु देवेषु Sy.
८. नितरां गूढमदृश्यतया वर्तमानम् Sy.
९. अमृतत्वकारणं पीयूषम् Sy.
१०. अलभत। हे इन्द्र! त्वत्साहाय्यादेवमेवं सोमः कृतवानितीन्द्रस्य स्तुतिरधिगन्तव्या। यद्वा इदंशब्देनेन्द्र एव परामृश्यते। अयमिन्द्र उषसः शोभनपतिका अकरोत्। अयमेव सूर्येऽन्तर्ज्योतिरवधात्। दिवि द्युलोके रोचमानेषु त्रिस्थानगतेषु देवेषु मध्येऽयमेवेन्द्रः त्रिधातुसवनत्रयात्मना त्रिप्रकारं निगूढं पात्रैः संवृतममरणहेतुभूतं सोममविन्दत् Sy. ११. सोमः Sy.
१२. दिवं च पृथिवीं च Sy.
१३. विकम्भे P. विष्कब्धे is suggested for विष्कभ्भे ॥ विविधमस्थापयत् Sy.
१४. अपि चायं सोमः Sy.
१५. सूर्यस्य रथम् Sy. १६. अयोजयत् Sy.
१७. आदित्यस्य is suggested for आदित्य।
१८. सप्तभी रश्मिभिः किरणैरुपेतं सप्ताश्वं सप्तचक्रं वा Sy.
१९. गोषु Sy. २०. मध्ये Sy.
२१. आमेषु goes with पशुषु।
२२. निष्पन्नम् Sy.
२३. प्रज्ञया सङ्कल्परूपया Sy. २४. साकम् P.
२५. उत्सस्य हेतुगर्भविशेषणमेतत्। उत्सरणहेतुभूतैर्दशभिश्चक्षुःश्रोत्रादिभिर्यन्त्रैरुपायैर्युक्तम्। इदं च पदं खैलिकेन मन्त्रान्तरेण व्याख्यायते—
चक्षुश्च श्रोत्रं च मनश्च वाक्च पाणापानौ देह इदं शरीरम्।
द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम् ॥
यद्वा अयमिन्द्रो द्यावापृथिवी विष्कभायत्। स्वे स्वे स्थाने स्थिते अकरोत्। अयमेव सप्तरश्मिं सूर्यस्य रथमयुनक्। अयमेवेन्द्रो गोष्वन्तः शच्यात्मीयेन कर्मणा पक्वं पयो धारयति। एवम्भूतेन्द्रार्थं सोमो दशयन्त्रं दशसङ्ख्याकैरैन्द्रवायवादिभिर्ग्रहैर्यन्त्रितैर्गृहीतैरुपेतमुत्समुत्सरणशीलं रसं दाधार। धारयति। प्रातःसवने ऐन्द्रवायवाद्यो दश ग्रहा गृह्यन्ते। तथा च ब्राह्मणम् 'नव प्रातर्ग्रहा गृह्यन्ते नवभिर्बहिष्पवमाने स्तुवते स्तुते स्तोमे दशमं गृह्णाति' (AB. 3. 1.) इति। अन्यत्राम्नातम्। 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति तदभिप्रायेणेदं दशयन्त्रमिति विशेषणम् Sy.
२६. ०मिति is suggested for ०मीति ॥ उत्सरणशीलं पयः Sy.
२७. तथानन्तर P.
२८. लिकि P. २९. भवन्त्युत् P.

चक्षुश्च श्रोत्रं च मनश्च वाक्[1] च[1] प्राणापानौ देह इदं शरीरम् ।

द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं[2] तं मन्ये दशयन्त्रमुत्सम्[3] ।। इति ।।

## VI.45.

**य आनयत्परावतः सुनीती तुर्वशं यदुम् । इन्द्रः स नो युवा सखा ।। १ ।।**

य आनयत्[4] । यः[5] । आनीतवान्[6] । दूरात्[7] । सुनयनेन[8] । तुर्वशम्[9] । यदुं[10] च । सः । युवा[11] । इन्द्रः । अस्माकम्[12] । सखा ।

**अविप्रे चिद्वयो दधदनाशुना चिदर्वता । इन्द्रो जेता हितं धनम् ।। २ ।।**

अविप्रे[13] । विप्रोऽश्वोऽनश्चेति वियुद्धे[14] । अन्नम् । दधानः[15] । अनाशुना अत्वरितेन[16] । अपि । अश्वेनान्नं[17] प्रयच्छन् । इन्द्रः । जता[18] भवति । हितम्[19] । धनम्, अपि वा प्रास्सामन्तरहितो विप्रः[20] ।[21]

---

१. क्व P. त्व D.
२. ०लोमेवि P. ०लोमेपिस० D.
३. ०यन्तूमु० D.
४. 'य आनयत्' इति त्रयस्त्रिंशदृचं द्वितीयं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षम् । 'पुरूतमम्' इत्येषातिनिचृत् । 'त्रयः सप्तकाः पादनिचृत्' 'मध्यनः षट्कश्चेदतिनिचृत्' (KSA.4.45. p.23.) इत्युक्तलक्षणात् । त्रयस्त्रिंश्यनुष्टुप् शिष्टा गायत्र्यः । 'अधि बृबुः पणीनाम्' इत्यस्मिन्नन्त्ये तृचे बृबुर्नाम तक्षा स्तूयते । अतः स तृचस्तद्देवताकः । शिष्टास्त्रिंशदैन्द्र्यः । तथा चानुक्रान्तम्—'य आनयत्त्रयस्त्रिंशद्गायत्रं पुरूतममतिनिचृदन्त्यानुष्टुप् तृचेऽन्त्ये बृबुस्तक्षा दैवतम्' इति । महाव्रतेऽपि निष्केवल्येऽन्त्यतृचवर्जमेतत्सूक्तम् । तथैव पञ्चमारण्यकम्—'य आनयत् परावत इति तिस्र उत्तमा उद्धरति' (AĀ. 5.2.5.) इति Sy.
५. ०यन् D.
६. इन्द्रः Sy.
७. तस्माद्दूरदेशात् Sy.
८. शोभनेन नयनेन Sy.
९. स्तु० P., D.
१०. एतत्संज्ञौ राजानौ शत्रुभिर्दूरदेशे प्रक्षिप्तौ Sy.
११. तरुणः Sy.
१२. सखा भवतु Sy.
१३. अविन्ने P.
१४. विन्नोश्वोनश्वेति P. विप्रः स्तोता । तद्विलक्षणेऽपि पुरुषे Sy.
१५. इन्द्रो धारयति । किमु वक्तव्यं स्तोतरि धारयतीति Sy.
१६. अक्षिप्रगमनेन Sy.
१७. अन्नं शुत्वरत्नितेनाप्यश्वे० P. ०धानाशुत्वरत्नितेनाच्यश्वे० D.
१८. जाता D. जेता is suggested for जता ।। जयशीलः, जयतेस्ताच्छीलिकस्तृन् । अतो 'न लोकाव्यय०' इति षष्ठीप्रतिषेधः Sy.
१९. शत्रुषु निहितं स्थापितम् Sy.
२०. ०व्रः P.
२१. VM. explains चित् once only.

**म॒हीर॑स्य॒ प्रणी॑तयः पू॒र्वीरु॒त प्रश॑स्तयः । नास्य॑ क्षीयन्त ऊ॒तयः॑ ॥ ३ ॥**

**महीरस्य** । मंहनीयानि[1] । अन्नस्य[2] । प्रणयनानि[3] । बहूनि[4] । अपि चास्य । प्रशंसनीयानि[5] । न च । अस्य[6] । क्षीयन्ते[7] । रक्षणानि[8] ।

**सखा॑यो॒ ब्रह्म॑वाह॒सेऽर्च॑त॒ प्र च॑ गायत । स हि न॒ः प्रम॑तिर्म॒ही ॥ ४ ॥**

**सखायः** । हे सखायः[9] ! स्तोत्रवाहाय[10] । शंसत[11] । प्र । च । गायत[12] । सः[13] । हि[14] । अस्माकमिन्द्रः । प्रमतिः[15] । भूमिः[16] या प्रकृष्टमतिर्भवति सेति[17] ।

**त्वमेक॑स्य वृत्रहन्नवि॒ता द्वयो॑रसि । उ॒तेदृशे॒ यथा॑ व॒यम् ॥ ५ ॥**

**त्वमेकस्य** । त्वम् । एकस्य[18] । रक्षिता । भवसि[19] । अपि च । द्वयोः[20] । अपि चेदृशे[21] रक्षिता भवसि पुरुषाय । यथा[22] । वयम् बहवो भवामस्तादृशाय बहुजनायापीति ।[23]

**नय॒सीद्वति॒ द्विषः॑ कृ॒णोष्यु॑क्थशं॒सिनः॑ । नृभिः॑ सु॒वीर॑ उच्यसे ॥ ६ ॥**

**नयसि** । अतिनयसि[24] । शत्रू[25] । उक्थशंसिनश्च जनान्[26] । करोषि[27] । तथा तथा[28] नृभिस्त्वम्[29] । सुवीरः[30] ।

---

१. मह्यो महत्यो भवन्ति Sy.
२. ०नीयान्न० P., D. इन्द्रस्य Sy.
३. प्रकृष्टा नीतयः प्रापणानि Sy.
४. बह्व्यो भवन्ति Sy.
५. प्रकृष्टाः स्तुतयः स्तोतृभिः क्रियमाणाः Sy.
६. इन्द्रस्य Sy.
७. (न) अपचीयन्ते । किन्तु सर्वदा वर्धन्त एव Sy. ८. रक्षाः Sy.
९. हे समानख्यानाः ! स्तोतारः ! Sy.
१०. ब्रह्मभिर्मन्त्रैर्वहनीयाय प्राप्तव्यायेन्द्राय Sy.
११. शस्त्राणि शंसत Sy.
१२. गाय D. प्रगायत च स्तोत्राणि Sy.
१३. इन्द्रः Sy.
१४. खलु Sy.
१५. ०ति D. प्रकृष्टा बुद्धिः । ईदृश्या बुद्धेः प्रदातेत्यर्थः Sy.
१६. महती Sy.
१७. ०ति भ० D. The passage : या प्रकृष्टमतिर्भवति सेति refers to प्रमतिः ।
१८. स्तोतुः Sy.
१९. सर्वेषां स्तोतृणां रक्षको भवसीत्यर्थः Sy.
२०. स्तोत्रोः Sy.
२१. जनेऽप्यविता भवसि Sy.
२२. यादृशा वयं त्वया रक्षिता बहुविधपुत्रपौत्रा अभूम । ईदृशस्यापि जनस्य त्वमेव रक्षको नान्य इत्यर्थः Sy.
२३. VM. ignores वृत्रहन् ॥ हे वृत्रहन् ! वृत्राणां शत्रूणां हन्तरिन्द्र ! Sy.
२४. अस्मान्नयसि । तारयसि Sy.
२५. शत्रून् is suggested for शत्रू ॥ द्वेष्टॄन् Sy.
२६. तथा उक्थानि शस्त्राणि शंसतः स्तोतॄनस्मान् Sy.
२७. समृद्धान् करोषि Sy.
२८. one तथा is redundant.
२९. यस्मात्त्वं स्तुतीनां नेतृभिः पुरुषैः Sy.
३०. शोभनैर्वीरैः पुत्रपौत्रादिभिः स्तोतृभ्यो दातव्यै-रुपेत इति Sy.

कथ्यसे[1] ।[2]

**ब्रह्माणं ब्रह्मवाहसं गीर्भिः सखायमृग्मियम् । गां न दोहसे हुवे ॥ ७ ॥**

**ब्रह्माणम् ।** बृहन्तम्[3] । स्तोत्रवहनम्[4] । स्तुतिभिः । सखाय[5] । स्तुत्यम्[6] । गाम् । इव । दोहाय[7] । ह्वयामि[8] ।

**यस्य विश्वानि हस्तयोरूचुर्वसूनि नि द्विता । वीरस्य पृतनाषहः ॥ ८ ॥**

**यस्य विश्वानि ।** यस्य[9] । द्विविधानि[10] दिव्यानि पार्थिवानि । विश्वानि[11] । वसूनि । हस्तयोर्वसन्तीति[12] । न्यूचुः[13] कवयः । वीरस्य[14] । सेनायाः सोढुः[15], उत्तरत्रान्वयः ।

**वि दृळ्हानि चिदद्रिवो जनानां शचीपते । वृह माया अनानत ॥ ९ ॥**

**वि दृळ्हानि[16] ।** विवृह[17] । दृढानि[18] पुराणि । शत्रूणाम् । वज्रवन्[19] ! प्रज्ञापते[20] ! मायाश्च[21] । अप्रह्वीश्रुतः[22][23] ।

**तमु त्वा सत्य सोमपा इन्द्र वाजानां पते । अहूमहि श्रवस्यवः ॥ १० ॥**

**तमु त्वा ।** तम्[24] । एव । त्वा[25] । स्य[26] ! सोमस्य पातः ! इन्द्र ! अन्नानाम् । पते[27] ! ह्वयामः[28] । अन्नेच्छवः[29] ।

---

१. स्तूयसे अतस्तानप्यस्मभ्यं प्रयच्छेति शेषः Sy.
२. VM. ignores इत् and उ ॥ इद् एव । उ इति पूरकः Sy.
३. परिवृढम् Sy.
४. ब्रह्मभिः स्तुतिरूपैर्मन्त्रैर्वहनीयम् Sy.
५. सखायम् is suggested for सखाय ॥ अस्माकं सखिभूतम् Sy.
६. ऋग्मा ऋचः । तदर्हम् । स्तुत्यर्हमित्यर्थः Sy.
७. एवम्भूतमिन्द्रं दोहसे दोग्धुम् Sy.
८. आह्वयाम्यस्मदीयान् कामान् दोग्धुम् Sy.
९. इन्द्रस्य Sy.
१०. दिव्यपार्थिवरूपेण द्वैधं वर्तमानानि Sy.
११. सर्वाणि Sy.
१२. बाह्वोर्विद्यन्त इति Sy.
१३. ऋषयो नितरां वदन्ति । तमिन्द्रं हुव इति पूर्वत्र सम्बन्धः Sy.
१४. वीर्यवतः Sy.
१५. पृतनाः शत्रुसेनाः । तासामभिभवितुः Sy.
१६. वृ P., D.
१७. विभिन्धि । विविधमुन्मूलयेत्यर्थः । विनाशय Sy.
१८. स्थिराणि पुराणि बलानि वा Sy.
१९. हे अद्रिवः ! आदृणात्यनेनेत्यद्रिर्वज्रः । तद्वन् ! Sy.
२०. शचीपते ! इन्द्र ! Sy.
२१. मायाश्च शत्रुभिर्निर्मिताः Sy.
२२. प्रहितः P. अप्रह्वीभूतः is suggested for अप्रह्वी श्रुतः VM. does not take it as voc. ॥ हे अप्रह्वीभूत ! सर्वोच्छ्रितेन्द्र ! Sy.
२३. VM. ignores चित् ॥ चित् अपि Sy.
२४. तादृशम् Sy.
२५. त्वामेव Sy.
२६. सत्य is suggested for स्य ॥ हे सत्य ! अवितथस्वभाव ! Sy.
२७. हे पालयितः ! एवम्भूत ! Sy.
२८. आह्वयामः । स्तुम इत्यर्थः Sy.
२९. श्रवोऽन्नमात्मन इच्छन्तो वयम् Sy.

**तमु॑ त्वा॒ यः पु॒रासि॑थ॒ यो वा॑ नू॒नं हि॒ते धने॑ । हव्यः॒ स श्रु॑धी॒ हव॑म् ॥ ११ ॥**

तमु[1] त्वा[2] । तम् । एव । त्वाम्[3] ह्वयामः । यस्त्वम् । पुरा[4] । अभूः[5] । यः[6] । वा । सम्प्रति[7] भवसि । हितम्[8] । धनम्[9] । अद्यद्भिश्च[10] ह्वातव्यः । सः । शृणु । ह्वानम्[11] ।

**धी॒भिरर्व॑द्भि॒रर्व॑तो॒ वाजाँ॑ इन्द्र श्र॒वाय्या॑न् । त्वया॑ जेष्म हि॒तं धन॑म् ॥ १२ ॥**

धीभिः । कर्मभिः[12] । अश्वैश्च[13] । शत्रोः[14] । अन्नानि । इन्द्र ! श्रवणियानि[15] । त्वया[16] । जष्म[17] । हितम्[18] । जनम्[19] ।

**अभू॑रु वीर गिर्वणो म॒हाँ इ॑न्द्र॒ धने॑ हि॒ते । भरे॑ वितन्त॒साय्यः॑ ॥ १३ ॥**

अभूः । अभूः । वीर[20] ! गीर्भिर्वननीय[21] ! महांस्त्वम्[22] । इन्द्र ! धने[23] । हिते[24] तदर्थम् । सङ्ग्रामे । विस्तार्यः[25] ।[26]

---

१. D. adds य after त्वा ।

२. हे इन्द्र ! Sy.

३. त्वा P. त्वां स्तुम इति शेषः Sy.

४. पूर्वस्मिन् काले Sy.

५. ०भू P. बभूविथ धनलाभार्थम् Sy.

६. त्वम् Sy.

७. अद्यापि Sy.

८. शत्रुषु निहिते Sy.

९. धने निमित्तभूते सति Sy.

१०. The reading is doubtful. अद्यापि च is suggested for अद्यद्भिश्च ।

११. अस्मदीयं स्तोत्रम् Sy.

१२. स्तुतिभिस्तद्विषयाभिः Sy. धीरिति कर्मनाम Ngh. 2.1.

१३. अस्मदीयैरश्वैः Sy.

१४. शत्रुसम्बन्धिनोऽश्वान् Sy.

१५. श्रवणीयानि is suggested for श्रवणियानि ॥ श्रवणीयान् प्रशस्यान् Sy.

१६. प्रीतेन त्वया अनुगृहीता वयम् Sy.

१७. जेष्म is suggested for जष्म ॥ त्वदनुग्रहाज्जयेम Sy.

१८. शत्रुषु निहितम् Sy.

१९. धनम् is suggested for जनम् ।

२०. हे विविधमीरयितः ! शत्रूणाम् Sy.

२१. हे गीर्भिर्वननीय ! इन्द्र ! Sy.

२२. ०नीय (धृतगमः स नः सोस्माकं कामं धवाभिरन्नैश्च युक्तैः) म० P. The additional passage in P. has a striking resemblance with a part of the commentary on RV. VI. 45.20., 21. (अधृतगमः॥ स नः सोऽस्माकम्। कामम्। धवाभिः। अन्नैश्च युक्तैः) ॥ प्रवृद्धस्त्वम् Sy.

२३. धने निमित्तभूते सति Sy.

२४. शत्रुषु निहिते Sy.

२५. शत्रूणां जेता। तन्तस इति धातुर्जयार्थः कण्ड्वादौ पठ्यते । तस्माद्व्युपसृष्टादौणादिकः कर्तर्याय्यप्रत्ययः Sy.

२६. VM. ignores उ ।

**या ते ऊतिरमित्रहन्मक्षूजवस्तमासति । तया नो हिनुही रथम् ॥ १४ ॥**

**या ते ।** या । ते[1] । रक्षा[2] । अमित्रहन्[3] ! अतिशयेन दीर्घवेगा[4] । भवति[5] । तया[6] । सह । अस्माकम् । रथम् । प्रेरयः[7] ।

**स रथेन रथीतमोऽस्माकेनाभियुग्वना । जेषि जिष्णो हितं धनम् ॥ १५ ॥**

**स रथेन ।** स त्वम् । रथितमौ[8] । रथेन । अभियोक्त्रा[9] । जय[10] । जयशील[11] ! शत्रुषु निहितं पियं वा । धनम्[12] ।

**य एक इत्तमु ष्टुहि कृष्टीनां विचर्षणिः । पतिर्जज्ञे वृषक्रतुः ॥ १६ ॥**

**य एकः ।** यः[13] । एकः । एव भवति । तम् । एव । स्तुहि[14] । मनुष्याणाम्[15] । विद्रष्टा[16] । पतिश्च[17] । जायते[18] । वृषकर्मा[19], यः[20] स्वयमेव द्रष्टा पतिश्च तमेव स्तुहीति ।

**यो गृणतामिदासिथापिरूती शिवः सखा । स त्वं न इन्द्र मृळय ॥ १७ ॥**

**यो गृणताम् ।** यः[21] । स्तुवताम्[22] । एव । असि[23] । रक्षणैः[24] । कल्याणः[25] । सखा[26] । सः[27] । त्वम् । अस्मान् । इन्द्र ! सुखय[28][29] ।

---

१. त्वदीया Sy.
२. गतिः Sy.
३. हे अमित्राणां शत्रूणां हन्तः ! इन्द्र ! Sy.
४. अतिशयेन शीघ्रजवा Sy.
५. अस्ति Sy.
६. गत्या Sy.
७. य० is suggested for ०यः ॥ शत्रुजयार्थं शीघ्रं गमय Sy.
८. मः (मो) is suggested for ०मौ ॥ अतिशयेन रथी महारथः Sy.
९. अभियोक्त्रा शत्रूणामभिभवित्रा Sy.
१०. अस्मदर्थं जय Sy.
११. हे जयशीलेन्द्र ! Sy.
१२. VM. ignores अस्माकेन ॥ अस्माकेन अस्मदीयेन Sy.
१३. इन्द्रः Sy.
१४. स्तुति P.
१५. प्रजानाम् Sy.
१६. विशेषेण सर्वस्य द्रष्टा Sy.
१७. अधिपतिः Sy.
१८. अजायत Sy.
१९. वर्षकर्मा Sy.
२० य D.
२१. त्वम् Sy.
२२. स्तुवतामस्माकम् Sy.
२३. पुरा बभूविथ Sy.
२४. ऊत्या रक्षया Sy.
२५. सुखकरः Sy.
२६. अत एव मित्रभूतश्च सन् Sy.
२७. तादृशः Sy.
२८. इदानीं सुखय Sy.
२९. VM. ignores आपिः ॥ आपिः बन्धुः Sy.

**धि॒ष्व वज्रं॒ गभ॑स्त्यो रक्षो॒हत्या॑य वज्रिवः । सा॒स॒ही॒ष्ठा अ॒भि स्पृधः॑ ॥ १८ ॥**

धिष्व । धारय । वज्रम्[1] । बाह्वोः[2] । वज्रिन्[3] । मत्वर्थीयावृत्तिरन्यत्रापि दृष्टा[4] । रक्षसां हननाय[5] । अत्यन्तमभिभव[6] । स्पर्धितॄन्[7] ।

**प्र॒त्नं र॑यी॒णां यु॒जं सखा॑यं की॒रि॒चोद॑नम् । ब्रह्म॑वाहस्तमं हुवे ॥ १९ ॥**

प्रत्नम् । प्रत्नम्[8] । धनानाम् । योक्तारम् ना[9] । सखायम्[10] । स्तोतॄणां दातारम्[11] । अतिशयेन स्तोत्रै-रुह्यमानम्[12] । ह्वयामि[13] ।

**स हि विश्वा॑नि॒ पार्थि॑वाँ॒ एको॒ वसू॑नि॒ पत्य॑ते । गिर्व॑णस्तमो॒ अध्रि॑गुः ॥ २० ॥**

स हि विश्वानि[14] । सः[15] । हि[16] । विश्वानि[17] । पार्थिवानि[18] । धनानि । एक एव । पतति गच्छति[19] स्वात्मेन[20] । अतिशयेन गीर्भिर्वननीयः[21] । अधृतगमनः[22] ।

**स नो॑ नि॒युद्भि॒रा पृ॑ण॒ कामं॒ वाजे॑भिर॒श्विभिः॑ । गोम॑द्भि॒र्गोप॑ते धृ॒षत् ॥ २१ ॥**

स नः । सः[23] । अस्माकम् । कामम्[24] । धबाभिः[25] । अन्नैश्च । अश्वयुक्तैः[26] । गोयुक्तैश्च[27] । धृष्टम्[28] । आपूरयन्[29][30] ।

---

१. कुलिशम् Sy.
२. Omitted by D. आत्मीययोर्हस्तयोः Sy.
३. वज्री P. हे वज्रवन्निन्द्र ! Sy.
४. द्रष्टा D. ५. रक्षसां हननार्थम् Sy.
६. VM. construes अभि with सासहीष्ठाः and explains it as अत्यन्तमभिभव but Sy. explains अभि and सासहीष्ठाः separately : अभि as अभिगन्त्रीरासुरीः सेनाः and सासहीष्ठाः as अत्यर्थमभिभव ।
७. द्धितॄन् P. धृत्वा च स्पर्धमानाः Sy.
८. व्रतां P. प्रतां D. चिरन्तनं सर्वेषामाद्यम् Sy.
९. ना is redundant. योजयितारं दातारम् Sy.
१०. मित्रभूतम् Sy.
११. कीरीणां स्तोतॄणां चोदयितारम् Sy.
१२. अतिशयेन ब्रह्मभिर्मन्त्रैर्वहनीयमेवंविधमिन्द्रम् Sy. १३. आह्वयामि Sy.
१४. विश्व P. स नि वाश्वा D.
१५. इन्द्रः Sy.
१६. खलु Sy. १७. सर्वाणि Sy.
१८. पृथिव्यां भवानि Sy.
१९. ईष्टे नान्यः कश्चित् Sy. पत्यतिरैश्वर्यकर्मा Ngh. 2. 21.
२०. Omitted by P. स्वात्म्येन is suggested for स्वात्मेन ।
२१. ति० P. अतिशयेन स्तुतिभिः सम्भजनीयः Sy.
२२. ०मः P. अप्रतिहतगतिरित्यर्थः Sy.
२३. त्वम् Sy. २४. अस्मदीयं कामम् Sy.
२५. वडवाभिः is suggested for धबाभिः ।
२६. युक्तै P. बहुभिरश्वैरुपेतैः Sy.
२७. ०युक्तश्च P. बहुभिर्गोभिर्युक्तैः Sy.
२८. धृष्टं दारिद्र्यनाशनसमर्थं यथा भवति तथा। यद्वा धृषदितीन्द्रविशेषणम् । शत्रूणां धर्षकस्त्वमित्यर्थः Sy.
२९. ०रय is suggested for ०रयन् ।
३०. VM. ignores गोपते ॥ हे गोपते ! गवां पालयितः ! Sy.

**तद्वो॑ गाय सु॒ते सचा॑ पुरुहू॒ताय॒ सत्व॑ने । शं यद्गवे॒ न शा॒किने॑ ॥ २२ ॥**

तद् वो गाय[1][2] । तत्[3] । यूयम् । गायत । सुते सोमे[4] । सह[5] । पुरुहूताय[6] । सदनं कुर्वते[7] । सुखम्[8] । यत् भवति स्तोत्रम् । गवे[9] । इव । सहायाय[10] ।

**न घा॑ वसु॒र्नि य॑मते दा॒नं वाज॑स्य॒ गोम॑तः । यत्सी॒मुप॒ श्रव॒द्गिरः॑ ॥ २३ ॥**

न घा वसुः[11] । न । खलु । नियच्छति[12] । वासयितेन्द्रः । गोयुक्तस्य[13] । अन्नस्य[14] । दानम्[15] । यदि । उपशृणोति[16] । स्तुतीः[17] । सीमिति पूरणम्[18] ।

**कु॒वित्स॑स्य॒ प्र हि व्र॒जं गोम॑न्तं दस्यु॒हा गम॑त् । शची॑भि॒रप॑ नो वरत् ॥ २४ ॥**

कुवित्सस्य । कुविन्नाम्नो सस्मच्छत्रोः[19] । गोमन्तम्[20] । व्रजम्[21] । दस्युहेन्द्रः[22] । प्र[23] । भि[24] । गच्छतु[25] । ततः प्रज्ञाभिः[26] । अस्माकं[27] व्रजम् । अपवृणोतु[28] ।

**इ॒मा उ॑ त्वा शतक्रतो॒ऽभि प्र णो॑नुवु॒र्गिरः॑ । इन्द्र॑ व॒त्सं न मा॒तरः॑ ॥ २५ ॥**

इमाः । इमाः[29] । खलु । त्वा[30] । शतक्रतो[31] ! अभिप्रस्तुवन्ति[32] । स्तुतयः । यथा[33] । वत्सं दृष्ट्वा[34] । गावो

---

१. गयः P. गयं D.
२. हे स्तोतारः ! Sy.
३. स्तोत्रम् Sy.
४. अभिषुते सोमे सति Sy.
५. सह संहता भूत्वा Sy.
६. बहुभिर्यजमानैराहूताय Sy.
७. शत्रूणां सादयित्रे धनानां वा सनित्रे दात्र इन्द्राय Sy.
८. सुखकरम् Sy.
९. यथा गवे यवसं सुखकरं तद्वदित्यर्थः Sy.
१०. शक्तिमते इन्द्राय Sy.
११. ०सु P., D.
१२. उपरतं करोति Sy.
१३. बहुभिर्गोभिर्युक्तस्य Sy.
१४. अन्नस्य बलस्य वा Sy.
१५. प्रदानम् Sy.
१६. उवंश्रृ० P. उपश्रृणुयात् । स्तोत्रश्रवणे सति सर्वदा ददातीत्यर्थः Sy.
१७. अस्मदीयाः स्तुतीः Sy.
१८. सीम् अयम् Sy.
१९. कुवित् नाम्नो समस्मच्छत्रो P. कुवित्सनाम्नोऽस्मच्छत्रोः is suggested for कुविन्नाम्नो सस्मच्छत्रोः D. कुविद्बहुशः स्यति हिनस्तीति कुवित्सो नाम कश्चित् । तस्य स्वभूतम् Sy.
२०. बहुभिर्गोभिर्युक्तम् Sy.
२१. गोष्ठम् Sy.
२२. दस्यूनामुपक्षपयितॄणां हन्ता Sy.
२३. प्रकर्षेण Sy.
२४. हि is suggested for भि ॥ यस्मादेवं तस्मात् Sy.
२५. गच्छति Sy.
२६. आत्मीयैः कर्मभिः प्रज्ञाभिर्वा Sy.
२७. अस्मान् तं P. अस्माकं ता गाः Sy.
२८. निगूढास्ता अपावृणोत् Sy.
२९. अस्मदीयाः Sy.
३०. त्वाम् Sy.
३१. हे बहुविधकर्मन् ! बहुविधप्रज्ञ ! वा Sy.
३२. प्रकर्षेण पुनः पुनर्गच्छन्ति । नौतिरत्र गतिकर्मा Sy.
३३. तत्र दृष्टान्तः । यथा Sy.
३४. गृहे वर्तमानं वत्सम् Sy.

भिहिं[1] कुर्वन्ति[2]।

**दूणाशं सुख्यं तव गौरसि वीर गव्यते । अश्वो अश्वायते भव ॥ २६ ॥**

**दूणाशम्**[3]। नाशयितुमशक्यम्[4]। तव[5]। सख्यम्[6]। गोस्त्वम्[7]। भवसि[8]। वीर[9]! गामिच्छते[10]। अश्वश्च[11]। भव । मह्यमश्वमिच्छते[12]।

**स मन्दस्वा ह्यन्धसो राधसे तन्वा महे । न स्तोतारं निदे करः ॥ २७ ॥**

**स मन्दस्वा**[13] [14]। सः । मन्दस्व[15]। सोमेन[16]। धनाय[17]। महते । शरीरेण[18]। न। स्तोतार[19] निन्दित्रेऽत्र[20] [21]। कार्षी[22] [23]।

**इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः । वत्सं गावो न धेनवः ॥ २८ ॥**

**इमा उ त्वा**। इमाः[24]। स्तुतयः। सुते सोमे सोमे[25]। त्वाम् । व्याप्नुवन्ति। गीर्भिर्वननीयम्[26]। वत्सम्[27]। इव[27]। धेनवः[28]। गावः[29]।

---

१. हम्भां is suggested for भिहिं ॥ शीघ्रमभिगच्छन्ति तद्वत् । यद्वा अस्मदीया वाचस्त्वामभि नोनुवुः । अभितः शब्दयन्ति । स्तुवन्ति । यथा गावो वत्समभिलक्ष्य हम्भारवं कुर्वन्ति तद्वत् Sy.

२. VM. ignores इन्द्र ।

३. दु० P.

४. हे इन्द्र ! Sy.

५. दुर्णाशं नाशयितुमशक्यम् । अतिदृढमित्यर्थः Sy.

६. त्वदीयम् Sy.

७. सखित्वम् Sy.

८. गौ० is suggested for गो० ॥ गवां प्रदाता । उपचारात्कारणे कार्यशब्दः Sy.

९. हे वीरयितरिन्द्र ! Sy.

१०. गामात्मन इच्छते Sy.

११. अश्वप्रदो भवसि Sy.

१२. अश्वानात्मन इच्छते Sy.

१३. हे इन्द्र ! Sy.

१४. तादृशस्त्वम् Sy.

१५. मोदस्व Sy.

१६. सोमे P. सोमस्य पानेन हृष्टया (It goes with तन्वा) Sy.

१७. धनार्थम् Sy.

१८. आत्मीयेन शरीरेण Sy.

१९. ०रम् is suggested for ०र ॥ त्वदीयं स्तोतारम् Sy.

२०. निन्दकाय। तस्य वशम् Sy.

२१. निन्द्र त्रे P. अत्र is redundant.

२२. ०र्षीः is suggested for ०र्षी ॥ कुर्याः Sy.

२३. VM. ignores हि ॥ हि पूरणः Sy.

२४. अस्मदीयाः Sy.

२५. Omitted by P. सोमेऽभिषुतेऽभिषुते सति Sy.

२६. ०नीय ! is suggested for ०नीयम् ॥ हे गिर्वणः ! गीर्भिर्वननीय ! इन्द्र ! Sy.

२७. यथा शीघ्रं वत्सं व्याप्नुवन्ति तद्वत् Sy.

२८. दोग्ध्र्यः Sy.

२९. VM. ignores उ ।

पुरूतमं पुरूणां स्तोतृणां विवाचि । वाजेभिर्वाजयताम् ॥ २९ ॥

पुरुतमम्[१] । बहूनां[२] शत्रूणाम् । ग्लपयितारम्[३] । स्तोतृणाम्[४] । विविधवाचि[५] यज्ञे सति । वाजैः[६] त्वां दीपयताम्[७], पूर्वत्र सम्बन्धः ।[८]

अस्माकमिन्द्र भूतु ते स्तोमो वाहिष्ठो अन्तमः । अस्मान्राये मुहे हिनु ॥ ३० ॥

अस्माकम् । अस्माकम् । इन्द्र ! भवतु । ते[९] । स्तोमः[१०] । वोढृतमः । अन्तिकतमः । अस्मान्[११] । महते । धनाय । प्रेरय ।

अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात् । उरुः कक्षो न गाङ्ग्यः ॥ ३१ ॥

अधि[१२] बृबुः[१३] । भरद्वाय हृत्रे[१४] गोसहस्रप्रदातारं बृबुं तृचेन शंयुः[१५] स्तौति । मनुः—

भरद्वाजः क्षुधार्तस्तु सपुत्रो निर्जने वने ।

बह्वीर्गाः[१६] प्रतिजग्राह बृबोस्तक्ष्णो[१७] महायशाः[१८] ॥ इति[१९] ॥

---

१. पुरुत० D. २. हे इन्द्र ! Sy.

३. पुरूणां बहूनां शत्रूणां तमयितारं ग्लपयितारं त्वाम् Sy. ४. स्तोतृणामस्माकं स्तुतिः प्राप्नोत्विति शेषः Sy. ५. ०ची P. विविधाः स्तुतशस्त्रात्मिका वाचो यस्मिन् यज्ञे तस्मिन् Sy. ६. वाजीः P. हविर्लक्षणैरन्नैः Sy.

७. वाजवन्तं बलवन्तं वा त्वां कुर्वताम् Sy.

८. VM. ignores पुरु of पुरुतमम् ।

९. तव Sy. १०. स्तोत्रम् Sy.

११. त्वं चास्मान् Sy.

१२. भरद्वाजोऽरण्ये पर्यटन् क्षुधया पिपासया च पीडितः सन् महावने तक्षकर्म कुर्वाणं बृबुं ददर्श । तमुवाच । अतिथिं मामुपागतमवगच्छेति । सोऽभ्युत्थाय प्राञ्जलिर्भरद्वाजमुवाच । अहं तक्षा । तक्ष्णः पतितचाण्डालादिभ्य इव ब्राह्मणा न गृह्णन्तीति मया श्रुतम् । यदि तव धर्मो न पीड्यते तर्हि वद । 'तव दत्तं न प्रत्याख्यास्यामीति' बृबुस्तथेति वदन्तं तं प्रतिपाद्यातिथिधर्मेणोपचचार । स तमुवाच । अहं शूद्रो बहुपशुरमेध्यः । मदीया गावो न पितृदेवातिथिषूपयुज्यन्ते संस्थासु न । भगवता पूर्वमुक्तं तव दत्तं न प्रत्याख्यास्यामीति । तेनात्मानमुद्धरन् स्वर्गभाजः कर्तुमेताः गावः प्रतिगृह्यन्तामिति । एवमुक्त्वा तस्मै गवां सहस्रं ददौ । तद्भरद्वाजः प्रतिजग्राह प्रतिगृह्य च पुत्राय भ्रात्रे शयवे चाचचक्षे । अथ शयुः प्रीतमनाः 'अधि बृबुः' ( RV.VI.45.31,33. ) इत्यनेन तृचेन गायत्रेण त्रिष्टुबन्तेन बृबुं तुष्टावेति (DDN. describes the metre of the 33rd stanza as त्रिष्टुप् but it is in reality अनुष्टुप् and not त्रिष्टुप् ।) 'ऋचोऽन्त्ये बृबुस्तक्षा दैवतम्' इत्यनुक्रमणी (KSA.31.45.p.22.) 'भारद्वाजं चतुर्थं यथा भरद्वाजो बृबौ तक्षिण प्रस्तोके च' (SSS. 16.11.10.,11.) इति । पुरुषमेधे नाराशंसमेतत्तृचं विनियुक्तम् DDN.

१३. बृबुर्नाम पणीनां तक्षा । तत्सकाशाल्लब्धधनो भरद्वाजस्तदीयं दानमनेन तृचेनास्तौत् Sy.

१४. ०ज हृत्रे P. भरद्वाजाय भ्रात्रे is suggested for भरद्वाय हृत्रे ।

१५. श० P. १६. ह्वी गाः D.

१७. Manu. reads वृधोः for बृबोः ।

१८. Manu. reads महातपाः for महायशाः ।

१९. Manu. 10.107.

अध्यस्थात्[1]। वृबूरयम्। स्तोतृणाम्[2]। वृद्धतमे। मूर्धनि[3], उच्छ्रिते स्तुत्ये पदे। कक्षः कक्षतेः। विस्तीर्णः[4] प्रवाहः। इव। गङ्गाया[5] अपि वौषधीकक्ष एवाभिप्रेतः[6]।

**यस्य॑ वा॒योरि॑व द्र॒वद्भ॒द्रा रा॒तिः स॑ह॒स्रिणी॑। स॒द्यो दा॒नाय॒ मंह॑ते ॥ ३२ ॥**

यस्य वायोरिव। यस्य[7]। वायोरिव वेगः। द्रवति[8]। भजनीयम्[9]। देयम्[10]। सहस्रसंख्याकम्[11]। तनीमेव[12]। दानार्थम्[13]। स्तुवते[14] भरद्वाजाय पूर्वत्र सम्बन्धः।

**तत्सु नो॒ विश्वे॑ अ॒र्य आ सदा॑ गृणन्ति का॒रवः॑।**
**बृ॒बुं स॑हस्र॒दात॑मं सू॒रिं स॑हस्र॒सात॑मम् ॥ ३३ ॥**

तत् सु[15]। तत्। सुष्ठ्वाभिमुख्येन वदन्ति[16]। अस्माकम्[17]। विश्वे[18]। अरण्यानागः[19] ? सदा। कारवः[20]। किमित्याह—बृबुम्[21]। सहस्रस्य दातारम्[22]। प्राज्ञम्[23]। सहस्रस्य दातारमिति[24]।

---

१. अधिष्ठितोऽभूत् Sy.
२. पणनात् पणयो वणिज एतत्संज्ञा असुरा वा। तेषां तक्षा Sy.
३. मूर्च्छनि P.
मूर्धवदुच्छ्रिते स्थले Sy.
४. ०तेः। विस्तीर्णः is suggested for ०ते। विस्तीर्ण ॥ विस्तीर्णः सन्। जातितो हीनोऽपि दातृत्वात् सर्वत्र श्रेष्ठो भवतीत्यर्थः Sy.
५. गङ्गाया कूल उन्नते भवः Sy. यथा गङ्गायाः कूले उन्नते भवो वृक्ष इव उरुः विस्तीर्णः सन् जातितो हीनोऽपि दातृत्वात् सर्वश्रेष्ठो भवतीत्यर्थः। तथा च मनुः (Manu. 10. 107) भरद्वाजः क्षुधार्तस्तु सपुत्रो निर्जने वने। बह्वीर्गाः प्रतिजग्राह न स पापेन लिप्यते ॥ (यत्पूतिर्यच्च कुणपं यच्च कीटपिपीलिकम्। सर्वं तदग्निर्दहति देवत्वाच्च न हीयते ॥ एतेनैवोपमानेन यथा वैश्वानरस्तथा। ब्राह्मणः सर्ववर्णेभ्य आददानो न दुष्यति ॥) DDN.
६. ०त D.
७. बृबोः Sy.
८. भवति P. वायोरिव द्रवत् क्षिप्रगामिनः Sy.
९. कल्याणी Sy.
१०. देय D. दानम् Sy.
११. ०स्रं ख्याकम् P.
सहस्रसङ्ख्यायुक्ता Sy.
१२. ततीमेव P. तदानीमेव is suggested for तनीमेव ॥ स्तुतिसमय एव Sy.
१३. दानकामाय याचमानाय मह्यम् Sy.
१४. मंहतेऽपेक्षितं धनं ददाति तं बृबुमित्युत्तरस्यामृचि सम्बन्धः Sy.
१५. तं बृबुम् Sy.
१६. अभिगृणन्ति। अभिष्टुवन्ति Sy.
१७. अस्मदीयाः Sy.
१८. सर्वे Sy.
१९. अरण्यागः P. The reading is doubtful. It seems to be the explanation of अर्यः ॥ स्तुतीनामीरयितारः Sy.
२०. स्तोतारः Sy.
२१. बृबु D.
२२. अतिशयेन सहस्रसङ्ख्यस्य धनस्य दातारम् Sy.
२३. प्राज्ञं यद्वा प्रेरयितारम् Sy.
२४. अतिशयेन सहस्रसङ्ख्यस्य स्तोत्रस्य धनस्य वा सम्भक्तारम् Sy.

## VI. 46.

**त्वामिद्धि हवा॑महे सा॒ता वाज॑स्य का॒रवः॑ ।**
**त्वां वृ॒त्रेष्वि॑न्द्र॒ सत्प॑तिं॒ नर॒स्त्वां काष्ठा॒स्वर्व॑तः ॥ १ ॥**

त्वामिद्धि[1] । त्वाम् । एव[2] । हि[3] । हवामहे[4] । अन्नस्य[5] । लाभार्थम्[6] । कर्तारं[7] सोमानां वयम् । त्वाम् । उपद्रवेषु[8] । इन्द्र ! सत्पतिम्[9] ! मनुष्या[10] ह्वयन्ते[11] । त्वामेव[12] । अश्वस्य[13] । काष्ठाम्[14] ।

---

१. 'त्वामिद्धि' इति चतुर्दशं तृतीयं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षमैन्द्रम् । प्रथमातृतीयाद्या अयुजो बृहत्यो द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । तथा चानुक्रान्तम्—'त्वामिद्धि षळूना प्रगाथम्' (KSA. 31.46. p. 23.) इति । सूक्तविनियोगो लैङ्गिकः । यदि ज्योतिः ष्टोमो बृहत्पृष्ठः स्यात्, तदानीं निष्केवल्यस्याद्यः प्रगाथः स्तोत्रियः । सूत्रितञ्च—'यद्यु वै बृहत्त्वामिद्धि हवामहे' (ĀŚS. 5.15.) इति । महाव्रतेऽपि निष्केवल्येऽयं प्रगाथः शंसनीयः । तथैव पञ्चमारण्यके सूत्रितम्—'त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपौ' (AĀ.5.2.2.) इति Sy.

२. इद् एवार्थे Mah. इच्छब्द एवार्थे U.

३. हि निश्चये Mah. हिर्निरर्थकः U. यस्माद्वाजस्य लाभाय त्वामेव ह्वयामः BB.

४. स्तुतिभिराह्वयामः Sy.
आह्वयामः Mah., U., BB.

५. अन्नस्य विषये भूते U.

६. सम्भजने निमित्तभूते सति Sy. लाभनिमित्तम् Mah. सातिर्लाभः । लाभे U. सातिनिमित्तमस्मभ्यं देहि वाजमिति त्वामेवाह्वयामः BB.

७. कर्तारः is suggested for कर्तारम् ॥ स्तोतारो वयम् Sy. कर्तारो यज्ञानाम् Mah. कारवः स्तोतृत्वेन शिल्पिनः BB.

८. आवरकेषु शत्रुषु सत्सु Sy. शत्रुषु शत्रुघातनिमित्तम् Mah. शत्रुषु हन्तव्येषु U. यस्माच्चारिषूपस्थितेषु BB.

९. ०तिः D. सतां पालयितारं श्रेष्ठम् Sy. सतां पालयितारम् । श्रुतिस्मृत्युक्ताचाररता निषिद्धत्यागिनः सन्तः कथ्यन्ते Mah. श्रुतिस्मृतिविहितानुष्ठातारो निषिद्धकर्मपरित्यागिनः सन्तस्तत्पतिम् U. सतां पातारं विदुषां पालयितारं त्वामेवाह्वयामः BB.

१०. अन्येऽपि मनुष्याः Sy. ऋत्विजो वयम् Mah. सर्वेऽपि वयं मनुष्याः BB.

११. आह्वयन्ति तज्जयार्थम् Sy. आह्वयन्ति U. आह्वयामः BB.

१२. त्वांशब्दावृत्तिरादरार्था Mah. त्वामेव U. BB.

१३. अश्वस्य सम्बन्धिनीषु Sy. अश्वप्राप्तिनिमित्तं च । विभक्तिव्यत्ययः Mah. अश्ववतो रथिनो वाऽऽह्वयन्ति । नहि त्वदृते पुरुषाणां किञ्चित्सिद्ध्यतीत्यभिप्रायः U. अरणवत उदकस्य च सात्यर्थं त्वामेवाह्वयामस्तस्मात्सर्वस्मादभिमतसम्पादनेनेन्द्रियं वीर्यं चास्मभ्यं देहीति BB.

१४. यत्राश्वः क्रान्त्वा तिष्ठति तासु काष्ठासु सङ्ग्रामेषु युद्धकामाश्च त्वामेवाह्वयन्ति, अतो वयं त्वामेवाह्वयाम इत्यर्थः Sy.
दिक्षु दिग्विजयनिमित्तम् Mah.
काष्ठासु जेतव्यासु U.
यस्माच्च त्वां काष्ठासु दिक्षु BB.

This stanza=YV. 27.37=TS.2.4.14.3.

स त्वं न॑श्चित्र वज्रहस्त धृष्णुया म॒हः स्त॑वा॒नो अ॑द्रिवः ।
गामश्वं॑ र॒थ्य॑मिन्द्र॒ सं कि॑र स॒त्रा वाजं॒ न जि॒ग्युषे॑ ॥ २ ॥

स त्वम् । सः[1] । त्वम् । अस्मभ्यम् । पूजनीय[2] ! बज्रहस्त[3] ! धृष्णुः[4] । महान्[5] । अद्रिरादृणात्य-मित्रानिति[6] तद्वान्[7] । आयुधवान्[8] ! स्तूयमानः[9] । गाम्[10] । अश्वं च । रथस्य वोढारम्[11] । सह देहि[12] । महत्[13] । अन्नम्[14] । इव[15] । सङ्ग्रामं जितवतेऽश्वाय[16] ।[17]

यः स॑त्रा॒हा विच॑र्षणि॒रिन्द्र॒ तं हू॑महे व॒यम् ।
सह॑स्रमुष्क॒ तुवि॑नृम्ण॒ सत्प॑ते॒ भवा॑ स॒मत्सु॑ नो वृ॒धे ॥ ३ ॥

यः सत्राहा[18] । यः[19] । महतो हन्ता[20] । विचर्षिणिः[21] । इन्द्रम् । तम्[22] । हूमहे[23] । वयम्[24] । 'इन्द्रः पर्वणि पर्वणि

---

१. तादृशः Sy. २. हे चायनीय ! Sy., U. आश्चर्यकारिन् ! Mah.

३. वज्रबाहो ! Sy. वज्रं हस्ते यस्य Mah.

४. शत्रूणां धर्षयिता Sy. धृष्णुया प्रागल्भ्येन.... धृषेः क्नुः। ततो विभक्तेर्यादेशः। धृष्णुना धृष्णुत्वेन भावप्रधानो निर्देशः Mah. प्रसहनेन U.

५. महसा तेजसा ।....महः विभक्तिलोपः Mah. महत्त्वेन च U.

६. अद्रिः is omitted by P. अद्रिरादृणात्य० D. अद्रि० is suggested for अदि० ।

७. तद्वन् ! is suggested for तद्वान् ।

८. ०धव D. ०धवन् ! is suggested for ०धवान् ॥ वज्रवन् ! यद्वा, आदृणात्यनेनेत्यद्रिरशनिः । तद्वन् ! एवंभूतेन्द्र ! Sy. अद्रयोऽजेयत्वेन सन्तीत्यद्रिवांस्तत्सम्बुद्धौ Mah. हे अद्रिवन् ! अद्रिसारमयं वज्रं तद्यस्यास्तीति सम्बोध्यतेऽद्रिव इति U.

९. अस्माभिः स्तूयमानः सन् Sy. स्तवान इत्यत्र विकरणव्यत्ययः Mah. स्तूयमान इति विकरणव्यत्ययः U. १०. गवाम् D.

११. रथवाहनम् Sy. रथे साधुं रथवहनसमर्थम् Mah. रथे साधुम् U.

१२. ह P. सम्यक् प्रयच्छ Sy. सम्पूर्वः किरतिर्दानार्थः Mah. सङ्किरतिर्दानातिशये । अनेकदेशप्रकीर्णं देहि U.

१३. महत् प्रभूतम् Sy. त्राणं त्रा रक्षणं तत्सहितम् Mah. सत्रा त्राणसहितम् U.

१४. वाजमन्नं यवं ? (यवसं) वा यथा ददति तथास्मभ्यं देहि Mah. वाजं यवसम् । सस्नेहमपरिमितं सक्तुरेयुर्दद्युरेवमस्मभ्यं देहि U.

१५. यथा शत्रून् जितवते भोगार्थं बह्वन्नं प्रयच्छसि तद्वत् Sy. न इवार्थे। यथा Mah. नकार उपमार्थीयः U. १६. जितवते पुरुषाय भोगार्थम् Sy. जिग्युषे जितवतेऽश्वाय हस्तिने वा Mah. जितवतेऽश्वाय हस्तिने वा U.

१७. VM. ignores इन्द्र !
This stanza=YV.27.38.

१८. महाव्रते निष्केवल्ये 'यः सत्राहा' इत्यादिसूक्तशेषः शंसनीयः । सूत्र्यते हि—'यः सत्राहा विचर्षणिरिति शेषोऽयं ते अस्तु हर्यत इति सूक्ते' (AĀ.5.2.4.) इति । चातुर्विंशिकेऽहनि माध्यन्दिनसवने 'यः सत्राहा' इति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्रितञ्च—'यः सत्राहा विचर्षणिः स्वादोरित्था विषूवतः' (ĀSS.7.4.) इति Sy. १९. इन्द्रः Sy.

२०. महतां शत्रूणां हन्ता Sy.

२१. पिर्चार्षणिः P. ०र्षणिः is suggested for ०र्षिणिः ॥ विशेषेण सर्वस्य द्रष्टा Sy.

२२. Omitted by P. २३. स्तुतिपदैराह्वयामः Sy. २४. उत्तरार्धः प्रत्यक्षकृतः Sy.

शेवान्[1] कृत्वा कां च[2] स्त्रियं[3] समभवत्[4]' इत्याथर्वणिकम्, सहस्रमुष्क ! बहुधन ! सम्पते[5] ! भव । सङ्ग्रामे[6] । अस्माकम् । वर्द्धनाय वर्द्धनाय[7] ।

**बाधसे जनान्वृषभेव मन्युना घृषौ मीळ्ह ऋचीषम ।**
**अस्माकं बोध्यविता महाधने तनूष्वप्सु सूर्ये ॥ ४ ॥**

बाधसे । बाधसे[8] । शत्रुजनान्[9] । वृषभ इव[10] । क्रोधनकर्म[11] । घर्षणकर्तरि[12] । सङ्ग्रामे । स्तुत्या सम[13] ! अस्माकम् । बुध्यस्व[14] । रक्षिता भवामीति । सङ्ग्रामे[15] भव वर्धकः सखीनाम्[16] ।[17]

**इन्द्र ज्येष्ठं न आ भरँ ओजिष्ठं पपुरि श्रवः ।**
**येनेमे चित्र वज्रहस्त रोदसी ओभे सुशिप्र प्राः ॥ ५ ॥**

इन्द्रः[18] । इन्द्र[19] ! अतिशयेन प्रशस्यम्[20] । नः[21] । आभर[22] । बलवत्तमम्[23] । पूरकम् । बलमन्नमेव[24] । यः[25] । द्यावापृथिव्यौ । चित्र[26] । वज्रहस्त[27] । आपूरितवानसि[28] । सुहनो[29] ![30]

---

१. शेफान् is suggested for शेवान् ।
२. कञ्च P., D.
३. स्त्रियां P.
४. हे सहस्रशेफ ! 'यां कां च स्त्रियं सम्भवन्निन्द्रो भोगलोलुपतया स्वशरीरे पर्वणि पर्वणि शेफान् ससर्ज' इति कौषीतकिभिराम्नातम् । तदभिप्रायेणेदं सम्बोधनम् Sy.
५. संपाते P. सत्पते is suggested for सम्पते ॥ सतां पालयितरिन्द्र ! Sy.
६. सङ्ग्रामेषु Sy.
७. वर्द्धय वर्द्धनाय P. One वर्द्धनाय is redundant.
८. बाधस्व Sy. ९. अस्मदीयान् शत्रून् Sy.
१०. वृषभेणेव बलवता Sy.
११. ०नघर्म P. क्रोधेन Sy.
१२. ०णिक्०. P. शत्रूणां घर्षके बाधके Sy.
१३. सह P. सम् D. हे ऋचीषम ! ऋचा सम ! ऋग्यादृशं रूपं प्रतिपादयति तादृग्रूपेन्द्र ! Sy.
१४. बुध्यस्व । रक्षितृत्वेनात्मानं जानीहि । रक्षको भवेति यावत् Sy.
१५. महतो धनस्य निमित्तभूते सङ्ग्रामे Sy.
१६. सवीनां P.
१७. VM. ignores तनूषु । अप्सु and सूर्ये ॥ किमर्थम् ? तनूषु तनयेषु । अप्सु उदकेषु । सूर्ये च लब्धव्येषु सत्स्वेतेषां लाभार्थम् । सूर्यस्य लाभः सन्दर्शनम् । तदर्थमित्यर्थः Sy.
१८. चातुर्विंशिकेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिनः 'इन्द्र ज्येष्ठं न आ भर' इति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्रितञ्च—'इन्द्र ज्येष्ठं न आ भरा त्वा सहस्रमा शतम्' (ĀSS.7.4.) इति Sy.
१९. इन्द्र is suggested for इन्द्रः ।
२०. ०स्यः P. प्रशस्यतमम् Sy.
२१. अस्मभ्यम् Sy. २२. आहर प्रयच्छ Sy.
२३. ओजस्वितममतिशयेन बलकरम् Sy.
२४. अन्नम् Sy.
२५. बलमन्नमेवा यः D. बलमन्नं वा । येन is suggested for बलमन्नमेव यः ॥ अन्नेन Sy. २६. हे चायनीय ! Sy.
२७. वज्रबाहो ! Sy.
२८. आपूरयसि तदन्नमाभरेत्यन्वयः Sy.
२९. हे शोभनहनुक ! एवम्भूत हे इन्द्र ! Sy.
३०. VM. ignores इमे and उभे ॥ इमे परिदृश्यमाने उभे Sy.

त्वामुग्रमवसे चर्षणीसहं राजन्देवेषु हूमहे ।
विश्वा सु नो विथुरा पिब्दना वसोऽमित्रान्त्सुषहान्कृधि ॥ ६ ॥

त्वामुग्रम् । त्वाम् । उद्गूर्णम्[१] । रक्षणाय । मनुष्याणां सोढारम्[२] । राजन्[३] ! देवानां मध्ये । हवामहे[४] । विश्वानि[५] । सुष्ठु । अस्माकम्[६] । कम्पयितॄणि[७] । पिब्दनानि[८] रक्षांसि, आरपि[९] शब्दवन्त[१०] इत्युपब्दिरिति वाङ्नामसु[११] दृष्टम् । अमित्राश्च[१२] । सुष्ठु सोढव्यान्[१३] । कुरु[१४] ।

यदिन्द्र नाहुषीष्वाँ ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥ ७ ॥

यदिन्द्र[१५] । यत् । इन्द्र ! मनुष्यजातीयासु[१६] । प्रजासु । ओजः[१७] । धनम् । च भवति[१८] । यत् । वा । ञ्च[१९] । क्षितीनाम्[२०] । द्युम्नमन्नं[२१] भव[२२] तत्सर्वम्, अस्मभ्यम् । आभर[२३] । महान्ति । विश्वानि[२४] च । बलानि[२५] ।[२६]

यद्वा तृक्षौ मघवन्द्रुह्यावा जने यत्पूरौ कच्च वृष्ण्यम् ।
अस्मभ्यं तद्रिरीहि सं नृषाह्येऽमित्रान्पृत्सु तुर्वणे ॥ ८ ॥

यद्वा । यत् । तृक्षुप्रभृतिषु[२७] । त्रिषु राजसु[२७] । बलं[२८] भवति[२९] धनम्[३०] । च । अस्मभ्यम्[३१] । तत् । सम्प्रयच्छ[३२] ।

---

१. उद्गूर्णबलम् Sy.
२. चर्षणीनां शत्रुभूतानां प्रजानामभिभवितारम् Sy. ३. हे राजमानेन्द्र ! Sy.
४. आह्वयामः Sy.
५. सर्वाणि Sy. ६. अस्मदीयान् Sy.
७. पयतॄणि P. व्यथितानि बाधितानि Sy.
८. पिबनानि P., D. पिहितमव्यक्तं शब्दयन्त इति पिब्दनानि । पृषोदरादिः । तानि Sy.
९. आपिरवि P.
१०. ०ब्दा० D. The passage आरपि शब्दवन्तः is doubtful. पिब्दनाः शब्दवन्तः is suggested for it. Ngh. 1.11.
११. इत्युपद्रवति वाङ्मनसु P.
१२. मि० D. ०त्रांश्च is suggested for ०त्राश्च ॥ शत्रूंश्च Sy.
१३. सुखेनाभिभवितुं शक्यान् Sy.
१४. VM. ignores वसो ॥ हे वासकेन्द्र ! Sy.
१५. ०न्द्रः P. १६. 'नहुष इति मनुष्यनाम' (Ngh. 2.3.) तत्सम्बन्धिनीषु Sy.
१७. बलम् Sy. १८. विद्यते Sy.
१९. पञ्च is suggested for ञ्च ॥ पञ्चानाम् Sy.
२०. निषादपञ्चमाश्चत्वारो वर्णाः पञ्च क्षितयः । तेषाम् Sy. २१. द्योतमानमन्नम् Sy.
२२. भवति is suggested for भव ।
२३. आहर । प्रयच्छ Sy. २४. सर्वाणि Sy.
२५. बलानि चास्मभ्यमाहर Sy. २६. VM. ignores आ ॥ आकारः समुच्चयार्थः Sy.
२७. तृषु D. प्रभृति and त्रि refer to तृक्षौ, द्रुह्यौ and पूरौ ॥ तृक्षावेतत्संज्ञे राजनि । द्रुह्यौ चैतत्संज्ञे च जने । पूरावेतत्संज्ञे नृपे च Sy.
२८. It seems to be the explanation of जने ।
२९. खं P. ३०. वृष्ण्यं वीर्यं विद्यते तत्सर्वम् Sy. ३१. स्तोतृभ्यः Sy.
३२. सम्यक् प्रयच्छ Sy.

युद्धे[1] । अमित्रान्[2] । पृतनासु[3] । हिंसितुम्[4][5] ।

**इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।**
**छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ ९ ॥**

इन्द्र त्रिधातु[6] । इन्द्र ! त्रिधातुसन्धानम्[7] । गृहम् । त्रिकक्ष्यम्[8] । अविनाशयुक्तम्[9] । दीप्तम्[10] । यच्छ[11] । हविष्मद्भ्यः[12] पुत्रेभ्यः । मह्यम्[13] । च । पृथक् कुरु । यज्ञम्[14] । एभ्यः[15] पुत्रेभ्यो मनश्च[16] ।

**ये गव्यता मनसा शत्रुमादभुरभिप्रघ्नन्ति धृष्णुया ।**
**अध स्मा नो मघवन्निन्द्र गिर्वणस्तनूपा अन्तमो भव ॥ १० ॥**

**येन**[17] **गव्यता**[18] । येन[19] । गातामिच्छता[20] । मनसा[21] । शत्रुम्[22] । आदभ्नुवन्ति[23] । अभिभवन्ति[24] । धृष्टाः[25] । तेष्वागतेषु[26] । अस्माकम् । मघवन्[27] ! इन्द्र ! गर्वणः[28] ! शरीराणां रक्षकः सन्[29] । अन्तिकतमः । भव[30] ।

---

१. नृभिर्योद्धृभिः सोढव्ये युद्धे प्रवृत्ते Sy.
२. शत्रून् Sy.
३. सङ्ग्रामेषु Sy.
४. तुर्वितुं हिंसितुम् Sy.
५. VM. explains यत् once only and ignores वा । मघवन् । आ । and कत् ॥ हे धनवन्निन्द्र ! यत्किञ्चन Sy.
६. चातुर्विंशिकेऽहनि निष्केवल्ये 'इन्द्रत्रिधातु' इति वैरूपस्य सामप्रगाथः शंसनीयः । सूत्रितञ्च— 'इन्द्र त्रिधातु शरणं त्वमिन्द्र प्रतूर्तिषु' (ĀSS. 7.3.) इति Sy.
७. त्रिसं० D.
त्रिप्रकारं त्रिभूमिकम् Sy.
८. त्रिकर्षक्ष्यम् P. त्रयाणां शीतातपवर्षाणां वारकम् Sy.
९. अपिना० P.
१०. VM. seems to explain छर्दिः as दीप्तम् । Cf. VM.'s commentary on RV. VI.46.12.
छर्दिष्मदाच्छादनयुक्तमेवङ्गुणविशिष्टम् Sy.
११. देहि Sy.
१२. मघं हविर्लक्षणं धनम् । तद्वद्भ्यश्चास्मदीयेभ्यः Sy.
१३. भरद्वाजाय Sy.
१४. शत्रुप्रेरितं द्योतमानमायुधम् Sy.
१५. अपि चैभ्यः सकाशात् Sy.
१६. VM. explains च once only.
१७. VM. seems to take ये as येन ।
१८. ०व्तता P.
१९. VM. takes ये as येन ॥ ये जनाः Sy.
२०. गातामिच्छत P. गामि० is suggested for गातामि० ॥ शत्रूणां गा इच्छता Sy.
२१. मनसा युक्ताः सन्तः Sy.
२२. शातयितारं वैरिणम् Sy.
२३. Omitted by P. अहिंसिषुः Sy.
२४. Omitted by D. अस्मानभिलक्ष्य प्रकर्षेण हिंसन्ति Sy.
२५. धृष्णवो धृष्टाः सन्तः Sy.
२६. तेष्वागतेषु seems to be the explanation of अध ॥ अध अस्मिन् काले तेभ्यः सकाशात् Sy.
२७. हे धनवन् ! Sy.
२८. थर्वणः P. गिर्वणः is suggested for गर्वणः ॥ गिरां सम्भक्तः ! Sy.
२९. तनूनां शरीराणां रक्षिता सन् Sy.
३०. VM. ignores स्म ।

अध॑ स्मा नो वृ॒धे भ॒वेन्द्र॑ ना॒यम॑वा यु॒धि ।
यद॒न्तरि॑क्षे प॒तय॑न्ति प॒र्णिनो॑ दि॒द्यव॑स्ति॒ग्ममू॑र्धानः ॥ ११ ॥

अध स्मा । अथ[1] । खलु[2] । अस्माकम् । वर्धनाय । भव । इन्द्र ! नेतारं[2] स्तुतीनाम् । रक्ष । युद्धे[3] । यदा । अन्तरिक्षे[4] । गच्छन्ति[5] । पत्रयुक्ताः[6] । इषः[7] । तिग्मशिरसः[8] ।

यत्र॒ शूरा॑सस्त॒न्वो॑ वित॒न्वते॑ प्रि॒या शर्म॑ पितॄ॒णाम् ।
अध॑ स्मा यच्छ त॒न्वे॒३॒॑ तने॑ च छ॒र्दिर॒चित्तं॑ या॒वय॒ द्वेषः॑ ॥ १२ ॥

यत्र शूरासः । यत्र[9] । शूराः[10] । शरीराणि[11] । वितन्वते[12] । प्रियाणाम्[13] । आवासस्थानानि[14] । जनकानाम्[15] । अथ[16] । खलु[16] । यच्छास्माकम्[17] । शरीराय च[18] । पुत्राय[19] । च । दीप्ति[20] विजयात्मिकाम् । चत्तरहितमचिन्तितोवनतं[21] झटित्युपस्थितम् । पृथक् कुरु[22] । रक्षः[23] ।

यदि॑न्द्र॒ सर्गे॒ अर्व॑तश्चो॒दया॑से म॒हाध॒ने ।
अ॒स॒म॒ने अध्व॑नि वृजि॒ने प॒थि श्ये॒नाँ इ॑व श्रवस्य॒तः ॥ १३ ॥

यदिन्द्र । यत्[24] । इन्द्र ! उद्युक्ते[25] प्रवृत्ते[26] । सङ्ग्रामे[27] । अश्वान्[28] । चोदयसि[29] । असमाने[30] ।

१. तदानीम् Sy.
२. नोरा P. अपि च नायं योऽस्माकं नयो नेता । तमपि Sy.
३. युद्ध P.
४. व्योम्नि Sy.
५. शत्रुभिर्विसृष्टाः पतन्ति तदानीं वृधे भवेत्यन्वयः Sy.
६. तदेत्युक्तं कदेत्यत आह । पर्णिनः पक्षवन्तः Sy.
७. दीप्ता बाणाः Sy.
८. तीक्ष्णास्याः Sy.
९. यस्मिन् काले Sy.
१०. शूराः शौर्यवन्तो योद्धारः Sy.
११. स्वकीयानि शरीराणि Sy.
१२. विस्तारयन्ति स्वामिनो जयाय शत्रूणां पुरतो दर्शयन्ति, एतानि च वितन्वते शत्रूणां पुरस्ताद् विस्तारयन्ति । परित्यजन्तीति यावत् Sy.
१३. तथाऽस्मिन् काले प्रियाणि Sy.
१४. शर्माणि स्थानानि Sy.
१५. जनकानां सम्बन्धीनि । तैरर्जितानीति यावत् Sy.
१६. अध स्म अस्मिन् काले Sy.
१७. प्रयच्छ । शत्रुज्ञानात्पूर्वमेव देहीत्यर्थः Sy.
१८. D. reads शरीराणां पुत्राय for शरीराय ।
१९. तनयाय Sy.
२०. ०प्ति P. छर्दिश्छादनमायुधानां निवारकं कवचम् Sy.
२१. चत्तरहितमपिचिन्तितोपत P. चित्तरहितमचिन्तितोपनतम् is suggested for चत्तरहितमचिन्तितोवनतम् ॥ शत्रुभिरज्ञातं यथा भवति तथा Sy.
२२. तेभ्यो वियोजय Sy.
२३. रक्षणः P. द्वेष्टॄन् शत्रून् Sy.
२४. ०न्द्रः P.
२५. यदा Sy.
२६. उद्योगे सति Sy.
२७. जेतव्यस्य महतो धनस्य निमित्ते महति सङ्ग्रामे Sy.
२८. अस्मदीयानश्वान् Sy.
२९. प्रेरयसि Sy.
३०. विषमे Sy.

अद्धेत्यन्तरिक्षनाम[1], महति[2], अन्तरिक्षे । मनुष्यैस्तर्तुमशक्ये[3] । पन्थाः पतन्त्यस्मिन्निति[4] । श्येनानिव[5] । आमिषमिच्छतः[6] पततस्तस्मिन् युद्ध इति[7] ।

**सिन्धूँरिव प्रवण आशुया यतो यदि क्लोशमनु ष्वणि ।**
**आ ये वयो न ववृ॑तत्यामिषि गृभीता बाह्वोर्गवि ॥ १४ ॥**

सिन्धूँरिव[8] । सिन्धूनिव[9] । निम्ने[10] । शीघ्रम् । गच्छतस्तवाश्वान्[11] । यद्यहम्[12] । अनुक्रोशामि[13] । तेषां गमननिमित्ते[14] स्वन्ने[15] सति । येऽश्वाः । पक्षिणः । इव । आवर्तन्ते[16] । आमिषार्थं[17] शत्रुजयार्थम्[18] । गमने बाह्वोः[19] । गृहीताः[20] । रश्मिभिः[21] 'ग्रीवायां बद्धो[22] अपिकक्ष आसनि[23]' इत्युक्तम्, पूर्वत्र सम्बन्धः ।

---

१. अध्वेत्य० is suggested for अद्धेत्य० । Ngh. 1.3. The passage: अध्वेत्यन्तरिक्षनाम refers to अन्तरिक्षे ॥ मार्गे Sy.

२. महति is the explanation of असमाने ।

३. The passage तर्तुमशक्ये seems to be the explanation of वृजिने । तरीतुमशक्ये is suggested for it ॥ कुटिले Sy.

४. मार्गेऽन्तरिक्षलक्षणे Sy.

५. यथामिषार्थिनः श्येना अन्तरिक्षे शीघ्रं गच्छन्ति तथास्मदीयानश्वान् यदा त्वं शीघ्रं गमयसि तदानीमस्माकं तन्वे तनयाय छर्दिर्यच्छेति पूर्वस्यामृचि सम्बन्धः Sy.

६. अवोऽन्नमामिषरूपमात्मन इच्छतः Sy.

७. If VM. does not explain वृजिने by तर्तुमशक्ये, तर्तुमशक्ये is likely to be the paraphrase of असमाने and महति, then वृजिने is ignored by him.

८. उक्तस्यैवार्थस्यातिशयप्रतिपादनार्थेयम् Sy.

९. स्यन्दमाना नदीरिव Sy.

१०. निम्नदेशे Sy.

११. ०स्तवान् P.

१२. हे इन्द्र ! यदि चोदयसे । प्रेरयसि Sy.

१३. क्रोश इति भयनाम । भयमनुलक्ष्य ।

१४. नम० D.

१५. स्वने is suggested for स्वन्ने ॥ आक्रोशे सति Sy.

१६. व० P.
पुनःपुनरावर्तन्ते Sy.

१७. आमिषे मांसे ग्रहीतव्ये सति वयो न यथा श्येनादयः पक्षिणः पुनःपुनरावर्तन्ते तद्वत् । एवम्भूतानश्वान् भयेन क्रोशे सति यदा त्वं प्रेरयसि तदानीमस्मदीयेभ्यश्छर्दिः प्रयच्छेति सम्बन्धः । यद्यप्यृषेर्युद्धे प्रसक्तिर्नास्ति तथापि राजपुरोहितत्वेन राजकीयानां पुरुषाणां जयः प्रार्थ्यत इति न कश्चिद्विरोधः Sy.

१८. ०त्रु स ज० D.

१९. बाहुमूलयोः Sy.

२०. ०त P. कक्ष्यया बद्धाः Sy.

२१. रश्मिः P.
गोरूपे धने जेतव्ये सति Sy.

२२. बन्धो P.

२३. आसन् P. RV. IV. 40.4.

VI. 47.

स्वा॒दुष्कि॑ला॒यं मधु॑माँ उ॒ताय॑ ती॒व्रः कि॑ला॒यं रस॑वाँ उ॒ताय॑म्।
उ॒तो न्व१॒॑स्य प॑पि॒वांस॒मिन्द्रं॒ न कश्च॒न स॑हत आह॒वेषु॑ ॥ १ ॥

स्वादुः[1]। ॥ गर्गो भारद्वाजः[2] ॥ प्रथमा निगदसिद्धा[3]।

अ॒यं स्वा॒दुरि॒ह मदि॑ष्ठ आस॒ यस्येन्द्रो॑ वृत्र॒हत्ये॑ म॒माद॑।
पु॒रूणि॒ यश्च्यौ॒त्ना शम्ब॑रस्य॒ वि न॑व॒तिं नव॑ च दे॒ह्यो॒३॒॑ हन्॑ ॥ २ ॥

अयम्। अयम्[4]। अद्भुतः[5]। इह[6]। मादयितृतमः[7]। भवति[8]। येन[9]। इन्द्रः। वृत्यहत्यै[10]। ममाद[11]।

१. 'स्वादुः' इत्येकत्रिंशदृचं चतुर्थं सूक्तं भरद्वाजपुत्रस्य गर्गस्यार्षम्। 'प्रस्तोक इन्नु' इत्येषा त्रिष्टुप्, 'दशाश्वान्' इत्यनुष्टुप्, 'दश रथान्' इति गायत्री, 'महि राधः' इति द्विपदा द्वयेकादशका, 'युजानो हरिता' इत्येषा बृहती, 'दिवस्पृथिव्याः' इति जगती, शिष्टास्त्रिष्टुभः। आदितः पञ्चानामृचां सोमो देवता। 'अगव्यूति क्षेत्रम्' इत्यर्धर्चप्रथमपादे देवा उत्तरस्य भूमिस्तृतीयस्य बृहस्पतिश्चतुर्थस्येन्द्रः। 'प्रस्तोकः' इत्याद्याश्चतस्रः सृञ्जयपुत्रस्य राज्ञो दानस्तुतित्वात्तद्देवताकाः। 'वनस्पते वीड्वङ्गः' इत्ययं तृचो रथदेवत्यः। 'उपश्वासय' इति तृचो दुन्दुभिदेवत्यः। 'समश्वपर्णाः' इत्यर्धर्च ऐन्द्रः। शिष्टा इन्द्रदेवताकाः। तथा चानुक्रान्तम्—'स्वादुरेकत्रिंशद्गर्गः पञ्चादौ सौम्योऽगव्यूत्यर्धर्चो लिङ्गोक्तदेवतः प्रस्तोकः' (KSA. 31.47.p.23.)इति। त्रिष्टुबनुष्टुब् गायत्री द्विपदा साञ्जयस्य प्रस्तोकस्य दानस्तुतिः परौ तृचौ रथदुन्दुभिदेवत्यावैन्द्रो ऽन्त्योऽर्धर्चौ युजानो बृहती दिवस्पृथिव्या जगती। आग्निमारुत आदितश्चतस्रः शंसनीयाः। सूत्रितं च—'स्वादुष्किलायमिति चतस्रो मध्ये चाह्वानम्' (ĀSS. 5.20.) इति Sy.

२. नर्गो भ० P.

३. ०द्धाः P. अयमभिषुतः सोमः स्वादुरास्वादनीयः किल भवति। उतापि च मधुमान् माधुर्यवांश्चायं सोमो भवति। तथायं सोमस्तीव्रः किल मदोत्पादने तीक्ष्णः खलु भवति। उतापि चायं सोमो रसवान् सारवांश्च भवति। अनेन वाक्यचतुष्टयेन सोमस्य माधुर्यातिशयत्वं च प्रतिपादितम्। उतोपि चास्य सोमस्य। द्वितीयार्थे षष्ठी। इमं सोमं पपिवांसं पीतवन्तमिन्द्रमाहवेषु सङ्ग्रामेषु न कश्चन न कोऽपि सहते, अभिभवति। नु इति पूरकः Sy. सौमीयमृक्। गर्गस्यार्षम्। स्वादुर्मिष्टः किलायं सोमः। मधुमान् मधु स्वादुविशेषस्तद्वान्। उतायम् उतशब्दोऽप्यर्थे। मधुरोऽपि किलायम्। तीव्रशब्दस्तीक्ष्णवचनः कटुवचनो वा। तिक्तरसोऽपि किलायं कटुकरसो वा। रसवान्, भूम्न्यं मतुप्। बहुरसोऽपि किलायम्। उतो नुशब्दश्चार्थे। अपि चास्य, द्वितीयार्थे एषा षष्ठी। तच्छ्रुतेर्वैकदेशमिति वाक्यशेषः। एनं सोमस्य वा सोमस्यैकदेशं स्वांशलक्षणं पपिवांसं पीतवन्तमिन्द्रं न कश्चिदपि सहतेऽभिभवत्याहवेषु सङ्ग्रामेषु SKN. किलेति विद्याप्रकर्षे N.1.5., SKN. I.62–63.

४. सोमः Sy.

५. उद्भू० D. आस्वादितः पीतः सन् Sy.

६. अस्मिन् यज्ञे Sy.

७. अतिशयेन मदयिता Sy.

८. बभूव Sy.

९. यस्य सोमस्य पानेन Sy.

१०. वृत्रहत्यै is suggested for वृत्यहत्यै ॥ वृत्रहननकाले Sy.

११. मत्तो बभूव Sy.

बहूनि । यः[1] । बलानि[2] । शम्बरस्य[3] । विजघान । नव[4] । नवतिम् । च । उपचिताञ्च[5] पुरीः[6] ।

**अयं मे पीत उदियर्ति वाचमयं मनीषामुशतीमजीगः ।**
**अयं षळुर्वीरमिमीत धीरो न याभ्यो भुवनं कच्चनारे ॥ ३ ॥**

अयम् । अयम्[7] । मे[8] । पीतः[9] । ससुद्गमयति[10] । वाचम् । अयम्[7] । बुद्धिम् । कामयमानाम्[11] । जागरयति[12] । अयम् । षट् । उर्वी,[13] द्यौश्च ञ्च[14] पृथिवी इवेत्यतः । अमिमीत[15] । प्राज्ञः[16] । न । याभ्यः[17] । भूतजातम् । किम्[18] । चिदपि । दू[19] भवति[20] ।

**अयं स यो वरिमाणं पृथिव्या वृष्माणं दिवो अकृणोदयं सः ।**
**अयं पीयूषं तिसृषु प्रवत्सु सोमो दाधारोर्वन्तरिक्षम् ॥ ४ ॥**

अयम्[21] । अयम्[22] । सः[23] । पृथिव्याः । वरिमणम्[24] उरुताम् । अकरोत्[25] । दिवश्च[26] । वष्र्माणं[27] घनत्वम्[28] ।

---

१. सोमः Sy.
२. च्यौत्नानि बलानि Sy.
३. असुरस्य Sy.
४. नवोत्तरनवतिसङ्ख्याकाः । यः सोमो वि हन् व्यहन्, अयं सोम इति प्रथमपादेन सम्बन्धः Sy.
५. ०ताश्च is suggested for ०ताञ्च ॥ दिग्धा उपचिताः Sy.
६. ०रीम् D. आसुरीः पुरीः । तदीयान् देहान् वा Sy.
७. सोमः Sy.
८. मम Sy.
९. वीतः P. पीतः सन् Sy.
१०. ससुद्गमयसीति P. समुद्ग० is suggested for ससुद्ग० । उद्गमयति Sy.
११. ०नान् D. कान्ताम् Sy.
१२. उद्गारयति । प्रकाशयति । 'गॄ निगरणे' इत्यस्माण्ण्यन्ताल्लुङि चङि रूपम् Sy.
१३. ०वि D. उर्वीः is suggested for उर्वी ॥ षण्मोर्वीरंहसस्पान्तु । द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चोषधयश्चेति प्रतिपादिता द्युपृथिव्याद्याः षट् Sy.
१४. It seems to be redundant.
१५. अमीत P. निर्मितवान् Sy.
१६. ०ज्ञा P. धीमान् सोमः Sy.
१७. उर्वीभ्यः Sy.
१८. किञ्चन Sy.
१९. भू P. दूरे is suggested for दू ॥ विप्रकृष्टे देशे Sy.
२०. भवति । अपि तास्वेव सर्वं भूतजातं वर्तते तादृशीरुर्वीर्निर्मितवान् Sy.
२१. The *pratīka* is supplied by the Editor.
२२. सोमः Sy.
२३. स खलु Sy.
२४. परिमणम् P. ०माणम् is suggested for ०मणम् ॥ उरुत्वं विस्तृतत्वम् Sy.
२५. ०रो D.
२६. द्युलोकस्य Sy.
२७. वर्ष्माणम् D. संहतत्वं दृढत्वम् Sy.
२८. धन० P.

अकरोत् सः[1]। अयम्। अयमेव। प्रकृष्टासु[2]। तिसृषु[3]। सारमकरोत्[4] 'त्वमिमा ओषधीः सोम विश्वाः[5]।' इत्युक्तम्।

'गोजा महिषीषु[6]'। इत्यपरम्। सोम एव। धारयति। विस्तीर्णम्। अन्तरिक्षम्।[7]

**अयं विदच्चित्रदृशीकमर्णः शुक्रसद्मनामुषसामनीके।**
**अयं महान्महता स्कम्भनेनोद्द्यामस्तभ्नाद्वृषभो मरुत्वान् ॥ ५ ॥**

अयं[8] विदत्[9]। अयम्[10]। लभयति लभते वा[11]।[12] चित्रदर्शनम्[13]। उदकम्[14]। शुक्लावासस्थानाम्[15]। अह्नाम्[16]।
अनीके[17]। अह्नोभ्यः पर्जन्यो वर्षति[18]। अयम्[19]। महान्। महतान्तरिक्षाख्येन[20]। स्कन्दनेन[21]। उदस्तभ्नात्[22]। द्युलो-
कम्। यज्ञप्रवृत्तैर्ऋत्विग्भिस्तद्वानिनि[23]।

**धृषत्पिब कलशे सोममिन्द्र वृत्रहा शूर समरे वसूनाम्।**
**माध्यंदिने सवन आ वृषस्व रयिस्थानो रयिमस्मासु धेहि ॥ ६ ॥**

धृषत्[24] पिब। ॥ सौम्यः समाप्ताः ॥[25] धृष्टम्[26]। पिब। कलशे स्थितम्[27]। सोमम्। इन्द्र! शत्रुहा[28]।
शूर[29]! सङ्ग्रामे[30]। वसूनामर्थाय[31] प्रवृत्ते। माध्यन्दिने। सवने। आसिञ्चस्व[32] जठरे सोमम्। गवां

---

१. अयं सोमः स हि भवति Sy.
२. प्रकृष्टास्वेतासु Sy.
३. प्रकृष्टस्तुतिषु P. ओषधीष्वप्सु गोषु च Sy.
४. रसं धारयति Sy.
५. RV. I.91.22. तथा च मन्त्रान्तरम्—त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः। त्वमा ततन्थोर्व१न्तरिक्षम्। RV.I.91.22. Sy.
६. ०षीत्यषु P.
७. VM. ignores यः।
८. अयम D. ९. वित् P.
१०. सोमः Sy.
११. लम्भ० is suggested for लभ०।
१२. लंभ० D.
१३. विचित्रदर्शनं यद्वाश्चर्यत्वेन दर्शनीयम् Sy.
१४. सर्वस्य प्रेरकं सौरं ज्योतिः Sy.
१५. ०क्लवा० P. शुक्रं निर्मलमन्तरिक्षं सद्म सदनं यासां तासाम् Sy. १६. उषसाम् Sy.
१७. प्रमुखे। उषःकाल इत्यर्थः Sy.
१८. वष० P. VM. seems to explain वृषभः by the passage: अह्नोभ्यः पर्जन्यो वर्षति ॥ वृष्टेर्जनयिता। सोमाहुत्या हि वृष्टिर्जन्यते Sy.
१९. प्रवृद्धः Sy. २०. स्थविष्ठेन Sy.
२१. स्कम्भनेन is suggested for स्कन्दनेन ॥ स्तम्भनसाधनेन मध्यवर्तिनान्तरिक्षेण Sy.
२२. ऊर्ध्वमस्थापयत्। यथाधो न पतति तथान्तरिक्षं तस्याधारत्वेन कृतवानित्यर्थः Sy.
२३. ०त्तैः ऋ० P. मरुद्भिर्युक्तः Sy.
२४. धृषयत् D.
२५. The passage सौम्यः समाप्ताः refers to the previous five stanzas, therefore it should come immediately after the fifth stanza.
२६. ०ष्टा P. धृष्टं यथा भवति तथा Sy.
२७. द्रोणकलशेऽवस्थितम् Sy.
२८. शहा P. वृत्राणामावरकाणां शत्रूणां हन्ता Sy.
२९. हे शौर्यवन्निन्द्र! Sy.
३०. सङ्ग्रामे निमित्तभूते सति Sy.
३१. धनानाम् Sy. ३२. जठरं सोमेन पूरय। सर्वैन्द्रं हि माध्यन्दिनं सवनम् Sy.

रयिस्थानाभूतस्त्वम्[1]। रयिम्[2]। अस्मासु। धेहि[3]।

**इन्द्र॒ प्र णः॑ पुरए॒तेव॑ पश्य॒ प्र नो॑ नय प्रत॒रं वस्यो॒ अच्छ॑ ।**
**भवा॑ सुपा॒रो अ॑तिपार॒यो नो॒ भवा॒ सुनी॑तिरु॒त वा॒मनी॑तिः ॥ ७ ॥**

इन्द्र[4]। इन्द्र ! प्रपश्य[5]। अस्मान्। पुरोगन्तेव[6]। प्रणय[7] च। अस्मान्। अत्यन्तम्[8]। अभ्युदयम्[9]। प्रति[10]। भव। सुष्ठु पारयिता[11]। अस्माकं[12] यस्त्वम्। अतिपारयो[13] भवसि स्तोतॄणाम्, सोपसर्गेविशच्छान्दसः[14]। भव। सुनयनः[15]। अपि[16]। वननीयनयनम्[17]।

**उ॒रुं नो॑ लो॒कमनु॑ नेषि वि॒द्वान्त्स्व॑र्व॒ज्ज्योति॒रभ॑यं स्व॒स्ति ।**
**ऋ॒ष्वा त॑ इन्द्र॒ स्थवि॑रस्य बा॒हू उप॑ स्थेयाम शर॒णा बृ॒हन्ता॑ ॥ ८ ॥**

उरुं[18] नः। उरुं[19] विस्तीर्णम्[20]। स्थानम्[21]। अनुनय[22]। अस्मान्। जनन्[23]। अभ्युदययुक्त[24]।

---

१. ओभू० P. ०नभू० is suggested for ०नाभू० ॥ रयीणां धनानां स्थानभूतस्त्वम् Sy. २. धनम् Sy.

३. धारय Sy. ४. ०न्द्रः P.

५. प्रकर्षेणेक्षस्व यथा मार्गरक्षकः स्वयं पुरतो गच्छन्ननुगच्छतो रक्षणीयान् पथिकान् पश्यति तथा पश्येत्यर्थः Sy. ६. पुरतो गन्तेव Sy.

७. प्रापय Sy. ८. प्रकृष्टतरमतिशयेन Sy.

९. वसीयः श्रेष्ठं धनम् Sy.

१०. आभिमुख्येन Sy. ११. दुःखेभ्यस्तारयिता Sy. १२. अस्मान् स्तोतॄन् Sy.

१३. शत्रूनतिक्रामय Sy.

१४. सोमवसर्गेविशन् धा० P. ०र्गेऽपि शश्छा० is suggested for ०र्गेविशच्छा० ॥ Cf. 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' Pa.3.1.138.

१५. शोभननयनश्च Sy. १६. अवि P.

१७. वनीयनयनं P. ०नयनः is suggested for नयनम् ॥ वामानां वननीयानां धनानां नेता भव। यद्वा अस्मदर्थं श्रेष्ठप्रापणो भव Sy.

१८. ऐन्द्रे पशौ 'उरुं नः' इत्येषा वपाया याज्या। सूत्रितञ्च—'उरुं नो लोकमनुनेषि विद्वान् प्र ससाहिषे पुरुहूत शत्रून्' (ĀSS.3.7.) इति। होत्रकैः सदःप्रसर्पणसमयेऽप्येषा जप्या। सूत्रितञ्च—'उरुं नो लोकमनुनेषि विद्वानिति जपन्तः' (ĀSS.5.3.) इति। चातुर्विंशिकेऽह्न्यहर्गणेषु च द्वितीयादिष्वहःसु माध्यन्दिनसवनेऽच्छावाकस्यैषा चारम्भणीया। सूत्रितञ्च—'उरुं नो लोकमनुनेषि विद्वानिति कद्रुद्रूच आरम्भणीयाः' (ĀSS.7.4.) इति Sy. शंयोरार्षम् Dur. गर्गस्यार्षम् SKN.

१९. D. adds अपि after उरुम्।

२०. असम्बाधम् SKN.

२१. स्थानं स्वर्गाख्यम् Sy. अस्मल्लोकं स्वर्गाख्यमिन्द्रलोकाख्यं वा SKN.

२२. अनुगमय Sy. यस्त्वम्....अनुनयसि। स्वेन सुकृतेन कर्मणा गच्छतां गमनानुग्रहे वर्तसे Dur. अनुपूर्वस्य नयतेर्लोटि रूपम्। आनुपूर्व्येण नयेत्यर्थः। पश्चाद् वा मरणस्य मरणोत्तरकालमित्यर्थः SKN. २३. जानन् is suggested for जनन् ॥ जानंस्त्वम् Sy., Dur. जानन् भक्ततामस्माकम् SKN.

२४. ०युक्तम् is suggested for ०युक्त ॥ सुखवत् Sy. आदित्यसमानं प्रकाशेन लोकम् Dur. स्वकादित्यादिवदित्यर्थः। तेन कर्तृभूतेन तद्वदादित्यकर्तृकमित्यर्थः SKN.

विनाशरहित[1]। द्योतमानम्[2]। अभयं[3] च प्रापय[4]। दर्शनीयौ[5]। तव[6]। इन्द्र! स्थविरस्य[7]। बाहू[8]! वयमुपस्थेयाम[9] समाश्रिता[10] भूत्वा। हिंसकौ[11]। महान्तौ[12]।

**वरिष्ठे न इन्द्र वन्धुरे धा वहिष्ठयोः शतावन्नश्वयोरा।**
**इषमा वक्षीषां वर्षिष्ठां मा नस्तारीन्मघवन्रायो अर्यः॥ ९॥**

वरिष्ठे[13]। उरुतमे[14]। अस्मान्। रथस्य। फलकसंघाटे[15]। धारय[16]। तथा वोढृतमयोः[17]। अश्वयोः[18]। च[19]। शतधन![20] शतप्रज्ञान! वा[21]। अन्नम्। आवह[22]। अन्नानाम्[23]। वर्षीष्ठम्[24]। मा[25]। अस्माकम्। हिंसीः[26]। धानानि[27]। स्वामी[28][29]।

**इन्द्र मृळ मह्यं जीवातुमिच्छ चोदय धियमयसो न धाराम्।**
**यत्किं चाहं त्वायुरिदं वदामि तज्जुषस्व कृधि मा देववन्तम्॥ १०॥**

इन्द्र मृळ। इन्द्र! सुखय[30] माम्। मह्यम्। जीवनम्[31]। इच्छ[32]। चोदय[33] मयि। त्वदीयां बुद्धिम्।

---

१. रहितम् is suggested for रहित॥ क्षेमेण Sy. स्वस्त्ययनाय Dur. अविनाशश्चेत्यर्थः SKN.
२. ज्योतिश्च अस्माननुगमय Sy. ज्योतिर्लोकविशेषणं वा। लिङ्गव्यत्ययेन स्वर्वन्तं सर्वेणाभिलषितेनार्थेन तद्वन्तं लोकम् SKN.
३. भयरहितम् Sy.
४. अस्माननुगमय Sy.
५. ०यो P. ऋष्वावेतौ रेषणौ शत्रूणाम् Dur. ऋष्वो महन्नामैतत्। महान्तौ प्रभावतो रेषणौ वा SKN. ६. सम्बन्धिनौ Sy.
७. स्थूलस्य वृद्धस्य Sy. महतः Dur., SKN.
८. त्वदीयौ हस्तौ Sy. हस्तौ Dur. बाहू यौ तयोः SKN. ९. यम् P.
१०. रक्षकतया उपतिष्ठेम। सेवेमहि Sy. उपतिष्ठेमेत्येतदाशास्महे Dur. उपसमीपे स्थेयाम तिष्ठेम तव समीपे निवसेमेत्याशास्महे। स्तुतिर्वोपस्थानम्। तव बाहू स्तुयामेत्यर्थः। बाहूपस्थानेन च तद्वत उपस्थानं लक्ष्यते SKN.
११. शरणौ रक्षकौ Sy. शरण्यावाश्रयणीयौ नित्यम् Dur. कीदृशौ? शरणा—'शॄ हिंसायाम्' शरितारौ शत्रूणां शरण्यौ वा SKN.
१२. सर्वत्राकारो द्विवचनस्य स्थाने। महान्तौ प्रमाणतः SKN. अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते। 'ऋष्वा त इन्द्र स्थविरस्य बाहू' SKN. N.7.6., SKN. III.4.
१३. ०ष्ठो P. १४. उरुतमे विस्तीर्णतमे Sy.
१५. ०का० P. आत्मीये रथे Sy.
१६. धेहि। धारय Sy.
१७. ०तयोः P. १८. त्वदीययोरश्वयोः Sy.
१९. आकारः समुच्चये Sy.
२०. हे शतसङ्ख्यधनेन्द्र! Sy.
२१. ०न्नावह P.
२२. अस्मदर्थमावह। आनय Sy.
२३. अन्नानां मध्ये Sy.
२४. अन्नानःवर्षिम् P. वर्षिष्ठम् is suggested for वर्षीष्ठम्॥ वृद्धतमामिषमन्नम् Sy.
२५. मह P. २६. हिंसीत् Sy.
२७. धनानि is suggested for धानानि।
२८. धनस्य स्वामी अन्यः कश्चित् Sy.
२९. VM. ignores इन्द्र and मघवन्। हे धनवन्निन्द्र! Sy.
३०. मृळय, अस्मान् सुखय Sy.
३१. जीवनौषधम् Sy. ३२. दातुमिच्छ Sy.
३३. ०यं P. स्तुतिविषयां कर्मविषयां वा प्रेरय। तीक्ष्णीकुरु Sy.

अस:[1] । इव । धारां तीक्ष्णाम्[2] । यत् । किम्[3] । च । अहम् । त्वत्कामः[4] । इदम्[5] । वदामि स्तोत्रम् । तत् । जुषस्व । कृधि[6] । माम् । ईश्वरवन्तम्[7] ।

उत्तरास्तिस्रो निगदसिद्धाः ।

त्रातार॒मिन्द्र॑मवि॒तार॒मिन्द्रं॒ हवे॑हवे सु॒हवं॒ शूर॒मिन्द्र॑म् ।
ह्वया॑मि श॒क्रं पु॑रुहू॒तमिन्द्रं॑ स्व॒स्ति नो॑ म॒घवा॑ धा॒त्विन्द्रः॑ ॥ ११ ॥

[ त्रातारमिन्द्रम्[8] । ][9]

१. अयोमयस्य खड्गादेः Sy.
२. सा यथा सूक्ष्मा तद्वत्सूक्ष्मविषयां धियं चोदयेत्यर्थः Sy.
३. किञ्चन समीचीनमसमीचीनं वा Sy.
४. त्वामात्मन इच्छन् Sy.
५. इदानीम् Sy. ६. कुरु Sy.
७. रक्षकैर्देवैरुपेतम् Sy.
८. आयुकामेष्टयामिन्द्रस्य त्रातुः 'त्रातारम्' इत्यनुवाक्या । सूत्रितञ्च—'त्रातारमिन्द्रमवितारमिन्द्रं मा ते अस्यां सहसावन् परिष्टौ' (ĀSS. 2.10.) इति Sy.
९. The *pratīka* is supplied by the Editor. VM. does not explain the following three stanzas. Sy. explains this stanza in the following manner:—
त्रातारं शत्रुभ्यः पालयितारमिन्द्रमाह्वयामि । तथावितारं कामैस्तर्पयितारमिन्द्रमाह्वयामि । हवे हवे सर्वेष्वाहवनेषु सुहवं सुखेनाह्वातुं शक्यं शूरं शौर्यवन्तं शक्रं सर्वकार्येषु शक्तं पुरुहूतं पुरुभिर्बहुभिः पालनार्थमाहूतमेवंविधमिन्द्रं ह्वयामि आह्वयामि । एवमाहूतो मघवा धनवान् स इन्द्रः स्वस्त्यविनाशं नोऽस्मभ्यं धातु ददातु, यद्वा अस्माकं विदधातु ॥
त्रातारं रक्षितारमिन्द्रमवितारं प्रीणयितारमिन्द्रम् । हवे हवे आह्वान आह्वाने यज्ञे वा सुहवं सुखेन हूयत आहूयत इति सुहवं शूरम् । शक्रं शक्नोति शक्रस्तं समर्थम् । पुरुहूतं पुरुभिर्बहुभिर्हूयते पुरुहूतस्तं बहुभिराहूतम् । ईदृशमिन्द्रं ह्वयामि आह्वयामि । मघवा धनवानिन्द्र आहूतः सन्नोऽस्माकं स्वस्ति, अविनाशं धातु दधातु करोतु । विकरणव्यत्ययः । इन्द्रशब्दावृत्तिरादरार्था Mah.
त्रातारं रक्षितारमिन्द्रं यतः कथयन्ति । अवितारं च यत इन्द्रं कथयन्ति । हवे हवे सुहवम् । आह्वान आह्वाने शोभनाह्वानमिन्द्रं कथयन्ति । शूरं विक्रान्तमिन्द्रं यतः कथयन्ति जनाः । अतो ह्वयामि शक्रं शक्तमिन्द्रं तमहम् । पुरुहूतं बहुभिराहूतम् । स चाहूतः सन् । स्वस्ति नोऽविनाशमस्माकं मघवा धनवान् धातु दधात्विन्द्रः U.
इदि परमैश्वर्ये, इन्द्रः । ऐश्वर्यहेतून् बहून् दर्शयति—त्रातारमवितारं देवानाम् । तस्मादिन्द्रव्यपदेशभाजम् । हवे हवे सुहवं सर्वेष्वाह्वानेषु सुखेन ह्वातव्यं निर्भयैः ।....शूरं महाबलं सर्वजेतारं तथाप्याहूतमात्र एवागच्छन्तमिन्द्रमितोपीन्द्रशब्दाभिधेयं शक्रं सर्वार्थसाधनशक्तं पुरुहूतं बहुभिर्यजमानैराहूतम् । अतोऽप्यासादितेन्द्रत्वं देवेश्वरं हुव आह्वयामि । शपो लुक् । ....नु इति पादपूरणे । स मघवा प्रशस्तैर्धनैरन्नादिभिर्हविरादिभिश्च तद्वान् । अतश्चेन्द्रपदाभिधानार्हो नोऽस्मभ्यं स्वस्ति, अविनाशं धातु ददातु । शपो लुक् । ....यद्वा पुरुषु स्थानेषु हूतः पुरुहूतः ।.... अत्र पुनः पुनरिन्द्रोक्तिरस्माकं सर्वार्थेषु त्वामेव शरणं नान्य इत्यादरसूचनार्था BB.
This stanza=YV.20.50=TS.1.6.12.5.

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ १२ ॥

[इन्द्रः सुत्रामा ।][1]

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ॥ १३ ॥

[तस्य वयम् ।][2]

---

१. The *pratīka* is supplied by the Editor. सुत्रामा सुष्ठु त्राता स्ववान् धनवान् स इन्द्रोऽवोभी रक्षणैः सुमृळीकः सुष्ठु सुखयिता भवतु । तथा च विश्ववेदाः सर्वधनः सर्वविद्वान् वा स इन्द्रो द्वेषो द्वेष्टॄन् शत्रून् बाधताम् हिनस्तु । अभयं भयरहितं चास्माकं कृणोतु करोतु । वयं च तत्प्रसादात् सुवीर्यस्य शोभनवीर्यस्य पतयः स्याम भवेम Sy.
इन्द्रः अवोभिरन्नैः सुमृडीकः शोभनसुखकारी भवतु । शोभनं मृडीकं सुखं यस्मात्स सुमृडीकः । कीदृश इन्द्रः ? सुत्रामा सुष्ठु त्रायते रक्षति सुत्रामा ।....स्ववान् स्वं धनमस्यास्तीति स्ववान् ।....विश्ववेदा विश्वं सर्वं वेदो धनं यस्य सः । स चेन्द्रो द्वेषो दौर्भाग्यं बाधतां निवर्तयतु । अभयं च कृणोतु करोतु । किञ्च, इन्द्रप्रसादाद् वयं सुवीर्यस्य धनस्य पतयः स्वामिनः स्याम भवेम । शोभनाश्च ते वीराश्च सुवीराः पुत्रादयः, तेभ्यो हितं सुवीर्यं तस्य Mah. इन्द्रः सुत्रामा इन्द्रः साधुत्राणः स्ववान् धनवान् । अवोभिरन्नैः सुमृडीकः शोभनसुखकारी भवतु । विश्ववेदाः सर्वधनः । बाधतामपगमयतु द्वेषो दौर्भाग्यम् । अभयं कृणोतु करोतु । त्वत्प्रसादाच्च सुवीर्यस्य धनस्य पतयः स्याम U.
This stanza=YV.20.51.

२. The *pratīka* is supplied by the Editor. यज्ञियस्य यज्ञार्हस्य सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ वयं स्याम । तद्विषयभूता भवेम । तथा भद्रे कल्याणे सौमनसे सुमनसो भावेऽपि तदीये स्याम । भवेम । स इन्द्रोऽस्मास्वनुग्रहात्मिकां बुद्धिं सौमनस्यं च करोत्वित्यर्थः । सुत्रामा सुष्ठु त्राता स्ववान् धनवान् स इन्द्रश्चास्मे अस्मत्त आराच्चित् दूरदेश एव द्वेषो द्वेष्टॄन् सनुतः, अन्तर्हितनामैतत् । अन्तर्हितान्युयोतु । पृथक्करोतु Sy. गर्गस्य भारद्वाजस्यार्षम् ।....तस्येन्द्रस्य यज्ञियस्य यज्ञार्हस्य वयं सुमतौ शोभनेऽध्यवसाये स्याम । अपि चास्य भद्रे भन्दनीये स्तुत्ये । सौमनसे शोभनसङ्कल्पे मनसि नित्यमेव स्याम । स सुत्रामेन्द्रः स्ववान् धनवान् अस्मे, अस्मत्, आराच्चिद् दूरतरमपनीय । द्वेषो, द्वेषं पापं ततः सनुतः स्वन्तर्हितं कृतं यथा तं न पश्येम । तथा युयोतु नाशयत्वित्यर्थः । एवमत्र द्वेषः, इत्यनेन सम्बन्धात्, 'अस्मे' इत्यस्य, अस्मदित्येवं पञ्चम्या विपरिणाम उपपद्यते Dur. तस्य वयं सुमतौ शोभनायां मतौ पालनबुद्धौ । यज्ञियस्य यज्ञार्हस्य । किम् ? स्यामेति, यत् परस्तात् क्रियापदम् । न च केवलायां सुमतौ, किं तर्हि ? अपि भद्रे कल्याणे । सौमनसे, शोभनं मनस्सुमनस्तदेव सौमनसम् । किं पुनस्तत् ? दानबुद्धिः । तत्रापि वयमेव स्याम । पालनबुद्धिषु वयं पाल्या दानबुद्धिषु च सम्प्रदानभूता वयमेव स्यामेत्यर्थः । किञ्च सुत्रामा शोभनस्त्राता स्ववान् धनवानात्मवान् वा । इन्द्रोऽस्मे, अस्मद् अस्मत्त इत्यर्थः । आराच्चित्, आराच्छब्दो दूरवचनः । चिदप्यर्थे । दूरे, अपिशब्दात् सन्निकृष्टेऽपि । यद् द्वेषो द्वेष्यं वाऽस्माकं रक्षआदि । सनुतः, अन्तर्हितनामैतत् । युयोतु पृथक्करोतु, अपनयत्वित्यर्थः SKN.
'अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु' अस्मदित्यर्थः N.6.7., SKN. II. 412.

**अव॒ त्वे इ॑न्द्र प्र॒वतो॒ नोर्मिर्गिरो॒ ब्रह्मा॑णि नि॒युतो॑ धवन्ते ।**
**उ॒रू न राध॒: सव॑ना पु॒रूण्य॒पो गा व॑ज्रिन्युवसे॒ समिन्दू॑न् ॥ १४ ॥**

अव[1] त्वे । अवधवन्ते[2] पतन्ति[3] । त्वयि[4] । इन्द्र[5] ! प्रवणात्[6] । इव । उदकम्[7] । स्तोत्रशस्त्राणि[8] । नियुत[9] इव शीघ्रवेगाः । बहु[10] । च[11] । अन्नम्[12] । संवननानि[13] च । बहूनि धावन्ते[14] । स त्वं यजमानैरभिष्टूयमाणानिन्दून्[15] । उदकानि[16] । गाश्च[17] । सम्मिश्रयसि[18] यजमानेभ्य[19] इत्यर्थः[20] ।

**क ईं॑ स्तव॒त्कः पृ॑णा॒त्को य॑जाते॒ यदु॒ग्रमिन्म॒घवा॑ वि॒श्वहावे॑त् ।**
**पादा॑विव प्र॒हर॑न्न॒न्यम॑न्यं कृ॒णोति॒ पूर्व॒मप॑रं॒ शची॑भिः ॥ १५ ॥**

क ईम्[21] । कः[22] । एनम्[23] । स्तोतुं शक्नुयात्[24] । को वास्मै[25] । प्रयच्छति[26] । को वा । यजते[27] । यदयम्[28] । उद्‌गूर्ण लोके कश्चिदपि विद्यमानं शत्रुम् । सर्वदा शीघ्रम् । वेत्ति[29] । यच्च[28] पादाविव[30] । गमनवेलायां प्रहरन्[31] ।

---

१. अप D.
२. ०धनवन्ते P. अवगच्छन्ति Sy.
३. ०ति P.
४. त्वाम् Sy.
५. त्वदी P.
६. तत्र दृष्टान्तः । प्रवणदेशानिव । यथोच्छ्रितात्स्थलान्निम्नदेशं शीघ्रं गच्छति तद्वत् Sy.
७. जलसङ्घः Sy.
८. गिरः उक्थात्मिका वाचः, ब्रह्माणि सामरूपाणि स्तोत्राणि च Sy.
९. स्तोतुः Sy.
१०. उरूणि Sy.
११. नशब्दः समुच्चये Sy.
१२. राधांसि हविर्लक्षणानि धनानि Sy.
१३. सवनानि is suggested for संवननानि ॥ सवनानि बह्वोऽभिषुताः सोमाश्च Sy.
१४. त्वामेवाभिगच्छन्ति Sy.
१५. ०माणाद् P. ०मानान् is suggested for ०माणान् ।
१६. इन्दुन् D. सोमांश्च Sy.
१७. वसतीवर्याख्याः Sy.
१८. गोविकारान् शृतदध्यादीन् श्रपणार्थान् Sy.
१९. सम्यक् मिश्रयसि । त्वां यष्टुं वसतीवरीभिरभिषुत्य तं सोममाशिरादिभिः श्रपणद्रव्यैः संस्कुर्वन्तीत्यर्थः Sy.
२०. VM. ignores वज्रिन् ॥ हे वज्रवन्निन्द्र! Sy.
२१. ई P., D.
२२. स्तोता Sy.
२३. इन्द्रम् Sy.
२४. स्तुयात् । स्तोतुं शक्नुयात् Sy.
२५. एनम् Sy.
२६. ०न्ति D. प्रीणयेत् Sy.
२७. एनं हविर्भिर्यजेत Sy.
२८. यस्मादयम् Sy.
२९. आत्मानं जानाति । सर्वदोग्र एव भवति तस्मात् कारणात् न कोऽप्येनं स्तोतुं प्रीणयितुं यष्टुं वा शक्नोतीति भावः Sy.
३०. तत्र दृष्टान्तः । यथा Sy.
३१. यथा पादौ प्रहरन् मार्गे प्रक्षिपन् पुरुषः करोति तद्वत् Sy.

अन्यमन्यम्[1] । करोति[2] । पूर्वं पादमपरम्[3] । अपरं[4] च पूर्वम् करोति । कर्मभिः[5] भूयो भूय आश्चर्याणि कर्माणि करोति, तस्मान्न स्तोतुमयं शक्यः[6] इति[7] ।

**शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।**
**एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥ १६ ॥**

शृण्वे[8] वीर[9] । श्रूयते[10] । वीरः[11] । उग्रमुग्रं शत्रुम्[12] । नमयन्[13] । अन्यमन्यं[14] च । अतिगच्छति, अन्तमतिगच्छन्[15] । एधमानानां मनुष्याणां द्वेष्टाऽऽत्मव्यतिरिक्तानामसुन्वतामिति[16] यास्कः[17] । उभयस्य[18] दिव्यस्य[19] च पार्थि-

---

१. ०मन्य P. परस्परव्यतिहारेण Sy.
२. यः प्रथमभावी मुख्यः स्तोता तं जघन्यं करोति । यश्च जघन्यः स्तोता तं मुख्यं करोति । एतदादिकेन पञ्चर्चेनेन्द्रस्यातिस्वातन्त्र्यं प्रतिपाद्यते Sy.
३. प्रथमभाविनं सन्तं स्तोतारमपरम् Sy.
४. पश्चाद्भाविनम् Sy.
५. इतोऽपि स्तुत्यादेरविषय इत्याह—यस्माद् आत्मीयाभिः प्रज्ञाभिः Sy.
६. तस्मान्न स्तोमस्तोतुमशक्यम् P.
७. VM. ignores इत् and मघवा ॥ इद् एव । धनवानिन्द्रः Sy.
८. शण्वे P. गर्गस्य बार्हस्पत्यस्यार्षम् Dur. गर्गस्यार्षम् SKN.
९. पिरा D.
१०. अश्रौषमहम् Dur. शृणोतेर्व्यत्ययेनात्रात्मनेपदोत्तमैकवचनम् । शब्विकरणः, कर्मणि लट् प्रथमैकवचनस्य स्थाने । श्रूयते प्रख्यायत इत्यर्थः SKN.
११. वीरो वीर्यवानिति Sy. वीरमिन्द्रम् Dur. शूरः SKN.
१२. उद्गूर्णमुद्गूर्णं बलिनं शत्रुं प्रति Sy. उद्गूर्णवज्रम् । आदरार्थो द्विरभ्यासः । आदरे चार्थभूयस्त्वम् । इति हि वक्ष्यति । अथवा—उग्रं शत्रुं प्रत्युद्गूर्णवज्रम् Dur. किं कुर्वन् ? उच्यते....यावान् कश्चिदुग्रोऽप्रसह्यश्शत्रुस्तं सर्वम् SKN. 'अभ्यासे भूयांसमर्थं मन्यन्ते' N.10.42.
१३. दमः दमनम् । बाधनमिच्छन् Sy. दमयितारं शत्रूणाम् Dur. दमयन् SKN.
१४. प्रथमं नेतव्यमन्यं पश्चान्नेतव्यं चान्यं पूर्वमपरं परस्परव्यतिहारेण स्तोतॄन् Sy. कथं पुनरश्रौषमिति ? अन्यमन्यं देवताविशेषम् Dur. अन्यमन्यं चात्मनः स्तोतारम् SKN.
१५. अत्यन्तं पुनः पुनर्नयन् Sy. अतिशयेन स्वाभीष्टेनैव कामेन तुष्टूषया 'अमुष्मात् सुतात् कामान्प्रेप्सथ' इत्येवं पुनः पुनर्नीयमानः Dur. अतिशब्दः पूजायाम् । अतिपूजितं शोभनमर्थं नयन् । किम् ? सामर्थ्यात्समृद्धिम् । सर्वं च स्तोतारमात्मनः समृद्धं कुर्वन्नित्यर्थः SKN.
१६. वर्धमानानामसुन्वताम् Sy. किंलक्षणं पुनर्वीरमश्रौषमिति ? ....दीप्यमानानपि द्वेष्टि, असुन्वतः सोमाभिषवमकुर्वाणानयज्वन इत्यर्थः । अत एव वैपरीत्येन 'सुन्वतोऽभ्यादधाति' इत्यध्याजहार भाष्यकारः । क्व पुनरादधाति ? 'सुकृतस्य लोके' इति सामर्थ्याद् गम्यते । ये हि सुन्वते त इष्टा इन्द्रस्य, ये न सुन्वन्ति ते द्वेष्या इत्यभिप्रायः Dur. ऋध्यतो द्वेष्टा । किं सर्वेषाम् ? न, किं तर्हि ? अयष्टॄन् SKN.
१७. असुरन्वताम् P. Cf. N. 6.22.
१८. दिव्यस्य च धनस्येश्वरः पार्थिवस्य च मानुषस्य च Dur. कुत एतत् ? सामर्थ्यादुभयस्य दिव्यस्य पार्थिवस्य च धनस्य SKN.
१९. Omitted by P.

वस्य च धनस्य । ईश्वरः । अत्यन्तमाह्वयति[1] । विशः[2] । इन्द्रः । मनुष्या[3]न् 'एधमानानसुन्वतो[4] व्युदस्यति[5]' इति यास्कः ।

**परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।**
**अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्तरीति ॥ १७ ॥**

परा[6] । परा । पूर्वेषां[7] संस्तुतानामपि सम्प्रत्ययजमानानाम् । सख्यानि[8] । इन्द्रः परिमार्ष्टि[9] । तथा वृत्राणि वितरन्[10] । अन्यैरधुना यजमानैः[11] । सख्यं गच्छति[12] । आनुकूल्यमगच्छन्तीः[13] प्रजाः । अवधून्वानः[14] । बह्वीः । इन्द्रः[15] । शरदो[16] यजमानानाम् । अत्यन्तं तरति[17] ।

**रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।**
**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥ १८ ॥**

रूपं रूपम् । तत्तद्रूपमिन्द्रः[18] । भावयति[19] । प्रतिरूपं प्रतियजमानं[20] यो रूपमादत्ते स तथोक्तः । तत्[21] ।

---

१. रक्षणार्थं पुनःपुनराह्वयति Sy. व्युदस्यति यः ....एवमत्र एधमानद्विड्, इत्यनेन सम्बन्धाच्चोस्कूयतिर्व्युदसनार्थं इत्युपपद्यते Dur. स्कुनातिरत्र व्युदसनार्थे । अत्यन्तं व्युदस्यति निराकरोति SKN.

२. निवेशयितॄन् स्वस्य परिचारकान् Sy. एधमानानसुन्वतः Dur. कीदृशान् ? विशः 'विश प्रवेशने' अनुप्रविष्टानात्मीयभूतानाश्रितान् इत्यर्थः SKN.

३. इतरांश्च सुन्वतो मनुष्यानभ्यादधाति सुकृतस्य लोक इति Dur. किं सर्वान् ? न, किं तर्हि ? ऋद्धानयष्टॄन् । कुत एतत् ? एधमानद्विडिति वचनाद् द्विष्यमाणस्य च व्युदस्यमानत्वात् SKN.

४. ०ते D.

५. एधमानाप्युद० P. N.6.22. reads व्युदस्यति । एधमानानहृद्वेष्टचसुन्वतः । सुन्वतोऽभ्यादधाति । उभयस्य राजा । दिव्यस्य च पार्थिवस्य च । चोष्कूयमाण इति चोष्कूयतेश्चर्करीतवृत्तम् N.6.22., SKN.II.468.

६. ०राः P.

७. पूर्वभाविनां प्रशस्तानां कर्मणां कुर्वतां पुरुषाणाम् Sy.

८. सखित्वानि Sy.

९. वर्जयति Sy.

१०. वितन् P. तान् हिंसन् Sy.

११. अमुख्यैरपरैरप्रशस्तैरपि कर्मानुष्ठातृभिः Sy.

१२. प्राप्नोति Sy.

१३. अपरिचरणाः प्रजाः Sy.

१४. परित्यजन् Sy.

१५. अयमिन्द्रः Sy.

१६. ०दे D. संवत्सरान् Sy.

१७. भृशमतिक्रामति । स्तोतृभिः सह सख्यं कुर्वन् चिरकालं वसतीत्यर्थः Sy.

१८. तत्सद्रू० P. अग्न्यादिदेवतास्वरूपम् Sy.

१९. धारयति P. प्राप्नोति । 'भू प्राप्तौ' इति धातुः । इन्द्रः स्वमाहात्म्येन तत्तद्देवतारूपो भवति Sy.

२०. प्रतिरूपः प्रतीय० P. रूपाणां प्रतिनिधिः सन् Sy.

२१. प्राप्तमग्न्यादिदेवतास्वरूपम् Sy.

अस्य[1]। रूपम्[2]। प्रतिदर्शनाय[3] भवति। तदेवाह[4]--इन्द्रः[5]। कर्मभिः[6]। बहुरूपः[7]। गच्छतीति[8] तदनुरूपम्। अस्य[9]। अश्वाः[10]। दश, शतानि--सहस्र[11] युक्ताः[12] भवन्तीति ततः सर्वं एव मन्यते[13] मां प्रत्युदगादित्यनेनैतत् समानमिति[14]।

**युजानो हरिता रथे भूरि त्वष्टेह राजति।**
**को विश्वाहा द्विषतः पक्ष आसत उतासीनेषु सूरिषु॥ १९॥**

युजानः। युञ्जानः[15]। हरितावश्वौ। रथे। अत्यन्तम्[16]। दीप्तः[17]। इह[18]। राजति[19]। क इन्द्रव्यतिरिक्तः[20]। शत्रोः। पक्षे[21]। सर्वदा शत्रुमध्ये। आस्ते[22]। अपि च। आसीनेषु[23]। स्तोतृषु[24]।

---

१. इन्द्रस्य Sy.
२. तथोत्तस्य रूपः P.
३. प्रतिनियतदर्शनायायमग्निरयं विष्णुरयं रुद्र इत्येवमसङ्कीर्णदर्शनाय Sy.
४. तमेवा० D.
५. अयमिन्द्रः Sy.
६. ज्ञानैरात्मीयैः सङ्कल्पैः Sy. मायेति प्रज्ञानाम Ngh.3.9.
७. बहुविधशरीरः सन् Sy.
८. इति is omitted by P. बहून् यजमानान् गच्छति Sy.
९. ननु द्वावेवास्याश्वावेकश्च रथः कथमनेन युगपद्बहून् गच्छतीत्याह। इन्द्रस्य Sy.
१०. ०पस्य श्वाः P. ०पस्याश्वाः D.
११. ०स्रम् is suggested for ०स्र॥ दशसहस्रसङ्ख्याकाः अपरिमिताः Sy.
१२. रथे योजिताः Sy.
१३. P. reads तस्मा एव मन्य सर्वतो P.
१४. VM. ignores हि। यस्मादेवं तस्माद्बहुशरीराणि स्वीकृत्य युगपद्बिष्मतो यजमानान् गच्छतीत्यर्थः। अन्ये मन्यन्ते। 'इदि परमैश्वर्ये' इत्यस्य धातोरर्थानुगमादिन्द्रः परमात्मा। स चाकाशवत् सर्वगतः सदानन्दरूपः। स एवोपाधिभिरन्तःकरणैः प्रतिशरीरमवच्छिन्नः सन् जीवात्मेति व्यपदिश्यते। स एवानादिमायाशक्तिभिर्वियदादिजगदात्मना विवर्तते शब्दादिविषयहरणशीला इन्द्रियवृत्तयश्च तेनैव सम्बद्धाः। एतत् सर्वं तस्य परमात्मनो यद्वास्तवं रूपं तस्य दर्शनायेति। अयमर्थोऽनया प्रतिपाद्यते। रूपंरूपम्। रूप्यत इति रूपं शरीरादि। प्रतिशरीरं चिद्रूपः सर्वगतः परमात्मा प्रतिरूपः प्रतिबिम्बरूपः सन् सर्वाणि शरीराणि बभूव। प्राप्नोत्। तच्च प्राप्तं प्रतिबिम्बरूपमस्य परमात्मनः प्रतिचक्षणाय प्रतिनियताकारस्य दर्शनाय भवति। स चेन्द्रः परमेश्वरो मायाभिर्मायाशक्तिभिः पुरुरूपो वियदादिभिर्बहुविधरूपैरुपेतः सन् ईयते। चेष्टते। एतदप्यस्य परमात्मनः प्रतिचक्षणाय भवति। अस्य च दश शता सहस्रसङ्ख्याका हरय इन्द्रियवृत्तयो युक्ता विषयग्रहणायोद्युक्ताः सन्ति। तदप्यस्य वास्तवरूपस्य दर्शनाय भवतीति। एवं स्थूलसूक्ष्मशरीरयोर्वियदादिमहाप्रपञ्चस्य च तत्त्वज्ञानहेतुत्वमनया प्रत्यपादीति Sy.
१५. ०ना P., D. युञ्जन् Sy.
१६. भूरिषु बहुषु प्रदेशेषु Sy.
१७. इन्द्रः Sy.
१८. त्रैलोक्ये Sy.
१९. राजेति P. दीप्यते Sy.
२०. इन्द्रादन्यः को नाम ? Sy.
२१. पाचको बाधकः सन् Sy.
२२. इन्द्र एव सर्वदा शत्रून् बाधत इत्यर्थः। यद्वा पक्ष इति सकारान्तं समीपवचनम्। इन्द्रादन्यः को नाम द्विषतः शत्रोः समीप आसते। आस्ते। इन्द्र एव निर्भयः सन् शत्रुसमीपे स्थातुं शक्नोतीति भावः Sy.
२३. आसीनेषु सत्सु Sy.
२४. अस्मादृशेषु Sy.

अगव्यूति क्षेत्रमागन्म देवा उर्वी सती भूमिरंहूरणाभूत् ।
बृहस्पते प्र चिकित्सा गविष्टावित्था सते जरित्र इन्द्र पन्थाम् ॥ २० ॥

अगव्यूति[1] । गोमार्गहरन्तं[2] गुप्तम् । क्षेत्रम्[3] । आगच्छेम[4] । देवाः ! विस्तीर्णा । सती । भूमिः । अस्माकनभिगन्तव्या[5] । भवतु[6] । बृहस्पते[7] ! त[8] त्वं चास्मान् । गवामन्वेषणे[9] । प्रजानीहि[10] । त्वं चेन्द्र ! सत्यमेव[11] । स्तोत्रे मह्यम्[12] । पन्थानं कुरु[13] । शौनकः—

अगव्यूतिरथ[14] स्तौति देवान् वादौ[15] भूमिमथोत्तरम् ।
बृहस्पतिं तृतीयस्तु इन्द्र[16] एवोत्तरे स्तुतयः[17] ॥ इति ॥

---

१. अ।० D. अत्रोक्तम् ।
अरण्ये निर्जने गर्गो देवान् भूमिं बृहस्पतिम् ।
इन्द्रं चास्तौत्स्वरक्षार्थमृचा मार्गच्युतोऽनयेति।१।
Sy.
अत्राख्यानम्—
अगव्यूतीत्यत्र पादे देवान्भूमिं तथोत्तरे ।
बृहस्पतिं तृतीये तु इन्द्र एवोत्तमे स्तुतः ॥२॥
'अगव्यूत्यर्धर्चो लिङ्गोक्तदेवतः' इत्यनुक्रमणी (KSA. 31. 47. p. 23.) । गर्गस्त्रिष्टुभा देवाँस्तुष्टाव DDN.

२. ०र्गरहितम् is suggested for ०र्गहरन्तम् ॥ अगोचरं गोसञ्चाररहितं निर्जनम् Sy. अगोचरं गोसञ्चाररहितम् DDN.

३. देशम् Sy., DDN.

४. आगताः स्मः । अतो मां रक्षतेति शेषः Sy., DDN.

५. ०मिमास्मा० P.

६. ०तव्यं P. अंहव आहन्तारो दस्यवः। तेषाम्, रमणा रमयित्री Sy. अंहूरणा अंहस्विनी अतिभययुक्ता, अतः पापरूपाभूत्, सा रम्या भूत्वाऽस्मान् रक्षतु DDN. अंहुरोंऽहस्वान् अंहूरणमित्यप्यस्य भवति N.6.27.

७. भवति । अस्मानतः सापि रक्षतु Sy.

८. Omitted by P. तत् is suggested for त ।

९. गवामन्वेषण उपाये Sy.
उपाये DDN.

१०. प्रवेदय Sy. 'चिकित्सा' इति एकादशिनोः (RPR. 8. 26.) इत्यष्टमोक्षरः प्लावितः । गवाष्टाविति ओष्ठयोन्योर्भुग्नमनोष्ठ्ये (RPR. 2. 31.) इत्यादिना अनोष्मत्वाद् वकारागमः DDN.

११. अनेन प्रकारेण Sy. इत्थमनेन प्रकारेण सते भवते दुःखमनुभवते DDN.

१२. मार्गं प्रज्ञापय Sy.

१३. VM. ignores सते ॥ भवते दुःखमनुभवते Sy.

१४. ०तिथ P. Omitted by BD.

१५. वादौ is redundant.

१६. बहुस्पतिं तृतीयस्त्वमिन्द्रम् P. ०स्पतिं तृतीयं तमिन्द्रम् D.

१७. स्तुतः is suggested for स्तुतयः ॥ BD. reads 'इन्द्रमेवोत्तमं पदम् ॥ BD. V.123.

दि॒वेदि॑वे स॒दृशी॑र॒न्यमर्धं॑ कृ॒ष्णा अ॑सेध॒दप॒ सद्म॑नो जाः ।
अह॒न्दा॒सा वृ॑ष॒भो व॑स्न॒यन्तो॒दव्र॑जे व॒र्चिनं॒ शम्ब॑रं च ॥ २१ ॥

दिवेदिवे[१] । दिने दिने[२] । सदृशरूपाम्[३] । अन्यम् । अर्थं[४] यस्मिन्नर्थेऽहानि वर्तन्ते ततोऽन्यमर्द्धं[५] प्रति । रात्रीः कृष्णवर्णाः । अवसेधन्ति[६] । स्वस्मात् स्थानात्[७] । प्रातर्जायमानः[८] । हतवांश्च[९] । सुरौ[१०] । वर्षिता[११] । आत्मनो धनमपहर्तुमिच्छन्तौ[१२] । उदव्रजाख्य आवासे[१३] । वर्चिनम्[१४] । शम्बरम् । च ।

प्र॒स्तो॒क इन्नु राध॑सस्त इन्द्र॒ दश॒ कोश॑यी॒र्दश॑ वा॒जिनो॑ऽदात् ।
दि॒वोदा॑सादतिथि॒ग्वस्य॒ राधः॑ शाम्ब॒रं वसु॒ प्रत्य॑ग्रभीष्म ॥ २२ ॥

प्रस्तोकः[१५] । प्रस्तोको[१६] बहुधनं[१७] भरद्वाजेभ्यः[१८] प्रददौ तदादाय गृहं प्रति गच्छन् गर्भस्तद्धनमिन्द्राय[१९] चतसृभिः

---

१. अयमिन्द्रः Sy. २. प्रतिदिवसम् Sy.

३. तुल्यरूपाः Sy.

४. अर्धं is suggested for अर्थं ॥ अन्यमहरर्धमपरं भागं प्रकाशयितुम् । अहोरात्रात्मकस्य दिवसस्य हि रात्रिरेको भागः Sy.

५. अर्धं is suggested for ०न्नर्थे ।

६. अपसे० is suggested for अवसे० ॥ निवर्तयति Sy.

७. सदनात्स्वकीयादन्तरिक्षैकदेशात् स्थानात् Sy.

८. सूर्यात्मना प्रादुर्भवन् Sy.

९. ०वान् इव P.

१०. असुरौ is suggested for सुरौ ॥ दासावुपक्षपयितारौ यज्ञकर्मणाम् Sy.

११. वर्षयिता स इन्द्रः Sy.

१२. ०र्तुं छन्तौ D. वस्नं निवासहेतुभूतं धनम् । तदिच्छन्तौ Sy.

१३. उदकानि व्रजन्त्यस्मिन्नित्युदव्रजो देशविशेषः । तस्मिन् Sy. १४. वर्मिनम् P. एतत्संज्ञावसुरौ Sy. १५. अत्राख्यानम्—
एवं वारशिखाञ्जित्वा प्रस्तोकः साञ्जयो मृधे ।
भरद्वाजाय गुरवे विविधा दक्षिणा ददौ ॥१॥
ता गृहीत्वा गृहान् गच्छन्निन्द्रं प्रति यदृच्छया ।
ददर्शार्चाऽभितुष्टाव भरद्वाजः शतक्रतुम् ॥२॥
ऋषेर्दृष्ट्वा विभूतिं स गर्गं पप्रच्छ वृत्रहा ।
युष्मभ्यं कतमो राजा धनमेतद्ददाविति ॥३॥
अथ विस्तरशो गर्गो यो यस्मै यद्ददौ धनम् ।
ऋग्भिश्चतसृभिः सर्वं तदिन्द्राय न्यवेदयत् ॥४॥
'प्रस्तोक इति त्रिष्टुबनुष्टुप् गायत्री द्विपदा साञ्जयस्य प्रस्तोकस्य दानस्तुतिः' इत्यादि (KSA.31.47.p.23.) 'अधि बृबु प्रस्तोक इति चतस्रः' इति सूत्रे (SSS.16.11.12.) DDN. १६. ०स्तोयः D.

१७. प्रशस्तोत P. प्रस्तोन D.

१८. P. adds प्रति रात्रीः कृष्णवर्णा आवसेधन्ति स्वस्मात् स्थानात् प्रतर्जनाम before बहु । D. adds प्रति रात्रीः कृष्णवर्णा आप सेधन्ति स्वस्मात् स्थानात् प्रतर्जनाम before बहु । The additional passage has a striking resemblance with the commentary on RV.VI.47.21.

१९. गर्भस्तदानीमि० P. गर्गः is suggested for गर्भः ।

कथयति—प्रस्तोकः[1] । एव[2] । क्षिप्रम्[3] । धनादात्मीयात्[4] । तव भूतोऽस्मभ्यम्[5] । दश धनपूर्णाः[6] । कोशीः[7], यकार उपजनः[8] । दश । अश्वांश्च[9] । प्रायच्छन्[10] । दिवोदासस्य[11] । अतिथिग्वस्य, षष्ठ्या आदादेशः[12] । तस्य[13] स्वभूत[14] वासयितृ[15] । धनम्[16] । वयं प्रतिगृहीतवन्तः[17] । शम्बरमसुरं जित्वा यस्तस्मात्तेनाहृतम्[18] ।

उत्तरा निगदसिद्धा ।

**दशाश्वा॒न्दश॒ कोशा॒न्दश॒ वस्त्राधि॑भोजना ।**
**दशो॑ हिरण्यपि॒ण्डान्दिवो॑दासादसानिषम् ॥ २३ ॥**

[ दशाश्वान्[21] । ]

---

१. एतदाद्यासु चतसृषु सृञ्जयपुत्रस्य प्रस्तोकस्य राज्ञो दानस्तुतिः । स एव दिवोदासोऽश्वथोऽतिथिग्व इति चाख्यायते Sy.

२. राजा Sy., DDN.

३. इदिति पूरणः Sy. इत्पूरणः । मिताक्षरेष्वनर्थकाः कमीमिद्विति यास्कः (N. 1.1.) DDN.

४. नु मङ्क्षु इति क्षिप्रनामनी Ngh. 2.15.

५. धनदा० D. आराधयितुः स्तोतुः । चतुर्थ्यर्थे षष्ठी । त्वां स्तुवते मह्यं गर्गाय Sy. हे इन्द्र ! तव आराधयितुः स्तोतुः, चतुर्थ्यर्थे षष्ठी, त्वां स्तुवते मह्यं गर्गाय DDN.

६. स्वभूतो is suggested for भूतो० ।

७. ०र्णा D. सुवर्णपूर्णान् दशसङ्ख्याकान् Sy., DD.

८. कोशान् Sy.

९. उपधनः D. कोशयीरित्यत्र शौनकेनान्यथाध्ययनेन यत्नः कृतः—

अकारस्य स्थान ऐकारमाहु-
लुम्पन्ति च सयमीकारमुत्तरम् ।
बह्वक्षरं द्व्यक्षरतां नयन्ति
यथोनयीर्ध्वनयीत्कोशयीरिति ॥

RPR. 14.43.

१०. प्रायच्छ P. प्रायच्छत् is suggested for प्रायच्छन् ॥ प्रादात् । वाजिनोऽदात्—'अदादवर्त्रोऽजनयन्ताव्यत्या०' (RPR. 2. 40.) इत्यभिनिहतः DDN.

११. वयं च तस्माद्दिवोदासादेतत्संज्ञात् प्रस्तोकात् Sy. प्रस्तोकस्य नामचतुष्टयम् DD.

१२. तस्यैव प्रस्तोकस्य Sy., DDN.

१३. ०दशः P., D. The passage: षष्ठ्या आदादेशः, explains the form of दिवोदासात्, therefore it should immediately follow दिवोदासात् and precede अतिथिग्वस्य ।

१४. तन्य D.

१५. स्वभूतं is suggested for स्वभूत ।

१६. धनम् Sy.

१७. राधो राधकम् Sy., DDN.

१८. शम्बरादसुरादागतम् । शम्बरं हत्वा त्वया दत्तं तदीयमित्यर्थः Sy., DDN.

१९. यत्त० is suggested for यस्त० ।

२०. VM. ignores इन्द्र ।

एतदेव हि पाण्डित्यमियमेव विदग्धता ।
अयमेव परो धर्मः स्वायादल्पतरो व्ययः ॥१॥

इत्यत्राप्युक्तम् DDN.

२१. The *pratīka* is supplied by the Editor.

उपरि भोजनं च येषां[1] भवति तान्यधिभोजनानीति[2] ।[3]

**दश रथान्प्रष्टिमतः शतं गा अथर्वभ्यः । अश्वथः पायवेऽदात् ॥ २४ ॥**

**दश रथान्**[4] । दश[5] । रथान् । प्रष्टिभिर्युक्तान्[6] । जातं[7] च । गाः । अथकुजातेभ्यः[8] । अश्यथ[9] इति चास्य संज्ञा । पांधनात्थम्[10] । प्रायच्छत्[11] ।

**महि राधो विश्वजन्यं दधानान्भरद्वाजान्त्साञ्जयो अभ्ययष्ट ॥ २५ ॥**

**महि** । महत् । धनम् । सर्वपुत्रपौत्रजनहितमेतत्[12] । दधानानस्मान्[13] । भरद्वाजान्[14] । सृजयपुत्रः[15] । ह्यपूजयदित्थमिति[16] ।

**वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।**
**गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥ २६ ॥**

**वनस्पते**[17] । परौ[18] तृचौ[19] रथदुन्दुहिदेवत्यावैन्द्राऽन्त्योऽर्धर्चः[20][21] ।

---

१. येषाम P.

२. इति is omitted by P.

३. VM. explains only one word 'अधिभोजना' of the stanza. ॥ भोजनमिति धननाम, अधिकं धनं येषां मूल्यं तादृशानि Sy. Sy. explains the stanza in the following manner :—
दश दशसङ्ख्याकान्, अश्वान् दशसङ्ख्याकान् हिरण्यपूर्णान् कोशान् । दशसङ्ख्यानि वस्त्राणि च दशो दश च दशसङ्ख्याकांश्च हिरण्यपिण्डान् सुवर्णपिण्डानेतान् सर्वान् दिवोदासात्प्रस्तोकादहमसानिषम् । समभजम् । लब्धवानस्मि ।

४. रथन् D. ५. दशसङ्ख्याकान् Sy.

६. प्रष्टभिर्युक्तं P. प्रष्टिस्त्रिपद आधारः । तद्वद्वहन्तीति प्रष्टयोऽश्वाः । तद्युक्तान् Sy.

७. शतम् is suggested for जातम् ॥ शतसङ्ख्याकाः Sy.

८. अथर्वकुलजातेभ्यः is suggested for अथकुजातेभ्यः ॥ अथर्वगोत्रेभ्य ऋषिभ्यः Sy.

९. अश्चथ P. अश्वथ is suggested for अश्यथ ॥ अश्ववानेतत्संज्ञः प्रस्तोकः Sy.

१०. वान् धनात्थं P. पाय्वर्थम् is suggested for पांधनात्थम् ॥ भरद्वाजपुत्रायैतत्संज्ञायास्मद्भ्रात्रे Sy. ११. दत्तवान् Sy.

१२. सर्वजनहितम् Sy.

१३. ०जनपितमैतधनास्मान् P. धारयतः Sy.

१४. भरद्वाजपुत्रानस्मान् Sy.

१५. सृजयच्छत्रो D. सृञ्जयपुत्रः is suggested for सृजयपुत्रः ॥ प्रस्तोकः Sy.

१६. अभ्यपू० is suggested for ह्यपू० ॥ अपूजयत् Sy.

१७. 'वनस्पते' इत्येषा रथारोहणे विनियुक्ता । सूत्रितञ्च—'वनस्पते वीड्वङ्गो हि भूया इत्येतयान्यान्यपि वानस्पत्यानि' (AGS. 2.6. 5.) इति Sy.

१८. पौ P. गर्गस्यार्षम् Dur. गर्गस्य SKN.

१९. तृपौ P.

२०. ०न्दुहिदेवस्यावै० P. ०न्दुभिदेवत्यावैन्द्रा is suggested for ०न्दुहिदेवत्यावैन्द्रा० ।

२१. ०र्च P.D. The passage परौ. . . .र्धर्चः is a fragment of KSA.31.47.p.23.

वनस्पते[1] ! दृढाङ्गः[2] । भव[3] । अस्मत्सखा[4] । प्रतरणः[5] । शोभनवीरयुक्तः[6] । गोविकारैर्वर्ध्रीभिः[7] । सन्नद्धः[8] । असि[9] । स्तब्धो भव दृढाङ्ग[10] ! आस्थाता[11] । ते[12] । जयतु । जेतव्यानि[13] ।[14]

**दि॒वस्पृ॑थि॒व्याः पर्योज॒ उद्भृ॑तं॒ वन॒स्पति॑भ्य॒ः पर्याभृ॑तं॒ सह॑ः ।**
**अ॒पामो॒ज्मानं॒ परि॒ गोभि॒रावृ॑त॒मिन्द्र॑स्य॒ वज्रं॑ ह॒विषा॒ रथं॑ यज ॥ २७ ॥**

दिवः[15] । द्यावापृथिव्योरिदम्[16] । उद्धृतम्[17] । बलम्[18] । यद्रथस्तथा[19] वनस्पतिभ्यश्च[20] । आहृतम् । सहः,

---

१. हे वनस्पतिविकार ! रथ ! त्वम् Sy. वनस्पतिविकारकाष्ठमयरथ ! 'कृत्स्नवन्निगमः' (N.2.5.) Mah. वानस्पत्य ! रथ ! U. वानस्पत्य रथ ! त्वमुच्यसे Dur. हे... वनस्पतिविकाररथ ! SKN.

२. दृढावयवः Sy. वीडून्यङ्गानि यस्य Mah. वीडुशब्दो दृढवचनः U. दृढाङ्गः Dur. वीळु दृढमङ्गमवयवो यस्य स दृढावयवः। गोभिः सन्नद्ध इत्येतेन सम्बध्यते SKN.

३. भवान् P.

४. वयं सखायो यस्य स तादृशश्च भव Sy. अस्माकं मित्रभूतः Mah. अस्मत्सखा सन् U. अस्मन्मित्रः Dur. एवमस्मत्सखा, अस्माकं सखिभूतो मित्रमिव व्यसनपात इत्यर्थः SKN.

५. ०ण D. प्रवर्धयिता Sy. प्रतरति सङ्ग्रामपारं गच्छति प्रतरणः Mah. प्रतरन्त्यनेन सङ्ग्रामानिति प्रतरणः U. प्रतारणः सङ्ग्रामाणां पारं नेता Dur. सङ्ग्रामाणां निर्वोढेत्यर्थः SKN.

६. शोभनैर्वीरैः शूरभटैः पुत्रादिभिर्वा युक्तश्च भव Sy. शोभनो वीरो रथी यत्र Mah. साधुवीरः U. अविक्लवानवखण्डिताधिष्ठाता भव Dur.

७. चर्मभिः Sy. हे रथ ! यतस्त्वं गोभिर्गोविकारैश्चर्मभिः Mah. श्लेषचर्मभिः U. कृतप्रतीकारस्त्वमस्माभिः....गव्येन चर्मणा श्लेष्मणा च Dur. कस्मादेवमुच्यते दृढाङ्गो भवेति ? यस्माद् गोभिर्गोविकारैश्चर्मभिः श्लेष्मणा च SKN.

८. सम्यग्बद्धः Sy. बद्धोऽसि Mah. सन्नद्धोऽस्यतस्त्वां ब्रवीमि U. समन्ततो नद्धो बद्धः Dur. सम्यग्बद्धः SKN.

९. भवसि Sy.

१०. वीडयस्व । अस्मान् दृढीकुरु Sy. अतो वीडयस्वात्मानं स्तम्भय Mah. संस्तम्भय स्वात्मानम् U. स त्वं कृतप्रतीकारमात्मानं मत्वा तेन हेतुना सुतरामात्मानं वीळयस्व संस्तभ्नुहि Dur. तस्माद् वीळयस्व दृढीकुर्वात्मानम् SKN.

११. अवस्थितो रथी च Sy. आरोढा रथी Mah. संस्थाता U. संस्तब्धे च त्वय्यवस्थितः, आस्थाता ते अधिष्ठाता तव योद्धा Dur. त्वया वीड्वङ्गतया, आस्थाता आरोढा च SKN.

१२. त्वयि Sy.

१३. जेयत० P. शत्रुसैन्यानि Sy. जेतव्यानि रिपुधनानि Mah. यानि तेन जेत्वानि जेतव्यानि, आत्मनोऽभीप्सितानि तानि सर्वाणि जयतु Dur. कृत्यार्थे त्वप्रत्ययः । जेतव्यानि शत्रूणां वृन्दानि धनानि वा तेषाम् SKN.

१४. VM. ignores हि ॥ हिः पादपूरणः Mah. हिशब्दो यस्मादर्थे SKN. वनस्पते वृळ्हाङ्गो हि भव । अस्मत्सखा प्रतरणः सुवीरः कल्याणवीरः । गोभिः सन्नद्धो असि । वीळयस्वेति संस्तम्भस्व । आस्थाता ते जयतु जेतव्यानि N. 9.12., SKN. III.154. This stazna=YV.29.52.

१५. नूनमेषोत्तरा च रथदेवत्यस्य हविषो याज्यानुवाक्ये लिङ्गादवगन्तव्ये Sy.

१६. द्युलोकाद् भूमेश्च । वनस्पतिविकारत्वाद्रथस्य । वनस्पतयो हि पृथिव्याः सारभूताः । ते च द्युसम्बन्धिभिरुदकैः प्रवृद्धाः । अतो रथस्य लोकद्वयसारत्वमुपपन्नम् Sy.

१७. ०त P. सारत्वेनोपात्तम् Sy.

१८. ०ल D.

१९. येद्र० D.

२०. वृक्षेभ्यः Sy.

तमिमम्[1] । अपाम्[2] । वेगं तद्वत् शीघ्रं गच्छन्तम्[3] । परितः[4] । गोचर्मभिः[5] । आवृतम्[6] । इन्द्रस्य । वज्रम्[7] । हविषा[8] । रथम्[9] । यज[10] । 'इन्द्रो वृत्राय[11] वज्रमुदयच्छत् स त्रेधा व्यभवत्[12] स्फ्यस्तृतीयं[13] रथस्तृतीयं[14] यूपस्तृतीयम्' इति ब्राह्मणम्[15] ।

**इन्द्र॑स्य॒ वज्रो॑ म॒रुता॒मनी॑कं मि॒त्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑ ।**
**सेमां नो॑ ह॒व्यदा॑तिं जुषा॒णो देव॑ रथ॒ प्रति॑ ह॒व्या गृ॑भाय ॥ २८ ॥**

[इन्द्रस्य वज्रः ।][16]

१. बलरूपम् Sy.
२. ०मां P. अवां D. उदकानाम् Sy.
३. प्रेरकम् । यद्वा ओज्मा वेगः । अपां वेग इव वेगवन्तम् Sy.
४. परि पञ्चम्यर्थानुवादी Sy.
५. चर्मभिः Sy. ६. आवेष्टितम् Sy.
७. वज्रैकदेशम् Sy.
८. पुरोडाशादिना Sy.
९. एवङ्गुणविशिष्टं रथम् Sy.
१०. हे अध्वर्यो ! यज Sy.
११. वृत्रा D.
१२. ०व्यभ० P. १३. ०स्य० P.
१४. Omitted by P.
१५. Cf. ŚB. 1.2.4.1. P. 16. and also its Kāṇvīya recension. 2.2.2.1. the variant चतुर्धा for त्रेधा is striking.
VM. explains परि once only.
१६. The *pratīka* is supplied by the Editor. VM. does not explain the stanza. It is explained in the following manner:
यो रथ इन्द्रस्य वज्र उक्तप्रकारेण वज्रैकदेशो मरुतामेतत्संज्ञानां देवगणानामनीकमग्रभूतं तद्वच्छीघ्रगामी मित्रस्याहरभिमानिनो देवस्य गर्भो गर्भवदन्तर्वर्तमानः । अहनि हि रथः सञ्चरति । वरुणस्य रात्र्यभिमानिदेवस्य नाभिर्नाभिस्थानीयः । नाभिर्यथा देहमध्ये नैश्चल्येनावतिष्ठते तद्वद्रात्रौ क्वचिदेव स्थितः । हे देव ! द्योतमान ! रथ ! य उक्तगुणः स तादृशस्त्वमिमां नोऽस्मदीयां हव्यदातिं हविर्दानवतीं यागक्रियां जुषाणः सेवमानः सन् हव्या हव्यान्यस्मदीयानि हवींषि प्रतिगृभाय प्रतिगृहाण Sy.
हे रथ ! हे देव ! स त्वं हव्या हवींषि प्रतिगृभाय प्रतिगृहाण । कीदृशस्त्वम् ? इन्द्रस्य वज्रो वज्रोत्पन्नत्वात् । मरुतामनीकं मुखं मुख्यो देवानां जयप्रापकत्वात् । मित्रस्य देवस्य गर्भो गीर्यते स्तूयते गर्भः । गृणातेर्भप्रत्ययः । सूर्येण स्तूयमानः । वरुणस्य नाभिर्नभ्यतेऽरिर्हन्यतेऽनेनेति नाभिः । 'नभ हिंसायाम्' इण्प्रत्ययः । वरुणस्य हननसाधनम् । नोऽस्माकमिमां हव्यदातिं हविषो दानं जुषाणः सेवमानः Mah.
यस्त्वमिन्द्रस्य वज्रोऽसि, मरुतां चानीकं मुखमसि । मित्रस्य च गर्भोऽसि । वरुणस्य च नाभिरसि । स त्वमिमां नोऽस्माकं हव्यदातिं हविषो दानम् । जुषाणः सेवमानः । हे देवरथ ! प्रतिहव्या गृभाय प्रतिगृभाय प्रतिगृहाण हव्या हवींषि U.
This stanza=YV.29.54.

उप॑ श्वासय पृथि॒वीमु॒त द्यां पु॑रु॒त्रा ते॑ मनुतां॒ विष्ठि॑तं॒ जग॑त् ।
स दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वैर्दू॒राद्दवी॑यो॒ अप॑ सेध॒ शत्रू॑न् ॥ २९ ॥

उप श्वासय[1] । स्वशब्देनाभिप्रतिशब्दं कारय[2] । पृथिवीम्[3] । अपि च । द्याम्[4] । बहुषु[5] देशेषु । त्वाम्[6] । जानातु[7] । इतस्ततः स्थितम्[8] । जगत्[9] । स त्वम्[10] । दुन्दुभे[11] ! सगेकः ?[12] इन्द्रेण[13] । देवैश्च[14] । दूरात् । दूरतरम्[15] ।

१. परेण तृचेन सङ्ग्रामे दुन्दुभिरभिमर्शनीयः । सूत्रितं च—'उप श्वासय पृथिवीमुत द्यामिति तृचेन दुन्दुभिमभिमृशेत्' (AGS.3.12.17.) इति Sy. अत आरभ्य सर्वा एता युद्धोपकरणा ऋचः । भारद्वाजस्यार्षम् Dur. गर्गस्यैव SKN.

२. आत्मीयेन जयघोषेणाश्वासय । यथा लोकद्वयं त्वदीयेन शब्देनापूरितं भवति तादृशं शब्दं कुर्वित्यर्थः Sy. उपशब्दय । श्वसिः शब्दार्थः Mah., U. उपशब्दय, आपूरय शब्देन Dur. उप आइत्येतस्य स्थाने । श्वसिः सामर्थ्यात् पूरणे । आपूरय स्वेन ध्वनिना SKN.

३. एतां च पृथिवीं कृत्स्नाम् Dur.

४. दिवम् Sy. अन्तरिक्षमपि Mah. दिवञ्च SKN.

५. बहुधा Sy., Mah., U., SKN. अपि चैकस्यापि सतस्तव पुरुत्रा बहुत्वे वर्तमानस्य Dur.

६. स्वान् P. त्वदीयं शब्दम् Sy. तवैकस्य सतः U. तव शब्दम् SKN.

७. मन्यताम् । जानातु Sy. जानातु । दुन्दुभिर्नदतीति Mah. घोषं मनुतां मन्यताम् U. शृणोत्वित्यर्थः SKN.

८. विशेषेण स्थितम् Sy. विविधं स्थितम् Mah. विविधं स्थितं स्थावरम् U. यच्चेदं विष्ठितं स्थावरम् Dur. विविधं स्थितं स्थावरमित्यर्थः । अतिशयप्रदर्शनार्थं च विष्ठितशब्देन स्थावरस्येहोपादानम् । इतरथा श्रोत्राभावाद् घोषमननमनुपपन्नं स्यादित्यभिप्रायः SKN.

९. स्थावरं जङ्गमं चोभयविधं प्राणिजातम् Sy. स्थावरजङ्गमात्मकं विश्वम् Mah. जङ्गमं च U., SKN. जगज्जङ्गमं च Dur.

१०. यस्त्वमेवमस्माभिः प्रार्थितः स त्वम् U. यस्यैव तव सामर्थ्यं द्यावापृथिव्यावापूरयितुं सः Dur. य एवमुक्तोऽसि सः SKN.

११. हे दुन्दुभे ! अत्र निरुक्तम् । दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा, दुन्दुभ्यतेर्वा स्याद्वध ? (शब्द)कर्मणः (N.9.12.) इत्यादि Sy. अस्य योऽभिधेयस्तस्य 'शब्दानुकरणम्' आत्मनो नामधेयप्रतिलम्भनिमित्तम् । यथैवासावभिहन्यमानः शब्दं करोति दुन्दुभिरिति तदेव तस्य नाम । 'द्रुमो भिन्न इति वा' द्रुमशब्दात्पूर्वपदम् । भिदेरुत्तरपदम्, तत्सम्भवो हि, असौ द्रुमैकदेशनिष्कुषितश्चर्मणा पिनद्धः Dur. दुन्दुभिः शब्दानुकरणनिमित्तमेतन्नाम । द्रुमशब्दस्य वा रेफलोपः । भिदेश्चाद्यन्तविपर्ययः । उकारश्चोपजन इत्याह । 'द्रुमो भिन्न इति वेति' (N.9.12.) भिन्नो निष्कुषितः । 'दुन्दुभ्यतेर्वा स्यात्' नैरुक्तधातोः । ताड्यते ह्यसौ युद्धसमये SKN.

१२. सहितः is suggested for सगेकः ॥ सह Sy. प्रीतियुक्तः Mah. समानप्रीतिः सन् U. सहजोषणः सहप्रीतिः Dur. सम्प्रीयमाण इति SKN.

१३. इन्द्रेण सह U.

१४. अन्यैश्च देवैः Dur. देवैश्च सह SKN.

१५. दूरादपि दूरतरम् Sy. अतिदूरम्. . . . अत्यन्तं दूरं दवीयः Mah.

अपसेध[1] । अस्मच्छत्रून्[2] ।

**आ क्रन्दय बलमोजो न आ धा निः ष्टनिहि दुरिता बाधमानः ।**
**अप प्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीळयस्व ॥ ३० ॥**

आ क्रन्दय । शब्दापय सेनाम्[3] । बलम्[4] । ओजश्च[5] । अस्मभ्यम्[6] । देहि[7] । निष्टनिहि[8] । दुरितानि[9] । बाधमानः[10] । अपप्रोथ[11] । दुन्दुभे ! राक्षसान्[12] । इतः[13], वाचा हुङ्करणमपप्रोथनम्[14] । इन्द्रस्य[15] । मुष्टिः[16] । वसि[17] । संस्तम्भय[18] शत्रुसेनाम्[19] ।

---

१. अपगमय Sy., SKN. अपकालयापुनरागमनाय Dur.

२. अस्मदीयान् Sy. अस्मच्छत्रूनित्येतदाशास्महे त्वत्तः Dur. तथा नदत एव शब्दं श्रुत्वा तव शत्रवो नश्यन्तीत्यभिप्रायः SKN. उपश्वासय पृथिवीं च दिवं च । बहुधा ते घोषं मन्यताम् । विष्ठितं स्थावरं जङ्गमं च यत् । स दुन्दुभे सहजोषण इन्द्रेण च देवैश्च । दूराद् दूरतरमपसेध शत्रून् N.9.13., SKN. III. 154.
This stanza=YV 29.55.

३. अस्मच्छत्रूत्रोदय Sy. रोदय पलायध्वं मदीया सर्वे हता इत्यादिदीनरवं कारयेत्यर्थः Mah. दीनान् शब्दान् कारय, अहो पलायध्वं पिता मे हतो भ्राता मे हत इति U.

४. सेनारूपम् Sy. शत्रुसैन्यम् Mah. शत्रुसेनाम् U.

५. शरीरबलं च Sy. तेजः Mah., U.

६. अस्माकम् Mah., U.

७. आधेहि । प्रयच्छ Sy. आधेहि U.

८. न० D. नितरां शब्दं कुरु । 'स्तन शब्दे' इति धातुः Sy. शब्दं कुरु । 'स्तन शब्दे' चुरादिरदन्तः Mah. निश्चितं शब्दं जयाय कुरु U.

९. दुरितानि दुर्गमनानि Sy. पापानि Mah.

१०. हिंसंस्त्वम् Sy. निराकुर्वन् सन् Mah. अपगमयन् U.

११. ०प्राथ D. बाधस्व Sy. नाशय । प्रोथतिर्नाशनार्थः Mah. अपकृत्यापकृत्य प्रोथ नाशय U.

१२. अस्मद्दुःखहेतुभूतं शुनं सुखं यासां तादृशीः शत्रुसेनाः Sy. दुष्टाश्च ते श्वानश्च दुच्छुवानस्तान् दुष्टाञ् शुनः श्वसदृशाञ्छत्रून् Mah. दुष्टशुन इव याः सेनाः । सुखवचनो वा शुनाशब्दः । दुःसुखाः, विसर्जनीयस्य दत्वम् U.

१३. अस्मात् स्थानात् Sy. अस्मत्सेनायाः सकाशात् Mah. इतः सेनायाः U.

१४. The passage वाचा . . . ०थनम्, should immediately follow अपप्रोथ and precede दुन्दुभे ।

१५. इन्दस्य P. यतस्त्वमिन्द्रस्य Mah. यतश्च त्वमिन्द्रस्य U.

१६. मुष्टिरिव शत्रूणां हन्ता Sy. मुष्टिवदङ्गभूतोऽसि Mah. मुष्टिरसि, अतो ब्रवीमि U.

१७. भवसि is suggested for वसि ।

१८. अतोऽस्मान् दृढीकुरु Sy. अतो वीडयस्व, आत्मानमस्मान् दृढय Mah. दृढीकुर्वात्मानम् U.

१९. VM. ignores आ ।
This stanza=YV 29.56.

आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ३१ ॥

आमूः[1] । अस्मदीयाः सेनाः[2] । आज[3] शत्रून् प्रति नय । प्रत्यावर्तय[4] च । इमाः[5] शत्रुसेनाः । थवर्णाक्षम्[6] प्रज्ञानयुक्तम्[7] । दुन्दुभिः । अत्यन्तं शब्दं[8] करोति । सञ्चरन्ति[9] । अस्मदीयाः[10] । योद्धारः[11] । अश्वपतनाः[12] । अस्माकम्[13] । इन्द्र ! रथिनः[14] । शत्रून् जयन्तु[15] ।

इत्थं व्याख्यदेकत्रिंशमध्यायं माधवाह्वयः ।
चोलेषु निवसन् ग्रामे गोमत्यार्यैः समाहृतः[16] ॥[17]

---

१. अस्याः पूर्वार्धो दुन्दुभिदेवत्य उत्तरार्धश्चैन्द्रः । यद्वा उभावप्यर्धर्चाविन्द्रौ Sy.

२. ०नां P. शत्रुषु स्थितास्ता गाः Sy. शत्रुसेनाः Mah., U.

३. ०जे D. अस्मान् प्रत्यागमय Sy. समन्तात् परिक्षिप। 'अज गतिक्षेपणयोः' Mah. आक्षिप U.

४. प्रतिनिवर्तय Sy.
जयं प्रापय्य प्रत्यानय Mah.
प्रत्यावर्तय जितं जितमिति U.

५. अस्मदीया गाः शत्रुभिर्जिघृक्षिताः Sy. अत इमा अस्मत्सेनाः Mah.
अस्मदीयसेनाः U.

६. ०नाथपर्णाक्षः P. अथ प्रत्यक्षः is suggested for थवर्णाक्षम् D.

७. प्रज्ञानवत् यथा सर्वैर्ज्ञायते तथा Sy. यतो दुन्दुभिः केतुमत् प्रज्ञानवत् Mah. प्रज्ञातवान् दुन्दुभिः U.

८. भृशं शब्दं करोति Sy.
अत्यन्तं वदति Mah.
लोडर्थे लट् । अत्यर्थं वदतु जयप्रकाशकम् U.

९. शत्रुभिर्युध्यमाना वर्तन्ते Sy. अत्रापि लोडर्थे लट् । सञ्चरन्तु U.

१०. अस्माकम् Mah.

११. पुरुषाः Sy. योधाः Mah. अस्मदीया मनुष्याः सङ्ग्रामे U.

१२. अश्ववाहाश्च Sy. अश्वस्येव पर्णं पतनं येषां ते Mah.

१३. ०नास्मा० P.
अश्ववतनास्मा० D.

१४. रथारूढाः पुरुषाः Sy.
रथस्थाः Mah.

१५. युद्धे जयं प्राप्नुवन्तु Mah. जयन्तु त्वत्प्रसादादिति शेषः U.

१६. ०माहृतः is suggested for ०माहुतः ।

१७. Ms.D. puts the figure ॥४७॥ here to indicate the end of the forty-seventh hymn. No such number is given in P.

This stanza=YV. 29. 57.

# चतुर्थाष्टके ऽष्टमोऽध्यायः ।

'यज्ञायंज्ञा[1] वो अग्नये[2]' व्याचिख्यासति माधवः ।
आवृत्तेषु[3] वदन् वाच्यमृगर्धर्चपदेष्वर्थं[4] ॥१॥
ऋतोर्द्धचश्च[5] पादश्च[6] सूक्तान्तेषु पुनःपुनः ।
आवर्तमाना[7] दृश्यन्ते सूक्तमध्येष्वपि क्वचित् ॥२॥
'ये स्तोतृभ्यः[8]' 'नू ष्टुतः[9]' च 'अस्मभ्यं तद्वसो[10] दानाय[11]' ।
'ब्रह्मणस्पते त्वमस्य[12]' चतस्रा निदर्शनं[13] ॥३॥
अथार्धर्चः 'तन्नो मित्रः[14]' सन्त्यप्यन्येऽपि[15] तादृशाः ।
'प्रातर्मक्ष[16]' इति[17] पादः स्यात् सन्त्यन्येऽपि च[18] तादृशाः ॥४॥
स्तुत्वान्य[19]मन्यदेवानां तत्तदाशासते[20] पुनः ।
ऋषयो यद्यदिच्छन्ति तदर्थास्ते[21] न पूरणाः ॥५॥
आवर्तयन्ति सूक्तीश्च[22] यथा 'अर्चन्ननु स्वराज्यम्[23]' ।
आवर्तन्ते[24] विधेयाश्च 'मरुद्भिरग्न आ गहि[25]' ॥६॥
सकृत्प्रदर्शितपदान् मन्त्रान्नाधीयते[26] पुनः ।
अधीयते पुनः कांश्चित् किं नु स्यात् तत्र कारणम् ॥७॥

---

१. यज्ञाय यज्ञ D. २. RV. VI. 48. 1a.
३. आवृर्तेषु D. ४. ०ष्वर्त्था P. ०ष्वथ is suggested for ०ष्वर्त्थः ।
५. ऋचोऽर्धर्चश्च is suggested for ऋतोर्द्धर्चश्च ।
६. पादाश्च is suggested for पादश्च ।
७. ०नो P. ८. RV. II. 1. 16.
९. RV. IV. 16. 21.
१०. ०भ्य द्व० P. D.
११. RV. II. 13. 3. १२. RV. II. 23. 19.
१३. चतस्रा निदर्शना D. चतस्रश्च निदर्शनम् is suggested for चतस्रा निदर्शन ।
१४. RV. I. 94. 16. १५. ०न्ये च R.
१६. RV. I. 58. 9. १७. ०क्षीति P.
१८. Omitted by P.
१९. स्तुत्यान्य० P. २०. ०साते D.
२१. ऋषयो द्यदियच्छन्ति दर्त्था० P.
२२. सूक्ती D. २३. RV. I. 80. 1.
२४. आवर्त P. २५. ०हि P. D. RV. I. 19. 1. २६. ०न्त्राणाधी० P.

'नू मे ब्रह्माण्यग्ने'[1] इति पुनश्चाधीयते पदम् ।
'यज्ञेन यज्ञम्'[2] इति च दशमे[3] मण्डले पुनः ॥८॥
अत्राहुः[4] कारणं वृद्धा तस्मिन्नेव[5] पुनः श्रुता ।
'नू मे'[6] इत्यृगियं सूक्ते नैवमन्यत्र[7] दृश्यते ॥९॥
एवंविधाया आवृत्तेरन्वेष्टव्यं प्रयोजनम् ।
इति वक्तुं पदावृत्तिः[8] काकुह्यर्यावृत्तितो[9] भवेत् ॥१०॥
'यज्ञेन यज्ञम्'[10] इत्यस्याः साध्याः पुत्रमेव[11] ।
तादृशमेव[12] पुरुषं प्राह[13] भेदोऽयं ज्ञाप्यते पदात् ॥११॥
तिलमात्रे भिद्यमाने पुनश्चाधीयते पदम् ।
स सूक्ष्मः शक्यते ज्ञातुं नाप्रज्ञैरिति[14] निर्णयः ॥१२॥
'पुनान[15] इन्दवा[16] भर[17] सोमं द्विबर्हसं रयिम्'[18] ।
पुनरागतमर्धर्चं पुनश्चाधीयते पदम् ॥१३॥
आवेष्टय योजना कार्या 'त्वं वसूनि[19] पुष्यसि'[20] ।
द्विबर्हसं[21] रयिं तस्मात् पुनानोऽस्मभ्यमाभर[22] ॥ इति ॥१४॥

---

१. ब्रा० P. ०ण्या० D. RV. VII. 1. 20.
२. RV. I. 164. 50.
३. दमे P.
४. तत्रा० R.
५. तेस्मि० D.
६. RV. VII. 1. 20.
७. ०मत्र D.
८. परावृ० P.
९. काकुह्यावर्तितो P.
१०. RV. I. 164. 50.
११. D. reads साध्याः पूर्वत्रमेव ॥ पुत्रमेव च तादृशम् is suggested for साध्याः पुत्रमेव ।
१२. तादृशं is suggested for तादृशमेव ।
१३. व्रहु भेदो भेदोयं P.
१४. नाप्रा० R.
१५. ०ना D.
१६. इन्द्र० D.
१७. इन्द्र पाप भर P.
१८. RV. IX. 40. 6.
१९. P. and D. add ह after वसूनि ।
२०. RV. IX. 100. 2.
२१. ०बर्हं P. D.
२२. ०नोभ्य० P.

जिघृक्षितो[1] यथान्तः[2] स्याद् वको विक्षिप्तमानसः ।
सन्दिग्धे च यथा कामकः[3] शाकल्योऽवहितस्तथा[4] ॥१५॥
पूरणेष्विति[5] वक्तव्यमध्यायादिषु दर्शितम् ।
व्युत्पत्त्यर्थं बह्वृचानां चतुर्थेऽस्माभिरष्टके ॥१६॥इति॥

VI.48.

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ १ ॥

यज्ञायज्ञा[6][7] ।

---

१. ०घृक्षि P. ०घृक्षिति D.
२. यथान्धः is suggested for यथान्तः ।
३. काकः is suggested for कामकः ।
४. ०तस्थाता D. ०ल्योपहितस्थाता P. ०ल्योपहत० R.
५. ०णेस्विति P.
६. अथाष्टमाध्याय आरभ्यते : षष्ठमण्डलस्य चतुर्थेऽनुवाके चत्वारि सूक्तानि व्याख्यातानि । 'यज्ञायज्ञा' इति द्वाविंशत्यृचं पञ्चमं सूक्तं बृहस्पतिपुत्रस्य शंयोरार्षम् । अत्रानुक्रम्यते—'यज्ञायज्ञा द्व्यधिका शंयुस्तृणपाणिकं पृश्निसूक्तं प्रगाथौ बृहती महासतोबृहती महाबार्हतबार्हतौ प्रगाथावित्याग्नेय्यः काकुभः प्रगाथः पुरउष्णिग्बृहत्यतिजगतीति मारुत्योऽन्त्यास्तिस्रो वासां लिङ्गोक्तदेवताः काकुभः प्रगाथः पुरउष्णिग्बृहतीति पौष्ण्यो बृहती महाबृहती यवमध्यान्त्यानुष्टुब्द्यावाभूम्योर्वा पृश्नेर्वा (KSA. 32. 48.p.22.) इति। 'यज्ञायज्ञा वः' इत्येषा बृहती । 'तृतीयो द्वादशकः' (KSA.7.1. p.3.) इति तल्लक्षणसद्भावात् । द्वितीया सतोबृहती 'अयुजौ जागतौ सतोबृहती' (KSA. 8.4.p.4.) इत्युक्तलक्षणोपेतत्वात् । तृतीया चतुर्थी बृहतीसतीबृहत्यौ । पंचमी बृहती षष्ठी महासतोबृहती । अष्टाक्षरास्त्रयः पादा द्वादशाक्षरौ द्वौ पादौ सा महासतोबृहती (Cf. KSA. 10.2. p.4.) सप्तमी महाबृहती अष्टाक्षराश्चत्वारः पादा एको द्वादशाक्षरः सा महाबृहती (Cf. KSA. 99. p. 4.) अष्टमी महासतोबृहती अष्टिनस्त्रयो द्वौ जागतौ सा महासतोबृहती (Cf. KSA. 12.2. p.4.) नवमी बृहती दशमी सतोबृहती । एता दशाग्निदेवत्याः । एकादशी ककुप् 'मध्यमो यदि द्वादशाक्षर उभयतोऽष्टकौ द्वौ पादौ सा ककुप् (Cf.KSA.5.3.p.3.)। द्वादशी सतोबृहती। त्रयोदशी पुरउष्णिक् आद्यो जागतो द्वितीयतृतीयौ गायत्रौ सा पुरउष्णिक् (Cf. KSA. 5.2.p.3)। चतुर्दशी बृहती पञ्चदश्यतिजगती द्वापञ्चाशदक्षरा । एकादश्याद्याः पञ्च मरुद्देवताकाः त्रयोदश्यादीनां तिसृणां लिङ्गोक्ता इन्द्रादयो वा देवताः । षोडशी ककुप् । सप्तदशी सतोबृहत्यष्टादशी पुरउष्णिगेकोनविंशी बृहती । षोडश्यादीनां चतसृणां पूषा देवता । विंशी बृहत्येकविंशी यवमध्या महाबृहती । आद्यौ द्वावष्टकौ तृतीयो द्वादशकश्चतुर्थपञ्चमावष्टकौ सा यवमध्या महाबृहती (Cf. KSA. 9.10.p.4.) । विंश्येकविंश्योः पृश्निसूक्तमित्युक्तत्वान्मरुतां माता पृश्निर्देवता । द्वाविंश्यनुष्टुप् । सा चापि पृश्निदेवत्या द्यावाभूमिदेवत्या वा । सूक्तविनियोगो लैङ्गिकः । आग्निमारुते 'यज्ञायज्ञा वः' इत्ययं स्तोत्रियप्रगाथः । सूत्रितञ्च—'यज्ञायज्ञा वो अग्नये देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ' (ASS. 5.20.)इति Sy.
७. ०ज्ञां P. यज्ञायज्ञां D.

॥ शंयुः ॥ यज्ञे[1] यज्ञे[2]। तुभ्यम्[3]। अहम्[4]। स्तुत्या स्तुत्या[5]। प्रवृद्धाय[6]। अग्नये[7]। शंसनं कृतवानस्मि तदेवाह प्राशंसिषमहम्[8]। अमृतम्[9]। जातवेदसम्[10]। प्रियम्[11]। इव[12]। मित्रमिति[13][14]।

---

१. हे स्तोतारः ! Sy.

२. ०ज्ञ D. सर्वेषु यागेषु Sy. यज्ञायज्ञा वीप्सायां द्वित्वम्। सप्तम्येकवचनस्याकारः।. . .तथा चैवं योजना यज्ञेयज्ञेऽनेकयज्ञेषु Mah. यज्ञेयज्ञ इति सप्तम्येकवचनस्य आआदेशो वीप्सायाम् U.

३. यूयम् Sy. व इति द्वितीयाबहुवचनमेकवचनार्थे यजमानविषयं वा ।. . . .वः त्वाम् । यद्वा वो युष्माकमर्थे Mah. व इति यजमानविषयं युष्मदर्थम् U.

४. वयम् Sy. वयमिति प्रथमाबहुवचनमेकवचनार्थे Mah. वयम्, अहमिति विभक्तिव्यत्ययो वाक्यसम्बन्धात् U.

५. स्तुतिरूपया वाचावाचा स्तोत्रं कुरुतेति शेषः Sy. गिरागिरा वीप्सायां द्वित्वम् । अन्ययाऽन्यया स्तुत्या Mah. तया तया च गिरा वाचा स्तुतिलक्षणया U.

६. दक्षसे । चतुर्थी द्वितीयार्थे । तस्य च शंसिषमिति क्रियया सम्बन्धः ।. . . .कीदृशमग्निम् । दक्षसम् । दक्षतेरुत्साहार्थस्य धातोरसुन् प्रत्ययः । दक्षत उत्सहते दक्षास्तमुत्साहिनम् । यद्वा दक्ष इति बलनाम । अन्तर्णीतमत्वर्थं द्रष्टव्यम् । दक्षसं बलवन्तम् Mah. दक्षसमिति सन्नतिः । दक्षवन्तमुत्साहवन्तम् । अग्निविशेषणं चैतत् U.

७. अग्नये चतुर्थ्येकवचनं द्वितीयैकवचनार्थे ।. . . . अग्निम् Mah. अग्निमिति विभक्तिव्यत्ययो वाक्यसम्बन्धात् U.

८. प्र शंसिषम्—'प्रसमुपोदः पादपूरणे' इति प्रशब्दस्य द्विरुक्तिः पादपूरणार्था । व्यत्ययेनैकवचनम् । छान्दसो लुङ् । प्रशंसाम Sy. स्तौमि । 'शंस स्तुतौ' लुङ् अडभाव आर्षः Mah. प्र प्रः . . .शंसिषेत्याख्यातेन सम्बन्धः। प्रशंसिषम् U.

९. मरणरहितम् Sy. अमरणधर्माणम् Mah., U.

१०. जातानां वेदितारं जातप्रज्ञं जातधनं वा Sy. जातं वेदो ज्ञानं धनं वा यस्मात्तम् Mah. जातप्रज्ञानम् U.

११. अनुकूलम् Sy. प्रीतिजनकम् Mah.

१२. प्रमिव P. नशब्द उपरिष्टादुपचारादुपमार्थीयः। मित्रं न मित्रमिव Mah. मित्रमेव U.

१३. यद्वा व्यत्ययेन त्वमित्यस्य वसादेशः । अग्नय इति च कर्मणि चतुर्थी । 'क्रियाग्रहणमपि कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् । चशब्दश्चणिति निपातश्चेदर्थे वर्तते। दक्षस इति च दक्षेर्वृद्धिकर्मणोऽन्तर्भावितण्यर्थाल्लटि रूपम् । चणा योगात् 'निपातैर्यद्यदिहन्त०' इति निघातप्रतिषेधः । तत्रायमर्थः । हे स्तोतः ! त्वं यज्ञे यज्ञ इममग्निं गिरा गिरा स्तुत्या दक्षसे च वर्धयसि चेत् वयमप्यमृतत्वादिगुणकं तं प्रशंसाम Sy. यथा कश्चित् प्रियं मित्रं स्तौति तद्वदग्निं स्तुमह इत्याशास्महे Mah. अथ वाक्यार्थवशा सदानुपूर्वी । अहं यज्ञे यज्ञे वो युष्मदर्थेऽग्निं दक्षवन्तं तया तया च स्तुत्या प्रशंसिषम्, अमृतं जातवेदसं प्रियं मित्रमिव U.

१४. VM. explains प्र once only and ignores च ॥ चशब्दो भिन्नक्रमो व इत्यस्मात्परो द्रष्टव्यः। यूयं च स्तोत्रं कुरुत Sy. च पादपूरणः Mah.

This stanza=YV. 27.42.

ऊर्जो नपा॑तं॒ स हि॒नायम॑स्म॒युर्दाशे॑म ह॒व्यदा॑तये ।
भुव॒द्वाजे॑ष्ववि॒ता भुव॑द्वृ॒ध उ॒त त्रा॒ता त॒नूना॑म् ॥ २ ॥

ऊर्जो नपातम्[1] । निपातो हि पर्यायः,[2] ऊर्जः[3] । पुत्रं[4] प्राशंसिषम्[5] । सः[6] । अयं[7] खलु[8] । अस्मिन् कामः[9] । तस्मै[10] देवानां[11] हविषां[12] दात्रे । हविर्दाशिम[13] । स भवतु[14] । सङ्ग्रामेषु[15] । अस्माकं रक्षिता[16] । भवतु[17] । वर्धयिता[18] । अपि च । त्राता[19] । अङ्गानाम्[20] ।

वृषा॒ ह्य॑ग्ने अ॒जरो॑ म॒हान्वि॒भास्य॒र्चिषा॑ ।
अज॑स्रेण शो॒चिषा॒ शोशु॑चच्छुचे सु॒दीति॑भिः॒ सु दी॑दिहि ॥ ३ ॥

वृषा हि । वर्षिता[21] । हि[22] । अग्ने ! जरारहितः । महान्[23] । विभासि[24] । तेजसा[25] । आदित्येन[26] ।

---

१. निर्नेति P., D. यजमानोऽध्वर्युं प्रार्थयते । हे अध्वर्यो ! Mah.
२. नपात् is suggested for निपातो ।
३. The passage नपात् हि पर्यायः should immediately follow पुत्रम् ॥ पौत्रमग्निम् ।. . . . अद्भ्यो वृक्षा जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः Mah. ताभ्य ओषधिवनस्पतयो जायन्ते तेभ्य एष जायत इत्यपां पौत्रोऽग्निस्तम् U.
४. अन्नस्य बलस्य वा Sy. अपाम् ।. . . ऊर्क्शब्देनाप उच्यन्ते Mah. ऊर्जशब्देनाप उच्यन्ते U.
५. प्र शंसिषमित्यनुषङ्गात्प्रशंसामेत्यर्थः Sy.
६. स त्वम् Mah. स त्वं हे अध्वर्यो ! U.
७. अग्निः Sy. यतोऽयमग्निः Mah. अयं ह्यग्निः U.
८. हि नेति निपातद्वयसमुदायो हि इत्यस्यार्थे Sy. हिनु तर्पय । 'हि गतौ वृद्धौ' स्वादिर्लोट् । उलोपश्छान्दसः Mah. हिन तर्पय U.
९. अस्मिरस्मान्कामस्तकामः D. अस्मत्कामः is suggested for अस्मिन् कामः ॥ अस्मान् कामयमानो भवति Sy. अस्मानिच्छत्यस्मयुः Mah. अस्मान् कामयते U.
१०. तमस्मै P. अग्नये Sy.
११. देवेभ्यः Sy.
१२. ०षो D. वयं च हव्यानां हविषां देवेभ्यो दात्रे Sy. अतो हव्यदातये हविषो दानाय Mah., U.
१३. हवींषि दद्याम Sy. सङ्कल्पयामः । 'दाशृ दाने' अत्र सङ्कल्पार्थः Mah. अतो वयं च दाशेम सङ्कल्पं कुर्याम U.
१४. स चाग्निर्भवतु Sy. भवति Mah., U.
१५. यतोऽयं वाजेष्वन्नेषु Mah. अन्नेषु विषयभूतेषु U. १६. गोप्ता U.
१७. भवति Mah., U.
१८. वर्धकः Sy. वृद्धौ च Mah. वर्धनाय च U.
१९. रक्षिता Sy., Mah.
२०. तनयानामस्मत्पुत्राणां च Sy. शरीराणाम् ।. . . . बहुवचनं भार्यादिशरीररक्षार्थमुपात्तम् । अग्निरन्नतनुरक्षिता वर्धयिताऽस्मान् कामयतेऽतो हविर्दानाय तं सङ्कल्पयामः Mah. शरीराणाम् । बहुवचनोपदेशाद्भार्यादिशरीरग्रहणम् यत एवमत ऊर्जो नपातं हिन इति सम्बन्धः । एवमदूरविप्रकर्षेण विषमयन्त्रा व्याख्येयाः U. This stanza=YV. 27.44.
२१. वर्षिता कामानां वृष्टेः कर्ता वा Sy.
२२. खलु Sy.
२३. गुणैरधिक एवम्भूतस्त्वम् Sy.
२४. विभसि D. विशेषेण प्रकाशसे Sy.
२५. दीप्त्या Sy.
२६. अविच्छिन्नेन Sy.

तेजसा । दीप्यमानस्त्वम्[1] । शुचे[2] ! शोभनदीप्तिभिः[3] । दीप्यस्व[4] । शोभनम्[5] ।

**म॒हो दे॒वान्यज॑सि॒ यक्ष्या॑नु॒षक्तव॒ क्रत्वो॒त दं॒सना॑ ।**
**अ॒र्वाचः॑ सीं कृणुह्यग्नेऽव॑से रास्व॒ वाजो॒त वं॑स्व ॥ ४ ॥**

महः[6] । महतः[7] । देवांस्त्वम् । यजसि[8] यजमानानाम् । तथा सति यजास्माकमपि[9] । अनुषक्तम्[10] । तव । प्रज्ञानेन[11] । अपि च । कर्मणा । अभिमुखान्[12] । सर्वान्[13] देवान् । कुरु । रक्षणाय[14] । अग्ने ! देहि[15] । अन्नानि[16] । अपि चास्मत्तः । त्वं च सम्भजस्व[17] ।

**यमापो॒ अद्र॑यो॒ वना॒ गर्भ॑मृ॒तस्य॒ पिप्र॑ति ।**
**सह॑सा॒ यो म॑थि॒तो जाय॑ते॒ नृभि॑ः पृथि॒व्या अधि॒ सान॑वि ॥ ५ ॥**

यमापः[18] । यम्[19] । वसतीवर्यः[20] । ग्रावाणः । काष्ठानि च । यज्ञस्य[21] । गर्भम्[22] । पूरयन्ति[23] । यश्च यज्ञे[24] । ऋत्विग्भिः[25] । मथितः[26] । जायते[27] । पृथिव्याः[28] । उच्छ्रिते[29] वर्षभूते देवयजने[30] ।

---

१. भृशं दीप्यमानस्त्वम् Sy.
२. हे दीप्ताग्ने ! Sy.
३. ०भि D. सुदीप्तिभिः Sy.
४. अस्मान् दीपय । प्रकाशय Sy.
५. Omitted by P. सुष्ठु Sy.
६. The commentary on this stanza is omitted by P.
७. हे अग्ने ! Sy.
८. यजमानानां यज्ञे हविर्भिः पूजयसि Sy.
९. अतोऽस्माकमपि यज्ञे तान् देवान् यज Sy.
१०. अनुषक्तं सन्ततं यथा भवति तथा Sy.
११. प्रज्ञया Sy.
१२. अस्मदभिमुखान् Sy.
१३. सीमिति परिग्रहार्थीयः । तान् सर्वान् Sy.
१४. अस्मद्रक्षणार्थम् Sy.
१५. तेभ्यो देवेभ्यो देहि Sy.
१६. वाजान् हविर्लक्षणान्यन्नानि Sy.
१७. तुभ्यं प्रत्तानि हवींषि सम्भजस्व Sy.
१८. The commentary on this stanza is omitted by P.
१९. अग्निम् Sy.
२०. यमदसतिपर्यः D. आपो वसतीवर्याख्याः Sy.
२१. उदकस्य वा Sy.
२२. गर्भवदन्तर्वर्तमानम् Sy.
२३. यद्वा । आपः समुद्रिया अद्रयो मेघा वनान्यरण्यानि च ऋतस्य गर्भं वाडववैद्युतदावरूपेण वर्तमानं यमग्निं पिप्रति पूरयन्ति Sy.
२४. अग्निः Sy.
२५. नेतृभिर्ऋत्विग्भिः Sy.
२६. मथितः सन् Sy.
२७. प्रादुर्भवति स त्वं वंस्वेत्यन्वयः । यद्वा, 'आ यः पप्रौ' (RV. VI.48.6.) इत्यनया सम्बन्धः Sy. २८. पृथिव्या अधि भूमेरुपरि Sy.
२९. समुच्छ्रित उत्कृष्टे देवयजनदेशे Sy.
३०. VM. ignores सहसा and अधि ॥ सहसा बलेन Sy.

**आ यः पप्रौ भानुना रोदसी उभे धूमेन धावते दिवि ।**
**तिरस्तमो ददृश ऊर्म्यास्वा श्यावास्वरुषो वृषा श्यावा अरुषो वृषा ॥ ६ ॥**

आ यः । आपूरयति । यः[1] । तेजसा[2] । द्यावापृथिव्यौ । उभे अपि । धूमेन । सोऽन्तरिक्षे । धावते[3] । आदृश्यते[4] सः । तिरस्कृत्य । तमांसि[5] । रात्रिषु[6] दृश्यते । श्याववर्णासु[7] । आरोचमानःतथा सर्वा एव रात्रीः[8] रोचयन्[9] । आदृश्यते । आरोचमानः[10] ।

**बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।**
**भरद्वाजे समिधानो यविष्ठ्य रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि ॥ ७ ॥**

बृहद्भिः । महतीभिः[11] । अग्ने ! दीप्तिभिः[12] । शुक्रया[13] च । देव[14] ! ज्वालया[15] । भरद्वाजे मम भ्रातरि[16] । दीप्यमानः[17] । युवतम ! त्वम् । अस्माकम्[18] । धनयुक्तं[19] च । दीप्यस्व[20] । शोधक[21] ! शोचमानः[22][23] ।

**विश्वासां गृहपतिर्विशामसि त्वमग्ने मानुषीणाम् ।**
**शतं पूर्भिर्यविष्ठ पाह्यंहसः समेद्धारं शतं हिमाः स्तोतृभ्यो ये च ददति ॥ ८ ॥**

विश्वासाम् । त्वम् । अग्ने ! सर्वासाम् । मानुषीणाम्[24] । विशाम्[25] । गृहपतिः[26] । असि[27] । स त्वं

---

१. अग्निः Sy.
२. दीप्त्या Sy.
३. गच्छति । धूमो हि मेघात्मना परिणतः सन् धावते गच्छति । कार्यकरणयोरभेदविवक्षया तद्गमनमग्नावुपचर्यते Sy.
४. आदृश्चते D. समन्ताद्दृश्यते Sy.
५. अन्धकारम् Sy.
६. ऊर्म्यासु रात्रिनामैतत् । निशासु Sy. ऊर्म्येति रात्रिनाम Ngh. 1.7.
७. कृष्णासु Sy.
८. It seems to be the explanation of श्यावाः ॥ श्याववर्णाः Sy.
९. रोदयद् D. अरुषो वृषेति पुनरुक्तिरादरार्था Sy.
१०. VM. ignores वृषा । वर्षिता कामानाम् Sy.
११. ०तीः D. महद्भिः Sy.
१२. ०भि D. तेजोभिः Sy.
१३. निर्मलेन Sy.
१४. हे देव ! दानादिगुणयुक्त ! Sy.
१५. तेजसा Sy.
१६. अस्मद्भ्रातरि Sy.
१७. समिध्यमानस्त्वम् Sy.
१८. अस्मदर्थम् Sy.
१९. धनयुक्तं यथा भवति तथा Sy.
२०. The passage beginning with बृहद्भिः and ending with दीप्यस्व is omitted by P.
२१. शोचक P. हे शोधकाग्ने ! Sy.
२२. दीप्यमानः P. It seems to be the explanation of शुक्र Voc. दीप्ताग्ने ! Sy.
२३. VM. ignores द्युमत् and दीदिहि ॥ द्योतमानेन च युक्तं यथा भवति तथा दीप्यस्व Sy.
२४. मनोरपत्यभूतानाम् Sy.
२५. प्रजानाम् Sy.
२६. गृहस्वामी Sy.
२७. भवसि Sy.

शतसङ्ख्याभिः[1] । पुरीभिः[2] । युवतम[3] ! पाहि रक्ष । आहन्तुः[4] । समेधारम्[5] । शतम् । हिमाः[6] । स्तोतृभ्यः । ये । च । ददति[7] तांश्च पासीति[8] ।

**त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।**
**अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ ९ ॥**

त्वं नश्चित्रः । त्वम् । अस्मभ्यम् । चित्रा[9] । रक्षणार्थम्[10] । वासयितुः[11] । धनानि । चोदय[12] । अस्य[13] दृश्यमानस्य । धनस्य । त्वम् । अग्ने ! नेता[14] । भवसि[15] । लम्भय फलम् । प्रतिष्ठाम् । अपत्यार्थम्[16] । अस्माकम्[17] । शीघ्रम्[18] ।

**पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।**
**अग्ने हेळांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥ १० ॥**

पर्षि[19] तोकम् । चारय[20] । पुत्रम्[21] । पौत्रं च । पारणोपायैः[22] । त्वम् । अहिंसितैः[23] । अजस्रैः[24] । अग्ने ! क्रोधान्[25] । दैवकृतान्[26] । पृथक्कुरु । अस्माकम्[27] । रक्षांसि । च । कुटिलगमनानि[28] ।

---

१. शतेन शतसङ्ख्याकैः Sy.
२. पूरीभिः P. पालकैः Sy.
३. युवम P. हे युवतमाग्ने ! Sy.
४. पापाद् आहन्तुः शत्रोर्वा Sy.
५. समेद्धारम् is suggested for समेधारम् ॥ त्वां सम्यगिद्धं कृतवन्तं माम् Sy.
६. हेमन्तान् संवत्सरान् Sy.
७. ददति धनं तव समिन्धनस्य कर्तरि प्रयच्छन्ति तांश्च पाहि Sy.
८. पाहीति is suggested for पासीति ।
९. चित्रः is suggested for चित्रा ॥ दर्शनीयस्त्वम् Sy.
१०. रक्षया सह Sy.
११. ०यितः ! is suggested for ०यितुः ॥ हे वासकाग्ने ! Sy.
१२. प्रेरय Sy.
१३. चोदयस्य P. अस्य सर्वत्र लोके परिदृश्यमानस्य Sy.
१४. रथीः रंहिता नेता Sy.
१५. भवसि । अतः कारणादस्मभ्यं धनानि प्रेरयेत्यर्थः Sy.
१६. तुचे । अपत्यनामैतत् । अपत्यायापतनहेतुभूताय पुत्रादये Sy.
तुगित्यपत्यनाम Ngh. 2.2.
१७. अवत्यस्माकम् P.
१८. क्षिप्रम् Sy.
१९. वर्षि P., D.
२०. पार० is suggested for चार० ॥ पालय Sy.
२१. तनयम् Sy.
२२. पालनसाधनैः Sy.
२३. केनाप्यहिंसितैः Sy.
२४. अप्रयुत्वभिः । यौतिरत्र पृथग्भावार्थः । अपृथग्भूतैः संहतैः Sy.
२५. ०धात् D.
२६. दवकृतात् D. देवकृतान् is suggested for दैवकृतान् ॥ देवसम्बन्धीनि Sy.
२७. अस्मत्तः Sy.
२८. अदेवानि मनुष्यसम्बन्धीनि Sy.
२९. हिंसनानि Sy.

आ सखायः सबर्दुघां धेनुमजध्वमुप नव्यसा वचः ।
सृजध्वमनपस्फुराम् ॥ ११ ॥

आ सखायः । शौनकः—आदित्यो वा मरुतः पृश्नयो वा प्रगाथस्त्वत्रेति[1] । अस्मिन् सूस्ते[2]ऽयं प्रगाथ आदित्यदेवतो वा मरुद्देवतो वा पृश्निदेवतो वेत्यर्थस्तत्र[3] पृथि[4]देवतत्वमृगक्षरेषु दृश्यते । हे सखायः[5] ! अमृतदुघाम्[6] । धेनु[7] । नवतरेण[8] । स्तोत्रेण[9] । उपाजध्वम्[10] । विसृत्वध्वं[11] च । दाम्नस्तां[12] प्रस्फुरन्तीम्[13] ।

या शर्धाय मारुताय स्वभानवे श्रवोऽमृत्यु धुक्षत ।
या मृळीके मरुतां तुराणां या सुम्नैरेवयावरी ॥ १२ ॥

या शर्धाय । या[14] । मारुताय[15] । वेगाय[16] । स्वभूतदीप्तये[17] । श्रवणीयम्[18] । अमरणं[19] तद्धेतु पय[20] । धुक्षत्र[21] । या च । मरुताम्[22] । गन्तॄणाम्[23] । सुखे वर्तते । या च । सुखैः[24] । सहैव गमनशीला[25], यदा मारुतः[26] प्रगाथस्तदा मरुतां मातृद्वारा स्तुतिः, अथ यदादित्यस्तदा तेषां मातुः । अदितिर्हि पृश्निर्भूत्वा मरुतश्चोत्पादयामास[27] ।

---

१. Cf. KSA. 32.48.p.23.
२. सूक्ते is suggested for सूस्ते ।
३. ०श्निदेवेत्य० P.
४. पृश्नि० is suggested for पृथि० ।
५. हे समानख्यानाः ! अध्वर्यवः ! Sy.
६. ०खाय मृ० P. सबरिति पयसो नाम । अमरणहेतुभूतस्य पयसो दोग्ध्रीम् Sy. अमृतं सबरुरुच्यते BD.
७. धेनुम् is suggested for धेनु ।। गाम् Sy.
८. केन साधनेन ? नवीयसा Sy.
९. वचसाह्वानरूपेण शब्देन Sy.
१०. अभिगच्छत । प्राप्नुत Sy.
११. ०सृजध्वम् is suggested for ०सृत्वध्वम् ।। उपसृजध्वं वत्सेनोपसृष्टां कुरुत । मरुद्देवत्यत्वात् मरुतां यागाय पयो दोग्धुमिति शेषः । अथवा मरुतां माता पृश्न्याख्या माध्यमिका वाग्धेनुः । हे सखायः ! स्तोतारः ! सबर्दुघां मरुज्जनहेतुभूतस्य पयसो दोग्ध्रीं धेनुं पृश्निं नव्यसा नवतरेण वचसा स्तोत्रेण उपागच्छत । अनपस्फुरामनपबाधनीयां तां सृजध्वम् । बन्धनाद्विसृजत । मुञ्चत । ईदृशी महती धेनुर्मरुतां माता किमु वक्तव्यं तेषां माहात्म्यमिति मरुत्स्तुतिः Sy.
१२. ०म्नस्तमः P.
१३. अनपस्फुराम्, स्फुरतिर्वधकर्मा । अनपबाध्याम् Sy.
१४. धेनुः Sy.
१५. म० P. मरुत्सङ्घाय Sy.
१६. कीदृशाय ? प्रसहनशीलाय Sy.
१७. ०प्तेये D. स्वायत्तदीप्तये Sy.
१८. अन्नं पयोलक्षणम् Sy.
१९. अमरणहेतु Sy.
२०. वयः P.
२१. अधुक्षत् is suggested for धुक्षत्र ।। अधुक्षत् Sy.
२२. क्षिप्रकारिणाम् Sy.
२३. सुखे तत्परा वर्तते Sy.
२४. सुखैर्हेतुभूतैः Sy.
२५. गेवन० P. गन्तृभिरश्वैर्मध्यमस्थानैरुदकैर्वा सह यान्त्यन्येषामपि सुखार्थं वृष्टिजलैः सहागच्छन्ती तां धेनुमुपाजध्वमिति पूर्वत्रान्वयः । अत्रापि पूर्ववन्मरुत्स्तुतिरधिगन्तव्या Sy.
२६. मरुतः P.
२७. ०रुतोत्पा० P.

भरद्वाजायाव धुक्षत द्विता । धेनुं च विश्वदोहसमिषं च विश्वभोजसम् ॥ १३ ॥

भरद्वाजाय । ॥ लिङ्गोक्तदेवस्तृचः[1][2] ॥ भरद्वाजाय मम भ्रात्रे[3] या । अवधुक्षत[4] । द्वैधमिन्द्रादयो[5] वक्ष्यमाणः[6] । कथं[7] द्वैधमित्याह । गाम् । च । विश्वास्य[8] दोग्ध्रीम् । अन्नम् । च । सर्वस्य[9] भोजयित् ।

तं व इन्द्रं न सुक्रतुं वरुणमिव मायिनम् ।
अर्यमणं न मन्द्रं सृप्रभोजसं विष्णुं न स्तुष आदिशे ॥ १४ ॥

तं[10] वः[11] । तम्[12] । युष्मदर्थम्[13] । इन्द्रम् । च[14] । सुप्रज्ञानम्[15] । वरुणं च[16] । प्रज्ञावन्तम्[17] । अर्यमणम् । च[18] । मादयितारम्[19] । गच्छदन्नं प्रदातारम्[20] । विष्णुम् । च[21] । स्तौ[22] । धनामादेशाय[23][24] ।

त्वेषं शर्धो न मारुतं तुविष्वण्यनर्वाणं पूषणं सं यथा शता ।
सं सहस्रा कारिषच्चर्षणिभ्य आँ आविर्गूळ्हा वसू करत्सुवेदा नो वसू करत् ॥ १५ ॥

त्वेषम् । दीप्तम् । शर्धम्[25] । च[26] । मारुतम्[27] । बहुधनम्[28] । तथान्यस्मिन्नप्रत्यृतम्[29] । पूषणं[30] च स्तौमि ।

---

१. ०वस्त्वृचः D. ०वतस्तृचः is suggested for ०वस्तृचः ।
२. हे मरुतः ! Sy.
३. अस्मद्भ्रात्रे Sy. ४. अवाधु० P.
५. द्वितयम् Sy.
६. ०णाः is suggested for ०णः ।
७. यथा P.
८. विश्वस्य is suggested for विश्वास्य ॥ विश्वस्य व्याप्तस्य बहुलस्य दोग्ध्रीम् Sy.
९. सर्वेषां भोगपर्याप्तम् Sy.
१०. च D. ११. हे मरुद्गण ! Sy.
१२. तादृशम् Sy.
१३. वः त्वाम् Sy.
१४. VM. seems to explain न as च ॥ इव Sy. १५. सुकर्माणम् Sy.
१६. P. reads अन्नं च प्रज्ञावन्तमर्यमणमन्नं च for इन्द्रं च सुप्रज्ञानं वरुणं च ॥ वरुणमिव Sy.
१७. D. adds अर्यमणञ्च प्रज्ञावन्तम् after प्रज्ञावन्तम् ॥ मायावन्तम् Sy.
१८. इव Sy. १९. स्तुत्यम् Sy.
२०. प्रसृप्तधनम् । यदा त्वस्या लिङ्गोक्तदेवतास्तदानीं नेवशब्दौ चशब्दार्थे द्रष्टव्यौ Sy.
२१. P. adds दाम्नस्तमः प्रस्फुरन्तीं या शर्धाय मारुताय वेगाय स्वभूतदीप्तेये श्रवणीयममरणं तद्धेतु पयो धुक्षत्र या च मरुतां गन्तॄणां सुखे वर्तते याचन्नञ्च सर्वस्य मादयितारं गच्छदन्नं प्रदातारं विष्णुञ्च after विष्णुम् । च । The additional passage in P. has a striking resemblance with the commentary on RV.VI.48.11,12.
२२. स्तौमि is suggested for स्तौ ।
२३. धनम् P. धनानामा० is suggested for धनामा० ।
२४. मदेशाय P. धनानामतिसर्जनाय प्रदानाय Sy.
२५. शर्धः is suggested for शर्धम् ॥ बलं स्तौमीति शेषः Sy.
२६. नेति सम्प्रत्यर्थे, सम्प्रतीदानीम् Sy.
२७. मरुत्सङ्घरूपम् Sy.
२८. बहुस्वनम् is suggested for बहुधनम् ।
२९. ०न्यन्नप्र० P. शत्रुभिरनभिगतम् Sy.
३०. पोषकम् Sy.

सह करोमि[1] । यथा[2] । गतानि[3] । सहस्राणि[4] च वसूनि[5] । करोति[1] । मनुष्येभ्यस्तथा[6] स्तौमि । स[7] पूषास्माकम् । गूढानि[8] । वसूनि[9] । आविष्करोतु । सुधनः[10] भरद्वाजायेति प्राथे[11] मारुते[12] गणो वा स्तूयते[13] । तत्रोपमार्थीयाः सङ्गच्छन्ते[14] तस्मिन् पक्षेऽयं मन्त्रः पौष्ण इति[15] । यथा मारुतं[16] शर्धोऽस्तौषमेवं[17] पूषणमपि स्तौमीति[18] ।

**आ मा पूषन्नुप द्रव शंसिषं नु ते अपिकर्ण आघृणे । अघा अर्यो अरातयः ॥ १६ ॥**

**आ मा** । हे पूषन् ! माम् । उपाद्रव[19] । आगतघृणे[20] ! क्षिप्रमहम् । शंसामि[21] । तव । कर्णसमीपे[22] । आहन्यमानमाहारा[23] च ? अभिगन्तारः[24] । मम शत्रवो[25] भवन्तु भवन्ति वेति ।

**मा काकम्बीरमुद्वृहो वनस्पतिमशस्तीर्वि हि नीनशः ।**
**मोत सूरो अह एवा चन ग्रीवा आदधते वेः ॥ १७ ॥**

**मा काकम्बीरम्[26]** । मा[27] । कानां[28] भर्तारं कार्कवां[29] निबिडम्[30] । उद्वृहः[31] । वनस्पतिमिति[32] पुत्रपौत्रपरिवृत-

---

१. सं सहेव कारिषत् कुर्यात् तथा स्तौमीति पूर्वत्रान्वयः Sy.
२. येन प्रकारेण Sy.
३. शतानि is suggested for गतानि ॥ शतसङ्ख्याकानि धनानि Sy.
४. सहस्रसङ्ख्याकानि Sy.
५. सूनि P. धनानि Sy.
६. मनुष्येभ्योऽस्मभ्यम् Sy.
७. मरुद्गणः Sy.
८. गूढानि संवृतानि Sy.
९. धनानि Sy.
१०. सुवेदा सुलभानि Sy.
११. प्रगाथे is suggested for प्राथे ।
१२. ०तो is suggested for ०ते ।
१३. सूय० P.
१४. तत्रो व मात्मीयास्सङ्गते P.
१५. हुति D.
१६. मारु D.
१७. शद्धोस्तौ० D.
१८. VM. explains सम् । वसु । करत् once only and ignores आ ॥ आकारः समुच्चये । वसूनि धनानि । करोतु । यदा तु लिङ्गादियं पौष्णी तदा मारुतं शर्ध इव त्वेषं पूषणं पोषकमेतत्संज्ञं देवं स्तौमीति योजनीयम् Sy.
१९. द्रव P. आ द्रव रक्षणार्थमभिगच्छ । उपद्रव बाधस्व । उपपूर्वो द्रवतिर्बाधायां वर्तते । यथा 'प्रज्ञां पशून् यजमानस्योपदोद्राव (TS. 1.5.1.4) इति Sy.
२०. हे आगतदीप्ते ! Sy.
२१. प्रशंसामि Sy.
२२. कर्णावपि गते समीपदेशे स्थितः सन् Sy.
२३. The reading is doubtful ॥ आहन्त्रीः Sy.
२४. अभिगन्त्रीः Sy.
२५. शत्रुभूताः प्रजाः Sy.
२६. ०वीरं D.
२७. ऋषिः पुत्रपौत्रसहितमात्मानं बहुपक्ष्याश्रयवनस्पतित्वेन रूपयन् तस्यानुद्धारमाशास्ते Sy.
२८. काकानाम् is suggested for कानाम् ।
२९. कर्कं P.
३०. निबडम् P.
३१. उद्धर । बाधस्व । पुत्रपौत्रादिभिः सखिभूतैरुपेतमन्यैश्च बहुभिराश्रितं मां मा हिंसीरित्यर्थः Sy.
३२. वृक्षम् Sy.

स्यात्मनोऽनुद्धारणमाशास्ते तदर्थम् । अरातीः[1] । विनाशय । मा । अपि च । सुवीरो[2] योद्धा । अह्नि[3] । एव । पक्षिणो[4] ग्रहणार्थम्[5] । ग्रीवाः[6] । अधारयतु[7] सुप्तं कण्ठे[8] गृह्णात्वित्यरातिभिरनाभिभवमाशास्ते[9] ।

**दृतेरिव तेऽवृकमस्तु सख्यम् । अच्छिद्रस्य दधन्वतः सुपूर्णस्य दधन्वतः ॥ १८ ॥**

दृतेः[10] । दृतेरिव[11] । ते[12] । अहिंसकम्[13] । अस्तु[14] । सख्यम्[15] । अच्छिद्रस्य[16] । दधियुक्तस्य[17] । अत्यन्तं[18] पूर्णस्य[19] ।[20]

**पुरो हि मर्त्यैरसि समो देवैरुत श्रिया ।**
**अभि ख्यः पूषन्पृतनासु नस्त्वमवा नूनं यथा पुरा ॥ १९ ॥**

परो हि । मर्त्येभ्यस्त्वम्[21] । परः[22] । हि । भवसि[23] । देवैः[24] । च । समो[25] भवसि । धनेन,[26] 'पूषा वै धनानामशनं पणिभ्यामुपनिधाता[27]' इति विज्ञायते । अपिपश्य[28] । अस्मान् । त्वम् । सङ्ग्रामेषु । रक्ष । इदानमपि[29] । यथा[30] । पुरा[31] त्वैमरक्ष[32] ।

---

१. ०ती P. अशंसनीयाः, अशंसनीयस्य दुःखस्य कीर्तयित्रीर्वा शत्रुभूताः प्रजाः Sy.
२. प्रेरकः शत्रुः Sy.
३. VM. takes अह्नः as a noun but Sy. takes it as a verb माह्नः । अस्मान्मा हार्षीत् । एवमित्यभिसम्बन्धादाख्यातस्योदात्तवत्त्वाच्चाश्रुतोऽपि यथेत्येतद्वाक्येऽध्याह्रियते Sy. ४. एवमचक्षिणो P. एवमक्षिणो D. ५. गृहणार्थं P.
६. गिरन्त्यन्तरवस्थापयन्ति बध्नन्तीति ग्रीवा दामानि यथा व्याधा वेः पक्षिणो हरणार्थं दामानि ज्वालारूपाण्यादधते भूम्यां निदधते तैश्च निहितैः पक्षिणो हरन्त्येवमस्मान् बन्धनोपायैः शत्रुर्मा हार्षीदित्यर्थः Sy.
७. आधा० is suggested for अधा० ।
८. कर्णे P.
९. VM. ignores हि and चन ॥ हि शब्दश्चार्थे Sy. १०. Omitted by P.
११. हे पूषन् ! Sy.
१२. दृत्वेरिव P. यथा दृतेस्त्वदीयं सख्यमविच्छन्नं तद्वत् Sy. १३. तव Sy.
१४. बाधकरहितं सर्वदैकरूप्येण वर्तमानमस्माकम् Sy. १५. सर्वदा भवतु Sy.
१६. सखित्वम् Sy.
१७. छिद्ररहितस्य संश्लिष्टस्य Sy.
१८. दधिमतः Sy.
१९. दध्ना सुष्ठु पूरितस्य Sy.
२०. VM. explains दधन्वतः once only ॥ पुनर्दधन्वत इति दध्नोऽधिकत्वद्योतनार्थः । ईदृशो दृतिः सर्वदा पूर्णो रथे वर्तते । स इव वयमपि सखायो भवेमेत्यृषिराशास्ते Sy.
२१. मर्त्येभ्यो मनुष्येभ्यः Sy.
२२. परस्तात्स्थितोऽसि Sy.
२३. P. reads बभेराभयसि for परः । हि । भवसि ।
२४. सर्वैर्देवैः Sy. २५. समानः Sy.
२६. सम्पदा Sy.
२७. पाणिभ्यामुपनिवासाता P.
२८. अभिपश्य is suggested for अपिपश्य ॥ अनुग्रहदृष्ट्या विलोकय Sy.
२९. दानम० D. इदानीमपि is suggested for इदानमपि ॥ अद्य Sy.
३०. येन प्रकारेण Sy.
३१. रक्ष D. त्वमरक्ष is suggested for त्वैमरक्ष ॥ पूर्वकालीनान् पुरुषान् ररक्षिथ Sy.
३२. VM. ignores पूषन् ।

वामी वामस्य धूतयः प्रणीतिरस्तु सूनृता ।
देवस्य वा मरुतो मर्त्यस्य वेजानस्य प्रयज्यवः ॥ २० ॥

वामी[1] वामस्य ॥ तृचः परो मारुतः ॥ वननीया[2] । भजमानस्यम्[3] । हृ[4] कम्पयितारः ! प्रणीतिः[5] । अस्तु[6] । सत्या[7] । देवस्य । वा । मरु[8] ! मर्त्यस्य[9] । वा । यजमानस्य[10] । प्रकर्षेण यष्टव्याः ।

सद्यश्चिद्यस्य चर्कृतिः परि द्यां देवो नैति सूर्यः ।
त्वेषं शवो दधिरे नाम यज्ञियं मरुतो वृत्रहं शवो ज्येष्ठं वृत्रहं शवः ॥ २१ ॥

सद्यश्चित्[11] । तदानीम्[12] । एव । यस्य शवसोऽनुस्यूतम्[13] । रणम्[14] । अन्तरिक्षं परिगच्छति[15] । द्युलोकम्[16] । इव । देव[17] । सूर्यः । तद्[18] दीप्तम् । तृणादीनां नामकम्[19] । शवः[20] । दधिरे[21] । मरुतः[22] । यज्ञियम्[23] । शत्रूणां हन्तृ[24] । प्रशस्ततरम्[25][26] ।

सकृद्ध द्यौरजायत सकृद्भूमिरजायत ।
पृश्न्या दुग्धं सकृत्पयस्तदन्यो नानु जायते ॥ २२ ॥

सकृत् । सकृत् । एव । द्यौः । अजायत[27] जाता सतीतरा[28] नित्या तिष्ठति । तवै[29] भूमिः । तथा पृश्न्याश्च[30] ।

---

१. मामस्य P.
२. प्रशस्ता या वाक् Sy.
३. ०स्या P. ०मानस्य is suggested for ०मानस्यम् ॥ वननीयस्य धनस्य Sy.
४. हे is suggested for हृ ।
५. अस्मदर्थं धनानां प्रणेत्री Sy.
६. भवतु Sy.
७. प्रियसत्यात्मिका माध्यमिका युष्मदीया वाक् Sy.
८. मरुतः ! is suggested for मरु ।
९. मर्तस्य P.
मनुष्यस्य Sy.
१०. इष्टवत उभयविधस्य पुरुषस्य Sy.
११. सद्यः Sy.
१२. मरुद्गणस्य Sy.
१३. ०नुसूक्तं P.
१४. करणम् is suggested for रणम् ॥ कर्म Sy.
१५. परितो वर्तते Sy.
१६. दिव्यन्तरिक्षे Sy.
१७. VM. seems to take देवः nom. as देव Voc.
द्योतमानः Sy.
१८. त D.
१९. शत्रूणां नमयितृ Sy.
२०. बलम् Sy.
२१. अधारयन् Sy.
२२. तादृशगणात्मका मरुतः Sy.
२३. यज्ञार्हम् Sy.
२४. वृत्रादेरसुरस्य हन्तृ भवति Sy.
२५. सर्वेभ्यः प्रशस्ततमं भवति Sy.
२६. VM. explains वृत्रहम् । and शवः once only.
२७. उदपद्यत । सकृदुत्पन्नैव स्थिता भवति । न पुनस्तस्यां नष्टायामन्या तत्सदृशी द्यौर्जायते Sy.
२८. सतितरा P.
२९. तथैव is suggested for तवै ।
३०. मरुतां मातुर्गोः Sy.

पयो मरुतां जनकम् । सकृदेव[1] । दुग्धम्[2] । आत्मवीर्यैस्तस्मिन्[3] ततः । अन्यः[4] । न । अनुजायते[5] ।

VI.49.

स्तुषे जनं सुव्रतं नव्यसीभिर्गीर्भिर्मित्रावरुणा सुम्नयन्ता ।
त आ गमन्तु त इह श्रुवन्तु सुक्षत्रासो वरुणो मित्रो अग्निः ॥ १ ॥

स्तुषे[6] ॥ ऋजिश्वा भारद्वाजः ॥ चत्वारि वैश्वदेवानि ॥ स्तुहि[7] । दैव्यं जनम्[8] । सुकर्माणम् । नवतराभिः । स्तुतिभिः । कं जमित्याह[9]—मित्रावरुणौ[10] । सुखमिच्छन्तौ[11], अग्निं च । ते । आगच्छन्तु । ते[12] । इह[13] । शृण्वन्तु[14] । सुबलाः[15] । वरुणादयः[16] ।

विशोविश ईड्यमध्वरेष्वदृप्तक्रतुमरतिं युवत्योः ।
दिवः शिशुं सहसः सूनुमग्निं यज्ञस्य केतुमरुषं यजध्यै ॥ २ ॥

विशोविशः । सर्वस्य[17] । स्तुत्यम्[18] । यज्ञेषु । अमुग्धप्रज्ञानम्[19] । अभिगन्तारम्[20] । द्यावापृथिव्यो[21] ।

---

१. एकवारमेव । यस्मात्पयसो मरुतो जज्ञिरे । 'पृश्नियै वै पयसो मरुतो जाताः' (TS. 2.2.11.4.) इति तैत्तिरीयकम् Sy.

२. यथा द्यावापृथिव्यौ सकृदेवोत्पद्येते एवं पृश्निरपि सकृद्दुग्धेनैव पयसा मरुतोऽजीजनत् Sy.

३. ०र्यै D. The reading is doubtful.

४. अन्या D. पदार्थस्तत्सदृशः Sy.

५. उत्पद्यते Sy.

६. 'स्तुषे जनम्' इति पञ्चदशर्चं षष्ठं सूक्तं भारद्वाजस्य ऋजिश्वन आर्षं वैश्वदेवम् । अन्त्या षट्पञ्चाशदक्षरा शक्वरी शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—'स्तुषे पञ्चोन ऋजिश्वा ह वैश्वदेवं ह शक्वर्यन्तम्' (KSA. 32.49. p. 23.) । व्यूळ्हे दशरात्रे पञ्चमेऽह्नीदं वैश्वदेवनिविद्धानम् । सूत्रितञ्च—'ऋभुर्विभ्वा स्तुषे जनमिति वैश्वदेवम्' (ASS. 8.8.) इति । आद्या महानाम्नीव्रते जप्या Sy.

७. अहं स्तुवे Sy.

८. दैव्यं जनं देवसङ्घम् Sy.

९. जनमि० is suggested for जमि० ।

१०. मित्रः प्रमीतेस्त्रायकः, वरुणः पापान्निवारयिता । एतावपि देवौ स्तौमि Sy.

११. सुम्नं सुखं स्तोतॄणामिच्छन्तौ Sy.

१२. तादृशाः Sy.

१३. अस्मिन् यज्ञे Sy.

१४. ते । इह । शृण्वन्तु is omitted by P. अस्मदीयाः स्तुतीः शृण्वन्तु च । अत्र मित्रादीनां परिगणनमुपलक्षणं सूक्तस्य सर्वदेवताप्रतिपादकत्वात् । अत एव पूर्वं जनमिति सामान्यनिर्देशः Sy.

१५. शोभनबलाः Sy.

१६. आदि refers to मित्र and अग्नि ॥ सर्वे देवाः Sy.

१७. VM. seems to explain विशोविशः as सर्वस्य ॥ सर्वस्याः प्रजायाः Sy.

१८. ऋत्विग्भिः स्तुत्यम् Sy.

१९. अदुग्धप्र० D. दर्परहितकर्माणममूढप्रज्ञं वा Sy.

२०. इतिग० P. अर्यं स्वामिनम् Sy.

२१. ०थिव्योः is suggested for थिव्यो ।

दिवः[1]। सूनुम्[2]। सहसः[3]। पुत्रम्। अग्निम्[4]। यज्ञस्य[5]। पताकास्थानीयम्[6]। आरोचमानम्[7]। यष्टु[8] स्तुहि[9]।

**अरुषस्य दुहितरा विरूपे स्तृभिरन्या पिपिशे सूरो अन्या।**
**मिथस्तुरा विचरन्ती पावके मन्म श्रुतं नक्षत ऋच्यमाने ॥ ३ ॥**

अरुषस्य[10]। आरोचमानस्य सूर्यस्य। दुहितरो[11]। विरूपे[12] भवतः। नक्षत्रैः। अन्या[13]। शिष्टा[14] भवति। सूर्यः[15]। अन्यया संसृष्टो[16] भवति। इतरेतरं त्वरमाणे[17]। विचरन्त्यौ[18]। शोधयित्र्यौ[19]। मननीयं स्तोत्रम्[20]। व्याप्नुतः[21]। विश्रुतम्[22]। स्तूयमाने[23]ऽहोरात्रे[24]।

**प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारं रथप्राम्।**
**द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥ ४ ॥**

प्र वायुम्। प्रगच्छति[25]। वायुम्। प्रतिबुभूषतः[26]। बृहती[27]। बुद्धिः[28]। महाधनम्[29]। सर्वैर्वरणीयम्[30]।

---

१. द्युलोकस्य Sy.
२. ०नु P. पुत्रम्। 'दिवस्परि प्रथमं जज्ञे अग्निः' (RV. X.45.1.) इति निगमः। यद्वा दिवः स्तोतुः पुत्रभूतम्। तथापि निगमो भवति—'त्वं पुत्रो भवसि यस्तेऽविधत्' (RV. II.1.9.) इति Sy.
३. बलस्य Sy.
४. एवङ्गुणकमग्निम् Sy.
५. यागस्य Sy.
६. प्रज्ञापकम् Sy.
७. ०न P.
८. यष्टुम् is suggested for यष्टु।
९. स्तुष इत्यनुषज्यते। स्तुवे Sy.
१०. इयमहोरात्रयोः स्तुतिः Sy.
११. दुहितारो P. ०तरौ is suggested for ०तरो॥ सूर्येण ह्यहोरात्रयोर्विभागः क्रियते। अतस्तदधीनात्मलाभत्वात्तस्य दुहितरावित्युच्येते Sy.
१२. शुक्लकृष्णतया नानारूपे Sy.
१३. अनन्या P. एका रात्रिः Sy.
१४. पिष्टा is suggested for शिष्टा॥ पिश्यते। संश्लिष्यते। 'पिश अवयवे' इति धातुः Sy.
१५. सूर्येण Sy.
१६. अन्याहरात्मिका दुहिता संश्लिष्यते। ते च नक्षत्रैः सूर्येण चालङ्कृते भवत इत्यर्थः Sy.
१७. इतरेतन्त्वमरणे P. परस्परं बाधयन्त्यौ। अह्ना रात्रिर्निवर्त्यते रात्र्या चाहरिति परस्परं बाधः Sy.
१८. विविधं पृथक् चरन्त्यौ Sy.
१९. सर्वस्य शोधयित्र्यौ Sy.
२०. ओ P. मननीयं स्तोत्रमस्मत्कृतम् Sy.
२१. व्याप्नुताम् Sy.
२२. श्रोतव्यम् Sy.
२३. एवम्भूते अहश्च रात्रिश्च ऋच्यमाने अस्माभिः स्तूयमाने सत्यौ Sy.
२४. ०माने अहो० is suggested for ०मानेऽहो०।
२५. प्रगच्छतु। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः Sy.
२६. आभिमुख्येन Sy., Mah., U.
२७. ०ति P. महती Sy. महत्या Mah. बृहत्या U.
२८. ०द्धि P. अस्मदीया स्तुतिः Sy. बुद्ध्या कृत्वा Mah. मनीषया U.
२९. बृहन् रयिर्यस्य तं महाधनम् Mah.
३०. विश्वैर्वरणीयं सम्भजनीयम् Sy. विश्वेन व्रियते तं सर्वस्य वरणीयं, विश्वं वृणोतीति वा सर्वव्यापकम् Mah. सर्वस्य वरणीयम् U.

स्तोतॄणां रथस्य धनेन पूरयितारम्[1], शरीरेण वा महता रथं पूरयन्तम्[2]। दीप्तगमनः[3]। नियुतः[4]। प्रतिगच्छन्[5]। कविः[6]। कविम्[7]। प्रतिगच्छसि[8]। प्रकर्षेण यष्टव्यः[9]!

**स मे वपुश्छदयदश्विनोर्यो रथो विरुक्मान्मनसा युजानः।**
**येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥ ५ ॥**

स मे वपुः। सः[10]। मह्यम्[11]। रूपम्[12]। प्रकाशयति[13]। अश्विनोः[14] स्वभूतः। यः। रथः। विरोचनवान्[15]। मनसा[16]। युज्यमानः[17]। येन[18]। हे नेतारो[19]! नासत्यौ[20]! अन्नं कर्तुम्[21]। मार्गम्[22]। यथा[23]। पुत्राय। आत्मने[24] पित्रे। च।

---

१. रथस्यात्मीयस्य प्रातारं पूरयितारम्। यद्वा स्तोतॄणां रथं धनैः पूरयितारम् Sy. रथं प्राति पूरयति रथप्राः तम्। यजमानाय दातुं धनै रथं पूरयति Mah. रथपूरणम्। शत्रुधनैरसौ रथं पूरयति U.

२. अथ प्रत्यक्षस्तुतिः Sy.

३. दीप्ति० P. अदीप्तयानः Sy. व्यत्ययः। द्युतद्यामानं, द्युतद् दीप्यमानं याम यमनं नियमनं यस्य तम् Mah. द्योतनं यमनं यस्य स तथोक्तः। द्युतद्यामानमिति विभक्तिव्यत्ययो वायुविशेषणत्वात् U.

४. आत्मीयरथयोज्या वडवास्ताः Sy. नियुतः पत्यमानः। उभयत्र विभक्तिव्यत्ययः। नियुद्भिरश्वैः Mah.

५. अभिपतन्नभिगच्छन्। यद्वा पत्यतिरैश्वर्यकर्मा। तासां वडवानामीश्वरः Sy. पत्यमानं गच्छन्तम् Mah. अत्रापि पत्यमानमिति पदयोर्विकारो वाक्यवशात्।....उत्पतन्तम् U.

६. क्रान्तदर्शी। एवम्भूतस्त्वम् Sy. कविर्ज्ञानी Mah. योग्यस्त्वं कविः क्रान्तदर्शनः U.

७. मेधाविनं स्तोतारम् Sy. क्रान्तदर्शिनम्। ईदृशं वायुं यजेत्यर्थः Mah. क्रान्तदर्शिनम् U.

८. धनेन पूजय Sy. प्रकर्षेण यष्टुमिच्छसि Mah., U.

९. ०ष्टव्य is suggested for ०ष्टव्यः॥ हे प्रकर्षेण यष्टव्य! वायो! Sy. प्रकर्षेण यजति प्रयज्युः, हे प्रयज्यो! अध्वर्यो! Mah. हे प्रयज्यो! प्रकर्षेण यजनशील! अध्वर्यो! U.

This stanza—YV.33.55.

१०. रथः Sy.

११. मदीयम् Sy.

१२. शरीरम् Sy.

१३. छादयतु। तेजसाच्छादयतु Sy.

१४. ०नो D.

१५. विशेषेण दीप्यमानः Sy.

१६. मनोव्यापारमात्रेण Sy.

१७. अश्वैः सम्प्रयुज्यमानो भवति Sy.

१८. रथेन Sy.

१९. नेतारौ is suggested for नेतारो।

२०. हे सत्यस्वभावौ! सत्यस्य नेतारौ! नासिकाप्रभवौ! वाश्विनौ! Sy.

२१. कामान् प्रापयितुम् Sy.

२२. स्तोतृगृहम् Sy.

२३. याथः is suggested for यथा॥ गच्छथः, स रथ इति पूर्वत्रान्वयः Sy.

२४. तत्पित्रे स्तोत्रे च Sy.

पर्जन्यवाता वृषभा पृथिव्याः पुरीषाणि जिन्वतमप्यानि ।
सत्यश्रुतः कवयो यस्य गीर्भिर्जगतः स्थातर्जगदा कृणुध्वम् ॥ ६ ॥

पर्जन्यवाता । हे पर्जन्यवायू ! वर्षितारौ[१] ! पृथिव्याः[२] । उदकानि । दुग्धा[३] । अन्तरिक्षस्थान्यपि वाऽपां सम्बन्धीनि[४] पूरकाणि स्तोतानि[५] । परोऽर्धर्चो रुतः[६]—सत्यस्य श्रोतारः[७] । कवयः[८] । यस्य[९] । गीर्भिर्मम[१०] तृप्ता भवथ तस्य ममाभ्युदयार्थम् । जगत्[११] । अलङ्कुरुत[१२][१३] ।

पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥ ७ ॥

पावीरवी[१४] । पावीरवी शोधयित्री । कमनीया । पूजनीयान्ना[१५] । सरस्वती । वीरपतिका[१६] । कर्म[१७] । वारयतु[१८] । 'छन्दांसि वै'[१९] ब्राह्मणम्,[२०] ताभिः[२१] । सङ्गता[२२] । अच्छिद्रम्[२३] । गृहम् । दुराधर्षम्[२४] । स्तुवक्रे[२५] । सुखं च । प्रयच्छतु ।

---

१. वृष्टेः कर्तारौ ! Sy.
२. अन्तरिक्षनामैतत् । अन्तरिक्षात् Sy. पृथिवीत्यन्तरिक्षनाम Ngh. 1.3.
३. दुग्धम् is suggested for दुग्धा ॥ प्रेरयतम् Sy.
४. ०न्यपि वावा सम्बन्धी P. आप्तव्यानि Sy.
५. स्तोता P. स्तोत्राणि is suggested for स्तोतानि ।
६. मारुतः is suggested for रुतः ।
७. हे सत्यस्य स्तोत्रस्य श्रोतारः Sy.
८. मेधाविनो मरुतः Sy. ९. स्तोतुः Sy.
१०. स्तुतिभिर्यूयं स्तुता भवथ तस्य स्तोतुः Sy.
११. स्थावरजङ्गमात्मकं सर्वं प्राणिजातम् Sy.
१२. आभिमुख्येन कुरुत Sy.
१३. VM. ignores जगतः and स्थाता ॥ हे जगतः स्थातः ! गणाभिप्रायमेकवचनम् । स्थावरजङ्गमात्मकस्य जगतोऽवस्थापक ! हे मरुद्गण ! इति योज्यम् Sy.
१४. अन्वारम्भणीयायां सारस्वतस्य हविषो याज्या 'पावीरवी' इत्येषा । सूत्रितञ्च—'पावीरवी कन्या चित्रायुः पीपिवांसं सरस्वतः' (ĀSS. 2.8.) इति । एकादशिने सारस्वते पशावेषैव पुरोडाशस्य याज्या । सूत्रितञ्च—'पावीरवी कन्या चित्रायुर्यस्ते स्तनः शशयो यो मयोभूः' (ĀSS.3.7.) इति । आग्निमारुते शस्त्रेऽप्येषा । सूत्रितञ्च—'राकामहमिति द्वे पावीरवी कन्या चित्रायुः' (ĀSS. 5.20.) इति Sy. १५. चित्रगमना चित्रान्ना वा Sy.
१६. ०रवतीका P. वीरः प्रजापतिः पतिर्यस्यास्तादृशी । यद्वा वीराणां पालयित्री । एवम्भूता Sy. १७. अस्मदीयं कर्म यज्ञाख्यम् Sy.
१८. दधातु । धारयतु ददातु वा । शब्देन प्रतिपादितो ह्यर्थोऽनुष्ठीयते Sy.
१९. Something probably ग्नाः and इति is omitted before ब्राह्मणम् ।
२०. ब्र० P. ŚB. 6.5.4.7.
२१. अपि च ग्नाभिः देवपत्नीभिः । यद्वा ग्ना गायत्र्यादीनि छन्दांसि । 'छन्दांसि वै ग्नाः' (ŚB. 6.5.4.7.) इति श्रुतेः Sy.
२२. सह प्रीयमाणा । तैः सह प्रीयमाणा Sy.
२३. छिद्ररहितम् Sy.
२४. शत्रुभिः शीतवातादिभिश्च धर्षितुमशक्यम् Sy.
२५. स्तुवते is suggested for स्तुवक्रे ॥ स्तुवते मह्यम् Sy.

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥ ८ ॥

पथस्पथः[1] । सर्वस्य मार्गस्य[2] । स्वामिनम्[3] । स्तोत्रेच्छया[4] । कामेन[5] । वशीकृतो जनः[6] । व्याप्नोतीति[7] । अर्चनीयं[8] पूषणम् । सः[9] । अस्मभ्यम् । प्रयच्छतु[10] । शुचो राधयित्रीः[11] ।

---

१. एकादशिने पौष्णे पशौ 'पथस्पथः' इति हविषो याज्या । सूत्रितञ्च—'पथस्पथः परिपतिं वचस्या बृहस्पते या परमा परावदिति द्वे' (ĀSS. 3.7.) इति Sy. ऋजिश्वन आर्षम् Dur., SKN.

२. मार्गस्य मार्गस्य सर्वेषां मार्गाणाम् Mah. मार्गस्य U. सर्वमार्गाणामित्यर्थः Dur. स नो रासदिति तच्छ्रुतेर्यदध्याहारः । यम्.... यावान् कश्चित्पन्थास्तस्य सर्वस्य SKN.

३. अधिपतिम् Sy. अधिपतिं स्वामिनम् Mah. अधिपतिमित्युपसर्गव्यत्ययः U. परिपालयितारम् BB. परिपतिं, परीत्येषोऽधीत्येतस्य स्थाने । अधिपतिं स्वामिनम् । पूषा हि महति पथि सम्प्रैतीत्यतः पथोऽधिपतिरुच्यते SKN.

४. स्तुत्या Sy. वचसा वेदोक्तेन Mah. वचनेन वेदोक्तेन U. वचसा स्तोत्ररूपेण । तृतीयैकवचनस्य याजादेशः BB. स्तुत्या Dur. तृतीयैकवचनस्य याजादेशः । स्वार्थिको वा यकारः, वच एव वचस्या । ततस्तृतीयाया अलुक् । तया वचस्यया स्तुतिलक्षणेन वचसेत्यर्थः SKN.

५. काम्यमानेन फलेन Sy. काम्यत इति कामं तेन वाञ्छितेन Mah. कामेनेच्छया U. कामेन स्वेन Dur. अभिलाषे? (णे)च्छया SKN.

६. वशी D. स्तोता Sy. अभिमुखीकृतः Mah. U. पूषणं कामेनैव प्रत्यभिमुखीकृत्य Dur. करोतिः क्रियासामान्यवचनः सामर्थ्यादिह प्रेरणे वर्तते ।....प्रेरितः SKN.

७. अभ्यश्नुताम् । प्राप्नोतु Sy. अभिव्याप्नोति ....व्याप्तिकर्मसु दशस्वयं पठितः Mah. आनशिर्व्याप्तिकर्मा U. अभिप्राप्नोति तस्मादहमप्यद्य त्वामुपगतोऽस्मीति भावः । अशू व्याप्तौ ।....यद्वा नशेर्गतिकर्मणो लुङि BB. स्तुत्या कामप्राप्त्यर्थमभिव्याप्नोमि Dur. अभिव्याप्नोति स्तौतीत्यर्थः....अभ्यानडित्यस्य व्याख्यानमभ्यापन्न इति SKN.

८. अर्कं देवम् Mah. अर्कं स्तोतव्यम् । 'अर्क स्तवने' कर्मणि घञ् । अर्चतेर्वा घञ् ।.... ईदृशं हि पूषणम् BB. देवं पूषणम् SKN.

९. पूषा Sy., Mah., BB. सोऽभिव्याप्तः सन् Dur.

१०. ददातु । 'रा दाने' अस्माल्लेटि रूपम् Sy. ददातु लिङ्गव्यत्ययः Mah. ददातु U., BB. रासतिर्दानकर्मा । ददातु Dur., SKN.

११. धारयित्री P. रोधयित्रीः is suggested for राधयित्री ॥ रोधयित्रीर्गाः Sy. शुचं रुन्धन्ति, वर्णनाशात् पृषोदरादित्वाच् शोकनाशकराणि साधनानि Mah. पूर्वपदान्तलोपः । शुचं सन्तापं साधनाभावकृतं यानि रुन्धन्ति साधनानि भवन्ति तानि तथोक्तानि विव्यच्य व्यत्ययेन U. किं ददातु ? शुरुधः शोकस्य रुधो निवारयित्रीः । क्विप् ।....पृषोदरादित्वाद् व्यञ्जनस्य लोपः BB. शुचं संरुन्धन्ति यानि धनानि Dur. अन्यत्र शुरुध आपो भवन्ति शुचं रुन्धन्तीति । इह तु सामर्थ्याद् धनानि शुरुध उच्यन्ते, तान्यपि हि शुचं मनोदुःखमुपभोगसाधनाभावात्कृतं सुतरां संरुन्धन्तीति SKN.

हिरण्यमुखाः[1] पुष्टीः[2] । कर्म[3] कर्म च । प्रसाधयतु[4] । पूषा ।

**प्रथमभाजं यशसं वयोधां सुपाणिं देवं सुगभस्तिमृभ्वम् ।**
**होता यक्षद्यजतं पस्त्यानामग्निस्त्वष्टारं सुहवं विभावा ॥ ९ ॥**

प्रथमभाजम्[5] । मुख्यम्[6] । यशस्विनम् । अन्नस्य[7] धातारम् । सुपाणिम्[8] । देवम्[9] । शोभनबाहुम्[10] ।

---

१. चन्द्रमिति हिरण्यनाम । हिरण्यप्रमुखा यद्वा स्वर्णशृङ्गाः Sy. चन्द्रमाह्लादकमग्रं यासां ताः । साधने कृत आह्लादो भवति Mah. तान्येव विशिष्यन्ते । चायनीयाग्राणि U. चन्द्राग्रा ओषधीः, चन्द्रो हिरण्यम्, असितजातिर्वा चन्द्रः, सोऽयं प्रधानमीश्वरो वा यासां ता अस्मभ्यं ददातु BB. अभिपूजितागमानि, धर्म्य आगमो येषाम् Dur. कीदृशीः शुरुधः ? चन्द्राग्राः । चन्द्रं चन्दतेः कान्तिकर्मणः । कान्तं प्रियमग्रं यासां ताश्चन्द्राग्राः । आयत्यामपि हि तानि धनानीत्यर्थः SKN.

२. पुष्टि D.

३. Omitted by D.
सर्वमस्मदीयं कर्म Sy.
पुनः पूषा धियं धियं कर्माणि सर्वाणि Mah.
इदानीं प्रज्ञावतामेव धनवत्तया प्रयोजनमिति तां प्रार्थयते धियंधियमित्यादिना चतुर्थेन पादेन। सर्वां धियं प्रज्ञाम् BB. तैर्धनैर्धर्मलुब्धैः.... कर्म कर्म, अस्माकमिष्टिपशुसोमादिलक्षणम् Dur. कर्म कर्म ज्योतिष्टोमादिकं तदपि SKN.

४. प्रकर्षेण साधयतु ।....'साध संसिद्धौ' Mah. साधतिः कर्मवचनः प्रसाधयतु U. स पूषाः प्रकर्षेण....साधयत्वस्माकमिति BB. यागायाविघ्नेनोपनामयत्वित्यर्थः Dur. लोडर्थे पञ्चमो लकारः । व्यत्ययेन विकरणम् । प्रसाधयतु SKN. पथस्पथः । अधिपतिम् । वचनेन । कामेन कृतः । अभ्यानळर्कम् । अभ्यापन्नोऽर्कमिति वा । स नो ददातु चायनीयाग्राणि धनानि। कर्मकर्म च नः प्रसाधयतु पूषेति N.12.18., SKN. IV.117.

तस्यै सप्तदश सामिधेन्यो भवन्ति । सप्तदशो वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वृधन्वन्तावाज्यभागौ यजमानस्यैव वृद्ध्यै 'पूषंस्तव व्रते वयं' (RV.VI.54.9.) पथस्पथः परिपतिं वचस्या' (RV.VI.49.8.) त्युपांशु हविषो याज्यानुवाक्ये व्रतवत्यन्या भवति पथन्वत्यन्या वीर्यं वै व्रतं वीर्यस्याप्त्यै वीर्यस्यावरुद्ध्याऽअथ यत्पथन्वत्यश्वायैवैतत्स्वस्त्ययनं करोत्यनुष्टुभौ संयाज्ये वाग्वाऽअनुष्टुब्वाग्वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वासःशतं दक्षिणा रूपं वाऽएतत्पुरुषस्य यद्वासस्तस्माद्यमेव कं च सुवाससमाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैन ᳲ समर्धयति शतं भवति शतायुर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियं वीर्यमात्मन्धत्ते । SB.13.4.1.15.p.980.
This stanza=YV.34.42.=TS.1.1.14.2.

५. त्वाष्ट्रे पशौ 'प्रथमभाजम्' इति हविषो याज्या। सूत्रितञ्च—'प्रथमभाजं यशसं वयोधां सोमापूषणा जनना रयीणाम्' (ĀSS.3.8.)इति Sy.

६. प्रथम उत्पत्तिकाल एव विभक्तारं जन्तूनाम् । 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्र जायते' (TS.1.5.9.1.) इति श्रुतेः Sy.

७. वयसोऽन्नस्य हविर्लक्षणस्य धातारं धारयितारं यद्वा स्तोतृभ्योऽन्नप्रदम् Sy.

८. हस्तस्य मणिबन्धादूर्ध्वप्रदेशः पाणिः । शोभनपाणिकम् Sy. ९. दानादिगुणयुक्तम् Sy.

१०. गभस्ती इति बाहुनाम Ngh.2.4. शोभनदोर्दण्डम् Sy.

महान्तम्[1]। होता[2]। यजतु[3]। यजनीयम्[4]। गृहाणाम्[5]। अग्निः। त्वष्टारम्। स्वाह्वानम्[6]। दीप्तिमान्[7]।

**भुव॑नस्य पि॒तरं॑ गी॒र्भिरा॒भी रु॒द्रं दिवा॑ व॒र्धया॑ रु॒द्रम॒क्तौ ।**
**बृ॒हन्त॑मृ॒ष्वम॒जरं॑ सुषु॒म्नमृध॑ग्घुवेम क॒विने॑षि॒तासः॑ ॥ १० ॥**

भुवनस्य। भुवनस्य[8]। पातारम्[9]। स्तुतिभिः[10]। अह्नि[11]। रात्रौ च[12]। रुद्रम्[13]। वर्धय[14]। महन्[15]। दर्श-नीयम्[16]। अजरम्[16]। सुसुखम्[17]। अन्येभ्यो देवेभ्यः पृथक्[18]। ह्वयामः[19]। कविना रुद्रेण[20]। प्रेषिताः प्रणीयमानाः[21][22]।

**आ युवा॑नः क॒वयो॑ यज्ञिया॒ सो॒मरु॑तो॒ ग॒न्त गृ॒ण॒तो व॑र॒स्याम् ।**
**अ॒चि॒त्रं चि॒द्धि जिन्व॑था वृ॒धन्त॑ इ॒त्था नक्ष॑न्तो नरो अङ्गि॒र॒स्वत् ॥ ११ ॥**

आ युवानः। कवयः[23]। यज्ञार्हाः! मरुतः[24]! स्तुवतः। वरणीयां स्तुतिं यूयम्। हि[25]। पूजारहित-मयजमानम्[26]। अपि। पूरयथ[27]। वर्धमानाः। अमुत्रान्तरिक्षे[28]। व्याप्नुवन्तः। नेतारः[29]। अङ्गिरस्वत्[30], अङ्गि-रसोऽपि नूनमन्तरिक्षेण गच्छन्ति[31]।

---

१. उरु भासमानं महान्तं वा Sy.
२. देवानामाह्वाता Sy.
३. यजत्। अनेन हविषा यजतु Sy.
४. यष्टव्यम्। गृहस्थैर्यजनीयमित्यर्थः Sy.
५. पस्त्यमिति गृहनाम (Ngh.3.4.) तत्स्थानाम् Sy. ६. सुखेनाह्वातुं शक्यम् Sy.
७. दीप्यमानः Sy.
८. भूतजातस्य Sy.
९. पालयितारम् Sy.
१०. स्तुतिः P.
११. अहनि Sy.
१२. रात्र्यां च Sy.
१३. रुद्दुःखम्। तद्द्रावयितारमीश्वरम् Sy.
१४. हे स्तोतः! वर्धय Sy.
१५. महद् P. महान्तम् is suggested for महन्।
१६. जरारहितम् Sy.
१७. शोभनसुखमेवङ्गुणविशिष्टं रुद्रम् Sy.
१८. ऋधक् ऋद्धं समृद्धं यथा भवति तथा Sy.
१९. पृथग्ध्वयामः P. स्तवाम Sy.
२०. वयं च प्राज्ञेन रुद्रेण Sy.
२१. प्रेरिताः सन्तः Sy.
२२. VM. ignores आभिः and explains रुद्रम् once only.
२३. प्राज्ञाः! Sy.
२४. हे मरुतः! Sy.
२५. हीति पूरणः Sy.
२६. ओषधिवनस्पतिभिर्निबिडो देशश्चित्रम्। तद्वि-लक्षणमोषध्यादिभिर्वियुक्तमपि देशम् Sy.
२७. वृष्ट्या तर्पयथ Sy.
२८. ०त्रा अ० P. इत्थमनेन प्रकारेण Sy.
२९. हे नेतारः! मरुतः! Sy.
३०. अङ्गिरसो गमनशीला रश्मयः। ते यथा शीघ्रं नभस्तलं व्याप्नुवन्ति तद्वत्। यद्वा ऋषय एवाङ्गिरसः। तद्वच्छीघ्रगामिनः Sy.
३१. VM. ignores युवानः। आ and गन्त॥ हे युवानः! नित्यतरुणाः! आगन्त आगच्छत Sy.

प्र वीराय प्र तवसे तुरायाजा यूथेव पशुरक्षिरस्तम् ।
स पिस्पृशति तन्वि श्रुतस्य स्तृभिर्न नाकं वचनस्य विपः ॥ १२ ॥

प्र वीराय[1] । प्रेरय[2] स्तुतिम् । वीराय[3] मरुद्गणाय । वृद्धाय[4] । क्षिप्राय[5] । यूथानि यथा[6] । पशुपालः[7] । रथं[8] प्रति प्रेरयति । स मरुद्गणः । स्पर्शं करोति[9] । शरीरे[10] । विश्रुतस्य[11] स्तोतुः । नक्षत्रैः । इव[12] । द्युलोकम्[13] । वचनशीलस्य[14] । विप्रस्य[15] शरीरं स शरीरैः । संस्पृशयति[16] ।[17]

यो रजांसि विममे पार्थिवानि त्रिश्चिद्विष्णुर्मनवे बाधिताय ।
तस्य ते शर्मन्नुपदद्यमाने राया मदेम तन्वा३ तना च ॥ १३ ॥

यो रजांसि । यः । पार्थिवान्[18] । लोकान्[19] । विममे[20] क्रमणैः[21] । त्रिः[22] । च[23] । असुरैर्बाधिताय[24] । मनुष्या[25] मनुष्याणामभ्युदयार्थम्[26] । तस्य[27] । तव[28] स्वभूते । गृहे[29] । तयोपदीयमानेन[30] । मोदेमहि[31] । आत्मना[32] । पुत्रेण । च सहिताः[33] ।

---

१. वीरय P.
२. हे स्तोतः ! स्तुतिं प्रगमय Sy.
३. विक्रान्ताय विविधं शत्रूणामीरकाय वा मरुद्गणाय Sy.
४. बलिने Sy.
५. क्षिप्रगमनाय च तस्मै गणाय प्राज Sy.
६. तत्र दृष्टान्तः । स यथा गोयूथानि सायङ्काले Sy.
७. पशुपालकः Sy.
८. अस्तं गृहं शीघ्रं गमयति तद्वत् शीघ्रं स्तुतिं प्रेरयेत्यर्थः Sy.
९. स्पर्शयतु । संश्लेषयतु । तत्स्तोत्रं हृद्गतं भवत्वित्यर्थः Sy.
१०. ०रो P.
आत्मीये शरीरे Sy.
११. 'क्रियाग्रहणमपि कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । श्रुतं श्रोतव्यं स्तोत्रम् Sy.
१२. स्पर्शने दृष्टान्तः । यथा Sy.
१३. अन्तरिक्षम् Sy.
१४. वक्तुः Sy.
१५. मेधाविनः स्तोतुः Sy.
१६. संस्पृशति is suggested for संस्पृशयति ॥
स्पर्शयति संश्लेषयति तद्वत् Sy.
१७. VM. explains प्र once only.
१८. पृथिव्या सम्बद्धानि Sy.
१९. त्रींल्लोकानिति यावत् Sy.
२०. परिमितवान् Sy.
२१. ०णै P. विक्रमणैः Sy.
२२. त्रीः P. त्रिभिरेव Sy.
२३. चद् P.
२४. सुरैः D. असुरैर्हिंसिताय Sy.
२५. मनुष्याय is suggested for मनुष्या ॥
मनवे प्रजापतये तदर्थम् Sy.
२६. ०णार्त्थमभ्युदयं P.
२७. हे विष्णो ! तस्य तादृशस्य Sy.
२८. ते तव, तृतीयार्थे षष्ठी । ईदृशेन त्वया Sy.
२९. शर्मणि गृहे सुखे वा वर्तमानाः सन्तो वयम् Sy.
३०. अस्मभ्यं दीयमाने Sy.
३१. मोद० D.
मोदेम । हृष्टा भवेम Sy.
३२. तन्वा रोगादिरहितेन शरीरेण Sy.
३३. VM. ignores विष्णुः ।

तन्नोऽहिर्बुध्न्यो अद्भिरकैंस्तत्पर्वतस्तत्सविता चनो धात् ।
तदोषधीभिरभि रातिषाचो भगः पुरंधिर्जिन्वतु प्र राये ॥ १४ ॥

तन्नोऽहिर्बुध्न्यः । तत्[1] । अस्मभ्यम् । अहिः[2] । बुध्न्यः[3] । उदकैः[4] । अर्चनीयैर्धनैश्च सह[5] । अन्नम् । प्रयच्छतु[6] । पर्वतः[7] । सविता[8] च । तदन्नम् । नानाविधाभिरोषधीभिः[9] सह[10] । अभिप्रयच्छन्तु[11] । दानस्य सेविता-[12] रोऽहिर्बुध्न्यादयः[13] । भगः[14] । पुरन्धिश्चास्मान्[15] । धनार्थम् । प्रीणयतु[16][17] ।

नू नो रयिं रथ्यं चर्षणिप्रां पुरुवीरं मह ऋतस्य गोपाम् ।
क्षयं दाताजरं येन जनान्त्स्पृधो अदेवीरभि च क्रमाम विश आदेवीरभ्यश्नवाम ॥ १५ ॥

नू नः ।[18] क्षिप्रम् । अस्मभ्यम् । रथवाह्यम्[19] । मनुष्याणां पूरकम्[20] । बहुभिर्वीरैर्युक्तम्[21] । महतः । यज्ञस्य । रक्षकम्[22] । गृहं च । प्रयत[23] । जरारहितम् । येन[24] निवासन[25] । स्पर्धयितॄन्[26] । मनुष्यान् । अभि । च । क्रमाम[27] । जयार्थं स्पर्धयित्रीश्चासुरीः[28][29] । विशोऽभिक्रमाम[30] । दवसम्बन्धिनीश्च[31][32] विशः[33] ।

१. लोके प्रसिद्धम् Sy.
२. एत्यन्तरिक्ष इत्यहिः । एतत् (अहिर्बुध्न्यः) पद-द्वयाभिधेयो देवः Sy. अहिरयनादेत्यन्तरिक्षे N. 2.17.
३. बुध्नमन्तरिक्षम् । तत्र भवोऽहिः Sy.
४. उदकैः सार्धम् Sy.
५. ०यैर्द्धश्च P. अर्चनसाधनैर्मन्त्रैः स्तूयमानः सन् Sy.
६. दधातु । विदधातु प्रयच्छतु Sy.
७. पूरयिता । 'पर्व पूरणे' इति धातुः । यद्वा पर्ववद्वज्रं पर्वतः । तद्वान् । पर्वतस्य गिरेः शत्रुरिति वा पर्वतः Sy.
८. स पिता D. प्रेरको देवः Sy.
९. तदन्नान्नानावि० P.
१०. ओषः पाक आसु धीयत इत्योषधयस्तिलमाषाद्याः । ताभिः सार्धम् Sy.
११. ०भिः प्र० P.
१२. रातिं दानं सचन्ते सेवन्त इति रातिषाचो विश्वे देवाः Sy.
१३. ०रो हि बु० D.
१४. भजनीय एतत्संज्ञो देवश्च Sy.
१५. बहुधीर्बहुप्रज्ञो वा बहुकर्मा वा Sy.
१६. अस्मान् प्रेरयतु Sy.
१७. VM. ignores तत् । and प्र ।
१८. हे सर्वे देवाः ! Sy.
१९. रथसम्बन्धिनम् । रथयुक्तमित्यर्थः Sy.
२०. चर्षणयो मनुष्याः । तेषां पूरयितारम् Sy.
२१. ०क्त P. वीर्याज्जायन्त इति वीराः पुत्रादयः । बहुभिर्वीरैरुपेतम् Sy.
२२. दक्षिणारूपेण धनेन हि यज्ञो रक्ष्यते । 'मृतो यज्ञस्त्वदक्षिणः' इति वचनात् Sy.
२३. प्रयच्छत is suggested for प्रयत ।
२४. रयिणा क्षयेण च Sy.
२५. ०सेन is suggested for ०सन ।
२६. स्पर्धमानाः Sy.
२७. काम P. अभिभवेम Sy.
२८. ०यितृश्च P.
२९. अदेवसम्बन्धिनीः Sy.
३०. सेनाश्च Sy.
३१. ०मम P.
३२. देव० is suggested for दव० ।। आगता देवा यासु हविःस्वीकारार्थं ता आदेव्यः । तादृशीश्च Sy.
३३. प्रजा यज्ञानुष्ठायिनीः Sy.

अभ्यश्नवामाभिमुख्येन[१] प्राप्नुयामेति[२]।[३]

## VI. 50.

**हुवे वो देवीमदितिं नमोभिर्मृळीकाय वरुणं मित्रमग्निम् ।**
**अभिक्षदामर्यमणं सुशेवं त्रातॄन्देवान्त्सवितारं भगं च ॥ १ ॥**

[४]हुवे वः।[५] ह्वयामि।[६] युष्मदर्थम्।[७] अदितिम्।[८] नमस्कारैर्हविर्भिर्वा।[९] वरुणादींश्च।[१०] क्षदितिः[११] कलीभावकर्मा,[१२] शत्रूणामाभिमुख्येन विशसितारम्, धनानां वा पृथक्कर्तारम्। अर्यमणम्। सुसुखम्। त्रातॄन्[१३] सर्वान्[१४]। देवान्। उदारम्। भगम्।[१५] च[१६] 'यो खलु वै ददाति सोऽर्यमा'[१७] इति ब्राह्मणम्।[१८]

**सुज्योतिषः सूर्य दक्षपितॄननागास्त्वे सुमहो वीहि देवान् ।**
**द्विजन्मानो य ऋतसापः सत्याः स्वर्वन्तो यजता अग्निजिह्वाः ॥ २ ॥**

सुज्योतिषः[१९]। शोभनज्योतिष्कान्[२०]। हे सूर्य[२१]! दक्षः पिता येषां[२२] देवानाम्। तान्[२३]। अस्माकमभ्युदये[२४]

---

१. ०श्नु० D. येन धनेन गृहेण च अभिप्राप्नवाम तादृशं धनं गृहं च दातेत्यन्वयः Sy.
२. व्याप्नु० P.
३. VM. ignores रयिम् ॥ रयिं धनम् Sy.
४. पञ्चमेऽनुवाके द्वादश सूक्तानि। तत्र 'हुवे वः' इति पञ्चदशर्चं प्रथमं सूक्तमृजिश्वन आर्षं बहुदेवताकं त्रैष्टुभम्। 'हुवे वः' (KSA.32. 50.p.23.)। इत्यनुक्रान्तम्। गतः सूक्तविनियोगः Sy.
५. हे देवाः! Sy.
६. ह्वयामि स्तौमि Sy.
७. युष्माकम् Sy.
८. ०तिः P. अखण्डनीयामदीनां वा एतत्संज्ञां देवताम् Sy.
९. हविर्भिः is omitted by P. ०भि वा D. नमस्कारैः स्तोत्रैर्वा Sy.
१०. आदि refers to मित्रम् and अग्निम् ॥ वरुणं वारकं मित्रं प्रमीतेस्त्रायकं देवमग्निं चैतांश्च देवान् नमोभिर्हुवे Sy.
११. क्षभिरिति P. क्षभिति D.
१२. कलि० P. क्षदिर्हिंसाकर्मा। अभिक्षत्तारं शत्रूणां हिंसितारम् Sy.
१३. किम्बहुना? पालयितॄन् Sy.
१४. सवान् D.
१५. नमोभिः स्तोत्रैर्हुवे स्तौमि Sy.
१६. यः खलु is suggested for यो खलु।
१७. The passage यो खलु वै ददाति सोऽर्यमा should immediately follow अर्यमणम्।
१८. VM. ignores देवीम् and मृळीकाय ॥ देवीं द्योतमानाम्। मृळीकाय सुखार्थम् Sy.
१९. पूज्यो० P. २०. ०तिप्तां P.
२१. सूर्यः P. सर्वस्य प्रेरक! Sy.
२२. दक्षदपितायितान् P. दक्षः पितामहो येषां ते दक्षपितरः। पितृशब्दो हि सामान्येन पूर्वपुरुषत्वमात्रं ब्रूते। यथा 'आहं पितॄन्त्सुविदत्राँ अवित्सि' (RV.X.15.3.) इति। एषां दक्षपितृत्वं च—'अदितिर्ह्यजनिष्ट' (RV. X.72.5.) इति मन्त्रादवगम्यते। ईदृशान् Sy. २३. VM. seems to explain देवान् by तान्।
२४. It seems to be the explanation of अनागास्त्वे ॥ अनपराधत्वे। यथास्माकमपराधं ते न कुर्वन्ति तथा कुर्या इत्यर्थः Sy.

युक्तान्। कामयस्व। द्वयोर्लोकयोर्जन्म[1] येषाम्। ये[2]। यज्ञस्प्रष्टारो[3] भवन्ति। सत्यकर्माणः[4]। अभ्युदययुक्ताः[5]। यष्टव्याः। अग्निजिह्वाः[6]।

**उत द्यावापृथिवी क्षत्रमुरु बृहद्रोदसी शरणं सुषुम्ने।**
**महस्करथो वरिवो यथा नोऽस्मे क्षयाय धिषणे अनेहः ॥ ३ ॥**

**उत द्यावापृथिवी।** अपि च। द्यावापृथिव्यौ[8]। बहु[9]। बलम्। कुरुतम्। तथा हे रोदसी[10]! सुसुखे[11]। महत्। गृहं कुरुतम्। तथा महत्। धनं च कुरुथः। यथा। अस्माकमपेक्षितम्[12]। कि[13] चास्मै[14]। गृहाय[15]। हे धारयित्र्यौ[16]! अपापं[17] च कुरुतमिति।

**आ नो रुद्रस्य सूनवो नमन्तामद्या हूतासो वसवोऽधृष्टाः।**
**यदीमर्भे महति वा हितासो बाधे मरुतो अह्वाम देवान् ॥ ४ ॥**

**आ नः।** आनमन्ताद्[18]। अस्मान्। रुद्रस्य। पुत्राः। अद्यास्माभिः[19]। भूत्वा[20]। वासयितारः। शत्रुभिरधर्षिताः[21]। यत्। एनात्[22]। अल्पे। महति[23]। वा। सङ्ग्रामे। युक्ता वयम्[24]। ह्वयामः[25]। देवान्। मरुतः।

---

१. द्वयोर्लोकयोर्जायमानाः प्रादुर्भवन्तः Sy.
२. ०कयो जयाय माना ये P. ०कयोर्जयाय मानं ये D. देवाः Sy.
३. ०स्पृ० P. ऋतं यज्ञं स्पृशन्तः Sy.
४. अवितथाः सत्यवादिनो वा Sy.
५. धनवन्तः Sy.
६. अग्निर्जिह्वास्थानीयो येषां ते। एवंभूता ये देवाः सन्ति तान् देवान् वीहीत्यन्वयः Sy.
७. VM. ignores सुमहः ॥ हे सुमहः! शोभनदीप्ते! Sy.
८. ०थिव्यो P.
९. विस्तीर्णम् Sy.
१०. द्यावापृथिव्यौ Sy.
११. सुसुखे युवाम् Sy.
१२. अस्माकं यथा स्यात्तथा कुरुतमित्यर्थः Sy.
१३. ०मवेक्षितम् P.
१४. अस्मे अस्माकम् Sy.
१५. निवासार्थम् Sy.
१६. अपि च हे धिषणे धारयित्र्यौ! द्यावापृथिव्यौ! Sy.
१७. पापराहित्यम् Sy.
१८. ०मन्त P. ०मन्ताम् is suggested for ०मन्ताद् ॥ आनता भवन्तु। आगच्छन्तु Sy.
१९. अस्मिन् काले Sy.
२०. हूताः is suggested for भूत्वा ॥ आहूताः सन्तः Sy.
२१. अन्यैरहिंसिताः Sy.
२२. एनान् is suggested for एनात् ॥ मरुतो देवान् Sy.
२३. प्रभूते Sy.
२४. निहिताः स्थिताः सन्तः Sy.
२५. आह्वयाम तदानीमद्येत्यन्वयः Sy.

मिम्य॑क्षु॒ येषु॒ रोद॒सी नु दे॒वी सिष॑क्ति पू॒षा अ॑भ्यर्ध॒यज्वा॑ ।
श्रु॒त्वा हवं॑ मरुतो॒ यद्ध॑ या॒थ भूमा॑ रेजन्ते॒ अध्व॑नि॒ प्रवि॑क्ते ॥ ५ ॥

मिम्यक्ष[१] । सञ्गच्छते[२] । येषु[३] । रुद्रस्य पत्नी मरुतां माता । क्षिप्रम्[४] । देवी[५] । सचते[६] च यान् । पूषा[७] । अभ्यर्धयज्वा अभ्यर्धयन्[८] यजतीति । श्रुत्वा । हवम्[९] । मरुतः[१०] । यदा[११] । गच्छत[१२] तदा । भूमयः[१३] । कम्पन्ते[१४] ।

१. ०क्षः P., D. ऋजिश्वा नाम भारद्वाजः । तस्येदमार्षम् Dur. ऋजिश्वन आर्षम् SKN.

२. पुनः पुनरेकतां गच्छति । इयक्षति मियक्षति इति गतिकर्मसु पठितम् Dur. म्यक्षतेर्गतिकर्मणो रूपम् । गच्छति SKN.

३. मरुत्सु Sy. युष्मासु Dur. द्वितीयार्थे एषा सप्तमी । यान् युष्मान् SKN.

४. नु इति पादपूरणः SKN.

५. द्योतमाना माध्यमिका वाक् Sy. देवीर्मरुतः 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' (RV. VI. 66.3.) इति मन्त्रान्तरे दर्शनात् । तेनैषां रोदसी माता सा च स्नेहेन पुत्रान् प्रत्यवश्यं गच्छति । अतस्त एवमुच्यन्ते SKN.

६. यान् मरुतः सेवते Sy. यश्च युष्माकं मध्येऽवस्थितः सिषक्ति सेवते Dur. गच्छति यान् युष्मान् रोदसी देवी याञ्च सिषक्ति रश्म्याहृतरसेन प्राणेन सेवते SKN.

७. पूषा is suggested for पुषा ॥ पोषको देवश्च Sy. सूर्यः Dur.

८. स्तोतॄनभ्यर्धयन् समृद्धान् कुर्वन् यो यजति धनेन पूजयति तादृशः पूषा Sy. रश्मिभिः ...अभिवृद्धदानः । ....अभ्यर्द्धयन्नभिवर्द्धयन् यो यजति, अभ्यर्द्धयतिरत्र दानार्थः SKN. अल्पानप्यभ्यर्धयन् मरुद्भ्यो ददाति न वाऽस्तोतृभ्यो यो ददाति सः SKN.

९. हु P. अस्मदीयमाह्वानम् Sy. आह्वानम् Dur. येऽविजति यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । ते श्रुत्वा हवमाह्वानम् SKN.

१०. हे मरुतः ! ते यूयम् Sy. हे मरुतः ! .... ते यूयमेवङ्गुणयुक्ता उच्यध्वे Dur.

११. यदा SKN.

१२. आगच्छथ तदानीम् Sy. यूयमायाथ, अस्मान्प्रति तदा Dur. गच्छथ । यदेति वचनात् तदेत्यध्याहार्यम् । तदा SKN.

१३. भूमयमयं D. भूतजातानि Sy. बहूनि बलानि ध्वजाग्राणि वा Dur. बहुशब्दाद् विपुलवचनाद् बहुत्ववचनाद्वा इमनिचि छान्दसत्वादाद्युदात्तत्वम् । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थता । बहुवचनस्य लुक् 'शेश्छन्दसि०' (Pa. 6.1.70) इति । तेनायमर्थः—वैपुल्यवन्ति बहुत्ववन्ति वा महान्ति बहूनि वेत्यर्थः । कानि ? सामर्थ्याच्छत्रुवृन्दानि SKN.

१४. कमबन्न्ते P. तथा च मन्त्रान्तरम्—'प्र वेपयन्ति पर्वतान्वि विञ्चन्ति वनस्पतीन्' (RV. I.39.5.) इति Sy. कम्पन्ते Dur. भ्यसते रेजत इति भयवेपनयोः (N.3.21. Ngh. 3.29.) अस्मान् मरुतो हन्तुमागच्छन्तीति मन्यमानानि बिभ्यति ध्वजाग्राणि वा कम्पन्ते । पदकारास्तु—भूम रेजन्त इति ह्रस्वत्वं पठन्तीति क्रियाविशेषणमिदमेकवचनान्तमिति मन्यन्ते । तदा च स्वार्थिक इमनिच् द्रष्टव्यः । बहु सुष्ठु रेजन्त इत्यर्थः SKN.

मार्गे[1]। भवद्भिः प्रवित्ते[2], मार्गस्य[3] प्रवेको[4] वनस्पतीनां पृथभावः[5]।[6]

**अभि त्यं वीरं गिर्वणसमर्चेन्द्रं ब्रह्मणा जरितर्नवेन ।**
**श्रवदिद्धवमुप च स्तवानो रासद्वाजाँ उप महो गृणानः ॥ ६ ॥**

अभि त्यं[7] वीरम्[8]। अभ्यर्च[9]। तम्[10]। वीरम्[11]। गीर्भिर्वननीयम्[12]। इन्द्रम्। ब्रह्मणा[13]। स्तोतः ! नवेन[14]। उपशृणोतु[15]। अव[16]। ह्वानम्[17]। स्तूयमानः[18]। उपप्रयच्छतु[19]। महान्ति[20]। अन्नानि। शस्यमानः[21]।[22]

**ओमानमापो मानुषीरमृक्तं धात तोकाय तनयाय शं योः ।**
**यूयं हि ष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जनित्रीः ॥ ७ ॥**

ओमानम्[23]। 'अन्नं वा ओमा'[24] इति ब्राह्मणम्। हे अपः[25] ! शत्रुभिरप्रमृष्टम्[26]। प्रयच्छत[27]। पुत्राय[28]।

---

१. ०र्गः P. गमनार्थं पृथक्कृते सति तत्र विद्यमानानि Sy. एतस्मिन्नध्वन्यन्तरिक्षे Dur. अन्तरिक्षनाम । अस्य च रेजन्त इत्यनेन सम्बन्धो याथ इत्यनेन वा अन्तरिक्षे रेजन्ते, अन्तरिक्षे वा यदा याथेति SKN.

२. प्रविक्ते is suggested for प्रवित्ते ॥ विविक्ते विस्तीर्ण इत्यर्थः । एवमत्र 'पूषा अभ्यर्धयज्वा' स हि स्वरश्मिपोषं पुष्यन् भूतान्याभिमुख्येन वृद्ध्या योजयन्नभिमतानर्थान् भूतेभ्यो ददाति Dur. प्रकर्षेण विविक्ते । ....दीप्ते विस्तीर्ण इत्यर्थः SKN.

३. भार्गस्य P.

४. प्रवोको P.

५. पृथभावः P. पृथूभावः is suggested for पृथभावः ।

६. VM. ignores ह ॥ खलु Sy. हेति पदपूरणः SKN.
अभ्यर्धयज्वा । अभ्यर्धयन् यजति 'सिषक्ति पूषा अभ्यर्धयज्वा' इत्यपि निगमो भवति N.6.6., SKN. II.408.

७. स्यः D.

८. D. omits वीरम् ।

९. अभिष्टुहि Sy.

१०. प्रसिद्धम् Sy.

११. वीर्यवन्तं विशेषेण शत्रूणामीरकं वा Sy.

१२. गिरां सम्भक्तारमेवंविधम् Sy.

१३. स्तोत्रेण Sy.

१४. अभिनवेन शोभनेन Sy.

१५. उपशृणुयात् Sy.

१६. एव is suggested for अव ।

१७. अस्मदीयं स्तोत्रम् Sy.

१८. स्तूयमानः सन् Sy.

१९. प्रदेयात् । यत एवमतः स्तुहीत्यर्थः Sy.

२०. महतः प्रभूतान् Sy.

२१. अपि च स्तूयमान इन्द्रः Sy.

२२. VM. ignores च ।

२३. ०नः D.

२४. अवति रक्षत्योमा रक्षकमन्नम् Sy.

२५. आपः is suggested for अप ।

२६. अहिंसितम् Sy.

२७. धत्त । प्रयच्छत Sy.

२८. ०या P.

पौत्राय[१] । शं[२] च । योश्च[३] । यूयम्[४] । हि[५] । भवथ । भिषजः । कल्याण्यो मातरः[६] । विश्वस्य[७] । स्थावरस्य । जङ्गमस्य च । जनयित्र्यः[८][९] ।

**आ नो॑ दे॒वः स॑वि॒ता त्राय॑माणो॒ हिर॑ण्यपाणिर्यज॒तो ज॑गम्यात् ।**
**यो द॒त्रवाँ॑ उ॒षसो॒ न प्रती॑कं व्यूर्णु॒ते दा॒शुषे॒ वार्या॑णि ॥ ८ ॥**

आ नः । आगच्छतु । अस्मान् । देवः । सविता[१०] । पालयन्[११] । हिरण्यपाणिः[१२] । यष्टव्यः । यः[१३] । दानवान्[१४] । उषसः । इव । मुख्यम्[१५] । तमांसि व्यूर्णुते[१६] । यजमानाय[१७] । धनानि[१८] ।

**उ॒त त्वं सू॑नो सहसो नो अ॒द्या दे॒वाँ अ॒स्मिन्न॑ध्व॒रे व॑वृत्याः ।**
**स्याम॒हं ते॒ सद॒मिद्रा॒तौ तव॑ स्याम॒ग्नेऽव॑सा सु॒वीरः॑ ॥ ९ ॥**

उत त्वम् । अपि[१९] । त्वम् । हे सहसः, सूनो[२०] ! अस्माकम्[२१] । अद्य[२२] । अस्मिन् । यज्ञे[२३] । देवान्[२४] । आवर्तय[२५] । स्याम्[२६] । अहम् । ते[२७] । सदा[२८] । एव । दाने[२९] । तव[३०] । स्याम् । अग्ने ! रक्षणेन[३१] । शोभनवीरः[३२] !

---

१. तत्पुत्राय Sy.
२. शमनमुपद्रवाणाम् Sy.
३. यावनं पृथक्करणं पृथक्कर्तव्यानां धत्त प्रयच्छत Sy.
४. Omitted by P.
५. यस्मात् Sy.
६. मातृभ्योऽप्यधिकाः Sy.
७. कथं मातृभ्योऽप्यधिकं भैषज्यमस्तीत्यत आह— विश्वस्य सर्वस्य Sy.
८. जनयित्र्यो भवथ । अतो यूयं भिषजः स्थ Sy.
९. VM. ignores मानुषीः ॥ मानुषीः मनुष्यहिताः Sy.
१०. प्रेरकः Sy.
११. रक्षन् Sy.
१२. सुवर्णहस्तो हितरमणीयपाणिर्वा Sy.
१३. देवः Sy.
१४. धनवान् Sy.
१५. मुख D. प्रमुखम् Sy.
१६. ०र्णते P. विवृणोति प्रकाशयति स सवितेत्यन्वयः Sy.
१७. हवींषि दत्तवते यजमानाय Sy.
१८. वरणीयानि धनानि Sy.
१९. अपि च Sy.
२०. हे बलस्य पुत्र ! अग्ने ! Sy.
२१. अस्मदीये Sy.
२२. अस्मिन्काले Sy.
२३. यागे Sy.
२४. यष्टव्यानिन्द्रादीन् Sy.
२५. आवर्तय आगमय Sy.
२६. भवेयम् Sy.
२७. ०र्ते स्यावह्लं त P. ०र्तस्यावह्लन्ते D. तव Sy.
२८. सर्वदा Sy.
२९. धनस्य दाने Sy.
३०. तप D.
३१. त्वदीयेन रक्षणेन Sy.
३२. शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेतश्च भवेयम् Sy.

**उत त्या मे हवमा जंग्म्यातं नासत्या धीभिर्युवमङ्ग विंप्रा ।**
**अत्रिं न महस्तमंसोऽमुमुक्तं तूर्वंतं नरा दुरितादभीके ॥ १० ॥**

उत त्या । अपि च । तौ[1] । मम[2] । हवम्[3] । आगच्छतम्[4] । हे नासत्यौ[5] ! कर्मभिः[6] । युवाम् । क्षिप्रम् । मेधाविनौ[7] ! अत्रिम्[8] । इव[9] । महतः । तमसः[10] । मोचितवन्तौ[11] । तूर्वन्नामानम्[12] । उपद्रवात्[13] । सङ्ग्रामे[14] ।[15]

**ते नो रायो द्युमतो वाजंवतो दातारो भूत नृवतः पुरुक्षोः ।**
**दशस्यन्तो दिव्याः पार्थिवासो गोजाता अप्या मृळता च देवाः ॥ ११ ॥**

ते नः । ते[16] । अस्मभ्यम् । धनस्य । दीप्तिमतः[17] । अन्नवतः[18] । दातारः । भवत[19] । वीरवतः[20] । बहुभिः कीर्त्यमानस्य[21] । धनानि प्रयच्छन्तः[22] । दिवि भवाः[23] । पार्थिवाश्च[24] पृथिव्यन्तरिक्षनाम्नोः[25] जाताः । गौर्भूमिः सा जननस्थानं येषां ते गोजाताः[26] त्रिस्थाना अपि देवा उच्यन्ते, अपि वा[27] मारुतीयम्, गोजाताः पृश्निमातरः । अस्सु[28] भवाः । सुखयतास्मान् । देवाः[29] ।

**ते नो रुद्रः सरस्वती सजोषा मीळ्हुष्मन्तो विष्णुर्मृळन्तु वायुः ।**
**ऋभुक्षा वाजो दैव्यो विधाता पर्जन्यावाता पिप्यतामिषं नः ॥ १२ ॥**

ते नः । ते[30] । अस्मान् । रुद्रः[31] । सरस्वती च । सङ्गताः[32] । सेचनवन्तः[33] । विष्णुः ।

---

१. प्रसिद्धौ Sy.
२. मदीयम् Sy.
३. स्तोत्रम् Sy.
४. ०तां P.
५. सत्यस्वभावौ ! सत्यस्य नेतारौ ! वा Sy.
६. परिचरणकैः कर्मभिरुपेतम् Sy.
७. हे प्राज्ञौ ! Sy.
८. ऋषिम् Sy.
९. यथा Sy.
१०. असुरकृतादन्धकारात् Sy.
११. मा० P. मोचितवन्तौ स्थः Sy.
१२. कूर्व० D. तूर्वतम् अस्मांस्तारयतम् Sy.
१३. दुःखात् शत्रुकृतात् Sy.
१४. अभ्यक्ते प्राप्ते सङ्ग्रामे Sy.
१५. VM. ignores नरा ॥ नरा हे नेताराव-श्विनौ ! Sy.
१६. यूयम् Sy.
१७. ०प्त० D.
१८. बलयुक्तस्य Sy.
१९. ०तो P.
२०. नृवतः नृभिः पुत्रादिभिरुपेतस्य Sy.
२१. बहुभिः कीर्तनीयस्य Sy.
२२. कामान् प्रयच्छन्तः Sy.
२३. दिवि भवा आदित्याः Sy.
२४. पृथिव्यां भवा वसवः Sy.
२५. ०व्या० P.
२६. ०ता D. गौः पृश्निर्माध्यमिका वाक् । तत उत्पन्ना मरुतः Sy.
२७. ०न्ते वि पा D.
२८. ०तरोस्सुभावाः P. अप्सु is suggested for अस्सु ॥ अप्स्वन्तरिक्षे भवा रुद्राश्च ते सर्वे यूयम् Sy.
२९. VM. ignores च ।
३०. देवाः Sy.
३१. ०द्र P.
३२. ०ता P. सह प्रीयमाणाः Sy.
३३. वर्षणवन्तः Sy.

सुखयन्तु । वायुश्च । तथा ऋभुर्विभ्वा[1] च । वाजश्च । सौदेव्यः[2] । विधाता[3] । चन्द्रमाः । पर्जन्यवातौ[4] च । वर्धयन्तु[5] । अस्माकम्[6] । अन्नम् ।

**उत स्य देवः सविता भगो नोऽपां नपादवतु दानु पप्रिः ।**
**त्वष्टा देवेभिर्जनिभिः सजोषा द्यौर्देवेभिः पृथिवी समुद्रैः ॥ १३ ॥**

उत स्यः । अपि च । देवः । सविता । भगश्च । अस्मान् । अपां नपाच्च[7] । रक्षतु । दाता[8] । पूरयिता[9] । त्वष्टा[10] । देवैः । देवपत्नीभिश्च[11] । सङ्गतः[12] । द्यौश्च । देवैः । पृथिवी च[13] । समुद्रैः उदधिभिः[14] ।

**उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः ।**
**विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥ १४ ॥**

उत नः[15] । अपि च[16] । अस्माकं स्तुतीः[17] अहिर्बुध्न्यः[18] । शृणोतु[19] । तथैकपादाद्[20] । अजः[21] । पृथिवी[22] ।

---

१. ऋभुर्भिवि० P. ऋभुर्विभ्वा वाज इति त्रयः सौधन्वनाः । तेषामाद्य ऋभुश्च वाजोऽन्तिमश्च । उपलक्षणमेतत् । विभ्वा च Sy.

२. सोदेव्यः P. असौ दैव्यः is suggested for सौदेव्यः ॥ देवेभ्यो हितः Sy.

३. प्रजापतिश्च Sy.

४. पर्जन्यश्च वायुश्चोभौ Sy.

५. वर्धयताम् Sy.

६. अस्मभ्यम् Sy.

७. अपां मेघस्थानां पुत्रो माध्यमिकोऽग्निः Sy.

८. दातव्यं धनम् Sy.

९. प्राता पूरयिता । 'प्रा पूरणे' इत्यस्माद् 'आदृगमृहन्०' इति किनो लिड्वद्भावात् 'न लोकाव्यय०' इति षष्ठीप्रतिषेधः Sy.

१०. स्त्वष्टा P.

११. तत्पत्नीभिश्च Sy.

१२. ०तौ० D. सहप्रीतिः Sy.

१३. एताश्च सर्वा देवता अस्मानवन्तु Sy.

१४. VM. ignores स्यः ॥ स्यः स यः प्रेरकतया सर्वत्र प्रख्यातः Sy.

१५. आग्निमारुते 'उत नोऽहिः' इत्येषा । सूत्रितञ्च—'उत नोऽहिर्बुध्न्यः शृणोतु देवानां पत्नीरुशतीरवन्तु नः' (ĀSS. 5.2.) इति Sy. ऋजिश्वन आर्षम् Dur.,SKN.

१६. अपि Dur. उतशब्दोऽप्यर्थे समुच्चयलक्षणे SKN.

१७. स्तोत्रम् Sy. वचांसीति शेषः Mah. वचांसि U.

१८. स्तुतिरहिः P. रुद्रविशेषः Mah. बुध्न्यमन्तरिक्षं तस्मिन् भवः SKN.

१९. अस्मदीयं स्तोत्रं शृणोतु Sy. शृणोत्वाह्वानम् । कुत एतत् ? हुवाना इति परस्ताच्छ्रवणात् । आह्वय माम् SKN.

२०. एकपदाद् D. एकपाद् is suggested for एकपादात् ॥ एकोऽसहाय एव पद्यते गच्छतीत्येकपात् । एतत्पदद्वयाभिधेयो देवश्च Sy. एकः पादो यस्य स एकपात् SKN.

२१. जन्मरहितः Sy. अज एकमाद् रुद्रः प्राणो वा शृणोतु U. ननु चाह्वानस्य श्रूयमाणत्वान्न च केवलोऽहिर्बुध्न्यः । किं तर्हि ? अजश्च SKN.

२२. पृथिवी च शृणोतु Mah. द्यौश्च SKN.

समुद्रश्च[1] । विश्वे च । देवाः[2] । सत्यस्य वर्धयितारः[3] । हूयमानाः[4] । स्तुताः[5] पूजिताः । कविभिः शस्ताः[6] । रक्षन्तु[7][8] ।

एवा नपातो मम तस्य धीभिर्भरद्वाजा अभ्यर्चन्त्यर्कैः ।
ग्ना हुतासो वसवोऽधृष्टा विश्वे स्तुतासो भूता यजत्राः ॥ १५ ॥

एवा नपातः[9] । एवम् । तस्य[10] । मम[11] । पुत्राः । कर्मभिः[12] । भरद्वाजकुलजाः[13] । मन्त्रैश्च[14] देवान् । अभ्यर्चन्ति[15] । ग्ना देवपत्न्यः[16] । हुताः[17] । वसवश्च[18] । शत्रुभिरनाधृष्टाः[19] । विश्वे च देवाः[20] । स्तुताः[21] । भवत । हे यष्टव्याः ! इति ।

---

१. समुद्रश्च शृणोतु Mah. पृथिवी च समुद्रश्च शृणोतु । श्रुत्वा चावन्तु U. आदित्यश्चेत्यर्थः SKN.

२. विश्वे देवाश्च शृण्वन्तु Mah. सर्व एते, एवमादयो देवाः Dur. सर्वे देवाः SKN.

३. ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितारः Sy. सत्यवृधो वा Mah. सत्यवृधो यज्ञवृधो वा U. सत्यवृधो यज्ञवृध उदकवृधो वा Dur. सत्यस्योदकस्य यज्ञस्य वा वर्धयितारः SKN.

४. अस्माभिराहूयमानाः Sy. आहूयमानाः Mah., U., Dur. हूयमानाः श्रुत्वा चाह्वानमागताः सन्तः SKN.

५. पूर्वैर्ऋषिभिश्च स्तोत्रैः स्तुताः Sy. स्तुताश्च स्तोत्रैः सामभिः Dur. स्तुता अस्माभिः SKN.

६. मेधाविभिर्ऋषिभिः शस्त्रैः शंसिताः Sy. मेधाविभिः पूजिताः Mah. मेधाविशस्ताः U. कविभिश्च नैघण्टुकत्वेन मेधाविभिः शस्त्रैश्च शस्ताः स्तुतास्ते Dur. अन्यैरपि मेधाविभिर्नित्यमेव स्तुताः SKN.

७. अस्मान् रक्षन्तु Sy. श्रुत्वा च तेऽहिर्बुध्न्यादयो ऽवन्तु पालयन्त्वस्मान् Mah. पालयन्तु U. अस्मानवन्त्वित्येतदाशास्महे Dur. पालयन्तु SKN.

८. VM. ignores मन्त्राः ॥ मन्त्रणीया गुप्तं भाषितव्या मन्त्रप्रतिपाद्या वा Sy. मन्त्रैरिति विभक्तिव्यत्ययः Mah.U. मन्त्रैर्यजुर्मयैः Dur. तृतीयार्थे प्रथमा । मन्त्रैः SKN. अपि च नोऽहिर्बुध्न्यः शृणोतु । अजश्चैकपात् पृथिवी च समुद्रश्च सर्वे च देवाः । सत्यवृधो वा । यज्ञवृधो वा । हूयमाना मन्त्रैः स्तुताः । मन्त्राः कविशस्ताः । अवन्तु । मेधाविशस्ताः N.12.33., SKN. IV.131.
This stanza=YV.34.53.

९. नवातः P., D.

१०. योऽहं देवान् स्तुतवान् । तस्य Sy.

११. ऋजिश्वनः Sy.

१२. स्तोत्रैः Sy.

१३. भरद्वाजगोत्रजाः सुहोत्रादयः Sy.

१४. मन्त्रैश्च is suggested for मत्रैश्च ॥ अर्चनसाधनैः Sy.

१५. अभिष्टुवन्ति Sy.

१६. ०त्न्या P.

१७. पुरोडाशादिभिर्हविर्भिः हुतास्तर्पिताः Sy.

१८. निवासयितारः Sy.

१९. कैरप्यहिंसिताः Sy.

२०. सर्वे यूयम् Sy.

२१. तैः सुहोत्रादिभिः स्तुताः Sy.

VI.51.

**उदु त्यच्चक्षुर्महि मित्रयोराँ एति प्रियं वरुणयोरदब्धम् ।**
**ऋतस्य शुचि दर्शतमनीकं रुक्मो न दिव उदिता व्यद्यौत् ॥ १ ॥**

उदु[1] त्यत्[2] । आभिमुख्येनोदेति[3] । तदिदम्[4] । महत्[5] । मित्रावरुणः[6] चक्षुः[7] ॥ उषआख्यम् । प्रियम् । अहिंसितं[8] रक्षाभिः[9] । आदित्यस्य । शुचि[10] । दर्शनीयम् । रश्मीनामनीकं[11] तदि[12] । दिवः[13] । रुक्मः[14] । इव । उदये[15] । विद्योतते[16] ।

**वेद यस्त्रीणि विदथान्येषां देवानां जन्म सनुतरा च विप्रः ।**
**ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूरो अर्य एवान् ॥ २ ॥**

वेद यः । जानाति[17] । यः[18] । त्रीणि[19] । स्थानानि[20] । देवानाम्[21] । तेषाम्[22] । जन्म[23] । च । अन्तर्हितम्[24] । मेधावी[25] । स मनुष्येषु । इजूनि[26] । कुलानि[27] । च कर्माणि । पश्यन्[28] । अभिपश्यति[29] । ईश्वरः[30] । सूर्यः । गच्छतो[31] मनुष्यान्[32] ।

---

१. 'उदु त्यत्' इति षोडशर्चं द्वितीयं सूक्तमृजिश्वन आर्षं वैश्वदेवम् । त्रयोदश्याद्यास्तिस्र उष्णिहः षोडश्यनुष्टुप् शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—'उदु त्यत्षोळश त्र्युष्णिगनुष्टुबन्तम्' (KSA.32.51.p.23.) । गतः सूक्तविनियोगः Sy. २. त्य P.,D.

३. सर्वेषामभिमुखमुदेति । उद्गच्छति Sy.

४. तत् प्रसिद्धम् Sy.

५. महद् विस्तृतम् Sy.

६. ०णयोः is suggested for ०णः ॥ VM. seems to explain मित्रयोः and वरुणयोः together as मित्रावरुणयोः ॥ मित्रशब्दो वरुणशब्दश्चेतरेतरयोगान्मित्रावरुणावुभावप्याचष्टे Sy. ७. प्रकाशकम् Sy.

८. प्रियम् (देवास्सत्यस्य वर्धयितारो हूयमानः) अहिंसितम् D. The additional passage resembles with VM.'s commentary on RV. VI.50.14.

९. रक्षोभिः is suggested for रक्षाभिः ।

१०. शुद्धं निर्मलम् Sy.

११. रश्मिनामदीकं P. तेजः Sy.

१२. तदिदम् is suggested for तदि ।

१३. अन्तरिक्षस्य Sy. १४. भूषणम् Sy.

१५. उदितौ सूर्यस्योदये सत्युदितं तत्तेजः Sy.

१६. विद्योतते प्रकाशते Sy.

१७. वेत्ति जानाति Sy.

१८. सूर्यः Sy. १९. त्रिसंख्यानि Sy.

२०. विदथानि वेदितव्यानि स्थानानि त्रींल्लोकान् Sy.

२१. देवानां वसुरुद्रादित्यात्मनाम् Sy.

२२. एषामेतल्लोकत्रयवर्तिनाम् Sy.

२३. P. reads तक्षज्जन्म for तेषाम् । जन्म ॥ जननम् Sy.

२४. ०त P. अन्तर्हितम् D. अप्रज्ञायमानम् Sy. सनुतरित्यन्तर्हितनाम Ngh. 3.25.

२५. मेधावी सूर्यो वेत्ति Sy.

२६. ऋजूनि is suggested for इजूनि ॥ विद्यमानानि शोभनानि कर्माणि Sy.

२७. कुटिलानि is suggested for कुलानि ॥ वृजिनान्यशोभनानि कर्माणि Sy.

२८. साक्षितया जानन् Sy.

२९. अभितः सर्वं जगत् प्रकाशयति Sy.

३०. स्वामी भूत्वा Sy. ३१. एवान् प्राप्तव्यान् कामांश्च मनुष्येषु प्रकाशयति Sy.

३२. VM. ignores आ ॥ आकारः पूरकः Sy.

स्तुष उ वो मह ऋतस्य गोपानदितिं मित्रं वरुणं सुजातान् ।
अर्यमणं भगमदब्धधीतीनच्छा वोचे सधन्यः पावकान् ॥ ३ ॥

स्तुष उ वः[1] । स्तौम्[2] । एव[3] । युष्मान् । महतः । यज्ञस्य । गोपायितृन्[4] । अदित्यादीन्[5] । जेजननान्[6] । अहिंसितकर्मणः । अर्यमप्रभृतींश्च[7] । अभिष्टौमि[8] । सधनान्[9] । जोदकान्[10] ।

रिशादसः सत्पतीँरदब्धान्महो राज्ञः सुवसनस्य दातॄन् ।
यूनः सुक्षत्रान्क्षयतो दिवो नॄनादित्यान्याम्यदितिं दुवोयु ॥ ४ ॥

रिशादसः । रिशतामसितॄन्[11] । सत्पतीन्[12] । अहितान्[13] । महतः । राज्ञः[14] । शोभननिवासस्य गृहस्य[15] । दातॄन्[16] । यूनः । सुधनान्[17] । सदा गच्छतः[18] । द्युलोकस्य । नेतॄन् । आदित्यान्[19] । याचे[20] । अदितिं च[21] । परिचर्यामिच्छन्तीम्[22] ।

द्यौ३ष्पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृळता नः ।
विश्व आदित्या अदिते सजोषा अस्मभ्यं शर्म बहुलं वि यन्त ॥ ५ ॥

द्यौष्पितः[23] । द्युप्रहृतयः[24] ! सुखयत । अस्मान्[25] । सुखं च[26] । बहुलम्[27] । विविधं यच्छत[28] । द्यौः[29] । पिता[30] ।

---

१. हे देवाः ! Sy.　　२. स्तौमि is suggested for स्तौम् ॥ स्तुवे Sy.

३. उ इति पूरणः Sy.　　४. रक्षकान् Sy.

५. आदि० D. आदि refers to मित्र and वरुण ॥ अदीनां देवमातरं मित्रं वरुणं चैतान् Sy.　　६. सुजननान् is suggested for जेजननान् ॥ शोभनजननान् Sy.

७. अयम० P. प्रभृति refers to भगम् ॥ अर्यमणं भगं च Sy.

८. अभिप्रब्रवीमीत्यर्थः Sy.

९. धनसहितान् Sy.

१०. शोधकान् is suggested for जोदकान् ॥ विश्वस्य शोधकान्। ईदृशान् सर्वान् देवान् Sy.

११. रश० P. रिशतां हिंसकानामसितॄन् क्षेप्तॄन्, यद्वा रिशानां हिंसकानामत्तॄन् भक्षयितॄन् Sy.

१२. सतां पालयितॄन् Sy.

१३. अहिता P. अहिंसितान् is suggested for अहितान् ।

१४. राजमानानीश्वरान्वा Sy.

१५. ०नानि P.　　१६. नित्यतरुणान् Sy.

१७. शोभनधनान् शोभनबलान् वा Sy.

१८. सर्वत्र निवसतः । यद्वा 'क्षयतिरैश्वर्यकर्मा' ईशानान् Sy.

१९. अदितेः पुत्रान् । ईदृशान् सर्वान् देवान् Sy.

२०. प्राप्नोमि । यद्वा यामि । याचामि Sy.

२१. देवमातरम् Sy.

२२. ०च्छतीं D. दुवोयु लुप्तविभक्तिकमेतत्। दुवोयुं दुवोऽस्मदीयं परिचरणं कामयमानाम् Sy.

२३. द्यौष्पित्लह D.

२४. विद्युप्रहृतयः P. ०प्रभृतयः is suggested for ०प्रहृतयः ।

२५. अस्मा P.　　२६. सुखम्, गृहम् (वा) Sy.

२७. अधिकम्, विस्तृतम् Sy.

२८. प्रयच्छत Sy.

२९. द्यौर्द्युलोक ! Sy.

३०. हे पितः ! पितृस्थानीय ! Sy.

पृथिवी[१] । माता[२] । सा न[३] कस्मैचिद्[४] द्रुह्यति[५] ।

**मा नो वृकाय वृक्ये समस्मा अघायते रीरधता यजत्राः ।**
**यूयं हि ष्ठा रथ्यो नस्तनूनां यूयं दक्षस्य वचसो बभूव ॥ ६ ॥**

**मा नः** । मा । अस्मान् । वृकाय[६] । वृक्यै[७]च । सर्वस्मै च । अघमिच्छते[८] । वशं सन्नयत[९] । हे यष्टव्याः[१०] !
यूयम् । हि[११] । भवथ । नेतारः । अस्माकम् । अङ्गानाम्[१२] । यूयम्[१३] । प्रवृद्धस्य[१४] । वचसो[१५] भाजनम् । भवथ ।

**मा व एनो अन्यकृतं भुजेम मा तत्कर्म वसवो यच्चयध्वे ।**
**विश्वस्य हि क्षयथ विश्वदेवाः स्वयं रिपुस्तन्वं रीरिषीष्ट ॥ ७ ॥**

**मा वः** । मा । युष्माकम्[१६] । अन्यैः कृतम्[१७] । पापम् । वयमपि तद्वत् भुजेम[१८] अनुपालयेम[१९] । तदेवाह—
मा[२०] । व[२१] । कर्मा वयम् । हे वसवः[२२] ! यद् यूयम्[२३] । चयध्वे[२४], चयतिर्हिंसाकर्मा । विश्वस्य[२५] । हि यूयम् । ईश्वरा
भवथ । हे विश्वदेवाः[२६] ! तथा सति[२७] सोयम्[२८] । मदीयो[२९] रिपुः[३०] । शरीरमात्मीयम्[३१] । विनाशयतु[३२] ।[३३]

---

१. पृथिवि ! Sy.
२. हे मातः ! मातृस्थानीये ! Sy.
३. नु D.
४. चि P. च D. अध्रुगद्रोग्ध्रि ! Sy.
५. VM. ignores अस्मभ्यम् and includes भ्रातः । वसवः । विश्वे । आदित्याः । अदितेः and सजोषः with प्रभृति of द्युप्रभृतयः ॥ हे भ्रातर्भ्रातृस्थानीयाग्ने ! हे वसवः ! वासयितारः ! देवा ! ते सर्वे यूयम् । हे विश्वे ! आदित्याः ! सर्वेऽदितिपुत्राः ! देवाः ! हे अदिते ! यूयं सजोषाः सङ्गता भूत्वा Sy.
६. हिंसकाय स्तेनाय Sy.
७. वृक्ये P. तस्य स्त्रियै च । यद्वा वृकोऽरण्यश्वा तस्य स्त्री वृकी Sy.
८. अनर्थमस्माकमिच्छते शत्रुजनायास्मान् (मा) वशं नयत Sy.
९. नयत is suggested for सन्नयत ॥ वशं नैष्ट मावशीकुरुत Sy.
१०. हे यष्टव्या देवाः ! Sy.
११. खलु Sy. १२. शरीराणाम् Sy.
१३. यूयमेव Sy. १४. अस्मदीयस्य बलस्य Sy.
१५. वाक्यस्य च नेतारो बभूव । अतः कारणादस्मात् मा रीरधतेत्यन्वयः Sy.
१६. स्वभूता वयम् Sy.
१७. Omitted by P. शत्रुभिरुत्पादितम् Sy.
१८. भुंक्ष्महि Sy. १९. नु० P.
२०. तत् is suggested for व ।
२१. कार्ष्म । कर्म-करोतेर्माङि लुङि 'मन्त्रे घस०' इति च्लेर्लुक् Sy.
२२. वासयितारो देवाः ! Sy.
२३. येन कृतेन पापेन Sy.
२४. अस्मान्बाधध्वे Sy.
२५. सर्वस्य जगतः Sy. २६. सर्वे देवाः Sy.
२७. अतः कारणात् Sy.
२८. स्वयम् is suggested for सोयम् ॥ स्वयमेव Sy.
२९. ०ये P. अस्मदीयः Sy.
३०. शत्रुः Sy.
३१. ०रमत्मीत्वं D. स्वशरीरम् Sy.
३२. हिंस्यात् । यथैवं भवति तथा कुरुतेति भावः Sy.
३३. VM. ignores तत् ॥ तच्च पापम् Sy.

नम॒ इदु॒ग्रं नम॒ आ वि॑वासे॒ नमो॑ दाधार पृथि॒वीमु॒त द्याम् ।
नमो॑ दे॒वेभ्यो॒ नम॑ ईश एषां कृ॒तं चि॒देनो॒ नम॒सा वि॑वासे ॥ ८ ॥

नम[1] इत् । अन्नम्[2] । एव । उद्‌गूर्णमहं[3] च । अन्नमेव[4] । परिचरामि । नमः[2] । दाधार[5] । पृथिवीम् । अपि च । द्यम्[6] । नम[7] एव । देवेभ्यो नीयते । नम एव । सर्वेषामीष्टे[8] । तेनानेन[9] । नमसा[10] । कृतम्[11] । चित्[12] । एनो[13]ऽहम् । परिचरामि[14] न निन्दामीति स्तुतिरन्नस्य[15] ।

ऋ॒तस्य॑ वो र॒थ्य॑: पू॒तद॑क्षानृ॒तस्य॑ पस्त्य॒सदो॒ अद॑ब्धान् ।
ताँ आ नमो॑भिरुरु॒चक्ष॑सो॒ नॄन्विश्वा॑न्व॒ आ न॑मे म॒हो य॑जत्राः ॥ ९ ॥

ऋतस्य । यजस्य[16] । वः[17] । उन्नेतॄन्[18] । शुद्धबलान्[19] । यञ्चस्य[20] । गृहेषु सीदतः[21] । अहिंसितान्[22] । तान् । वः[23] । हविर्भिः[24] । व्याप्तदर्शनान्[25] । नेतॄन् । सर्वान् । परिचरामि[26] । महतः । हे यष्टव्याः[27] ![28]

---

१. आस्तां तावद्देवानां माहात्म्यं तदीयो नमस्कारोऽपीत्थं महाभाग इति ब्रुवाणः कैमुतिकन्यायेन देवान् स्तौति Sy.

२. नमस्कारः Sy.

३. ०र्णमयं P. उद्‌गूर्णबलं सर्वोत्कृष्टम् । तेन हि सर्वं लभ्यते Sy.

४. नमस्कारम् Sy.

५. धारयति । द्यावापृथिव्यौ नमस्क्रियमाणे सत्यौ तदुपभोगाय चिरकालमवतिष्ठेते । अतो देवेभ्य ईदृशं नमः करोमि Sy.

६. द्य P. द्याम् is suggested for द्यम् ॥ द्युलोकं च Sy

७. म P. नमस्कार एव Sy.

८. ईशे । ईष्टे । अतस्तेन ते वशीकृताः Sy.

९. तेनानेन seems to be the explanation of एषाम् । Sy. explains it by देवानाम् ।

१०. नमस्कारेण Sy.

११. आचरितम् Sy.

१२. अपि Sy. १३. पापम् Sy.

१४. विवासो वर्जनम् । वर्जयामि । विनाशयामि Sy.

१५. VM. ignores आ ।

१६. यज्ञस्य is suggested for यजस्य ।

१७. प D.
युष्मदीयस्य Sy.

१८. नेतॄन् is suggested for उन्नेतॄन् ॥ रथ्यः रंहितॄन् Sy.

१९. जूद्ध० D.

२०. यज्ञस्य is suggested for यञ्चस्य ।

२१. यज्ञसम्बन्धिनि पस्त्ये देवयजनलक्षणे गृहे सीदतो निषण्णान् Sy.

२२. ०साातान् P. रक्षःप्रभृतिभिरहिंसितान् Sy.

२३. युष्मान् Sy.

२४. ०भि P. नमस्कारैः Sy.

२५. बहुद्रष्टॄन् Sy.

२६. आनतोऽस्मि Sy.

२७. हे यष्टव्याः ! देवाः ! Sy.

२८. VM. ignores आ ॥ आभिमुख्येन क्रियमाणैः Sy.

ते हि श्रेष्ठवर्चसस्त उ नस्तिरो विश्वानि दुरिता नयन्ति ।
सुक्षत्रासो वरुणो मित्रो अग्निर्ऋतधीतयो वक्मराजसत्याः ॥ १० ॥

ते हि[1] । ते । खलु । श्रेष्ठदीप्तयः[2] । ते । एव । अस्मान्[3] । विश्वानि[4] । दुरितानि[5] । तिरो नयन्ति[6] । सुबलाः[7] । वरुणः[8] । मित्रः । अग्निः । सत्यकर्माणः । पक्षेण[9] ये राजन्ते ते स्तोतारो वक्मराजनस्ते[10] सत्या येषु ते तथोक्ता इति ।

ते न इन्द्रः पृथिवी क्षाम वर्धन्पूषा भगो अदितिः पञ्च जनाः ।
सुशर्माणः स्ववसः सुनीथा भवन्तु नः सुत्रात्रासः सुगोपाः ॥ ११ ॥

ते नः । ते[11] । अस्माकम् । इन्द्रः । पृथिवी च । पृथिवीम्[12] । वर्धयन्तु । यस्यार्थं सुसुखाः[13] । सुरक्षणाः[14] । सुनयनाः[15] । अस्माकम्[16] । भजन्तु[17] । सुरक्षणाः[18] । सुगोपनाः[19], त्राणगोपनयोरस्त्यल्पो[20] भेदः ।[21]

नू सद्मानं दिव्यं नंशि देवा भारद्वाजः सुमतिं याति होता ।
आसानेभिर्यजमानो मियेधैर्देवानां जन्म वसूयुर्ववन्द ॥ १२ ॥

नू[22] सद्मानम्[23] । क्षिप्रम् । दिव्यम्[24] । स्थानम्[25] । व्याप्तिमत्[26] । हे देवाः ! भारद्वाजोऽयम्[27] । होता[28] ।

---

१. ये देवा वक्ष्यमाणगुणाः Sy.
२. प्रशस्यतमदीप्तयो भवन्ति Sy.
३. अस्माकम् Sy.
४. सर्वाणि Sy. ५. पापानि Sy.
६. तिरोहितानि यथा भवन्ति तथा नयन्ति । नयन्तु विनाशयन्त्वित्यर्थः Sy.
७. शोभनबलाः शोभनधना वा Sy.
८. वरु D. वरुणादयो देवाः Sy.
९. वक्मेन is suggested for पक्षेण ।
१०. वक्म वचनं स्तोत्रम् । तस्य राजान ईशाना वक्मराजानः स्तोतारः । तेषु सत्या अवितथाः । एवम्भूतास्ते हीत्यन्वयः Sy. The readings, वक्मराजनः of VM. and वक्मराजानः of Sy. are doubtful. वक्मराजाः is suggested for them.
११. देवाः Sy.
१२. ०वीम P. निवासभूमिम् Sy.
१३. ०णः P. १४. शोभनाम्नाः Sy.
१५. सुप्रापणाश्च Sy.
१६. अस्मदर्थम् Sy.
१७. अस्मभ्यं शोभनसुखादिकं प्रयच्छन्त्विति भावः Sy. १८. ०णः P. सुष्ठु त्रातारः Sy.
१९. शोभनगोपायितारश्च भवन्तु Sy.
२०. उपस्थितेभ्यः शत्रुभ्यो रक्षणं त्राणम् । तेषामुत्पत्तिनिरोधेन रक्षणं गोपनम् Sy.
२१. VM. ignores पूषा । भगः । अदितिः । पञ्च and जनाः ॥ अदीना देवमाता च । पञ्चजना देवमनुष्याणां गन्धर्वाप्सरसाम् । (AB.3.31.) इत्यादिब्राह्मणोक्ता देवमनुष्यादयश्च Sy.
२२. अनया ऋषिरात्मानं परोक्षवदाह Sy.
२३. सम्मानम् D.
२४. दिवि भवम् Sy.
२५. सदनम् Sy. २६. व्याप्नोतु Sy.
२७. भ० P. भरद्वाजगोत्रजः Sy.
२८. स्तोतायमृषिः Sy.

सुमतिं[1] च। याच[2]। आसनस्य प्रयोजकैः[3]। सत्रभूतैः[4]। यजमानः[5]। देवानाम्। जन्म सर्वं[6] देवजातम्। अस्तकामः[7]। स्तौति[8]।

**अप॒ त्यं वृ॑जि॒नं रि॒पुं स्ते॒नम॑ग्ने दुरा॒ध्य॑म्। द॒विष्ठम॑स्य सत्पते कृ॒धी सु॒गम् ॥ १३ ॥**

अप त्यम्[9]। अपास्य[10]। तम्[11]। छेत्तारम्[12]। रिपुम्[13]। स्तेनम्[14]। दुर्बुद्धिम्[15]। यथा दूरे[16] स्थितो भवति। हे सत्पते[17] ! तन्निरसनात्। कुरु चास्माकम्[18]। सुखम्[19]।

**ग्रावा॑णः सोम नो॒ हि कं॑ सखित्व॒नाय॑ वाव॒शुः।**
**ज॒ही न्य१॒॑त्रिणं॑ प॒णिं वृको॒ हि षः ॥ १४ ॥**

ग्रावाणः। हे सोम ! ग्रावाणः[20]। अस्माकं[21] यजमानानाम्। सखित्वम्[22]। कामयन्ते। तथा[23] सति त्वं निजहि[24]। अदनलीलम्[25]। असुरम्[26]। सः[27]। ह्यसुरः[28]। आदानपरो[29] हन्तव्यः[30]।

---

१. शोभनां मतिं युष्मदीयामनुग्रहबुद्धिं च Sy.
२. याचते is suggested for याच ॥ यातिर्याच्ञाकर्मा Sy.
३. ०जनकैः D. आसीनैः सत्रासनं कुर्वद्भिः Sy.
४. मेध्यैर्मेधार्हैरन्ययजमानैः सार्धम् Sy.
५. यागं कुर्वन्नयमृषिः Sy.
६. सव P. जनसङ्घम् Sy.
७. वसूनि धनान्यात्मन इच्छन् Sy.
८. वन्दते स्तौति Sy.
९. दशरात्रस्य चतुर्थेऽहनि प्रउगशस्त्रे 'अप त्यं वृजिनम्' इत्येषा । वैश्वदेवस्तृचः । सूत्रितञ्च—'अप त्यं वृजिनं रिपुमम्वितमे नदीतम इत्यानुष्टुभम्' (ĀSS.7.11.) इति Sy.
१०. अपक्षिप। 'असु क्षेपणे' इति धातु. Sy.
११. प्रसिद्धम् Sy.
१२. कुटिलम् Sy.
१३. पापकारिणम् Sy.
१४. हिंसकम् Sy.
१५. दुःखस्याध्यातारं दुष्टाभिप्रायम् Sy.
१६. Omitted by P. दूरतरम् Sy.
१७. संपते P. हे सतां पालयितः ! अग्ने ! Sy.
१८. अस्माकं सुगं शोभनेन गन्तव्यं सुखम्। अत्र सर्वदेवात्मकस्याग्नेः स्तवनाद्वैश्वदेवत्वम् Sy.
१९. VM. ignores अग्ने ॥ हे अग्ने ! त्वम् Sy.
२०. अभिषवार्थाः पाषाणाः Sy.
२१. अस्मदीया इमे Sy.
२२. तव सख्यार्थम् Sy.
२३. सथा P.
२४. विनाशय Sy.
२५. अदनशीलम् is suggested for अदनलीलम् ॥ राक्षसादिकम् Sy.
२६. वणिजमदातारम् Sy.
२७. पणिः Sy.
२८. खलु Sy.
२९. सर्वदास्मत्तोऽपहरणशीलः। अतस्त्वं जहीत्यर्थः। 'वृक वृक आदाने' इति धातुः Sy.
३०. VM. ignores कम् and explains हि once only ॥ कमिति पूरकः। हि यस्मादर्थे। यस्मादेवं तस्मात् Sy.

यूयं हि ष्ठा सुदानव इन्द्रज्येष्ठा अभिद्यवः ।
कर्ता नो अध्वन्ना सुगं गोपा अमा ॥ १५ ॥

यूयम् । हे मरुतः[1] ! यूयम् । हि[2] । भवथ[3] । हे शोभनदानाः[4] ! इन्द्रज्येष्ठाः[5] । अभिगतदीप्तयः । तथा सति कुरुत । अस्माकम् । मार्गे[6] । सुखम् । गोपयितारः[7] । सहायाः[8][9] ।

अपि पन्थामगन्महि स्वस्तिगामनेहसम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ १६ ॥

अपि पन्थाम्[10][11] । पन्थानम्[12] । अपिगन्महि प्राप्नुम[13] । स्वस्तेः[14] प्रापयितारम् । अनेहसम्[15] । येन पथा[16] । विश्वाः[17] । द्विषः[18] । परिवृणक्ति पथिकः[19] । विन्दते च[20] । धनम् ।

---

१. हे देवाः ! Sy.

२. खलु Sy.

३. प्रभवथ समृद्धाः स्थ Sy.

४. हे शोभनदानाः ! देवाः Sy.

५. इन्द्रो ज्येष्ठो मुख्यो येषां ते Sy.

६. अध्वनि मार्गे Sy.

७. रक्षितारः सन्तः Sy.

८. सहैव Sy.

९. VM. ignores आ ॥ आकारः समुच्चये Sy.

१०. प्रवासादागमने 'अपि पन्थाम्' इत्येषा यजमानेन जप्या । सूत्रितञ्च—'अपि पन्थामगन्महीति प्रत्येत्य समित्पाणिः' (ĀSS.2.5.) इति Sy.

११. पन्थाः D.

१२. मार्गम् Sy.

१३. पन्थानपमिग॰ P. अप्यगन्महि is suggested for अपिगन्महि ॥ अपिगताः प्राप्ताः स्मः-Sy. सम्प्राप्तास्त्वत्प्रसादेन सोम ! BB.

१४. स्वेस्तेः P. सुखन गन्तव्यम् Sy. स्वस्ति अविनाशं गम्यते येन तादृशम् । 'गाङ् गतौ' BB.

१५. ॰स P. पापरहितम् Sy. अपापं पापफलरहितं पन्थानमगमाम, व्यत्ययेनात्मनेपदम् । यद्वा ....तमपि पन्थानां गम्यास्म स्वस्तिगामनेहसम् BB.

१६. रथा P. येन पथा गच्छन् Sy. पुनश्च पन्था विशेष्यते येन पथा गच्छन् BB.

१७. विश्वान् P. सर्वाः Sy. विश्वान् BB.

१८. द्वेष्ट्रीः प्रजाः Sy. द्वेष्यान् । लिङ्गव्यत्ययेन स्त्रीत्वम् । यद्वा सम्पदादिलक्षणः स्त्रियां क्विप् BB.

१९. ॰रिपृण॰ P. परिवर्जयति बाधते Sy. परितो वर्जयति BB.

२०. पथिकाविविन्दिते P. लभते तादृशं पन्थानमित्यर्थः Sy. लभते च वसु धनं तमगमाम गम्यास्म वा BB.

This stanza=TS. 1.2.9.1.

VI. 52.

**न तद्दिवा न पृथिव्यानु मन्ये न यज्ञेन नोत शमीभिराभिः ।**
**उब्जन्तु तं सुभ्व१ः पर्वतासो नि हीयतामतियाजस्य यष्टा ॥ १ ॥**

न[1] तद्दिवा[2] । न । तत्[3] कर्म । द्यावापृथिवीभ्याम्[4] । अहन्नानुमन्ये[5], शफं[6] ? कृतं[7] द्यावापृथिव्यौ तत्कर्मेत्यर्थः । न च । यज्ञेन[8] । न । अवि[9] । आभिः[10] । तमिममतियाजं[11] महच्छत्रुम् । महान्तः[12] । पर्वताः[13] । उब्जन्तु[14], उब्जतिर्वधकर्मणा[15] । निहीनो[16] भवतु । इतियाजस्य[17] । यष्टा[18] चाध्वर्युः[19] ।

---

१. 'न तद्दिवा' इति सप्तदशर्चं तृतीयं सूक्तमृजिश्वन आर्षं वैश्वदेवम् । आदितः षट् त्रिष्टुभः सप्तमाद्याः षड् गायत्र्यस्त्रयोदशी त्रिष्टुप् चतुर्दशी जगती शिष्टास्तिस्रस्त्रिष्टुभः । तथा चानुक्रान्तम्—'न तत्त्र्यूना सप्तम्याद्याः षड् गायत्र्यश्चतुर्दशी जगती' (KSA. 32.52. p.23.) इति । गतो विनियोगः ! अतियाजो नाम कश्चिदृषिरस्मादृजिश्वन उत्कृष्टः स्यामहमिति बुद्ध्या देवान् यियक्षुरास । ऋषिस्तदीयं यजनं निराचष्टाद्यया Sy.
उत्कृष्टः स्यामहं वेति बुद्ध्या देवानियाज ह ऋषिस्तदीयं यजनं निराचष्टाद्यया । ऋजिश्वा त्रिष्टुभा विश्वान् देवान् प्रति अतियाजं निन्दन्ति DDN.

२. तदि० D.

३. अतियाजस्य ऋषेस्तद्यजनम् Sy., DDN.

४. द्युलोकेन तत्रत्येन देवगणेन युक्तम् । पृथिव्या पार्थिवेनापि देवगणेन युक्तम् Sy.,DDN.

५. न of नानुमन्ये seems to be redundant. अनुमतिं न करोमि Sy. नानुमतिं करोमि DDN.

६. श्पफं D. the reading is doubtful. सफलम् is suggested for शफम् ।

७. ०ता P.

८. मयानुष्ठितेन सदृशं तदित्यहं नानुमन्ये Sy., DDN.

९. अपि is suggested for अवि ॥ अपि च Sy.

१०. P. reads नव्याभिः for न । अपि । आभिः ।

११. ऋषिम् Sy.

१२. सुष्ठु भवन्तः Sy., DDN.

१३. पर्वता इन्द्रेण प्रहिताः सन्तः Sy., DDN.

१४. उब्जन् P. हिंसन्तु । उब्जिर्हिंसाकर्मा Sy., DDN.

१५. ०कर्मा is suggested for ०कर्मणा ।

१६. नितरां हीनो भवतु Sy.

१७. अतिया० is suggested for इतिया० ॥ ऋजिश्वनोऽप्यतिशयेनाहं देवान् यजामीति बुद्ध्या युक्तस्य ऋषेः Sy., DDN.

१८. याजकः Sy.

१९. VM. ignores शमीभिः ।
शमीभिरन्यैरपि मया कृतैरेभिः कर्मभिः सदृशमित्यपि नानुमन्ये । मया वशीकृता देवास्तदीयं यजनं नाङ्गीकुर्वन्ति स चानभिज्ञत्वात्सम्यग्यष्टुमपि न शक्नोतीति भावः Sy., DDN.

अति॑ वा॒ यो म॑रुतो॒ मन्य॑ते नो॒ ब्रह्म॑ वा॒ यः क्रि॒यमा॑णं॒ निनि॑त्सात् ।
तपूं॑षि॒ तस्मै॑ वृजि॒नानि॑ सन्तु ब्रह्म॒द्विष॑म॒भि तं शो॑चतु॒ द्यौः ॥ २ ॥

अति । यः[1] । वा । अस्मान् । हे मरुतः ! अतिमन्यते[2] । कर्म[3] । वा । अस्माभिः क्रियमाणम् । नन्दतुमिच्छति[4] । तस्मै[5] । रक्षांसि[6] । छेदकानि[7] । भवन्तु । कर्मणा[8] ।[9]

किम॒ङ्ग त्वा॒ ब्रह्म॑णः सोम गो॒पां किम॒ङ्ग त्वा॑हुरभिशस्ति॒पां नः॑ ।
किम॒ङ्ग नः॑ पश्यसि नि॒द्यमा॑नान्ब्रह्म॒द्विषे॒ तपु॑षिं हे॒तिम॑स्य ॥ ३ ॥

[ किमङ्ग[10] । ] पीड्यमानान्[11] । कर्मद्विषे[12] । तापयितारम्[13] । वज्रम्[14] । प्रेरय[15] ।[16]

---

१. पुरुषः Sy.

२. अस्मान् अति मन्यते अतीत्य स्वस्याधिक्यं मन्यते अस्मत्तोऽपि स्वयमधिक इति बुध्यते Sy.

३. ब्रह्म स्तोत्रं वा Sy.

४. निन्दि० is suggested for नन्द० ॥ निन्दितुमिच्छेत् Sy.

५. तस्मै पुरुषाय Sy.

६. तपूंषि तेजांसि Sy.

७. बाधकानि Sy.

८. कर्मण P. कर्मणा D. The text seems to be incomplete.

९. VM's commentary on the words द्विषम् of ब्रह्मद्विषम् and अभि । तम् । शोचतु and द्यौः seems to be missing ॥ ब्रह्मद्विषं तं शत्रुं द्यौरादित्यश्चाभि शोचतु । अभितपतु । अभिदहतु Sy.

१०. The *pratīka* is supplied by the Editor.

११. परैर्दूष्यमाणान् Sy.

१२. ब्राह्मणद्वेष्ट्रे तस्मै Sy.

१३. तापकम् Sy.

१४. आयुधम् Sy.

१५. क्षिप प्रेरय Sy.

१६. VM's commentary on the words किम् । अङ्ग । त्वा । ब्रह्मणः । सोम । गोपाम् । किम् । अङ्ग । त्वा । आहुः । अभिशस्तिपाम् । नः । किम् । अङ्ग । नः and पश्यसि is missing.

Sy. explains these words in the following manner:

किमङ्गेति प्रसिद्धिद्योतकौ निपातौ । हे सोम ! त्वा त्वां खलु ब्रह्मणो मन्त्रस्य कर्मणो वा ब्रह्मजातेर्वा गोपां गोपायितारमाहुः । कथयन्ति पुराविदः । तथा नोऽस्माकमभिशस्तिपामभिशंसकेभ्यः पालयितारं त्वामेव खल्वाहुः । यद्वा अङ्गेत्यभिमुखीकरणे । अङ्ग हे सोम ! किं कारणं त्वां ब्रह्मणो गोपामाहुः ? किं कारणं वा त्वामस्माकमभिशस्तिपामाहुः ? निन्द्यमानान् परैर्दूष्यमाणान्नोऽस्मानङ्ग हे सोम ! किं कारणं पश्यसि ? त्वामेव सर्वे ब्रह्मणो रक्षकं शत्रुभ्यः पालकं च कथयन्ति । अतोऽस्मासु परैर्निन्द्यमानेष्वौदासीन्यं तवानुचितम् ।

अवन्तु मामुषसो जायमाना अवन्तु मा सिन्धवः पिन्वमानाः ।
अवन्तु मा पर्वतासो ध्रुवासोऽवन्तु मा पितरो देवहूतौ ॥ ४ ॥

अवन्तु । रक्षन्तु । माम् । उषसः । प्रादुर्भवन्त्यः । रक्षन्तु । माम् । नद्यः[1] । वहन्त्यः[2] । रक्षन्तु । माम् । पर्वताः । स्थिराः[3] । रक्षन्तु । माम् । पितरश्च[4] । यज्ञे[5] ।

विश्वदानीं सुमनसः स्याम पश्येम नु सूर्यमुच्चरन्तम् ।
तथा करद्वसुपतिर्वसूनां देवाँ ओहानोऽवसागमिष्ठः ॥ ५ ॥

विश्वदानीम्[6] । सर्वदा वयम् । सुमनसः[7] । स्याम[8] । पश्येम[9] । च[10] । सूर्यम् । उद्यन्तम् । तथा । करोतु[11] । वसुपतिरग्निः[12] । देवान् । आवहन्[13] । रक्षणार्थम्[14] । अतिशयेनागन्ता[15][16] ।

इन्द्रो नेदिष्ठमवसागमिष्ठः सरस्वती सिन्धुभिः पिन्वमाना ।
पर्जन्यो न ओषधीभिर्मयोभुरग्निः सुशंसः सुहवः पितेव ॥ ६ ॥

इन्द्रः । इन्द्रोऽस्माकम्[17] । रक्षणार्थम्[18] । नेदिष्ठम्[19] । अतिशयेनागन्तास्तु[20] । सरस्वती च[21] । उदकैः[22] । महन्त्यस्तु[23] । पर्जन्यश्च । अस्माकम् । ओषधीभिः[24] । सुखस्य भावयिता[25] । अग्निश्च । शोभनशंसः[26] स्वाह्वानोऽस्तु[27] । पितेव[28] ।

---

१. स्यन्दनशीला नद्यश्च Sy.
२. तथा पिन्वमाना वर्धमानाः Sy.
३. पर्वकास्थिराः D. निश्चलाः Sy.
४. पितृदेवताश्च मामवन्तु Sy.
५. देवानां हूतिराह्वानमस्मिन्निति देवहूतिर्यागः । तत्र विद्यमानाः Sy.
६. हे देवाः Sy.
७. समनस P. शोभनमनस्काः Sy.
८. भवेम Sy.
९. सर्वदा पश्येम Sy.
१०. च । नुशब्दः समुच्चये Sy.
११. अस्मान् तथाविधानुक्तप्रकारान् करोतु Sy.
१२. वसूनां वसुपतिः उत्कृष्टधनाधिपतिरग्निः Sy.
१३. वहन् । प्रापयन् Sy.
१४. अस्मदीयेन हविषा Sy.
१५. ०न ग० P. आगन्तृतम एवङ्गुणविशिष्टः सन् Sy.
१६. VM. ignores वसूनाम् ।
१७. अयमिन्द्रः Sy.
१८. रक्षणेन सार्धम् Sy.
१९. नेतिष्ठम् P.D. अन्तिकतमं यथा भवति तथा Sy. २०. आगन्तृतमा Sy.
२१. नदीरूपा चागन्तृतमा भवतु Sy.
२२. स्यन्दनैरुदकैः Sy.
२३. महन्त्यस्तु seems to be the explanation of पिन्वमाना ॥ महत्यस्तु is suggested for महन्त्यस्तु ॥ Sy. explains it by वर्धमाना ।
२४. ओषधीभिः सार्धम् Sy.
२५. सुखस्य भावयिता भवतु Sy.
२६. ०शंसः is suggested for ०शं ॥ सुखेन शंसनीयः Sy.
२७. सुखेनाह्वातव्यश्च भवतु Sy.
२८. पुत्रस्य जनक इव Sy.

**विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥ ७ ॥**

विश्वे देवासः । हे विश्वे[1] ! देवाः ! आगच्छत[2] । शृणुत च । मम[3] । इदम् । आह्वानम् । इदम् । बर्हिः[4] । आनिषीदत[5] ।

**यो वो देवा घृतस्नुना हव्येन प्रतिभूषति । तं विश्व उप गच्छथ ॥ ८ ॥**

यो वः । यः[6] । युष्मान् । हे देवाः ! घृतप्रस्राविणा[7] । हविषा । परिचरति । तम्[8] । सर्वे[9] एव । उपगच्छथ[10] ।

**उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये । सुमृळीका भवन्तु नः ॥ ९ ॥**

उप नः । उपशृण्वन्तु[11] । अस्माकम् । स्तुतीः[12] । अमृतस्य प्रजापतेः[13] । ये । सूनवो[14] भवन्ति । सुष्ठु सुखयितारश्च[15] । अस्माकम् । भवन्तु ।

**विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः ॥ १० ॥**

विश्वे देवाः[16] । विश्वे[17] । देवाः । यज्ञस्य वर्धयितारः[18] । स्वेषु कालेषु[19] आह्वानस्य श्रोतारः[20] । सेवन्ताम् । योग्यम् । ओषधीनां पयः[21] सारमन्नमन्नभूतम् ।

---

१. आग्रयणे वैश्वदेवस्य चरोः 'विश्वे देवास आ गत' इत्यनुवाक्या । सूत्रितञ्च 'विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः' (ĀSS. 2.9.) इति Sy.

२. विश्व D. सर्वे Sy.

३. आगत्य च मे मदीयम् Sy.

४. श्रुत्वा चेदमास्तीर्णं बर्हिः Sy.

५. आस्तीर्णे बर्हिषि निषण्णा भवत Sy.

६. जनः Sy.

७. घृतप्रक्षरणेन Sy.

८. अ P.D. जनम् Sy.

९. विश्वे सर्वे यूयम् Sy.

१०. ०थः P. उपगता भवथ Sy.

११. समीपमागत्यावधारयन्तु Mah.

१२. गिरो वाचः U.

१३. मरणरहितस्य प्रजापतेः Sy. मरणहीनस्य प्रजापतेः Mah.

१४. पुत्राः Sy. पुत्रा विश्वे देवास्ते Mah. पुत्राः ....ये विश्वे देवाः U.

१५. सुष्ठु मृडयितारः सुखयितारश्च Sy. श्रुत्वा ....सुखकरा भवन्तु । शोभनं मृडीकं सुखं येभ्यस्ते Mah. अतिशयेन सुखयितारो भवन्तु U.

This stanza=YV. 33.77.

१६. देवासः P. D.

१७. सर्वे Sy.

१८. ऋतस्य यज्ञस्य वर्धकाः Sy. ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितारः । ण्यन्तात्क्विप् BB.

१९. कालविशेषैः Sy. ऋतुभिः कालावयवैः पर्वादिभिः सह BB.

२०. हवनस्य स्तोत्रस्य श्रोतारस्तस्मिंस्तस्मिन्यागकाले स्तूयमाना ईदृशाः Sy. आह्वानप्रयोजनस्य कर्तार इति BB.

२१. आमिक्षारूपम् । श्रूयते हि—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति Sy. पयसि चरुमत एव वचनात् BB.

This stanza=TS. 2.4.14.5.

स्तोत्रमिन्द्रो मरुद्गणस्त्वष्टृमान्मित्रो अर्यमा । इमा हव्या जुषन्त नः ॥ ११ ॥

स्तोत्रम् । स्तोत्रम् । इन्द्रः । मरुद्गणः[1] । त्वष्टायुक्तः[2] । मित्रः । अर्यमा च । इमानि[3] । हवींषि । सेवन्ताम् । अस्माकम् ।

इमं नो अग्ने अध्वरं होतर्वयुनशो यज । चिकित्वान्दैव्यं जनम् ॥ १२ ॥

इमं नः । इमम् । नः[4] । अग्ने ! यज्ञम्[5] । हो[6] । प्रज्ञानेन[7] । यज[8] । मानम्[9] । दैव्यम्[10] । जनम्[11] ।

विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥ १३ ॥

विश्वे देवाः[12] । हे विश्वे ! देवाः ! शृणुत । इमम् । हवम्[13] । मे[14] । ये यूयम् । अन्तरिक्षे[15] । उपभवथ[16] । ये च । दिवि[17] । ये । अग्निजिह्वाः[18] । अपि च[19] । यष्टव्यास्ते[20] सर्वे[21] । अस्मिन् । बर्हिषि[22] । आसद्य[23] । मोदध्वम्[24][25] ।

---

१. मरुतो गणभूताः परिजनभूता यस्य तादृशः Sy.

२. त्वष्टामित्रोयुक्तः P. त्वष्टृयुक्त is suggested for त्वष्टायुक्तः ॥ त्वष्टृसहितः Sy.

३. P. adds च after इमानि ।

४. अस्मदीयम् Sy. ५. हिंसारहितं यज्ञम् Sy.

६. होतः ! is suggested for हो ॥ देवानामाह्वातः ! Sy.

७. ज्ञानक्रमेण यथानुपूर्व्या देवा बुद्धिस्थास्तथा Sy.

८. यागं कुरु Sy.

९. मान D. जानन् is suggested for मानम् । जानंस्त्वम् Sy.

१०. दै० P. देवसम्बन्धिनम् Sy.

११. सङ्घं यजनीयम् Sy.

१२. वैश्वदेवशस्त्रस्य 'विश्वे देवाः' इति याज्या । सूत्रितञ्च—'आश्रुत्यै त्वेति शस्त्वा जपेद्विश्वे देवाः शृणुतेमं हवं म इति याज्या' (ĀSS. 5.18.) इति । वैश्वदेवे पशावेषैव याज्या । सूत्रितञ्च—'विश्वे देवाः शृणुतेमं हवं मे ये के च ज्मा महिनो अहिमायाः' (ĀSS. 3.7.) इति Sy.

१३. आह्वानम् Sy., Mah., U., BB.

१४. म P. मदीयम् Sy. मत्कृतम् Mah. मम U. BB.

१५. अन्तरिक्षलोके वर्तमानाः Sy.

१६. तत्समीपस्थे भूलोके भवथ Sy. भवथ Mah. U.

१७. द्युलोके Sy., U. स्वर्गसमीपे Mah. ये चोप समीपे पृथिव्यां स्थ ये च दिवि द्युलोके स्थ BB.

१८. अग्निर्जिह्वास्थानीयो येषाम् । यद्वा अग्नेर्जिह्वा । तया पोष्यमाणत्वादग्निर्जिह्वा इत्युच्यन्ते Sy. वह्निमुखाः Mah. अग्निमुखाः U. ये चाग्नेर्जिह्वायां स्थिता हविर्भाजः । तात्स्थ्यात्ताच्छब्द्यम् । यद्वा अग्निर्जिह्वास्थानीयो येषाम् BB.

१९. अपि वा Sy., BB.

२०. यजनीयाः Sy. पूजामात्रभाजः BB.

२१. यूयम् Sy. ते सर्वे यूयम् Mah. ते सर्वेऽपि यूयम् BB.

२२. आस्तीर्णेऽस्मिन् बर्हिषि Sy. यज्ञे BB.

२३. उपविश्य Sy., Mah. श्रुत्वा चाह्वानमासद्य स्थित्वा U. आसित्वा BB.

२४. सोमेनात्मानं तर्पयथ Sy. तृप्यध्वम् Mah., U. तृप्यत । 'मद तृप्तियोगे' चौरादिकः । . . . . तृप्ताश्चास्माकं ग्रामं साधयतेति BB.

२५. VM. ignores वा ।
This stanza=YV. 33.53.=TS. 2.4.14.5.

विश्वे॑ दे॒वा मम॑ शृण्वन्तु य॒ज्ञिया॑ उ॒भे रोद॑सी अ॒पां नपा॑च्च॒ मन्म॑ ।
मा वो॒ वचां॑सि परि॒चक्ष्या॑णि वोचं सु॒म्नेष्विद्वो॒ अन्त॑मा मदेम ॥ १४ ॥

विश्वे देवाः । यज्ञार्हाः । विश्वे । देवाः । द्यावापृथिव्यौ । अपां नपात्[1] । च । मम[2] । स्तोत्रम्[3] । शृण्वन्तु[4] । मा । युष्माकम्[5] । गर्ह्याणि[6] । वचनानि[7] । वोचम्[8] । युष्माकम् । सन्निकृष्टा वयम्[9] । सुखेषु[10] । ए[11] । मदेम[12][13] ।

ये के च॒ ज्मा म॒हिनो॒ अहि॑माया दि॒वो ज॑ज्ञि॒रे अ॒पां स॒धस्थे॑ ।
ते अ॒स्मभ्य॑मि॒षये॒ विश्व॒मायुः॒ क्षप॑ उ॒स्रा व॑रिवस्यन्तु दे॒वाः ॥ १५ ॥

ये के च[14] । ये । के[15] । च । पृथिव्याम्[16] । महान्तं[17] महान्तः[18] । अहन्तव्यप्रज्ञाः[19] । दिवः[20] । जाताः[21] । अन्तरिक्षे च[22] । ते[23] । अस्मभ्यम् । इषिरिच्छा तदर्थम्[24] । सवम्[25] । अन्नम्[26] । रात्रीः[27] । अहानि च[28] । प्रयच्छन्तु । देवाः सर्वदान्नं[29] प्रयच्छन्त्विति ।

---

१. मध्यमस्थानोऽग्निः Sy.
२. मदीयम् Sy.
३. मननीयं स्तोत्रम् Sy.
४. चित्तेऽवधारयन्तु Sy.
५. अथ प्रत्यक्षकृतः—हे देवाः ! वो युष्मभ्यम् Sy.
६. वर्जनीयानि Sy.
७. वचांसि स्तोत्राणि Sy.
८. ब्रवीमि । अपि तु समीचीनानि Sy.
९. अतः अन्तिकतमाः सन्तो वयम् Sy.
१०. युष्माभिर्दत्तेषु सुखेषु वर्तमानाः Sy.
११. एव is suggested for ए ।
१२. मोदेम Sy.
१३. VM. ignores उभे ।
१४. आग्रयणे वैश्वदेवस्य 'ये के च ज्मा' इति याज्या । सूत्रितञ्च—'विश्वे देवास आगत ये के च ज्मा महिनो अहिमायाः' (ĀSS.2.9.) इति । वैश्वदेवपुरोडाशस्यैव याज्या । सूत्रमुदाहृतम् Sy.
१५. केचन देवाः Sy.
१६. ज्मायां पृथिव्याम् Sy. ज्मेति पृथिवीनाम Ngh.1.1.
१७. महान्तम् is redundant.
१८. महाम्महान्तः D.
१९. आहन्तृप्रज्ञाः Sy. मायेति प्रज्ञानाम Ngh. 3.9.
२०. द्युलोकात् Sy.
२१. प्रादुर्बभूवुः Sy.
२२. It seems to be the explanation of both अपाम् and सधस्थे ॥ सहान्तरिक्षे Sy.
२३. सर्वे देवाः Sy.
२४. इष्यत इतीषिः पुत्रादिः । तस्मै च Sy.
२५. सवम् P.
२६. अन्नं जीवनं वा Sy.
२७. सर्वा रात्रीः Sy.
२८. सर्वाण्यहानि च सर्वदा नैरन्तर्येण Sy.
२९. सर्वदा refers to रात्रीः and अहानि ।

**अग्नीपर्जन्यावर्वतं धियं मेऽस्मिन्हवे सुहवा सुष्टुतिं नः ।**
**इळामन्यो जनयद्गर्भमन्यः प्रजावतीरिष आ धत्तमस्मे ॥ १६ ॥**

**अग्नीपर्जन्यौ**[1] । हे अग्नीपर्जन्यौ[2] ! रक्षतम्[3] । कर्म[4] । मे[5] । अस्मिन् । हवे[6] । स्वाह्वानौ[7] । सुष्टुतिं[8] च । अस्माकं[9] सेवेनाम्[10] । एतयोरेकोऽग्निः[11] । इळाम्[12] । अजनयत्[13] । अन्यः[14] पर्जन्यस्य[15] । ओषधीषु गर्भमजनयत्[16] । तौ युवां पुत्रवन्ति[17] । अन्नानि । अवतम्[18] । अस्मासु[19] ।

उत्तरा निगदसिद्धा । इति[20] ।

**स्तीर्णे बर्हिषि समिधाने अग्नौ सूक्तेन महा नमसा विवासे ।**
**अस्मिन्नो अद्य विदथे यजत्रा विश्वे देवा हविषि मादयध्वम् ॥ १७ ॥**

**[स्तीर्णे बर्हिषि[21] ।]**

---

१. पर्जन्येन संस्तवः । भरद्वाजस्यार्षम् Dur. भरद्वाजस्य SKN.
२. हे अग्नीपर्जन्यौ ! युवामुच्येथे Dur.
३. गच्छतं रक्षतं वा Sy. आगच्छतम् Dur. गच्छतम् SKN.
४. यज्ञलक्षणम् Sy. इमां धियमिदं कर्म प्रति Dur. धियं कर्मनामैतत् । कर्म SKN.
५. मदीयम् Sy. मम Dur. मम श्रृणुतम् SKN.
६. यज्ञे Sy. आह्वाने Dur., SKN.
७. सुखेन ह्वातुं शक्यौ Sy.
८. शोभनां स्तुतिं च रक्षतम् ॥ यद्वा अनुवृत्तोऽवतिः श्रवणार्थः । अवतं श्रृणुतम् Sy. शोभनामिमां स्तुतिं श्रोतु ? (श्रृणोतु) Dur. शोभनां च स्तुतिं च SKN.
९. अस्मदीयाम् Sy. अस्माकं स्वभूताम् SKN
१०. सेवता० D. ११. पर्जन्यः Sy. युवयोरेकः Sy.
१२. अन्नम् Sy. आगत्य च श्रुत्वेमामिळामन्नम् Dur. गत्वा चेळामन्नम् SKN.
१३. जनयति । वृष्ट्या ह्योषधिवनस्पतयो जायन्ते तेभ्यश्चान्नं जायते Sy. जनयतु Dur. जनयत SKN. १४. अग्निः Sy.
१५. पर्जन्यश्च is suggested for पर्जन्यस्य ।
१६. जनयति । पुरुषेण भुक्तमन्नं जाठरेणाग्निना पक्वं सत् रेतोरूपेण परिणमते तदेव योषित्सु गर्भो भवति Sy.
१७. प्रजाभिर्युक्ताः Sy. तौ युवामेवं प्रतिसंवत्सरं प्रजावतीः प्रजासंयुक्ताः Dur. प्रजासन्निहितान्यन्नानि SKN.
१८. आध० is suggested for अध० ॥ अवस्थापयतम् Sy. आभिमुख्येन स्थित्वा धत्तं दत्तम् Dur. आभिमुख्येन स्थापयतम् SKN.
१९. अस्मभ्यमित्यर्थः Dur. अस्मे अस्मासु । चतुर्थ्यर्थे वा । शेआदेशः । आभिमुख्येन दत्तमस्मभ्यमित्यर्थः SKN. III. 52.
२०. Omitted by P.
२१. The *pratīka* is supplied by the Editor.
Sy. explains this stanza in the following manner: हे विश्वे देवाः ! बर्हिषि दर्भपुञ्जे वेद्यां स्तीर्णे सत्यग्नौ च समिधाने समिद्धे सत्यनेन सूक्तेन स्तोत्रेण च महा महता नमसा नमस्कारेण च । विवासे । पर्यचरम् । हे यजत्राः । यजनीयाः ! विश्वे देवाः ! अद्यास्मिन् दिने नोऽस्मदीयेऽस्मिन्विदथे यज्ञे हविषि । तृतीयार्थे सप्तमी । हविषास्माभिर्दत्तेन मादयध्वम् । तृप्यध्वम् ।

VI. 53.

वयमु॑ त्वा पथस्पते रथं॒ न वाज॑सातये । धि॒ये पू॑षन्नयुज्महि ॥ १ ॥

**वयम्**[1] ॥ भरद्वाजः ॥ वयम् । उ[2] । त्वा[3] । पथः । पते[4] ! रथम् । इव[5] । अन्नभजनाय[6] । कर्मणे[7] । पूषन् ! युक्तं कुर्मः[8] ।

अभि नो॑ नर्यं॒ वसु॑ वी॒रं प्रय॑तदक्षिणम् । वा॒मं गृ॒हप॑तिं नय ॥ २ ॥

**अभि नः**[9] । अभिनय[10] । अस्मान् । नृहितम्[11] । वसु[12] । जनूनां प्रेरकान्[13] । दक्षिणया, गान्तारो हि प्रयच्छन्ति[14] पशून् । भजनीयं[15] पर्याप्तम्[16] ।

अदि॑त्सन्तं चिदाघृणे॒ पूष॒न्दाना॑य चोदय । प॒णेश्चि॑द्वि म्र॑दा॒ मनः॑ ॥ ३ ॥

**अदित्सन्तम्**[17] । अदित्सन्तम्[18] । अपि । आगतदीप्ते[19] ! पूषन् ! दानास्मभ्यम्[20] । चोदय[21] । पणेः[22] ।

---

१. 'वयमु त्वा' इति दशर्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं पौष्णम् । 'यां पूषन्' इत्यनुष्टुप्, शिष्टाः गायत्र्यः । तथा चानुक्रान्तम्—'वयं दश पौष्णं तद् गायत्रं बै यां पूषन्ननुष्टुप्' (KSA. 32. 53. p. 23) इति । अर्थार्थिभिः प्रवसद्भिरेतज्जप्यम् । सूत्रितञ्च—'वयमु त्वा पथस्पत इत्यर्थचर्यां चरिष्यन्' (AGS. 3. 7. 8.) इति । जपेदिति शेषः Sy.

२. उ इति पूरकः Sy. एव BB.

३. त्वाम् Sy., BB.

४. हे मार्गस्य पालयितः ! Sy., BB.

५. युद्धे रथमिव Sy. उपरिष्टादुपचारत्वाद् उपमानार्थो नशब्दः BB.

६. अन्नस्य लाभाय Sy. धीर्विशेष्यते ।.... वाजोऽन्नं स सन्यते लभ्यतेऽस्यामिति । अधिकरणे क्तिनि BB.

७. कर्मार्थम् Sy.
कर्मणे कर्मसिद्ध्यर्थम् BB.

८. युञ्ज्महि । अस्मदभिमुखं कुर्मः Sy. योजयामः ।.... ईदृशकर्मसिद्ध्यर्थं त्वा योजयाम इति BB.
This stanza=TS. 1. 1. 14. 1.

९. हे पूषन् ! Sy.

१०. अभि प्राप्तुम्, नय प्रापय Sy.

११. रहितं P. नृभ्यो हितम् Sy.

१२. सुखं P. धनम् Sy.

१३. प्रेरकम् is suggested for प्रेरकान् ॥ दारिद्र्यस्य विशेषेणेरयितारं गमयितारम् Sy.

१४. दक्षिणान् D. The reading is incomplete. प्रयतदक्षिणं or दत्तदक्षिणम् is suggested for it.
पूर्वमन्येभ्योऽपि दत्तधनम् । यद्वा प्रयतं शुद्धं दक्षिणं धनं यस्य तादृशम् Sy.

१५. वननीयमेवंविधम् Sy.

१६. VM. ignores गृहपतिम् ॥ Sy. explains गृहपतिम् by गृहस्थम् ।

१७. भरद्वाजो गायत्र्या पूषणं स्तुत्वा पणेर्धनं ययाचे DDN.

१८. दातुमनिच्छन्तमपि पुरुषम् Sy., DDN.

१९. ०तं दी० D. आगतदीप्ते ! Sy., DDN. आघृणिरागतहृणिः N.5.9.

२०. दानायास्म० is suggested for दानास्म० ॥ अस्मद्दानार्थम् Sy., DDN.

२१. प्रेरय Sy., DDN.

२२. वणिजोऽपि वार्धुषिकस्य लुब्धस्यापि Sy., DDN.

अदि । मनः[1] । अद्रुकुरु[2] दानाय[3] ।

**वि प॒थो वाज॑सातये चिनु॒हि वि मृधो॑ जहि । साध॑न्तामुग्र नो॒ धियः॑ ॥ ४ ॥**

**वि पथः ।** विचिनुहि[4] । मार्गान् । अन्नलाभाय । विजहि[5] च शत्रून्[6] । साधयन्तु[7] । अस्माकम् । कर्माणि[8] । उद्गूर्ण[9] ! सिध्यन्तु वेति[10] ।

**परि॑ तृन्धि प॒णीना॒मार॑या॒ हृद॑या कवे । अथे॑म॒स्मभ्यं॑ रन्धय ॥ ५ ॥**

**परि तृन्धि ।** विलिख[11] । पणिनाम्[12] । अष्टया[13] । हृदयानि[14] । कवे[15] ! अथ[16] । पणान्[17] । अस्मभ्यम् । वशीकुरु[18][19] ।

**वि पू॑ष॒न्नार॑या तुद प॒णेरि॑च्छ हृ॒दि प्रि॒यम् । अथे॑म॒स्मभ्यं॑ रन्धय ॥ ६ ॥**

**वि पूषन्**[20] । पणेर्हृदयम्[21] । तवारया[22] । वितुद[23] । पणेर्हृदयम्[24] । यथा प्रीतं भवति । यथा[25] च कुरु[26] । अथेमिति गतम् ।

---

१. हृदयम् Sy.

२. मृद्रूकुरु is suggested for अद्रुकुरु ॥ दानार्थं मृद्रूकुरु Sy. दानार्थं मृदु कोमलं कुरु । 'अद्रा मनः' इति 'षष्ठं चाष्टाक्षरेऽक्षरम्' (RPR.8.39.) इति दीर्घः DDN.

३. VM. ignores वि ।

४. शोधितान् कुरु । यैः पथिभिर्गत्वा धनं लभेमहि तादृशान् पथः पृथक्कुर्वित्यर्थः Sy.

५. बाधस्व Sy.

६. बाधकान् तस्करादींश्च Sy.

७. सिध्यन्तु सफलानि भवन्तु Sy.

८. धियः कर्माणि अन्नलाभार्थं क्रियमाणानि Sy.

९. ०र्ण D. हे उद्गूर्णबल ! पूषन् ! Sy.

१०. सिध्यन्तु वा refers to साधयन्तु । therefore it should immediately follow साधयन्तु and precede अस्माकम् ।

११. परिविध्य । हृद्गतं काठिन्यमपनयेत्यर्थः Sy. DDN.

१२. पणिनाम् P. वणिजां लुब्धानाम् Sy. लुब्धकानां वार्धुषिकाणाम् DDN.

१३. अष्ट्रया P. सूक्ष्मलोहाग्रो दण्डः प्रतोद इत्यारेति चाख्यायते । तया Sy. सूक्ष्मलोहाग्रो दण्डः प्रतोद आरेति तया DDN.

१४. हृदयानि कठिनानि Sy., DDN.

१५. कंपे D. हे प्राज्ञ ! पूषन् ! Sy., DDN.

१६. अनन्तरम् Sy., DDN.

१७. पणीन् Sy., DDN.

१८. रध्यतिर्वशगमने N. 6.32.

१९. एवमादिभिर्बह्वीभिर्ऋग्भिर्भरद्वाजेन पणेर्मनः स्वयं गृ? (ग्र)हीतुमशक्तेन पूषा देवो याचित इति । अतः कः पणेर्मनो दानदं दाने वा कर्तुं प्रभवतीत्युक्तम् DDN.

२०. हे पूषन् ! Sy. २१. पणेर्वणिजो हृदयम् Sy.

२२. प्रतोदेन Sy. २३. विविध्य Sy.

२४. तस्य पणेर्हृदये Sy.

२५. तथा is suggested for यथा ॥ प्रियमस्मभ्यमनुकूलं धनमिच्छ । दातव्यमितीच्छां जनय । अथानन्तरमस्मभ्यमीमेनानृन्धय । वशीकुरु Sy.

२६. VM. ignores पूषन् and explains इच्छ by तथा च कुरु ।

**आ रिख किकिरा कृणु पणीनां हृदया कवे । अथेमस्मभ्यं रन्धय ॥ ७ ॥**

**आ रिख ।** आलिख । किकिरा च[1] कुरु, किकिरेति शब्दानुकरणम्, अपि वा विकीर्णानि[2] कुरु । अदातॄणाम्[3] । हृदयानि । कवे[4] !

**यां पूषन्ब्रह्मचोदनीमारां बिभर्ष्याघृणे । तया समस्य हृदयमा रिख किकिरा कृणु ॥ ८ ॥**

**यां पूषन् ।** याम् । पूषन् ! अन्नस्य[5] चोदयित्रीम् । आराम् । धारयसि[6] । आगतदीप्ते ! तया । सर्वस्य[7] । हृदयम् । आमारिखेति[8][9] ।

**या ते अष्ट्रा गोओपशाघृणे पशुसाधनी । तस्यास्ते सुम्नमीमहे ॥ ९ ॥**

**या ते ।** ओपशब्द[10] उपदमित्याहुः[11], उपदिश्यमाना गावो यस्या विद्यन्ते सा । या । तव[12] । अष्ट्रा[13] । पशुसाधनी[14] भवति । तस्याः[15] । तव स्वभूतायाः[16] । सुखा[17] । याचामहे[18] ।

**उत नो गोषणिं धियमश्वसां वाजसामुत । नृवत्कृणुहि वीतये ॥ १० ॥**

**उत नः ।** अपि च[19] । अस्माकम् । कर्म[20] । गवादेः[21] सम्भक्तृ । मनुष्यवत्[22] । आगत्य कुर्वन्ति[23] । अस्माकं गमनाय[24][25] ।

---

१. आलिख्य च कीर्णानि प्रशिथिलानि कृणु कुरु मृदूनि कुर्वित्यर्थः Sy.

२. The passage किकिरेति....विकीर्णानि should immediately follow किकिरा च and precede कुरु

३. वणिजाम् Sy.

४. हे कवे ! प्राज्ञ ! पूषन् ! Sy.

५. ब्रह्मणोऽन्नस्य प्रेरयित्रीम् Sy.

६. हस्ते धारयसि Sy.

७. सर्वस्य लुब्धजनस्य Sy.

८. आरि० is suggested for आमारि० ॥ आलिख Sy.

९. VM. has explained किकिरा and कृणु in the previous stanza. किकिराणि कीर्णानि प्रशिथिलानि च । कृणु कुरु Sy.

१०. उपशेरत इत्योपशाः । गाव ओपशा यस्यास्तादृशी Sy.

११. उपपद० is suggested for उपद० ।

१२. त्वदीया Sy. १३. आरा Sy.

१४. अत एव पशूनां साधयित्री Sy.

१५. तस्याः सम्बन्धि Sy.

१६. त्वदीयायाः Sy.

१७. सुखम् or सुखानि is suggested for सुखा ।

१८. VM. ignores आघृणे । हे आगतदीप्ते ! पूषन् ! Sy.

१९. हे पूषन् ! Sy.

२०. बुद्धिं कर्म वा Sy.

२१. आदि refers to अश्व and वाज । गोषणिं गवां सनित्रीम् । अश्वसाम् अश्वानां सनित्रीम् । वाजसां वाजानामन्नानां सनित्रीम् Sy.

२२. नृवतीं यद्वा नृणां वनित्रीं दात्रीमेवम्भूताम् Sy.

२३. कुर्वति D. कुरु is suggested for कुर्वन्ति ।

२४. खादनायोपभोगार्थम् Sy.

२५. VM. explains उत once only.

VI. 54.

**सं पूंषन्विदुषां नय यो अञ्जंसानुशासंति । य एवेदमिति ब्रवंत् ॥ १ ॥**

[1]**सं पूषन् ।** हे पूषन्[2] ! सन्नयास्मान्[3] । विदुषा[4] । यो विद्वान् अस्माकं नष्टं धनम् । अञ्जसा[5] । अनुशास्ति[6] । यः । एवम् । इदम्[7] । इति । नष्टं ब्रवीति[8] ।

**समुं पूष्णा गंमेमहि यो गृहाँ अंभिशासंति । इम एवेतिं च ब्रवंत् ॥ २ ॥**

**समु पूष्णा[9] ।** पूष्णा प्रणिता[10] । तेन[11] सङ्गच्छेमहि[12] । यो[13] नष्टानां गवाम् । गृहाणि[14] चोरस्वभूतानि । अभिशास्ति[15] । मे[16] गावः । एवं[17] च हृतम् । इति । च । ब्रवीति[18][19] ।

**पूष्णश्चक्रं न रिंष्यति न कोशोऽवं पद्यते । नो अंस्य व्यथते पविः ॥ ३ ॥**

**पूष्णः ।** पूष्णः[20] । आयुधम्[21] । न, रिष्यति[22], न न्यूनं भवति । न चास्य[23] । कोपः[24] । पताति[25] । नहि[26] । धारा । अस्य । व्यथते[27] ।

---

१. 'सं पूषन्' इति दशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं पौष्णं गायत्रम् । 'सं पूषन्' (KSA. 32.54. P. 23.) इत्यनुक्रान्तम् । नष्टधनमन्विच्छता पुरुषेणैतज्जप्यम् । सूत्रितञ्च—'सं पूषन् विदुषेति नष्टमधिजिगमिषन् मूळ्हो वा' (AGS. 3.7.9.) इति Sy.

२. हे पोषक ! देव ! Sy.

३. सङ्गमय Sy.

४. जानता तेन जनेन Sy.

५. ऋजुमार्गेण Sy.

६. नष्टद्रव्यप्राप्त्युपायमुपदिशति Sy.

७. भवदीयं धनम् Sy.

८. ब्रवीति नष्टं धनं दर्शयतीत्यर्थः । तेन विदुषेत्यन्वयः Sy.

९. समूष्णा D.

१०. पूष्णानुगृहीता वयम् Sy.

११. प्रहिताः is suggested for प्रणिता ।

१२. P. reads वन्ते for तेन ॥ जनेन Sy.

१३. जनः Sy.

१४. गृणानि P. येषु गृहेष्वस्मदीया नष्टाः पशवस्तिष्ठन्ति तान् गृहान् Sy.

१५. आभिमुख्येन बोधयति Sy.

१६. इमे is suggested for मे ॥ यद्वेमे त्वदीया नष्टाः पशवः Sy.

१७. एवं तिष्ठन्ति Sy.

१८. ब्रूयात् Sy.

१९. VM. ignores उ ।

२०. पूषः P.
पोषकस्य देवस्य Sy.

२१. ०धान् P.

२२. न रिष्यन्न रिष्यति D.
विनश्यति Sy.

२३. चक्रस्य Sy.

२४. को....व D. कोशः is suggested for कोपः ।

२५. पतति is suggested for पताति ॥ हीयते Sy.

२६. नैव Sy.

२७. कुण्ठीभवति । तेन चक्रेण चोरान् हत्वास्मदीयं धनं प्रकाशयेति भावः Sy.

**आ रिख किकिरा कृणु पणीनां हृदया कवे । अथेमस्मभ्यं रन्धय ॥ ७ ॥**

**आ रिख ।** आलिख । किकिरा च[1] कुरु, किकिरेति शब्दानुकरणम्, अपि वा विकीर्णानि[2] कुरु । अदातॄणाम्[3] । हृदयानि । कवे[4] !

**यां पूषन्ब्रह्मचोदनीमारां बिभर्ष्याघृणे । तया समस्य हृदयमा रिख किकिरा कृणु ॥ ८ ॥**

**यां पूषन् ।** याम् । पूषन् ! अन्नस्य[5] चोदयित्रीम् । आराम् । धारयसि[6] । आगतदीप्ते ! तया । सर्वस्य[7] । हृदयम् । आमारिखेति[8] ।[9]

**या ते अष्ट्रा गोओपशाघृणे पशुसाधनी । तस्यास्ते सुम्नमीमहे ॥ ९ ॥**

**या ते ।** ओपशब्द[10] उपदमित्याहुः[11], उपदिश्यमाना गावो यस्या विशन्ते सा । या । तव[12] ! अष्ट्रा[13] । पशुसाधनी[14] भवति । तस्याः[15] । तव स्वभूतायाः[16] । सुखा[17] । याचामहे[18] ।

**उत नो गोषणिं धियमश्वसां वाजसामुत । नृवत्कृणुहि वीतये ॥ १० ॥**

**उत नः ।** अपि च[19] । अस्माकम् । कर्म[20] । गवादेः[21] सम्भक्तृ । मनुष्यवत्[22] । आगत्य कुर्वन्ति[23] । अस्माकं गमनाय[24][25] ।

---

१. आलिख्य च कीर्णानि प्रशिथिलानि कृणु कुरु मृदूनि कुर्वित्यर्थः Sy.

२. The passage किकिरेति....विकीर्णानि should immediately follow किकिरा च and precede कुरु

३. वणिजाम् Sy.

४. हे कवे ! प्राज्ञ ! पूषन् ! Sy.

५. ब्रह्मणोऽन्नस्य प्रेरयित्रीम् Sy.

६. हस्ते धारयसि Sy.

७. सर्वस्य लुब्धजनस्य Sy.

८. आरि० is suggested for आमारि० ॥ आलिख Sy.

९. VM. has explained किकिरा and कृणु in the previous stanza. किकिराणि कीर्णानि प्रशिथिलानि च । कृणु कुरु Sy.

१०. उपशेरत इत्योपशाः । गाव ओपशा यस्यास्ताहृशी Sy.

११. उपपद० is suggested for उपद० ।

१२. त्वदीया Sy. १३. आरा Sy.

१४. अत एव पशूनां साधयित्री Sy.

१५. तस्याः सम्बन्धि Sy.

१६. त्वदीयायाः Sy.

१७. सुखम् or सुखानि is suggested for सुखा ।

१८. VM. ignores आघृणे । हे आगतदीप्ते ! पूषन् ! Sy.

१९. हे पूषन् ! Sy.

२०. बुद्धिं कर्म वा Sy.

२१. आदि refers to अश्व and वाज । गोषणिं गवां सनित्रीम् । अश्वसाम् अश्वानां सनित्रीम् । वाजसां वाजानामन्नानां सनित्रीम् Sy.

२२. नृवतीं यद्वा नृणां वनित्रीं दात्रीमेवम्भूताम् Sy.

२३. कुर्वति D. कुरु is suggested for कुर्वन्ति ।

२४. खादनायोपभोगार्थम् Sy.

२५. VM. explains उत once only.

## VI. 54.

**सं पूषन्विदुषा नय यो अञ्जसानुशास्ति । य एवेदमिति ब्रवत् ॥ १ ॥**

**सं पूषन्**[1] । हे पूषन्[2] ! सन्नयास्मान्[3] । विदुषा[4] । यो विद्वान् अस्मभ्यं नष्टं धनम् । अञ्जसा[5] । अनुशास्ति[6] । यः । एवम्[7] । इदम् । इति । नष्टं ब्रवीति[8] ।

**समु पूष्णा गमेमहि यो गृहाँ अभिशासति । इम एवेति च ब्रवत् ॥ २ ॥**

**समु पूष्णा**[9] । पूष्णा[10] प्रणिता[11] । तेन[12] सङ्गच्छेमहि । यो[13] नष्टानां गवाम् । गृहाणि[14] चोरस्वभूतानि । अभिशास्ति[15] । मे[16] गावः । एवं च[17] हृतम् । इति । च । ब्रवीति[18] [19] ।

**पूष्णश्चक्रं न रिष्यति न कोशोऽव पद्यते । नो अस्य व्यथते पविः ॥ ३ ॥**

**पूष्णः** । पूष्णः[20] । आयुधम्[21] । न, रिष्यति[22], न न्यूनं भवति । न चास्य[23] । कोपः[24] । पताति[25] । पविः[26] । धारा । अस्य । व्यथते[27] ।

---

१. 'सं पूषन्' इति दशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं पौष्णं गायत्रम् । 'सं पूषन्' (KSA. 32.54. P. 23.) इत्यनुक्रान्तम् । नष्टधनमन्विच्छता पुरुषेणैतज्जप्यम् । सूत्रितञ्च—'सं पूषन् विदुषेति नष्टमधिजिगमिषन् मूळ्हो वा' (AGS. 3.7.9.) इति Sy.

२. हे पोषक ! देव ! Sy.

३. सङ्गमय Sy.

४. जानता तेन जनेन Sy.

५. ऋजुमार्गेण Sy.

६. नष्टद्रव्यप्राप्त्युपायमुपदिशति Sy.

७. भवदीयं धनम् Sy.

८. ब्रवीति नष्टं धनं दर्शयतीत्यर्थः । तेन विदुषेत्यन्वयः Sy.

९. समूष्णा D.

१०. पूष्णानुगृहीता वयम् Sy.

११. प्रहिताः is suggested for प्रणिता ।

१२. P. reads वन्ते for तेन ॥ जनेन Sy.

१३. जनः Sy.

१४. गृणानि P. येषु गृहेष्वस्मदीया नष्टाः पशवस्तिष्ठन्ति तान् गृहान् Sy.

१५. आभिमुख्येन बोधयति Sy.

१६. इमे is suggested for मे ॥ यद्यत्वेमे त्वदीया नष्टाः पशवः Sy.

१७. एवं तिष्ठन्ति Sy.

१८. ब्रूयात् Sy.

१९. VM. ignores च ।

२०. पूषः P.
पोषकस्य देवस्य Sy.

२१. ०धान् P.

२२. न रिष्यन्न रिष्यति D.
विनश्यति Sy.

२३. चक्रस्य Sy.

२४. को....व D. कोशः is suggested for कोपः ।

२५. पतति is suggested for पताति ॥ हीयते Sy.

२६. नैव Sy.

२७. कुण्ठीभवति । तेन चक्रेण चोरान् हत्वास्मदीयं धनं प्रकाशयेति भावः Sy.

**यो अस्मै हविषाविधन्न तं पूषापि मृष्यते । प्रथमो विन्दते वसु ॥ ४ ॥**

**यो अस्मै ।**[1] यः[2] । पुरुषः । हविषा[3] । उपचरणं[4] करोति । न । तम्[5] । पूषा । अपि[6] । मृष्यति[7] स्तेन

इन्धनमाहृत्य दृष्ट्वा स्वयमेवाभ्यमूर्यात । स सर्वस्मात् प्रागेव[8] । लभते । धनम् ।

उत्तरा निगदसिद्धा ।

**पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजं सनोतु नः ॥ ५ ॥**

[पूषा गाः ।][9]

**पूषन्ननु प्र गा इहि यजमानस्य सुन्वतः । अस्माकं स्तुवतामुत ॥ ६ ॥**

**पूषन्ननु ।** पूषन्[10] ! अनुप्रयच्छ[11] । पशून् । सुन्वतः[12] । यजमानस्य रक्षार्थम् । अपि च । अस्माकम्[13] । सुन्वताम्[14] ।

**माकिर्नेशन्माकीं रिषन्माकीं सं शारि केवटे । अथारिष्टाभिरा गहि ॥ ७ ॥**

**माकिः ।**[15] मा[16] काचित्[17] । नपश्यतु[18] गौः[19] । मा च काञ्चन[17] वृकः[20] । हिनस्तु[21] । मा च काञ्चित्[22] चोरः[23][24] ।

---

१. अनस्मे D.

२. यजमानः Sy.

३. चरुपुरोडाशादिना Sy.

४. ०षावच० D. परिचरति Sy.

५. यजमानम् Sy.

६. ०वि P. अपिशब्द ईषदर्थे । ईषदपि Sy.

७. हिनस्ति Sy.

८. स च मुख्यः सन् Sy.

९. The *pratīka* is supplied by the Editor. VM. does not explain this stanza. Sy. explains it in the following manner:— पूषा पोषको देवो नोऽस्मदीया गा अन्वेतु । रक्षणार्थमनुगच्छतु । स च पूषार्वतोऽश्वान्रक्षतु चोरेभ्यः । तथा वाजमन्नं च नो अस्मभ्यं पूषा सनोतु । प्रयच्छतु ।

१०. हे पूषन् ! Sy.

११. रक्षणार्थमनुगच्छ Sy.

१२. सोमाभिषवं कुर्वतः Sy.

१३. अस्माकं गाश्चानुच्छ Sy.

१४. स्तुतां P. त्वद्विषयं स्तोत्रं कुर्वताम् Sy.

१५. नकि P. ०कि D.

१६. हे पूषन् ! अस्मदीयं गोधनम् Sy.

१७. मा । माकिर्माकीमित्येतौ प्रतिषेधमात्रे वर्तेते Sy.

१८. नश्यतु is suggested for नपश्यतु ।

१९. नौः P.

२०. क्ता D.

२१. व्याघ्रादिभिः Sy.

२२. हिंस्यात् Sy.

२३. कं P.

२४. चोर D.

केवट[1] इति[2] रूपनाम[3] तत्र । संशीर्णं[4] करोतु । तथा कृत्वा[5] । अरिष्टाभिस्ताभिः[6] । सायम्[7] । आगच्छ ।

**शृण्वन्तं पूषणं वयमिर्यमनष्टवेदसम् । ईशानं राय ईमहे ॥ ८ ॥**

**शृण्वन्तम्** । शृण्वन्तम्[8] । पूषणम्[9] । वयम् । प्रेरम्[10] । अनष्टधनम्[11] । ईशानम्[12] । धनम्[13] । याचामहे ।

**पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्त इह स्मसि ॥ ९ ॥**

**पूषन्**[14] । पूषन्[15] । तव[16] । कर्मणि[17] । वयम् । न । हिंसिताः । भवेम[18] कदाचिदपि[19] । स्तोतारः[20] ।
तव वयम्[21] । इह[22] निवासे गृहम् । भवामः[23] ।[24]

**परि पूषा परस्ताद्धस्तं दधातु दक्षिणम् । पुनर्नो नष्टमाजतु ॥ १० ॥**

**परि पूषा** । गवां गच्छन्तीमग्रतः[25] । पूषा[26] । दक्षिणम्[27] । हस्तम्[27] । परिदधातु[28] [illegible]

---

१. केवाव P.
२. केवभव (पौताद्भूचः पृथिव्यजायत इति ब्राह्मण-मागतह्लीदीप्ते वामवांसं सचावहै संसृष्टो भवा भनेत यज्ञस्यास्माकं भव रथितमं अतिशयेन रथिनं चूडा कपर्द उच्यते तद्वन्तमीशानं धनस्य महतो धनानि सखायं याचामहे रायः धनस्य दाता त्वमस्या घृणे) इति D. The additional passage in D. has a striking resemblance with the commentary on RV. VI. 55. 1, 2, 3.
३. कूप० is suggested for रूप० । Ngh. 3. 23. कूपे Sy.
४. संशीर्णं भूत् । कूपपातेनापि हिंसितं मा भवतु Sy. ५. एवं सति Sy.
६. ०शिष्टा० P. अहिंसिताभिर्गोभिः सह Sy.
७. सायङ्काले Sy.
८. अस्मत्स्तोत्राणि शृण्वन्तम् Sy.
९. देवम् Sy.
१०. प्रेरकम् is suggested for प्रेरम् ॥ दारिद्र्यस्य प्रेरकम् Sy. ११. अविनष्टधनम् Sy.
१२. सर्वस्येश्वरमेवंविधम् Sy. १३. धनानि Sy.
१४. चातुर्मास्येषु वैश्वदेवे पर्वणि पौष्णस्य हविषः 'पूषन्तव व्रते' इत्येषानुवाक्या । सूत्रितञ्च— 'वाममद्य सवितर्वाममु श्वः पूषन्तव व्रते वयम्' (ĀSS. 2.16.) इति Sy.
१५. पूर्वन् P. हे पोषक ! देव ! Sy. हे पूषन् ! Mah. १६. त्वदीये Sy.
१७. कर्मणि वर्तमानाः Sy., Mah., U.
१८. धनेम P. हिंसिता न भवेम Sy. न विनश्येम Mah., U. १९. वि० P.
२०. स्तोरः P. स्तुतिकर्तारः Mah. स्तोतारोऽपि U.
२१. तादृशाश्च वयम् Sy.
२२. अस्मिन् कर्मणि Sy. इह कर्मणि Mah.
२३. स्मः 'इदन्तो मसि' इतीकार उपजनः Sy. भवामः Mah.
२४. VM. ignores कदा and चन ॥ कदाचिदपि Sy. कदापि Mah. कदाचिदपि U. This stanza=YV. 34. 41. For SB. (13. 4. 1. 15. p. 980). see RV. VI. 49. 8.
२५. गच्छन्तीनाम् is suggested for गच्छन्तीम् ॥ परस्तात्—परस्मिन् देशे सुसञ्चारादन्यस्मिन् चोरव्याघ्रादिभिरुषिते देशे गच्छतो गोधनस्य निवारणाय Sy.
२६. पोषको देवः Sy.
२७. स्वकीयं दक्षिणं हस्तम् Sy.
२८. परिधानं निवारकं करोतु Sy.

पतिम् । स्तोम् । उषसः । जारः । शृणोतु । अस्मान् । इन्द्रस्य । भ्राता । मम च । सखेति ।

१. पतिं पूषणम् Sy. स एव धारयिता रोद्धा तं मातुर्दीधिवुं धारयितारम् Dur. धारयितारं स्वोदयेन विरोद्धारमित्यर्थः SKN.

२. स्तौमि is suggested for स्तोम् ॥ अहमब्रवम् । उक्तवानस्मि यन्मेऽभिप्रेतम् Dur. ब्रवीम्यहं यद्विवक्षितम् SKN.

३. अस्मिन्मन्त्रे स्वसृशब्देन मन्त्रदृगुषसमाह । केन पुनः सामान्येनेति ? उच्यते, 'साहचर्याद्वा रसहरणाद्वा' भ्राता स्वस्रा साकं बाल्ये नित्यमेव चरति । तथा चोषसा साकमादित्य इत्येतत् सामान्यम् ।....रसहरणाद्वा उषाः स्वसाऽस्यादित्यस्य । भ्रातृस्वस्रोः सह भोजनाभिप्रायं सामान्यम् Dur. एकतो रात्रेर्जातत्वादादित्यस्य स्वसोषाः । भ्राता भगिन्याः सहचारी भवति । तदीयानां च क्रीडनकानामपहर्ता बाल्ये । आदित्यश्चोषसां सहचारी, तदीयानाञ्च रसानामवश्यायानां शोषणेनापहर्ता । अतः साहचर्यसामान्यात्तदीयरसापहरणसामान्याच्चोषा अस्य स्वसोच्यते SKN.

४. पूषा Sy. आदित्यो हि पूषा । 'अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति' (N.12.16.) इति हि वक्ष्यति । तस्मात् पौष्णे एतस्मिन् मन्त्रे जारत्वमेतदादित्यस्य दर्शितम् ।....अथादित्योऽपि मनुष्यजारः । पारजायिक इत्यपिशब्दः । अयमेवास्मिन् मन्त्रे "उदीरय पितरा जार आ भगम्" (RV.X.11.6[a].) इत्यभिप्रेतो मन्त्रदृशः । नैरुक्तानां वा स्यात् । 'तथा' पुनः सति 'स्त्रीभगः' एव स्यात् । भगः 'भजतेः' सेवनार्थस्य । स हि सेव्यते मैथुनार्थिभिः पुरुषैः । जारो मनुष्यः, स हि परकीयां स्त्रियं भोगेन सार्वाङ्गिकेण निर्दयो भूत्वा जरयति विपरिणामयति म्लानरूपां करोति न तथा निजो भर्ता । तं च दृष्ट्वा तद्दर्शनेनैवोदीरित एव यथा स्त्रियो भग उपस्थः पुरुषशिश्नसम्प्रयोगोत्कण्ठतयाऽऽर्द्रीभवति तथैवमरणियोक्त्रादिहस्तानस्मान् युष्मन्निमन्थिषून् दृष्ट्वोदीरय त्वमात्मानं हे भगवन्नग्ने ! इत्येवं योज्यं जारशब्दे मनुष्यविषये सति Dur.
स च मयोच्यमानः....तस्या जरयिता । तदुदये हि सा जीर्यति, अतस्तस्या जारः SKN.

५. स पुनः किं करोतु ? यच्च पूर्वमहमब्रवं तच्च साधयतु । साम्प्रतं च यद् ब्रूमस्तच्च शृणोतु । ....श्रुत्वा च तदपि साधयत्वित्यभिप्रायः Dur.

६. अस्माकं स्तोत्राणि Sy.

७. मध्यमस्य चेन्द्रस्य Dur. उभयोरिन्द्रादित्ययोरेव SKN.

८. सहजातः पूषा Sy. यतः स य एवं मम समानख्यानः, अतः....भ्राता, उदकभागहर्ता । अथवा मध्यमस्यैवोदकेन भर्तव्यः । तेन ह्यसौ दीप्यते Dur.
कस्मात् कारणात् ? मनोर्जातत्वाद् भरणाद्वा । स हि रसान्मध्यमस्य रश्मिभिरादाय तैस्तं बिभर्त्ति SKN.

९. स्तोतुः Sy.

१०. मित्रभूतोऽस्तु Sy. स एव चादित्यः.... सखा समानख्यानः । यथैवाहमेतस्मिन् यज्ञे जगदनुग्राहके कर्मणि अभिप्रवृत्तः । एवमसावपि तापप्रकाशपाकरसादानवर्षादिलक्षणे कर्मणि जगदनुग्राहकेऽभिप्रवृत्तः । इत्येतस्मादावयोः समानख्यानत्वम् Dur. स्तुत्यस्तोतृत्वलक्षणेन सखीभूतः SKN.

११. यद्यपि पौष्णे सूक्ते पठ्यमानत्वात्पौष्णीयमृक् । तथाप्यादित्य एवोत्तरावस्थः पूषा न वस्त्वन्तरमित्यविरोधः SKN. उषसमस्य स्वसारमाह साहचर्यात् । रसहरणाद्वा । अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात् । स्त्रीभगस्तथा स्याद् भजतेः N. 3. 16., SKN. II. 173.

**आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् । देवं वहन्तु बिभ्रतः ॥ ६ ॥**

**आजासः ।** आवहन्तु[1] । अजाः[2] । पूषणम्[3] । रथे[4] । 'निश्रथ्य हारिणः' इति यास्कः[5] । ते[6] । जातश्रियम्[7] । देवम्[8] । वहन्तु[9] । धारयन्तः[10] ।[11][12]

VI.56.

**य एनमादिदेशति करम्भादिति पूषणम् । न तेन देव आदिशे ॥ १ ॥**

**य एनम् ।**[13] यः[14] । एनम् । पूषणम्[15] । सम्प्रदानत्वनादिशति[16] । करम्भस्यात्ता[17] । इ[18] । न । तेनान्यः[19] । देवः । आदेष्टव्यो[20] भवति धनप्रदानाय ।

**उत घा स रथीतमः सख्या सत्पतिर्युजा । इन्द्रो वृत्राणि जिघ्नते ॥ २ ॥**

**उत घा ।** अपि च । खलु । सः[21] । अतिशयेन रथी[22] । सख्या[23] । सतां पतिः[24] ।

---

१. भरद्वाजस्यार्षम् Dur., SKN.

२. आनयन्तु Sy. आकारो वहन्त्वित्यनेन सम्बध्यते SKN.

३. छागाः Sy. अजा अश्वाः Dur. पूष्णोऽश्वाः SKN.

४. रथेऽवस्थितम् Dur. तृतीयार्थ एषा सप्तमी । रथेन SKN.

५. नित्थ्य P. निश्रथ्य सम्बध्य हर्तारः Sy. एवमत्र समानविभक्त्यन्तत्वादजास इत्यनेन 'निशृम्भाः' इत्येतदश्वविशेषणम् । सति चाश्वविशेषणत्वे 'निश्रथ्य हारिणः' शीघ्रहारिणः । तस्याभीष्टत्वादागमनस्य Dur. निशृम्भाः शीघ्रगामिन इत्यर्थः SKN.

६. निशृम्भा निश्रथ्यहारिणः N.6.4.

७. पूष्णो वाहनतया प्रसिद्धाश्छागाः Sy. य एवंलक्षणा अश्वास्ते Dur. तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । ये SKN.

८. जाहश्रि० P. जनं स्तोतृसङ्घं श्रयति गच्छतीति जनश्रीः । तम् Sy. उद्भूतश्रियमित्यर्थः Dur. कीदृशं पूषणम् ? उच्यते, जनश्रियं दीप्तमित्यर्थः SKN.

९. दानादिगुणम् SKN.

१०. आवहन्तु Dur. आवहन्तु, अस्मान्प्रति SKN.

११. धारयमाणाः Dur. सम्यग्धारयन्तः SKN.

१२. आवहन्त्वजाः पूषणं रथे । निश्रथ्यहारिणस्ते । जनश्रियं जातश्रियम् N. 6.4., SKN. II. 398.

१३. 'य एनम्' इति षडृचं सप्तमं सूक्तं भरद्वाजस्यार्षं पौष्णम् । अन्त्यानुष्टुबादौ पञ्च गायत्र्यः । तथा चानुक्रान्तम्—'य एनमन्त्यानुष्टुप्' (KSA. 32. 56. P. 23.) इति । गतो विनियोगः Sy.

१४. स्तोता Sy.

१५. पोषकम् Sy.

१६. ०दानत्वेनादि० is suggested for ०दानंत्वनादि० ॥ अभिष्टौति Sy.

१७. करम्भाणां घृतमिश्राणां यवसक्तानामत्ता Sy.

१८. ०करंभः स्यात्ते D. इति is suggested for इ Sy.

१९. पुरुषेणान्यः Sy.

२०. आदेष्टव्यः स्तोतव्यो भवति । पूष्ण एव सर्वस्याभिमतस्य धनस्य लाभात् देवतान्तरं न स्तौतीत्यर्थः Sy.

२१. शत्रूणां हन्तृत्वेन प्रसिद्धस्तादृशः Sy.

२२. अतिशयेन रथी महारथः Sy.

२३. मित्रभूतेन पूष्णा Sy.

२४. सतां पालयिता Sy.

सहायेन पूष्णा[2] । असुरान्[3] । अत्यन्तं हन्ति[4] ।

उताद: प॑रुषे ग॒वि सूर॑श्च॒क्रं हि॑र॒ण्यय॑म् । न्यै॑रयद्र॒थीत॑म: ॥ ३ ॥

उताद:[6] । अपि च[7] । तत्[8] । पर्वति[9] । आदित्ये[10] । सूर्य:[11] पूषा[12] । चक्रम्[13] । हिरण्यमयम्[14] । नितरामीरयति[15] । रथीतम:[16] [17]

---

१. ०ये P. सहायभूतेन युक्तः सन् Sy.

२. पूषः P. पूष्णा is suggested for पूष्णः ।

३. शत्रून् Sy.

४. हन्ति । इन्द्रस्याप्ययमेव साहाय्यकारीत्यर्थः Sy.

५. VM. ignores इन्द्रः ।

६. भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्यार्षम् । SKN.

७. 'उत अपि अथ' इति छन्दसि समानार्थाः । अपि चक्रमीरयति, अपि रसानादत्ते, अपि तमांस्यपहन्ति Dur.
उतोऽप्यर्थे SKN.

८. तत् Sy. अमुष्मिन्नादित्यमण्डले Dur. अद इत्यपि द्वितीया सप्तम्यर्थे । अप्यमुष्मिन् SKN.

९. पर्ववति is suggested for पर्वति ॥ परुष्मति पर्ववति भास्वति वा Sy. पर्वभिस्तद्वति, अथवा भास्वति भासा तद्वतीति, अहोरात्रादिपर्व तद्वति, इत्यौपमन्यवः Dur. स्वैरवयवैः पर्वभिः कालपर्वभ्यां वा तच्छुताभ्यामहोरात्राभ्यां वा पर्ववति भास्वरे वा SKN.

१०. गच्छतीति गौरादित्यः । तस्मिन् Sy. गमनशीले मुहूर्तमप्यनवस्थायिनि Dur. गन्तर्यादित्यमण्डले स्थित इत्यर्थः SKN.

११. प्रेरकः Sy. सूर्योऽवस्थितः Dur. कोऽसौ ? सूरो धर्ता SKN.

१२. पूषा पुनरादित्यो नैरुक्तानां दृष्टया । अन्यत्र 'इयं वै पूषा' इति भूमिरुच्यते, . . . . पूषाऽऽदित्यमण्डलान्तः पुरुषः । तदेव पर्ववद् भास्वद्वा Dur.

१३. रथस्य चक्रम् Sy. चकनं क्रमणं वा गमनशीलं मण्डलम् Dur. चक्राकृतिदेवादित्यमण्डलम् SKN.

१४. सुवर्णनिर्मितम् Sy. तेजोमयं चक्रं चक्राकृति Dur. हिरण्ययमुज्ज्वलवर्णत्वात् । हिरण्मयमेव वा SKN.

१५. नितरां प्रेरयति स्म Sy. नियतगमनवृत्तिना मार्गेण नित्यकालमीरयति । उदयास्तमयमध्यन्दिनकालोपलक्षणार्थम् । अथवा अमुष्मिन् मण्डलेऽवस्थितः पर्ववति मण्डलान्तः पुरुषः सूर्यो भगवान्, चक्रं लवक्षणनिमेषघटिमुहूर्ताहोरात्रार्द्धमासमासर्त्वयनवत्सरलक्षणं कालचक्रं सर्वभूतहारि हिरण्ययं हिरण्मयं सर्वभूतविनाशस्थितिहेतुं न्यैरयन्नित्यमीरयति Dur. नियतमुदयास्तमयाय प्रैरयत् SKN.

१६. अतिशयेन रथी नेतृतमो वा Sy. कीदृशः पुनः स सूर्य ईरयति ? रथीतमः । अन्येऽपि रथिनः सन्ति । अयन्तु मुहूर्तमप्यनवस्थितरथ इत्यतो रथीतमः । य एवङ्गुणयुक्तः पूषा तं वयमभिप्रेतार्थसिद्धये स्तुमः Dur.
अन्येऽपि रथिनः सन्ति । अयन्तु मुहूर्तमप्यनवस्थितरथ इत्यतो रथीतमः । अतिशयेन रथीत्यर्थः SKN.

१७. अथवा ब्राह्मणचक्रमिति दर्शनाच्चक्रशब्दः समूहवचनः । तच्चात्र सामर्थ्यादुदकस्याह न यस्य कस्यचित् । उदकसमूहं पृथिवीतो रश्मिभिरात्मानमुज्ज्वलन्तं प्रति प्रेरयति भौमान् रसानादत्त इत्यर्थः । अथवा हिरण्ययशब्देनोदकमुच्यते 'हिरण्यदा ददत्यन्नमस्मै' (RV. II. 35.10d.)इति मन्त्रान्तरे दर्शनादुदकात्मकं चक्रमित्यर्थः SKN. आदित्योऽपि गौरुच्यते । 'उतादः परुषे गवि' पर्ववति भास्वतीत्यौपमन्यवः N. 2.6., SKN. II.50.

**यदुद्य त्वा पुरुष्टुत ब्रवाम दस्र मन्तुमः । तत्सु नो मन्म साधय ॥ ४ ॥**

**यदद्य** । यत्[1] । अद्य[2] । द्वा[3] । बहुभि स्तुत[4] । ब्रवाम[5] । दर्शनीय । ज्ञानवन्[6] । तत् । सुष्ठु[7] । साधय[8] । अस्माकम् । स्तोत्रं[9] मदीय वा धनम् ।

**इमं च नो गवेषणं सातये सीषधो गणम् । आरात्पूषन्नसि श्रुतः ॥ ५ ॥**

**इमं च** । इमम् । च । अस्माकम् । गवामेषितारम्[10] । दानाय[11] । मनुष्यगणम्[12] । दूरादेव[13] त्वम् । भवसि । पूषं[14] । विश्रुतः[15] ।[16]

**आ ते स्वस्तिमीमह आरेअघामुपावसुम् । अद्या च सर्वतातये श्वश्च सर्वतातये ॥ ६ ॥**

**आ ते स्वस्तिम्**[17] । आयाचामहे[18] । स्वस्तिम्[19] । त्वदीयाम्[20] । दूरेपापाम्[21] । सन्निकृष्टधनाम्[22] । अद्य[23] । च । श्वः[24] । च । सर्वस्य धनस्य[25] विस्तारय[26] ।[27]

---

१. यद् उद्दिश्य Sy.

२. इदानीम् Sy.

३. त्वा is suggested for द्वा ॥ त्वाम् Sy.

४. हे बहुभिर्यजमानैः स्तुत ! Sy.

५. ब्रु० D. स्तवाम Sy.

६. ज्ञानवन् ! पूषन् ! Sy.

७. सुष्ठुधि D.

८. उत्पादय Sy.

९. मन्म मननीयं तद्धनम् Sy.

१०. गवामेषयितारम् Sy.

११. लाभाय Sy.

१२. मनुष्यसङ्घम् Sy.

१३. दूरदेशेऽपि Sy.

१४. पूषन् is suggested for पूषं ॥

१५. ०तं D. प्रख्यातः Sy.

१६. VM. ignores सीषधः ॥ सीषधः साधय Sy.

१७. हे पूषन् ! Sy.

१८. अभियाचामहे Sy.

१९. P. adds ते before स्वस्तिम् ॥ कल्याणीं रक्षाम् Sy.

२०. ०या D. त्वया देयाम् Sy.

२१. दूरेवचा P. दूरेऽघं पापं यस्यास्तादृशीम् Sy.

२२. सन्नकृ० P. उपगतधनाम् Sy.

२३. ईदृशीं स्वस्तिमस्मिंश्च काले Sy.

२४. परस्मिन्नपि दिने Sy.

२५. Omitted by P.

२६. विस्ताराय is suggested for विस्तारय ॥ सर्वैर्ऋत्विग्भिस्तायत इति सर्वतातिर्यज्ञः । तदर्थम् । यद्वा सर्वेषां भोगानां विस्ताराय सर्वदा सर्वतात्यर्थम् Sy.

२७. VM. explains सर्वतातये once only.

VI.57.

इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये ॥ १ ॥

इन्द्रा[1] नु[2] । इन्द्रापूषणौ[3] । क्षिप्रम्[4] । वयम्[5] । सख्याय[6] । अविनाशाय[7] । ह्वयामहे[8] । अन्नलाभाय[9] च ।

सोममन्य उपासदत्पातवे चम्वोः सुतम् । करम्भमन्य इच्छति ॥ २ ॥

सोमम् । सोमम् । एकम्[10] । उपासीदद् इन्द्रः[11] । पातुम् । अधिषवणफलकयोः । अभिषुतम् । करम्भम्[12] । पूषा[13] । इच्छति ।

अजा अन्यस्य वह्नयो हरी अन्यस्य संभृता । ताभ्यां वृत्राणि जिघ्नते ॥ ३ ॥

[अजाः][14] । अजाः[15] । पूष्णः । हरी[16] । इन्द्रस्य[17] । सम्भृतौ[18] । स[19] ताभ्याम् । शत्रून् । हन्ति[20] ।

---

१. 'इन्द्रा नु पूषणा' इति षडृचमष्टमं सूक्तं भरद्वाजस्यार्षं गायत्रमैन्द्रापौष्णम् । अनुक्रान्तञ्च —'इन्द्रा त्वैन्द्रं च' (KSA. 32.57. P. 23.) इति । गतो विनियोगः Sy.

२. नुः D. भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्य SKN.

३. इतरेतरयोगादिन्द्रपूषञ्छब्दयोरुभयत्र द्विवचनम् । इन्द्रापूषणौ देवौ Sy. हे इन्द्रापूष्णौ ! Dur. इन्द्रशब्देन पूषा पूषञ्शब्देन चेन्द्रः । कुतः ? द्विवचनस्थानादिकारश्रुतेश्छान्दसत्वाद्विरूपैकशेषो द्रष्टव्यः। इन्द्रापूषणौ युवाम् SKN.

४. अद्य Sy. नु इति क्षिप्रनाम । क्षिप्रम् SKN.

५. वयं नित्यं यज्ञेष्विदमाशास्मह इति Dur.

६. सखित्वाय Sy. समानख्यानाय Dur. सख्याय स्तुत्यस्तोतृत्वलक्षणाय SKN.

७. ०या P. शोभनाय Sy. स्वस्त्ययनाय च Dur.

८. आह्वयाम । स्तवाम Sy. आह्वयामहे युवाम् Dur. नित्यमाह्वयेमेत्याशास्महे SKN.

९. वाजस्यान्नस्य बलस्य वा सातये सम्भजनाय च Sy. अन्नसननाय च Dur. वाजमन्नं सातिः सम्भजनम् । अन्नसम्भजनाय चात्मनो युवयोर्वा SKN. N. 7.10., SKN. III. 57.

१०. एयकम् P. एकः is suggested for एकम् ॥ अनयोरेकतर इन्द्रः Sy.

११. उपसीदति । उपगच्छति Sy.

१२. घृतसिक्तं सक्त्वात्मकं हविर्भक्षयितुम् Sy.

१३. एकतरः पूषा Sy.

१४. The *pratīka* is supplied by the Editor.

१५. आजाः P. छागाः Sy.

१६. एतत्संज्ञावश्वौ वाहकौ Sy.

१७. अपरस्येन्द्रस्य Sy.

१८. सम्यक् पुष्टौ Sy.

१९. स चेन्द्रः Sy.

२०. VM. ignores वह्नयः ॥ अनयोरन्द्रापूष्णोर्वह्नयो वाहका अश्वाः Sy.

यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः । तत्र पूषाभवत्सचा ॥ ४ ॥

यदिन्द्रः । यदा । इन्द्रः । नयति[1] । गच्छन्तीः[2] । महतीः । अपः[3] । वर्षितृतमः[4] । तु[5] । पूषा[6] । भवति । स[7] सहायः ।

तां पूष्णः सुमतिं वयं वृक्षस्य प्र वयामिव । इन्द्रस्य चा रभामहे ॥ ५ ॥

तां पूष्णः । ताम्[8] । पूष्णः[9] स्वभूताम् । सुमतिम्[10] । वयम् । वृक्षस्य[11] । शाखामिव[12] । प्रकर्षेण आश्रयामः[13] । इन्द्रस्य । च ।

उत्पूषणं युवामहेऽभीशूँरिव सारथिः । मह्या इन्द्रं स्वस्तये ॥ ६ ॥

उत् पूषणम् । पूषणं[14] वयम् । उद्युवामहे[15] अभिमुखमानयनमुद्यवः । अभीशूनिव[16] । सारथिः । महते[17] । अविनाशाय[18] । इन्द्रं[19] च ।

VI.58.

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ १ ॥

शुक्रम्[20] । [21]शुक्रम्[22] । ते[23] ।

---

१. इमं लोकं प्रापयति Sy.
२. गन्त्रीः Sy.  ३. वृष्ट्युदकानि Sy.
४. अतिशयेन वर्षिता Sy.
५. तत्र is suggested for तु ॥ तत्र तदानीम् Sy.  ६. पोषको देवः Sy.
७. सहसा यः P. स seems to be redundant. अस्येन्द्रस्य सहायः Sy.
८. प्रसिद्धाम् Sy.  ९. पोषकस्य देवस्य Sy.
१०. कल्याणीं मतिमनुग्रहबुद्धिम् Sy.
११. महीरुहस्य Sy.
१२. प्रकृष्टां दृढां शाखामिव Sy.
१३. अवलम्बामहे । आश्रयामह इत्यर्थः Sy.
१४. पोषकं देवम् Sy.
१५. उद्योजयामः । उद्योजनमाकर्षणम् Sy.
१६. सारथिः सूतोऽभीशूनिव । अभीशून् रश्मीनश्वबन्धनार्थान् यथा कर्षति तद्वत् Sy.
१७. महत्यै Sy.
१८. रक्षार्थम् Sy.  १९. ०नायन्द्रं P.
२०. 'शुक्रं ते' इति चतुर्ऋचं नवमं सूक्तं भरद्वाजस्यार्षं पौष्णम् । द्वितीया जगती शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—'शुक्रं चतुष्कं द्वितीया जगती' (KSA. 32.58.P.23.) इति । वैश्वदेवे पर्वणि वैश्वदेवस्य हविषः 'शुक्रं ते' इति याज्या । सूत्रितञ्च,—'शुक्रं ते अन्यद्यजतं ते अन्यद्विहेह वः स्वतवसः' (ĀSS.2.16.) इति । एकादशिनस्य पौष्णस्य पशोर्वपाया एषैव याज्या । सूत्रितञ्च—'शुक्रं ते अन्यद्यजतं ते अन्यत् प्रपथे पथामजनिष्ट पूषा' (ĀSS.3.7.) इति । अभिष्टवेऽप्येषा । सूत्रितञ्च—'शुक्रं ते अन्यद्यजतं ते अन्यदपश्यं गोपामनिपद्यमानम्' (ĀSS.4.6.) इति Sy. भरद्वाजस्यार्षम् Dur. भरद्वाजस्य SKN.  २१. हे पूषन् ! Sy.
२२. शुक्लवर्णम् Sy. शुक्रशब्दोऽत्र शुक्लपर्यायः । शुक्लम् SKN. २३. तव Sy. तव रूपम् Dur.

अन्यद्[1] रूपम् । ययजशब्दः[2] सामर्थ्यात् कृष्णवचनः स त्वम् । नानारूपे[3] । अहोरात्रे[4] । आदित्य[5] इव च । भवसि यथाहोरात्राभ्यां युक्त आदित्यः तस्य हि पार्श्वयोरहोरात्रे[6] भवतः, यास्कस्त्वाह 'शुक्रं[7] ते अन्यत्[8] । लोहितं ते अन्यत् यज्ञियं ते अन्यत् इति वा' इति[9] सर्वाणि[10] । प्रज्ञानानि[11] । रक्षसि[12] । अन्न च भन्[13] !

---

१. एकमहर्भवति वासरात्मकम् Sy. यल्लोहितम् । अन्यत्तव रूपं शुक्लेन व्यपदेशात्सामर्थ्याल्लोहितादि Dur. एकम् । किं पुनस्तत् ? सामर्थ्याद्रूपम् SKN.

२. यजत० is suggested for ययज० ॥ यजिरत्र सङ्गतिकरणे वर्तते । यजनीयं प्रकाशेन सङ्गमनीयं स्वतः कृष्णवर्णमन्यदेकमहर्भवति रात्राख्यम् Sy. यज्ञार्हम् । अन्यदयज्ञियम्, अयज्ञार्हमन्यत् । भगांशरूपेण हि नायमिज्यते विज्ञायते हि—'तस्मादेतौ भगांशौ यज्ञेन यजन्ते Dur. यजतशब्दोऽत्र शुक्लप्रतियोगित्वाल्लोहितपर्यायः । लोहितं तेऽन्यदपरं रूपम् । पूषाऽप्यादित्यः । तस्य मध्यन्दिने शुक्लं रूपं, लोहितमुदयास्तमययोः । अथवा शुचेर्दीप्त्यर्थस्य शुक्, रो मत्वर्थीयः । शुक्रं दीप्तिमदुच्यते । दीप्तिमत् ते तवैकं रूपं मण्डलाख्यम् । यजतं यष्टव्यमन्यन्मण्डलस्याधिष्ठायकम् SKN.

३. शुक्लकृष्णतया नानारूपे Sy. विषुरूपे भवतः । एते शुक्लकृष्णे रूपे Dur. ते चैते विषुरूपे परस्परं भिन्नरूपे शुक्लरोहितत्वरूपेण SKN.

४. अहनी तव महिम्ना निष्पद्येते । यद्वा हे पूषन् ! त्वदीयमन्यदेकं रूपं शुक्रं निर्मलं दिवसस्योत्पादकम् । त्वदीयमन्यदेकं रूपं यजतं केवलं यजनीयं न प्रकाशकं रात्रेरुत्पादकम् । अत एव विषुरूपे विषमरूपे अहनी अहश्च रात्रिश्च भवतः । अहोरात्रयोर्निर्माणे सूर्य एव कर्ता कथमत्र प्रसक्तिरिति तत्राह Sy. अहोरात्रे कर्मणोदयेन शुक्लमहः करोषि । अस्तमयेन कृष्णम् Dur. ते वाऽहनी अहोरात्रे एते त्वमसि । तव चैते कर्मणी यतस्त्वत्कर्तृके एते अतस्त्वमसि SKN.

५. यथा द्यौरादित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि Sy. यथा द्यौरावृत्य सर्व वर्तत एवं त्वमपि Dur. द्यौरिव च त्वमसि । यथा द्यौर्व्यापिनी तथा त्वमसीत्यर्थः SKN.

६. विश्वायोहो० P.

७. शुक्लं D.

८. तेन् P., D.

९. N. 12.17.

१०. सर्वाः Sy., Dur. सर्वश्च SKN.

११. प्रज्ञाः Sy.
प्रज्ञा प्रज्ञावताम् Dur.

१२. रक्षसि । अतः कारणात्त्वं सूर्य इव भवसीत्यर्थः Sy. त्वमवसि पालयितृत्वात्पालयसि । उद्यन्ननुगृह्णासि Dur. प्रज्ञाहेतुभूतप्रकाशदानेन त्वं पालयसि SKN.

१३. अन्न च तत् D. अन्नवन् ! is suggested for अन्न च भन् ॥ हे अन्नवन् ! Sy. स्वधेत्युदकनाम वा रश्म्याहृतेनोदकेन हविर्लक्षणेनान्नेन वा तद्वत् SKN.

भजनवती[1] । ते[2] । पूषन् ! मयि[3] । रातिः[4] । अस्तु[5] ।[6]

**अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः ।**
**अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ईयते ॥ २ ॥**

**अजाश्वः**[7] । अजाश्च[8] । पशूनां पालयिता । अन्नगृहः[9] । कर्मणः प्रीणयिता[10] । सर्वस्मिन्[11] । भुवने[12] । तर्पतः[13] । अष्ट्राम्[14] । अधः पतन्तीम्[15] । पुनः पुनरुद्धरन्[16] । पश्यन्[17] । भुवनानि[18] । देवः । गच्छति[19] ।[20]

**यास्ते पूषन्नावो अन्तः समुद्रे हिरण्ययीरन्तरिक्षे चरन्ति ।**
**ताभिर्यासि दूत्यां सूर्यस्य कामेन कृत श्रव इच्छमानः ॥ ३ ॥**

**यास्ते**[21] । याः । ते[22] । पूषन् ! नावः । समुद्रमध्ये[23] । चरन्ति[24] । हिरण्मय्यः[25] । अन्तरिक्षे[26] च ।

---

१. कल्याणी Sy. SKN. भन्दनीया स्तुत्या Dur.

२. तादृशस्य तव Sy. पूषन् ! यं त्वामेवमादिगुणयुक्तमद्राक्ष्म तव तस्य Dur. तुभ्यं हे पूषन् ! SKN.

३. अस्मासु Sy. अस्मिन् कर्मणि Dur. इहास्मदीये यज्ञे SKN.

४. दानम् Sy., Dur. हविषो दानम् SKN.

५. भवतु Sy. अस्मान्प्रत्यस्तु, इत्येतदाशास्महे Dur. कृणु SKN.

६. VM. explains ते । अन्यत् once and ignores हि ॥ हि यस्मात्कारणात् Sy. हिरत्र चार्थे....अथवा—भद्रा ते, इति तेशब्दः 'कर्तृकर्मणो कृतिः' (Pa. 2.3.65.) इति कर्तृलक्षणषष्ठ्यन्तः । कल्याणी ते त्वत्कर्तृका रातिरिहास्तु । कल्याणं दानमिहास्मभ्यं देहीत्यर्थः । द्वितीये व्याख्याने यजतमिह भाष्ये —भाजनं स्वपानपात्रं तेन तद्वती SKN. शुक्रं ते अन्यत् । लोहितं ते अन्यत् । यजतं ते अन्यत् । यज्ञियं ते अन्यत् । विषमरूपे ते अहनी कर्म द्यौरिव चासि । सर्वाणि प्रज्ञानान्यवसि । अन्नवन् ! भाजनवती ते पूषन्निह दत्तिरस्तु N. 12.17., SKN. IV. 116.

७. ०जाश्च D.

८. ०जाश्व च P. ०जाश्वः is suggested for ०जाश्च D. छागवाहनः Sy.

९. वाजा अन्नानि पस्त्ये गृहे यस्य तादृशः Sy.

१०. धियः स्तोतारः कर्माणि वा । तेषां प्रीणयिता Sy.

११. विश्वस्मिन् सर्वस्मिन् Sy.

१२. भुवतेन P. लोके Sy.

१३. अर्पितः is suggested for तर्पतः ॥ प्रजापतिना पोषकत्वेन स्थापितः Sy.

१४. आरां स्वहस्तगताम् Sy.

१५. पा० P. शिथिलां सतीम् Sy.

१६. उद्यच्छन् Sy.

१७. सम्पश्यन् सूर्यात्मना प्रकाशयन् Sy.

१८. सर्वांल्लोकान् भूतजातानि वा Sy.

१९. नभसि, गच्छति Sy.

२०. VM. ignores पूषा ॥ अत एवम्भूतः पूषा पोषको देवः Sy.

२१. पौष्णस्य पशोर्वपापुरोडाशयोः 'यास्ते पूषन्' इत्यादिके द्वे ऋचावनुवाक्ये । सूत्रितञ्च—'यास्ते पूषन्नावो अन्तः समुद्र इति द्वे पूषेमा आशा अनुवेद सर्वाः (ĀSS. 3.7.) इति Sy.

२२. त्वदीयाः Sy.

२३. उदधौ Sy.

२४. सञ्चरन्ति Sy.

२५. हितरमणीयाः Sy.

२६. हिरण्मयन्ति० P. नभसि Sy.

ताभिस्त्वम्[1]। सूर्यस्य। दूत्याम्। गच्छसि देवैः सहासुरवधार्थं समुद्रस्य पारं[2] गतः समुद्रः[3] स्वभार्यामुत्कण्ठितां प्रति पूषणं प्राहिणोत्। हे कामेन[4], स्तोतृभिर्वशीकृत[5]! स्तोतॄणामन्नम्[6]। इच्छमानः[7]।

**पूषा सुबन्धुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः।**
**यं देवासो अददुः सूर्यायै कामेन कृतं तवसं स्वञ्चम्॥ ४॥**

**पूषा।** पूषा[8]। शोभनो बन्धुः[9]। दिवः[10]। च। पृथिव्याः। च। अन्नस्य[11]। पद्धतिः[12]। धनवान्[13]। दर्शनीयतेजाः[14]। यं पूषणम्। देवाः[15]। दत्तवन्त[16]। सूर्यायै[17]। कामेन[18]। कृतम्[19]। महान्तम्[20]। सुगमम्[21]।

## VI.59.

**प्र नु वोचा सुतेषु वां वीर्या यानि चक्रथुः।**
**हतासो वां पितरो देवशत्रव इन्द्राग्नी जीवथो युवम्॥ १॥**

**प्र[22] नु[23] वोच[24]।** प्रब्रवीमि। क्षिप्रम्। सुतेषु[25] सोमेषु। युवयोः[26]। वीर्याणि[27]। यानि युवाम्। चक्रथुः[28]।

---

१. नौभिः Sy.

२. कदाचिद्देवैः सार्धं सूर्येऽसुरवधार्थं प्रस्थिते सति तस्य भार्या स्वभर्तरि सञ्जातौत्सुक्या बभूव तां प्रति सूर्यः पूषणं प्राहैषीत्। तेन चात्र पूषा स्तूयते Sy.

३. सूर्यः is suggested for समुद्रः।

४. पश्वादिविषयेण Sy.

५. Sy. seems to take कृत voc. sing. as कृतः nom. sing. and explains वशीकृतोऽसि

६. हविर्लक्षणमन्नम् Sy.

७. इच्छन् is suggested for इच्छमानः।

८. पोषको देवः Sy.

९. शोभनो बन्धुर्भवति Sy.

१०. द्युलोकस्य Sy.

११. तथेळाया अन्नस्य Sy.

१२. वर्धतिः P. पतिः is suggested for पद्धतिः।

१३. 'मघमिति धननाम' (Ngh.2.18.) तद्वान्। यद्वा मंहतेर्दानकर्मणो भावसाधनो मघशब्दः। दानवान् Sy.

१४. वर्च इति रूपनाम। दस्म दर्शनीयं वर्चो यस्य तादृशः Sy. cf. वर्च इत्यन्ननाम Ngh.2.7.

१५. देवान् P. सर्वे देवाः Sy.

१६. ०वन्तः is suggested for ०वन्त॥ 'पुत्रः पितरावावृणीत पूषा' (RV. X.85.14.) इति हि श्रूयते Sy.

१७. सूर्यायै P. सूर्यस्य पत्न्यै यद्वा सावित्र्यै सूर्याख्याया अश्विनोर्वरणाय Sy.

१८. कामेन P. पश्वादिविषयेण Sy.

१९. स्तोतृभिर्वशीकृतम् Sy.

२०. बलवन्तं प्रवृद्धं वा Sy.

२१. स्वञ्चनं सुष्ठु गच्छन्तम्। एवंविधं यं पूषणमददुः स पूषा सुबन्धुरित्यन्वयः Sy.

२२. 'प्र नु वोचा' इति दशर्चं दशमं सूक्तं भरद्वाजस्यार्षमिन्द्राग्निदेवताकम्। सप्तम्याद्याश्चतस्रोऽनुष्टुभः शिष्टाः षट् बृहत्यः। तथा चानुक्रान्तम्—'प्र नु दशैन्द्राग्नं तु बार्हतं चतुरनुष्टुबन्तम्' (KSA. 32.59. P.23.) इति। गतो विनियोगः Sy.

२३. ०च D.

२४. ०वी P. प्रवोचम्। प्रब्रवीमि Sy.

२५. अभिषुतेषु सोमेषु अस्मद्यज्ञे Sy.

२६. ०यो P.

२७. तानि वीर्याणि वीरकर्माणि Sy.

२८. कृतवन्तौ Sy.

हताः[1] । युवाभ्याम् । पावयितारः[2] पृथिव्याः । असुराः[3] । हे इन्द्राग्नी ! युवां त्वसुरैरहतौ । जीवथः[4] ।

**बळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ ।**
**समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा ॥ २ ॥**

**बळित्था**[5] । सत्यमेव[6] । इत्थम्[7] । युवयोः । महिमा[8] । इन्द्राग्नी ! अतिशयेन स्तोतव्यः[9] । एक एव । युवयोः[10] । जनयिता[11] । ततश्च भ्रातरौ[12] । युवां भवथः । युगपज्जातौ[13] । इह चेह[14] च मातरौ[15] ययोस्तौ तथोक्तौ । अग्नेपरिद्यार्माता[16] ? भवतीन्द्रस्यादितिः[17] ।

---

१. ०क्रमर्ह० P. हता आसन् Sy.

२. पारयितारः P. पाययितारः is suggested for पावयितारः ॥ पितरः हिंसकाः । पीयतिहिंसाकर्मा । तस्यैतद्रूपम् । ईदृशा असुराः Sy.

३. तदेव वीर्यं दर्शयति—देवशत्रवः देवाः शत्रवः शातयितारो येषां तादृशाः Sy.

४. ०थ D. The passage beginning with युवां and ending with जीवथः is omitted by P.
जीवनवन्तौ भवथः । असुरैर्न बाधिताविति यावत् Sy.

५. The commentary on this stanza is omitted by P. भरद्वाजस्यार्षम् Dur. भरद्वाजस्य SKN.

६. युष्मद्विषयं यज्जन्ममहत्त्वं प्रतिपाद्यते तत्सर्वं यथार्थमित्यर्थः Sy. बडिति सत्यनाम Dur. बळित्थेति द्वे अपि सत्यनामनी । 'अभ्यासे भूयांसमर्थं मन्यन्ते' (N. 10. 42.) इति । अथ भूयस्त्वेनापौनरुक्त्यम् SKN.

७. अनेन प्रकारेण Sy. इत्था सत्यम् । अमुना प्रकारेण यः सूक्ते महाभाग्यप्रकारोऽधिकृतस्तमित्थेत्यभिनयेनोपदिशन् ब्रवीति Dur.

८. महत्त्वम् Sy. महाभाग्यम् Dur माहात्म्यम् SKN.

९. स्तोष्यः D. स्तुत्यतमश्च प्रजापतिः Sy. सर्वतोऽतिशयेन स्तुत्यः Dur. 'पण व्यवहारे स्तुतौ च' अतिशयेन स्तुत्य इत्यर्थः । महत्त्वं चातिशयेन स्तुत्यं च SKN.

१०. यौ युवामेवमतिमहानुभावौ तयोः Dur.

११. जनयिता सूर्यः Dur. जनयिता, आदित्यः प्रजापतिर्वा SKN.

१२. भ्रातरौ स्थः Sy. तौ युवामेवङ्कृत्वैकपितृकौ Dur. ततश्च समानपितृकत्वाद् भ्रातरौ युवाम् SKN. १३. यमलौ सहोत्पन्नौ Sy. एकजन्मानौ Dur. न च क्रमजन्मानौ । किं तर्हि यमौ युगपज्जन्मानौ SKN.

१४. इह चेह च सर्वत्र माता ययोस्तादृशौ स्थः । अदितिर्ह्यनयोर्माता । सैव विस्तीर्णा भूमिरितीहेह मातराविति श्रूयते Sy. इह च पृथिवीलोक इह चान्तरिक्षलोकेऽवस्थितौ Dur. इहेह, इति च वीप्सा सन्निहिताशेषजगत्प्रदेशप्रतिनिर्देशार्था SKN.

१५. सर्वस्य लोकस्य निर्मातारौ । एवमिह मन्त्रे पितृत्वेन सूर्यो व्यपदिष्टः Dur. इह प्रदेशे मातरौ ययोस्ताविहेहमातराविति ।....सर्वजगत्प्रदेशमातरावित्यर्थः । माता चेन्द्राग्न्योर्धाना सर्वजगत्प्रकृतित्वात् । अदितिर्वा देवमातृत्वात् SKN. N. 10. 21., SKN. IV. 24.

१६. The reading is doubtful. अग्नेरपि-द्यौर्माता is suggested for अग्नेपरिद्यार्माता ।

१७. VM. ignores आ ॥
आकारः पूरकः समुच्चये वा—'देवेभ्यश्च पितृभ्य आ' (RV. X. 6. 11.) इतिवत् । महिमापेक्षया समुच्चयः SKN.

**ओ॒कि॒वांसा॑ सु॒ते सचाँ॒ अश्वा॒ सप्ती॑इ॒वाद॑ने ।**
**इन्द्रा॒ न्व१॒॑ग्नी अव॑से॒ह व॒ज्रिणा॑ व॒यं दे॒वा ह॑वामहे ॥ ३ ॥**

**ओकिवांसा** । सङ्गतौ[1] । सुते सोमे[2] । सह । अश्वाविव[3] । सरणशीलौ[4] । घासेऽदने[5] । इन्द्राग्नी[6] । क्षिप्रम्[7] । रक्षणार्थम्[8] । इह[9] । आयुधवन्तौ[10] । वयम् । देवौ[11] । हवामहे[12] ।

**य इ॑न्द्राग्नी सु॒तेषु॑ वां॒ स्तव॒त्तेष्वृ॑तावृधा ।**
**जो॒ष॒वा॒कं वद॑तः पज्रहोषिणा॒ न दे॑वा भ॒सथ॑श्च॒न ॥ ४ ॥**

**य इन्द्राग्नी**[13] । यः[14] । इन्द्राग्नी ! सुतेषु सोमेषु[15] । वाम्[16] । स्तौति[17] । तेषु सोमेषु[18] । ऋतस्य यज्ञस्य वर्धयितारौ[19] ! तस्य सोमसमश्नीथ[20] इति वाक्यशेषः । अथ योऽयं जोषवाकं वदति जोषवाकमित्यविज्ञातनामधेयम् जोषयितव्यं भवतीति जोषवाकं[21] वदतः, समीचीनं वक्तुमशक्तस्य । हे 'प्राजितहोषिणौ'[22] इति यास्कः । न । देवौ । तस्य सोममश्नीथः[23][24] ।

---

१. ओकिवांसौ समवेतौ सङ्गतौ भवतम् । 'उच समवाये' इत्यस्यैतद्रूपम् Sy.
२. अभिषुते Sy.
३. तत्र दृष्टान्तः—अश्वाविव Sy.
४. सर्पणशीलौ Sy.
५. घासदनीये D. भक्षणीये घासे Sy.
६. The passage beginning with ओकिवांसा and ending with इन्द्राग्नी is omitted by P. तादृशाविन्द्राग्नी । इतरेतरयोगादिन्द्रशब्देऽग्निशब्दे च द्विवचनम् Sy.
७. अद्य Sy.
८. रक्षणेन हेतुना Sy.
९. अस्मिन् यज्ञे Sy.
१०. वज्रिणावायुधोपेतौ Sy.
११. दानादिगुणयुक्तौ Sy.
१२. आह्वयामहे Sy.
१३. य इन्द्राग्नी omitted by P.
१४. स्तोता Sy.
१५. अभिषुतेषु Sy.
१६. युवाम् Sy.
१७. कुत्सितं स्तूयात् Sy.
१८. तेषु सोमेषु मध्ये Sy.
१९. हे ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारौ Sy.
२०. सोमश्नीथ P. न भक्षयथः Sy.
२१. जोवाकं P. जोषं जोषयितव्यं प्रीतिहेतुत्वेन कर्तव्यं स्वयमप्रीतिकरं तादृशं वाकं वाक्यं वदतस्तस्य Sy.
२२. प्राजिहोविणौ P. प्राञ्जिहोवीणौ D.N.5.22. पज्रः प्राजितः प्रसिद्धो होषो घोषः स्तोत्रं ययोस्तादृशौ Sy.
२३. भक्षयथः Sy.
२४. 'जोषवाकमित्यविज्ञातनामधेयम् । जोषयितव्यं भवति ।....य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्याश्नीथः । अथ योऽयं जोषवाकं वदति विजञ्जपः प्राजितहोषिणौ न देवौ तस्याश्नीथः । N. 5.22.

**इन्द्रा॑ग्नी॒ को अ॒स्य वां॑ दे॒वौ॒ मर्त॑श्चिकेतति ।**
**विषू॑चो॒ अश्वा॑न्युयुजा॒न ई॑यत॒ एकः॑ समा॒न आ रथे॑ ॥ ५ ॥**

इन्द्राग्नी[1]। इन्द्राग्नी ! कः। युवयोः। एतत् कर्म। जानाति[3]। हे देवौ[4]! मनुष्यः। किं तत् कर्मेत्याह—
विपूचः[5]। अश्वान्। समाने[6]। रथे। युयुजानः[7]। कको[8] इन्द्रः। गच्छति[9] मानेन यो रथस्तस्य वर्तूनश्वानाह तेषां च
विष्वक्त्वं केचिद् गच्छन्ति केचिदागच्छन्तीति[10]।

**इन्द्रा॑ग्नी अ॒पादि॒यं पूर्वागा॑त्प॒द्वती॑भ्यः ।**
**हि॒त्वी शिरो॑ जि॒ह्वया॒ वाव॑द॒च्चर॑त्त्रिं॒शत्प॒दा न्य॑क्रमीत् ॥ ६ ॥**

इन्द्राग्नी[11]। पादवर्जिता[12]। इयम्[13]। पद्वतीभ्यः[14]। पूर्वा[15]। आगच्छति[16]। शीघ्रमुषाः। त्यक्त्वा[17]।
शिरः[18] शिरोरहितापीत्यर्थः[19]। मनुष्याणां[20] वयसां च जिह्वया[21]। अत्यन्तं शब्दं कुर्वाणा[22]। चरन्ती[23]। त्रिंशत्[24]।

---

१. Omitted by P.
२. इदम् Sy.
३. जानीयात् । न कोऽपीत्यर्थः Sy.
४. हे देवौ ! द्योतमानौ ! Sy.
५. नानाञ्चतो गच्छतः Sy.
६. उभयार्थे एकस्मिन् Sy.
७. तादृशानश्वान् योजयन् Sy.
८. एक is suggested for कको ॥ सूर्यात्मना वर्तमानः Sy.
९. सर्वं जगदभिगच्छति । यद्वा विषूचो नानारूपानश्वान् व्यापकान् समान एकरूपे रथे संवत्सरात्मके युयुजानो योजयन् युवयोरेकः सूर्यात्मेन्द्र एयते । आगच्छति । एतद्युवयोः कर्म को यथावज्जानीयादित्यर्थः Sy.
१०. VM. ignores आ।
११. मानुषी वागनयोच्यते । उक्तञ्च 'अथ यन्मानुष्या वाचाह इतीदं कुरुतेतीदं कुरुतेति तद्रुह तया चीयते' इति U.
१२. वाद० D. पादरहिता Sy. हे इन्द्राग्नी... ...स्वयं पादरहितापि Mah. पादरहिता गद्या U.
१३. इय P. उषाः Sy. इयमुषाः Mah. इयं वाक् U.
१४. पद्व० is suggested for वद्व० ॥ पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः Sy. Mah. पादवतीभ्यः सकाशात् U.
१५. प्रथमभाविनी सती Sy., Mah.
१६. आगता U.
१७. प्रेरयित्री Sy. सा च तासां प्रजानां शिरो हित्वी निद्रात्याजनेन प्रेरयित्री । यद्वा शिरो हित्वी हित्वा त्यक्त्वा Mah. हित्वा परित्यज्य शिरः प्रथमं पदमन्यत्करोति । नहि लौकिक्या वाचः कश्चित्पदनियमोऽस्ति U.
१८. प्राणिनां शिरः । यद्वा स्वयमशिरस्का सती Sy. स्वयमशिरस्का सती Mah.
१९. ०तावित्यर्थः P.
२०. प्राणिनाम् Sy.
२१. प्राणिस्थया तदीयेन वागिन्द्रियेण Sy. प्राणिनां वागिन्द्रियेण Mah. जिह्वया विदुषः U.
२२. कुवाणा D. भृशं शब्दं कुर्वती Sy. यङ्लुगन्तम् । भृशं शब्दं कुर्वती सती Mah. वदन्ती U.
२३. चरति प्रसरति । अडभावः । एवं चरन्त्युषा Mah. चरति U.
२४. ०तं D. त्रिंशत्सङ्ख्यानि Mah. कियन्ति तत्र पदानि त्रिंशत्पदानि त्रिंशत्सङ्ख्याकानि U

मुहूर्तान्[1] । एकेनाह्ना[2] । अतिक्रामति[3] ।

इन्द्राग्नी आ हि तन्वते नरो धन्वानि बाह्वोः ।
मा नो अस्मिन्महाधने परा वर्क्तं गविष्टिषु ॥ ७ ॥

इन्द्राग्नी । इह, इन्द्राग्नी[5] ! बाह्वोः[6] स्थितानि । धनूंषि । योद्धारः [illegible] । [illegible] [illegible] प्रभायाम्[8] मा । अस्मान् । अस्मिन्[9] । सङ्ग्रामे[10] । परित्यजताम्[11] । [illegible] [illegible]-स्यर्थः[12] ।

इन्द्राग्नी तपन्ति माघा अर्यो अरातयः । अप द्वेषांस्या कृतं युयुतं सूर्यादधि ॥ ८ ॥

इन्द्राग्नी । इन्द्राग्नी[13] ! तवन्ति[14] । मा[15] । हन्तारः[16] । अभिगन्तारः[17] । [illegible][18] । [illegible] । अपाकृतम्[19] ।

---

१. अवयवभूतान् त्रिंशत् मुहूर्तान् Sy. पदा पदानि गमनसाधनभूतान् मुहूर्तान् Mah.

२. दिवसेन Sy.
एकदिनेन Mah.

३. एतच्च युवयोः कर्म । तत्को जानीयादिति पूर्वेणान्वयः Sy. नितरां क्रमते । अहोरात्रेण त्रिंशन्मुहूर्तान्क्रमतीत्यर्थः Mah. अतिक्रामति । नहि परतस्त्राणविषयः U.

४. VM. ignores इन्द्राग्नी ।
यद्वा वाक्यपक्षेऽर्थः । इन्द्रः प्राणोऽग्निः पुरुषः । हे इन्द्राग्नी ! युवयोरेवैतत्कर्म यद् अपात् पादरहिता गद्यात्मिका अधीलक्षणेयं वाक् पूर्वा प्रथमभाविनी सती, आ आगात् । पद्वतीभ्यः पादयुक्ताभ्यो रामायणभारतादिश्लोकात्मकवाल्मीकिव्यासादिवाणीभ्यः सकाशाद् वेदवाचः प्राथम्यं श्रुत्योक्तम्, ततो ब्रह्मैव प्रथमसृज्यतेति एवं प्रथमजाया वचसोऽविकृतत्वं निर्णीय मानुष्या वाचो विकृतत्वमाह हित्वी शिर इति । शिर इति प्राधान्यादाख्यातपदमुच्यते । अभ्याज गां दण्डेन शुक्लां गां दण्डेनाभ्याजेत्येवं लौकिक्या वाचः पदप्रयोगनियमाभावाच् शिरः शिरःस्थानीयमाख्यातपदं हित्वा त्यक्त्वा जिह्वया विदुषो वागिन्द्रियेण वावदद् अतिवदन्ती सती चरति प्रकाशीभवति । एवं चरन्ती सा त्रिंशत्पदानि न्यक्रमीत् क्रमति । अत्र पदशब्दोऽङ्गुलवचनः । [illegible] त्रिंशदङ्गुलानि क्रमति । एवं [illegible] Mah.
This stanza YV. 33. 93.

५. इन्द्रा P. हे इन्द्राग्नी ! Sy.

६. बह्वोः P. हस्तयोः Sy.

७. कुर्वते Sy.

८. ०या P. The reading is doubtful.

९. त्वयाऽस्मिन् दीयमान [illegible] कर्तव्यम् BB.

१०. जेतव्येन महाधनेनोपेते सङ्ग्रामे Sy. उत्तमं महत्तमं धनं देहीति तत्र महाधने BB.

११. मा परावर्क्तं मा परावर्जितः । [illegible] महान्तं भारं वोढुं समर्थो भारं नीत्वा न किञ्चिदपवर्जयति, महान्तमपि भारमानयति । एवं त्वयाऽपि कर्तव्यम् BB.

१२. VM. ignores इह ।
This stanza TS. 2. 6. 11. 3.

१३. हे इन्द्राग्नी ! Sy.

१४. तपन्ति is suggested for तवन्ति ॥ बाधन्ते Sy.

१५. म P. माम् Sy.

१६. आहन्त्यः Sy.

१७. अभिगन्त्र्यः Sy.

१८. शत्रुसेनाः Sy.

१९. अपाकुरुतम् Sy.

इन्द्राग्नी । परिचरति[1] । समानाह्वानौ[2] । ईश्वरौ भवन्तौ[3] । बह्वोः[4] । वसुसमूहस्य[5] । अतिशयेन बलिनौ । बलेन । युद्धं कुर्वाणौ[7][8] ।

**ता योधिष्टमभि गा इन्द्र नूनमपः स्वरुषसो अग्न ऊळ्हाः ।**
**दिशः स्वरुषस इन्द्र चित्रा अपो गा अग्ने युवसे नियुत्वान् ॥ २ ॥**

**ता योधिष्टम्**[9] । तौ युवाम् । इन्द्र ! सम्प्रति[10] । गाः । भियोधिष्टम्[11] । हे अग्ने ! त्वम्, अव[12] । स्वः[13] उदकानि रक्षसि । उषसश्च[14] । त्वयोढा[15] भवन्ति । हे इन्द्र ! त्वं च । दिशः[16] । आदित्यम्[17] । उपसः । चित्रवर्णाः[18] प्रथरोषत्[19] गमयसि[20] । उदकानि[21] । अग्ने ! गन्तॄणि । त्वं च युवसे[22] । नियुत्वानसि[23] ।

**आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक् ।**
**युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमेभिः ॥ ३ ॥**

**आ[24] वृत्रहणा** । आयातम्[25] । हे शत्रूणां हन्तारौ[26] ! शत्रूणां हन्तृभिः[27] । बलेऽन्न परिचरणैः । इतोमुखम्[28]

---

१. इन्द्रा अग्नी इतरेतरयोगादुभयत्र पूर्ववद्द्विवचनम् Sy.
२. परिचरेत् Sy.
३. शत्रूणामभिभवितारौ Sy.
४. ईशानौ स्वामिनौ । इरज्यतिरैश्वर्यकर्मा Sy.
५. प्रभूतस्य Sy.
६. वसव्यस्य वसुसमूहस्य यद्वा स्वार्थिको यत् । धनस्य Sy.
७. अतिशयेनाभिभवितारौ शत्रूणाम् Sy.
८. ०णोहम् P. वाजं हविर्लक्षणमन्नमात्मन इच्छन्तौ । यद्वा वाजं स्तोतृभ्यो दातव्यमन्नं कामयमानौ Sy.
९. त D.
१०. नूनमिति पादपूरणार्थः Sy.
११. P. adds तौ युवामिन्द्र सम्प्रति गा अभियोधिष्टं after अभियोधिष्टम् ॥ अभि० is suggested for भि० ॥ एतान् गवादीनभिलक्ष्य तैरसुरैर्युद्धं कृतवन्तौ Sy.
१२. अपः is suggested for अव ॥ उदकानि Sy.
१३. सूर्यम् Sy.
१४. उषःकालान् Sy.
१५. ऊळ्हाः पणिभिरपहृताः Sy.
१६. प्राच्याद्याः Sy.
१७. अभित्यम् D. सूर्यम् Sy.
१८. चायनीयाः Sy.
१९. पृथ P.
२०. गमयनि P. प्रथरोषत् गमयसि seems to be redundant.
२१. गाश्च पणिभिरपहृतानेतान् Sy.
२२. अनेन लोकेनायोजयः । यद्वा असुरैरावृतान् दिगादीनसुरवधेनावरणमपनीय पृथक् कृतवानसीत्यर्थः Sy.
२३. नियुद्भिरश्वैर्युक्तः सन् त्वमप्येवमकार्षीरित्यर्थः Sy.
२४. ऐन्द्राग्नस्य पशोर्वपायाः 'आ वृत्रहणा' इत्यनुवाक्या । सूत्रितञ्च—'आ वृत्रहणा वृत्रहभिः शुष्मैरा भरतं शिक्षतं वज्रबाहू' (ASS.3.7.) इति Sy.
२५. आगच्छतम् Sy.
२६. हे वृत्रस्यासुरस्य हन्तारौ ! Sy.
२७. वृत्रस्य हन्तृभिर्वृत्रहननिमित्तैः Sy.
२८. इतोमु० is suggested for इतेमु० ॥ अस्मदभिमुखम् Sy.

इन्द्राग्नी[1] ! युवाम् । धनैः । अकुत्सितैः[2] सह । अस्मासु । भवतम्[3] । उत्तमैः[4] ।[5]

**ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम् । इन्द्राग्नी न मर्धतः ॥ ४ ॥**

ता हुवे[6] । तौ[7] । ह्वयामि[8] । ययोः[9] । इदम्[10] । स्तूयते[11] । विश्वम्[12] । पुरा[13] । कृतं कर्म । ताविमौ[14] । न । कञ्चन हिंस्तः[15] ।

**उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता नो मृळात ईदृशे ॥ ५ ॥**

उग्रा[16] । उग्रौ[17] । विशेषेण[18], शत्रून्, हन्तारौ[19] । इन्द्राग्नी[20] । हवामहे[21] । तौ[22] । अस्मा[23] । सुखयेताम्[24] । ईदृशे संग्रामे[25] ।

---

१. हे इन्द्र ! हे अग्ने ! Sy.

२. महद्भिः Sy.

३. आविर्भवतम् Sy.

४. उत्कृष्टतमैः Sy.

५. VM. ignores नमोभिः and explains इन्द्र and अग्ने once only.
अस्मभ्यं दातव्यैश्चान्नैश्च सार्धम् Sy.

६. चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे 'ता हुवे' इति षडहस्तोत्रियस्तृचः । सूत्रितञ्च 'ता हुवे ययोरिदमियं वामस्य मन्मनः' (ASS. 7.2.) इति । पृष्ठ्याभिप्लवषडहयोः स्तोमवृद्धौ 'ता हुवे' इत्याद्या नवर्च आवापार्थाः । सूत्रितञ्च— 'ता हुवे ययोरिदमिति नवेयं वामस्य मन्मन इत्येकादश' (ASS. 7. 4.) इति Sy.

७. तादृशाविन्द्राग्नी Sy.

८. आह्वये Sy.

९. ययोरिन्द्राग्न्योः Sy.

१०. पूर्वास्वृक्षु कीर्तितं वीर्यम् Sy.

११. पन्यते ऋषिभिः स्तूयते । तौ इन्द्राग्नी हुव इत्यन्वयः Sy.

१२. सर्वम् Sy.

१३. पूर्वस्मिन् काले Sy.

१४. It refers to. इन्द्राग्नी ।

१५. स्तोतॄन् हिंस्तः । अतोऽस्मानप्याहूतौ रक्षतामिति भावः । मर्धतिर्हिंसाकर्मा Sy.

१६. Omitted by P.

१७. उद्गूर्णबलौ Sy. Mah.
उग्रौ, उद्गूर्णौ U.

१८. विषेण D.

१९. P. and D. add हन्ता before शत्रून् ॥ मृधो हिंसकान् Mah. सङ्ग्रामस्य सङ्ग्रामकारिणां वा U.

२०. VM. seems to explain विघनिनौ and मृधः together as विशेषेण शत्रून् हन्तारौ ॥ विशेषेण हतवन्तौ Sy. विशेषेण हतो नाशयतस्तौ विघनिनौ । हन्तेर्घः Mah. विहन्तारौ U.

२१. आह्वयामहे Sy.
आह्वयामः Mah. U.

२२. इन्द्राग्नी Sy. तावाहूताविन्द्राग्नी Mah. तौ चाहूतौ U.

२३. अस्मान् is suggested for अस्मा ।

२४. सुखेयताम् P. सुखयेताम् is suggested for सुखेयेताम् ॥ सुखयताम्। यद्वा मृळतिरुपदयाकर्मा । नोऽस्माकं मृळतः उपदयां कुरुताम् Sy. मृडयतः सुखयतः Mah.

२५. ईदृशेऽस्मिन् सङ्ग्रामे Sy. ईदृशे भयानके सङ्ग्रामे कर्मणि वा Mah. ईदृशे कर्मणि U.
This stanza=YV. 33. 61.

हतो वृत्राण्यार्या हतो दासानि सत्पती । हतो विश्वा अप द्विषः ॥ ६ ॥

[हतः ।][1] आर्यकृतानि[2] । उपद्रवाणि[3] । नाशयतः[4] । दासकृतानि[5] च । सतामीश्वरौ[6] । तथा विश्वा-नेव[7] । शत्रून्[8] । अपहतम्[9] ।

इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत । पिबतं शंभुवा सुतम् ॥ ७ ॥

इन्द्राग्नी[10] । इन्द्राग्नी ! युवाम् । इमे । स्तोमाः[11] । अभिष्टुतवन्तः[12] । पिबतम् । सुखस्य भावयितारौ[13] । सोमम्[14] ।

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरा गतम् ॥ ८ ॥

या वाम्[15] । याः[15] । वाम्[16] । विद्यन्ते[17] । बहुभिः स्पृहणीयाः[18] । अश्वाः । यजमानानुग्रहार्थम्[19] । नेतारौ ! इन्द्राग्नी ! ताभिः[20] । आगच्छतम् ।

उत्तरा निगदसिद्धा ।

ताभिरा गच्छतं नरोपेदं सवनं सुतम् । इन्द्राग्नी सोमपीतये ॥ ९ ॥

[ताभिरागच्छतम् ।][21]

---

१. The *pratīka* is supplied by the Editor.
२. आर्यैः कर्मानुष्ठातृभिः कृतानि Sy.
३. उपद्रवान् is suggested for उपद्रवाणि ॥ उपद्रवजातानि Sy.
४. ताविन्द्राग्नी हिंस्तः Sy.
५. दस० P. दासाः कर्महीनाः शत्रवः । तैः कृतानि चोपद्रवजातानि हतः Sy.
६. सतां पालयितारविन्द्राग्नी Sy.
७. सर्वाः Sy.
८. द्वेष्ट्रीः शत्रुभूताः प्रजाः Sy.
९. विनाशयतः । अतोऽस्माकमप्येवमेव कुरुतामिति भावः Sy.
१०. चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे 'इन्द्राग्नी युवाम्' इति षडहस्तोत्रियस्तृचः । सूत्रितञ्च 'इन्द्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेत्यच्छावाकस्य' (ASS.7.2.) इतिSy.
११. सोमाः D. स्तोतारः Sy.
१२. ष्टुव० P. अभिष्टुवन्ति Sy.
१३. हे शम्भुवा सुखस्य भावयितारविन्द्राग्नी ! Sy.
१४. अभिषुतमस्मदीयं सोमम् Sy.
१५. य D.
१६. युवयोः स्वभूताः Sy.
१७. सन्ति Sy.
१८. पुरुभिर्बहुभिः स्पृहणीयाः Sy.
१९. हवींषि दत्तवते यजमानाय तदर्थमुत्पन्नाः Sy.
२०. नियुद्भिः Sy.
२१. The *pratīka* is supplied by the Editor.
हे नरा ! नेताराविन्द्राग्नी ! सूयतेऽभिषूयत इति सवनः सोमः । इदं सवनमिमं सोमं सुतमभिषुतमुप प्रति । यद्वा इदं प्रातःसवनमुपास्मिन् सवने सुतमभिषुतं सोमं प्रति ताभिर्नियुद्भिरागच्छतम् । किमर्थम् ? सोमपीतये तस्य सोमस्य पानार्थम् Sy.

**तमी॑ळिष्व॒ यो अ॒र्चिषा॒ वना॒ विश्वा॑ परि॒ष्वज॑त् । कृ॒ष्णा कृ॒णोति॑ जि॒ह्वया॑ ॥ १० ॥**

तमीळिष्व[1] । तम्[2] । स्तुहि । यः[3] । तेजसा[4] । सर्वाणि । अरण्यानि दावभूतः । व्यानोति[5] । कृष्णानि[6] च । णोति[7] । ज्वालया[8] ।

**य इ॒द्ध आ॒विवा॑सति सु॒म्नमिन्द्र॑स्य॒ मर्त्यः॑ । द्यु॒म्नाय॑ सु॒तरा॑ अ॒पः ॥ ११ ॥**

यः । यः । प्रज्वलितेऽग्नौ[9] । सुखम्[10] । इन्द्रस्य[11] । परिचरणं करोति[12] । मर्त्यः[13] । तस्येन्द्रोऽन्नार्थम्[14][15] । सुतरणानि[16] । उदकानि[17] प्रयच्छति[18] ।

**ता नो॒ वाज॑वती॒रिष॑ आ॒शून्पि॑पृत॒मर्व॑तः । इन्द्र॑म॒ग्निं च॒ वोळ्ह॑वे ॥ १२ ॥**

ता नः । तौ[19] । नः[20] । बलवन्ति[21] । उदकानि । शीघ्रगामिनश्च[22][23] । अश्वान् । पूरयतम्[24] । परोक्ष उत्तरोऽर्धः—इन्द्राग्नी[25] । हविर्भिर्वोढुम्[26][27] ।

---

१. Both the Mss. P. and D. repeat the *pratīka*.

२. हे स्तोतः ! तमग्निम् Sy.

३. अग्निः Sy.

४. ज्वालारूपेण तेजसा Sy.

५. व्याप्नोति is suggested for व्यानोति ॥ परिष्वजति । परितो वेष्टयति Sy.

६. यश्च तानि वनानि कृष्णा कृष्णवर्णानि Sy.

७. कृणोति is suggested for णोति ॥ करोति Sy.

८. ज्वालया दग्ध्वा Sy.

९. दीप्ते Sy.

१०. सुखकरं हविः Sy.

११. इन्द्राय । चतुर्थ्यर्थे षष्ठी Sy.

१२. परिचरति प्रयच्छति Sy.

१३. मनुष्यः Sy.

१४. मर्त्यस्य Sy.

१५. द्योतमानायान्नाय तदर्थम् Sy.

१६. सुखेन तरणीयाः Sy.

१७. वृष्ट्यात्मकानि Sy.

१८. करोतीति शेषः Sy.

१९. हे इन्द्राग्नी ! युवाम् Sy.

२०. अस्मभ्यम् Sy.

२१. अन्नवतीः Sy.

२२. इष्यमाणा वृष्टीः । यद्वा वाजो बलम् । तद्वतीरिषोऽन्नानि Sy.

२३. शीघ्रगान् Sy.

२४. अस्मभ्यं प्रयच्छतम् Sy.

२५. इन्द्रमग्निं च युवाम् Sy.

२६. वोढुं हविर्भिः प्रापयितुम् Sy.

२७. VM. ignores च ।

उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै ।
उभा दातारविषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥ १३ ॥

उभा वाम्[१] । उभौ[२] । वाम्[३] । इन्द्राग्नी[४] ! घृतेन[५] । आहोतुं[६] ह्वयामि[७] । सोमेन[८] । सह[९] । मादयितुम्[१०] । उभौ[११] हि युवाम्[१२] । दातारौ । अन्नानाम्[१३] । धनानां च तथा[१४] मनि । उभौ[१५] । वाम्[१६] । अन्नस्य । लाभाय । ह्वयामि[१७] ।

---

१. ऐन्द्राग्नस्य पशोर्हविषोऽनुवाक्या 'उभा वाम्' इत्येषा। सूत्रितञ्च—'उभा वामिन्द्राग्नी आहुवध्यै शुचिं नु स्तोमं नवजातमद्य' (ASS.3.7.) इति Sy.

२. वा D.

३. संहत्य वर्तमानौ Sy.

४. युवाम Sy., Mah., U., BB.

५. हे इन्द्राग्नी ! Sy. इन्द्रशब्देनात्राहवनीयः। तस्य यज्ञसाधकत्वरूपैश्वर्ययुक्तत्वात् । अग्निशब्देन गार्हपत्यः। 'अग्रे नीयते' इत्यग्निरिति यास्कव्युत्पत्तेः (cf.N.7.14. अग्रं यज्ञेषु प्रणीयते) । स हि प्रथममाधीयते। हे इन्द्राग्नी ! Mah.

६. हो० P. आभिमुख्येन होतुम् Sy. आभिमुख्येन होतुम्, आहुतिप्रदानेनाराधयितुम् BB.

७. आह्वयामि Sy. आह्वातुमिच्छामीति शेषः । ह्वयतेस्तुमर्थे कध्यैप्रत्ययः Mah. आख्यातोत्तमपुरुषैकवचनस्थान आह्वयामि U. हुव इति वक्ष्यमाणेन सम्बन्धः, युवामाह्वयामि BB.

८. राधकेन हविषा Sy. राधसो धनाद्धविर्लक्षणात् Mah. राधसो धनस्य हविर्लक्षणस्य U. राध ओदनं हविर्लक्षणम् । 'सुपां सुपो भवन्ति' इति तृतीयार्थे षष्ठी । हेतौ वा पञ्चमी BB.

९. युगपदेव Sy. युगपदेककर्मणि Mah. एकस्मिन्नेव प्रदाने U. सहैव यौगपद्येनैव नैकैकश्येन BB.

१०. तर्पयितुम् Sy. युवां मादयितुं हर्षयितुं वेच्छामीति शेषः । 'मदी हर्षे' इति 'मद तृप्तौ' इति धातोर्वा णिजन्तात्तुमर्थे शध्यैप्रत्ययः । गुणः Mah. माद्यतिर्भोजनार्थः । सह भोजनाय U. मादयितुं सहैव तर्पयितुं वाऽऽह्वयामि । मदेर्ण्यन्तात्....शध्यैप्रत्ययः BB.

११. पि P. यत उभौ युवाम् Mah. किमर्थं पुनरुभावाह्वयामि सह भोजनायेत्यत आह.... U. अनयोरेवाह्वाने कारणमाह—युवामेव ह्युभौ BB.

१२. दातारौ स्थः Sy. उभावाहुतभुक्तौ सन्तौ दातारौ दानशीलौ U.

१३. धनानां च भवथो युवाम् U. धनानां क्षेत्रपुत्रपश्वादीनाम् BB.

१४. Omitted by D. अतः Mah. यतश्चैवं युवां विशिष्टान्नधनदातारौ, अतः U. तस्माद् BB.

१५. सर्वेषु देवेषु सत्स्वावयोराह्वाने किं कारणमिति चेदुच्यते—उभा उभौ Sy. उभशब्दस्य विभक्तेराकारः Mah. भूयो भूय उभावपि U. तौ तादृशावुभौ युवाम् BB.

१६. सम्भजनाय Sy. सातये दानाय ।....'षणु दाने'....क्तिन्नन्तो निपातः Mah. लब्धये U.

१७. आह्व० P. आह्वये Sy. आह्वयामि Mah., U., BB.

अथैन्द्राग्नी । उभा वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै । उभा दाताराविषाꣳ रयीणामुभा वाजस्य सातये हुवे वामित्येष वाऽइन्द्रो य एष तपति स यदस्तमेति तदाहवनीयं प्रविशति तदुभावेवैतत्सह सन्ताऽउपतिष्ठतऽउभौ मे सह सन्तौ दत्तामिति तस्मादैन्द्राग्नी । SB.2.3.4.12.p.163.

This stanza=YV. 3. 13.=TS. 1. 1. 14. 1.

आ नो गव्येभिरश्व्यैर्वसव्यै३रुप गच्छतम् ।
सखायौ देवौ सख्याय शंभुवेन्द्राग्नी ता हवामहे ॥ १४ ॥

आ नः । उपागच्छतम्[1] । अस्मान् । गवादिसमूहैः[2] । समानख्यानौ[3] । देवौ[4] । सख्यसिद्ध्यर्थम्[5] । सुखस्य भावयितारौ[6] । तम्[7] । इन्द्राग्नी । हवामहे[8] ।

उत्तरा निगदसिद्धेति ।

इन्द्राग्नी शृणुतं हवं यजमानस्य सुन्वतः ।
वीतं हव्यान्या गतं पिबतं सोम्यं मधु ॥ १५ ॥

[इन्द्राग्नी शृणुतम्[9] ।]

VI.61.

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ १ ॥

इयमददात्[10] । इयम्[11] । प्रायच्छत्[12] । वेगवन्तम्[13] । ऋणस्य[14] व्यावयितारं[15] पुत्रम् । दिवोदासनाम[16] ।

---

१. हे इन्द्राग्नी ! आभिमुख्येनोपा गच्छतम् Sy.

२. आदि refers to अश्व्य and वसव्य ॥ गव्येभिः गोसमूहैरश्व्यैरश्वसमूहैर्वसव्यैर्वसुसमूहैश्च सार्धम् Sy.

३. शेषः परोक्षकृतः। सखायौ समानख्यानौ Sy.

४. दानादिगुणयुक्तौ Sy.

५. ०ख्या० P. सखित्वार्थम् Sy.

६. शम्भुवौ सुखस्य भावयितारौ Sy.

७. तौ is suggested for तम् ॥ तादृशाविन्द्राग्नी Sy. ८. वयमाह्वयामहे Sy.

९. The *pratīka* is supplied by the Editor.

हे इन्द्राग्नी ! सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य हवमाह्वानं स्तोत्रं शृणुतम् । श्रुत्वा च तदीयानि हव्यानि हवींषि वीतम् । कामयेथाम् । कामयित्वा चागतम् । आगच्छतम् । आगत्य च सोम्यं सोमात्मकं मधु पिबतम् Sy.

१०. 'इयमददात्' इति चतुर्दशर्चं द्वादशं सूक्तं भरद्वाजस्यार्षं सरस्वतीदेवताकम् । आदितस्तिस्रो जगत्यस्त्रयोदश्यपि जगती चतुर्दशी त्रिष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रान्तम्—'इयं षळूना सारस्वतं त्रिजगत्यादि जगतीत्रिष्टुबन्तम्' KSA. 32.61.P.23. इति। अत्र शौनकः—'इयमित्येतदाद्यं तु सूक्तं सारस्वतं जपेत् । द्विजः प्रातः शुचिर्भूत्वा वाग्मी भवति बुद्धिमान्' (Ṛgvidh. 2.23.) इति । पाष्ठिके षष्ठेऽहनि प्रउगे 'इयमददात्' इति सारस्वतस्तृचः । सूत्रितञ्च—'इयमददाद्रभसमृणच्युतमिति प्रउगम्' (ĀSS.8.1.) इति Sy.

११. सरस्वती Sy. १२. दत्तवती Sy.

१३. वेगेतम् P. १४. ऋषणस्य P.

१५. व्यापयि० D. व्यावयि० is suggested for व्यावयि० ॥ वैदिकस्य देवर्षिपितृसम्बन्धिनो लौकिकस्य च ऋणस्य च्यावयितारम् Sy.

१६. दिवोदासनामानम् or. दिवोदासं नाम is suggested for दिवोदासनाम ॥ एतत्संज्ञं पुत्रम् Sy.

वध्र्यश्वनाम्ने[1] । यजमानाय[2] । येयम्[3] । बहु[4] । स्वादनीयम्[5] । असुरम्[6] । आचखाद जघान[7] । प्रत्यक्षस्तुरीयः[8] पादः—तादृशा[9] महान्ति[10] । नव[11] । दानानि । प्रवृद्धानि[12] । सरस्वति[13] !

**इ॒यं शुष्मे॑भिर्बिस॒खाइ॑वारुज॒त्सानु॑ गिरी॒णां त॑वि॒षेभि॑रू॒र्मिभि॑ः ।**
**पा॒रा॒व॒त॒घ्नीमव॑से सुवृ॒क्तिभि॑ः सर॑स्वती॒मा वि॑वासेम धी॒तिभि॑ः ॥ २ ॥**

[इयम् ।][14][15] इयम्[16] । बलैः[17] । बिसस्य खनितेव[18] । अरुजति[19] । सानु[20] । शिलोच्चयानाम्[21] । प्रवृद्धैः[22] ।

---

१. ग्रह्यश्वना० P. एतत्संज्ञाय ऋषये Sy.

२. हवींषि दत्तवते Sy.

३. सरस्वती Sy.     ४. बहुलम् Sy.

५. अवसं केवलं स्वात्मन एव तर्पकम् Sy.

६. पणनशीलं वणिजमदातृजनम् Sy.

७. आजघान सेयमददादित्यन्वयः Sy.

८. ०दञ्ज० P.

९. अथ प्रत्यक्षीकृत्य स्तौति Sy.

१०. तादृशानि is suggested for तादृशा ॥ तानि पुत्रदानादीनि Sy.

११. त्वदीयानि Sy.

१२. तविषाणि महान्ति भवन्ति Sy.

१३. हे सरस्वति ! देवि ! Sy.

१४. सरस्वती देवतारूपेण नदीरूपेण च वर्तते। देवतारूपा स्तुता । अधुनानया नदीरूपां सरस्वतीं स्तौति Sy. भरद्वाजस्यार्षम् Dur. भरद्वाजस्यार्षम् । यद्यपि चेयं सारस्वतस्य पशोः षड्ऋचः । 'आ नो॑ दि॒वा' (RV. V. 43.11.) 'पा॒वीर॒वी' (RV.VI.49.7.), 'इ॒मा जु॒ह्वा॑ना' (RV. VII.95.5.), 'यस्ते॒ स्तन॑ः' (RV. I. 164. 49.) 'सर॑स्वत्य॒भि नो॑ नेषि' (RV.III.61.14.), 'इ॒यं शुष्मे॑भिः' (RV. VI. 61.2.) इत्युत्तमा याज्या पठिता । तया देवता इज्यते । तथापि चोदनाप्रकरणाद् देवतात्वम् 'ऊर्मिभिः पारावतघ्नीम्' इति नदीरूपत्वलिङ्गात् । प्रकरणाच्च लिङ्गं बलवदिति भाष्यकाराभिप्रायः । अतो नदीरूपेणानेन सरस्वती स्तूयते SKN.

१५. The *pratīka* is supplied by the Editor.

१६. नदीरूपा सरस्वती Sy. सरस्वती नदी Dur. सरस्वती SKN.

१७. शोषकैरात्मीयैर्बलैः Sy. बलनामैतत् । सामर्थ्याच्चान्तर्णीतमत्वर्थमूर्मिविशेषणम् । बलवद्भिः SKN.

१८. बिसं खनतीति बिसखाः । स यथा बिसार्थं पङ्कं रुजति तद्वत् Sy. किं करोति ? .... यथा बिसखानको बिसमनादरेणैव मृदुत्वात्खनति, एवमियमनादरेणैव Dur. यथा बिसानां खादको मृदुत्वात् हिनस्ति, एवम् SKN.

१९. ०जत् is suggested for ०जति ॥ भनक्ति Sy. बिसखानक इवानादरेणैव रुजति भनक्तीत्यर्थः Dur. 'रुजो भङ्गे' भनक्ति SKN.

२०. सानूनि Sy. यदपि सानु भवति समुच्छ्रितं वज्रसङ्घातकल्पम्....... शिखरम् Dur. किम् ? .... समुच्छ्रितं प्रदेशम् । .... शिखरमित्यर्थः SKN.

२१. पर्वतानां तीरसम्बद्धानाम् Sy. पर्वतानाम् SKN.

२२. ०द्धैः P. महद्भिः Sy., Dur., SKN.

ऊर्मिभिः[1]। पारावारघातिनी पारावतघ्नीति[2] यास्कः, कूलयोरुभयोर्भङ्क्त्रीमित्यर्थः ताम्। रक्षणाय[3]। स्तुतिभिः[4]। सरस्वतीम्[5]। कर्मभिश्च[6]। परिचरेम[7, 8]।

**सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः।**
**उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥ ३ ॥**

सरस्वति। हे सरस्वति! देवानां निन्दितॄनसुरान्[9]। निबर्हय[10]। प्रजां च[11]। व्याप्तस्य। बृसयनाम्नो वृत्रपितुः। मायाविनः। अपि च[12]। प्रजाभ्यः[13]। क्षेत्राणि[14]। अलम्भयः[15]। उदकम्। एभ्यः। अस्रवः[16]। अन्नवति[17]!

**प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु ॥ ४ ॥**

प्र णः। प्रावतु[18]। अस्मान्[19]। देवी[20]। सरस्वती। अन्नैः[21]। अन्नवती[22]। कर्मणाम्[23]।

---

१. तरङ्गैः Sy. उदकस्य चैवंरूपत्वम् SKN.

२. पारावारघ्नीति D. N.2.24. reads 'पारावतघ्नीं पारावारघातिनीम्। परावति दूरदेशे विद्यमानस्यापि वृक्षादेर्हन्त्रीम्। यद्वा पारावतघ्नीं पारावारे पारार्वाची तीरे। तयोर्घातिनीम् Sy. येयमेवङ्गुणविशिष्टा तामेतां वयम्.... पारावारघातिनीं, सा हि ऊर्मिभिः परं चावरं चोभे अपि हन्ति Dur. परस्यावरस्य च कुलस्य हन्त्रीम् SKN.

३. रक्षणार्थम् Sy. अवनाय रक्षणायात्मनः Dur. उदकेन तर्पणाय पालनाय वात्मनः SKN.

४. कथं नाम रक्षेदसावस्मानित्येवमर्थं पुरस्कृत्य ....सुप्रवृत्ताभिः स्तुतिभिः स्वरसौष्ठवादियुक्ताभिः Dur. 'वृजी वर्जने' सुष्ठु वर्जिताभिर्दोषैः SKN. ५. ०ती P.

६. स्तुतिभिश्चानेकप्रकाराभिश्चेत्यर्थः। एष समस्तार्थः Dur. कर्मभिः स्तुत्याख्यैः स्तुतिभिरित्यर्थः SKN.

७. आभिमुख्येनावस्थिताः परिचरेम Dur. विवासतिः परिचर्यायाम्। परिचरेम SKN.

८. VM. ignores आ।

इयं शुष्मैः शोषणैः। शुष्ममिति बलनाम। शोषयतीति सतः। बिसं बिस्यतेर्भेदनकर्मणः। वृद्धिकर्मणो वा। सानु समुच्छ्रितं भवति। समुन्नुन्नमिति वा। महद्भिरूर्मिभिः। पारावतघ्नीं पारावारघातिनीम्। पारं परं भवति। अवारमवरम्। अवनाय सुप्रवृत्ताभिः। (शोभनाभिः) स्तुतिभिः सरस्वतीं (नदीं) कर्मभिः परिचरेम N. 2.24., SKN. II. 108.

९. देवाननिन्दितॄनरसुरा P. देवानां निन्दकान् सुरान् Sy. १०. न्यबर्हयः। अवधीः Sy.

११. पुत्रं वृत्रासुरं च न्यवधीः। त्वत्साहाय्यादेवेन्द्रो हतवानित्यर्थः Sy. १२. बृहसय० P. बृसय इति त्वष्टुर्नामधेयम्। त्वष्टुः Sy.

१३. Omitted by P.

१४. मनुष्येभ्यः Sy.

१५. असुरैरपहृता भूमीः Sy.

१६. अक्षारयः। यद्वा क्षितयोऽसुरजनाः। तेभ्यः सकाशादवनीर्भूमीरविन्दः। लब्धवानसि। तान् हत्वैभ्यश्चासुरेभ्यो विषं मृतिहेतुभूतं गरलमस्रवः Sy.

१७. हे अन्नवति! सरस्वति! Sy.

१८. प्रकर्षेण तर्पयतु Sy. प्रकर्षेण रक्षत्वस्मादि दत्त्वा BB. १९. अमस्मान् P.

२०. दानादिगुणयुक्ता Sy.

२१. रसैः BB.

२२. वाजोऽन्नं यस्यां क्रियायां सा वाजिनी। तद्युक्ता Sy. सरस्वती विशेष्यते। वाजिनीवती वाजवत् क्रियावती BB.

२३. ध्यातॄणाम् स्तोतॄणाम् Sy. धियाम् BB.

अवित्री[1][2]।

**यस्त्वा देवि सरस्वत्युपब्रूते धने हिते । इन्द्रं न वृत्रतूर्ये ॥ ५ ॥**

**यस्त्वा देवी** । यः[3] । त्वा[4] । देवि ! सरस्वति ! उपस्तौति[5] । हितधननिमित्तम्[6] । इन्द्रम्[7] । इव । सङ्ग्रामे तं रक्षेति ।

**त्वं देवि सरस्वत्यवा वाजेषु वाजिनि । रदा पूषेव नः सनिम् ॥ ६ ॥**

**त्वं देवि** । त्वम् । देवि[8] ! सरस्वति ! रक्ष[9] । सङ्ग्रामेषु । अन्नवति[10] ! देहि[11] । पूषेव[12] स्तोतृभ्यः । अस्मभ्यम्[13] । धनम्[14] ।

**उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः । वृत्रघ्नी वष्टि सुष्टुतिम् ॥ ७ ॥**

**उत स्या** । अपि च । एषा[15] । नः[16] । सरस्वती । घोरा[17] । हितरमणीयमार्गा[18] । शत्रूणां हन्त्री[19] । कामयते[20] । सुष्टुतिम्[21] ।

---

१. रक्षित्री Sy. अभिमतप्रदानेन तर्पयित्री BB.

२. यद्वा धीनेति वाङ्नाम (Cf. Ngh. 1. 11. धेनेति वाङ्नाम) अस्माकं धीनां वाचं प्रावतु । अभिमतप्रदानेनावित्री पालयित्री तृप्ता वा अस्मदभिमतं शत्रुमारणं करोत्विति । यद्वा अस्मद्दत्तैर्वाजैः पुरोडाशादिभिरन्नैर्देवी प्रकर्षेणावतु BB.
   This stanza=TS. 1. 8. 22. 1.

३. स्तोता Sy.

४. त्वाम् Sy.

५. स्तौति तं रक्षेति शेषः Sy.

६. VM. explains धने and हिते together by हितधननिमित्तम् ॥ धने हिते निहिते निमित्तभूते सति Sy.

७. अन्द्रम् P.

८. हे देवि ! दानादिगुणयुक्ते ! Sy.

९. अस्मान्रक्ष Sy.

१०. हे वाजिनि ! वाजोऽन्नं बलं वा ! तद्युक्ते ! हे सरस्वति ! Sy.

११. धेहि P.
   विलिख । प्रयच्छेति यावत् Sy.

१२. पोषको देव इव Sy.

१३. अपि च नोऽस्मभ्यम् Sy.

१४. सम्भजनीयं धनम् Sy.

१५. प्रसिद्धा Sy.

१६. अस्मदीयाम् Sy.

१७. शत्रूणां भयकारिणी Sy.

१८. वर्ततेऽनेनेति वर्तनी रथः । हिरण्ययो वर्तनिर्यस्याः सा तथोक्ता Sy.

१९. वृत्राणां शत्रूणां हन्त्री । एवम्भूता सा सरस्वती Sy.

२०. कामयताम् Sy.

२१. ष्टुति P.
   शोभनां स्तुतिम् Sy.

यस्या॑ अन॒न्तो अह्रु॑तस्त्वे॒षश्च॑रि॒ष्णुर्र्ण॒वः । अम॒श्चर॑ति॒ रोरु॑वत् ॥ ८ ॥

यस्याः । यस्याः[1] । अपर्यन्तः[2] । अनभिभूतः[3] । दीप्तः । चरणशीलः[4] । उदकवान्[5] । अमः[6] । चरति[7] । शब्दनं कुर्वन्[8], अम इति बलनाम[9] ।

सा नो॒ विश्वा॒ अति॒ द्विषः॒ स्वसॄ॑र॒न्या ऋ॒ताव॑री । अत॒न्नहे॑व॒ सूर्यः॑ ॥ ९ ॥

सा नः । सा[10] । अस्मान् । विश्वान्[11] । शत्रून्[12] । अतिनयतु[13] । स्वयंसारणीः[14] । अन्याश्च प्रजाः[15] । उदकवती[16] । गच्छन् सन्ततम्[17] । अहानि यथा[18] । सूर्योऽतिनयति[19] ।

उ॒त नः॑ प्रि॒या प्रि॒यासु॑ स॒प्तस्व॑सा॒ सुजु॑ष्टा । सर॑स्वती॒ स्तोम्या॑ भूत् ॥ १० ॥

उत नः[20] । अपि च । अस्माकम् । प्रियासु[21] । प्रियात्यन्तं प्रिया[22] । सप्त गङ्गाद्या यस्याः स्वसारः[23] । सुपर्याप्ता[24] । सरस्वती[25] । स्तोतव्या । भवतु ।

---

१. सरस्वत्याः Sy.
२. पर्वतः P. अपर्यन्तोऽपरिमितः Sy.
३. निभिभूते P.
अहिंसितोऽकुटिलो वा Sy.
४. सर्वत्राप्रतिहतगतिरित्यर्थः Sy.
५. ०कावान् P. उदकप्रद इत्यर्थः । एवम्भूतः सन् Sy.
६. बलम् Sy.
७. वर्तते सा नो विश्वा इत्युत्तरत्र सम्बन्धः Sy.
८. भृशं शब्दं कुर्वन् Sy.
९. The passage: अम इति बलनाम (Cf. N. 10. 21.) should come immediately after अमः and precede चरति ।
१०. सरस्वती Sy.
११. सर्वाः Sy.
१२. द्वेष्ट्रीः प्रजाः Sy.
१३. अतितारयतु Sy.
१४. ०सारि० is suggested for ०सार० ॥ स्वयंसारिणीः सहोत्पन्ना वा Sy.
१५. नदीरस्मानतिनयतु Sy.
१६. ऋतावरीः—ऋतमित्युदकनाम (Ngh. 1.12.) तद्युक्ताः । यद्वा । जस्येव 'वा छन्दसि' (Pa. 6.1.106.) इति पूर्वसवर्णदीर्घः । उदकवत्यः स्वसारो भगिन्योऽन्या गङ्गाद्या नद्यश्चास्मान् शत्रूनति नयन्तु Sy.
१७. सततम् Sy.
१८. तत्र दृष्टान्तः । यथाहानि शीघ्रमतिनयति तद्वत् Sy.
१९. धूर्यो० P.
सर्वस्य प्रेरक आदित्यः Sy.
२०. दशरात्रे तृतीयेऽहनि प्रउगे 'उत नः प्रिया' इति सारस्वतस्तृचः । सूत्रितञ्च—'उत नः प्रिया प्रियास्वित्यौष्णिहं प्रउगम्' (ĀSS.7.10.) इति । पवित्रेष्ट्यां 'उत नः प्रिया' इति सारस्वतस्य हविषो ऽनुवाक्या । सूत्रितञ्च—'उत नः प्रिया प्रियास्विमा जुह्वाना युष्मदा नमोभिः' (ĀSS.2.12.) इति Sy.
२१. प्रियाणां मध्ये Sy.
२२. प्रियतमा Sy.
२३. गायत्र्यादीनि सप्त छन्दांसि स्वसारो यस्यास्तादृशी । नदीरूपायास्तु गङ्गाद्याः सप्त नद्यः स्वसारः Sy.
२४. सुष्ठु पुरातनैर्ऋषिभिः सेविता Sy.
२५. एवम्भूता सरस्वती देवी Sy.

**आपप्रुषी पार्थिवान्युरु रजो अन्तरिक्षम् । सरस्वती निदस्पातु ॥ ११ ॥**

**आपप्रुषी** । आपूरयन्ति[2] । पार्थिवानि भूतानि[3] । विस्तीर्णम्[4] । लोकम्[5] । स्वर्गमन्तरिक्षं च[6] । सरस्वती[7] । शत्रोः[8] । रक्षतु[9] ।

**त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्या भूत् ॥ १२ ॥**

**त्रिषधस्था** । त्रिस्थाना[10] । सप्तधातुः[11] सप्तभिश्छन्दोभिः महिता, सप्तभिर्वा स्वसृभि । पञ्च । जनान्[12] । वर्धयन्ती[13] । सङ्ग्रामे सङ्ग्रामे[14] । ह्वातव्या । भवति ।

**प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा ।**
**रथइव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥ १३ ॥**

**प्र या** । या[15] । महता[16] । महत्वेन लोके[17] । प्रकर्षेण सुष्ठु ज्ञायते । अन्नैः[18] । अन्या नदीः[19] । वेगवतीनां[20] नदीनां मध्ये । अत्यन्तं वेगवती सर्वाभ्योऽपि नदीभ्योऽन्नं प्रयच्छतीति प्रज्ञानम् । रथइव । बृहती[21] । महत्त्वाय[22] । कृता[23] । विदुषा[24] । सरस्वतीयम् । उपस्तोतव्यान्नानावहन्त्री[25][26][27] ।

---

१. ०षि P.
२. ०यन्ती is suggested for ०यन्ति ॥ स्वतेजसा पूरितवती Sy.
३. पृथिव्याः सम्बन्धीनि Sy.
४. विस्तीर्णानि Sy.
५. रजांसि लोकान् Sy.
६. अन्तरा क्षान्तं नभश्च Sy.
७. सरस्वती देवी Sy.
८. निन्दकाच्छत्रोः Sy.
९. अस्मान्रक्षतु Sy.
१०. त्रिषु लोकेषु सहावतिष्ठमाना त्रिलोकव्यापिनी Sy.
११. सप्तधातवोऽवयवा गायत्र्याद्या गङ्गाद्या वा यस्याः सा तथोक्ता Sy.
१२. पञ्च जाता जातानि निषादपञ्चमांश्चतुरो वर्णान् गन्धर्वादीन् वा Sy.
१३. अभिवृद्धान् कुर्वती ईदृशी सरस्वती Sy.
१४. युद्धे युद्धे सर्वेषु युद्धेषु Sy.
१५. सरस्वती Sy.
१६. महती Sy.
१७. ०त्वेन is suggested for ०त्वेन ॥ माहात्म्येन Sy.
१८. द्युम्नैर्द्योतमानैर्यशोभिरन्नैर्वा युक्ता सती Sy.
१९. या चान्या—अन्यासाम् 'सुपां सुलुक्०' इति षष्ठीबहुवचनस्य जस् Sy.
२०. वेगवत्तमा Sy.
२१. परिवृढा गुणैरधिका Sy.
२२. विभुत्वाय Sy.
२३. प्रजापतिना निर्मिता Sy.
२४. जानता स्तोत्रा Sy.
२५. उपस्तोतव्या भवति Sy.
२६. ०हर्त्री P. ०हन्ती is suggested for ०हन्त्री ।
२७. VM. seems to take आसु as आ and सु two separate prepositions and explains सु as सुष्ठु and ignores आ । If not, he ignores आसु ॥ आसु आसां नदीनां देवतानां वा मध्ये Sy.

**सरस्वत्यभि नो नेषि वस्यो मापं स्फरीः पयंसा मा न आ धंक् ।**
**जुषस्वं नः सख्या वेश्यां च मा त्वत्क्षेत्राण्यरंणानि गन्म ॥ १४ ॥**

सरस्वति । हे सरस्वति ! अभिनय[1] । अस्मान्[2] । अभ्युदयम्[3] । मा[4] । अप स्फरीः[5] । उदकेन[6] सेतौ विभिन्नेऽपस्फरणं[7] भवति । मा च । अस्मान्[8] । अधाक्षीरुदकाभावात्[9] । सेवस्व । अस्मान्[10] । सखित्वेन[11] । निवेशनेन[12] । च । मा । त्वत्[13] । क्षेत्राणि[14] । उदकाभावाद् अरमणीयानि[15] । गन्मेति[16] ।[17]

ऋगर्थदीपिका सेयं[18] चतुर्थश्चायमष्टकः ।
कर्ता श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः[19] ॥

माधवेन कृतं भाष्यं चतुर्थस्याष्टकस्य यत् ।
नारायणेन लिखितं तदन्तो[20] देवशर्मणा[21] ॥

वेदो नाम महत् पदं जनपदो यत्र द्विजानां तति-
स्साङ्गं वेदमधीत्य वाच्यमखिलं मीमांसतेऽस्य स्फुटम् ।
तत्र[22] ग्रामवरे क्वचिन्निवसता नाम्ना च नारायणे-
नैतन्माधवभाष्यलेखनवशाद् वैदग्ध्यमाविष्कृतम्[23] ॥

---

१. अभिप्रापय Sy. आभिमुख्येन....प्रापय BB.
२. अस्माम् P.
३. वसीयः प्रशस्तं वसु धनम् Sy. वरिष्ठं प्राणादिकम् BB.
४. Omitted by P. मा चास्मान् BB.
५. अपस्पिरः P. अप्रवृद्धान् मा कार्षीः, स्फारो वृद्धिः । उपसर्गवशात्तद्विपरीते वर्तते Sy. हिंसीः BB.
६. अधिकेन Sy. ७. अवस्फरणं P.
८. अस्मानागत्य BB.
९. अभिदह । बाधस्व Sy. पयसा हविषा च वर्धिता धाक्षीः BB.
१०. अस्माकम् Sy.
११. सख्यानि सखिकर्माणि Sy. अपि तु सख्येनास्मान् BB.
१२. प्रवेशनानि Sy. वेश्यतया, अभिगम्यतया च BB.
१३. त्वत्सकाशात् Sy. त्वत्प्रसादात् BB.
१४. क्षपणशीलानि BB.
१५. वयञ्च त्वत्सकाशाद्, अरमणीयानि निकृष्टानि, अरणीयानि क्षेत्राणि स्थानानि BB.
१६. गम्मेति D. (मा) प्राप्नवाम अपि तु रमणीयान्येव Sy.
१७. This stanza=TS. 7. 2. 7. 5.
१८. चेयं D.
१९. MS. D. puts the figure ॥६१॥ here to indicate the end of sixty-first hymn. No such number is given in P.
२०. ०तस्त० P., D.
२१. देवदर्शण P. २२. अत्र P.
२३. श्रीगणपतये नमः । गोपालकृष्णाय नमः । सरस्वत्यै नमः । वेदव्यासाय नमः । गुरवे नमः P.

# ॥ अथ पञ्चमाष्टके प्रथमोऽध्यायः ॥[1]

पञ्चमोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
ऋषिनामार्षगोत्रेषु[2] विज्ञेयमिह[3] वैदिकैः ॥ १ ॥
ऋषिनामार्षगोत्राणां[4] ज्ञानमायुष्यमुच्यते[5] ।
पुत्र्यं[6] पुण्यं यशस्यं च स्वर्ग्यं धन्यममित्रहम् ॥ २ ॥
ऋषिनामार्षगोत्रज्ञ[7] एकैकस्य भवत्यृषेः ।
शरत्सहस्रमतिथिर्दिव्यमर्चितपूजितः[8] ॥ ३ ॥
ततः परं सुविपुलं[9] स्वाध्यायफलमश्नुते ।
भवति ब्राह्मणं[10] चापि ज्ञानस्यैतत्प्रयोजनम्[11] ॥ ४ ॥
मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविन्न[12] यः[13] ।
याजनाध्यापनादेति छन्दसां यातयामताम्[14] ॥ ५ ॥
स्थाणुं वर्च्छति[15] गर्तं वा पद्यते वा[16] प्रमीयते ।
पापीयान् भवतीत्यर्थमेवं[17] ब्राह्मणमाह[18] तम् ॥ ६ ॥
मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतवित्तु[19] यः ।
याजनाध्यापनाभ्यां स श्रेय एवाधिगच्छति ॥ ७ ॥

---

१. Supplied by the Editor.
२. ऋषिर्नामा० A., M.
३. विच्छेय० A.  ४. ऋषिर्नामा० A., M.
५. ष्यमुच्यते । पुत्र्यं पुण्यं is missing in M.
६. पुत्र यं च यश० A.
७. ०ज्ञमेकै० A., M
८. शतं सह० A. शरं सह० M.
९. स विपुलं A.
१०. ०ह्मणत्व ज्ञान० A. ०णं च ज्ञान० M.
११. ०ज़कम् A.  १२. ०यश्छन्दो० A.
१३. यम् A., M.
१४. यात योम० A.
१५. वर्चति गर्ते वा वाक्यते A.
१६. मीयते प्रपाम् A. प्र वा मीयते M. Cf. Ārṣ. B. I. I.
१७. ०त्यर्थ एवं A., M.
१८. मा is missing M.
१९. ०यश्छन्दो० A.

एतैः प्रयोजनैः सर्वैः शौनकेन प्रदर्शितैः ।
ऋषयो नामगोत्राभ्यामस्माभिः सम्प्रदर्शिताः ॥ ८ ॥

यदुच्यते पदज्ञानमृषिज्ञानमृ[1]तेऽपि नः ।
भवत्येवेह मन्त्रेषु किमृषिज्ञान[2]मुच्यते ॥ ९ ॥

ऋषिनामा[3]र्षगोत्रेति यदेतच्छौनकोऽब्रवीत् ।
तददृष्टाय कथितं न चादृष्टपरा वयम् ॥१०॥

तदुच्यते स्वसूक्तानामादावन्तेऽथवा[4] पुनः ।
ऋषयो नामगोत्राणि स्थापयन्तीह केषुचित् ॥११॥

'वृष्णे शर्धाय'[5] सूक्तादौ नोधसो नाम दृश्यते ।
अर्चनानाश्च[6] सूक्तान्ते 'बिभ्रतावर्चनानसम्'[7] ॥१२॥

'कण्वं दद प्रचेतसः'[8] 'दिवोदासेभिरिन्द्र'[9] च ।
'उतासि[10] मैत्रावरुणः' इति[11] गोत्रनिदर्शनम् ॥१३॥

ऋषीणां नामगोत्राणि दृष्ट्वा भ्राम्यन्ति लौकिकाः ।
जिज्ञासमाना मन्त्रार्थमतस्तेषां[12] निदर्शनम् ॥१४॥

नामगोत्राणि मन्त्रेषु न निविष्टानि येषु[13] तु ।
तेषु प्रदर्शनं तेषां विस्पष्टप्रतिपत्तये ॥१५॥

पदं ह्यज्ञायमानार्थं दृष्ट्वा भ्राम्यन्त्यपि क्वचित् ।
स्यादृषेः[14] किमिदं नाम गोत्रं वाहो भवेदिति ॥१६॥

---

१. ०षिर्ज्ञान० A. २. किमृषौ ज्ञान० A., M.
३. ०षिर्नामा० A., M.
४. ०न्ते च वा A., M. ५. RV. I.64.1.
६. ०नानान्त सू० A. ०नानां च M.
७. बिभृताव० A. ०तावच्चना० M. RV. V.64.7.
८. कुण्वङ् वृचे० A. कण्वन्द प्रचे० M. RV. I.39.9.
९. ०सेभ्ररि० A. RV. I.130.10.
१०. इतासि A., M. ११. RV. 7.33.11.
१२. ज्ञासमाना अत्र तेषां A., M.
१३. येषु कु A. १४. स्यादृष्टे कि० M.

नन्वेवं विनियोगश्च दर्शनीयस्तवाधुना ।
वक्तव्यो वा विशेषो[1]ऽत्र विशेषस्तत्र वक्ष्यते ॥१७॥

यज्ञं विगाह्य तत्रत्यानर्थान्निभिदधत्यतः ।
यजुषा[2]मर्थविज्ञानं नाकर्मज्ञस्य सिध्यति ॥१८॥

आह शाखाम् 'इषे[3] त्वा' इति न शाखा यजुषि श्रुता ।
न च क्रियापदं दृष्टमपेक्षा जायते य[4]तः ॥१९॥

'इषे त्वे त्याच्छिन[5]त्ति' इति ब्राह्मणं दृश्यते यदा ।
यजुषोऽर्थं तदा स्पष्टमवगच्छन्ति लौकिकाः ॥२०॥

ऋचस्तु परिपूर्णार्था नापेक्ष[6]न्ते बहिःस्[7]थितम् ।
विनियोगस्ततस्तासामस्माभिर्न प्रदर्श्[8]यते ॥२१॥

कि[9]ञ्चर्चो विनियुज्यन्ते न वाक्यार्थानुरूपतः ।
देवता श्रुतिसामान्यं वि[10]न्यासः प्रत्ययस्तथा ॥२२॥

छन्दांसि सूक्तसंख्या च शब्दावृ[11]त्तिर्ऋषिस्तथा ।
प्रयोजयन्त्यृचस्ते च न वाक्यार्थस्य भेदकाः ॥२३॥

ननु च ब्राह्मणे साम्नामृषयश्चापि दर्शिताः ।
अ[12]र्थवादे च सर्वेषां य[13]च्छाटयायनकं विदुः ॥२४॥

ऋचां नैवंविधं दृष्टमृषीन् केनाह शौनकः ।
ब्राह्मणा[14]दाकृतेरुक्तेस्तथा वृद्धोप[15]देशतः ॥२५॥

---

१. पिशेषो० A. २. यजुषा० A. ३. YV. 1.1. ४. ततः A., M. ५. TB. 3.2.1.3. ६. न वेक्षन्ते A., M. ७. ०हिस्थि० A. ८. प्रदृश्यते M. ९. किन्त्वर्चो A. १०. विन्यास प्रत्य० A., M. ११. शब्दवृत्तिरुषस्तथा A. ०त्तिरूष० स्तथा M. १२. ०देषु सर्वे० A. १३. यश्छा० A. १४. ०णाराकृ० A., M. १५. वृद्धोप० A.

ताण्डके शाट्यायनके तथा चैवैतरेयके[1] ।
अस्माभिरभिदृश्यन्ते ऋचामपि महर्षयः ।।२६।।

माधुच्छन्दसमित्याह[2] 'वायवा याहि दर्शत'[3] ।
आकृत्या दश सूक्तानि तदार्षाण्याह शौनकः ।।२७।।

उक्तिश्च दृष्टा सूक्तेषु 'प्र वव्रेर्वव्रिश्चिकेत'[4] ।
'तमु त्वा गोतमो गिरा'[5] जेतारमपराजितम्[6] ।।२८।।

'त्यान्नु क्षत्रियाँ अव'[7] इति सूक्तं वृद्धोपदेशतः[8] ।
मत्स्यानां[9] जालबद्धानामार्षं यास्कोऽब्रवीदिति[10] ।।२९।।

प्रमाणेष्वपि सन्देहाद् विकल्पोक्तिरपि क्वचित् ।
'चन्द्रमा अप्स्वन्तः'[11] इति सूक्ते[12] कुत्सोऽथवा[13] त्रितः ।।३०।। इति ।।

VI.62.

**स्तुषे नरा दिवो अस्य प्रसन्ताश्विना हुवे जरमाणो अर्कैः ।**
**या सद्य उस्रा व्युषि ज्मो अन्तान्युयूषतः पर्युरू वरांसि ।। १ ।।**

स्तुषे नरा[14] ।। भारद्वाजः ।। स्तौमि[15] । नेतारौ[16] । दिवौ[17] । अस्य[18] । प्रभवन्तौ[19] । हृ(ध)यामि[20] च ।

१. चैवेस्मन्दितरे A. चैवेस्मतरे M. चैवास्मदीयके R.
२. मधुच्छन्दः समिच्छत्याह A. मधुच्छ० M.
३. दर्शकः A., M. RV. I.2.1.
४. वप्रेर्वप्रश्चिकेत A. वव्रे वृश्चिके ततः M. RV. V.19.1.
५. क्त्वा गौतम M. RV. I.78.2.
६. ०रमराजि० A. RV. I.11.2.,V.25.6.
७. ०यामवेक्तु A. ०यामवेत्तु M.RV. 8.67.1.
८. ०प्यदेशकः A., M.
९. मध्यप्स्र्या ज्ञ ल० A. मध्याप्स्र्या जाल० M.
१०. या (के) स्का ब्र० A. ११. RV. I.105.1.
१२. सूक्ते is missing in A., M.
१३. कुंसोऽथ० A., M.
१४. अथ पञ्चमाष्टके प्रथमोऽध्याय आरभ्यते । षष्ठमण्डलस्य षष्ठेऽनुवाके चतुर्दश सूक्तानि। तत्र 'स्तुषे नरा' इत्येकादशर्चं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका—'स्तुष एकादशाश्विनं तु' (KSA.33.62.p.24.) इति । मण्डलद्रष्टा बार्हस्पत्यो भरद्वाज ऋषिः । अनुक्तत्वात्त्रिष्टुप् । अश्विनौ देवता । प्रातरनुवाक आश्विने क्रताविदमादिके द्वे सूक्ते । आश्विनशस्त्रे चैते एव । सूत्रितञ्च—'स्तुषे नरेति सूक्ते'(ĀSS. 4.15.) इति Sy. १५. स्तुषे प्रगीतमन्त्रसाध्यैः स्तोत्रैः स्तोतुम् Sy. १६. नेतरौ M.
१७. दिवः is suggested for दिवौ ।। द्युलोकस्य Sy. १८. भुवनस्य Sy.
१९. प्रसन्तौ प्रभवन्तावीश्वरौ Sy.
२०. ह्ययामि A. ह्वयामि is suggested for ह्व(घ)यामि ।। आह्वयामि Sy.

अश्विनौ[1]। स्तुवन्[2]। स्तुतिभिः[3]। यो[4]। सद्य एव[5]। उतस्राविणो[6]। पर्यन्तान्। उषसि व्युष्टायाम्[7]। उरूणि[8]। तमांसि[9]। पर्युयूषतः[10] पृथक्कुरुतस्तेजसा[11] प्रकाशयतः[12] सर्वमित्यर्थः[13]।

**ता यज्ञमा शुचिभिश्चक्रमाणा रथस्य भानुं रुरुचू रजोभिः।**
**पुरू वरांस्यमिता मिमानापो धन्वान्यति याथो अज्रान्॥ २॥**

**ता यज्ञम्।** तौ[14]। यज्ञम्[15]। आक्रममाणौ[16]। शुचिभिः[17] रायैस्तेजोभिः[18]। स्वरथस्य[19]। भानुम्[20]। रुरुचतुः[21]। पुरूणि[22]। तमसो वारकाणि[23]। अमितानि[24] तेजांसि। मिमानौ[25]। अपः[26]। निरुदकाश्च देशाद्[27]। रश्मींश्च[28]। अतियाथ, यद्वा—तमांसि हिंसन्तावात्मीयानश्वानतिगमयत[29] इति, रश्मींश्चातियाथाथः[30]।

**ता ह त्यद्वर्तिर्यदरध्रमुग्रेत्था धियं ऊहथुः शश्वदश्वैः।**
**मनोजवेभिरिषिरैः शयध्यै परि व्यथिर्दाशुषो मर्त्यस्य॥ ३॥**

**ता ह त्यत्[31]।** तौ। खलु। यदा। इदम्[32]। वर्तिमर्गिम्[33]। रक्षोभिरहिंसितमागच्छथः[34]। उग्रो[35]।

---

१. अश्वैरन्वितौ Sy.
२. स्तुवं A. स्तुतिं कुर्वन् Sy.
३. अर्चनीयमन्त्रसाध्यैः शस्त्रैः Sy.
४. आ M. यौ is suggested for यो।
५. साद्य M.
६. एवोः स्राविणोः M. उत्स्राविणौ is suggested for उतस्राविणो॥ शत्रूणां निवारकौ Sy.
७. व्युष्टायम् A. व्युष्टौ निशायाः समाप्तौ Sy.
८. उरुणि A.
९. रूपस्यावरकाणि तमांसि, अथवा वरांसि तेजांसि Sy.
१०. पर्युयु० A. परियुयूषतः is suggested for पर्युयूषतः॥ पृथक्कुरुतः, यद्वा तमोनिवारणात् विस्तारयतः Sy.
११. प्रथ क्रुरु० A.
१२. श is missing in A.
१३. VM. ignores ज्मः॥ ज्मः पृथिव्याः Sy.
१४. किञ्च प्रसिद्धावश्विनौ Sy.
१५. अस्मदीयं यागम् Sy.
१६. ०क्रममा० is missing in A. अभिचक्रमाणौ Sy.
१७. निर्मलैः Sy.
१८. स्वीयैः is suggested for रायैः॥ रजो रजतेः। ज्योती रज उच्यते N.4.19.
१९. स्वकीयस्य रथस्य Sy.
२०. दीप्तिम् Sy.
२१. आरुचतु A. रोचयेते Sy.
२२. बहूनि Sy.
२३. ०रकनि A. तमोनिवारकाणि तेजांसि Sy.
२४. अमिता० A. अपरिमितानि Sy.
२५. निर्मिमाणौ Sy.
२६. अप उद्दिश्य Sy.
२७. ०दकांश्च देशान् is suggested for ०दकाश्च देशाद्॥ मरुप्रदेशान् Sy.
२८. रश्मिश्च A. स्वकीयानश्वान् Sy.
२९. ०नश्चनति० A.
३०. था seems to be unnecessary.
३१. त्या A. त्य M.
३२. तद् Sy.
३३. वर्ति A. यजमानस्य गृहं समर्धयितुं गच्छथः Sy. ३४. असमृद्धम् Sy.
३५. उग्रौ is suggested for उग्रो॥ उग्रावश्विनौ युवाम् Sy.

तदानीं सत्यमेव[1]। कर्माणि[2]। ऊहतुर्वहथः स्तोतॄणाम्[3]। नित्यम्[4]। अश्वैः[5]। तथा मनोजवैः[6]। गमनशीलैरश्वैः[7]। यजमानस्य[8]। शत्रुर्युवाभ्याम्[9]। परिशयनाय क्रियते[10] हन्यत इत्यर्थः।[11]

ता नव्य॑सो॒ जर॑माणस्य॒ मन्मोप॑ भूषतो॒ युयुजा॒नस॑प्ती ।
शु॒भं॑ पृ॒क्षमिष॒मूर्जं॒ वह॑न्ता॒ होता॑ यक्षत्प्र॒त्नो अ॒ध्रुग्युवा॑ना ॥ ४ ॥

ता नव्यसः[12]। तेन[13]। नवतरस्य। स्तुवतः[14]। स्तुतिम्[15]। उपभवथः[16]। रथे नियुज्यमानाश्वौ[17]। उदकं संवर्चनीयम्[18]। अन्नम्[19]। रसं च। वहन्तौ। होता[20]। ययज्ञ[21] ? पुराणः[22]। द्रोहवर्जितौ[23]। युवानौ तावत्[24]। शुभम्[25]।

ता व॒ल्गू द॒स्रा पु॑रु॒शाक॑तमा प्र॒त्ना नव्य॑सा॒ वच॒सा वि॑वासे ।
या शंस॑ते स्तुव॒ते शंभ॑विष्ठा ब॒भूव॑तुर्गृण॒ते चि॒त्ररा॑ती ॥ ५ ॥

ता वल्गू[26]। तौ। वल्गनशीलौ[27] वीरौ। दर्शनीयौ[28]। अतिशयेन बहुसहायौ[29]। प्रश्नौ[30]। नवतरेण[31]। वचसा[32]। परिचरामि। यौ। शंसते[33]। स्तुवते[34] च। अतिशयेन सुखस्य भाविताराै[35]। बभूवतुः। गृणते मह्यं

---

१. इत्थम् Sy.
२. धियः स्तोतॄन् Sy.
३. ०हथुप्तह० A. ०हथुर्व० is suggested for ०हतुर्व० ॥ स्वर्ग प्रापयथः Sy.
४. सर्वदा Sy.
५. स्वीयैरश्वैः Sy.
६. मनोवेगैः Sy.
७. एषणीयैः काम्यैः Sy.
८. युतेज्यमान० M.
९. यजमानस्य हिंसकः Sy.
१०. परिशयनाय दीर्घनिद्रायै युवाभ्यां क्रियताम् Sy.
११. VM. ignores मर्त्यस्य ॥ मर्त्यस्य मनुष्यस्य Sy.
१२. नप्य(व्य)सः A.
१३. तावश्विनौ Sy.
१४. स्तवत A. स्तुतिं कुर्वतः Sy.
१५. सतिम् A. मननीयं स्तोत्रम् Sy.
१६. उपगच्छतः । यद्वा स्तोत्रसमीपे भवतः Sy.
१७. ०मानश्चौ A.
१८. पृक्षमन्नम् Sy. पयः पृक्षमित्यन्ननाम्नी Ngh. 2.7.
१९. इषं पुष्टिम् Sy.
२०. देवानामाह्वाता Sy.
२१. वहन्तौ । होता । ययज्ञ is missing in M. ययज्ञ is doubtful ॥ यक्षद् यजतु Sy.
२२. पुराणैः M. पुराणोऽग्निः Sy.
२३. अद्रोग्धा प्रियः Sy.
२४. नित्यतरुणौ Sy.
२५. तावत् । शुभम् is missing in A. शोभनम् Sy.
२६. ता वल्ग्रः ओं ता वल्ग्रः A. ता वल्गुः M.
२७. वल्गलन० A. वल? (ल्ग)नशीलौ रुचिरौ वा Sy.
२८. दर्शनीयावश्विनौ Sy.
२९. अतिशयेन बहुकर्माणौ बहुसहायौ वा Sy.
३०. प्रत्नौ is suggested for प्रश्नौ ॥ पुराणौ Sy. प्रत्नं प्रदिव इति पुराणनामनी Ngh. 3.27.
३१. नवतीरेणे A.
३२. स्तुत्या Sy.
३३. चरामि यौ शंस० is missing in M. ॥ शस्त्रैः स्तुतिं कुर्वते Sy.
३४. स्तोत्रैः स्तुतिं कुर्वते जनाय Sy.
३५. भावयितारौ is suggested for भाविताराै ॥ अतिशयेन सुखस्य भावयितारावतिशयेन सुखस्वरूपौ वा Sy.

च । चित्रदानौ ।

ता भुज्युं विभिरद्भ्यः समुद्रात्तुग्रस्य सूनुमूहथू रजोभिः ।
अरेणुभिर्योजनेभिर्भुजन्ता पतत्रिभिरर्णसो निरुपस्थात् ॥ ६ ॥

ता भुज्युम् । तौ । भुज्युम् । अश्वैः । समुद्रमध्यस्थांभ्यः । अद्भ्यः । तुग्रस्य । पुत्रम् । ऊहतुर्धर् ? मार्गैः तदेवाह रेणुवर्जितैः । मार्गैः । तुग्रसूनुं रक्षन्तौ । अश्वैः । उकमध्यात् । निरूप्योहथुरिति ।

वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः ।
दशस्यन्ता शयवे पिप्यथुर्गामिति च्यवाना सुमतिं भुरण्यू ॥ ७ ॥

वि जयुषा । जयशीलेन । गोतमस्य क्रवमाहरन्तौ (?) शिरोच्चयमार्गस्य निरोधकम् । भित्वा मध्येनागच्छतम् । हे थ्यौ तथा । शृणुतं चाश्वौ ।

१. गृणते मह्यं त्वं A. स्तोत्रशस्त्रव्यतिरिक्तलौकिकस्तुतिभिः स्तुवते च Sy.
२. विचित्रदानौ Sy.
३. ता भुज्युं is missing in A.
४. अश्विनौ युवाम् Sy.
५. तौ भुज्युम् is missing in M. भुज्युनामकं समुद्रमध्ये भग्ननावम् Sy.
६. ०स्थाम्भोभ्यः M. ०स्थाभ्यः is suggested for ०स्थांभ्यः ॥ समुद्रादद्भ्य इति प्रयोगो मातुर्गृहाद् गच्छतीतिवत् Sy.
७. तूग्रस्य M.
८. उगूहक्रथु M. The reading is doubtful. ऊहथुः is suggested for it.
९. आन्तरिक्षै रजोभिर्मार्गैः Sy.
१०. आह is missing in M.
११. नणुव० M. रेणुरहितैः Sy.
१२. योजनेभी रथयुक्तैः M.
१३. तूग्र० M.
१४. पतत्रिभिः पतनवद्भिरश्वैः Sy.
१५. उदकमध्यात् is suggested for उकमध्यात् । It seems to be the explanation of अर्णसः and उपस्थात् ॥ Sy. explains these two words as जलस्य योनेः ।
१६. रू is missing in A. निरूहथुः निरगमयतम् Sy.
१७. शीलौ M. जयशीलेन रथेन Sy.
१८. गौतमस्य कूपमा० M.
१९. शिलोच्चयं मार्ग० is suggested for शिरोच्चयमार्ग० ॥ मार्गे स्थितं पर्वतम् Sy.
२०. वि यातं व्यबाधेथाम् । यातिरत्र वधकर्मा । तथा च निगमान्तरम् 'विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू अयातम्' (RV. I. 116.20) Sy.
२१. रथ्येन A. रथ्यौ is suggested for थ्यौ ॥ हे रथारूढावश्विनौ ! Sy.
२२. यथा M.
२३. चाव्यो M. चाश्विनौ ! is suggested for चाश्वौ ।
२४. There is no commentary on the following words:
हवम् । वृषणा । वध्रिमत्याः । दशस्यन्ता । शयवे । पिप्यथुः । गाम् । इति । च्यवाना । सुमतिम् and भुरण्यौ ॥
Sy. explains these words in the following manner:—
वृषणा कामानां वर्षितारौ । वध्रिमत्याः पुत्रार्थिन्याः । हवमाह्वानम् । दशस्यन्ता स्तोतृभ्यः कामान् प्रयच्छन्तौ । शयवे युवां स्तुवते । गां निवृत्तप्रसवाम् । पिप्यथुः क्षीरेणाप्याययतम् । तथा च निगमान्तरम्—'शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम्' (RV. I.116 22.) इति । इतीत्थम् । सुमतिं सुष्टुतिम् । च्यवाना गच्छन्तौ । भुरण्यू सर्वत्र गन्तारौ यज्ञस्य भर्तारौ वा भवतम् ।

**यद्रो॑दसी प्र॒दिवो॒ अस्ति॑ भू॒मा हेळो॑ दे॒वाना॑मु॒त म॑र्त्य॒त्रा ।**
**तदा॑दित्या वसवो रुद्रियासो रक्षो॒युजे॒ तपु॑र॒घं द॑धात ॥ ८ ॥**

**यद्रोदसी** । यत्[1] । पुराणमर्त्येषु[2] पापपरेषु[3] । देवानाम्[4] । महत्[5] । हेळः[6] । विद्यते, क्रोधो हेळः[7] । तत्[8] । हे आदित्याः ! वसव. ! रुद्रपुत्राश्च मरुतः ! रक्षो भूत्वा[9] युञ्जानाय । तपनशीलम्[10] । अखम्[11] । कुरुत, अप(घ)माहननादयुधम्[12] । द्यावापृथिव्यावश्विनौ भवतः । स्तोत्रस्य[13] स्वाश्च[14] देवान्या च इति(?)[15] ।

**य ई॒ राजा॑नावृ॒तुथा॑ वि॒दध॒द्रज॑सो मि॒त्रो वरु॑ण॒श्चिके॑तत् ।**
**ग॒म्भी॒राय॒ रक्ष॑से हे॒तिम॑स्य॒ द्रोघा॑य चिद्वच॑स॒ आन॑वाय ॥ ९ ॥**

**य ई राजानौ**[16] । यः[17] । इमौ । राजानावश्विनौ । काले[18] । परिचरति । यं च पापान्मुक्तो भवत्वय-मिति[19] मित्रावरुणौ । जानीतः[20] । स गहनाय[21] । रक्षमिस[22] । हेतिम्[23] । अस्य[24] विसृजति[25] । अनुरिति मनुष्यनाम[26] तदीयाय[27] । द्रोध्रे[28] । वचसो[29] । चाधर्षणीयो[30] न भवति[31] ।

---

१. The *pratīka* is supplied by the Editor.

२. पुराणम् । is suggested for पुराण ।

३. पापपरेषु is missing in A. It seems to be redundant. मर्त्येष्वश्विनोः परिचारकेषु Sy. ४. देवानामहं घेढः A.

५. महान् Sy. ६. क्रोधः Sy.

७. हेढः A. The passage क्रोधो हेळः, should immediately follow हेळः and precede विद्यते ।

८. हेळः Sy.

९. रक्षोभिर्युक्ताय रक्षसां स्वामिने प्रेरकाय वा । अथवा रक्षोयुजे रक्षोभिर्युक्ताय यज्वने Sy.

१०. ०शीलत्वम् A. तापकम् Sy.

११. It seems to be redundant.

१२. अघम्, आहननादघम् is suggested for अप(घ)माहननादयुधम् ॥ अघमाहन्तृ Sy.

१३. हे द्यावापृथिव्यौ ! Sy.

१४. ०तस्तो तत्र स्वा० A. The reading is doubtful and unnecessary.

१५. VM. ignores उत ।

१६. राजाना A.,M. १७. नरः Sy.

१८. कालो M. काले काले Sy.

१९. इयं च M. तं मित्रो वरुणश्च Sy.

२०. जानीयात् । मित्रवरुणप्रभृतयो देवा एनं विदुरित्यर्थः Sy.

२१. सस्सः is written twice in A. किञ्चायं परिचारकः Sy.

२२. महाबलाय Sy.

२३. रक्षसे is suggested for रक्षमिस ॥ राक्षसाय Sy. २४. घातकमायुधम् Sy.

२५. अस्य । अस्यति । क्षिपति । प्रथमपुरुषस्य मध्यमपुरुषेण व्यत्ययः Sy.

२६. Cf. Ngh. 2.3.

२७. मनुष्यसम्बन्धिने Sy.

२८. द्रोढे A. द्रोग्ध्रे is suggested for द्रोध्रे ॥ अभिद्रोहात्मकाय Sy.

२९. वचसे is suggested for वचसो ॥ वचनाय हेतिमस्यति । मनुष्याणामभिद्रोहायैनमास्कन्दतीति Sy.

३०. वचसाप चा० M. It seems to be the explanation of चित् ॥ चिद् एव Sy.

३१. VM. ignores रजसः ॥ रजसः समस्तस्य लोकस्य Sy. लोका रजांस्युच्यन्ते N. 4.19.

अन्तरैश्चक्रैस्तनयाय वर्तिर्द्युमता यातं नृवता रथेन।
सनुत्येन त्यजसा मर्त्यस्य वनुष्यतामपि शीर्षा ववृक्तम् ॥ १० ॥

अन्तरैः[1] । सन्निकृष्टैः[2] । चरैः[3] । पुत्राय[4] । मार्गम्[5] । दीप्तिमता । आगच्छतम् । मनुष्ययुक्तेन[6] । रथेन धनदातुम्[7] । अन्तर्हितेन[8] । क्रोधेन[9] । मर्त्यम्[10] । हिंसतां[11] राक्षसानाम् । शीर्षाणि[12] । अपि[13] । ववृक्त[14] छिन्दतम्[15] ।

आ परमाभिरुत मध्यमाभिर्नियुद्भिर्यातमवमाभिरर्वाक् ।
दृळ्हस्य चिद्गोमतो वि व्रजस्य दुरो वर्तं गृणते चित्रराती ॥ ११ ॥

आ परमाभिः[16] । आयातम् । अभिमुखम्[17] । त्रिप्रमाणैः[18] । अश्वैः[19] । दृढस्य[20] । अपि । पशुमतः[21] । व्रजस्य[22] । द्वाराणि । विवृतानि[23] कुरुतम्[24] । स्तुवते । हे चित्रदानौ[25] ! इति[26] ।

---

१. हे अश्विनौ ! Sy.

२. अनिकृष्टैः Sy.

३. चक्रैः is suggested for चरैः ॥ चक्रैर्युक्तेन Sy.

४. तनयं दातुम् Sy.

५. अस्माकं गृहम् Sy.

६. नृवता नेत्रा सारथिना युक्तेन । यद्वा अश्वयुक्तेन Sy. पतङ्गाः । नरः इत्यश्वनामनी Ngh. 1.14.

७. धनं दातुम् is suggested for धनदातुम् ।

८. तिरोहितेन Sy.

९. हृणिः त्यज इति क्रोधनामनी Ngh. 2.13.

१०. मनुष्यस्य Sy.

११. बाधमानानाम् Sy. वनुष्यतिर्हन्तिकर्मा N.5.2.

१२. शिरांसि Sy.

१३. अप M.

१४. वृत्तम् M. ववृक्तं is suggested for ववृक्त ॥ प्रवृक्तम् Sy.

१५. जिङ्(न्द)तम् A.

१६. हे अश्विनौ ! Sy.

१७. अस्मदभिमुखम् Sy.

१८. त्रिप्रमाणैः refers to परमाभिः, मध्यमाभिः and अवमाभिः ॥ परमाभिरुत्कृष्टाभिः । मध्यमाभिरनुत्कृष्टाभिः । अवमाभिर्निकृष्टाभिश्च Sy.

१९. वाहैः Sy.

२०. दृळ्हस्य दृळ्हापिधानस्य Sy.

२१. गोयुक्तस्य Sy.

२२. गोष्ठस्य Sy.

२३. विवृणुतम् Sy.

२४. किञ्च स्तुवते मह्यम् Sy.

२५. विचित्रदानौ भवतम् Sy.

२६. VM. ignores उत ॥ उतापि च Sy.

VI.63.

**क्व१त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नमस्वान् ।**
**आ यो अर्वाङ्नासत्या ववर्त प्रेष्ठा ह्यसथो अस्य मन्मन् ॥ १ ॥**

क्व त्या वल्गू[1] । क्व[2] । तु[3] । वल्गनशीलौ[4] । बहुभिराहूतौ[5] । एद्य । राजप्रतिहतो[6] दूतः[7] । इव । मदीयः स्तोमः[8] । हविषा संयुक्तः[9] । विन्देत् । यः स्तोमः । अभिमुखम्[10] । नासत्यौ[11] । आवर्तयति[12] । तुरीयः पादः प्रत्यक्षः, प्रियतमौ । हि । भवते[13] । तथास्य स्तोतुः[14] । स्तुतौ[15] ।

**अरं मे गन्तं हवनायास्मै गृणाना यथा पिबाथो अन्धः ।**
**परि ह त्यद्वर्तिर्याथो रिषो न यत्परो नान्तरस्तुतुर्यात् ॥ २ ॥**

अरं मे गन्तम्[16] । अलम्[17] । मे[18] । गच्छतम्[19] । इदम् । ह्वानं श्रोतुम्[19] । स्तूयमानो[20] । यथा । पिबथः[21] । सोमस्तथा[22] वा गच्छतम् । मार्गम्[23] । हिरकान्[24] । परिहरन्तौ[25] । याथः[26] । न । यद्वर्तिः[27] । दूरस्तः[28] । तिरति[29] ।

---

१. 'क्व त्या' इत्येकादशर्चं द्वितीयं सूक्तं भरद्वाजस्यार्षम् । अत्रेयमनुक्रमणिका—'क्व त्यैकपदान्तं त्रैष्टुभम्' (KSA. 33.63. P. 24.) इति । 'आ वां सुम्ने' इत्येकादश्येकपदा त्रिष्टुप् शिष्टास्त्रिष्टुभः । 'आश्विनं तु' (KSA. 33. 62. P. 24.) इत्युक्तत्वादस्यापि सूक्तस्याश्विनौ देवता । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि विनियोगः Sy.

२. क्त्वा क्त्या वल्गुः A.

३. कुत्र स्थितौ Sy.

४. आ A. तौ is suggested for तु ॥ अश्विनौ Sy.

५. वेत् गनशीलौ A. रुचिरौ Sy.

६. अद्य is suggested for एद्य ।

७. प्रेरितो दूतः Sy.

८. पञ्चदशादिः स्तोमः Sy.

९. ०षा धं युक्तः A. नम आयुरित्यन्ननामनी Ngh. 2.7.

१०. अस्मदभिमुखम् Sy.

११. नास्त्यौ A. अश्विनौ Sy.

१२. आवर्तयत् Sy.

१३. भवथः is suggested for भवते ।

१४. त is missing in A.

१५. हे अश्विनौ ! युवामस्य स्तोतुर्मन्मन् स्तोत्रे Sy.

१६. ये A. मदीयाय Sy.

१७. हे अश्विनौ ! युवाम् Sy.

१८. पर्याप्तम् Sy.

१९. आह्वानाय Sy.

२०. ०मानौ is suggested for ०मानो ।

२१. पिबतम् Sy.

२२. सोम is suggested for सोमः ।

२३. गृहम् Sy.

२४. हिंसकात् is suggested for हिरकान् ॥ हिंसकस्य शत्रोः Sy.

२५. परितः Sy.

२६. याथौ M.

२७. य is missing in A. यद्वा त्यद्वर्तिस्तदस्मदीयं गृहं रिषो हिंसकात् परि याथः परितो याथः । अयं भावः । यथास्मदीयं गृहं दूरस्थः सन्निकृष्टोऽपि न हिंस्यात्तथा रक्षां कुरुथ इति Sy.

२८. दूस्पः A. दूरस्थः is suggested for दूरस्तः ॥ विप्रकृष्टः Sy.

२९. हिंस्यात् Sy.

नापि सन्निकृष्टः ।[१]

**अकारि वामन्धसो वरीमन्नस्तारि बर्हिः सुप्रायणतमम् ।**
**उत्तानहस्तो युवयुर्ववन्दा वां नक्षन्तो अद्रय आञ्जन् ॥ ३ ॥**

**अकारि ।** अकारि[२] । युवयोः[३] । सोमस्य पूर्णं पात्रम् । वरणीये यज्ञे[४] । स्तीर्णं च । वन्हिः[५] । शोभनं प्रगमनं यस्यात्यन्तं भवति[६] । धनदानार्थमुत्तानहस्तः[७] । युष्मत्कामः[८] । स्तौति । यज्ञं व्याप्नुवद्रोन्तो[९] । ग्रावाणश्च । वं[१०] सोमरसैः । रोदन्ति[११] ?

**ऊर्ध्वो वामग्निरध्वरेष्वस्थात्प्र रातिरेति जूर्णिनी घृताची ।**
**प्र होता गूर्तमना उराणोऽयुक्त यो नासत्या हवीमन् ॥ ४ ॥**

**ऊर्ध्वो वामग्निः ।** ऊर्ध्वः[१२] । युवयोर्होमाय[१३] । यज्ञेषु । अग्निः । अस्थादुदतिष्ठत्[१४] । प्रगच्छति च[१५] । हविषो दात्री[१६] । क्षिप्ता[१७] । जुहूः[१८] । प्रतिष्ठते च । होता । उद्गूर्णमनाः[१९] । उरु स्तोत्रं कुर्वाणः । यः[२०] । हे अश्विनौ[२१] ! युक्तावकरोत्[२२] । हवने[२३] ।

---

१. VM. ignores ह and त्यत् ॥ त्यत् तत् Sy. २. कृतम् Sy.

३. युवयोरर्थे Sy.

४. विस्तृतेऽभिषवादौ यत्कृत्यमस्ति तत् Sy.

५. बर्हिः is suggested for वन्हिः ।

६. मृदुतमम् Sy.

७. कृताञ्जलिः Sy.

८. युवां कामयमानो होता Sy.

९. ०वद्रोन्ता A. ०वन्तः is suggested for ०वद्रोन्तो ॥ युवां व्याप्नुवन्तः । 'तृक्ष पृक्ष नक्ष गतौ' इति धातुः Sy.

१०. वाम् is suggested for वम ॥ युवाम् Sy.

११. आ उन्दन्ति=ओन्दन्ति is suggested for रोदन्ति ॥ सोमरसमा समन्ताद् व्यक्तीकृतवन्तः Sy.

१२. ग्रावन्हिः A. ग्रावाग्निः M.

१३. युवयोर्यज्ञार्थम् Sy.

१४. ०स्थादूद० A.

१५. समिद्ध आहवनीयं गच्छति च Sy.

१६. धनं हविः Sy.

१७. It seems to be the explanation of जूर्णिनी ॥ प्रगामिनी Sy. जूर्णिर्जवतेर्वा । द्रवतेर्वा । दूनोतेर्वा N. 6.4. Sy.

१८. क्षिप्रा जहू A. घृतेनाक्ता, उपस्तीर्णाभिघारितेत्यर्थः Sy.

१९. प्रकर्षेणोद्युक्तमना भवति Sy.

२०. होता Sy.

२१. अश्विनौ Sy.

२२. योजयति Sy.

२३. आह्वाने स्तोत्रे वा Sy.

अधि श्रिये दुहिता सूर्यस्य रथं तस्थौ पुरुभुजा शतोतिम् ।
प्र मायाभिर्मायिना भूतमत्र नरा नृतू जनिमन्यज्ञियानाम् ॥ ५ ॥

**अधि श्रिये ।** अधितष्ठौ[1] । अचर्थम्[2] । सूर्यस्य । दुहिता[3] । युवयो रथम् । हे बहुभोजनौ[4] ! बहुगमनम्[5] । प्राभवतम्[6] । अत्र[7] । कर्मभिः[8] । सनकर्मवन्तौ[9] । हे नेतारौ[10] ! नर्तनशीलौ[11] । प्रादुर्भावे[12] । देवानां स्वयंवरे[13] ।

युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहथुः सूर्यायाः ।
प्र वां वयो वपुषेऽनु पप्तन्नक्षद्वाणी सुष्टुता धिष्ण्या वाम् ॥ ६ ॥

**युवं श्रीभिः ।** युवम्[15] । श्रीभिः[16] । दर्शनीयाभिः[17] । आभिः । शोभार्थम्[18] । पोषणम्[19] । ऊहथुः[20] । सूर्यायाः[21] । प्रानुपप्तन्[22] । श्वाश्वा[23] । वाम्[24] । शोभार्थ[25] तदानीम् । व्याप्नोत्[26] । स्तोतृभिः सुष्ठु स्तुता । वाणी[27] । वौ[28] । हे धिषणार्हौ[29] ! स्तुत्यौ !

---

१. अध्यतिष्ठत् Sy.
२. श्रियर्थम् A. श्रयितुम् Sy.
३. सूर्या Sy.
४. हे पूर्णभुजौ ! बहूनां रक्षकौ ! वाश्विनौ ! Sy. ५. बहुरक्षकं बहुगमनं वा Sy.
६. भवतम् । यद्वा हे मायिनौ ! प्राज्ञौ ! प्र भूतं प्राज्ञतममग्न्यादिकं देवं मायाभिः प्रज्ञानैः कौशलैर्वा जितवन्तौ स्थ इत्यर्थः । अयमर्थः 'प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीम्' (AB. 4. 7.) इत्यादिना स्पष्टीकृतः Sy.
७. अपि च अत्र अस्मिन् Sy.
८. प्रज्ञानैः Sy. शची मायेति प्रज्ञानामनी Ngh. 3.9.
९. सौकर्म० A. सत्कर्म० is suggested for सनकर्म० ॥ प्रज्ञावन्तौ Sy.
१०. नेतारौ Sy.
११. नृत्यन्तौ Sy.
१२. जन्मनि प्रादुर्भावे Sy.
१३. स्वयंबरे A.
१४. श्रीभः A युवं श्रीभिः missing in M.
१५. हे अश्विनौ ! युवाम् Sy.
१६. लक्ष्मीभिः कान्तिभिर्वा Sy.
१७. श्रीमतां परिदृश्यमानाभिः Sy.
१८. शोभनार्थम् Sy.
१९. पूषणम् M. पूर्तिम् Sy.
२०. प्रापयथः Sy.
२१. युवयोः पत्न्याः Sy.
२२. प्रकर्षेणान्वपतन् Sy.
२३. It seems to be the explanation of वयः ॥ अश्वाः is suggested for श्वाश्वा ।
२४. युवाम् Sy.
२५. शोभायै Sy.
२६. व्याप्नोति Sy.
२७. वाणी ऋषीणां स्तुतिः Sy.
२८. वाम् is suggested for वा ॥ युवाम् Sy.
२९. हे स्तुत्यर्हाविश्विनौ ! Sy.

आ वां वयोऽश्वासो वहिंष्ठा अभि प्रयो नासत्या वहन्तु ।
प्र वां रथो मनोजवा असर्जीषः पृक्ष इषिधो अनु पूर्वीः ॥ ७ ॥

आ वां वयः[1] । आवहन्तु[2] । वाम्[3] । गन्तारः[4] । अश्वाः । वोढृतमाः । सोमम्[5] । प्रति । हे नासत्यौ ! पासर्जि[6] । युवयोः । वेगौ[7] । रथः । अन्नानि[8] । संवर्चनीयानि[9] । बहूनि[10] सोमादीनि । प्रति । स्तोतृभिरेषणीय[11] ! इषेरिधौ[12] नामकरण इति ।

पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसंक्राम् ।
स्तुतंश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन् ॥ ८ ॥

पुरु[13] हि वाम् । हे बहुभोजनौ[14] ! बहु । हि[15] । युवयोः[16] । दातव्यं[17] धनं तावत् । अस्मभ्यम्[18] । प्रीणनम्[19] । अन्नम्[20] । असङ्क्रमणमनपायि[21] । क्षरतम[22] । स्तोतारः[23] । च । युवयोः सति[24] । सुष्टुतिः[25] । च । हे

१. वां (प) वयः A.
२. आ missing in M. प्रापयन्तु Sy.
३. वां (पां) A. युवाम् Sy.
४. गगन्तोरो A. ५. सोमः A. सोमरूपमन्नम्
६. प्रासञ्जि M. विसृष्टः Sy.
७. वैगौ M. मनोवेगः is suggested for वेगौ ।
८. सोमान् Sy.
९. सम्पर्च० is suggested for संवर्च० ॥ सम्पर्चनीयाः Sy. १०. बह्वीः Sy.
११. VM. seems to take इषिधः obj. plu. as Voc. sing. इषिध ॥ एषणीयाः Sy.
१२. ०रिधो is suggested for ०रिधौ ।
१३. भरद्वाजस्यार्षम् Dur. भरद्वाजस्य SKN.
१४. पूर्णभुजौ बहुपालकौ वा Sy. यस्माद् हे पुरुभुजौ ! बहुभोजिनौ । अश्विनौ ! तस्माद्युवां ब्रूमः Dur. हे पुरुभुजौ ! बहूनां हविषामभ्यवहन्तारौ ! पालयितारौ ! वा यजमानानाम् SKN.
१५. हि भवति Sy. हिशब्दो यस्मादर्थे SKN.
१६. युवाभ्यां यज्ञे Dur.
१७. दान्तव्यं A. दानम् Dur. दानम् । यस्मात्प्रभूतदायिनौ युवां तस्मात् SKN.
१८. अतः कारणात् नोऽस्मभ्यम् Sy.
१९. प्रीणयित्रीम् Sy. तर्पयित्रीम् Dur. धेनुं दोग्ध्रीं गाम् SKN.
२०. अन्नस्सं क० A. अन्नम् । यद्वा इषमेषणीयां धेनुमित्यन्वयः Sy. अन्नलक्षणम् Dur.
२१. मत्तोऽन्यत्रासङ्क्रमणीम् Sy. असक्रामसङ्क्रमणीम् N. 6.29. असङ्क्रमणशीलामनपायिनीमस्मत्तः । अथवा—असङ्क्रमणशीलां द्याम्, इषमिड्हेतूदकमस्मदर्थं प्रक्षारयमिति स्यात् । ......एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'असक्राम्' इत्यस्य शब्दस्य 'असङ्क्रमणीम्' इत्येष विपरिणाम उपपद्यते । इडभिधेयो द्यौर्वा Dur. असङ्क्रामणीं यावज्जीवमनपायिनीम् । यद्वा समेष्वक्रान्तामगतामस्मत्सजातैरप्राप्तपूर्वामित्यर्थः SKN. २२. क्षरतम् is suggested for क्षरतम ॥ प्रयच्छतम् Sy. प्रक्षारयतम् Dur. क्षारयतं दत्तमित्यर्थः SKN.
२३. स्तुवन्तीति स्तुतः स्तोतारः Sy. किं पुनस्तद् युवयोर्बहुदानमिति ? स्तुतश्च स्तुतशस्त्रवांश्च सोमो युवयोरन्नम् Dur. स्तोतारश्च ये केचित् पृथिव्यां ते सर्वे SKN.
२४. सन्ति is suggested for सति ।
२५. सुष्मतिः A. शोभना स्तुतिश्च स्तोतृषु भवति Sy. शोभनाभिः स्तुतिभिः सुष्ठु स्तुतः Dur. शोभना च या काचित् स्तुतिः सर्वा युवयोरेव SKN.

मादयितारौ[1] ! तथा रसाः सोमाः[2] । च सन्ति । ये[3] । युवयोः । धनम्[4] । अनुगच्छन्ति दीयन्त इत्यर्थः[5] ।

उत मं ऋज्रे पुरंयस्य रघ्वी सुमीळ्हे शतं पेरुके चं पक्का ।
शाण्डो दाद्धिरणिनः स्मदिष्टीन्दश वशासो अभिषाचं ऋष्वान् ॥ ९ ॥

**उत म ऋज्रे**[6] । अपि च । मह्यम्[7] । ऋजुगामिन्यौ[8] । पुरयस्य यज्ञस्यस्वन्धिन्यौ[9] । शीघ्रगामिन्यौ वसवे[10] । तथा च[11] । सुमिह्वापेरुकनाम्नः[12] । अश्ववहनि[13] । अन्नानि तत आहृत्य[14] । यश्च शाण्डो नाम राजा । प्रायच्छत्[15] । हिरण्यालङ्कृतान्[16] । शोभनातिदेशानश्वान्[17] । दश च[18] । वशाः[19] । शत्रूणामभिमोढ्न्[20] । दर्शनीयान् दासांश्चेत्यपि[21] नो[22] प्रसादलब्धमिदमिति ।

---

१. मदेयि० A. मादयितारावश्विनौ Sy. हे माध्वी ! मधुपौ ! Dur. मधुसम्बन्धि मधुनः पूर्णो माधवः, 'तस्येदम्' (Pa. 4.3.120.) इत्यणि गुणाभावश्छान्दसत्वात् । कोऽसौ ? दृतिः । कुत एतत् ? 'यो ह वां मधुनो दृतिराहितो रथचर्षणे । ततः पिबतमश्विना' (RV. VIII. 5. 19.) इति मन्त्रान्तरे दर्शनात् । तेन तद्वतीं माध्वीम् । 'ईवनिपौ छन्दसि' इति मत्वर्थ ईकारः SKN.

२. सोमरसाश्च Sy. रसाश्चाज्यादयः Dur. रसाश्च सोमलक्षणाः SKN.

३. रसाः Sy. य एते Dur.

४. दनम् A. दानम् Sy., SKN. रातिं पुरोडाशस्य Dur.

५. अनूद्दिश्यागमन् देवयजनं प्राप्ताः । अयं भावः । सुष्टुतिं श्रुत्वा देवयजनं प्राप्तान् सोमरसान् पीत्वा स्तोतृभ्यः कामान् प्रयच्छतमिति शेषः Sy. अनुगच्छन्ति सर्वे एते युवयोरेव, तस्माद् युवां ब्रवीमि पिन्वतमिति Dur. युवाभ्यां ये प्रदीयन्त इत्यर्थः SKN. N. 6.29., SKN. II. 490.

६. ऋज्रेः A.

७. अश्विनोः स्तुतिं कुर्वतो ममाभूताम् Sy.

८. ऋजूगा० A. ऋजुगमने Sy.

९. याज्ञस्स A. यज्ञस० is suggested for यज्ञस्स० ॥ पुरयनामकस्य स्वभूते Sy.

१०. वधव(य)धवे A. वडवे is suggested for वसवे ॥ क्षिप्रगामिन्यौ वडवे Sy.

११. च is suggested for व ।

१२. सुमिह्वापेरुकनाम्नः A. सुमीळ्हपेरुकनाम्नोः is suggested for सुमिह्वापेरुकनाम्नः ॥ VM. explains together सुमीळ्हे and पेरुके ॥ सुमीळ्हे राज्ञि विद्यमानाः सन्तः । पेरुके राज्ञि विद्यमानानि Sy.

१३. शतं गावो ममाभूवन् Sy.

१४. पक्वान्यन्नानि ममासन् Sy.

१५. ददातु Sy.

१६. हिरण्यवतः Sy.

१७. ०नश्वं A. प्रशस्तदर्शनान् रथानश्वान् वा Sy.

१८. दशसङ्ख्याकान् Sy.

१९. पराः A. वशासोऽनुगुणान् Sy.

२०. ०मोढुं M. शत्रूणामभिभावुकान् Sy.

२१. पुरुषान् Sy.

२२. ०श्चेत्यश्विनोः प्र० or श्चेत्यपि नः प्र० is suggested for ०श्चेत्यपि नो प्र० ॥ अश्विनोः स्तोतृभ्यो दात् Sy.

सं वां शता नासत्या सहस्राश्वानां पुरुपन्था गिरे दात् ।
भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥ १० ॥

सं वां शता । सम्प्रायच्छत्[1] । युवयोः । स्तोत्रे[2] । अश्वानाम् । शतानि । सहस्राणि च । नासत्यौ[3] ! पुरुपन्था नाम राजा । भरद्वाजाय[4] । क्षिप्रम् । हे वीरौ[5] ! द्विवचनं लुप्तम् । हतानि[6] । रक्षांसि । भवन्तु । हे बहुकर्माणौ[7][8] !

उत्तरैकपदा—

आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम् ॥ ११ ॥

आ वां सुम्ने[9] । युवयोः[10] । सुखे[11] । विस्तृते । स्तोतृभिः[12] पुत्रादिभिः सह । आभिमुख्येन[13] स्याम्[14] ।

VI. 64.

उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशन्तः ।
कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥ १ ॥

उदु श्रिये[15] । उत्तिष्ठन्ति । श्रयर्थम्[16] । उषसः । दीप्यमानाः[17] । अपाम् । इव । ऊर्मयः[18] । श्वेतवर्णाः[19] । अथैकवदाह[20]—करोति । विश्वानि भुवनानि[21] । शोभनमार्गाणि[22] । शोभनगमनानि[23] च प्रादुर्भूतायामुषसि[24] ।

---

१. सन्ददाति Sy.
२. गृणातीति गीः स्तोता तस्मै Sy.
३. हे अश्विनौ ! Sy.
४. गिरे युवयोः स्तोत्रे भरद्वाजाय मह्यमपि दात् ददातु Sy.
५. हे वीरावश्विनौ ! द्विवचनस्य लुक् Sy.
६. हतानि स्युः Sy.
७. हे बहुकर्माणावश्विनौ ! युवयोरनुग्रहात् Sy.
८. VM. explains गिरे and दात् once only.
९. The *pratīka* is supplied by the Editor.
१०. हे अश्विनौ ! युवाभ्यां दत्ते Sy.
११. सुखावहे धने Sy. जलाषम् । स्योनम् । सुम्नमिति सुखनामानि Ngh.3.6.
१२. विद्वद्भिः पुत्रादिभिः सह Sy.
१३. आ समन्तात् Sy.
१४. भवेयम Sy.
१५. 'उदु श्रिये' इति षड्चं तृतीयं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमुषोदेवताकम् । अनुक्रम्यते च—'उदु श्रिये षळुषस्यं तु' (KSA. 33.64.P.24.) इति । प्रातरनुवाक उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चैतदादिके द्वे सूक्ते । सूत्र्यते हि—'उदु श्रिय इति सूक्ते' (ĀSS. 4.14.) इति Sy.
१६. श्रियर्थम् A. जगतः शोभायै जगद् व्याप्तुं वा Sy.
१७. उदकसम्बन्धिनः Sy.
१८. अपामिश्रे. . . मय M. ऊर्मयः is suggested for ऊकर्मयः ॥ तरङ्गाः Sy.
१९. ०वर्णा M. शुक्लवर्णाः Sy. रुशदिति वर्णनाम N. 2. 20.
२०. अनन्तरमेकवन्निगमः Sy.
२१. विश्वानि स्थानानि Sy.
२२. सुमार्गाणि Sy.
२३. सुखेन गम्यानि Sy.
२४. दुर् is missing in A.

भवत्युदाराणाम्[1] । प्रशस्ता । धनवती[2] । दक्षिणा[3][4] ।

**भद्रा ददृक्ष उर्विया वि भास्युत्ते शोचिर्भानवो द्यामपप्तन् ।**
**आविर्वक्षः कृणुषे शुम्भमानोषो देवि रोचमाना महोभिः ॥ २ ॥**

**भद्रा ददृक्षे ।** भद्रा[5] । ददृश्यसे[6] त्वम् । अमी च[7] । विभासि । तस्यास्ते[8] । शोचिः[9] । भानवश्च[10] । उदपक्तन्[11] । द्यां प्रति[12] । त्वमाविष्कृणोषि[13] । वक्षः[14] । शोभमाना । उषः ! देवि[15] ! दीप्यमाना[16] । तेजोभिः[17] ।

**वहन्ति सीमरुणासो रुशन्तो गावः सुभगामुर्विया प्रथानाम् ।**
**अपेजते शूरो अस्तेव शत्रून्बाधते तमो अजिरो न वोळ्हा ॥ ३ ॥**

**वहन्ति सीम् ।** वहन्ति[18] । एनाम्[19] । समन्ततोऽरुणवर्णाः[20] । ज्वलन्तौ[21] । गावः[22] । सुधनाम् । विस्तीर्णाम् । प्रथमानाम् । अवगमयति[23] तमांसि । शूरः[24] । योद्धेव[25] । शत्रून् । सेवयन्[26](?)तमः । बाधते दिगन्तं प्रापयति । यथा । क्षिप्रः[27] । भारस्य वोढा[28] भारं देशान्तरं प्रापयति ।

---

१. अभूत् Sy.
२. धनवत्युषाः Sy.
३. समर्धयित्री Sy.
४. VM. ignores उ ।
५. कल्याणी Sy.
६. दृश्य० is missing in M. दृश्यसे is suggested for ददृश्यसे ।
७. 'उर्वी च' or 'अमिता च' is suggested for अमी च ॥ विस्तीर्णा च Sy.
८. तव Sy.
९. शोचिः शोचिषः । जसो लुक् । दीप्यमानाः Sy.
१०. रश्मयः Sy.
११. ०पक्त....M. उदपप्तन् is suggested for उदपक्तन् ॥ उत्पतन्ति Sy.
१२. द्यों प्रति A. अन्तरिक्षम् Sy.
१३. प्रकटीकरोषि Sy.
१४. त्वदीयं रूपम् Sy.
१५. दिवि A.
१६. ०मानो A.
१७. If VM. does not explain उर्विया by अमी च (ऊर्वी च or अमिता च) he ignores it.
१८. वहति A.
१९. सीम् एनामुषोदेवताम् Sy.
२०. न्त is missing in A. लोहितवर्णाः Sy.
२१. ज्वलन्तः is suggested for ज्वलन्तौ ॥ दीप्यमानाः Sy.
२२. गा is missing in M. गावो रश्मयः Sy. किरणा गाव इति रश्मिनामसु Ngh. 1.5. सर्वेऽपि रश्मयो गाव उच्यन्ते N.2.6.
२३. अवगाय० A. अपगम० is suggested for अवगम० ।
२४. वीरः Sy.
२५. सेयमुषोदेवता क्षेप्तेव Sy.
२६. सेयम् is suggested for सेवयन् ।
२७. क्षिप्रगामी Sy.
२८. वोळ्हा सेनायाः । शत्रून् यथा बाधते तथा तमांसि बाधते च Sy.

सुगोत ते सुपथा पर्वतेष्ववाते अपस्तरसि स्वभानो ।
सा न आ वह पृथुयामन्नृष्वे रयिं दिवो दुहितरिषयध्यै ॥ ४ ॥

सुगोल ते[1] । तव[2] तेजसा । अपि च । शिलोच्चयेष्वपि[3] क्षेत्राणि । सुगमानि[4] । सुपथानि[5] च भवन्ति । किञ्च सङ्गमनसाधनवर्जिते[6] निरालम्बने देशे । अन्तरिक्षम्[7] । तरसि । सुभूतदीप्ते[8] ! सा[9] । अस्माकम्[10] । आह[11] । पृथुगमने[12] ! दर्शनीये[13] ! रयिम् । दिवः । दुहितः[14] ! एषणीयम् ।

सा वह योक्षभिरवातोषो वरं वहसि जोषमनु ।
त्वं दिवो दुहितर्या ह देवी पूर्वहूतौ मंहना दर्शता भूः ॥ ५ ॥

सा वह । सा त्वम् । आवह[15] धनम् । या त्वम् । उक्षभिरागन्ता[16] । अवाताऽवस्थिता[17] सती । उषः ! परं[18] स्तोतृभ्यः । पहसि[19] । स्तोतृणामिच्छानन्तरम्[20] । या । त्वम् । दिवः । दुहिता[21] ! देवनशीला[22] । भवसि । सा त्वं पूर्वा[23] याने प्रातरेव । मंहनीया[24] । दर्शनीया[25] च भवसि[26] ।

---

१. हे उषोदेवि ! Sy.
२. तप ते० A.
३. दुर्गेष्वपि Sy.
४. सुगानि सुखेन गम्यानि Sy.
५. मार्गाणि Sy.
६. यं गमन० A. गमनसाधनरहिते देशे Sy.
७. अन्तरिक्षमाकाशम् । सामुद्रिकीरपो वा Sy. आप इत्यन्तरिक्षनाम Ngh. 1.3.
८. स्वभूत० is suggested for सुभूत० ॥ हे स्वप्रकाशे ! Sy.
९. त्वम् Sy.
१०. अस्मभ्यम् Sy.
११. आवह is suggested for आह ।
१२. पृथुरथे ! Sy.
१३. धनम् Sy.
१४. अन्तरिक्षसुते ! Sy.
१५. वरं धनं मह्यमावह Sy.
१६. अनडुद्भिरश्वैर्वा Sy.
१७. अप्रतिगता Sy.
१८. अपरं M. वरं is suggested for परं ॥ धनम् Sy.
१९. वहसि is suggested for अपहस M. पहसि A.
२०. ०च्छानान्तरा A. प्रीतिमनु Sy.
२१. हे अन्तरिक्षसुते ! Sy.
२२. द्योतमाना Sy.
२३. पूर्वा . . . याने M. पूर्वाह्वाने is suggested for पूर्वा याने ॥ प्रथमाह्वाने प्रातरनुवाके Sy.
२४. पूजनीया Sy.
२५. सा त्वं दर्शता दर्शनीया भूरिति योजना । या दर्शता भूरित्यन्वये यद्वृत्तेन सामानाधिकरण्यात् भूरित्यस्य निघातो न स्यात् Sy.
२६. VM. ignores ह ।

उत्तरा गतेति ।

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥ ६ ॥

(उत्ते वयः[1] ।)

VI. 65.

एषा स्या नो दुहिता दिवोजाः क्षितीरुच्छन्ती मानुषीरजीगः ।
या भानुना रुशता राम्यास्वज्ञायि तिरस्तमसश्चिदक्तून् ॥ १ ॥

एषा स्या[2] । सा । एषा । नः[3] । दिवो जाता । दुहिता[4] । मानुषीः । प्रजाः । व्युच्छन्ती[5] । उज्जगार[6], उषसि हि मानुष्यः प्रजा[7] निर्गच्छन्ति । या । भानुना । ज्वलता[8] । रात्रिषु[9] । ज्ञायते[10] । तमः[11] । तिरस्कुर्वन्ती[12] । रक्षांसि[13] । चेति ।

वि तद्ययुररुणयुग्भिरश्वैश्चित्रं भान्त्युषसश्चन्द्ररथाः ।
अग्रं यज्ञस्य बृहतो नयन्तीर्वि ता बाधन्ते तम ऊर्म्यायाः ॥ २ ॥

वि तद्ययुः । विगच्छन्ति[14] । तदानीमेव देच्छन्ति[15] । आरुण्ययुक्तैः[16] । अश्वैः । चित्रञ्च[17] । भान्ति[18] ।

---

१. The *pratīka* is supplied by the Editor. VM. does not explain this stanza here because it has already been explained in the first *maṇḍala*. For VM.'s explanation see RV. I. 124. 12. Sy. explains it again in the following manner:— हे उषो देवि ! ते तव व्युष्टौ सत्यां वयश्चित्पक्षिणोऽपि वसतेर्निवासस्थानादुदपप्तन् । उत्पतन्ति । ये पितुभाजो हविषां सम्भक्तारोऽन्नस्योपार्जका वा । पितुरित्यन्ननामसु पाठात् (Ngh. 2.7.) । नरः तेऽपि चोत्पतन्ति । किंच हे उषो देवि ! त्वममा समीपे सते वर्तमानाय दाशुषे हविषां प्रदात्रे मर्त्याय भूरि प्रभूतं वामं धनं वहसि ।

२. 'एषा स्या' इति षड्चं चतुर्थं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभम् । अनुक्रम्यते च—'एषा स्या' (KSA. 33.65. P. 24.) इति । 'उषस्यं तु' इति पूर्वसूक्त उक्तत्वादिदमप्युषोदेवताकम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

३. अस्मदर्थम् Sy.

४. दुहिता is written twice in A. दिवः पुत्र्युषा Sy. ५. तमांसि वर्जयन्ती Sy.

६. उद्गिरति । जी (जि) गर्तिर्गिरतिकर्मा वा (N. 6.8.) इति यास्कः । प्रकाशयतीति यावत् Sy.

७. प्राजा A. भानुना युक्ता Sy.

८. दीप्यमानेन Sy.

९. याम्यासु रात्रिषु । रेफयकारयोर्व्यत्ययः Sy.

१०. ज्ञायन्ते M. दृश्यते Sy. ११. तमांसि Sy.

१२. तीर कुर्वती A. तिरस्कुर्वती Sy.

१३. नक्षत्रादितेजांसि च Sy.

१४. विस्तीर्णं यान्ति Sy.

१५. Something, probably य is missing before देच्छन्ति ॥ तदानीं प्रातःकाले Sy.

१६. अरुणवर्णयुक्तैः Sy.

१७. चित्रं यथा भवति तथा Sy. १८. भवन्ति M.

उषसः । कान्तरथाः । प्रभितस्य । यज्ञस्य । अग्रम् । नयन्त्यः । विबाधन्ते । ता उषसः । रात्रेः । तमः ।

श्रवो वाजमिषमूर्जं वहन्तीर्नि दाशुष उषसो मर्त्याय ।
मघोनीर्वीरवत्पत्यमाना अवो धात विधते रत्नमद्य ॥ ३ ॥

श्रवो वाजम् । कीर्तिम् । बलम् । अन्नम् । रसञ्च । प्रापयन्त्यः । निधत्त । दाशुषे । मर्त्याय । उषसः ! धनवत्यः । वीरपुरुषवत् । गच्छन्त्यः । रक्षणम् । रमणीयम् । परिचरते मह्यम् । अद्य ।

इदा हि वो विधते रत्नमस्तीदा वीराय दाशुष उषासः ।
इदा विप्राय जरते यदुक्था नि ष्म मावते वहथा पुरा चित् ॥ ४ ॥

इदा हि वः । इदानीम् । एव । हवम् । परिचरते । रत्नम् । अस्ति दातुम् । इदानीम् । वीराय । दाशुषे । हे उषसः ! इदानीमेव । मेधाविने । स्तुवते । यदा । उत्थानि । भवन्तीदानीमेवेति तथा । निवहथ । मावते । स्तोत्रे । धनं पुराचित्तदानीमेव ।

---

१. कान्तिरथाः Sy. चन्द्रश्चन्दतेः कान्तिकर्मणः N. 11.5.
२. त्वं हितस्य M. बृहतः or प्रथितस्य is suggested for प्रभितस्य ॥ बृंहणशीलस्य Sy.
३. अग्रं मुखम् Sy.
४. सम्पादयन्तः Sy.
५. सम्यगपनयन्ति च Sy.
६. अक्तुरूर्म्येति रात्रिनामनी Ngh. 1.7.
७. वाजः A.
८. अहम् M.
९. वहन्त्यः Sy.
१०. नितरां धत्त Sy.
११. हविषां दात्रे Sy.
१२. पुत्रपौत्रादिसहितम् Sy.
१३. अन्नम् Sy. सिनमव; त्यन्ननामनी Ngh.2.7.
१४. धनम् Sy. वात्रं रत्नमिति धननामनी Ngh. 2. 10
१५. अद्यं A.
१६. नि वः A.
१७. वः is suggested for हवम् ॥ युष्माकम् Sy.
१८. धनम् Sy.
१९. विराय A.
प्रेरयित्रे Sy.
२०. हविषां दाशुषे यजमानाय दातुम् Sy.
२१. हे is missing in A.
२२. प्राज्ञाय दातुं वो रत्नमस्ति Sy.
२३. यथा M.
यस्मिन् विप्रे Sy.
२४. उक्थानि is suggested for उत्थानि ॥ उक्थनामकानि स्तोत्राणि Sy.
२५. विद्यन्ते Sy.
२६. मत्सदृशाय यजमानाय Sy.
२७. पुरापि रत्नं मह्यं दत्तम् Sy.
२८. VM. ignores स्म ।

इदा हि तं उषो अद्रिसानो गोत्रा गवामङ्गिरसो गृणन्ति ।
व्यर्१्केण विभिदुर्ब्रह्मणा च सत्या नृणामभवद्देवहूतिः ॥ ५ ॥

**इदा हि ते ।** इदानीम्[1] । ते[2] । उषः ! आद्यमाणसमुच्छ्रितदेशे[3][4] । गवामस्वभूतानाम् । नामानि[5] । स्तोत्रपरा अङ्गिरसः । गृणन्ति[6] । बिभिदुश्चान्धकारम्[7] । हविषा[8] । स्तोत्रेण । च त्वां परिचरन्तस्तथा त्वय्युदितायाम् । सत्यः[9] । भवति[10] । मनुष्याणाम्[11] । यज्ञः[12][13] ।

उच्छा दिवो दुहितः प्रत्नवन्नो भरद्वाजवद्विधते मघोनि ।
सुवीरं रयिं गृणते रिरीह्युरुगायमधि धेहि श्रवो नः ॥ ६ ॥

**उच्छा दिवः ।** प्युच्छ[14] देशे[15](?) दिवः । दुहितरेकम्[16] ! अस्मभ्यम्[17] । प्रश्नेभ्य[18] इव । तदेवाह—रद्वाजार्हः[19] ? स्तुवते मह्यम्[20] । धनवति[21] ! तथा पुत्रपौत्रयुक्तम्[22] । धनञ्च । मह्यं स्तुवते । देहि । तथा बहुभिर्गेयम्[23] । अन्नम् । अस्मभ्यम् । अधिधेहि[24] ।

---

१. सद्यः Sy.
२. तव प्रसादात् Sy.
३. आद्रियमाण is suggested for आद्यमाण ॥ आदृतसानो Sy.
४. स is missing in A.
५. गोत्रा सङ्घान् Sy.
६. उत्सृजन्ति । तथा च निगमान्तरम् । 'गवां गोत्रमुदसृजो यदङ्गिरः (RV. II.23.18.) इति Sy.
७. विभुदश्चा० A तमांसि विदारयन्ति Sy.
८. हविषा seems to be the explanation of अर्केण. Cf. Ngh. 2.7. अर्चनीयेन Sy.
९. सत्यफला Sy.
१०. अभवत् Sy.
११. नेतॄणां तेषामङ्गिरसाम् Sy.
१२. देवविषया स्तुतिः Sy.
१३. VM. ignores हि and वि ॥ हि एव Sy.
१४. उच्च M. उच्छ is suggested for प्युच्छ ।
१५. दिवि is suggested for देशे ॥ तमांसि वर्जय Sy.
१६. ०तरे क् स्म० A. ०रुषः ! is suggested for ०रेकम् ।
१७. अस्मदर्थम् Sy.
१८. प्रत्नेभ्यः is suggested for प्रश्नेभ्यः ॥ पुरातनेभ्यः Sy.
१९. Something probably भ is missing before रद्वाजा० । भरद्वाज इव is suggested for रद्वाजार्हः ॥ भरद्वाजवदिति वचनादन्योऽप्यस्ति भरद्वाजः । तथा च ब्राह्मणम्—'प्राणौ वै भरद्वाजवत्' इति Sy.
२०. स्तुतिं कुर्वते मह्यम् Sy.
२१. धनपति A. हे मघोनि ! Sy.
२२. कल्याणपुत्रपौत्रादियुक्तम् Sy.
२३. बहुभिर्गातव्यम् Sy.
२४. अधिकं प्रयच्छ Sy.

VI. 66.

**वपुर्नु तच्चिकितुषे चिदस्तु समानं नाम धेनु पत्यमानम् ।**
**मर्तेष्वन्यद्दोहसे पीपाय सकृच्छुक्रं दुदुहे पृश्निरूधः ॥ १ ॥**

वपुर्नु[1][2]। रूपम्[3]। क्षिप्रम् । त....ज्ञा..[4] । तु[5]। प्रादुर्भवतु । समानाकारं[6] सदृशा हि मरुतः। पदार्थानां नामकम्[7]। प्रीणयितुम्[8]। सदा गच्छत्[9]। कि तदित्याह—मर्त्येषु[10]। अन्यदेकदेशं[11] तस्य रूपस्य मर्त्यानाम्[12]। अभिलषितदोहार्थम्[13]। पृश्निः पीवाय[14]। दिवि चान्यदेवेषु सकृत्[15]। पृश्निः[16]। आत्मीयमूधः[17]। शुक्रं[18] दीप्तरूपम्। दुदुह[19] इति[20]।

**ये अग्नयो न शोशुचन्निधाना द्विर्यत्त्रिर्मरुतो वावृधन्त ।**
**अरेणवो हिरण्ययास एषां साकं नृम्णैः पौंस्येभिश्च भूवन् ॥ २ ॥**

**ये अग्नयः ।** ये[21] । अग्नयः । इव । काष्ठैः समिध्यमानाः । दीप्यन्तेऽलङ्कृताः । ये च प्रादुर्भूताः ।

---

१. 'वपुर्नु तत्' इत्येकादशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं मारुतम् । तथा चानुक्रम्यते—'वपुर्न्वेकादश मारुतम्' (KSA. 33.66. P. 24.) इति । व्यूळ्हे दशरात्रे षष्ठेऽह्न्याग्निमारुत इदं सूक्तं मारुतनिविद्धानम् । सूत्रितञ्च—'हविष्पान्तं वपुर्नु तत्' (ĀSS. 8.8.) इति । वैश्वदेवे पर्वणि मारुतसप्तकपालस्य 'प्र चित्रमर्कम्' इति याज्या । 'प्र चित्रमर्कं गृणते तुरायेति नवानुयाज्याः' (ĀSS.2.16.) इति । एकादशिने मारुते पशौ 'प्र चित्रमर्कम्' इत्येषैव याज्या । सूत्रितञ्च—'प्र चित्रमर्कं गृणते तुरायारा इवेदचरमा अहेव' (ĀSS. 3.7.) इति Sy.

२. नु is missing in A.

३. मरुतां रूपम् Sy.

४. तज्ज्ञः...A. तज्ज्ञातम् is suggested for त....ज्ञा....॥ तत्प्रसिद्धम् Sy.

५. तै (कै) A. Something seems to be omitted here. स्तोत्रे is suggested for नु ॥ विदुषे स्तोत्रे Sy.

६. ऐकरूप्यम् । मरुतः सर्वदा समानरूपाः । तथा च निगमान्तरम्—'अज्येष्ठासो अकनिष्ठास एते' (RV. V.60.5.) इति Sy.

७. स्थिराणामपि नामकम् Sy.

८. प्रीणयितृ Sy.

९. सर्वदा गच्छत् Sy.

१०. किञ्च तद्रूपं मर्त्यलोके Sy.

११. अन्यदोषधिवनस्पत्यादिकम् Sy.

१२. मर्तानाम् A.

१३. ०देहार्थं A. कामान् दोग्धुम् Sy.

१४. पीपाय is suggested for पीवाय ॥ आप्याययति Sy.

१५. संवत्सरस्य वर्षासु Sy.

१६. किञ्च मरुतामेव निर्देशात् पृश्निरन्तरिक्षम् Sy.

१७. उदकम् Sy.

१८. शुक्लवर्णम् Sy.

१९. दुन्दुह A. क्षरति Sy.

२०. VM. ignores चित्॥ चिदिति.[illegible] Sy.

२१. मरुतः Sy.

द्विर्द्विगुणम्[1] । त्रिस्त्रिगुणञ्च[2] । मरुतोऽथरुतो[3] । वावृथन्त[4] । रेणुवर्जिताः[5] । हिरण्मयाश्च[6] । एषाम्[7] । साकम्[8] । धनैः[9] । बुधैः[10] । च । प्रादुर्भवन्ति[11] ।

**रुद्रस्य ये मीळ्हुषः सन्ति पुत्रा यांश्चो नु दाधृविर्भरध्यै ।**
**विदे हि माता महो मही षा सेत्पृश्निः सुभ्वे गर्भमाधात् ॥ ३ ॥**

**रुद्रस्य**[12] । रुद्रस्य । सेक्तः[13] । ये[14] । भवन्ति । पुत्राः । यान्[14] । चैव । धारयन्[15] । अङ्गानां हि भरणाय भवन्ति[16] न म्रियते । तेषां माता । प्रत्याख्यातासीत्[17] । महतोऽपि[18] । मही[19] । सा । पृश्निः । स[20] । इव[21] । शोभना-[22] भवनाय मरुद्गणाय । गर्भम्[23] । आहितवती[24] [25] ।

**न य ईषन्ते जनुषोऽया न्वन्तः सन्तोऽवद्यानि पुनानाः ।**
**निर्यद्दुह्रे शुचयोऽनु जोषमनु श्रिया तन्वमुक्षमाणाः ॥ ४ ॥**

**न य ईषन्ते** । न । ये[26] । गच्छन्ति । जाता[27] मनुष्यान् । शीघ्रम् । गन्तव्यानि स्थानानि[28] ।

---

१. द्विद्विगु० A.
२. त्रिः is missing in A.
३. मिरुतोऽथरूतो A. अथरुतो seems to be redundant. Only मरुतः । is sufficient.
४. वा प्रथन्त A. वावृधन्त is suggested for वावृथन्त ॥ ववृधन्त इच्छानुरूपं वर्धन्ते । संहितायां दीर्घश्छान्दसः Sy.
५. रेणुरहिताः Sy.
६. हिरण्मयालङ्काराश्च Sy.
७. मरुतां रथाः Sy.
८. सार्धम् Sy.
९. ते मरुतो धनैः Sy.
१०. वीर्यैः or बलैः is suggested for बुधैः ।
११. तथा च निगमान्तरम् 'ये पृषतीभिर्ऋष्टिभिः (RV.I.37.2.) इति Sy.
१२. रुद्रस्य is missing in A. M.
१३. सेक्तुः is suggested for सेक्तः ॥
१४. मरुतः Sy.
१५. धरित्री Sy.
१६. भवति is suggested for भवन्ति ॥ भर्तुं क्षमा भवति Sy.
१७. सर्वज्ञाता Sy. १८. महताम् Sy.
१९. महती Sy.
२०. सा is suggested for स ।
२१. एव is suggested for इव ।
२२. शोभन० is suggested for शोभना ॥ नृणां सम्यक् भवनाय Sy.
२३. गर्भाम् A. उदकम् Sy.
२४. आदधाति Sy.
२५. VM. ignores नु and हि ।
२६. प्रसिद्धा मरुतः Sy.
२७. जाता मनुष्यात् A. जातान् म० is suggested for जाताम ॥ जनान् स्तोतॄन् प्रति Sy.
२८. अयेन गमनसाधनेन Sy.

शरीरस्यान्तः[1]। सन्तः[1]। अवद्यानि[2]। पुनानाः[3]। निर्दुहन्ति[4]। दीप्ताः[5]। यदोदकम्। इच्छायाम्[6]। तदानी-मनुगताः। श्रिया[7] भवन्ति। विस्तृतमुदकम्[8]। सिञ्चन्तः[9]।

**मक्षू न येषु दोहसे चिदया आ नाम धृष्णु मारुतं दधानाः ।**
**न ये स्तौना अयासो मह्ना नू चित्सुदानुरव यासदुग्रान् ॥ ५ ॥**

**मक्षू न**। ये[10] न। देवेषु[11]। धर्षणशीलम्[12]। मारुतम्[13]। नाम[14]। आदधानामुच्चारयन्तो[15] मनुष्याः। शीघ्रमुदारेषु[16]। धनस्य दोहार्थम्[17]। गन्तारो भवन्ति[18]। न चे[19]। ये[20]। चोराः[21]। गन्तारः। महत्त्वेन[22]। तानुद्गूर्णान्[23]। क्षिप्रम्। एव। शोभनदानो[24] यजमानः। अवेजते[25] क्रोधरहितान् करोति। तौ[26] नयतिपर्ययिस्तौ नयति[27]?

**त इदुग्राः शवसा धृष्णुषेणा उभे युजन्त रोदसी सुमेके ।**
**अध स्मैषु रोदसी स्वशोचिरामवत्सु तस्थौ न रोकः ॥ ६ ॥**

**त इदुग्राः**[28]। ते[29]। इत्[30]। शवसा[31]। धर्षणशीलसेनाः[32]। संयोजयन्ति[33]। उभे। द्यावापृथिव्यौ। अत्यन्त-

---

१. किं तेषां रक्षणीयत्वाभावाद्गमनाभावो नेत्याह। अन्तः सन्तः सर्वेषां हृदि वर्तमाना एव....। तथा च निगमान्तरम्—'प्राणा वै मरुतः स्वापयः' (AB.3.16.) इति। अतः सर्वप्राणिनां हृदि वर्तमानत्वात्तेषां गमनं नास्तीति। अध्यात्मं प्राणरूपेणावस्थानं दर्शितं भवति शीघ्रगामित्वं तु तेषामधिदैवतरूपेणेति द्रष्टव्यम् Sy.
२. अपद्यानि A. पापानि Sy.
३. शोधयन्तः Sy.
४. निर्दहन्ति M. नितरां दुहन्त्युदकम् Sy.
५. दीप्यमाना मरुतः Sy.
६. स्तोतॄणां काममनु Sy.
७. दीप्त्या Sy.
८. आत्मीयं शरीरं प्रकाशयन्तः ॥ यद्वा तन्वं विस्तीर्णं यथा भवति तथा Sy.
९. सिञ्चन्तम् M.
भूमिं सिञ्चन्तो भवन्ति Sy.
१०. ये is unnecessary.
११. वेदेषु M. प्रसिद्धेषु मरुत्सु Sy.
१२. धर्षकम् Sy.
१३. मरुत्संज्ञकम् Sy.
१४. शस्त्रम Sy.
१५. ०धाना उच्चा० is suggested for ०धानामुच्चा०।
१६. क्षिप्रम् Sy.
१७. कामान् दोग्धुं क्षमा भवन्ति Sy.
१८. ०रो न भवति A. उपगच्छन्तः स्तोतारः Sy.
१९. च is suggested for चे ॥ नेति सम्प्रत्यर्थे Sy.
२०. ये थे M.
२१. स्तेनास्तिरोहिता वा स्तोतृधनानामपहर्तारः Sy.
२२. महत्त्वेन युक्ता भवन्ति Sy.
२३. तान् क्रुद्धान् Sy.
२४. शोभनहविर्दानो यजमानः Sy.
२५. अवयजते। अपगतक्रोधान् करोति Sy.
२६. स्ते नय० A. नौ सम्प्रतिपर्यायौ is suggested for तौ नय०....नयति।
२७. VM. ignores चित्।
२८. क(ल)ळ दुग्राः A.
२९. ते is missing in A. मरुतः Sy.
३०. उत् A.
३१. बलेन वेगेन युक्ताः Sy.
३२. धर्षकसेनाः Sy.
३३. वृष्टया पृथिवीं तर्पयन्तीत्यभिप्रायः Sy.

मेकचर्यो[1] । अथ[2] । खलु[2] । एषु[3] मरुत्सु । रुद्रस्य पत्नी मरुतां माता[4] । स्वभूतदीप्तिस्तिष्ठति[5] । न च । चलं सु[6] मरुत्सु । आतिष्ठति[7] । दीप्तिर्भूयोभूयः[8] स्फुरन्तीत्यर्थः[9] ।[10]

**अनेनो वो मरुतो यामो अस्त्वनश्वश्चिद्यमजत्यरथीः ।**
**अनवसो अनभीशू रजस्तूर्वि रोदसी पथ्या याति साधन् ॥ ७ ॥**

**अनेनः** । पापरहितम्[11] । युष्माकम्[12] । गमनमिह[13] । अस्तु[14] । यं यामम् । अश्ववर्जितः[15] । अरथीः[16] । च[17] । प्रेरयति स्तोता स्तोत्रैरेवात्मानं[18] प्रापयन्तीत्यर्थः[19] । सर्जितः[20] । अभीशुवर्जितश्च[21] । रजसः[22] प्रेरको मरुतां गणः । विगच्छति[23] । द्यावापृथिव्यौ । मार्गा[24] । स्तोतॄणामभिलषितान् सासयं[25] द्यावापृथिव्योर्मध्येन गच्छन्तीत्यर्थः[26] ।[27]

**नास्य वर्ता न तरुता न्वस्ति मरुतो यमवथ वाजसातौ ।**
**तोके वा गोषु तनये यमप्सु स व्रजं दर्ता पार्ये अध द्योः ॥ ८ ॥**

**नास्य** । न । अस्य[28] । गन्ताऽभिगन्ता[29] । न[30] । अपि[31] । तरिता[32] । मनुष्यस्य[33] विद्यते[34] । हे मरुतः ! यम् ।

---

१. ०थिव्यापत्यन्त० A. सुरूपे Sy.
२. अध स्म अपि च Sy.
३. येषु मरुत्सु Sy.
४. रुद्रस्य पत्नी माध्यमिकी वाक् Sy.
५. स्वदीप्तिर्वर्तते Sy.
६. बलवत्सु is suggested for चलं.... ....सु ।
७. निःसरत्येवेत्यर्थः Sy.
८. दीप्तिर्बाधको वा Sy.
९. स्मरन्ती० M. स्फुरती० is suggested for स्फुरन्ती० ।
१०. VM. ignores उग्रा ।
११. पापरहितं यथा भवति तथा Sy.
१२. युष्माकं सम्बन्धी Sy.
१३. रथः Sy.
१४. प्रादुर्भवतु Sy.
१५. अश्वरहितः Sy.
१६. रथिः सारथिः । न रथिररथीः । असारथिः Sy.
१७. अपि Sy
१८. ०त्रैस्पमात्मा० A.
१९. प्रापयती० is suggested for प्रापयन्ती० ।
२०. सज्जितः M. अन्नवर्जितः is suggested for सर्जितः ॥ पथ्यदनरहितः Sy.
२१. पाशरहितोऽपि Sy.
२२. उदकस्य Sy.
२३. अपिगच्छति M. विविधं गच्छति Sy.
२४. मार्गाः M. मार्गान् is suggested for मार्गा ॥ पथोऽन्तरिक्षमार्गान् Sy.
२५. सासायं A. साधयन् is suggested for सासयं ॥ स्तोतॄणां कामान् साधयन् Sy.
२६. गच्छती० is suggested for गच्छन्ती० ।
२७. VM. ignores मरुतः !
२८. अस्य जनस्य Sy.
२९. प्रेरकः Sy.
३०. नास्ति Sy.
३१. It seems to be the explanation of नु ॥ च Sy.
३२. तरुता हिंसिता Sy.
३३. It goes with अस्य ।
३४. विवृते A.

रक्षथ । युद्धे[1] । तोकादिनिमित्तम्[2] । यं युद्धेऽवसथ[3] । सः । शत्रोर्दीप्तस्य[4] । गोव्रजम्[5] । सङ्ग्रामस्य वार्येऽहनि[6] गवामाहरणाय । दत्ता भवति[7] ।[8]

**प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।**
**ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥ ९ ॥**

**प्र चित्रम्**[9] । प्रभरध्वम्[10] । चित्रम्[11] । अन्नम्[12] । स्तूयमानाय[13] । क्षिप्राय[14] । मारुताय[15] । स्वभूतलबलाय[16] गणाय । ये मरुतः[17] । बलेन[18] । बलानि[19] । अभिभवन्ति[20] । तेभ्यो[21] मंहनीयेभ्यः[22] । पृथिवीयम्[23] ।

---

१. सङ्ग्रामे Sy.
२. का is missing in M. आदि refers to गोषु, तनये and अप्सु ॥ पुत्रे ! तनये पौत्रे धने वा गोषु वाप्सु वा निमित्तभूतेषु Sy.
३. अवथ is suggested for अवसथ ।
४. दीप्तस्यापि विजिगीषोर्वा शत्रोः Sy.
५. गोवृजं A. गवां सङ्घम् Sy.
६. पार्ये is suggested for वार्ये ॥ सङ्ग्रामे Sy. ७. दर्ता भवति is suggested for दत्ता भवति ॥ दारयिता भवति Sy.
८. VM ignores अध ॥ अधापि च Sy.
९. भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्य SKN.
१०. प्रहर A. हे अग्ने ! त्वत्सहायभूता ऋत्विजस्त्वं च सर्वे यूयं प्रभरत । यथा लोके बहुष्वेककार्यकरेषु मुख्यमेकं सम्बोध्य यूयमेव कुरुतेति प्रार्थना तद्वदत्रापि मुख्यमग्निमेकमेव सम्बोध्य प्रभरध्वमिति बहुवचनप्रयोगः Sy. प्रहरध्वम् Dur. प्रोपसर्गो भरध्वमित्याख्यातेन ।.... प्रहरत प्रापयत प्रोच्चारयतेत्यर्थः । अथवा—अर्कमन्नं हविर्लक्षणं तद्धेतुमाहवनीयं प्रति प्रापयत । ऋत्विजां चायं प्रैषः SKN.
११. दर्शनीयम् Sy. चायनीयम् Dur. विचित्रम् SKN. १२. अन्नं हविः Sy. स्वधार्क इत्यन्ननामसु पाठात् (Ngh. 2.7) स्तोमम् Dur. मन्त्रं स्तुतिलक्षणम् SKN.
१३. शब्दं कुर्वते स्तूयमानाय वा Sy. स्तुवते स्तनयित्नुशब्देन कृत्स्नं जगदुपशब्दायतेDur. कर्मणि शतृप्रत्ययः गीर्यमाणाय स्तोतव्यायेत्यर्थःSKN.
१४. त्वरिताय Sy. त्वरमाणाय Dur. तुर्वतेर्हिसार्थस्य रूपम् । तुवित्रे शत्रूणां हिंसित्र इत्यर्थः । 'त्वर त्वरणे' अस्य वा । त्वरित्रे क्षिप्रकारिणे SKN. १५. मरुतां गणाय Sy. Dur. मरुतां समूहाय SKN. १६. स्वभूतबलाय is suggested for स्वभूतलबलाय ॥ स्वात्मबलावष्टम्भिने Dur. स्वबलाय SKN.
१७. मा....तः M. मारुतायेति तद्धितवृत्तावन्तर्भूतानामपि मरुतां बुद्धया प्रविभागात् य इति प्रत्यवमर्शः । यथा महाभाष्ये 'अथ शब्दानुशासनम् । केषां शब्दानाम् ?' (PMBH. 1.1.1.) इति । यथा वा लोके । राजपुरुषइत्युक्ते कस्य राज्ञः ? इति Sy. कीदृशानां पुनर्मरुतां गणाय यस्मै प्रभरध्वमिति ? ये मरुतः Dur.
१८. स्वेन बलेन Dur. बलेनात्मीयेन SKN.
१९. शत्रूणां बलानि Sy. परेषां बलानि Dur. बलानि शत्रूणां स्वभूतानि SKN.
२०. सहिरभिभवे । अभिभवन्ति SKN.
२१. यच्छ्रुतेस्तच्छ्रुतिः । तेभ्यः SKN.
२२. मंहनीयेभ्यो मरुद्भ्यो भयात् Sy. मरुद्भ्य इत्यर्थः Dur. मख इति महन्नाम । यद्वा मह इत्यस्य महन्नाम्नो हकारस्य खकारः । मरुद्भ्य इत्यर्थः । अथवा महो यज्ञस्तमङ्गभावोपगमनेन वृष्टिप्रदानद्वारेण वा कुर्वन्ति 'तत्करोति०' इति णिच् । ण्यन्तात् 'णेरनिटि' (Pa. 6.4.51.) इति णिलोपः । मखा यज्ञकारिण इत्यर्थः । तेभ्यः SKN.
२३. पृथिव्यपि किमुतान्यानि भूतानि SKN.

अग्ने[1] ! कम्पते[2], मरुतां बलमग्नेर्निवेदयति ।

त्विषीमन्तो अध्वरस्येव दिद्युत्तृषुच्यवसो जुह्वो३ नाग्नेः ।
अर्चत्रयो धुनयो न वीरा भ्राजज्जन्मानो मरुतो अधृष्टाः ॥ १० ॥

**त्वषीमन्तः** । दीप्तिमन्तः । अध्वरस्येव[3] । उत्तरवेद्यां द्योतमानानि[4] । क्षिप्रगमनाः । ज्वालाः[5] । इव[6] । अग्नेः[7] । अर्चनीयाः । शत्रूणां कम्पयितारः[8] । इव । वीराः[9] । दीप्यमानं प्रादुर्भावाः[10] । मरुतः । शत्रुभिरनाधृष्टाः[11] ।

तं वृधन्तं मारुतं भ्राजदृष्टिं रुद्रस्य सूनुं हवसा विवासे ।
दिवः शर्धाय शुचयो मनीषा गिरयो नाप उग्रा अस्पृध्रन् ॥ ११ ॥

**तं वृधन्तम्**[12] । तम्[13] । वर्धमानम् । मारुतम्[14] । दीप्यमानायुधम्[15] । रुद्रस्य । सूनुं[16] गणम् । स्तोत्रेण । परिचरामि । दिवः[17] । वेनाय[18] । शुचीनि[19] । स्तोत्राणि[20] । मेघाः[21] । इव । व्याप्ताः[22] । उद्गूर्णाः[23] । इतरेतरं स्पर्धन्ते[24] ।

---

१. अग्ने is suggested for अने ॥ हे अग्ने ! Sy. य एवङ्गुणयुक्ता मरुतस्तेषां यो गणस्तस्मै प्रभरध्वं चित्रमर्कम् । त्वमपि हे अग्ने ! वहैतद् द्रव्यं तेभ्यः । यदा तावन्मारुतमेव केवलं हविस्तदैवमग्निरप्रधानः । यदा पुनराग्निमारुतं तदा भरध्वं चित्रमर्कमग्नये मारुताय च गणायेति स्तोतॄन् सम्बोध्य ततोऽग्निं ब्रवीति हे भगवन्नग्ने ! शृणु त्वमप्येतमर्कमेवङ्गुणयुक्तैर्मरुद्भिः सह गृहाणेति Dur.

२. बिभेति कम्पते वा Dur. बिभेति । भयेन वा कम्पते SKN. भ्यसते रेजत इति भयवेपनयोः N.3.21., SKN. II. 192.

३. यज्ञस्येव Sy.

४. ०मानोनि A. द्योतमानाः Sy.

५. रश्मयः Sy.

६. इव is missing in M.

७. अ is missing in M.

८. सपत्नान् कम्पयन्तः Sy.

९. शूराः Sy.

१०. दीव्यमाना प्रा० A. ०मानप्रा० is suggested for ०मानं प्रा० ॥ दीप्तशरीराः Sy.

११. परैरनभिभूताश्च भवन्ति Sy.

१२. त प्रधन्त A.

१३. प्रसिद्धम् Sy. १४. मरुद्गणम् Sy.

१५. भ्राजमानर्ष्टिम् Sy.

१६. पुत्रम् Sy. १७. स्तोतुः Sy.

१८. वेगाय is suggested for वेनाय ॥ मारुताय बलाय Sy. तृक्षः शर्ध इति बलनामनी Ngh.2.9.

१९. निर्मलाः Sy. २०. स्तुतयः Sy.

२१. गिरिर्व्रज इति मेघनामनी Ngh.1.10.

२२. आप्नुवन्तः Sy.

२३. उत् द्रर्णां A. २४. अस्पर्धन्त Sy.

## VI. 67.

**विश्वेषां वः सतां ज्येष्ठतमा गीर्भिर्मित्रावरुणा वावृधध्यै ।**
**सं या रश्मेव यमतुर्यमिष्ठा द्वा जनाँ असमा बाहुभिः स्वैः ॥ १ ॥**

**विश्वेषाम्**[1] । सर्वेषामेव । विद्यमानानाम्[2] । युष्माकम्[3] । अतिशयेन प्रशस्यौ[4] । स्तुतिभिः । मित्रावरुणौ । प्रवृत्तोऽहं[5] वर्धयितुम् । समं येमतुः[6] । यौ । मर्दीनेव[7] । अतिशयेन यन्तारौ[8] । द्वौ[9]....। जनान् । असदृशौ केनचिदपि[10] । बाहुभिः[11] । आत्मीयैः ।

**इयं मद्वां प्र स्तृणीते मनीषोप प्रिया नमसा बर्हिरच्छ ।**
**यन्तं नो मित्रावरुणावधृष्टं छर्दिर्यद्वां वरूथ्यं सुदानू ॥ २ ॥**

**इयं मद्वाम्** । इयम् । स्तुतिः । मत्तो[12] निर्गता । वाम्[13] । आच्छादिदयति[14] । उपगच्छति । प्रिया[15] । हविषा सह[16] । यज्ञे[17] । यच्छतम्[18] । अस्मभ्यम् । मित्रावरुणौ ! अनभिभूतम् । गृहम्[19] । यत् । युवयोः[20] । वरणीयं विद्यते[21] । शोभनदानौ ।[22]

---

१. 'विश्वेषां वः' इत्येकादशर्चं षष्ठं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं मैत्रावरुणम् । तथा चानुक्रम्यते—'विश्वेषां मैत्रावरुणम्' (KSA.33.67.p.24.) इति । सूक्तविनियोगो लैङ्गिकः । मैत्रावरुणे पशौ 'आ यातं मित्रावरुणा' इति पशुपुरोडाशस्यानुवाक्या । सूत्रितञ्च—'आ यातं मित्रावरुणा सुशस्त्या नो मित्रावरुणा हव्यजुष्टिम्' (ĀSS.3.8.) इति । व्यूळ्हे दशरात्रे सप्तमेऽहनि प्रउगशस्त्रे 'प्र यद्वाम्' इति मैत्रावरुणस्तृचः । सूत्रितञ्च—'प्र यद्वां मित्रावरुणा स्पूर्धन्ना गोमता नासत्या रथेन (ĀSS. 8. 9.) इति Sy.

२. वेद्यमा० M. सतां मध्ये Sy.

३. वाम् Sy.

४. ज्येष्ठतमौ Sy.

५. प्रवृत्तोऽस्मि Sy.

६. संयेमतुः is suggested for समं येमतुः ॥ संयच्छतः Sy.

७. दिन M. रश्मिनेव is suggested for मर्दीनेव ॥ रश्मिनेवाश्वान् Sy.

८. ०शयौ यन्ता० M. यन्तृतमौ Sy.

९. Something seems to be missing here in the mss. द्वौ सहितौ Sy.

१०. कौचिद० M. विषमौ । 'त्रिरश्रिं हन्ति चतुरश्रिरुग्रः' (RV.I.152.2) इति निगमान्तरेणासाम्यं दर्शितम् Sy.

११. बाहुभिरिति बहुवचनं पूजार्थम् Sy.

१२. मम Sy.

१३. युवाम् Sy.

१४. आच्छादयति is suggested for आच्छादिदयति ॥ प्रच्छादयति Sy.

१५. हे प्रियौ ! युवाम् Sy.

१६. अन्नेन हविषा Sy.

१७. युवयोर्यज्ञम् Sy.

१८. गच्छतम् M. प्रयच्छतम् Sy.

१९. ग्रहम् A.

२०. युवयोः सम्बन्धि युवाभ्यां देयम् Sy.

२१. शीतवातातपानां वारयितृ भवति Sy.

२२. VM. ignores अच्छ ।

आ यातं मित्रावरुणा सुशस्त्युप प्रिया नमसा हूयमाना ।
सं यावप्नःस्थो अपसेव जनाञ्छ्रुधीयतश्चिद्यतथो महित्वा ॥ ३ ॥

**आ यातम्** । उपागच्छतम् । मित्रावरुणौ[1] ! शोभनं शंसनं शस्त्रम् । प्रियौ[2] । हविषा[3] । हूयमानौ[4] । सङ्गच्छेथे[5] । यौ सर्वैर्जनैः[6] । यथा[7], कर्मस्थितो मनुष्य[8] । कर्मणा जनैः सङ्गच्छते । तौ युवां महत्त्वेन । आत्मनः श्रवणमिच्छतः[9] । जनान्[10] । प्राप्नुथ इति[11] ।

अश्वा न या वाजिना पूतबन्धू ऋता यद्गर्भमदितिर्भरध्यै ।
प्र या महि महान्ता जायमाना घोरा मर्ताय रिपवे नि दीधः ॥ ४ ॥

**अश्वा न या**[12] । अश्वौ । इव । यौ । बलिनौ । मुक्तबन्धनौ[13] । सत्यौ । यौ । गर्भभूतौ । अदितिः[14] । भर्तुमैच्छत्[15] । प्रादुर्भावियतः । यौ । महत्त्वम्[16] । महान्तौ[17] । जायमानौ तौ[18] । घोरौ[19] । रूपे[20] । मनुष्यायादितिः[21] । निदधारेति[22] ।

विश्वे यद्वां मंहना मन्दमानाः क्षत्रं देवासो अदधुः सजोषाः ।
परि यद्भूथो रोदसी चिदुर्वी सन्ति स्पशो अदब्धासो अमूराः ॥ ५ ॥

**विश्वे यद्वाम्** । विश्वे[23] । यत्[24] । युवाम् । महत्त्वेन । मादयन्तः[25] । युवयोर्देवाः[26] । सङ्गताः[27] । बलम् ।

---

१. मित्रः वरु A.
२. विश्वस्य प्रियौ Sy.
३. अन्नेन हविषा स्तोत्रेण वा Sy.
४. स्तूयमानौ Sy.
५. संयच्छथः Sy.
६. सर्वैर्ज्ञानैः M.
७. यथा should immediately follow कर्मणा ।
८. मनुष्यः is suggested for मनुष्य ॥ कर्मण्यधिकृतः पुरुषः Sy. अपोऽप्न इति कर्मनामनी Ngh.2.1.
९. ०त्मनश्रव० A. श्रुधिमन्नं यशो वात्मन इच्छतः Sy.
१०. संयच्छथः Sy.
११. VM. ignores चित् ।
१२. अश्वान्नया A.
१३. पूतस्तोत्रौ Sy.
१४. अदितिर्देवी Sy.
१५. बभार Sy.
१६. महतः Sy.
१७. महत्तरौ प्रभूतौ मित्रावरुणौ Sy.
१८. जायमानावेव Sy.
१९. घातकौ Sy.
२०. रिपवे is suggested for रूपे ॥ हिंसकाय Sy.
२१. मर्त्याय Sy.
२२. निदधारादितिः स्वोदरे Sy.
२३. सर्वे Sy.
२४. यौ Sy.
२५. स्तुवन्तः Sy.
२६. युवयोः goes with बलम् ।
२७. परस्परं प्रीतियुक्ताः Sy.

अदधुः[1]। यः[2]। च[3]। विस्तृते[4]। द्यावापृथिव्यौ। परिभवथः। तदानीं युवयोर्भवन्ति। तेजांसि[5]। अहिंसितानि[6]। अमूढानि[7]।

**ता हि क्षत्रं धारयेथे अनु द्यून्दृंहेथे सानुमुपमादिव द्योः।**
**दृळ्हो नक्षत्र उत विश्वदेवो भूमिमातान्द्यां धासिनायोः ॥ ६ ॥**

**ता हि क्षत्रम्।** तौ[8]। हि। बलम्। धारयेथे। दिवसेषु[9]। दृंहेथे[10] च। दिवः[11]। समुच्छ्रितमादित्यम्[12]। वंशतिव स्थूणाः[13] ? ततश्च[14]। दृढः[15]। दिवि व्याप्नुवानः[16]। विश्वदेव आदित्यौ[17] भवति ताविमौ। भूमिम्। दिवञ्च। मनुष्यस्य[18]। हविषा प्रीतौ[19]। आतनुत[20]।

**ता विग्रं धैथे जठरं पृणध्या आ यत्सद्म सभृतयः पृणन्ति।**
**न मृष्यन्ते युवतयोऽवाता वि यत्पयो विश्वजिन्वा भरन्ते ॥ ७ ॥**

**ता विग्रम्।** तौ[21]। मेधाविनं[22] यजमानम्। धारयेथे[23]। जठरमात्मीयम्[24]। सोमेन पूरयितुम्। आपूरयन्ति। यदा। यज्ञगृहम्[25]। ऋत्विज[26] उपतिष्ठन्ति। न। अभिभूयन्ते[27]। दिशः[28]। अगच्छन्त्यः[29] शत्रुभिः। हे

---

१. धत्तवन्तः Sy.
२. यौ Sy.
३. व A.
४. विसूते A. विस्तीर्णे Sy.
५. तेजसांसि A. रश्मयश्चरा वा Sy.
६. अहहिंसि० A. अहिंसिताः Sy.
७. ०मूढानीं A.
८. मित्रावरुणौ Sy.
९. दिवसे दिवसे Sy.
१०. दृढीकुरुतम् Sy.
११. अन्तरिक्षस्य Sy.
१२. समुच्छ्रितप्रदेशं मेघं सूर्यं वा Sy.
१३. ०वस्तृणाः A. वत्समिव स्थूणा is suggested for वंशतिव स्थूणा ॥ उपमादिव उपमीयते प्रक्षिप्यत इत्युपमात् स्थूणा। सा यथा वत्सं धारयति तद्वदित्यर्थः Sy.
१४. अपि च Sy.
१५. युवाभ्यां दृढीकृतश्च मेघः Sy.
१६. ०प्नुवाशनः A. अन्तरिक्षं व्याप्नुवानः Sy.
१७. आदित्यो is suggested for आदित्यौ ॥ सूर्यः Sy.
१८. द्रुह्यव आयव इति मनुष्यनामनी Ngh.2.3.
१९. अन्नेन हविषा आप्यायितः सन् Sy. क्षुत् धासिरित्यन्ननामनी Ngh.2.7.
२०. आतनुतः is suggested for आतनुत ॥ आतान् आतनोति युवाभ्यां दृढीकृत एव Sy.
२१. मित्रावरुणौ Sy.
२२. प्राज्ञम् Sy. विप्रो विग्र इति मेधाविनामनी Ngh. 3. 15.
२३. धारयथः Sy.
२४. उदरम् Sy.
२५. ०ज्ञग्रह० A. यज्ञसदनम् Sy.
२६. ०त्विजमुप० A. सह भ्रियमाणाः ऋत्विजः Sy.
२७. अहि भू० A. रजसाऽभिभूयन्ते Sy.
२८. नद्यो दिशो वा Sy.
२९. अवाता अशुष्काश्च Sy.

विश्वस्य प्रीणयितारौ[1] ! यदा । विविधम्[2] । उदकं[3] भवद्भ्यां पृष्ठम्[4] । धारयन्ति ।

**ता जिह्वया सद॒मेदं सु॒मे॒धा आ यद्वां स॒त्यो अ॑र॒तिर्ऋ॒ते भूत् ।**
**तद्वां महि॒त्वं घृ॑ताऩ्नावस्तु यु॒वं दा॒शुषे॒ वि च॑यिष्ट॒मंहः॑ ॥ ८ ॥**

**ता[5] जिह्वया ।** तौ[6] । वाचा । सुप्रज्ञः[7] । सदैव[8] । उदकम्[9] । आयाचते[10] । इदमित्युदकनाम[11] । आभिमुख्येन । भवति[12] । यदा । वां प्रति[13] । सत्यः । अहिगन्ता[14] । यज्ञे[15] । तदानीम्[16] । हे घृतान्दौ[17] ! युवयोः । महत्त्वम्[18] । प्रादुर्भूतमस्तु । युवाम्[19] । दाशुषे[20] । विनाशयतम् । पापम् ।

**प्र यद्वां मित्रावरुणा स्पू॒र्धन्प्रि॒या धाम॑ यु॒वधि॑ता मि॒नन्ति॑ ।**
**न ये दे॒वास॒ ओह॑सा॒ न मर्ता॒ अय॑ज्ञसाचो॒ अप्यो॒ न पु॒त्राः ॥ ९ ॥**

**प्र यद्वाम् ।** प्रमिनन्ति[21] । यदा[22] । युवयोः । हे मित्रावरुणौ ! स्पर्धमानाः[23] । प्रियाणि । स्थानानि[24] । युवयोर्हितानि[25] । न । ये[26] । देवाः[27] । युवयोर्वहनसाधनेन स्तोत्रेण युज्यन्ते । नापि । मनुष्याः[28] । यज्ञमसेवमानाः[29] । आवयोर्बन्धवः[30] । पुत्रा वा[31] । न युज्यन्ते स्तोत्रेण तान् सर्वान् हथ[32] इति वाक्यशेषः ।

---

१. ०यितारौ A. हे विश्वजि[illegible]नौ ! Sy.
२. विभूतिम् Sy.
३. जलम् Sy.
४. प्रेषितम् or प्रेरितम् is suggested for पृष्ठम् ॥ प्रहितम् Sy.
५. ता is missing in A.
६. तौ is missing in M. मित्रावरुणौ Sy.
७. प्राज्ञः Sy. ८. सर्वदा Sy.
९. जलम् Sy.
१०. आयाचते । आ इत्युपसर्गदर्शनाद्योग्यक्रियाध्याहाराद्याचत इत्यध्याह्रियते Sy.
११. The passage इदमित्युदकनाम (Ngh. 1.12.) should immediately follow उदकम् and precede आयाचते ॥ पूर्वस्यामृचि जलस्य प्रकृतत्वात् बुद्धौ विपरिवर्तमानं जलमिदंशब्देन परामृश्यते Sy.
१२. आभवति Sy. १३. युवयोः Sy.
१४. मायारहितः Sy.
१५. अभि० is suggested for अहि० ।
१६. तत् Sy.
१७. घृतादौ M. घृतान्नौ is suggested for घृतान्दौ ।
१८. महित्वं A. महित्वम् । अपेक्षितप्रदातृत्वलक्षणम् Sy. १९. युवम् A.
२०. दाशुषो यजमानस्य । षष्ठ्यर्थे चतुर्थी Sy.
२१. ०मिनन्ति A. हिंसन्ति Sy.
२२. यद् येऽयजन्तो जनाः Sy.
२३. ०मानौ M.
२४. धामानि कर्माणि Sy.
२५. युवाभ्यां विहितानि Sy.
२६. य M.
२७. दैव युव० M.
२८. मनुष्याश्चौहसा न युज्यन्ते Sy.
२९. न यज्ञयुक्ताः । वृथा कर्माणि कुर्वन्त इत्यर्थः Sy.
३०. आवये बन्ध A. बन्धवः seems to be the explanation of अप्यः ॥ अपः कर्म तद्वन्तः Sy. ३१. ये च न पुत्राः । पृणन्तीति पुत्राः । न पुत्रा अपृणन्त इत्यर्थः Sy.
३२. सर्वा हथ A. तान् सर्वान विचयिष्टमित्यनुषज्यते Sy.

**वि यद्वाचं॑ की॒स्तासो॒ भर॑न्ते॒ शंस॑न्ति॒ के चि॑न्नि॒विदो॑ मना॒नाः ।**
**आद्वां॑ ब्रवाम स॒त्यान्यु॒क्था नकि॑र्दे॒वेभि॑र्यतथो महि॒त्वा ॥ १० ॥**

**वि यद्वाचम् ।** विहरन्ते[1] । यत्[2] । वाचम्[3] । मेध.विनः[4] । शंसन्ति च[5] । केचिद्युवयोः[6] । निविदः । जानतः[7] । तदानीं तदनन्तरमेव[8] यमणि[9] । युवयोः[10] । ब्रूमः । सत्यानि । उक्थानि[11] । न युवाम् । अन्यैर्देवैः[12] । सङ्गच्छेथे[13] । महत्त्वेन ।

**अवो॒रि॒त्था वां॑ छ॒र्दिषो॑ अ॒भिष्टौ॑ यु॒वोर्मि॑त्रावरुणा॒वस्कृ॑धोयु ।**
**अनु॒ यद् गावः॑ स्फु॒रानृ॑जि॒प्यं धृ॒ष्णुं यद्रणे॒ वृष॑णं यु॒नज॑न् ॥ ११ ॥**

**अवोरित्था[14] ।** रक्षकयोः[15] । इत्थम्[16] । युवयोः । सुखस्य[17] । अभ्येषणे[18] । हे मित्रावरुणौ ! तत्सुखम् । अनल्पागमनं भवति[19] । यदा हि[20] । युवयोः[21] । अस्मव[22] ? ऋजुगामिनं स्तोतारम्[23] । अनुस्फुरन्ति[24] । यदा वा । धृण्य स्वयजमानम्[25] । सङ्ग्रामे[26] । युञ्जन्ति[27][28] ।

---

१. पृथक् उच्चारयन्ति Sy.
२. यदा Sy.
३. वाचः A. स्तुतिम् Sy.
४. मेधाविन उद्गातारः Sy. उशिजः कीस्तास इति मेधाविनामनी Ngh.3.15.
५. शंसति च A.
६. केचिद् बह्वृचाः Sy.
७. अन्यादीन् स्तुवन्तः Sy.
८. तथा सति Sy.
९. यमणि seems to be redundant.
१०. युवाभ्याम् Sy.
११. स्तोत्राणि Sy.
१२. अन्यैर्देवैः सह Sy.
१३. गच्छथः Sy.
१४. ०रिक्था A.
१५. अवतोः Sy.
१६. सत्यमेव Sy.
१७. सुखस्यस्य A. छर्दिषो गृहाय सुखाय वा । चतुर्थ्यर्थे षष्ठी Sy. छर्दिरिति गृहनाम N. 3.4.
१८. अभ्यषेणे M. अभिगमने Sy.
१९. अविच्छिन्नं भवति Sy. अस्कृधोयुरकृध्वायुः । कृध्विति ह्रस्वनाम । निकृत्तं भवति N.6.3.
२०. यदा न्हि M. कदा मित्रावरुणयोरभिगमनमित्यत आह—यद्यदा Sy.
२१. युवामभिगतेषु स्तोतृषु युवयोः सम्बन्धि युवाभ्यां देयं तद् गृहादिकम् Sy.
२२. असमव A. स्तवाः is suggested for अस्मव ॥ स्तुतयः Sy.
२३. सोमम् Sy.
२४. अनुस्फुरेयुः Sy.
२५. धृण्य स्वय० M. धृष्णुं is suggested for धृण्य ॥ शत्रूणां धर्षकं सोमम् Sy.
२६. रमणे यज्ञे Sy.
२७. यजमाना युञ्ज्युः Sy.
२८. VM. ignores वृषणम् ॥ कामानां वर्षितारं सोमम् Sy.

VI 68.

श्रुष्टी वां युज्ञ उद्यंतः सुजोषा मनुष्वद्वृक्तबर्हिषो यजंध्यै ।
आ य इन्द्रावरुणाविषे अद्य मुहे सुम्नाय मुह आवुवर्तत् ॥ १ ॥

श्रुष्टी वाम्[1] । क्षिप्रः[2] । युवयोः[3] । उद्यतः[4] । यज्ञः[5] । सप्रीतिः[6] । मनोरिव । यजमानस्य[7] । यागार्थम्[8] । आववर्तत्[9] । यो वा[10] । इन्द्रावरुणौ[11] । अन्दार्थम्[12] । अद्य । वहते[13] च । सुखाय । महति[14] यज्ञे तस्येति[15] ।

ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता हि भूतम् ।
मघोनां मंहिष्ठा तुविशुष्म ऋतेन वृत्रतुरा सर्वसेना ॥ २ ॥

ता हि श्रेष्ठा[16] । तौ[17] । हि । श्रेष्ठौ । यज्ञे[18] । हिंसितारौ[19] शत्रूणाम् । तथा शूराणां मध्ये । अतिशयेनाजलिनौ[20] । तौ तौ[21] । हि । अभूतम्[22] । धनवताम्[23] । अतिशयेन वन्तौ[24] । बहुबलौ[25] । सत्येनैव[26] । वृत्रस्य[27]

---

१. 'श्रुष्टी वाम्' इत्येकादशर्चं सप्तमं सूक्तं भारद्वाजस्यार्षं त्रैष्टुभमैन्द्रावरुणम् । तथा चानुक्रम्यते—'श्रुष्टी वामैन्द्रावरुणमुपान्त्ये जगत्यौ' (KSA. 33.68· P. 24) इति 'प्र सम्राजे, इन्द्रावरुणा सुतपौ' इत्येते जगत्यौ शिष्टास्त्रिष्टुभः । इन्द्रावरुणौ देवता । आभिप्लविकेषूक्थ्येषु तृतीयसवने होत्रकशस्त्रेषु स्तोमवृद्धौ मैत्रावरुणस्येदमावापार्थं सूक्तम् । सूत्रितञ्च—'श्रुष्टी वां यज्ञो युवां नरा' (ĀSS. 7. 9.) इति । तृतीये सवने 'इन्द्रावरुणा सुतपाविमं सुतम्' इति प्रशास्तुः प्रस्थितयाज्या । सूत्रितञ्च—'इन्द्रावरुणा सुतपाविमं सुतमिन्द्रश्च सोमं पिबतं बृहस्पते' (ĀSS. 5.5.) इति । उक्थ्ये तृतीयसवने 'इन्द्रावरुणा मधुमत्तमस्य' इति मैत्रावरुणस्य शस्त्रयाज्या । सूत्रितञ्च—'इन्द्रावरुणा मधुमत्तमस्येति याज्या' (ĀSS. 6.1.) इति Sy.

२. क्षिप्रयोः M. तथा च यास्कः । श्रुष्टीति क्षिप्रनाम । आशु अष्टीति N. 6.12.

३. रूवयोः A. युवयोरर्थे Sy.

४. उद्यतौ A. प्रवृत्तः Sy.

५. सोमः Sy.

६. सुप्रीतिः M. ऋत्विग्भिः सहितः Sy.

७. वृक्तबर्हिषः स्तीर्णबर्हिषो यजमानस्य Sy.

८. यष्टुम् Sy.

९. आवर्तयति Sy.

१०. वाम् M. सोमः Sy.

११. मित्रावरु० A. हे इन्द्रावरुणौ ! Sy.

१२. अन्नार्थम् is suggested for अन्दार्थम् ।

१३. महते is suggested for वहते ।

१४. महती A. Sy. construes one महे with इन्द्रावरुणौ and the other with सुम्नाय and explains them as मंहनीयौ and महते respectively.

१५. VM. ignores आ ॥ आ समन्तात् Sy.

१६. हे इन्द्रावरुणौ ! Sy.

१७. प्रसिद्धौ युवाम् Sy.

१८. इष्टिर्देवतातेति यज्ञनामनी Ngh. 3.17.

१९. धनानां प्रेरकौ Sy.

२०. ०येन बलि० is suggested for ०येनाबलि ॥ अतिशयेन बलवन्तौ Sy.

२१. Second तौ is redundant.

२२. भवतम् Sy.

२३. दानवताम् Sy.

२४. Something, probably धन or दान seems to be missing before वन्तौ ॥ दातृतमौ Sy.

२५. बहुलौ M.

२६. तस्य नैव M.

२७. शत्रूणां हिंसकौ Sy.

हिंसितारौ । समग्रसेनौ[1] ।

ता गृ॒णीहि नम॒स्ये॑भिः शू॒षैः सु॒म्नेभि॒रिन्द्रा॒वरु॑णा च॒काना ।
वज्रे॑णा॒न्यः शव॑सा॒ हन्ति॑ वृ॒त्रं सिष॑क्त्य॒न्यो वृ॒जने॑षु॒ विप्रः॑ ॥ ३ ॥

ता गृणीहि[2][3] । तौ । स्तुहि[4] । नमस्यैः[5] । तयोर्बलैरुच्चरितैः[6] । सखैश्च[7] । इन्द्रावरुणौ । दीप्यमानौ[8] । तयोरन्यः[9] । वज्रमादाय[10] । बलेन । हन्ति[11] । शत्रुम्[12] । सेवते[13] । अन्यः[14] । दुश्चरितेषु नरं जिघृक्षुर्वरुणः[15][16] । मेधावी[17] ।

ग्नाश्च॒ यन्नर॑श्च वावृ॒धन्त॒ विश्वे॑ दे॒वासो॑ न॒रां स्वगू॑र्ताः ।
प्रैभ्य॑ इन्द्रावरुणा महि॒त्वा द्यौश्च॑ पृथिवि भू॒तमु॒र्वी ॥ ४ ॥

ग्नाश्च यत्[18] । देवपत्न्यः[19] । देवाः । च । यदा[20] । अवीवृधन्त[21] । मरुतः[22] । च । देवानामथ्यें[23] यः । स्वयमेवोद्गूर्णाः[24] । तदैभ्यो देवेभ्यो[25] देवपत्नीभ्यश्च । प्राभवतम्[26] । महत्त्वेन[27] । हे द्यावापृथिव्यौ[28] ! विस्तीर्णे युवाम्[29] । च प्राभूतं युद्धे साहाय्याय[30] ।

---

१. कृत्स्नसेनौ च भूतम् Sy.
२. गृह्णीभिः A.
३. हे भरद्वाज ! Sy.
४. इन्द्रावरुणौ Sy.
५. स्तुत्यैः Sy.
६. शूषमिति बलनाम Ngh. 3.6.
७. सखेश्च A. सुखैश्च is suggested for सखैश्च ।
८. चकाना सर्वैः स्तुतौ । कायतिः शब्दकर्मा । तस्य लिटः कानचि रूपमिदम् Sy.
९. तयोरन्य इन्द्रः Sy.
१०. वज्रेण Sy.
११. हस्ति A.
१२. वृत्रनामकमसुरम् Sy.
१३. सङ्गच्छते Sy.
१४. वरुणः Sy.
१५. स्तोतॄणामुपद्रवेषु रक्षितुम् Sy.
१६. नरज्जिघृ० A.
१७. प्राज्ञः Sy.
१८. स्त्रियश्च Sy. मेना ग्ना इति स्त्रीणाम् N. 3.21.
१९. देवास इत्यत्र 'पुमान् स्त्रिया' (Pa. 1.2.67.) इत्येकशेषात् देव्यश्च देवाश्च देवास इति निर्देशः पुंवन्निर्देशः Sy.
२०. यतः A.
२१. स्तुतिभिर्वर्धयन्ते Sy.
२२. पुरुषाश्च Sy.
२३. देवानां मध्ये ये is suggested for देवानां मथ्यें यः ॥ It seems to be the explanation of नराम् ॥ नृणां मनुष्याणां मध्ये Sy.
२४. स्वयमुद्यताः Sy.
२५. एभ्यः स्तोतृभ्यः Sy.
२६. प्रभवतम् Sy.
२७. महत्त्वयुक्तौ Sy.
२८. हे त्य द्यावा० A. हे द्यौः ! पृथिवि ! चोभे Sy.
२९. प्रादुर्भूतं युद्धे सहाया यत् M.
३०. VM. ignores विश्वे and इन्द्रावरुणौ ॥ विश्वे सर्वे Sy.

**स इत्सुदानुः स्ववाँ ऋतावेन्द्रा यो वां वरुण दाशति त्मन् ।**
**इषा स द्विषस्तरेद्दास्वान्वंसद्रयिं रयिवतश्च जनान् ॥ ५ ॥**

स इत्सुदानुः । सः । एव । शोभनदानः[1] । धनवान् । यज्ञवांश्च[2] । हे इन्द्रावरुणौ[3] ! युवाभ्याम् । यः[4] । आत्मनैव[5] । प्रयच्छति[6] । सः । अन्नेन[7] । शत्रून्[8] । तरति[9] । दानवान् । भजते[10] च । धनम्[11] । धनवतः । च । दासादीन्[12] ।

**यं युवं दाश्वध्वराय देवा रयिं धत्थो वसुमन्तं पुरुक्षुम् ।**
**अस्मे स इन्द्रावरुणावपि ष्यात्प्र यो भनक्ति वनुषामशस्तीः ॥ ६ ॥**

यं युवम् । यम्[13] । युवाम् । दत्तयज्ञाय[14] । हे देवौ[15] ! रयिम्[16] । धत्तः[17] । वासयितृ[18] । पुरुयशस्कं बहुशब्दम्[19] । हे इन्द्रावरुणौ ! स रयिः[20] । अस्मासु । अपि । भवतु[21] । प्रकर्षेण । यः । मृद्नाति[22] । घ्नताम्[23] । बाधाः[24] ।

**उत नः सुत्रात्रो देवगोपाः सूरिभ्य इन्द्रावरुणा रयिः ष्यात् ।**
**येषां शुष्मः पृतनासु साह्वान्प्र सद्यो द्युम्ना तिरते ततुरिः ॥ ७ ॥**

उत नः । अपि च । अस्मभ्यम् । शोभनपालनः[25] । देवा गोप्तारौ[26] यस्य । स्तोतृभ्यः । हे इन्द्रावरुणौ !

---

१. शोभनदानो भवति Sy.
२. यज्ञवांश्च भवति Sy.
३. हे इन्द्रौ ! हे वरुणौ ! इतरेतरयोगादुभयत्र द्विवचनप्रयोगः । वरुणेत्यत्र संहितायां ह्रस्वश्छान्दसः Sy.
४. यजमानः Sy.
५. आत्मन इव A.
६. हवींषि ददाति Sy.
७. अन्नेन जयलब्धेन सह Sy.
८. द्वेष्टॄः Sy.
९. प्राप्येत् ? प्राप्येत Sy.
१०. सम्भजेत् Sy.
११. अपि च रयिं धनम् Sy.
१२. दासादि U. पुत्रांश्च Sy.
१३. यं यादृशम् Sy.
१४. न...ज्ञाय M. दत्तहविष्काय Sy.
१५. भेद देवो M. स्तूयमानौ Sy.
१६. धनम् Sy.
१७. धत्थः is suggested for धत्तः ॥ प्रयच्छथः Sy.
१८. वासयितुम् M. धनानुबन्धिनम् Sy.
१९. बह्वन्नं पूर्णयशस्कं वा Sy.
२०. तादृशो रयिः Sy.
२१. भूयात् Sy.
२२. प्रभनक्ति प्ररुजति Sy.
२३. हिंसकानाम् Sy.
२४. अकीर्तीः । शत्रुकृतान्ययशांसीत्यर्थः Sy.
२५. सुरक्षः Sy.
२६. देवो गोपायितारो A. गोप्तारो is suggested for गोप्तारौ ॥ देवा गोपा गोप्तारो यस्य स तादृशः Sy.

स[1] रयिः । स्यात्[2] । येषामस्माकम् । बलम् । सङ्ग्रामेषु[3] । शत्रूनभिभवत्[4] । सद्य एव । धनानि[5] । प्रवर्धयति[6] । तरणशीलम्[7] ।

**नू नं इन्द्रावरुणा गृणाना पृङ्क्तं रयिं सौश्रवसाय देवा ।**
**इत्था गृणन्तो महिनस्य शर्धोऽपो न नावा दुरिता तरेम ॥ ८ ॥**

**नू न**[8] **इन्द्रावरुणा** । क्षिप्रम् । अस्मभ्यम् । हे इन्द्रावरुणौ ! स्तूयमानौ[9] । सम्पर्चयतम्[10] । धनमस्माकम् । शोभनान्नत्वाय[11] । देवौ ! इत्थम् । युवयोर्महत्त्वस्य[12] । वेगम्[13] । स्तुवन्तो वयम् । उदकानि । इव । नावा । दुरितानि । अतितरेम ।

**प्र सम्राजे बृहते मन्म नु प्रियमर्च देवाय वरुणाय सप्रथः ।**
**अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा ॥ ९ ॥**

**प्र सम्राजे**[14] । प्रोच्चारय । सर्वेषां राज्ञे[15] । महते[16] । स्तुतिः[17] । क्षिप्रम्[18] । प्रियाम्[19] । देवाय[20] । वरुणाय । सर्वतः पृथुतमाम्[21] । यः । अयम्[22] । महाकर्मा[23] । विस्तीर्णे द्यावापृथिव्यौ । महता[24] । यज्ञेन[25] । भासयति[26] । आदित्यः[27] । इव । तेजसा[28] ।

**इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।**
**युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥ १० ॥**

**इन्द्रावरुणा** । हे इन्द्रावरुणौ ! सुतस्य पातारौ[29] ! इमम् । सुतम्[30] । सोमम् । मदहेतुम्[31] । पिबतम्[32] ।

---

१. सः should immediately follow देवा गोप्तारो यस्य । स रयि M. धनम् Sy.
२. ष्यत् M. भूयात् Sy. ३. युद्धेषु Sy.
४. शत्रूणामभिभविता Sy.
५. यशांसि Sy.
६. सम्यक्तिरस्कुर्यात् Sy.
७. रणशीलम् M. हिंसकश्च सन् Sy.
८. नुन M. ९. युवाम् Sy.
१०. सपच्चय० M. प्रयच्छतम् Sy.
११. ०न्नताय A. सुश्रवसो भावः सौश्रवसम् । तस्मै सुश्रवस्त्वाय Sy.
१२. महतोर्युवयोः Sy. १३. बलम् Sy.
१४. हे स्तोतः ! Sy.
१५. आज्ञया राज्ञां शासकाय Sy.
१६. परिवृढाय Sy.
१७. ०तेऽस्तु किं M. स्तुतिम् is suggested for स्तुतिः ॥ स्तोत्रम् Sy. १८. अद्य Sy.
१९. प्रियं मनोहरम् Sy. २०. द्योतमानाय Sy.
२१. सर्वतः पृथु Sy. सप्रथाः सर्वतः पृथुः N. 6.7.
२२. अस्माकम् is added after अयम् in M.
२३. ०कर्म A. २४. महिम्ना युक्तः Sy.
२५. प्रज्ञया च युक्तः Sy.
२६. विभासयति Sy.
२७. अजरो जरारहितः Sy.
२८. तेजसा युक्तः Sy.
२९. पातारं M. सोमस्य पातारौ Sy.
३०. अभिषुतम् Sy.
३१. मदकरम् Sy. ३२. पिबन्तं M.

धृतकर्माणौ[1] । युवयोः[2] । रथः । यज्ञम्[3] । देवकामाय[4] । अभ्युपगच्छति[5] । सोमपानाय[6] ।

**इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।**
**इदं वामन्धः परिषिक्तमस्मे आसद्यास्मिन्बर्हिषि मादयेथाम् ॥ ११ ॥**

**इन्द्रावरुणा** । हे इन्द्रावरुणौ ! मधुमन्तम्[8] । वृषणम्[9] । सोमम् । हे वर्षितारौ[10] ! असिञ्चतम्[11] । इदम् । युवाभ्याम्[12] । अन्नम्[13] । अस्माभिः । परितः सिक्तं पात्रेषु । आसाद्य[14] । अस्मिन् । बर्हिषि[15] । तृप्यतम्[16] ।

## VI. 69.

**सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य ।**
**जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥ १ ॥**

**सं[17] वां कर्मणा** । सङ्गमयामि[18] । वाम्[19] । स्तोत्रेण[20] । अन्नेन[21] च । हे इन्द्राविष्णू ! अस्य[22] । कर्मणः ।

---

१. हे धृतकर्माणौ ! Sy.
२. यवयोः A.
३. अध्वरमुद्दिश्य Sy.
४. देवानां पानार्थम् Sy.
५. प्रत्युपयाति Sy.
६. युवयोरपि सोमपानार्थम् Sy.
७. VM. ignores स्वसरम् ॥ स्वसरं मार्गम् Sy.
८. अतिशयेन मधुमन्तं रसवन्तम् Sy.
९. वर्षितारम् Sy.
१०. कामानां वर्षितारौ ! युवाम् Sy.
११. ०सिञ्चित० A. आसिञ्चतम् is suggested for असिञ्चतम् ॥ अश्नीतम् । तथा च शतपथब्राह्मणम्—'यथाभागमावृषायध्वमिति यथाभागमश्नीतेत्येवैतदाह' (SB.2.4.2.20.) इति Sy.
१२. युवयोरर्थे Sy.
१३. सोमरूपमन्नम् Sy.
१४. उपविश्य Sy.
१५. यज्ञे Sy.
१६. मादयेथां सोमपान इति शेषः Sy.
१७. 'सं वां कर्मणा' इत्यष्टर्चमष्टमं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रावैष्णवम् । अनुक्रम्यते च—'सं वामष्टावैन्द्रावैष्णवम् (KSA 33.69. P. 24.) इति । उक्थ्ये तृतीयसवनेऽच्छावाकशस्त्र एतत्सूक्तम् । सूत्र्यते हि—'सं वां कर्मणेन्द्राविष्णू मदपती मदानामिति याज्या' (ĀSS.6.1.) इति । सोमातिरेके प्रातःसवने नैमित्तिके शस्त्रे परिहिते सति गाणगारिमते 'सं वाम्' इति तस्य शस्त्रयाज्या । सूत्रितञ्च—'ऐन्द्रावैष्णव्येति गाणगारिर्दैवतप्रधानत्वात् सं वां कर्मणा समिषा हिनोमि' (ĀSS. 6.7.) इति । सोमातिरेके माध्यन्दिनसवने 'या विश्वासाम्' इत्येषा शस्त्रयाज्या । सूत्रितञ्च—'या विश्वासां जनितारा मतीनामिति याज्या (ĀSS.6.7.) इति । उक्थ्ये तृतीयसवनेऽच्छावाकस्य 'इन्द्राविष्णू मदपती' इति शस्त्रयाज्या । सूत्रं तूदाहृतम् । तृतीयसवनेऽच्छावाकस्य 'इन्द्राविष्णू पिबतम्' इति प्रस्थितयाज्या । सूत्रितञ्च—'इन्द्राविष्णू पिबतं मध्वो अस्येमं स्तोममर्हते जातवेदसे' (ĀSS. 5.5.) इति Sy.
१८. सम्यक् प्रेरयामि Sy. सङ्गच्छामि । 'हि गतौ' यद्वा सम्प्रीणयामि । 'हिवि प्रीणने' BB.
१९. युवाम् Sy.,BB.
२०. कर्मणा शारीरेण प्रणिपातादिना, मानसेन भक्त्यादिना, वाचिकेन स्तुतिलक्षणेन BB.
२१. हविषा Sy. अन्नेन हविर्लक्षणेन संहिनोमीत्येव BB.
२२. उक्थ्यस्य Sy.

पारे तृतीयसवने[1]। तौ युवां[2] जुषेथाम्[3]। यज्ञम्[4]। धनम्[5]। च। धत्तम्[6]। अहिंसितैः[7]। अस्मान्[8]। मार्गैः। पारयन्तौ[9] युद्धे[10]।

**या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना।**
**प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ २ ॥**

या विश्वासाम्। यौ[11]। विश्वासाम्[12]। स्तुतीनाम्। जनयितारौ[13]। इन्द्राविष्णू। सोमस्य निधानौ[14]। कलशावित्यौपनितम्[15]। प्रगच्छन्तु[16]। वाम्[17]। शस्यमानाः[18]। गिरोऽस्माभिः[19]। स्तोमाश्च[20]। गीयमानाः[21]। स्तोतृभिः[22]।

**इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना।**
**सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थैः ॥ ३ ॥**

इन्द्राविष्णू। हे इन्द्राविष्णू! सोमानाम्। आयातम्[23]। इमं सोमम्। धनान्येव[24]। दधानौ[25]। समञ्जन्तु[26]। वाम्[27]। स्तुतीनाम्[28]। अञ्जनैः[29]। स्तोतारः समञ्जन्तु[30]। स्तोमाः[31]। शस्यमानाः[32]। शस्त्रैः सह वामिति[33]।

---

१. समाप्तौ Sy. पारनिमित्तम्। पारस्समाप्तिः। अविघ्नसमाप्त्यर्थम् BB. २. युवामपि BB.
३. सेवेथाम् Sy., BB. ४. यज्ञमिमम् BB.
५. सेवित्वा च द्रविणं धनमस्माकम् BB.
६. सत्तम् M. अस्मभ्यं दत्तम् Sy.
७. अनुपद्रवैः Sy. अनुपहिंसितैः BB.
८. अस्मारस्मान् A. ९. ०यन्तो M. पारं नयन्तौ युवाम् Sy. कर्मणः पारं प्रापयन्तौ।....'पार तीर कर्मसमाप्तौ' BB.
१०. VM. explains सम् once only. This stanza=TS. 3. 2. 11. 1.
११. प्रसिद्धौ Sy. १२. सर्वासाम् Sy.
१३. ०तारा मिन्द्रा० A. जनितारौ–'जन जनने' इत्यस्माद्धातोस्तृचीदं रूपम्। यद्वा 'जनी प्रादुर्भावे' इत्यस्माद्धातोरेव तृचि 'जनिता मन्त्रे' इति निपातनाण्णिलोपः Sy.
१४. सोमस्य निधानभूतौ च स्याताम् Sy.
१५. ०त्यैपेनितम् A. औपमिकम् is suggested for औपनितम्।
१६. प्राप्नुवन्तु Sy. १७. अथ प्रत्यक्षस्तुतिः। हे इन्द्राविष्णू! वां युवाम् Sy.
१८. ०मानो M. उच्चार्यमाणाः Sy.
१९. शस्त्ररूपा गिरो वाचः Sy.
२०. स्तोमाः स्तोत्राणि च प्राप्नुवन्तु Sy.
२१. गीर्यमाना A.
२२. VM. explains प्र once only.
२३. मायातम् A.
२४. ०न्येव मदधातौ M. द्रविणानि धनान्यपि। 'द्रविणा उ' इति पदद्वयमेकीभूय द्रविणो इति पदं निष्पन्नम् Sy.
२५. ददानौ युवाम् Sy.
२६. ०मज्जन्तु M. समर्धयन्तु Sy.
२७. वा M. युवाम् Sy.
२८. ०तीनां मज्जनैः M. स्तोतॄणाम् Sy.
२९. तेजोभिः Sy.
३०. ०मज्जन्तु M. समिति द्विरुक्तिरादरार्था Sy.
३१. स्तोताश्वस्य M. स्तोत्राणि Sy.
३२. शस्यमा A. उच्चार्यमाणाः Sy.
३३. VM. ignores मदपती॥ मदपती स्वामिनौ। मदपती इत्यत्र मदशब्दोऽनुवादः Sy.

आ वा॒मश्वा॑सो अभिमाति॒षाह॒ इन्द्रा॑विष्णू सध॒मादो॑ वहन्तु ।
जु॒षेथां॒ विश्वा॒ हव॑ना मती॒नामुप॒ ब्रह्मा॑णि शृणु॒तं गिरो॑ मे ॥ ४ ॥

**आ वामश्वासः ।** आवहन्तु । वाम्[1] । अश्वाः । शत्रूणां सोढारः[2] । इन्द्राविष्णू ! सह मदन्तौ[3] । जुषेथाम्[4] । विश्वानि[5] । ह्वानानि[6] । स्तोतॄणाम् । उपश्रृणुतञ्च[7] । शस्त्राणि[8] । गिरश्च[9] । मदीयानि ।

इन्द्रा॑विष्णू॒ तत्प॑न॒याय्यं॑ वां॒ सोम॑स्य॒ मद॑ उ॒रु च॑क्रमाथे ।
अकृ॑णुतम॒न्तरि॑क्षं॒ वरी॒योऽप्र॑थतं जी॒वसे॑ नो॒ रजां॑सि ॥ ५ ॥

**इन्द्राविष्णू ।** हे[10] इन्द्राविष्णू ! तत्[11] । स्तोतव्यम्[12] । युवयोः । सोमम्[13] । मदार्थं[14] युवाम् । उरूणि[15] पदानि । विक्रमेथे[16] । तथेदमन्तरिक्षम् । अकृणुतम्[17] । उरुतरम्[18] । तथा सर्वान् लोकान्[19] । अस्माकम् । जीवनाय । अप्रथतम्[20] ।

इन्द्रा॑विष्णू ह॒विषा॑ वावृधा॒नाग्रा॑द्वाना॒ नम॑सा रातहव्या ।
घृता॑सुती॒ द्रवि॑णं धत्तम॒स्मे स॑मु॒द्रः स्थः॑ क॒लशः॑ सोम॒धानः॑ ॥ ६ ॥

**इन्द्राविष्णू ।** हे इन्द्राविष्णू ! हविषा[21] । वर्धमानौ । सोमस्याभिषुतस्य यज्ञमुखेऽत्तारौ[22] । नमस्कारेण[23] सह । यजमानैर्दत्तहविष्कौ । घृतमासूयते[24] ययोर्हूयते तौ । द्रविणम्[25] । धत्तम्[26] । अस्मे[27] । समुद्रवन्ति यस्मात् सोमाः[28] स[29] समुद्रः[30] । कलशः । सोमनिधानः[31] सः । युवां भवथः ।

---

१. युवाम् Sy.
२. ०णाः स्सोढा० A. अभिमातीनां हिंसकानामभिभवितारः Sy.
३. सह माद्यन्तौ Sy.
४. सेवेथाम् Sy.
५. सर्वाणि Sy.
६. स्वनानि M. हवनानि स्तोत्राणि Sy.
७. ०णुतश्च A.
८. स्तोत्राणि Sy.
९. शस्त्ररूपा वाचश्च Sy.
१०. हे is missing in M.
११. स्तत् A. कर्म Sy.
१२. स्तुत्यम् Sy.
१३. सोममदा० M. किं तत्कर्मेत्यत आह–सोमस्य Sy.
१४. मदे सति Sy.
१५. विस्तीर्णम् Sy.
१६. विचक्रमाथे । यद्यपि विष्णोरेव विक्रमस्तथाप्येकार्थत्वादुभयोरित्युच्यते Sy.
१७. अकुरुतम् Sy.
१८. उरुतरम् is missing in M. उरुतरम् is suggested for उरूतरम् ।
१९. लोका रजांस्युच्यन्ते N.4.19.
२०. अवृथत M. अप्रथयतम् or अप्रथेथाम् is suggested for अप्रथतम् ।
२१. सोमेन Sy.
२२. ०मुखे क्तारौ A. सोमाग्रस्य शुक्रस्यात्तारौ Sy.
२३. ०स्कारौ सह A.
२४. व्रतमासूयते यो हुयते तौ M. घृतान्नौ Sy.
२५. धनम् Sy.
२६. प्रयच्छतम् Sy.
२७. अस्मै M. अस्मभ्यम् Sy.
२८. स्तोमाः M.
२९. स is missing in M.
३०. ०मुद्रं M. किञ्च युवां समुद्र उदधिरिव Sy.
३१. यतः सोमनिधानः Sy.

इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम् ।
आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ॥ ७ ॥

इन्द्राविष्णू । इन्द्राविष्णू ! पिबतम् । इदम्[१] । मधु[२] । सोमस्य[३] । दर्शनीयौ[४] ! जठरम्[५] । पूरयेथाम्[६] । आगच्छन्तु[७] । वाम्[८] । अन्नानि[९] । मदकराणि । उपश्शृणुतम् । स्तोत्राणि । ह्वानं[१०] च । मे[११] ।

उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥ ८ ॥

उभा[१२] जिग्यथुः । उभौ[१३] । शत्रून् जिग्यथुः[१४] । न च[१५] । पराजयेथे[१६] । न च । अनयोः[१७] । अन्यतरः[१८] । अपि[१९] । पराजिग्ये[२०] । विष्णो[२१] ! त्वम्[२२] । इन्द्रः । च[२३] । यदासुरैः[२४] । अपस्पृधेथाम्[२५] । तदानी तत्[२६] । सहस्रं[२७] गवाम्[२८] । त्रेधा[२९] ।

---

१. इमम् Sy.
२. मदकरम् Sy.
३. सोमम् Sy.
४. हे दर्शनीयौ ! युवाम् Sy.
५. उदरम् Sy.
६. सोमेन पूरयेथाम् Sy.
७. अभिगच्छन्तु Sy.
८. हे इन्द्राविष्णू ! युवाम् Sy.
९. सोमात्मकान्यन्नानि Sy.
१०. मदीयमाह्वानम् Sy.
११. मदीयानि Sy.
१२. भरद्वाजस्यार्षम् SKN.
१३. हे इन्द्राविष्णू ! उभौ युवाम् Sy. उभौ तावत्सम्प्रयुक्तौ SKN.
१४. शत्रू जिग्य० M. अजैष्टम् Sy. सर्वदा जयथः BB.
१५. न पुनः कदाचन Sy.
न कदाचिदपि BB.
१६. पराजयेथे अन्येन न जीयेथे BB. न पराजीयेथे केनचित् SKN.
१७. एनयोर्युवयोर्मध्ये Sy. एनयोरिन्द्राविष्ण्वोः BB. एतयोर्भवतोरिन्द्राविष्ण्वोः SKN.
१८. एकतरः Sy. एनयोर्मध्ये कतरश्चान्यतरोऽपि BB. नेदं किमो रूपम् । एकतरशब्दस्यायं छान्दस एकारलोपः ।. . . . एकतरोऽपि SKN.
१९. चनशब्दोऽप्यर्थे SKN.
२०. न पराजैष्ट Sy. न पराजयते । पराजयं न प्राप्तवान् BB.
न पराजीयते SKN.
२१. हे विष्णो ! इन्द्रश्च त्वं च युवाम् Sy. हे विष्णो ! त्वं चेन्द्रश्च युवाम् BB. इन्द्रश्च त्वं च हे विष्णो ! SKN.
२२. त्वं चेति वाक्यशेषः SKN.
२३. समुच्चयार्थश्चशब्दः श्रूयते । समुच्चयस्य द्वितीयेन समुच्चीयमानेन विनाऽनुपपत्तेः. . . . एवमत्र चेति समुच्चयार्थः इन्द्रश्चेत्येकेन समुच्चयस्याश्रयणेनेन्द्रेण सह सम्प्रयुज्यते । द्वितीयस्तु विष्णुस्तेनाक्षिप्यते SKN.
२४. ०सुरैः M. यद्यद्वस्तु प्रति. . . .असुरैः सह Sy. शत्रुभिः सह SKN.
२५. अपि स्पृ० A. . . . .अस्पृधेथाम् Sy. स्पर्धेथे SKN.
२६. तदा BB.,SKN.
२७. अमितम् Sy.
सहस्रमपि SKN.
२८. गवाम् is missing in A. दक्षिणाः BB. शत्रूणाम् SKN.
२९. लोकवेदवागात्मना त्रिधा स्थितम् Sy. त्रिशब्दोऽत्रानेकत्वप्रतिपादनार्थः । अनेकधा SKN.

व्यैरयेथाम्[1] ।

## VI. 70.

घृतवंती भुवंनानामभिश्रियोर्वी पृथ्वी मंधुदुघें सुपेशंसा ।
द्यावापृथिवी वरुंणस्य धर्मंणा विष्कंभिते अजरे भूरिंरेतसा ॥ १ ॥

घृतवती[2] । रसवत्यौ[3] । भुवनानाम्[4] । अभिश्रयणीये[5] । उर्वी[6] । पृथ्वी द्यौरुर्वी[7] । उदकस्य क्षारयित्र्यौ[8] । सुरूपे[9] । द्यावापृथिव्यौ[10] । वरुणस्य[11] । धारणेन[12] । विष्क भवतः[13] । जरारहिते[14] । बहुरेतस्के[15] ।

---

१. व्यक्रमेथामित्यर्थः । तथा च ब्राह्मणम्—'उभा जिग्यथुरित्यच्छावाकस्योभौ हि तौ जिग्यतुर्न पराजयेथे न पराजिग्ये इति न हि तयोः कलरश्चन पराजिग्य इन्द्रश्च विष्णो यदस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामितीन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते तान् ह स्म जित्वोचतुः कल्पामहा इति ते ह तथेत्यसुरा ऊचुः । सोऽब्रवीदिन्द्रो यावदेवायं विष्णुस्त्रिर्विक्रमते तावदस्माकमथ युष्माकमितरदिति स इमांल्लोकान् विचक्रमेऽथो वेदानथो वाचं तदाहुः किं तत्सहस्रमितीमे लोका इमे वेदा अथो वागिति ब्रूयादैरयेथामैरयेथाम्' (AB. 6.15.) इति । यद्वा तत्सहस्रं गवां सहस्रं त्रेधा व्यैरयेथामित्यर्थः Sy. त्रेधा सहस्रं व्यभजेथाम् । यद्वा यदर्थं युवां स्पर्धेथे तत्सहस्रं बहुमतं हविस्त्रेधा विभजेथाम् 'त्रयः पुरोडाशा भवन्ति' BB. विविधमीरयथस्तारापथ इत्यर्थः SKN. N. 1.4.; SKN. I. 55. This stanza=TS. 3.2.11.2.

२. 'घृतवती भुवनानाम्' इति षड्चं नवमं सूक्तं भरद्वाजस्यार्षं जागतं द्यावापृथिवीदेवताकम् । तथा चानुक्रम्यते—'घृतवती षट् द्यावापृथिवीयं जागतम्' (KSA. 33.70. p. 24.) इति । आभिप्लविके पञ्चमेऽहनि वैश्वदेवशस्त्र आद्यस्तृचो द्यावापृथिव्यनिविद्धानार्थः । सूत्रितञ्च—'घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिरिति तृचौ' (ĀSS. 7. 7.) इति । बृहस्पतिसवेऽपि वैश्वदेवशस्त्र एष तृचः । सूत्रितञ्च (ĀSS. 9. 5.) । आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे, 'घृतेन द्यावापृथिवी' इति तिस्रो द्यावापृथिव्यनिविद्धानार्थाः । सूत्रितञ्च—'घृतेन द्यावापृथिवी इति तिस्रोऽनश्वो जातः' (ĀSS.7.7.) इति Sy.

३. दीप्तिमत्यावुदकवत्यौ वा . . . . भवत इति शेषः Sy. उदकवत्यौ Mah. घृतवत्यावुदकवत्यौ U. वनम्, घृतम्, इत्युदकनामनी Ngh. 1. 12.

४. भूतानाम् Sy. भूतजातानाम् Mah. U.

५. अभिश्रयणीये भवत इति सर्वत्रानुसम्बन्धनीयम् Sy. अभिश्रियावाश्रयणीये । कर्मणि क्विप् । विभक्तेराकारः Mah. अभ्याश्रयणीये U.

६. विस्तीर्णे Sy. उर्व्यौ विस्तीर्णे Mah. U.

७. पृथिव्यौ उर्वी M. VM. seems to explain पृथ्वी by द्यौरुर्वी । (Cf. Ngh. 3.30.) बहुकार्यरूपेण प्रथिते च Sy. पृथ्व्यौ पृथुले । आयामविस्ताराभ्यां महत्त्वं विशेषणद्वयेनोक्तम् Mah. पृथुले U. ८. ०यित्रियौ A. मधुन उदकस्य दोग्ध्र्यौ Sy. मधु, उदकं तस्य दोग्ध्र्यौ Mah. U. ९. सुर उभे M.

१०. हे द्यावापृथिव्यौ ! Sy. ये द्यावापृथिव्यौ U.

११. सर्वस्य नियामकस्य Sy. आदित्यस्य Mah. ते वरुणस्यादित्यस्य U. १२. धारणशक्त्या Mah.

१३. विष्कञ्च्यै M. विष्कभिते is suggested for विष्क ॥ पृथग्धारिते Sy. स्तम्भिते । स्कभ्नोतिर्दृढीकरणार्थः । वरुणेन स्वशक्त्या दृढीकृते इत्यर्थः Mah. दृढीकृते U.

१४. नित्ये Sy. १५. बहुरेतस्के बहुकार्ये वा । अत्र साक्षात् द्यावापृथिव्योः स्तुतिप्रसङ्गाद्वरुणस्येति द्रष्टव्यम् Sy. भूरि रेतो ययोस्ते भूरिरेतसी बहुरेतस्के सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते Mah. बहुरेतस्के U. This Stanza=YV. 34. 45.

असंश्चन्ती भूरिधारे पयंस्वती घृतं दुंहाते सुकृते शुचिंव्रते ।
राजंन्ती अस्य भुवंनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुंर्हितम् ॥ २ ॥

असश्चन्ती[1] । परस्परमसङ्गते[2] । बहुधारे[3]—दिव उदकानि धारा भवन्ति ओषधयः पृथिव्याः । रसवत्यौ[4] । उदकम्[5] । दुहाते[6] । यजमानाय[7] । शोभनकर्माणौ[8][9] । राजन्ति[10] । अस्य । भुवनस्य[11] । हे द्यावापृथिव्यौ[12] ! अस्माकम्[13] । उदकम्[14] । सिञ्चतम्[15] । यत्[16] । मनुष्येभ्यो हितम्[17][18] ।

यो वांमृजवे क्रमंणाय रोदसी मर्तो ददाशं धिषणे स साधति ।
प्र प्रजाभिर्जायते धर्मंणस्परि युवोः सिक्ता विषुंरूपाणि सव्रंता ॥ ३ ॥

यो वामृजवे । यः । युवाभ्याम् । अकुटिलाय[19] । गमनाय सुखं भवत्योर्गन्तुम्[20] । हे रोदसी ! मर्त्यः[21] ।

---

१ भरद्वाजस्येदमार्षम् Dur. भरद्वाजस्य SKN.

२. असज्यमाने व्युदस्यन्त्यौ वा Sy. असज्यमाने असंश्लिष्यमाणे परस्परत एते द्यावापृथिव्यौ ....एवमेतस्मिन् मन्त्रे भूरिधारे इत्येवमादिभिः समानविभक्त्यन्तत्वात् 'असश्चन्ती' इति द्यावापृथिवीविशेषणमुपपद्यते Dur. संश्चतिर्गतिकर्मा । शुद्धोऽपि चात्र सम्पूर्वार्थे द्रष्टव्यः । असङ्गच्छमाने असज्जमाने परस्परेणासम्मिश्रीभवन्त्यौ विक्षिपन्त्यावाश्रितान् SKN.

३. दिवो वृष्टिधाराः पृथिव्याश्चाहुत्युद्भूतरसधाराः । एवमुभयोरपि बहुधारत्वम् Sy. बहूदकप्रक्षरणस्वभावे एव । अथवा बहु भूतं धारयित्र्यौ Dur. भूरिणो भूतजातस्य ज्योतिषां च धारयित्र्यौ SKN.

४. ०वत्त्वात् M. दकवत्यौ Sy. Dur., SKN.

५. सस्यादिसमृद्धिहेतुकमुदकम् Sy. वृष्टिलक्षणमुदकम् SKN.

६. द्वे अप्येते दुहाते प्रपूरयेते इतरेतरसम्भोगेन Dur. क्षरतो वर्षत इत्यर्थः SKN.

७. It seems to be the explanation of सुकृते ॥ शोभनकारिणे यजमानाय Sy. शोभनकृते । अथवा शोभनानां स्वाधिकारप्रयुक्तानां कर्मणां कर्त्र्यौ Dur. तादर्थ्ये एषा चतुर्थी । शोभनयागादिकर्मचारिणो यजमानस्यार्थाय SKN.

८. शुचिव्रते शुचिक्रिये Sy. शुक्लकर्मणी इत्यर्थः Dur. शुद्धकर्माणौ SKN.

९. अथ प्रत्यक्षस्तुतिः Sy. परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् SKN.

१०. राजन्ती is suggested for राजन्ति ॥ ईशाने युवाम् Sy. दीप्यमाने स्वैः स्वैस्तेजोभिः Dur. राजतिरैश्वर्यकर्मा । ईशाने SKN.

११. भूतजातस्य Sy., Dur., SKN.

१२. रोधसी रोधयित्र्यौ ये एते एवंलक्षणे द्यावापृथिव्यौ ते Dur. द्यावापृथिव्यौ SKN.

१३. अस्मासु Sy. अस्मभ्यम् Dur. अस्मदर्थम् SKN.

१४. प्रजननसमर्थं वीर्यम् Sy. उदकनामैतत् । उदकम् Dur., SKN.

१५. सिञ्चन्तः M. सिञ्चतमभिमते काले Dur. क्षारयतम् SKN.

१६. रेतः Sy. यत् सम्पत्करं तदित्यर्थः SKN.

१७. कीदृशम् ?....मनुष्येभ्यो हितम् SKN. किंलक्षणं पुनः सिञ्चतम् ?....मनुष्यहितम्, अक्षारं सस्यसम्पत्करमित्यभिप्रायः Dur.

१८. असज्यमाने इति वा । अव्युदस्यन्त्याविति वा । बहुधारे उदकवत्यौ N.5.2,. SKN. II.288.

१९. सरलाय M.

२०. युवयोः सुखगमनाय Sy.

२१. मर्त्ये M.

हवींषि प्रयच्छति[1]। सः[2]। धृष्टे[3]। अभिलषितं साधयति[4]। प्रजायते[5] च। प्रजाभिः[6]। भवत्वोः कर्मणा[7]। अनन्तरं युवयोः। नानाकृतीनि[8]। समानाशनस्वप्नादीनि[9]। परिषिक्तानि[10] भूतानि।

घृतेन द्यावापृथिवी अभीवृते घृतश्रिया घृतपृचा घृतावृधा।
उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते इद्विप्रा ईळते सुम्नमिष्टये ॥ ४ ॥

घृतेन[11]। उदकेन। द्यावापृथिव्यौ। परिवृते[12]। घृतस्याश्रयभूते[13]। घृतसम्पृक्ते। घृतस्य वर्धयित्रीयौ[14]। उर्वी[15]। पृथ्वी[16]। होतॄणां वरणीये यज्ञे। पुरोहिते[17]। ते[18]। एव। विप्राः[19]। स्तुवन्ति[20]। सुखम्। याचितुम्[21]।

मधु नो द्यावापृथिवी मिमिक्षतां मधुश्चुता मधुदुघे मधुव्रते।
दधाने यज्ञं द्रविणं च देवता महि श्रवो वाजमस्मे सुवीर्यम् ॥ ५ ॥

मधु नः[22]। उदकम्[23]। अस्मभ्यम्[24]। द्यावापृथिव्यौ। सिञ्चताम्। उदकस्य क्षारयित्र्यौ[25]। उदकस्य दोग्ध्र्यौ[26]। उदकार्थकर्माणौ[27]। धारयन्त्यौ[28]। यज्ञम्। धनम्। च। देवतानाम्[29]। महत्[30]। श्रवणीयम्[31]। अन्नम्। अस्मभ्यम्[32]। शोभनवीर्यं[33] प्रयच्छताम्।

---

१. हवींषि ददाति Sy.
२. मर्त्यः Sy.
३. स ते सृष्टे M. धृष्टे सर्वस्य भुवनस्य निवासभूते Sy. ४. कामान् साधयति Sy.
५. प्रवृद्धो भवति Sy.
६. किञ्च पुत्रपौत्रादिभिः Sy.
७. कर्मणः is suggested for कर्मणा।
८. नानावर्णानि Sy.
९. समानकर्माणि भूतानि जायन्ते Sy.
१०. VM. seems to explain परि and सिक्ता together as परिषिक्तानि but Sy. explains these words separately: परि as उपरि and सिक्ता as सिक्तानि रेतांसि। He construes परि with धर्मणः कर्मणः and सिक्तानि with जायन्ते।
११. घृतेना A. १२. आवृते भवतः Sy.
१३. उदकं श्रयन्त्यौ च Sy.
१४. यद्वरित्र्यौ M. वर्धयित्र्यौ is suggested for वर्धयित्रीयौ॥ घृतं वर्धयन्त्यौ Sy.
१५. विस्तीर्णे Sy.
१६. पृथिवी A. प्रथिते च भवतः Sy.
१७. पुरोदिते M. यजमानैः पुरस्कृते च भवतः Sy.
१८. ते is missing in M. द्यावापृथिव्यौ Sy.
१९. प्राज्ञाः स्तोतारः Sy.
२०. याचन्ते। सुखे सति हि यागाः प्रवर्तन्ते Sy.
२१. यज्ञाय Sy. होत्रा, दृष्टिः, इति यज्ञनामनी Ngh. 3. 17.
२२. अधु ना M.
२३. मधु मधुना। तृतीयैकवचनस्य लुक् Sy.
२४. अस्मान् Sy.
२५. ०यित्र्यायौ A.
२६. उदकदोग्ध्र्यौ Sy.
२७. ०र्थं कर्माणि M.
२८. ०यन्तौ M. ददत्यौ Sy.
२९. देवताभूते Sy. ३०. मह A.
३१. श्रपणीयम् M. यशः Sy.
३२. अस्मासु Sy.
३३. वीर्यः प्र० M. सुवीरत्वं च Sy.

ऊर्जं नो द्यौश्च॑ पृथि॒वी च॑ पिन्वतां पि॒ता मा॒ता वि॑श्व॒विदा॑ सु॒दंस॑सा ।
सं॒र॒रा॒णे रोद॑सी वि॒श्वशं॑भुवा स॒निं वाजं॑ र॒यिम॒स्मे समि॑न्वताम् ॥ ६ ॥

ऊर्जं नः । उदकम्[1] । अस्मभ्यम् । द्यौः[2] । च । पृथिवी । च । क्षरताम्[3] । पिता द्यौः[4] । माता पृथिवी । सर्वस्य लम्भयित्र्यौ[5] । सुकर्माणौ । सह रममाणे परस्परोपकार्योपकारकभावेन[6] । सर्वस्य सुखस्य भावयित्र्यौ । पशून्[7] । अन्नम्[8] । धनञ्च । अस्मभ्यम्[9] । सम्प्रापयतम्[10][11] ।

## VI.71.

उदु॒ ष्य दे॒वः स॑वि॒ता हि॑र॒ण्यया॑ बा॒हू अ॑यंस्त॒ सव॑नाय सु॒क्रतुः॑ ।
घृ॒तेन॑ पा॒णी अ॒भि प्रु॑ष्णुते म॒खो युवा॑ सु॒दक्षो॒ रज॑सो॒ विध॑र्मणि ॥ १ ॥

उदु ष्यः[12] । उद्यच्छति[13] । सः[14] । देवः[15][16] । सविता । हिरण्मयौ । बाहू[17] । यज्ञाय[18] । सुकर्मा । तत उदकेन[19] ।

---

१. अन्नम् Sy.

२. माता धारकत्वेन मातृभूता Sy.

३. क्षुरताम् A. यच्छताम् Sy.

४. वर्षस्य सेक्तृत्वेन पितृभूता Sy.

५. ०यित्रियौ A. विश्वं जानन्त्यौ विश्वस्य वेदयित्र्यौ वा Sy.

६. ०पकार्य(णा)र भावेन A.

७. VM. seems to explain सनिम् as पशून् ॥ सनिं सम्भजनीयं पुत्रादिकम् Sy.

८. बलम् Sy.

९. अस्मासु Sy.

१०. सं is missing in M. सम्प्रेरयताम् Sy.

११. VM. ignores रोदसी ॥ रोदसी द्यावापृथिव्यौ Sy.

१२. 'उदु ष्य देवः' इति षडृचं दशमं सूक्तं भरद्वाजस्यार्षं सवितृदेवताकम् । आद्यास्तिस्रो जगत्यश्चतुर्थ्याद्यास्तिस्रस्त्रिष्टुभः । तथा चानुक्रान्तम् —'उदुष्य सावित्रं त्रिष्टुबन्तम्' (KS V. 33. 71.P.24.) इति । सूक्तविनियोगो लैङ्गिकः । चातुर्विंशिकेऽहनि वैश्वदेवशस्त्र आद्यस्तृचः सावित्रसूक्तस्थान आवपनीयः । सूत्रितञ्च—'उदु ष्य देवः सविता हिरण्ययेति तिस्रस्ते हि द्यावापृथिवी' (ĀSS. 7. 4.) इति । बृहस्पतिसवेऽपि वैश्वदेवशस्त्रे सावित्रसूक्तस्थान एष तृचः । सूत्रितञ्च—'उदु ष्य देवः सविता हिरण्ययेत्यनूतिष्ठेत्' (ĀSS. 9.5.) इति । व्यूळ्हे पञ्चमेऽहनि वैश्वदेवशस्त्रे 'उदु ष्य देवः सविता दमूनाः' इति तृचः सावित्रनिविद्धानार्थः । सूत्रितञ्च—'उदु ष्य देवः सविता दमूना इति तिस्रः' (ĀSS. 8.8.) इति । वैश्वदेवपर्वणि सावित्रद्वादशकपालस्य 'वामद्य' इति याज्या । सूत्रितञ्च—'वामद्य सवितर्वामम् श्वः पूषन्तव व्रते वयम्' (ĀSS. 2.16.) इति Sy.

१३. उद ष्युः A.

१४. ०च्छन्ति M.

१५. प्रसिद्धः Sy.

१६. द्योतमानः Sy.

१७. बाहु M. आत्मीयौ बाहू Sy.

१८. सुवनाय दानाय वा Sy.

१९. उदकेन पूर्णौ Sy.

पाणी[१]। अभिप्रक्षालयति[२]। पूजयिताऽध्वर्याः[३]। युपा[४]। शोभनबलः[५]। लोकस्य[६]। विधारणे यज्ञे[७][८]।

**देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने ।**
**यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः ॥ २ ॥**

**देवस्य वयम्[९]।** देवस्य[१०]। वयम्। सवितुः[११]। प्रसवे[१२]। श्रेष्ठे[१३]। भवेम[१४]। धनस्य। च। दानाय[१५]। यः[१६]। विश्वस्य[१७]। द्विपदः[१८]। यश्च। चतुष्पदो गवादेः[१९]। रात्रौ निवेदने[२०] अग्नि[२१]। प्रसवे[२२]। भवसि। व्यापृतः[२२][२३]। बहोः[२४][२५]।

---

१. स्वौ पाणी Sy.

२. अभिप्रेरयति Sy.

३. ध्वर्याः M. ०ध्वर्युः is suggested for ०ध्वर्याः ॥ महनीयः Sy.

४. युवा is suggested for युपा ॥ नित्यतरुणः Sy.

५. सुप्रज्ञः Sy.

६. रजसो लोकस्य उदकस्य वा Sy.

७. यज्ञो A. विधारणे स्थितः Sy.

८. VM ignores उ।

९. भरद्वाजस्यार्षम् Dur. भरद्वाजस्य SKN.

१०. तस्य देवस्य Sy. दानादिगुणयुक्तस्य SKN.

११. प्रेरकस्य Sy. सर्वार्थप्रसवितुस्तस्य Dur.

१२. अनुज्ञाने Sy. सर्वार्थाभ्यनुज्ञाने....एवमत्र 'सवितुः' इत्यनेन सम्बन्धात् 'सवीमनि' इत्यस्य 'प्रसवे' इत्येवं विपरिणाम उपपद्यते Dur. प्रसवेऽभ्यनुज्ञाने SKN.

१३. श्रेष्ठा M. अतिशयेन प्रशस्ते Sy. अत्यन्तप्रशस्ये SKN.

१४. समर्था भूयास्म Sy. नित्यकालं वयमेव स्याम Dur.

१५. दाने Sy. दाने श्रेष्ठे प्रवृत्ते वयमेव लब्धारः स्याम Dur. दाने त्वं देव ! सवितः ! सर्वकर्मसु नित्यमभ्यनुजानीया धनं च दद्या इत्याशास्महे SKN.

१६. त्वम् Sy. हे सवितः ! यस्त्वम् Dur. कीदृशः ? उच्यते यस्त्वम् SKN.

१७. सर्वस्य Sy. सर्वस्यास्य Dur.

१८. द्विपादः M. मनुष्यादेः Dur, SKN.

१९. चतुष्पादः M. चतुष्पदो निवेशने प्रसवे स्वतन्त्रोऽसि Sy.

२०. निवेशने is suggested for निवेदने ॥ स्थितौ Sy., Dur. स्वापाय व्यवस्थापने SKN.

२१. वेदनेऽग्नि A. अग्नि seems to be redundant.

२२. सृष्टौ Dur. अभ्यनुज्ञाय च सर्वकर्म SKN.

२३. व्यावृतः A. स्वतन्त्रोऽसि Sy. तस्य तवैवङ्गुणविशिष्टस्य प्रसवे च दाने च वयमेवाङ्गभूताः स्यामेति Dur. अस्तिर्भवतिना समानार्थः । शुद्धोऽपि चात्र पूर्वार्थे द्रष्टव्यः SKN.

२४. भूरेः Sy. भूम्नः Dur. भूम्नोऽत्यन्तबहुनः SKN. सवीमनि प्रसवे N. 6.7., SKN. II. 415.

२५. VM. explains च once only.

अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परि पाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशंस ईशत ॥ ३ ॥

अदब्धेभिः । अहिंसितैः[१] । सवितः[२] ! पालनैः[३] । त्वम् । शिवैः[४] । अद्य[५] । परितः[६] । पाहि[७] । अस्माकम् । गृहम्[८] । हिरण्मयजिह्वः[९] । सुखाय[१०] । नपतराय[११] । रक्ष[१२] चास्मान् । मा कश्चित्[१३] । स्तेनः[१४] । अस्माकम् । ईशिषः ?[१५]

---

१. अहिंसितैः A. अनुपहिंसितैः Mah., U. केनाप्यहिंसितैः क्वचिदप्यप्रतिहतैर्वा BB.

२. सर्वस्य प्रसवितः Mah.

३. तेजोभी रक्षणसाधनैर्वा Sy. पालनैः प्रजानां रक्षणैः । त्रिभिर्वा रश्मय उच्यन्ते BB.

४. सुखकारिभिः Sy. शान्तैः सुखरूपैः Mah. शान्तैः U. शान्तकलुषैः पावनैरितियावत् BB.

५. अस्मिन्नहनि BB.

६. सर्वतः BB.

७. पां हि A. रक्ष Sy., Mah. परिपालय U. एवमैहिकभोगस्थानगृहस्य रक्षा प्रार्थिता BB.

८. ग्रहम् A. गृहम्, धनं वा Sy., Mah. गयः कृदर (Ngh. 3.4.) इति गृहनामनी । मीळ्हं गय इति धननामनी (Ngh. 2.10.) Mah. गयं गृहम् U., BB.

९. ०मयं जिह्वः A. हितरमणीयवाक् त्वम् तथा च यास्कः 'हिरण्यं कस्मादित्युपक्रम्य हितरमणं भवतीति वा (N. 2.10.) हिरण्यवदविचला जिह्वा यस्य सत्यवाक् । यद्वा हिरण्या हितरमणीया जिह्वा ज्वाला यस्येति वाMah. सत्यवाग् भूत्वा U. हिरण्यजिह्वस्त्वं रसाहरणसाधनतया जिह्वास्थानीया रश्मयो जिह्वा उच्यन्ते । हिरण्यस्वभावाः क्रमणशीला जिह्वा यस्य तादृशस्त्वं रक्ष । 'हर्य गतिकान्त्योः' 'हर्यतेः कन्यन् हिर च' इति कन्यन्प्रत्ययः BB. हिरण्यं कस्मात् ? ह्रियत आयम्यमानमिति वा । ह्रियते जनाज्जनमिति वा । हितरमणं भवतीति वा । (हृदयरमणं भवतीति वा) । हर्यतेर्वा प्रेप्साकर्मणः N. 2.10.

१०. सु इताय सुखाय Mah. सु प्रसूताय कर्मणे U. आमुष्मिकसुखसाधनमधुना प्रार्थयते—सुविताय सुष्ठु इताय प्राप्ताय स्थानाय । सुकृतेन प्राप्तायेति यावत् BB.

११. नपर तरा० M. नवतराय is suggested for नपतराय ॥ नवीयसे Mah. नवतराय भवेति वाक्यशेषः U. सर्वदाऽभिनवाय BB.

१२. पालय Sy., Mah. रक्ष च सर्वथा U. ईदृशमस्मदीयं स्वर्गस्थानं रक्षेत्यर्थः BB.

१३. मा कं चित् A. मा कश्चन Mah., U. माकिरिति छान्दस उपजनः । निपातान्तरं वा । यथाह गणकारः—'यत्र माकिर्नकिर्नभः' इति BB.

१४. अनर्थमाशंसमानः शत्रुः Sy. पापमाशंसमानः शत्रुः Mah. अघं पापं यः शंसति सोऽघशंसः U. अघे शंसनमभिलाषो यस्य तादृशः BB.

१५. आशिषः M. ईशत or ईशिष्ट is suggested for ईशिषः ॥ ऐश्वर्यं कुर्यात् । त्वत्प्रसादात् पापाऽस्माकमीशिता मा भूदित्यर्थः Mah. ईष्टा ? ईशिता भवतु U. मा ईशिष्ट ।. . . . इत्थं प्रार्थयमानानामस्माकं न कश्चिदप्यनिष्टकृत् स्यादित्यर्थः BB.

This Stanza=YV. 33. 69.=TS. 1. 4. 24. 1.

उदु ष्य देवः सविता दमूना हिरण्यपाणिः प्रतिदोषमस्थात् ।
अयोहनुर्यजतो मन्द्रजिह्व आ दाशुषे सुवति भूरि वामम् ॥ ४ ॥

उदु ष्य देवः[1] । उदस्थात्[2] । सः[3] । देवः[4] । सविता । दममनाः[5] । हिरण्यपाणिः[6] । प्रतिरात्रम्[7] । हिरण्मयहनुः[8] । यष्टव्यः । मादनजिह्वः[9] । आ स[10] । प्रसौति[11] । यजमानाय[12] । बहु[13] । धनम्[14][15] ।

उदू अयाँ उपवक्तेव बाहू हिरण्यया सविता सुप्रतीका ।
दिवो रोहांस्यरुहत्पृथिव्या अरीरमत्पतयत्कच्चिदभ्वम् ॥ ५ ॥

उदू अयान्[16] । उदयच्छत्[17] । आक्रन्दितेव[18] । वाहुम्[19] । हिरण्मयौ । सविता । शोभनावयवौ[20] । दिवः[21] । उच्छ्रितानि स्थानानि[22] । अधिरोहसि[23] । पृथिव्याः पर्यन्ता दिशः[24] । रमयति । जगत पातयति[25] च । तस्मिन् महत्सुखमिति[26][27] ।

---

१. देवं A.

२. उत्तिष्ठतु Sy.

३. सः is missing in A.

४. द्योतमानः Sy.

५. दमं मनाः A. दमूनाः M. दमूना दममना वा दानमना वा दान्तमना वा N.4.4.

६. हिरण्मयपाणिः Sy.

७. रात्रेरवसानेऽवसाने Sy.

८. रुक्ममय इति हिरण्यनामनी Ngh. 1.2.

९. ०दनं जि० A.
मोदमानवाक् Sy.

१०. Something, probably मन्तात् is missing after स० । The reading should be आ समन्तात् ।

११. प्रेरयति Sy.

१२. यजमानाय मह्यम् Sy.

१३. प्रभूतम् Sy.

१४. वामं वननीयं सम्भजनीयमन्नम् Sy. वामं वननीयम् (N 6.31.)

१५. VM. ignores उ ।

१६. अयाः A. अयो M.

१७. उद्यच्छतु Sy.

१८. अस्माकमधिवक्तेव Sy.

१९. वाहूं A.

२०. ०यवो M.

२१. अन्तरिक्षस्य Sy.

२२. उच्छ्रितप्रदेशान् Sy.

२३. आ रोहशि A.
रोहति Sy.

२४. पृथिव्या पर्यन्तादितो A.
पृथिवीपर्यन्तात् Sy.

२५. गच्छत् Sy.

२६. महत्सर्वं वस्तुजातं तिरोहितम् Sy.

२७. VM. ignores उ । कत् and चित् ॥
कच्चित् यत् किञ्चित् Sy.

वामम॒द्य स॑वित॒र्वाम॑मु॒ श्वो दि॒वेदि॑वे वा॒मम॒स्मभ्यं॑ सावीः ।
वा॒मस्य॒ हि क्षय॑स्य देव॒ भूरे॑र॒या धि॒या वा॑म॒भाजः॑ स्याम ॥ ६ ॥

वाममद्य[1] । धनम्[2] । अद्य[3] । सवितः[4] ! अस्मभ्यम्[5] । प्रयच्छ[6] । वामम्[7] । एव[8] सावीः । वामस्य[9] । हि[10] ।
वासयितुः[11] । भे दव[12] ! बह्वोर्वयं[13] सम्भक्तारः स्याम[14] । तदेवाह—अनेन[15] । कर्मणा[16] वयम्[17] । वामभाजः[18] । स्याम[19,20] ।

---

१. ०मद्यः A.

२. वननीयं कर्मफलम् Mah. वननीयम् U. वननीयं हिरण्यादिधनम् BB.

३. अस्मिन्दिने Mah. अस्मिन् U. अस्मिन्नहनि BB. ४. सर्वस्य प्रेरयितः ! देव ! Mah.

५. अस्मदर्थे Mah.

६. सुव । प्रसुव Sy. प्रेरय । देहीत्यर्थः । 'षू प्रेरणे' Mah. वाममस्माकं प्रसूयाः । अद्य सावीरिति सम्बधः U. प्रेरयः BB.

७. धनम् Sy.

८. उ अप्यर्थे । श्वोऽपि समनन्तरदिनेऽपि.... दिवे दिवे तत ऊर्ध्वं दिने दिनेऽस्मभ्यं वामं सावीः Mah. उपाशंसनीये काले सावीः । ...किं वा बहुनोक्तेन ? दिवे दिवे...अहन्यहनि U. श्वोऽपि वाममेव सुवः ? किं बहुना ? दिवे दिवे दिने दिने BB.

९. यामस्य A. वामस्य दातासि Sy. किमर्थम् । वामस्य सम्भजनीयस्य Mah.

१०. यस्मात् Sy. हि यस्मात् Mah.

११. निवासभूतस्य Sy. क्षयस्य स्वर्गनिवासस्य सिद्धय इति शेषः । 'क्षयो निवासे' इत्याद्युदात्तत्वात् क्षयशब्दो निवासार्थः । दिवे दिव इत्यह्नो नामसु पठितम् Mah. क्षयशब्दो निवासवचन आद्युदात्तत्वात् । 'क्षयो निवासे' इति हि पाणिनिराद्युदात्तत्वं स्मरति । वामस्य च निवासस्य U. क्षयस्य निवासस्य BB.

१२. भेदे M. भो देव or हे देव ! is suggested for भे दव ॥ हे देवदानादिगुणयुक्त ! U.

१३. प्रभूतस्य Sy. भूरेर्विस्तीर्णस्य बहुकालस्य Mah. बहुनो धनपूर्णस्य दाता भवेति शेषः U.

१४. भूयास्म Sy.

१५. ०वाहमने० M. अतो वयमनया Sy.

१६. अया अनया नलोपश्छान्दसः Mah. अनया BB.

१७. स्तुत्या Sy. श्रद्धायुक्तया बुद्धया Mah. धीरिति कर्मनाम । अनेन च सोमाख्येन कर्मणा U. बुद्धया, अर्हप्राप्ति (अर्थप्राप्ति) विषयया । यद्वा अनेन कर्मणा यागात्मकेनेति BB.

१८. धनवन्तः Sy. वामं वननीयं यज्ञकर्म भजन्ति वामभाजो यज्ञानुष्ठातारो भवेम Mah. अभिलषितभाजिनः U. यद् वामं तद्भाजः स्याम । यद्वा अद्य श्वः क्रमेण सर्वदा वामभाजो वयं वामस्य क्षयस्य निवासस्यापि सम्बन्धिनो भूयास्म BB.

१९. भूयास्म Sy. भवेम Mah. वयं सम्भवेम U.

२०. VM. ignores श्वः । दिवे दिवे and वामम् । दिवे दिवे प्रतिदिनम् Sy. यद्वा—उत्तरार्धस्यायमर्थः । हे देव ! वामस्य वननीयस्य भूरेर्धनपूर्णस्य क्षयस्य निवासस्य दाता भवेति शेषः । धीरिति कर्मनाम । अनया धिया सोमाख्येन कर्मणा वयं वामभाजोऽभिलषितभागिनो भवेम Mah.

अथातो गृह्णात्येव । वाम॒मद्य॒ सवित॒र्वाम॑मु॒ श्वो दि॒वेदि॑वे वा॒मम॒स्मभ्य॑ᳫं सावीः । वा॒मस्य॒ हि क्ष॒यस्य । देव भू॒रेर॒या धि॒या वा॒मभा॒जः स्याम- "उपया॒मगृ॑हीतोऽसि सावि॒त्रोऽसि चनोधाश्चनोधा॒ असि च॒नो म॒यि धेहि । जिन्व यज्ञं जि॒न्व य॒ज्ञप॑तिं भ॒गायेति"
SB. 4. 4. 1. 6. p. 380.

अत्र " " चिन्हान्तर्गतो भागो यजुर्वेदस्याष्टमाध्यायनवममन्त्रस्यास्ति । तत्र 'वाममद्य' । इत्यादिर्मन्त्रः YV.8.6. पृथक्, ततः 'उपयाम' इत्यादिश्च पृथङ्मन्त्रः । YV.pp.134,135. This stanza=YV. 8. 6.=TS. 2.2. 12. 2.

VI.72.

**इन्द्रासोमा महि तद्वां महित्वं युवं महानि प्रथमानि चक्रथुः ।**
**युवं सूर्यं विविदथुर्युवं स्व१र्विश्वा तमांस्यहतं निदश्च ॥ १ ॥**

इन्द्रासोमा[1]। हे इन्द्रासोमौ[2] ! महत् । तत् । वाम्[3] । महत्तत्वम्[4] । युवाम्[5] । महान्ति । प्रश्नानि व्रतानि[6] । चक्रथुः[7] । युवाम् । सूर्यम्[8] । लम्भयथः[9] । युवाम् । उदकम्[10] । विश्वानि । तमांसि । अहतम्[11] । निन्दितॄन्[12] । च ।

**इन्द्रासोमा वासयथ उषासमुत्सूर्यं नयथो ज्योतिषा सह ।**
**उप द्यां स्कम्भथुः स्कम्भनेनाप्रथतं पृथिवीं मातरं वि ॥ २ ॥**

इन्द्रासोमा । इन्द्रासोमौ[13] ! उषसम् । वासयथः[14] स्वे स्थाने[15] । सूर्यञ्च । उन्नयथः । ज्योतिः[16] । सह । द्विलोकञ्च[17] । उपस्तम्भथुः[18] । अन्तरिक्षेण[19] । ह्यप्रथं[20] च । पृथिवीम् । मातरम्[21] ।

---

१. 'इन्द्रासोमा महि' इति पञ्चर्चमेकादशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभमिन्द्रासोमदेवताकम् । 'इन्द्रासोमा पञ्चैन्द्रासोमम्' इत्यनुक्रान्तम् (KSA. 33.72. P. 24.)। सूक्तविनियोगो लैङ्गिकः Sy.

२. ०सोमाः A.

३. युवयोः Sy.

४. महत्तत्वा A. महत्त्वम् is suggested for महत्तत्वम् ।

५. युवा मुहान्ति A.

६. प्रश्नानि प्रतानि प्रतानि A. प्रतमानि is suggested for प्रश्नानि ॥ प्रतमानि मुख्यानि वा भूतानि Sy. प्रथम इति मुख्यनाम। प्रतमो भवति N. 2.22.

७. अकार्ष्टम् Sy.

८. सूर्यं लम्भ० A.

९. अलम्भयतं च जनान् Sy.

१०. हेम स्वरित्युदकनामनी Ngh. 1.12.

११. अहिंस्तम् Sy.

१२. निन्दित्त्रन् A. निन्दितॄनसुरान् Sy.

१३. हे इन्द्रासोमौ ! Sy.

१४. वाथः A. विवासयथः । उषसं व्युच्छन्तीं कारयथ इत्यर्थः Sy.

१५. स्थे स्थाने A.

१६. ज्योति सह A. ज्योतिषा is suggested for ज्योतिः ॥ तेजसा Sy.

१७. द्युलोक० is suggested for द्विलोक० ॥ दिवम् Sy.

१८. अस्तम्भयतम् Sy.

१९. स्तम्भनहेतुनान्तरिक्षेण मध्ये स्थापितेन Sy.

२०. प्य प्रथं च A. व्यप्रथयतञ्च is suggested for ह्यप्रथं च ।

२१. विश्वस्य मातृभूता Sy.

इन्द्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत ।
प्रार्णांस्यैरयतं नदीनामा समुद्राणि पप्रथुः पुरूणि ॥ ३ ॥

इन्द्रासोमौ[1] । इन्द्रासोमौ[2] । उदकानि[3] । परिवृत्य[4] तस्थिवांसम् । आहन्तारम्[5] । वृत्रम्[6] । हतः[7] । तदानीं वाम्[8] । द्यौः । अन्वमन्यत । प्रेरयतञ्च युवाम् । उदकानि । नदीनाम् । तैश्चोदकैः समुद्रात्[9] । बहुन्[10] । आपूरितवन्तौ[11], लिङ्गभेदश्छान्दसो[12] यद्वा....काद्या[13] पुरुपतादिति(?) ।

इन्द्रासोमा पक्वमामास्वन्तर्नि गवामिद्दधथुर्वक्षणासु ।
जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वन्तः ॥ ४ ॥

इन्द्रासोमा । हे इन्द्रासोमौ ! नपाम्[14] । आमासु य सु[15][16] । पक्षणासूघः सु[17] । अन्तम्[18] । निदधथुः[19] । पक्वं पयः[20] ।....भीथश्च[21] । आपुवक्षणासु[22] । अनपिनद्धं पयो यथा पृथिव्यां न पतति[23] । श्वेत[24] । चित्रवर्णासु[25] । गोषु[26] । अत्ताः[27][28] ।

---

१. ०सोमेण A. सोमा M.
२. हे इन्द्रासोमौ ! Sy.
३. मेघस्थान्युदकानि Sy.
४. परिवृत्य स्थितम् Sy.
५. जगत आहन्तारम् Sy.
६. असुरम् Sy. ७. हतम् Sy.
८. वान्द्योरन्यमन्यत A. युवाम् Sy.
९. ०द्रान् is suggested for ०द्रात् ॥ उदकस्थानानि Sy.
१०. बहून् is suggested for बहुन् ॥ पुरूणि बहूनि Sy. तुवि पुर्विति बहुनामनी Ngh. 3.1.
११. उदकैरापूरयतं च । अथवा समुन्दन्त्युदकान्येव समुद्राणि । तानि रसेनापूरयतमित्यर्थः Sy. समुद्रः कस्मात् ? समुद्द्रवन्त्यस्मादापः । समभिद्रवन्त्येनमापः । सम्मोदन्तेऽस्मिन् भूतानि । समुदको भवति । समुनत्तीति वा N. 2.10.
१२. It refers to समुद्राणि of the text.
१३. ...काद्यापुरूवतार्दिति M. Something is missing here. समुन्दन्तीति समुद्राण्युदकान्येवापूरयतमिति is suggested for काद्यापुरुपतादिति ।
१४. गवाम् is suggested for नपाम् ।
१५. आसु M. अपक्वासु Sy.
१६. यसु is redundant.
१७. पक्षणासु घसु M. वक्षणा० is suggested for पक्षणा० ।
१८. अन्तः is suggested for अन्तं ॥ मध्ये Sy. १९. निदधुः M.
२०. पक्वं कया M.
२१. ....भिधश्च M. Something is missing here. जगृभथुश्च is suggested for....भीथश्च ॥ यथा पृथिव्यां स्वयं न क्षरति तथा धारितवन्तावित्यर्थः Sy.
२२. आसु is suggested for आपु ।
२३. ०न विन० A. केनाप्यबद्धम् Sy.
२४. श्चेत A. श्वेतम् is suggested for श्वेत ॥ शुक्लवर्णम् Sy.
२५. नानावर्णासु Sy.
२६. इळा जगतीति गोनामनी Ngh. 2.11.
२७. गोष्यता A. अन्तः is suggested for अत्ता ॥
२८. VM. ignores इत् ॥ इदिति पूरकः Sy.

इन्द्रासोमा युवमङ्ग तरुत्रमपत्यसाचं श्रुत्यं रराथे ।
युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ॥ ५ ॥

इन्द्रासोमा । इन्द्रासोमौ! युवाम् । अङ्ग[1] । तारकं धनम् । पुत्रपौत्रभाजम्[2] । श्रवणीयम्[3] । प्रयच्छथः[4] युवाम् ।, बलम् । नृहितम्[5] । मनुष्येभ्यः[6] । संविव्यथुः[7] । पृतनासहम्[8] । उद्गूर्णौ[9] !

VI. 73.

यो अद्रिभित्प्रथमजा ऋतावा बृहस्पतिराङ्गिरसो हविष्मान् ।
द्विबर्हज्मा प्राघर्मसत्पिता न आ रोदसी वृषभो रोरवीति ॥ १ ॥

यो अद्रिभित्[10] । यः[11] । शिलोच्चयभित्[12] । पूर्वजः[13] । यज्ञवान्[14] । बृहस्पतिः[15] । आङ्गिरसः[16] । हविष्मान्[17] । स द्विगुणगमनः[18] शीघ्रगन्ता । प्रकृष्टे घर्मे सीदन्[19] । पालयिता[20] । अस्माकम् । द्यावापृथिव्यौ । वृषभः[21] । आरोरवीति[22] ।

१. क्षिप्रम् Sy.
२. सन्तानयुक्तम् Sy.
३. श्रयणीयम् M.
४. अस्मभ्यं धत्थः Sy.
५. नृभ्यो हितम् Sy.
६. कृष्टयश्चर्षणय इति मनुष्यनामनी Ngh. 2.3.
७. समतनुतम् । परिवेष्टयथो वा Sy.
८. घृतना० A. शत्रुसैन्याभिभावुकम् Sy.
९. उद्गूर्णो A. M. हे उद्गूर्णौ ! इन्द्रासोमौ ! Sy.
१०. 'यो अद्रिभित्' इति तृचं द्वादशं सूक्तं बार्हस्पत्यं भरद्वाजस्यार्षं त्रैष्टुभम् । तथा चानुक्रान्तम् 'यो अद्रिभित्तृचं बार्हस्पत्यम्' (KSA. 33. 73. p. 24.) इति । आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे स्तोमातिशंसनार्थमिदं सूक्तम् । सूत्र्यते हि—'यो अद्रिभिद्यज्ञे दिव इति सूक्ते' (ĀSS.7.9.) । वाजपेये बार्हस्पत्ये चरौ 'बृहस्पतिः समजयद्वसूनि' इति स्विष्टकृतोऽनुवाक्या । सूत्रितञ्च—'बृहस्पतिः समजयद्वसूनि त्वामीळते अजिरं दूत्याय' (ĀSS.9.9.) इति Sy.
११. यो आमी भीत् A. . . . . अभी भिः M.
१२. पणिभिर्विरचितानां शिलोच्चयानां भेत्ता मेघानां विदारको वा Sy. अद्रिर्ग्रावेति मेघनामनी Ngh.1.10.
१३. प्रजापतेर्वीर्यात् प्रथमं जातः Sy.
१४. सत्यवानुदकवान्वा Sy.
१५. बहस्प A.
१६. अङ्गिरसः पश्चाज्जातः । तथा च निगमः—'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद्बृहस्पतिरभवत्' (AB.3.34.) Sy.
१७. यज्ञभागवान् Sy.
१८. द्वयोर्लोकयोर्बृंहितगमनः Sy.
१९. प्रकर्षेण दीप्तस्थाने वर्तमानः Sy.
२०. पालयिता भवति स बृहस्पतिः Sy.
२१. वर्षकः सन् Sy.
२२. अभिगर्जति Sy.

जनाय चिद्य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार ।
घ्नन्वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान्पृत्सु साहन् ॥ २ ॥

जनाय चित् । जनाय । चित्[1] । यः[2] । आत्मानं प्रति गच्छते[3] । लोकम्[4] । बृहस्पतिः । यज्ञे[5] । सकार[6] । शत्रुम्[7] । घ्नन्[8] । शत्रुपुराणि[9] । विदारयति[10] । जयजातयितॄन्[11] । शत्रून् । अमित्रान् । पृतनासु[12] । अभिभवत्[13] ।

बृहस्पतिः समजयद्वसूनि महो व्रजान् गोमतो देव एषः ।
अपः सिषासन्त्स्वरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ३ ॥

बृहस्पतिः । बृहस्पतिः । स्वं जयति[14] । धनानि[15] । महतः । व्रजान्[16] । पशुमतश्च[17] । देवः[18] । एषः[19] । उदकानि । सम्भक्तुमिच्छन्[20] । स्वर्लोकस्थितानि[21] । शत्रुभिरप्रतिहतः[22] । बृहस्पतिः । हन्ति च । अमित्रम्[23] । मन्त्रैः[24] ।

---

१. चिदिति पूरणः Sy.
२. अपि च यो बृहस्पतिः Sy.
३. उपगच्छते स्तोत्रे Sy.
४. स्थानम् Sy.
५. यज्ञे वर्तमानाय Sy.
६. चकार is suggested for सकार ॥ करोति Sy.
७. शत्रू A.
   आवरकाणि तमांसि Sy.
८. निवारयन् Sy.
९. आसुरीः पुरीः Sy.
१०. भृशं विदारयति Sy.
११. जय जातपितॄन् A. जयन् is suggested for जयजातयितॄन् ।
१२. पृतनात्सु A.
   युद्धेषु Sy.
१३. ०भवन् is suggested for ०भवत् ।
१४. तपज जयति A. सञ्जयति is suggested for स्वं जयति ॥ समजयत् । तथा च निगमौ 'बृहस्पतिर्गोवपुषो बलस्य निर्मज्जानं न पर्वणो जभार' (RV. 10.68.9.) इति दूरमित पणयो वरीय उद्गावो यन्तु मिनतीर्ऋतेन । बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥ (RV. 10.108.11.) इति Sy.
१५. पणीनामसुराणां बलस्य वा धनानि Sy.
१६. प्रजां A.
१७. गोसहितान् Sy.
१८. द्योतमानः Sy.
१९. प्रसिद्धः Sy.
२०. ०मिच्छत् A.
   सम्भक्तुकामः Sy.
२१. स्वल्लोक० A.
   स्वर्गस्य Sy.
२२. केनाप्यप्रतिगतः Sy.
२३. असुरम् Sy.
२४. अर्चनसाधनैर्मन्त्रैः Sy.
   अर्को मन्त्रो भवति । यदनेनार्चन्ति N.5.4.

VI. 74.

सोमा॑रुद्रा धा॒रये॑थामसु॒र्यं१॒॑ प्र वा॑मि॒ष्टयो॒ऽर॑मश्नुवन्तु ।
दमे॑दमे स॒प्त रत्ना॒ दधा॑ना॒ शं नो॑ भूतं द्वि॒पदे॒ शं चतु॑ष्पदे ॥ १ ॥

सोमारुद्रा[1] । हे सोमारुद्रौ ! धारयेथाम् । असुराणां[2] हन्तृबलम् । तथा सति वाम्[3] । पर्याप्तम्[4] । प्राग्नूपन्तु[5] । यज्ञाः । गृहेगृहे[6] । सप्त । रत्नानि । प्रयच्छन्तौ[7] । शङ्करौ[8] । नौ[9] । भवत[10] । द्विपदे[11] । चतुष्पदे[12] च[13] ।

सोमा॑रुद्रा॒ वि वृ॑हतं॒ विषू॑ची॒ममी॑वा॒ या नो॒ गय॑मावि॒वेश॑ ।
आ॒रे बा॑धेथां॒ निरृ॑तिं परा॒चैर॒स्मे भ॒द्रा सौ॑श्रव॒सानि॑ सन्तु ॥ २ ॥

सोमारुद्रा[14] । हे सोमारुद्रौ[15] ! विवृहतम्[16] । विष्वगञ्चना[17] । अमीवा[18] । या[19] । अस्माकम् । गृहम्[20] । आविवेश[21] । आरे[22] । बाधेथाम्[23] । निर्ऋतिम्[24] । पराचीनम्[25] । अस्मासु । भद्राणि । स्वन्ननिमित्तानि[26] । सन्तु[27] ।[28]

---

१. 'सोमारुद्रा' इति चतुर्ऋचं त्रयोदशं सूक्तं भरद्वाजस्यार्षं त्रैष्टुभं सोमारुद्रदेवताकम् । अनुक्रम्यते च—'सोमारुद्रा चतुष्कं सोमारौद्रम्' (KSA. 33.74. P. 24.) इति । विनियोगो लैङ्गिकः Sy.
एनस्वी वाभिशस्तो वा कृत्वा वा कर्म गर्हितम् ।
सोमारौद्रं जपेत्सूक्तं कृत्स्नमेनो व्यपोहति ॥ ६.
जुहुयाद्वा य एताभिर्ऋग्भिर्नित्यं धृतव्रतः ।
वारुणेभ्यः स पाशेभ्यो मुच्यते शं तथाप्नुयात् ॥
Ṛgvidh 2.125, 126.

२. असुरसम्बन्धि बलम् Sy.

३. युवाम् Sy.  ४. अलं पर्याप्तम् Sy.

५. प्राश्नुवन्तु is suggested for प्राग्नूपन्तु ॥ प्रकर्षेण व्याप्नुवन्तु Sy.

६. ग्रहे ग्रहे A. सर्वेष्वस्मद्गृहेषु Sy.

७. धारयन्तौ Sy.

८. सुखकरौ सुखरूपौ वा Sy.

९. नः is suggested for नौ ॥ अस्मभ्यम् Sy.

१०. भवतम् is suggested for भवत ।

११. अस्मदीयाय पुत्रादये Sy.

१२. पश्वादये च शं भवतम् Sy.

१३. VM. explains शम् once only.

१४. यो ब्रह्मवर्चसकामः स्यात्तस्मा एतं सौमारौद्रं चरुं निर्वपेत् BB.

१५. पूर्ववदानङ्, आकारश्च ('देवताद्वन्द्वे च' (Pa. 6.3.26.) इत्यानङ् 'सुपां सुलुक्०' (Pa. 7.1.39.) इत्याकारः, BB.

१६. वियोजयतम् Sy. 'वृहू उद्यमने' तौदादिकः BB.

१७. तां विष्वक् सर्वतो गच्छन्तीम् Sy. विश्वगगमनाम् BB.

१८. रोगः आविवेश ताम् Sy. अमीवा रोगस्तेजोहानिरूपः BB.  १९. यः Sy.

२०. गृहगतं प्राणिजातं वा Sy.

२१. दूरे Sy., BB.

२२. निवारयतम् गमयतं गमयित्वा नाशयतम् BB.

२३. अलक्ष्मीम् Sy. निकृष्टां गतिं निकृष्टगमनहेतुं पापम् BB.

२४. पराग्यथा भवति तथा Sy. परावृत्तिभिर्गमनैः पुनरस्मत्पार्श्वं नागच्छति तथा बाधेथाम् । निपातोऽयं यथा उच्चैर्नीचैः BB.

२५. अस्माकम् Sy.

२६. अन्नानि यशांसि च, सुश्रवसो भावः सौश्रवसम् । श्रवोऽन्नं यशश्च Sy.  २७. भवन्तु Sy.

२८. The commentary on this stanza is missing in A. This stanza=TS 1.8.22.5.

सोमा॑रुद्रा यु॒वमे॒तान्य॒स्मे विश्वा॑ त॒नूषु॑ भेष॒जानि॑ धत्तम् ।
अव॑ स्यतं मु॒ञ्चतं॒ यन्नो॒ अस्ति॑ त॒नूषु॑ ब॒द्धं कृ॒तमेनो॑ अ॒स्मत् ॥ ३ ॥

सोमारुद्रा । हे सोमारुद्रौ[१] ! युवाम् । एतानि[२] । अस्माकम् । विश्वानि[३] । भेषजानि[४] । अङ्गेषु । धत्तम्[५] । यत् । पापम्[६] । अस्माकम् । अस्ति[७] तद्बद्धम्[८] । अवस्यतम्[९] । मुञ्चतञ्च[१०] । तदेवाह तनूषु[११] । बद्धम् । कृतम्[१२] । पापमस्माकम्[१३] । अस्मत्ता[१४]ऽवस्यतं[१५] मुञ्चतमिति[१६] ।

ति॒ग्मायु॑धौ ति॒ग्महे॑ती सु॒शेवौ॒ सोमा॑रुद्रावि॒ह सु मृ॑ळतं नः ।
प्र नो॑ मुञ्चतं॒ वरु॑णस्य॒ पाशा॑द्गोपा॒यतं॑ नः सुमन॒स्यमा॑ना ॥ ४ ॥

तिग्मायुधौ । तिग्मधनुष्कौ[१७] । तिग्महेती[१८] । सुसुखौ[१९] । सोमारुद्रौ ! युवाम् । इह[२०] । अस्मान्[२१] । सुष्ठु[२२] । सुखयतम् । प्रमुञ्चतञ्च । स्मात्[२३] । वरुणस्य । पाशात् । रक्षतम्[२४] । स्मात् । सौमनसमिच्छन्तौ[२५] ।

---

१. हे सोमारुद्रौ ! युवामुच्येथे Dur.
२. प्रसिद्धानि Sy. यानि लोके सन्ति तानि BB.
३. सर्वाणि Sy., Dur., SKN.
४. रोगोपशमकराणि भेषजान्यौषधानि SKN.
५. धारयतम् Sy. स्थापयतम् । दत्तं वा BB. अरोगशरीरानस्मान् कुरुतमित्यर्थः SKN.
६. यदस्माभिः कृतमेनः पापम् BB.
७. विद्यते Sy.
८. तद्बडम् A. पापम् Sy. तत्प्रथमं तावत् BB. तनूषु बद्धं निबद्धम् SKN.
९. बिष्यत A. क्षपयतम् । श्लथयतम् । शिथिलबन्धं कुरुतमित्यर्थः Sy. ततो मुक्त्वा तदवस्यतमवसाययतं विनाशयतम् Sy.
१०. विश्लेषयतम् BB. अपनीय चान्यत्र नीत्वा मुञ्चतम् SKN.
११. अङ्गेषु Sy. शरीरेषु BB. Dur., SKN.
१२. अस्माभिः कृतम् Sy. मनोवाक्कायैः कृतम् Dur. अस्यैव विवरणं कृतम् SKN.
१३. रवाण्वम् A. एनः किञ्चिदस्ति Dur. किं तत् ? एनः पापमस्माभिरिति शेषः SKN.
१४. ०स्माक M.
१५. क्तः A. अस्मत्तः is suggested for अस्मत्त ॥ अस्मत् पञ्चम्यन्तम् । पुरस्तात्कृतसम्बन्धम् SKN.
१६. इत्यस्मानवितुं रक्षितुमिच्छतम् Dur. स्यतिरुपसृष्टो विमोचने । विमुञ्चतमपनयतं वाऽस्मत्त इत्यर्थः SKN. N. 7.10., SKN. III. 61.
This stanza=TS. 1. 8. 22. 5.
१७. दीप्तधनुष्कौ Sy.
१८. ०हेति A. तीक्ष्णशरौ Sy.
१९. शोभनसुखप्रदौ Sy.
२०. लोके Sy. २१. ०स्मात् A.
२२. सुष्ठू A. अत्यन्तम् Sy.
२३. अस्मान् is suggested for स्मात् ।
२४. आपद्भ्यो रक्षतं च Sy.
२५. शोभनं मनः स्तोत्रमिच्छन्तौ सुमनस्यमानौ स्तूयमानौ सुमनसौ वा सन्तौ युवाम् Sy.

VI.75.

जी॒मूत॑स्येव भवति॒ प्रती॑कं॒ यद्व॒र्मी याति॑ स॒मदा॑मु॒पस्थे॑ ।
अना॑विद्धया त॒न्वा॑ जय॒ त्वं स त्वा॒ वर्म॑णो महि॒मा पि॑पर्तु ॥ १ ॥

जीमूतस्येव[1] ॥ वायुर्भरद्वाजः[2] ॥ शौनकः—

१. 'जीमूतस्येव' इत्येकोनविंशत्यृचं चतुर्दशं सूक्तं भारद्वाजस्य पायोरार्षम् । अनुक्रम्यते च— 'जीमूतस्यैवैकोना पायुर्भारद्वाजः सङ्ग्रामाङ्गान्यृक्शोऽभितुष्टाव वर्म धनुर्ज्यामार्त्नी इषुधिं जगत्यर्धे सारथिमर्धे रश्मीनश्वान् रथं रथगोपान् जगत्यां लिङ्गोक्तदेवता द्वाभ्यामिषुः प्रतोदं हस्तघ्नं द्वाभ्यामिषूः पराः पङ्क्त्यादयो लिङ्गोक्तदेवताः सङ्ग्रामाशिषोऽन्त्याऽनुष्टुबृजीत आलाक्तेति च द्वे द्वे' (KSA.33.75.P.24.) इति । 'रथे तिष्ठन्' 'ब्राह्मणासः' इति षष्ठीदशम्यौ जगत्यावन्त्या 'यो नः स्वः' इत्येषानुष्टुप् 'ऋजीते' 'आ जङ्घन्ति' 'आलाक्ता' 'अवसृष्टा' 'यो नः स्वः' इति पञ्चानुष्टुभः । 'यत्र बाणाः' इति पङ्क्तिः शिष्टास्त्रिष्टुभः । आद्यया वर्म स्तूयते, द्वितीयया धनुः, तृतीयया ज्या, चतुर्थ्यार्त्नी, पञ्चम्येषुधिः। अतः पञ्चानां वर्माद्या देवताः । षष्ठ्याः पूर्वार्धेन सारथिः स्तूयते। अतः सोऽर्धस्तद्देवताकः । उत्तरार्धेन रश्मयः स्तूयन्ते । सप्तम्याश्वाः, अष्टम्या रथः, नवम्या रथगोपाः । अतस्तास्तद्देवताकाः 'ब्राह्मणासः' इत्यस्यां ब्राह्मणपितृसोम्यद्यावापृथिवीपूषाणो लिङ्गोक्तदेवताः । एकादशीद्वादश्याविषुस्तुतिरूपत्वादिषुदेवताके । त्रयोदश्या प्रतोदः, चतुर्दश्या हस्तघ्नः, पञ्चदशीषोडश्याविषुदेवताके । सप्तदश्या युद्धभूमिब्रह्मणस्पत्यदितिरूपा लिङ्गोक्तदेवताः । अष्टादश्याः कवचसोमवरुणा देवताः । अन्त्याया देवा ब्रह्म च देवताः। युद्धेऽनेन सूक्तेन राजानं सन्नाहयेत् । तथा चाश्वलायनः—'सङ्ग्रामे समुपोळ्हे राजानं सन्नाहयेदा त्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् उत्तरया धनुरुत्तरां वाचयेत्स्वयं चतुर्थीं जपेत्पञ्चम्येषुधिं प्रयच्छेदभिप्रवर्तमाने षष्ठीं सप्तम्याश्वानष्टमीमिषूनवेक्षमाणं वाचयत्यहिरिव भोगैः पर्येति बाहुमिति तलं नह्यमानम्' (AGS. 3.12.) इति । तथा च 'अवसृष्टा परा पत, इतीषून् विसर्जयेद् 'यत्र बाणाः सम्पतन्ति, इति युध्यमानेषु जपेत् संशिष्याद्वा' (AGS.3.12.) इति। अध्यायोपाकरणोत्सर्जनयोर्मण्डलान्त्यहोमे 'यो न स्वः' इत्येषा' (AGS.3.4.) Sy. अत्र बृहद्देवता—

प्रथमा त्वस्य सूक्तस्य योद्धारं स्तौति वर्मिणम् ।
धनुः स्तौति द्वितीया[1] च तृतीया ज्याभिमन्त्रिणी १२६
स्तौति चार्त्नीं चतुर्थी ऋक्[2] इषुधिं स्तौति पञ्चमी ।
अर्धेन सारथिः(थिं) षष्ठ्या रश्मयोऽर्धेन तु[3] स्तुताः १३०
अश्वांश्च[4] सप्तमी स्तौति आयुधागारमष्टमी ।
नवमी रथगोपांस्तु दशमी रणदेवताः ॥१३१॥
इषुमे[5]कादशी स्तौति द्वादशी कवचस्तुतिः ।
त्रयोदशी कशां स्तौति हस्तत्राणं चतुर्दशी ॥१३२॥
प्रथमे पञ्चदश्यास्तु पादे पुनरिषुः[6] स्तुतः ।
अयोमुखी द्वितीये तु अर्द्धर्चं वारुणं परम्[7] ॥१३३॥
षोळश्यां त्वस्य सूक्तस्य धनुर्मुक्त इषुः[8] स्तुतः ।
सप्तदश्यां तु युद्धादेः कवचस्य तु बध्यतः ॥१३४॥
स्तुतिरष्टादशी ज्ञेया युयुत्सोः[9] स्तुतिरुत्तमा ।
आशास्ते चोत्तमे पादे ऋषिरात्मन आशिषः ॥१३५॥

'जीमूतस्यैवैकोना पायुर्भारद्वाजः सङ्ग्रामाङ्गान्यृक्शोऽभितुष्टाव०' इत्यनुक्रमणी (KSA.33.75.Pa.24)। तथा ऋग्विधाने—सङ्ग्राममभ्युद्यताय राज्ञे चैतत् प्रयोजयेत् । सर्वाण्यङ्गानि रथ्यांश्च सदश्वांश्चानुमन्त्रयेत् ॥ इति ॥ (Rgvidh.2.120. reads 'सङ्ग्रामन्तु प्रयातस्य राज्ञश्चैतत् प्रयोजयेत्') आश्वलायनः—'जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् उत्तरया धनुः, उत्तरां वाचयेत्, स्वयं चतुर्थीं जपेत्' (AGS. 3. 9. 3-6.)। पायुस्त्रिष्टुभा वर्म तुष्टाव DDN.

२. वायुर्भरद्वाजः M. पायुः is suggested for वायुः ॥ एवमग्नि स्तुत्वाश्वरक्षणे योधा युद्धोपकरणानि च स्तूयन्ते । भरद्वाजसुतः पायुः सङ्ग्रामाङ्गानि प्रत्यृचं स्तौति । त्रिष्टुब्भिर्वर्म स्तूयते Mah. वर्म स्तूयते U.

[1] धनुषश्च द्वितीया तु BD. [2] स्तौत्यृगार्त्नीं चतुर्थी तु BD. [3] संस्तुताः BD. [4] अश्वांस्तु BD. [5] इषुञ्चैकादशी BD [6] दिग्ध इषु BD. [7] अर्धेऽस्त्रं वारुणं परे BD. [8] इषु BD. [9] युयुत्सो BD.

अभ्यावर्त्ति[1] वायमान प्रस्तोकश्चैव साञ्छयः[2] ।

अभिजग्मतुर्भरद्वाजजितौ[3] वारखैर्युधि[4] ॥१२४॥

अभिगम्योचतुस्तौ तु[5] प्रणम्याख्याय नामनी ।

युधि वारशिखैर्ब्रह्मणावां[6] विद्धिविनिर्जितौ[7] ॥१२५॥

भवत्पुरोहितावावां[8] क्षत्रबन्धू यजेवहि[9] ।

क्षत्रं धनमपि जेयं[10] हि ब्रह्म यत्पाति शाश्वतत्[11] ॥१२६॥

ऋषिस्तु तौ तथेत्युक्त्वा वायुपुत्रमभाषत[12] ।

अधर्षणीयौ शत्रूणां कुरुष्वैनौ[13] नृपाविति ॥१२७॥

पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ।

जीमूतीयेन[14] सूक्तेन पृथक्त्वेनान्वमन्त्रयत् ॥१२८॥

जीमूतस्येव[15] घटितम् । अङ्गम्[16] । भवति सन्नद्धं वर्मणाऽयोमयेन[17] । यद्वा[18] । वर्मी[19] । याति[20] । समदां

---

१. अभ्यापत्ति वायमान A. according to BD. अभ्यावर्ती चायमानः is suggested for अभ्यावत्ति वायमान ।

२. सायः A. साञ्जयः is suggested for साञ्छयः ।

३. ०जञ्छितौ A. ०जञ्जितौ is suggested for ०जजितौ । One syllable is too more in the third *Pāda*. आजग्मतुर्भरद्वाजम् BD.

४. ०गिरवैर्य्यधि A. वारशिखैः is suggested for वारखैः ।

५. तुं A. तं प्रसाद्याख्याय BD.

६. ब्रह्मन्नावाम् is suggested for ब्रह्मगावाम् ।

७. विद्भिनि A. द्विड्भिर्वि० is suggested for विद्विविनि० । आवां विद्धि विनि० BD.

८. ०हितौ वा० A.

९. क्षत्रबन्धून् जयेवहि BD.

१०. धमपिजे० A. क्षत्रं तदपि विज्ञेयं BD. One syllable is too more in the third *Pāda*.

११. शाश्वतम् is suggested for शाश्वतत् ।

१२. पायुं पुत्र० is suggested for वायुपु० ।

१३. ०ष्वैनो A. ०ष्वैतौ BD.

१४. जीमूतस्येति सूक्तेन BD. 5. 124—128. (बृ० दे० ५. ११२)

१५. मेघस्येव भवति मेघस्य यादृशं रूपं तादृशमस्य भवतीत्यर्थः Sy. मेघस्येव Mah. जीमूतो मेघस्तस्येव U.

१६. प्रतीकं रूपम् Sy. DDN. तदा प्रतीकं सेनामुखम् । . . . मेघस्य मुखं विद्युत्स्तनयित्नुधाराभिर्यथाऽसह्यमेवं हस्त्यश्वरथपदात्यस्त्रजालतूर्यनादशरोघैः सेनामुखमसह्यं भवतीत्यर्थः । अतोऽहं ब्रवीमि Mah. यथा मेघस्य मुखं विद्युत्स्फुरितस्तनयित्नुधारानिकरैरसह्यं भवत्यन्तः सरणैरेवं हस्त्यश्वपदातिमुखं निशितास्त्रगम्भीरतूर्यनिनादशरधाराभिरसह्यं भवति U.

१७. लोहमयेन सन्नद्धस्य राज्ञः Sy., DDN.

१८. यदा is suggested for यद्वा ॥ यदायं राजा Sy., DDN. एवं कस्मिन् काले कस्येवेत्यत आह . . . यदा U.

१९. वमी A. कवची Sy., DDN. कवचवान् Mah. वर्मास्य विद्यत इति वर्मी U.

२०. गच्छति U.

सेनानाम्[1] । उपस्थेऽग्ने[2] योधनाय[3] । अनाविद्धेन[4] शत्रुभिः । शरीरेण । सपत्नान्[5] जय[6] । त्वम्[7] । सः[8] । वर्मणः । महिमा[9] । त्वा[10] । पारयतु ॥

शौनकः—'पुमा[11] त्वस्य[12] सूक्तस्य योद्धारं स्तौति वर्मिणम्[13]' इति ।

**धन्व॑ना॒ गा धन्व॑ना॒जिं ज॑येम॒ धन्व॑ना ती॒व्राः स॒मदो॑ जयेम ।**
**धनुः॑ शत्रो॑रपका॒मं कृ॑णोति॒ धन्व॑ना॒ सर्वाः॑ प्र॒दिशो॑ जयेम ॥ २ ॥**

धन्वना[14] । धनुषा[15] । पशून्[16] शत्रूणाम् । जयेम[17] । धनुषा[18] । सङ्ग्रामम्[19] । धनुषा[20] । तीव्रान्[21] । कलहान्[22] ।

---

१. सेनाम् A. सङ्ग्रामाणाम् Sy., DDN. सङ्ग्रामाणाम् ।....सह माद्यन्ति योधा यासु ताः समदः सङ्ग्रामाः । मदेः क्विप् Mah. सम्माद्यन्ति सह वा माद्यन्त आसु योद्धार इति समदः । समदशब्दः सङ्ग्रामवचनः । समदां सङ्ग्रामाणाम् U.

२. उपस्थाने सति Sy. DDN. उत्सङ्गे Mah. उपकण्ठे यत एवमतो ब्रवीमि U.

३. ०नाया M.

४. अबाधितया Sy. DDN. हे वर्मिन् ! अनाविद्धयाऽक्षतया Mah. अरिष्टया U.

५. शत्रून् Sy. शत्रून् हत्वा Mah.

६. जयं प्राप्नुहि Mah. 'धन्व॑ना॒ गाः' (RV. VI. 75. 2.) इत्यादिभिरस्त्रमण्डलं स्तुत्वा ददाविति DDN.

७. त A. हे राजन् ! त्वम् Sy. स त्वा'ऊष्मा परिलुप्यते त्रयाणाम्' (RPR. 2.11.) इत्यूष्मलोपः DDN.

८. सर्वं महो महिमा M. तादृशः Sy. DDN.

९. त्वाम् Sy.

१०. पारयितु A. पालयतु is suggested for पारयतु ।

११. प्रथमा is suggested for पुमा ।

१२. M. adds च after त्वस्य

१३. वमिणिति A. BD. 5.129.[a-b.] This Stanza=YV. 39. 38.

१४. धन्व दाना A. धनुः स्तूयते Mah. धनुः स्तूयते त्रिष्टुभा U.

१५. चापेन Sy. धनुषा कृत्वा Mah. केवलस्यापि धनुषश्छान्दसत्वादङ् । धन्वना धनुषः SKN.

१६. गाः Sy. धेनूः Mah. ता गाः Dur. गाः शत्रूणां स्वभूताः SKN.

१७. वयं वशीकरवाम Sy. अरिभ्यो जयेम Dur.

१८. धन्वना Sy. धनुषैव SKN.

१९. आजिं मार्गम् ।...अजन्ति गच्छन्ति यस्मिन्नसावाजिर्मार्गः Mah. मार्गम् U. इतरेतरस्पर्धया यत्र लक्ष्यवेधायैव केवलमिषवः क्षिप्यन्ते वैतर्क्येण प्रतापार्थं वा तमाजिम्, आजवनं धनुषैव वयं जयेम Dur. यः स्पर्धयैव लक्ष्यवेधफलमात्रं क्रियते तं सङ्ग्रामम् SKN.

२०. धनुषा is missing in M.

२१. तीव्रात् M. उद्धताः Sy. उग्राः Mah. तीव्राः पटव उद्गूर्णायुधाः U. अपि च याः.... दारुणाः Dur. परस्परवधरूपाः SKN.

२२. हात् M. अत्यन्तं मदवतीः शत्रुसेनाः Sy. समदः सङ्ग्रामान् Mah. U. सङ्ग्रामा अनेकशस्त्रसम्पातसङ्कटा अनेकवीरपुरुषकीर्णाः । ....सम्पूर्वस्यात्तेर्भक्षणार्थस्य । भक्षित इव हि तत्र परस्परतः । मदतेर्वा हर्षणार्थस्य द्वितीयं सम्मदो वेति । संहृष्टास्तत्र हि परस्परतो युध्यन्ते Dur. सङ्ग्रामनामैतत्...शत्रुवधफलसङ्ग्रामम् ।....पठिता सा स्वनिगदेनैव व्याख्याता । समद इति बहुवचनान्तं सङ्ग्रामनाम । प्रथमं व्याख्येयत्वेनोपात्तम् । तस्य निर्वचनं द्वितीयम् । सम्पूर्वादत्तेः सम्पदादिक्विपि । सम्भक्षणात्परस्परस्यायुषाम् । समदन्तीति समदः सङ्ग्रामा उच्यन्ते । मदतेर्वा क्विपि हर्षकर्मणः पूर्ववत् । संहृष्यन्ति हि तत्र योद्धारः SKN.

जयेम[1] । धनुः[2] । शत्रोः । अपगतं[3] कामम् । करोति[4] । धन्वना[5] । सर्वाः[6] । प्रकृष्टा दिशः[7] । जयेम[8][9] ।

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥ ३ ॥

वक्ष्यन्तीव[10] । वक्ष्यन्तीव[11] । आगच्छति[12] । कर्णम्[13] । प्रियम्[14] । सखायं[15] योद्धारम् ।

१. तानपि वयं जयेम Dur.

२. धनुश्च ।...कर्तृत्वाविवक्षाऽत्र धनुषः U. अपि च किम्बहुना ? समासत एव ब्रूमः, धनुः Dur. धनुरेव च SKN.

३. ०गतका० M. कामस्यापायम् Sy. मनोरथाभावम् । ...कामस्याभावोऽपकामम् ।.... अर्थाभावेऽव्ययीभावः Mah. यत्र यत्र शत्रुरस्माञ्जेतुकामः स्यात्ततस्ततोऽपगतकाममस्मत्तो धनुः Dur. मध्यमपदलोपी समासः । अपगतं काममस्मज्जयविषयम् SKN.

४. करोतु Sy. अपनयति कामम् U. लोडर्थे लट् । करोतु Dur., SKN.

५. धनुषा च U. अपगतकामे च तस्मिञ्छत्रौ वयं धन्वना धनुषैव Dur. किम्बहुना ? धनुषैव वयम् Sy.

६. वयं सर्वाः Sy. एताः सर्वा दिशः Dur.

७. सर्वासु दिक्षु वर्तमानान् शत्रून् जयेम । प्रदिक्शब्दो लक्षणया तत्स्थेषु पुरुषेषु वर्तते, मञ्चाः क्रोशन्तीतिवत् । धन्वञ्शब्दस्य जयतेश्चावृत्तिरादरार्था Sy. प्रगतादिभिरवान्तरदिशः SKN.

८. जयेऽश्वम A. ईदृशो धनुःप्रभावः Mah. जयेमेत्येतदाशास्महे Dur.

९. धनुर्धन्वतेर्गतिकर्मणः । वधकर्मणो वा । धन्वन्त्यस्मादिषवः । तस्यैषा भवति....इति सा निगदव्याख्याता । समदः समदो वात्तेः । सम्मदो वा मदतेः N.9.17., SKN. III. 157.

१०. पूर्वत्र ऋग्द्वयेन कवचधनुषी स्तुते । अत्र ज्यास्तुतिः Sy. ज्या स्तूयते Mah. ज्या अभिधेया U.

११. ०क्ष्यन्तिव A. कीदृशी, उत्प्रेक्ष्यते । वक्ष्यन्तीव वक्तुमिच्छन्तीव । अन्योऽपि वक्तुमिच्छन् कर्णं प्रत्यागच्छति Mah. वचनोत्सुकेव योषित् U. येयं योषिदिव काचित् कस्मैचिदिष्टाय पुरुषाय किञ्चिद्रहस्यं वक्ष्यन्तीव कथयिष्यन्तीव ज्या Dur अत्रैकवाक्यतायै यत्तदध्याहारः । या वक्ष्यन्तीव यथा वदिष्यन्ती SKN.

१२. ०च्छन्ति A. अत्यर्थमागच्छति । यङ्लुकि गमे रूपम् Mah. आगच्छन्ति, अत्यर्थमागच्छति वा U. धनुष्मता पुरुषेणेषुं चिक्षिप्सता सव्येन दक्षिणेन वा पाणिना कृष्यमाणा.... मध्यमात्मनो निनीयेषुं गनीगन्त्यागच्छति Dur. कञ्चित्काचित् स्त्री आगच्छेत्तद्वत् आगनीगन्ति पुनःपुनरागच्छति, आकृष्यमाणा SKN.

१३. कर्णम A. धन्विनो राज्ञः कर्णप्रदेशम् Sy. आकृष्टा सती योद्धुः कर्णं प्रति Mah. धानुष्ककर्णमूलम् U. सव्यं दक्षिणं वा कर्णं प्रत्याकृष्यते धनुष्मता Dur. कर्णं प्रति SKN.

१४. प्रियकरं वाक्यम् Sy. इष्टम् Mah. या च प्रियमिव U. कथम् ? इति....प्रियमिष्टम् Dur. प्रियमिव SKN.

१५. सर्वा यं A. पतिमिव Sy. मित्रं बाणरूपम् Mah. सखायमिषुम् U. कञ्चित् सखायं समानख्यानमुपजातप्रीतिं स्त्री पुरुषमिवेषुम् Dur. सखायं कञ्चित् काचित् स्त्री SKN.

परिष्वजमाना[1]। योषेव[2]। शब्दं करोति[3]। वितता[4]। अधि[5]। धनुषि[6]। ज्या[7]। इयम्[8]। सङ्ग्रामे। वारयन्ति[9] [10]।

---

१. आलिङ्गन्ती। स्वञ्जेः शानचि शपः श्लौ सति द्वित्वम् Mah. आलिङ्गयन्ती U. सम्प्रत्यर्थ एव सस्वजानेत्यभ्यासोऽनर्थकः। अर्थविशेषाभावात्। यथा हि सा कर्णं प्रत्याकृष्यते धनुष्मता तथा मध्यमात्मनो निनीषेषुं परिष्वजत इव Dur. परिष्वजन्ती। किम्? सामर्थ्यादिषुं श्लिष्यन्तीत्यर्थः SKN.

२. नारी Sy. का इव, योषेव यथा योषा कामिनी कामुकरञ्जनायाव्यक्तं वदति एवमियमपि Mah.

यथा मुग्धा योषित् U. किमेतावदेव? नेत्युच्यते, या चेयं योषेव......योषिदिव। विदग्धा काचित् कामिना पुरुषेणात्मानं प्रत्याकृष्यमाणोपजायमानपरितोषा कामिनः पुरुषस्य हर्षमुत्पादयन्ती Dur.

३. शब्दायते Sy. अव्यक्तशब्दं कुरुते Mah. 'शिजि अव्यक्ते शब्दे'....कामुकरञ्जनार्थमव्यक्तं कूजितं करोति, एवमियमव्यक्तं शब्दं करोति U. सुकुमारमव्यक्तशब्दं करोति Dur. सुरतसमये शिङ्क्ते, अव्यक्तं शब्दं करोति SKN.

४. विस्तृता Sy. विस्तारिता सती Mah. प्रसारिता च U.

आरोपिता Dur.

५. अधीति सप्तम्यर्थानुवादः Sy. उपरि Mah., U., SKN.

६. धन्वनि Sy. धन्वनि धनुषि Mah. निबद्धा U. धनुषः SKN.

७. सा पुनरियं 'जयतेर्वा जिनातेर्वा' धात्वन्यत्वमर्थैकत्वम्। तद्बलेन हि जीयते। स पुनरेष धनुर्गुणः Dur.

ज्या वक्तव्या, जयतेः, जयसाधनत्वात्। जिनातेर्वा, 'ज्या वयोहानौ' इत्यस्य। साभिप्रायेण हेतुभावं प्रतिपद्यमाना वयो भावयति। जवतेर्वा गत्यर्थस्यान्तर्णीतण्यर्थस्य। प्रजावयति प्रगमयति इषूनिति वा पाठान्तरम् SKN. ज्या जयतेर्वा। जिनातेर्वा प्रजावयतीषूनिति वा N. 9.19.

८. सेयम् U. सेयमस्माकमेवमादिगुणयुक्ता ज्या Dur.

९. पारयन्ती is suggested for वारयन्ति॥ पारं नयन्ती Sy. 'पार तीरकर्मसमाप्तौ' अदन्तः। सङ्ग्रामादुत्तारयन्ती विजयं कुर्वतीत्यर्थः Mah. विजयं कुर्वती सङ्ग्रामात्तारयन्ती स्तूयतेऽस्माभिरिति शेषः U. पारयन्ती, अस्तु। पारमन्तं नयन्ती, अस्तु शत्रूणामित्येतदाशास्महे Dur. किम्? सामर्थ्यादिषून्। इषुगमनेन वा पालयन्ती योद्धारम्। 'इषुरीषतेः' ईषति हन्तीति गतिकर्मणो वधार्थस्य वा। उभयार्थोपपत्तेः SKN.

१०. VM. ignores इत्॥ इदिति पूरणः Sy., SKN. इत् पादपूरणार्थः Mah. इच्छब्दः पादपूरणार्थः U. वक्ष्यन्तीवाऽऽगच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना। योषेव [शिङ्क्ते] शब्दं करोति। विततावधि धनुषि ज्येयं समने सङ्ग्रामे पारयन्ती (पारं नयन्ती) N. 9.19., SKN. III. 158.

This stanza=YV. 29. 40.

ते आ॒चर॑न्ती॒ सम॑नेव॒ योषा॑ मा॒तेव॑ पु॒त्रं बि॑भृतामु॒पस्थे॑ ।
अप॒ शत्रू॑न्विध्यतां संविदा॒ने आर्त्नी॑ इ॒मे वि॑ष्फु॒रन्ती॑ अ॒मित्रा॑न् ॥ ४ ॥

ते आचरन्ती[१] । ते[२] । आचरन्त्यौ[३] । सगमनस्थेव[४] । स्त्री[५] । मातेव[६] । पुत्रम् । बिभृतां[७] योद्धारम् । उपस्थे[८] । अप[९] । शत्रून्[१०] । विध्यताम्[११] । सङ्गच्छमाने[१२] । आर्त्यौ[१३] । इमे[१४] । विविधं

---

१. ते आचरन्ती is missing in A. अत्र धनुष्कोट्योः स्तुतिः Sy. धनुःकोटी स्तूयेते Mah. धनुषः कोटी स्तूयेते U. आर्त्न्योरेवानुमन्त्रणमश्वमेधेऽनेन क्रियते Dur. पायुर्भारद्वाजस्तस्यार्षम् SKN.

२. ते आचरन्त्यौ is missing in M. धनुष्कोट्यौ Sy. ते प्रसिद्धे इमे Mah. आर्त्नी Dur. ज्ययाऽऽकृष्यमाणयाऽऽकृष्यमाणे SKN.

३. अभितश्चरन्त्यौ Sy. कीदृश्यावार्त्न्यौ । आचरन्ती आचरन्त्यौ, आगच्छन्त्यौ धानुष्कं प्रति Mah. ते आचरन्ती आगच्छन्त्यौ धानुष्कं प्रति U. एवमाक्रष्टारं प्रति नित्यमाचरन्त्यौ भवत आनमत्यौ Dur. आगच्छन्त्यौ ये द्वारं प्रति SKN.

४. गमनस्तेव A. समनस्केव is suggested for सगमनस्थेव ॥ तत्र दृष्टान्तः । समना योषा इव वचनव्यत्ययः । समना समानमेकपतिगतं ययोस्ते समनसौ । विभक्तेर्डादेशः । समचित्ते Mah. समने इति वचनव्यत्ययः । समानभर्तृगतमनस्के योषे इव U. एकभर्तृके Dur. समाने भर्तरि मनो ययोस्ते इव SKN.

५. योषा पतिसमीपं न त्यजति, तद्वदाचरन्ती अभितश्चरन्त्यौ Sy. योषे स्त्रियौ यथा कान्तमागच्छतः Mah. यथा समानभर्तृगतमनस्के योषे पतिमागच्छन्त्यौ तथा U. योषितौ यथैकं भर्तारं प्रत्याचरन्त्यौ भवतः परिष्वक्तुम् Dur. योषितौ स्त्रियौ भर्तारं प्रति SKN.

६. यथा माता पुत्रं धारयति तद्वत् Sy. माता पुत्रमिव, यथा जननी पुत्रमुत्सङ्गे बिभर्ति तथा Mah. यथा माता पुत्रं धारयत्येवम् U. यथा माता SKN.

७. राजानं धारयेताम् Sy. धारयतां शरमिति शेषः Mah. धारयतां शरम् U. रक्षणार्थं ये बिभृतामाक्रष्टारम् Dur. एवं बिभृतां धारयताम् SKN.

८. उपसो A. उपस्थाने Sy. उत्सङ्गे मध्यभागे Mah. उपस्थ उत्सङ्गे U. अङ्के धारयेत् SKN.

९. अ वा A.

१०. गत्रून् A.

११. ताडयताम् Mah. 'वध ताडने' अपविध्यतां च शत्रून् U. शत्रूनपविध्यतामित्येतदाशास्महे Dur. ये द्वारमपविध्यतामपनयतां च शत्रून्.... अपपूर्वो व्यधिरपनयने द्रष्टव्यः । अपविद्धो निरस्त उच्यते SKN.

१२. सञ्जानाने विसंवादरहिते Sy. संविद्राते ते संविदाने ।....परस्परं सङ्केतं कुर्वाणेMah. संविदाने सुखमनुभवन्त्यौ U. नित्यमस्माकममुना प्रकारेण संविदाने संवादमिव कुर्वाणे । परस्परत आकर्षणाभिप्रायमेतत् । आकृष्यमाणयोस्तयोः संवाद एव परस्परतो भवति Dur. सम्यग् जानन्त्यौ स्वकर्म SKN.

१३. आत्यापि मे A. गच्छन्त्यौ 'ऋ गतौ' इति धातोः 'चर्यगिभ्यां निः' इति बाहुलकात् निप्रत्ययो धातोरार्तभावश्च । ततः 'कृदिकारादक्तिनः' (Pa. 4.1.45.) इति ङीष् । द्विवचनस्य पूर्वसवर्णः Sy. धनुःकोटी Mah. धनुषः कोटी U. धनुष्कोटी SKN. आर्त्नी अर्तन्यौ वा । अरण्यौ वा । अरिषण्यौ वा N. 9.39.

१४. धनुष्कोट्यौ Sy.

घ्नन्त्यौ[1] । शत्रून्[2] ।

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ५ ॥

बह्वीनां पिता[3] । बह्वीनामिषूणाम्[4] । पिता[5] । तदेवाह[6] बहुः[7] । अस्य[8] । पुत्र[9] इति इषूनभिप्रेत्याह । चिश्चेति[10] निपातो[11] हासवचनो हासमिव । करोत्यास्येनोज्ज्वलपुङ्खेन[12] । सङ्ग्रामम्[13] । उपेत्य[14] । इषुधिः[15] । सङ्काः

---

१. विहिंसन्त्यौ Sy. शत्रून् प्रति टङ्कारं कुर्वाणे Mah. विष्फुरन्त्यौ U. अमुना प्रकारेण ये विस्फुरन्त्यौ नित्यममित्रान् भवतः Dur. स्फुरतिर्वधकर्मा । निघ्नन्त्यौ SKN.

२. ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थाने । अपविध्यतां शत्रून्त्संविदाने आर्त्न्याविमे विघ्नत्यावमित्रान् N. 9. 40. SKN. III. 174. This stanza=YV. 29. 41.

३. इषुधिरत्र स्तूयते Sy. इषुधिः स्तूयते Mah. इषुधिरभिधेयः U. पायोर्भारद्वाजस्य । परतश्च युद्धोपकरणस्तुतयः । अत्रैकवाक्यतार्थं यत्तदध्याहारः SKN.

४. बह्वीना॰ A. इषुशब्दस्योभयलिङ्गत्वाद् बह्वीनामिति प्रयोगः Sy.

५. रक्षणहेतुत्वाद् पितेत्युच्यते Sy. य इषुधिस्तूणः पिता पालकः । यतो बाणान् धरति Mah. पालयिता । तेन सहिताः पाल्यन्ते सहिताः सन्निदधाति U योऽयमिषुधिः. . . . पाता रक्षिता, तदर्थत्वात् Dur. पितृस्थानीयः पालयिता वा SKN. ६. तमेवाह A.

७. बाणसमूहः Mah. बहुरिषुकलापः U. इषुकलापः Dur. इषुगणः SKN.

८. इषुधेः Sy. अस्येषुधेः Mah. यस्य चास्य U., SKN. यस्य चेषुधेः Dur.

९. इषुर्बहुर्भवति । बहव इषवो हीषुधौ निधीयन्ते । इषूणां निधानत्वादिषुधिः Sy. पुत्रस्थानीयः पाल्यमानत्वात् । पुरून् बहून् त्रायत इति पुत्रः Mah. पुत्रस्थानीयः । स हि तेनेषुकलापेन त्रायते बहु वा तदर्थं हितं करोति U. पुरूणो बहुनस्त्राता, तदर्थं ह्यसौ रक्ष्यत इत्येवं व्युत्पाद्यम् Dur. पुत्रस्थानीयः । पुत्रवद्रक्ष्यत इत्यर्थः SKN. इषुधिरिषूणां निधानम् N. 9.13.

१०. चिश्चेति शब्दानुकृतिः । इषुवृद्ध्रियमाणेषु इषुधिश्चिश्च शब्दं करोति Sy. चिश्चेति शब्दं करोति । शब्दानुकरणमेतत् Mah. शब्दानुकरणमेतत् U.

११. ॰पात ह्रास॰ M. चिश्चेति निपातो ह्रासवचनः । ह्रासम् SKN.

१२. बाणे तूणान्निष्क्राम्यमाणे चिश्चेति शब्दो भवति Mah. इषुर्निष्क्रम्यमाणश्चिश्चेत्येवं शब्दं करोति U. प्रकर्षेण स्मयत इवोद्घाट्यमानः । चित्रपुङ्खत्वात् । अथवा हसतीव शोभया पुङ्खदीप्त्या । अस्मिन् पक्षे (ऽर्थे) चिश्चतिरपठितोऽपि धातुः कल्प्यत इति । विकारपक्षे तदर्थान्यधातूपादानमित्यचार्यपरिभाषा । अथवा 'शब्दानुकरणम्' चिश्चिदित्येवं शब्दं करोति Dur. अतिकरोत्युत्साह्यमानः । उज्ज्वलपुङ्खत्वात् । शब्दानुकरणश्चिश्चेति । एवंरूपं शब्दं करोति SKN.

१३. युद्धानि Sy. सङ्ग्रामान् Mah., U. समनानि समराणि SKN.

१४. प्राप्य Sy. ज्ञात्वा Mah., U. अवगत्य प्राप्य Dur. अवेति, उपेत्येतस्य स्थाने । उपगम्य SKN.

१५. च पुनः स इषुधिः । . . . विवक्षातः कारकाणि भवन्तीति वचनादिषुधेः कर्तृत्वम् Mah. स इषुधिः । . . . अत्रेषुधेः कर्तृत्वं, विवक्षातः कारकाणि भवन्तीति वैयाकरणाः U. स एष इषुधिः Dur. स इषुधिः SKN.

सचमाना: प्रजा:[1] । पृतना:[2] कारिणी: । च । सर्वा: प्रजा: । जयेति[3] । पृष्ठे[4] हिनद्यम्[5] । प्रसूतेषुरिति[6][7] ।

**रथे तिष्ठंन्नयति वाजिनंः पुरो यत्रयत्र कामयंते सुषारथिः ।**
**अभीशूंनां महिमानं पनायत मनंः पश्चादनुं यच्छन्ति रश्मयंः ॥ ६ ॥**

रथे तिष्ठन्[8] ।[9] शौनकः—

'युद्धेन[10] सारथिः[10] षष्ठ्यां रश्मयोऽर्द्धेन[11] संस्तुताः' इति । रथे[12] । तिष्ठन्[13] । नयति[14] । वाजिनः[15] ।

१. सह कायन्ति शब्दायन्त इति सङ्काः Sy. 'सङ्काः सचतेः । सम्पूर्वाद्वा किरतेः' (N. 9. 14.) इति यास्कोक्तेः सचतेः किरतेर्वा रूपम् । सचन्ते सम्बध्यन्ते सङ्कीर्यन्ते वा योधा यासु ताः सङ्काः Mah. सन्धत्ते, अस्मिन् योधा इति सङ्काः, सङ्कीर्यन्तेऽस्मिन्नरय इति सङ्काः शत्रुसङ्कटकम् U. सङ्कटान् सम्पृक्तान्वा सङ्ग्रामान् Dur. द्वे अप्येते सङ्ग्रामनामनी । स्पर्धामात्रेण लक्ष्यव्यवधानार्थं यत्रेषवः क्षिप्यन्ते तद्विषयमेकम् । वधार्थं च यत्र तद्विषयमन्यत् । ये स्पर्धया लक्ष्यवेधमात्रार्थाः सङ्ग्रामाः । ये च वधार्थास्तान् सर्वान् योद्धुम् SKN.

२. वृताना A. सर्वाः सेनाः Sy. शत्रुसेनाः Mah. पृतनाः स्पर्धनीयतमाः सङ्ग्रामभक्तीः U स्पर्धमानैरिषव एव केवलमभिलक्ष्य क्षिप्यन्ते पताकार्थं तानेवंविधान् सङ्ग्रामान् Dur.

३. येति A. जयति is suggested for जयेति ॥ पराभवति Mah. जयतु SKN.

४. धन्विनः पृष्ठभागे Sy.

५. हिनद्य A. निनद्धः is suggested for हिनद्यम् ॥ बद्धः Sy. धानुष्केण पृष्ठे निनद्धो बद्धोऽपि Mah. धानुष्कस्य पृष्ठे बद्धः U. पृष्ठे रथस्य मनुष्यस्य वा. . . . निबद्धः Dur. नितान्तं बद्धः SKN.

६. प्रसूतः, प्रसुवन् । कर्तरि निष्ठा । इषून् प्रेरयन् Sy. अनुज्ञातः सन् Mah. धानुष्केणाभ्यनुज्ञातः सन् जयति U. क्षिप्तो धनुष्मतेत्येतदाशास्महे Dur. प्रेरितः SKN.

७. बह्वीनां पिता बहुरस्य पुत्र इतीषूनभिप्रेत्य । प्रस्मयत इवापाव्रियमाणः । शब्दानुकरणं वा । सङ्काः सचतेः । सम्पूर्वाद्वा किरतेः । पृष्ठे निनद्धो जयति प्रसूत इति व्याख्यातम् N. 9.15., SKN. III.
This stanza=YV. 29. 42.

८. तथे तिष्ठत् A. तिष्ठ M.

९. अत्र पूर्वार्धे सारथिस्तुतिरुत्तरार्धेऽभीशूनां स्तुतिः Sy. अर्धेन सारथिरर्धेन रश्मयः स्तूयन्ते Mah. जगत्या अर्धेन सारथिः स्तूयतेऽर्धेन रश्मयः U.

१०. अर्धेन सारथिः षष्ठ्याः is suggested for it.

११. योद्धेन A. cf. BD. 5.114.

१२. यदेतत् Dur. अत्रैकवाक्यतायै यत्तदध्याहारः । यो रथे SKN.

१३. ति is repeated in A. कीदृशः ? रथे तिष्ठन्, तं स्तुम इति शेषः Mah. वर्तमानः Dur. तिष्ठतिरत्र सत्तायां नोर्ध्वतायाम् । सङ्ग्रामे तिष्ठतीति यथा । रथ एव सन् SKN.

१४. प्रापयति Mah., U. तत्र तत्र नयति Dur.

१५. वाजिनम A. अश्वान् Sy.,U. रथस्य वाजिनः Dur. अश्वान् SKN.

पुरस्तात्[1] । यत्रयत्र[2] । कामयते[3] । कल्याणः सारथिः[4] । अभीशूनाम्[5] । महिमानम्[6] । पूजयत[7] । अश्वानां गच्छतात्मनः[8] । पश्चात्[9] । अनुयच्छन्ति[10] । रश्मयः[11] ।[12]

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूँरनपव्ययन्तः ॥ ७ ॥

तीव्रान् घोषान्[13] । अश्वानृक् सप्तमी स्तौति, आयुधागारमष्टमी'[14] । उग्रान्[15] । शब्दान्[16] । कुर्वन्ति[17] ।

---

१. पुरस्ताद्वर्तमानान् Sy. तत्र तत्र पुरो वर्तमानान् Mah. पुरतोऽवस्थितान् U. अग्रतः सतो रथयुक्तान्, रथस्य नीडे पश्चात् सन्नुपतिष्ठन् Dur. अग्रतः SKN.

२. यत्र यत्र नेतुं कामयते तत्र तत्र नयति Sy. यत्र यत्र प्रदेशे Mah.

३. इच्छति मयाऽत्र गन्तव्यमिति Mah. कामयते तं वयं स्तुम इति शेषः U. यत्र यत्रेच्छति योद्धा Dur.

४. ०णः सुसार० M. शोभनसारथिः Sy. शोभनः सारथिः Mah. सुशिक्षितोऽपि सारथिर्नेता Dur.

५. अही शू० A. तेषां रश्मीनाम् Sy. इदानीं रश्मयः स्तूयन्ते । हे जनाः, अभीशूनां रश्मीनाम् Mah. प्रग्रहाणाम् U. तदेतत् किं सारथेर्महाभाग्यम् ? नेत्युच्यते, अनभीशुको हि सारथिः किं कुर्यात् सुशिक्षितोऽपि । एवमभीशूनाम् Dur.

६. महत्त्वम् Sy. महाभाग्यम् Mah., U. एतं महिमानं महाभाग्यम् Dur.

७. पूजयताम् M. हे जनाः ! स्तुत Sy. यूयं पनायत स्तुत ।'...पन स्तुतौ Mah. पूजयत हे जनाः ! U. पूजयामि....सम्बोध्याभावात् पनायतेत्यस्य पूजयामीति पुरुषवचनव्यत्ययः Dur. पनतेः स्तुतिकर्मणः । पनायत स्तुत हे स्तोतारः ! ....पूजयामीत्यपपाठः SKN.

८. गच्छतां मनः is suggested for ०च्छतात्मनः ॥ अश्वान् मनःसारथेर्मनोऽनुकूलम् Sy. अश्वचित्तम् Mah. ये मनोऽश्वसम्बन्धिचित्तम् U. यन्मनोऽश्वानामतिप्रवृद्धजवानामपि Dur. यच्च मनोऽश्वानाम् SKN.

९. रथस्य पृष्ठभागे विद्यमानाः Sy. ये रश्मयः पश्चाद् वर्तमानाः सन्तः Mah. पश्चात् सन्तः U., Dur., SKN.

१०. नियच्छन्ति Sy. अनुगम्य वशवर्तिनं कुर्वन्तीत्यर्थः Mah. अनुगम्य गृह्णन्ति U. उपरमयन्तीत्यर्थः Dur. अनुबध्नन्ति सारथिमानसम् । सारथीच्छावशेन गमनचित्तमश्वानां कुर्वन्तीत्यर्थः SKN.

११. ये रथे रश्मयोऽश्वग्रीवाभ्यां व्याप्य वर्तमानाः पाशाः Sy. यन्तारः U. येष्वश्वेषूपनिबद्धा रश्मयः प्रगृहीताः सारथिना Dur. रश्मयोऽश्वानाम् SKN.

१२. रथे तिष्ठन्नयति वाजिनः पुरस्तात् सतो यत्र यत्र कामयते । सुषारथिः कल्याणसारथिः अभीषूणां महिमानं पूजयन्ति । मनः पश्चात् सन्तोऽनुयच्छन्ति रश्मयः N. 9.16., SKN. III. 156.

This Stanza=YV. 29. 43.

१३. तीव्रात् घोषात् A. अश्वाः स्तूयन्ते Mah. अश्वाः स्तूयन्ते त्रिष्टुभा U.

१४. अश्वांस्तु सप्तमी BD. 5. 11. 4. अत्राश्वस्तुतिः Sy.

१५. उग्रं A. उच्चतरान् Sy. जय जयेत्युग्रान् U.

१६. जब्दत् A. जय जयेति शब्दान् Mah. शब्दान् U.

१७. कुर्वते Sy.

वर्षितृपाणयः[1] पांसूनुद्वमन्तः[2] पाणिभिः । रथैः[3] । सह । वेगं कुर्वन्तः[4] । अवक्रामन्तः[5] । पादाग्रैः[6] । अमित्रान्[7] । हिंसन्ति[8] । शत्रून् । अनवगच्छन्तः[9][10] ।

रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म ।
तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमानाः ॥ ८ ॥

रथवाहनम्[11] । अग्निसदृशस्यायुधागारस्य शत्रुभ्यो रथेनोह्यमानं[12] धनम् । नामकम्[13] । भुविर्भवति[14] । अस्येति[15] राज्ञः पारमार्गप्रकृतस्य स रथवाहनेनायुधागारं तर्पयति । यत्रायुधागारे[16] । अस्य राज्ञः[17] । आयुः[18] । वर्म[19] च । निहितं[20] भवति । तस्मिन्नायुधागारे[21] । सुखकरम्[22] । रथम्[23] । वयं युद्धान्ते[24] । उपसदेव[25] । अविशीर्णं सर्वदा ।

१. वर्षी कृपा० A. वृषा अश्वाः पाणौ हस्ते येषां ते वृषपाणयोऽश्वावाराः Mah. वृषा अश्वाः पाणौ येषां सङ्गृहीतृप्रभृतीनां योक्तॄणां ते तथोक्ताः, युक्ताः श्वसन्तोऽश्वाः U.
२. ०द्वपन्तः A. पांसूनां वर्षकखुराः Sy. 'वज गतौ' स्वार्थे णिच् Mah.
३. अश्वा अपि रथेभी रथैः सह Mah.
४. वेगमाचरन्तः Sy. गच्छन्तः सन्तस्तीव्रान् घोषाञ्छब्दान् कुर्वन्ति Mah. पूजयन्तो रथिनः, तीव्रानेव घोषान् हेषितादीन् कृण्वते U.
५. आक्रामन्तः Mah.
६. पादाग्रैः खुरैः Mah. खुरैः U.
७. हिंसकान् Sy. रिपून् Mah. शत्रून् U.
८. नाशयन्ति च Mah.
क्षिण्वन्ति हिंसन्ति U.
९. अवग M. ०नपग० is suggested for ०नवग० ॥ अपलायमानाः Sy. 'व्यय क्षये' अदन्तश्चुरादिः । अपव्ययन्ति तेऽपव्ययन्तः, न अपव्ययन्तोऽनपव्ययन्तोऽनश्यन्तः समर्थाः Mah. 'व्यय क्षये' अपपूर्वादस्माच्छतृप्रत्ययः । अपव्ययन्तो नश्यन्तः । न अपव्ययन्तोऽनपव्ययन्तो न नश्यन्तः । अपरित्यजन्तो वा स्वामिनम् U.
१०. VM. ignores अश्वाः ॥
This stanza=YV. 29. 44.
११. शकटद्वारा रथः स्तूयते Mah. रथस्तुतिः U.
१२. शत्रून् जित्वा रथेनोह्यमानं धनं हविर्भवति । अग्नेर्हविरिव वर्धकं भवतीत्यर्थः Sy. रथं वहतीति रथवाहनम् । वाजपेयेऽनसि रथस्यारोप्यमाणत्वात् Mah. रथवाहणं रथवोढ इति नाम ।.....विमुच्य सयन्तृकं रथवाहणं करोति, अनस्तत्कर्मेति कात्यायनः । 'तस्मादनस एव पौरोडाशेषु यजूंषि' इति श्रुतिः U.
१३. नामेति सम्मतिः Sy.
१४. भुवि भ० M. हविर्भ० is suggested for भुविर्भ० ॥ तथाऽस्य हविः, हविर्धानं नाम । पृषोदरादित्वादुत्तरार्धलोपः Mah. हविरिति नाम्नो ऽर्धलोपः । हविर्धानमिति च द्वितीयं नाम U.
१५. अनसः Mah. यस्य स्वनसः U.
१६. रथे Sy. यत्रानसि Mah. यस्मिन् U.
१७. योद्धुः Mah., U.
१८. आयुधम् is suggested for आयुः । धनुःशरादिकम् Sy.
१९. कवचं च Sy. वर्म च सन्नहनम् U.
२०. स्थापितम् Mah., U.
२१. तत्र तम्—तत्रेत्यव्ययस्य सर्वविभक्तित्वात् Sy. तत्रानसि Mah., U.
२२. सुखम् U.
२३. रथम् is missing in M.
२४. पयं उयु० A.
२५. ०सदेम is suggested for ०सदेव ॥ उपगच्छेम Sy. उपसादयामः Mah. उपसादयाम U.

सुमनस्यमानाः[1] ।

स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥ ९ ॥

स्वादुषंसदः[2] । 'नवमी रथगोप्तॄस्तु[3] दशमी रणदेवताः'[4] । शत्रूणामन्ने संसीदन्तः[5] । पालयितारः[6] । अन्नस्य[7] दातारः । कृच्छ्रे सङ्ग्रामे श्रयितारः[8] । बलवन्तः[9] । दुरवगाहाः[10] । विचित्रसेनाः[11] । इषवो बलं येषाम्[12] । हिंसितुमशक्याः[13] । विद्यमानप्रेरकाः[14] । गुरुभाराः[15] । शत्रुसमूहस्य सोढार इम इति[16] ।

---

१. सुखमनसो भवन्तो वयम्, पायवो भरद्वाजाः Sy. शोभनं मनो येषां ते सुमनसः, असुमनसः सुमनसो भवन्ति सुमनस्यन्ते ।....अनुकूलचित्ता इत्यर्थः Mah. अनुकूलचित्तः U. This stanza=YV. 29. 45.

२. अत्र रथगोपस्तुतिः Sy. रथगोपान् संस्तौति Mah. रथगोपान् स्तौति U.

३. ०गोप्तु स्तु M. ०गोपांस्तु or ०गोप्तॄंस्तु is suggested for ०गोप्तॄस्तु ।

४. BD. 5.115.

५. शत्रूणां स्वादुन्यन्ने संसीदन्तः शत्रूणामन्नमवसादयन्तो वा Sy. ईदृशा नरा अस्माकं रथगोप्तारो भवन्त्विति शेषः । कीदृशाः ।....स्वादु सुखं यथा तथा संसीदन्ति ते स्वादुसंसदः Mah. स्वादु सुखकरं संसदः संसदनं येषां ते स्वादुसंसदो रथगोप्तारः U.

६. पलायि० M. रथस्य पालयितारः Sy. पान्ति ते पितरो रक्षितारः Mah. पितरः पातारः U.

७. ....तस्य A. वयोऽन्नमायुर्वा दधति धारयन्ति वयोधाः Mah. अन्नस्यायुषो वा धारयितारः U.

८. आपदि श्रयन्तः Sy. कृच्छ्रे श्रित इत्येकं पदम् । कृच्छ्रे कष्टे श्रीयन्ते सेव्यन्ते कृच्छ्रेश्रितः । कर्मणि क्विप्, अलुक् सप्तम्याः । दुःखे सत्याश्रयणयोग्या दुःखनाशकत्वात् । यद्वा सप्तमी द्वितीयार्थे । कृच्छ्रं श्रयन्ति कृच्छ्रेश्रिताः, दुःखं प्राप्यापि स्वामिसेवनपराः Mah. क्लेशाश्रयिणः U.

९. ०वन्तो A. शक्तिरायुधविशेषः । तद्वन्तः शक्तिवन्तः शक्तिहस्ता इति यावत् । यद्वा शक्तिर्बलम् । तद्वन्तः Sy. शक्तिः सामर्थ्यमायुधं वाऽस्ति येषां ते । अश्वरश्मिमतीत्यादिप्रातिशाख्यसूत्रेण शक्तिशब्दस्य दीर्घः Mah. बलवन्त आयुधवन्तो वा U.

१०. दुरे गवा वा A. अनाधृष्याः Sy. गम्भीरबला गम्भीरप्रज्ञाश्च Mah. गम्भीरप्रज्ञाना वा गम्भीरबला वा U.

११. दर्शनीयसेनाः Sy. चित्रा नानाविधा सेना येषां ते Mah.

१२. इष्टवो वेलं येषां A. बाणबलाः Sy. इषुभिर्बाणैर्बलं येषां ते Mah. इषुषु विशेषतो बलं येषां ते तथोक्ताः U.

१३. हिंतुमश० A. मृध्रा मृदवो न भवन्त्यमृध्राः कठिनाङ्गा उग्रशासना वा Mah. अमृदव उग्रशासनाः U.

१४. प्राप्तवीर्याः Sy. सतोवीरा इत्येकं पदम् । सतोऽश्वमेधयाजिनो वीराः शूराः । यद्वा सतो विद्यमानस्य बलस्य वीराः प्रेरकाः, विविधमीरयन्तीति वीराः षष्ठ्या अलुक् Mah. सतो विद्यमानस्य बलस्य विविधमीरयितारो वा U. तिरः सत इति प्राप्तस्य तिरस्तीर्णं भवति । सतः संसृतं भवति N. 3.20.

१५. महान्तः Sy. उरवो विशालाः । पृथुजघनोरस्का इत्यर्थः Mah. पृथुजघनोरस्का वा उरुमनसो वा U.

१६. समूहानामभिभवितारो भवन्तीति Sy. व्रातान् शूरसमूहान् सहन्ते ऽभिभवन्ति ते व्रातसाहाः । पचाद्यच् Mah. व्राता गणास्तेषामभिभवितारः । य इत्थम्भूताः पुरुषास्ते ऽस्माकं रथगोप्तारो भवन्त्विति शेषः U. This stanza=YV. 29. 46.

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत ॥ १० ॥

ब्राह्मणासः[1] । हे ब्राह्मणादयः[2] ! यज्ञस्य वर्धयितारः[3] । अस्माकम्[4] । शिवे[5] । द्यावापृथिव्यौ[6] । अनागतस्ते[7] भवेताम् । पूषा[8] च । नः[9] । पातु[10] । दुरितात्[11] । रक्ष[12] पूषा ऽस्मान् । मा कश्चित्[13] । स्तेनः[14] । अस्माकम् । ईशिष्ट[15] ।

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥ ११ ॥

सुपर्णम्[16] ।

---

१. ॰णासं A. ऋतावृध इत्यादिः प्रत्यक्षभूतो मन्त्रः । ब्राह्मणास इत्यादिः परोक्षकृतो ऽत एवं व्याख्यायते U.

२. आदि refers to पितरः and सोम्यासः । हे ब्राह्मणाः ! पितरः ! सोमार्हाः ! सोमसम्पादिनः ! वा Sy. रक्षत । रक्षेत्युपरितनमेकवचनान्तं सत्यपि व्यवधाने बहुवचनान्ततया विपरिणतं सदत्र सम्बध्यतेऽध्याहारस्यातिजघन्यत्वात् Sy. ब्राह्मणाः.... पान्तु रक्षन्तु । पितरश्च पान्तु । कीदृशाः ? सोम्यासः सोम्याः सोमसम्पादिनः सोमपानयोग्या वेत्युभयोर्विशेषणम् Mah. भवत्प्रसादाच्च ब्राह्मणासो ब्राह्मणाः पितरः सोम्यासः सोमसम्पादिनः । पान्त्वित्यत्रान्वयः U. सोम्याः सोमसम्पादिनः, N.11.18.

३. एवं परोक्षेणोक्त्वा प्रत्यक्षमाह । हे ऋतावृधः ! ऋतं सत्यं यज्ञं वा वर्धयन्ति ऋतवृधो देवाः ! संहितायामृतस्य दीर्घः Mah. हे ऋतावृधः ! सत्यवृधो वा यज्ञवृधो वा । देवा इत्यध्याहारः सामर्थ्यात् U.

४. अस्मान् Sy.,Mah.,U.

५. सुखकृतौ भवताम् Sy. कल्याणकारिण्यौ Mah.,U.

६. द्यावाभूमी Mah.

७. वनागतस्ते M. अनागस्के is suggested for अनागतस्ते ॥ अपापे Sy. अनेहसौ नास्ति एहोऽपराधो ययोस्ते अपराधनिवर्तिके Mah. अनुपहिंसिन्यावनपराधिन्यौ वा पाताम् U.

८. पोषको देवोऽपि Sy. सूर्यः Mah.

९. नं A.

१०. पात्वित्यस्यार्थवशाद् वचनव्यत्ययः कार्यः Mah.

११. दुष्कृतात् Sy. अशुभात् U.

१२. राक्ष पूषास् A. रक्ष रक्षतास्मान् । वचनव्यत्ययः Mah. रक्ष रक्षतेति वचनव्यत्ययः U.

१३. कंचित् A. मा कश्चन Mah. मा च कश्चन U.

१४. स्तनः A. पापशंसः शत्रुरपि Sy. पापी ।.... अघं पापं शंसति वक्ति प्रकाशयति वाघशंसो दुष्टः Mah. अघानि पापानि यः शंसति प्रकाशयति सोऽघशंसः U.

१५. ऐशिष्ट ? Sy. ऐश्वर्यं मा करोतु । वयं दुष्टवशा मा भूमेत्यर्थः ।....ईशतेति वचनव्यत्ययः Mah. ईशत ईष्ट इति वचनव्यत्ययः U.

This stanza=YV. 29. 47.

१६. ॰पर्णः A. अस्यामृचीषवः स्तूयन्ते Sy. द्वाभ्यामिषुं स्तौति Mah. द्वाभ्यां त्रिष्टुबनुष्टुब्भ्यामिषुं स्तौति U.

सुपर्णम् । वस्त वाजानहिप्रेत्य । मृगमयः । अस्याः । दन्तो रुरुशीर्ष्णयः । गोविकारैस्तावत् । अभिसन्नद्धा । पतति । प्रसूता । यत्र । नरः । सद्रवन्ति । च । विद्रवन्ति । च । तत्र ।

---

१. सुपर्णम् is missing in A. शोभनं वाजम् Sy. सुपर्ण पक्षिपिच्छम् ।....शोभनं पर्ण पिच्छं यस्य स सुपर्णः पक्षी तस्य विकारः सौपर्णम् । तत्र 'कृत्स्नवन्निगमा भवन्ति' (N. 2. 5.) इति यास्कोक्तेः सुपर्णशब्देन तत्पिच्छं गृह्यते । बाणपुच्छे पिच्छस्यारोप्यमाणत्वात् Mah. सुपर्णः पक्षी तद्विकारः सौपर्णमिति भवति । तत्र कृत्स्नवन्निगमः U. य एते सुपर्णम् Dur. गृध्रावयवभूतान् वाजानिषुराच्छादयति । इषोर्हि विमयाः पक्षा भवन्ति । तानभिप्रेत्यैतत् सुपर्णं वस्त इत्युच्यते SKN.

२. वस्ते is suggested for वस्त or इति should be added after it. इयमिषुर्धारयति Sy. या इषुः....वस्ते परिधत्ते । 'वस परिधाने' Mah.

३. ०जानहि प्रत्य A. वाजानभिप्रेत्य is suggested for वाजानहि प्रेत्य ।

४. मृगावयवः शृङ्गम् Sy. मृगयतेऽन्विष्यति रिपून् हन्तुमिति मृगः । 'मृग मार्गणे' चुरादिरदन्तः । पचाद्यच् ।...शल्यं हि वेध्यं मृगयते Mah. मृगयतेर्मृगः । स हि वेध्यं मृगयते U. येषां चैतेषां....यदि मार्गाणि फलानि । अमार्गेषु वा व्यधनस्वभावान्मार्गयन्तीव, किं नु तद् वेद्धव्यं स्याद् यदहं विध्येयमिति Dur. मृगो रुरुः शबरादिः । तदवयवे शृङ्गास्थीनि वा । प्रकृतिशब्देन च विकारस्याभिधानम् । मृगस्य रुरोः शबरस्य वा यच्छृङ्गमस्थि वा तन्मय इत्यर्थः । 'मृग अन्वेषणे' इत्यस्य वा शत्रुमार्गणशीलो मृगः SKN. मृगो मृगयतेः N. 9. 19.

५. इषोः Sy. अस्या इषोः Mah., SKN. यस्याश्चास्य इषोः U.

६. इषवः काश्चिद्दन्तमुखा भवन्ति हि । अथवास्या दन्तो मृगः शत्रून् मृगयमाणो भवति Sy. दन्तः फलम् Mah., U. SKN.

७. रुरु शीष्ण यः A.

८. स्नायुभिः । अथवा गौरिति ज्यानाम । तया सम्बद्धा । अत्र वचनव्यत्ययः । तथा च निगमः । वृक्षेवृक्षे नियता मीमयद्गौः (RV.X.27. 22.)इति । अस्यायमर्थः 'वृक्षेवृक्षे धनुषिधनुषि । वृक्षो व्रश्चनात् । वृत्वा क्षां तिष्ठतीति वा । क्षा क्षियतेर्निवासकर्मणः । नियता मीमयद्गौः शब्दं करोति मीमयतिः शब्दकर्मा N. 2. 6. Sy. या इषुः....गोविकारैः स्नायुभिः Mah. गोविकारैः श्लेष्मस्नायुभिः U. ये चेमे.... गव्येन स्नाय्वा श्लेष्मणा च Dur. गोविकारैश्च स्नायुभिः श्लेष्मणा च SKN.

९. आभिः स० M. बद्धा Mah. समन्ततो नद्धाः Dur. सम्यग्बद्धा SKN.

१०. शत्रुबलं प्रति गच्छति Mah. पतति शत्रुबलं प्रति U. गच्छन्ति Dur. गच्छति SKN.

११. प्रेरिता सती Sy. धनुष्मता प्रेरिता सती Mah. प्रेरिता धनुष्मता सा इषुः U. धनुष्मता प्रसूताः क्षिप्ताः । त एवमादिगुणयुक्ता इषवः Dur. प्रेरिता क्षिप्ता सतीत्यर्थः SKN.

१२. यत्रा A. युद्धे Sy. यस्मिन् सङ्ग्रामे Dur. एवमिषुं स्तुत्वा परेणाशिषमाशास्ते । यत्रा यत्र सङ्ग्रामे SKN.

१३. योद्धारः Mah. मनुष्याः Dur., SKN.

१४. सन्द्रव० is suggested for सद्रव० ॥ चरन्ति सह च द्रवन्ति Sy. सम्यग् गच्छन्ति Mah. सङ्गच्छन्ति ? (न्ते)U. सङ्गच्छन्ति Dur. सङ्गच्छन्ते SKN.

१५. विद्रवन्ति च is missing in A. पृथक् च द्रवन्ति Sy. विविधं प्रसरन्ति Mah विगच्छन्ति U. पुनर्विगच्छन्ति Dur. विगच्छन्ति च । शूराः सङ्गच्छन्ते कातरा विगच्छन्ति SKN.

१६. चौ समुच्चये Mah.

१७. तत्र रणे Mah.

अस्मभ्यम्[1]। इषवः[2]। शर्म[3]। यच्छन्त्विति[4]।

ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः।
सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥ १२ ॥

ऋजीते। ऋजितिरिषुः ऋजुगमना, इषो[5]! अस्मात्[6]। वर्जय[7]। अश्मा[8]। भवतु। अस्माकम्[9]। अङ्गं[10] कवचेन सन्नद्धम्। सोमश्च। अस्मान्[11] सन्नद्धान्। अधिब्रवीतु[12]। अदितिश्च[13]। शर्म[14]। यच्छतु[15][16]।

---

१. शराः Sy. बाणाः Mah. इषुरिति सन्नतिः U. इषुरीषतेर्गतिकर्मणः। (वधकर्मणो वा) N. 9. 18.

२. सुखम् Sy. Mah. शर्म शरणम् U., SKN. सुखं जयनिमित्तम् Dur.

३. प्रयच्छन्तु Sy. 'यमु उपरमे'....सुखं ददातु Mah. यच्छत्विति सन्नतिः U. ददत्वित्येतदाशास्महे Dur. रक्षन्त्वस्मानित्यर्थः SKN.

४. सुपर्णं वस्त इति वाजानभिप्रेत्य। मृगमयोऽस्या दन्तः। मृगयतेर्वा। गोभिः सन्नद्धा पतति प्रसूतेति व्याख्यातम्। यत्र नराः सन्द्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषव शर्म यच्छन्तु शरणं सङ्ग्रामेषु N.9.19., SKN. III. 158., 159.

This stanza=YV. 29. 48.

५. ऋषितिरिष्ठ ऋजु गमना A. ऋजीतिरि० is suggested for ऋजितिरि० ॥ ऋजु गच्छतीत्यृजीतिरिषुः। हे इषो! Sy. ऋजुः सरला ईतिर्यस्याः सा ऋजीतिः। टिलोप आर्षः। हे ऋजीते! ऋजुगामिनि! Mah. हे ऋजीते! ऋजुगामिनि! U.

६. इषोरस्मात् M. अस्मान् is suggested for अस्मात्।

७. परितो वर्धय Sy. परिवर्जय। अस्मासु मा पतेत्यर्थः Mah. परिवर्जयास्मान् U.

८. अश्मवदभेद्या दृढा Sy. पाषाणतुल्यदृढा Mah. अश्ममयी U.

९. अस्मभ्यम् Sy.

१०. शरीरम् Sy., Mah., U.

११. अस्मात् A. अस्माञ्जीवनाय U.

१२. अपि ब्र A. पक्षपातेन ब्रवीतु Sy. अधिकान् वदतु Mah. आधिक्येन वदतु U.

१३. देवमाता Mah.

१४. सुखम् Sy., Mah. शरणम् U.

१५. ददातु Mah., U.

१६. VM. ignores परि ॥ परितः Sy.

This stanza=YV. 29. 49.

आ जंङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते । अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥१३॥

आ जङ्घन्ति[1]। आघ्नन्ति[2]। सानूनि[3]। एषामश्वानां[4] सक्थिनी[5] सानूनि। जघनानि[6] च। उपघ्नन्ति[7] त्वया। नगे[8]!

---

१. कशा स्तूयते Mah. कशास्तुतिः U.

२. वचनव्यत्ययः । आघ्नन्ति ताडयन्ति Mah. आजङ्घन्त्यश्वारोहाः U. आजङ्घन्तीति शतरि सम्बोधनम् । हे अश्वाजनि ! आजङ्घन्ति ! Dur. एषामिति श्रुतेर्येषामित्यध्याहारः । येषामेषां रथे नियुक्तानां तोत्रेण जङ्घन्ति, अत्यर्थं पुनः पुनर्वा हन्ति । कः ? सामर्थ्यात् सारथिः SKN.

३. सा M. सानुतुल्यानि मांसोपचिताङ्गानि Mah. मांसोपचितान्यङ्गानि U. समुच्छ्रितानि Dur. समुच्छ्रितमंसप्रदेशम् SKN.

४. हे कशे ! यया त्वयाऽश्वावारा एषामश्वानाम् Mah. येषामेषाञ्च U.

५. सक्षिनि A. सक्थीनि is suggested for सक्थिनी ॥ कटिप्रदेशान् SKN.

६. कटिभागान् Mah. जघनानि स्फिग्देशास्तांश्च । जघनं कस्मात् ? तद्धि भृशं हन्यते कशया Dur. जघनप्रदेशांश्च....जघनं हन्तेर्यङ-न्तस्य । प्रायेण हि, अश्वाञ्छिष्यान् वा पुत्रादीन् पृष्ठप्रदेशे ताडयन्ति । येषां घ्नन्त्युपघ्नन्तीति पाठः । केषाम् ? अश्वादीनाम् SKN.

७. निघ्नन्ति । तुरङ्गारोहा ययाऽश्वान् वशयन्ति सा त्वमश्वान् प्रेरयेत्यर्थः Mah. उपघ्नन्ति U. हे अश्वाजनि ! उपजिघ्नति ! इदमपि शतर्येव । रथ्यानां हि कटिप्रदेशमश्वा जघन्यमभिहन्ति पृष्ठ्यानां स्फिग्देशान् Dur. उपारूढा अत्यर्थं पुनः पुनर्वा घ्नन्ति । अत्रापि सामर्थ्यात् पृष्ठसादिनोऽश्वावाहाः SKN.

८. कशे is suggested for नगे ॥ अश्वानां क्षेप्त्रि ! यया त्वया Sy. 'अज गतौ क्षेपणे च' अश्वा अज्यन्ते क्षिप्यन्ते यया सा अश्वाजनी । हे अश्वाजनि ! कशे ! Mah. अश्वान् जनयतीत्यश्वाजनी तस्याः सम्बोधनं हे अश्वाजनि ! U. अश्वाजनीत्येतत्पदम् । तां पुनरेतां 'कशा' इत्याहुः । अश्वाजनीत्येतन्न निर्वक्तव्यं प्रत्यक्षवृत्तित्वादस्य । अथ 'कशा कस्मात्' सा हि 'प्रकाशयति' प्रख्यापयति 'भयमश्वाय' । 'कृष्यतेर्वाऽणूभावात्' अपकृष्टा हि सा भवति चर्मणोऽल्वी । वागपि कशेत्युच्यते सा 'पुनः प्रकाशयत्यर्थान्' इति । अथवा 'खशया' वाक्, खे मुखाकाशे शेत इति । क्रोशतेर्वा शब्दार्थस्य Dur. अश्वाजनी वक्तव्या। सुबोधत्वादनिर्वचनम् । कशेत्यभिधेयवचनम् ।....अर्थकथनप्रसक्तमाह—कशा प्रकाशयति, भयमिति विशेषप्रदर्शनं वाच्यव्यवच्छेदाय । कृश्यतेर्वा तनूकरणार्थस्य । अणूभावादित्यर्थः । समन्वयं दर्शयति—साहि श्लेषावयवारम्भणतन्वी भवति । वागपि कशोच्यते । सा कस्मादित्याह—'वाक् पुनः प्रकाशयत्यर्थान्' अर्थविशेषान् व्यवच्छेदाय । 'खशया' मुखाकाशे शेते तत उपलब्धेः । 'क्रोशतेर्वा' शब्दार्थस्य । कशायाश्चर्मयष्टिरूपायाः प्रकृतत्वाच्च । वाचोऽपि हुङ्काररूपाया अश्वाजनीत्यविशेषात् सन्देहे सति वाग्व्यावृत्तये ....व्यवच्छिन्दन्नाह—अश्वकशया एषेति । ननु च हुङ्काररूपायामपि वाचि कशा प्रकाशयति भयमिति प्रवृत्तिनिमित्तस्य तुल्यत्वात् कशाशब्दस्योपपत्तेरश्वाजनीशब्दवदश्वकशाशब्दोऽपि नालं व्यवच्छेदाय ? सत्यम्, तथापि तस्य गुणसम्बन्धस्य रूढ्या प्रच्छादनात् । क्वचित्तु, काचित् प्रसृततरा गतिरिति, अश्वाजनी दर्शनीयपानीयशब्दवन्न व्यवतिष्ठते । निब्रवीति । अश्वकशेति तूक्तेश्चर्मयष्टिः प्रतीयते न हुङ्काररूपा वाक्, तस्माद्युक्तो व्यवच्छेदोऽश्वकशाया एषेति ।....अथ संविज्ञानपदसम्भूतोऽश्वकशाशब्दः कस्मान्न पठितः। उदाहरणाभावात् SKN. अश्वाजनीं कशेत्याहुः । कशा प्रकाशयति भयमश्वाय । कृष्यतेर्वाणूभावात्। वाक् पुनः प्रकाशयत्यर्थान् । खशया। क्रोशतेर्वा N. 9.19.

प्रकृष्टज्ञानान्[1] । अश्वांस्त्वम्[2] । सङ्ग्रामेषु[3] । चोदय[4] ।

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥ १४ ॥

अहिरिव[5] । अहिरिव[6] । भोगैः[7] । परिवेष्टयति[8] । बाहुम्[9] । ज्यायाः[10] । हननम्[11] । परित्रायमाणः[12] ।

---

१. ०ज्ञानन् A. प्रकृष्टज्ञानाः सादिनः सारथयो वा Sy. कीदृशानश्वान् । प्रचेतसः प्रकृष्टं शूरं चेतो मनो येषां ते Mah. परिदृष्टकारिणः प्रकृष्टज्ञानान्वाऽश्वान् U. गमनं प्रति समुत्सुकान् Dur. यच्छ्रुतेस्तदध्याहारः । तानेतान् ...., प्रकृष्टज्ञानान् गृहीतशालिहोत्रोपदिष्टनयानित्यर्थः SKN.

२. या त्वमेवमभिहंसि सा त्वमेतानश्वान् Dur.

३. प्रेरय Sy., U., SKN. प्रेरय जयाय Mah. तथा चोदय यथा जयेयमित्येतदाशास्महे Dur.

४. सानूनि सक्थीनि तानि पुनः सरणानि तद्बलेन हि सरन्ति सर्त्तारः। सक्थिः कस्मात् ? 'सचतेः' किमस्मिन् सक्तम् ? 'आसक्तोऽस्मिन्कायः' कृत्स्नं शरीरम् Dur. आजगन्ति सानून्येषामिति वा पाठः। सान्वित्यस्य व्याख्यानं सरणस्वभावानि सक्थीनीति। सचतेरिति धातुनिर्देशः । 'आसक्तोऽस्मिन् कायः' इत्यर्थोपपत्तिवचनम् SKN. आघ्नन्ति सानून्येषां सरणानि सक्थीनि । सक्थि सचतेः । आसक्तोऽस्मिन् कायः । जघनानि चोपघ्नन्ति । जघनं जङ्घन्यतेः । अश्वाजनि (प्रचेतसः) प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु सङ्ग्रामेषु चोदय N. 9. 20., SKN. III. 160.

This stanza=YV. 29. 50.

५. अत्र धन्विनः प्रकोष्ठे बन्धनीयस्य हस्तघ्नस्य स्तुतिः Sy. हस्तघ्नः स्तूयते Mah., U.

६. सर्प इव Sy. यथाऽहिः सर्पो भोगैः स्वदेहैर्हस्तादिकं वेष्टयति Mah. यो हस्तघ्नः, अहिरिव सर्प इव U. योऽयम्....सर्प इव Dur. यथा सर्पो मुखे गृहीतः SKN.

७. शरीरेण । वचनव्यत्ययः Sy. यो हस्तघ्नो भोगैः स्वशरीरावयवैः कृत्वा Mah. शरीरावयवैः U. कुटिलभावैः Dur भोगास्तस्यैव कुटिलाः शरीरावयवास्तैः SKN.

८. ०रिचेष्ट० A. वेष्टयति Mah. सर्पग्राहकस्य बाहुं सर्पेणैव पर्येति परिवेष्टयति Dur. अर्धर्चयोरेकवाक्यतायै यत्तदध्याहारः कार्यः । यः पर्येति परिगच्छति परिवेष्टयतीत्यर्थः SKN.

९. प्रकोष्ठम् । लक्षणया बाहुशब्दः प्रकोष्ठे वर्तते Sy. हस्तम् Mah. बाहुं धनुष्मतः पुरुषस्य Dur.

१०. ज्यायाः स्वभूताम् SKN.

११. ज्याहेतुकां हिंसाम् Sy. बाणं शत्रुप्रेरितम् Mah. आयुधात् U. ज्याघाताद् बाहुं सर्वतस्त्रायमाणः, तदर्थत्वात्तस्य Dur. हेतिं वधं ताडनं, ज्याकृतं प्रहारमित्यर्थः SKN.

१२. निवारयन् Sy. निवर्तयन् खेटकपक्षे, प्रकोष्ठत्राणपक्षे तु ज्याया हेतिं प्रहारे निवारयन् ज्याघातस्य निवारकत्वात् Mah. सर्वतो निरुन्धन् SKN.

हस्तघ्नो हस्तत्रायमाणम्[1]। सर्वाणि[2]। प्रज्ञानानि[3]। जानन्[4]। पुमान्[5]। पुमांसम्[6]। परि[7] च। रक्षतु[8]। सर्वतः[9][10]।

**आलाक्ता या रुरुशीर्ष्ण्यथो यस्या अयो मुखम्।**
**इदं पर्जन्यरेतस इष्वै देव्यै बृहन्नमः॥ १५॥**

आलाक्ता[11]। विषाक्ता[12]। या[13]। रुरुशीर्ष्णी रुरुशृङ्गशिरस्का[14]। अपि[15]। यस्याः[16]। अयः[17]। मुख[18] भवत्यथोमुखा[19] काचिच्छृङ्गमुखा काचिदिति[20]। तस्यै नमस्कारः[21]। अयमाहानुया (?)[22] वजत्योत्पादितोद-करेनसा[23]।....ति[24]।

---

१. हस्तं त्रायमाणः is suggested for हस्तत्रायमाणम्॥
हस्ते हस्तसमीपे वर्तिनि प्रकोष्ठे स्थितः सन्। ज्यया हन्यत इति हस्तघ्नः 'घअर्थे कविधानम्' इति कः Sy. हस्ते स्थितो हन्ति हस्तघ्नः खेटकः। यद्वा हस्तं हन्ति प्राप्नोति हस्तघ्नः प्रकोष्ठत्राणम् Mah. हस्त एव स्थितो हन्ति यः स हस्तघ्नः खेटकः प्रकोष्ठादित्राणं वा U. सोऽयमेवंधर्मा हस्तघ्नः Dur. हस्तघ्नो हस्ते हन्यते N. 9.14.

२. विश्वानि Sy. यथा....सर्वाणि. SKN.

३. ज्ञानानि ज्ञातव्यानि Sy. ज्ञानानि Mah. माया वयुनमिति प्रज्ञानामनी Ngh. 3. 9.

४. प्रजानन् परिदृष्टकारी वा U. प्रजानन् SKN.

५. पुरुषोपेतः Sy. पुंस्त्वयुक्तः। शूर इत्यर्थः Mah. शूरोऽक्लीबो वा U. पुरुमना इव कश्चिदाप्तः प्रज्ञानबहुलः...स्त्रियमपेक्ष्याल्प-मनस्कां पुरुषे बहुतरं मनः। पुंसतेर्वा पुरुषा-र्थस्य पौंस्यमिति यस्य बलनाम भवति Dur. पुमान् कश्चिदेव....पुमान् 'पातेर्डुम्सन्' (Uṇādi 4. 178.) इति वैयाकरणः। पुरुषमना इति नैरुक्ताः पुंसतेर्वा पौरुषार्थस्य। तथा च पुंसतेः। पौंस्यं बलम् SKN.

६. प्रमांसं A. धन्विनम् Sy. पुमांसं माम् Mah. पुमांसमक्लीबम् U. पुमांसमेतं धनुष्मन्तम् Dur. इमं योद्धारं पुमांसम् SKN.

७. परितः is suggested for परि च॥ सर्व-प्रकारम् Dur.

८. रक्षति Sy. पात्वित्येतदाशास्महे Dur.

९. कुर्वतः A.

१०. हस्तघ्नस्यैव वा विशेषणम्। वयुनानि स्वानि कर्माणि जानन् SKN. अहिरिव भोगैः परि-वेष्टयति बाहुम्। ज्याया वधात्परित्रायमाणः। हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन्। पुमान् पुरुमना भवति। पुंसतेर्वा 9. 15., SKN. III. 156.
This stanza=YV. 29. 51.

११. सूलाक्ता A.

१२. आलेन विषेणाक्ता Sy.

१३. इषुः Sy.

१४. ०शीर्ष्णि A. हन्तृशिरस्का। अर्तेर्हिसाकर्मणो रुरुशब्दोत्पत्तिः। शृङ्गशीर्ष्णी वा Sy.

१५. ०शिरस्ता A.

१६. अवि व A. अपि च is suggested for अपि।

१७. इषोः Sy.

१८. अयोमयः Sy.

१९. ०त्यधोमु० M. ०त्ययोमुखा is suggested for ०त्यथोमुखा।

२०. ०चिरिति A.

२१. क्रियत इति शेषः Sy.

२२. अयम्। महान् is suggested for अयमा-हानुयः।

२३. पर्जन्योत्पादितोदकरेतसा is suggested for वजत्योत्पादितोदकरेनसा॥
पर्जन्यो रेतो सा पर्जन्यरेताः। तस्यै पर्जन्यकार्य-भूतायै। शरकाण्डस्य पर्जन्यजन्यत्वात् Sy.

२४. VM. ignores इदम्। देव्यै and बृहत्।

अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
गच्छामित्रान्प्र पद्यस्व मामीषां कं चनोच्छिषः ॥ १६ ॥

अवसृष्टा[1] । क्षिप्ता सती[2] । परागच्छ[3] । हे शरणकुशले[4] ! मन्त्रेण तीक्ष्णीकृते[5] ! गच्छ[6] । अमित्रान्[7] । प्रपद्यस्थ[8] । मा । अमिषाममित्राणाम्[9] । कञ्चिदपि[10] । उच्छिषः[11] ।

यत्र बाणाः संपतन्ति कुमारा विशिखाइव ।
तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ १७ ॥

यत्र बाणाः । युद्धदेशः स्तूयते । निगदसिद्धेति[12] ।

---

१. युवसृष्टाः A.

२. क्षिप्ता वती A. त्वम्....अस्माभिर्मुक्ता सती Mah. निक्षिप्ता U.

३. वरागच्छ A. सहसा परसैन्ये पतिता भव Mah.

४. हिंसाकुशले ! इषो ! Sy. हिंसिका शरमयी हेतिः शरव्या Mah. शरमयीषुः शरव्या U.

५. ब्रह्मणा मन्त्रेण संशिता तीक्ष्णीकृता ब्रह्मसंशिता तादृशि ! Mah. ब्रह्मणाऽभिमन्त्रिते ! अभिमन्त्र्यातितरां तीक्ष्णीकृते ! U.

६. इतो देशाद्गच्छ च Sy. प्राप्नुहि Mah. परापत । गच्छेत्यतिशयार्थम् । एकार्थयोराख्यातयोर्द्विर्वचनम् U.

७. हिंसकान् Sy. पतित्वा चामित्रान् शत्रून् Mah.

८. ०द्यस्व is suggested for ०द्यस्थ ॥ प्राप्नुहि च इतो देशाद् गच्छ Sy. प्राप्य च प्रपद्यस्व शत्रुशरीरेषु प्रविश Mah.

९. अमीषा० is suggested for अमिषा० ॥ अमीषां मध्ये Sy. प्रविश्य चामीषां शत्रूणां मध्ये Mah.

१०. कञ्चन पुरुषम् Mah.

११. अवशिष्टं (मा) कुरु Sy. अवशिष्टं मा कुरु । सर्वानपि जहीत्यर्थः 'शिष्लृ विशेषणे' Mah. उच्छेषय । उद्धृतमूलान् कुर्वित्यभिप्रायः U. This stanza=YV. 17. 45.

१२. यत्र युद्धे कुमारा विशिखा इव मुण्डिता इव बाणाः सम्पतन्ति तत्र नोऽस्मभ्यं ब्रह्मणस्पतिः शर्म सुखं विश्वाहा सर्वदा यच्छतु । अदितिश्च शर्म यच्छतु । द्विरुक्तिरादरार्था Sy. यत्र यस्मिन् युद्धे बाणाः शत्रुप्रयुक्ताः सम्पतन्ति इतश्चेतश्च सम्भूय पतन्ति । तत्र दृष्टान्तः । कुमारा विशिखा इव विगता शिखा येषां ते विशिखाः शिखारहिता मुण्डितमुण्डा विकीर्णकवचा वाऽतिबालाश्चपलाः सन्तो यथा इतस्ततो गच्छन्ति तद्वत् । तत् तत्र युद्धे, इन्द्रो नोऽस्मभ्यं शर्म विजयोत्थं सुखं यच्छतु ददातु । कीदृशः इन्द्रः ? बृहस्पतिर्बृहतां मन्त्राणां पतिः पालको विजयोचितमन्त्रज्ञः । अदितिर्नास्ति दितिः खण्डनं यस्याखण्डितशक्तिः । विश्वाहा विश्वान् सर्वान् शत्रून् आ समन्ताद् धन्तीति विश्वाहा । स शर्म यच्छतु । इति पुनरुक्तिरादरार्था । यद्वा तत्रेन्द्रो बृहस्पतिरिन्द्रगुरुः । अदितिरिन्द्रमाता च विश्वाहा सर्वाण्यहानि सर्वदा शर्म यच्छतु । विश्वानि च तान्यहानि च विश्वाहा । विभक्तेराकारः । अत्यन्तसंयोगे द्वितीया Mah. यत्र बाणा इषवः सम्पतन्ति अनिर्मर्यादम् । कथमिव ? कुमारा विशिखा इव । यथा कुमारा अदृष्टपरिकारिणो विगतशिखाः सर्वमुण्डास्तं तमर्थं सन्निपतेयुरेवं सम्पतन्ति तत्रेत्यर्थः । नोऽस्माकमिन्द्रः शर्म शरणं यच्छतु ददातु । बृहस्पतिः शर्म यच्छतु । अदितिः शर्म यच्छतु । विश्वाहा सदा कालं च शर्म यच्छतु । इन्द्रो बृहस्पतिरदितिः U. This stanza=YV. 17. 48.

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥ १८ ॥

मर्माणि[1]। मर्माणि[2] । तव[3] । कवचेन[4] । आच्छादयामि[5] । सोमश्च[6] । त्वा[7] । राजा[8] । अमृतेन[9] । अनुच्छादयतु[10] । वरुणः । ते[11] । उरोः[12] । उरुतरं[13] धनम् । कृणोतु[14] । जयन्तं[15] शत्रुम् । त्वाम्[16] । देवाः । अनुमदन्तु[17] ।

यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥ १९ ॥

यो नः । यः । अस्मान् । ज्ञातिः । अरममाणः शत्रुः । यः । च । निष्यो[18] बहिर्भूतः । जिघांसति[19] । देवाः[20] । तम् । सर्वे । हिंसन्तु[21] । मन्त्रः । कवचश्च[22] । मम । अन्तरं शत्रोर्हृदयमध्ये[23] त्राणायावस्थितमिति यद्वा ब्रह्मैव ममान्तरं कवचमिति ।

---

१. कर्माणि A. महाव्रते यागेऽध्वर्युः क्षत्रियाय सन्नाहं परिधानाय प्रयच्छतीत्यर्थः Mah. कवचं प्रयच्छति U.

२. हे राजन् ! Sy. हे यजमान ! Mah.

३. येषु स्थानेषु विद्धः सद्यो म्रियते तानि मर्माणि Sy. जीवस्थानानि Mah.

४. त्वदीयानि Sy.

५. वेचेन A.

६. छादयामि Sy. अहं छादयामि, आवृणोमि Mah.

७. त्वाम् Sy.

८. विप्रादीनामधिपः सोमः Mah.

९. नास्ति मृतं मरणं येन तेन मरणनिवारकेणानेन वर्मणा Mah.

१०. आच्छादयतु M. मर्म च्छादनानन्तरम्. . . . आच्छादयतु Sy. अन्वाच्छादयतु । 'वस आच्छादने' अदादिर्लोट् Mah. आच्छादयतु U.

११. तु M. तुभ्यम् Sy. तव वर्म Mah. तव कवचम् U.

१२. रोः A. पृथोरपि वरीयः Mah. पृथोरपि U.

१३. उरुतरं सुखम् Sy. प्रथीयः ।. . . .अत्यन्तमुरु वरीयः Mah. प्रथीयः U.

१४. करोतु Sy., U.

१५. जन्तं शत्रून् M. विजयं प्राप्नुवन्तम् Mah.

१६. त्वा A.

१७. अनुहृष्यन्तु Sy. अनुकूला भूत्वा हृष्यन्तु उत्साहयन्तु वा Mah. उत्साहयन्तु देवाः U. This stanza=YV. 17. 49.

१८. नित्यो M. निष्ट्यो is suggested for निष्यो ॥ तिरोभूतो दूरे स्थितः Sy.

१९. हन्तुमिच्छति Sy.

२०. दोवांस् A. सर्वे देवाः Sy.

२१. हिंसस्तु A.

२२. शराणां निवारकं वर्म Sy.

२३. शत्रोर्हमय मध्ये A.

VII. 1.

मैत्रावरुणिर्वसिष्ठः[1] सप्तमर्मण्यलमपश्यत्[2] ॥

१. अथ सप्तमं मण्डलमारभ्यते। तस्मिन् मण्डले षडनुवाकाः। प्रथमेऽनुवाके सप्तदश सूक्तानि। तत्र 'अग्निं नरः' इति पञ्चविंशत्यृचं प्रथमं सूक्तम्। अत्रेयमनुक्रमणिका—'अग्निं पञ्चाधिका विराजोऽष्टादशाद्याः' (33. 1. p. 24.) इति। 'षष्ठं मण्डलं वशिष्ठोऽपश्यत्' (KSA. 33. p. 24.) इत्युक्तत्वान्मण्डलद्रष्टा वसिष्ठ ऋषिः। आदितोऽष्टादश विराजः, अथैकादशकाः (Cf KSA. 6. 7, 8. p. 3.)। शिष्टा अनादेशपरिभाषया त्रिष्टुभः। (Cf. KSA. 12. 6. p. 5.) मण्डलादिपरिभाषयाग्निर्देवता (Cf. KSA. 12. 12. p. 5.)। विश्वजितीदं सूक्तमाज्यशस्त्रम्। सूत्रितञ्च—'विश्वजितोऽग्निं नर इत्याज्यम्' (ĀSS. 8. 7.) इति। अत्रैश्चतुर्वीराख्ये चतूरात्रे चतुर्थेऽहनीदमेव सूक्तमाज्यशस्त्रम्। सूत्र्यते हि—'अग्निं नर इति चतुर्थे' (ĀSS. 10. 2.) इति व्यूळ्हे दशरात्रे चतुर्थेऽहनीदं सूक्तं जातवेदस्यनिविद्धानम्। सूत्रितञ्च—'अग्निं नर इत्याग्निमारुतम्' (ĀSS. 8. 8.) इति। महाव्रतेऽपीदमाज्यशस्त्रम्। तथैव पञ्चमारण्यके सूत्र्यते—'आज्यप्रउगे विश्वजितः' (AA. 5.1. 1.) इति। अविवाक्येऽहनि प्रातरनुवाके 'त्वमग्ने वसून्' (RV. 1. 45. 1.) इत्यादीनामनुष्टुभां स्थाने आद्यस्तृचः प्रक्षेपणीयः। सूत्र्यते हि—'दशमेऽहन्यनुष्टुभां स्थानेऽग्निं नरो दीधितिभिररण्योरति तृचमाग्नेये क्रतौ' (ĀSS. 8, 12.) इति। आद्याः षडृचस्तस्मिन्नेवाहन्याग्निमारुते शस्त्रे स्तोत्रियानुरूपार्थाः। सूत्रितञ्च—'अग्निं नरो दीधितिभिररण्योरिति स्तोत्रियानुरूपौ' (ĀSS. 8. 12.) इति। मण्डलादिहोमेऽप्येषा। आधाने तृतीयायामिष्टौ 'प्रेद्धः' इति स्विष्टकृतोऽनुवाक्या। सूत्रितञ्च—'प्रेद्धो अग्न इमो अग्न इति संयाज्ये' (ĀSS. 2.1.) इति। एवमन्यत्रापि दीक्षणीयादिषु स्विष्टकृतोऽनुवाक्या। प्रायणीयेष्टौ 'सेदग्निरग्नीन्' इत्यादिके द्वे स्विष्टकृतो याज्यानुवाक्ये। सूत्रितञ्च—'सेदग्निरग्नीँरत्यस्त्वान्यानिति द्वे संयाज्ये' (ĀSS. 4. 3.) इति। आधाने तृतीयायामिष्टौ 'इमो अग्ने' इति स्विष्टकृतो याज्या। सूत्रितञ्च—'इमो अग्न इति संयाज्ये' (ĀSS. 2. 1.) इति। एवमन्यत्रापि दीक्षणीयादिष्वेषा सौविष्टकृति याज्या। प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे च 'त्वमग्ने सुहवः' इत्याद्याः पञ्चर्चः। सूत्रितञ्च—'त्वमग्ने सुहवो रण्वसन्दृक्' (ĀSS. 4. 13.) इति Sy. वसिष्ठस्येदमार्षम् Dur. वसिष्ठस्यार्षम् SKN.

पुत्रानायुरथारोग्यं य इच्छेदव्ययं सुखम्।
सोऽग्निं (स 'अग्नि) नरः' इति सूक्तेन जुहुयादाज्यमन्वहम् ॥ Ṛgvidh. 2. 130.

२. सप्तमर्मण्यवमप० A. सप्तमं मण्डलमप० is suggested for सप्त मर्मण्यलमप० Cf. KSA. 33. p. 24.

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥ १ ॥

अग्निं नर इति । अग्निम्[1] । ऋत्विजो मनुष्याः[2] । अङ्गुलिभिः[3] । अरण्योः[4] । हस्तप्रच्युत्या[5] । जनयन्त[6] । प्रशस्तम्[7] । दूरे दर्शनम्[8] । गृहपतिम्[9] । अननवन्तमिति[10][11] ।

तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दम आस नित्यः ॥ २ ॥

तमग्निम् ः गृहे[12] । वसवो[13] देवा हविर्वहनार्थः[14] । प्राक्षिपन्नचासयत् (?)[15] सुदर्शनम्[16] । कुतश्चिदपि[17] रक्षसः । रक्षणाय । वर्धनीयः[18] । गहे[12] । भवति[19] । नित्यः[20][21] ।

---

१. अग्निर्न्नर A.

२. ऋत्युजो A. मनुष्या ऋत्विजः SKN.

३. अङ्गुलिभिर्योक्त्रं परिगृह्य, उत्तरारणिं च... 'दीधितयोऽङ्गुलयो भवन्ति' ता हि 'धीयन्ते कर्मसु' अनुष्ठीयमानेषु Dur. अङ्गुलिनामैतत् । अङ्गुलीभिः । युक्त्रमुत्तरारणिं वा परिगृह्य ताभिरिति शेषः... धीयन्ते कर्मसु धीयन्ते वा पुरुषैः कर्मसाधनानि SKN.

४. अरण्योर्विद्यमानम् Sy. प्रतिगत एने अग्निः । तात्स्थ्यादग्नेः । 'समरणाज्जायत इति वा' अरण्योर्हि समरणात् समागमनादग्निर्जायते Dur. अरण्योः सकाशात्... अरणी, यस्मादेते प्रत्यृतो गतोऽग्निः। कुत एतत् ? तत उत्पत्तेः । समरणात् सङ्गमनात् तयोर्जायत इति SKN.

५. ०प्रत्या A. हस्तप्रच्युत्या हस्तगत्या Sy. हस्ताभ्यां प्रच्यावयन्तः Dur. तृतीयायां पूर्वसवर्णः । हस्तच्युत्या हस्तप्रच्यावनेन SKN.

६. ०यत A. जनयन्तेत्यर्थः SKN.

७. प्रकर्षेण स्तुतम् Sy.
  प्रशस्यमित्यर्थः Dur.

८. दूरे दृश्यमानम् दूरे पश्यन्तं वा Sy. दूरे यो दृश्यस्तम् । दूरे वसतो वा देवान् पश्यतीति SKN.

९. ग्रहप० A. गृहाणां पालकम् Sy. यज्ञस्वामिनम् SKN.

१०. अतनव० is suggested for अननव० ॥ आगम्यमतनवन्तं वा Sy. गमनवन्तमित्यर्थः । एवमत्राततेर्गत्यर्थस्य सारूप्यादग्न्यधिकाराच्चापि 'अथर्युः' अतनवानित्युपपद्यते Dur. देवान् प्रति गमनवन्तमित्यर्थः SKN.

११. दीधितयोऽङ्गुलयो भवन्ति । धीयन्ते कर्मसु । अरणी प्रत्यृत एने अग्निः । समरणाज्जायत इति वा । हस्तच्युती हस्तप्रच्युत्या । जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम् N. 5. 10.; SKN. II. 328.

१२. ग्रहे A.

१३. वसवो वासका ये वसिष्ठाः Sy.

१४. हविर्विहनना० M. ०नार्थम् is suggested for ०नार्थः ।

१५. न्य( or अ )वासयन् is suggested for अचासयत् ॥ न्यदधुः Sy.

१६. सुप्रतिदर्शनम् Sy.

१७. कुरु कश्चि० A. सर्वस्मादपि भयहेतोः Sy.

१८. पूजनीयो हविर्भिः समर्धनीयो वा Sy.

१९. बभूव Sy.

२०. अजस्रः Sy.

२१. VM. ignores तम् । अग्निम् and यः ।

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वन्त उप यन्ति वाजाः ॥ ३ ॥

प्रेद्धः । प्रकर्षेद्धः[1] । अग्ने ! दीप्यस्व । पुरतः[2] । अस्माकम्[3] । अनवरतया[4] । सरणशीलया[5] । युवतम[6] ! बहूनि[7] । अन्नानि[8] । त्वाम्[9] । उपगच्छति[10] ।

प्र ते अग्नयोऽग्निभ्यो वरं निः सुवीरासः शोशुचन्त द्युमन्तः ।
यत्रा नरः समासते सुजाताः ॥ ४ ॥

प्र ते । प्रकर्षेण निः[11] शोशुचन्तः[12] । अन्येभ्यो लौकिकेभ्योऽग्निभ्यः । ते । अग्नयः[13] । वरिष्ठम्[14] । शोभनवीराः[15] । दीप्तिमन्तः[16] । यत्र । ऋत्विजः[17] । समासते[18] । शोभनजननाः[19] ।

---

१. ०कर्षणे० A. प्रकर्षेण समिद्धस्त्वम् Sy. प्रकर्षेण दीप्तः Mah. प्रकर्षेणेद्धो दीप्तः सन् U.

२. पुरस्तादाहवनीयायतने Sy. अग्रे Mah. अग्रतः . . . व्यवस्थितः U.

३. अस्मदर्थम् Sy.

४. अशरणशीलया Sy. अनुपक्षीणया Mah., U.

५. ज्वालया Sy. समित्काष्ठेन । . . . सूर्मीशब्दः काष्ठवाचकः । यद्वा लोहमयी ज्वलन्ती स्थूणा सूर्मी । अजस्रया सूर्म्या सूर्मीसमानया ज्वालया दीदिहि । सूर्मीशब्दो ज्वालोपलक्षकः Mah. सूर्म्या समित्काष्ठिकया । सूर्मीशब्दः काष्ठवचनः । 'सूर्मीं ज्वलन्तीं वाऽऽश्लिष्यात्' इति च स्मृतिः U.

६. अतिशयेन युवा यविष्ठः Mah.

७. बहवः Sy. निरन्तरभाविनः Mah. शाश्वतिकाः U.

८. अन्नानि हवींषि Sy., Mah.

९. यतश्च त्वामेव U.

१०. ०गच्छन्ति is suggested for ०गच्छति ॥ प्राप्नुवन्ति, अतो दीप्यस्वेत्यर्थः Mah. . . . अतो दीदिहीति सम्बन्धः U.

This stanza = YV. 17. 76.

अथौदुम्बरीमादधाति । ऊर्ग्वै रसउदुम्बर ऊर्जैवैनमेतद्रसेन प्रीणाति कर्णकवती भवति पशवो वै कर्णकाः पशुभिरेवैनमेतदन्नेन प्रीणाति यदि कर्णकवतीं न विन्देद्दधिद्रप्समुपहत्यादध्यात्तद्धद्धिद्रप्स उपतिष्ठते तदेव पशुरूपं[1] "प्रेद्धोऽअग्ने दीदिहि पुरोन" इति विराजादधात्यन्नं विराडन्नेनैवैनमेतत्प्रीणाति तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावित्यस्य मात्रा तावतैवैनमेतदन्नेन प्राणाति । SB. 9.2.3.40. p. 720.

११. निर्गोशु० A. निः is missing in M.

१२. शोशुचन्त is suggested for शोशुचन्तः ॥ प्रकर्षेण नितरां दीप्यन्ते Sy.

१३. ते । अग is missing in M.

१४. परिष्ठम् A. वरमत्यन्तम् Sy.

१५. कल्याणपुत्रपौत्रप्रदाः Sy.

१६. येष्वग्निषु Sy.

१७. कर्मणां नेतारो यजमाना ऋत्विजो वा Sy.

१८. सहासते Sy.

१९. सुजन्मानः Sy.

---

१ " " चिन्हान्तर्गत एव भागोऽस्या ऋचः ।

दा नो॑ अग्ने धि॒या र॒यिं सु॒वीरं॑ स्वप॒त्यं स॑हस्य प्रश॒स्तम् ।
न यं याव॒ तर॑ति यातु॒मावा॑न् ॥ ५ ॥

दा नः[1] । देहि । अस्मभ्यम् । अग्ने ! कर्मणा[2] । धनम्[3] । शोभनवीरम्[4] । शोभनपुत्रम्[5] । सहनरूश[6] । प्रशस्तम्[7] । यं रयिम् । अभिगन्ता शत्रूः[8] । न[9] । तरति[10] । हिंसावान्[11] ।

उप॒ यमेति॑ युव॒तिः सु॒दक्षं॑ दो॒षा वस्तो॑र्ह॒विष्म॑ती घृ॒ताची॑ ।
उप॒ स्वैन॑म॒रम॑तिर्वसू॒युः ॥ ६ ॥

उप यम् । उपैति[12] । यम्[13] । युवतिः[14] । सुबलम् । रात्रिन्दिवम्[15] । हविष्मती[16] । जुहूः[17] । उप । एनं[18] गच्छतु । मदीया[19] । विरामवर्जिता[20] । अर्थकामा[21] स्तुतिः ।

विश्वा॑ अग्ने॒ऽप॑ द॒हारा॑ती॒र्येभि॒स्तपो॑भि॒रद॑हो॒ जरू॑थम् ।
प्र नि॑स्व॒रं चा॑तय॒स्वामी॑वाम् ॥ ७ ॥

विश्वाः । सर्वाः[22] । अग्ने ! अचदह[23] । अरातीः[24] । यैः यः[25] । तेजोभिः । उहः[26] । रक्षः, जतूफं[27] गृणातः इति

---

१. दा ना A.
२. स्तोत्रेण Sy.
३. धन शोभ० A.
४. शोभनपुत्रपौत्रोपेतम् Sy.
५. शोभनपौत्रोपेतम् Sy.
६. सहनकुशल ! is suggested for सहनरूश ॥ अभिभवकुशल ! Sy.
७. श्रेष्ठम् Sy.
८. शत्रून् M. शत्रुः is suggested for शत्रूः ।
९. Omitted by M.
१०. बाधते Sy.
११. यातुमावान्; हिंसाया निर्गतः । नलोपाभावश्छान्दसः । यद्वा हिंसायुक्तः । परो वतिर्मत्वर्थीयः पूरकः Sy.
१२. उपगच्छति Sy.
१३. अग्निम् Sy.
१४. अग्निना नित्ययुक्ता Sy.
१५. रात्रि दिवम् A. VM. explains दोषा and वस्तोः together as रात्रिन्दिवम् ॥ रात्रावहनि च Sy.
१६. ०ष्मति A. हविषा युक्ता Sy.
१७. जुहूः A. घृतमञ्चतीति घृताची जुहूः Sy.
१८. तमेनम् Sy.
१९. मदीयो A स्वा स्वकीया Sy.
२०. दीप्तिः Sy.
२१. स्तोतॄणां धनमिच्छन्त्युपैति Sy.
२२. विश्वान् Sy.
२३. अचादह A. अपदह is suggested for अचदह ॥
२४. शत्रून् Sy.
२५. केर्यः A. यः seems to be redundant.
२६. Both the mss A., M. read here तेजोभिरुहो, which is evidently wrong. अदहः therefore is suggested for उहः । दहसि Sy.
२७. जत्र फं A. जरूथं is suggested for जतूफं ॥ परुषशब्दकारिणं राक्षसम् । गृणातेरूथन्प्रत्यये सति जरूथशब्दनिष्पत्तिः Sy.

यास्कः[1], परुष्वचशीलमपि[2] चा[3] जरयित् । प्रचातयस्व[4] । निशब्दम्[5] । रक्ष[6] ।

**आ यस्ते॑ अग्न इधते अनी॑कं वसिष्ठ शुक्र दीदि॑वः पाव॑क ।**
**उतो न॑ एभिः स्तवथै॑रिह स्याः ॥ ८ ॥**

आ यः । आभिमुख्येन[7] । अग्ने ! यः । ते[8] । तेजः संघातम्[9] । इन्धे[10] । श्रेष्ठ ! ज्वलन्[11] । दीप्त ! गोधक[12] ! तस्य मम[13] । अपि च । स्तोत्रैः । इह[14] । भव[15] ।

**वि ये ते॑ अग्ने भेजिरे अनी॑कं मर्ता नरः पित्र्यासः पुरुत्रा ।**
**उतो न॑ एभिः सुमना इह स्याः ॥ ९ ॥**

वि ये । विभेजिरे[16] । ये[17] । तव । अगै[18] रश्मिसङ्घं[19] समिन्धनेन । मनुष्याः[20] । नेतारम्[21] । पितृहिताः[22] । बहुषु देशेषु । अपि च तेषाम्[23] । अस्माकम् । एहि[24] स्तोत्रैः[25] । इह[26] । सुमनाः[27] । भवेति ।

**इमे नरो॑ वृत्रहत्ये॑षु शूरा विश्वा अदे॑वीरभि स॑न्तु मायाः ।**
**ये मे धियं॑ पनय॑न्त प्रशस्ताम् ॥ १० ॥**

इमे । इमे[28] । नरोऽस्मदीयाः[29] । सङ्ग्रामेषु । शूराः । विश्वाः[30] । आसुरीम्[31] । मायाम्[31] । अभि-

---

१. स्कः is missing in A. N. 6. 17.
२. परुष्व च शी० M. परुषस्वनशी० is suggested for परुष्व च शी० ॥
३. वा is suggested for चा ।
४. प्राचात० A. प्रकर्षेण नाशय । चयतिर्गत्यर्थो वेति भट्टभास्करः Sy.
५. निशवद A. निःशब्दम् is suggested for निशब्दम् ॥ न्यक्कृतोपतापं यथा भवति तथा 'स्वृ शब्दोपतापयोः' इति धातुः Sy.
६. रक्षः is suggested for रक्ष । रोगम् Sy.
७. अभिमु० A. ८. तव Sy.
९. ०घातः M.
१०. समेधयति Sy. ११. शुभ्र ! Sy.
१२. मोधक M. शोधक ! is suggested for गोधक ॥
१३. VM. seems to explain नः gen. plu. by मम gen. sing. तस्यैव नोऽस्माकम् Sy. १४. अस्मिन् यज्ञे Sy.
१५. VM. ignores एभिः ।
१६. विभजन्ते । आदधुरिति यावत् Sy.
१७. यजमानाः Sy.
१८. अग्ने is suggested for अगै ।
१९. तेजः Sy.
२०. मनुष्याः is missing in M.
२१. नेतारः is suggested for नेतारम् ॥ कर्मणां नेतारः Sy.
२२. पितृहिता आर्षेया वा Sy.
२३. तेषामिव Sy.
२४. एभिः is suggested for एहि ।
२५. एभिः स्तुतैः सह स्तोत्रैर्वा Sy.
२६. यज्ञे Sy. २७. अनुग्राहकमनाः सन् Sy.
२८. त इमे मयि स्निग्धाः Sy.
२९. मनुष्याः Sy. ३०. पिश्वा A. सर्वाः Sy.
३१. By the testimony of विश्वाः, आसुरीः and मायाः is suggested for आसुरीम् and मायाम् ।

भवन्तु । ये[1] । मे[2] । कर्म[3] । प्रशस्तम् । स्तुवन्ति[4] ।

**मा शूने अग्ने नि षदाम नृणां माशेषसोऽवीरता परि त्वा ।**
**प्रजावतीषु दुर्यासु दुर्य ॥ ११ ॥**

**मा शूने ।** माम्[5] । नृणाम्[6] । केवलत्वाय[7] । अग्ने ! त्वाम्[8] । परिनिषदाम[9] परिनिषीदन्तस्त्वामाश्रितान् भर्तु[10] शरोमः[11] । मा च । अनपत्यस्य[12] धनस्य । मा चावीरयुक्तस्य[13] धनस्य लाभाय । प्रजायुक्तेषु । गृहेषु[14] भवेम[15] । गृहपतयः[16] ।

**यमश्वी नित्यमुपयाति यज्ञं प्रजावन्तं स्वपत्यं क्षयं नः ।**
**स्वजन्मना शेषसा वावृधानम् ॥ १२ ॥**

**यमश्वी**[17] । यम्[18] । यज्ञम्[19] । अश्ववानग्निम्[20] । नित्यम् । उपगच्छति[21] । स यज्ञः प्रजायुक्तम्[22] । शोभनापत्यञ्च[23] । गृहम्[24] । अस्मभ्यं[25] प्रयच्छतु[26] । औरसेन । पुत्रेण । वर्धमानः[27] ।

**पाहि नो अग्ने रक्षसो अजुष्टात्पाहि धूर्तेररुषो अघायोः ।**
**त्वा युजा पृतनायूँरभि ष्याम् ॥ १३ ॥**

[**पाहि ।**][28] पाहि[29] । अस्मान् । अग्ने[30] ! रक्षसः[31] । अप्रियात[32] । पाहि । हिंसितुः[33] । अदातुः[34] ।

---

१. मनुष्याः Sy. २. मदीयाम् Sy.
३. प्रकृष्टां धियं कर्म स्तुतिं वा Sy.
४. स्तुवन्ति ब्रुवन्ति वा Sy.
५. मा is suggested for माम् ।
६. मा सृणा A. नृणामन्येषाञ्च गृहे मा निषदाम Sy.
७. शून्ये पुत्रादिरहिते गृहे Sy.
८. त्वां परिचरन्तः Sy.
९. ०निवदा० M. निवसाम Sy.
१०. ०माभृतान् भर्तं A.
११. शरे.मो A. शक्नुमः is suggested for शरोमः
१२. नवत्य A. आपुत्राः Sy. तोक्म शेष इति पुत्रनामनी Ngh. 2. 2.
१३. चापिर० A. अवीरतया युक्ताश्च सन्तः Sy.
१४. ग्रहेषु A. १५. गृहेषु निवसाम Sy.
१६. ग्रह.....त A. गृहपते ! is suggested for गृहपतयः ॥ गृहेभ्यो हित ! हे अग्ने ! Sy. १७. यमश्वि A.
१८. यम् is missing in M.
१९. यज्ञाश्रयम् Sy.
२०. अश्ववानग्नि A.. ०नग्निः is suggested for ०नग्निं ।
२१. ०च्छन्ति A. २२. भृत्यादिसहितम् Sy.
२३. ०नावत्य० A. शोभनसन्तानोपेतम् Sy.
२४. ग्रहम् M. २५. अभ्यम् A.
२६. हे अग्ने ! देहीति शेषः Sy.
२७. ०मानम् is suggested for ०मानः
२८. The *pratīka* is supplied by the Editor.
२९. रक्ष Sy. ३०. अग्नेः A.
३१. राक्षसात् Sy.
३२. ०यान् A. अप्रीतिविषयात् Sy.
३३. हिंसकात् Sy. ३४. किञ्चादातुः Sy.

अघमिच्छन[1]: । त्वया[2] । सहायेन[3] । युद्धकामान्[4] । अहमभिभवेयम् ।

**सेद॒ग्निर॒ग्नीँरत्य॒स्त्वन्यान्यत्र॑ वा॒जी तन॑यो वी॒ळुपा॑णिः ।**
**स॒हस्र॑पाथा अ॒क्षरा॑ स॒मेति॑ ॥ १४ ॥**

· **सेदग्निः** । सः । एव । अग्निः[5] । अन्यान्[6] परकीयान् । अग्नीन्[7] । अभिभवतु[8] । यस्मिन्[9] । हविष्मान्[10] । मम पुत्रौ[11] । दृढहस्तः[12] । बहुरक्षणः[13] । स्तोत्राणि[14] । समेति[15] ।

**सेद॒ग्निर्यो व॑नुष्य॒तो नि॒पाति॑ स॒मेद्धा॑र॒मंह॑स उरु॒ष्यात् ।**
**सु॒जा॒तासः॒ परि॑ चरन्ति वी॒राः ॥ १५ ॥**

**सेदग्निः** । सः । एव । अग्निः । यः । हन्तुः[16] । परिरक्षति[17] । यश्च समेद्धारम्[18] । अंहसः[19] । रक्षति[20] । शोभनजननास्तमिमम्[21] । परिचरन्ति । पुत्राः[22] ।

**अ॒यं सो अ॒ग्निराहु॑तः पुरु॒त्रा यमीशा॑नः॒ समिदि॒न्धे ह॒विष्मा॑न् ।**
**परि॒ यमेत्य॑ध्व॒रेषु॒ होता॑ ॥ १६ ॥**

**अयं सः** । अयम् । सः । अग्निः । आहुतः[23] । बहुषु देशेषु[24] । यम्[25] । ईश्वरः[26] । हविष्मान्[27] । सम् । इत् । इन्धे[28] । पर्येति[29] च । यम्[30] । यज्ञेषु[31] । होता[32] ।

---

१. पापमिच्छतः Sy. २. अपि च त्वया Sy.
३. सहयेन A. सहायभूतेन Sy.
४. पृतनाकामान् Sy.
५. अग्निराहवनीयादिरस्मदीयः Sy.
६. इतरान् अन्यदीयान् Sy. ७. अग्निन् A.
८. अहि भ० A. अतिभवतु Sy.
९. यस्मिन्नग्नौ Sy.
१०. स हविष्ठो A. अशनवान् बलवान् वा Sy.
११. पुत्रः is suggested for पुत्रौ अस्मत् पुत्रः Sy. १२. ०हस्तौ M. वीळु च्यौत्नमिति बलनामनी Ngh. 2.9.
१३. बह्वन्नो बहुस्थानो वा बहूदको वा Sy.
१४. क्षयरहितेन स्तोत्रेण Sy.
१५. सम्यक् परिचरन्नेति । समर्थपुत्रवत एवाग्निरन्यदीयानग्नीन् अभिभवतीति भावः Sy.
१६. हिंसकात् Sy. वनुष्यतिर्हन्तिकर्मा N. 5.2.
१७. पररक्षति A. अत्यन्तं रक्षति Sy.
१८. प्रबोधकम् Sy. १९. पापात् Sy.
२०. VM. explains उरुष्यात् by रक्षति but Sy. seems to explain उरुष्यात् by अधिकात्.
२१. यञ्च सुजन्मान एव Sy.
२२. वीराः स्तोतारः सुता वा Sy.
२३. आहुतिभिरभिहुतः Sy.
२४. बहुषु देशेषु यज्ञेषु वा Sy.
२५. अग्निम् Sy. २६. समृद्ध ऐश्वर्यमिच्छन् वा Sy. २७. यजमानः Sy.
२८. समे वृद्धे A. सम्यग्दीपयति Sy.
२९. चर्येति A. परिगच्छति Sy.
३०. यम् is missing in M.
३१. हिंसारहितेषु यज्ञेषु Sy.
३२. देवानामाह्वाता Sy.

**त्वे अ॑ग्न आहव॑नानि भूरी॑शानास आ जु॑हुयाम नित्या॑ ।**
**उभा कृ॒ण्वन्तो॑ वहतू मि॒येधे॑ ॥ १७ ॥**

**त्वे अग्ने** । त्वयि । अग्ने ! हवींषि । भूरीणि[1] । इ्वराणि[2] । आजुहुयाम[3] । नित्यानि[4] । उभौ । वहतू[5] स्तोत्रं शस्त्रञ्च । कृण्वन्तोऽपि[6] । यज्ञे[7] ।

**इमो अ॑ग्ने वीतत॑मानि हव्याज॑स्रो वक्षि दे॒वताति॑मच्छ॑ ।**
**प्रति॑ न ईं सुरभीणि॑ व्यन्तु ॥ १८ ॥**

**इमो** । इमान्येव । अग्ने ! कान्ततमानि[8] । हवींषि[9] । अनवरतः[10] । वह । देवसङ्घम्[11] । अभि[12] । प्रतिभक्षयन्तु[13] । अस्माकम्[14] । इमानि[15] । सुरभीणि[16] हवींषि देवाः ।

**मा नो॑ अग्ने॒ऽवीर॑ते परा॑ दा दु॒र्वास॑सेऽम॑तये मा नो॑ अस्यै॑ ।**
**मा नः॑ क्षु॒धे मा र॒क्षस॑ ऋतावो॒ मा नो॒ दमे॒ मा वन॒ आ जु॑हूर्थाः ॥ १९ ॥**

**मा नः**[17] । मा । अस्मान् । अग्ने ! पुत्रत्वाय[18] । परा दाः[19] । म[20] च । अशोभनवस्त्राय[21] । अमतये[22] । यस्यै[23] । मा च[24] । अस्मात्[25] । क्षुधे[26] । मा च । रक्षसे[27] । यज्ञवन्[28] ! मा । हिंसीश्च[29] । अस्मान् । ग्रहे[30] । मा न[31] । वनो[32] ।

---

१. बहूनि Sy.
२. ईश्वराणि is suggested for इ्वराणि धनानामीश्वराः सन्तः Sy.
३. आजुहवाम Sy.
४. नित्यान्यग्निहोत्रादीनि Sy.
५. वहतु M. वहनहेतू स्तोत्रं शस्त्रञ्च Sy.
६. कुर्वन्तः Sy.
७. ०न्तो यि यज्ञे A.
८. अतिशयेन कान्तानि Sy.
९. हव्यानि Sy.
१०. अनवरतः सन् Sy.
११. देवानां समूहम् Sy.
१२. It seems to be the explanation of अच्छ ॥ गच्छ च Sy.
१३. प्रतिव्यन्तु प्रत्येकं कामयन्ताम् Sy.
१४. अस्मदीयानि Sy.
१५. इमाग्नि A. एतानि हव्यानि Sy.
१६. सुरभिर्झि ह०A. शोभनानि Sy.
१७. हन A.
१८. अपुत्रतायै Sy.
१९. वरा दा A. देहि Sy.
२०. मा is suggested for म ॥
२१. ०स्त्राया A. दुष्टवस्त्राय Sy.
२२. अमतने A. अभिहान्यै Sy
२३. अस्यै is suggested for यस्यै ॥
२४. मा व A.
२५. अस्मान् is suggested for अस्मात् ।
२६. अशनायायै Sy.
२७. बलिने Sy.
२८. यज्ञवं A. हे सत्यवन् ! अग्ने ! Sy.
२९. जुहूर्थाः 'हुर्च्छा कौटिल्ये' इति धातुः Sy.
३०. गृणिः M. गृहे is suggested ग्रहे ।
३१. माण च A. मा च is suggested for मा न ॥
३२. A. वचनः M. वने is suggested for वनो ।

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ २० ॥

नू मे[1] । क्षिप्रम् । मह्यम्[2] । अन्नानि[3] । त्वम् । अग्ने ! इच्छगाधि गृहाणेति ब्रूहि त्वा[4][5] । हे देव[6] ! हविष्मद्भ्योऽन्नानि[7] । क्षासि[8] । वयं तव[9] । दाने । स्योम[10] । उभवा हविष्मन्तः स्तुतिमन्तश्च[11] । यूयम्[12] । वात[13] । अविनाशैः[14] । सदा । अस्मानित्यग्निरनुचरांश्चेति[15][16] ।

त्वमग्ने सुहवो रण्वसंदृक्सुदीती सूनो सहसो दिदीहि ।
मा त्वे सचा तनये नित्य आ धङ्मा वीरो अस्मन्नर्यो वि दासीत् ॥ २१ ॥

त्वमग्ने । त्वम् । अग्ने ! स्वाहावः[17] । रमणीयसन्दर्शनः[18] । शोभनदीप्त्या[19] । सहसः । पुत्रम्[20] । दीप्य[21] । मा[22] । त्वयि । वर्तमानो रश्मिः[23] । औरसे । पुत्रे । आदहनं करोतु[24] । मा[25] । वीरः[26] । नृभ्यो हितः[27] ।

---

१. नु मे M.

२. मदर्थम् Sy. ३. अन्न A.

४. इच्छमाधि A. उच्छशाधि is suggested for इच्छगाधि ॥ उत्कर्षेण शोधितानि कुरु Sy.

५. ब्रू इहि त्वा A. वा is suggested for त्वा

६. हि देव A. M. हे द्योतमानाग्ने ! Sy.

७. हविष्मद्भ्योऽस्मभ्यम् Sy.

८. रक्षसि or क्षरसि is suggested for क्षासि ॥ प्रेरय Sy.

९. चव A. त्वदीयायाम् Sy.

१०. स्याम is suggested for स्योम ॥ भवेम Sy.

११. उभव M. उभया is suggested for उभवा ॥ स्तोत्रिणः शस्त्रिणश्च, अथवा स्तुवन्तो यजमानाश्च वयम् Sy.

१२. त्वत्परिवाराश्च सर्वे Sy.

१३. पात is suggested for वात ॥ रक्षत Sy.

१४. अविनाशैः is suggested for अपिनाशैः अविनाशिभिर्मङ्गलैः Sy. स्वस्तीत्यविनाशनाम । अस्तिरभिपूजितः । सु अस्तीति N. 3.21.

१५. ०त्यग्निर्यनुचरांश्च हेति A. अग्नेरनु० is suggested for अग्निरनु

१६. VM. ignores आ ॥ आ अत्यर्थम् Sy.

१७. ०हापः A. स्वाह्वानः Sy.

१८. ०णीया स० A.

१९. ०भनादी० A. शोभनया दीप्त्या Sy.

२०. पुत्र ! is suggested for पुत्रम् ॥ सुत ! हे अग्ने ! Sy.

२१. दीप्यस्व is suggested for दीप्य M.

२२. माने M.

२३. सहायभूतः Sy.

२४. अभिधाक्षीः Sy.

२५. माप A.

२६. पुत्रः Sy.

२७. दृभ्यो A. नरहितः Sy.

अस्मत्तः[1] । अपक्षयं यातु[2] ।

मा नो॑ अग्ने दु॒र्भृ॑तये॒ सचै॒षु दे॒वेद्धे॑ष्व॒ग्निषु॒ प्र वो॑चः ।
मा ते॑ अ॒स्मान्दु॑र्म॒तयो॑ भृ॒माच्चि॑द्दे॒वस्य॑ सूनो सहसो नशन्त ॥ २२ ॥

मा नः । मा[3] । अस्मान् । अग्ने ! सहायभूतस्त्वम् । एषु । अनिषु[4] । अशोभनहरणाय[5] । प्रवोचः[6] । देवैरिद्धेषु[7] । मा । तव । अस्मान् । दुर्मतयः[8] । भ्रमणशीलस्वभावाः[9] । देवस्य[10] । हे सहसः सूनो[11] ! व्याप्नु-वन्तः[12] ।[13][14]

स मर्तो॑ अग्ने स्वनीक रे॒वानम॑र्त्ये॒ य आ॑जु॒होति॑ ह॒व्यम् ।
स दे॒वता॑ वसु॒वनिं॑ दधाति॒ यं सू॒रिर॒र्थी पृ॒च्छमा॑न॒ एति॑ ॥ २३ ॥

स मर्तः[15] । सः । मनुष्यः । अग्ने ! शोभनज्वालानिक[16] ! थनवान भवति[17] । अमर्त्ये त्वयि[18] । वा[19] ।

---

१. अपि चास्मत् पृथग्भूतो ऽस्माकं वा । षष्ठ्यर्थे पञ्चमी Sy.

२. उपक्षीयेत Sy.

३. न Sy.

४. अग्निषु is suggested for अनिषु ।

५. एष्वनिष्वशो॰ A.

६. ॰नभर॰ is suggested for ॰नहर॰ । कृच्छ्रभरणाय Sy.

७. ब्रूहि । त्वत्सहायभूता अग्नयो यथा मामकृच्छ्रेण बिभृयुस्तथा ब्रूहीत्यर्थः Sy.

८. वेवेरि॰ A. ऋत्विग्भिः समिद्धेषु Sy.

९. निग्रहबुद्धयः Sy.

१०. ॰लाग्रमणनील॰ A. भृमात्-भ्रमादपि । अत्र सम्प्रसारणं छान्दसम् । प्रमादादपीत्यर्थः Sy.

११. द्योतमानस्य Sy.

१२. हे बलस्य पुत्राग्ने ! Sy.

१३. व्याप्नुववन्तः A. व्याप्नुवन्तु Sy. नशदिति व्याप्तिकर्मा Ngh. 2. 18.

१४. VM. ignores चित्.

१५. वसिष्ठस्त्रिष्टुभाग्निं तुष्टाव । चतुर्थेऽहनि एकविंशस्तोमखण्डे 'अग्निं नरः' RV. 7.1.1. 'इत्याज्यम्' (SSS. 11.15.2.) ऋग्विधाने पुत्रानायुरथारोग्यमिति DDN.

१६. ॰लानीक is suggested for ॰लानिक ॥ सुतेजस्क ! हे अग्ने ! Sy.

१७. धनवान् is suggested for थनवान् ॥ रेवान्-'नकार आकारोपधः'॰ RPR. 4.65. इति नलोपे प्राप्ते पादान्तत्वान्न DDN.

१८. मनुष्ये देवतात्मनि त्वयि Sy. DDN.

१९. व A. यः is suggested for वा ॥ निर्धनोऽपि यः DDN.

आजुहोति । हविः । सः[1] । देवतानाम्[2] । धनदानम्[3] । धारयति । यम्[4] । विद्वान्[5] । धनदानार्थम्[6] । प्रच्छन्[7] । एत्युदारम्[8] ।

महो नो अग्ने सुवितस्य विद्वान्रयिं सूरिभ्य आ वहा बृहन्तम् ।
येन वयं सहसावन्मदेमाविक्षितास आयुषा सुवीराः ॥ २४ ॥

महः । महान्तम्[9] । अस्मभ्यम्[10] । अग्ने ! अभ्युदयम्[11] । जानन् । धनम् । स्तोतृभ्यः[12] । आवहम्[13] । महत्[14] । येन, वयम्[15], धनेन[16] । बलवन्[17] ! माद्येम[18] । अक्षिणा[19] । आयुषा[20] । शोभनवीराः[21] ।

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥

**नू मे** । सेयमेकस्मिन्नपि सूक्ते द्वि[22] पठिता विराट् । द्विरग्निं[23] स्तुत्वा सकृदुपसंहृत्य पुनरप्यन्यैश्च नौति[24] स्तुत्वोपसंहार इति ।[25]

कुशिकानां कुले जातो माधवः सुन्दरीसुतः ।
पञ्चमस्याष्टकस्याद्यमध्यायं व्याकरोदिति ॥

---

१. मर्तो मनुष्यः Sy. स एवापरो देवता DDN.
२. स एव मनुष्यो देवताभ्यः Sy.
३. धनपोषं ददाति Sy. धनसम्भजनम् DDN.
४. मर्त्यम् Sy. मनुष्यम् DDN.
५. प्राज्ञः Sy. DDN.
६. धनार्थम् A. धनादिकामः, अर्थी याचकः DDN.
७. पृच्छन् is suggested for प्रच्छन् ॥ असावुदारः क्वास्त इति पृच्छन् Sy. असावुदारः क्वास्ते, असावुदारा किङ्करोतीति पृच्छन् DDN.
८. अभिगच्छति....यद्वा स देवताग्निर्वसुवनिं यजमानं दधाति धारयति यमग्निं सूरिः स्तोतार्थी प्रयोजनवान् पृच्छमानः ? कोऽसावग्निरिति पृच्छमान ? एति Sy. अभिगच्छति DDN.
९. महतः Sy.
१०. अस्मदीयस्य Sy.
११. ०दय M. कल्याणस्य कर्मणः । अस्मदीयस्य कल्याणं कर्म Sy.
१२. त्वं स्तोतृभ्यो ऽस्मभ्यम् Sy.
१३. ०वहं अहृत् M. आवह is suggested for आवहम् ॥
१४. महान्तम् Sy.
१५. येन....रवयं धनेन A.
१६. स्तोतारः Sy.
१७. हे बलवन् ! अग्ने ! Sy.
१८. हृष्येम Sy.
१९. अक्षीणाः is suggested for अक्षिणा ॥ अविक्षीणाः Sy.
२०. पूर्णायुषा Sy.
२१. कल्याणपुत्रपौत्राश्च सन्तः Sy.
२२. द्विः is suggested for द्वि ।
२३. विरा हिरग्नि स्तु० A.
२४. रप्येन्यैच्छनोति A. स्तौति Or नौति is suggested for नोति M.
२५. इयमृक् प्रागेव (RV. VII. 1. 20.) व्याख्याता Sy.

# ॥ अथ पञ्चमाष्टके द्वितीयाध्यायः[1] ॥

अथाध्यायं[2] 'जुषस्व नः' व्याचिख्यासति माधवः ।
गोत्रेष्वृषीणां[3] वक्तव्यमादावेव प्रदर्शयन् ॥ १ ॥
पित्रादिषु[4] प्रसिद्धेन येन[5] नाम विशेष्यते ।
वेदेष्वृषीणां[6] तद्गोत्रं ज्ञातव्यं[7] तत्र वैदिकैः ॥ २ ॥
जेतुः पिता मधुच्छन्दाः श्यावाश्वस्य पितामहः ।
पितामहो गौरिवीतेर्[8]गोत्रत्वेन प्रदर्शितः[9] ॥ ३ ॥
अपालाऽत्रिकुले[10] जाता विश्ववारा च तादृशी ।
दूरस्थोऽत्रिस्तयोर्गोत्रं बहवः सन्ति तादृशाः ॥ ४ ॥
पितरौ[11] मित्रावरुणौ वसिष्ठस्येत्यपि[12] श्रुतम् ।
उतासि मैत्रावरुणः प्रवरेषु पुनस्तयोः ॥ ५ ॥
पुत्रस्थाने समावेशाद् वसिष्ठो[13] मैत्रावरुणिः ।
तत्राहुः कारणं प्राज्ञा विदेहो[14] हि शशाप[15] तम् ॥ ६ ॥

---

१. Supplied by the Editor.

२. A. writes **अथ** separately from **अध्यायः ।** M. adds **श्रीः** before **अथ.**

३. **गोप्त्रेष्वृषणां** A.

४. **वित्रा०** A.

५. **०द्धेन नामधेयन विशे०** A.

६. **वैवेष्वृषुणां** A.

७. **०तव्यन्तप वै** A.

८. **वी** is missing in A.

९. **०र्शिता** A.

१०. **०लातिकुले जाजा विश्व०** A.

११. **वितरौ** A.

१२. **०त्यृचि** R. Cf. RV. VII. 33. 11.

१३. **०वेशो वासिष्ठ मैत्रावरुण (णा** M.**)** A., M. The reading of the Mss. does not give any sense. The reading of R. is adopted therefore.

१४. **०ज्ञा सिषवेहो** A.

१५. **शशप** A. **०ऽभिशशाप** R.

ऋषे भव[1] विदेहस्त्वमृषिः शप्तः समाविशत्[2] ।
अहोरात्रे योगबलात्तौ[3] मित्रावरुणौ स्मृतौ[4] ॥ ७ ॥
ददर्श[5] मन्त्रांश्च तदा पुत्रश्चाभूत्[6] पुनस्तयोः ।
क्रमेणार्षेयवरणमुपपन्नं तयोरिति ॥ ८ ॥
विश्वामित्रजमदग्नी तथा वसिष्ठ[7] एव च ।
इन्द्रो अगस्त्यो[8] मरुतो गोत्रं नैषु[9] प्रदृश्यते ॥ ९ ॥
यद्यप्यृषीणां सप्तानां ब्राह्मणेषु[10] दृश्यते ।
गोत्रं तथापि विज्ञेयमृक्षु गोत्रनिवेशनात्[11] ॥ १० ॥
असगोत्रो भवेच्छ्राद्धे[12] सगोत्रात्तन्तुमाहरेत् ।
न प्रयच्छेद्दुहितरं सगोत्रायेति च स्मृतिः ॥ ११ ॥
किमेतेषु मनुष्याणां गोत्रमित्यभिधीयते ।
वक्तव्यं छान्दसनैतद्धर्म[13]शास्त्रपरैरिव[14] ॥ १२ ॥
कौतूहलनिवृत्यर्थमथ चास्माभिरुच्यते ।
गोत्राणां तु सहस्राणि प्रयुक्तान्यर्बुदानि[15] च ॥ १३ ॥

---

१. ऋषेर्भव A.

२. ०विगत् A.

३. ०लान्तौ A.

४. स्पृतो A.

५. दश म० A.

६. ०श्चाहूत् A.

७. ०ग्नि तदुपासिष्ठमेतेन वा A. ०ग्नि तदु वासिष्ठमैन वा M. The reading of R. is adopted here.

८. इन्द्रो ऽगस्त्यो A.,R.

९. नेषु प्रदश्यते A.

१०. गोत्रमेषु R. ०षुदन् दृ० M. R. adds न between ब्राह्मणेषु and दृश्यते ।

११. निदर्शनात् R.

१२. दवे० A.

१३. व्यश्छान्दसैर्नेतं A. छान्दसैर्नेतत् is suggested for छान्दसनैतत्.

१४. ०स्त्रवरै० A.

१५. ०क्तान्यं बुदा० A.

कुलाख्यानि[1] हितानीह तानि गोत्राणि सन्तु नः ।
ननु[2] स्मरन्ति नैतानि[3] सम्प्रति ब्राह्मणा इमे ॥ १४ ॥
तर्हि गोत्रसहस्राणि प्रयुतान्यर्बुदानि[4] च ।
षश्रुतैः[5] सङ्गृहीतानि कतबोधायनादिभिः[6] ॥ १५ ॥
स्मरन्ति तानि[7] चित्तेषु सम्प्रतित्वेन मानवाः ।
मार्कण्डेयोऽस्मि माण्डूकस्तथा माण्डव्य इत्यपि ॥ १६ ॥
प्रदर्शयन् बहून् पक्षान् न कथञ्चिदपीच्छति ।
इतरेतरसम्बन्धं तदध्यायमिति ब्रुवन् ॥ १७ ॥
यदि ह्येतानि गोत्राणि मार्कण्डेयः समुद्वहेत् ।
माण्डूकस्य दुहितरमसगोत्राऽस्य सा यतः ॥ १८ ॥
तस्माद्वत्सादिकं गोत्रमिति माधवदर्शनम् ।
आपस्तम्बश्च[8] तानेव देवदृष्टानदर्शयत्[9] ॥ १९ ॥

## VII. 2.

**जुषस्वं नः सुमिधमग्ने अद्य शोचां बृहद्यंजतं धूममृण्वन् ।**
**उपं स्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततनः सूर्यस्य ॥ १ ॥**

**जुषस्वा**[10] । वसिष्ठ[11] ॥ जुषस्व[12] । नः[13] । समिधम् । अग्ने ! अद्य । प्रज्वल[14] च । बृहन्तम्[15] । यष्ट-

१. ०ख्या हिता० A. ०ख्याभिमता० R.
२. न तु R. ३. नेतानि A. चैतानि R.
४. ०न्यं बुदा A.
५. षं....श्रुतैः A. षद्छतैः R.
६. कम्बो धोय० A. काम्बोधोदय० M. the reading of R. is adopted here.
७. रानि चि० M. ८. ०स्तंबंच A.
९. देव दृष्ट न० A. वेदद्व० R.
१०. 'जुषस्व नः' इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । आप्रशब्दोक्तत्वादिदं तनूनपाद्रहितम् । समिद्धाद्या अग्निविशेषाः प्रत्यृचं देवता उक्ताः । तथा चानुक्रम्यते—'जुषस्वैकादशाप्रम्' (KSA. 34. 2. p. 24.) इति । पशाविष्टाविदमाप्रीसूक्तम् । सूत्रितञ्च—'जुषस्व नः समिधमिति वसिष्ठानाम्' (ASS. 3. 2.) । पत्नीसंयाजे त्वाष्ट्रयागस्य याज्या त्वाष्ट्रे पशावपि पुरोडाशस्यानुवाक्येयमिति पूर्वमुक्तम् Sy.
११. वसिष्ठे A. वसिष्ठः is suggested for वसिष्ठ ।
१२. सेवस्व Sy. १३. अस्माकम् Sy.
१४. दीप्यस्व च Sy. १५. अत्यन्तम् Sy.

व्यम्[1]। धूमम्। उद्गमयन्[2]। उपस्पृश च। दिवि भवम्[3]। समुच्छ्रितम्[4]। आदित्यतेजःसङ्घातैः[5]। सङ्गच्छस्व। सूर्यस्य। रश्मिभिरिति[6]।

**नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः।**
**ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥ २ ॥**

नराशंसस्य। नराशंसस्य[7]। महिमानम्[8]। एषां[9] यजमानानामर्थाद्वयम्[10]। उपस्तुमः[11]। यष्टव्यस्य[12]।

---

१. यजनीयं प्रशस्तम् Sy.

२. प्रेरयन् Sy.

३. भव A. अन्तरिक्षभवम् Sy.

४. तमुच्छ्र० A.

५. तप्तै रश्मिभिः Sy.

६. तेजोभिः Sy.

७. नरैः प्रशंसनीयस्याग्निविशेषस्य Sy. नरा अस्मिन्नाशंसन्तीति नराशंसोऽग्निः प्रजापतिर्वा, नरैः प्रशस्यो भवतीति वा नराशंसस्य प्रजापतेरग्नेर्वा Mah. नरा अस्मिन्नासीनाः शंसन्तीति नराशंसो यज्ञः। प्रजापतिर्वा ऽग्निर्वा। नरैः प्रशस्यो भवतीति नराशंसः। तस्य U. नराशंसः....कस्मात् ?....नरशब्दः पूर्वपदम्। आसेर्निष्ठान्तस्य मध्यम्। शंसतेरुत्तरपदम्। अथ कोऽर्थः ? नराः मनुष्या अस्मिन्नासीना उपविष्टा शंसन्तीति नराशंसः। ....योऽयमेषामभिमतफलदाता नराणां नराशंसो यज्ञो द्रव्यदेवतात्यागात्मकः प्रयोगः। तस्याधिष्ठाता तद्व्यग्नौ देवताविशेषे जगदुत्पत्त्यनुग्रहबीजम् Dur. नरो होतृप्रभृतयोऽस्मिन् प्रकृत आसीनाः शंसन्तीति यज्ञो ऽन्यपदार्थः। अग्निर्वा ऋत्विग्यजमानैर्नरैः प्रशस्यत्वान्नाराशंसानि ।....नराशंसो यज्ञो ऽग्निर्वा तस्य SKN. नराशंसो यज्ञ इति कात्थक्यः। नरा अस्मिन्नासीनाः शंसन्ति। अग्निरिति शाकपूणिः। नरैः प्रशस्यो भवति N. 8.7.

८. महत्त्वम् Sy. महाभाग्यम् Mah., U. एतस्य महिमानं महाभाग्यं विभूतिम् Dur. माहात्म्यम् SKN.

९. तेषामेषां मध्ये Sy.

१०. यजमानाम० A. देवानां मध्ये वयम् Mah. देवगणानां मध्ये U. ऋत्विजां देवानां वा वक्ष्यमाणानां वा। षष्ठीश्रुतेः सम्बन्धिन इति शेषः SKN.

११. उमस्तु० A. वयमुपस्तुमः Sy. उपगम्य.... स्तुमोऽभिकीर्तयामः Dur.

१२. युष्ट० A. यजनीयस्य Sy. यजतेरतच्प्रत्ययः Mah. कथम्भूतस्य नराशंसस्य। यजतस्य यष्टव्यस्य U. यजनसम्पादयितुः प्रयोक्तुरभिमतफलसम्पादयितुः Dur. यजेरयमर्हार्थे अतप्रत्ययः। यजनार्हस्य SKN.

यज्ञैः[1]। ये[2]। सुप्रजाः[3]। शुचयः[4]। कर्मणां धारयितारो[5] यजमानास्तेषाम्[6]। उभयानि[7] पाशुकानि[8] सौमिकानि[9] च। हवींषि[10]। स्वदन्ति[11]। देवता[12] नराशंसः पूजयामास सदैव यज्ञार्थम्[13]।

---

१. यज्ञैर्हविर्भिः स्तोत्रैर्वा Sy. आहुतिभिः U. कर्मभिर्युक्ता उपस्तुमः। यदेवमेवास्मिन्नुपस्तुतमहिम्नि नराशंसे यज्ञे किमप्यस्त्वित्याशास्महे Dur. सप्तम्यर्थे तृतीया। ज्योतिष्टोमादिषु यज्ञेषु। यज्ञपक्षे यज्ञार्हस्य महाफलस्य जगतः स्थितिहेतोर्ज्योतिष्टोमादेः। यज्ञैरिति—'इत्थम्भूतलक्षणे' (Pa. 2.3.21.) तृतीया। अभ्यासापेक्षं बहुवचनम्। यागाभ्यासैरित्थम्भूतस्य SKN.

२. ये देवाः Sy., Mah. तस्य च महिमानमासाद्य ये देवाः U. उपस्तुते चास्मिन्वा ये SKN.

३. सुप्रज्ञाः is suggested for सुप्रजाः॥ सुप्रज्ञाः सुकर्माणो वा Sy. शोभनः क्रतुः कर्म येषां ते Mah. सुकर्माणः U. जगदनुग्रहप्रवृत्ताः Dur. क्रतुरिति कर्मनाम। सुकर्माणः SKN.

४. दीप्तिमन्तः Sy. शुद्धा निष्पापाः Mah. निषिक्तपाप्मानोऽणिमाद्यैश्वर्ययुक्ताः U. निर्णिक्ततरपापा Dur. दीप्ताः SKN.

५. धियं बुद्धिं कर्म वा दधतीति। अलुगार्षः Mah. प्रज्ञायाः कर्मणो वा धारयितारः U. स्वाधिकारप्रयुक्तानां कर्मणामनुविधारयितारः प्रज्ञानां यज्ञानां वा Dur. कर्मणः प्रज्ञाया वा तधारयिारः SKN.

६. ०मानस्ते० A. एवमादिगुणयुक्ता देवास्ते Dur. यच्छब्दश्रुतेस्तच्छब्दाध्याहारः। ते SKN.

७. उभयानि सौमिकानि च हविःसंस्थादीनि Sy. सोमम्, इतराणि च Mah. सोमं चेतराणि च हवींषि तान्त्राणि प्रयाज्यभागस्विष्टकृत्प्रभृतीन्यावापिकानि प्रधानान्युभयानीति U. यदि सौमिकः पशुस्ततः सोमं च इतराणि पशुपुरोळाशधानाप्रभृतीनि। अथ पृथक् सोमात्ततस्तान्त्राणि प्रयाज्याज्यभागस्विष्टकृत्प्रभृतीनि, आवापिकानि च प्रधानहवींषि इत्येतदाशास्महे Dur. हवींषि सौमिकानि पाशुकानि च। अथवा तान्त्राण्यङ्गहवींषि आवापिकानि च प्रधानहवींषीत्यर्थः SKN.

८. पशुका० A.

९. सौम्यानि M.

१०. हव्यानि Sy.

११. स्वदयन्ति भक्षयन्ति Sy. भक्षयन्ति Mah., U. आस्वादयन्त्वेतानि हव्या हवींषि Dur. लोडर्थे पञ्चमः। आस्वादयन्त्वित्यर्थः SKN.

१२. देवाः कर्माङ्गभूताः SKN.

१३. अग्निरिति शाकपूणिमते-योऽयमेषामभिमतोपकारी नराणां प्रशस्यो नराशंसो ऽग्निस्तस्य वयमुपस्तोषाम उपस्तुमो महिमानं यजतस्य यज्ञसम्पादयितुर्यज्ञैः कर्मभिर्दानैर्वा संयुक्ताः, तस्मिन्नुपस्तुतमहिम्नि नराशंसेऽग्नौ हुतानि, ये सुक्रतवो देवाश्शुचयो धियन्धास्ते, एतान्युभयानि हवींष्यास्वादयन्त्वित्येतदाशास्महे Dur. नराशंसो यज्ञ इति कात्थक्यः। नरा अस्मिन्नासीनाः शंसन्ति। अग्निरिति शाकपूणिः। नरैः प्रशस्यो भवति। तस्यैषा भवति ....नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैः। ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि। सोमं चेतराणि चेति वा। तान्त्राणि चावापिकानि चेति वा N. 8.7., SKN III. 127. This stanza=YV. 29.27.

ई॒ळेन्यं॑ वो॒ असु॑रं सु॒दक्ष॑म॒न्तर्दू॒तं रोद॑सी स॒त्यवा॑चम् ।
म॒नु॒ष्वद॒ग्निं मनु॑ना॒ समि॑द्धं॒ सम॑ध्व॒राय॒ सद॒मिन्म॑हेम ॥ ३ ॥

ईलेन्यम्[1]—

स॒प॒र्यवो॒ भर॑माणा अभि॒ज्ञु प्र वृ॑ञ्जते॒ नम॑सा ब॒र्हिर॒ग्नौ ।
आ॒जुह्वा॑ना घृ॒तपृ॑ष्ठं॒ पृष॑द्व॒दध्व॑र्यवो ह॒विषा॑ मर्जयध्वम् ॥ ४ ॥

**सपर्यवः**[2] । परिचरणमिच्छन्तः । अरण्यादाहरन्तः[3] । अहिगतजानुकम्[4] । प्रहरन्ति । हविषा सह[5] । बर्हिः । अग्नौ । अभिमुखं जुह्वानाः । घृतपृष्ठम्[6] । नानावर्णं[7] बर्हिः[8] । हे अध्वर्यवः ! अग्नि[9] । हविषा[10] । परिचरतः[11] ।

स्वा॒ध्यो॒३॒ वि दुरो॑ देव॒यन्तो॑ऽशिश्रयू रथ॒युर्दे॒वता॑ता ।
पू॒र्वी शिशुं॒ न मा॒तरा॑ रिहा॒णे सम॒ग्रुवो॒ न सम॑नेष्वञ्जन् ॥ ५ ॥

**स्वाध्यः** । सुकर्माणः[12] । देवानिच्छन्तः[13] । व्यशिश्रयुः[14] । यज्ञद्वाराणि[15] विवृतानि कुर्वन्ति । सङ्ग्रामजिगमिषया रथमिच्छन्तः[16], जसि पूर्वरूपम्[17] । यज्ञे[18] । अथ विवृतेषु द्वारेषु पूर्वैः प्राचीनैर्जुहूपहूतावह्निम्[19][20] । वत्सम् ।

---

१. Neither the *pratika* nor the commentary is found in mss. Sy. explains the stanza in the following manner:
**हे अध्वर्यवः ! वो यूयमीळेन्यं स्तुत्यमसुरं बलवन्तं सुदक्षं सुप्रज्ञं रोदसी रोदस्योरन्तर्मध्ये दूतं देवानां हविर्वहनार्थं चरन्तं सत्यवाचं मनुष्वत् मनुष्यवत् मनुना समिद्धं यथेदानीं मनुष्याः समिन्धते तथा पूर्वं मनुना प्रजापतिना समिद्धमग्निमध्वराय यज्ञाय सदमित् सदैव सं महेम । सम्पूजयत मध्यमपुरुषस्य व्यत्ययेनोत्तमपुरुषत्वम् ।**

२. **०र्यवम्** A.

३. **रणस्य उदाहरन्तः** A. **पादैर्भरन्तः** Sy.

४. **अहित** A. **अभिगत०** is suggested for **अहिगत०**

५. **ह** is missing in A.

६. **घृतसंसिक्तपृष्ठम्** Sy.

७. **स्थूलबिन्दुभिर्युक्तम्** Sy.

८. **बर्ही** A. **बर्हिः** is suggested for **बहिः**

९. **०ग्निः** M. **अग्निम्** is suggested for **अग्नि ।**

१०. **हविषा सह** Sy.

११. **०रत** is suggested for **०रतः । अग्निं परिचरत** Sy.

१२. **स्वकर्मणः** A. **स्वकर्माणिः** M.

१३. **देवकामा यजमानाः** Sy.

१४. **व्यशीश्रुयुः** A. **आश्रितवन्तः** Sy.

१५. **यज्ञगृहद्वाराणि** Sy.

१६. **रथयुः रथकामाश्च । जसि पूर्वसवर्णो ह्रस्वश्च** Sy.

१७. **पूवरू०** A.

१८. **देवतातौ यज्ञे** Sy.

१९. **पूर्वप्राचीनैः** A. The reading is doubtful.

२०. **०तावह्निम्** A. **०पभूतावग्निम्** is suggested for **०पहूतावह्निम् ।**

इव । मातरौ[1] । जिह्वया लिहाने[2] भवतस्तमग्निम् । उपस्थितेषु सङ्ग्रामेषु[3] जिगमिषवः । घृतं[4] समञ्जन्ति । यथा । नद्यो[5] जलेन क्षेत्राण्यञ्जन्तीति ।

**उत योषणे दिव्ये मही नं उषासानक्ता सुदुघेव धेनुः ।**
**बर्हिषदा पुरुहूते मघोनी आ यज्ञिये सुविताय श्रयेताम् ॥ ६ ॥**

उत योषणे । अपि च । स्त्रियौ[6] । दिवि भवे । उषासानक्ते[7] । महत्त्वात्[8] । अस्मान् । आश्रयेताम् । यथा सुदुघा[9] । धेनुराश्रयत्येवम्[10] । बर्हिषि सीदन्त्यौ[11] । बहुभिराहूते[12] । धनवत्यौ[13] । यज्ञार्हे[14] । अभ्युदयार्थमिति[15] ।

**विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातवेदसा यजध्यै ।**
**ऊर्ध्वं नो अध्वरं कृतं हवेषु ता देवेषु वनथो वार्याणि ॥ ७ ॥**

विप्रा यज्ञेषु । मेधाविनौ[16] । यज्ञेषु । मनुष्यकृतेषु[17] । कर्मशीलौ[18] । मन्ये[19] । वा[20] । जातप्रज्ञो[21] । यजिष्टव्यौ[22] तौ युवाम्[23] ! ऊर्ध्वम्[24] । अस्माकम् । यज्ञम[25] । कुरुतम् । आह्वानेषु[26] । तौ युवां यजमानानाम् । देवेषु[27] । भजथः[28] । धनानि ।

---

१. गावौ Sy.
२. अग्निं लिहाने Sy.
३. यज्ञेषु Sy.
४. घृत A. तद्वत् समञ्जन् अध्वर्यव आज्येन समञ्जन्ति Sy.
५. यथा नद्यः क्षेत्राण्युदकेन Sy.
६. स्त्रौ A. रन्त्यौ M. युवत्यौ स्त्रीरूपे वा Sy.
७. अहोरात्रे Sy.
८. ०हत्वा चास्मा A. महत्यौ Sy.
९. कामधुक् Sy.
१०. राश्र is written twice in A.
११. नीद० A. धेनुरिव Sy.
१२. बहुभिः स्तुते Sy.
१३. ०वत्येन A.
१४. यज्ञाहे A.
१५. कल्याणाय Sy.
१६. ०विनो A. हे वैव्या होतारौ ! मेधाविनौ ! Sy.
१७. मनुष्यैः क्रियमाणेषु Sy.
१८. ०शीलेन A. कर्मणां कर्तारौ Sy.
१९. स्तौमि Sy.
२०. वाम् is suggested for वा ॥ युवाम् Sy.
२१. ०प्रज्ञौ is suggested for ०प्रज्ञो ॥ जातधनौ Sy.
२२. यमृष्टव्यौ A. यष्टव्यौ is suggested for यजिष्टव्यौ ॥ यष्टुम् Sy.
२३. युवात् A.
२४. ऊर्ध्वम् is missing in M. देवाभिमुखम् Sy.
२५. अध्वरमकुटिलं यज्ञम् Sy.
२६. हवनेषु स्तोत्रेषु सत्सु Sy.
२७. देवेषु विद्यमानानि Sy.
२८. ०जथ A. सम्भजथः । तान्यस्मभ्यं सम्प्रयच्छथ इत्यर्थः Sy.

आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तु ॥ ८ ॥

[ आ भारती[1] ] उत्तराश्चतस्रो व्याख्याताः ।

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥ ९ ॥

[ तन्नः[2] । ]—

वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥ १० ॥

[ वनस्पते[3] । ]

आ याह्यग्ने समिधानो अर्वाङिन्द्रेण देवैः सरथं तुरेभिः ।
बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयन्ताम् ॥ ११ ॥

[ आ याहि[4] । ]—

---

१. The *pratika* is supplied by the Editor. These stanzas have already been explained in the 3rd. mandala, see III.4. 8-11. एतदाद्यृक्चतुष्टयं द्वितीयाष्टकस्याष्टमाध्याये (RV. III.4. 8-11) यद्यपि व्याख्यातं तथापि व्यवधानात् संक्षेपतोऽत्रापि व्याख्यायते । भारती भरतस्यादित्यस्य पत्नी भारतीभिः सजोषाः सहितेळा मनुष्येभिर्मनुष्यलोकभवैर्देवैः सार्धमग्निरागच्छतु । सरस्वती सारस्वतेभिः सारस्वतैर्मध्यमस्थानैर्देवैः सार्धमर्वागस्मदभिमुखमागच्छतु । आगत्य तिस्रो देवीर्देव्यः । प्रथमार्थे द्वितीया । बर्हिरिदमासदन्तु Sy.

२. The *pratīka* is supplied by the Editor. देव ! द्योतमान ! हे त्वष्टः ! रराणो रममाणस्त्वं नोऽस्माकं तुरीपं त्वरितमाप्नुवत् पोषयित्नु पोषकरं तद्रेतो वि स्यस्व । विशेषेणावसानं प्रापय । विमोचयेत्यर्थः । यतो रेतसः कर्मण्यः कर्मसु साधुः सुदक्षः सुबलो युक्तग्रावा सोमसुत् देवकामो वीरः पुत्रो जायते Sy.

३. The *pratīka* is supplied by the Editor. हे वनस्पते ! देवानुपाव सृज । अथ परोक्षस्तुतिः । अग्निर्वनस्पतिः शमिता शामित्ररूपः सन् हविः सूदयाति प्रेरयतु । सेत्स एव वनस्पतिर्होता देवानामाह्वाता सत्यतरोऽपि सन् यजाति यजतु । देवानां जनिमानि जननानि यथा स्वयं वेद तथा Sy.

४. The *pratīka* is supplied by the Editor. हे अग्ने ! समिधान ! अर्वागस्मदभिमुखस्त्वमिन्द्रेण तुरेभिस्त्वरितैर्देवैश्च सरथं समानरथं यथा भवति तथा आ याहि । आगच्छ । नोऽस्माकं बर्हिरध्यास्तामदितिश्च सुपुत्रा कल्याणपुत्रा । स्वाहा देवाश्च सर्वेऽमृताः सन्तो मादयन्तामिति Sy.

VII 3.

**अ॒ग्निं वो॑ दे॒वम॒ग्निभि॑: स॒जोषा॒ यजि॑ष्ठं दू॒तम॑ध्व॒रे कृ॑णुध्वम् ।**
**यो मर्त्ये॑षु॒ निध्रु॑विर्ऋ॒तावा॒ तपु॑र्मू॒र्धा घृ॒तान्न॑: पाव॒कः ॥ १ ॥**

अग्निम्[१]। अग्निम्[२] । यूयम्[३] । देवम्[४] । अन्यैरग्निभिः । सहितम्[५] । यष्टृतमम् । दूतम्[६] । यज्ञे[७] । कुरुत[८] । यः । मनुष्येषु । देवोऽपि सन्नभिमुखो[९] ध्रुवस्तिष्ठति[१०] । यज्ञवान्[११] । तापयितृनिरस्तः[१२] । घृतान्नः[१३] । शोधकः[१४] ।

**प्रोथ॒दश्वो॒ न यव॑सेऽवि॒ष्यन्य॒दा म॒हः संव॑रणा॒द्व्यस्था॑त् ।**
**आद॑स्य॒ वातो॒ अनु॑ वाति शो॒चिरध॑ स्म ते॒ व्रज॑नं कृ॒ष्णम॑स्ति ॥ २ ॥**

प्रोथदश्वः[१५] । प्रोथतिः[१६] शब्दकर्मा, शब्दं कुर्वन्[१७] । अश्वः । इव[१८] । अग्रतः स्थिते यवसे[१९] । भक्षणं करिष्यन्नयमग्निररण्यमत्तुम्[२०] । यदा[२१] । महतः । संवरणादन्योऽन्यसङ्घट्टिताच्छुष्कात्[२२][२३] काष्ठसङ्घातात् ।

---

१. 'अग्निं वो देवम्' इति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । अत्रेयमनुक्रमणिका—'अग्निं वो दश' (KSA. 34.3. p. 24.) इति । 'अग्निं वो देवम्' इत्येतदादीनि दश सूक्तानि तृतीयचतुर्थवर्जितानि प्रातरनुवाक आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे च विनियुक्तानि । सूत्रितञ्च—'अग्निं वो देवमिति दशानां तृतीयचतुर्थे उद्धरेत्' (ĀSS. 4.13.) इति । व्यूळ्हे दशरात्रेऽष्टमेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्र्यते हि—'द्वितीयस्याग्निं वो देवमित्याज्यम्' (ĀSS. 8. 10.) इति Sy.

२. The *pratīka* is supplied by the Editor.

३. हे देवाः ! वो यूयम् Sy.

४. द्योतमानम् Sy.

५. सजोषाः सजोषसं सहितम् । द्वितीयार्थे प्रथमा Sy. ६. दूतम् is missing in A.

७. कौटिल्यरहिते यज्ञे Sy.

८. कुरु A. ९. सह हिमु० A.

१०. वस्तिष्ठ० A. नितरां ध्रुवस्तिष्ठति Sy.

११. यज्ञीयान् A. सत्यवान् वा Sy.

१२. तापयितृशिरस्कः is suggested for तापयितृनिरस्तः ॥ तापकतेजाः Sy.

१३. ०न्न शोधक A.

१४. शोधकश्च भवति Sy.

१५. ०दश्च A. मथ्यमानोऽग्निः कथ्यते Mah. मथ्यमानोऽग्निरत्रोच्यते U.

१६. ०ति श० A. प्रोथतिः शब्दार्थः Mah. U.

१७. सञ्चरन् वा Sy. प्रोथयति शब्दायते Mah. शब्दायतेऽग्निः U.

१८. नं च A. यथा....अश्वः प्रोथति Mah.

१९. घासे Sy. घासम् Mah. यवसे घासे विषयभूते U.

२०. ०न्नमयम० A. भक्षयन् Sy. भक्षयिष्यन्,... अविष्यन्नित्यत्तिकर्मसु पठितम् Mah. ग्रसिष्यन् U.

२१. यथा M. यस्मिन् काले Mah. U.

२२. निरोधाह्वावरूपो ऽग्निः Sy. संव्रियतेऽस्मिन्नग्निरिति संवरणमरणिकाष्ठं तस्मात् Mah. संव्रियतेऽस्मिन्नग्निरिति संवरणमग्निकाष्ठमुच्यते । अरणिकाष्ठात् U.

२३. ०णारन्योन्यसङ्घाभिता शुष्का० A. ०न्योन्यसङ्घभीताच्छु० M.

व्यस्थात्[1] । अनन्तरमेव[2] । अस्य[3] । शोचिः[4] । वातः[5] । अनुवाति[6] । अथ प्रत्यक्षोदन्तरम्[7] । तव[8] । मार्गः[9] । कृष्णाः[10] । भवति[11] ।

**उद्यस्यं ते नवंजातस्य वृष्णोऽग्ने चरंन्त्यजरां इधानाः ।**
**अच्छा द्यामंरुषो धूम एंति सं दूतो अंग्न ईयंसे हि देवान् ॥ ३ ॥**

**उद्यस्य** । उच्चरन्ति[13] । यस्य । ते । नवजननस्य[14] । वर्षितुः[15] । अग्ने ! जरारहिताः । दीप्यमाना रश्मयः[16] । तस्य तदानी दिवम् । प्रति[17] । आह[18]—आरोचमानः । धूमः । एति । त्वं हि । देवानां दूतः सन् । दिवि स्थितान् । समीयसे[20] सङ्गच्छसे देवैरिति[21] ।

---

१. यस्वा A. यः स्वा M. सततेषु वृक्षेषु वितिष्ठते Sy. प्रोथदश्वो न यवसे । ऽविष्यन्यदा महः संवरणाद् व्यस्थात् । आदस्य वातो ऽअनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्तीति यदा वा ऽएतस्य वातो ऽनुवाति शोचिरथैतस्य व्रजनं कृष्णं भवति त्रिष्टुभोपदधाति त्रैष्टुभो हि वायुराग्ने य्याग्निकर्म ह्यनिरुक्तयानिरुक्तो हि वायुरथ यद्वात इत्याह वातो हि वायुः । वितिष्ठते प्रकाशो भवति Mah. व्यत्तिष्ठते प्रकाशीभवति U.

२. पन्नं तर० A. पन्नतर० M. तदा Sy. अस्यानन्तरं वह्निज्वलनशब्दानन्तरम् Mah. अथानन्तरमेव U.

३. अग्नेः Sy. Mah. U.

४. अर्चिः Sy. शोचयति ज्वलयति शोचिः, अग्नेः सन्दीपनः । शोचिरिति ज्वलन्नामसु पठितम् । यद्वाऽस्य शोचिर्ज्वालामनुलक्ष्य वातो वाति Mah. शोचिः सन्दीपनः U.

५. वायुः Mah.

६. अनुपादि A. अग्निमनुलक्ष्य प्रसरति । वाय्वग्न्योः सख्यादिति भावः Mah.

७. अघ M. अघेति निपातोऽस्यार्थः । अथ वातेनाग्नौ ज्वलिते सति स्मेति निपातः पादपूरणः Mah. अघ अथ समानार्थौ छन्दसि । स्मनिपातोऽनर्थकः U.

८. ०त्यक्षोऽनन्त० or ०त्यक्षः—अनन्त० is suggested for ०त्यक्षोदन्त० ।

९. हे अग्ने ! तव Sy. त एतस्याग्नेः । . . . श्रुत्या त इति पदमेतस्येति व्याख्यातं परोक्षत्वान्मन्त्रस्य । 'अथैतस्य व्रजनं कृष्णं भवति (8.7.3.12.) इति श्रुतेः Mah. ते, अथैतस्येत्यर्थः । नह्यत्र युष्मदः प्रयोगः परोक्षकृतत्वान्मन्त्रस्य । श्रुतिरप्यमुमर्थं दर्शयति U.

१०. मार्गम् A. वर्त्म Sy. व्रजत्यत्रेति व्रजनं गमनस्थानम् Mah. व्रजति गच्छत्यनेनेति व्रजनम् U.

११. कृष्णम् Sy. कृष्णमस्ति श्यामं भवति । 'कृष्णवर्त्मा हुताशनः' इत्युक्तेः Mah. कृष्णं भवति U.

१२. VM. ignores स्म । स्मेति पूरणः Sy. This stanza - YV. 15. 62.

१३. उद्गच्छन्ति Sy.

१४. नवप्रादुर्भावस्य Sy.

१५. वर्षातुः A.

१६. ज्वालाः Sy.

१७. प्रति seems to be the explanation of अच्छ ।

१८. अत आह—is suggested for आह ।

१९. अभ्येति गच्छति Sy.

२०. सम्प्राप्नोषि Sy.

२१. VM. explains अग्ने once only.

**वि यस्य॑ ते पृथि॒व्यां पाजो॒ अश्रे॑त्तृ॒षु यदन्ना॑ स॒मवृ॑क्त॒ जम्भैः॑ ।**
**सेनेव सृष्टा प्रसि॑तिष्ट एति॒ यवं॒ न द॑स्म जु॒ह्वा॑ विवेक्षि ॥ ४ ॥**

वि यस्य[1][2] । विविधं श्रयन्ति[2] । यस्य[3] । ते दापहूतस्य[4] । पृथिव्याम्[5] । तेजः । क्षिप्रम्[6] । यदा । अन्नानि काष्ठलक्षणानि । दन्तैः[7] पाजः[7] । संपृक्ते[8] । तदानीं सेनेव । उद्युक्ता[9] । ज्वाला । ते । एति[10] प्रबन्धनीतिं च[11] । तदानीं[12] यथा । यवं[13] पशुरेवम् । दर्शयन्ति यत्त्व[14] । ज्वालयाऽख्यम्[15] । व्याप्नोषीति[16] ।

**तमिद्दो॒षा तमु॒षसि॒ यवि॑ष्ठम॒ग्निमत्यं॒ न म॑र्जयन्त॒ नरः॑ ।**
**नि॒शिशा॑ना॒ अति॑थिमस्य॒ योनौ॑ दी॒दाय॑ शो॒चिराहु॑तस्य॒ वृष्णः॑ ॥ ५ ॥**

तमिद्दोषा[17] । तम् । एव । रात्रौ[18] । तम् । असि[19] । यविष्ठम्[20] । अग्निम् । अश्वम्[21] । इव घासैः[22] । परिचरन्ति[23] । मनुष्याः । तीक्ष्णीकुर्वन्तः[24] । अतिथिम्[25] । अस्यातिथेः[26] । स्थान आहवनीये[27] तदानीम् । आहुतस्य । वर्षितः[28] । शोचिः[29] । दीप्यते ।

---

१. विश्वस्य A.
२. श्रयति is suggested for श्रयन्ति । विश्रयति Sy.
३. वस्य A. हे अग्ने ! यस्य दावरूपस्य Sy.
४. उपहूतस्य M. दावभूतस्य is suggested for दापहूतस्य
५. भूम्याम् Sy.
६. प्रं is written twice in A.
७. वाजः A. ज्वालाभिरित्यर्थः Sy.
८. संपृक्तैः A. संवृक्ते is suggested for संपृक्ते । समवृक्त वृङ्क्ते खादति Sy.
९. इद्युक्ता A.
१०. एवेति A. गच्छति Sy.
११. ०नीति चं M. प्रबध्नाति is suggested for प्रबन्धनीतिम् ।
१२. missing in M.
१३. वयम् A.
१४. दर्शयन्ति यत्त्वज् M. दर्शनीयाग्ने ! यत्त्वम् is suggested for दर्शयन्ति यत्त्व ।
१५. ०लधार० A.
१६. व्यप्नो० A. काष्ठादीनि भक्षयसि व्याप्नोषि वा Sy.
१७. तमिदेषा A.
१८. दोषायाम् Sy.
१९. अग्निः A. उषसि is suggested for असि ॥ वासरेऽपि Sy.
२०. युवतमम् Sy.
२१. अश्व M. सततगमनयुक्तं वोढारमश्वमिव Sy.
२२. वासैः A.
२३. परच० A.
२४. दीपयन्तः Sy.
२५. तिथिम् M. अतिथिवत्पूज्यम् Sy.
२६. अस्य तिथेः A.
२७. आहवनीयायतने धिष्ण्ये वा Sy.
२८. वर्षितुः is suggested for वर्षितः ॥ कामानां वर्षितुः Sy.
२९. शौचिः A. ज्वाला Sy.

**सुसंदृक्ते स्वनीक प्रतीकं वि यद्रुक्मो न रोचस उपाके ।**
**दिवो न ते तन्यतुरेति शुष्मश्चित्रो न सूरः प्रति चक्षि भानुम् ॥ ६ ॥**

**सुसंदृक्**[1] । शोभनसन्दर्शनम्[2] । ते । शोभनज्वालानीक[3] ! अङ्गम्[4] । यदा । आदित्यः[5] । इव । मनुष्याणामन्तिके । विरोचसे[6] दावभूतः । तदा द्युलोकात्[7] । इव । अशनिः । एति[8] । ते । शोषकं ज्योतिः[9] । स त्वं चित्ररूपः[10] । सूर्यः । इव सर्वतः । प्रदर्शयसि । दीप्तीरिति[11] ।

**यथा वः स्वाहाग्नये दाशेम परीळाभिर्घृतवद्भिश्च हव्यैः ।**
**तेभिर्नो अग्ने अमितैर्महोभिः शतं पूर्भिरायसीभिर्नि पाहि ॥ ७ ॥**

**यथा**[12] । यथा[13] । तुभ्यम् । अग्ने यवम्[14] । स्वाहाकारम्[15] । पितरोः[16] । मिदाशेम[17] । इळेति[18] गोनाम, पश्वाहुतिभिः[19] तथा घृतवद्भिः[20] । च । पुरोडाशैः[21] तथाऽस्मात् । अग्ने ! तैस्त्वदीयैः[22] । तेजोभिः । बहुभिः[23] । नितराम् । रक्ष । शतेन[24] । पुरैरिव[25] । अयसा[26] निर्मितैरित्यौपमिकमिति ।

**या वा ते सन्ति दाशुषे अधृष्टा गिरो वा याभिर्नृवतीरुरुष्याः ।**
**ताभिर्नः सूनो सहसो नि पाहि स्मत्सूरीञ्जरितॄञ्जातवेदः ॥ ८ ॥**

**या वा** । याः । वा । ते । भवन्ति । यजमानरक्षणार्थम्[27] । रक्षोभिरनभिभूता दीप्तयः[28] । गिरः[29] ।

---

१. **सुसदृकः** A.
२. Omitted in M. **सुसन्दर्शनं भवति** Sy.
३. ०लानिक A. हे **सुतेजस्क ! अग्ने ! त्वम्** Sy.
४. **रूपमङ्गं वा** Sy.
५. **सूर्यः सुवर्णं वा** Sy.
६. **विशेषेण दीप्यसे** Sy.
७. **अन्तरिक्षात्** Sy.
८. **निर्गच्छति** Sy.
९. **शोषतं जोतिः** A.
१०. **दर्शनीयः** Sy.
११. **दीप्तिरिति** A. VM. explains **भानुम्** obj. sing. by **दीप्तीः** obj. plu. **स्वां दीप्तिम्** Sy..
१२. The *pratīka* is supplied by the Editor.
१३. **येथा** A.
१४. **अग्नये वयम्** is suggested for **अग्ने य वम्** । **अग्नयेऽग्रस्य नेत्रे** Sy.
१५. **स्वाहुतं हविः** Sy.
१६. **परितः** is suggested for **पितरोर्** ।
१७. **मिदाशेम्म** A. **दाशेम** is suggested for **मिदाशेम ॥ परिचरेम** Sy.
१८. **गोभिर्गोविकारैः क्षीरादिभिः** Sy.
१९. **पश्चाहु०** A. २०. **घृतसहितैः** Sy.
२१. **पुरोडाशादिभिः** Sy.
२२. **तथा त्वमपि तेभिः प्रसिद्धैः** Sy.
२३. **अपरिमितैः** Sy.
२४. **अपरिमिताभिः** Sy.
२५. **पुरैरिव** A. **नगरीभिरेव** Sy.
२६. **हिरण्मयीभिः** Sy. **रुक्मम्, अयः, इति हिरण्यनामनी** Ngh. 1. 2.
२७. **दाशुषः** Sy.
२८. **ज्वालाः रक्षोभिरप्रधुषि ? (र्षि)ताः** Sy.
२९. **गिरयः** A.

च मन्त्रात्मिका यास्ते भवन्ति । याभिः[1] । प्रजावती प्रजाः[2] । रक्षसि[3] । ताभिः[4] । अस्मानप्यग्ने[5] ! नि पाहि[6] । सहसः सूनो[7] ! अस्मच्छब्दः[8] कल्याणवचनः शोभनम्[9] । मेधाविनः[10] । स्तोतिः[11] । जातवेदः !

**निर्यत्पूतेव स्वधितिः शुचिर्गात्स्वया कृपा तन्वा रोचमानः ।**
**आ यो मात्रोरुशेन्यो जनिष्ट देवयज्याय सुक्रतुः पावकः ॥ ९ ॥**

निर्यत् । निर्गच्छति[12] । यदा । पूता शिलायां[13] निशितीकृता, स्वधितिः, इव । दीप्तस्तदा[14] । स्वया[15] । कल्पनया[16] । तया नन्वा[17] । दीप्यमानो भवति । यः । अरण्योः । आ जनिष्ट[18] । कमनीश्चो[19] । देवयागाय[20] । सुप्रज्ञः[21] । शोधकः ।

**एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।**
**विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥**

एता । एतानि[22] । अस्माकम् । अग्ने ! सौभगानि[23] । प्रज्वलय[24] । अपि च । कर्म[25] । सुशोभनेन ज्ञानेन प्रणीतम्[26] । पतेमे[27], वनतेर्वर्णान्तिरावर्ति[28] । विश्वानि धनानि[29] । स्तोतृभ्यः[30] । गृणते[31] । मह्यञ्च । सन्तु । यय-मिति[32] सानुचराभिप्रायमिति ।

---

१. गीर्भिः Sy. २. ०जा पतिः प्र० A. ०वतीः प्र० is suggested for ०वतीं प्र० ॥ पुत्रवतीः प्रजाः Sy. ३. रक्षेः Sy.
४. उभयीभिः Sy. ५. ०नव्यग्ने A.
६. निवाहि A. नितरां रक्ष Sy.
७. हे बलस्य पुत्र ! Sy.
८. स्मच्छब्दः is suggested for अस्मच्छब्दः ।
९. शोभनान् is suggested for शोभनम् । स्मदिति प्रशस्तवचनः । प्रशस्तान् Sy.
१०. हविषां प्रेरकान् Sy.
११. स्तोत्र . . . A. स्तोतृन् is suggested for स्तोतिः ।
१२. काष्ठान्निर्गच्छति Sy.
१३. शीला० A. १४. ०स्तथा M.
१५. स्वकीयया Sy. १६. कृपया दीप्त्या Sy.
१७. ततया तन्वा is suggested for तया नन्वा ।
१८. आजायत स देवयज्याय भवतीति Sy.
१९. कमनीश्चोयो M. कमनीयश्च is suggested for कमनीश्चो ।
२०. देवायागायगा A. देवया० is suggested for देवाया० M. २१. सुक्रतुः सुकर्मा Sy.
२२. एतानि परिदृश्यमानानि Sy.
२३. सौभगा सौभगानि शोभनानि धनानि Sy.
२४. दीपय देहि वा Sy.
२५. कर्म, यज्ञानां कर्तारं वा Sy.
२६. शोभनप्रज्ञानयुक्तं सुप्रज्ञानं पुत्रं वा Sy.
२७. वतेम is suggested for पतेमे ॥ सम्भजेमहि । वनतेः सम्भजनार्थस्य वर्णान्तरागमे सति रूपम् Sy.
२८. ०र्वातिनः is suggested for ०र्वर्ति ।
२९. धाना० A. ३०. उद्गातृभ्यः Sy.
३१. शंसते च Sy.
३२. The fourth *pāda* has already been explained. See RV. VII. 1. 20. त्वत्परिवाराश्च सर्वे यूयं नोऽस्मान् स्वस्तिभिः क्षेमैः सदा सर्वदा पात रक्षत Sy.

VII. 4.

**प्र वः॑ शु॒क्राय॑ भा॒नवे॑ भरध्वं ह॒व्यं म॒तिं चा॒ग्नये॒ सुपू॑तम् ।**
**यो दैव्या॑नि॒ मानु॑षा ज॒नूंष्य॒न्तर्विश्वा॑नि वि॒द्मना॒ जिगा॑ति ॥ १ ॥**

प्र[1] वः । प्रभरध्वम्[2] । यूयम्[3] । ज्वलते[4] । दीप्यमानाय[5] । हव्यम् । स्तुतिम् । च । अग्नये[6] । निर्मलम्[7] । यः[8] । दैव्यानि । मानुषाणि च[9] । जातानि भूतानि देवान् मनुष्यांश्च । अन्तः[10] । गच्छति[11] । ज्ञानेन[12], मनुष्येभ्यो देवान्प्रति गच्छति देवेभ्यो मनुष्यानिति[13] ।[14]

**स गृत्सो॑ अ॒ग्निस्तरु॑णश्चिदस्तु॒ यतो॒ यवि॑ष्ठो॒ अज॑निष्ट मा॒तुः ।**
**सं यो वना॑ यु॒वते॒ शुचि॑द॒न्भूरि॑ चिद॒न्ना समिद॑त्ति स॒द्यः ॥ २ ॥**

स गृत्सः[15] । सः । मेधावी[16] । अग्निः[17] । सर्वदा युवा[18] । एव[19] । शास्त्वशान्तः[20] । यतः प्रभृति[21] । युवतमः[22] । अरणेः[23] । अजनिष्ट । संयुवते[24] । यो[25] भस्मीकुर्वन्[26] मिश्रयति । वनानि । शुचिदन्तः[27] सः । बहूनि[28] । अपि । अन्नानि[29] । सह[30] । एव । अत्ति[31] । सद्य एकस्मिन् क्षणे ।

---

१. 'प्र वः शुक्राय' इति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् 'प्रवः' (KSA. 34.4. p.24.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्ये द्वितीयत्वेनोक्तः सूक्तविनियोगः । एकादशिनि आग्नेये पशौ 'प्र वः शुक्राय' इत्येषा वपाया याज्या । सूत्रितञ्च—'प्र वः शुक्राय भानवे भरध्वं यथा विप्रस्य मनुषो हविर्भिः' (ĀSS. 3. 7.) इति Sy.

२. प्रहर० A.

३. हे हविषां वोढारः ! वो यूयम् Sy.

४. शुभ्राय Sy.

५. दीप्ताय Sy

६. अनये A.

७. सुशुद्धम् Sy.

८. अग्निः Sy.

९. Omitted in A.

१०. अन्तरा Sy.

११. ०च्छन्ति A.

१२. प्रज्ञानेन मार्गेण वा Sy.

१३. देवान्मनुष्यांश्चान्तरा हवींषि नेतुं वर्तत इत्यर्थः Sy.

१४. VM. ignores विश्वानि ।

१५. स ग्रसम् A.

१६. ०धापी A. Ngh. 3. 15. and गृत्स इति मेधाविनाम N. 9. 5.

१७. अनिः A.

१८. तारको भवति Sy.

१९. एषा A. According to Sy. एव goes with सः ।

२०. शास्त्वशातः A. अस्त्व० is suggested for शास्त्व० ।

२१. तदा यतो यदा Sy.

२२. युवतमः सन् Sy.

२३. अरण्याः Sy.

२४. आत्मना संयोजयति Sy.

२५. अग्निः Sy.

२६. कुर्वभिश्र० A.

२७. ०चिरन्तः M. दीप्तदन्तः Sy.

२८. भूरीणि Sy.

२९. स्वकीयान्यन्नानि Sy.

३०. सम्यक् Sy.

३१. अति A. भक्षयति Sy.

**अस्य दे॒वस्य॑ सं॒सद्यनी॑के॒ यं मर्ता॑सः श्ये॒तं ज॑गृ॒भ्रे ।**
**नि यो गृभं॒ पौरु॑षेयीमु॒वोच॑ दु॒रोक॑म॒ग्निरा॒यवे॑ शुशोच ॥ ३ ॥**

अस्य । अस्य । देवस्य[1] । संसदने[2] सति वयम् । अनीके[3] मुखे स्याम[4] । यम्[5] । मनुष्याः कार्यार्थम् । श्वेतवर्णम्[6] । गृह्णन्ति[7] । यः[8] । पुरुषैस्तृप्यमाणम्[9] । हविषो मुष्टिम्[10] । अभिमुखं सेवते[11] । सोऽनुनिः[12] । मनप्यार्थम्[13] । दुःसेवम्[14] । दीप्यते ऽत्यन्तं प्रज्वलितो भवति ।

**अ॒यं क॒विरक॑विषु॒ प्रचे॑ता॒ मर्ते॑ष्व॒ग्निर॒मृतो॒ नि धा॑यि ।**
**स मा नो॒ अत्र॑ जुहुरः सहस्वः॒ सदा॒ त्वे सु॒मन॑सः स्याम ॥ ४ ॥**

अयं कविः[15] । अयम् । कान्तप्रज्ञः[16] । प्रकृष्टज्ञानः[17] । अप्रकृष्टज्ञानेषु[18] । निहितः । तथा मरणधर्मिषु[19] । अमरणधर्मा[20] । भिधायि[21] । प्रत्यक्षः शिष्टः[22]—स त्वम् । मा । अस्मान्[23] । अस्मिन् स्तोत्रे क्रियमाणे[24] । हिंसीः । बलवत्[25] । सदा त्वयि[26] वयम् । सुमनसः[27] । स्यामेति[28] ।[29]

---

१. अग्नेः Sy.
२. स्थाने Sy.
३. मुख्ये Sy.
४. मुख स्या M.
५. य A. M. अग्निम्
६. श्वेतं शुभ्रम् Sy.
७. परिगृह्णन्ति Sy.
८. यश्चाग्निः Sy.
९. ०स्तृभ्यमाणः A. पुरुषैरर्प्यमाणम् is suggested for पुरुषैस्तृप्यमाणम् । पुरुषैः क्रियमाणाम् Sy.
१०. It seems to be the explanation of गृभम् ॥ गृभीतम् Sy.
११. अत्र वचिः सेवार्थे वर्तते । निषेवत इत्यर्थः Sy.
१२. सोऽग्निः is suggested for सोऽनुनिः ॥
१३. द्रुह्यव आयव इति मनुष्यनामनी Ngh.2.3.
१४. सपत्नैर्दुःसेवं यथा भवति तथा Sy.
१५. कपि A.
१६. प्रज्ञा A. क्रान्तदृक् Sy.
१७. प्रकाशकः Sy.
१८. अक्रान्तदृक्षु Sy.
१९. मरणधर्मकेषु Sy.
२०. मरणधर्मरहितः Sy.
२१. दिधायि A. निधायि is suggested for भिधायि ॥
२२. अथ प्रत्यक्षस्तुतिः Sy.
२३. अस्यान् A.
२४. अस्मिंल्लोके Sy.
२५. बलवन् ! is suggested for बलवत् ॥ बलवन् ! अग्ने ! Sy.
२६. यस्मिन् त्वयि Sy.
२७. ०नस्य A. सुमतयः Sy.
२८. सामेति A.
२९. VM. ignores अग्निः ।

आ यो योनिं देवकृतं ससाद क्रत्वा ह्यग्निरमृताँ अतारीत् ।
तमोषधीश्च वनिनश्च गर्भं भूमिश्च विश्वधायसं बिभर्ति ॥ ५ ॥

**आ यः** । आसीदति[1] । यः[2] । स्थानमोषध्यादिकम्[3] । देवैरेतस्य वासाय कल्पितम् । प्रज्ञानेन[4] । हि[5] । अग्निः । देवान् दुरितेभ्यः । उत्तरयतीति मद्यपानाः[6] (?) । तम् । ओषध्यः[7] । वृक्षाः । गर्भम्[8] । भमिः । च । विश्वस्य धर्तारम्[9] । धारयन्ति[10] ।[11]

ईशे ह्यग्निरमृतस्य भूरेरीशे रायः सुवीर्यस्य दातोः ।
मा त्वा वयं सहसावन्नवीरा माप्सवः परि षदाम मादुवः ॥ ६ ॥

**ईशे** । ईशे[12] । हि । अग्निः । अन्नम्[13] । बहु[14] दातुम् । ईशे । धनम् । शोभनवीर्यम् । दातुम् । अथ प्रत्यक्षः—तादृशं त्वाम्[15] । वयम्[16] । बलवन् ! मा । अपुत्राः[17] । परिनिषीदाम[18] । मा च । अप्सवः[19] सोमस्य पातारः[20] । मा च । अपरिचारकः[21] परिष्यदुवः[22] ।

---

१. अध्यास्ते Sy.

२. अग्निः Sy.

३. ०षध्वादि० A.

४. प्रज्ञया Sy.

५. किमर्थं देवाः स्थानं कल्पयन्त्यग्नेरित्यत आह—हि यस्मात्कारणात् Sy.

६. मद्यपानाः seems unnecessary.

७. ओषधयः Sy.

८. गर्हम् A.
गर्भं सन्तम् Sy.

९. विश्वस्य धारकम् Sy.

१०. श्रुतमेव बिभर्तीति पदं बहुवचनान्ततया विपरिणतं सदोषधीभिर्वनिभिश्च सम्बध्यते Sy.

११. VM. explains च once only.

१२. ई is missing in A. ईष्टे Sy.

१३. अग्नः A. It seems to be the explanation of अमृतस्य ॥ उदकं द्वितीयार्थे षष्ठी Sy.

१४. बहुः A. अधिकम् Sy.

१५. ०दृश त्वा A.
०शं त्वा M.

१६. वसिष्ठाः Sy.

१७. पुत्रादिरहिताः सन्तः Sy.

१८. पर्युपविशाम Sy.

१९. रूपरहिताश्च सन्तः Sy.
'अप्स इति रूपनाम' Ngh. 3.7., N. 5.13.

२०. ०स्यावाता० A. ०स्यापाता is suggested for ०स्य पाता० It seems to be the explanation of अप्सवः ॥

२१. चारकाः is suggested for ०चारकः । परिचरणहीनाश्च Sy.

२२. अपरिष्युद्यः A. The reading is doubtful. परिषदाम or हि अदुवः is suggested for परिष्यदुवः ।

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥ ७ ॥

परिषद्यम्[1] । परिहर्तव्यं[2] परिहृत्य गन्तव्यं नोपसर्तव्यम् । अरणस्य[3] । धनम्, अरणो[4] ऽन्यो भवति न रमत इत्यपि वार्तेररणो[5] ऽन्यतो गच्छतीति यदि तस्य धनमुपसीदति तस्मिन्नागते दातव्यं तद्भवति ततश्च[6] तदनित्यं भवति । ततो वयं नित्यस्य[7] । एव[8] । धनस्य[9] । पतयः[10] । स्यामेति[11] पुत्रानभिप्रेत्य वदति । तथा चाह-'न शेषो अग्ने अन्यजातमस्ति'[12] इति । शेष इत्यपत्यनाम[13] शिष्यते मृतस्येति[14] । न[15] । अन्यजातं[16] मनुष्यस्यापत्यम् ।

---

१. ०षद्या A. वसिष्ठाग्निसंवादे वसिष्ठेन हतपुत्रेणाग्निरभ्यर्थितः पुत्रं मे देहीति । तेन किलासौ प्रत्युक्तः—क्रीतककृत्रिमदत्तकादीनां पुत्राणामन्यतमं कुरुष्व पुत्रमिति । स एवमुक्त एताभ्यामृग्भ्यामन्यजान् पुत्रान् निन्दन्नौरसं पुत्रं ययाचे Dur. वसिष्ठस्यार्षम् । पुरा वसिष्ठो हतपुत्रः पुत्रं याचमानः कृतकादीनामन्यतमं पुत्रं कुर्वित्यग्निनोक्तस्तं प्रत्याह SKN.

२. परिषद्यं पर्याप्तं भवति...यद्वा...परिहर्तव्यं भवति Sy. परिहरणीयं परित्याज्यमित्यर्थः Dur. परिषद्यं सर्वतः सादनीयं नापत्यत्वेनाङ्गीकर्तव्यम् ।...परिहर्तव्यमित्यर्थवचनं न शब्दनिर्वचनम् । न च परेर्वर्जनार्थता, कर्मप्रवचनीयत्वप्रसङ्गात् । उपसर्गसंज्ञानिमित्तस्य च षत्वस्य दर्शनात् । तस्मादवसादनार्थ एव सदिः SKN.

३. ०णास्य M. अनणस्य Sy. किं पुनस्तत् ?... अरणस्यापगतार्णस्य, अपगतोदकसम्बन्धस्य परकुलजातस्य ।...'रेक्ण इति धननाम' तद्धि 'रिच्यते' अतिरिच्यते, इतो लोकादमुं लोकं प्रयतो म्रियमाणस्येत्यर्थः Dur. किं तत् ? उच्यते...अरण इत्यसम्बन्ध उच्यते । स ह्यपार्णो भवति । अपगत ऋणादित्यर्थः । 'पुत्रो हि ऋणमस्मिन् सन्नयेति' (A B. 33.1.) इति श्रुतेः । पितुर्यदृणं तस्य प्रतिगृहीता जायमान एव नापगतः (क्रीतकादिरित्यर्थः) ऋणादसम्बन्धस्त्वपगतः । अतो ऽसावपार्णत्वादरणस्तस्य...रिच्यतेऽवतिष्ठते प्रयतो म्रियमाणस्य पुत्रधनं न तेनैव सह म्रियत इत्यर्थः SKN.

४. रेक्णो यदपत्याख्यं धनं तत्परिहर्तव्यं न पुत्रत्वेन परिकल्पयितव्यमित्यर्थः । न हि तत्पुत्रत्वेन कल्प्यमानमपि पुत्रकार्येष्ववतिष्ठते, परकीयत्वात् Dur. रेक्णो धनमपत्याख्यम् SKN

५. वावतेर० A.

६. तश्च A.

७. अतो नित्यस्यापुनर्देयस्य...यद्वा...औरसस्य Sy. यत एवमतो ब्रूमो नित्यस्य... 'पित्र्यस्येव धनस्य' यथा हि यदेव पित्र्यं धनं पुत्रत्वे भवति तस्यैव ह्यपर्यगौणं स्वामित्वं भवति । एवं यदेव स्वयं जातमपत्यं भवति तदेव मुख्यं भवति नेतरत् क्षेत्रजं वा क्रीतकं वा । यत एवमतो ब्रूमो यदेव नित्यमात्मीयमगौणं स्वयमुत्पादितं पुत्राख्यम् Dur. तस्मान्नित्यस्य SKN.

८. It seems to be the explanation of हि ॥ हिशब्दो यस्मादर्थे SKN.

९. पुत्राख्यस्य धनस्य Sy. रा धनम् । तस्यैव Dur. धनस्यौरसपुत्राख्यस्य SKN.

१०. पालयितारः Dur. स्वामिनः SKN.

११. स्याम । मा परकीयस्येत्यभिप्रायः Dur. भवेमेत्याशास्महे SKN.

१२. अग्न जा० A.

१३. N. 3. 2. अपत्यम् Sy. कस्मात्पुनरेवं ब्रूमहे ? इतो यस्मात्...नास्त्यपत्यम्...'शेष इत्यपत्यनाम' तद्धि शिष्यते, इहैव लोकेऽवतिष्ठते पितुरमुं लोकं प्रयतो गच्छत इत्यर्थः Dur. कस्मात् ? यस्मान्न शेषो नापत्यम् SKN.

१४. मृतमिति M.

१५. न भवति Sy.

१६. अनौरसम् Sy. अन्येन जातम् Dur.

भवति[1] । ततश्चाचेतयमानस्य तत्प्रमत्तस्य[2] भवति[3] । मा । अस्मात्[4] पथः[5] । विदुदुष[6] औरसमेव पुत्रमस्मभ्यं देहीति[7] । अस्योत्तरा भूयसे निर्वचनाय—

नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥ ८ ॥

न हीति[8] । न विग्रहितव्यः[9] । अरणो[10] गन्ता जनकगृहं[11] प्रति । सुखतमोऽपि[12] । अन्यस्योदराज्जातः[13] ।

---

१. य एव जनयति तस्यैव हि तद् भवति नेतरस्येत्यभिप्रायः Dur.

२. विदुषः Sy. य एव ह्यचेतयमानो भवति, अविद्वान् प्रमादी तस्यैवाचेतयमानस्य प्रमत्तस्याश्रुतवतो धर्मान् Dur. अविदुषः परिचर्यादिनाऽऽराधितस्य SKN.

३. परितोषमात्रं भवति ममेदमपत्यमिति नापत्यकार्येऽवतिष्ठते Dur. अस्तीत्येतदनुषक्तव्यम् ...इह लोके प्रीत्यादिमात्रं फलं भवति न पुत्र इत्यर्थः SKN.

४. यत एवमतो ब्रूमः...माऽस्मानेतस्मात् Dur. एतज्ज्ञात्वा नोऽस्माकमेतान् SKN.

५. मार्गान् पुत्रोत्पादनप्रमुखान्मार्गान् Sy. पितृपितामहप्रपितामहानुसन्ततात् पथो मार्गात् Dur.
पितृपितामहादिलक्षणान् पथः SKN.

६. 'दुष वैकृत्ये' इति धातुः Sy. येन केनचित्प्रत्याख्यानद्वारेण विदुदुषस्त्वं देहि नः पुत्रमौरसमित्यभिप्रायः Dur. सन्तानविच्छेदेन...मा विदुदुषः। सन्तानाविच्छेदार्थमौरसं पुत्रं देहीत्यर्थः SKN.

७. VM. ignores अग्ने ।
एवमेतस्यामृचि 'न शेषो' अग्ने अन्यजातमस्ति' (R. V. VII.4.7.) इत्यनेन विशेषलिङ्गेनोपपन्नमेतद् भवति। जनयितुरेव प्रजा भवति न क्षेत्रिणो नापि क्रेतुरन्यस्य वा कस्यचिदिति । एवं चैष शब्दार्थ उपपद्यते, यस्मादेवापेत्य ततं भवति तस्यैवापत्यमिति Dur. अपत्यनामान्युत्तराणि पञ्चदश । अपत्यं कस्मात् ? अपतितं भवति। नानेन पततीति वा। तद्यथा जनयितुः प्रजा। एवमर्थीये ऋचा उदाहरिष्यामः।...परिहर्तव्यं हि नोपसर्तव्यम् । अरणस्य रेक्णः। अरणोऽपार्णो भवति। रेक्ण इति धननाम । रिच्यते प्रयतः । 'नित्यस्य रायः पतयः स्याम' पित्र्यस्येव धनस्य । 'न शेषो' अग्ने अन्यजातमस्ति' । शेष इत्यपत्यनाम । शिष्यते प्रयतः । अचेतयमानस्य तत् प्रमत्तस्य भवति । मा नः पथो विदुदुष इति । तस्योत्तरा भूयसे निर्वचनाय N. 3.2., SKN. 2.121.

८. पूर्वस्यामृच्युक्त एवार्थोऽत्र प्रपञ्च्यते Sy.

९. अभितव्यो M. The reading is doubtful. न ग्रहीतव्य is suggested. पुत्रत्वेन ग्रहणाय Sy. नाङ्गीकर्तव्यः पुत्रो ममायमित्यनेनाभिप्रायेण Dur.
ग्रहेरायः कृत्यार्थे व्यत्ययेन कृत् । न हि ग्रहीतव्य इत्यर्थः SKN.

१०. ०रणा A. रममाणः Sy.
कः पुनरसौ नाङ्गीकर्तव्यः ? अरणोऽपार्णः, अपगतोदकसम्बन्धोऽन्यकुलजः Dur.
असम्बन्धः SKN.

११. ०क ग्रहं A.

१२. सुखतमः सन् Sy. यद्यपि सुशेव एव स्यात् सुखतमः परिचरितो हितैषी Dur. परिचर्यादिना सुसुखोऽपि SKN.

१३. तथापि, अन्योदर्योऽन्येनोवीरिताद्रेतसो जातः । अन्यजायोदरसम्भूतो वा। यो हि स्वस्यां जायायां सम्भवति स स्व एवोदरे सम्भूतो भवति Dur. 'ऋ गतौ' उद्गम्यमानत्वादुदरसामीप्याद्वा रेतोऽत्रोदरमुच्यते। अन्यरेतसो जातः SKN.

मनसा । अपि । न । मन्तव्यो[1] ममायमिति । अथ[2] । अपि । गृहं[3] जनकस्य । सः[4] । पुनः[5] । एव । गच्छति[6] यद्यप्ययं गृह्णाति यदिव मन्यते तस्मात् । एतु[7] । नः[8] । पाजी[9] वेजनवानोऽरसः । अभिषहमाणः[10] सम्पन्नान् । नव-जातः[11] स एव पुत्र इति, यास्कस्त्वाह-अरणोऽपार्णो[12] भवतीति ।

**त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात् ।**
**सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥ ९ ॥**

त्वमग्ने । त्वम् । अग्ने ! हन्तुः[13] । अस्मान् । नि पाहि । त्वम् । एवास्मात्[14] । बलवन् ! अवद्यधा-

---

१. मन्तव्यो भवति Sy. 'अर्द्धो ह वा एष आत्मनो यज्जायेति विज्ञायते' तस्माद्योऽन्यजायोदरसम्भूतः स मनसापि न मन्तव्यो ममायमिति, किं पुनः पुत्रत्वेन परिकल्पयितव्य इति Dur. ममायं पुत्र इति शेषः SKN.

२. किं कारणं मनसापि न मन्तव्य इति ?.... अधशब्दोऽथशब्दस्यार्थे वर्तते, स च हेत्वर्थः । यस्मात् Dur. यतो यदस्य SKN.

३. ग्रहं A. संस्थानम् Sy. ओकः स्वं निवासस्थानं स्वं वशम् Dur. ओकः स्थानं स्वगोत्राख्यम् । ....'ओक इति निवासनाम' उच्यतेरिति पाठान्तरम् । आह च 'ओकः उचः के' (Pa. 7.3.64.) इति । तदेतदग्नेरभिधानमधिष्ठात्रभिप्रायम् । अथवा कर्माङ्गत्वेन सगुणत्वार्थे मन्त्रे ग्राववदभिधानं कर्मात्मन एव भविष्यति । सर्वथाऽन्यपरे मन्त्रे जनयितुरपत्यमित्येतत् सूच्यते । एतावता चात्र प्रयोजनम् । एवञ्च सति अपेत्य ततः नानेन पततीत्युभयथापि निर्वचनमौरसाभिप्रायम् । SKN. ४. अन्योदर्यः Sy.

५. बहुनापि कालेन Dur. तदेव पुनः पिण्डदानसन्तानोत्पादनादिना SKN.

६. प्राप्नोति Sy. स एति तद्वंश्य एव भवति । तस्मादपुत्र एवासौ Dur.

७. आगच्छतु Sy. यत एवमतो ब्रवीमि..... आगच्छतु Dur. आकार एतिना परेण सम्बध्यते । ....त्वत्प्रसादादेतु—आगच्छतु SKN. ८. अतश्च नोऽस्मत् SKN.

९. वाजी is suggested for पाजी । वाज्यन्नवान् Sy. परेभ्यो भयदाता Dur. बली उद्वेजनस्वभावकः कम्पयिता वा दायादानाम् SKN.

१०. शत्रूणामभिभविता Sy. अभिभवन्त्यसपत्नान् Dur. अभिभविता च सपत्नानाम् SKN.

११. नवजातः शिशुरित्यर्थः । स एव पुत्र आगच्छतु न परकीयैः पुत्रैः सङ्कल्पितैरित्यभिप्रायः Dur. औरसः पुत्र इत्येतद् वयमाशास्महे SKN.

१२. ०णो वार्णो भ० A. रणो वर्णो भ० M. The reading gives no sense. The present reading is therefore adopted from the N. 3.2. न हि ग्रहीतव्यो अरणः सुसुखतमोऽपि । अन्योदर्यो मनसापि न मन्तव्यः । ममायं (पुत्रः) इति । अथ स ओकः पुनरेव तदेति यत आगतो भवति । ओक इति निवासनामोच्यते । ऐतु नो वाजी वेजनवान् । अभिषहमाणः सपत्नान् । नवजातः स एव पुत्र इति N. 33.; SKN. II. 123.

१३. हन्तः A. हिंसकात् Sy.

१४. अस्मान् is suggested for अस्मात् ।

निन्दितः[1] । समभ्येतु[2] । त्वाम् । मदीये गृहे[3] वर्तमान इव मन् क्रियायुक्तम्[4] । अन्नम्[5] । धनञ्च । स्पृहणीयम्[6] सहस्रसंख्याकम्[7] ।

एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।
विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

[ एता नः ][8]

VII. 5.

प्राग्नये तवसे भरध्वं गिरं दिवो अरतये पृथिव्याः ।
यो विश्वेषाममृतानामुपस्थे वैश्वानरो वावृधे जागृवद्भिः ॥ १ ॥

प्राग्नये[9][10] ॥ वैश्वानरः ॥ प्रभरध्वम्[11] । अग्नये[12] । वृद्धाय[13] । गिरम्[14] । पृथिव्याः सकाशात्[15] । दिवं[16] प्रति । गन्त्रे । यः । विश्वेषाम्[17] । देवानाम् । उपस्थे[18] पृथिव्याम् । वैश्वानरः[19] । वर्धते[20] । जागृवद्भिर्[21]यजमानैः[22] समिद्धः ।

पृष्टो दिवि धाय्यग्निः पृथिव्यां नेता सिन्धूनां वृषभः स्तियानाम् ।
स मानुषीरभि विशो वि भाति वैश्वानरो वावृधानो वरेण ॥ २ ॥

पृष्टो दिवि । सम्पृक्तः[23] । दिवि[24] । निहितः[25] । अग्निः । पृथिव्याञ्च । नेता । नदीनाम् । वर्षिता ।

---

१. ०वन्तवद्यां निन्दितः A. अवद्यात् निन्दितुः is suggested for अवद्रधात् निन्दितः ।
२. समं ह्येतु A. सम्यक् प्राप्नोतु Sy.
३. त्वामुदीये ग्रहे A.
४. The reading is doubtful. ध्वस्तदोषं पाथोऽन्नम् Sy.
५. हविः Sy. ६. स्पृहणीयः Sy.
७. ०ख्यातम् A. सहस्रसंख्याकः Sy.
८. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV. VII. 3. 11.
९. 'प्राग्नये तवसे' इति नवर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकम् । तथा चानुक्रान्तम्—'प्राग्नये नव वैश्वानरीयं तु' (KSA. 34.5. p. 24.) इति । विनियोगो लैङ्गिकः Sy.
१०. प्राग्नये A.
११. हे स्तोतारः ! प्रभरध्वम् Sy.
१२. वैश्वानरसंज्ञकायाग्नये Sy.
१३. प्रवृद्धाय Sy.
१४. स्तुतिम् Sy. १५. ०शां A.
१६. अन्तरिक्षस्य Sy.
१७. सर्वेषाम् Sy.
१८. उपस्थाने यज्ञे Sy.
१९. विश्वनरहितोऽग्निः Sy.
२०. स्तुतिभिर्हविर्भिश्च वर्धते Sy.
२१. जाग्रव० A. जागृवद्भिः प्रबुद्धैर्देवैः सहितः सन् Sy.
२२. ०यमानैः A.
२३. अर्चितस्तेजसा सम्पृक्तो वा Sy.
२४. अन्तरिक्षे Sy. २५. न्यधायि Sy.

उदकानाम्[1] । सः । मानुषीः । विशः[2] । अभिविभाति[3] । वैश्वानरः[4] । वर्धमानः[5] । वरिष्ठेन तेजसा[6] दीप्त[7] इव ।

**त्वद्भिया विश आयन्नसिक्नीरसमना जहतीर्भोजनानि ।**
**वैश्वानर पूरवे शोशुचानः पुरो यदग्ने दरयन्नदीदेः ॥ ३ ॥**

त्वद्भिया[8] । त्वत्तः । भयेन[9] । विशः[10] । गच्छन्ति[11] । असितवर्णाः[12], रक्षांसीत्यर्थः[13] । त्यक्तसङ्ग्रामाः[14] । परित्यजन्तः । अन्नानि[15] । वैश्वानर ! पूरवे राज्ञे । शोशुचानः[16] । तच्छत्रूणां पुराणि । यदा । दारयत्[17] । प्राज्वलः[18][19] ।

**तव त्रिधातु पृथिवी उत द्यौर्वैश्वानर व्रतमग्ने सचन्त ।**
**त्वं भासा रोदसी आ ततन्थाजस्रेण शोचिषा शोशुचानः ॥ ४ ॥**

तव त्रिधातु । तिस्रो देवता अग्निर्वायुः सूर्य इति, तथाभिन्नस्य तव । त्रिधातु । व्रतम्[20] । पृथिव्यन्तरिक्षम्[21] । द्यौः । च । वैश्वानर[22] ! सेवन्ते[23] पृथिव्यग्नेः कर्म, अन्तरिक्षं वायोः[24], द्यौः सूर्यस्य । त्वम् । भासा[25] । द्यावापृथिव्यौ । आततन्थ[26] । अजस्रेण । तेजसा । दीप्यमानः[27] ।

---

१. अपाम् Sy. 'स्तिया आपो भवन्ति स्त्यायनात्' N. 6.17.

२. प्रजाः Sy.

३. अदिवि॰ M.

४. वेश्वा॰ A. विश्वनरहितोऽग्निः Sy.

५. वर्धमानः सन् Sy.

६. श्रेष्ठेन हविषा तेजसा वा Sy.

७. ॰सा दित्य A.

८. त्वत् ह्रियां A. त्वद्धिया M.

९. भीत्या Sy.

१०. प्रजाः Sy.

११. ॰च्छन्त A. आगच्छन् Sy.

१२. सित॰ A. असिक्नीरसितवर्णा राजस्यः । प्रथमार्थे द्वितीया Sy.

१३. ॰त्यर्थमस्यक्तस॰ A.

१४. परस्परमसमेताः Sy.

१५. धनानि Sy.

१६. दीप्यमानः Sy.

१७. ॰यन् is suggested for ॰यत् ॥

१८. तथा च निगमः 'अंहो राजन् वरिवः पूरवे कः' (RV. 1.63.7.) Sy.

१९. VM. ignores अग्ने ।

२०. त्वत्प्रीतिकरं कर्म Sy.

२१. अपि च इति त्रयो लोकाः Sy.

२२. हे वैश्वानर ! विश्वेषां नराणां नेतः ! Sy. वैश्वानरः कस्मात् ? विश्वान्नरान्नयति । विश्व एनं नरा नयन्तीति वा N. 7.21.

२३. त्रैलोक्यवर्तिन्यः प्रजास्त्वदर्थं कर्म कुर्वन्तीत्यर्थः Sy.

२४. कर्म वायोरन्तरिक्षं द्यौः M.

२५. दीप्त्या Sy.

२६. विस्तारयसि Sy.

२७. VM. ignores अग्ने ।

**त्वाम॑ग्ने ह॒रितो॑ वावशा॒ना गिरः॑ सचन्ते॒ धुन॑यो घृ॒ताचीः॑ ।**
**पतिं॑ कृ॒ष्टीनां॑ र॒थ्यं॑ रयी॒णां वै॑श्वान॒रमु॒षसां॑ के॒तुमह्ना॑म् ॥ ५ ॥**

त्वामग्ने । त्वाम् । अग्ने ! दिशः[1] । कामयमानाः । सेवन्ते । स्तुतयश्च[2] । तथा हविषां कम्पयित्र्यः[3] । स्रुचश्च[4] । पतिम्[5] । प्रजानाम्[6] । नेतारम् । धनानाम् । वैश्वानरम् । उषसाम् । अह्नाञ्च । प्रज्ञापकम् ।

**त्वे अ॑सु॒र्यं॑१ वस॑वो॒ न्यृ॑ण्वन्क्रतुं॒ हि ते॑ मित्रमहो जु॒षन्त॑ ।**
**त्वं दस्यूँ॒रोक॑सो अग्न आज उ॒रु ज्योति॑र्ज॒नय॒न्नार्या॑य ॥ ६ ॥**

त्वे असुर्यम्[7] । त्वयि । असुराणां हन्तृ वर्णम्[8] । वसवः[9] । प्राक्षिपन्[10] । कर्म[11] । हि । ते । मित्राणां पूजयिषितः[12] । जुषन्त[13] । त्वञ्च । तेषां दस्यू[14] । स्व स्वात् स्थानात् । निरगमयः । विस्तीर्णं[15] । ज्योतिः[16] । आर्याय[17] मनुष्याय । जनयन्[18][19] ।

**स जाय॑मानः पर॒मे व्यो॑मन्वा॒युर्न पाथः॒ परि॑ पासि स॒द्यः ।**
**त्वं भुव॑ना ज॒नय॑न्न॒भि क्र॑न्नप॑त्याय जातवेदो दश॒स्यन् ॥ ७ ॥**

स जायमानः । सः[20] । प्रादुर्भवन्[21] । परमे[22] । व्योम्नि[23] सूर्यात्मना[24] वायुः[25] । इव[25] । क्षिप्रं यज्ञमुखे ।

---

१. अश्वाः Sy.
२. नृणां स्तुतिरूपा वाचः Sy.
३. ०यित्य A. पापं धुन्वानाः Sy.
४. स्रुश्च A. घृतमञ्चन्त्यः सचन्ते । हविषा सहिता इत्यर्थः Sy.
५. पति A. स्वामिनम् Sy.
६. क्षितयः कृष्टय इति मनुष्यनामनी Ngh. 2.3.
७. ०सुर्यः A.
८. अहं . . . वर्णं A. बलम् is suggested for वर्णम् ॥ बलम् Sy.
९. वसव A. वासका देवाः Sy.
१०. प्रक्षिपत् A. न्यगमयन् Sy.
११. त्वत्प्रीतिकरं कर्म Sy.
१२. ०यिषित M. पूजयितः is suggested for पूजयिषितः ।
१३. जुषन्तं M. असेवन्त Sy.
१४. दस्युः M. दस्यून् is suggested for दस्यू ॥ कर्महीनान् Sy.
१५. विस्तीर्णम् is suggested for विस्तीर्ण ॥ अधिकम् Sy.
१६. तेजः Sy.
१७. कर्मवते जनाय Sy.
१८. ०यत् A.
१९. VM. ignores अग्ने ।
२०. प्रसिद्धस्त्वम् Sy.
२१. ०र्भवत् A.
२२. दूरस्थे Sy.
२३. अन्तरिक्षे Sy.
२४. सूर्यरूपेण Sy.
२५. यथा वायुर्हि देवत्यग्रहेषु प्रथमं सोमं पिबति तथा Sy.

सोमलक्षणमन्नम्[1] । पिवसि[1] । त्वम् । उदकानि[2] । जनयन् । अभिक्रन्दसि[3] । पुत्रभूताया ऽस्मै लोकाय[4] । जातवेदः[5] ! प्रयच्छन्नो[6]षध्यादिकम्[7] ।

**ताम॑ग्ने अ॒स्मे इष॒मेर॑यस्व॒ वैश्वा॑नर द्यु॒मतीं॒ जात॑वेदः ।**
**यया॒ राधः॒ पिन्व॑सि विश्ववार पृ॒थु श्रवो॑ दा॒शुषे॒ मर्त्या॑य ॥ ८ ॥**

ताम॑ग्ने । ताम् । अग्ने ! अस्मभ्यम् । वृष्टिम्[8] । आभिमुख्येन गमय[9] । वैश्वानर ! विद्युक्ताम्[10] । जातवेदः[11] ! यया वृष्ट्या । क्षरसि[12] । धनम् । हे विश्ववार[13] ! पृथु[14] च । अन्नम्[15] । प्रयच्छते । मर्त्याय[16] ।

**तं नो॑ अग्ने म॒घव॑द्भ्यः पुरु॒क्षुं र॒यिं नि वाजं॒ श्रुत्यं॑ युवस्व ।**
**वैश्वा॑नर॒ महि॑ नः॒ शर्म॑ यच्छ रु॒द्रेभि॑रग्ने॒ वसु॑भिः स॒जोषा॑ः ॥ ९ ॥**

तन्नः[17] । तम्[18] । अस्मभ्यम् । अग्ने[19] ! हविष्यन् स्यो[20] । बहुषु शब्दितम्[21] । रयिम् । नियुवस्व[22] निमिश्रय । अन्नञ्च[23] । श्रवणीयम्[24] । वैश्वानरम्[25] ! महच्च । अस्मभ्यम् । सुखम् । प्रयच्छ । रुद्रैः । अग्ने ! वसुभिश्च[26] सङ्गतः[27] ।

---

१. सोमम्, यद्वा वायुरिव पाथो जलं परिपासि परिपिबसि शोषयसीत्यर्थः Sy.
२. भूतम्, भुवनम्, इत्युदकनामनी Ngh. 1.12.
३. अहिक्र० A. वैद्युतात्मनाऽभिक्रन्दसि । अभिगर्जसि वा Sy.
४. पुत्रहूतायास्वै A. अपत्यवत्पालनीयाय यजमानाय Sy.
५. जातधनाग्ने ! Sy.
६. कामान् प्रयच्छन् Sy.
७. VM. ignores परि ।
८. एषणीयां वृष्टिम् । यद्वा द्युमतीं तामिषमन्नमेरयस्व । तथा च श्रूयते 'तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति' (AB. 1. 5.) इति । अथवेषमेषणीयां तां द्युमतीम् Sy.
९. प्रेरयस्व । वृष्ट्या त्रैलोक्यं द्योतते हि Sy.
१०. वियुक्ताज् M. विद्युद्युक्ताम् is suggested for विद्युक्ता ॥ दीप्तिमतीम् । यद्वा भास्वतीं दीप्तिम् Sy.
११. हे जातप्रज्ञ ! Sy.
१२. पालयसि Sy.
१३. विश्वैर्वरणीय ! अग्ने ! Sy.
१४. विस्तीर्णम् Sy. १५. यज्ञः Sy.
१६. यजमानाय पिन्वसि Sy.
१७. तन्ना A.
१८. प्रसिद्धम् Sy. १९. अग्नेः A.
२०. ०ष्मन् स M. हविष्मद्भ्यः is suggested for ०ष्यन् स्यो ॥ धनवद्भ्यः हविष्मद्भ्य इत्यर्थः Sy.
२१. बहुश० is suggested for बहुषु श० ॥ बह्वन्नं बहुयशस्कं वा Sy.
२२. नियुस्व A. नितरां मिश्रयस्व Sy.
२३. बलं च Sy.
२४. श्रपणी० A.
२५. ०नरं A. ०नर ! is suggested for ०नरं M. हे विश्वनरहित ! अग्ने ! त्वम् Sy.
२६. देवैः Sy.
२७. सहितः Sy.

VII. 6.

**प्र स॒म्राजो॒ असु॑रस्य॒ प्रश॑स्तिं पुं॒सः कृ॑ष्टी॒नाम॑नु॒माद्य॑स्य ।**
**इन्द्र॑स्येव॒ प्र त॒वस॑स्कृ॒तानि॒ वन्दे॑ दा॒रुं वन्द॑मानो विवक्मि ॥ १ ॥**

**प्र** सम्राजः[1] । प्रवन्दे प्रोच्चारयामि । सर्वेषां राज्ञः[2] । प्राज्ञस्य[3] । प्रशस्तिम् । वृष्णः[4] । मनुष्याणाम्[5] । अनुमोदनीयस्य[6] । यथेन्द्रस्य । वृद्धस्य[7] । कर्माणि । प्रोच्चारयन्ति तद्वत् । किञ्चैनं दरणशीलम्[8] । नमस्यन्[9] । स्तुतिं ब्रवीमि ।

**क॒विं के॒तुं धा॒सिं भा॒नुमद्रे॑र्हि॒न्वन्ति॒ शं रा॒ज्यं रोद॑स्योः ।**
**पु॒रं॒द॒रस्य॑ गी॒र्भिरा वि॑वासे॒ऽग्नेर्व्र॒तानि॑ पू॒र्व्या म॒हानि॑ ॥ २ ॥**

**कविम्**[11] । क्रान्तकर्माणम्[12] । प्रज्ञापकम्[13] । धारयितारम्[14] । दीपयितारम्[15] । आदर्तुः स्तोतुः । प्रीणन्ति[16] । शङ्करम्[17] । रोदस्योः[18], राजानम्[19], राजतेर्वा नामकरणः[20] । पुरान् दारयितुः[21] । अहञ्च स्तुतिभिः । परिचर्यां करोमि[22] । अग्नेर्हि । महान्ति । पूर्वकृतानि[23] । कर्माणीति ।

---

१. 'प्र सम्राजः' इति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षम् । अनुक्रम्यते च—'प्र सम्राजः सप्त' (KSA. 34. 6. p. 24.) । 'वैश्वानरीयं तु' (KSA. 34. 5. p. 24.) इत्युक्तत्वादस्यापि वैश्वानरोऽग्निर्देवता । विनियोगो लैङ्गिकः Sy.

२. ०षां सा रा० A. ०षां सम्राज्ञः is suggested for ०षां सं रा० M. सर्वस्य भुवनेश्वरस्य Sy.

३. बलवतः Sy.

४. VM. seems to read वृष्णः for पुंसः ॥ पौंस्यमिति वीर्यमुच्यते । वीरस्य Sy. पुमान् पुरुमना भवति पुंसतेर्वा N. 9. 15.

५. जनानाम् Sy.

६. स्तुत्यस्य Sy.

७. बलवतः Sy.

८. प्रब्रवीमि Sy.

९. पुरां भेत्तारम् Sy.

१०. नमस्य A.

११. कविः A.

१२. प्राज्ञम् Sy.

१३. विश्वस्य प्रज्ञापकम् Sy.

१४. अद्रेर्धर्तारम् Sy.

१५. भासकम् Sy.

१६. मदीयाः प्रीणयन्ति प्रेरयन्ति वा देवाः Sy.

१७. सुखकरम् Sy.

१८. वैश्वानरमग्निम् Sy.

१९. The passage should immediately follow राजानम् ।

२०. द्यावापृथिव्योः Sy.

२१. ०यितुं A.....अग्नेः Sy.

२२. परिचरयामि Sy.

२३. पूर्व्याणि पुरातनानि Sy.

न्यक्रतून्ग्रथिनो मृध्रवाचः पणीरँश्रद्धाँ अवृधाँ अयज्ञान् ।
प्रप्र तान्दस्यूँरग्निर्विवाय पूर्वश्चकारापराँ अयज्यून् ॥ ३ ॥

न्यक्रतून्[1] । नितरां[2] प्रगमयति । अकर्मणः । ग्रन्थनकामान्[3] । हिंसकवाचः[4] । पणवानान्[5] ? श्रद्धा-रहितान्[6] । वर्धयितॄन्[7] । हविर्भिर्विहितानयज्ञान्[8] । तान् । दस्यून्[9] । एतदेवाह—पूर्वं[10] यः सन् । जघन्यान् । चकार[11] । अयज्यून्[12] । अग्निरिति[13] ।

यो अपाचीने तमसि मदन्तीः प्राचीश्चकार नृतमः शचीभिः ।
तमीशानं वस्वो अग्निं गृणीषेऽनानतं दमयन्तं पृतन्यून् ॥ ४ ॥

यो[14] अपाचीने । यः । अपाचिकाः[15] ।[16]

---

१. न्यक्रत्रत् A. वसिष्ठस्त्रिष्टुभा वैश्वानराग्निं तुष्टाव । पञ्चमेऽहनि आग्निमारुते विनियोगः । 'प्र सम्राजे' (RV. VII.6.1.) 'क ईं व्यक्ताः' (RV. VII.56.1.) इति सूत्रम् (SSS.10.5.24.) DDN.
२. नितरां गमयेत् Sy. अत्यन्तं निवारयति DDN.
३. ग्रन्थत का० A. ग्रथिनो जल्पकान् Sy. अल्पकान् तुच्छान् DDN.
४. हिंसक M. हिंसितवचस्कान् DDN.
५. ०वाना A. The reading is doubtful. पणिनामकान् वार्धुषिकान् Sy. पणीँरश्र० तथा दस्यूँ रग्निः—'ईकारोकारोपहितो रेफमेषु । स्वहेषु च' (RPR. 4.69.70) इति स्वरपरत्वान्नकारस्य रेफः । उपधानुनासिकत्वम्—'नकारस्य लोप रेफ०' (RPR. 4.80.) इति DDN.
६. ञंधार० A. यज्ञादिषु श्रद्धारहितान् Sy. DDN.
७. वर्धयितृभिः A. अवर्धयितॄन् is suggested for वर्धयितॄन् M. स्तुतिभिरग्निमवर्धयतः Sy. स्तुत्या देवानवर्धयतः DDN.
८. पिता हितान० A. अविहितयज्ञान् is suggested for विहितानयज्ञान् ॥ यज्ञहीनान् Sy. यज्ञरहितान् DDN.
९. अस्यून् A. वृथा कालस्य नेतॄन् Sy. देवतस्करान् । तथोक्तं भगवता 'तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः' (Gita 3.12.)
१०. पूर्वं वस्सज् A. पूर्वो यः is suggested for पूर्वं यः ॥ मुख्यः सन् Sy. मुख्यः सन्नग्निः DDN.
११. करोति DDN.
१२. अयज्युन् A. अयजमानान् Sy. DDN.
१३. अक्रतूनयज्ञान् Sy. अप्रज्ञान् DDN. केतः केतुः चेतः, चित्तम्, क्रतुः (Ngh. 3. 9.)
१४. अवाची० A. १५. अवाचि० A.
१६. The commentary on this stanza is missing in the mss.
Sy. explained this stanza in the following manner:
नृतमो नेतृतमो योऽग्निरपाचीनेऽप्रकाशमाने तमसि निमग्नाः प्रजाः मदन्तीः स्तुवन्तीः शचीभिस्ताभ्यो दत्ताभिः प्रज्ञाभिः प्राचीर्ऋजुगामिनीश्चकार । यद्वा नेतृतमो योऽग्निरपाचीने तमसि निशायां मदन्तीमाद्यन्तीरुषसः शचीभिः प्रज्ञाभिः प्राचीश्चकारेत्यर्थः । तं वस्वो धनस्येशानमनानतमप्रह्वं पृतन्यून् युद्धकामांश्च दमयन्तमग्निं गृणीषे स्तौमि ।

यो दे॒ह्यो॒३॑ अन॑मयद्व॒धस्नै॒र्यो अ॒र्यप॑त्नीरु॒षस॑श्च॒कार॑ ।
स नि॒रुध्या॒ नहु॑षो य॒ह्वो अ॒ग्निर्विश॑श्चक्रे बलि॒हृत॒: सहो॑भिः ॥ ५ ॥

यो देह्यः[1] ।...उषसः । चकार[2] । सः । निरूध्य[3] । नहुषो राज्ञः । अग्निः । महान् । प्रजाः । चक्रे । करप्रदायिनीः[4] । बलैः ।[5]

यस्य॒ शर्म॒न्नुप॒ विश्वे॒ जना॑स॒ एवै॑स्त॒स्थुः सु॑म॒तिं भिक्ष॑माणाः ।
वै॒श्वा॒न॒रो वर॒मा रोद॑स्यो॒राग्निः स॑साद पि॒त्रोरु॒पस्थ॑म् ॥ ६ ॥

यस्य । यस्य[6] । सुखनिमित्तम्[7] । उपस्थः[8] । विश्ये[9] । जनाः । गमनैः[10] । सुमनिमन्ता[11] । भिक्षमाणाः[12] । स वैश्वानरः । वसिष्ठम्[13] । उपस्थम्[14] । आसीदति[15] । द्यावापृथिव्योः । पित्रोः प्रातरादित्यात्मना द्यावापृथिव्योर्मध्ये प्राच्यां प्रादुर्भवति ।[16][17]

आ दे॒वो द॑दे बु॒ध्न्या॒३॑ वसू॑नि वैश्वान॒र उदि॑ता॒ सूर्य॑स्य ।
आ स॑मु॒द्राद॑व॒रादा पर॑स्मा॒दाग्निर्द॑दे दि॒व आ पृ॑थि॒व्याः ॥ ७ ॥

आ देवः[18] । आददे । देवः[19] । आन्तरिक्षाणि[20] । वसून्यन्नानि[21] । वैश्वानरः[22] । उदये । सूर्यस्य । पूर्वा-

---

१. The *pratīka* is supplied by the Editor. २. अकरोत् Sy.
३. निरुध्य is suggested for निरूध्य ।
४. ०यिनी A. करप्रदान् Sy.
५. The explanation of following words is missing in mss.
यः । देह्यः । अनमयत् । वधस्नैः। यः and अर्यपत्नीः ॥
Sy. explains those words in the following manner :—योऽग्निः । देह्यो देहीरुपचिता आसुरीर्विद्या । वधस्नैर्वधैरायुधैर्वा । अनमयत् हीना अकरोत् । यश्च । आर्यपत्नीः, अर्यः सूर्यः पतिर्यासां ता अर्यपत्न्यः ।
६. वैश्वानरस्य Sy. ७. शर्मणि Sy.
८. उपतस्थुः is suggested for उपस्थः ॥ यमेवोपतिष्ठन्ते Sy.
९. विश्वे is suggested for विश्ये ॥ सर्वे Sy. १०. गनैः A.
११. सुमतिन्तामेव is suggested for ०तिमन्ता । १२. हिक्ष० A. प्रार्थमानाः Sy.
१३. वरिष्ठम् is suggested for वसिष्ठम् । उत्कृष्टम् Sy. १४. मध्यमन्तरिक्षम् Sy.
१५. आसीदिति A. आससाद आगच्छत् Sy.
१६. स वैश्वानरः सूर्यः सन् मातापित्रोः Sy.
१७. VM. ignores अग्निः ।
१८. देवा A. १९. द्योतमानः Sy.
२०. ०रिक्ष्याणि M. बुध्न्यान्यान्तरिक्षाणि । बुध्न्यमन्तरिक्षम् । बद्धा अस्मिन् धृता आप इति वा N. 10.44. Sy.
२१. आच्छादकानि तमांसि 'वस आच्छादने' इति धातुः Sy.
२२. वैश्वनरः A. विश्वनरहितोऽग्निः Sy.

परयोः। समुद्रयोर्मध्ये[1] यानि वसूनि। यानि च द्यावापृथिव्योर्मध्ये तानि सर्वाणि। आदत्ते मनुष्येषु पक्षिषु देवेषु च वर्तमानः सर्वं भक्षयतीति[2]।

## VII. 7.

**प्र वो॑ दे॒वं चि॑त्सहसा॒नम॒ग्निमश्वं॒ न वा॒जिनं॑ हिषे॒ नमो॑भिः।**
**भवा॑ नो दू॒तो अ॑ध्व॒रस्य॑ वि॒द्वान्त्मना॑ दे॒वेषु॑ विविदे मि॒तद्रुः॑ ॥ १ ॥**

[3]प्र वः। प्रेरयामि[4]। युष्माकम्[5]। देवम्[6]। बलमाचरन्तम्[7]। अग्निम्[8]। अश्वम्। इव। बलिनम्[9]। अन्नैः[10]। भवा[11]। नः[12]। दूतः। यज्ञम्[13]। जानन्। स्वयमेवाग्निः[14]। देवेषु। प्रयच्छति ज्ञापयते[15] वा। विहिनाध्वेति[16]।[17]

**आ या॑ह्यग्ने प॒थ्या॒३॑ अनु॒ स्वा म॒न्द्रो दे॒वानां॑ स॒ख्यं जु॑षा॒णः।**
**आ सानु॒ शुष्मै॑र्न॒दय॑न्पृथि॒व्या जम्भे॑भि॒र्विश्व॑मु॒शध॒ग्वना॑नि ॥ २ ॥**

आ याहि। आगच्छ[18]। अग्ने[19]! मातर्गः[20]। आत्मीयैवम्[21]। मन्द्रः[22]। देवानाम्[23]। सख्यम्। सेवमानः।

---

१. समुद्रादन्तरिक्षात्। अवरात् पृथिव्यास्तमांसि। आददे समुद्रात्परस्माद्दिवोऽपि तमांसि। आददे। तदेव दर्शयति—अग्निर्दिवस्तमांसि। आददे। पृथिव्याश्च तमांस्याददे Sy.

२. VM. ignores अग्निः।

३. 'प्र वो देवम्' इति सप्तर्चं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम्। 'प्र वो देवम्' (KSA. 34.7. p. 24.) इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोर्वशसूक्त उक्तो विनियोगः Sy.

४. हे अग्ने!...प्रहिणोमि Sy.

५. त्वाम् Sy.

६. देवः A. द्योतमानादिगुणयुक्तम् Sy.

७. ०माक्रन्तम् A. राक्षसानभिभवन्तम् बलमाचरन्तं वा Sy. ८. अग्रस्य नेतारम् Sy.

९. वेगवन्तं बलवन्तं वा Sy.

१०. स्तुतिभिर्हविर्भिर्वा Sy.

११. VM. seems to repeat the Vedic word भवा. The classical form should be भव.

१२. अस्माकम् Sy. १३. यज्ञज A.

१४. अथ परोक्षस्तुतिः—त्मनाऽऽत्मना स्वयमेव Sy.

१५. प्रज्ञायते Sy.

१६. ह विहिताध्वेति A. दग्धद्रुमोऽग्निरिव Sy.

१७. VM. ignores चित्॥ चित् एव Sy.

१८. अगच्छ M.

१९. अग्नेः M. हे अग्ने! त्वम् Sy.

२०. मातः जः M. मार्गैः is suggested for मातर्गः

२१. आत्मीयैरेव is suggested for आत्मीयैवम्॥ स्वैर्मार्गैरित्यर्थः Sy.

२२. मदयिता स्तुत्यो वा Sy.

२३. देवैः सह Sy.

आ याहि[1] । पृथिव्याः । समुच्छ्रितं वनम्[2] । तेजोभिः[3] । शब्दं[4] । दंष्ट्राभिः[5] । विश्वन्नं, कात्स्न्र्येन[6] । यथाकामं दहन्[7] । काष्ठानीति[8] ।

**प्राचीनो यज्ञः सुधितं हि बर्हिः प्रीणीते अग्निरीळितो न होता ।**
**आ मातरा विश्ववारे हुवानो यतो यविष्ठ जज्ञिषे सुशेवः ॥ ३ ॥**

प्राचीनः[9] । प्राङ्मुखः । यज्ञः प्रवृत्तः[10] । सुनिहितं[11] च । बर्हिः[12] । आप्रीणाति[13] च । अग्निम्[14] । प्रशस्तः[15] इव[16] । होता । द्यावापृथिव्यौ । विश्वैर्वरणीये । हूयमान[17] । ययोस्त्वम्[18] । युवतम[19] ! जायसे । सुसुखम्[20] ।

**सद्यो अध्वरे रथिरं जनन्त मानुषासो विचेतसो य एषाम् ।**
**विशामधायि विश्पतिर्दुरोणे॒ग्निर्मन्द्रो मधुवचा ऋतावा ॥ ४ ॥**

सद्यो अध्वरे । सद्यः । यज्ञे । रथवन्तम्[21] । जनयति[22] । मानुषासः[23] । विशिष्टप्रज्ञाः[24] । यः । एषां[25] मनुष्याणां नेता भवति । स विशां पतिः[26] । विशाम्[27] । गृहे[28] । निहितः[29] । अग्निः[30] । मोदनः[31] । मधुवचनः[32] । यज्ञवान् ।

---

१. आकारस्य पुनर्वचनमादरार्थम् Sy.
२. समुच्छ्रितं तृणगुल्मादिकम् Sy.
३. शोषकैर्दाहकैस्तेजोभिः Sy.
४. शब्दायमानः or शब्दयन् is suggested for शब्दं ॥ शब्दायमानः । दह्यमानं हि शब्दायते Sy. ५. ज्वालाभिरित्यर्थः Sy.
६. विश्वं वनं or विश्वम् is suggested for विश्वन्नं ॥ विश्वानि Sy.
७. दहत् A. कामयमानो दहन् Sy.
८. काष्ठा० A.
९. प्राचीनः । सम्यगनुष्ठीयत इत्यर्थः Sy.
१०. यज्ञ प्रवृत्त A. अयं यज्ञः । यद्वा यज्ञो यष्टा होता प्राचीनः । यद्वा यज्ञो हविः प्राचीनः प्राचीनं प्राङ्मुखमासन्नम् Sy.
११. ०निहत० A. १२. बहिः A.
१३. तृप्तश्च भवति Sy.
१४. अनि A. अग्निः is suggested for अग्नि । १५. अगस्त A. स्तुतः Sy.
१६. नेति चार्थे Sy.
१७. VM. seems to take हुवानः nom sing. as Voc. sing.
१८. योस्त्वं A. यतस्त्वम् is suggested for ययोस्त्वम् ॥ यतो यदा Sy.
१९. हे युवतम ! अग्ने ! Sy.
२०. VM. seems to explain सुशेवः nom. sing. as an adverb.
२१. रथिनं नेतारम् Sy.
२२. ०यन्ति is suggested for ०यति ॥
२३. मानुसः A. मानुषाः is suggested for मानुषासः ॥ मनुष्याः Sy.
२४. अपिशि० A.
२५. एषां हविर्वहति Sy.
२६. विशां पतिर्विश्वस्य पतिर्वा Sy.
२७. शग्म् A. मनुष्याणाम् Sy.
२८. ग्रहे A. २९. आहितः Sy.
३०. सोऽयमग्निः Sy.
३१. मदयिता Sy.
३२. मादयितृवचस्कः Sy.

असादि वृतो वह्निराजगन्वानग्निर्ब्रह्मा नृषदने विधर्ता ।
द्यौश्च यं पृथिवी वावृधाते आ यं होता यजति विश्ववारम् ॥ ५ ॥

असादि[1] । स्थापितः[2] । वृतो होतृत्वेन[3] । वोढा । दूरादागतः[4] । अग्निः । महान्[5] । गृहे[6] । विधारकः[7] । यम् । द्यावापृथिव्यौ[8] । वर्धयतः । यम्[9] । च । होता[10] । आ यजति, मानुषः[11] । विश्वैर्वरणीयम् ।

एते द्युम्नेभिर्विश्वमातिरन्त मन्त्रं ये वारं नर्या अतक्षन् ।
प्र ये विशस्तिरन्त श्रोषमाणा आ ये मे अस्य दीधयन्नृतस्य ॥ ६ ॥

एते । एते[12] । यशोभिः[13] । सर्वम्[14] । आच्छादयन्ति[15] । ये[16] । वाऽग्नये वैश्वानराय । पर्याप्तम्[17] । मन्त्रम्[18] । कुर्वन्ति[19] । नृहिताः[20] । ये वा । वर्धयन्ति । अन्नार्थिनीः प्रजा वैश्वानराधिष्ठिताः । तदुक्तयाञ्चावचनं[21] शृण्वानो[22] । ये वा । मदीयम्[23] । अमुम्[24] । वैश्वानरम्[25] । आसीदयन्[26] प्राज्वलयन्निति ।

नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनाम् ।
इषं स्तोतृभ्यो मघवद्भ्य आनड्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

नू त्वाम् । क्षिप्रम्[27] । त्वाम् । अग्ने ! याचामहे[28] । वसिष्ठाः[29] । ईशानम् । सहसः सूनो[30] ! धनानाम् । तथा सत्यन्नम् । स्तोतृभ्यः[31] । हविष्मद्भ्यः[32] । प्रापयेरिति[33] ।

---

१. असवादि A. २. उपविष्टः Sy. ३. हविषां वोढा Sy. ४. द्युलोकादागत आगमनशीलो वा Sy. ५. परिवृढः Sy. ६. ग्रहे A. होतुः स्थाने Sy. ७. विश्वस्य धारकः Sy.

८. ०थिव्योः M. ९. अग्निम् Sy. १०. हेतो A. ११. मनुषः A. It should immediatly follow होता ॥ १२. मदीयाः पुरुषाः Sy. १३. द्युम्नेभिरन्नैः, अथवा Sy.

१४. पोष्यवर्गम्, यद्वा जगत् Sy.

१५. आतिरन्त वर्धयन्ति । अथवा...अभ्यगच्छन्नित्यर्थः Sy. १६. वेति समुच्चये Sy.

१७. पर्याप्त A. १८. स्तोत्रं स्तुत्यं वा Sy.

१९. समस्कुर्वन् Sy. २०. मनुष्याः Sy.

२१. तदूक्तं याज्ञा० A. ०माज्ञावचनं is suggested for याञ्चाव० ।

२२. शृण्वानाः or शृण्वन्तः is suggested for शृण्वानो ॥ श्रोषमाणाः—शृणोतेः 'सन्यङो' (Pa. 6.1.9.) इति द्वित्वं 'इको झल्' (Pa. 1.2.9.) इति सनः किस्त्वं च 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति न भवतः । 'ज्ञाश्रुस्मृदृशां सनः' (Pa. 1.3.57.) इत्यात्मनेपदम् Sy.

२३. मदीयाः Sy. २४. इमम् Sy.

२५. सत्यमग्निम् । कर्मणि षष्ठी । मनुष्याणामश्नीयादिति वत् Sy. २६. आदीयत् A. आदीपयन् is suggested for आदीसयन्.

२७. अद्य वा Sy. २८. वाचा० A.

२९. वासिष्ठाः M. वयम् Sy. ३०. बलस्य पुत्राग्ने ! Sy. ३१. अस्मदीयेभ्यः Sy.

३२. ०ये दिति A. ०येति M. आनट्—नशेर्व्याप्तिकर्मणोऽन्तर्णीतण्यर्थल्लुङि 'छन्दस्यपि दृश्यते' इत्याडागमः Sy. ३३. The fourth verse of the stanza has already been explained. See. RV. VII.1.20. Sy. explains it again and again. यूयं त्वत्परिवाराश्च सर्वे यूयम् । नोऽस्मान् सदा । स्वस्तिभिः पातेत्येवमीमहे Sy.

VII. 8.

**इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।**
**नरो हव्येभिरीळते सबाध आग्निरग्र उषसामशोचि ॥ १ ॥**

इन्धे[1] । समिन्धे[2] तम् । राजा[3] । पीश्वरः[4] । हविहि[5] । यस्य[6] । मुखम्[7] । आहुतम् । घृतेन भवति । तं मनुष्याः[8] । हविभिः[9] सह । स्तुवन्ति । बोधासहिता[10] । आदीप्यते । सोमाग्निः[11] । उषसाम् । अग्र इति ।

**अयमु ष्य सुमहाँ अवेदि होता मन्द्रो मनुषो यह्वो अग्निः ।**
**वि भा अकः ससृजानः पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे ॥ २ ॥**

**अयम्** । अयम् । एव । सः । सुमहान्[12] । ज्ञायते[13] । होता[14] । मोदमानः[15] । मनुष्यस्य । महान् । अग्निः । विकरोति[16] । तेजांसि[17] । पृथिव्याम् । अरण्योः सृज्यमान[18] । कृष्णमार्गः । ओष ओषसिभिः[19] । उह्यते[20] ।

---

१. 'इन्धे राजा' इति सप्तर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । 'इन्धे राजा' (KSA. 34.8. p. 24.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः । आतिथ्यायां 'प्र प्रायमग्निः' इति स्विष्टकृतो याज्या । सूत्रितञ्च 'प्र प्रायमग्निर्भरतस्य शृण्व इति संयाज्ये' (ĀSS. 4.5.) इति Sy.

२. समिध्यते Sy.

३. दीप्तः Sy.

४. वीश्विश्वरः M. ईश्वरः is suggested for पीश्वरः । स्वामी हविषां प्रेरको वाग्निः Sy.

५. हविः M.
हविर्भिः is suggested for हविहि । स्तुतिभिः सह Sy.

६. अग्नेः Sy.

७. रूपम् Sy.

८. यश्च नरोऽस्मदीयाः Sy.

९. हविषः M. हविर्भिः is suggested for हविभिः ॥ हव्यैः सार्धम् Sy.

१०. बाधासहिताः is suggested for बोधा सहिता ॥ सबाधः संश्लिष्टाः सञ्जातबाधा वा Sy.

११. सोममग्निः M. सोऽग्निः is suggested for सोमाग्निः

१२. सुमहा A.
सुमहत्त्वेन Sy.

१३. प्रज्ञायते Sy.

१४. देवानामाह्वाता Sy.

१५. मदयिता Sy.

१६. विकरोत्यन्तरिक्षे Sy.

१७. दीप्तीः Sy.

१८. ०मानं M. ०मानः is suggested for ०मान ।

१९. ओषसिनिः M.
ओषधिभिः is suggested for ओष ओषसिभिः ।

२०. ऊह्यते A. वर्धते Sy.

क॒था नो॑ अग्ने॒ वि व॑सः सुवृ॒क्तिं कामु॑ स्व॒धामृ॑णवः श॒स्यमा॑नः ।
क॒दा भ॑वेम॒ पत॑यः सुदत्र रा॒यो व॒न्तारो॑ दु॒ष्टर॑स्य सा॒धोः ॥ ३ ॥

कया[1] । कया स्वधया[2] । अस्माकम् । अग्ने ! त्वम् । स्तुतिम् । प्रतिवससि[3] । तिम्[4] । अन्न[5] । स्तूयमानस्त्वम्[6] । आत्मानं प्रापयसि[7] । कद[8] । कदा । भवेम । स्वामिनः । सुखाधन[9] ! रायः[10] । सम्भक्तारः[11] । शत्रुभिस्तरितुमशक्यस्य[12] । साधयितुम्[13][14] ।

प्रप्रा॒यम॒ग्निर्भ॑र॒तस्य॑ शृण्वे॒ वि यत्सूर्यो॒ न रोच॑ते बृ॒हद्भाः ।
अ॒भि यः पू॒रुं पृत॑नासु त॒स्थौ द्यु॒ता॒नो दैव्यो॒ अति॑थिः शुशोच ॥ ४ ॥

प्र प्रायम् । प्रशृणाति[15] । अयम्[16] । अग्निः । मनुष्यस्य स्तुतिम्[17] । विरोचते[18] । यदा[19] । सूर्यः । इव ।

---

१. कया नो M.

२. स्वधया हविषा Sy.

३. ०तिपस० A.
व्याप्नुषे । आच्छादयसि वा Sy.

४. किम् is suggested for तिम्

५. अन्नम् is suggested for अन्न ॥

६. ०स्त्वामा० A.

७. प्राप्नुयाः Sy.

८. कट A.

९. सुखधन ! is suggested for सुखाधन ॥
हे शोभनदान ! अग्ने ! Sy. सुदत्रः कल्याणदानः N.6.14.

१०. धनस्य Sy.

११. सम्भक्तारश्च कदा भवेम ? Sy.

१२. शत्रुभिर्दुर्हिंसकस्य Sy.

१३. साधयितुः is suggested for साधयितुम् ॥
समीचीनस्य Sy.

१४. VM. ignores उ ॥ उ च Sy.

१५. अत्यन्तं प्रथितो भवति Sy.
शृणुत आह्वानमिति शेषः । यजमानकृताह्वानं शृणोतीत्यर्थः । पुरुषव्यत्ययः Mah.
प्रकर्षेण महता . . . शृणोति वचनम् U.
प्रकर्षेण शृणोतु । आह्वानप्रयोजनं शीघ्रं करोत्वित्यर्थः BB.

१६. प्रसिद्धः Sy.

१७. यजमानस्य मम Sy.
बिभर्ति हवींषि भरतस्तस्य भरतस्य यजमानस्य Mah.
भरतस्य प्रजापतेः U.
यजमानस्य । भरणाद् भरतः । औणादिकोऽतच्प्रत्ययः BB.

१८. रोचते A.
प्रकाशते Sy.
बृहद्यथा तथा रोचते । अत्यन्तं दीप्यते Mah.
अत्यर्थं दीप्यते BB.

१९. योऽग्निः Mah.
कथमेतदध्यवसीयते यथा प्रजापतेः शृणोति वचनमिति . . . . . यत्समिदाधानसमनन्तरमेव U.
यद् योऽग्निः BB.

अत्यन्तम्[1]। भासमानः। हितव्यौ[2]। यम्[3]। पूरुं नामासुरम्[4]। सङ्ग्रामेषु। स दीप्यमानः[5]। दैव्यः[6]। अतिथिः[7]। प्रजज्वाल[8]।

**असन्नित्त्वे आहवनानि भूरि भुवो विश्वेभिः सुमना अनीकैः ।**
**स्तुतश्चिदग्ने शृण्विषे गृणानः स्वयं वर्धस्व तन्वं सुजात ॥ ५ ॥**

असन्निति। भवन्त[9]। एव। त्वयि। हवींषि[10]। बहूनि। भव त्वम्[11]। सर्वैः। रश्मिभिः[12]। सुमनाः। स्तोतुः[13]। अग्नेः[14]। शृणोषि स्तुतिम्[15]। स्तूयमानः। स्वयम्[16]। वर्धय[17]। आत्मीयमङ्गम्[18]। गोहनजननम्[19][20]।

---

१. हवास० A. भासत इति भा सूर्यवद् भासमानः सन् Mah. महादीप्तिः U. भासनशीलः BB.

२. हितव्य M. अभितष्ठौ is suggested for हितव्यौ ॥ अभिबभूव Sy. सम्मुखं तिष्ठति Mah. अभितस्थौ...एतया समिधाऽऽप्यायितः U. अभितिष्ठति अधितिष्ठत्याक्रामति BB.

३. यः is suggested for यम् ॥ अग्निः Mah. यश्चाग्निः BB.

४. पुरुनामा० A. पूरुं राक्षसम् Mah. पूरुमसुरराक्षसम् U. पूरुमाप्यायमानं शत्रुम् । 'पूरी आप्यायने' औणादिक उप्रत्ययः । पूरुं महान्तमपि शत्रुम् BB.

५. Omitted by A. दीप्यते। 'दीङ् क्षये' धातूनामनेकार्थत्वादत्र दीप्त्यर्थः, लिटि रूपम् Mah. यस्माच्च...दीप्यते । तस्मात्प्रजापतेर्वचनं शृणोति U. दीप्यते। छान्दसो लिट्।...सोऽस्माकमस्त्विति सामर्थ्याल्लभ्यते BB.

६. देवसम्बन्धी Mah., U. अतिथिर्विशेष्यते—दैव्यो दिवि भवः BB.

७. देवानामतिथिवत्पूज्यः Sy. अतिथिधर्मा जनानाम् U. योऽस्माकमतिथिर्भूत्वा BB.

• शिवो मङ्गलरूपः Mah. शान्तः U. शिवः कल्याणगमनः BB.

८. प्र प्रायमग्निर्भरतस्य शृण्वऽइति । प्रजापतिर्वै भरतः स हीद सर्वं बिभर्ति वि यत्सूर्यो न रोचते बृहद्भा इति वि यत्सूर्य इव रोचते बृहद्भा इत्येतदभि यः पूरुं पृतनासु तस्थाविति पूरुर्ह नामासुररक्षसमास तमग्निः पृतनास्वभितष्ठौ दीदाय दैव्योऽअतिथिः शिवो न इति दीप्यमानो देवोऽतिथिः शिवो न इत्येतत्स्थितवत्या वसत्यै ह्येनं तत्स्थापयति SB. 6.8.1.14. p. 565. YV. reads दीदाय for द्युतानो and शिवः नः for शुशोच.
This stanza=YV. 12.34.=TS. 2.5.12.4.

९. भवन् M. भवन्ति is suggested for भवन्त  १०. हवींषि आहुतयो वा Sy.

११. भवस्त्वं A.

१२. तेजोभिस्तद्विभूतिभिरग्निभिर्वा Sy.

१३. श्रोतुः M. स्तुतः स्तोतः। स्तौतीति स्तुत् Sy.

१४. अग्ने ! is suggested for अग्नेः ॥

१५. शृणु Sy.  १६. स्वयमेव Sy.

१७. वर्धयस्व Sy.

१८. स्वां तनुं मम तनुं वा Sy.

१९. शोभनजनन ! is suggested for गोहनजननम् । कल्याणप्रादुर्भाव ! Sy.

२०. VM. ignores चित् ।

इदं वचः॑ शत॒साः संस॑हस्र॒मुद॒ग्नये॑ जनिषीष्ट द्वि॒बर्हाः॑ ।
शं यत्स्तो॒तृभ्य॑ आ॒पये॒ भवा॑ति द्यु॒मद॑मीव॒चात॑नं रक्षो॒हा ॥ ६ ॥

इदं वचः । इदम्[1] । वचः । गोशतस्य सम्भक्तृ[2] । तथा सहस्रधनसम्भक्तृ[3] च । अग्नये[4] । उज्जनिषीष्ट[5] । द्वयोः स्थानयोः परिवृढः[6] वसिष्ठः पृथिव्यां मनुष्यो भूत्वा वर्तते दिवि देवः । शङ्करम्[7] । यत्[8] । स्तोतृभ्यः । अचये[9] ज्ञातये पुत्रादिकाय । भवति तत्प्रयच्छति[10] । दीप्तिमत्[11] । रोगतनम्[12] रक्षसां हन्तृ[13] ।

नू त्वाम॑ग्न ईमहे॒ वसि॑ष्ठा ईशा॒नं सू॑नो सहसो॒ वसू॑नाम् ।
इषं॑ स्तो॒तृभ्यो॑ म॒घव॑द्भ्य आनड्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ७ ॥

नू त्वामग्ने[14] ।

VII. 9.

अबो॑धि जा॒र उ॒षसा॑मु॒पस्था॒द्धोता॑ म॒न्द्रः क॒वित॑मः पाव॒कः ।
दधा॑ति के॒तुमु॒भय॑स्य ज॒न्तोर्ह॒व्या दे॒वेषु॒ द्रवि॑णं सु॒कृत्सु॑ ॥ १ ॥

[15] अबोधि[16] । प्रबुद्धः[17] । उषसो जारः[18] । उषसाम् । उत्सङ्गात्[19] । होता[20] । मन्द्रः[21] । कवितमः[22] । पावकः[23] ।

---

१. स्तोत्रम् Sy.
२. गोशतस्य is suggested for गोगतस्य ॥
३. संभर्तृ M. गवां शतस्य सम्भक्ता Sy.
४. गवां सहस्रेण च संयुतः Sy.
५. उज्जनि० M. उज्जनिषीष्ट is suggested for उज्जनिषिष्ट ॥ उदजीजनत् Sy.
६. ०वृह्लो A. द्वाभ्यां विद्याकर्मभ्यां बृहन् द्वयोः स्थानयोर्द्युलोकयो र्वा Sy. द्विबर्हा द्वयोः स्थानयोः परिवृढः । मध्यमे च स्थान उत्तमे च N. 6.17. इति
७. सुखदम् Sy. ८. वचः Sy.
९. आपये is suggested for अचये ॥
१०. भवेत् Sy.
११. दीप्तिमत् । यशस्करमित्यर्थः Sy.
१२. रोगचातनम् is suggested for रोगतनम् ॥ रोगाणां निवारकम् Sy.
१३. हन्ता A.
१४. The *Pratīka* is supplied by the Editor. The stanza has already been explained. See RV. VII.7.7.
१५. 'अबोधि जारः' इति षड्चं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । 'अबोधि षट्' (KSA. 34.9. p. 24.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तमध्य उक्तो विनियोगः Sy. १६. ०धिम् Sy.
१७. अबुध्यत Sy.
१८. सर्वेषां प्राणिनां जरयिता Sy.
१९. ०ङ्गान्धोता A. मध्ये Sy.
२०. देवानामाह्वाता Sy.
२१. मदयिता स्तुत्यो वा Sy.
२२. कपित A. प्राज्ञतमः Sy.
२३. पापकः A. शोधकोऽग्निः Sy.

स करोति[1] । प्रज्ञानम् । दैव्यस्य च मानुषस्य[2] च । जन्तोः[3] । हव्यानि च । देवेषु करोति । धनञ्च[4] । यजमानेषु ।

**स सुक्रतुर्यो वि दुरः पणीनां पुनानो अर्कं पुरुभोजसं नः ।**
**होता मन्द्रो विशां दमूनास्तिरस्तमो ददृशे राम्याणाम् ॥ २ ॥**

**स सुक्रतुः** । सः[5] । सुप्रज्ञः[6] । यः[5] । विश्लथयति[7] । द्वाराणि[8] । पणिनाम्[9] । क्षरम्[10] । प्रयच्छन्[11] । अस्मभ्यम् । बहुरक्षणम्[12] । होता[13] । मोदनः[14] । मनुष्याणाम्[15] । दममनाः[16] । तिरस्कुर्वन्[17] । तमांसि[18] । दृश्यते[19] । रात्रीणाम्[20] ।

**अमूरः कविरदितिर्विवस्वान्त्सुसंसन्मित्रो अतिथिः शिवो नः ।**
**चित्रभानुरुषसां भात्यग्रेऽपां गर्भः प्रस्व१ आ विवेश ॥ ३ ॥**

**अमूरः**[21] । अमूढः । कविः[22] । अदीन[23] । परिचरणवान्[24] । शोभनसदस्कः[25] । मित्रः[26] । अतिथिः[27] । शिवः[28] । नः[29] । चित्रदीप्तिः । उषसाम् । अग्रे[30] । विभाति । अपाम् । गर्भः[31] । ओषधीः[32] । आविवेश ।

---

१. विदधाति Sy.
२. उभयस्य द्विपदश्च चतुष्पदश्च दैव्यस्य मानुषस्य वा Sy. ३. प्राणिनः Sy.
४. धनं दधाति Sy.
५. अग्निः Sy.
६. सुकर्मा सुप्रज्ञो वा Sy.
७. अपि ग्लथ० A. विवृतवान् Sy.
८. गवां पिधानानि Sy.
९. वणिनां A. पणीनाम् is suggested for पणिनाम् ॥ असुराणाम् Sy.
१०. क्षीरम् is suggested for क्षरन् ॥ अर्कमर्चनीयम् । गवां सङ्घम् Sy.
११. पुनानः शोधयन् । हरन्नित्यर्थः Sy.
१२. बाहु० M. पुरुभोजसं बहुक्षीरम् Sy.
१३. हेता A.
१४. मदयिता स्तुत्यो वा Sy.
१५. जनानां यजमानानां वा Sy.
१६. दमूना M. दान्तमना दममना दानमना वा Sy. १७. तिरः M.
१८. अन्धकारम् Sy.
१९. यद्वा । तमस्तिरो ददृशे । नाशयतीत्यर्थः Sy.
२०. रात्रीणां रमयित्रीणां वा Sy.
२१. अमूरम् A. २२. प्राज्ञः Sy.
२३. अदीनः is suggested for अदीन ॥
२४. दीप्तिमान् Sy.
२५. शोभजन० A. शोभनसदनः शोभनसंवेदनो वा Sy.
२६. प्रमीतेस्त्राता Sy.
२७. सर्वेषामतिथिवत्पूज्यः Sy.
२८. शिवकरो जगतः Sy.
२९. नं A.
३०. मुखे Sy.
३१. सोऽयमपां गर्भः सन् Sy.
३२. ओषधिः A. प्रस्वो जायमाना ओषधीः Sy.

ई॒ळेन्यो॑ वो॒ मनु॑षो यु॒गेषु॑ समन॒गा अ॑शुच॒ज्जा॒तवे॑दाः ।
सु॒सं॒दृशा॑ भा॒नुना॒ यो वि॒भाति॒ प्रति॒ गावः॑ समिधा॒नं बु॑धन्त ॥ ४ ॥

ईळेन्यः । ईड्यः[1] । युष्माकम्[2] । मनुष्यस्य यजमानस्य । यागदिवसेषु[3][4] । सेनाग्रे गन्ता[5] । प्राज्वलत्[6] । जातप्रज्ञः[7] । शोभनसन्दर्शनेन । तेजसा । यः[8] । विभाति तम् । स्तुतिवाचः[9] । समिध्यमानम्[10] । प्रतिबोधयन्तु[11] ।

अग्ने॒ या॒हि दू॒त्यं१॒॑ मा रि॑षण्यो दे॒वाँ अच्छा॑ ब्रह्म॒कृता॑ ग॒णेन॑ ।
सर॑स्वतीं म॒रुतो॑ अ॒श्विना॒पो यक्षि॑ दे॒वान् र॑त्न॒धेया॑य॒ विश्वा॑न् ॥ ५ ॥

अग्ने याहि[12] । अग्ने ! याहि[13] । दूत्यम्[14] । मा चाध्वनि[15] । विनष्टो भूः[16] । देवान्[17] प्रति[13] । स्तोत्रकृता[18] सङ्घेन सहर्षीणाम् । सरस्वतीम् । मरुतः । अश्विनौ[19] । अपः[20] । यज[21] । रत्नानां दानाय[22] । सर्वान् । देवानिति ।

त्वाम॑ग्ने समिधा॒नो वसि॑ष्ठो॒ जरू॑थं ह॒न्यक्षि॑ रा॒ये पुरं॑धिम् ।
पु॒रु॒णी॒था जा॑तवेदो जरस्व यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ६ ॥

त्वामग्ने[23] । त्वाम् । अग्ने[24] ! प्रज्वलयन्[25] । वसिष्ठः[26] । जरूथं[27] रक्षः । हन्तु[28] । यज[29] त्वम् ।

---

१. ईडे M. ईड्यः is suggested for ईड्ये ॥ स्तुत्यः Sy. २. हे अग्ने ! वस्त्वम् । अत्र विभक्तिवचनव्यत्ययः Sy. ३ यागकालेषु सर्वेष्वपि दिवसेषु वा Sy. ४. अतः परं परोक्षस्तुतिः Sy. ५. युद्धेषु सङ्गन्ता सन् Sy. ६. प्रज्वालं M. दीप्यते Sy.
७. जातधनः Sy. ८. अग्निः Sy.
९. स्तुतयः Sy. १०. ०मिथ्यमा० M.
११. प्रतिबोधयन्ति Sy. १२. वैश्वदेवे पशौ 'अग्ने याहि' इति हविषो याज्या । सूत्रितञ्च—'अग्ने याहि दूत्यं मा रिषण्य इन्द्रं नरो नेमधिता हवन्त इति तिस्रः' (ĀSS 3.7.) इति Sy.
१३. Sy. construes अच्छ with याहि and explains them together as अभिगच्छ.
१४. दूत्य A. दूतस्य कर्म हविर्वहनादि Sy.
१५. मा चा० A. १६. हिंसीः Sy.
१७. देवात् Sy.
१८. ब्रह्मकृतोऽस्मानस्मदीयांश्च तव स्तोतॄन् Sy.
१९. अश्विना A. २०. प A. २१. योज A.
२२. रत्नानं A. अस्मभ्यं रत्नदानाय Sy.
२३. वसिष्ठस्यार्षम् Dur., SKN.
२४. हे अग्ने ! Sy. हे भगवन्नग्ने ! Dur.
२५. ०यत् A. सन्दीपयन् Dur., SKN.
२६. ऋषिः Sy. वसिष्ठो नामर्षिः SKN.
२७. परुषभाषिणं जरणीयं वा रक्षोगणम् Sy. एवमत्र जरतेः स्तुत्यर्थस्य शब्दसारूप्यादर्थाविरोधाच्च 'जरूथं स्तोत्रम्' इत्युपपद्यते Dur. आत्मन एवायं परोक्षरूपेण जरूथं स्तोत्रम् SKN. जरूथं गरूथं गृणातेः N. 6.17.
२८. जहि Sy. गमयंस्त्वां प्रति 'हन्ति सेधति' इति गतिकर्मसु पठितम् Ngh. (2. 14.) Dur. हन्तेरन्तर्णीतण्यर्थस्य लङि अडभावश्छान्दसत्वात् । अहन् गमितवान् गमयति वा स्तुतवान् स्तौति वेत्यर्थः SKN.
२९. यडा त्वं A. यजति Dur. एतज्ज्ञात्वा... यज SKN.

धनाय[1] । बहुप्रज्ञं[2] देवगणम् । बहुनयनानि[3] रक्षांसि । जातवेदः[4] ! जारय[5] ।[6]

VII. 10.

**उषो न जारः पृथु पाजो अश्रेद्दविद्युतद्दीद्यच्छोशुचानः ।**
**वृषा हरिः शुचिरा भाति भासा धियो हिन्वान उशतीरजीगः ॥ १ ॥**

उषो[7] न । आदित्यः[8] । इव[9] । पृथु[10] । बलम्[11] । श्रयति । द्योतमानः[12] । दीप्यमानः । प्रज्वलत्[13] । वृषा[14] । हरणशीलः[15] । शुचिः[16] । आभाति[17] । तेजसा[18] । कर्माणि । प्रेरयन् । कामयमानाः[19] प्रजास्तमसा तिरोहिताः । उज्जगारेति[20] ।

---

१. धनवते यजमानाय Sy. धनप्राप्त्यर्थम् Dur.

२. बहुधियं देवगणम् Sy. बहुकर्मतमं धनसम्बन्धाद्वा बहुदातृतममिति स्यात् । यस्त्वं वसिष्ठेनैवमिज्यसे तं त्वां वयमपि यजाम एव Dur. बहुकर्माणं बहुप्रज्ञं वा । कम् ? सामर्थ्यादात्मानं देवगणं वा SKN. पुरन्धिर्बहुधीः N. 6. 73.

३. पुरुनीथेन बहुना स्तोत्रेण यद्वा पुरुणीथानेकमार्गाणि Sy.
स त्वं हे पुरुणीथा ! बहुस्तुत ! Dur.
स्तुतिः, ततस्तृतीयाया अलुक् । बह्व्या च स्तुत्या SKN.

४. हे जातवेदः ! अग्ने ! Sy. जातवेदोऽस्माभिरिज्यमानः Dur. जातधन ! जातप्रज्ञ ! वा SKN.

५. स्तुहि रक्षांसि जरयेत्यर्थः Sy. जुषस्वैतद्धविरस्मत्प्रत्तम् Dur. स्तूयस्व स्तुहि देवान् SKN.

६. किञ्च यूयमस्मान् पात रक्षत । एकस्यैव पूजनार्थे बहुवचनम् । स्वस्तिभिः स्वस्त्ययनैराशीःप्रयोगैः पात नः सदा नित्यमेवेत्यर्थः Dur. किञ्च यूयं पात । एकस्यैव पूजनार्थे बहुवचनम् । पाहि स्वस्तिभिरविनाशैः सर्वदा सर्वकालं नोऽस्मान् SKN., N. 6. 17.; SKN. II. 4. 55.

७. 'उषो न जारः' इति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । तथा चानुक्रान्तम्—'उषो न पञ्च' (KSA. 34.10. p. 24.) इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

८. VM. seems to explain उषः and जारः together by आदित्यः ॥ Sy. also explains the two words together as उषसो जारः सूर्यः ।

९. तद्वत् Sy.

१० प्रथु A. विस्तीर्णम् Sy.

११. तेजः Sy.

१२. ०मान A.

१३. ०लन् is suggested for ०लत् ॥ किं च दविद्युतत्, दीद्यत्, शोशुचान इति त्रयोऽपि शब्दा यद्यपि दीप्तिकर्माणस्तथापि दीप्तेर्भूयस्त्वज्ञापनाय प्रयुक्ता इति न पुनरुक्तिः । अत्यन्तं दीप्यमान इत्यर्थः Sy.

१४. कामानां वर्षिता Sy.

१५. हविषां प्रेरकः Sy.

१६. शुद्धिकृत् Sy.

१७. राभाति A.
प्रकाशते Sy.

१८. दीप्त्या Sy.

१९. ०माना A.

२०. जागरयति । तमसा तिरोहिताः प्रजा उद्गिरति वा Sy.

**स्व१र्ण वस्तोरुषसामरोचि यज्ञं तन्वाना उशिजो न मन्म ।**
**अग्निर्जन्मानि देव आ वि विद्वान्द्रवद्दूतो देवयावा वनिष्ठः ॥ २ ॥**

**स्वर्ण वस्तोः**[1] । आदित्यः[2] । व[3] । अहि[4] । उषसा गमने[5]ऽग्निः[6] । दीप्यते । यज्ञम् । कुर्वन्तः[7] । ऋत्विजः । इवाग्निरपि[8] । स्तोत्रमुच्चारयति[9] । अग्निः । देवः । जातानि भूतानि । जानन् । विविधम् । आद्रवति । दूतः[10] । देवान् प्रति गन्ता[11] । दातृतमः ।

**अच्छा गिरो मतयो देवयन्तीरग्निं यन्ति द्रविणं भिक्षमाणाः ।**
**सुसंदृशं सुप्रतीकं स्वञ्चं हव्यवाहमरतिं मानुषाणाम् ॥ ३ ॥**

**अच्छा गिरः** । स्तुतयः[12] । [illegible][13] । देवा[14][illegible] यन्तः । अग्निं प्रथमम् । अच्छा यन्ति[15] । धनम् । भिक्षमाणाः[16] । शोभनसन्दर्शनम्[17] । शोभनाङ्गम्[18] । शोभनगमनम्[19] । हव्यवाहम्[20] । मानुषाणाम्[21] । देवान् प्रति गन्तारम्[22] ।

**इन्द्रं नो अग्ने वसुभिः सजोषा रुद्रं रुद्रेभिरा वहा बृहन्तम् ।**
**आदित्येभिरदितिं विश्वजन्यां बृहस्पतिमृक्वभिर्विश्ववारम् ॥ ४ ॥**

**इन्द्रं नः** । इन्द्रम् । नः[23] । अग्ने ! वसुभिः[24] । सङ्गतस्त्वम्[25] । आवह[26] । तञ्च[27] । महान्तम् । रुद्रैः[28] । आदित्यैश्च सह[29] । अदितिम् । विश्वजनहिताम्[30] । बृहस्पतिञ्च । स्तुतिमद्भिरङ्गिरोभिः[31] । विश्वैर्वरणीयमिति[32] ।

---

१. स्थार्णवस्तो A.
२. स्वरादित्यो भवति । सु अरणः सु ईरणः । स्वृतो रसान् । स्वृतो भासं ज्योतिषाम् । स्वृतो भासेति वा N. 2.14.
३. इव is suggested for व ।
४. अह्नि is suggested for अहि ॥ अहनि Sy. वस्तोर्द्युरित्यहर्नामनी Ngh. 1.9.
५. ०षसां ग० is suggested for षसा ग० ॥ उषसामग्रे Sy.
६. ०नेनिः A. ७. विस्तारयन्तः Sy.
८. अपि च । नेति सम्प्रत्यर्थे Sy.
९. ०यन्ति A. मन्मानि मननीयानि स्तोत्राणि पठन्तीति शेषः Sy. १०. दूतो देवानाम् Sy.
११. देवात् A. देवान् प्रति गच्छन् Sy.
१२. वाचः Sy. १३. स्तुतिरूपाः Sy.
१४. निच्छ is written twice in A.
१५. न्ति A. अभिगच्छन्ति Sy.
१६. याचमानाः Sy.
१७. कल्याणसन्दर्शनम् Sy.
१८. ०नाग A. सुरूपं शोभनाङ्गं वा Sy.
१९. सुष्ठु गच्छन्तम् Sy. २०. हव्यानां वोढारम् Sy. २१. मनुष्यान् M.
२२. अरतिं स्वामिनम् Sy.
२३. अस्मदर्थम् Sy. २४. देवैः Sy.
२५. स्त्व is missing in A. M.
२६. ०वहन् A.
२७. VM. seems to explain रुद्रम् by तञ्च ।
२८. रुदैः A. रुद्रैर्देवैः सङ्गतः Sy.
२९. आदित्यैर्देवैः सङ्गतः Sy.
३०. विश्वजन० A. ३१. ऋक्वभिः स्तुत्यैः Sy.
३२. विश्वैः सम्भजनीयम् Sy.

मन्द्रं होतारमुशिजो यविष्ठमग्निं विश ईळते अध्वरेषु ।
स हि क्षपावाँ अभवद्रयीणामतन्द्रो दूतो यजथाय देवान् ॥ ५ ॥

मन्द्रं होतारम् । मन्द्रम्[1] । होतारम्[2] । ऋत्विजः[3] । युवतमम्[4] । अग्निम्[5] । मनुष्याः । स्तुवन्ति । यज्ञेषु[6] । सः[7] । हि[8] । रात्रिमान्[9] । भवति[10] । धनानां दाता[11] । द्रः[12] । ऽतो[13] । देवान् । युष्णु[14] ।

VII. 11.

महाँ अस्यध्वरस्य प्रकेतो न ऋते त्वदमृता मादयन्ते ।
आ विश्वेभिः सरथं याहि देवैर्न्यग्ने होता प्रथमः सदेह ॥ १ ॥

[15]महां असि । महांस्त्वम् । असि । अध्वरस्य[16] । प्रज्ञापयिता[17] । न । ऋते[18] । त्वत्तः[19] । देवाः । माद्यन्ति । आयाहि[20] । सरथम्[21] । विश्वैः । देवैः[22] । निषीद । अग्ने[23] ! होता[24] । स मुख्यस्त्वम् । बर्हिष्यस्मिन्[25] ।

त्वामीळते अजिरं दूत्याय हविष्मन्तः सदमिन्मानुषासः ।
यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवन्ति ॥ २ ॥

[26]त्वामीळते । त्वाम् । स्तुवन्ति[27] । गमनशीलम्[28] । दूत्याय । संहृतहविष्काः[29] । सदा[30] । इव[31] । मनुष्याः[32] ।

---

१. Omitted in M. २. स्तुत्यम् Sy.
३. आह्वातारम् Sy. ४. उशिजः कामयमानः Sy. ५. अग्नि स्स A. ६. यागेषु Sy.
७. अग्निः Sy. ८. यस्मात् कारणात् Sy.
९. रात्रौ खल्वग्नयेऽग्निहोत्रं हूयते Sy.
१०. तथा च श्रूयते—'यस्माद्दूतोऽभवत्तस्मादिश-स्तमध्वर इळते' इति Sy.
११. रयीणां (सूर्यस्य) रयिमतां हविष्मतां यजमानानाम् Sy. १२. Omitted in M. अतन्द्रः is suggested for द्रः ॥ तन्द्रारहितः Sy. १३. Omitted in M. दूतः is suggested for ऽतो ।
१४. Omitted in M. यष्टुम् is suggested for युष्णु ।
१५. 'महाँ असि' इति पञ्चर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । 'महान्' (KSA. 34.11. p. 24.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.
१६. अमध्वर० A. १७. प्रज्ञापनः सन् Sy.
१८. विना Sy. १९. त्वया Sy.
२०. आधाहि A. २१. सरथं यथा भवति Sy.
२२. Omitted in A. २३. अग्नेः A.
२४. आह्वाता सन् Sy. २५. आस्तीर्णे बर्हिषि Sy.
२६. वाजपेये बार्हस्पत्यचरोः स्विष्टकृतोऽनुवाक्या । सूत्रितञ्च—'त्वामीळते अजिरं दूत्यायाग्नि सुदीतिं सुदृशं गृणन्तः' (ASS. 9.9.) इति Sy. वसिष्ठस्त्रिष्टुभाग्निं तुष्टाव । प्रातरनुवाके विनियुक्ता । हे अग्ने ! DDN.
२७. याचन्ते Sy. २८. प्रगामिनम् ॥ Sy. अजिरं क्षिप्रम् DDN. अजिरं भुरण्युरिति क्षिप्रनामनी Ngh. 2.15. २९. दूतकर्मणे हविर्वहनाय Sy. ३०. संहृत० A. यजमानाः Sy.
३१. एव is suggested for एव ।
३२. मानुषाः Sy.

यस्य त्वं यजमानस्य[1] । बर्हिः । देवैः सह[2] । आसदः[3] । अहानि । अस्मै[4] । शोभनाहानि[5] । भवन्ति[6] ।[7]

**त्रिश्चिदक्तोः प्र चिकितुर्वसूनि त्वे अन्तर्दाशुषे मर्त्याय ।**
**मनुष्वदग्न इह यक्षि देवान्भवा नो दूतो अभिशस्तिपावा ॥ ३ ॥**

**त्रिश्चित्**[8] । त्रिः[9] । चित् । अन्नः[10] । प्रवेदयन्ति । हवींषि सवनेषु । त्वयि[11] । यजमानायर्त्विजे[12] । प्रयच्छते[13] । मनोरिव । अह्नः[14] । इहास्मदीये यज्ञे[15] । यज । देवान् । भवा[16] । नः[17] । दूतः । अभिशस्तीनां रक्षिता[18] ।[19]

**अग्निरीशे बृहतो अध्वरस्याग्निर्विश्वस्य हविषः कृतस्य ।**
**क्रतुं ह्यस्य वसवो जुषन्ताथा देवा दधिरे हव्यवाहम् ॥ ४ ॥**

**अग्निरीशे** । अग्निः । ईशे[20] । महतः । यज्ञस्य[21] । अग्निः । विश्वस्य[22] । हविषः । सम्पादितस्य[23] । प्रज्ञानम्[24] । हि । अस्य । वसवः[25] । सेवन्ते । अथैनम्[26] । देवाः । कुर्वन्ति[27] । हविषां पोतारम्[28] ।

उत्तरा निगदसिद्धेति[29]—

---

१. मान is written twice in A. किमर्थमित्यत आह यस्य हविष्मतः DDN.

२. देवास्सह M. देवैः सार्धम् Sy., DDN.

३. त्वमधितिष्ठसि Sy. असद इति यच्छब्दान्निघाताभावः 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्' Pa. 8.1.30. DDN.

४. हविष्मते Sy. हविष्मते यजमानाय, अयष्टुस्तद्व्यतिरिक्तकर्म कुर्वतः सदा दुर्दिनं भवतीत्यवगन्तव्यम् । 'स्वाध्यानं वाचः सुदिनत्वमह्नाम्' (RV. II.21.6.) इति DDN.

५. शोभनदिनानि Sy. 'सुपां सुलुक्' (Pa. VII.1.39.) इति डादेशः DDN.

६. भवति A.

७. VM. ignores अग्ने ।

८. हे अग्ने ! Sy.

९. त्रिवारम् । त्रिषु सवनेषु । यद्वा...त्रिस्त्रीनग्निमश्वमजं च त्वय्यन्तर्निहितानि प्र चिकितुः । अविदन्नित्यर्थः Sy.

१०. अन्नं M. अह्नः is suggested for अन्नः ॥ यद्यप्यक्तुरिति रात्रिनाम तथाप्यत्राज्यन्ते व्यज्यन्ते रूपादीन्यस्मिन्नित्यह्नो नाम । यद्वा...अह्नि Sy. ११. यथि A. यदि M.

१२. ०मानर्त्विजः A. M. मनुष्याय तदर्थमित्यर्थः Sy. १३. हविषां प्रदात्रे Sy.

१४. अग्ने ! is suggested for अह्न ।

१५. यज्ञे Omitted in A.

१६. भव is suggested for भव ।

१७. अस्माकम् Sy.

१८. ०स्तीनां (म्नां) र० A. ०स्तिम्नां र० M. अभिशस्तिभ्यो रक्षिता is suggested. अभिशस्तेरभिशंसकात् शात्रवात् पावा रक्षिता Sy.

१९. VM. ignores अन्तः ॥ अन्तर्मध्ये Sy.

२०. ईष्टे Sy.

२१. कौटिल्यरहितस्य यज्ञस्य Sy.

२२. सर्वस्य Sy.

२३. संस्कृतस्य Sy.

२४. कर्म Sy. २५. देवाः Sy. २६. अपि च Sy.

२७. चक्रिर इत्यर्थः Sy.

२८. पोक्त्वारं A. वोढारम् is suggested for पोतारम् ॥ हव्यानां वोढारम् Sy.

२९. उक्तरागद० A.

आग्ने वह हविरद्याय देवानिन्द्रज्येष्ठास इह मादयन्ताम् ।
इमं यज्ञं दिवि देवेषु धेहि यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

[आग्ने वह[1] ।]

VII. 12.

अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ १ ॥

अगन्म[2] । गच्छामः[3] । महता । नमस्कारेण । युवतमम्[4] । यः[5] । दीप्यते[6] । काष्ठैः समिध्यमान आहवनीये[7] । चित्रभानुम्[8] । द्यावापृथिव्योः[9] । विस्तीर्णयोः । अन्तरे वर्तमानः[10] । स्वाहुतम्[11] । सर्वत एव । अभिमुखं[12] समिद्धो ह्यग्निः सर्वतो[13] दीप्तो भवति भयाऽऽवर्जितः[14] ?

स मह्ना विश्वा दुरितानि साह्वानग्निः ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः ॥ २ ॥

स मह्ना[15] । सः[16] । महत्त्वेन । विश्वानि । दुरितानि । सहमानः[17] । अग्निः । स्तूयते[18] । यज्ञे[19] ।

---

१. The *pratīka* is supplied by the Editor. हे अग्ने ? हविरद्याय हविषां भक्षणाय देवानावह । किमर्थम् ? इत्यत आह— इहास्मिन् यज्ञ इन्द्रज्येष्ठास इन्द्रप्रमुखा देवा मादयन्ताम् । इमं यज्ञमिदं यष्टव्यं हविर्दिवि स्थितेषु देवेषु धेहि । निधेहि । देवान्वेह नयेदं हविर्वा देवेषु नयेति भावः । अन्तिमः पादो व्याख्यातचरः Sy.

२. 'अगन्म महा' इति तृचात्मकं द्वादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाग्नेयम् । तथा चानुक्रान्तम्—'अगन्म तृचम्' (KSA. 34.12. p. 24.) इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । व्यूळ्हे दशरात्रे नवमेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्रितञ्च—'तृतीयस्यागन्म महेत्याज्यम्' (ĀSS. 8.11.) इति Sy.

३. वयमुपगच्छाम Sy.

४. तमिमम् Sy.

५. अग्निः Sy.

६. दीप्यतै. A.

७. VM. seems to explain स्वे and दुरोणे together as आवहनीये ॥ स्वे स्थाने आहवनीये Sy.

८. चित्रज्वालम् Sy.

९. ०व्याप्तिस्तीर्ण० A.

१०. अन्तरवक्तमा A. ०मानम् is suggested for ०मानः । ०अन्तर्मध्येऽन्तरिक्षे Sy.

११. सुष्ठ्वाहुतिभिर्हुतं सन्तम् Sy.

१२. प्रतिगच्छन्तम् Sy.

१३. सर्वतो A.

१४. भा is the synonym of splendour or light. Thus भयाऽऽवर्जितः means a source of light.

१५. मग्ना A.

१६. योऽग्निः Sy.

१७. अभिभवन् Sy.

१८. अस्माभिः स्तूयते Sy.

१९. यज्ञगृहे Sy.

जातप्रज्ञः[1] । सः । अस्मान् । रक्षतु[2] । दुरितात्[3] । अवद्याच्च निन्दितुः ते देवा हि[4], अस्मान्[5] । स्तुवतः[6] । अपि च । अस्मान्[7] । हविष्मत[8] इति ।

त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

त्वं वरुणः । त्वम् । अग्ने ! वरुणः[9] । अपि च । मित्रश्च भवसि[10] । त्वाम् । वर्धयन्ति । स्तुतिभिः । वसिष्ठाः । त्वयि स्थितानि[11] । धनानि । सुदानानि[12] । सन्तु वसिष्ठेष्विति ।

VII. 13.

प्राग्नये विश्वशुचे धियंधेऽसुरघ्ने मन्म धीतिं भरध्वम् ।
भरे हविर्न बर्हिषि प्रीणानो वैश्वानराय यतये मतीनाम् ॥ १ ॥

प्राग्नये[13] । प्रभरध्वम्[14][15] । अग्ने[16] । विश्वस्य शोचयित्रे[17] । कर्मणां धारयित्रे[18] । असुराणां हन्त्रे[19] । स्तुतिम्[20] । कर्म चेत्युक्त्वा तथा करोमीति वदति । वहामि[21] । हविः । इदानीम्[22] । यज्ञे[23] । प्रीयमाणः[24] । वैश्वानराय[25] । नियन्त्रे[26] । स्तुतीनाम्[27] ।

---

१. जातधनो जातप्रज्ञो वा Sy.
२. पायात् Sy.
३. निन्दिताच्च कर्मणः Sy.
४. ह A. ५. असां A.
६. स्तुवतोऽपि रक्षिषत् Sy.
७. अस्मात् A. ८. VM. ignores आ.
९. वरुणं A.
१०. जगतः प्रमीतेस्त्रातासि Sy.
११. विद्यमानानि Sy.
१२. सुधनानि M. सुसम्भजनानि सन्तु । स्पष्टमन्यत् Sy.
१३. 'प्राग्नये' इति तृचं त्रयोदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकम् । तथा चानुक्रान्तम्–'प्राग्नये वैश्वानरीयम्' (KSA. 34.13. p. 24.) इति । विनियोगो लैङ्गिकः Sy.
१४. हे सखायः ! Sy.
१५. प्रहर० A.
१६. अग्नेः A. अग्नये is suggested for अग्ने ॥
१७. विश्वं यो दीपयति तस्मै Sy.
१८. धियां कर्मणां यो धाता तस्मै Sy.
१९. असुराणां यो हन्ता तस्मै Sy.
२०. मननीयं स्तोत्रम् Sy.
२१. हामी A. अहं भरामि यद्वा सम्भरामि Sy.
२२. इव । यद्वा नेति सम्प्रत्यर्थे Sy.
२३. यज्ञ A.
२४. प्रय० A. स्तुतिं प्रीयमाणः यद्वा प्रीणयन् Sy.
२५ विश्वनरहितायाग्निविशेषाय Sy.
२६. दात्रे Sy.
२७. अभिमतानां कामानाम् Sy.

त्वम॑ग्ने शो॒चिषा॒ शोशु॑चान॒ आ रोद॑सी अपृणा॒ जाय॑मानः ।
त्वं दे॒वाँ अ॒भिश॑स्तेरमुञ्चो॒ वैश्वा॑नर जातवेदो महि॒त्वा ॥ २ ॥

त्वमग्ने । त्वम् । अग्ने ! ज्वालया[1] । ज्वलन्[2] । आपूरयसि[3] । द्यावापृथिव्यौ[4] । प्रातरादित्यात्मना[5] जायमानः । त्वम् । दे[6] । अस्मच्छत्रूणामसुराणामभिशस्तेश्च[7][8] । मुञ्चसि[9] । वैश्वानर ! जातवेदः[10] ! महत्त्वेन[11] ।

जा॒तो यद॑ग्ने॒ भुव॑ना॒ व्यख्यः॑ प॒शून्न गो॒पा इर्यः॒ परि॑ज्मा ।
वैश्वा॑नर॒ ब्रह्म॑णे विन्द गा॒तुं यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ३ ॥

जातो यदग्ने । यदा[12] । त्वमग्ने ! प्रादुर्भूतः[13] । भूतादि[14] । विविधं पश्यति[15] । पशून्[16] । इव । गोपाल[17] । स्वामी[18] । परितो[19] गच्छंस्तदानीम् । वैश्वानर ! स्तोत्राय[20] चास्माकम् । लभस्व[21] । गमनमिति[22][23] ।

---

१. दीप्त्या Sy., BB.
२. दीप्यमानः Sy. भृशं दीप्यमानः BB.
३. आसि A. आपूरयः Sy. शोचिषा, आपालयसि वा 'पॄ पालनपूरणयोः' BB.
४. ०थिव्योः A.
५. प्राकारा० A. अत एव.. .जायमान एव BB.
६. दे A. देवान् is suggested for दे ॥ ऋत्विजः BB.
७. अस्म is omitted in A.
८. अभिशंसकाच्छत्रोः Sy. पापात् 'शंस स्तुतौ' अभिपूर्वोऽयमवदने वर्तते, क्तिनि.....स त्वमभिशस्तेर्मुञ्चेति BB.
९. मञ्चसि A. अमोचयः Sy.
१०. अपि च जातप्रज्ञ ! जातधन ! वा- Sy. जातानां वेदितः ! BB.
११. माहात्म्येन । तृतीयाया आकारादेशः । यद्वा-- महिम्नो मकारनकारयोस्तकारवकारौ वादेशौ भवतः BB.
This stanza=TS. 1.5.11.2.
१२. यस्मादेवं तस्मात् Sy.
१३. सूर्यात्मना जातः Sy. जातमात्र एव BB.
१४. भूतानि is suggested for भूतादि ॥ भुवनानि भूतजातानि सर्वांल्लोकान् Sy.
१५. पश्यसि is suggested for पश्यति ॥ रक्षार्थं पश्यसि विशेषेण पश्यसि BB.
१६. पशुम् BB.
१७. गोपालः is suggested for गोपाल ॥ यथा गवां पालकः पशून् पश्यति तद्वत् Sy. गवां पालयिता BB.
१८. स्वामी प्रेरयन् वा Sy. इराऽन्नं हविरात्मकं तत्र साधुस्तदर्हो वा BB.
१९. परितो is suggested for परतो ॥ परितो गन्ता सन् Sy. सर्वतो गन्ता । निपातोऽयं मनिन् प्रत्ययान्तः BB.
२०. ब्रह्म स्तोत्रं तदर्थम् । यद्वा ब्रह्मणे ब्राह्मणार्थम् Sy. हविरात्मनेऽन्नाय यागात्मने वा परिवृढाय कर्मणे BB.
२१. हविः प्राप्तुं मार्गमाप्नुहि । पुनःपुनर्जातेष्टिं प्रवर्तयेति भावः BB.
२२. गतिं फलप्राप्तिम्, येन ब्रह्मगोपद्रवान्निर्गच्छन्ति तं गातुं विन्देत्यर्थः Sy. मार्गम् BB.
२३. स्पष्टमन्यत् Sy. युष्माकमेवार्थे सदा नोऽस्मान् यूयं पात रक्षत स्वस्तिभिरविनाशैः । अविनाशान् प्रापय्यास्मान्पातेति । पूजार्थमेकस्मिन् बहुवचनम् BB.
This stanza=TS. 1.5.11. 2.

VII. 14.

**स॒मिधा॑ जा॒तवे॑दसे दे॒वाय॑ दे॒वहू॑तिभिः ।**
**ह॒विर्भिः॑ शु॒क्रशो॑चिषे नम॒स्विनो॑ व॒यं दा॑शेमा॒ग्नये॑ ॥ १ ॥**

[1]समिधा । समिधा । देवानामाह्वानैश्च[2] सहाग्निमावह सोममावहेत्याह्वानादि[3] देवानाम् । जात-वेदसे[4] । देवा[5] । हविर्भिः[6] । दीप्ततेजसे[7] । नमस्कारयुक्ता[8] । वयम्[9] । दान कर्मः[10] । अग्नये[11] ।

**व॒यं ते॑ अग्ने स॒मिधा॑ विधेम व॒यं दा॑शेम सुष्टु॒ती य॑जत्र ।**
**व॒यं घृ॒तेना॑ध्वरस्य होतर्व॒यं दे॑व ह॒विषा॑ भद्रशोचे ॥ २ ॥**

वयं ते । वयम्[12] । तुभ्यम्[13] । अग्ने ! समिधा । परिचरणं कुर्मः[14] । वयं हवींषि च । दाशेम । शोभ-नया[15] स्तुत्या । यष्टव्या[16] ! वयम् । घृतेन । अध्वरस्य । धातः[17] । वयम् । देव[18] ! हविषा । भद्रदीप्ते[19] !

**आ नो॑ दे॒वेभि॒रुप॑ दे॒वहू॑ति॒मग्ने॑ या॒हि वष॑ट्कृतिं जुषा॒णः ।**
**तुभ्यं॑ दे॒वाय॒ दाश॑तः स्याम यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ३ ॥**

आ नो देवेभिः । उभायाहि[20] । देवैः सह[21] । अस्माकम् । यज्ञम्[22] । अग्ने ! वषट्कारम्[23] । सेवमानः । तुभ्यम्[24] । देवाय वयम्[25] । ददतः[26] । स्याम[27] ।[28]

---

१. 'समिधा जातवेदसे' इति तृचं चतुर्दशं सूक्तं वसिष्ठस्यार्षमाग्नेयम् । आद्या बृहती द्वितीयातृतीये त्रिष्टुभौ । तथा चानुक्रम्यते—'समिधा बृहत्यादि' (KSA. 34.14. p. 24.) इति । विनियोगो लैङ्गिकः Sy.

२. देवस्तुतिभिः Sy.

३. ०ह्वारि A. ०ह्वानादिभिर्देवानाम् is suggested for ह्वानादिदेवानाम् ।

४. जातवेदसं जातप्रज्ञम् Sy.

५. देवाय is suggested for देवा ॥ स्तुत्यमग्निम् Sy.

६. हविभिः A.

७. शुक्रशोचिषं शुभ्रदीप्तिम् Sy.

८. हविष्मतः Sy.

९. वसिष्ठाः Sy.

१०. परिचरेम Sy.

११. अत्र दाशतियोगात्कर्मणि चतुर्थी । प्रायेण सर्वत्र दाशतियोगे चतुर्थी दृश्यते Sy.

१२. वसिष्ठाः Sy.

१३. त्वाम् Sy.

१४. त्वां परिचरेम Sy.

१५. गोहनाया A.

१६. यष्टव्य is suggested for यष्टव्य ॥ हे यष्टव्य ! अग्ने ! Sy.

१७. धातः A. होतः is suggested for धातः ॥

१८. देवा A. द्योतमान ! अग्ने ! Sy.

१९. हे कल्याणज्वाल ! Sy.

२०. उपायाहि is suggested for उभायाहि A. उभयाभिः M.

२१. देवैः सार्धम् Sy.

२२. स्तोत्रं यज्ञं वा Sy.

२३. ०कार A. हविः Sy.

२४. द्योतमानाय Sy.

२५. वं M.

२६. ददत A. परिचरन्तः Sy.

२७. भवेम Sy.

२८. सिद्धमन्यत् Sy.

VII. 15.

**उपसद्याय मीळ्हुषं आस्ये जुहुता हविः । यो नो नेदिष्ठमाप्यम् ॥ १ ॥**

उपसद्याय[1] । समाश्रयणीयाय[2] । कामानां दोग्ध्रे[3] । प्रियार्थं तस्यास्ये[4] । जुहुत[5] । हविः । यः[6] । अस्माकम् । अन्तिकतमम्[7] । ज्ञातेयं भवति[8] ।

**यः पञ्च चर्षणीरभि निषसाद दमेदमे । कविर्गृहपतिर्युवा ॥ २ ॥**

[ यः पञ्च[9] । ] यः[10] । पञ्च । जनान्[11] । अभिनिषसाद[12] । गृहेगृहे[13] । कविः[14] । गृहपतिः[15] । युवाम्[16] ।

**स नो वेदो अमात्यमग्नी रक्षतु विश्वतः । उतास्मान् पात्वंहसः ॥ ३ ॥**

स नो वेदः[17] । सः[18] । अस्माकम् । धनम् । सह भवम्[19] । अग्निः । रक्षतु । सर्वतः[20] । अपि च । अस्मान्[21] । रक्षतु । रक्षमः[22] ।

---

१. 'उपसद्याय' इति पञ्चदशर्च पञ्चदशं सूक्तं वसिष्ठस्यार्षं गायत्रमाग्नेयम् । तथा चानुक्रान्तम्—'उपसद्याय पञ्चोना गायत्रम्' (KSA. 34.15. p. 24.) इति प्रातरनुवाकआग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितञ्च—'उपसद्याय त्वमग्ने यज्ञानामिति तिस्र उत्तमां उद्धरेत्' (ĀSS. 4.13.) इति । उपसदि पौर्वाह्णिक्यां 'उपसद्याय' इत्याद्यास्तिस्र ऋचः सामिधेन्यः । सूत्र्यते च—'उपसद्याय मीळ्हुष इति तिस्र एकैकां त्रिरनवानम्' (ĀSS. 4.8.) इति । पवित्रेष्ट्यां 'अग्नी रक्षांसि' इत्येषा प्रथमाज्यभागानुवाक्या । सूत्रितञ्च—'पावकवता-वाज्यभागावग्नी रक्षांसि सेधति' (ĀSS. 2.12.) इति । अन्वारम्भणीयायामग्नेर्भगिनो याज्या । सूत्रितञ्च—'आ' सर्वं सवितुर्यथा सनो राधांस्या भर' (ĀSS. 2.8.) इति । स्वस्त्ययन्यामिष्टौ "अग्ने रक्षा णः" इति प्रथमाज्यभागानुवाक्या । सूत्रितञ्च—'स्वस्त्ययन्यां रक्षितवन्तावग्ने रक्षा णो अंहसः' (ĀSS. 2.10.) इति Sy.

२. हे अध्वर्यवः ! Sy.

३. उपसदनीयाय Sy.

४. धर्त्रे A. कामानां वर्षित्रेऽग्नय तत्प्रीत्यर्थम् Sy. ५. तस्यैव मुखे Sy.

६. अग्निः Sy.

७. अन्तिकतम A. आसन्नतमम् Sy.

८. आसन्नतमो बन्धुर्भवतीत्यर्थः । आप्यमिति स्वार्थिकस्तद्धितः Sy.

९. The *pratīka* is supplied by the Editor. १०. अग्निः Sy.

११. मनुष्यान् Sy.

१२. अभिमुखं निषीदति । उत्तरया वाक्यपरिसमाप्तिः Sy.

१३. ग्रहे ग्रहे A.

१४. प्राज्ञः Sy.

१५. गृहाणां पालयिता Sy.

१६. युवा is suggested for युवां ॥ नित्यतरुणः सन् Sy. १७. स वेद A. M.

१८. सोऽग्निः Sy.

१९. अन्तिके भवम्, सह भूतं वा Sy.

२०. सर्वतः बाधकात् Sy.

२१. अस्मात् A. वसिष्ठान् Sy.

२२. पापात् Sy.

नवं नु स्तोममग्नये दिवः श्येनाय जीजनम् । वस्वः कुविद्वनाति नः ॥ ४ ॥

नवं नु । नवम्[1] । क्षिप्रम् । स्तोमम् । अग्ने[2] । द्युलोकस्य । श्येनभूताय[3] । जनयामि । स ह्यस्मभ्यम्[4] । बहु[5] । धनम्[6] । प्रयच्छति ।

स्पार्हा यस्य श्रियो दृशे रयिर्वीरवतो यथा । अग्रे यज्ञस्य शोचतः ॥ ५ ॥

स्पार्हाः[7] । स्पृहणीयाः[8] । यस्य । श्रियः[9] । दर्शनाय[10] भवन्ति[11] । यथा[12] । पुत्रवतः[13] । रयिर्दर्शनीयो[14] भवति । यज्ञस्य । अग्रे[15] आहवनीये । दीप्यमानस्य ।

सेमां वेतु वषट्कृतिमग्निर्जुषत नो गिरः । यजिष्ठो हव्यवाहनः ॥ ६ ॥

सेमाम्[16] । सः । इमम् । वषट्कारम्[17] । कामयताम्[18] । अग्निः । सेवताम् । गिरश्च[19] । अस्माकम् । यष्टृतमा[20] । हविषां वोढा[21] ।

नि त्वा नक्ष्य विश्पते द्युमन्तं देव धीमहि । सुवीरमग्न आहुत ॥ ७ ॥

नि त्वा[22] । निधीमहि स्थाने[23] । त्वाम् । उपगन्तव्यात्[24] । विशां पतेः[25] । ममतम्[26] । देवम्[27] । सुवीरम्[28] । अग्ने ! आहुतम्[29] ।

---

१. नूतनम् Sy. २. अग्नये is suggested for अग्ने ॥ गन्त्रेऽग्नये Sy.
३. श्येनसदृशाय Sy. ४. स ह्यन्यं M.
५. वस्वो वसु धनम् । कर्मणि षष्ठी Sy.
६. ददात्वित्यर्थः Sy. ७. स्वाहीं A.
८. ०णीय A. स्पृहणीया भवन्ति तस्मै नवं स्तोमं जीजनमित्यनुषङ्गः । उत्तरत्र सम्बन्धो वा Sy. ९. अग्नेः Sy. १०. दीप्तयः Sy.
११. द्रष्टुं चक्षुषे वा Sy. १२. Omitted in A. १३. ०वन्तः A १४. रयः द० M. धनम् Sy. १५. पुरस्ताद् भागे Sy.
१६. शि समाम् A. १७. षट्कारम् A. अस्माभिर्दीयमानामाहुतिम् Sy.
१८. भक्षयतु वा Sy. १९. स्तुतीश्च Sy.
२०. ०तमः is suggested for ०तमा ॥ यजनीयतमो यष्टृतमो वा Sy.
२१. हविरः A. ०षां पोथग् M.
२२. The commentary on the stanza is missing in A. २३. निहितवन्तः Sy.
२४. ०न्तव्य ! is suggested for ०न्तव्यात् ॥ नक्ष्य ! उपगन्तव्य ! नक्षतिर्व्याप्तिकर्मा Sy. २५. पते ! is suggested for पतेः
२६. द्युमन्तम् ! is suggested for मम तं । दीप्तिमन्तम् Sy.
२७. देव ! is suggested for देवम् ॥ द्योतमान ! Sy. २८. कल्याणस्तोतृकम् Sy.
२९. आहुत ! is suggested for आहुतम् ॥ सर्वैर्यजमानैरभिहुत ! Sy.

**क्षपं उस्रश्चं दीदिहि स्वग्नयस्त्वया वयम् । सुवीरस्त्वमस्मयुः ॥ ८ ॥**

क्षप उस्रश्च[1] । रात्रीः । अहानि । च सर्वदा त्वम्[2] । दीप्यस्व । स्वग्नयः[3] । त्वया[4] । वयम्[5] । त्वञ्च । सुवीरः[6] । अस्मान् कामः[7] ।

**उपं त्वा सातये नरो विप्रासो यन्ति धीतिभिः । उपाक्षरा सहस्रिणी ॥ ९ ॥**

उप त्वा[8] । उपयन्ति[9] । त्वाम्[10] । लाभाय[11] । नरः[12] मेधाविनः[13] । कर्मभिः । उपयाति । वाक्य[14] सहस्रसंख्यायुक्ता[15] ।

**अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः ॥ १० ॥**

अग्नी रक्षांसि[16] । अग्निः । रक्षांसि । निषेधति[17] । शुक्रेति स्पष्टम्[18] ।

**स नो राधांस्या भरेशानः सहसो यहो । भगश्च दातु वार्यम् ॥ ११ ॥**

स नो राधांसि । सः[19] । अस्मभ्यम् । धनानि[20] । आहर । ईशानः[21] । सहसः पुत्र[22] ! भगम्[23] । च देवस्त्वमनुचरः[24] । प्रयच्छतु[25] । धनम् ।

---

१. The commentary on the stanza is missing in A.
२. हे अग्ने ! Sy
३. शोभनाग्नयो भवाम Sy.
४. दीप्यमानेन त्वया Sy.
५. वसिष्ठाः Sy. ६. सुस्तोतृको भव Sy.
७. अस्मत्कामः is suggested for अस्मान् काम ॥ अस्मान् कामयमानः । 'सुप आत्मनः क्यच्' इति क्यचि कृते 'क्याच्छन्दसि' इत्युप्रत्ययः । दकारलोपश्छान्दसः । Sy. अस्मयुरस्मान् कामयमानः' N. 6.2.
८. हे अग्ने ! Sy.
९. उपगच्छन्ति Sy. १०. त्वा A.
११. धनाय, कामानां लाभाय वा Sy.
१२. नेतारो यजमानाः Sy.
१३. विप्राः Sy.
१४. वाक् is suggested for वाक्य ॥ क्षयरहिता स्तुतिरूपास्मदीया वाक् Sy.
१५. ०हस्रं ख्या० A. सहस्रसंख्याका Sy.
१६. The *pratīka* is supplied by the Editor. १७. बाधताम् Sy.
१८. VM. ignores शुक्रशोचिः । अमर्त्यः । शुचिः । पावकः and ईड्यः ॥ शुक्रशोचिः शुभ्रज्वालः । अमर्त्यो मरणरहितो देवात्मा । शुचिः स्वयं शुद्धः । पावको ऽन्येषामपि शोधकः । ईड्यः स्तुत्यः Sy.
१९ प्रसिद्धस्त्वम् Sy.
२०. रायो राध इति धननाम Ngh. 2.10.
२१. सर्वस्य जगत ईश्वरः सन् Sy.
२२. हे सहसो यहो ! बलस्य पुत्र ! अग्ने ! Sy.
२३. भगः is suggested for भगम् । भगो देवोऽपि भगोऽत्र सूक्ते निपातभागिनी देवता Sy.
२४. ०स्त्वदनु० is suggested for ०स्त्वमनु० ।
२५. दातु अस्मभ्यं ददातु । अभ्यास लोपश्छान्दसः Sy.

**त्वमग्ने वीरवद्यशो देवश्च सविता भगः । दितिश्च दाति वार्यम् ॥ १२ ॥**

त्वमग्ने । त्वम् । अग्ने ! वीरवत्[1] । अन्नम्[2] । देवः । च । सविता[3] । भगः । च । अदितिश्च[4] देवी । धनम्[5] । प्रयच्छतु ।

**अग्ने रक्षा णो अंहसः प्रति ष्म देव रीषतः । तपिष्ठैरजरो दह ॥ १३ ॥**

अग्ने रक्ष । अग्ने ! रक्ष[6] । अस्मान् । रक्षसः[7] । प्रतिदह[8] । देवे[9] । हिसतः[10] । तप्ततमैस्तस्तेजोभिः[11] । अहरणु[12] [13] ।

**अधा मही न आयस्यनाधृष्टो नृपीतये । पूर्भवा शतभुजिः ॥ १४ ॥**

अधा[14] मही[15] । अह[16] । महती । अयसा[17] निर्मिता । अस्माकम् । पुरी[18] । त्वं भव । शत्रुभिरनाधृष्ट-स्त्वम्[19] । नृणां[20] रक्षणार्थम् । शतभुजिर्बहुरक्षके[21]ति[22] ।

**त्वं नः पाह्यंहसो दोषावस्तरघायतः । दिवा नक्तमदाभ्य ॥ १५ ॥**

त्वं नः[23] पाहि । त्वम्[24] । अस्मान् । रक्ष । रक्षसः[25] । दोषावस्ता[26] । अरमिच्छतः[27] । तदेवोक्तम्— दिवा[28] । नक्तं[29] [30] रक्ष । अहिंसित[31] ! इति ।

---

१. वीरपत A. पुत्रपौत्रोपेतम् Sy.
२. अन्नं देहीति शेषः Sy. ३. सविता देवोऽपि । सवित्रादिः सह ते निपातभागिनी देवता Sy.
४. Omitted in M. दितिश्च is suggested for अदितिश्च ।
५. वरणीयम् Sy.
६. पाहि । संहितायां दीर्घश्छान्दसः Sy.
७. अंहसः पापात् Sy. ८. भस्मीकुरु Sy.
९. देव ! is suggested for देवे ॥ द्योतमान ! Sy. १०. हिंसितः M. हिंसतः शत्रून् Sy.
११. तृप्ततमै तत्तोजोहिः M. ०मैस्त्वत्तेजोभिः is suggested for ०मैत्तस्तेजोहिः ॥ अतिशयेन तापकैस्तेजाभिः Sy.
१२. अहरणुं A. अजरः is suggested for अहरणु ॥ जरारहितस्त्वम् Sy.
१३. VM. ignores स्म ।
१४. Omitted in A. अध मही M.
१५. हे अग्ने ! Sy. १६. अध is suggested for अधाधुना Sy. १७. अय M.
१८. तद्रक्षासाधनभूतप्राकारादिर्वा पूरुच्यते । यथायसा निर्मिता पुरी तद्रक्षासाधनभूतप्राकारादिर्वा शत्रुभ्यो भीतान् रक्षति । तद्वत् राक्षसेभ्यो भीतानस्मान् पाहीत्यर्थः Sy.
१९. अप्रतिधर्षणीयः Sy. २०. नः रक्ष० M.
२१. ०जिव० M. अत्यन्तं विस्तृता शतगुणा Sy.
२२. ति is missing in A.
२३. त्वं नः is missing in A.
२४. अग्ने ! त्वम् Sy. २५. पापात् Sy.
२६. ०वस्तः is suggested for ०वस्ता रात्रेराच्छादयितः । तमसो वारयितः । इत्यर्थः Sy.
२७. अघमिच्छ० is suggested for अरमिच्छ० । पापमिच्छतः शत्रोश्च Sy.
२८. अहनि Sy. २९. रात्रौ च Sy.
३०. Omitted in M.
३१. हिंसित M. हे...अहिंस्य ! Sy.

VII. 16.

एना वो अ॒ग्निं नम॑सो॒र्जो नपा॑त॒मा हु॑वे ।
प्रि॒यं चेति॑ष्ठमर॒तिं स्व॑ध्व॒रं विश्व॑स्य दू॒तम॒मृत॑म् ॥ १ ॥

एना[1] वः । अनेन.[2] । युष्माकम्[3] । अग्निम् । अन्नेन[4] अन्नस्य[5] । पुत्रम्[6] । आह्वयामि[7] । प्रियम्[8] । अतिशयेन ज्ञातारम्[9] । गन्तारम्[10] । सुयज्ञम्[11] । विश्वस्य यजमानस्य[12] । दूतम्[13] । अमृतम्[14] ।

स योज॑ते अरु॒षा वि॒श्वभो॑जसा॒ स दु॑द्रव॒त्स्वा॑हुतः ।
सु॒ब्रह्मा॑ य॒ज्ञः सु॒शमी॒ वसू॑नां दे॒वं राधो॒ जना॑नाम् ॥ २ ॥

स योजते[15] । सः[16] । युनक्ति[17] । आरोचमानाविश्वौ[18] । विश्वस्य भोक्तारौ[19] । सः । अत्यन्तं द्रवति

---

१. 'एना वः' इति द्वादशर्चं षोडशं सूक्तं वसिष्ठस्यार्षमग्निदेवताकम् । अयुजो बृहत्यो युजः सतोबृहत्यः । तथा चानुक्रान्तम्--'एना वो द्वादश प्रागाथम्' (KSA. 34.16. p. 24.) इति । प्रातरनुवाक आग्नेये क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितञ्च--'एना वो अग्निं प्र वो यह्वम्' (ĀSS. 4.13.) इति । अग्निमारुतशस्त्रे 'देवो वो द्रविणोदाः' इति प्रगाथोऽनुरूपः । सूत्रितञ्च-'देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ, (ĀSS. 5.20.) इति Sy.

२. एनेन । यद्वा---एनैनमित्यग्नेर्विशेषणम् । समानार्षत्वात्पूर्वेषु सूक्तेष्वादिष्टत्वाद्वसिष्ठेनान्वादिश्यते Sy. विभक्तेराकारः ।..एनेन Mah.

३. युष्मदर्थम् Sy. हे ऋत्विग्यजमानाः ! वो युष्माकं सम्बन्धिना Mah. व इति पादपूरणार्थः सम्भवात् U.

४. स्तोत्रेण Sy. अन्नेन हविर्लक्षणेन Mah.

५. बलस्य Sy.
अपाम् Mah. U.

६. पौत्रम् Mah. U. सूनुर्नपादित्यपत्यनामनी Ngh. 2. 2.

७. वो युष्माकमेनमग्निं नमसाऽऽहुव इति वा Mah.

८. यजमानानां प्रीतिहेतुम् Mah. सर्वजीवप्रियम् U.

९. प्रज्ञापकं वा Sy. अतिशयेन चेतयितारम् Mah.
अतिशयेन चेतनायुक्तम् U.

१०. स्वामिनं वा Sy. अलमर्तिं पर्याप्तमतिम् । यद्वा रतिरुपरमस्तद्रहितम् । सदोद्यमयुतमित्यर्थः Mah.

११. शोभना अध्वरा यज्ञा यस्य तम् Mah. शोभना अध्वरा यज्ञा अस्य विद्यन्त इति स्वध्वरः Sy.

१२. सर्वस्य यजमानस्य Sy. सर्वस्य यजमानजनस्य सर्वस्य जगतो वा Mah. विश्वस्य सर्वस्य यजमानजनस्य U.

१३. दूतवत्कार्यकारिणम् । सर्वस्य हि गृहे दाहपाकादिकार्यकरत्वात् Mah.

१४. नित्यम् Sy. मरणरहितम् Mah. अमरणधर्माणम् U. This stanza=YV. 15.32.

१५. सो योज० A. १६. अग्निः Sy.

१७. रथे युनक्तु यद्वा अयुज्यत Sy.

१८. ०नाश्वौ M. ०नावश्वौ is suggested for ०नाविश्वौ ॥ यद्वा आरोचमानेन तेजसा Sy.

१९. विश्वस्य पालयितारावश्वौ । ...विश्वस्य रक्षकेण Sy.

देवलोकं[1] प्रति स्वाहुतः[2] । सोऽयं वसूनां[3] मध्ये । सुस्तोत्रः[4] । यष्टव्यः । सुकर्मा[5] च । देवनशीलम्[6] । धनं[7] प्रयच्छति । यजमानानाम्[8] ।

**उदस्य शोचिरस्थादाजुह्वानस्य मीळ्हुषः ।**
**उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः ॥ ३ ॥**

उदस्य । उत्तिष्ठति[9] । अस्य[10] । दीप्तिः[11] । आहूयमानस्य[12] । सेक्तुः[13] । उक्थस्थू[14] । धूमाश्च । आरोचमाना[15] । दिविस्पृशः[16] । तमग्निम्[17] । समिन्धते[18] । मनुष्याः ।

**तं त्वा दूतं कृण्महे यशस्तमं देवाँ आ वीतये वह ।**
**विश्वा सूनो सहसो मर्तभोजना रास्व तद्यत्त्वेमहे ॥ ४ ॥**

तं त्वा दूतम्[19] । त्वम्[20] । त्वा । दूतम् । कुर्मः । यशस्वितमम्[21] । देवान् । आवह । अशनाय[22] । हे सहसः सूनो[23] ! विश्वान्यपि । मनुष्यभोज्यानि[24] । देहि[25] । तदानीम् । यदा । त्वाम् । याचामहे ।

**त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे ।**
**त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥ ५ ॥**

त्वमग्ने । त्वम् । अग्ने ! गृहपतिः[26] । त्वम् । होता चासि[27] । अस्माकम् । यज्ञे[28] । त्वम् । पोता च । विश्वैर्वरणीयः[29] । प्रकृष्टज्ञानस्तथा[30] सति त्वं देवान् । यज । भक्षय[31] । च । हविर्वरणीयम् ।

---

१. ०लोक प्रति M. आनेतुं देवान् प्रति भृशं द्रवतु द्रवति वा Sy. २. सुष्ठ्वाहुतः Sy.
३. वासकानां जनानां वसिष्ठानाम्. . .यद्वा वसूनां धनानाम् Sy. ४. सुस्तुतिः शोभनाह्नो वा Sy. ५. सुकर्मा च भवति Sy.
६. तमिमं द्योतमानम्, द्युत्वा अन्तप्रकाशमानम् Sy.
७. हविरभिगच्छत्विति शेषः Sy.
८. यजमानानां अनवत् प्रिश्नतम इत्यर्थः Sy.
९. उत्तिष्ठ A. अग्नेः Sy. १०. स्य A. अग्नेः Sy. ११. तेजः Sy. १२. अभिहूयमानस्य Sy. १३. कामानां वर्षितुः Sy.
१४. उक्त A. उत्तस्थुः is suggested for उक्थस्थू । अस्थादित्येकवचनान्तं बहुवचनान्ततया विपरिणतं सदत्रान्वेति Sy.
१५. आरोचमा A. ०मानाः is suggested for ०माना ।
१६. अन्तरिक्षस्पृशः Sy. १७. ०न्धने A.
१८. कर्मणां नेतार ऋत्विजः Sy. १९. The *pratīka* is supplied by the Editor.
२०. न्त A. तम् is suggested for त्वम् ॥ प्रसिद्धम् Sy.
२१. ०स्विलमं A. अतिशयेन यशस्विनम् Sy.
२२. अश्शनाय A. हविषां भक्षणाय Sy.
२३. हे स्सहस्सूनो A. हे बलस्य पुत्र ! अग्ने ! Sy.
२४. मनुष्याणां भोग्यानि कल्याणानि धनानि Sy.
२५. अस्मभ्यं देहि Sy. २६. यजमानोऽसि Sy.
२७. देवानामाह्वाता Sy. २८. यागे Sy.
२९. ०णीयं A. VM. explains voc. by nom. ३०. ०कृष्यज्ञा० A. प्रकृष्टमतिः Sy. ३१. कामयस्व भक्षय वा Sy.

कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ।
आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्षते ॥ ६ ॥

कृधि रत्नम् । कुरु[1] । रत्नम्[2] । यजमानाय[3] । सुकर्मन्[4] ! त्वम् । हि[5] । रत्नस्य दाता । भवसि । स त्वमाशीर्भिस्तीक्ष्णीकुरु[6] । अस्माकम् । यज्ञे । सर्वम् । ऋत्विजम् । शोभनशासनः[7] । यः । च होता[8] । सहते[9] तञ्चेति ।

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ॥ ७ ॥

त्वे अग्ने । त्वयि[10] । अग्ने ! स्वाहुत[11] ! प्रियाः । सन्तु[12] । प्राज्ञाः[13] । प्रयन्तारः[14] । ये । आढ्याः[15] । जनानाम्[16] । सङ्घातान्[17] । प्रयच्छन्ति[18] । गवां[19] दरिद्रेभ्यः ।

येषामिळा घृतहस्ता दुरोण आँ अपि प्राता निषीदति ।
ताँस्त्रायस्व सहस्य द्रुहो निदो यच्छा नः शर्म दीर्घश्रुत् ॥ ८ ॥

येषामिळां । येषां जनानाम् । अन्नम्[20] । घृतहस्ता[21] । गृहे[22] । निषीदति । अन्नस्य[23] प्राता[24] प्रदाता च

---

१. कुरु । देहीत्यर्थः Sy.
२. धनम् Sy. श्वात्रं रत्नमिति धननामनी Ngh. 2. 10. ३. यजमानाय मह्यम् Sy. ४. हे शोभनकर्मन् ! अग्ने ! Sy.
५. यस्मात्त्वम् Sy.
६. ०माशिशीभिस्तीक्ष्णिरूरु A.
७. गोहन शं० A. सुस्तुतिरस्मत्पुत्रः.... यद्वा सुशंसो होता Sy.
८. होतात् A. होतुः पृथगुपादानश्चादरार्थम् Sy.
९. वर्धते तं वर्धय Sy.
१०. तव Sy. Mah., U.
११. हे यजमानैः सुष्ठ्वाहुत ! Sy. सुष्ठु हूयते स्वाहुतः हे स्वाहुत ! Mah. साधुना प्रकारेणाभिहुत U. १२. भवन्तु Sy.
१३. प्रेरकाः स्तोतारो वा Sy. पण्डिताः Mah., U.
१४. प्रभातारः A. प्रदातारः Sy. निगृहीतेन्द्रियाः Mah. निगूहितसर्वविषयाः U.
१५. धनवन्तः Sy., Mah. U.
१६. जनानामस्मदीयानाम् Sy. जनानां मध्ये जनाः Mah. जनानां मध्ये U.
१७. ०तात् A. समूहान् Sy. अन्नविशेषान् पूरोडाशादीन् Mah. न केवलं धनवन्त एव, किन्तर्हि ? उर्वान्, अन्नप्रकारान् U.
१८. प्रयच्छन्ति ते च तव प्रियासः सन्त्विति पूर्वेणान्वयः Sy. ददति । 'दय दानगतिर्हिंसादानेषु Mah. दयतिर्दानार्थः । ददति U.
१९. गवां चोर्वान् Sy. गवां सम्बन्धिभिर्दुग्धदधिघृतैः सह Mah. गवां सम्बन्धिभिरुपसेचनैः सहितान् U.
This stanza=YV. 33.14.
२०. अन्नरूपा हविर्लक्षणा देवी Sy. इरा, इळा, इत्यन्ननामनी Ngh. 2.7.
२१. ०ते हृ० A. VM. seems to repeat the Vedic word घृतहस्ता but it should be here घृतहस्तम् nom. sing going with अन्नम् ॥ घृयुक्तो हस्तो यस्या असौ घृतहस्ता । घृतहस्तेनाभिघारितेत्यर्थः Sy.
२२. ग्रहे A. २३. अन्तस्य A.
२४. प्राता पूर्णा Sy.

दासादिः सघृतमन्नं प्रयच्छतीत्यर्थः[1] । तास्[2] । त्रासयस्व[3] । सहसो जात[4] ! द्रोग्धुः[5] । निन्दितुश्च[6] । यच्छ च[7] । अस्मभ्यम् । सुखम्[8] । दीर्घकालं श्रोतव्यम्[9] ।

**स मन्द्रया च जिह्वया वह्निरासा विदुष्टरः ।**
**अग्ने रयिं मघवद्भ्यो न आ वह हव्यदातिं च सूदय ॥ ९ ॥**

स मन्द्रया[10] । सः[11] । मन्द्रया वाचा[12] । च । आस्यास्थानीयया[13] । ज्वालया च । हविषां वोढा[14] भवति । विद्वत्तरः । अग्ने ![15] रयिम्[16] । आढ्येभ्यः[17] । अस्मभ्यम् । आवह । यजमानम्[18] । च । प्रेरय[19] । 'यजमानो वै हव्यदातिः'[20] इति शतपथब्राह्मणम् ।

**ये राधांसि ददत्यश्व्या मघा कामेन श्रवसो महः ।**
**ताँ अंहसः पिपृहि पर्तृभिष्ट्वं शतं पूर्भिर्यविष्ठ्य ॥ १० ॥**

ये राधांसि[21] । ये[22] । अन्नानि[23] । प्रयच्छन्ति । अश्वसङ्घान्[24] । धनानि च । कामेन[25] । श्रवसो यशसः । महतो महद्यशस्कामयमानाः[26] । तान्[27] । अंहसः[28] । पालय । पालयितृभिस्तेजोभिः[29] । त्वम् । पुराञ्च[30] । शतेन[31] युवतम[32] !

१. ०च्छन्ती० A.
२. स्तास् A. तान् is suggested for तास् ॥ हविष्मतो यजमानान् Sy.
३. त्रायस्व is suggested for त्रासयस्व ।
४. सहसे बलाय हित !. Sy.
५. द्रोढुः A. ६. निन्दकाच्च शत्रोः Sy.
७. देहि Sy. ८. सुख A. सुखं गृहं वा Sy.
९. VM. ignores आ and अपि ॥ अपीति पूरणः Sy. १०. सन्द्रया A.
११. प्रसिद्धस्त्वम् Sy. १२. मोदयित्र्या Sy.
१३. आस्या स्थनीयेन A: आस्य० is suggested for आस्या० स्थानीयेन । देवानामास्यस्थानीयया Sy. १४. हविषां वोढा Sy.
१५. हे अग्ने ! Sy. १६. धनम् Sy.
१७. हविष्मद्भ्यः Sy.
१८. हव्यानि ददातीति हव्यदातिर्यजमानः । तथा च वाजसनेयिन आमनन्ति 'यजमानो वै हव्यदातिः' (SB. 1.4.1.24.) इति Sy.
१९. यजमानञ्च प्रेरय is missing in A. कर्मसु प्रेरय च Sy.
२०. SB. 1.4.1.24. The quotation of SB should immediately follow यजमानम् and precede च ।
२१. ये रासांसि A. ये रोधांसि M.
२२. यजमानाः Sy. २३. साधकानि Sy.
२४. अश्व स० A. अश्वात्मकानि Sy.
२५. इच्छया । यशस्कामाः सन्त इत्यर्थः Sy.
२६. हमद्यशंशंकाम० A. २७. दातॄन् Sy.
२८. पापात् शत्रोर्वा Sy. २९. रक्षासाधनभूतैः Sy. ३०. च is missing in M. पूर्भिः, नगरीभिश्च Sy.
३१. अपरिमिताभिः Sy.
३२. युवत्वम् A., M. हे यविष्ठ्य ! युवतम ! अग्ने ! Sy.

**दे॒वो वो॑ द्रविणो॒दाः पू॒र्णां वि॑वष्ट्या॒सिच॑म् ।**
**उद्वा॑ सि॒ञ्चध्व॒मुप॑ वा पृणध्व॒मादिद्वो॑ दे॒व ओ॑हते ॥ ११ ॥**

देवः[1] । देवः । युष्माकम्[2] । धनस्य प्रदाताऽग्निः[3] । पूर्णाम्[4] । कामयते । जुहूम्[5] । तथापि सति[6] द्रोण-कलशात् सोममुद् वा, सिञ्चध्वम्[7] । उप वा गृहीतं प्रयच्छत[8], समुच्चयार्थीयौ[9] वाशब्दौ । अनन्तरम् । एव । युष्मान् । देवः । नयति[10] ।

**तं होता॑रमध्व॒रस्य॒ प्रचे॑तसं॒ वह्निं॑ दे॒वा अ॑कृण्वत ।**
**दधा॑ति॒ रत्नं॑ विध॒ते सु॒वीर्य॑म॒ग्निर्जना॑य दा॒शुषे॑ ॥ १२ ॥**

तं होतारम् । तम् । ह्वातारम्[11] । अध्वरस्य[12] । प्रचेतसम्[13] । वोढारम् । देवाः । यकुर्वन्[14] । शिष्टं[15] स्पष्टमिति ।

VII. 17.

**अग्ने॒ भव॑ सुष॒मिधा॒ समि॑द्ध उ॒त ब॒र्हिरु॑र्वि॒या वि स्तृ॑णीताम् ॥ १ ॥**

अग्ने[16] भव[17] ॥ द्वैपदमिदं सूक्तम् ॥ अग्ने ! भव । शोभनया समिधा । समिद्धः[18] । वा चा[19] । उर्विया ऊरु[20] । बर्हिः[21] । विस्तृणातु[22] ।

---

१. देव A. २. युष्मदीयाम् Sy.
३. ०तानि A. धनानां दाता Sy.
४. पूर्णां हविषा Sy. ५. जुहूम् is missing in M. आसिक्तां स्रुचम् Sy.
६. ०था सि स० A. तथा सति is suggested for तथापि सति ।
७. अत उत्सिञ्चध्वं वा सोमेन पात्रम् Sy.
८. ०च्छत् M. उपपृणध्वं वा सोमम् Sy.
९. ०र्याथियौ A. वाशब्दौ समुच्चयार्थौ । ध्रुवग्रहेण होतृचमसं पूरयत चाग्नये सोमं यच्छत चेत्यर्थः Sy. १०. वहति Sy.
११. होतारम् A. १२. यज्ञस्य Sy.
१३. प्रकृष्टमतिम् Sy.
१४. युंकु० M. अकुर्वन् is suggested for यकुर्वन् ।
१५. By शिष्टम् VM. means the second hemistich of the stanza. Sy. explains it in the following manner :—किमर्थमित्यत आह । स चाग्निः । विधते परिचरते । दाशुषे हविषां प्रदात्रे । जनाय । सुवीर्यं शोभनवीर्योपेतम् । रत्नं रमणीयं धनम् । दधाति ददात्वित्यर्थः Sy.
१६. 'अग्ने भव सुषमिधा' इति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षमग्निदेवताकम् । सप्तापि द्विपदास्त्रिष्टुभः । तथैवानुक्रम्यते—'अग्ने भव सप्त द्वैपदं त्रैष्टुभम्' (KSA. 34.17. p. 25.) इति । अतिरात्रे षष्ठेऽहनि तृतीयसवने मैत्रावरुणशस्त्रे 'अग्ने भव' इति तृचोऽनुरूपः । सूत्र्यते हि—'अग्ने त्वं नोऽन्तमोऽग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपौ' (ASS. 8.2.) इति Sy. १७. अग्ने भव A.
१८. समिन्धो A. सम्यक् दीप्तः Sy.
१९. वाचा A. अपि च is suggested for वाचा
२०. धवयूरुव्र A. विस्तीर्णम् Sy.
२१. वाचा उर्विया उरु बर्हि is missing in M.
२२. उपस्तृणीतामध्वर्युः Sy.

उत द्वारं उशतीर्वि श्रयन्तामुत देवाँ उशत आ वहेह ॥ २ ॥

उत द्वारः । अपि च । द्वारो देव्यः[1] । कामयमानाः । विवृता भवन्तु । तत्[2] । देवान्[3] । कामयमानान्[4] । इह[5] । आवह ।

अग्ने वीहि हविषा यक्षि देवान्त्स्वध्वरा कृणुहि जातवेदः ॥ ३ ॥

अग्ने वीहि । अग्ने ! गच्छ[6] हविषा । यज च । देवान् । सुयज्ञांश्च[7] । कुरुताम्[8] । जातवेदः[9] !

स्वध्वरा करति जातवेदा यक्षद्देवाँ अमृतान्पिप्रयच्च ॥ ४ ॥

स्वध्वरा[10] । स्वध्वरान्[11] । करोतु देवान् । जातवेदाः[12] । यजतु[13] । देवान् । अमृतान्[14] । प्रीणयतु[15] । च ।

वंस्व विश्वा वार्याणि प्रचेतः सत्या भवन्त्वाशिषो नो अद्य ॥ ५ ॥

वंस्व[16] विश्वा । देहि[17] । विश्वानि । धनानि[18] । प्रचेतः[19] ! सत्यानि[20] । भवन्तु । आशासनानि[21] । अस्माकम् । इदानीम् ।

त्वामु ते दधिरे हव्यवाहं देवासो अग्न ऊर्ज आ नपातम् ॥ ६ ॥

त्वामु ते । त्वाम् । एव[22] । ते[23] । कृतवन्तः[24] । हव्यवाहम्[25] । देवाः[26] । अग्ने ! अन्नस्य[27] । पुत्रम्[28] । आकारः पूरणः ।

---

१. देव्य A. द्वारो यज्ञगृहस्य देव्यो वा Sy. द्वारो जवतेर्वा । द्रवतेर्वा । वारयतेर्वा N.8.9
२. त A. ततः is suggested for तत् ।
३. देवा A. ४. यज्ञं कामयमानान् Sy.
५. इभ A. यज्ञे Sy.
६. देवानभिगच्छ Sy.
७. य is missing in M. शोभनयज्ञांश्च Sy.
८. कुरु is suggested for कुरुताम् ।
९. हे जातवेदः ! जातधन ! Sy.
१०. स्व उपरा A.
११. ०ध्वरा A. शोभनयज्ञान् Sy.
१२. जातधनोऽग्निः Sy.
१३. हविषा यजतु Sy.
१४. मरणरहितान् Sy.
१५. स्तोत्रैः प्रीणयतु Sy.
१६. पित्वा A. M.
१७. अस्मभ्यं देहि Sy.
१८. वरणीयानि Sy.
१९. प्रकृष्टमतिमन् ! अग्ने ! Sy.
२०. सत्या यथार्थाः Sy. २१. आशिषः
२२. उ इत्यवधारणे BB. २३. प्रसिद्धाः Sy.
२४. अकुर्वन् Sy. धारयामासुः । कृतवन्त इत्यर्थः BB.
२५. हविषां वोढारम् । . . . वहतेर्ण्विः BB.
२६. देवैभिरन्वितमित्यत्र प्रकृतत्वात् BB.
२७. बलस्य Sy.
२८. सूनुर्नपादित्यपत्यनामनी Ngh. 2. 2. This stanza=TS. 3.1.4.4.

ते ते॑ दे॒वाय॒ दाश॑तः स्याम म॒हो नो॒ रत्ना॒ वि द॑ध इया॒नः ॥ ७ ॥

ते ते देवाय[1]। ते[2] वयम्। तुभ्यम्। देवाय[3]। हवींषि[4] ददत[5]। स्याम[6]। महास्त्वम्[7]। अस्मभ्यम। रत्नानि[8]। विधेहि[9]। याच्यमानः[10]।

VII. 18.

त्वे ह॒ यत्पि॒तर॑श्चि॒न्न इ॑न्द्र॒ विश्वा॑ वा॒मा ज॑रि॒तारो॑ अस॑न्वन्।
त्वे गाव॑: सु॒दुघा॒स्त्वे ह्यश्वा॒स्त्वं वसु॑ देवय॒ते वनि॑ष्ठः ॥ १ ॥

त्वे ह यत्[11][12]। त्वयि। एव। यस्मात्[13]। पितरः। अपि। अस्माकम्। इन्द्र ! विश्वानि। धनानि[14]। स्तोतारः[15]। अभजन्त[16] ततो वयञ्च[17] त्वां स्तुमः। त्वय्येव। सुदुघाः[18]। गावः[19] सन्ति। त्वयि। एव। अश्वाः। त्वम्। सु[20]। यजमानाय[21]। अत्यन्तं दानशीलः[22]।

राजे॑व॒ हि जनि॑भिः॒ क्षेष्ये॒वाव॒ द्युभि॑र॒भि वि॒दुष्क॒विः सन्।
पि॒शा गिरो॑ मघव॒न्गोभि॒रश्वै॑स्त्वाय॒तः शि॑शीहि रा॒ये अ॒स्मान् ॥ २ ॥

राजेव[23]। राजेव। हि[24]। जायाभिः। अभ्यवगच्छसि[25][26]। एव। दीप्तिभिः। विद्वान्। क्रान्तः[27]। सन्।

---

१. हे अग्ने ! Sy.
२. प्रसिद्धाः वसिष्ठा वयम् Sy.
३. द्योतमानाय Sy. ४. हविषि M.
५. ददत A. ६. भवेम Sy.
७. महास्त्वम् A. अतो महो महाँस्त्वम् Sy.
८. रमणीयानि धनानि Sy.
९. विधत्स्व Sy.
१०. उपगम्यमानो याच्यमानो वा Sy.
११. द्वितीयेऽनुवाके षोडश सूक्तानि। तत्र 'त्वे ह यत्पितरः' इति पञ्चविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमिन्द्रदेवताकम्। द्वाविंशादिभिश्चतसृभिः सुदासनाम्नो राज्ञो दानं स्तूयते। अतस्तास्तद्देवताकाः। अनुक्रम्यते हि—'त्वे ह यत्पञ्चाधिकैन्द्रं सुदासः पैजवनस्य चतस्रोऽन्त्या (०स्यान्त्याश्चतस्रो KSA.) दानस्तुतिः' (KSA. 34.18. p. 25) इति। महाव्रत आदितः पञ्चदशर्चः शंसनीयाः। तथैव पञ्चमारण्यके सूत्रितम्—'त्वे ह यत्पितरश्चिन्न इन्द्रेति पञ्चदश' (AA. 5.2. 2.) इति Sy. १२. त्वे ह य A.
१३. यस्मात् कारणात् Sy.
१४. वननीयानि धनानि Sy. वामं वननीयं भवति N. 6.31.
१५. स्तोतारः सन्तः Sy. १६. अलभन्त Sy.
१७. तस्माद् वयमपि धनकामाः Sy.
१८. दोग्धुं सुशकाः Sy. १९. भावः A.
२०. वसु is suggested for सु०
२१. देवं त्वामिच्छते यजमानाय Sy.
२२. ०शील M. दातृतमो भवसि Sy.
२३. हे इन्द्र ! त्वम् Sy.
२४. हीति पूरणः Sy.
२५. जायाहिः A.
२६. अभ्युपगच्छसि M. निवसस्येव Sy.
२७. क्रान्तकर्मा क्रान्तप्रज्ञो वा Sy.

विशा[१] प्रजया । स्तुवतः[२] । गोभिः । अश्वैश्च[३] । मघवन्[४] ! त्वत्कामान् । तीक्ष्णीकुरु[५] । धनार्थम् । अस्मान् ।

**इमा उं त्वा पस्पृधानासो अत्रं मन्द्रा गिरो देवयन्तीरुपं स्थुः ।**
**अर्वाची ते पथ्यां राय एतु स्याम ते सुमताविन्द्र शर्मन् ॥ ३ ॥**

**इमा उ त्वा** । इमाः । एव । त्वाम् । स्वयमेवेतरेतरं स्पर्धमानाः । अस्मिन् यज्ञे[६] । मदयन्तः[७] । स्तुतयः । देवं त्वां कामयमानाः । उपतिष्ठन्ति[८] । तथा सत्यभिमुखी[९] । तव । धनस्य । प्रदात्री[१०] वाक् । एतु[११] । स्याम[१२] । ते वयम् । सुमतौ[१३] । सुखहेतुभूतायाम्[१४, १५] ।

**धेनुं न त्वा सूयवसे दुदुक्षन्नुप ब्रह्माणि ससृजे वसिष्ठः ।**
**त्वामिन्मे गोपतिं विश्व आहा न इन्द्रः सुमतिं गन्त्वच्छं ॥ ४ ॥**

**धेनुं[१६] न[१७]** । धेनुम् । इव । त्वाम्[१८] । शोभनवसे[१९] गोष्ठे । दोग्धुमिच्छन्[२०] । वसिष्ठः । स्तोत्राणि वत्सस्थानानि । उपसृजन्ति[२१] । त्वाम् । एव । मे[२२] । गोपतिम्[२३] । सर्वो जनः । वदति[२४] । अथ परोक्षः—आगच्छतु । अस्माकम्[२५] । इन्द्रः । सुष्मतिम्[२६] । अहीति[२७] ।

---

१. VM. seems to read **विशा** for **पिशा ॥ रूपेण हिरण्यादिना वा** Sy.
२. **स्तोतॄन्** Sy.
३. **अश्वैश्व** A. Sy. does not explain **अव** as a preposition but as a verb and construes **अभि** with it and not with **क्षेषि ।** Thus he explains these words as **अभितो रक्ष ।**
४. **हे धनवन् ! इन्द्र !** Sy.
५. **संस्कुरु** Sy.
६. **यज्ञे स्तोतरि वा वर्तमानाः** Sy.
७. **मोदमानाः** Sy.
८. **०ष्ठतस्** A.
९. **अस्मदभिमुखम्** Sy.
१०. **पथ्या सृतिः** Sy.
११. **गच्छतु** Sy.
१२. **स्यामे** A. **भूयास्मे** Sy.
१३. **सुष्टुतौ वर्तमानाः** Sy.
१४. **शर्मणि सुखे** Sy.
१५. VM. ignores **इन्द्र ।**
१६. **धेनुन्नं** A.
१७. **हे इन्द्र !** Sy.
१८. **सुहविष्के यज्ञगृहे । दृष्टान्तसामर्थ्याद्दार्ष्टान्तिकलाभः । वर्तमानं त्वाम्** Sy.
१९. **०न वत्से** M. **शोभनयवसे** is suggested for **शोभनवसे ॥ सुतृणे गोष्ठे वर्तमानाम** Sy.
२०. **०च्छत्** A. **दुधुक्षन् । संहितायां व्यत्ययेन दकारः । कामान् दोग्धुमिच्छन्** Sy.
२१. **०जति** is suggested for **०जन्ति ॥ उपसृजते** Sy.
२२. **मम** Sy.
२३. **गवां स्वामिनम्** Sy.
२४. **ब्रवीति** Sy.
२५. **अमस्मा०** A.
२६. **सुष्ठु स्तुम्** M. **सुष्टुतिम्** is suggested for **सुष्मतिम्** ।
२७. **अभीति** is suggested for **अहीति ॥**

**अर्णांसि चित्पप्रथाना सुदास इन्द्रो गाधान्यकृणोत्सुपारा ।**
**शर्धन्तं शिम्युमुचथस्य नव्यः शापं सिन्धूनामकृणोदशस्तीः ॥ ५ ॥**

अर्णांसि । उदकानि[1] । चित्[2] । प्रथमानानि । सुदासे राज्ञे । इन्द्रः । गोधानि[3] । अकृणोत्[4] । शोभनपराण्यग्राधाद्युदकानि[5] गाधानि[6] कृत्वा चैजवनं[7] गमयामासेति । वर्धमानम्[8] । शिम्न्युं[9] वेद्धारं बाधकं तूलयोः[10] । उचथस्य[11] । स्तोतव्यः[12] । शाप[13] इत्युदकनाम तम् । सिन्धूनाम्[14] । अकरोत्[15] । अहिंसितः[16] ।

**पुरोळा इत्तुर्वशो यक्षुरासीद्राये मत्स्यासो निशिता अपीव ।**
**श्रुष्टिं चक्रुर्भृगवो द्रुह्यवश्च सखा सखायमतरद्विषूचोः ॥ ६ ॥**

पुरोळा । पुरोदाता नानाम्[17] तुर्वशो नाम राजा । यक्षुः[18] । आसीदिन्द्रप्रियार्थम्, अथ तस्मै मत्स्यदेशस्थाः[19] । अपि । धनायाभवन्[20] बलिनं करं[21] प्रददुः । तथा तस्य भृगवः । द्रुभ्यवः[22] । च । श्रुष्टिम्[23] । चकूट[24] कर्मसु शीघ्रमागमनं चक्रुर्यज्ञार्थं भृगवः शत्रुवधार्थं द्रुह्यवः । सखेन्द्रः[25] । सखायं[26] तुर्वशम् । अतरन्[27] । विषूचुनाम्नः[28] शत्रोः[29] ।

---

१. शत्रुभिर्विदारितायाः परुष्ण्या उदकानि Sy.
२. अपि Sy.
३. गाधानि is suggested for गोधानि ।
४. अकृष्णोत् A. अकरोत् Sy.
५. ०पराण्यग्राधाद्युद० M. ०पाराणि, अगाधान्युद० is suggested for ०पराण्यग्राधाद्युद० ॥ सुपाराणि, पारयितुं तर्तुं योग्यानि Sy. ६. Omitted by M.
७. पैजवनम् is suggested for चैजवनम् ।
८. उत्साह(स)मानम्, Sy. ९. शिम्युं is suggested for शिम्न्युं ॥ बोधमानम् Sy.
१०. तुलयोः A. कूलयोः is suggested for तूलयोः ॥
११. उचस्य M. स्तोतुः Sy. १२. स्तुत्यः Sy.
१३. विश्वरूपोद्भवमात्मनोऽभिशापम् Sy.
१४. नदीनाम् Sy. १५. अकरेत् A.
१६. अभिशस्तीश्च Sy. १७. जनानाम् is suggested for नानाम् ॥ पुरोगामी पुरोदाता वा Sy.
१८. यक्षुर्यज्ञकुशलः । यजेः सन्प्रत्ययो न तु सनन्तः । अतो न द्विर्भावः Sy.
१९. जले निहिता मत्स्या इव मत्स्यजनपदाः Sy.
२०. स तुर्वशो राये धनप्राप्तये इन्द्रस्य सखायं सुदासं जगाम Sy. २१. ०वत् बलिनं करं A.
२२. द्रुह्यवः is suggested for द्रुभ्यवः ॥
२३. सुदासस्तुर्वशस्य च श्रुष्टिमाशुप्राप्तिम् Sy.
२४. चक्रुः is suggested for चकूट ॥ योधाश्च Sy. २५. सखा सुदासश्चेन्द्रः Sy.
२६. सुदासम् Sy.
२७. अतारयत् । तुर्वशं चावधीदित्यर्थः । यद्वा यक्षुर्यज्ञशीलः पुरोळाः पुरोदाता तुर्वशो नाम राजासीत् । तेन मत्स्यासो मत्स्यजनपदा निशिता बाधिता आसन् । अपि च भृगवो द्रुह्यवश्च श्रुष्टिं सुखं तुर्वशस्य चक्रुः । विषूचोर्विष्वगञ्चतोरुभयोर्मध्ये सखा तुर्वशस्य सखेन्द्रः सखायं राजानमतरत् अतारयत् Sy.
२८. विषूचोर्विष्वगञ्चतोरुभयोर्मध्ये Sy.
२९. VM. ignores इत् । निशिताः । इव of अपीव ॥ इदिति पूरणः । निशिता नियन्त्रिताः....बाधिताः Sy.

**आ प॒क्थासो॑ भला॒नसो॑ भन॒न्तालि॑नासो विषा॒णिनः॑ शि॒वासः॑ ।**
**आ यो॒ऽन॑यत्सध॒मा आर्य॑स्य ग॒व्या तृत्सु॑भ्यो अजगन्यु॒धा नॄन् ॥ ७ ॥**

आ पक्थासः[1] । आभिमुख्येन तस्येन्द्रस्य स्वभूताः । शब्दमकुर्वन्[2] । पक्वाः[3] । भलानसो भलाश्चान-सश्च हलो हिनत्तरेरनोऽनतेर्गतिकर्मणः[4], उभयविधाः शरा भवन्ति विवृतमुखा[5] नाराचमुखाश्चेति त उभयेऽप्यग्नि-[6]पक्वा[7] भवन्ति । शत्रुशरीरेष्वेवं लीनाः[8] शरीरं निर्भिद्य शीघ्रं गच्छन्तः । विषाणिनो रुरूशृङ्गेण[9] तद्वन्तः । कल्याणा[10] ऋजवः, 'आलाक्ताया । रुरुशीर्ष्णी'[11] इति मन्त्रः । य इन्द्रः । सहमदन[12] । आर्य्यस्य[13] । आनयन्[14] तुर्वशस्य[15] सः । शोसंवान्[16] । तृत्सुभ्यः[17] । अगमयत्[18] तुर्वशं[19] प्रति । युद्धेन नेतुम्[20] । तच्छत्रूंश्चायत्[21] ।

**दु॒राध्यो॒३॒ अदि॑तिं स्रे॒वय॑न्तोऽचे॒तसो॒ वि ज॑गृभ्रे॒ परु॑ष्णीम् ।**
**म॒ह्नावि॑व्यक्पृथि॒वीं पत्य॑मानः प॒शुष्क॒विर॑शय॒च्चाय॑मानः ॥ ८ ॥**

दुराध्यः[22] । दुर्बुद्धयः[23] । अदीनाम्[24] । परुष्णीकूलभेदनेन[25] शोषयन्तः । अज्ञानाः[26] । विविधं गृहीतवन्तः[27] ।

---

१. पत्थासः A. २. ०कुर्वत् A. आ भनन्त । अभिष्टुवन्ति तमिन्द्रम् । भनतिः शब्दकर्मा Sy. नौति भनतीति शब्दकर्माणौ Ngh. 3.14.

३. पक्त्वा A. पक्था हविषां पाचकाः Sy.

४. हलो हिनक्तरेनतेर्गति० A. भलो भनक्तेः, अनोऽनक्तेर्गति० is suggested for हलो हिनत्तरेरनोनतेर्गति० DP. 7.16.,21. भद्र-मुखाः । भलेति भद्रवाची Sy.

५. लिवृत० A. ६. त भेये० A.

७. ०पक्त्वा A.

८. ०स्वङ्गुलीनाः A. अलिनाः । तपोभिरप्रवृद्धा इत्यर्थः Sy.

९. ०ना उरु० M. रुरु० is suggested for रूरू० । कण्डूयनार्थं कृष्णविषाणहस्ताः । दीक्षिता इत्यर्थः Sy.

१०. शिवासः शिवा यागादिना सर्वस्य लोकस्य शिव-कराः । यागेन हि शिवं भवति लोकस्य Sy.

११. रूरूशीक्ष्णीति A. आलक्ता या M. (RV. VI.75.15.)

१२. ०दनः is suggested for ०दन ॥ सोमपानेन सह माद्यतीति सधमावः । सधमाद एव सधमाः Sy.

१३. आय्यस्य M. कर्मशीलस्य Sy.

१४. नयन्यनम् M. आनयत् is suggested for आनयन् ।

१५. ०यनन्तुकुर्वशस्य स A.

१६. शोसं...M. गोसङ्घान् is suggested for शोसंवाम् ।

१७. missing in M. हिंसकेभ्यः Sy.

१८. अजगत् । स्वयञ्च गोसङ्घान् लेभे Sy.

१९. कुर्वशं A.

२०. नेतूं A. जेतुम् is suggested for नेतुम् ॥

२१. तत् .सून्च्छयत् A. तच्छत्रूंश्चायत् is missing in M. ०श्चाजयत् is sugge-sted for ०श्चायत् ॥ तान्नून् शत्रून् जघान चेति शेषः Sy.

२२. दूराध्य A. ०ध्य M.

२३. दुष्टाभिसन्धयः Sy. २४. अधीनाम् M.

२५. परूष्णिकुलभेदेनन A.

२६. मन्दमतयः सुदासः शत्रवः Sy.

२७. वि जगृभे । विग्रहः कूलभेदः । तमकुर्वन् । परुष्ण्याः कूलं बिभिदुरित्यर्थः Sy.

परुष्णीं[1] नदीं सुदासो हि[2] भवाय चायमानस्य राज्ञः सेनिरा[3] ? महत्त्वेन[4] सेनायाः । चायमानः[5] । सर्वां पृथिवीम् । अपिव्यग्[6] व्याप्तवान्[7] । आगच्छन्नथ[8] युद्धे निर्जितः । परशुरिव[9] । भ....यत्[10] । कान्तकर्मेति[11] ।

**ईयुरर्थं न न्यर्थं परुष्णीमाशुश्चनेदभिपित्वं जगाम ।**
**सुदास इन्द्रः सुतुकाँ अमित्रानरन्धयन्मानुषे वध्रिवाचः ॥ ९ ॥**

ईयुरर्थम्[12] । भिन्नां परुष्णीमिन्द्रः सन्दधे तस्यास्तीरवासिन्यजाः[13], परुष्णीम्[14] । सार्थम्[15] । ईयुः[16] । न । न्यर्थम्[17] । अश्वः[18] । चास्य शत्रूणाम् । अभिप्राप्तिम्[19] । जगाम । सुदासे । इन्द्रः[20] । सुहिंसान्[21] । अमित्रान्[22] । तुकस्तुजतेर्हिंसाकर्मणः[23] । पशमनयत्[24] । मानुषेऽस्मिल्लोके । प्रवृद्धवाचः[25] सुदास इति[26] ।

**ईयुर्गावो न यवसादगोपा यथाकृतमभि मित्रं चितासः ।**
**पृश्निगावः पृश्निनिप्रेषितासः श्रुष्टिं चक्रुर्नियुतो रन्तयश्च ॥ १० ॥**

ईयुर्गावः । यथा । गावः । यवसमुद्दिश्य[27] । अरक्ष्यमाणा[28] यथारामं गच्छन्ति तद्वत् । यथाकृतं[29]

---

१. परुष्णिर्नदी M.
२. ०सोऽभिभ० is suggested for ०सो हि भ० ॥
३. सैनिकाः is suggested for सेनिरा० ।
४. स सुदासो महेन्द्रप्रसादलब्धेन महिम्ना Sy.
५. सुदासः शत्रुश्चयमानस्य पुत्रः Sy.
६. अपि व्याप्तवान् M. अविव्यग् is suggested for अपिव्यगः ।
७. व्याप्नोत् पुनरुदकेनाबाध्यत Sy.
८. पलायमानः Sy.
९. पशु० is suggested for परशु० ॥ यागे संज्ञप्तः पशुरिव Sy.
१०. Missing in M. अशयत् is suggested for भ...यत् ॥ अशेत सुदासा निहत इत्यर्थः Sy.
११. कविनामा Sy.
१२. नं यु अथ A.
१३. ०स्यास्तिर० A.
१४. ०सिन्यः प्रजाः is suggested for ०सिन्यजाः ।
१५. सार्धम् M.
१६. ईयुः । परुष्ण्या विच्छिन्नानि पर्वाणि सन्दधे । ततः परुष्ण्या आपो यथापूर्वमर्थं गन्तव्यमेव प्रवणदेशं प्रति परुष्णीमीयुः । आययांचक्रुः । 'इण् गतौ' इति धातोरन्तर्भावितण्यर्थात् लिटीयुरिति । अतो द्विकर्मकमाख्यातम् Sy.
१७. न्यर्थम् M. अगन्तव्य परुष्ण्याः पार्श्वयोः स्थितं निम्नं देशं प्रति परुष्णीं नेयुः Sy.
१८. राज्ञः सुदासोऽश्वः Sy.
१९. अभिप्राप्तव्यमेव Sy.
२०. अथेन्द्रः Sy.
२१. सुतोकान् Sy. तुक् तोकमित्यपत्यनामनी (Ngh. 2.2.)
२२. अमित्रा M.
२३. ०जते हिंसा० M. D.P. 1.244. It refers to सुहिंसान् which it should immediately follow.
२४. पशम० A. वशमानयत् is suggested पशमनयत् ।
२५. जल्पकान् Sy.
२६. VM. ignores इत् । इत्...एव Sy.
२७. यवसात् निमित्तार्थे पञ्चमी । यवसं निमित्तीकृत्य Sy.
२८. गोपालेनारक्षिताः Sy.
२९. इन्द्रस्य साहाय्यं करवामेति यथापूर्वं समयः कृतस्तं समयमनतिक्रम्य Sy.

संविदनुरूपम्। अभ्यगच्छन्[1]। मित्रमिन्द्रं प्रति। चेतयमानाः[2]। पृश्निगावः[3] पृश्निवर्णाश्वाः। पृश्निप्रसूताः[4]। आशुव्याप्तिम्[5]। चक्रुः[6]। नियुतः[7]। रन्तयः[8]। चेति मरुत उच्यन्ते नियच्छन्तीति नियुतो रमयन्तीति रन्तयः[9], सुदास्सं[10] प्रतिगच्छन्तमिन्द्रं मरुतश्चाभ्यगच्छन्नित्यर्थः।

**एकं च यो विंशतिं च श्रवस्या वैकर्णयोर्जनान्राजा न्यस्तः।**
**दस्मो न सद्मन्नि शिशाति बर्हिः शूरः सर्गमकृणोदिन्द्र एषाम्॥ ११॥**

एकञ्च। एकम्। च। यः[11]। विंशतिम्[12]। च। अन्नेच्छया[13]। वैकर्णयोर्जनपदयोः[14]। जनानधिपतीन्[15]। राजा सुदा वैजवनः[16]। न्यस्तारि[17]। दस्मं[18] कर्मशीलः। इवाध्वर्युः[19]। यज्ञे[20]। निवृश्चति बर्हिः सुदाः पैजवनः[21] शत्रूम्। तदानीं शूरः[22]। इमन्द्र[23]। एषाम्[24]। संस्थानं[25] विनाशं मारणम्। अकरोद्युद्ध इति।

**अध श्रुतं कवषं वृद्धमप्स्वनु द्रुह्युं नि वृणग्वज्रबाहुः।**
**वृणाना अत्र सख्याय सख्यं त्वायन्तो ये अमदन्ननु त्वा॥ १२॥**

अध श्रुतम्[26]। अनन्तरमेव[27]। विश्रुतम्। कवषनामानम्। अप्सु[28]। वृद्धम्[29]। अनुक्रमेण[30]। द्रुह्युञ्च[31]।

---

१. अभिजग्मुः Sy.
२. संहता जानन्तो वा Sy.
३. ०गावम् A. पृष्णिवर्णा गावो येषां ते पृश्निगावो मरुतः Sy.
४. यदेन्द्रः सुदासो रक्षणार्थमागच्छति तदा पृश्निनिप्रेषिताः पृश्न्या मात्रा नितरां प्रहिताः Sy.
५. ०व्याप्तिः A. आशुप्राप्तिम् Sy.
६. तस्मिन् युद्धे इन्द्रसाहाय्यार्थमभ्यगच्छन्नित्यर्थः Sy.
७. निधतः A. मरुतामश्वाश्च Sy.
८. रन्तरया A. M. रममाणाः Sy.
९. रन्यः A. The passage मरुतः... रन्तयः refers to नियुतः and रन्तयः।
१०. सुदस्सं० M. सुदासं is suggested for सुदास्सम्।
११. सुदासो राजा Sy.
१२. विशति M.
१३. यशस इच्छयान्नेच्छया वा Sy.
१४. ०योजन० M.
१५. ०पनीन् A.
१६. ०दाः पैज० is suggested for ०दा वैज०।
१७. अन्यस्तारि M. न्यस्तः is suggested for न्यस्तारि॥ आत्मनाहन् Sy.
१८. दस्मः is suggested for दस्म॥ दर्शनीयो युवा Sy.
१९. ०ध्वर्यं A.
२०. यज्ञगृहे Sy.
२१. यस्मिन् युद्धे सपत्नान्निशिशाति नितरां लुनाति
२२. तस्मिन् युद्धे शूरः Sy.
२३. इन्द्रः is suggested for इमन्द्र॥
२४. एषा M. एषां मरुताम् Sy.
२५. सर्गं प्रसवमकृणोत्। सुदासः साहाय्यार्थमकरोत् Sy.
२६. अथ श्रुतम् A.
२७. अपि च Sy.
२८. उदकेषु Sy.
२९. च त्रीन् Sy.
३०. आनुपूर्व्येण Sy.
३१. द्रुह्युं च Sy.

निवृणवान्[1] । वाबाहुः[2] । अथ प्रत्यक्षः—प्राणानाः[3] । अत्र त्ववि[4] । सख्यसिद्धयर्थम्[5] । च या[6] सख्यम् । तत्कामा[7] । ये त्वाम् । अन्वमदन्ति[8], एषां प्रीत्यर्थं सुदासः सैनिकैः स्तुतः कवष[9] द्रुह्युञ्च न्यहनदित्यर्थः[10] ।

**वि सद्यो विश्वा दृंहितान्येषामिन्द्रः पुरः सहसा सप्त दर्दः ।**
**व्यानवस्य तृत्सवे गयं भाग्जेष्म पूरुं विदथे मृध्रवाचम् ॥ १३ ॥**

वि सद्यः[11] । विदारयत्[12] । सद्य एव । विश्वान्यपि । दृंहितानि दृढानि प्राकारादीनि[13] । एषां[14] सुदासः शत्रूणाम्[15] । इन्द्रः । पुरीश्च[16] । अन्वाजेन[17] ? सप्त[18] । व्यभच्च[19] । अनो[20] पुत्रस्य । पुरन्तद्[21] गत्वा । तृत्सवे[22] । तमेनं स्तुवन्तो[23] वयं जयेम । पूरुम्[24] । सङ्ग्रामे । चरुष्[25] वाचमिति ।

**नि गव्यवोऽनवो द्रुह्यवश्च षष्टिः शता सुषुपुः षट् सहस्रा ।**
**षष्टिर्वीरासो अधि षड् दुवोयु विश्वेदिन्द्रस्य वीर्या कृतानि ॥ १४ ॥**

नि गव्यवः[26] । निसुषुपुर्मृताः[27] । सुदासो गा अपहर्तुमिच्छन्तः[28] । अनवः[29] । द्रुह्यवः[30] । च । षष्टिः । शता । षट्[31] । सहस्राणि । पुनश्च षष्टिः[32] । वीराः[33] । पुनश्च षट् । परिचरणमिच्छतः[34] सुदासः । इन्द्रस्यैतानि[35] । वि-

---

१. ०वृक्षण० is suggested for ०वृण० ॥ न्यमज्जयदित्यर्थः Sy.
२. प बाहुः A. वज्रबाहुः is suggested for वा बाहुः ॥
३. प्राणानां A. वृणानाः is suggested for प्राणानाः ॥ सख्यं लेभिर इति शेषः Sy.
४. त्वयि is suggested for त्ववि ॥ अस्मिन्नवसरे ५. सख्यार्थम् Sy.
६. त्वया is suggested for च या ॥
७. तत्काम M. त्वत्कामाः is suggested for तत्कामा ॥
८. ०मदयन्त्येषां A. ०दन्, एषां is suggested for ०दन्त्येषां ॥ अस्तुवन् Sy.
९. ०ष द्रुह्यं च M. ०षं द्रु० is suggested for ०ष द्रु० ।
१०. न्यहन्नित्य० is suggested for न्यहनदित्य० । ११. वि डन्य A. १२. व्यदार० is suggested for विदार० ॥ विदारयामास Sy. १३. दुर्गाणि Sy. १४. कविषादीनाम् Sy. १५. सुदाः स श० A. १६. पुरिश्च A. नगरीश्च Sy. १७. न्वज्ञेन A. बलेन Sy. १८. तद्रक्षासाधनभूतान् सप्त प्रकारांश्च Sy. १९. व्यजनच्च M. व्यभजच्च is suggested for व्यभच्च ॥ अददादित्यर्थः Sy.
२०. अनोः पु० is suggested for अनो पु० ॥ अपि चानोः सम्बन्धिनो बलस्यानोः पुत्रस्य वा Sy. २१. ०न्तं ग० A. गयं गृहं धनं वा Sy.
२२. तृत्सवे is missing in M. तृत्सुनामकाय राज्ञे तृत्सूनां गणाय वा Sy. २३. ०नमस्तु० A. इत्थमिन्द्रं स्तुवन्तो वयम् Sy. २४. पुरुं M. पूरुं मनुष्यम् Sy. २५. चरुष्याच० A. परुषवा० is suggested for चरुष्वा० ॥ बाधवाचम् Sy. २६. नि गप्यवः A.
२७. निषुसुपुमम्० A. निषुषुपुर्मृ० is suggested for निसुषुपुर्मृ० नितरां शेरते निहता इत्यर्थः Sy. २८. गोकामाः Sy. २९. अनोः सम्बन्धिनः Sy. ३०. द्रुह्योः सम्बन्धिनः Sy.
३१. षट् A. ३२. प पुन० A. ३३. विरा A.
३४. ०च्छन्तः M. दुवोयवे । चतुर्थ्या लुक् । परिचरणकामाय सुदासे Sy. नमस्यति दुवस्यतीति परिचरणकर्माणौ Ngh. 3.5.
३५. ०स्येता० M.

श्वानि । कर्माणीति दुपोय्विति[1] षष्ठ्यन्तमिति ।[2]

**इन्द्रे॑णै॒ते तृत्स॑वो॒ वेवि॑षाणा॒ आपो॒ न सृ॒ष्टा अ॑धवन्त॒ नीचीः॑ ।**
**दु॒र्मि॒त्रासः॑ प्रकल॒विन्मिमा॑ना ज॒हुर्विश्वा॑नि॒ भोज॑ना सु॒दासे॑ ॥ १५ ॥**

इन्द्रेण[3] । इन्द्रेण । एते । तृत्सवः[4] । व्याप्नुवन्तः[5] । आपः । इव[6] । गमनोद्युक्ताः[7] । नीच्चिना[8] । अधावत्[9] पराजिताः । दुर्मित्रासः[10] । प्रकलविदः कलाश्च जानन्तो वणिज[11] । परिच्छेद्यं परिच्छिन्नन्तस्तृत्सपौ[12] नूनं[13] वणिजस्ते । जहुः[14] । विश्वानि[15] । अन्नानि[16] । सुदासे[17] राज्ञे ।[18]

---

१. दुपो इति M. दुवो य्विति is suggested for दुपोय्विति ॥ The passage दुवोय्विति षष्ठ्यन्तम् should immediately follow परिचरणमिच्छतः ।

२. VM. ignores इत् and वीर्या ॥ इत् एव । वीर्या वीर्याणीति Sy.

३. कदाचिदिन्द्रेण रक्षिता अप्यन्यदा तेनैव बाध्यन्ते Sy. वसिष्ठस्यार्षम् Dur. वसिष्ठस्य SKN. ४. तृत्सपः A. दारयितव्या मेघाः Dur. तृदेर्हिंसार्थस्याहार्थे असुन् प्रत्ययो द्रष्टव्यः । तर्दनार्हा मेघाः SKN.

५. युद्धार्थं सङ्गताः Sy. पुनः पुनर्व्याप्यमानाः Dur. 'विष्लृ व्याप्तौ' व्याप्यमानाः SKN.

६. यथा SKN.

७. ०नोन्युक्ताः A. पलायनार्थमुद्युक्ताः Sy. सृष्टाः केनचित् Dur. केनचित्सृष्टाः SKN.

८. वीचिना M. नीचीनाः is suggested for नीचिना A. नीचैरित्यर्थः । उच्चैर्गतय एते सन्त इन्द्रबलादेषां नीचैर्गतयः संवृत्ता इत्यभिप्रायः Dur. नीचैः SKN.

९. ०वन् is suggested for ०वत् ॥ अधावन्त Sy. अगच्छन् Dur. गच्छन्ति . . . एवमन्तरिक्षस्याधो भवन्तीत्यर्थः SKN.

१०. दुमि० A. सुमित्राण्यपि सन्तो येऽतिसन्धानपरास्ते पुनर्दुर्मित्राः Dur. अधोभूय च ये दुर्मित्रासः कुत्सितान्यनिशं धनपराणि मित्राणि SKN.

११. वणिजं M. वणिजः is suggested for वणिज ॥ अजानन्त Sy. के पुनस्ते प्रकलविदो वणिज इत्यर्थः. . . एवमल्पोदकाल्पदानोपमासम्बन्धात् प्रकलविद् वणिगित्युपपद्यते । अवयवप्रत्यवयवादिकलाः प्रकलाशब्देनोच्यन्ते । तेषु च वणिगेव निपुणो भवति गणितकुशलत्वात् । न तथान्य इति Dur. कतमानि ? उच्यन्ते. .प्रथमाबहुवचनस्यात्र लुग् द्रष्टव्यः । प्रकलाविदः प्रकृष्टानां कलानां वेदितारो वणिजः SKN.

१२. परिच्छिन्दन्तः is suggested for परिच्छिन्नन्तः ।

१३. ०न्तस्तृत्सत्वो M. ०स्तृत्सवो is suggested for ०स्तृत्सपौ ॥ सुदासा बाध्यमानाः Sy. ते यथाभिद्रोहबुद्ध्या किञ्चिद् द्रव्यमल्पं ददति Dur. किञ्चित्स्वर्णमुक्ताप्रबालादि महता यत्नेन मिमते, एवं मिमाना यावन्ति यदा यत्र योग्यानि तावन्ति तदा तत्र त्यजन्तः SKN. १४. एवमेते मेघाः पूर्वमल्पोदकदातारो भूत्वाऽधुनेन्द्रबलोद्यताः सन्तो जहुः Dur. जहति त्यजन्ति SKN.

१५. सर्वाण्यशेषाणि Dur. सर्वाणि SKN.

१६. भोग्यानि धनानि Sy. भोजनान्युदकानि Dur. भोजनानि भोग्यार्हाण्युदकानि SKN.

१७. सुदासे राजनि, यजमाने वा कल्याणदाने Dur. सुदा यजमानस्तस्मै, कल्याणदानस्य यजमानस्यार्थायेत्यर्थः SKN.

१८. प्रकलविद् वणिग् भवति । कलाश्च वेद प्रकलाश्च N. 6. 6., SKN. II. 408.

**अर्धं वीरस्य शृतपामनिन्द्रं परा शर्धन्तं नुनुदे अभि क्षाम् ।**
**इन्द्रो मन्युं मन्युम्यो मिमाय भेजे पथो वर्तनिं पत्यमानः ॥ १६ ॥**

अर्धं वीरस्य[१] । भगानामर्धम्[२] । वीरस्याभ्यावर्तिः नश्वायमानस्य[३] । श्रुतस्य[४] पातारमयष्टव्य इन्द्र इति स्वस्मिन्नास्ये श्रित[५] प्रक्षिपन्तः, स्वधाभिर्यैरधिगुप्ता जुहुतेत्युक्तम्[६] । इन्द्रवर्जितम्[७] । पराणुनुदे । शर्धतम्[८] पृथिव्यां[९] सुदासो युद्धे । तदानीमिन्द्र[१०] । क्रोधम्[११] । मन्युना हिंसितुश्चायमानस्य[१२] । अबाधत[१३] । स च चायमानः पथो युद्धमार्गात्[१४] । वर्तनि[१५] वर्तनयोग्यं परोक्षं देशम् । भेजे[१६] । युद्धदेशादपगच्छन्निति[१७] ।

**आध्रेण चित्तद्वेकं चकार सिंह्यं चित्पेत्वेना जघान ।**
**अवं स्रक्तीर्वेश्यावृश्चदिन्द्रः प्रायंच्छद्विश्वा भोजना सुदासे ॥ १७ ॥**

आध्रेण । तम्[१८] । खल्विन्द्रः । दरिद्रेण[१९] । धनानामेकं[२०] गमनं[२१] दानम् । चकार[२२] । तथाजेन[२३] । सिंहम्[२४] । अपि । जघान[२५] । तथा वास्यावतक्षणीया यूपादेः स्रक्तिः[२६] । वेश्या । अवावृश्चत्[२७], एशीसूची[२८] । यथैतेऽर्था दुःशका

---

१. अद्धं वीरस्य A.
२. अर्धं हिंसकम् । अर्धेर्हिंसाकर्मणोऽर्धशब्दस्य निष्पत्तिः
३. Sy. ०वर्तिनश्चाय० is suggested for ०वर्तिः नश्वाय० ॥ वीरयुक्तस्य सुदासः Sy.
४. शृतस्य is suggested for श्रुतस्य ॥ शृतस्य क्षीरादेर्हविषः पातारम्
५. श्रितं प्रक्षिपन्त A. शृतं is suggested for श्रित
६. ०गुप्ता वज्रं हुते० A. स्ववीर्यैरधिगुप्ता वा जुहुतेत्युक्तम् is suggested for स्वधाभिर्यैरधि. . .त्युक्तम् ।
७. यस्य बुद्धाविन्द्रो नास्त्यसावनिन्द्रः । तमिन्द्रमगणयन्तमित्यर्थः
८. शद्धन्तं A. शर्धन्तम् is suggested for शर्धतं ॥ उत्सहमानम्
९. भूमिमभि, भूम्यामित्यर्थः Sy.
१०. इन्द्रः is suggested for इन्द्र ॥
११. क्रोधः A.
१२. मन्युकर्तुर्मन्युना मिनतो हिंसतो वा शत्रोः Sy.
१३. बबाधे Sy.
१४. अथ सुदासः शत्रुः Sy.
१५. वर्तनीं A. पलायनमार्गम् Sy.
१६. प्राप Sy.
१७. दप is missing in A. गच्छन् Sy.
१८. तत् खलु is missing in M. तत् is suggested for तम् ।
१९. दरिद्रेणापि सुदासा Sy.
२०. मुख्यं दानकर्म च Sy.
२१. गमनं is redundant.
२२. कारयामास Sy.
२३. छागेन Sy.
२४. प्रवयाः सिंहः सिंह्यास्तम् Sy.
२५. घातयामास Sy.
२६. ०दे सूक्तीः A. स्रक्तीः is suggested for स्रक्तिः ।
२७. अववृक्तवान्, तान्येतानि त्रीणि कार्याण्यसम्भावितानि नाशङ्कनीयानीन्द्रस्य महिम्नोऽधिकत्वात् Sy.
वेशी is suggested for एशी ॥
२८. The passage वेशी सूची should immediately follow वेश्या and precede अवावृश्चत् । वेश्यादेः कृत्यं सूच्यैवाकरोदित्यर्थः Sy.

एव[1] दुःशकोऽयमर्थो यत्—सुदासे[2] । शत्रूणां सर्वाणि । अन्नानि[3] । इन्द्रः[4] । प्रायच्छदिति[5] ।

**शश्वन्तो हि शत्रवो रारधुष्टे भेदस्य चिच्छर्धतो विन्द रन्धिम् ।**
**मर्तां एनः स्तुवतो यः कृणोति तिग्मं तस्मिन्नि जहि वज्रमिन्द्र ॥ १८ ॥**

शश्वन्तः । बहवः । हि । शत्रवः[6] । तव । वशीभूताः[7] । तथा सति भेदस्य[8] चायमानस्य । अपि । वर्धमानस्य[9] । वशम्[10] । लम्भय[11] तमपि लशन्नय[12] । मर्तान्[13] । एनः[14] । त्वां[15] स्तुवन्तः[16] । यः[17] । करोति चायमानः । तिग्मम्[18] । तस्मिन्[19] । निजहि[20] । वज्रम्[21] । इन्द्र !

**आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत् ।**
**अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि ॥ १९ ॥**

आवदिन्द्रम्[22] । यमुना[23] नदी । तृत्सवः[24] । च योद्धारः तृत्सून् प्रति युद्धाय गच्छद्[25] यमुनायां तृत्सुभिः[26] संजग्मे[27] इन्द्र इति । ततः प्र मुषायत्[28] । यमुनायाम् । युद्धे । चायमानं[29] जघान[30] तदानीम् । अजासः । शिग्रवः ।

---

१. दुःशका एव is missing in A.
२. राज्ञे Sy.
३. भोजनानि भोग्यानि धनानि Sy.
४. इन्द्र प्रयच्छ० A.
५. VM. ignores चित् ।
६. अरयः Sy. ७. वशमीयुः Sy.
८. ०स्याचा० A. भनक्ति मर्यादा इति भेदो नास्तिकस्तस्य । यद्वा भेदो नाम सुदासः शत्रुः कश्चित् । तस्येत्यर्थः Sy.
९. उत्सहमानस्य Sy. १०. वशीकरम् Sy.
११. लभस्व Sy.
१२. ०मविलश० M. वशम् is suggested for लशम् ।
१३. मर्त्यान् १४. एननः A. पापम् Sy.
१५. त्वां is missing in M.
१६. स्तुवतः is suggested for स्तुवन्तः ॥
१७. भेदः Sy.
१८. निशितं योद्धारमुत्साहयन्तम् Sy. तिग्मं तेजतेः । उत्साहकर्मणः N. 10. 6.
१९. भेदे Sy.
२०. वज्रेण भेदं प्रहरेत्यर्थः Sy.
२१. वजति गच्छत्येव शत्रुं न प्रतिहन्यत इति वज्रः तम् । वज्रशब्दो वजेः 'ऋज्रेन्द्राग्रवज्रविप्र०' इत्यादिना रन्प्रत्ययान्तो निपातितः Sy.
२२. आपदीन्द्रम् A.
२३. तमिन्द्रं यमुनावत् । अतोषयत् । तत्तीरवासी जनः सर्वोऽप्यतोषयदित्यर्थः Sy.
२४. तृत्सवयः A. तृत्सोः पुरुषाश्चावन् । आव दित्येकवचनं बहुवचनान्ततया विपरिणतं सदत्र सम्बध्यते Sy.
२५. गच्छन् is suggested for गच्छद् ॥
२६. तत्सुहिः M.
२७. आवत्—अतोषयत् । तत्तीरवासी जनः सर्वोऽप्यतोषयदित्यर्थः Sy.
२८. ०ष्णात्यत् A. अवधीदित्यर्थः Sy.
२९. भेदं नास्तिकं भेदनामकं वा सुदासः शत्रुम् Sy.
३०. जघान should immediately follow प्र मुषायत् and precede यमुनायाम् ।

यक्षवः । च जनपदनामान्येतानीति तत्र जाताः । इन्द्राय भेदस्य अश्वानाम्[१] । शीर्षाणि[२] च्छित्त्वा । बलिम्[३] । जह्रुरग्रतः[४] प्राक्षिपन्नश्वशिरांसीत्यर्थः ।

**न तं इन्द्र सुमतयो न रायः संचक्षे पूर्वा उषसो न नूत्नाः ।**
**देवकं चिन्मान्यमानं जघन्थाव त्मना बृहतः शम्बरं भेत् ॥ २० ॥**

न त इन्द्र । न । ते[५] । इन्द्र ! सुमतयः[६] । न च । धनानि[७] । संख्यातुं[८] शक्यन्ते । न गताः[९] । उषसः । नापि[१०] । भूतना इत्यौपमिकम्[११] । देवकनामानमसुरम्[१२] । मन्यमानस्य पुत्रम् । जघन्थः[१३] । अपाभैत्सीः[१४] । स्वयमेव बृहतः[१५] शिलोच्चयात्[१६] ।

**प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः ।**
**न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥ २१ ॥**

प्र ये गृहात्[१७] । ये[१८] । प्रममदुः[१९] प्रकर्षेण तृप्यन्ति । गार्हस्थ्याश्रमात्[२०] । त्वत्कामनया[२१] यस्मिन्नाश्रम[२२] इज्यसे[२३]

---

१. अश्वसम्बन्धीनि Sy.
२. युद्धे हतानामश्वानां शिरांसीत्यर्थः । यद्वा अश्व्यानि शीर्षाणि युद्धे गृहीतान्मुख्यानश्वान् Sy.
३. बलं M. उपहारम् Sy. ४. उपजह्रुः Sy.
५. तव Sy. ६. शोभनमतयः Sy.
७. धानि A. ८. संख्यातुं शक्याः Sy.
९. पुरातनाः Sy. १०. इव Sy.
११. भूतना इत्यौप० A. नूतना is suggested for भूतना ॥
१२. ०क नं मान० A. देवकनामानं शत्रुम् Sy.
१३. जघज्वा A. अवधीः Sy.
१४. पा भैत् स्वीसी A. अवाभैत्सीः is suggested for अपाभैत्सीः ॥
१५. महतः शैलात् Sy.
१६. VM. ignores चित् and शम्बरम् ।
१७. प्र गे ग्रहात् A.. वसिष्ठस्येदमार्षम् Dur. वसिष्ठस्यार्षम् SKN.
१८. हे इन्द्र ! एवमादयो ये ऋषयः Sy. एवमादयः SKN. इत्येवमादयः Dur.
१९. प्रममदु A. प्राममदुः is suggested for प्रममदुः । प्रतुष्टुवुः प्रकर्षेण तर्पितवन्तो वा Sy. प्रकर्षेण...तृप्तवन्तः सोमेन हृष्टवन्तो वा यज्ञेषु Dur. प्रेत्ययममदुरित्येतेन सम्बध्यते ।...प्राममदुः मक्तेस्तृप्तिकर्मणः स्तुतिकर्मणो वा रूपम् । प्रकर्षेण तर्पितवन्तः स्तुतवन्तो वा SKN.
२०. ०स्था० A.
२१. ०श्रमत्वात् M. गृहात् गृहं प्राप्य गृहाद् गृहे ल्यब्लोपे द्वितीयार्थे पञ्चमी (Cf PM. 2. 3. 28. 1 ) सप्तम्यर्थे पञ्चमी Sy. गृहादिति सप्तम्याः स्थान एषा पञ्चमी । गृहे तस्य यज्ञगृहे त्वामिन्द्रम् SKN.
२२. तत्काम० M. त्वदिच्छया Sy. त्वया सह Dur. युष्मद इच्छाक्यचि त्वामिच्छति त्वायतीति ततः क्विपि त्वाय् । ततः 'अ प्रत्ययात्' इति चाकारे टापि तृतीयैकवचने लुकि छान्दसमेतद्रूपम् । त्वायया त्वत्काम्यया त्वदिच्छयेत्यर्थः SKN.
२३. ०सो ते. A. ते is suggested for से

तौ च । पराशरः[1] । शतयातुशक्तिर्बहुभिर्यातुधानैस्तद्वानिति[2] । वसिष्ठश्चाहम् । तेषामस्माकं भोजयितुः[3] । तव । सख्यम्[4] । शात्रवो न[5] । मृष्यन्ति[6] । तथा सति[7] । स्तोतृभ्योऽस्मभ्यम्[8] । सुदिनान्यहानि[9] । व्युच्छन्त्यः[10] ।

**द्वे नप्तुर्देववतः शते गोर्द्वा रथा वधूमन्ता सुदासः ।**
**अर्हन्नग्ने पैजवनस्य दानं होतेव सद्म पर्येमि रेभन् ॥ २२ ॥**

द्वे नप्तुः[11] । वैजवनस्य[12] चतस्रोऽन्त्या दानस्तुतिः[13] । देववतः[14] । नप्तुः पौत्रस्य[15] वैजवनस्य[12] । गवाम्[16] । द्वे ।

---

१. एवमत्र ऋषिः पराशरो वसिष्ठसम्बन्धात् । 'इन्द्रोऽपि पराशर उच्यते' स हि... परितः शातयिता यातूनां यातयितव्यानामसुरादीनामिति Dur.. पराशरश्च SKN.

२. Missing in M. ०यातुः is suggested for यातु ॥ शतयातुर्बहुरक्षाः । बहूनि रक्षांसि बाधितुं यं कामयन्ते स शतयातुर्बहूनां रक्षसां शातयिता वा Sy. बहूनां रक्षसां यातयिता तेन हि रक्षोघ्नं सत्रमाहृतमासीदिति भारते श्रूयते Dur. बहूनां शातयिता तेन हि रक्षोघ्नं शस्त्रमाहृतमासीदिति स्मर्यत इतिहासे SKN

३. ते पराशरप्रभृतयो भोजस्य भोजकस्य पालकस्य Sy. किं तेषामिति ?...ते भोजस्य भोगिनस्तव Dur. भोजनस्य दातुः SKN.

४. सख्युः कर्म स्तोत्रं यजनं वा Sy. सखिभावम् Dur. स्तुत्यस्तोतृलक्षणं यष्टृयष्टव्यत्वलक्षणं च सख्यम् SKN.

५. नेत्ययं प्रतिषेधो मृषन्तेत्येतेन सम्बध्यते SKN.

६. मुष्यन्ति A. न विस्मरन्ति । 'मृष मर्षे' मर्षो मर्षणं तत्(न)कुर्वन्त्वित्यर्थः Sy. अमार्जयन्त नाशयन्तीत्यर्थः Dur. य इति श्रुतेः साकाङ्क्षत्वात् त इत्यध्याहार्यम् ।...मृषन्ति 'मृष आमर्षे' आमर्षो विस्मरणम् । न विस्मरन्ति विच्छेदे वा, न विच्छिन्दन्ति न विनाशयन्तीत्यर्थः SKN.

७. यतो न विस्मरन्त्यतो हेतोः Sy. एतदधाशब्दश्रुतेर्यस्मादित्यध्याहार्यम् । यस्मान्न मृषन्ति, अधा एतस्मात् कारणात् SKN.

८. सूरीणां स्तोतॄणामेषाम् । अत्र विभक्तिव्यत्ययः Sy.
एवङ्गुणयुक्तेभ्यस्तेभ्यः सूरिभ्यः Dur. व्यत्ययेनैषा षष्ठ्यर्थे पञ्चमी । सूरीणां स्तोतॄणाम् SKN.

९. सुदिना शोभनानि दिनानि Dur. SKN.

१०. व्युच्छन्ति is suggested for व्युच्छन्त्यः ॥ व्युच्छन्ति विवासन्ति । उपगच्छन्तीत्यर्थः Sy. विभान्तीत्यर्थः । तेषामेव सुप्रभाता रात्रय इत्यभिप्रायः Dur. व्युच्छन्ति विवसन्त्यवगच्छन्तीत्यर्थः SKN. पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे । इन्द्रोऽपि पराशर उच्यते परा शातयिता यातूनाम्. N. 6. 30. SKN. II 494.

११. द्वे नस्तु A.

१२. पैजव० is suggested for वैजव० । पिजवनपुत्रस्य Sy.

१३. A fragment of (KSA. 34. 18. p. 25) KSA. reads - पैजवनस्यान्त्याश्चतस्रो दानस्तुतिः Sy..

१४. देवनतः M.
देववतो राज्ञः Sy.

१५. नप्तृपौ० M.

१६. गवा A.

शते। द्वौ च। रथौ[1]। वधूयुक्तौ। सुदासु[2]। पूजयन्[3]। अग्ने[4]! वैजवनस्यैवं[5] रूपम्। दत्तं[6] धनम्। परिगच्छामि। स्तुवन्[7] । होतेव[8] । होतृषदनमिति[9] ।

**चत्वारो मा पैजवनस्य दानाः स्मद्दिष्टयः कृशनिनो निरेके ।**
**ऋज्रासो मा पृथिविष्ठाः सुदासस्तोकं तोकाय श्रवसे वहन्ति ॥ २३ ॥**

चत्वारः । चत्वारः । मा । वैजनस्य[10] । देया[11] अश्वाः । प्रशस्तजनात्मसर्जनाः[12] । सुवर्णालङ्कृताः[13] । गमनवेलायाम्[14] । ऋजुगामिनम्[15] । पृथिव्यां सुसंस्थिताः[16] । सुदासो राज्ञः[17] । पुत्रमृतम्[18] । पुत्रस्य[19] । अन्नार्थम्[20] । वहन्तीति । पुनर्मेति पूरणम् ।

**यस्य श्रवो रोदसी अन्तरुर्वी शीर्ष्णेशीर्ष्णे विबभाजा विभक्ता ।**
**सप्तेदिन्द्रं न स्रवतो गृणन्ति नि युध्यामधिमशिशादभीके ॥ २४ ॥**

यस्य श्रवः । यस्य[21] । यशः[22] । द्यावापृथिव्योः[23] । महत्योः[24] । मध्ये भवति सर्वमन्तरिक्षमस्य यशसा व्याप्तम् । यश्च[25] शीर्ष्णे[26]। धनं विभजति[27]। धनस्य विभक्ता[28] सर्वेभ्यः पुरुषेभ्यः प्रयच्छतीत्यर्थस्तम्[29] । सर्वं[30] च लोकाः। उदारमिन्द्रम्। इव। मर्त्याः। स्तुवन्ति। सोऽयं सङ्ग्रामे। युध्यामधिर्नाम[31] शत्रुम्। न्यशिशाज्जघानेत्यर्थः[32]।[33]

---

१. रथेन वस्त्रयुक्तौ A. च देयं दानम्, दानभूतान् Sy.
२. सुदासः is suggested for सुदासु ॥ राज्ञः Sy. ३. अर्हन् योग्योऽहं वसिष्ठः Sy.
४. अत्राग्नेः सम्बोधनं सर्वदेवमुख्यत्वप्रतिपादनार्थं न तु देवतात्वज्ञापनार्थमतद्देवताकत्वादस्य सूक्तस्य Sy. ५. पैजव० is suggested for वैजव० । पिजवनपुत्रस्य Sy.
६. धत्तं M. ७. स्तुन्वन् M.
८. वषट्कर्तेव Sy. ९. यज्ञगृहम् Sy.
१०. पैजवनस्य is suggested for वैजनस्य पिजवनपुत्रस्य Sy. ११. देयभूताः Sy.
१२. ०स्तधनानित्मिसर्ज० A. ०धनातिसर्ज० is suggested for ०जनात्मसर्ज० ॥ श्रद्धादिदानाङ्गयुक्ताः Sy.
१३. हिरण्यालङ्कारवन्तः Sy.
१४. दुर्गतौ सत्याम् Sy.
१५. ऋजगामिनं A. ०मिनः is suggested for ०मिनम्
१६. ०स्थितं A. पृथिव्यां सुप्रतिष्ठिताः Sy.
१७. राज्ञं M.
१८. पुत्रं मृतं M. पुत्रवत् पालनीयं मां वसिष्ठं रथे स्थितम् Sy.
१९. तोकाय-तोकस्य पुत्रस्य । षष्ठ्यर्थे चतुर्थी Sy.
२०. यशसे वा Sy. २१. सुदासः Sy.
२२. शशः A. २३. द्यावापृथिव्यौ Sy.
२४. विस्तीर्णे Sy. २५. यशश्च M.
२६. शार्ष्णी A. श्रेष्ठाय श्रेष्ठाय Sy.
२७. धनं प्रददौ Sy. २८. प्रदाता Sy.
२९. ०च्छन्ती A.
३०. सप्त च is suggested for सर्वं च । तं सुदासं सप्तैव लोकाः
३१. अध्यामधिर्नाम शत्रु A. युध्यामधिनामशत्रुम् is suggested for युध्यामधिर्नामिशत्रुम् ।
३२. न्यशिगाज्जनेत्यर्थः A.
३३. VM. ignores इत् ॥ इत्...एव Sy.

**इमं नरो मरुतः सश्चतानु दिवोदासं न पितरं सुदासः ।**
**अविष्टना पैजवनस्य केतं दूणाशं क्षत्रमजरं दुवोयु ॥ २५ ॥**

इमं नरः । इमं पैजवनम्[1] । हे नेतारः ! मरुतः ! अनुसेवध्वमस्य रक्षार्थम् । दिवोदासम्[2] । इव । अस्य सुदास[3] । पितरम् । रक्षत च । पैजवनस्य[4] । गृहम्[5] । दुणाशमस्तु[6] । अस्य बलम् । जरारहितम्[7] । परिचरणकामस्येति[8] ।

## VII.19.

**यस्तिग्मशृङ्गो वृषभो न भीम एकः कृष्टीश्च्यावयति प्र विश्वाः ।**
**यः शश्वतो अदाशुषो गयस्य प्रयन्तासि सुष्वितराय वेदः ॥ १ ॥**

यस्तिग्मशृङ्गः[9] । यः[10] । तिग्मशृङ्गः[11] । वृषभः । भयानकः[12] । एकः[13] । प्रजाः[14] । प्रच्यावयति[15] । यश्च त्वम् । बह्वीः । अदाशुषोऽयजमानस्य । गृहस्य[16] सम्बन्धि धनमाहरसि । स त्वमाहृतं तत् धनम्[17] । प्रयच्छसि[18] । अतिशयेन सोमाभिषवं कुर्वते[19] यजमानायेति[20] ।

---

१. वैजवनं A. सुदासं राजानम् Sy.
२. दिवोदास इति पिजवनस्यैव नामान्तरम् Sy.
३. सुदासः is suggested for सुदास ॥ सुदासो राज्ञः Sy.
४. वैजव० A. ५. मन्त्रं गृहं वा Sy.
६. दूणशिम A. The commentary after दुर्नशिम् missing in A. दूणाशम्० is suggested for दुणाशम० M. अविनाशि Sy. ७. अशिथिलं चास्तु Sy.
८. दिवोयु परिचरणकामस्य । षष्ठ्या लुक् Sy.
९. 'यस्तिग्मशृङ्गः' इत्येकादशर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तम् 'यस्तिग्मशृङ्ग एकादश' (KSA. 34. 19. P. 25.) इति । आभिप्लविके पञ्चमेऽहन्येतन्निविद्धानम् । सूत्रितञ्च—'कया शुभा यस्तिग्मशृङ्ग इति मध्यन्दिनः' (ĀSS. 7. 7.) इति विषुवति निष्केवल्यशस्त्रेऽप्येतत्सूक्तम् । सूत्रितञ्च—'यस्तिग्मशृङ्गो ऽभि त्यं मेषम्'' (ĀSS, 8. 6.) इति । महाव्रते निष्केवल्येऽप्येतत्सूक्तम् । सूत्रितञ्च 'यस्तिग्मशृङ्गो वृषभो नभसि न भीम उग्रो जज्ञे वीर्याय स्वधावन्' (AA. 5. 2. 2.) इति । आयुष्कामेष्ट्यां 'मा ते अस्याम्' इतीन्द्रस्य त्रातुर्याज्या । सूत्रितञ्च—'मा ते अस्यां सहसावन् परिष्टौ पाहि नो अग्ने पायुभिः' (ĀSS. 2. 10.) इति Sy.
१०. इन्द्रः Sy. ११. तीक्ष्णशृङ्गः Sy.
१२. भयङ्करः सन् Sy. १३. एव M. असहाय एव Sy. १४. शत्रुजनान् Sy. १५. स्थानात् प्रच्यावयति Sy. १६. धनस्य वापहर्ता भवतीति शेषः Sy. १७. The commentary up to प्रजाः is missing in A.
१८. VM. seems to explain प्रयन्ता and असि by प्रयच्छ ॥ प्रदातासि तृन्नन्तत्वा. दत्र षष्ठ्या अभावः । आसीदित्यस्याख्यातस्यानुदात्तत्वाद्यद्वृत्तयोगाच्चानुदात्तत्वासम्भवाद् यद्वृत्तयुक्तमाख्यातान्तरमध्याहृत्य योजना कृता Sy. १९. कुर्वति A.
२०. VM. ignores न and विश्वाः ॥ न इव । विश्वाः सर्वान् Sy.

त्वं ह् त्यदि॑न्द्र॒ कुत्स॑मावः॒ शुश्रू॑षमाणस्त॒न्वा॑ सम॒र्ये॑ ।
दासं॒ यच्छुष्णं॒ कुय॑वं॒ न्य॑स्मा॒ अर॑न्धय आर्जुने॒याय॒ शिक्ष॑न् ॥ २ ॥

त्वं ह् त्यत् । त्वम्[1] । खलु । एतत्[2] । इन्द्र ! कुत्सम्[3] । अरक्षः । परिचर्यमाणः[4] । तव पुत्रेण[5] कुत्सेन । सङ्ग्रामे[6] । यदा[7] । अस्मै कुत्साय । अर्जुन्याः पुत्राय[8] । कुयवम्[9] । उपक्षयितारम्[10] । शुष्णञ्च । अरन्धयो वशामानय[11] इत्यर्थः । कर्तव्यमिति[12] शिक्षन्निति[13] ।[14]

त्वं धृ॑ष्णो धृष॒ता वी॒तह॑व्यं॒ प्रावो॒ विश्वा॑भिरू॒तिभिः॑ सु॒दास॑म् ।
प्र पौरु॑कुत्सिं त्र॒सद॑स्युमावः॒ क्षेत्र॑साता वृत्र॒हत्ये॑षु पू॒रुम् ॥ ३ ॥

त्वं धृष्णोः[15] । त्वम् । धृष्णो[16] ! बलेन[17] । दत्तहव्यम्[18] । प्रावः[19] । विश्वैः । पालयितारैः[20] । सुदासम्[21] । प्रापुश्च[22] । पुरुकुत्सपुत्रम् । त्रसदस्युम् । प्रावश्च । क्षेत्र सम्भजने[23] । सङ्ग्रामेषु[24] । पं च[25] राजानमिति ।

त्वं नृभि॑र्नृमणो दे॒ववी॑तौ॒ भूरी॑णि वृ॒त्रा ह॑र्यश्व हंसि ।
त्वं नि दस्युं॒ चुमु॑रिं॒ धुनिं॒ चास्वा॑पयो द॒भीत॑ये सु॒हन्तु॑ ॥ ४ ॥

त्वं नृभिः । त्वम् । मरुद्भिः । हे नेतृशीलमनस्त[26] ! यज्ञार्थम्[27] । बहूनि । वृत्राणि[28] । हर्यश्व ! नाशय[29] ।

---

१. त्व A. २. तदा Sy.
३. A. reads रुत्स for कुत्स
४. उपाचरन् Sy. ५. शरीरेण Sy.
६. मर्यैर्मर्त्यैर्योद्धृभिः सहिते युद्धे Sy.
७. यद्वा M.
८. अजून्या पु० A.
९. कयं A. The commentary after कुयवम् is missing in A.
१०. दासनामकमसुरम् Sy.
११. ०नयेत्यर्थः M.
१२. इतिकर्तव्यं is suggested for कर्तव्यमिति ।
१३. धनं प्रयच्छन् Sy.
१४. VM. ignores नि ॥ नि नितराम् Sy.
१५. त्वं धृष्णो is missing in M.
१६. हे शत्रूणां धर्षक ! इन्द्र ! Sy.
१७. धर्षकेण वज्रेण बलेन वा Sy.
१८. दत्तहविष्कं प्रजनितहविष्कं वा Sy.
१९. प्रकर्षेणारक्षः Sy.
२०. रक्षाभिः Sy. २१. राजानम् Sy.
२२. प्रावश्च is suggested for प्रापुश्च ।
२३. The commentary up to सम्भजने is missing in A. क्षेत्रस्य भूमेर्भजने निमित्ते Sy. २४. ०मेरि M. युद्धेषु
२५. पूंश्च M. पुरुंच is suggested for पूं च ।
२६. अनेन नेतृशीलं मनस्त A. ०नस्क ! is suggested for ०नस्त ॥ हे नृभिर्यज्ञानां नेतृभिः स्तोतृभिर्मननीय ! स्तोतव्येन्द्र ! नृषु मनो यस्येति बहुव्रीहिर्वा Sy.
२७. यज्ञे क्रियमाणे सति सङ्ग्रामे वा । देवा विजिगीषवो यस्मिन् वियन्ति गच्छन्ति इति सङ्ग्रामो देववीतिः Sy.
२८. पुत्राणि A. शत्रून् Sy.
२९. मारितवानसि Sy.

नि[1]। त्वम्[2]। यस्वापयः[3]। उपक्षपयितारम्। चुमुरिम्। धुनिम्। च। दभीतये[4] राज्ञे तत्प्रीत्यर्थम्। शोभन-हननेनायुधेनेति[5]।

**तव॑ च्यौ॒त्नानि॑ वज्रहस्त॒ तानि॒ नव॒ यत्पुरो॒ नव॒तिं च॑ स॒द्यः ।**
**नि॒वेश॑ने शत॒तमावि॑वेषी॒रह॑ञ्च वृ॒त्रं नमु॑चिमु॒ताह॑न् ॥ ५ ॥**

तव च्यौत्नानि। तव[6]। बलानि। वज्रहस्त! तानि[7]। नव[8]। यत्। पुरः। नवतिम्[9]। च। सद्य[10] एवाश्नथः। स त्वं शतानि[11] पुराणाम्। भगेषु जाग्रत्स्वन्तर्निविष्टेष्वेव[12]। व्याप्तवानसि[13] तदा[14]। अहिम्। नमु-चिम्। च जघाद्धेति[15]।

**सना॒ ता त॑ इन्द्र॒ भोज॑नानि रा॒तह॑व्याय दा॒शुषे॑ सु॒दासे॑ ।**
**वृष्णे॑ ते॒ हरी॒ वृष॑णा युनज्मि॒ व्यन्तु॒ ब्रह्मा॑णि पुरुशाक॒ वाज॑म् ॥ ६ ॥**

सना ता ते[16]। सनातनानि[17]। तानि[18]। इन्द्र! तव भोजनान्यन्नानि[19]। दत्तहविष्काय। धनानि प्रयच्छते[20]। सुदासेऽभूवन्[21]। वृष्णे[22]। तुभ्यम्[23]। हरी[24]। वर्षितारौ। युनज्मि[25]। प्राप्नुवत्वम्[26]। मदीयानि[27] स्तोत्राणि। बहुसहाय[28]! अन्नम्[29]।

---

१. नितराम् Sy.
२. त्वम् is suggested for त्वन् ॥
३. अस्वा० is suggested for यस्वा० ॥ मारितवानसीत्यर्थः Sy.
४. दभीतिनामकाय राजर्षये तदर्थमित्यर्थः Sy.
५. सहन्तुना वज्रेण Sy.
६. वव A.
७. तादृशानि Sy.
८. नप A.
९. पुरः विदारितवानिति शेषः Sy.
१०. युगपदेव Sy.
११. शततमीं पुरम् Sy.
१२. ०न्तर्णिविष्टे० A. निवेशनार्थम् Sy.
१३. व्याप्तेवा० A. व्याप्नोः Sy.
१४. तथा भिन्न A. तदा seems to be the explanation of उत ॥ उत अपि च Sy.
१५. जगन्थ M. जघानेति is suggested for जगाद्धेति।
१६. ते is missing in M.
१७. सना is missing in A. सनानि सनातनानि बभूवुरिति शेषः Sy.
१८. त्वया दत्तानि Sy.
१९. भोग्यानि धनानि Sy.
२०. यजमानाय Sy.
२१. सदा० A.
२२. हुवन् M.
२३. कामानां वर्षित्रे Sy.
२४. त्वामानेतुमित्यर्थः Sy.
२५. युनस्मिन् A. रथे योजयामि Sy.
२६. ०वन्तु is suggested for ०वत्वं ॥ गच्छन्तु Sy.
२७. न्तु मदीयानि is missing in M.
२८. बहु स० A. हे बहुकर्मन्निन्द्र! Sy.
२९. न्नम् is missing in M. बलिनं त्वाम् Sy.

मा ते॑ अ॒स्यां स॑हसाव॒न्परि॑ष्टाव॒घाय॑ भूम हरिवः परा॒दै ।
त्राय॑स्व नोऽवृ॒केभि॒र्वरू॑थै॒स्तव॑ प्रि॒यासः॑ सू॒रिषु॑ स्याम ॥ ७ ॥

मा ते[१] । अस्मिन्[२] । अन्वेषणे[३] क्रियमाणे वयम् । अघाय[४] । परादै[५] । भूम[६] मास्मानाहन्त्रे[७] परादा इत्यर्थः ।
त्रायस्व[८] । अस्मान् । वृकरहितैः[९] । गृहैः[१०] । तव । प्रियासो[११] वयम् । स्याम[१२] । स्तोतॄणां मध्ये[१३ १४] ।

प्रि॒यास॒ इत्ते॑ मघवन्न॒भिष्टौ॒ नरो॑ मदेम शर॒णे सखा॑यः ।
नि तु॒र्वशं॒ नि याद्वं॑ शिशीह्यतिथि॒ग्वाय॒ शंस्यं॑ करि॒ष्यन् ॥ ८ ॥

प्रियासः । प्रियासः । एव । ते । मघवन्[१५] ! अप्येषणे[१६] । नेतारः[१७] । माद्येम[१८] । गृहे । समानख्यानास्तव[१९] ।

---

१. मा ये A. The commentary up to अस्मिन् is missing in A. and up to अन्वेषणे in M. probably the missing words are मा । तव । हे सहसावन् बलवन् ! इन्द्र ! सह एव सहसं बलं तद्वान् 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । यद्वा अवतुप्रत्ययश्छान्दसः BB.

२. स्तोत्रेणास्माभिः क्रियमाणायाम् Sy. अस्याम् BB.

३. अन्वेषमाणायाम् Sy. परितस्सर्वतस्सर्वस्यामिष्टौ । छान्दसं ह्रस्वत्वम् । शकन्ध्वादित्वात् पररूपत्वम् BB.

४. क्रीय० A.

५. आहन्त्रे Sy.
पापाय कर्मवैगुण्यलक्षणाय BB.

६. परादानाय Sy. परादानाय च मा भूम प्रत्याख्यानाय । अन्येभ्यो दानं परादाः । चतुर्थ्येकवचन आकारलोपाभावश्छान्दसः । यद्वा तुमर्थे कैप्रत्ययः । यथा 'प्रियै' इति । परादातुं च वयं मा भूम । कदापि त्वया त्याज्या मा भूमेत्यर्थः BB.

७. हृमत्रस्मा० A. मा भूम विगुणकारिणो न भवेम । सर्वेणापि प्रकारेणाविगुणो यज्ञोऽस्त्विति यावत् BB.

८. पाहि Sy. तस्मात्...त्रायस्व रक्ष BB.

९. अबाधैः Sy. चोरादिहिंसकरहितैः BB.

१०. वरयन्त्युपद्रवेभ्य इति वरूथानि रक्षणानि तैः Sy. गुप्तियुक्तैर्गृहैः । ईदृशगृहवासिनः कृत्वा त्रायस्वेति

११. प्रियाः BB.

१२. भूयास्म Sy. वयमेव...भवेम BB.

१३. The commentary from परादा up to the end of this stanza is missing in M. किं बहुना ? सूरिषु मेधाविषु मध्ये BB.

१४. VM. ignores हरिवः ।
हे हरिवन् ! इन्द्र ! Sy. हे हरिवो हरिवन् हरिभिर्हयैस्तद्वन् ! BB.
This stanza=TS. 1. 6. 12. 5.

१५. हे धनवन्निन्द्र ! Sy.

१६. अभ्येषणे is suggested for अप्येषणे !

१७. स्तोत्राणां नेतारः Sy.

१८. मोदेम Sy.

१९. The commentary beginning with प्रियासः and ending with समान० is missing in A. वयं समानख्यातयः Sy.

निशिशीहि[1]। याद्वञ्च[2]। तुर्वशञ्च[3]। दिवोदासायातिथिग्वाय[4]। शंसनीयं धनम्[5]। करिष्यंस्तनूकुर्विति[6]।

**सद्यश्चिन्नु ते मघवन्नभिष्टौ नरः शंसन्त्युक्थशास उक्था।**
**ये ते हवेभिर्वि पणीँरदाशन्नस्मान्वृणीष्व युज्याय तस्मै ॥ ९ ॥**

सद्यश्चित्। सद्यः। एव। क्षिप्रम्[7]। तव। मघवन्[8]! अन्वेषणार्थम्[9]। अर्थानां[10] शंसिता तु[11]। उक्थानि[12]। शंसन्ति। ये। तव। स्तोत्रैः। पणीनपि[13]। धनानि प्रदापयन्ति[14]। तानस्मांस्त्वम्। वृणीष्व[15]। सख्याय[16]। तस्मै[17] त्वदीयायेति[18]।

**एते स्तोमा नरां नृतम तुभ्यमस्मद्र्यञ्चो ददतो मघानि।**
**तेषामिन्द्र वृत्रहत्ये शिवो भूः सखा च शूरोऽविता च नृणाम् ॥ १० ॥**

एते स्तोमाः। नेतॄणामस्माकम्[19]। एते। स्तोमाः[20]। नेतृतम! तुभ्यमस्माभिः क्रियन्ते। तथा सत्यस्मदभिमुखा भवेयुः[21]। धनानि[22]। ददत उदाराः। तेषामुदाराणाम्[23]। इन्द्र! सङ्ग्रामेषु। कल्याणः[24]। भूः[25]। सखा। च। शूरः। रक्षिता। च। नृणामिति[26]।

---

१. निधिशीहि A. वशं कुरु Sy.
२. यदुं च A. याद्वं is suggested for याद्वं M. राजानम् Sy.
३. तुवशुं च A.
४. ०यतिथिवाय A. पूजयातिथीन् गच्छतीत्यतिथिग्वः। तस्मै दिवोदासाय वास्मदीयाय राज्ञे Sy.
५. शंसनीयं सुखम् Sy.
६. ०ष्यं तनू कुर्वति A. कुर्वन् Sy.
७. अद्य Sy.
८. हे धनवन्! Sy.
९. अभ्येषणार्थम् is suggested for अन्वेषणार्थम्॥ अभ्येषणेSy.
१०. उक्थानां is suggested for अर्थानाम्
११. शंसितारः is suggested for शंसिता तु.
१२. ०तारुत्थानि A. शस्त्राणि Sy.
१३. अप्रदानशीलान् वणिजोऽपि Sy.
१४. धनानि विशेषेणादापयन्नित्यर्थः Sy.
१५. परिगृहाण Sy.
१६. सख्याय is suggested for संख्याय। तत्सख्यमनुवर्तयितुम् Sy.
१७. तास्मै A.
१८. VM. ignores नरः।
१९. नेतृणा० A.
२०. स्तोमे A. सङ्घाः Sy.
२१. अभूवन्निति शेषः Sy.
२२. मंहनीयानि हवींषि Sy.
२३. ०दारेणाम् A. नृणाम् Sy.
२४. कल्याणकृत् Sy.
२५. भव Sy.
२६. नृणामीति A.

नू इ॑न्द्र शूर॒ स्तव॑मान ऊ॒ती ब्रह्म॑जूतस्त॒न्वा॑ वावृधस्व ।
उप॑ नो॒ वाजा॑न्मिमी॒ह्युप॒ स्तीन्यू॒यं पा॑त स्व॒स्तिभि॒: सदा॑ नः ॥ ११ ॥

नू इन्द्र । क्षिप्रम्[1] । इन्द्र ! शूर[2] ! स्तूयमानः[3] । रक्षणाय[4] । स्तोत्राकृष्टः[5] । शरीरेण । वृद्धा तव[6] । उपमिमीहि[7] च । अस्माकम्[8] । अन्नानि । उपमिमीहि च गृहानिति[9] ।

व्याख्यद्द्वितीयमध्यायं[10] पञ्चमस्याष्टकस्य सः ।
गाधिनेयकुले[11] जातो माधवो वेङ्कटात्मजः ॥

## ॥ पञ्चमाष्टके तृतीयाध्यायः ॥[12]

'उ॒ग्रो ज॑ज्ञे[13] वी॒र्या॑य' व्याचिख्यासति माधवः ।
अमितेषु मितर्षीणामागमे कारणं वदन्[14] ॥ १ ॥
'जा॒तवे॑दसे'[15] इत्येतत् प्रसङ्गात् सूक्तमागतम् ।
कुत्समध्ये[16] कश्यपार्षे कुत्सेन[17] बहवः स्तुताः ॥ २ ॥
औषसो[18] द्रविणोदाश्च शुचिर्वैश्वानरस्तथा ।
जातवेदसमप्यग्निमथ तुष्टाव काश्यपः[19] ॥ ३ ॥

---

१. अद्य Sy. २. शूरः M.
३. अस्माभिः Sy. ४. रक्षणेन Sy.
५. ब्रह्मणा स्तोत्रेण प्रेरितः Sy.
६. वृद्धो भव is suggested for वृद्धा तव ॥
७. अपमीहि A. प्रयच्छेत्यर्थः Sy.
८. अस्मभ्यम् Sy.
९. गृहान्विति A.
१०. व्याख्याद्विती० A.
११. ०नेयः कुले A.
१२. supplied by the Editor.
१३. श्रीः is added before उग्रो जज्ञे in A.
१४. The reading is adopted from R. पदम् A. M.
१५. RV. 1.99. 1.
१६. रुसमध्ये A.
१७. रुत्सेन A. RV. 1. 94-98.
१८. औषधो M. ओषधो A. The reading is adopted from R. RV. 1. 113.
१९. कश्यपः

स्तुतो मरुत्वान्[1] कुत्सेन ततः इन्द्रः[2] 'प्र मन्दिने'[3] ।
वार्षागिरैस्[4]तत्प्रसङ्गात् 'स यो वृषा इति[5] स स्तुतः ॥ ४ ॥
कुत्सस्त्रितश्च[6] पतितौ कूपे[7] तुष्टुवतुश्च तौ ।
तेन त्रितस्यागमनं 'चन्द्रमा अप्स्व[8]' न्तः इति ॥ ५ ॥
मध्ये गृत्समदस्यागादृषिः[9] सोमाहुतिस्[10]तथा ।
तत्रेदं कारणं प्राहुरग्निः सूक्तैस्त्रिभिः स्तुतः ॥ ६ ॥
जागताभ्यां[11] त्रैष्टुभेन 'त्वमग्ने द्युभिस्त्वम्' इति[12] ।
'वाजयन्निव नू रथान्[13]' गायत्रं[14] सूक्तमन्ततः ॥ ७ ॥
गायत्रात्प्राक् सोमाहुतिः 'हुवे वः[15]' इति दृष्टवान् ।
क्रमेण त्रीणि छन्दाँसि त्रिष्टुबादीनि[16] भार्गवः ॥ ८ ॥
अन्यस्मिन् पुनरध्याये छान्दसोऽन्यस्य दर्शनम् ।
'नि होता होतृषदने[17]' इति गृत्समदोऽकरोत् ॥ ९ ॥
पुनर्गृत्समदस्यैव[18] मध्ये कूर्मोऽभ्यगादृषिः[19] ।
इमा गिर आदित्येभ्यः[20]' त्रीणि सूक्तानि दृष्टवान् ॥ १० ॥

---

१. ०त्वात् कृत्सेन A.
२. इन्द्र A. M.
३. RV. I. 101 I.
४. पार्षाग्निरै० A. M. The reading is adopted from R.
५. RV. I. 100. I.
६. रुत्स A.
७. कृपे तुष्टपतु० A. RV. 2. 13., 2. 8.26
८. अप्स्वान्त० A. RV. I. 105. I.
९. ०स्य गादृ० A. ०स्यागा ऋषिः M.
१०. सोममा० A. RV. 2. 4.
११. ०भ्यन्त्रैष्वभेन A.
१२. RV. 2. I.
१३. रथाद् A. M. RV. 2. 8.
१४. गात्रं A.
१५. हुवे व इव दृ० A. RV. 2. 4. I.
१६. त्रिष्वस्मादीनि A.
१७. (RV. II. 9. I.)
१८. ०नर्गत्स० A.
१९. कुर्मो० M.
२०. RV. 2. 27-29.

बहुदेवस्य[1] सामान्यात् सूक्तं हि बहुदैवतम्[2] ।
ऋतं देवाय कृण्वते[3] तद्द्रक्ष्यत्यमित[4] ऋषिः[5] ॥ ११ ॥
विश्वामित्रो द्वादशभिः[6] स्तुतवानग्निमादितः ।
सूक्तेष्वेष्वनुवाकं[7] च समाप्तं शौनकोऽब्रवीत् ॥ १२ ॥
अग्निमेव पुनश्चास्तौत्[8] अग्ने सहस्व पृतनाः[9] ।
मध्ये विरामो[10] विस्पष्टस्तत्रान्येषां समागमः ॥ १३ ॥
मण्डलादौ 'सोमस्य'[11] इति सूक्तेऽग्निः[12] प्रथमं स्तुतः ।
वैश्वानरीयसूक्तेन[13] ततो वैश्वानरः स्तुतः ॥ १४ ॥
उपक्रम्य पुनश्चापि तावेव क्रमशः स्तुतौ[14] ।
ऋषीणामृषभादीनामतो मध्ये[15] समागमः ॥ १५ ॥
आग्नेयत्वाच्च सूक्तानामाग्नेयेषु समागमः ।
ऐन्द्रात्प्राक्स्तूयते ह्यग्निः 'सोमस्य' इति प्रधानतः ॥ १६ ॥
'इच्छन्ति त्वा'[16] इति द्व्यधिकं सूक्तमैन्द्रं[17] तथोत्तरम् ।
छन्दोदैवतसङ्ख्यानां समत्वात् कुशिकागतिः[18] ॥ १७ ॥

---

१. ०दैवतसा० suggested for ०देवस्य सा०
२. ०देवत० A. ०दैनत० M. RV. 2. 20., 30.
३. रूण्वते A. रुण्वते RV. 2. 301.
४. तं द्रक्षत्य० A.
५. इत्यृषिः A. M. The reading is adopted from R. RV. 2.30-43.
६. द्वादभिः A. RV. 3. 1. 12
७. सूक्तैस्तैरनु R.
८. ०स्तौ अग्ने A.
९. RV. 3. 24.
१०. विरामौ A.
११. RV. 3. 1.
१२. सूक्तेनि A.
१३. ०नरायसू० A. M. RV. 3. 2, 3.
१४. स्तुतो M. RV. 3. 26, 27.
१५. RV. 3. 13-23.
१६. RV. 3. 30-32.
१७. ०मैन्द्र तथो० A.
१८. ०गति M. RV. 3. 31.

'इन्द्रापर्वता[1] बृहता' विश्वामित्रार्षमुच्यते ।
अनुवाकः समाप्तश्च तत आगात्प्रजापतिः ॥ १८ ॥
इमं महे विदथ्याय[2]' त्रीण्यपश्यत्[3]प्रजापतिः ।
वैश्वदेवानि सूक्तानि वैश्वदेवमथामितः ॥ १९ ॥
'इन्द्रा को वां[4] वरुणा' इति सूक्तमाहुर्द्विदैवतम् ।
'एष स्य भानुः[5]' इति च वामदेवस्तयोर्ऋषिः ॥ २० ॥
त्रसदस्युस्[6]तयोर्मध्ये सौहात्रा[7]वपि चागतौ ।
द्विदैवत्यत्वात्[8] सामान्यादावापस्तत्र युज्यते ॥ २१ ॥
तत्राजगाम प्रथमं त्रसदस्युः 'मम[9] द्विता' ।
'इन्द्रा को[10] वाम्' इतीन्द्रस्य प्रसङ्गादिति निश्चयः ॥ २२ ॥
ऋषिर्नास्त्यमितोऽत्रीणां[11] किन्त्वत्रिः पुनरागतः ।
ददर्श 'अबोध्यग्निः[12]' इति सूक्तं च तत उत्तरम् ॥ २३ ॥
द्विदैवत्येषु सूक्तेषु यान्यासन्नाश्विनानि[13] च ।
छन्दश्चानुगुणं तत्र तस्मात्स पुनरागतः[14] ॥ २४ ॥

---

१. ०त वृह A. RV. 3. 53.
२. विदध्याय A. M. RV. 3. 45.
३. RV. 54-56.
४. कोपारुणेति A. M. RV. 4. 41. 1.
५. हानु० A. RV. 4. 45. 1.
६. तृसद० A. RV. 4. 42.
७. RV. 4. 43., 44.
८. ०त्वा सा० A.. त्वसा०
९. RV. 4. 42.
१०. कोपामि० A., M. RV. 4. 41. 1.
११. ०मितोऽस्त्रीणां A., M. Cf. BD 5. 2. 'अत्रीणां पञ्चमम्' Cf. आर्षानुक्रमणी 'अबोध्यग्निरुपक्रम्य पञ्चमं मण्डलं प्रति । पुत्राद्यैः सह भौमोऽत्रिर्मुनिरित्यवगम्यताम् ॥' 'अत्र त्वनुक्तगोत्रा ये ज्ञेयास्त्वत्रिसुता इति'
१२. दर्शभान्यग्नि० A. ०र्शाहान्यग्नि० M. RV. 1. 157.
१३. ०नाश्चितानि A. ०नास्थितानि M. RV. 5. 73-78.
१४. RV. 5. 76. 77.

अमितर्षौ भरद्वाजे वीतहव्योऽभ्यगादृषिः ।
आद्यानुवाकसंस्थाने 'इममू षु वो[1] अतिथिम्'[2] ॥ २५ ॥[3]
'अभूरेको[4] रयिपते' सुहोत्रः सूक्तयोर्ऋषिः[5] ।
तद्भ्रातरौ ददृशतुश्चत्वारि[6] क्रमशस्ततः ॥ २६ ॥
शुनहोत्रो नरश्चेति[7] भरद्वाजस्ततोऽमितः[8] ।
सर्वाणि त्रैष्टुभान्येव सूक्तानीन्द्रश्च देवता ॥ २७ ॥
स्थितानि चानुवाकस्य मध्ये नाद्यन्तयोः पुनः ।
'भूय इद्वावृधे'[9] सूक्तं पञ्चर्चं[10] तत्प्रसङ्गतः ॥ २८ ॥
पञ्चर्चानामावपनं[11] तत्रेति कवयो विदुः ।
बार्हस्पत्यस्य[12] 'यो रयिवः'[13] शं योरातृणपाणिकात्[14] ॥ २९ ॥
'स्वादुष्किल'[15] इति तन्मध्ये[16] मितो गर्गः[17] समागतः ।
शयुरस्तौत्[18] त्रिभिः सूक्तैरिन्द्रं गर्गस्तदाभ्यगात्[19] ॥ ३० ॥

---

१. RV. I. 15.
२. ०नमिम० A., M. ०कावसान
३. RV. 6. 15.
४. अभूदेको A. RV. 6. 31. 1.
५. ०र्योषितः A., M. RV. 6. 31., 32.
६. RV. 6.33-36.
७. The passage beginning with भरद्वाजो वीतहव्योऽभ्य० and ending with नरश्चेति is missing in A. ०होत्रानरं श्चेति M.
८. RV. 6. 37.
९. हुय उद्वावृ० A. RV. 6. 30.
१०. पञ्चवं A.
११. ०ञ्चपर्वानां० A. ०मावननं M. The reading is adopted from R.
१२. ०त्यस्तयो० A.
१३. यो रेवः A. M. RV. 6. 44.
१४. वाणि A. M. RV. 6. 48.
१५. स्याद्दुकुले० A. M. RV. 6. 47. 1.
१६. ०ति ततन्म० A.
१७. गर्भः स० A.
१८. ०स्तौ त्रिभिः A. ०स्तौ तिभिः M. RV. 6. 44.-46.
१९. ०रिन्द्रं गर्भस्तु तद्वपि A. ०रिन्द्र गर्गस्तु तद्ववि: M. The reading is adopted from R. RV. 6. 47.

'यज्ञायज्ञा'[1] वैश्वदेवमुत्तराण्यप्यृजिश्वनः[2]।
सूक्तानि वैश्वदेवानि पायुरन्ते[3] व्यवस्थितः ॥ ३१ ॥
आगच्छन्ति तत्कुलीनास्तस्य[4] मध्ये मितर्षयः।
छन्दोदैवतसंख्यार्थजन्मक्रमविरामतः ॥ ३२ ॥
इमां सूक्ष्मेक्षिकां[5] कुर्वन्न मन्त्रार्थेषु मुह्यति।
बहुभिर्हेतुभिः[6] कुर्यात् तां सर्वत्रैव[7] पण्डितः ॥ ३३ ॥ इति ॥

VII. 20.

**उ॒ग्रो ज॑ज्ञे वी॒र्या॑य स्व॒धावा॒ञ्चक्रि॒रपो॒ नर्यो॒ यत्क॑रि॒ष्यन्।**
**ज॒ग्मि॒र्युवा॑ नृ॒षद॑न॒मवो॑भिस्त्रा॒ता न॒ इन्द्र॑ एन॑सो म॒हश्चि॑त् ॥ १**

उग्रो[8] जज्ञे ॥ वसिष्ठः ॥ उग्रः[9]। अजायत[10]। वीर्यकरणायैव[11]। बलवान्[12]। यत्[13]। शत्रुवधादिकं[14] कर्म। करिष्यामीति मन्यते[15]। तस्य कर्मणस्ताच्छील्येन कर्ता[16]। नृहितः। तथा युवा[17]। नराणां गृहम्[18]। रक्षणैः[19] प्रदित्सितैः सह। गन्ता। रक्षिता[20]। अस्माकम्। इन्द्रः। दारिद्र्यात्[21]। अपि। महते[22]।

१. RV. 6. 48.
२. ०मुत्तराप् गजिश्चन A. ०मुक्तारान्य गजिश्चन M. The reading is adopted from R. RV. 6. 49-52.
३. वायुरन्ते (न्ते M.) A. M. RV. 6. 75.
४. ०लीना तस्य A. ५. सूक्षेक्षिकां A.
६. ०र्होतुभिः A. ०र्होतृभिः M.
७. सर्वत्रेषु पठ A. M.
८. अथ तृतीयोऽध्याय आरभ्यते। 'उग्रो जज्ञे' इति दशर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रम्यते—'उग्रो दश' (KSA. 35. 20. p. 25.) इति। आभिप्लविके चतुर्थेऽहनि निष्केवल्य एतत्सूक्तं निविद्धानम्। सूत्रितञ्च—'चतुर्थस्योग्रो जज्ञ इति निष्केवल्यम्' (ĀSS. 7. 7.) इति। महाव्रतेऽपि निष्केवल्य एतत् सूक्तम्। तथैव पञ्चमारण्यके सूत्रितम्—'उग्रो जज्ञे वीर्याय स्वधावानुदु ब्रह्माण्यैरत श्रवस्या' (AA. 5. 2. 2.) इति। सौमिकचातुर्मास्येषु वैश्वदेवस्य स्थाने प्रथमं पृष्ठ्यमहः। तत्रापि निष्केवल्य एतत्सूक्तं निविद्धानम्। सूत्रितञ्च—'जनिष्ठा उग्र उग्रो जज्ञ इति मध्यन्दिनः' (ĀSS. 9. 2.) इति Sy. ९. ओजस्वी, उद्गूर्णो वा Sy.
१०. बभूव Sy. ११. वीर्यं कर्तुम् Sy.
१२. बलावन् A. १३. कर्म Sy.
१४. ०धादिन्द्रोऽस्माकं कर्म A.
१५. करिष्यन् भवति Sy.
१६. कर्तैव। चक्रिरिति किन्प्रत्ययस्य लिङ्गवद्भावात् 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधः Sy. १७. नित्यतरुणः सन् Sy.
१८. ग्रहं A. यज्ञगृहम् Sy. १९. रक्षणैः सार्धम् Sy.
२०. रक्षिता च भवेति Sy.
२१. पापात् Sy.
२२. महतः is suggested for महते ॥

हन्ता वृत्रमिन्द्रः शूशुवानः प्रावीन्नु वीरो जरितारमूती ।
कर्ता सुदासे अह वा उ लोकं दाता वसु मुहुरा दाशुषे भूत् ॥ २ ॥

हन्ता वृत्रम् । हन्ता[1] । गत्रुम्[2] । इन्द्रः । वर्धमानः[3] । प्रयच्छति[4] । क्षिप्रम् । वीरः । जरितारम्[5] । रक्षणाय[6] । कर्ता । शोभनदानायैव यजमानाय[7] । आलोकनमुत्तमम्[8] । दाता । धनम् । यजमानाय । मुहुर्मुहुः[9] । आहवत्यागच्छति[10][11] ।

युध्मो अनर्वा खजकृत्समद्वा शूरः सत्राषाड्जनुषेमषाळ्हः ।
व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वं शत्रूयन्तं जघान ॥ ३ ॥

युध्मः । योधनशीलः[12] । अभिगन्तृरहितः[13] । सङ्ग्रामकृत्[14] । कलहवांश्च[15] । शूरः[16] । बहूनां सोढा[17] । जन्मना[18] । एव[19] । शत्रुभिरसोढः[20] । इन्द्र[21] । पृतनाः[22] । व्यस्यति[23] । सुबलः । अथ । विश्वमपि[24] । शातनमिच्छन्तम्[25] । हन्ति ।

उभे चिदिन्द्र रोदसी महित्वा पप्राथ तविषीभिस्तुविष्मः ।
नि वज्रमिन्द्रो हरिवान्मिमिक्षन्त्सन्मन्धसा मदेषु वा उवोच ॥ ४ ॥

उभे चित् । उभे । अपि । इन्द्र । द्यावापृथिवी । महत्त्वेन । आपूरितवानसि[26] । बलैः । वृद्धिमन्[27][28] !

---

१. हन्ता भवति । तृन्नन्तत्वादत्र षष्ठ्यभावः Sy.
२. गन्तुम् M. शत्रुम् is suggested for गन्तुम् ॥ असुरम् Sy. ३. वर्धमानः सन् Sy.
४. प्रारक्षच्च Sy. ५. स्तोतारम् Sy.
६. ऊत्या रक्षया Sy.
७. सुदासे राज्ञे यद्वा कल्याणदानाय यजमानाय Sy.
८. उत्तमं लोकनम् A. ९. भूयोभूयः Sy.
१०. आवहत्या० M. आभवत्या० is suggested for आहवत्या० ॥ आ इति चार्थे । अभूत् Sy.
११. VM. ignores अह । वै and उ ॥ अह वा उ इति त्रयः पूरणाः Sy.
१२. योद्धा Sy.
१३. अहिगन्तृरहित A. ०हितः is suggested for ०हित ॥ अभिगन्तृरहितो युद्धेष्वपराङ्मुखो वा Sy.
१४. युद्धकृत् खले खज इति युद्धनामनी Ngh. 2. 17.
१५. ०वाञ्च A.
१६. रूपः A. शौर्योपेतः Sy.
१७. बहूनामभिभविता
१८. The words between जन्मना and सोढः are missing in M. स्वभावत एव Sy. १९. अयमिन्द्रः Sy.
२०. स्वयञ्च केनाप्यनभिभूतः Sy.
२१. इन्द्रः is suggested for इन्द्र ॥
२२. शत्रूणां सेनाः Sy.
२३. प्यस्यति A. विक्षिपति Sy.
२४. सर्वम् Sy.
२५. शात्रवमाचरन्तम् Sy.
२६. द्यावापृथिव्यौ is suggested for द्यावापृथिवी ।
२७. वृद्धि M. हे बहुध ।
२८. अथ परोक्षस्तुतिः Sy. नेन्द्र ! Sy.

नितराम् । संसेवते[1] । इन्द्रः । हरिवान्[2] । सोमेन । जनितेषु[3] । वज्रम् । पृथिवीं सेक्तुमिच्छन्[4] । उचतिः सेवकर्मा[5][6] ।

**वृषा जजान वृषणं रणाय तमु चिन्नारी नर्यं ससूव ।**
**प्र यः सेनानीरध नृभ्यो अस्तीनः सत्वा गवेषणः स धृष्णुः ॥ ५ ॥**

वृषा जजान[7] । वृषा प्रजापतिः[8] । वृषणमिन्द्रम्[9] । जनयामास[10] । बुद्धार्थम्[11] । तम् । एव । नारी मातादितिः । असूत[12] । नृहितम्[13] । प्रभवति । यः[14] । सेनानीः । नृभ्यो योद्धृभ्यः[15] । सः । ईश्वरः[16] । शत्रूणां सदनशीलः[17] । गवामेषणशीलः[18] । शत्रूणां धर्षको भवति[19] ।

**नू चित्स भ्रेषते जनो न रेषन्मनो यो अस्य घोरमाविवासात् ।**
**यज्ञैर्य इन्द्रे दधते दुवांसि क्षयत्स राय ऋतपा ऋतेजाः ॥ ६ ॥**

नू चित्सः[20] । क्षिप्रम्[21] । सः । भ्रंशयति शत्रुम्[22] । जनः । न च रिष्यति[23] । मनः । यः । अस्य । घोरम् ।

---

१. संसेव्य ? (व)ते सङ्गच्छते वा । 'उच समवाये' इति धातुः Sy.

२. अश्ववान् Sy.

३. Something, probably मदेषु is missing after जनितेषु ॥ यज्ञेषु निवित्सु वा Sy.

४. ०वीं से० is suggested for ०वी से० ॥ शत्रुषु प्रापयन् Sy.

५. सेककर्मा M. सेवाकर्मा is suggested for सेवकर्मा । The passage उचतिः सेवकर्मा should immediately follow संसेवते and precede इन्द्रः ।

६. VM. ignores वै ॥ वा इति पूरणः Sy.

७. वृषो ज० A.

८. सेक्ता पिता कश्यपः Sy.

९. कामानां वर्षितारमिन्द्रम् Sy.

१०. 'जन जनने' इति धातुः Sy.

११. वृद्धार्थम् A. युद्धार्थम् is suggested for बुद्धार्थम् ।

१२. सुषुवे Sy.

१३. ०हितः M. ०हितं is suggested for हित ।

१४. सेनान्नी A. सेनानां नेता सन् Sy.

१५. नृणाम् Sy.

१६. सर्वस्य जगत ईश्वरो भवति Sy. नियुत्वान्, इनः, इतीश्वरनामनी Ngh. 2. 22.

१७. शत्रूणां सादकः Sy.

१८. गवामन्वेष्टा Sy.

१९. VM. ignores चित् and अध ॥ चित् अपि । अद्यापि च Sy.

२०. नू चित्सम A.

२१. नु इति प्रतिषेधे वर्तते । न Sy.

२२. शत्रूज A. स्थानात् न भ्रश्यति Sy.

२३. क्षीयेत Sy.

परिचरति[1]। यज्ञैः। यो जनः[2]। इन्द्रे। परिचरणानि[3]। धारयति[4]। स जनः। धनाय। निवसति धनं प्राप्नोति[5]। यज्ञस्य रक्षकः[6]। यज्ञे जायमानः[7] [8]।

**यदिन्द्र पूर्वो अपराय शिक्षन्नयज्ज्यायान्कनीयसो देष्णम्।**
**अमृत इत्पर्यासीत दूरमा चित्र चित्र्यं भरा रयिं नः ॥ ७ ॥**

यदिन्द्र। यदि धनम्[9]। इन्द्र। पूर्वः पिता[10]। अपराय पुत्राय[11]। प्रयच्छन्[12] भवति। गमयति[13]। ज्यायान्[14]। कनीयसः। धनम्[15]। ततः[16] पुत्रः कनीयांश्चामृतः[17]। एव। पर्यासीत[18]। चिरं[19] तथा सति। पूजनीयम्[20]। धनम्। आहर। अस्मभ्यम् पूजनीय[21]! इति

**यस्त इन्द्र प्रियो जनो ददाशदसन्निरेके अद्रिवः सखा ते।**
**वयं ते अस्यां सुमतौ चनिष्ठाः स्याम वरूथे अघ्नतो नृपीतौ ॥ ८ ॥**

यस्त इन्द्र[22]। यः तुभ्यम्। इन्द्र! प्रियः[23]। जनः। प्रयच्छति[24]। स सखा यजमानो जनः। तव धनस्य। निरेके[25] निर्गमने भवति वज्रं पात्रम्[26]! वयम्[27]। ते[28]। अस्याम्। सुमतौ[29]। चनिष्ठाः[30]। स्यामातिशये[31]-

---

१. चरति is written twice in A.
२. यो या जनः A.
३. परिचरणसाधनानि स्तोत्रशस्त्राणि Sy.
४. विधत्ते Sy.
५. धनः प्रा० A. भवेदित्यर्थः Sy.
६. यज्ञपाता Sy.
७. यज्ञे जातः Sy.
८. VM. ignores चित् ॥ चिदित्येवकारार्थे Sy.
९. यद्धनम् Sy.
१०. पूर्व A. पूर्वं M. पिता ज्येष्ठो भ्राता वा Sy.
११. कनीयसे वा Sy.
१२. ०च्छत् A. शिक्षतिर्दानकर्मा। प्रीणाति शिक्षतीति दानकर्माणौ Ngh. ३.२०.
१३. प्राप्नुयात् Sy.
१४. ज्यायात् A. ज्येष्ठः Sy.
१५. देयं धनम् Sy.
१६. कनीयसः। धनं is added after ततः by M.
१७. ० यां श्च A. यच्चापि धनं पितृतो लब्ध्वा पुत्रोऽमृत एव सन् Sy.
१८. परियासित A. आस्ते Sy.
१९. पितृगृहं विहाय दूरम् Sy.
२०. तत् त्रिविधं चायनीयम् Sy.
२१. हे चायनीय! इन्द्र! Sy.
२२. यस्तु इन्द्र A.
२३. प्रयोजनं M.
२४. पृच्छति M. हवींषि दद्यात् Sy.
२५. दाने Sy.
२६. वज्रवन् is suggested for वज्रं पात्र।
२७. वसिष्ठाः Sy. २८. तव Sy.
२९. अनुग्रहबुद्धौ वर्तमानाः Sy.
३०. स्तुतिमत्तरा अतिशयेनान्नवन्तो वा। चनोऽन्नम् Sy.
३१. स्याम ति० A. वसेम भवेम वा Sy.

नान्तवन्तो[1] भवेम- स्याम च गृहे[2] अहन्तुस्तव[3] स्वभूते त्वया व दत्ते[4]। बहुधनत्वान्मनुष्याणां पालके[5]।

**एष स्तोमो अचिक्रदद्वृषा त उत स्तामुर्मघवन्नक्रपिष्ट ।**
**रायस्कामो जरितारं त आगन्त्वमङ्ग शक्र वस्व आ शको नः ॥ ९ ॥**

एषः। अयम् स्तोता[6]। वृषा[7] वसिष्ठः। त्वाम्[8]। अचिक्रददस्तौत्[9]। अपि च। स्तामुःस्तमिग्लनि-[10] कर्मा सकार उपजनः। मघवन्[11]। क्लृप्तो[12] भवतु। धनस्य[13]। आमः[14]। जरितारम्[15]। तव। आगच्छतु[16]। यद्य-द्धनं[17] कामयते तदागच्छतु त्वम् अङ्ग[18]! शक्र! धनस्य[19]। प्रयच्छ[20]। अस्मभ्यम्।

**स न इन्द्र त्वयताया इषे धास्त्मना च ये मघवानो जुनन्ति ।**
**वस्वी षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥**

स न इन्द्र[21]। सः[22]। अस्मा न्द्र! त्वया[23] प्रदेयाय[24]। अन्नाय[25]। धेहि[26]। येऽमी। हविष्मन्तः। स्वय-मेव तुभ्यं हविः। प्रेरयति[27]। अथैकवदाह[28]—कल्याण[29]। तप[30]। दानम्[31]। स्तोत्रे मह्यम्। भवत्विति[32]।

---

१. ०नान्नवन्तो is suggested for ०नान्त-वन्तो ॥ अतिशयेनान्नवन्तः refers to चनिष्ठाः।
२. गृहे चरणीये वा धने Sy.
३. अहिंसतः Sy.
४. न धत्ते M. वा दत्ते is suggested for व दत्ते।
५. पालकः A. नृणां रक्षके Sy.
६. सोमः सूयमानः Sy.
७. सेक्ता Sy.
८. त्वदर्थम् Sy.
९. ०दस्तेत् A. क्रन्दति Sy.
१०. ०मिग्ला० A. स्तामुस्त० is suggested for स्तामुः स्त० ॥ स्तोता Sy.
११. मघवान् A. हे धनवन्! इन्द्र! Sy.
१२. अस्तौत् Sy.
१३. जनस्य M.
१४. कामः is suggested for आमः। अभिलाषः Sy.
१५. स्तोतारं माम् Sy.
१६. आगतः Sy.
१७. यद्यन्धनं A.
१८. क्षिप्रम् Sy.
१९. धनम्। कर्मणि षष्ठी Sy.
२०. धेहि Sy.
२१. स इन्द्र A.
२२. त्वम् Sy.
२३. इन्द्र is missing in M. अस्मान्। इन्द्र! is suggested for अस्मा। न्द्र!
२४. त्वया दत्तम् Sy.
२५. अन्नं भोक्तुम् Sy.
२६. धारय Sy.
२७. प्रेरयन्ति is suggested for प्रेरयति। तानपि त्वयताया इषे धाः Sy.
२८. ०कपदा० A.
२९. कल्याणाम् M. कल्याणम् is suggested for कल्याण। अपि च वस्वीष्वत्यन्तं प्रशस्तासु स्तुतिषु Sy.
३०. प M. तव is suggested for तप।
३१. दानाम् M. शक्तिः सामर्थ्यम्। यद्वा जरित्रे मह्यं ते तव वस्वी षु प्रशस्ता शक्तिर्दानि-मस्तु Sy.
३२. VM. ignores च and स

## VII. 21.

**असा॑वि दे॒वं गोऋ॑जीक॒मन्धो॒ न्य॑स्मि॒न्निन्द्रो॑ ज॒नुषे॑मुवोच ।**
**बोधा॑मसि त्वा हर्यश्व य॒ज्ञैर्बोधा॑ नः॒ स्तोम॒मन्ध॑सो॒ मदे॑षु ॥ १ ॥**

असावि[1]। सुतम्[2]। देवनशीलम्[3]। मूत्रवयस्करम्[4] (?)[5] अन्धः[6]। सुते चास्मिन् सोमे[7]। इ[8]। स्थ्येन[9] सेवामकरोत्[10]। बोधयामः। त्वाम्। हर्यश्व[11]! यज्ञैः[12]। बुध्यस्व। नः[13]। स्तोमम्[14]। सोमस्य[15]। मदेषु[16]।

**प्र य॑न्ति य॒ज्ञं वि॒पय॑न्ति ब॒र्हिः सो॑म॒मादो॑ वि॒दथे॑ दु॒ध्रवा॑चः ।**
**न्यु॑ भ्रियन्ते य॒शसो॑ गृ॒भादा दू॒रउ॑पब्दो॒ वृष॑णो नृ॒षाचः॑ ॥ २ ॥**

प्र यन्ति। प्राहरन्ते[17]। यज्ञम्। कम्पयन्ति[18]। बर्हिः। सोमेन मादयन्त ऋत्विजः। यज्ञे[19]। दुर्धरमन्त्र-वाचः[20]। आभिमुख्येन[21]। हूयन्ते[22]। सुतान्यन्नानि[23]। हविर्धानात्[24]। किञ्च-दूरे श्रूयमाणाः शब्दो भवन्ति[25]। ग्रावाणः। नृभिः सेव्यमानाः[26] प्रवृत्ता एषा वै[27][28]।

---

१. 'असावि देवम्' इति दशर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रान्तम्—'असावि' (KSA. 35. 21.P. 25.) इति। माध्यन्दिनसवने मैत्रावरुणस्योन्नीयमानमिदं सूक्तम् 'असावि देवमिहोप यातेत्यनुसवनम्' (ĀSS. 5.5.) इति। इन्द्रस्य वृत्रघ्नः पशौ 'अभिक्रत्वा' इति वपाया अनुवाक्या। सूत्रितञ्च—'अभि क्रत्वेन्द्र भूरध ज्यन् त्वं महाँ इन्द्र तुभ्यं ह क्षाः' (ĀSS 3. 8.) इति

२. असाविः A.

३. अभिषुतम् Sy.

४. दीप्तम् Sy.

५. मूत्रवयस्करम् P. मिश्रितपयस्कम् or ऋजु-पयस्कम् is suggested for ऋजु-वयस्करम् ॥ गोभिः संस्कृतं गव्येन मिश्रितमित्यर्थः Sy.

६. सोमरूपमन्नम् Sy.

७. अभिषुते सोमरूपेऽन्धसि Sy.

८. श M. इन्द्रः is suggested for इ ॥

९. ०स्वाभाव्येन is suggested for स्थ्येन ॥ स्वभावत एव Sy.

१०. सङ्गतो भवति Sy.

११. हर्यश्च A. अथ प्रत्यक्षस्तुतिः हे हर्यश्व ! Sy.

१२. स्तोत्रैर्हविर्भिर्वा Sy.

१३. अस्माकम् Sy.

१४. स्तोत्रम् Sy.

१५. सो is written twice in A.

१६. VM. ignores नि and ईम् ॥ नि नितराम्। ईम्—अयम् Sy.

१७. यज्ञं प्रयन्ति यष्टारः Sy.

१८. स्तृणन्ति। विपिः स्तरणकर्मा Sy.

१९. यज्ञैः M.

२०. दुर्धरवाचः Sy. २१. आ इति चार्थे Sy.

२२. भूयन्ते A. अभिषववेलायां निगृह्यन्ते Sy.

२३. यशस्विनः Sy.

२४. गृहात्। गृहमध्यमग्रावा। तस्मात् Sy.

२५. श्रूयमाणशब्दाः is suggested for माणाः शब्दो ॥ दूर उपब्दिः शब्दो येषां ते दूर-उपब्दः Sy.

२६. नेतृनृत्विजः सचन्त इति नृषाचः Sy.

२७. एष वै A. प्रवृत्ता एषा वै seems to be redundant.

२८. VM. ignores नि and उ ॥ उ इति पूरणः Sy.

त्वमिन्द्र स्रवितवा अपस्कः परिष्ठिता अहिना शूर पूर्वीः ।
त्वद्वावक्रे रथ्यो न धेना रेजन्ते विश्वा कृत्रिमाणि भीषा ॥ ३ ॥

त्वमिन्द्र । त्वम् । इन्द्र ! स्रवितुम् । उदकानि । परोषि[1] । परिष्ठितानि[2] । अहिना[3] । शूर ! बहूनि[4] । त्वत्तः[5] । निर्गच्छन्ति[6] । रथिनः । इव । नद्यः । तथा सर्वाणि । कृत्रिमाणि रक्षाणि[7] । कम्पन्ते । त्वद्भयेन[8] ।

भीमो विवेषायुधेभिरेषामपांसि विश्वा नर्याणि विद्वान् ।
इन्द्रः पुरो जर्हृषाणो वि दूधोद्वि वज्रहस्तो महिना जघान ॥ ४ ॥

भीमः । भीमः[9] । व्याप्नोति[10] । आयुधैः कृत्रिमाणि । एतानि[11] । कर्माणि । विश्वानि । नृहितानि जानन् वर्षादीनि[12] । इन्द्रः । शत्रुपुराणि । हृष्यन्[13] । वि दोधवीति[14] । विहन्ति[15] च । वज्रहस्तः । महत्त्वेन[16] पुराणीति ।

न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥ ५ ॥

न[17] यातवः । न[18] । राक्षसाः[19] । इन्द्र[20] ! अपिगच्छेयुः[21] । अस्मान्[22] । न[23] च[24] । वन्दना बहुवचनस्याकारः ।

---

१. करोषि is suggested for परोषि ॥ अकार्षीः Sy. २. आक्रान्ताः Sy.
३. वृत्रेण Sy. ४. बह्वीः Sy.
५. त्वन्तः A. त्वत्तो हेतोः Sy.
६. 'वकि कौटिल्ये' इति धातुः Sy.
७. रक्षांसि is suggested for रक्षाणि ॥ भुवनानि Sy.
८. त्वत्तो भयेन Sy.
९. हीमः A. भयङ्करः सन् Sy.
१०. व्याप्तवान् Sy.
११. एषाम् । कर्मणि षष्ठी । एतानसुरान् Sy.
१२. ०दीन् M. वर्षादीनि should immediately follow कर्माणि ।
१३. हृष्यत् A.
१४. विरोध० A. अकम्पयत् Sy.
१५. तान् विजघान Sy.
१६. महिम्ना युक्तः Sy.
१७. वसिष्ठस्येदमार्षम् Dur. वसिष्ठस्य SKN.
१८. न is missing in M. तथा कुरु यथा नेममस्मद्यज्ञम् Dur. नशब्दोऽत्र माशब्दार्थे SKN.
१९. यातयितारो यज्ञविघ्नकर्तारः Dur. उत्तरपदलोपोऽत्र द्रष्टव्यो भीमभामावत् । यातुधाना राक्षसाः SKN.
२०. हे इन्द्र ! Sy. हे भगवन्निन्द्र ! Dur.
२१. हिंस्युः । जूजुवुरिति हिंसाक्रियः पृथक्करणक्रियो वा Sy. केचिदपि. आगच्छेयुरित्यर्थः Dur. जवतिर्गतिकर्मा । मा गमन्नित्यर्थः SKN.
२२. अस्माकं स्वभूतं यज्ञम् SKN.
२३. अयमपि नशब्दो माशब्दस्यैवार्थे । मा च SKN.
२४. रक्षांसि Sy. य एते वन्दना वन्दितारो लाडगौडादयः Dur. तृतीयैकवचनेऽयमाकारः । तच्छ्रुतेश्च युक्ता इति शेषः । वन्दनया स्तुतिवचनजीविनो नटनर्तकप्रस्थापकप्रभृतय इत्यर्थः SKN.

बलवत्तम[1]! निवेद्याभिः[2] स्तुतिभिः। सः[3]। उत्सहताम्[4]। स्वामी[5]। विषमस्य[6]। जन्तोः[7] प्रशास्ता। मा। शिश्नदेवाः[8] शिश्नेन क्रीडन्तः। अस्माकम्। यज्ञम्[9]। अपिगच्छेयुः[10][11]।

---

१. हे शविष्ठ बलिष्ठ ! Dur. अतिशयेन बलवन् ! SKN.

२. वेद्याभ्यः प्रजाभ्यो नोऽस्मान्न जूजुवुः । न पृथक्कुर्वन्तु Sy. ज्ञानपदीभिर्वेद्याभिराकृतिभिर्युक्ताः। किं ब्राह्मणा एते स्युः, उतान्यजातीयाः केचिदिति। अथवा—आवेदितव्याभिः प्रवृत्तिभिर्युक्ताः। न हि तासां प्रवृत्तीनामन्तोऽस्ति याभिस्ते प्रवर्तन्ते चपलत्वात् Dur. वेद्या वेदितव्याः कुहकप्रभृतय ईश्वरप्रतारणोपायभूतास्ताभिर्वा युक्ताः SKN.

३. इन्द्रः Sy. आह कीदृशास्तर्हि यज्ञमागच्छन्त्विति ? उच्यते...स एव Dur. कस्तर्हि ? सः SKN.

४. उत्सहेत Sy. उत्सहतामिममस्मद्यज्ञमागन्तुम् Dur. शर्धतिरुत्साहार्थः। उत्सहतामागन्तुम् SKN.

५. य एवार्य ईश्वर आत्मीयानामिन्द्रियाणां जितेन्द्रिय इत्यर्थः Dur. 'ऋ गतौ' इत्यस्य शुद्धस्याप्यधिपूर्वार्थे वर्तमानस्येदं नेश्वरतायाम् । बाहुलकत्वाच्च कर्तरि कृत्प्रत्ययः। स इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। अर्योऽधिगन्ता ज्ञातेत्यर्थः SKN.

६. विषमस्य यज्ञविध्वंसयितुः ।...एवमेतस्मिन्मन्त्रे यातवो वन्दनाः शिश्नदेवाश्च मा आगच्छन्तु—इति प्रतिषिद्धेष्वेतेषु, अनिष्टत्वादेतेषां स शर्द्धदर्य इति श्रूयमाणमर्यवृत्तमनुष्याभ्यागमनविषयमेतद् भवति, तस्येष्टत्वात् । स चाभ्यागतः सन्नवश्यं विषुणस्य विषमस्य मनुष्यस्य निग्रहं करोति । तस्मात् 'विषुणस्य' इति शब्दो 'विषमस्य' इत्युपपद्यते Dur.

७. जन्तो प्र० A. प्राणिनः शासने Sy. जन्तोर्मनुष्यस्य निग्रहाय समर्थः। येन परिपाल्यमाना एतं यज्ञमविघ्नेन समापयेमहीत्यभिप्रायः Dur. जननधर्मिण आत्मनो यज्ञस्य वा SKN.

८. अथ च शिश्नदेवाः। शिश्नेन दीव्यन्ति क्रीडन्त इति शिश्नदेवाः। अब्रह्मचर्या इत्यर्थः Sy. किञ्च येऽपि चैते श्रोत्रिया अपि सन्तः शिश्नदेवा शिश्नेन नित्यमेव प्रकीर्णाभिः स्त्रीभिः साकं क्रीडन्त आसते। श्रौतानि कर्माण्युत्सृज्य तेऽपि Dur. शिश्नेन ये च नित्यं दीव्यन्ति क्रीडन्ति ब्रह्मचर्यवर्जितास्तेऽपि। शिश्नं श्नथतेस्ताडनार्थस्य। ताड्यते हि तेन स्त्री सम्भोगकाले SKN.

९. यज्ञं वा सत्यं वा Sy. युष्मदनुग्रहादिदमस्माकमृतं यज्ञम्।...यदा तु ऋतशब्दस्य 'सत्यं वा' इत्येदर्थवचनं भवति तदाऽस्माकमृतं सत्यम् Dur. अथवा ऋतमत्र सत्यमुच्यते। ऋ, गुरइत्येतावपि शुद्धावधिपूर्वार्थे द्रष्टव्यौ। सत्यं परमार्थमस्माकमधिगमनमज्ञासिषुरित्यर्थः SKN.

१०. अपिगमन् Sy. मा आगच्छन्तु । नास्माकं तैरपि यज्ञमभिगच्छद्भिरर्थोऽस्तीत्यभिप्रायः। ...एवंलक्षणाः पापकर्माणो मा अपिगुरित्येवं योज्यम्। अपि गुरिति चैष गमिस्तदा ज्ञानार्थः। एवमप्युपपद्यत इत्यतो भाष्यकारेणोक्तम् 'सत्यं वा यज्ञं वा' इति Dur. मा च...गमन् SKN.

११. स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य। मा शिश्नदेवा अब्रह्मचर्याः। शिश्नं श्नथतेः। 'अपि गुर्ऋतं नः' सत्यं वा यज्ञं वा। N. 4. 19., SKN. II. 256.

**अभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानं रजांसि ।**
**स्वेना हि वृत्रं शवसा जघन्थ न शत्रुरन्तं विविदद्युधा ते ॥ ६ ॥**

अभिक्रत्वा । आह्यभूः[1] । प्रज्ञया[2] । इन्द्र ! पृथिव्यां सर्वाणि भूतानि[3] । न । ते[4] । व्याप्नुवन्ति[5] । महिमानम् । लोकाः[6], व्यतिर्व्याप्तिकर्मा[7] । स्वेन[8] । हि । बलेन । वृत्रम् । त्वं हतवानसि[9] । न । शत्रुः[10] कश्चित् । तव[11] । अन्तम्[12] । अविन्दत्[13] । योधनेन[14][15] ।

**देवाश्चित्ते असुर्याय पूर्वेऽनु क्षत्राय ममिरे सहांसि ।**
**इन्द्रो मघानि दयते विषह्येन्द्रं वाजस्य जोहुवन्त सातौ ॥ ७ ॥**

देवाः । देवाः[16] । च[17] । तुभ्यम् । असुराणां हन्त्रे[18] । पूर्वे । अनुमेनिरे[19] । क्षतात् त्रात्रे[20] । बलानीन्द्रस्य बलकरणानि साहाय्यकरणेनानुमन्यन्ते[21] । इन्द्रः । धनानि[22] । प्रयच्छति[23] । शत्रूनभिभूय । इन्द्रम् । सङ्ग्रामस्य[24] । सम्भजने[25] । मृगमाह्वयन्ति[26] ।

---

१. अहुः A. अभ्यभूः is suggested for आह्यभूः ॥
२. कर्मणा Sy.
३. पृथिव्यां वर्तमानान् जन्तून् वा Sy.
४. तैः M.
५. व्याप्नुवन्नित्यर्थः Sy. ६. सर्वे लोकाः Sy.
७. व्य...व्याप्ति० A. व्यचि० is suggested for व्यति० ॥ The passage व्यचिर्व्याप्तिकर्मा should immediately follow व्याप्नुवन्ति and precede महिमानम् ।
८. आत्मीयेन Sy. सांहितिकं दीर्घत्वं छान्दसम् BB.
९. त्वमवधीः Sy.
१०. शत्रू क० A.
११. तप A.
१२. हिंसाम् Sy. विनाशम् BB.
१३. लब्धवान् Sy. न वेत्तु न लभतां वा । वेत्तेर्विन्दतेर्वा BB.
१४. युद्धेन Sy. युद्धेनापि BB.
१५. VM. ignores अध ॥ अपि च Sy. This stanza=TS. 7. 4. 15. 1.
१६. असुराः Sy. १७. अपि Sy.
१८. बलाय Sy.
१९. अनु ममिरे—'हीने' (Pa. 1.4.86.) इत्यनुः कर्मप्रवचनीयः । तव बलेभ्यो हीना ममिर इत्यर्थः । तथा च निगमान्तरम्—'अनु ते द्यौर्बृहती वीर्यं ममे' (RV. 1. 57. 5.) इति Sy.
२०. क्षतां त्राते A. क्षत्राय । क्षदिर्हिंसाकर्मा । बलं हिंसां चोभे कर्तुमित्यर्थः Sy.
२१. अथ परोक्षस्तुतिः Sy.
२२. मंहनीयानि Sy.
२३. ०च्छन्ति A. भक्तेभ्यः प्रयच्छति Sy.
२४. अन्नस्य Sy. २५. लाभार्थम् Sy.
२६. मृगं is doubtful. भृशम् is suggested for मृगम् ॥ स्तुवन्ति स्तोतार आह्वयन्ति वा Sy.

**कीरिश्चिद्धि त्वामवसे जुहावेशानमिन्द्र सौभगस्य भूरेः ।**
**अवो बभूथ शतमूते अस्मे अभिक्षत्तुस्त्वावतो वरूता ॥ ८ ॥**

कीरिश्चित्[१] । स्तोता[२] । चित्[३] । हि । त्वाम् । रक्षणाय । आह्वयन्ति[४] । ईश्वरम् । इन्द्र ! भूरिणः[५] । धनस्य । हे बहुरक्षण ! रक्षकः[६] । भव[७] । अस्माकम् । क्षदिः शकलीभावकर्मा शत्रूणामभिहिंसितुः[८] । त्वावतः[९] । सर्वो जनो वरीता[१०] भवति ।

**सखायस्त इन्द्र विश्वह स्याम नमोवृधासो महिना तरुत्र ।**
**वन्वन्तु स्मा तेऽवसा समीके ३ भीतिमर्यो वनुषां शवांसि ॥ ९ ॥**

सखायः । सखायः । ते । इन्द्र ! वयम् । सर्वदा । भवेम । हविषो वर्धयितारः[११] । महत्त्वेन[१२] । हे तारक[१३] ! अभिभवन्ताम्[१४] । तव । रक्षणेन सह । सङ्ग्रामे । अर्योऽरेः[१५] शत्रोः । अभिगमनम् । तव सम्भक्तॄणा-[१६]मस्माकम् । बलानि[१७] ।

**स न इन्द्र त्वयताया इषे धास्त्मना च ये मघवानो जुनन्ति ।**
**वस्वी षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥**

[ स न इन्द्र[१८] ]

---

१. किरीश्चित् A.

२. वसिष्ठः Sy. कारुः, कीरिः, इति स्तोतृनामनी Ngh. 3. 16.

३. चिदिति पूरणः Sy.

४. ॰यति is suggested for ॰यन्ति ॥ स्तौति ह्वयति वा Sy.

५. प्रभूतस्य Sy.

६. रक्षः A.
रक्षा Sy.

७. बभूविथ Sy.

८. अभिहिंसकस्य Sy.

९. तावतं A.
त्वत्सदृशस्य Sy.

१०. परीता A.
वारयिता च भव Sy.

११. स्तुत्या हविषा वा वर्धयितारः Sy.

१२. महिम्ना Sy.

१३. अत्यन्तं तारकः ! इन्द्र ! Sy.

१४. भवतां M. ॰भवन्तु is suggested for ॰भवन्ताम् । स्तोतारो हिंसन्तु Sy.

१५. ॰मे योऽरेः M.

१६. ॰भर्तॄणा॰ M.
वनुषां हिंसकानाम् Sy.

१७. VM. ignores स्म ।

१८. The *pratīka* is supplied by the Editor.
The stanza has already been explained. See RV. 7. 20. 10.

## VII. 22.

**पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।**
**सोतुर्बाहुभ्यां सुयतो नार्वा ॥ १ ॥**

[1]पिबा सोमम् । पिब । सोमम् । इन्द्र[2] ! स[3] त्वाम्[4] । मादयतु[5] । यम्[6] । तुभ्यम्[7] । सुषाव[8] । हर्यश्व[9] ! ग्रावा । सोऽनु[10] । प्रसवितुरश्वारोहस्य । बाहुभ्याम्[11] । सुसङ्गृहीतः[12] । इव । अश्वः[13] ।

**यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि ।**
**स त्वामिन्द्र प्रभूवसो ममत्तु ॥ २ ॥**

यस्ते मदः[14] । यः । ते[15] । सोमः[16] । सहायः[17] । चारुः[18] । भवति[19] । येन[20] । शत्रून् । हयश्व ! हंसि[21] । सः । त्वाम् । इन्द्र[22] ! प्रभूतधन[23] ! मादयतु[24] ।

---

१. 'पिबा सोममिन्द्र मन्दतु त्वा' इति नवर्चं पञ्चमं सूक्तम् । अनुक्रम्यते च—'पिब नव वैराजमृतेऽन्त्याम्' (KSA. 35. 22. p. 25.) इति । वसिष्ठ ऋषिः । आदितोऽष्टौ विराजो नवमी त्रिष्टुप् । इन्द्रो देवता । दशरात्रे चतुर्थेऽहनि निष्केवल्यशस्त्रे 'पिबा सोममिन्द्र' इति षट् स्तोत्रियानुरूपौ । सूत्रितञ्च—'वैराजं चेत्पृष्ठं पिबो सोममिन्द्र मन्दतु त्वेति षट् स्तोत्रियानुरूपौ' (ĀSS. 7. 11.) इति । महाव्रतेऽपि निष्केवल्य आद्याः षड्चः । सूत्रितञ्च—'पिबा सोममिन्द्र मन्दतु त्वेति षट्' (AA. 5. 3.) इति । आद्या निष्केवल्यशस्त्रयाज्या । सूत्रितञ्च—'पिबा सोममिन्द्र मन्दतु त्वेति याज्या' (ĀSS. 5. 15.) इति । चतुर्थेऽहनि माध्यन्दिनसवने होत्रकशस्त्रेषु सप्त विराजस्त्रींस्तृचान् कृत्वैकैकस्तृचः शंसनीयः । तत्र 'न ते गिरः' इत्याद्याश्चतस्र ऋचः । सूत्रितञ्च—'न ते गिरो अपि मृष्ये तुरस्य प्र वो महे महिवृधे भरध्वम्' (ĀSS. 7. 11.) इति Sy.

२. इन्द्रः A.

३. पीतश्चायं सोमः BB.

४. त्व A. त्वम् Sy.

५. मादायतु A. मन्दतु तर्पयतु । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' व्यत्ययेन परस्मैपदम् BB.

६. सोमम् BB. ७. त्वदर्थम् Sy., BB.

८. अभिषुतवान् Sy.

९. हर्यश्च A. हरिततुरङ्ग ! BB.

१०. सोतुः is suggested for सोऽनु ॥ अभिषवकर्तुः Sy. किं स्वयमेव ? नेत्याह, सोतुरभिषोतुर्ऋत्विजः । साधुकारिणि तृन् । तस्य बाहुभ्यां सह, अद्रिः सुषाव । यद्वा सोतुर्बाहुभ्याम् BB. ११. रश्मिभ्याम् Sy.

१२. सुष्ठु परिगृहीतः Sy. सुयतः सुष्ठु यन्त्रितः BB.

१३. अश्व A. अत एव नार्वा नारणशीलः स्वकार्यकरणे सुप्रतिष्ठितः । यद्वा, अतो न अर्वा न पापः, कार्यविरोधित्वमेव पापम् । अतः 'अन्येभ्योऽपि दृश्यते' इति वनिप् । ततस्तुष्टस्त्वमस्मभ्यमभिमतं देहीति BB. This stanza=TS. 2. 4. 14. 3.

१४. मद A. १५. तव Sy.

१६. मदकरः सोमः Sy. १७. अनुगुणः Sy.

१८. चारूः A. समीचीनः Sy.

१९. विद्यते Sy. २०. येन च पीतेन सोमेन Sy.

२१. हन् सी A. २२. ईन्द्र A.

२३. ०धनं M. २४. मादायतु A.

बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥

बोधा सु मे । बुध्यस्व । मघवन्[1] ! सुष्ठु[2] । आभिमुख्येन । मदीयाम्[3] । इमाम् । स्तुतिम् । या[4] । ते । वसिष्ठः । उच्चारयन्ति[5] । प्रशस्ताम्[6] । इमानि च । हवींषि[7] । यज्ञे । सेवस्व ।

श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।
कृष्वा दुवांस्यन्तमा सचेमा ॥ ४ ॥

श्रुधी हवम्[8] । शृणु[9] । घोषम्[10] । सोमं विशेषेण पिबतः[11] । ग्राणः[12] । बुध्यस्व च । मेधाविनः[13] । ब्रुवत[14] । स्तुतिम् । कुरु च । परिचरणानि । अन्तिकतमानि[15] । त्वया[16] सहितानीति[17] ।

न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।
सदा ते नाम स्वयशो विवक्मि ॥ ५ ॥

न ते गिरः । ग[18] । त्वदीयाः । स्तुतीरहम्[19] । अपि मृष्ये[20] सोढुं न शक्नोमि क्षिप्रमुच्चारयामि । क्षिप्रकारिणस्तथा[21] । सुष्ठुतिञ्च[22] । न मृष्यामि । असुराणां हन्तुः[23] । जानन्[24] । सर्वदैव । तव । नाम[25] । हे स्वभूतयशः[26] । ब्रवीमि ।

---

१. हे धनवन् ! इन्द्र ! Sy. २. सुष्ठ A.
३. वसिष्ठस्य सम्बन्धिनीम् Sy.
४. याम् is suggested for या ॥
५. श्चोश्च्वोरयन्ति A. उच्चारयति is suggested for उच्चारयन्ति ॥ वदति Sy.
६. स्तुतिरूपाम् Sy.
७. हविषी A. ब्रह्माणि Sy. ८. श्रुधी भव A.
९. शृणु तथा च निगमान्तरम् 'ग्रावभ्यो वाचं वदता वदद्भ्यः' (RV. 10.94.1.) इति Sy.
१०. आह्वानम् Sy.
११. हे इन्द्र ! विपिपानस्य विपीतवतो विपिबतो वा मम Sy.
१२. घ्राणः M. ग्राव्णः is suggested for ग्राणः ॥
१३. प्राज्ञस्य वसिष्ठस्य Sy.
१४. ब्रुवतः is suggested for ब्रुवत ॥ स्तुवतः Sy.
१५. बुद्धिस्थानि Sy.
१६. सचा सह सहायभूतः सन् Sy.
१७. VM. ignores इमा ॥ इमानि क्रियमाणानि Sy. १८. Missing in M. न is suggested for ग ।
१९. स्तुतिरहम् A.
२०. मृषिर्मार्जनकर्मा मार्जयामि । परित्यजामीत्यर्थः। मृषेर्मार्जनकर्मत्वमन्यत्रापि दृश्यते । तद्यथा— 'मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठाः' (RV. 1. 71. 10.) इति Sy.
२१. शत्रूणां हिंसकस्य Sy.
२२. सुष्ठु किञ्च M. सुष्टुति० is suggested for सुष्ठुति० ॥ शोभनां स्तुतिम् Sy.
२३. हन्तु A. असुर्यस्य । द्वितीयार्थे षष्ठी । त्वदीयमसुर्यं बलम् Sy. २४. ज्ञानन् A.
२५. स्तोत्रम् Sy.
२६. किन्तु स्वयशोऽसाधारणयशः Sy.

भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित् ।
मारे अस्मन्मघवञ्ज्योकः ॥ ६ ॥

भूरि हि ते । भूरीणि । ते । सवनानि[1] सन्ति । मनुष्येषु[2] । भूयिष्ठञ्च[3] । हवते[4] । मेधावी[5] । त्वाम् । एव । अस्माकम्[6] । दूरे । मघवन् ! चिरम्[7] । कार्षि[8] ।[9]

तुभ्येदिमा सवना शूर विश्वा तुभ्यं ब्रह्माणि वर्धना कृणोमि ।
त्वं नृभिर्हव्यो विश्वधासि ॥ ७ ॥

तुभ्येदिमा[10] । तुभ्यम् । एव । इमानि । सर्वाणि । सवनानि[11] । शूर ! करोमि । तुभ्यमेव[12] । स्तोत्राणि च । वर्धनानि । त्वं हि । मनुष्यैः[13] । हव्यः[14] । भवसि । सर्वदेति[15] ।

नू चिन्नु ते मन्यमानस्य दस्मोदश्नुवन्ति महिमानमुग्र ।
न वीर्यमिन्द्र ते न राधः ॥ ८ ॥

नू चिन्नु[16] । क्षिप्रम् । एव[17] । तव । स्तूयमानस्य । दर्शनीय ! महिमानम । उदश्नुवन्ति[18] । उग्र[19] ! न । त्वां साधयन्ति[20] पुरुषस्य बलम् । नाभि[21] । धानमिति[22] ।[23]

ये च पूर्व ऋषयो ये च नूत्ना इन्द्र ब्रह्माणि जनयन्त विप्राः ।
अस्मे ते सन्तु सख्या शिवानि यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

ये च । ये । च । पूर्वे[24] । ऋषयः । ये । च । नूतनाः[25] । इन्द्र ! स्तोत्राणि तव । अजनयन्[26] ।

---

१. सोमाभिषवणानि Sy.
२. अस्मासु वर्तन्त इति शेषः Sy.
३. नितराम् Sy.
४. भवते A. ह्वयति स्तौति Sy.
५. स्तोता Sy.
६. अस्मत्तः Sy.
७. चिरकालम् Sy.
८. कार्षिम् A. कार्षीः is suggested for कार्षि ॥ क्षिप्रमात्मानमस्मदासन्नं कुर्वित्यर्थः Sy.
९. VM. ignores हि and मा ।
१०. तुभ्येमिमा A.
११. सोमाभिषवणानि मया क्रियन्त इति शेषः Sy.
१२. त्वदर्थमेव Sy.
१३. मनुष्ये: A. यज्ञानां नेतृभिः Sy.
१४. ह्वातव्यः स्तुत्यो वा Sy.
१५. विश्वधा सर्वप्रकारैः Sy.
१६. चिन्नुं A.
१७. नू चिदिति प्रतिषेधार्थः Sy.
१८. केचन प्राप्नुवन्ति Sy.
१९. उग्रं M. हे उद्गूर्ण ! Sy.
२०. ०यति is suggested for ०यन्ति ।
२१. नापि is suggested for नाभि ।
२२. धनमिति is suggested for धानमिति ।
२३. VM. ignores नु । इन्द्र and ते ।
२४. प्राक्तनाः Sy.
२५. भूतनाः A.
२६. अजनयन्त Sy.

मेधावान[1] । स्वेष्विवास्मास्वपि[2] । तव । सङ्ख्यानि[3] । शिवानि[4] । भवन्त्वानि[5] ।

VII. 23.

उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥ १ ॥

[6]उदु ब्रह्माणि । उदीयति[7] । प्रेरयति । अन्नानि[8] । श्रवणीयानि[9] । तथा सतीन्द्रम् । यज्ञे । पूजयसि[10] । वसिष्ठ[11] ! यः । सर्वाण्येव भूतानि[12] । बलेन । आततान । स इद्रुपश्रोता[13] भवतु । मम । अभिगमनवतः । वचांसि[14][15] ।

अयामि घोषं इन्द्र देवजामिरिरज्यन्त यच्छुरुधो विवाचि ।
नहि स्वमायुश्चिकिते जनेषु तानीदंहांस्यति पर्ष्यस्मान् ॥ २ ॥

अयामि । अयामि नियत[16] । स्तुतिशब्दः[17] । इन्द्र[18] ! देवानां देवश्च बन्धुरुदीरयामीत्यर्थः[19] । यस्मान्[20] ।

---

१. मेधाविनः is suggested for मेधावान ॥ मेधाविन ऋषयः Sy.
२. स्त्वेष्विवास्माकं स्वपि A.
३. सख्यानि is suggested for सङ्ख्यानि ॥
४. शिर वानि A. भद्राणि Sy.
५. न्त्वानि is missing in M. भवन्त्विति is suggested for भवन्त्वानि ॥
६. 'उदु ब्रह्माणि इति षडृचं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च 'उदु षट्' (KSA. 35. 23. p. 25.) इति । अग्निष्टोमे माध्यन्दिने सवने ब्राह्मणाच्छंसिशस्त्र एतत्सूक्तम् । सूत्रितञ्च 'उदु ब्रह्माण्यृजीषी वज्री वृषभस्तुराषाळिति याज्या' (ĀSS. 5. 16.) इति । चातुर्विंशिकेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्र सएतदहरहः शस्यसंज्ञकं सूक्तम् । सूत्रितञ्च—'उदु ब्रह्माण्यभितष्टेवेतीतरावहरहःशस्ये' (ĀSS. 7. 4.) इति । अहर्गणेषु द्वितीयादिष्वहःस्वेतदेव सूक्तम् । महाव्रतेऽपि निष्केवल्य एतत्सूक्तम् । सूत्रितञ्च—'उदु ब्रह्माण्यैरत श्रवस्या ते मह इन्द्रोऽस्त्युग्रेति पञ्च सूक्तानि' (AA. 5. 2. 2.) इति Sy.
७. उदियति M. उदीरयति is suggested for उदीयति ॥ इन्द्रार्थमुदैरत सर्वे ऋषय इति शेषः ।
८. स्तोत्राणि हवींषि च Sy.
९. अन्नेच्छया Sy.
१०. स्तोत्रेण हविषा च पूजय Sy.
११. हे वसिष्ठ ! त्वमपि Sy.
१२. भुवनानि Sy.
१३. इन्द्रूपः श्रोता M. इन्द्र उपश्रोता is suggested for इद्रुप श्रोता ॥
१४. स्तुतिरूपाणि वाक्यानि Sy.
१५. VM. ignores उ ॥ उ इति पूरणः
१६. नियतः is suggested for नियत ॥ अकारि Sy.
१७. स्तुतिरूपः शब्दो घोषः Sy.
१८. हे इन्द्र ! त्वदर्थम् Sy.
१९. देवश्च...दीर० M. देवानां बन्धुरुदीर० is suggested for देवश्च...न्धुरुदीर
२०. यस्याम् M. यस्मात् is suggested for यस्मान् ॥ यदा Sy.

विविधवाचि[1] स्तोतरि । ऋचो[2] रोधयित्र्य ओषधयः[3] । वृद्धा भवन्ति[4] । स्तुतिहेतु[5] नहि । स्वजीवनान्[6] । अस्मदेषु[7] केनचिदपि । ज्ञायते[8] तथा सति येन वयं दीर्घमायुः प्राप्नुयाम । तथा अस्मदीयानि[9] । तानि[10] । उपद्रवाणि[11] रोगभयादीनि । अतिपारयेति[12] ।

**युजे रथं गवेषणं हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः ।**
**वि बाधिष्ट स्य रोदसी महित्वेन्द्रो वृत्राण्यप्रती जघन्वान् ॥ ३ ॥**

युजे रथम् । युनज्मि[13] । रथम्[14] । गवामेषणशीलम्[15] । अश्वाभ्याम्[16] । उपास्थुश्च[17] । स्तोत्राणि । रथसमीपं सेवमानं[18] माम् । ततोऽयमिन्द्रस्तं[19] रथमधितिष्ठन् । द्यावापृथिव्यौ । महत्त्वेन[20] । पिबाधते[21] । शत्रून् । इन्द्र । अप्रतिगतः[22] । अहिंसन्[23] ।

**आपश्चित्पिप्युः स्तर्यो३ न गावो नक्षन्नृतं जरितारस्त इन्द्र ।**
**याहि वायुर्न नियुतो नो अच्छा त्वं हि धीभिर्दयसे वि वाजान् ॥ ४ ॥**

आपश्चित् । आपः[24] । चित्[25] । पिप्युः[26] प्रवृद्धा अभवन्[27] । यथा सङ्गवकाले[28] भुवम् । स्तृणन्त्यः[29] । गाव[30]

---

१. इमथ वाचिः M.

२. शुचो रो० is suggested for ऋचो रो० ॥

३. एषधयौ A. शुचं सरुन्धन्तीति शुरुध ओषध्यः Sy.

४. वर्धन्ते Sy.

५. स्तुतिहेतु is suggested for स्तुतहेतुः । It seems to be redundant.

६. स्वजीवान् A. स्वजीवनम् is suggested for स्वजीवनान् ॥ स्वजीवितम् Sy.

७. अस्मदीयेषु is suggested for अस्मदेषु ॥ जनेषु मध्ये केनापि Sy.

८. ०ते स तथा M.

९. अस्मानि A.

१०. यैरायुः क्षीयते तानि सर्वाणि Sy.

११. पापानि Sy.

१२. VM. ignores इत् ॥ इत् एव Sy.

१३. युनज्मि A. स्तोत्रैरहं युनज्मि Sy.

१४. इन्द्रस्य Sy.

१५. गवां प्रापकम् Sy.

१६. इन्द्रवाहाभ्याम् Sy.

१७. उपातिष्ठन्त Sy.

१८. परिवारैः सेव्यमानमिन्द्रम् Sy.

१९. ०मिन्द्रस्थस्तं A. सोऽयमिन्द्रः Sy.

२०. ०त्वेना A.

२१. Missing in M. विबा० is suggested for पिबा० ॥ व्यबाधिष्ट च Sy.

२२. अप्रतिद्वन्द्वानि Sy.

२३. अहिनत् is suggested for अहिंसन् ॥ हतवान् Sy.

२४. आपः. . .निम्नाभ्यारूपाः Mah.

२५. अपि च Mah., U.

२६. विव्युः A. वर्धन्ताम् Sy.

२७. आप्याययन्ति । सोमं वर्धयन्ति । 'ओप्यायी वृद्धौ' लिटि 'प्यायः पी' आदेशः Mah. पाययेयुर्निग्राह्य सोमे U.

२८. संगप० A.

२९. वशाः Sy. स्तृण्वन्ति सुन्वन्ति याभिस्ता स्तर्यः Mah. सुन्वन्त्यभिषुण्वन्ति याभिर्वाग्भिः सोमं ता स्तर्यः U.

३०. याभिः सोमः सूयते ता गावो वाचो वेदरूपा इव Mah. सोमाभिषवे हि त्रयीलक्षणा वाचो व्याप्रियन्ते U.

प्रवृद्धा[1] भवन्ति । व्याप्नुवन्[2] । उदकम्[3] । स्तोतारः[4] । तव । इन्द्र[5] ! आयाहि[6] । अस्मान् । अभि[7] । वायुः[8] । आत्मीया इव । विधवाः[9] । त्वम् । हि[10] । कर्मभिः[11] । विविधम्[12] । प्रयच्छसि । अन्नानि[13] ।

**ते त्वा मदा इन्द्र मादयन्तु शुष्मिणं तुविराधसं जरित्रे ।**
**एको देवत्रा दयसे हि मर्तानस्मिञ्छूर सवने मादयस्व ॥ ५ ॥**

ते त्वा मदा । ते[14] । त्वा[15] । सोमाः[16] । इन्द्र ! मादयन्तु[17] । बलिनम्[18] । स्तोत्रे ददतम्[19] । बहुधनम्[20] । त्वमेक एव । देवान्[21] । मनुष्यांश्च । विविधम्[22] । गच्छसि[23] । अस्मिन्निति स्पष्टम्[24] ।

---

१. अप्रसूता गावो मांसला भवन्ति हि Sy. ता यथा सोममाप्याययन्ति तथाऽऽपोऽपि Mah.

२. व्याप्नुवन्ति । नक्षतिर्व्याप्तिकर्मा Mah. एवमनेन प्रकारेण...व्याप्नुवन्ति U.

३. यज्ञम् Mah., U.

४. स्तोतार ऋत्विजः Mah.

५. हे इन्द्र ! त्वत्प्रसादात् Sy.

६. आ is missing in A.
अत एव:..याहि आगच्छ Mah.
एतच्च ज्ञात्वा याहि...अच्छ अभियाहि U.

७. अभिमुखम् Mah.

८. वायुर्यथा Mah., U.

९. विवधवाः A.वडवाः, as the explanation of नियुतः, in the sense of the horses of वायु is suggested for विधवाः ॥ स्वानश्वानभियाति Mah.
अश्वान् याति U.

१०. यतः Mah.
यस्मात् पुनस्त्वमेवमुच्यसे U.

११. कडमभि A. प्रज्ञाभिः कर्मभिर्वा Sy.
बुद्धिभिः कर्मभिर्वा Mah.
स्वकीयाभिर्बुद्धिभिः U.

१२. वर्षिविधं A.

१३. स्तोतृभ्यः प्रयच्छसि Sy. विविधं ददासि । 'दय दानादौ' अत एवागच्छ Mah.
This stanza=YV. 33. 18.

१४. एते Sy.

१५. त्वाम् Sy.

१६. मदकराः सोमाः Sy.

१७. मावायन्तु A.

१८. बलवन्तम् Sy.

१९. दद्वित्त A. M.

२०. ०धनः M.
पुत्रं प्रयच्छतीति शेषः Sy.

२१. देवेषु Sy.

२२. VM. seems to read वि for हि ॥

२३. दयतिरनुकम्पार्थः Sy.

२४. VM. ignores शूर । सवने and मादयस्व ॥ हे शूर त्वम् अस्मिन् सवने यज्ञे ! मादयस्व Sy.

एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः ।
स नः स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

उत्तरा निगदसिद्धेति[1] । [एवेदिन्द्रम्[2] ।]

## VII. 24.

योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि ।
असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ॥ १ ॥

योनिष्टे[3] । आसनस्थानम् । तव । इन्द्र ! सदनार्थम् । कृतम् । तद्योनिम्[4] । आप्रयाहि । पुरुहूत ! मरुद्भिः[5] । भवसिसि[6] । यथा । अस्माकम् । रक्षिता । वर्धनाय । च । ददासि[7] । धनानि । माद्यसि[8] । इव[9] । सोमैः[10] ।

---

१. उक्तमरा निगमसिद्धेति A.

२. The *pratīka* is supplied by the Editor. The stanza is very easy. VM. does not explain it. This is explained in the following manner :—
वसिष्ठासो वसिष्ठाः । वज्रबाहुं वज्रकल्पबाहुम् । वर्षणं कामानां वर्षितारम् । इन्द्रम् । एवेदुक्तेन प्रकारेणैव । अर्कैरर्चनीयैः स्तोत्रैः । अभ्यर्चन्ति अभिपूजयन्ति । स्तुतः स इन्द्रः । नः अस्मभ्यम् । वीरवत् पुत्रादियुक्तम् । गोमद् गोयुक्तम् । च धनं धातु । ददातु । स्पष्टमन्यत् Sy. वसिष्ठा वसिष्ठापत्यानि मुनयोऽर्कैर्मन्त्रैः, एव इत् एवमेवेन्द्रमभ्यर्चन्ति पूजयन्ति । कीदृशमिन्द्रम् ? वृषणं वर्षितारं वज्रं बाहौ यस्य तम् । स इन्द्रः स्तुतः सन् वीरवद् वीरा विद्यन्ते यत्र तत्पुत्रयुक्तम् । गोमद् गावो विद्यन्ते यत्र तद् गोसंयुक्तं धनम् । नोऽस्मभ्यं धातु दधातु । विकरणव्यत्ययः । एवं पादत्रयेणेन्द्रं स्तुत्वा ऋत्विज आह । हे ऋत्विजः ! यूयं स्वस्तिभिरविनाशैः सदा सर्वदा नोऽस्मान् पात रक्षत Mah. इत् पादपूरणः । इन्द्रं वृषणं वर्षितारं वज्रबाहुं वसिष्ठासो वसिष्ठापत्यानि बहूनि वस्तृतमा ऋषयः । अभ्यर्चन्ति अभिष्ठुवन्ति । अर्कैर्मन्त्रैः स नः सोऽस्मभ्यं स्तुतः वीरवत् साधुपुत्रसंयुक्तं धातु दधातु धनम् । गोमच्च गोसंयुक्तम् । एवं त्रिभिः पादैरिन्द्रमभिष्टुत्य अथेदानीं ये याजयन्ति तानाह । यूयं पात पालयत स्वस्तिभिरविनाशैः सदाकालं नोऽस्मान् U.
This stanza=YV. 20. 54

३. 'योनिष्ट इन्द्र सदने अकारि' इति षड्चं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च—'योनिः' (KSA. 35. 24. P. 25.) इति । महाव्रते निष्केवल्य एतत्सूक्तम् । सूत्रितञ्च—'योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसन्तत्योपोत्तमया परिदधाति' (AA. 5. 3. 1.) इति Sy.

४. तं योनिम् is suggested for तद्योनिम् ।

५. मरुद्भिः सार्धम् Sy.

६. मरुद्भिः भवसि is missing in M. One सि is redundant.

७. अस्मभ्यं देहि Sy.

८. मादयस्व Sy.

९. च is suggested for इव ।

१०. अस्मदीयैः Sy.

**गृभीतं ते मनं इन्द्र द्विबर्हाः सुतः सोमः परिषिक्ता मधूनि ।**
**विसृष्टधेना भरते सुवृक्तिरियमिन्द्रं जोहुवती मनीषा ॥ २ ॥**

गृभीतम्[1] । गृहीतमस्माभिः । तव । इन्द्र ! मनः । द्वयोः स्थानयोः परिवृढम्[2] । सुतश्च[3] । सोमः । ततः परितः पात्रेषु च सिक्तानि । मधूनि । विसृष्टवाक्[4] । इन्द्राय हविर्विभक्ती[5] । सुप्रवृत्ता[6] । इयम् । इन्द्रम् । भृशमाह्वयन्ती । स्तुतिर्वापि देवेभ्यो हव्यं वहति[7] ।

**आ नो दिव आ पृथिव्या ऋजीषिन्निदं बर्हिः सोमपेयाय याहि ।**
**वहन्तु त्वा हरयो मद्र्यञ्चमाङ्गूषमच्छा तवसं मदाय ॥ ३ ॥**

आ नो दिवः । आयाहि[8] । अस्माकम् । इदम्[9] । बर्हिः । पृथिव्याः[10] । दिवो वा[11] । सोमपानाय । तृतीयसवनस्थेव..ऋजिषेण..द्वत्[12] । वहन्तु । त्वा[13] । हरयः[14] । मदभिमुखम् । स्तोमम्[15] । प्रति । प्रवृद्धम्[16] । तव मदार्थम् ।

**आ नो विश्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहि ।**
**वरीवृजत्स्थविरेभिः सुशिप्रास्मे दधद्वृषणं शुष्ममिन्द्र ॥ ४ ॥**

आनः । आ याहि । अस्मान् । विश्वैः[17] । मरुद्भिः[18] । सङ्गतः । स्तुतिम्[19] । सेवमानः । हर्यश्व[20] ! हिंसन्[21] । स्थविरैर्मरुद्भिः[22] शत्रून् । सुमनो[23] । अस्मासु[24] । दधत्[25] । कामानां वर्षितृ[26] । बलम्[27] । इन्द्रः[28] !

---

१. गृहीतम् A. M.
२. द्विबर्हाः—षष्ठ्यर्थे प्रथमा । द्विबर्हसो द्वयोः स्थानयोः परिवृढस्य Sy.
३. अभिषुतः Sy.
४. विसृष्टवान् M. विसृष्टजिह्वा मध्यमस्वरेणोच्चार्यमाणा Sy.
५. हविपतिः भक्ति A. विभजति is suggested for विभक्ती । सम्भ्रियते च Sy.
६. सुसमाप्तिः Sy.
७. The passage, वापि (अपि वा) देवेभ्यो हव्यं वहति, seems to refer इन्द्राय हविर्विभजति ।
८. आगच्छ Sy. ९. इमं यज्ञम् Sy.
१०. अन्तरिक्षाच्च Sy. आपः, पृथिवी, इत्यन्तरिक्षनामनी Ngh. 1. 13. ११. स्वर्गात् Sy.
१२. द्वत् is missing in M. ०स्थेन ऋजीषेण तद्वन् ! is suggested for ०स्थेव-ऋजिषेण द्वत् ।
१३. त्वाम् Sy. १४. अश्वाः Sy.
१५. स्तोत्रम् Sy. १६. बलवन्तं वा Sy.
१७. सर्वाभिः Sy. १८. रक्षाभिः Sy.
१९. स्तोत्रम् Sy.
२०. हर्यश्वं M. हे हर्यश्व ! हरिनामकाश्व ! Sy.
२१. शत्रून् भृशं हिंसन् Sy.
२२. ०विरैः म० A. वृद्धैः Sy.
२३. सुहनो ! is suggested for सुमनो ॥ शोभनहनो ! इन्द्र ! Sy.
२४. अस्मानु A. अस्मभ्यम् Sy.
२५. प्रयच्छन् Sy. २६. कामानां वर्षितारम् Sy.
२७. बलवन्तं पुत्रम् Sy.
२८. VM. seems to explain इन्द्र voc. by इन्द्रः nom.

**एष स्तोमो॑ म॒ह उ॒ग्राय॒ वाहे॑ धु॒री॒३॑वात्यो॒ न वा॒जय॑न्नधायि।**
**इन्द्र॑ त्वा॒यम॒र्क ई॑ट्टे॒ वसू॑नां दि॒वी॑व॒ द्याम॑धि॑ नः॒ श्रोम॑तं धाः ॥ ५ ॥**

एषः । एषः । स्तोमः । महते । उद्गूर्णा[1] । वेहनार्थम्[2] । रथस्य धुरीव । अश्वः । वाजयन् जयं कुर्वन्[3] । अधायि[4] युक्तः । इन्द्र[5] ! त्वा[6] । अय[7] । स्तोता । स्तौति[8] । धनोनामर्थयि[9] दिविव[10][11] । आदित्यम्[12] । अस्मान् । अधिश्रयणीयमन्नम्[13] । धेहि[14][15] ।

**ए॒वा न॑ इन्द्र॒ वार्य॑स्य पूर्धि॒ प्र ते॑ म॒हीं सु॑म॒तिं वे॑विदाम।**
**इषं॑ पिन्व म॒घव॑द्भ्यः सु॒वीरां॑ यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ६ ॥**

एवा नः । एवम् । अस्माकम्[16] । इन्द्र ! वरणीयं[17] धनम् । पूरय । प्रकर्षेण । जानीमो[18] वयम् । त्वदीयाम्[19] । सुमतिम्[20] । प्रयच्छ । अन्नम्[21] । हविष्मद्भ्यः[22] । सुपुत्रमिति[23] ।[24]

## VII. 25.

**आ ते॑ म॒ह इ॑न्द्रो॒त्यु॑ग्र॒ सम॑न्यवो॒ यत्स॒मर॑न्त॒ सेनाः॑।**
**पता॑ति दि॒द्युन्नर्य॑स्य बा॒ह्वोर्मा ते॒ मनो॑ विष्व॒द्र्य१॒॑ग्वि चा॑रीत् ॥ १ ॥**

आ[25] ते महः । आसमरन्त[26] । तव[27] । महतः । मनः । शत्रुदर्शनेन विष्वगञ्चनम्[28] ।

---

१. उद्गूर्णाय is suggested for उद्गूर्णा ॥ ओजस्विनो वा Sy.
२. ये हृना० M. वहना० is suggested for वेहना० ॥ विश्वस्य वोढ्र इन्द्राय Sy.
३. ०य स जयत् कु० A. बलं कुर्वन् Sy.
४. व्यधायि Sy.
५. अथ प्रत्यक्षस्तुतिः, हे इन्द्र ! Sy.
६. यं त्वाम् Sy.
७. अयम् is suggested for अय ॥
८. याचते Sy.
९. धनं नाम० A. धनानामर्थाय is suggested for धनो नामार्थाय ॥ वसूनि धनानि Sy.
१०. य is written twice in A.
११. दिवीव is suggested for दिविव ।
१२. स त्वं नोऽस्मासु Sy.
१३. Sy. explains श्रोमतम् only as श्रवणीयमन्नं and construes अधि with धाः ।
१४. अधिधेहि Sy.
१५. VM. ignores न ॥ न इव Sy.
१६. अस्मान् Sy.
१७. वार्यस्य—तृतीयार्थे षष्ठी। वरणीयेन धनेन Sy.
१८. ०नीम व० A. भृशं लभेमहि Sy.
१९. च दी० A.
२०. अनुग्रहबुद्धिम् Sy.
२१. अन्नः A.
२२. ०ष्मभ्य A. अस्मभ्यम् Sy.
२३. शोभनपुत्रादियुताम् Sy.
२४. VM. ignores महीम् ॥ महीं महतीम् । स्पष्टमन्यत् (चतुर्थं चरणम्)
२५. 'आ ते मह इन्द्र' इति षड्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । 'आ ते' (KSA. 35. 25. P. 25.) इत्यनुक्रान्तम् । महाव्रते निष्केवल्य इदमादीनि पञ्च सूक्तानि । सूत्रितञ्च—'आ ते मह इन्द्रोत्युग्रेति पञ्च सूक्तानि (AA. 5. 2. 2. ) इति Sy.
२६. युध्यन्ते सङ्गच्छन्ते वा Sy. आ समरन्त सर्वाः सम्भूयागताः BB.
२७. आ समन्ततः M. किञ्च ते तव मनः BB.
२८. विष्वगन्तु Sy. विश्वद्रियग् विष्वग् गतम् BB.

विचरतु[1][2]।

**नि दुर्ग इन्द्र श्नथिह्यमित्राँ अभि ये नो मर्तासो अमन्ति ।**
**आरे तं शंसं कृणुहि निनित्सोरा नो भर संभरणं वसूनाम् ॥ २ ॥**

नि दुर्गे । दुर्गे युद्धे । नितराम्[3] । श्नथिहि[3] । अमित्रान्[4] । अभिहिंसति[5] । ये । अस्मान् । मनुष्याः । दूरे । तत् । अभिशंसनम्[6] । कुत्र[7] । निन्दितुमिच्छतः[8] । आहर । अस्मभ्यम्[9] । वसूनाम्[10] । सम्भर्तारम्[11][12] ।

**शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु ।**
**जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि ॥ ३ ॥**

शतं ते[13] । शतम् । ते[14] । शिप्रिन्[15] ! ऊतयः[16] । शोभनदानाय[17] । सहस्रं च[18] । शंसनीया ऊतयः[19] । सन्तु[20] ।

---

१. (मा) विचारीद् । अस्मास्वेव स्थिरं भवतु Sy. स मा वि चारीद् विचलितं मा भूत् । अस्मज्जयायैव भवतु BB.

२. The commentary on the following words is missing: इन्द्र । ऊती । उग्र । समन्यवः । यत् । सेनाः । पताति । दिद्युत् । नर्यस्य । बाह्वो and ते ॥ हे उग्र ! उद्गूर्ण ! ओजस्विन् ! इन्द्र ! यद्यदा समन्यवः समो मन्युरभिमानो यासां ताः समन्यवः । सेनाः समरन्त...। तदा नर्यस्य नरहितस्य महो महतस्ते तव बाह्वोः स्थिता दिद्युदायुधम् । दिद्युद्धेतिरिति वज्रनामसु पाठात् (Ngh. 2. 20.) । ऊत्यूत्यास्मद्रक्षाया आ पताति । आपततु Sy. हे इन्द्र ! उग्र उद्गीर्णायुध ते तव महः महती ऊती गतिः प्रभावः ।...यद्वा ते तव महो महतः प्रभावस्य ।...ऊत्या प्राप्त्या । तृतीयायाः पूर्वसवर्णः । समन्यवः सामर्षास्सेनाः । सामर्थ्यात परकीया । यद्यस्माद्,...तस्य ते नर्यस्य नरेभ्यो हितस्य बाह्वोर्दिद्युद् दीप्यमानः शत्रुः पताति पतेद् अग्नौ शलभ इव । लेटचाडागमः । यद्वा दिद्युद् आयुधविशेषस्तव बाह्वोः सम्बन्धी इतश्चेतश्च पततु BB.

३. निजहि Sy. ४. तान् शत्रून् Sy.

५. अहिंहि० A. ०हिंसन्ति is suggested for ०हिंसति ॥ अभिमुखाः सन्तः...अभिभवन्ति Sy. ६. आशंसनम् Sy.

७. कुरु is suggested for कुत्र ॥

८. अपि चास्मान् निन्दितुमिच्छतो नरस्य Sy.

९. असुभ्यं A. १०. धनानाम् Sy.

११. समूहम् Sy.

१२. VM. ignores इन्द्र ।

१३. वसिष्ठस्येदमार्षम् Dur. १४. त्वदीयाः Sy.

१५. शीप्र A. हे उष्णीषिन् ! इन्द्र ! Sy. हे शिप्रिन्निन्द्र Dur. शिप्रे हनू नासिके वा ताभ्यां तद्वन् SKN.

१६. तयः A. रक्षाः Sy. आगमनानि सन्तु Dur. ऊतयस्तर्पणानि धाम्नो गमनानि वा सन्तु अस्मिन् यज्ञे नित्यप्राप्तत्वं नित्यागमनं वेत्याशास्महे SKN. आगमनानि सन्तु Dur.

१७. शोभनदानाय मह्यम् Sy. सुदाने कल्याणदात एतस्मिन् यजमाने। तथैनमनुगृहाण यथानित्ययाज्येवायं यजमानः स्यादित्यभिप्रायः Dur. सुदाः कल्याणदानो यजमानस्तस्मै सुदासे कल्याणदानस्य यजमानस्यानुग्रहार्थमित्यर्थः SKN.

१८. सहसं A. आगतस्य च सतस्तव सहस्रं... बहूनि Dur. न च केवलं बहूनि तर्पणान्येव गमनानि वा । किं तर्हि ? सहस्रम् SKN.

१९. कामाश्च सन्तु Sy. स्तोत्राणि सन्तु Dur. स्तुतयः SKN.

२०. VM. seems to explain अस्तु sing. as सन्तु plu. going with ऊतयः ॥ अस्तु भवतु, अस्मिन्यज्ञे SKN.

अपि च । दानम्[1] । जहि[2] । आयुधम्[3] । हन्तुः[4] । मनुष्यस्य[5] । अस्मासु[6] । अन्नम्[7] । रत्नम्[8] । च । अनिरेहि[9][10] ।

**त्वावतो हीन्द्र क्रत्वे अस्मि त्वावतोऽवितुः शूर रातौ ।**
**विश्वेदहानि तविषीव उग्रँ ओकः कृणुष्व हरिवो न मर्धीः ॥ ४ ॥**

त्वावतः । त्वत्सदृशस्य । हि । इन्द्र[11] ! कर्मणो[12] । भवामि न न्यूनगुणस्य । तथा त्वावतः । रक्षितुः[13] । शूर ! दाने ह्वामि[14] । विश्वानि । एव । अहानि । बलवन् ! तूद्गूर्ण[15] ! सेवाम्[16] । कुरुष्व । हरिवः[17] ! मास्मान्[18] । हिंसि[19] ।

---

१. रातिर्धनमस्तु Sy. हविर्दत्तिरस्त्वित्येतदेवानुवर्तते Dur. दानं सवनीयपुरोडाशादेः SKN.

२. यद् वीर्यं तज्जहि Dur. विनाशय SKN.

३. हिंसासाधनमायुधम् Sy. एवञ्च त्वमागत उपसृप्तः सञ्छृणु यत् कुरुष्व हे वधो वधयितः ! Dur. वधः वज्रनामैदमायुधमात्रोपलक्षणं चेह द्रष्टव्यम् । सर्वमायुधमित्यर्थः SKN.

४. हर्तुः M. हिंसकस्य Sy. योऽस्मान् हन्तुमिच्छति Dur. अस्मान्...हिंसितुः SKN.

५. मर्त्यो मनुष्यस्तस्य Dur. मनुष्यस्य स्वभूतम् SKN.

६. हत्वा च तस्य वीर्यं निरुद्यमं कृत्वा, अस्मे अस्मासु Dur. अस्माकम् SKN.

७. अन्न A. दीप्तिमदन्नं यशो वा Sy. अन्नं यशो वा...एवमेतस्मिन् मन्त्रे शत्रुवधसम्बन्धाद् द्युम्नशब्देन यशो वा अन्नं वा उच्यत इत्युपपत्तिः। हते हि शत्रौ यशोऽन्नं च भवतीति । 'द्युम्नं द्योततेः' अन्नमेव हि भुञ्जानस्य दीप्तिर्भवतीति द्युम्नमन्नम् । द्योतयितृ च यशस्तु दीप्तं प्रकाशस्वभावत्वादिति Dur. ...यशोऽन्नं वा SKN.

८. रक्षं A. रत्नं च धनम् Dur. रत्नं चानेकप्रकारं पद्मरागादि SKN.

९. अधिधेहि is suggested for अनिरेहि ॥ निधेहि देहीत्यर्थः Dur. अधि नीत्यस्य स्थाने ।...निधेह्यस्मभ्यमित्यर्थः SKN.

१०. द्युम्नं द्योततेः । यशो वान्नं वा । 'अस्मे द्युम्नमधि रत्नं च धेहि' अस्मासु द्युम्नं च रत्नं च धेहि N. 5. 5. SKN. II. 317.

११. इन्द्रस्य A. हे इन्द्र ! Sy.

१२. कर्मणः A. कर्मणे is suggested for कर्मणो ॥

१३. ०तु A. विश्वस्य रक्षितुः Sy.

१४. भवामि is suggested for ह्वामि ॥ दाने चास्मीति शेषः Sy.

१५. ०वत्तूद्गू० M. उद्गूर्ण is suggested for तूद्गूर्ण ॥ ओजस्विन् ! Sy.

१६. अस्माकं स्थानम् Sy.

१७. हे हरिवन् ! Sy.

१८. मांस्मात् A.
अस्मान् न Sy.

१९. हिंसीः is suggested for हिंसि ॥ हिंस्याः Sy.

कुत्सा॑ ए॒ते हर्य॑श्वाय शू॒षमिन्द्रे॒ सहो॑ दे॒वजू॑तमिया॒नाः ।
स॒त्रा कृ॑धि सु॒हना॑ शूर वृ॒त्रा व॒यं तरु॑त्राः सनुयाम॒ वाज॑म् ॥ ५ ॥

कुत्साः । स्तोमानां[1] कर्तारः । एते[2] । हर्यश्वायेन्द्राय[3] । सुखकरं स्तोममुच्चारयन्ति[4] । इन्द्रे । बलम् । देवेन[5] प्रेरितम् । गच्छन्तः[6] । बहूनि । वृत्राणि[7] । सुहनानि[8] । कुरु । हे शूर[9] ! वयम् । दुःखादुत्तीर्णाः[10] । लभेमहि । अन्नम्[11] ।

ए॒वा न॑ इन्द्र॒ वार्य॑स्य पूर्धि॒ प्र ते॑ म॒हीं सु॑म॒तिं वे॑विदाम ।
इषं॑ पिन्व म॒घव॑द्भ्यः सु॒वीरां॑ यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ६ ॥

(एवा नः[12] ।)—

VII. 26.

न सोम॒ इन्द्र॒मसु॑तो ममाद॒ नाब्र॑ह्माणो म॒घवा॑नं सु॒तासः॑ ।
तस्मा॑ उ॒क्थं ज॑नये॒ यज्जुजो॑षन्नृ॒वन्नवी॑यः शृ॒णव॒द्यथा॑ नः ॥ १ ॥

न सोमः[13] । न[14] । सोमः[15] । इन्द्रम् । असुः[16] । तर्पयन्ति[17] । न । अमहन्तः[18] । मघवानम्[19] । सुता अपि[20] मदयन्ति[21] । तस्मै[22] । उक्थम् । जनयामि[23] । यदि । सेवते[24] । मनुष्यराजवत्[25] । नवतरमुक्थम्[26] । शृणुयात् । यथा । अस्मदीयम् ।

---

१. ०ना क० A. कुत्साः कुर्वाणाः । करोतेः कुत्सशब्दनिष्पत्तिः Sy.
२. वसिष्ठाः Sy.
३. ०र्यश्वाये० A. हरिनामकाश्वायेन्द्राय Sy.
४. स्तोत्रम् Sy. ५. देवैः प्रेरितम् Sy.
६. याचमानाः Sy. ७. सत्रा सर्वदा Sy.
८. पुत्राणि A. शत्रून् Sy.
९. हन्तुं सुशक्यानि Sy.
१०. दुर्गाणि तीर्णाः सन्तः Sy.
११. बलम् Sy.
१२. The *pratika* is supplied by the Editor, The stanza has already been explained. See RV. 7. 24. 6.
१३. 'न सोम इन्द्रम्' इति पञ्चर्चं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रम्यते —'न सोमः पञ्च' (KSA. 35. 26. p. 25.) इति । महाव्रत उक्तो विनियोगः
१४. न स्तोम A. न सोम M. १५. ने A.
१६. असुतः is suggested for असुः ॥ नाभिषुतः Sy.
१७. ०यति is suggested for ०यन्ति ।
१८. ०हान्तः is suggested for ०हन्तः ॥ स्तोत्रहीनाः Sy. १९. धनवन्तम् Sy.
२०. अभिषुता अपि सोमाः Sy.
२१. ममदुः । ममादेत्येतदाख्यातं बहुवचनान्ततया विपरिणतं सदत्र सम्बध्यते । अतएव त्रिष्वपि सवनेषु पवमानैः स्तोत्रैः स्तुता एव सोमा हूयन्ते Sy.
२२. तस्माथ जन० A. इन्द्राय Sy.
२३. पठामीत्यर्थः Sy. २४. सेवेत Sy.
२५. ०जवं A. राजेवादरेण Sy.
२६. शस्त्रम् Sy.

**उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानं सुतासः ।**
**यदीं सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते ॥ २ ॥**

उक्थउक्थे । शस्त्रेशस्त्रे[1] । सोमः । इन्द्रम् । मान्ति[2] । नयनेनयेन[3] । मघवानम्[4] । सुतास्तर्पयन्ति[5] । यदि[6] । एनम्[7] । बाधासहिताः[8] । पितरम्[9] । इव । पुत्राः । समानोत्साहाः[10] सङ्गताः । रक्षणाय[11] । वहन्ते[12] ।

**चकार ता कृणवन्ननमन्या यानि ब्रुवन्ति वेधसः सुतेषु ।**
**जनीरिव पतिरेकः समानो नि मामृजे पुर इन्द्रः सु सर्वाः ॥ ३ ॥**

चकार ता । चकार[13] । तानि । कर्माणि वृत्रवधादीनि । करोति च[14] । सम्प्रति[15] । अन्यानि । यानि । ब्रुवन्ति । विधातारः[16] । सुतेषु सोमेषु । यथा[17] । एकः[18] । साधारणः[19] । पतिः[20] । बह्वीर्जाया उपगच्छत्येवम् । सुष्ठु[21] । निर्माविष्टि[22] विनाशयति[23] । शत्रूणां धुरीः[24] एक एव[25] । सर्वा इति[26] ।

---

१. गस्त्रे गस्त्रे । A. शस्त्रेशस्त्रे क्रियमाणे Sy.
२. मा M. मादयति is suggested for मान्ति ॥ तर्पयति BB.
३. ०यनेन A. ०नयने is suggested for ०नयेन ॥ स्तोत्रेस्तोत्रे क्रियमाणे Sy. BB.
४. महाधनमिन्द्रम् BB.
५. सुतां ता० A. अभिषुताः सोमा मादयन्ति Sy. अभिषुताः सोमाः BB.
६. यस्मात् Sy. यदा खलु BB.
७. तस्मादेनमिन्द्रम् Sy. ईमित्यवधारणे BB.
८. वाधा सहिता A. परस्परं मिलिताः Sy. शत्र्वादिभिर्बाधिता भवन्ति पुरुषाः BB.
९. पितारम्० A. तदा तेऽपि...पितरमिव BB.
१०. ०त्सहा A. समानोत्साहा ऋत्विजः Sy. दक्षः पिता, समानपितृका इत्यर्थः । इन्द्र एव सर्वेषां समानः पितेति BB.
११. तर्पणाय स्वरक्षणाय वा Sy.
१२. हवन्ते is suggested for वहन्ते ॥ शस्त्रैः स्तोत्रैश्च स्तुवन्ति Sy. इन्द्रमेव ह्वयन्ति । पूर्ववत् सम्प्रसारणम् BB.

This stanza=TS. 1. 4. 46. 1.
१३. पूर्वस्मिन् काले चकार Sy.
१४. कुर्यात् Sy.
१५. सम्प्रत्यपि Sy.
१६. स्तोत्राणां विधातारः Sy.
१७. VM. seems to explain इव (of जनीरिव) separately from जनीः ।
१८. असहायः Sy.
१९. ०रण A. समवृत्तिः Sy.
२०. वति A.
२१. सम्यक् Sy.
२२. निर्मार्ष्टि is suggested for निर्माविष्टि ॥ शोधयेत् Sy.
२३. विन्दाश० A.M.
२४. धरीः A. पुरीः is suggested for धुरीः ॥ सर्वाः शत्रुनगरीः Sy.
२५. VM. seems to explain इन्द्र as एक एव ॥ अपि च स इन्द्रः Sy.
२६. सर्वे इति M.

**एवा तमाहुरुत शृण्व इन्द्र एको विभक्ता तरणिर्मघानाम् ।**
**मिथस्तुर ऊतयो यस्य पूर्वीरस्मे भद्राणि सश्चत प्रियाणि ॥ ४ ॥**

एवा तम्[1] । एवम्[2] । तम् । आहुः[3] । अपि च[4] । श्रूयते । इन्द्रः । एक एव । विभक्ता[5] । धनानाम्[6] । तारकः[7] । मिथस्तुर इतरेतर बाधमानानि[8] । विडा[9] ऊतयः[10] पालनानि । यस्य[11] । बहूनि[12] तस्य । प्रियाणि । भद्राणि । अस्मासु[13] । सक्तानीति[14] ।

**एवा वसिष्ठ इन्द्रमूतये नृन्कृष्टीनां वृषभं सुते गृणाति ।**
**सहस्रिण उप नो माहि वाजान्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥**

एवा वसिष्ठः[15] । एवम्[16] । वसिष्ठः । इन्द्रम् । रक्षणाय[17] । नृणाम्[18] । मनुष्याणाम्[19] । वर्षितारम्[20] । सुते सोमे[21] । स्तौति[22] । सहस्रसंख्यानि[23] । अन्नानि[24] । अस्माकम्[25] । उपमिमीहि[26] समीपे कुरु ।

VII. 27.

**इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।**
**शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥ १ ॥**

इन्द्रं[27] नरः[28] । इन्द्रम् । मनुष्याः[29] । सङ्ग्रामे[30] । हवन्ते[31] । यदा[32] । युद्धतरणनिमित्तानि[33] । कर्माणि ।

---

१. एपा तम् A. २. उक्तगुणम् Sy.
३. आहुः पूर्वे ऋषयः Sy. ४. अद्यापि Sy.
५. दातेति Sy. ६. मंहनीयानां धनानाम् Sy.
७. आपदस्तारयितेति Sy. ८. मिथः परस्परं तुरो बाधमानाः संश्लिष्टा वा Sy.
९. विडा seems to be redundant.
१०. रक्षाः सन्ति Sy. ११. इन्द्रस्य Sy.
१२. पूर्व्यो बह्वचः Sy. १३. सु is written twice in A. तस्य च प्रसादाद् अस्मान् Sy.
१४. सेवन्ताम् Sy. १५. वसिष्ठी A.
१६. उक्तप्रकारेण Sy. १७. रक्षायै Sy.
१८. नृन् नृणाम् । षष्ठ्यर्थे द्वितीया Sy.
१९. प्रजानाम् Sy. २०. कामानां वर्षितारम् Sy.
२१. सामे A. २२. अथ प्रत्यक्षस्तुतिः । हे इन्द्र !
२३. सहस्रसंख्याकान् Sy. २४. नि । अ is missing in M. २५. ०ख्यान्नान्यस्मा० A. अस्मभ्यम् Sy. २६. उपमाहि is suggested for उपमिमीहि । प्रयच्छेत्यर्थः Sy.
२७. 'इन्द्रं नरः' इति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । 'इन्द्रं नरः' (KSA. 25. 27. p. 25.) इत्यनुक्रान्तम् । महाव्रते निष्केवल्य एतत्सूक्तमुक्तं तृतीयत्वेन । ऐन्द्रे पशौ वपापुरोडाशहविषामाद्यास्तिस्रः क्रमेणानुवाक्याः । सूत्रितञ्च—'इन्द्रं नरो नेमधिता हवन्त इत्युरुं णो लोकमनु नेषि विद्वान्' (ASS. 3. 7.) इति Sy. २८. इन्द्रन्नर A.
२९. नेतारः Sy. नेतारो यस्य दातारो यजमाना (यजना) धीनबलत्वात् BB.
३०. कीदृशम् ? नेमधिता, नेम इत्यर्धस्य नाम 'यत्सर्वेषामर्धमिन्द्रः प्रति' इति सर्वेषां भागार्थेनेन्द्रो धीयते धार्यत इति नेमधितः । निष्ठायाम् 'सुधितवसुधितनेमधित०' इति धिभावो निपात्यते । 'सुपां सुलुक्०' इति द्वितीयैकवचनस्याकारः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् BB.
३१. भवन्ते A. ह्वयन्ति Sy. आह्वयन्ति BB.
३२. कदा पुनरसौ नेमेन धार्यत इत्याह—यद् यदा । तेनैव (सुपां सुलुक्०') सप्तम्या लुक् BB.
३३. युद्धभरणनिमित्ता Sy. पार्याः परलोके साधवः । छान्दसो ण्यः । यद्वा दुःखानां पारं समाप्तिः । तत्र साध्वीः, ताः BB.

युञ्जते[1] । तानि तानि[2] । शूरः[3] । नृषु सम्भक्ता[4] । बलस्य । तृप्तः[5] । प्रापय[6] । गोमति[7] । व्रजे[8] । अस्मान् । त्वमिति ।

**य इन्द्र शुष्मो मघवन्ते अस्ति शिक्षा सखिभ्यः पुरुहूत नृभ्यः ।**
**त्वं हि दृळ्हा मघवन्विचेता अपा वृधि परिवृतं न राधः ॥ २ ॥**

य इन्द्र[9] । यत् । इन्द्र ! बलम् । मघवन् ! तव । अस्ति[10] । तत् प्रयच्छ[11] । सखिभ्यः[12] । नृभ्यः[13] । पुरुहूत[14] ! त्वम् । हि[15] । दृढान्यपि पुराणि[16] शत्रूणां मत्नानि[17] । मघवन् ! विचेताः तथासति[18], अपावृधि[19] विवृतद्वारं कुरु । परिवृतम्[20] । । इवापवरकादिकम्[21] । धनं शत्रुपुरेषु स्थितम् ।

**इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।**
**ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् ॥ ३ ॥**

इन्द्रः[22] । इन्द्रः । राजा[23] । चतुष्पदः[24] । द्विपदाञ्च[25] । पृथिव्याम्[26] । नानारूपम्[27] । यत् । अस्ति[28] तस्य

---

१. प्रयुज्यन्ते Sy. यदा....अनुतिष्ठन्ति तदा नेमधितेति । 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन श्नमो ङित्त्वाभावात्, 'श्नसोरल्लोपः' इति न प्रवर्तते BB.
२. प्रसिद्धाः Sy. यदर्थमिन्द्रमाह्वयन्ति ताः BB.
३. अथेन्द्रः प्रत्यक्षमुच्यते—शूरो वीरः BB.
४. संभ(ह) र्ता M. नृभिर्मनुष्यैः साता सातः सम्भक्त आश्रितो नृषातः । पूर्ववदाकारः । ....सुषामादित्वात्षत्वम् । यद्वा नरो मनुष्याः सनितारः सम्भक्तारो दातारो वा यस्य नृषाता। छान्दसमात्वम् 'ऋतश्छन्दसि' इति कबभावः । यद्वा नृभ्यो दाता । छान्दसमात्वं पूर्वपदप्रकृतिस्वरत्वं च BB.
५. तृप्त A. बलं कामयमानश्च सन् Sy. तृप्तिशीलः। 'चक तृप्तौ' भौवादिकः, उदात्तेत् । ताच्छीलिकश्चानश् 'बहुलं छन्दसि' इति शपो लुक्
६. आभिमुख्येनास्मान् योजय, पशुमन्तं मां कुरु । 'द्व्यचोऽतस्तिङ' इति संहितायां दीर्घत्वम् BB.
७. गोसमूहे Sy. ईदृशस्त्वं नोऽस्मान् गोमति.... गोजाविमनुष्यादिमति BB.
८. गोष्ठे Sy. व्रजे....सङ्घाते। यद्वा व्रजे गोष्ठे भूयिष्ठगोभिर्युक्ते BB.
This stanza=TS. 1. 6. 12. 1.
९. इन्द्रन्न A. १०. अस्मि A.
११. देहि A.
१२. स्तोतृभ्यः Sy.
१३. नृभ्य A. स्तोतृभ्यो नृभ्यः Sy.
१४. हे बहुभिराहूत ! इन्द्र ! Sy.
१५. यस्मात् Sy.
१६. दृढानि पुरां द्वाराणि बिभेदिथेति शेषः Sy.
१७. मृद्नासि is suggested for मृत्नानि ॥
१८. तस्मात्स त्वं विविक्तप्रज्ञः सन् Sy.
१९. अवावृधि A. अस्मभ्यमपवृणु Sy.
२०. तिरोहितम् Sy.
२१. नेति सम्प्रत्यर्थे Sy.
२२. इन्द्रं A.
२३. ईश्वरो भवति Sy.
२४. जङ्गमस्य पश्वादेः Sy.
२५. मनुष्याणां च राजा भवति Sy.
२६. क्षमायाम् Sy.
२७. नानारूपं यद्धनमस्ति । तस्यापि राजा भवति Sy.
२८. अस्मि A.

च सर्वस्य राजा । ततः । प्रयच्छति । दाशुषे[1] । वसूनि सम्प्रति च[2] । चोदयति[3] । उपस्तुतः[4] । अस्मदभिमुखम्[5] ।

**नू चि॒न्न इन्द्रो॑ म॒घवा॒ सहू॑ती दा॒नो वाजं॒ नि यं॑मते न ऊ॒ती ।**
**अनू॑ना॒ यस्य॒ दक्षि॑णा॒ पीपा॑य वा॒मं नृभ्यो॑ अ॒भिवी॑ता॒ सखि॑भ्यः ॥ ४ ॥**

नू चिन्नः[6] । क्षिप्रम् । अस्माकम् । इन्द्रः । धनवन्[7] । मरुद्गणेन सहितः[8] । ददानः । अन्नम् । नियमेन प्रयच्छतु । अस्माकम्[9] । रक्षणाय[10] । अन्यूनम्[11] । यस्य[12] । दानम् । वर्धयति[13] । वनीयं कामम्[14] । नृभ्यः । अहिकान्तम्[15] । सखिभ्यः[16][17] ।

**नू इ॑न्द्र रा॒ये वरि॑वस्कृधी न॒ आ ते॒ मनो॑ ववृत्याम म॒घाय॑ ।**
**गोम॒दश्वा॑वद्रथ॑वद्व्यन्तो॑ यूयं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ५ ॥**

नू इन्द्र । क्षिप्रम् । अस्माकम्[18] । परिचरणम्[19] । धनाय[20] । कुरु[21] परिचरणेन प्रीतो धनं प्रयच्छ । तव । मनो वयम् । धनाय[22] । आवर्तयामः । गोमत् । अश्ववत् । रथवच्च धनम् । कामयमानाः[23] ।

## VII. 28.

**ब्रह्मा॑ ण इ॒न्द्रोप॑ याहि वि॒द्वान॒र्वाञ्च॑स्ते॒ हर॑यः सन्तु यु॒क्ताः ।**
**विश्वे॑ चि॒द्धि त्वा॑ वि॒हव॑न्त॒ मर्ता॑ अ॒स्माक॒मिच्छृ॑णुहि विश्वमिन्व ॥ १ ॥**

ब्रह्मा णः[24] । स्तोत्रम्[25] । इन्द्र[26] ! अस्माकम्[27] । उपगच्छ[28] । जानन् । अभिमुखाः[29] । ते[30] । अश्वाः । सन्तु ।

---

१. यजमानाय Sy. २. धनानि Sy.
३. प्रेरयति Sy. ४. उपस्थितः M. स इन्द्रोऽस्माभिरुपस्तुत एव सन् Sy.
५. VM. ignores राधः and चित् ॥ राधो धनम् । चित् एव Sy.
६. चिन्न A. M.
७. धनं A. धनवान् is suggested for धनवन् ।
८. न is written twice in A. सहूत्या मरुद्भिः सहाह्वानेन Sy.
९. अस्मभ्यम् Sy. १०. ऊत्यै रक्षायै Sy.
११. न्यूनं सम्पूर्णम् Sy.
१२. इन्द्रस्य Sy. १३. दोग्धि Sy.
१४. वनीयं काम A. वननीयं is suggested for वनीयं ॥ धनम् Sy.
१५. अभिका० is suggested for अहि का० ॥ अभिप्राप्ता Sy. १६. स्तोतृभ्यः Sy.
१७. VM. ignores चित् ॥ चित् एव
१८. अस्मभ्यम् Sy.
१९. धनम् Sy. वेदो वरिव इति धननामनी Sy. Ngh. 2. 10. २०. धनप्राप्तये Sy.
२१. देहि Sy. २२. मंहनीयायै स्तुत्यै Sy.
२३. VM. ignores इन्द्र ।
२४. 'ब्रह्मा ण इन्द्र' इति पञ्चर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । 'ब्रह्मा णः' (KSA. 35. 28. p. 25.) इत्यनुक्रान्तम् । महाव्रते निष्केवल्ये पञ्चमत्वेनास्य सूक्तस्य विनियोग उक्तः । अष्टमेऽहनि प्रउगशस्त्र आद्यस्तृचः ऐन्द्रः (ASS. 8. 10.) इति Sy.
२५. ब्राह्मण A. २६. स्तोतम् A.
२७. हे इन्द्र ! त्वम् Sy. २८. गच्छन् M.
२९. अस्मदभिमुखाः Sy. ३०. तव Sy.

रथे युक्ताः । सर्वे । अपि[1] । त्वा[2] । विविधमाह्वयन्ति[3] । मनुष्याः । अस्माकम्[4] । एव स्तुतिम् । शृणु । विश्वस्य प्रीणयितः[5] ![6]

**हवं त इन्द्र महिमा व्यानड् ब्रह्म यत्पासि शवसिन्नृषीणाम् ।**
**आ यद्वज्रं दधिषे हस्त उग्र घोरः सन्क्रत्वा जनिष्ठा अषाळ्हः ॥ २ ॥**

हवं त इन्द्र । ह्वानम्[7] । ते । इन्द्र ! महिमा । व्याप्नोति स्तोता महिमानमेतीत्यर्थः । यस्मात्त्वम्[8] । बलवन् । ऋषीणाम् । स्तोत्रं धनप्रदानेन । रक्षसि[9] । यस्माच्च[10] शत्रूणां हननाय । वज्रम् । धारयसि । हस्ते[11] । उद्गूर्णे[12] । स त्वम्[13] । घोरः । सन् । कर्मणैव[14] । शत्रुभिरसोढा[15] । जातः[16] ।

**तव प्रणीतीन्द्र जोहुवानान्त्सं यन्नॄन्न रोदसी निनेथ ।**
**महे क्षत्राय शवसे हि जज्ञेऽतूतुजिं चित्तूतुजिरशिश्नत् ॥ ३ ॥**

तव प्रणीती[17] । तव । प्रणयनेन[18] । इन्द्र ! स्तोतॄन्[19] सदा त्वम् । सन्नयसि[20] । नरान् । इव वृष्ट्यान्न-[21]प्रदानेन । द्यावापृथिव्यौ तदानीं सोऽयमिन्द्रः । महते । बलाय[22] । वेगाय[23] च । प्रादुर्भूतः[24] । च[25] । अप्रयच्छन्तम-[26]यजमानम्[27] । श्नथयति[28] । स्वयं स्तोतृभ्यः प्रयच्छन्निति[29][30] ।

---

१. यद्यपि Sy.
२. त्वाम् Sy.
३. पृथग् हवन्ते Sy.
४. तथाप्यस्माकम् Sy.
५. प्रणयिता A. हे विश्वप्रणयितः ! इन्द्र ! Sy.
६. VM. ignores हि ।
७. हवः स्तोता । तम् Sy.
८. यदा Sy.
९. स्तोत्रस्य रक्षणं नाम फलप्रदानम् Sy.
१०. यदा Sy.
११. पाणौ Sy.
१२. ओजस्विन् Sy.
१३. गूर्णे स त्वम् is missing in M.
१४. शत्रुवधादिना कर्मणा Sy.
१५. शत्रुभिरनभिभूतः Sy.
१६. जाता A. अजनिष्ठा अभवः
१७. तव प्रणीती is missing in A.
१८. प्रणीत्या प्रणयनेन Sy.
१९. स्तोतॄ A. भृशं स्तुवतः Sy.
२०. सङ्गमयसि । दिवि पृथिव्यां च स्तोतॄन् प्रतिष्ठापयसीत्यर्थः Sy.
२१. पृष्ठ्यान्न० A.
२२. धनाय Sy. रयिः क्षत्रमिति धननामनी Ngh. 2. 10.
२३. बलाय च । यजमानेभ्यो महद्धनं बलं च दातुमित्यर्थः Sy.
२४. ०दुर्द्भूतः A. जज्ञिषे Sy.
२५. चिदित्येवकारार्थे ।
२६. अप्राय० M.
अदातारम् Sy.
२७. मयजमानम् । श्न is missing in M.
२८. अश्नथ० A. हिनस्ति । श्नथतिर्हिंसाकर्मा । तस्माल्लडर्थे लुङ् Sy.
२९. दाता यजमानः Sy.
३०. VM. ignores यत् and हि ॥ हीति हेत्वर्थे । यत एवमतः कारणात् Sy.

एभिर्न इन्द्राहभिर्दशस्य दुर्मित्रासो हि क्षितयः पवन्ते ।
प्रति यच्चष्टे अनृतमनेना अव द्विता वरुणो मायी नः सात् ॥ ४ ॥

एभिः[1] । एभिः[2] । अस्मभ्यम् । इन्द्र[3] ! अहोभिः[4] प्रीतः । प्रयच्छ[5] धनं विजयाय । बाधकाः[6] । हि । मनुष्याः[7] । अभिगच्छन्त्यस्मात्[8] । यत् । अनृतमस्मास्विन्द्र[9] ! प्रतिपश्यति । तदस्माकमनृतम् । प्रज्ञावान् । वरुणः । वैधम्[10] । अस्यतु[11] विश्रथयत्विति[12] ।

वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्दन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

वोचेम[13] । स्तुयाम । इव[14] । धनवन्तम् । इन्द्रम्[15] । महत्[16] । धनम्[17] । अन्नं च । यस्मात्[18] । अस्मभ्यम् । प्रयच्छति[19] । यः । स्तुवत[20] । स्तोत्रकृतिम्[21] । अतिशयेन[22] रक्षिता[23] ।

## VII. 29.

अयं सोम इन्द्र तुभ्यं सुन्व आ तु प्र याहि हरिवस्तदोकाः ।
पिबा त्व१स्य सुषुतस्य चारोर्ददो मघानि मघवन्नियानः ॥ १ ॥

अयं सोमः[24] । अयम्[25] । सोमः । इन्द्र ! तुभ्यम्[26] । सुन्वे[27] । क्षिप्रम् । आप्रयाहि । हरिवः[28] ! सोम-

---

१. The *pratika* is supplied by the Editor. २. एहिः A. सात्त्विकैः Sy.
३. हे इन्द्र ! त्वत्प्रसादात् Sy.
४. अहेभिः A. एभिः सात्त्विकैरहभिरहोभिः Sy.
५. तेभ्यो धनमाच्छिद्यास्मभ्यं देहि Sy.
६. दुष्टमित्रभूता बाधकाः Sy. ७. जनाः Sy. ८. अभिगच्छन्ति ॥ पवतिर्गतिकर्मा Sy. ९. ०मस्वास्वि० M.
१०. वैधवम् M. द्वैधम् is suggested for वैधम् ॥ द्विधा Sy.
११. अवस्यतु is suggested for अस्यतु ॥ विमोचयतु Sy. स्यतिरुपसृष्टो विमोचने N. 1. 17.
१२. VM. ignores अनेनाः ॥ एनसां निहन्ता Sy. १३. स्तुवेम Sy.
१४. वै M. एव is suggested for इवै ।
१५. इन्द्रम M. १६. महतः Sy.
१७. अन्ना. . .यस्मा० A. रायो धनस्य । द्वितीयार्थे षष्ठी । संराधकं. . .धनम् Sy.
१८. यः Sy. १९. प्रायच्छत् Sy.
२०. स्तुवतः is suggested for स्तुवत ॥
२१. स्तोतृ कृतम् A. क्रियमाणं ब्रह्म स्तोत्रम् Sy.
२२. अतिशयेन रक्षिता गन्ता भवति Sy.
२३. VM. ignores एनम् ।
२४. 'अयं सोम इन्द्र' इति पञ्चर्चं द्वादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । 'अयं सोमः' (KSA. 35. 29. p. 25.) इत्यनुक्रान्तम् । व्यूल्हे दशरात्रे नवमेऽहनि 'अयं सोम इन्द्र' इति प्रउगशस्त्रे ऐन्द्रस्तृचः । सूत्रितञ्च—'अयं सोम इन्द्र तुभ्यं सुन्व आ तु प्र ब्रह्माणः' (ASS. 8. 11.) इति । षोडशिशस्त्रे 'ब्रह्मन् वीर' इत्येषा त्रिष्टुप् । सूत्रितञ्च—'ब्रह्मन् वीर ब्रह्मकृतिं जुषाण इति त्रिष्टुप्, (ASS. 6. 2.) इति Sy. २५. एषः Sy.
२६. त्वदर्थम् Sy. २७. सन्वे A. अभिषुतोऽभवत् Sy. २८. हे हरिवन्निन्द्र ! Sy.

निलयः[1] । पिब । क्षिप्रम् । अमुम्[2] । सुतम्[3] । चारोः[4] । प्रयच्छ[5] । धनानि । मघवन्[6] ! अभिगम्यमान[7] ।

**ब्रह्मन्वीर ब्रह्मकृतिं जुषाणोऽर्वाचीनो हरिभिर्याहि तूयम् ।**
**अस्मिन्नू षु सवने मादयस्वोप ब्रह्माणि शृणव इमा नः ॥ २ ॥**

ब्रह्मन्वीर[8] । परिवृढ ! वीर[9] ! स्तोत्रकृतिम्[10] । सेवमानः । अभिमुखः[11] । अश्वैः । याहि । क्षिप्रम् । अस्मिन् । सवने[12] । सुष्ठु मादायस[13] । उपशृणु । ब्रह्माणि[14] । च[15] । इमानि । अस्माकम्[16] ।

**का ते अस्त्यरंकृतिः सूक्तैः कदा नूनं ते मघवन्दाशेम ।**
**विश्वा मतीरा ततने त्वायाधा म इन्द्र शृणवो हवेमा ॥ ३ ॥**

का ते अस्ति । का[17] । ते[18] । भवति । सूक्तैः[19] । अलङ्कृतिः । कदा । क्षिप्रमेव[20] । मघवन् । तुभ्यं[21] हवींषि । दाशेम[22] । विश्वाः[23] । स्तुतीः[24] । विस्तारयामि[25] । त्वत्कामय[26] । था[27] । मे[28] । इन्द्र ! श्रृणुहि[29] । हवानि[30] । इमानि ।

**उतो घा ते पुरुष्या इदासन्येषां पूर्वेषामशृणोर्ऋषीणाम् ।**
**अधाहं त्वा मघवञ्जोहवीमि त्वं न इन्द्रासि प्रमतिः पितेव ॥ ४ ॥**

उतो घ । अपि च । खलु[31] । ते[32] । पुरुषहिताः[33] । एवं[34] प्रवृत्तयः । आसन् । येषाम् । सर्वेषाम्[35] ।

---

१. तदोकाः सवनीयो यस्यासौ तदोकाः Sy.
२. अस्य सोमस्य । द्वितीयार्थे षष्ठी । सम्यगभिषुतं शोभनमित्यर्थः Sy.
३. सम्यगभिषुतस्य Sy.
४. चारां A. चारुम् is suggested for चारोः ॥ शोभनस्य Sy. ५. अस्मभ्यं देहि Sy. ६. अपि च हे मघवन् ! Sy.
७. ०मानः is suggested for ०मान ॥ उपगम्यमानो याच्यमानो वा Sy.
८. ब्रह्मद्विर A. ९. विर A. हे...इन्द्र ! Sy.
१०. क्रियमाणं स्तोत्रम् Sy.
११. ०मुखं A. अस्मदभिमुखः सन् Sy.
१२. यज्ञे Sy.
१३. मादाय M. मादयस्व is suggested for मादायस ।
१४. स्तोत्राणि Sy. १५. एव Sy.
१६. अस्मदीयानि Sy. १७. कीदृशी Sy.
१८. तव Sy.
१९. अस्माभिः क्रियमाणैः स्तोत्रैः Sy.
२०. नूनं खलु Sy. २१. तव Sy.
२२. प्रीतिमुत्पादयेम Sy.
२३. सर्वाः Sy. २४. स्तुतिः Sy.
२५. मिस् is missing in M. करोमि Sy.
२६. त्वात्कामय A. त्वत्कामनया is suggested for त्वत्कामय ॥ त्वत्कामनयैव Sy.
२७. अथ is suggested for था ॥ अतः कारणात् Sy. २८. मदीयानि Sy.
२९. श्रृणु is suggested for श्रृणुहि ।
३०. स्तोत्राणि ३१. घेति पूरणः Sy.
३२. पूर्वं ऋषयः Sy.
३३. ०हितं M. पुरुषेभ्यो हिताः Sy.
३४. एवा A.
३५. आर्षेषाम् A. पूर्वेषाम् is suggested for सर्वेषाम् ॥

ऋषीणां स्तुतीः[1] । अशृणोः । अथ[2] । अहम् । त्वाम् । अघवंश्च[3] मघवन् ! जोहवीमि[4] । त्वम् । अस्माकम् । इन्द्र[5] ! भवसि । प्रकृष्टमतिः[6] । पितेव[7] पुत्राणाम् ।

वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्ददन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

(वोचेम[8] ।)—

VII. 30.

आ नो देव शवसा याहि शुष्मिन्भवा वृध इन्द्र रायो अस्य ।
महे नृम्णाय नृपते सुवज्र महि क्षत्राय पौंस्याय शूर ॥ १ ॥

[9]आ नो देव[10] । आयाहि । देव[11] । बलेन सह । अस्मान्[12] । बलवान्[13] । भव । वर्धकः[14] । इन्द्र[15] ! धनस्य । अस्य[16] । महते । धनाय[17] । नृणां पते ! सुवज्र ! महते । बलाय[18] । वीर्यकरणाय च[19] । शूरः[20] ।

हवन्त उ त्वा हव्यं विवाचि तनूषु शूराः सूर्यस्य सातौ ।
त्वं विश्वेषु सेन्यो जनेषु त्वं वृत्राणि रन्धया सुहन्तु ॥ २ ॥

हवन्ते । हवन्ते[21] । एव । त्वा[22] । हवनीयम्[23] । विविधवाचि सङ्ग्रामे[24] । तनूनां रक्षणार्थम्[25] । शूराः[26] ।

---

१. स्तुतिः A. २. अतः Sy.
३. अघवंश्च seems to be redundant.
४. भृशं स्तौमि Sy.
५. अपि च हे इन्द्र ! त्वम् Sy.
६. बन्धुः Sy. ७. जनक इव Sy.
८. The *pratīka* is supplied by the Editor.
The stanza has already been explained. See RV. 7. 28. 5.
९. 'आ नो देव' इति पञ्चर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । 'आ नो देव' (KSA. 35. 30. p. 25.) इत्यनुक्रान्तम् । प्रथमे छन्दोमे प्रउगशस्त्रे 'आ नः' इत्ययमैन्द्रस्तृचः । सूत्र्यते हि—'आ नो देव शवसा याहि शुष्मिन् प्र वो यज्ञेषु देवयन्तो अर्चन्' (ASS. 8. 9.) इति Sy. १०. आ नः M.
११. हे द्योतमान ! Sy. १२. स्म Sy.
१३. बलवान् is missing in M. बलवन् ! is suggested for बलवान् ।
१४. वर्धयिता Sy. १५. इन्द्रे A.
१६. अस्य is suggested for अयं ॥ अस्मभ्यं देयस्य Sy.
१७. बलाय च भव Sy. बाधो नृम्णमिति बलनामनी Ngh. 2. 9.
१८. शत्रूणां हिंसकाय क्षदिर्हिंसाकर्मा Sy.
१९. वीर्याय च भव Sy.
२०. VM. seems to explain शूर voc. as शूरः nom.
२१. हे इन्द्र ! . . . ह्वयन्ति Sy.
२२. त्वाम् Sy. २३. ह्वातव्यम् Sy.
२४. वाचि सह संग्रामे A. विविधा वाचो यस्मिन् प्रादुर्भवन्ति तस्मिन् युद्धे Sy.
२५. अङ्गेषु रक्षणीयासु Sy.
२६. शूरो A. शूराः पुरुषाः Sy.

सूर्यस्य[1] । भजनार्थञ्चामरणार्थञ्च[2] । त्वम् । विश्वेष्वपि[3] । जनेषु । सेनार्हः[4] । त्वम्[5] । शत्रून् । वशीकुरु[6] । शोभनहननेन[7] वज्रेण ।

**अहा यदिन्द्र सुदिना व्युच्छान्दधो यत्केतुमुपमं समत्सु ।**
**न्यग्निः सीददसुरो न होता हुवानो अत्र सुभगाय देवान् ॥ ३ ॥**

अहा यत्[8] । अहानि । यदा । इन्द्र ! सुदिनानि । व्युच्छन्ति[9] । करोषि[10] च । यदा । प्रज्ञानमुदितः सन् स्वतेजसा । अन्तिकम् । सङ्ग्रामेषूदित आदित्ये सङ्ग्रामाः प्रवर्तन्ते । तदानीं सङ्ग्रामे विजयार्थं कर्म कुर्वाणा[11] यजमानानाम् । अग्नि[12] । निषीदति[13] यज्ञेषु । प्राज्ञः[14] । इव । होता[15] । ह्वयन् । अस्मिल्लोके[16] । सौभगतित्वाय[17] युद्धे जयार्थम् । देवान् ।

**वयं ते त इन्द्र ये च देव स्तवन्त शूर ददतो मघानि ।**
**यच्छा सूरिभ्य उपमं वरूथं स्वाभुवो जरणामश्नवन्त ॥ ४ ॥**

वयं ते । ते[18] । वयम्[19] । तव स्वभूताः[20] । इन्द्र ! ये[21] । च । देव[22] ! स्तुवन्ति । शूर[23] ! ददतस्तव[24] । हवींषि । तेभ्योऽस्मभ्यमुभयेभ्यः[25] । प्रयच्छ । स्तोतृभ्यः । उपमानभूतम्[26] । गृहम्[27] । शोभनभवनाः[28] । तव स्तुतिम्[29] । व्याप्नुवन्तु[30] ।

---

१. सरति गच्छतीत्यायुरत्र सूर्यो विवक्षितः । तस्य Sy.
२. सम्भजने चिरकालं प्राप्त्यर्थम् Sy.
३. सर्वेषु Sy.
४. त्वमेव सेनार्हो ऽसि Sy.
५. अपि च त्वम् Sy.
६. वशीन् कुरु A. अस्मभ्यं वशीकुरु Sy.
७. सुहन्तुनाम्ना वज्रेण Sy.
८. यन् A.
९. ०च्छन्ती M. व्युच्छेयुः Sy.
१०. धारयेः Sy.
११. कुर्वाणा M. कुर्वाणानां is suggested for कुर्वाणा
१२. अग्नि M. अग्निः' is suggested for अग्नि ।
१३. न्यसीदत् Sy.
१४. बलवान् Sy.
१५. देवानामाह्वाता Sy.
१६. अस्मिन् यज्ञे Sy.
१७. सौगतित्वाय A. सौभगत्वाय is suggested for सौभगतित्वाय ॥ शोभनधनप्राप्तये Sy.
१८. ते is missing in M.
१९. वसिष्ठाः स्वभूताः Sy.
२०. तत्स्व० A.
२१. जना मदीयपुत्रपौत्रादयः Sy.
२२. देवा A.
२३. शूरा A.
२४. प्रयच्छन्तः Sy.
२५. मंहनीयानि हवींषि Sy.
२६. उपमं श्रेष्ठम् Sy.
२७. ग्रहं A.
२८. सुसमृद्धाः सन्तः Sy.
२९. तप स्तुवति M. जराम् Sy.
३०. प्राप्नुवन्तु Sy.

वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्दन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

(वोचेम[1] । )—

VII. 31.

प्र व इन्द्राय मादनं हर्यश्वाय गायत । सखायः सोमपाव्ने ॥ १ ॥

[2]प्र व इन्द्राय । प्रगायत[3] । यूयम् । इन्द्राय । मदकरं स्तोत्रम् । हर्यश्वाय[4] । सखायः ! सोमपाव्ने[5] ।

शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः । चकृमा सत्यराधसे ॥ २ ॥

शंसेत्[6] । शंस[7] ; एव[8] । उक्थम्[9] । शोभनदानाय । अपि य[10] । दीप्तं स्तोत्रम्[11] । यथास्मै । नरः कुर्वन्ति[12] । तथा कुर्मः[13] । सत्यधनाय[14] ।

त्वं न इन्द्र वाजयुस्त्वं गव्युः शतक्रतो । त्वं हिरण्ययुर्वसो ॥ ३ ॥

त्वं न इन्द्र । त्वम् । अस्माकम् । इन्द्र[15] ! अन्नकामः[16] । त्वम् । गोकामश्च[17] । शतक्रतो[18] ! त्वम् । हिरण्यकामश्च[19] । यासयितः[20] ।

---

१. The *pratīka* is supplied by the Editor.
The stanza has already been explained. See RV. 7. 28. 5.

२. 'प्र व इन्द्राय' इति द्वादशर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं गायत्रमैन्द्रम् । दशम्याद्यास्तिस्रो विराजः शिष्टा गायत्र्यः । तथा चानुक्रान्तम्— 'प्र वो द्वादश गायत्रं त्रिविराळन्तम्' (KSA. 35. 31. P. 25.) इति । सूक्तविनियोगो लैङ्गिकः । प्रथमे रात्रिपर्याये मैत्रावरुणशस्त्रे 'प्र व इन्द्राय' इत्याद्यस्तृचः स्तोत्रियः । सूत्रितञ्च—'प्र व इन्द्राय मादनं प्र कृतान्यृजीषिणः' (ĀSS. 6. 4.) इति । अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे 'वयमिन्द्र त्वायवोऽभीत्यनुरूपस्तृचः । तथा च सूत्रितम्— 'वयमिन्द्र त्वायवोऽभि वार्त्रइत्यायेत्युत्तमामुद्धरेत्' (ĀSS. 6. 4.) इति । चतुर्थेऽहनि माध्यन्दिनसवने होत्रकशस्त्र आरम्भणीयाभ्य ऊर्ध्वं वैराज एकस्तृच आहवनीयः । तदर्थाः 'प्र वो महे महिवृधे भरध्वम्' इत्याद्यास्तिस्रः । सूत्रितञ्च—'प्र वो महे महिवृधे भरध्वमिति चतस्रस्तिस्रश्च विराजः' (ĀSS 7. 11.) इति Sy. ३. ०यक A. ४. वीर्यत्वाय A. ५. सोमवाप्ने A. सोमानां पात्रे Sy.

६. शंसन् M. ७. हे स्तोतः ! त्वमपि उच्चारय Sy. ८. इत् M. इदिति पूरणः Sy.

९. उत्थम् A. स्तोमम् Sy.

१०. अपि यत् M. अपि च is suggested for अपि य ।

११. दीप्तेः साधनभूतं स्तोत्रं शंसन्ति तद्वत् Sy.

१२. अन्ये स्तोतारः Sy. १३. कुर्म A. वयञ्च स्तोत्रं करवाम Sy. १४. सत्यधनायेन्द्राय Sy.

१५. इन्द्र A. १६. अन्नकामो भव Sy.

१७. गोकामो भव Sy. १८. ०क्रतोः A.

१९. हिरण्यकामोऽपि भव । 'छन्दसि परेच्छायामपि दृश्यते क्यच्' इति क्यच् Sy.

२०. या सहितः A. वासयितः ! is suggested for यासयितः ॥ हे वासयितः ! इन्द्र ! Sy.

**व॒यमि॑न्द्र त्वा॒यवो॒ऽभि प्र णो॑नुमो वृषन् । वि॒द्धी त्व१॒॑स्य नो॑ वसो ॥ ४ ॥**

वयमिन्द्र[1] । वयम्[2] । इन्द्र ! त्वत्कामाः । त्वामभिष्टुमः[3] । वर्षित[4] । द्धि[5] । क्षिप्रम्[6] । वासयितः ! तत्[7] । नः[8] स्तोत्रम्[9] ।

**मा नो॑ नि॒दे च॒ वक्त॑वे॒ऽर्यो र॑न्धी॒ररा॑व्णे । त्वे अपि॒ क्रतु॒र्मम॑ ॥ ५ ॥**

मा नः । मा । अस्मान् । निन्दित्रे[10] । पुरुषं वक्त्रे[11] । च । अर्यस्त्वम्[12] । वशं तयो[13] । अदात्रे च । त्वयि । एव[14] च । मम । दानादिकं कर्म[15] भवतु ।

**त्वं वर्मा॑सि स॒प्रथः॑ पुरोयो॒धश्च॑ वृत्रहन् । त्वया॒ प्रति॑ ब्रुवे यु॒जा ॥ ६ ॥**

त्वं वर्म । मम त्वम् । कवचम्[16] । भवसि । सर्वतः पृथुतमम्[17] । पुरोयोधः[18] । च[19] । शत्रुहन्[20] ! त्वया । सहायेन । शत्रूनहं प्रतिब्रुवे[21] ।

**म॒हाँ उ॒तासि॒ यस्य॒ तेऽनु॑ स्व॒धाव॑री॒ सहः॑ । म॒म्नाते॑ इन्द्र॒ रोद॑सी ॥ ७ ॥**

महाँ उत । अपि च त्वम् । महान्[22] । भवसि । यस्य । तव । बलम् । वलवत्यौ[23] । द्यावापृथिव्यौ । अनुमन्येते[24] [25] ।

**तं त्वा॑ म॒रुत्व॑ती॒ परि॒ भुव॒द्वाणी॑ स॒याव॑री । नक्ष॑माणा स॒ह द्युभिः॑ ॥ ८ ॥**

तं त्वा । तम्[26] । त्वाम्[27] । मरुद्भिस्तद्वती[28] । पर्यवसन्[29] । स्तुतिः[30] । स्तोतृभ्यः । सह निर्गच्छन्ती[31] । व्याप्नुवन्ती[32] । त्वदीप्तैर्मरुद्भिः[33] । सह ।

---

१. The *pratīka* is supplied by the Editor. २. वसिष्ठाः Sy.
३. अहिष्मम A. स्तुमः Sy.
४. वर्षितः ! is suggested for वर्षित । हे कामानां वर्षितः ! Sy. ५. विद्धि is suggested for द्धि ॥ अवधारय Sy.
६. विद्धि क्षिप्रम् is missing in M.
७. इदम् Sy. ८. अस्मदीयं स्तोत्रम् Sy.
९. VM. ignores प्र ॥ प्र प्रकर्षेण Sy.
१०. निन्दिते A. ११. परुषं वक्त्रे is suggested for पुरुषं वक्त्रे ॥ परुषवाक्यानां वक्त्रे Sy. १२. र्य is missing in A: हे इन्द्र ! स्वामी त्वम् Sy.
१३. तयोः M. नय is suggested for तयो ॥ वशं कार्षीः Sy. १४. अपि च Sy.
१५. मदीयं स्तोत्रलक्षणं कर्म गच्छत्विति शेषः । अस्मदीयं स्तोत्रं भवच्चित्ते प्रविशत्वित्यर्थः Sy.
१६. अस्माकं कवचवद्रक्षकोऽसीत्यर्थः Sy.
१७. सर्वतः पृथुः Sy. १८. पुरो योद्धा Sy.
१९. चासि Sy. २०. हे शत्रूणां हिंसकेन्द्र ! Sy.
२१. प्रतिब्रवीमि । प्रतिहन्मीत्यर्थः Sy.
२२. सर्वाधिकः Sy. २३. तौ A. अन्नवत्यौ Sy.
२४. त्वदीयं सहः सर्वाधिकमित्यत्रोभावपि लोकौ विसंवादं न कुरुत इत्यर्थः Sy.
२५. VM. ignores इन्द्र
२६. हे इन्द्र ! उक्तगुणविशिष्टम् Sy.
२७. मरुतः स्तोतारः तद्वती Sy. २८. त्वा A.
२९. ०वसत् is suggested for ०वसन् ॥ परिभवतु परिभवतिरत्र परिग्रहार्थीयः । परिगृह्णात्वित्यर्थः Sy. ३०. स्तुति A.
३१. ०च्छन्ति A. त्वया सह गन्त्री । यत्र यत्र त्वं यासि तत्र तत्र यान्तीत्यर्थः Sy.
३२. व्यप्नुवन्ति A. ३३. दीप्तैः is suggested for त्वदीप्तैः ॥ तेजोभिः Sy.

ऊर्ध्वासस्त्वान्विन्दवो भुवन्दस्ममुप द्यवि । सं ते नमन्त कृष्टयः ॥ ९ ॥

ऊर्ध्वासः । उन्मुखाः[1] । त्वाम् । प्रति[2] । दस्मम्[3] । सोमाः[4] । अभवन्[5] । उपद्यवि दीप्तस्याहवनीयस्य[6] समीपे[7] । सन्नमन्ते[8] । तुभ्यम् । मनुष्याः[9] ।

प्र वो महे महिवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चरा चर्षणिप्राः ॥ १० ॥

प्र वो महे । प्रभरध्वम्[10] । यूयं हविः[11] । महते[12] । महतां वर्धयित्रे[13] । प्रकृष्टज्ञानाय[14] । यूयं सुमतिम्[15] । प्रकृणुध्वम्[16] । त्वञ्चेन्द्र[17] पूर्वीरभ्यस्ताः[18] । विशः प्रति[19] । प्रचर गच्छं[20] । मनुष्याणां कामैः पूरयिता[21] ।

उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः ।
तस्य व्रतानि न मिनन्ति धीराः ॥ ११ ॥

उरुव्यचसे । बहुव्याप्तये[22] । महते[23] । स्तुतिम्[24] । सुप्रवृत्ताम्[25] । इन्द्राय[26] । जनयन्ति । मेधाविनः[27] । तत्र[28] । कर्माणि[29] । न । हिंसन्ति । प्राज्ञा अन्येऽपि देवाः[30] ।

इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै ।
हर्यश्वाय बर्हया समापीन् ॥ १२ ॥

इन्द्रं वाणीः । इन्द्रम् । स्तुतयः । अनुक्तक्रोधम्[31] । सत्यम्[32] । एव । राजानम्[33] । पुरोदधिरे । शत्रूणां सहाय[34] । त्वञ्च हर्यश्वाय[35] । ज्ञादीन्[36] । सम्प्रोत्साहय[37] होतः[38] ! इति ।

---

१. ऊर्ध्वाः Sy. २. उद्दिश्य Sy. ३. दर्शनीयम् Sy. ४. अस्मदीयाः सोमाः Sy.
५. भवन्ति Sy. ६. आभवन्तु यद्यपि दीप्त॰ M.
७. ॰हवीयस्य समीमे A. हे इन्द्र ! द्युलोकसमीपे स्थितम् Sy.
८. भुवि सोमास्त्वदर्थमेव जायन्ते प्रजाश्च त्वामेव प्रणमन्तीन्द्रस्तुतिः Sy. ९. मनुष्यां A. प्रजाश्च
१०. प्रवर॰ A. हे मदीयाः पुरुषाः ! . . .सोमान् प्रणयत Sy. ११. हवीः A.
१२. महत इन्द्राय Sy. १३. महतां धनानां वर्धयित्रे Sy. १४. प्रकृष्टमतये Sy.
१५. सुष्टुतिम् Sy. १६. प्रकुरुत Sy.
१७. अथ प्रत्यक्षस्तुतिः । हे इन्द्र ! Sy.
१८. पूवीर॰ A. हवीषां पूरयित्रीः Sy.
१९. विश प्रति A. प्रजाः Sy.
२०. प्रचारं गच्छन् M. प्रचर गच्छ is suggested for प्रचर गच्छं ॥ अभिगच्छ Sy.
२१. प्रजानां पूरयिता Sy. २२. पृथुव्याप्तये Sy.
२३. ये महते is missing in M.
२४. ब्रह्मान्नं हविश्च Sy. २५. सुवृक्ति स्तुतिम् Sy. २६. यस्मा इन्द्राय Sy.
२७. प्राज्ञाः Sy. २८. तस्येन्द्रस्य Sy.
२९. रक्षणादीनि कर्माणि Sy, ३०. देवा अपि Sy.
३१. केनाप्यनुत्तोऽबाधितो मन्युः क्रोधो यस्य स तम् Sy. ३२. सत्रा सर्वजगतः Sy.
३३. ईश्वरम् Sy.
३४. शत्रूणां सहाय probably means शत्रूणां अभिभवित्रे । सहाय is dative from सह with अच्प्रत्यय ॥ स्तोत्राणि शत्रूणामभिभवितुम् Sy. ३५. हर्यश्वमिन्द्रं स्तोतुमित्यर्थः Sy. ३६. ज्ञातीन् is suggested for ज्ञादीन् ॥ बन्धून् Sy.
३७. य is missing in A. उत्साहय Sy.
३८. अतो हेतोर्हे स्तोतः ! त्वमपि Sy.

VII. 32.

**मो षु त्वा वाघतंश्चनारे अस्मन्नि रीरमन् ।**
**आरात्ताच्चित्सधमादं न आ गंहीह वा सन्नुपं श्रुधि ॥ १ ॥**

[1] मो [2] षु ।

१. मो षु त्वा' इति सप्तविंशत्यृचं पञ्चदशं सूक्तम् । अत्रेयमनुक्रमणिका—'मो षु सप्ताधिका प्रागाथं तृतीया द्विपदा सौदासैरग्नौ प्रक्षिप्यमाणा शक्तिरन्त्यं प्रगाथमालेभे सोऽर्धर्च उक्तेऽदह्यत । तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकं वसिष्ठस्यैव हतपुत्रस्यार्षमिति ताण्डकम्' (KSA. 35. 32. p. 25.) इति । मण्डलद्रष्टा वसिष्ठ ऋषिः, 'इन्द्र क्रतुं नः' इति प्रगाथस्यार्धर्चस्य च वसिष्ठपुत्रः शक्तिर्वसिष्ठो वा । इन्द्रो देवता । अयुजो बृहत्यो युजः सतोबृहत्यः । तृतीया तु द्विपदा विराट् । महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तम् । तत्र द्विपदां 'अभि त्वा शूर' इत्येतं राथन्तरं प्रगाथं 'नकिः सुदासः' इति प्रगाथञ्च वर्जयेत् । तथैव पञ्चमारण्यके सूत्रितम्—'मो षु त्वा वाघतश्चनेत्येतस्य द्विपदां चोद्धरति राथन्तरं प्रगाथमथ हास्य नकिः सुदासो रथमित्येतं प्रगाथमुद्धृत्य त्वामिदा ह्यो नर इत्येतं प्रगाथं प्रत्यवदधाति (AA. 5. 2. 4.) इति । चातुर्विंशिकेऽहनि पञ्चमे ऽहनि च निष्केवल्ये 'मो षु त्वा वाघतः' इति प्रगाथः सद्विपदः । सूत्रितञ्च—'मो षु त्वा वाघतश्चनेति सद्विपद उपसमस्येद्द्विपदाम्' (ÂSS. 7. 3.) इति चातुर्विंशिकेऽहनि मरुत्वतीये प्राकृतान्मरुत्वतीयात् प्रगाथादनन्तरं 'नकिः सुदासः इति प्रगाथं शंसेत् । पृष्ठ्याभिप्लवषडहयोस्तृतीये षष्ठेऽहनि चायं प्रगाथः । तथैव सूत्रितम्—'नकिः सुदासो रथमिति मरुत्वतीया ऊर्ध्वं नित्यादिति । एवं स्थितान् प्रगाथान् पृष्ठ्याभिप्लवयोरन्वहं पुनः पुनरावर्तयेयुः (ÂSS. 7. 3.) इति । अग्निष्टोमे माध्यन्दिनसवनेऽच्छावाकशस्त्रे 'उदिन्न्वस्य रिच्यते' इति प्रगाथः । तथा च सूत्रितम्—'उदिन्न्वस्य रिच्यते भूय इत्' (ÂSS. 5. 16.) इति । अग्निष्टोमे माध्यन्दिनसवने मैत्रावरुणशस्त्रे 'कस्तमिन्द्र' इति प्रगाथः । सूत्रितञ्च—'कस्तमिन्द्र त्वावसुं सद्यो ह जातः' (ÂSS. 5. 16.) इति । चातुर्विंशिकेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रस्यायं प्रगाथः । अहर्गणेष्वपि द्वितीयादिष्वहःसु । सूत्रितञ्च—'कस्तमिन्द्र त्वावसुं कन्नव्यो अतसीनाम्' (ÂSS. 7. 4.) इति । 'आरम्भणीयाः पर्यासान् कद्वतो ऽहरहःशस्यानीति होत्रकाः' (ÂSS. 7. 1.) इति । पृष्ठ्यषडहस्य तृतीयेऽहनि निष्केवल्ये वैरूपसामपक्षे 'यदिन्द्र यावतः इत्यनुरूपस्तृचः । सूत्रितञ्च—'यदिन्द्र यावतस्त्वमिति प्रगाथौ स्तोत्रियानुरूपौ' (ÂSS. 7. 10.) इति । अग्निष्टोमे चातुर्विंशिकेऽहनि मध्यन्दिनसवनेऽच्छावाकशस्त्रे 'तरणिरित्सिषासति' इति वैकल्पिकस्तृचः । सूत्रितञ्च—'तरोभिर्वो विदद्वसुं तरणिरित्सिषासति' (ÂSS. 7. 4.) इति । अग्निष्टोमे निष्केवल्यशस्त्रे रथन्तरसामपक्षे 'अभि त्वा शूर' इति प्रगाथः स्तोत्रियः । सूत्रितञ्च 'अभि त्वा शूर नोनुमो ऽभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ' (ÂSS. 5. 15.) इति । आश्विनशस्त्रेऽप्ययं प्रगाथः । तथैव सूत्रितञ्च—'अभि त्वा शूर नोनुमो बहवः सूरचक्षस इति प्रगाथाः' (ÂSS. 6. 5.) इति । महाव्रते निष्केवल्ये दक्षिणपक्षेऽयं प्रगाथः । तथैव पञ्चमारण्यके सूत्रितम्—'अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथन्तरस्य स्तोत्रियानुरूपौ प्रगाथौ' (AA. 5. 8.) इति । आश्विनशस्त्रे 'इन्द्र क्रतुं नः' इति प्रगाथः । सूत्रितञ्च—'इन्द्र क्रतुं न आ भरामि त्वा शूर नोनुमः' (ÂSS. 6. 5.) इति । चातुर्विंशिकेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रे ऽयं वैकल्पिकः स्तोत्रियः प्रगाथः । सूत्रितञ्च—'इन्द्र क्रतुं न आ भरेन्द्र ज्येष्ठं न आ भर' (ÂSS. 7. 4.) इति Sy.

२. मोष्ठं A.

मैव[1]। त्वाम्[2]। अश्वाः[3]। दूरे। अस्मत्ताः। निरमयन्तु[4]। दूरादस्मत्[5]। अपि[6]। अस्माकम्[7]। यज्ञम्। आगच्छ। इह[8]। एव[9]। सत्[10]। स्तोत्रमुपश्शृण्विति[11]।[12]

**इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते ।**
**इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥ २ ॥**

इमे हि ते। इमे। हि। ते[13]। स्तोत्रकृतः[14]। सुते[15] सोमे। सह। मधूनि[16]। व[17]। मक्षिकाः। पर्युपवि-शन्ति[18]। इन्द्रे। अभिलषितकामम्[19]। धनकामाः। स्तोतारः। रथे। इव। पादम्। आदधुः[20]।

**रायस्कामो वज्रहस्तं सुदक्षिणं पुत्रो न पितरं हुवे ॥ ३ ॥**

रायस्कामः। धनकामः सन्नहम्। वज्रहस्तम्[21]। शोभनदक्षिणं शोभनदानम्। पुत्रः। इव। पित-रम्। ह्वयामीति, सेयत्त्विवदा[22] विराडिति।

**इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।**
**ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥ ४ ॥**

इम इन्द्राय[23]। इमे। इन्द्राय[24]। सुताः[25]। सोमाः। दधिमिश्रणाः[26]। तान्[27]। आयाहि[28]। मदाय[29]। पातुम्[30]। वज्रहस्त[31]! अश्वाभ्याम्। यज्ञम्[32]। प्रति[33]।

---

१. न Sy. २. हे इन्द्र ! त्वया Sy.
३. यजमानाः Sy. ४. नितराम् Sy.
५. अतस्त्वं दूरे वर्तमानः Sy. ६. अवि A.
७. अस्मदीयम् Sy. ८. अत्र Sy.
९. अपि वा Sy. १०. सन् is suggested for सत् ॥ विद्यमानः Sy.
११. ०श्शृण्वति M. अस्मदीयं स्तोत्रमुपश्शृणु Sy.
१२. VM. ignores सु and चन ॥ चन अपि Sy. १३. ते is missing in M. हे इन्द्र ! त्वदर्थम् Sy.
१४. The rest of the commentary from स्तोत्रकृतः up to शोभनदानम् in RV. 7. 32. 3. is missing in A.
१५. अभिषुते Sy.
१६. मधुनि is suggested for मधूनि ।
१७. इव is suggested for व ।
१८. अथ परोक्षस्तुतिः Sy. १९. इष्टम् Sy.
२०. समर्पयन्ति Sy. २१. वज्रहस्तमिन्द्रम् Sy.
२२. सेयत्विवदा A. सेयं द्विपदा is suggested for सेयत्त्विवदा। २३. इव इन्द्राय A.
२४. इन्द्राय तुभ्यम् Sy. २५. सुता बभूवुः Sy.
२६. दासिमिश्शृणाः A. २७. सोमान् Sy.
२८. आगच्छ Sy. २९. मदार्थम् Sy.
३०. पातम् M. पानाय Sy. ३१. ०हस्ता M.
३२. यज्ञसदनम् Sy.
३३. अभि Sy.

श्रवुच्छ्रुत्कर्णईयते वसूनां नू चिन्नो मर्धिषुद्गिरः ।
सुद्यश्चिद्यः सुहस्राणि शुता ददुन्नकिर्दित्सन्तुमा मिनत् ॥ ५ ॥

श्रवत्[1] । श्रवत्[2] । शृण्वत्कर्णः[3] । आगच्छति[4] । वसूनां[5] लाभाय सः । क्षिप्रम्[6] । अस्माकं[7] शत्रून् । परुषस्य[8] वक्तृन् । हिनस्तु[9] । सद्यः[10] । एव । यः । सहस्राणि । शतानि च । प्रयच्छति[11] । तत्र कश्चित्[12] । दित्सन्तम्[13] । आहिनस्तु निरुणद्धु[14]विति[15] ।

स वीरो अप्रतिष्कुत इन्द्रेण शूशुवे नृभिः ।
यस्ते गभीरा सवनानि वृत्रहन्त्सुनोत्या च धावति ॥ ६ ॥

स वीरः । सः । वीरः । अप्रतिकृतः[16] सन् । इन्द्रप्रसादात्[17] । नृभिः[18] पुत्रादिभिः । वर्धते[19] । यः[20] । ते[21] । गम्भीराणि । सवनानि[22] । वृत्रहन् । अभिषुणोति । आधावति[23] । च त्वामिति

भवा वरूथं मघवन्मघोनां यत्समजासि शर्धतः ।
वि त्वाहतस्य वेदनं भजेमह्या दूणाशो भरा गयम् ॥ ७ ॥

भवा वरूथम्[24] । भव । कवचम्[25] । मघवन्[26] । धनवतामस्माकम्[27] । यदा[28] । वेगं कुर्वाणानस्मान्[29] युद्धे । सम्प्रेरयसि[30] । विभजेमहि[31] वयम् । त्वया[32] हतस्य । धनम् । आहर[33] । केनचिदपि नाशयितुमशक्यस्त्वम्[34] । गृहमस्माकम्[35] ।

---

१. The *Pratīka* is supplied by the Editor. २. शृणोतु Sy.
३. त् is missing in A. याच्ञाश्रवणरूपकर्ण इन्द्रः Sy: ४. याचते Sy ५. वसूनि Sy. ६. नैव Sy. ७. अस्मदीयाः Sy.
८. पुरुष० A. याच्ञा is वाक्यानि Sy.
९. हिनस्तु अश्रवणेन याच्ञावाक्यानि निष्फलानि (न) करोत्वित्यर्थः Sy.
१०. अपि चेन्द्रः याच्ञानन्तरमेव Sy.
११. ०च्छति A. प्रयच्छेत् Sy.
१२. कश्चि A. कश्चिदपि Sy.
१३. दातुमिच्छन्तं तमिन्द्रम् Sy.
१४. ०नस्तु न निरु० M. हिंस्यात् । Sy. १५. VM. ignores वित् ॥
१६. ति is missing in M कदाप्यप्रतिगतोऽप्रतिशब्दितो वा भवेत् Sy.
१७. इन्द्रेण हेतुना Sy. १८. परिचारकैः Sy.
१९. उपगम्यते । श्वयतिर्गतिकर्मा Sy.
२०. पुमान् Sy. २१. त्वदर्थम् Sy.
२२. सोमान् Sy. २३. त्वां स्तुतिभिरुपधावति च Sy. २४. भवा रूपम् A. २५. उपद्रवाणां वारकं वर्म Sy. २६. हे धनवन्निन्द्र ! Sy. २७. धनेव० A. हवि मताम् Sy.
२८. त्वम् Sy. २९. उत्सहमानाञ्छत्रून् Sy.
३०. सम्प्रेरयेः Sy. ३१. विशेषेण लभेमहि Sy.
३२. अपि च त्वयाहतस्य शत्रोः Sy.
३३. अस्मभ्यमाहर Sy.
३४. The passage beginning with धनम् and ending with ०शक्यस्त्वम् is missing in M. यितुम० is suggested for यितम०
३५. ग्रह० A.

सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे ।
पचंता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥ ८ ॥

सुनोत । सुनुत[1] । सोमस्य पात्रे । सोमम् । इन्द्राय । वज्रिणे । पचत[2] । पक्तव्यांश्चरून्[3] पुरोडाशांश्च । रक्षणाय[4] । कृणुध्वम्[5] । एवैतत् । प्रयच्छन्[6] । एवेन्द्र[7] । प्रयच्छते[8] । सुखं[9] भवति ।

मा स्रेधत सोमिनो दक्षता महे कृणुध्वं राय आतुजे ।
तरणिरिज्जयति क्षेति पुष्यति न देवासः कवत्नवे ॥ ९ ॥

मा स्रेधत । मा । क्षीणा भवत[10] । महे[11], सोमिनः[12] । अपि तर्हि[13], उत्साहं कुरुत[14] । महते धनाय । कृणुध्वं[15] कर्म । धनाय[16] । शत्रूणामाहन्तृणे[17] । क्षिप्रकारी[18] । एव पुरुषः[19] । शत्रून् जयति । सुखञ्च निवसति । पुष्यति च प्रजया पशुभिः । यः कुत्सितं[20] कर्मातनोति स कपर्तुरित्याहुः[21], न, तस्मै । देवा अभ्युदयमावहन्ति[22] ।

नकिः सुदासो रथं पर्यास न रीरमत् ।
इन्द्रो यस्याविता यस्य मरुतो गमत्स गोमति व्रजे ॥ १० ॥

नकिः[23] । नकि ह कश्चित्[24] । शोभनदानस्य पैजवनस्य[25] राज्ञः । रथम् । पर्यस्यति । न च रथं युद्धे प्रवृत्ते ।

---

१. हे मदीयाः पुरुषाः ! अभिषुणुत Sy.
२. वचत A.
३. वक्तव्यां चूरून् A.
४. अवसे इन्द्रं तर्पयितुम् Sy.
५. इन्द्रप्रियकराणि कर्माणि च कुरुतैव Sy.
६. यजमानाय प्रयच्छन् Sy.
७. एवेन्द्रः is suggested for एवेन्द्र ।
८. पृणते हवींषीति शेषः Sy.
९. इन्द्रो हि मयः सुखम् Sy.
१०. क्षिणा भवतं A. हे मदीया जनाः ! . . . हिंसिष्ट Sy.
११. महे is explained a little further as महते । It should come immediately before महते ।
१२. सोमानोऽपि A. सोमवतो यागात् Sy.
१३. तर्हि A.
१४. यागादि कर्तुमुत्सहध्वं च Sy.
१५. कर्माणि कुरुत च Sy.
१६. धनलाभार्थम् Sy.
१७. ०महन्त्रिणे M. ०हन्त्रे is suggested for ०हन्तृणे ।। तुजिर्हिंसाकर्मा दानकर्मा वा शत्रूणामभिहिंसकाय धनानां प्रदात्रे वा Sy.
१८. कर्मसु त्वरित एव Sy.
१९. पुष्टो भवति Sy.
२०. यत्कुत्सि० M.
२१. कलर्तुरि० M. कवत्नुरि० is suggested for कपर्तुरि० ।। कवत्नवे कुत्सितक्रियायै । कवोपसृष्टस्यातेः सातत्यगमनकर्मणो रूपं कवत्नुरिति Sy.
२२. ०वहति A. देवा भवन्तीति शेषः । सुखप्राप्तये भवन्तीत्यर्थः Sy.
२३. कि A.
२४. नकिर्न क० is suggested for नकि ह क० ।
२५. वैजव० A. शोभनदानस्य यजमानस्य Sy.

मुपरमयति[1]। इन्द्रः। यस्य। रक्षिता भवति। यस्य च। मरुतः[2]। गच्छतु[3]। सः। गोमन्तम्[4]। व्रजं[5] शत्रूणामिति।

**गम॒द्वाजं॑ वा॒जय॑न्निन्द्र॒ मर्त्यो॒ यस्य॒ त्वम॑वि॒ता भुवः॑ ।**
**अ॒स्माकं॑ बोध्यवि॒ता रथा॑नाम॒स्माकं॑ शूर नृ॒णाम् ॥ ११ ॥**

गमद्वाजम् । गच्छति[6] । अन्नम् । युद्धं कुर्वन्[7] । इन्द्र ! मर्त्यः । यस्य[8] । त्वम् । रक्षिता । अभवः[9] । तथा सत्यस्माकम्[10] । रथानाम् । नृणाञ्च[11] । अपिता[12] भवामीति । शूर[13] ! बुध्यस्व[14] बुधेरन्त्यस्य[15] धकारस्य लोपश्छान्दसः[16] ।

**उदिन्न्व॑स्य रिच्यते॒ऽंशो॒ धनं॒ न जि॒ग्युषः॑ ।**
**य इन्द्रो॒ हरि॑वा॒न्न द॑भन्ति॒ तं रिपो॒ दक्षं॑ दधाति सो॒मिनि॑ ॥ १२ ॥**

उदित्[17] । उद्रिच्यते[18] । इन्द्रस्य त्रिष्वपि[19] सवनेऽन्वितस्य[20] । अंशः[21] । धनम् । इव । शत्रुं[22] जयतः । यः । इन्द्रः । हरिवान् । नू[23] । हिंसन्ति । तम्[24] । रिपवः । किञ्चायं बलम् । निदधाति[25] । यजमाने[26] ।

---

१. नुपर० ॥ M. उपर० is suggested for सुपर० ॥ आत्मार्थं न कश्चिदेनं गृह्णातीत्यर्थः Sy.
२. मरुतोऽवितारः Sy.
३. गच्छेत् Sy.
४. गोयुक्ते Sy.
५. गोष्ठे Sy.
६. गच्छेत् Sy.
७. स्तोत्रेण त्वां बलिनं कुर्वन् Sy.
८. मर्त्यस्य Sy.
९. भवेः Sy.
१०. वसिष्ठानाम् Sy.
११. पुत्रादीनां च Sy
१२. पिता M.
अविता is suggested for अपिता ॥ रक्षिता Sy.
१३. अपि च हे शूर ! Sy.
१४. बोधि भव । भवतेर्लोटि रूपम् । भकारस्य बकारश्छान्दसः Sy.
Both VM. and Sy. are wrong in explaining the formation of बोधि which is an aorist form of बुध् and is used in the sense of the imperative Cf. VM's commentary on RV. 7. 32. 25. लोडर्थे लुङ्
१५. बुद्धेर० M. The reading is doubtful.
१६. VM. explains अस्माकम् once only.
१७. उदि A.
१८. दिच्यते A. अतिरिच्यतेऽन्येभ्यो ऽपि देवेभ्यः । इन्द्रस्य त्रिष्वपि सवनेषु सोमपानमस्ति माध्यन्दिनं हि सर्वमैन्द्रमिति Sy.
१९. तृष्वपि **A.**
२०. सवनेष्वन्वि० is suggested for सवनेऽन्वि०
२१. यज्ञे सोमस्य भागः Sy.
२२. शत्रून् M.
जितवतः Sy.
२३. नू नू is missing in A. न is suggested for नू ।
२४. किं M.
२५. सन्दधाति Sy.
२६. VM. ignores इत् and नु ॥ उदिन्न्विति त्रयः पूरणाः Sy.

**मन्त्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा ।**
**पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवत् ॥ १३ ॥**

मन्त्रमखर्वम्[१] । स्तोत्रम् । अन्यूनम्[२] । हृदये सुष्ठु निहितम्[३] । सुरूपम्[४] । आधत्त[५] स्तोतारः ! देवे-[६]ष्विन्द्रे[७] तदनुचरेषु । बह्व्यः[८] । अपि । प्रसिद्धयः[९] । तम् । न[१०] । तरन्ति[११] । यः[१२] । इन्द्रे[१३] । कर्मणा[१४] । भवति[१५] कर्म कुर्व-न्निन्द्रसमीपं गच्छति, 'प्रसिति[१६] प्रसयनात्[१७] तन्तिर्वा[१८] जालं वा' इत्युक्तमिति[१९] ।

**कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति ।**
**श्रद्धा इत्ते मघवन्पार्ये दिवि वाजी वाजं सिषासति ॥ १४ ॥**

कस्तमिन्द्र । त्वं वासयिता यस्य स त्वावसु[२०] कः[२१] । तम् । इन्द्र[२२] ! त्वावसुम्[२३] । आधर्षयति[२४] । मर्त्य[२५] । श्रद्धया[२६] । एव । तुभ्यम्[२७] । मघवन् ! पारभवे[२८] । अह्नि यस्मिन्नहनि[२९] युद्धं सन्तिष्ठते तस्मिन् । हविष्मान्[३०] । अन्नम्[३१] । प्रदातुमिच्छति[३२] यदहरेव शत्रुं जित्वा युद्धं संस्थापयति तदहर्पार्यमुच्यत[३३] इति ।

---

१. मन्त्रमर्वम् A.
२. हे जनाः ! अनल्पम् Sy.
३. सुविहितम् Sy.
४. शोभनरूपम् Sy.
५. विधत्त Sy.
६. रः देवेषु is missing in M.
७. यजनीयेषु देवेषु मध्ये इन्द्राय Sy.
८. बह्वोऽपि A.
९. प्रसिद्धतयः A. प्रसितयः M. is suggested for प्रसिद्धयः ॥ पाशादीनि बन्धनानि Sy.
१०. चनेति समुदायो नेत्यर्थे वर्तते Sy.
११. तरन्ति । व्याप्नुवन्तीत्यर्थः Sy.
१२. जनः Sy.
१३. नन्द्रे A. इन्द्रस्य चित्ते Sy.
१४. स्तुत्यादिरूपेण Sy.
१५. भवेत् Sy.
१६. ०तिः प्र० is suggested for ०ति प्र०
१७. ०सयन्नाक् A. ०सयनात् is suggested for ०सयन्नात्
१८. तन्तिर्वा A. तन्तुर्वा N.
१९. N. 6. 12. The passage प्रसितिः प्रसयनात् तन्तिर्वा जालं वा should immediately follow प्रसिद्धयः (प्रसितयः) and precede तम्
२०. ०वसुः कः is suggested for ०वसु कः ॥ The passage त्वं वा० . . . वसुः should immediately follow कः and precede तम्
२१. मर्त्यः Sy.
२२. हे इन्द्र ! तव चित्ते यो भवेत् Sy.
२३. त्वं वसुर्व्यापको यस्येति बहुव्रीहिः । ततं जनम् Sy.
२४. आधर्षेत् Sy.
२५. मर्त्यः is suggested for मर्त्य ।
२६. यः श्रद्धया युक्तः सन् Sy.
२७. त्वदर्थम् Sy.
२८. पराभवे M. पारभावे is suggested for पारभवे ॥ सौत्ये Sy.
२९. पार्ये दिवि सौत्येऽहनि Sy.
३०. हविष्मान् भवेत् Sy.
३१. बलं वा Sy.
३२. ०तु मच्छ० A. सेवते Sy.
३३. ०ह वार्य० A. ०हः पार्यम् is suggested. The passage यदहः. . . मुच्यते should immediately follow पारभवे and precede अह्नि

मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥ १५ ॥

मघोनः । धनवतः[१] । युद्धेषु । चोदय[२] । ये[३] । प्रियाणि । धनानि । तेभ्यो युष्मभ्यं प्रयच्छन्ति । तव । प्रणयनेन । हर्यश्व ! वयं सूरिभिः[४] पुत्रादिभिः सह । विश्वानि[५] । दुरितानि[६] । अतितरेम[७] ।[८]

तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥ १६ ॥

तवेदिन्द्र[९] । तव । एव । इन्द्र[१०] ! अवमम्[११] । धनं पार्थिवम् । त्वमेव । आन्तरिक्षं[१२] वसु । पुष्यसि । त्वमेव दिव्यस्य[१३] धनस्य । ईशिषे । सत्यमेव । सर्वस्य । न केचित्[१४] । त्वा[१५] शत्रूणाम् । गोषु[१६] प्रवृत्तम् । वारयन्ति ।

त्वं विश्वस्य धनदा असि श्रुतो य इं भवन्त्याजयः ।
तवायं विश्वः पुरुहूत पार्थिवोऽवस्युर्नाम भिक्षते ॥ १७ ॥

त्वं विश्वस्य । त्वम्[१७] । सर्वस्य[१८] । धनस्य दाता । भवसि । विश्रुतः[१९] । ये[२०] । इमे । सङ्ग्रामाः[२१] । भवन्ति तेषु[२२] प्रवृत्तस्य विश्वस्येति । तव[२३] । अयम् । विश्व[२४] । पुरुहूत ! पार्थिवो जनः । रक्षणमिच्छन्[२५] । नमनम्[२६] । याचते[२७] ।

---

१. हे इन्द्र ! धनवतस्ते त्वदर्थमित्यर्थः Sy.
२. तान् जनान् प्रेरय Sy.
३. जनाः Sy.
४. स्यरिभिः A. स्तोतृभिः पुत्रादिभिः सार्धम् Sy.
५. विश्वादि A.
६. दुरितान् A.
७. अतरेमेति A.
८. VM. ignores स्म.
९. दिन्द्रम् A.
१०. इन्द्रो वमं A.
११. अधमं त्रपुसीसादिकम् । यद्वा भौमं वस्ववमम्
१२. रजतहिरण्यादिकमान्तरिक्षं वा Sy.
१३. द्रव्यस्य M. उत्तमस्यापि रत्नादेर्दिव्यस्य वा वसुनः Sy.
१४. केऽपि न Sy.
१५. अपि च त्वाम् Sy.
१६. गोष्ठं A. गोषु निमित्तेषु
१७. हे इन्द्र ! त्वम् Sy.
१८. सर्वस्य स्तोतुर्यजमानस्य वा Sy.
१९. प्रसिद्धः Sy.
२०. एते Sy.
२१. युद्धानि Sy.
२२. तेष्वपि धनदाः श्रुतो ऽसि Sy.
२३. त्वत्त इत्यर्थः Sy.
२४. विश्वः is suggested for विश्व ॥ सर्वः Sy.
२५. रक्षमिच्छन् Sy.
२६. अन्नमुदकं वा Sy. बर्हिः नाम इत्युदकनामसु Ngh. I. 12.
२७. याचते । त्वामेवेति शेषः

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दिधिषेय रदावसो न पापत्वाय रासीय ॥ १८ ॥

यदिन्द्र यावतः[1] । यदि[2] । अहम् । इन्द्र ! यावतो धनस्य । त्वमीशिषे । तापक[3] । ईशिय[4] । ततो मां यः स्तौति तम्[5] । एव धनप्रदानेन । अहं धारयेयम्[6] । रुतिर्विलेखनकर्मा[7] । 'इन्द्रोऽस्माकमरदद्वज्रबाहुः'[8] इति मन्त्रः, शत्रूणां धनानि यो विलिखति स दरावसु[9] । तम्[10] । पापत्वाय[11] । अहं दत्यमिति[12] ।

शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे ।
नहि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता चन ॥ १९ ॥

शिक्षेयम्[13] । प्रयच्छेयम् । एव । त्वां स्तुवते[14] । अन्वहम्[15] । धनानि[16] । क्वचिदपि ज्ञानाय[17] । नहि[18] । त्वत्तः । अन्यत् । मघवन् ! अस्माकम् । अस्ति । बान्धवन्[19] । त्वदतिरिक्तः[20] प्रशास्यतरः[21] । पिता[22] । चास्माकं नास्ति यस्मात्त्वमेव पालयसि[23] ।

---

१. ०न्द्रा या० M. २. यद्यतः Sy.

३. तावकम् M. तावतः is suggested for तापक ॥ एतावत् । षष्ठ्या लुक् । एतावतो धनस्य Sy.

४. ईशि M. ईशीय is suggested for ईशिय ॥ ईश्वरो भवेयम् Sy.

५. अस्मदीयं स्तोतारम् Sy.

६. ०येय A.

७. तिर्विले० A. रदिः is suggested for रुतिः ।

८. ०मरुद्वज्र० A. ०मरर्वज्रं बाहुः M.

९. रदवसु is suggested for दरावसु । रदति ददाति वसूनीति रदवसुः Sy.

१०. न is suggested for त ।

११. पापं त्वया M.

१२. दत्तमिति M. दद्यामिति is suggested for दत्यमिति ।

१३. दद्याम् Sy.

१४. पूजयते जनाय Sy. १५. प्रतिदिनम् Sy.

१६. A. adds 'कामास्त्वामभिष्टुमो वर्धितर्हि क्षिप्रं वासयितस्तत्र स्तोत्रम् ॥ मान । मस्मा शिन्दिते परुषं वक्रे चर्यस्त्वं-अशं दर्यो दात्रे च त्वय्येव च मम दानादिकं कर्म भवतु' and M. कामास्त्वामभिष्टुमो वर्धितर्हि क्षिप्रं पितर after धनानि, Cf. the commentary on 7. 31. 4., 5.

१७. ज्ञाताय is suggested for ज्ञानाय ॥ कुत्रचिद्विद्यमानः कुहचिदित्, तस्मै यत्र क्वापि विद्यमानायेत्यर्थः Sy.

१८. एवमिन्द्रस्य वाक्यं श्रुत्वा सन्तुष्ट ऋषिर्वदति Sy.

१९. बान्धवम् is suggested for बांधवन् ॥ ज्ञातेयम् Sy. २०. तद्यतिरिक्त A.

२१. The passage beginning with ज्ञाताय and ending with प्रशस्यतरः is missing in M. प्रशस्यः Sy.

२२. पालयिता च त्वदन्यो नास्तीत्यर्थः Sy.

२३. VM. ignores आ ॥ आकारः पूरणः Sy.

तरणिरित्सिषासति वाजं पुरंध्या युजा ।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्र्वम् ॥ २० ॥

तरणिः[1] । क्षिप्रकारी । एवेन्द्रः । सम्भक्तुमिच्छति[2] । सङ्ग्रामम्[3] । प्रज्ञया[4] । सहायभूतया[5] । तथा सति युष्मदर्थमहम्[6] । आनयामि[7] । पुरुहूतम्[8] । इन्द्रम् । स्तुत्या । नेमिम्[9] । तक्षेव[10] । शोभनकाष्ठम्[11] ।

न दुष्टुती मर्त्यो विन्दते वसु न स्रेधन्तं रयिर्नशत् ।
सुशक्तिरिन्मघवन् तुभ्यं मावते देष्णं यत्पार्ये दिवि ॥ २१ ॥

न दुष्टुती[12] । न । दुष्टेन[13] स्तोत्रेण मर्त्यः[14] । विन्दते[15] । धनम् । स्रेधतिरुपक्षयकर्मा[16], न, उपक्षीयमाणमुपहरत[17] स्तोत्रम्[18] । धनम् । व्याप्नोति । शोभनदानम्[19] । एव । मत्सदृशाय स्तोत्रे देष्णं[20] धनम् । यत् । पारभावे[21] । दिचि[22] भवत्यनायासेन त्वं[23] देयं धनं स्तोत्रे प्रयच्छसीति[24] ।

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ २२ ॥

अभि त्वा । अभिष्टुमः[25] । त्वाम् । शूर[26] ! यथाऽदुग्धाः[27] । धेनूर्दोहनार्थमुपस्तुवन्ति[28] तस्मात्प्रादा[29][30]—

---

१. तन्निरि A. २. स्तुत्यादौ कर्मणि त्वरित एवंपुमान् Sy. ३. सम्भजते Sy. ४. अन्नम् Sy. ५. महत्या धिया Sy. ६. ०भूताय A.
७. वस्त्वाम् Sy. ८. बहुभिराहूतम् Sy. ९. चक्रवलयम् Sy. १०. यथा वर्धकिर्दारुनेमिमानमयते तद्वदित्यर्थः Sy. ११. शोभनदारुम् Sy.
१२. नुष्ठती A. १३. नुष्टेन A. दुष्टुत्या Sy.
१४. मनुष्यः Sy.
१५. इन्द्रं स्तुवन्नेव वसु लभते इत्यर्थः Sy.
१६. सेधति० M. १७. ०रुपक्षयकर्मा A. The passage स्रेधति ...कर्मा should immediately follow उपक्षीयमाणम्
१८. अपहरन्तम् is suggested for उपहरत ॥ हिंसन्तमिन्द्रविषयस्तुत्यादिकर्माण्यकुर्वन्तमित्यर्थः Sy. १९. सुकर्म विन्दत इति व्यवहितमप्यनुषज्यतेऽध्याहारस्यान्तिकत्वात् Sy. २०. दातव्यम् Sy. २१. सौत्ये Sy.
२२. दिवि is missing in M. दिवि is suggested for दिचि ॥ दिवसे Sy. २३. त्वदेयं (त्वदीयं) M.
२४. VM. ignores मघवन् and तुभ्यम् ॥ हे मघवन् ! त्वया तुभ्यं त्वत्तः Sy.
२५. भृशमभिष्टुमः Sy. आभिमुख्येनात्यन्तं स्तुमः । 'नु स्तुतौ' यङ्लुगन्तम् Mah. आभिमुख्येन... नोनुमो नमामः U. आभिमुख्येनात्यर्थं नुमः स्तुमः । नौतेर्यङ्लुगन्ताल्लट् २६. रे शूर इन्द्र ! Mah. U. हे शूर विक्रान्त इन्द्र BB.
२७. क्षीरपूर्णोधस्त्वेन वर्तन्ते तद्वत् सोमपूर्णचमसत्वेन वर्तमाना वयम् Sy. तत्र दृष्टान्तः।...यथा अदुग्धाः Mah. अदुग्धा धेनव इव BB.
२८. गावः Mah. यथा वत्सान् प्रत्यदुग्धा धेनवः U.
२९. वत्सान् स्तुवन्ति Mah. नमन्ति, एवं त्वा प्रति हविर्भिः स्तोत्रैः शस्त्रैश्चाभिमुख्येन नमामः । यद्वा 'णु स्तुतौ' अयमत्र धातुः शब्दसारूप्यात् । अभिनोनुमोऽभिष्टुमस्त्वां कृत्यकृत्याः सन्तः स्तुतस्तोत्राः कृतशस्त्रा उद्यतहविष्काः । कथमिव ? अदुग्धा इव धेनवः । यथा अदुग्धा अकृतकृत्या धेनवो वत्समभितुष्टुवुरेवम् U. यथा तावद् वत्से, आभिमुख्येन शब्दयन्ति BB.
३०. तस्मा प्रदा ०A.

दित्युन्नीय वन्दमाना उपस्तुवन्तः पशून् दुहन्ति' इति ब्राह्मणम् । ईशानम्[1] । अस्य । जङ्गमस्य । सर्वस्य द्रष्टारम्[2] । ईशानम्[3] । इन्द्र ! तस्थुषश्च[4][5] ।

**न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।**
**अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ २३ ॥**

न त्वावान्[6] । न । त्वत्सदृशः । अन्यः[7] । दिव्यः[8] । पार्थिवो[9] वा सम्प्रत्यस्ति । नापि । जातः । नापि । जनिष्यते[10] । अश्वादीनिच्छन्तः[11] । तं त्वा । वयं हवामहे[12] । हविष्मन्तः[13][14] ।

**अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः ।**
**पुरूवसुर्हि मघवन्त्सनादसि भरेभरे च हव्यः ॥ २४ ॥**

अभी षतः[15] । अभ्याभर[16] । सत[17] प्रशस्तस्य वसिष्ठस्य । तत्[18] । इन्द्र ! धनम् । ज्यायान्[19] । कनीयसो[20] मम । बहुधनः । हि । मघवन् ! चिरादारभ्य त्वम् । भवसि । सङ्ग्रामेसङ्ग्रामे[21] । च । ह्वातव्य[22] ।

---

१. णाम् A.
२. प्रभुम् Mah. कथम्भूतं त्वामभिनोनुमः ? ईशानम् U. कीदृशम् ? ईशानमीश्वरम् BB.
३. दृष्टा० A. सर्वदृशम् Sy. पश्यतीति स्वर्दृक् तम्। यद्वा स्वरादित्य इव दृश्यते स्वर्दृक् Mah. स्वः पश्यतीति स्वर्दृक् तं स्वर्दृशम्। यद्वा स्वरादित्यः, तद्वद्यो दृश्यते स स्वर्दृक् तं स्वर्दृशम् U. स्वर्गाख्यस्य परमसुखस्य द्रष्टारम् BB.
४. ईशानमिति पदस्यावृत्तिरादरार्था Sy.
५. स्थावरस्य च Sy. स्थावरस्येशानं, विश्वनियन्तारमित्यर्थः Mah स्थितवतः स्थावरस्येत्यर्थः U. स्थावरस्य च।...प त्वमिन्द्रियं वीर्यं चास्मभ्यं देहीति BB.
This stanza=YV. 27. 35.=TS. 2. 4. 14. 2.
६. त्वत्सदृशः A. त्वत्सदृशोऽस्तीति त्वावान्। सादृश्यार्थे वतुप्रत्ययः Mah.
७. न जायते Sy. अस्तीति शेषः Mah.
८. दिवि भवः Sy., Mah., U.
९. पृथिव्यां भवोऽपि Sy. पृथिवीभवश्च Mah. न च पार्थिवोऽस्तीति शेषः U.
१०. पृथिव्यां दिवि च त्रिष्वपि लोकेषु त्वत्सदृशः कश्चिन्नास्तीत्यर्थः Sy. उत्पत्स्यते Mah. U.
११. ०दीनीच्छ० A. आदि refers to गव्यन्तः ॥ अश्वानिच्छन्तः, गा इच्छन्तश्च Sy. अश्वान्कामयमानाः। ...गा इच्छन्ति गव्यन्तो गोकामाः। गवाश्वान्देहीत्यर्थः Mah. अश्वान्कामयमानाः...गाः कामयमानाः U.
१२. ह्वयामः Sy. आह्वयामः U.
१३. वाजमिच्छन्तः। इच्छायामिनिप्रत्ययः हविष्मन्तो वा Sy. अन्नवन्तो हविर्युताः Mah. वाजोऽन्नं तद्येषामस्ति ते वाजिनो हविषा संयुक्ताःसन्तः U.
१४. VM. ignores मघवन् and इन्द्र ॥ हे धनवन्निन्द्र ! Sy., Mah., U.
This stanza=YV. 27. 36.
१५. अभिषदः A.
१६. अभ्याहर M.
१७. त M. सतः is suggested for सत ॥
१८. प्रसिद्धम् Sy.
१९. हे ज्यायन्निन्द्र ! 'आमन्त्रितं पूर्वमविद्यमानवत्' इतीन्द्रपदस्याविद्यमानवद्भावात् ज्याय इत्यस्य सर्वानुदात्तत्वाभावः । नकारस्य रुत्वं व्यत्ययान्नभावो वा Sy.
२०. त्वं नीयसो मं म A. कनीयसः सतो मम Sy.
२१. सङ्ग्रामे यज्ञे वा Sy.
२२. ह्वातव्यः is suggested for ह्वातव्य ॥ हविष्यद्भवासि Sy.

**परा णुदस्व मघवन्नमित्रान्त्सुवेदा नो वसू कृधि ।**
**अस्माकं बोध्यविता महाधने भवा वृधः सखीनाम् ॥ २५ ॥**

परा णुदस्व[1] । पराणुदस्व[2] । मघवन्[3] ! शत्रून् । सुलभान्[4] । अस्माकम्[5] । धनानि । कुरु । अस्माकम् । बुध्यस्व[6] । रक्षिता भवामीति । सङ्ग्रामे[7] । भव । वर्धक[8] । सखीनाम्[9] ।

**इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।**
**शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ २६ ॥**

इन्द्र[10] । अत्र शाट्यायनकम्—'शक्तिं ह वासिष्ठं सौदासा अग्नौ प्रासुः स ह प्रास्यमानोऽनूवाच[11]—इन्द्र क्रतुं[12] न आ भर पिता पुत्रेभ्यो यथा'—इति एतावद्धेचवास्य[13] व्याहृतमास[14] । अथ ह तमग्नौ प्रासुः । अथ

---

१. णुदस्य A.

२. VM. explains परा as उपसर्ग but Sy. explains it as a noun. परा पराचीनान् Sy. ३. प्रेरय Sy.

४. सल० A. सुलभानि is suggested for सुलभान् ५. अस्मभ्यम् Sy.

६. भव Sy.

७. वाजसातौ, महाधनः, इति सङ्ग्रामनामनी Ngh. 2. 17.

८. र्धक् A. वर्धकः is suggested for वर्धक ॥ वर्धयिता च भव Sy.

९. स्तोतॄणामस्माकं वसिष्ठानाम् Sy.

१०. तत्राख्यानम् SVD. p. 130, 131.
वसिष्ठस्य सुतः शक्तिः पुष्पाद्यर्थं वनं ययौ ।
राज्ञः सुदासो दासास्तु वासिष्ठं ददृशुश्च तम् ॥१॥
विश्वामित्रप्रयुक्तैस्तु रक्षोभिर्वेष्टिताश्च ते ।
वनाग्नौ प्राक्षिपंश्चैनं देवभक्तोऽयमित्युत ॥२॥
आस्तिकोऽयं वसिष्ठस्य पुत्र इत्येव चावदन् ।
प्रक्षिप्यमाणः सोऽपश्यदिन्द्र क्रतुमिति दृचम् ॥३॥
अर्धर्चमुक्तवानाद्यं ततोऽदह्यत वह्निना ।
चिरायमाणे पुत्रे तु पुत्रस्नेहपरिप्लुतः ॥४॥
मार्गविक्षिप्तनयनो वसिष्ठोऽभ्यागमद्वनम् ।
दग्धं पुत्रमथ श्रुत्वा भूतेभ्यो शोककर्शितः ॥५॥
दृष्ट्वा तु दग्धशेषं तु शिक्षाणादि समापयत् ।
अथार्धर्चत्रयं शिष्टमवक्ष्यन् मम वै सुतः ॥६॥
अजीविष्यदयं सम्यक् स सुखी शरदां शतम् ।
इन्द्रक्रतुं दृचे शक्तिराद्येऽर्धर्चे विकल्पितः ॥७॥
ऋषिर्वसिष्ठः सूक्तस्य देवता त्विन्द्र एव हि ।
इत्युक्त्वा धृतिमालम्ब्य प्रययावाश्रमं पुनः ॥८॥
एवं तु शाट्यायनकं वदन्ति ब्राह्मणं किल ।
आद्यार्द्धर्चमेव शक्तिर्दृष्टवान् दग्ध एव सः ॥९॥
दृचं सर्वं वसिष्ठस्तु दृष्टवानिति ताण्डकम् ।
इति ब्राह्मणवैमत्यं विकल्पाय प्रदर्शितम् ॥१०॥
'सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरन्त्यं प्रगाथम्' इति सर्वानुक्रमणी (KSA. 35. 32. p. 25. वसिष्ठोऽकामयत प्रजायेयं प्रजया पशुभिरभिसौदासान् भवेयमिति (SSS. 4. 8.) आश्विने सौर्ये क्रतौ 'उदिते सौर्याणि' उदु त्यं जातवेदसमिति नव (SSS. 9. 20; 20. 21.) तथा 'प्रगाथं शंसति' इति ब्राह्मणे (KB. 18. 2.) विनियोगः DDN.

११. ०वाचे M. १२. क्रतुर्न A. M.

१३. ०वर्धेहास्य A.

१४. मासाद्य हूतामग्नौ M.

ह वसिष्ठ आजगाम। स होवाच किं मे पुत्रः प्रास्यमानोऽब्रवीदिति। तस्मै होचुः—'इन्द्र क्रतुं[1] न आ भर पिता पुत्रेभ्यो यथा' इति, एतावदेवास्य[2] व्याहृतमासीदथैनमग्नौ[3] प्रास्यन्निति। स होवाच—'शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि'—इति। यन्म एतमुत्तरमर्धर्चं[4] मे पुत्रः प्रास्यमानो वक्ष्यति[5] न चैवैनमग्नौ प्रासिष्यन्[6] सर्वमायुरेष्यत्' इति॥ ताण्डके[7] पुनः—सर्व एव प्रगाथो वासिष्ठ उक्तस्तत्र कात्यायनः—'सौदासैरग्नौ[8] प्रक्षिप्यमाणः शक्तिरन्त्यं प्रगाथमारेभे[9] सोऽर्धर्चं उक्त्वेदं[10] ह्यत। तं पुत्रोक्तं वसिष्ठः समापयत[11]'—इति शाट्यायनकम्[12]। 'वसिष्ठस्यैव हतपुत्रस्यार्षम् इति [ ताण्डकम्][13]

इन्द्र ! प्रज्ञानम्[14]। अस्माकम्[15]। आभर[16]। यथा। पिता। पुत्रेभ्यो धनं प्रयच्छति[17]। प्रयच्छ[18]। अस्मभ्यम्[19]। पुरुहूत[20] ! अस्मिन्। प्रयाणे[21]। जीवन्तो वयम्। सूर्यम्[22]। अन्वहं[23] प्राप्नुयाम।

**मा नो॒ अज्ञा॑ता वृ॒जना॑ दुरा॒ध्यो॒३॒॑ माशि॑वासो॒ अव॑ क्रमुः।**
**त्वया॑ व॒यं प्र॒वतः॒ शश्व॑तीर॒पोऽति॑ शूर तरामसि॥ २७॥**

मा नो अज्ञाताः। मा। अस्मान्[24]। अज्ञाताः। पापकृतः[25]। दुर्बुद्धयः[26]। मा च। अशिवाः शत्रवः। अवक्रमुरवक्रमणमभिभवः[27]। त्वया। वयम्[28]। प्रवणाभिमुखानि[29]। बहूनि[30]। उदकानि। शूर। अतितराम।

---

१. क्रतुर्न A. २. आत्यादावदे० A.
३. ०दथेन० A.
४. ०र्धर्चमें A.
५. ०वक्ष्य A.
६. न् is missing in M.
७. रान्दिके A. ताण्टके M.
८. ०दासेर० A. M.
९. ०गाधमा० M. ०मारेके A.
१०. उक्तेदं A. ०उक्तेऽदह्यत KSA. 35. 32. p. 25.
११. ०पयन्त A.
१२. ०यनक A.
१३. KSA. 35. 32. p. 25.
१४. कर्म प्रज्ञानं वा Sy., DDN. प्राज्ञां कर्म वा तद्विषयं कर्मैव वा BB.
१५. अस्मभ्यम् Sy., DDN., BB.
१६. अंहर A. 'हृग्रहोः' इति भत्वम् DDN.
१७. आहरति BB.
१८. धनं देहि Sy. शिक्षाण इत्यदादित्वाद् RPR. 7. 33. दीर्घे कृते प्लुताकारान्तम् RPR. 5. 28. इति णत्वम् DDN. शक्तान् कुरु BB.
१९. अस्मान् BB.
२०. हे बहुभिराहूत Sy., DDN. हे पुरुहूत त्वत्प्रसादाद् वयम् BB.
२१. यज्ञे Sy., BB.
२२. ज्योतिष्मन्तं मनुष्यलोकम् BB.
२३. प्रतिदिनं प्राप्नुयाम Sy., DDN. प्राप्नुयाम अश्नोतेश्शपो लुक् BB. This stanza=TS. 75. 74.
२४. मा। अस्मान्। अज्ञाताः is missing in A.
२५. हे इन्द्र ! अज्ञातगमनाः Sy.
२६. वावक्रतः A. हिंसकाः Sy.
२७. अवचक्रमुः Sy. २८. वसिष्ठाः Sy.
२९. प्रवणकाः सन्तः Sy. ३०. बह्वीः Sy.

VII. 33.

**श्वित्यञ्चो मा दक्षिणतस्कपर्दा धियंजिन्वासो अभि हि प्रमन्दुः ।**
**उत्तिष्ठन्वोचे परि बर्हिषो नॄन्न मे दूरादवितवे वसिष्ठाः ॥ १ ॥**

श्वित्यञ्चः[1] । कात्यायनः[2]—'संस्तवो[3] वसिष्ठस्य सपुत्रस्येन्द्रेण[4] वा संवादः'[5] इति । शौनकः—

'वसिष्ठाय सपुत्राय श्वित्यञ्चो[6] मेति संस्तवः ।

ऐन्द्रं सूक्तमिदं चैषां[7] संवादमपरे विदुः'[8] ॥इति॥

तत्रादितो नवभिर्वसिष्ठेन पुत्राः संस्तयन्ते । तत्र नूनं वसिष्ठः सपुत्रो दाशराजं याजयाञ्चकार[9] ततो यज्ञान्ते गन्तुमुद्युक्तः पुत्रानिदमाह—श्वित्यञ्चो[10] श्वेतिमानमञ्चन्तः श्वेतवर्णाः[11], काश्मीरजा हि तथावर्णा भवन्ति । माम् । दक्षिणतस्कपर्दाः[12], अत्र चूडाकरणे लोकाक्षिगृह्यम्[13]—'दक्षिणतो वसिष्ठानाम्'[14] इति । कर्मणोऽस्य प्रीणयितारः[15] । अभि । हि । प्रमन्दुः[16] । ततः प्रयाणाय यज्ञात् । उत्तिष्ठन्नहम् । नेतॄन्[17] पुत्रान् । परितः[18] । ब्रवीमि । न न[19] । मत्तः । दूरात् । गन्तुमर्हन्ति । वसिष्ठाः[20], अपि तु समीपे स्थिता वचनमिदं श्रोतुमर्हन्तीति[21] ।

---

१. 'श्वित्यञ्चः' इति चतुर्दशर्चं षोडशं सूक्तम् । अत्रेयमनुक्रमणिका—'श्वित्यञ्चः षळूना संस्तवो वसिष्ठस्य सपुत्रस्येन्द्रेण वा संवादः (KSA. 35. 33. p. 25.) इति । आदितो नवानां वसिष्ठ ऋषिः । वसिष्ठपुत्राणां स्तूयमानत्वात्त एव देवता । 'विद्युतो ज्योतिः' इत्यादिभिर्दशम्यादिभिः स्वपुत्रैर्वसिष्ठः स्तूयते । अतो वसिष्ठो देवता । त एव ऋषयः । 'या तेनोच्यते' (KSA. 2. 5. p. 1.) इति न्यायात् । अनुक्रान्तत्वात्त्रिष्टुप् । (Cf. KSA. 12. 6. p. 5.) Sy.

२. श्चित्यं च A.
श्चित्यश्च M.

३. कात्यायन A.

४. सुपुत्र० A.

५. संवाद A. A fragment of KSA. 35. 33. p. 25.

६. श्चित्यश्चो A. श्वित्यञ्चः is suggested for श्वित्यश्चो ।

७. वैषां संवाद० A.

८. BD. V. 163. Cf. 'संवादं सूक्तमैन्द्रं तु श्वित्यञ्चस्तु प्रचक्षते'

९. यः जया० A.

१०. श्चित्यं चश्चेति० A.

११. श्वित्यं श्वेतवर्णमञ्चन्तीति श्वित्यञ्चः श्वेतवर्णाइत्यर्थः Sy.

१२. दक्षिणे शिरसो भागे कपर्दश्चूडा येषां ते दक्षिणतस्कपर्दाः Sy.

१३. लोकाक्षिग्रह्य A. लौगाक्षिगृह्यम् is suggested for लोकाक्षिगृह्यम्

१४. Sy. attributes the quotation to some Smṛti which he does not specify. चूडाकर्मणि 'दक्षिणतो वसिष्ठानाम्' इति स्मर्यते ।

१५. कर्मणां पूरयितारः Sy.

१६. विद्याबलेनाभिप्राहर्षयन् Sy.

१७. नेत्रून् A.

१८. परीति पञ्चम्यर्थानुवादः Sy.

१९. One न is redundant.

२०. वसिष्ठस्य मम पुत्राः Sy.

२१. ०न्ती हि A.

दूरादिन्द्रमनयन्ना सुतेन तिरो वैशन्तमति पान्तमुग्रम् ।
पाशद्युम्नस्य वायतस्य सोमात्सुतादिन्द्रोऽवृणीता वसिष्ठान् ॥ २ ॥

दूरादिन्द्रम्[1] । दाशराजस्य सुतेन[2][3] । दूरस्थितम् । इन्द्रम् । तत आनयन्[4] । यथा तत्रत्यानां तिरोहितो भवति तथा[5] । अत्यानयन्[6] । वैशन्तं[7] देशं तस्य गृहस्य[8] स्वामिनम् । रक्षन्तम्[9] । उद्गूर्णम् । इन्द्रश्च[10] । पाशद्युम्नाख्यस्य[11] । वयतः[12] पुत्रस्य । यज्ञात्[13] । वसिष्ठान्[14] दाशराजस्य याजकान् । अवृणीत्[15][16] ।

एवेन्नु कं सिन्धुमेभिस्ततारेवेन्नु कं भेदमेभिर्जघान ।
एवेन्नु कं दाशराज्ञे सुदासं प्रावदिन्द्रो ब्रह्मणा वो वसिष्ठाः ॥ ३ ॥

एवेन्नु[17] कम् । पूर्वार्धः परोक्षः ॥ एवम्[18] । एव । क्षिप्रम्[19] । एभिर्वसिष्ठपुत्रैः स्तोतृभिः । इन्द्रः पाशद्युम्नस्य

---

१. यदा वसिष्ठस्य पुत्राः सुदासं राजानमयाजयन् तदैव पाशद्युम्नाख्योऽपि राजा सोमान् यष्टुमुद्यमं चकार । तदा ते वसिष्ठपुत्राः पाशद्युम्नं तिरस्कृत्य तदीये यागे सोमं पिबन्तमिन्द्रं मन्त्रबलेन तस्मादाच्छिद्य सुदासो यज्ञे स्थापयामासुरिति तदेतद्वृत्तान्तं कीर्तयन् वसिष्ठः स्वसुताननेन मन्त्रेण स्तौति । 'शिवत्यञ्चः षळूना संस्तवो वसिष्ठस्य सपुत्रस्य' इत्यनुक्रमणी (KSA. 35. 33. p. 25.) DDN.

२. स्य is missing in M.

३. सुदासो यज्ञेऽभिषुतेन सोमेन 'हेतुना Sy. DDN.

४. वसिष्ठा मन्त्रबलेनानीतवन्तः Sy. अनयन्नासुतेन-इत्यत्र 'पदान्तीयो ह्रस्वपूर्वो' (RPR. 6. 15.) इति नकारस्य द्वित्वम् DDN.

५. भवन्ति A. पाशद्युम्नं तिरस्कृत्य Sy. DDN.

६. ०नयत् A. दूरान्मन्त्रबलेनानीतवन्तः DDN.

७. वैशन्तः पल्वलम् । अत्र वेशन्तशब्देन सोमाधारश्चमसो लक्ष्यते तत्स्थं सोमम् Sy. तत्रस्थं सोमं वैशन्तं । 'वेशन्तहिमवद्भ्यामण्' (Pa. 4. 4. 112.) तत्र भव इत्यर्थे DDN.

८. ग्रहस्य A. ९. पिबन्तम् Sy.

१०. इन्द्रं च A. ११. पा शद्यु० A.

१२. वयतः पुत्रस्य पाशद्युम्नस्य । द्वितीयार्थे षष्ठी । वायतं पाशद्युम्नम्, अतिहाय Sy. DDN.

१३. सुदासो यज्ञेऽभिषुतात्सोमाद् हेतोः Sy. DDN.

१४. वसिष्ठस्य पुत्रान् अवृणीत पाशद्युम्नस्य सोमयागे चमसस्थं सोमं पिबन्निन्द्रस्तं पाशद्युम्नं तिरस्कृत्य मन्त्रसामर्थ्यबलेन सुदासो यज्ञ आह्वनकाले वसिष्ठानाजगामेत्यर्थः Sy. वसिष्ठस्य पुत्रान् 'अत्रिभृगुकुत्सवसिष्ठ' (Pa. 2. 4. 65.) इति बहुत्वे अणो लुक् DDN.

१५. इन्द्रोऽवृणीता-इति 'यकाराद्यक्षरं परं वकाराद्यपि०' (RPR. 2. 35.) इति वकारपरत्वादभिनिहितः । 'एकादशिद्वादशिनोः०' (RPR. 8. 36.) इति । अष्टमत्वाद्दीर्घः DDN.

१६. VM. ignores सुतात् ॥ सुदासो यज्ञेऽभिषुतात्..हेतोः Sy. १७. एवेसु कम् A.

१८. यथा पाशद्युम्नस्य सदाख्ये सोमयागे चमसस्थं सोमं पिबन्तमिन्द्रं वसिष्ठैः सुदासः प्राप्तवान् एवमेव Sy. १९. न्विति पादपूरणः Sy.

यज्ञादागन्तुम्[1] । नदीः[2] । ततार[3] । अथैवम् । एव । भेदकमेषां[4] रक्षोवर्गम् । जघान । एवम्[5] । एव । दाशराजाय[6] । सुदासं नाम रक्षणीयम् । प्रवत्[7] । हे वसिष्ठाः ! युष्माकम्[8] । स्तोत्रेण, दाशराजः सुदासः परिरक्षणाय[9] च तत्र भेदकानीन्द्रो[10] जघानेति[11] ।

**जुष्टी नरो ब्रह्मणा वः पितॄणामक्षमव्ययं न किला रिषाथ ।**
**यच्छक्वरीषु बृहता रवेणेन्द्रे शुष्ममदधाता वसिष्ठाः ॥ ४ ॥**

जुष्टी[12] नरः । प्रीतिर्भवति । हे नेतारः ! युष्माकम्[13] । स्तोत्रेण । पितॄणामिति[14], वसिष्ठ आत्मानमपरोक्षयन्नाह[15] प्रीतो भवामीति[16] । अथ स्याक्षम्[17] । अप्यरयं[18] चलयामि । न । किल यूयं कदाचित् इष्यथ[19] । यस्मात्[20] । ऋक्षुप्रयुक्तेन[21] । महता[22] । रवेण[23] । इन्द्र[24] । बलम् । निहितवन्तो[25] यूयम् । हे वसिष्ठाः ! इति ।

---

१. ०दागन्तुः A.

२. नदीम् Sy.

३. तीर्ण आसीत्, तथा च निगमान्तरम् 'अर्णांसि चित् पप्रथाना सुदासे' (RV. 7. 18. 5.) इति Sy.

४. भेदकनामकं शत्रुम् Sy

५. म् । एव is written twice in A. अथ प्रत्यक्षस्तुतिः एवमेव Sy.

६. दशभी राजभिः सह युद्धे प्रवृत्ते सति Sy.

७. प्रव (वृ) तं A. प्रावत् is suggested for प्रवत् ॥ प्रारक्षत् । तथा च निगमान्तरम्—'दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः' (RV. 7 83. 7.) इति । 'दाशराज्ञे परियत्ताय विश्वतः' (RV. 7 83. 8.) इति च Sy.

८. युष्मदीयेन Sy.

९. ज A.

१०. भेदकानिन्द्रः is suggested for भेदकानीन्द्रः ।

११. VM. explains नु and एभिः once and ignores कम् ॥ कं सुखेन Sy,

१२. जृष्टी नर A.

१३. युष्मदीयेन Sy.

१४. It goes with प्रीतिः । पितॄणामित्यनेन पारोक्ष्येण वसिष्ठस्यैव कीर्तनम् । अहं प्रीतो भवामीत्यर्थः Sy.

१५. ०रोक्षणाह A. परोक्षयन् or परोक्षवद् is suggested for अपरोक्षयन् ॥

१६. भवमिति M.

१७. Something probably रथं is missing in the mss. अथेदानीं स्वमाश्रमं गन्तुमुद्यतोऽहमक्षं रथस्याक्षम् Sy.

१८. ०स्याक्षयव्यरमं M. अव्ययं is suggested for अप्यरयं ॥ व्यययामि, लडर्थे लङ् । चालयामीत्यर्थः Sy.

१९. रिष्यथ is suggested for इष्यथ । क्षीणा भवथ Sy. २०. अस्मात् A.

२१. प्रयुक्तेन is missing in M.

२२. श्रेष्ठेन Sy.

२३. साम्ना Sy.

२४. इन्द्रे is suggested for इन्द्र ।

२५. अधारयत Sy.

**उद्द्यामिवेत्तृष्णजो नाथितासोऽदीधयुर्दाशराज्ञे वृतासः ।**
**वसिष्ठस्य स्तुवत इन्द्रो अश्रोदुरुं तृत्सुभ्यो अकृणोदु लोकम् ॥ ५ ॥**

उद्यामिवेत्[1] । उद्गीथैरस्तुवन्[2][3] । आदित्यमिव । जाततृष्णाः । वृष्णिं[4] याचमानाः । दाशराजेन[5] वृताः[6] । तस्मा इन्द्रम् । तथा वसिष्ठस्य च । स्तुवतः स्तुतिम्[7] । इन्द्रः । अश्रौषीत्[8] । विस्तीर्णम् । लोकं शत्रुहननेन । त्रित्सु-भ्यः[9] । च । अकरोत्[10] तृत्सवो दाशा इति ।[11]

**दण्डाइवेद्गोअजनास आसन्परिच्छिन्ना भरता अर्भकासः ।**
**अभवच्च पुरएता वसिष्ठ आदित्तृत्सूनां विशो अप्रथन्त ॥ ६ ॥**

दण्डा इव[12] । यथा[13] । गोअजनाः[14] । दण्डाः । परिच्छिन्नशाखा भवन्त्येवं[15] निरस्तपरिचरणाः[16] । भरतकुलजाताः[17] अर्भका[18] विश्वामित्रा अस्माकं सपत्नाः । अभवन् । तेषामेषामभवत् । च । पुरः एता । वसिष्ठः[19] । अनन्तरम्[20] । एव[21] । त्रित्सूनाम्[22] । प्रजा[23] निहितशत्रुकाः । प्रथिता अभवन्निति[24] ।[25]

**त्रयः कृण्वन्ति भुवनेषु रेतस्तिस्रः प्रजा आर्या ज्योतिरग्राः ।**
**त्रयो घर्मास उषसं सचन्ते सर्वाँ इत्ताँ अनु विदुर्वसिष्ठाः ॥ ७ ॥**

त्रयः कृण्वन्ति[26] । अत्र शाट्यायनकम्[27] "त्रयः कृण्वन्ति हि[28] भुवनेषु रेतः" इत्यग्निः पृथिव्यां रेतः । कृणोति[29]

---

१. उद्यामिपेत् A. उद्यामि० M.
२. उद्गीथैः (थैः) A.
३. उददीधयन् Sy.
४. वृष्टि is suggested for वृष्णि ॥ वृष्टिं याचमाना वसिष्ठाः Sy.
५. दशानां राज्ञां सङ्ग्रामे Sy.
६. तृत्सुभी राजभिर्वृताः Sy.
७. स्तोत्रम् Sy.
८. अशृणोत् Sy.
९. तृत्सुभ्यः is suggested for त्रित्सुभ्यः ॥ तृत्सुभ्यो राजभ्यः Sy.
१०. अकरोत् । अददाच्चेत्यर्थः Sy.
११. VM. ignores इत् ।
१२. रण्डा इव A.
१३. VM. seems to explain इव of दण्डा-इव separately.
१४. गो जनाः M. गवां प्रेरकाः Sy.
१५. परिच्छिन्नपत्रोपशाखा शान्ति तद्वत् भरताः, शत्रुभिः परिच्छिन्नाः Sy.
१६. ०चरनाः A.
१७. तृत्सूनामेव राज्ञां भरता इति नामान्तरेणोपादानम् Sy. १८. अल्पाः Sy.
१९. पुरोहितः Sy.
२०. परिच्छिन्नत्वादनन्तरम् Sy.
२१. एवे A.
२२. तृत्सूनाम् is suggested for त्रित्सूनाम् । तेषां तृत्सूनाम् Sy.
२३. तत्पौरोहित्यसामर्थ्यात् Sy.
२४. अवर्धन्त Sy.
२५. VM. ignores इत् ।
२६. त्रयः कृण्वन्ति is missing in A.
२७. ०यनिकम् A.
२८. RV. and Śāṭ. B. do not read हि,
२९. Śaṭ. B. reads करोति

वायुरन्तरिक्ष आदित्यो दिवि । 'तिस्रः प्रजा[1] आर्या ज्योतिरग्राः[2]' इति वसवो रुद्रा[3] आदित्यास्तेषां तज्ज्योतिर्यदसावादित्यः । 'त्रयो[4] घर्मास उपसं सचन्ते' इत्यग्निरुपसं सचन्ते वायुरुपसमादित्य उपसं सचते" इति । सर्वान् । एव । तान् । अनुविदुः । वसिष्ठाः ।[5]

**सूर्य॑स्येव व॒क्षथो॒ ज्योति॑रेषां समु॒द्रस्ये॑व महि॒मा ग॑भी॒रः ।**
**वात॑स्येव प्रज॒वो नान्येन॒ स्तोमो॑ वसिष्ठा॒ अन्वे॑तवे वः ॥ ८ ॥**

सूर्य॑... । यथा सूर्यस्य[7] । अश्वः शब्दचरस्यैवम्[8] । एषामपि[9] । ज्योतिः सर्वतोदिक्कं[10] विसरति[11] । उदधेरिव[12] । महिमा[13] । गम्भीरः[14] । वातस्यैव[15] । प्रजवः[16] । अन्येन केनचित्[17] । युष्माकम्[18] । स्तोमः[19] । हे वसिष्ठाः ! न । अन्वेतुं शक्यत[20]

---

१. प्रजा is written twice in A.
२. र is missing in A. ०तिरग्राः M.
३. रुद्रा is missing in M.
४. त्रे यो घर्मास A. त्रे...समसि M.
५. Sy. explains this stanza in the following manner :—भूरादिषु पृथिव्यन्तरिक्षद्युषु त्रयोऽग्निवायुसूर्या यथाक्रमेण रेतो विश्वस्य पाचकमुदकं कुर्वन्ति कुर्वन्ति । तेषां त्रयाणां ज्योतिरग्रा अग्निरग्रभूता आर्याः श्रेष्ठास्तिस्रः प्रजा भवन्ति । तैस्त्रयोऽग्निवायुसूर्या घर्मा दीप्ता उपसमायान्तः उपसं सचन्ते समवयन्ति । कुर्वाणान् सर्वानित्येतान् सर्वानेव तान् वसिष्ठा अनुविदुः । अभिजानन्ति । तेषां रहस्यविज्ञानादियमपि वसिष्ठानामेव स्तुतिः, Sy. also quotes here the passage of above—said Brāhmaṇa
६. इन्द्रस्यार्दस् Dur. SKN.
७. प्रकाशोऽस्ति Sy. यथा सूर्यस्य दीप्तिरवभासिकाऽर्थानामेवम्
८. अश्वः A. वचनस्य Dur. SKN.
९. एषां युष्माकं स्तोमो महिमापि वा Sy. एषां वसिष्ठानाम् Dur. युष्माकं वसिष्ठानाम् SKN.
१०. दीप्तिरधिदेवादिगतानामर्थानामसन्देहेनावभासिका वाच्योऽर्थे। अपि च न केवलमेषामसन्दिग्धार्थानि वचांसि गम्भीराणि च । महार्थवन्ति गम्भीरार्थतया दुरवगाहानि Dur. प्रकाशः SKN.
११. ०तो दिक्कं A.
१२. उदधेरप्रमेयं समुद्रे, एवमपरिमेयार्थानि Dur.
१३. महिमा स्तोमोऽपि वा Sy. माहात्म्यम् SKN
१४. महिम्नो विशेषणं गम्भीर इति । गम्भीरोऽजस्रिवदुरवगाहार्थं च युष्माकं वचनमित्यर्थः SKN.
१५. वातस्येव is suggested for वातस्यैव सत्यपि च महार्थत्वे नैते विलम्बितस्तुतयः । किं तर्हि ? वातस्येव Dur.
१६. प्रजया M. प्रजवः is suggested for प्रजयः ॥ प्रवेगः Sy. प्रकृष्टो जव आशु प्रतिपत्तिः । दुरूहतां सर्वपदवाक्येषु निर्मलमनोवाग्वृत्ती अवगर्वविसदृशेन प्रतिपद्येते । अपि चैवमतिमहानुभावा एते नैतेषामन्यः स्तोता वचनपदवीमनुगन्तुं शक्तः Dur. प्रकृष्टो जवो वेगो यस्य SKN.
१७. यतो ब्रवीमि नान्येन केनचित् स्तोत्रा Dur.
१८. युष्माकं स्वभूतः SKN.
१९. ऋक्समूहो महिमापि वा Sy. एष स्तोमः इयं स्तुतिर्भवत्को, असन्दिग्धार्था गम्भीराऽविलम्बिता च Dur. किम् ? अयं स्तोमः SKN.
२०. ते is missing in A. यथान्वेतुं न शक्यस्तथान्वेतुं न शक्यः Sy. नानुगन्तुमन्येन शक्या । क एनामनुकरिष्यतीति स्तुतिपरितुष्ट इन्द्रो वसिष्ठान् अस्तौत् । एवमृषयोऽपि स्तूयन्त इति प्रदर्शनमप्यस्तीति मन्त्राणां विषय इति Dur. आनुपूर्व्येण, तुमर्थे तवेन्प्रत्ययः । अनुगन्तुं शक्यत इति शेषः SKN.

इत्युत्तरार्थः[1] प्रत्यक्षः[2]।

**त इन्निण्यं हृदयस्य प्रकेतैः सहस्रवल्शमभि सं चरन्ति ।**
**यमेन ततं परिधिं वयन्तोऽप्सरस उप सेदुर्वसिष्ठाः ॥ ९ ॥**

त इन्निण्यम्[3]। ते। एव। अन्तर्हितम्[4]। हृदयस्य। प्रज्ञानैः। बहुशाखं कर्म[5]। अभिसञ्चरन्ति। तस्मात् उर्वश्यामपुत्रान्[6]। ईश्वरेण[7]। कृतम्[8]। परिधिकर्म[9] तन्तुम्। वमन्तः[10]। उपसेदुरिति। वसिष्ठपुत्राः[11]।

**विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा ।**
**तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वा विश आजभार ॥ १० ॥**

विद्युतो[12] ज्योतिः[13]। वसिष्ठ[14]! अन्तरिक्षे विद्युतः[15]। ज्योतिर्भूत्वा[16]। सञ्जिहानम्[17]। त्याग। मित्रावरुणा[18]।

---

१. ०त्युक्तारो० A. त्तरोऽर्धर्चः is suggested for ०त्तरार्थः ॥ प्रत्यक्षीकृत्योत्तरेण पादेन ब्रवीति Dur.

२. अपरे पुनः—'सूर्यस्येव वक्षथः' सूर्यतेजःसमानदीप्तोरस एते वसिष्ठास्तेजस्विनः समुद्रोपगम्भीरस्वभावाश्च शीघ्रगतयश्च सर्वत्राप्रतिहतजवाः । न तेषामन्येन गतिरनुगन्तुं शक्येति वर्णयन्ति Dur. N. 11. 20., SKN. IV. 70. अथाप्यृषयः स्तूयन्ते....इति यथा—

३. तः इन्निन्य A.

४. तिरोहितं दुर्ज्ञानम् Sy. निण्यम्, सस्वः इत्यन्तर्हितनाम Ngh. 3. 25.

५. संसारम् Sy.

६. ०श्याःपुत्रान् is suggested for ०श्यामपुत्रान् । अप्सरसो जननीत्वेन Sy.

७. स्वस्वाच्छन्देनाभिसञ्चरन्तस्ते वसिष्ठाः कारणात्मना सर्वनियन्त्रा Sy. ८. विस्तृतम् Sy.

९. वस्त्रम् । परिधिरित्यनेन जन्मादिप्रवाहो विवक्षितः Sy.

१०. वयन्तः is suggested for वमन्तः ॥

११. अत्र वसिष्ठा इति बहुवचनं पूजायाम् । वसिष्ठः पूर्वं प्रजापतेरुत्पन्नं देहमुत्सृज्याप्सरःसु जायेयेति बुद्धिमकरोदिति भावः Sy.

१२. एतास्वृक्षु वसिष्ठस्यैव देहपरिग्रहः प्रतिपाद्यते । एताश्चेन्द्रस्य वाक्यमित्येके, वर्णयन्त्यपरे वसिष्ठपुत्राणामिति Sy. एवमस्यामृचि, उतशब्देन समुच्चयार्थदर्शनाद् मित्रावरुणयोः सकाशाद् यज्जन्म प्रदर्शितं तस्यैवोत्तरयर्चा प्रकारोपवर्णनं क्रियते SKN.

१३. वसिष्ठपुत्राः is written after the *pratīka*, which should really come before the *pratīka*

१४. वासिष्ठाः M.

१५. विद्युत इव Sy. विशेषेण द्योतते देदीप्यत इति विद्युद्वुर्वशीति अस्मात् Dur.

१६. स्वीयं ज्योतिर्देहान्तरपरिग्रहार्थम् Sy प्रकाशः Dur.

१७. परित्यजन्तम् । छान्दसमात्मनेपदम् । यद्वा जिघृक्षितदेहार्थं स्वीयं ज्योतिः परि सञ्जिहानं परिजिघृक्षन्तमित्यर्थः । अस्मिन् पक्षे जहातेर्गत्यर्थत्वादात्मनेपदं छान्दसं न भवति Sy. तस्मात् परि परितोऽधिकं सञ्जिहानमुत्तिष्ठन्तं जायमानमित्यर्थः Dur. सङ्कुच्छमानमेकीभवत् पिण्डीभूतं तेजःशरीरमित्यर्थः SKN.

१८. मित्रावरुणौ देवौ Dur.

यदा । पर्यपश्यताम्[1] । तदानीम् । तव । एकम् । जन्माभूत् । अगस्त्यः[2] । यदा[3] । त्वाम् । मनुष्यान्[4] प्रति । आहूतवान-गस्त्यवसिष्ठौ[5] नूनं सम्मन्त्र्यै[6] मानुष्यकमास्थिताविति[7] ।[8]

**उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधि जातः ।**
**द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥ ११ ॥**

उतासि[9] । अपि च[10] । भवसि । मित्रावरुणयोः पुत्रस्त्वम्[11] । वसिष्ठ ![12] उर्वश्याः[13] । ब्रह्मन्[14] । मनसः[15] । अधिजातः[16], मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वास्तीपरे[17] कुम्भे रेतः स्कन्नमासीत्[18] ततोऽगस्त्यवसिष्ठौ समजायेतामुर्वशीगतो मित्रावरुणयोर्मनसोऽपि जात इत्यल्पो[19] भवति । मित्रावरुणयोः स्कन्नम्[20] । रेतः[21] । दैव्येन[22] । ब्रह्मणा मन्त्रेण[23] ।

---

१. ०पन्त्यताम् A. आवाभ्यामयं जायेतेति समकल्पतामित्यर्थः Sy. दृष्टवन्तौ SKN.
२. अगस्त्य ऋषिः Dur. उत अप्यन्यद्द्वितीयम् । कतमत् ? उच्यते मित्रावरुणयोः सकाशात् । कथम्? अगस्त्य ऋषिः SKN. ३. यदाऽऽगमत् SKN. ४. निवेशनान् मित्रावरुणावावां जनयिष्याव इत्येतस्मात्पूर्वावस्थानात् Sy. ५. आभूतवागस्त्यवसिष्ठो A. आजहार Sy. आहूतवांस्तत्ते तव द्वितीयं जन्म Dur. अतः सहागमनादगस्त्यो वसिष्ठमाहूतवानित्युच्यते SKN. ६. समर्त्यै M. सम्मन्त्र्यैव is suggested for सम्मन्त्र्यै ।
७. ०स्थितमिताविति A.
८. VM. ignores उत ।
९. वसिष्ठस्य सपुत्रस्येदमार्षम् । तस्यैव स्तुतिरिन्द्रस्य वा Dur. वसिष्ठस्य स्तुतिरिन्द्रस्यार्षं संवादो वा तयोः SKN १०. उतेत्ययमपिशब्दार्थे वर्तमानोऽधस्तन्यामृचि ये जन्मनी वसिष्ठस्योक्ते ते सम्भावयति ।..अपि चासि Dur. उतशब्दोऽप्यर्थे । अप्यर्थश्च समुच्चयः । ..अन्ये तु पूर्वर्गपेक्षं समुच्चयं मन्यन्ते ।..तत्र चोतशब्दोऽपि चेत्यस्यार्थे SKN. ११. अपि चानेन द्वितीयेन जन्मप्रकारेणासि SKN.
१२. मित्रावरुणयोरपत्यमित्यर्थः SKN.
१३. अप्सरसः Sy. कथं पुनर्मित्रावरुणयोरुत्पन्नोऽसि । किं सङ्कर्षेण ? नेत्युच्यते, उर्वश्याः सकाशात् । ...एवमेतस्मिन् 'द्रप्सं स्कन्नम्' इत्येवमादिना सम्बन्धेन उर्वशीशब्देनाप्सरा उच्यत इत्युपपद्यते Dur. हे वसिष्ठ ! कतमेन ? उच्यते, उर्वश्याः अप्सरसः SKN.
१४. हे वसिष्ठ ! Sy. १५. ममायं पुत्रः स्यादितीदृशात्संकल्पात् Sy. मनसोऽधिजातो न संघर्षणेन Dur. यन्मनश्चित्तमभिलाष इत्यर्थः । कस्य ? तन्निर्देशसामर्थ्यान्मित्रावरुणयोः, ततः SKN. १६. तस्मादधिजातोऽसि । तथा च वक्ष्यते 'सत्रे ह जातौ' (RV. 7.33. 13.) इत्यृचि Sy. १७. ०तीवरे is suggested for ०ती परे । १८. रेतस्तत्र० A.
१९. इत्युक्तो is suggested for इत्यल्पो ।
२०. मित्रावरुणयोरुर्वशीदर्शनात् स्कन्नमासीत् Sy. उर्वशीदर्शनात्स्कन्नम् Dur. २१. किञ्च निर्बीज एवासि मनोऽभिध्यानमात्रादुत्पन्नः ? नेत्युच्यते । किं तर्हि, द्रप्सं शुक्रम् । ...आह रेतः कस्माद् द्रप्स इत्युच्यते ? स हि रेतःसञ्ज्ञको रसः पुरुषस्याङ्गादङ्गात् सम्भृतः स्त्रीयोनेःसानीयो भवति भक्षणीयो भरणीयश्च । एवं प्सातेर्भरतेश्च यथासम्भवं द्रप्स इत्येष शब्दो द्रष्टव्य- Dur. तस्यादर्शनात्तयोः सम्भूतं द्रप्सम् । द्रप्सशब्देनात्यन्तच्छन्नं बहुलमुदकमुच्यते । तच्चेह सामर्थ्याद्रेतः।..द्रप्सः सम्भृत उपचितार्थः सन् प्सानीयः 'प्सा भक्षणे' भक्षणेन चात्र सम्भोगहेतुकं लक्ष्यते । सम्भोगहेतुमित्यर्थः । भक्षणीय एव वा स्त्रीयोन्याः । सम्भरतेः प्सातेश्च द्रप्स इत्यर्थः SKN. २२. दैव्येनं A. देवसम्बन्धिनम् Sy. देवानां स्वभूतेन Dur., SKN.
२३. वेदराशिनाहम्भुवा युक्तम् Sy. ऋग्यजुसामाख्येन स्तुवन्तः Dur. ऋगादिलक्षणेन । तृतीयाश्रुतेः स्तुवन्त इति शेषः SKN.

विश्वे[1] । देवाः । पुष्करे कुम्भस्थान्तरिक्षे[2] । त्वाम्[3] । अधारयन्[4][5] ।

---

१. सर्वे SKN. २. मा एतद् भूमौ पतेदिति कुम्भस्योपरि पुष्करे, उदकेऽन्तरिक्षे वा।..पुष्करशब्दोऽनेकार्थः। तमिह प्रसक्तं व्याचष्टे–'पुष्करमन्तरिक्षम्' तद्धि..पुष्णात्यवकाशदानेनोपकुर्वत्। उदकमपि पुष्करं तेन हि पूजा क्रियते । देवादिभ्यस्तत् पूजाकारकत्वात् पुष्करम् । अथवा 'पूजयितव्यम्' पूजनार्हमात्मन एवेति पुष्करम्। इदमपि...पुष्करं पद्म 'एतस्मादेव' कारणात् पुष्करमित्युच्यते, तदपि हि...पूजयितव्यं च शोभनत्वात्तस्य । अथवा पुष्करं तदिति 'वपुष्करम्' आबद्धे हि तस्मिन् वपुष्मान् भवति Dur. पुष्करेऽन्तरिक्षे भूमावपतितमेव ।... पुष्करस्यान्तरिक्षनामसु पठ्यमानस्यैव निर्विवक्षयाऽनेकार्थत्वप्रदर्शनाय चोपक्षेपः । पोषयति भूतान्यवकाशदानेनोदकधारणादिना चोपकारेण । उदकमपि पुष्करं, देवपितृमनुष्याणां पूजाकरत्वात्। पूजयितव्यं वा देवतारूपत्वात्। 'आपो वै सर्वा देवताः' (AB 2. 16.) इति श्रुतेः । पूजयितव्यं पुष्करमित्यर्थः । इदमपीतरत्पद्मं पुष्करमेतस्मादेव धातोः । तेनाप्युच्यते पूज्यते वा तदेव शोभनत्वात् । वपुष्करं वा सद् वकारलोपेन पुष्करं शोभाकरमित्यर्थः । अक्षरवर्णसामान्यात् सुमनस्सामान्याद्वा प्रयुक्तं पुष्पं निराह—पुष्पं पुष्पतेः, तद्विकसितं भवति । एवमितिहासपक्षे SKN.

त्वां तेन शुक्रेण सहैकतामुपगतम् Dur. त्वत्कारणभूतं बीजमित्यर्थः SKN.

०रयत् A. अधारयन्त । तथा चादितेर्मित्रावरुणौ जज्ञाते इति प्रकृत्य पठ्यते—

तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ।
रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे॥१४९॥
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ। अगस्त्यश्च वसिष्ठश्च तत्रर्षी सम्बभूवतुः ॥१५०॥
बहुधा पतितं रेतः कलशे च जले स्थले । स्थले वसिष्ठस्तु मुनिःसम्भूत ऋषिसत्तमः ॥१५१॥
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः । उदियाय ततोऽगस्त्यःशम्यामात्रो महातपाः ।१५२।
मानेन सम्मितो यस्मात्तस्मान्मान्य इहोच्यते। यद्वा कुम्भादृषिर्जातःकुम्भेनापि हि मीयते ।१५३।
कुम्भ इत्यभिधानं च परिमाणस्य लक्ष्यते । ततोऽप्सु गृह्यमाणासु वसिष्ठःपुष्करे स्थितः ।
१५४॥ सर्वतः पुष्करे तं हि विश्वेदेवा अधारयन् ॥ ।१५५॥ इति BD. 5. 149—155. Sy.

अधारयन्तेत्यर्थः Dur. दधिर्धारणार्थः, धारितवन्त इत्यर्थः । चतुर्मुखेन वा ब्रह्मणा सह विश्वे देवा इत्यर्थः । अथवा त्वदर्थेनैवान्तरात्मना ब्रह्मणा क्षेत्रज्ञेन निमिशापाद् विशीर्णशरीरेण वा धृतमिति शेषः SKN.

५ रौद्रेण किल तेजसा निर्दग्धो वसिष्ठो मित्रपरिगृहीतायामुर्वश्यामुत्पन्नो वरुणतेजसो जात इति श्रूयते । तदप्युपेक्षितव्यम् । अनेकविधो हि मन्त्राणां विषयः । वसिष्ठस्येदमार्षं युष्मदश्चात्र प्रयोगः । उतासीति, तदेतद्विरुद्धार्थमिवोपलक्ष्यते नैतद्विरुद्धम्, नित्यत्वान्मन्त्राणां भवति Dur. नित्यपक्षे तु उर्वशी विद्युत्, वसिष्ठोऽप्याच्छादित उदकसङ्घातः । वसुनिमित्तत्वाद् वा वसुमत्तमः । मित्रावरुणावपि वाय्वादित्यौ, विश्वेदेवा रश्मयः। एकवाक्यतायै चात्र तच्छब्दाध्याहारः कर्तव्यः । तेनायमर्थः—उत पूर्वं तावत् पृथिव्यां भवः पार्थिवः । उत, अपि मैत्रावरुणो मित्रावरुणाभ्यां वाय्वादित्याभ्यामाहृतः संन्नतत्सम्बन्धान्मैत्रावरुणो मित्रावरुणसम्बन्धीत्यर्थः । हे वसिष्ठ ! आच्छादयितृतम ! वसुनिमित्ताद्वा वसुमत्तम ! उदकसङ्घात ! उर्वश्या उर्वन्तरिक्षव्यापिन्या विद्युतः । अधि धात्वर्थानुवादी।जात उत्पन्नः । हे ब्रह्मन् ! परिवृद्ध ! उपचाराद्वा ब्रह्मणोऽन्यस्य हेतुभूत ! मनसः निमित्तलक्षणा चैषा पञ्चमी । मनसोऽवसम्बन्धात् सङ्कल्पो लक्ष्यते।...द्रप्सं सम्मितं भक्षयितव्यं चोदकसंघातं स्कन्नं मुक्तं ब्रह्मणा दैव्येन दिविभवेनादित्येन विश्वेदेवा रश्मयः.. प्रावृषि पुष्करेऽन्तरिक्षे त्वां धारितवन्तः । एवं सिन्ध्वादीनामपि, उर्वशीत्वे मन्त्रा यथासम्भवं योजनीया इति SKN. उर्वश्यप्सराः। उर्वभ्यश्नुते । ऊरुभ्यामश्नुते । ऊरुर्वा वशोऽस्याः । अप्सरा अप्सारिणी अपि वाऽप्स इति रूपनाम । अप्सातेः अप्सानीयं भवति । आदर्शनीयम् । व्यापनीयं वा । स्पष्टं दर्शनायेति शाकपूणिः । 'यदप्सः' । इत्यभक्षस्य । 'अप्सो नाम' इति व्यापिनः । तद्रा भवति रूपवती । तदनयात्तमिति वा । तदस्यै दत्तमिति वा । तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द । तदभिवादिन्येषर्ग्भवति । ...अप्यसि मैत्रावरुणो वसिष्ठः । उर्वश्या ब्रह्मन् मनसोऽधिजातः । द्रप्सं स्कन्नम् । ब्रह्मणा दैव्येन । द्रप्सः सम्भृतः। प्सानीयो भवति । सर्वे देवाःपुष्करे त्वाधारयन्त । पुष्करमन्तरिक्षम् । पोषति भूतानि। उदकं पुष्करम् । पूजाकरम् पूजयितव्यम् । इदमपीतरत् पुष्करमेतस्मादेव । पुष्करं वपुष्करं वा। पुष्पं पुष्पतेः N. S. 13., 14. SKN. II. 344—346.

स प्रकेत उभयस्य प्रविद्वान्त्सहस्रदान उत वा सदानः ।
यमेन ततं परिधिं वयिष्यन्नप्सरसः परि जज्ञे वसिष्ठः ॥ १२ ॥

स प्रकेतः । वसिष्ठः । प्रज्ञाता[१] । पार्थिवं दिव्यञ्च[२] लोकम् । प्रजानन्[३] । गोसहस्रदानः[४] । यत्[५] । वा । सर्वदा दानयुक्तो[६] न सहस्रदान एव । यमेन[७] । ततम्[८] । कर्मतन्तुम्[९] । वयिष्यन्[१०] । अप्सरसः[११] । पर्यजायत[१२] । वसिष्ठः ।

सत्रे ह जाताविषिता नमोभिः कुम्भे रेतः सिषिचतुः समानम् ।
ततो ह मान उदियाय मध्यात्ततो जातमृषिमाहुर्वसिष्ठम् ॥ १३ ॥

सत्रे ह जातौ । सत्रे[१३] । प्रादुर्भूतौ[१४] मित्रावरुणौ यज्ञे प्रवृत्तौ । हविर्भिर्मानुषैः[१५] स्वेषु स्वेषु यज्ञेषु । अध्येषितौ । कुम्भे[१६] । रेतः । सिषिचतुः[१७] । समानम्[१८] । ततः कुम्भस्य[१९] । मध्यात् । अगस्त्यः[२०] । उदियाय[२१] । ततवे[२२] । जातम् । ऋषिम् । आहुः[२३] । वसिष्ठम्[२४] ।

उक्थभृतं सामभृतं बिभर्ति ग्रावाणं बिभ्रत्प्र वदात्यग्रे ।
उपैनमाध्वं सुमनस्यमाना आ वो गच्छाति प्रतृदो वसिष्ठः ॥ १४ ॥

उक्थभृतम्[२५] । होता उक्थभृत्[२६] । उद्गाता[२७] सामहृत्[२८] तौ वसिष्ठोऽध्वर्युः । सन्धारयन्ति[२९] । तथाभिषवण-[३०]

---

१. प्रकृष्टज्ञानः Sy.
२. दिव्यं दीव्यं च A. उभयं दिवञ्च पृथिवीञ्च Sy.
३. प्रकर्षेण जानन् Sy.
४. गो is missing in A.
५. अपि वा Sy.
६. किमनेन सहस्रदान इति विशेषणेन सर्वदानसहितः Sy.
७. कारणात्मना सर्वनियन्त्रा Sy.
८. ततः M. विस्तृतम् Sy.
९. वस्त्रम् Sy.
१०. पयिष्यन् A.
११. उर्वश्याः Sy.
१२. परीति पञ्चम्यार्थानुवादः । जज्ञे जातः Sy.
१३. बहुकर्तृके यागे Sy.
१४. दीक्षितौ मित्रावरुणौ Sy.
१५ मानुषे A. स्वयमन्यैर्जनैः स्तुतिभिः Sy.
१६. वासतीवरे कलशे Sy.
१७. असिञ्चतम् Sy.
१८. एकदैव Sy.
१९. ततो वासतीवरात्कुम्भात् Sy.
२०. शमीप्रमाणः Sy.
२१. प्रादुर्बभूव Sy.
२२. तन्तवे M. ततः is suggested for ततवे ॥
२३. वसिष्ठः A.
२४. VM. ignores ह । हेति पूरणः Sy.
२५. उत्थभृतम् A.
२६. होतात्थभृत् A. शस्त्राणां सम्भक्तारम् Sy.
२७. उद्गता A. उद्गातारम्
२८. सामभृत् is suggested for सामहृत्
२९. ०रयति is suggested for रयन्ति
३०. कथमभिष० M. अभिषवणम् Sy.

ग्रावाणम्[1]। धारयन्[2]। प्रथममेव यजूंषि[3]। प्रवति[4]। उपविशत[5]। एनम्[6]। सुमनसो भवन्तः[7]। आगच्छन्ति[8]। युष्मासु[9]। हे पुत्रदस्तृनृत्सवः[10] ! वसिष्ठ इति।

VII. 34.

**प्र शुक्रैतु देवी मनीषा अस्मत्सुतष्टो रथो न वाजी ॥ १ ॥**

प्र[11] शुक्रा[12]। वसिष्ठो वैश्वदेवम् ॥ प्रैतु[13]। ज्वलन्ती[14]। देवी[15]। स्तुतिर्वाक्[16]। अस्मत्तः। सुतष्टः[17]। रथः। इव। वेगवानिति।

**विदुः पृथिव्या दिवो जनित्रं शृण्वन्त्यापो अध क्षरन्तीः ॥ २ ॥**

विदुः[18] पृथिव्याः। ओषधीः पुष्यन्त्या अस्याः[19]। द्युलोकात्[20]। जनितमुदकमागच्छतीति[21]। विदुः[22]। एतदेवाह-तदनन्तरम्[23]। शृण्वन्ति[24]। अपः[25]। स्वर्गात् क्षरन्ति[26]।

---

१. बिभ्रतमध्वर्युं च बिभर्ति Sy.

२. आगतश्चासौ वसिष्ठो यज्ञेऽग्रे पुरोहितो ब्रह्मा सन् Sy.

३. यज्ञंषि A.

४. ०वदति is suggested for ०वति ॥ यज्ञे यत्प्रवदितव्यं श्रेषादिनिमित्ते कर्तव्यमस्ति तदपि वदतीति तृत्सून् प्रतीन्द्रो ब्रवीति Sy.

५. उपतिष्ठत Sy.

६. वसिष्ठम् Sy.

७. सुमनसः सन्तः Sy.

८. ०च्छति is suggested for ०च्छन्ति।

९. युष्मास A. युष्मान् Sy.

१०. प्रतुस्थूत्सवः M. प्रतृदः ! तृत्सवः ! is suggested for पुत्रदस्तृनृत्सवः॥ प्रतृद इति-तृत्सव एवाभिधीयन्ते नामान्तरेण Sy.

११. तृतीयेऽनुवाके द्वाविंशति सूक्तानि। तत्र 'प्र शुक्र' इति पञ्चविंशत्यृचं प्रथमं सूक्तम्। अत्रेयमनुक्रमणिका—'प्रशुक्रा पञ्चाधिका वैश्वदेवं हाद्या एकविंशतिर्द्विपदा 'अब्जाम्' अहेरर्धर्चं उत्तरोऽहिर्बुध्न्याय' (KSA. 35. 34. p. 25.) इति वसिष्ठऋषिः। आद्या एकविंशतिर्द्विपदा विंशत्यक्षरा विराजो द्वाविंशाद्याश्चतस्त्रस्त्रिष्टुभः। विश्वे देवा देवता। व्यूळ्हे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानम्। सूत्रितञ्च—'प्र शुक्रैत्विति वैश्वदेवम्' ASS. 8. 8. इति। 'षोडशिन्या धूर्व्वस्मा इति द्विपदा' (ASS. 6. 2.) इति। महाव्रतेऽप्येषा द्विपदा। तथैव पञ्चमारण्यके सूत्रितम्—'आधूर्व्वस्मा इत्येका सूददेहाः' (AA. 5. 8.) इति Sy.

१२. शुक्र M.

१३. अस्मिन् सूक्ते स्तोष्यमाणान् देवान् प्रैतु प्रगच्छतु Sy.

१४. दीप्ता Sy.

१५. सर्वेषां कामानां प्रदात्री Sy.

१६. स्तुतिवाक् A.

१७. सुसंस्कृतः Sy.

१८. अस्यामुच्यापः स्तूयन्ते Sy.

१९. पृथिव्याश्च Sy.

२०. उभयोरपि लोकयोरित्यर्थः Sy.

२१. उत्पत्तिम् Sy.

२२. जानन्ति Sy.

२३. ०देवाहं A.

२४. शृण्वन्ति स्तोत्राणीति शेषः

२५. उप M. आपः nom. plur. subject of the verb शृण्वन्ति is suggested for अपः ॥

२६. सर्गात् क्षरन्ति A. M. स्वर्गात् क्षरन्त्यः is suggested for सर्गात् क्षरन्ति ॥

**आपश्चिदस्मै पिन्वन्त पृथ्वीर्वृत्रेषु शूरा मंसन्त उग्राः ॥ ३ ॥**

आपश्चित्[1] । आपः । चित्[2] । अस्मा इन्द्राय । अक्षरन्[3] । विस्तीर्णाः[4] । युद्धेषु[5] चैनम् । शूराः[6] । स्तुवन्ति[7] । उग्राः[8] ।

**आ धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः ॥ ४ ॥**

आ धूर्षु[9] । आदधात । इन्द्राय[10] । रथस्य धूर्षु । अश्वान् । इन्द्रः । इदानीम्[11] । वज्रवान् । हिरण्यबाहुरागच्छतु[12][13] ।

**अभि प्र स्थाताहेव यज्ञं यातेव पत्मन्त्मना हिनोत ॥ ५ ॥**

अभि प्र स्थात[14] । यथाहानि[15] सूर्योऽभिप्रतिष्ठते[16] तथा यूयम् । यज्ञम् । अभिप्रतिष्ठत[17] । याताऽध्वगेरा यथा[18] । मार्गे[19] पादं प्रेरयति यथा[20] यज्ञम् । स्वयमेव । प्रेरयत[21] इत्यस्योत्तरा[22] भूयसे[23] निर्वचनाय ।

---

१. इन्द्रोऽस्मिन् द्वृत्ते स्तूयते Sy.

२. अपि Sy.

३. अक्षरत् A.
प्यायन्ते Sy.

४. पृथ्व्यः प्रथमानाः Sy.

५. उपद्रवेषु सत्सु Sy.

६. योद्धारोऽपि Sy.

७. इममेवेन्द्रं स्तुवन्ति Sy.

८. उद्ग्रा A.
उद्गूर्णास्तेजस्विनो वा Sy.

९. धूषु A.

१०. अस्मै-षष्ठ्यर्थे चतुर्थी । अस्येन्द्रस्यागमनाय Sy.

११. Ngh. 3. 13. नेत्युपमार्थीयः N. 1. 4. अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः N. 7. 31. नेति चार्थे Sy.

१२. ०ण्यपाणिरा० M. हिरण्यहस्तश्च भवति Sy.

१३. षोडशिनि शस्यमानत्वादस्य ऐन्द्रत्वं गम्यते । 'आ धूर्ष्वस्मै' इत्यत्रास्मा इत्यस्य पदस्यानुदात्तत्वं पूर्वस्यामिन्द्रस्य प्रकृतत्वात् । अत एव पूर्वास्यैन्द्रीति विज्ञायते । पूर्वस्यामप्यृच्यस्मा इत्यत्रानुदात्तत्वमल्पीयसोऽर्थतरमनुदात्तमिति । तथा च यास्कः—'अस्या इति चास्येति चोदात्तं प्रथमादेशे । अनुदात्तमन्वादेशे । तीव्रार्थतरमुदात्तम् अल्पीयोऽर्थतरमनुदात्तम्' N. 4. 25. इति । अल्पीयस्त्वं चेदंशब्दप्रवृत्तिनिमित्तस्य सन्निधानस्य दूरस्थत्वेनेत्यवगन्तव्यम् Sy.

१४. यज्ञस्तुतिरियम् Sy.

१५. स्थाता M.

१६. अहेवेति पूरणौ Sy.

१७. हे जनाः ! अभिक्रमत Sy.

१८. ०ध्वगो यथा is suggested for ०ध्वगेरा-यथा ॥ गन्तेव Sy.

१९. अपि च पत्मनि यज्ञमार्गे Sy.

२०. तथा is suggested for यथा ।

२१. गच्छत । 'हि गतौ' इति धातुः Sy.

२२. इत्यस्या उत्तरा is suggested for इत्यस्योत्तरा ।

२३. हूयसे A.

**त्मना॑ स॒मत्सु॑ हि॒नोत॑ य॒ज्ञं दधा॑त के॒तुं जना॑य वी॒रम् ॥ ६ ॥**

त्मना[1] समत्सु[2] । स्वयम्[3] । एषु सङ्ग्रामेषु प्रवृत्तेषु । निष्क्रमयत[4] । यज्ञम् । पुरो दधत[5] । शत्रुजनाय[6] । युद्धेनात्मनो[7] ज्ञापयितारम्[8] । वीरम्[9] ।

**उद॑स्य॒ शुष्मा॑द्भा॒नुर्नार्त॒ बिभ॑र्ति भा॒रं पृ॑थि॒वी न भूम॑ ॥ ७ ॥**

उदस्य शुष्मात्[10] । तुच्छस्य तु यज्ञस्य[11] । बलात्[12] । आदित्यः[13] । इव शत्रून् प्रति । वीरः सोऽयं यज्ञो विभवित[14] । भारम्[15] । यथा । भूमि[16] । भूतजातमिति[17] ।[18]

**ह्वया॑मि दे॒वाँ अया॑तुरग्ने॒ साध॑न्नृ॒तेन॒ धियं॑ दधामि ॥ ८ ॥**

ह्वयामि[19] देवान्[20] । ह्वयान[21] । देवान् । अच्छन्नहिंसको वाम्[22] । अग्ने[23] ! साधयन्[24] यज्ञम् । सत्येनाहम्[25] । कर्म[26] । धारयामि[27] ।

---

१. उक्तस्यैव विवरणम् । हे मदीया जनाः ! Sy.

२. धीमत्सु A.

३. स्वयमेव Sy.

४. गच्छत Sy.

५. पुरो धत A. विधत्त Sy.

६. शत्राजनाय A. लोकाय । तद्रक्षार्थमित्यर्थः Sy.

७. युद्धेष्वात्म० is suggested for युद्धेनात्म०

८. अपि च प्रज्ञापकम् Sy.

९. पापानां वारयितारम् । नाशकमित्यर्थः Sy.

१०. शुष्मान् A.

११. तु (क) श्छस्य तु A.
The reading is doubtful. Something seems to be missing here. उद्गच्छतु, as the explanation of उदार्त, is suggested for तुच्छस्य तु

१२. बलोत् A.

१३. सूर्यः Sy.

१४. बिभर्ति is suggested for विभवित ।

१५. भारं लोकस्य Sy.

१६. भूमिः is suggested for भूमि ।

१७. भूत जा० A. भूतानि Sy.

१८. VM. ignores उत and आर्त ॥ उदार्त उद्गच्छति Sy.

१९. अस्मिंस्तत्रे देवाः स्तूयन्ते Sy.

२०. देवान् is missing in A.

२१. ह्वयामि is suggested for ह्वयान ।

२२. अगच्छन्नहिंसको वा is suggested for अच्छन्नहिंसको वाम् ॥ अहिंसाविनियमयुक्तेन Sy.

२३. अग्नेः M.

२४. कामान् साधयन् Sy.

२५. यज्ञेन Sy.

२६. अपि च देवानां परिचरणात्मकं कर्म Sy.

२७. ०याहि A. करोमीत्यर्थः Sy.

**अभि वो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम् ॥ ९ ॥**

अभि वः[1] । अभिधारयत[2] । यूयम्[3] । देवनशीलम्[4] । कर्म[5] । देवेषु[6] च[7] । वाचम्[8] । यूयम्[9] । प्रधारयतेति[10] ।

**आ चष्ट आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः ॥ १० ॥**

आ चष्टे[11] । आसाम् । नदीनाम्[12] । उदकम्[13] । आचष्टेऽभिपश्यति[14] । वरुणः[15] । उग्रः[16] । सहस्रदर्शनः[17][18] ।

**राजा राष्ट्रानां पेशो नदीनामनुत्तमस्मै क्षत्रं विश्वायु ॥ ११ ॥**

राजा । राजमानानामन्येषां प्रभूणामपि[19] । राजा[20], अपि वा जनपदा राष्ट्राणि, णत्वाहावच्छान्दसः[21] । रूपम्[22] । नदीनाम् । अनुत्तं[23] शत्रुभिः । अस्मै[24] । बलं भवतु[25] । सर्वगामि[26] ।

---

१. अहिव A. वसिष्ठस्यार्षम् Dur., SKN.

२. हे जनाः! . . .देवानुद्दिश्य Sy. हे ऋत्विजः! अभिवदामि Dur. अभीत्युपसर्गश्रुतेर्योग्यक्रियापदमध्याहार्यम् । अभिवदामि SKN.

३. VM. explains अभि and दधिध्वम् together but Sy. Dur. and SKN. explain them separately. विधत्त Sy. कुरुतेत्यर्थः SKN.

४. युष्मानृत्विजः SKN.

५. दीप्ताम् Sy. एतां देवीम् Dur. देवसम्बन्धिनीमित्यर्थः SKN.

६. कडभ A. कर्म यागाख्यम् SKN.

७. एतान् विश्वान् देवान्प्रति Dur. देवान्प्रति SKN.

८. स्तुतिरूपाम् Sy. देवत्रा देवगामिनीमेतां वाचं स्तुतिलक्षणां कृणुध्वम् Dur. वाचं स्तुत्याख्याम् SKN.

९. अपि च यूयम् Sy. युष्मानेव SKN.

१०. प्रकर्षेण कुरुध्वम् Sy. प्रब्रवीमि चैतत् Dur. प्रोपसर्गश्रुतेः पूर्ववदध्याहारः । प्रब्रवीमि SKN. Dur. and SKN. explain प्र and कृणुध्वम् Separately.

११. अविष्टः M.

१२. नदीनां स्वभूतम् Dur. नदीनां सम्बन्धि SKN.

१३. जलम् Sy. एवमत्र पाथःशब्देनोदकमित्युच्यते नदीसम्बन्धात् Dur.

१४. ०ष्टे हि प० A. आचष्ट इव प्रकथयतीव जनानावर्षम् Dur. कस्मात्पुनरेवमुच्यते यागं स्तुतिं च देवानां कुरुतेति ? उच्यते, यस्मादाचष्टे, सामर्थ्याल्लुप्तोपममेतत् । तदिदं कर्तव्यमित्याचष्ट इव जनेभ्यो ददत् SKN.

१५. वरुणोऽपि देव आदित्यः Dur. कोऽसौ ? वरुणो मध्यमस्थान उत्तमस्थानो वा SKN.

१६. उद्गूर्ण ओजस्वी वा Sy. किंलक्षणः पुनर्वरुणः ? . . उग्र उद्गूर्णः Dur. अप्रसह्य SKN.

१७. दक्ष A. बहुचक्षुः Sy. बहुदर्शन इत्यर्थः Dur. विद्युद्भी रश्मिभिर्वा बहुदर्शनः SKN.

१८. पाथोऽन्तरिक्षम् । पथा व्याख्यातम्. . .उदकमपि पाथ उच्यते पानात्. . .अन्नमपि पाथ उच्यते पानादेव N. 6. 7., SKN. II. 414. Dur. and SKN. take the two stanzas : RV. 7. 34.9., 10. as one

१९. ईश्वराणामपि Sy. २०. ईश्वरः भवति Sy.

२१. णवाहावच्छान्दसम् M. णत्वाभावश्छान्दसः is suggested for णवाहावच्छान्दसः ।

२२. रूपकृदपि भवतीत्यर्थः Sy.

२३. अन्यैरबाधितम् Sy.

२४. अस्मै षष्ठ्यर्थे चतुर्थी । अस्य वरुणस्य Sy.

२५. भवति A.

२६. सर्वतो गन्तृ भवतीति Sy.

अविष्टो अस्मान्विश्वासु विक्ष्वद्युं कृणोत शंसं निनित्सोः ॥ १२ ॥

[1] अविष्टो[2] । रक्षत्येव[3] । अस्मान्[4] । सर्वासु । प्रजासु[5] सः । निन्दितुमिच्छतः शत्रोः । शंसनम् । अद्योतमानम्[6] । करोतु[7] ।

व्येतु दिद्युद्द्विषामशेवा युयोत विष्वग्रपस्तनूनाम् ॥ १३ ॥

व्येतु । अपगच्छतु[8] । आयुधम् । शत्रूणाम् । असुखम्[9] । पृथक् करोतु[10] । विष्वक्[11] । पापम् । तनूनाम्[12] ।

अवीन्नो अग्निर्हव्यान्नमोभिः प्रेष्ठो अस्मा अधायि स्तोमः ॥ १४ ॥

अवीन्नः[13] । रक्षतु । अस्मान् । अग्निः । हविषोऽत्ता[14] । नमस्कारैः[15] । प्रियतमः[16] । अस्मा अग्नयेऽस्माभिः । स्तोमाः[17] । कृताः[18] ।

सजूर्देवेभिरपां नपातं सखायं कृध्वं शिवो नो अस्तु ॥ १५ ॥

सजूः । अपां नपाद्देवैः[19] । सङ्गतो[20] भवति । तमपान्नपातम्[21] । सखायम्[22] । कुरुध्वम्[23] । स शिवः[24] । अस्माकम्[25] । अस्तु[26] ।

---

१. अयं द्वृचो दैवः Sy.
२. अविष्ट A. आविष्टः M.
३. हे देवाः ! अविष्ट उ ॥ इति समुदितमविष्टो इति । अविष्ट रक्षत Sy.
४. अस्मात् A.
५. प्रजासु is missing in A.
६. अदीप्तिम् Sy.
७. कुरुत च Sy.
८. अवग० A.
९. असुखकरी Sy.
१०. प्रथक्क० A. देवा युयोत अस्मत्तः पृथक्कुरुत Sy.
११. सर्वतः Sy.
१२. अङ्गानाम् Sy.
१३. अपीह M.
१४. ०षोक्ता M. हव्यानामत्ता Sy.
१५. अस्मदीयैर्नमस्कारैः Sy.
१६. प्रियतमः सन् Sy.
१७. स्तोमा A.
१८. कृत A. अस्माभिर्व्यधायि Sy.
१९. नपावेपैः A.
२०. सह Sy.
२१. नपातः A. उदकानां पुत्रमग्निम् Sy. सूनुर्नपादित्यपत्यनामनी Ngh.
२२. मित्रम् Sy.
२३. हे स्तोतः ! (स्तोतारः) स्तुतिभिः कुरुध्वम् Sy.
२४. स चापान्नपात् सुखकरः Sy.
२५. अस्मभ्यम् Sy.
२६. भवतु Sy.

**अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ॥ १६ ॥**

[1] अब्जाम् । अप्सु [2] जातम् । शस्त्रैः [3] । रहितम् [4] । गृणीषे [5] । नदीनाम् [6] । बुध्ने [7] । उदकेषु [8] । सीदन्तं [9] निरुक्तं [10] द्रष्टव्यम् ।

**मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ॥ १७ ॥**

[11] मा नः । मा । अस्मान् । अहिर्बुध्न्यो [12] देवः । विनाशाय [13] । दधातु [14] । मा च । अस्य [15] । यज्ञोरवा [16] । अवस्रवन्तु [17] । यज्ञकामस्य [18] इति [19] ।

---

१. वासिष्ठस्य पराशरस्यार्षम् Dur. वसिष्ठस्य SKN.

२. इममग्निम् Sy. हे स्तोतः ! त्वमेतम्... उदकजन्मानम् Dur. अप्शब्द उपपदे जनेः 'जनसनखनक्रमगमो विट्' (Pa. 3. 2. 67.) इति विटि 'विड्वनोरनुनासिकस्यात्' (Pa. 6. 4. 41.) इत्यात्वे द्वितीयैकवचनमब्जामिति । यः कर्मात्मना वृष्टिलक्षणास्वप्सु जायते तमब्जाम् SKN. ३. स्तोत्रैः Sy. SKN.

४. अभि M. अहिम् is suggested for रहितम् ॥ मेघानामाहन्तारम् Sy. मध्यमस्थानमहिम् SKN. ५. श्रृणीषे A. स्तोषि Dur. गृणातेः स्तुतिकर्मण आत्मनेपदमध्यमो व्यत्ययेन परस्मैपदोत्तमयोः स्थाने । गृणीषे गृणामि स्तौमीत्यर्थः SKN.

६. उदकानाम् Sy. नदनानामपाम् Dur. नदीशब्देन शब्दकारिणीनामपां स्थाने SKN.

७. धुध्नः A. स्थाने । बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आप इति व्युत्पत्तेः, तस्मिन् Sy. बन्धने, एतस्मिन्नन्तरिक्षे वर्तमानम् Dur. बन्धने... अन्तरिक्षे...बद्धा अस्मिन् धृता आपः । इदमपीतरद् बुध्नं शरीरमुच्यते । 'बद्धा अस्मिन् धृताः प्राणा इति' SKN.

८. उदकेषु लब्धव्येषु निमित्तभूतेषु Dur.

९. एतस्मिन् कर्मण्यङ्गभावमुपगच्छन् Dur. मनसोदकानि ध्यायन्कामयमान इत्यर्थः SKN.

१०. अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजस्सु [उदकेषु] सीदन् बुध्नमन्तरिक्षम् । बद्धा अस्मिन् धृता आप [इति वा] इदमपीतरद् बुध्नमेतस्मादेव । बद्धा अस्मिन् धृताः प्राणा इति N. 10. 44. SKN. IV. 49.

११. पूर्वया समानं सर्वमिति Dur. वसिष्ठस्यैव भिन्नस्तुतित्वादर्धर्चयोरुदाहरणम् SKN.

१२. अहिर्बुध्न्यो is suggested for अहिर्धुर्न्यो । बुध्नेऽन्तरिक्षे भवो बुध्न्यः । अहिश्चासौ बुध्न्यश्चेत्यहिर्बुध्न्योऽग्निः Sy. 'योऽहिः स बुध्न्यः' । एतावांस्तु विशेषः 'बुध्नमन्तरिक्षं तन्निवासादहिर्बुध्न्यः' Dur. योऽहिः स एव बुध्न्यः । इयांस्तु विशेषः बुध्नमन्तरिक्षं तत्र भवो बुध्न्यः । अहिश्चासौ बुध्न्यश्चेति समानाधिकरणावहिर्बुध्न्यशब्दावसमस्तौ । तथापि, अहि बुध्नियं शंसतीति श्रुतौ लिङ्गं भवति । बुध्नमन्तरिक्षं तन्निवासादिति भावार्थप्रदर्शनं भाष्ये SKN योऽहिः स बुध्न्यो बुध्नमन्तरिक्षं तन्निवासात् N. 10. 45.,

१३. हिंसकाय Sy. रेषणाय हिंसकाय Dur. SKN. १४. मा...कस्मैचिद् धात् Dur. कस्मैचिदपि माधादिति सम्बन्धः SKN.

१५. अस्य यजमानस्य Dur. अस्य सम्बन्धी SKN. १६. अस्माभिः क्रियमाणो यज्ञः । ...उखापीठकिकायज्ञ एवोखारूपकमेतत्कल्पितं भाष्ये स्रवतेरौचित्यादिति SKN.

१७. मा सुस्रवत् नित्यमविनाशेन वर्ततामिति Dur. मा विनशदित्यर्थः SKN.

१८. कीदृशस्याहिर्बुध्न्यस्य...यज्ञकामस्य SKN.

१९. यद्वा-अस्याहिर्बुध्न्यस्येममहिर्बुध्न्युमुद्दिश्य ऋतायोर्यज्ञकामस्य यो यज्ञः स न क्षीयेतेत्यर्थः Sy. मा च नोऽहिर्बुध्न्यो रेषणाय धात् । मास्य यज्ञोखा च स्रिधत् । यज्ञकामस्य N. 10. 45. SKN. IV. 49. 50.

उत नं एषु नृषु श्रवो धुः प्र राये यन्तु शर्धन्तो अर्यः ॥ १८ ॥

उत नः[1]। अपि च। अस्माकम्[2]। एषाम्। नृणां मध्ये[3]। अन्नम्[4]। ददतु[5]। प्रगच्छन्तु च[6]। धनाय[7]। शर्धतिरुत्साहकर्मा शर्धन्तः[8]। गमनशीला देवाः[9]।

तपन्ति शत्रुं स्व१र्ण भूमा महासेनासो अमेभिरेषाम् ॥ १९ ॥

तपन्ति[10]। तपन्ति[11]। शत्रुम्[12]। आदित्यः। इव। भूमिस्[13]। हासेना[14] स्तोतारः[15]। बलैः। देवानाम्[16]।

आ यन्नः पत्नीर्गमन्त्यच्छा त्वष्टा सुपाणिर्दधातु वीरान् ॥ २० ॥

आ यन्नः[17]। यदि[18]। अस्मान्। देवपत्न्यः[19]। आगच्छन्ति। यदि[20] च सुपाणिः[21]। त्वष्टा[22]। वीरान्[23]। धारयति[24] पूर्वत्र सम्बन्धः[25]।

प्रति नः स्तोमं त्वष्टा जुषेत स्यादस्मे अरमतिर्वसूयुः ॥ २१ ॥

प्रति नः। प्रतिसेवेत[26]। अस्माकम्। स्तोमः[27]। त्वष्टा भवतु[28]। अस्मासु[29]। पर्याप्तमतिरत्वष्टा[30]। धनकामः।

---

१. अयं द्वृचो दैवो मारुतो वा Sy.
२. अस्मदीयेषु Sy.
३. पुरुषेषु Sy.
४. अन्न A.
५. दत्त A. देवा मरुतो वा धारयन्तु Sy.
६. प्रगच्छन्तु। म्रियन्तामित्यर्थः Sy.
७. धनार्थम् Sy.
८. शर्धतीरुत्साहकर्मा गन्धंतः A. उत्सहमानाः म्रियमाणा वा Sy.
९. अरयः Sy.
१०. पतन्ति A.
११. बाधन्ते Sy.
१२. शत्रुं स्वकीयम् Sy.
१३. भूमिम् is suggested for भूमिस्॥ भुवनानि Sy.
१४. मभासेना A. महासेना is suggested for यहासेना
१५. राजानः Sy.
१६. मरुतां देवानां वा महान्तोऽपि राजानोऽमैर्बलैः शत्रून् बाधन्ते। तानि बलानि देवानामेवेत्यर्थः Sy.
१७. अस्या देवपत्न्यस्त्वष्टा वा देवता Sy.
१८. यदा Sy.
१९. देवानां पत्न्यः Sy.
२०. तदा Sy.
२१. शोभनहस्तः Sy.
२२. त्वष्टा देवः Sy.
२३. वीरं M. पुत्रान् Sy.
२४. अस्मभ्यं ददातु Sy.
२५. VM. ignores अच्छ. Sy. explains it by अभि।
२६. सेवत M.
२७. सोमः M. स्तोमम् is suggested for स्तोमः। अस्माकं स्तोमस्त्वष्टा is written twice in A. अस्माकं सोमस्त्वष्टा भवतु is written twice in M. स्तोत्रम् Sy.
२८. भूयात् Sy.
२९. अस्मदर्थम् Sy.
३०. सर्वविषयव्याप्तबुद्धिर्वा Sy.

**ता नो॑ रा॒सन्ना॒तिषा॑चो॒ वसू॒न्या रोद॑सी वरुणा॒नी शृ॑णोतु ।**
**वरू॑त्रीभिः सुशर॒णो नो॑ अस्तु॒ त्वष्टा॑ सु॒दत्रो॒ वि द॑धातु॒ रायः॑ ॥ २२ ॥**

ता नः[1] । तानि[2] । अस्मभ्यम् । ददतु[3] । दानस्य सम्भक्त्यः[4] । धनानि । आशृणोतु[5] । द्यावापृथिव्यौ तदनु[6]-गच्छेताम्[7] । तथा वरुणानि च[8] स्तुतिः[9] । देवपत्नीभिः[10] सह । सुगृहः[11] । अस्माकम् । अस्तु । त्वष्टा[12] । सुधन[13] । करोतु[14] च । अभिमतं धनं[15] हितम्[16] ।

**तन्नो॑ रा॒यः पर्व॑ता॒स्तन्न॒ आप॒स्तद्रा॑ति॒षाच॒ ओष॑धीरु॒त द्यौः ।**
**वन॒स्पति॑भिः पृथि॒वी स॒जोषा॑ उ॒भे रोद॑सी॒ परि॑ पासतो नः ॥ २३ ॥**

तन्नो रायः । तदित् स्तोत्रम् । अस्माकम् । त्वष्टृप्रभृतयः[17] । परिरक्षन्त्विति[18] ।

---

१. वसिष्ठस्यार्षम् Dur. वसिष्ठस्य SKN.
२. यान्यस्माकमभीष्टानि तानि Sy. ता देव्यः Dur. तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यानि वयमर्थितवन्तस्तानि SKN.
३. प्रयच्छन्तु Sy. ददात्वित्यर्थः Dur. पूर्वेषु-कालेषु रासन्, रासतेर्दानकर्मणो लङि, अड-भावश्छान्दसत्वात् । अरासन् दत्तवन्तः SKN.
४. सम्भक्ता M. सम्भक्त्यः is suggested for सभक्त्यः ॥ दानसमवेता देवपत्न्यः Sy. हविर्दानं या सचन्ते सेवन्ते Dur. हविषो दानं रातिस्तां याः सचन्ते । अथवा रातिषा-चो हविर्दानस्य सेवित्र्य इत्यर्थः SKN.
५. अश्शृणोतु A. अस्मदीयं स्तोत्रमभिशृणोतु Sy. आभिमुख्येन स्थित्वा शृणोतु Dur. यत एव-मतो ब्रवीमि । इदानीमपि आकारः, शृणोत्वि-त्यनेन सम्बध्यते ।...आश्रवः प्रतिज्ञा । अतिदास्याम इति प्रतिजानन्तु । अभ्युप-गच्छन्त्वित्यर्थः SKN.
६. द्यावापृथिव्यौ चाभिशृणुताम् Sy. रुद्रस्य पत्नी Dur. ७. तिदनुगच्छेत् A.
८. ०णानी च is suggested for ०णानि च ।
९. स्तुतिम् is suggested for स्तुतिः ।
१०. उपद्रवाणां वारयित्रीभिर्देवपत्नीभिः सह Sy. वरयितव्याभिः सहितः Dur. वरयितव्याभि-रेताभिर्देवीभिः सह SKN.
११. सु शरणप्रदः Sy. स्वाश्रयणः Dur. आश्रयः SKN. १२. कः ? त्वष्टा नाम देवः SKN.
१३. सुधनं M. सुधनः is suggested for सुधन ॥ कल्याणदानः Sy. एवमत्र रायः-सम्बन्धात् सुदत्रः कल्याणदान इत्युपपद्यते Dur. कीदृशः ? सुदत्रः सुदानः स्वाश्रयणश्च भूत्वा SKN. सुदत्रः कल्याणदानः N. 6. 14. १४. विविधं दधातु SKN.
१५. धनानि Sy.
१६. हितः A. धनमित्यर्थः Dur. धनानि SKN. N. 6. 14., SKN. II. 434
१७. त्वष्टु प्रभृतयं A
१८. Sy. explains this stanza in the following manner:—
नोऽस्माकम् । तदित्यव्ययः । ता रायो धनानि पर्वताः परिपान्तु । नोऽस्माकं तत्ता राय आ-पश्च परिपान्तु । तद्रातिषाचो दानसहिता देवपत्न्यश्च परिपान्तु । ओषधीरोषधयश्च तत्परिपान्तु । उतापि च द्यौस्तत्परिपातु । वनस्पतिभिः सजोषाः सहिता पृथिव्यन्तरिक्षं च तत् परिपातु । आपः पृथिवीत्यन्तरिक्षनामसु पाठात् (Ngh 1. 3.) । नोऽस्माकं तदुभे रोदसी द्यावापृथिव्यावपि परि पासतः परि-रक्षताम् ।

अनु तदुर्वी रोदसी जिहातामनु द्युक्षो वरुण इन्द्रसखा ।
अनु विश्वे मरुतो ये सहासो रायः स्याम धरुणं धियध्यै ॥ २४ ॥

अनु तत् । विस्तीर्णे । द्यावापृथिव्यौ । तत्[१] । अनुगच्छेताम्[२] । तथा वरुणश्च । दीप्तेः[३] । अनुगच्छताम्[४] इन्द्रसुखा[५] । अनुगच्छन्तु[६] । विश्वे च । मरुतः[७] । ये । सहनशीलाः[८] । धनस्य । गृहं[९] वयम् । स्याम[१०] । श्रितानां[११] धारणार्थमिति ।

तन्न इन्द्रो वरुणो मित्रो अग्निराप ओषधीर्वनिनो जुषन्त ।
शर्मन्त्स्याम मरुतामुपस्थे यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥

तन्न इन्द्र । तदिदम्[१२] । अस्माकम् । इन्द्रादयः[१३] । सेवन्ताम् । वृक्षा वनिनः । तथा वयं मरुताम् । उपस्थाने[१४] सति । सुखे[१५] । स्यामेति[१६] ।

## VII. 35.

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥ १ ॥

[१७]शन्न इन्द्राग्नी । शमयितारावुपद्रवाणाम्[१८] । इन्द्राग्नी । भवताम् । रक्षणैरिति[१९] इन्द्रस्य प्राधान्यात् सर्वे-

---

१. वक्ष्यमाणम् Sy. २. अनुमन्येतामित्यर्थः Sy.

३. दीप्तेर्निवासभूतः Sy.

४. अनुगच्छतु is suggested for अनुगच्छताम् ॥
द्विवचनस्यैकवचनान्ततया विपरिणामः Sy.

५. इन्द्रसखा is suggested for इन्द्रसुखा
इन्द्रः सखा यस्येति बहुव्रीहिः Sy.

६. अत्र बहुवचनान्ततया विपरिणामः Sy.

७. मरुता A.

८. शत्रूणामभिभवितारः । ते मरुतोऽपि Sy.

९. ग्रहम् A. धाम स्थानम् Sy.

१०. स्यामा A. भवेमेति Sy.

११. श्रितां धार० A. यदनुमन्तव्यं तदाह-भरणीयं धारयितुम् Sy.

१२. स्तोत्रम् Sy.

१३. आदि refers to वरुणः । मित्रः । अग्निः । आपः and ओषधीः ।

१४. उपस्थाने वर्तमानाः Sy.

१५. शर्मणि सुखे गृहे वा Sy.

१६. भवेम । सिद्धमन्यत् Sy.

१७. 'शं न इन्द्राग्नी' इति पञ्चदशर्चं द्वितीयं सूक्तम् अत्रेयमनुक्रमणिका—'शं नः पञ्चोना शान्तिः' (35. 35. p. 25.) इति । वसिष्ठ ऋषिः । त्रिष्टुप् छन्दः । 'वैश्वदेवं ह' (KSA. 35. 34. p. 25.) इत्युक्तत्वादिदमपि वैश्वदेवम् । महानाम्नीव्रत एतत् सूक्तं जप्यम् । तथा च सूत्रितम्—'भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः' (ĀSS. 8. 14.) इति. . .Sy. इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ देवताः Mah.

१८. शान्त्यै Sy. सुखरूपौ Mah. सुखरूपौ च U.

१९. पालनैः कृत्वा Mah. पालनैः सह U.

ष्वनुपङ्गः । शम्[1] । अस्माकम्[2] । इन्द्रावरुणौ । मनुष्यैर्दत्तहविष्कौ[3] । शम्[4] । इन्द्रासोमौ । अभ्युदयार्थम्[5] । अस्माकम् । शम्[6] । योश्च[7] भवताम् । शमीति[8] पुनः पूरणं शम् । अस्माकम् । इन्द्रापूषणौ[9] । युद्ध[10] इति ।

**शं नो भगः शमु नः शंसो अस्तु शं नः पुरंधिः शमु सन्तु रायः ।**
**शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥ २ ॥**

शन्नो भगः । शम्[11] । अस्माकम् । भगो देवः । शम्[11] । एव । अस्माकम् । नराशंसः । भवतु । शम्[11] । अस्माकम् । प्रज्ञा[12] । शम्[11] । एव । भवन्तु । धनानि । शम्[11] । नः सत्यस्य[13] । सयमस्य[14] । शंसनम्[15] । शम्[11] । नः । अर्यमा[16] । बहुजनः[17] । भवतु ।

**शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।**
**शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥ ३ ॥**

शन्नो धाता । शम्[18] । नः[19] । धाता[20] । भवतु । शम्[18] । एव । धर्ता[21] । शम्[18] । नः[19] । विस्तीर्णा[22] पृथिवी । अन्नैः[23] । भवतु । शम्[24] । द्यावापृथिव्यौ । महत्यौ । शम्[18] । पर्वतः । शम्[18] । नः[19] । देवानाम् । स्वाह्वानानि[25] स्तोत्राणि । भवन्तु[26] ।

---

१. शान्त्यै Sy. सुखरूपो Mah. सुखरूपौ च U.
२. अस्माकमस्मभ्यं वा Sy.
३. रातहव्यैः यजमानैः Sy. रातं दत्तं हव्यं ययोस्तौ रातहव्यौ हविस्तृप्तौ Mah. दत्तहविष्कौ भवताम् U.
४. शान्त्यै भवताम् Sy. सुखरूपौ भवताम् Mah.
५. कल्याणाय च भवताम् Sy. सुष्ठु इतं सुवितं साधुगमनाय साधुप्रसवाय वा Mah. U.
६. शान्त्यै सुखाय च । पुनरुक्तिरादरार्था । अथवा शं शमनहेतुकं सुखम् Sy. रोगाणां शमनाय Mah. शमनाय रोगाणाम् U.
७. न्वयोश्च M. The passage beginning with रक्षणैरितीन्द्रस्य and ending with योश्च भवताम् is missing in A. यौर्विषय-योगनिमित्तं सुखमित्यपुनरुक्तिः Sy. यवनाय पृथक्करणाय च भयानाम् । रोगं भयं च निवर्त्य सुखरूपौ भवतामित्यर्थः Mah. पृथक्करणाय च भयानाम् U.
८. शमिति is suggested for शमीति ॥ इन्द्रसोमौ देवौ शं सुखरूपौ भवताम् Mah. सुखरूपौ चेन्द्रासोमौ भवताम् U.
९. ०पूषणो M. इन्द्रपूषसञ्ज्ञौ देवौ. . .सुखरूपौ भवताम् Mah.
१०. अन्नलाभे निमित्ते वा Sy. वाजस्यान्नस्य सातौ दाने निमित्तभूते सति Mah. अन्नसम्भजने निमित्तभूते U.
This stanza=YV. 36. 11.
११. शान्त्यै Sy. १२. बहुधीरप्यस्तु Sy.
१३. त्वस्य M.
१४. सुयमस्य is suggested for सयमस्य ॥ शोभनयमयुक्तस्य Sy. १५. वचनम् Sy.
१६. देवोऽप्यस्तु Sy. १७. बहुप्रादुर्भावः Sy.
१८. शान्त्यै Sy. १९. अस्माकम् Sy.
२०. देवः Sy.
२१. पुण्यपापानां विधारयिता वरुणो देवोऽप्यस्तु Sy.
२२. विवर्तगमना पृथिव्यपि Sy.
२३. अन्नैः सह Sy.
२४. शम् is missing in A. शम्भवताम् Sy.
२५. स्वाह्वानि A. सुष्टुतयः Sy.
२६. भवतु A.

शं नो॑ अ॒ग्निर्ज्योति॑रनीको अस्तु॒ शं नो॑ मि॒त्रावरु॑णाव॒श्विना॒ शम् ।
शं नः॑ सु॒कृतां॑ सुकृ॒तानि॑ सन्तु॒ शं न॑ इषि॒रो अ॒भि वा॑तु॒ वातः॑ ॥ ४ ॥

शन्नः । शम् । अस्माकम् । अग्निः । ज्योतिर्मुखः । भवतु । शम् । अस्माकम् । इन्द्रावरुणौ[1] । अश्विनौ[2] च । शम् । नः । सुकृताम्[3] । सुकृतानि कर्माणि[4] । भवन्तु[5] । तथा सुखम् । अस्माकम् । गगनशीलः । वातः[6] । आवातु

शं नो॒ द्यावा॑पृथि॒वी पू॒र्वहू॑तौ॒ शम॒न्तरि॑क्षं दृ॒शये॑ नो अस्तु ।
शं न॒ ओष॑धीर्व॒निनो॑ भवन्तु॒ शं नो॒ रज॑स॒स्पति॑रस्तु जि॒ष्णुः ॥ ५ ॥

शन्नः । शम्[7] । अस्माकम् । द्यावापृथिव्यौ । प्रथमाह्वाने[8] । सुखम् । अन्तरिक्षम्[9] । दर्शनाय[10] । अस्माकम् । भवतु । शम् । नः । ओषध्यः[11] । वृक्षाश्च । भवन्तु । शम् । नः[12] । लोकस्य । पतिः[13] । अस्तु । जिष्णुरादित्यः[14] ।

शं न॒ इन्द्रो॒ वसु॑भिर्दे॒वो अ॑स्तु॒ शमा॑दि॒त्येभि॒र्वरु॑णः सु॒शंसः॑ ।
शं नो॑ रु॒द्रो रु॒द्रेभि॒र्जला॑षः॒ शं न॒स्त्वष्टा॒ ग्नाभि॑रि॒ह शृ॑णोतु ॥ ६ ॥

शन्न इन्द्रः । शम्[15] । नः । इन्द्रः । वसुभिः सह[16] । देवः[17] । भवतु । तथादित्यैः[18] । वरुणस्य[19] । शं भवतु । सुष्टुतिः[20] । शम् । नः । रुद्रः[21] । रुद्रैः । सुखकरः, जलाष इति सुखमावः[22] । शम् । नः । त्वष्टा । देवपत्नीभिः सह । स्तोत्रं शृणोतु[23] ।

शं नः॒ सोमो॑ भवतु॒ ब्रह्म॒ शं नः॒ शं नो॒ ग्रावा॑णः॒ शमु॑ सन्तु य॒ज्ञाः ।
शं नः॒ स्वरू॑णां मि॒तयो॑ भवन्तु॒ शं नः॑ प्र॒स्वः१॒॑ शम्व॑स्तु॒ वेदिः॑ ॥ ७ ॥

शन्नः सोमः[24] । शम्[25] । नः[26] । सोमः । भवतु । ब्रह्म च[27] । अस्माकम् । शङ्करम् । शम्[28] । नः । ग्रावाणः[29] । शम् ।

---

१. मित्रावरुणौ is suggested for इन्द्रावरुणौ । मित्रावरुणावपि...भवताम् Sy.
२. अश्विनावपि शम्भवताम् Sy.
३. पुण्यकर्मणां पुरुषाणाम् Sy.
४. पुण्यकर्माण्यपि Sy. ५. भवतु A.
६. वायुरपि Sy.
७. शन्नम् A. शान्त्यै Sy.
८. ०मां ह्वा० A. ९. ०रिक्ष M.
१०. दशयनाय A.
११. ओषधयोऽपि भवतु Sy.
१२. अस्माकम् Sy.
१३. पतिरिन्द्रोऽपि Sy.
१४. जयशीलः Sy.
१५. शान्त्यै भवतु Sy.
१६ ने A. अस्माकम् Sy.
१७. देवैः कार्यम् Sy.
१८. दानादिगुणयुक्तः Sy.
१९. वरुणश्च is suggested for वरुणस्य ।
२०. सुष्टुविति M. शोभनस्तुतिः Sy.
२१. दुःखद्रावको देवः Sy.
२२. ०माव A. जलाशमिति सुखनाम Ngh. 3. 6.
२३. VM. ignores इह ॥ इह यज्ञे Sy.
२४. सोमं A. २५. शान्त्यै Sy.
२६. अस्माकम् Sy. २७. स्तोत्रमपि Sy.
२८. शान्त्यै भवतु Sy.
२९. अभिषवसाधनभूताः पाषाणा अपि Sy.

एव । सन्तु । यज्ञाः । शम् । नः । यूपानाम् । मानानि[1] । भवन्तु । शम् । नः । बर्हीषि[2] । शम् । एव । अस्तु । वेदिः[3] ।

शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु ।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥

शन्नः । कल्याणम्[4] । अस्माकम् । सूर्यः । उदेतु[5] । बहूनां द्रष्टा[6] । शम् । नः । चतस्रः । मुख्या दिशः[7] । भवन्तु । शम् । नः । पर्वताः । निश्चलं तिष्ठन्तः[8] । भवन्तु । शम् । नः । सिन्धवः[9] । शम्[10] । एव । सन्तु[11] । आप इति ।

शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥

शन्नः । शम्[12] । अस्माकम् । अदितिः[13] । भवतु । कर्मभिः[14] । शम् । नः । भवन्तु । मरुतः[15] । स्वञ्चनाः[16] । शम् । नः विष्णुः[17] । शम् । एव । पूषा[18] । नः । अस्तु । शम् । अस्माकमस्तु । भवित्रं[19] यत्किञ्चनं[20] पृथिव्यां भवति । शम् । एव । अस्तु । वायुः[21] ।

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥ १० ॥

शन्नः । शम्[21] । नः[22] । देवः[23] । सविता । रक्ष[24] । ज[25] । नः । भवन्तु[26] । उषसः । व्युच्छन्त्यः । शम् । नः । पर्जन्यः । भवतु । प्रजाभ्यः । शम् । अस्माकम् । अस्तु । क्षेत्रस्य । पतिः । सुखस्य भावयिता ।

---

१. उन्मानान्यपि Sy.
२. ओषधयोऽपि Sy.
३. वेदिं A.
४. शान्त्यै Sy.
५. उदयं प्राप्नोतु Sy.
६. दृष्टा A. विस्तीर्णतेजाः Sy.
७. महाविशोऽपि Sy.
८. निश्चलास्तिष्ठन्तः M. ध्रुवाः Sy.
९. नद्योऽपि Sy.
१०. सम् A.
११. शन्तु A.
१२. शान्त्यै Sy.
१३. देवी Sy.
१४. व्रतैः कर्मभिः सार्धम् Sy.
१५. मरुतोऽपि Sy.
१६. शोभनस्तुतयः Sy.
१७. व्यापकः Sy.
१८. पूषा-देवोऽपि Sy.
१९. भुवनमन्तरिक्षमुदकं वा Sy.
२०. किञ्चिन्न पृ० A.
२१. शान्त्यै भवतु Sy.
२२. अस्माकम् Sy.
२३. क्रीडनादिगुणयुक्तः Sy.
२४. रक्षन् is suggested for रक्ष ।
२५. शम् is suggested for ज ।
२६. भवन्ति A.

शं नो॑ दे॒वा वि॒श्वदे॑वा भवन्तु॒ शं सर॑स्वती स॒ह धी॒भिर॑स्तु ।
शम॑भि॒षाचः॒ शमु॑ राति॒षाचः॒ शं नो॑ दि॒व्याः पार्थि॑वाः॒ शं नो॒ अप्याः॑ ॥ ११ ॥

शन्नः । विश्वे देवा[1] नाम । देवताः । अस्माकम् । शम्[2] । भवन्तु[3] । शम् । सरस्वती । सह । कर्मभिः[4] । अस्तु । शम् । अभिगन्तारः[5] । शम्[6] । एव । धनस्य सेवितारः[7] । शम् नः । दिवि भवाः । शम् । पार्थिवाः[8] । आन्तरिक्ष्याः[9] ।

शं नः॑ स॒त्यस्य॒ पत॑यो भवन्तु॒ शं नो॒ अर्व॑न्तः॒ शमु॑ सन्तु॒ गावः॑ ।
शं न॑ ऋ॒भवः॑ सु॒कृतः॑ सु॒हस्ताः॒ शं नो॑ भवन्तु पि॒तरो॒ हवे॑षु ॥ १२ ॥

शन्नः सत्यस्य । अग्निर्यमो वरुण इति सत्यस्य । पतयः[10] । अस्माकम्[11] । शम् । भवन्तु । शम् । नः । अश्वाः । शम् । एव । भवन्तु । गावः । शम् । नः । ऋभवः । सुवर्माणः[12] । कुशलहस्ताः[13] । शम् । अस्माकम् । भवन्तु । पितरः[14] । ह्वानेषु[15] ।

शं नो॑ अ॒ज एक॑पाद्दे॒वो अ॑स्तु॒ शं नोऽहि॑र्बु॒ध्न्यः॑ शं स॑मु॒द्रः ।
शं नो॑ अ॒पां नपा॑त्पे॒रुर॑स्तु॒ शं नः॒ पृश्नि॑र्भवतु दे॒वगो॑पा ॥ १३ ॥

शन्नः । शम्[16] । अस्माकम् । अजः । एकपान्नाम[17] । देवः । भवतु । शम् । अस्माकम् । अहिर्बुध्न्यः[18] । शम् । अन्तरिक्षम्[19] । शम् । अस्माकम् । अपान्नपात्[20] । रक्षकः[21] । भवतु । शम् । नः । पृश्निः[22] । भवतु । देवा गोपनीया यस्या[23] गोपयितारो वा ।

---

१. बहुस्तोत्रका देवाः Sy.
२. शान्त्यै Sy.
३. भवतु M.
४. स्तुतिभिः कर्मभिर्वा Sy.
५. ०गन्ताः M. यज्ञमभितः सेवमानाश्च Sy.
६. शरम् A.
७. दानं सेवमानाः Sy.
८. पृथिव्यां सम्भूताश्च Sy.
९. अप्या अप्स्वन्तरिक्षे भवाश्च Sy. आकाशमाप इत्यन्तरिक्षनामनी Ngh. 1. 3.
१०. पालकाः सत्यशीला देवाः Sy.
११. शान्त्यै Sy.
१२. सुकर्माणः is suggested for सुवर्माणः
१३. शोभनहस्ताः Sy.
१४. पितरोऽपि Sy.
१५. स्तोत्रेषु सत्सु Sy.
१६. शान्त्यै Sy.
१७. ०वान्नाम A. एकपान्नामधेयः Sy.
१८. अहि बुध्न्यः A.
१९. समुद्रोऽपि Sy.
२०. अपान्नपान्नामधेयोऽपि देवः Sy.
२१. उपद्रवेभ्यः पारयिता Sy.
२२. मरुतां माता Sy.
२३. य is written twice in A. देवा गोपायितारो यस्यां सा Sy.

**आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः ।**
**शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ १४ ॥**

आदित्याः । आदित्यादयः[1] । वसिष्ठेन[2] क्रियमाणम् । नवतरम्[3] । स्तोत्रम् । सेवन्तु[4] । शृण्वन्तु । अस्माकम् । दिव्या[5] देवाः । पार्थिवाश्च । अपि च । येऽति[6] । गाजाता[7] मरुतः । यज्ञियाश्चादित्याः[8,9] ।

**ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः ।**
**ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥**

ये देवानाम् । ये[10] । देवानामपि । यज्ञियानाम्[11] । यज्ञिया भवन्तीति[12] प्राणानाहेन्द्रादीन्[13] वा । मनुष्यस्य[14] । यष्टव्याः[15] । अमृताः । सत्यज्ञाः । ते[16] । न[17] । प्रयच्छन्तु । बहूनां गेयं[18] धनम् । अद्य यूयम् । पात । स्वस्तिभिः । सदा । नः[19] ।

व्याख्यत्तृतीयमध्यायं[20] पञ्चमस्याष्टकस्य सः ।
विश्वामित्रकुले जातो माधवः सुन्दरीसुतः ॥

# [अथ पञ्चमाष्टके चतुर्थोऽध्यायः][21]

'प्र ब्रह्मै[22]त्वित्यथाध्यायं[23] व्याचिख्यासति माधवः ।
अनेकर्षिषु[24] सूक्तेषु[25] वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

---

१. आदि refers to रुद्र and वसवः । आदित्याः दिव्याः 'अदितिर्द्यौः' (RV. 1. 89. 10.) इति श्रुतेः । रुद्रा आन्तरिक्ष्याः, वसवः पार्थिवाश्च Sy.
२. अस्माभिः क्रियमाणम् Sy. ३. नवतारम् A.
४. सेवन्ताम् is suggested for सेवन्तु ॥ जुषन्ताम् Sy.
५. अन्ये दिव्या दिवि भवाः Sy.
६. येऽपि is suggested for येऽति ।
७. गोजाता is suggested for गा जाता गोः पृश्नेर्जाता Sy. नाकः गौः इति (द्युपृश्नि)- साधारणनामनी Ngh. 14.
८. यज्ञार्हास्ते सर्वेऽपि नोऽस्माकं हवं शृण्वन्तु Sy.
९. VM. ignores इदम्
१०. ये देवाः सन्ति Sy. ११. यजनीयानाम् Sy.
१२. यजनीयाः Sy. १३. ०णानां हेन्द्रा० A.
१४. प्रजापतेश्च Sy. १५. मरणरहिताः Sy.
१६. ते सर्वे Sy.
१७. नः is suggested for न । अस्मभ्यम् Sy.
१८. बहुकीर्ति पुत्रम् Sy. १९. सिद्ध एवोत्तमः पादः Sy. २०. व्याख्या तृती० Sy.
२१. Supplied by the Editor.
२२. प्र ब्रह्मेत्यथा० A. अस्मात्पूर्वं 'श्रीः' इत्यधिकं वर्तते A.
२३. R. reads प्र ब्रह्मैतु सदध्यायम्
२४. RV. 7. 36. अनेक० is suggested for अग्नेक० A. अग्नेकर्षीषु M. अनेकर्षीषु R.
२५. सूत्रेषु A.

ऋषयः[1] सूक्तमेकं[2] सदपश्यन् बहवः कथम् ।
सङ्घीभूय तपस्तप्त्वा[3] सर्वं एव सहापठन्[4] ॥ २ ॥
इति केचन मन्यन्ते माधवस्य न तन्मतम् ।
नाम्नि सूक्ते[5] श्रूयमाणे शक्यमेवं[6] प्रभाषितुम् ॥ ३ ॥
'एना[7] वयं पर्यसेति संवादे यन्नदीवचः[8] ।
तत्रैवं शक्यते वक्तुं नाम ह्यत्र निवेशितम्[9] ॥ ४ ॥
'यमग्ने[10] वाजसातम्[11] सूक्ते नाम च कीर्त्यते[12] ।
'प्रयस्वन्तो[13] हवामहे' शक्यं तत्रापि[14] भाषितुम् ॥ ५ ॥
'एवाँ अग्निं[15] वसूयवः' सूक्ते सामान्यतः कृतः ।
वसूयुनामनिर्देशः[16] सन्त्यन्येऽपि च तादृशाः ॥ ६ ॥
'अबोध्यग्निः समिधा[17], इति सूक्तं बुधगविष्ठिरौ[18] ।
सहैकं द्वौ ददृशतुरेकः[19] सूक्ते तु कीर्त्यते ॥ ७ ॥

---

१. ऋषयः is missing. in M.
२. ०कं स पदप० A. M. The reading is adopted from R.
३. ०यस्तस्तप्त्वा A.
४. स is missing in A. M. The reading is adopted from R.
५. सूक्तो A.
६. वाक्यमेव A. वाक्यमेवं प्रभाषत M.
७. येना वयं A. [RV. 3. 33. 4.]
८. ०वो यं नदीव च A. M.
९. ०त्रानिवैशिनम् A. ०त्रानिवेशनम् M. The reading is adopted from R.
१०. अयम० A. M.
११. नामव A. मावकी० M.
१२. The quotation is up to वाजसातम
१३. पयस्व० M. [RV. 5. 203.]
१४. ०त्राविभा० A. ०त्राभिभा० M. The reading is adopted from R.
१५. एवमग्नि A. M. [RV 5. 25. 9.]
१६. वसुयुगामनिर्देशः (श्य M.) A. M. The reading is adopted from R.
१७. समीधेति M. [RV. 5. 1. 1.]
१८. बुधागष्ठ A. १९. ०रेकसूक्ते A. M. The reading is adopted from R.

'गविंष्ठिरो नमंसा, इति बुधस्तत्र[2] न कीर्तितः ।
'यदिन्द्राहं यथा त्वम्,[3]' च सूक्तमार्षं द्वयोर्मतम् ॥ ८ ॥
'अहं यथा त्वमीशीय,[4] स्तोता मे[5]' इति दृश्यते ।
एकवत्तत्र निर्देशो न त्वावामिति दृश्यते ॥ ९ ॥
'आ यदिन्द्रश्च[6] दद्वहे सहस्रं वसुरोचिषः[7] ।
एकवत्तत्र[8] निर्देशः 'तिष्ठं[9] वनंस्य मध्य आ[10]' ॥ १० ॥
मत्स्यानां जालबद्धानां[11] 'त्यानु'[12]इत्यार्षं विदुर्बुधाः ।
तत्रापि दृष्टो निर्देश 'उत त्वामदिते[13] महि' ॥ ११ ॥
एवंविधेषु सूक्तेषु तस्मादेक ऋषिर्मतः ।
प्रधानोऽन्ये त्वप्रधाना इति मन्यामहे वयम् ॥ १२ ॥
स च प्रधानो निर्देशादस्माभिर्ज्ञायते क्वचित् ।
'गविंष्ठिरो नमंसा' इति प्राधान्यं ह्यवगम्यते ॥ १३ ॥
'यदिन्द्राहं' यथेत्यत्र[14] न विशेषः प्रतीयते[15] ।
गोसूक्ती[16] वाश्वसूक्ती वा नैकोऽपि ह्यत्र कीर्त्यते ॥ १४ ॥

१. ०ष्ठितो मन० M. मन० A. [RV. 5. 1. 12.]
२. ०स्त्वत्र R.
३. [RV. 8. 14. 1.]
४. त्वमशीय० M. [RV. 8. 14. 1.]
५. स्तोनाम A. M.
६. ग्रायमिन्द्रस्य A. अयमिन्द्रस्य M.
७. [RV. 8. 34. 16.]
८. ०वन्तत A.
९. ०ष्ठन् A. M.
१०. [RV. 8. 34. 18.]
११. बन्धानां A. '०वद्धा' इति वा पाठः स्यात्
१२. त्यान्वि (त्यानु इ०) त्यार्षम् A. M. त्यानित्यार्षम् [RV. 8. 67. 1.]
१३. त्वमहिते A. त्वमभिते (०मदिते) M. [RV. 8. 67. 10.]
१४. इन्द्रोहं यथेत्यत M. [RV. 8. 14. 1.]
१५. इन्द्रोऽहं यथेत्यत न विशेषः प्रतियतो A.
१६. गोष्ठूक्ती वाश्चसूक्तीवानैको विभ्यत्र A. गोषूक्ती R.

'तं प्रत्नथे[1]त्यवत्सारः[2] काश्यपोऽन्यैः सहर्षिभिः ।
तस्मिन् सूक्ते समुद्दिष्टैर्ददर्शे[3]त्यवगम्यते ॥ १५ ॥
'ऋज्राश्वः प्रष्टिभिः[4]' इति विस्पष्टमृषिराह च ।
कर्तृमात्मनौ[5] दृष्टौ भ्रातृणां चाप्रमाणताम्[6] ॥ १६ ॥
प्रह्वाः[7] प्राञ्जलयः सर्वे इन्द्रं तुष्टूषवः[8] स्थिताः ।
उपश्रृण्वन् सुतेष्विन्द्रमृज्राश्वः[9] स्तुतवान् स्वयम् ॥ १७ ॥
ऋषिरेकां ददर्शर्चमृषि[10]रेकामथापरः ।
इति केचन मन्यन्ते तदयुक्तमिति स्थितिः ॥ १८ ॥
शतं वैश्वानसान् प्राहुः सहस्रं वसुरोचिषः[11] ।
न तावत्य ऋचस्तेषां वृद्धेष्वस्तु विनिर्णयः ॥ १९ ॥

VII. 36.

**प्र ब्रह्मै॑तु॒ सद॑नादृ॒तस्य॒ वि र॒श्मिभिः॑ ससृजे॒ सूर्यो॒ गाः ।**
**वि सानु॑ना पृथि॒वी स॑स्र उ॒र्वी पृ॒थु प्रती॑क॒मध्येधे॑ अ॒ग्निः ॥ १ ॥**

प्र ब्रह्म[12] ॥ वसिष्ठं[13] वैश्वदेवम् ॥ प्रैतु[14] । स्तुतिं श्रोत्यं[15] ब्रह्मादित्यः[16] । उदकस्य[17] । सदनाद्दिवः[18] ।

---

१. तं प्रत्नथा [RV. 5. 44. 1.]
२. प्रकृतथेत्यत त्सारं A. ०त्यतत्सारं M. The reading is adopted from R.
३. द्दिष्टे दद० A. ०ष्टैर्देवृशेत्य० M. The reading is adopted from R.
४. ऋज्राश्च प्रष्टि०A. ०श्वपृष्टि० M. [RV. 1. 100. 17]
५. कतृ....स्मनो दृष्टौ M. प्राधान्यञ्चात्मनो R. कर्तृत्वमात्मनो is suggested for कर्तृमात्मनौ० ॥
६. ०णाम प्रधानताम् R.
७. प्रंह्वाः A. ८. कुष्टूषव A.
९. ०जाश्चस्तु० A. ०जाश्वः The reading is adopted from R.
१०. ०र्शंच्च ऋ० A. ११. ०चिषम् A.
१२. 'अथ पञ्चमाष्टके चतुर्थोऽध्याय आरभ्यते । तत्र षडनुवाकात्मकस्य वसिष्ठस्य सप्तमस्य मण्डलस्य तृतीयेऽनुवाके द्वाविंशति सूक्तानि । तत्र 'प्र ब्रह्म' इति नवर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं पूर्ववद्वैश्वदेवम् । अनुक्रान्तञ्च— 'प्र ब्रह्म नव' (KSA. 36. 36. p. 25.) इति । विनियोगो लैङ्गिकः Sy.
१३. वषिष्ठं A. वासिष्ठं is suggested for वसिष्ठम् ।
१४. स्तुत्यान् सूर्यादीन् प्रकर्षेण गच्छतु Sy.
१५. स्तोत्रं is suggested for श्रोत्यं ॥
१६. ०दित्यम् A. १७. प्रज्ञस्य Sy.
१८. स्थानाद् देवयजनदेशात् Sy.

विहृति[1] उदकानि[2] । सूर्यः[3] । रश्मिभिः[4] । ततः उच्छ्रितेनौषधिवनस्पतिसन्नहन[5] । विस्तृतासि[6] । पृथिवी[7] । महती[8] सञ्जातेषु चौषधिषु वनस्पतिषु । प्रतीतम्[9] । प्रतीकमुत्तरवेदिलक्षणमङ्गम्[10] । अधिप्रज्वाल्यते[11][12] । अग्निः[13] ।

**इमां वां मित्रावरुणा सुवृक्तिमिषं न कृण्वे असुरा नवीयः ।**
**इनो वामन्यः पदवीरदब्धो जनं च मित्रो यतति ब्रुवाणः ॥ २ ॥**

इमां वाम् । इमाम्[14] । वाम्[15] । हे मित्रावरुणौ[16] ! स्तुतिम् । अन्नम्[17] । इव । करोमि[18] । हे बलिनौ[19] ! नैवतरम्[20] । ईश्वरः[21] । युवयोः । अन्यः[22] । पादानां[23] सर्वासामासां ज्ञाता वरुणः । अहिंसितः[24] । मित्रस्य[25] । जनम्[26] । यातयति राये़षु[27] व्यापारयति । स्तूयमानः[28][29] ।

---

१. विसृजति is suggested for विहृति ॥ विमुञ्चति प्रवर्षति । श्रूयते हि—'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति' इति । स्मृतिश्च भवति 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति । अत ईदृशं माहात्म्यं सूर्यस्यैव विद्यते नान्यस्य । चिदित्यनेन पादेन सूर्यः स्तूयते Sy.

२. अपो वृष्ट्युदकानि Sy.

३. किं तद् ब्रह्म ? इति तदाह—सर्वस्य प्रेरकः शोभनवीर्यो वा देवः Sy.

४. आत्मीयैः किरणैः Sy.

५. सन्नघन A. सन्नाहेन is suggested for सन्नहन । समुच्छ्रितेन पर्वतादिना Sy.

६. ०तासी A. ०तास्ति is suggested for ०तासि ॥ विसरति । व्याप्नोति Sy.

७. अपि च पृथिवी प्रथिता भूमिः Sy.

८. महतीं A. विस्तीर्णा सती Sy.

९. पतितं M. प्रथितम् is suggested for प्रतीतं ॥ विस्तीर्णम् Sy.

१०. ०रवैदि० A. पृथिव्या अवयवं देवयजनलक्षणं स्थानम् Sy.

११. अधि—'अधिपरी अनर्थकौ' इत्यधेः कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते' इति सप्तम्यर्थे द्वितीया । ईदृशे स्थाने Sy.

१२. ०ल्यतो M. आदीप्यते Sy.

१३. अग्निम् M.

१४. इमामस्मदीयां पुरोवर्तिनीम् Sy.

१५. वा A. युवाभ्याम् Sy.

१६. हेति मित्रा० A.

१७. हवीरूपमन्नम् Sy.

१८. अहं स्तोता करोमि Sy.

१९. बलिने A. हे असुरौ ! बलवन्तौ ! Sy.

२०. नेवतारम् A. नवतराम् is suggested for नैवतराम् । नवीयसीम् Sy.

२१. प्रभुः Sy.

२२. अन्यतरः Sy.

२३. पदानाम् is suggested for पादानाम् ॥ पदस्य स्थानस्य प्रजनयिता । वरुणो हि धर्माधर्मयोर्धारयितेति पदवीरित्युच्यते Sy.

२४. शत्रुभिरहिंसितो वरुणः Sy.

२५. मित्रः or मित्रश्च is suggested for मित्रस्य ।

२६. सर्वं प्राणिजातम् Sy.

२७. राय्येषु M. कार्येषु is suggested for रायेषु ॥ प्रवर्तयति ।-तथा च श्रूयते 'मित्रो जनान्यातयति ब्रुवाणः' (RV. 3. 59. 1.) इति Sy.

२८. अस्माभिः स्तूयमानः Sy.

२९. VM. ignores च ।

आ वातस्य ध्रजतो रन्त इत्या अपीपयन्त धेनवो न सूदाः।
महो दिवः सदने जायमानोऽचिक्रदद्वृषभः सस्मिन्नूधन् ॥ ३ ॥

आ वातस्य[1]। आरमन्ते[2]। वायोः। गच्छन्तः[3]। इत्या गमनानि वायोर्विविधा गतय इतस्ततः प्रादुर्भवन्ति। वर्धन्ते[4] च। धेनवः[5]। इव[6]। सूदाः[7]—'सूद इति कूपनाम[8]'। महतः। दिवः[9]। सदनेऽन्तरिक्षे[10]। जायमानः[11]। न्यक्रन्दि[12] ? पर्जन्यः[13]। सर्वस्मिन्[14]। ऊधनि[15] यत[16] उदकं निर्गच्छति दूतो[17] मेघसङ्घः।

गिरा य एता युनजद्धरी त इन्द्र प्रिया सुरथा शूर धायू।
प्र यो मन्युं रिरिक्षतो मिनात्या सुक्रतुमर्यमणं ववृत्याम् ॥ ४ ॥

गिरा[18] य[19] एता। हे इन्द्र ! स्तोत्रेण[20]। यः[21]। एतौ। हरी[22]। युनक्ति[23]। तव। प्रियौ। शोभनरंहणौ[24]। हे शूर[25] ! धारकौ। सोऽहं[26] प्रहिनस्ति[27]। यो[28] मन्युर्माम्। हिंसितुमिच्छतः शत्रोः[29]। तं त्वाम्[30]। आववृत्याम्[31]। सुकर्माणम्। अर्यमणमुदारम्।

---

१. वाकस्य A.
२. आरभन्ते M. अभितो रमन्ते Sy.
३. गच्छतः is suggested for गच्छन्तः N.
४. प्यायन्ते Sy.
५. गावश्च Sy.
६. च M. नेति चार्थे Sy.
७. सूदा सूद A. 'सूद प्रेरणे' इति धातुः। क्षीरस्य प्रेरयित्र्यः Sy.
८. कूप० A. Ngh. 3. 23.
९. द्योतमानस्यादित्यस्य Sy.
१०. स्थानेऽन्तरिक्षे Sy.
११. उत्पद्यमानः Sy.
१२. ०न्दि A. न्यक्रन्दिष्ट or न्यक्रन्दीत् is suggested for न्यक्रन्दि। अचिक्रदत् Sy.
१३. वर्षणशीलः पर्जन्यः Sy.
१४. तस्मिन् Sy.
१५. अन्तरिक्षे Sy.
१६. यक A.
१७. तदूधो is suggested for दूतो ॥
१८. अस्याः पूर्वोऽर्धर्च इन्द्रस्तुतिरपरोऽर्यम्णः स्तुतिः Sy.
१९. गिरा य A.
२०. स्तुतिरूपया वाचा Sy.
२१. यः is missing in A. जनः Sy.
२२. हरि A. त्वदीयावश्वौ Sy.
२३. रथे युञ्ज्यात्। हे इन्द्र ! त्वमस्य यागमायाहीति शेषः Sy.
२४. सुष्ठुरंहणौ Sy.
२५. हे विक्रान्त ! Sy.
२६. सोऽयं is suggested for सोऽहं।
२७. प्रकर्षेण हिनस्ति Sy.
२८. योऽर्यमा Sy.
२९. हिंसितुमिच्छतः शत्रोः सम्बन्धिनम् Sy.
३०. त त्वाम् A.
कोपम् Sy.
३१. ०वृत्या M. स्तुत्यावर्तयामि Sy.

यजन्ते अस्य सख्यं वयश्च नमस्विनः स्व ऋतस्य धामन् ।
वि पृक्षो बाबधे नृभिः स्तवान इदं नमो रुद्राय प्रेष्ठम् ॥ ५ ॥

यजन्ते[1] । पूजयन्ति[2] । इन्द्रस्य[3] । सख्यम्[4] । पक्षिणः[5] । च । अन्नवतः[6] । स्वस्मिन्[7] । उदकस्य[8] । स्थानेऽन्तरिक्षे वर्तमानस्य[9] । पिब्रधने[10] च शत्रूणाम् । अन्नम् । मनुष्यैः[11] । स्तूयमानः, यद्वा पिबस्तोनृषदनम्[12] । तस्मा[13] इन्द्रा-मेधाविने । इदम् । हविः । प्रियतमं[14] क्रियत इति ।

आ यत्साकं यशसो वावशानाः सरस्वती सप्तथी सिन्धुमाता ।
याः सुष्वयन्त सुदुघाः सुधारा अभि स्वेन पयसा पीप्यानाः ॥ ६ ॥

आ यत्साकम्[15] । आनयामास[16] । या[17] । सह[18] । कीर्तिम्[19] । कामयमाना[20] । सरस्वती[21] । षण्णां नदीनां सप्तमी[22] । सिन्धूनां माता[23] । या नद्यो हि । सुष्वयन्त[24], स्वविः ष्वञ्जिपर्यायैः, अभ्यषजन्त सरस्वतीम्[25] । सुदुघाः[26] । शोभनधाराः[27][28] स्वेन[29] । पयसा[30] । प्यायमानाः[31], य वा[32] यदिति यदेत्यर्थ उत्तरत्र सम्बन्धः ।

---

१. अनया रुद्रः स्तूयते Sy.
२. पूजयन्तु Sy. ३. रुद्रस्य Sy.
४. सखित्वमुद्दिश्य Sy.
५. गन्तारः कर्माणि कुर्वाणा यजमानाः Sy.
६. हविर्लक्षणान्नवन्तः Sy.
७. स्वकीये Sy.
८. यज्ञस्य Sy.
९. वर्धमा० A. धामनि स्थाने स्वकीये यज्ञगृहे स्थिता इत्यर्थः Sy.
१०. विह्वधने च A. विबाधते is suggested for विब्रधने । विबध्नाति ददातीत्यर्थः Sy.
११. मनुष्ये A. नेतृभिः Sy.
१२. विबध्नाति is suggested for पिब ।
१३. इन्द्रा मेधाविने A. इन्द्राय is suggested for इन्द्रा । रुद्राय Sy.
१४. रुद्रस्य प्रियतमम् Sy.
१५. अ यत् A.
१६. आगच्छन्तु । आ इत्युपसर्गस्य योग्यक्रिया-ध्याहारः Sy.
१७. यासां गङ्गादीनां नदीनां मध्ये Sy.
१८. युगपदेव Sy.
१९. अन्नवत्यः Sy.
२०. ०यमना A.
२१. एतदाख्या नदी Sy.
२२. सप्तमी भवति Sy.
२३. अपां मातृभूता Sy.
२४. स्नुष्व० A. सुष्वयन् is missing in M. सुष्वयन्ते । गतिकर्मैतत् । प्रवहन्ति Sy.
२५. ०विष्वजजि प० A. स्वयिः is suggested for स्वविः ।
२६. ०ष्वजन्त is suggested for ०षजन्त ।
२७. कामान् दोग्धुं सुशक्याः Sy.
२८. शोभनधारोपेताश्च Sy.
२९. स्वकीयेन Sy. ३०. उदकेन Sy.
३१. प्याय० A. अभिवर्धयन्त्यः Sy.
३२. यद्वा is suggested for य वा ।

उत त्ये नो मरुतो मन्दसाना धियं तोकं च वाजिनोऽवन्तु ।
मा नः परि ख्यदक्षरा चरन्त्यवीवृधन्युज्यं ते रयिं नः ॥ ७ ॥

उत त्ये । अपि च । तया सरस्वत्या सहामी[1] च । मरुतः । मोदमानाः । अस्माकम्[2] । पुत्रम् । च । बलवन्तः[3] । रक्षन्तु । मा । अस्मान्[4] । वर्जय त्वम्[5] । माता[6] । चरन्ति[7] सरस्वती च । वर्धयन्तु । योग्यम्[8] । रयिम्[9] । अस्माकम्[10] । मरुतः सरस्वती[11] चेति[12] ।

प्र वो महीमरमतिं कृणुध्वं प्र पूषणं विदथ्यं१ न वीरम् ।
भगं धियोऽवितारं नो अस्याः सातौ वाजं रातिषाचं पुरंधिम् ॥ ८ ॥

प्र वः । कृणुध्वम्[13] । यूयम् । पृथिवीम्[14] । पर्याप्तमतिम्[15] अपि वा विरामो रमतिः, अपर्यन्ताम्[16] । प्रकृणुध्वम् । पूषणञ्च[17] । गृहार्हम्[18] । इव[19] । वीरम्[20] । भगञ्च[21] । अस्माकम्[22] । अस्य । कर्मणः । रक्षितारम् । रथमथ[23] तं धनस्य दातारम्[24] । बहुप्रज्ञं[25] भगम्[26] । अन्नं[27] याचध्वम् । सातौ[28] सत्यां भजते यदा युष्मान् भगस्तदेति[29] यद्वा सत्यर्थं[30] वाजं बलिनं भगञ्च प्राकृणुध्वमिति ।

---

१. ते Sy.
२. अस्मदीयम् Sy.
३. वेगवन्तः Sy.
४. VM. seems to explain the words परि and ख्यत् together as वर्जय ॥ परित्यक्त्वास्मद् व्यतिरिक्तानन्यान्मा ख्यत् मा द्राक्षीत् Sy.
५. ०यध्वं M.
६. ता is missing in M. It seems to be the explanation of अक्षरा ॥ व्याप्ता Sy.
७. चरन्ती is suggested for चरन्ति । वाग्देवता च Sy.
८. युक्तमपि Sy.
९. धनम् Sy.
१०. अस्मदीयम् Sy.
११. ते पूर्वोक्ता मरुतो वाक् च Sy.
१२. VM. ignores धियम् ॥ धियं यज्ञाख्यं कर्म Sy.
१३. हे स्तोतारः ! . . . आह्वयत Sy.
१४. महतीं भूमिम् Sy.
१५. ०मतिमतमिपि M.
१६. रमयति रमप० A. उपरतिरहिताम् Sy.
१७. एतन्नामकं देवम् Sy.
१८. ग्रहा० A. यज्ञार्हम् Sy.
१९. च Sy.
२०. सर्वेषां प्रेरकम् Sy.
२१. देवञ्च आह्वयत Sy.
२२. अस्मदीयस्य Sy.
२३. missing in M. अथ is suggested for ०रथमथ ।
२४. दानसेवकम् Sy.
२५. पुराणां धारयितारम् Sy.
२६. मगम् A.
२७. वाजमृभूणामन्यतमं देवमाह्वयत Sy.
२८. अस्मदीये यज्ञे युद्धे वा Sy.
२९. तथेति M.
३०. सत्यर्थः A. सात्यर्थं is suggested for सत्यर्थं ।

अच्छायं वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः ।
उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

अच्छायम्[1][2] । अभिगच्छतु । अयम्[3] । युष्मान्[4] । मरुतः ! श्लोकः[5] । तथा निषिक्तस्य सोमस्य पातारम्[6] । विष्णुञ्च[7] । अभिगच्छतु[8] । रक्षणार्थम्[9] । अपि च मरुतः सर्वे वा देवाः[10] । प्रजायै[11] । गृणते च मह्यम्[12] । अन्नम् । प्रयच्छन्तु[13][14] ।

VII.37.

आ वो वाहिष्ठो वहतु स्तवध्यै रथो वाजा ऋभुक्षणो अमृक्तः ।
अभि त्रिपृष्ठैः सवनेषु सोमैर्मदे सुशिप्रा महभिः पृणध्वम् ॥ १ ॥

आ वः[15] । आवहतु[16] । युष्मान् । अत्यन्तं वोढ[17] । स्तोतुः[18] । रथः[19] । हे सोमवनाः[20] ! वाजाः ! ऋभुक्षण इत्यृभूषा[21][22] ज्येष्ठकनिष्ठाभ्यां व्यपदेशः । शत्रुभिरपरिमृष्टः[23] । अभिप्रयच्छत धनानि[24] । त्रयाणां देवगणानां पृष्ठभूतैः[25] । सवनेषु[26] । सोमैर्जनीते[27] । मद[28] । हे सुहनवः[29] ! महद्भिः ।

---

१. यज्ञपुच्छे 'अच्छायं वः' इति चमसिनः स्वं स्वं चमसमभिमृशेयुः । सूत्रितञ्च—'अच्छायं वो मरुतः श्लोक एत्वित्येतयाभिमृशन्ति' (ĀSS. (6. 12.,) इति Sy.

२. अच्छायम् is missing in A.

३. अस्मदीयमिदम् Sy.

४. युष्माकम् A.

५. शोकः M. स्तोत्रम् Sy.

६. वाता० A. निषिक्तस्य गर्भस्य रक्षितारं यद्वा चमसे निषिक्तस्य सोमस्य पातारम् Sy.

७. विषुं च A.

८. अस्मदीयं स्तोत्रमच्छैतु Sy.

९. अस्मद्विषयरक्षणैर्युक्तम् Sy.

१०. मरुतो विष्णुश्च Sy.

११. प्रजाये ग्रहते च A.
पुत्ररूपां प्रजाम् Sy.

१२. स्तुवते मह्यम् Sy.

१३. ०च्छती A. अधुः दधतु Sy.

१४. हे मरुतः ! हे विष्णो ! यूयं स्वस्तिभिरविनाशैर्नोऽस्मान् सदा सर्वदा पात । रक्षत Sy.

१५. 'आ वो वाहिष्ठः' इत्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । अनुक्रम्यते च— 'आ वोऽष्टौ' (KSA. 36. 37. p. 25.) इति विनियोगो लैङ्गिकः । अनेन द्वृचेनर्भवः स्तूयन्ते Sy.

१६. आ समन्तादस्मदीयं यज्ञं प्रापयतु Sy.

१७. वोढुः M. वोढा is suggested for वोढ ॥ वोढृतमः Sy.

१८. स्तोतुम् is suggested for स्तोतुः स्तोतुमर्हः Sy.

१९. युष्मदीयो रथः Sy.

२०. ०धवना A.
हे ऋभवः ! Sy.

२१. विस्तीर्णस्य तेजसो निवासभूताः ! Sy.

२२. इत्यृभूणां is suggested for इत्यृभूषा ।

२३. केनाप्यहिंसितः Sy.

२४. युष्मदीयं जठरमभिपूरयत । स रथो युष्मानावहत्विति पूर्वेणान्वयः Sy.

२५. ०भूतेः A. क्षीरदधिसक्तुमिश्रैः Sy.

२६. अस्मदीययज्ञेषु Sy.

२७. जनिते is suggested for जनीते ।

२८. मदं A. मदे is suggested for मद ॥ मदनिमित्तं

२९. हे शोभनहनवः ! यूयं तेन रथेनागत्य Sy.

यूयं ह रत्नं मघवत्सु धत्थ स्वर्दृश ऋभुक्षणो अमृक्तम् ।
सं यज्ञेषु स्वधावन्तः पिबध्वं वि नो राधांसि मतिभिर्दयध्वम् ॥ २ ॥

यूयं ह । यूयम् । ह[1] । रत्नम्[2] । हविष्मन्सु[3] । दत्थ[4] । सर्वस्य द्रष्टारः[5] । हे ऋभवः[6] ! अहिंसितम्[7] । सम्पिबध्वम्[8] । यज्ञेषु[9] । हे अन्नवन्तः[10] ! विविधं प्रयच्छत[11] च । अस्मभ्यम् । धनानि । स्तुतिभिः ।

उवोचिथ हि मघवन्देष्णं महो अर्भस्य वसुनो विभागे ।
उभा ते पूर्णा वसुना गभस्ती न सूनृता नि यमते वसव्या ॥ ३ ॥

उवोचिथ[13] । सेवसे[14] । हि[15] । मघवन्[16] ! वृद्धस्य[17] । बालस्य[18] च । वसुनः[19] । विभागार्थम्[20] । उभौ[21] । ते । पूर्णौ[22] धनेन । बाहू । न । तव[23] वाक्[24] । नियच्छति । वसुत् मूहानहि तर्हि भूयो भूयो विसर्जति[25] ।

त्वमिन्द्र स्वयशा ऋभुक्षा वाजो न साधुरस्तमेष्यृक्वा ।
वयं नु ते दाश्वांसः स्याम ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः ॥ ४ ॥

त्वमिन्द्र[27] । त्वम्[28] । इन्द्र ! स्यभूतकीर्तिः[29] । महान्[30] । अश्वः[31] । इव । साधयिता[32] । गृहम् । एषि[33] । स्तोत्रवान्[34] । वयमिति स्पष्टम्[35] ।

---

१. एव Sy. २. रमणीयम् Sy.
३. ०ष्मत्सु is suggested for ०ष्मन् सु । हविर्लक्षणान्नवत्स्वस्मासु निमित्तेषु Sy.
४. धर्थ A. धारयथ Sy. ५. दृष्टारः A. स्वर्गं पश्यन्तः Sy. ६. ऋषभः A.
७. चोरादिभिर्नापहृतमित्यर्थः Sy.
८. सम्यक् सोमं पिबत Sy. ९. अस्मदीययज्ञेषु Sy. १०. तदनन्तरं बलवन्तस्ते Sy.
११. विवध्वं पृच्छथ त च A. विशेषेण दत्त Sy.
१२. अपि च यूयं धनहेतुभिः Sy. १३. उपोचिथ A. 'उवोचिथ' इत्याद्याः पञ्चर्चा इन्द्रदेवताकाः Sy.
१४. उचतिः सेवाकर्मा Sy. १५. खलु Sy.
१६. हे धनवन् ! इन्द्र ! त्वम् Sy.
१७. महतः Sy. १८. अल्पस्य च Sy.
१९. धनस्य Sy. २०. अपिभागा० A. परिचरणानुकूले दाननिमित्ते Sy. २१. त्वदीयौ Sy.
२२. सम्पूर्णौ भवतः Sy. २३. त्वदीया Sy.
२४. क् is missing in A.
२५. वसुसमूहान् वसुत् मूहानहि तर्हि भूयो A. The reading is doubtful. वसूनि धनानि यद्वा वसव्या वसुषु धनेषु साधुः सूनृता वाग्धनेन सम्पूर्णौ त्वदीयौ बाहू न नियच्छति । नाल्पं प्रदापयतीत्यर्थः Sy. २६. VM. ignores देष्णम् ॥ देष्णं धनम् Sy.
२७. स्वमिन्द्र A. २८. स्वम् A. २९. स्वभूत० is suggested for स्यभूत० Sy. असाधारणकीर्तिः Sy. ३०. ऋभुनिवासक ऋभूणामीश्वरो वा Sy. ३१. अश्चः A. अन्नम् Sy.
३२. साधकः Sy. ३३. प्राप्नुहि Sy.
३४. स्तोतुर्मम Sy.
३५. VM. ignores नु । ते । दाश्वांसः । स्याम । ब्रह्म । कृण्वन्तः । हरिवः and वसिष्ठाः । Sy. explains these words in the following manner :—
नु अद्य । ते त्वदर्थम् । दाश्वांसः हविर्लक्षणान्नं दत्तवन्तः । स्याम भवेम । ब्रह्म स्तोत्रम् । कृण्वन्तः कुर्वन्तः । हे हरिवः ! स्वकीयाश्वोपेत ! इन्द्र ! वसिष्ठा एतत्संज्ञका ऋषयो वयम् Sy.

सनितासि प्रवतो दाशुषे चिद्याभिर्विवेषो हर्यश्व धीभिः ।
ववन्मा नु ते युज्याभिरूती कदा न इन्द्र राय आ दशस्येः ॥ ५ ॥

सनिता[1] । प्रदानशीलः । भवसि । मुख्यस्य[2] । यजमानाय[3] । यादृशीभिः[4] । बुद्धिभिः[5] । व्याप्नोषि त्वं यजमानात्[6] । हर्यश्व[7] ! सम्भवनारो भूयास्म[8] । क्षिप्रम्[9] । तव । योग्यैः[10] । रक्षणैः[11] । कदा[12] । अस्मभ्यम् । इन्द्र[13] ! धनानि । आप्रयच्छेः[14] ।

वासयसीव वेधसस्त्वं नः कदा न इन्द्र वचसो बुबोधः ।
अस्तं तात्या धिया रयिं सुवीरं पृक्षो नो अर्वा न्युहीत वाजी ॥ ६ ॥

वासयसि[15] । वासयसीदानीम्[16] । परिचरतः[17] । त्वम् । अस्मान्[18] । कदा[19] । अस्माकम्[20] । इन्द्र ! वचनम्[21] । बुध्ये[22] ग्रहम्[23] । तमानेन[24] । कर्मणा ततया वा[25] स्तुत्या[26] । रयिम्[27] । सुवीरम्[28] । अन्नञ्च प्रति । वेगवान्[29] । अश्वः[30] । अस्मान्[31] । निहितेतीन्द्रं परोक्षेणाह गृहादि[32]ष्वस्मान् प्रापयस्त्विति[33] ।

---

१. दाता Sy.
२. प्रवणस्य धनस्य Sy.
३. हविर्दत्तवते यजमानाय Sy.
४. अस्मदीयाभिः Sy.
५. स्तुतिभिः Sy.
६. °मानान् is suggested for °मानात् ।
७. हे हरिनामकाश्व ! इन्द्र ! त्वम् Sy.
८. सम्भजेम Sy.
९. अद्य Sy.
१०. योग्याभिः Sy.
११. रक्षाभिः Sy.
१२. कस्मिन् काले Sy.
१३. अपि च हे इन्द्र ! त्वम् Sy.
१४. VM. ignores चित् ॥ चित् अपि Sy.
१५. वायससि A.
१६. इवेदानीमर्थे । स्वकीये स्थानेऽवस्थापयसि Sy.
१७. तथा च त्वं स्तोतॄन् Sy.
१८. अस्मात् A.
१९. कस्मिन् काले Sy.
२०. अस्मदीयम् Sy.
२१. वचोरूपं स्तोत्रम् Sy.
२२. बुद्धे M. The use of परस्मैपद is doubtful ॥ अवगच्छेः Sy.
२३. गृह्य M. गृहम् is suggested for ग्रहम् ।
२४. माणेन M. ततमानेन is suggested for तमानेन ॥ तात्या-तनोतेरिदं रूपम् । सन्ततयाऽस्मत्प्रेरितया Sy.
२५. व A. ततया वा should immediately follow ततमानेन ।
२६. स्तुत्या हेतुभूतया Sy.
२७. त्वदीयं धनम् Sy.
२८. शोभनपुत्रोपेतम् Sy.
२९. बलवान् Sy.
३०. वेगवांस्त्वदीयोऽश्वः Sy.
३१. निहितीन्द्रं A न्युहीतेतीन्द्र is suggested for निहितेतीन्द्रं ॥ निवहेत् Sy.
३२. ग्रहा° A.
३३. °यत्विति is suggested for °यस्त्विति ॥

**अभि यं देवी निर्ऋतिश्चिदीशे नक्षन्त इन्द्रं शरदः सुपृक्षः ।**
**उप त्रिबन्धुर्जरदष्टिमेत्यस्ववेशं यं कृणवन्त मर्ताः ॥ ७ ॥**

अभि यम्[1] । यमिन्द्रम्[2] । अभि । देवी[3] । पृथिवी[4] । प्राणिनामीष्टे[5] । व्याप्नुवन्ति[6] । इन्द्रम् । शरदः[7] । शोभनान्नासः[8] । उपैति[9] । त्रयाणां लोकानां बन्धुः[10] । जरदष्टिं यो देवैर्दत्तमशनं जरयति यज्ञेन स जरदष्टिरिति[11] । यदिन्द्रम्[12][13] । मर्ताः[14] । अस्ववेगं[15] स्वस्मिन्नायतने यः कदाचिदपि नास्ते[16] सोऽस्ववेशस्तथा[17] । कारयितरतत[18] आह्वानमिति[19] ।

**आ नो राधांसि सवितः स्तवध्या आ रायो यन्तु पर्वतस्य रातौ ।**
**सदा नो दिव्यः पायुः सिषक्तु यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥**

आ नः । आनयन्तु[20] । अस्मान् । अन्नानि[21] । त्वां स्तोतुम्[22] । सवितः ! आयन्तु[23] च । धनानि । मेघस्य[24] धाने । सदा[25] । अस्यान्[26] । दिवः[27] । रक्षकः पर्जन्यः[28] । सिषक्त्विति[29] ।[30]

---

१. यः A.
२. यमीन्द्रम् M.
३. द्योतमाना Sy.
४. भूमिः Sy.
५. इष्टो A. कृत्यार्थे क्तप्रत्ययः । ईशितव्या स्वभूता सती व्याप्नोति Sy.
६. ०वन्ती A.
७. शरभः M. संवत्सराश्च Sy.
८. शोभनान्नाः is suggested for शोभनान्नासः ॥ शोभनान्नैरुपेताः Sy.
९. उपगच्छति Sy.
१०. त्रयाणां लोकानां बन्धको विधारकः स इन्द्रः Sy.
११. जरज्जीर्णमष्टिरशनं यस्य बलस्य हेतुभूतं तद्बलम् Sy.
१२. देवैर्दत्तैर्दत्तमशनज्जर० Sy.
१३. यमिन्द्रम् is suggested for यदिन्द्र ॥
१४. मरणधर्माणः स्तोतारो वयम् Sy.
१५. आस्ववेगं M. अस्ववेशं is suggested for अस्ववेगम्. ॥ स्वकीये स्थानेऽनुपविशन्तम् Sy.
१६. स्ते is written twice in A.
१७. ०स्ते स्वावेश० M.
१८ करणमिस्तत The reading is doubtful. कुर्वन्ति ? (कुर्मः) Sy.
१९. VM. ignores चित् ॥ चित् अपि Sy.
२०. आगच्छन्तु Sy.
२१. धनानि Sy.
२२. स्तोतुं योग्यानि Sy.
२३. ०तारयन्तु A. हे सर्वस्य प्रेरक ! देव ! त्वत्सकाशात् Sy.
२४. पर्वत इति कश्चिदिन्द्रस्य सखा । एतत्संज्ञकस्य देवस्य Sy.
२५. सर्वदा Sy.
२६. अस्मान् is suggested for अस्यान्
२७. दिव्यः is suggested for दिवः ॥ दिवि भवः स इन्द्रः Sy.
२८. पायुः सर्वस्य पालकः Sy.
२९. रक्षकत्वेन सेवताम् Sy.
३०. अस्मिन् सूक्ते ये प्रतिपादिता देवास्ते सर्वे यूयं नोऽस्मान् स्वस्तिभिः कल्याणैः । सदा । पात पालयत Sy.

VII. 38.

**उदु॒ ष्य दे॒वः स॑वि॒ता य॑याम हिर॒ण्ययी॑म॒मतिं॒ याम॑शिश्रेत् ।**
**नू॒नं भगो॒ हव्यो॒ मानु॑षेभि॒र्वि यो रत्ना॑ पुरू॒वसु॒र्दधा॑ति ॥ १ ॥**

उदु[1] ष्यः । सोऽयम् । सविता[2] । देवः । उद्ययाम[3] । हिरण्यमयम्[4] । रूपम्[5] । यद्रूपमयम् । श्रयति, प्रादुर्भूदित्यर्थः[6] । गम्प्रति[7] । भजनीयः[8] । ह्वातव्यः । मनुष्यैर्भवति[9] । विदधाति[10] । यः[11] । रत्नानि[12] । बहुधानः[13,14] ।

**उदु॑ तिष्ठ सवितः श्रु॒ध्य१॑स्य हिर॑ण्यपाणे॒ प्रभृ॑तावृ॒तस्य॑ ।**
**व्यु१॒र्वीं पृ॒थ्वीम॒मतिं॑ सृजा॒न आ नृभ्यो॑ मर्त॒भोज॑नं सुवा॒नः ॥ २ ॥**

उदु तिष्ठ । उत्तिष्ठ[15] । तदनु च[16] । शृणु न[17] । स्तोत्रमिदम् । हिरण्यपाणे[18] ! सोमस्य[19] । हरणे[20] । उरुतमम्[21] । पृथुतमम्[22] । रूपम्[23] । विसृजन् । आसुवान इव[24] । मनुष्येभ्यः[25] । मनुष्ययोग्यमशनम्[26,27] ।

---

१. 'उदु ष्य देवः' इत्यष्टर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं सवितृदेवताकम् । सप्तम्यष्टम्यौ वाजिदेवताके । 'भगमुग्रोऽवसे' इत्यर्धर्चो भगदेवत्यः सावित्रो वा । तथा चानुक्रमणिका— 'उदुष्य सावित्रमन्त्ये वाजिन्यो भगमिति भागो वार्धर्चः' (KSA. 36. 38. p. 25.) इति । गतः सूक्तविनियोगः Sy.

२. सर्वस्य प्रेरकः Sy.

३. उद्यच्छति उद्गमयतीति Sy.

४. हिरण्मम् A. सुवर्णमयीम् Sy.

५. प्रभामित्यर्थः Sy. अमतिर्मिति रूपनाम Ngh. 3. 7.

६. प्रादुरभूदित्यर्थः is a paraphrase of उद्ययाम; it should therefore immediately follow उद्ययाम ।

७. अद्य Sy.　　८. हवनीयः स्तोतव्यः Sy.

९. मनुष्यैः स्तोतृभिः Sy.

१०. करोति । स सविता देवस्तामम्मतिमुद्ययामेति पूर्वेण सम्बन्धः Sy.

११. सविता Sy.

१२. रत्नानि रमणीयानि धनानि Sy.

१३. ०धान A. ०धनः is suggested for ०धानः ॥ बहुधनो यो देवः स्तोतृभ्यः Sy.

१४. VM. ignores उ ॥ उ इति पादपूरणः Sy.

१५. ऊर्ध्वं गच्छ Sy.

१६. तदनूचः M. उ इति पूरणः Sy.

१७. शृण्वत M.

१८. हे सुवर्णहस्त ! त्वमस्मदभीप्सितप्रदानाय Sy.

१९. यज्ञस्य Sy.　　२०. प्रणयने Sy.

२१. विस्तीर्णाम् Sy.

२२. प्रथिताम् Sy

२३. रूपं प्रभाम् Sy.

२४. ०नं च A. इव seems to be redundant. प्रेरयन् । एवम्भूतस्त्वमिदं स्तोत्रं शृण्विति सम्बन्धः Sy.

२५. नेतृभ्यः स्तोतृभ्यः Sy.

२६. मनुष्याणां भोगयोग्यं धनम् Sy.

२७. VM. ignores सवितः ॥ हे सवितः ! सर्वस्य प्रेरयितः ! देव ! त्वम् Sy.

अपि ष्टुतः सविता देवो अस्तु यमा चिद्विश्वे वसवो गृणन्ति ।
स नः स्तोमान्नमस्य१श्चनो धाद्विश्वेभिः पातु पायुभिर्नि सूरीन् ॥ ३ ॥

अपि ष्टुतः[1] : अपि[2] । अस्तु स गच्छताम्[3] । स्तुतः[4] । सविता । देवः । यम्[5] । विश्वे[6] । अवि[7] । वत्सवः[8] । आस्तुवन्ति[9] । सः[10] । अस्माकम्[11] । स्तोमान्[12] । हविश्च[13] धारयतु[14] । नमस्यः[15] । विश्वैश्च[16] । रक्षणैः[17] । नितराम् । रक्षतु[18] । स्तोतॄन्[19] ।

अभि यं देव्यदितिर्गृणाति सवं देवस्य सवितुर्जुषाणा ।
अभि सम्राजो वरुणो गृणन्त्यभि मित्रासो अर्यमा सजोषाः ॥ ४ ॥

अभि यम् । अभिष्टौति[20] । यम्[21] । देवी[22] । अदितिः[23] । प्रसवम्[24] । देवस्य । सवितुः । सेवमाना । अभिगृणन्ति[25] ततः । सम्राजः[26] । वरुणश्च[27] । अभिगृणन्ति । मित्रासो मित्रो देवस्तदनुचराश्च[28] । अर्यमा च[29] । अभिगृणन्ति सङ्गताः[30] ।

---

१. अविष्मतं A.
२. च Sy.
३. अह्यस्तु A. अस्मदीयाः स्तुतीः शृणोत्वित्यर्थः Sy.
४. अस्माभिः स्तुतः Sy.
५. अयम् M. सवितारम् Sy.
६. सर्वे Sy.
७. अपि is suggested for अवि ।
८. वत्सपः A. वसवः is suggested for वत्सवः ॥ देवाः Sy.
९. अभिष्टुवन्ति Sy.
१०. देवः Sy.
११. अस्मदीयानि Sy.
१२. स्तोमं M. स्तोत्राणि Sy.
१३. हविश्च A.
१४. अन्नं धात् । दधातु । अन्नफलानि करोतु Sy.
१५. सर्वैर्नमस्करणीयः Sy.
१६. धारयतु नमस्यो विश्वैश्च is written twice in A. M. सर्वैः Sy.
१७. पालनैः Sy.
१८. पालयतु Sy.
१९. सोऽत्र इन् A. स्तोतॄनस्मान् Sy.
२०. अभिषोति A.
२१. From यम् onwards the whole commentary is missing in A. सवितारम् Sy.
२२. द्योतमाना Sy.
२३. अदीना देवमाता Sy.
२४. अनुज्ञाम् Sy.
२५. अभिष्टुवन्ति Sy.
२६. सम्यग्राजमानाः Sy.
२७. उपलक्षणमेतत् । वरुणादयो देवाः Sy.
२८. मित्रादयश्च Sy.
२९. एतत्संज्ञको देवः Sy.
३०. समानप्रीतिः स नः स्तोमांश्च नो धादिति पूर्वयर्चा सम्बन्धः Sy.

**अभि ये मिथो वनुषः सपन्ते रातिं दिवो रातिषाचः पृथिव्याः ।**
**अहिर्बुध्न्य उत नः शृणोतु वरूत्र्येकधेनुभिर्नि पातु ॥ ५ ॥**

अभि ये[1] । अभिस्पृशन्ति[2] । ये[3] । सम्भक्तारः । इतरेतरजीवा[4]। रातिं[5] दातारम् । देवलोकस्य । रातिं भजन्तः[6] । पृथिव्या[7] मनुष्याणामभिलषितानि प्रयच्छन्तो देवास्ते सर्वेऽस्माकं स्तोतृ[8] शृण्वन्ति[9] । शृणोतु[10] । अपि च । अहिर्बुध्नः[11] । प्रकृति[12] च । एकधेनुभिर्नाम स्वानुचरीभिः[13] । अस्मान् । निपातु[14] ।

**अनु तन्नो जास्पतिर्मंसीष्ट रत्नं देवस्य सवितुरियानः ।**
**भगमुग्रोऽवसे जोहवीति भगमनुग्रो अध याति रत्नम् ॥ ६ ॥**

अनु तत् । अनुमन्यताम् । तत् । अस्माकम् । जास्पतिस्त्वष्टा[15] । रत्नम्[16] । देवस्य । सवितुः[17] स्वभूतं तेन प्रत्नम् । इहागच्छतु[18] । सविता भजनीयं[19] सवितारम् । उद्गूर्णा[20] । आभ्यां[21] रक्षणाय । आह्वयति[22] । भगम्[23] । अनुद्गूर्णः[24] । याचतो[25] । रत्नम्[26], 'भगो वायमर्थश्चः' इति[27] ।

---

१. अभि ये is missing in A.

२. सवितारमभिलक्ष्य सपन्ते परिचरन्ति Sy.

३. यजमानाः Sy.

४. जीवाः is suggested for जीवा । परस्परं संहता भूत्वा Sy.

५. मित्रभूतम् Sy.

६. दानसेविनः Sy.

७. ०व्यां मनु० M. भूमेश्च Sy.

८. स्तोत्रं is suggested for स्तोतृ ।

९. शृणन्ति A. गृणन्ति M.

१०. शृणोतु is missing in A. सवितृविषयं स्तोत्रं शृणोतु Sy.

११. अहि व बुध्वो A. र्बुध्न्यः is suggested for ० र्बुध्वः ॥ बुध्नेऽन्तरिक्षे भवो बुध्न्यः । एतीत्यहिः । एतत्पदद्वयाभिधो मध्यमस्थानोऽग्निरहिर्बुध्न्य इत्युच्यते । सवितृभूतः सोऽपि Sy.

१२. वरूत्री is suggested for प्रकृति ॥ वाग्देवी च सवितृसहिता सती Sy.

१३. ०रीहिः A. मुख्याभिर्गोभिः Sy.

१४. नितरां पालयतु Sy.

१५. जानां पति० A. प्रजानां पालकः सविता देवः Sy. १६. रमणीयं तत्प्रसिद्धं धनम् Sy.

१७. स्वस्य सम्बन्धि Sy.

१८. अस्माभिर्याच्यमानः Sy.

१९. भगसंज्ञकं देवं वा Sy.

२०. उद्गूर्णः is suggested for उद्गूर्णा ॥

२१. आपद्भ्यो is suggested for आभ्यो ॥ ओजस्वी स्तोता Sy.

२२. ०यन्ति इति A. भृशं ह्वयन्ति Sy.

२३. भनम् A. एतत्संज्ञकं सवितारं वा Sy.

२४. असमर्थः स्तोता Sy.

२५. याचते is suggested for याचतो ॥

२६. ०र्चं मिति M. A. fragment of KSA. 36. 38.p. 25

२७. VM. ignores अध ॥ अध अपि च Sy.

**शं नो॑ भवन्तु वा॒जिनो॒ हवे॑षु दे॒वता॑ता मि॒तद्र॑वः स्व॒र्काः ।**
**ज॒म्भय॒न्तोऽहिं॒ वृक॒ं रक्षां॑सि॒ सने॑म्य॒स्मद्यु॑यव॒न्नमी॑वाः ॥ ७ ॥**

शन्नः । सुखाः । भवन्तु । वाजिनः । ह्वानेषु । देवतातौ यज्ञे । मितद्रवो मितगमना अध्वानं विमाय गच्छन्तः । स्वञ्चनाः । हिंसन्तः । अहिञ्च । वृकञ्च । रक्षांसि च । क्षिप्रम् ।

---

१. वैश्वदेवे पर्वणि वाजिनस्य हविषः 'शं नो भवन्तु' इत्यादिके द्वे याज्यानुवाक्ये । सूत्रितञ्च— 'शं नो भवन्तु वाजिनो हवेषु वाजेवाजेऽवत वाजिनो न इत्युर्ध्वज्ञुरन्तवानं याज्याम्' (ĀSS. 2. 16.) इति Sy. 'शं नः' इति ऋक्त्रयेणाज्यहोमोऽश्वाभिमन्त्रणं वा Mah. उत्तरेण तृचेनैतानेवाश्वान्स्तौति U. वसिष्ठस्येदमार्षम् Dur. वसिष्ठस्य SKN.

२. सुखाय Sy. सुखकराः Mah. शमिति सुखनाम । सुखरूपाः U. सुखहेतवः BB. सुखाः सन्तु Dur. शं सुखम् SKN.

३. एतदभिधायका देवाः Sy. अश्वाः Mah. U. BB. रश्मयो देवाश्वा वा SKN.

४. अस्मदीयेषु स्तोत्रेषु Sy. आह्वानेषु सत्सु Mah. आह्वानेषु U. Dur., SKN. आह्वानेषु । पूर्ववत् BB.

५. देवानां कर्म देवतातिः ।....देवतातौ यज्ञे Mah. U. देवास्तायन्ते विस्तीर्यन्ते पृथक् पृथगाराध्यन्तेऽस्मिन्निति देवतातिर्यज्ञः BB. एतस्मिन्....यज्ञे Dur. देवताता यज्ञनाम । यज्ञे SKN.

६. मितद्रवणा मितमार्गाः Sy. मितं परिमितं द्रवन्ति गच्छन्तीति मितद्रवः । क्विपि तुगभाव आर्षः Mah. ते हि मितं द्रवं ? (न्ति) गच्छन्ति सुखकरम् U. मितमल्पमिव महान्तमपि पन्थानं द्रवन्ति गच्छन्ति मितद्रवः । यद्वा मितं शीघ्रं गच्छन्तीति मितद्रवः ।....मितं द्रवणं येषामिति वा बहुव्रीहिः BB. किं लक्षणाः ?.... श्लिष्टं शोभनं ये द्रवन्ति Dur. मितं त्रैलोक्यमात्रं शिक्षितत्वात् पथ्यानुदेश एव पदं न्यस्यन्तो द्रवन्ति गच्छन्ति ये ते मितगामिन इत्यर्थः SKN.

७. सञ्चनाः M. शोभनाञ्चाः Sy. शोभनोऽर्को येषां ते सुरुवः स्वञ्चना वा Mah. सुरोचनाः स्वञ्चना वा U. शोभनगमनाः शोभनस्तुतयो वा BB. ये....शोभनमञ्चन्ति गच्छन्ति स्वर्चनाः शोभनं चार्चनं येषां स्तुतिः । स्वर्चिषो वा । येषां शोभना अर्चिषो दीप्तयस्त आगच्छन्तु Dur. अञ्चतेरर्चतेर्वा ।...स्वञ्चनाः सुगमना इत्यर्थः । स्वर्जना वा सुष्ठु स्तुतयः । स्वर्चिषो वा सुदीप्तयः SKN.

८. हिंसन्तः is missing in A. हिंसन्तो वाजिनो देवाः Sy. नाशयन्तः Mah. क्षोभयन्तः U. भञ्जयन्तः BB. आह्वानेष्वस्माकं जम्भयन्तः Dur. स्तम्भयन्तः प्रतिबध्नन्तः । हिंसाकर्मा वा, जम्भयन्तो हिंसन्तो विनाशयन्तः SKN.

९. आगत्य हन्तारम् Sy. सर्पम् Mah. U. आगत्य हन्तारम् BB. यश्चास्मानाहन्ति Dur.

१०. भक्तञ्च M. वसूनामदातारम् । चोरमिति शेषः Sy. अरण्यश्वानम् Mah. अपहर्तारम् । कुक वृक आदाने' इगुपधात्कः BB. यश्च वृकस्तस्करो मुष्णाति Dur. व्यालं रक्षांसि च SKN.

११. राक्षसान् Mah. रक्षांसि धर्मविघ्नकारीणि BB. रक्षांसि च येऽस्मान् रहसि क्षिण्वन्ति, तांश्चास्मत्तो जम्भयन्तो हिंसन्तः Dur.

१२. क्षिप्रमम् A. पुरातनाः Sy. सनेमीति पुराणनाम । इह तु क्षिप्रवाचकः Mah. सनेमीति पुराणनाम । इह तु क्षिप्रवचनो वाक्यवशात् U. क्षिप्रमित्येके, पुराणमित्यन्ये BB. सामर्थ्यादिह सनेमीति क्षिप्रनाम Dur. पुराणनामान्यत्र । इह तु पदान्तरसम्बन्धसामर्थ्यात् । क्षिप्रार्थमित्याह । क्षिप्रम् SKN. सनेमि पुराणनामैतत् Ngh. 3.7.

अस्मत्तः । यावयन्तु । अमीवाः ।

**वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।**
**अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ ८ ॥**

वाजेवाजे । सङ्ग्रामेसङ्ग्रामे । रक्षत । हे अश्वाः ! अस्मान् । धनेषु शत्रुभ्यः आजिहीर्षितेषु । मेधाविनः । अमृता वाजिनोभ्यश्च रूपं ? केचन देवाः । सत्यज्ञाः । अमुम् । सोमम् । पिबत । माद्यत च । अथ

---

१. तेऽश्वाः. . . .अस्मत्सकाशात् Mah. अस्मत्सकाशादपनयन्त्वित्यर्थः SKN.

२. यावयन् M. पृथक्कुर्वन्तु Sy. पृथक्कुर्वन्तु । 'यु पृथग्भावे' Mah. पृथग्भावे, पृथक् कुर्वन्तु U. यावयन्तु पृथक् कुर्वन्तु BB. सामर्थ्यादिपेत्याध्याहृत्य, अपयावयन्तु । अपमिश्रयन्त्वित्यर्थः । इष्टं च रक्षसां नाशनं न मिश्रणमिति Dur. यौतिरत्र पृथग्भावार्थेऽन्तर्णीतण्यर्थश्च । पृथग्भावयन्तु SKN.

३. रोगान् Sy. व्याधीन् Mah. U. रोगांश्च युयवन्नित्येव । आगत्य हिंसन्तीत्यमीवाः । मीयतेराङ्पूर्वाद् वप्रत्ययः । उपसर्गस्य च ह्रस्वत्वं निपात्यते BB. न च सर्पादीनेव केवलान् । किं तर्हि ? अमीवा रोगान् हिंसितव्यान् । स्त्रीलिङ्गनिर्देशो जात्यभिप्रायः । रोगजातीश्च हिंसितृजातीश्चेत्यर्थः Dur.

४. VM. ignores नः ॥ नोऽस्माकम् Sy. सुखा नो भवन्तु वाजिनो ह्वानेषु देवताती यज्ञे । मितद्रवः सुमितद्रवः । स्वर्काः स्वञ्चना इति वा । स्वर्चना इति वा । स्वर्चिष इति वा । जम्भयन्तोऽहिं च वृकं च रक्षांसि च । क्षिप्रमस्मद्यावयन्तु । अमीवा देवाश्वा इति वा N. 12. 44., SKN. IV. 144.
सोऽनुमन्त्रयते । शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवा
This stanza = SB. 5. 1. 5. 22. p. 431. YV. 9. 16. = TS. 1.7. 8.2

५. वाजे is missing in A.

६. सर्वेषु युद्धेषु Sy. सर्वस्मिन्नन्ने समुपस्थिते सति Mah. अन्नेऽन्ने, उपस्थिते सति U. अन्नेऽन्ने साध्ये BB. ७. पालयत Sy. Mah. U. रक्षत तल्लम्भयित्वा BB.

८. अश्वो A. हे एतन्नामकाः देवाः ! Sy.

९. धननिमित्तेषु Sy. धनेषु चोपस्थितेषु सत्सु Mah. धनेषु चोपस्थितेषु U. धनेष्ववतेति धनानि चास्माँल्लम्भयत BB.

१०. ०जिहिर्षि० A. ११. किम्भूता यूयम्? . . . परिदृष्टकारिणः Mah. U. यथा तद्रागिणः BB. १२. अमरणधर्माणः Sy. Mah. U. अमरणाः BB. १३. ०जिनेभ्य० A.

१४. के न च M. The passage वाजिनोभ्यश्च रूपं केचन देवाः, is an explanation of वाजिनः; therefore it should immediately follow हे अश्वाः । The reading of the above passage is doubtful. वाजिन ऋभुर्विभ्वा वाज इत्येवंरूपाः केचन देवाः or वाजिनो ऽश्वरूपाः केचन देवाः is suggested for the passage. १५. सत्यं जानन्त एवम्भूताः सन्तो यूयम् Sy. सत्यज्ञा वा यज्ञज्ञा वा U. सत्यज्ञाः सत्यवन्तः BB.

१६. ततो यूयमिमं सोमम् Sy. कर्मणि षष्ठी । हवम् Mah. अस्य नैवारचरुलक्षणस्य U.

१७. मधुरोपेतम् Sy. धावनात्पूर्वं पश्चाच्चावघ्रायमाणं नैवारचरुलक्षणं मधुरं हविः Mah. मधुनः U. मधुसदृशस्य घृतस्य । पूर्ववत् कर्मणि षष्ठी । नुमभावश्छान्दसः BB.

१८. पिबतः A.

१९. सोमपानानन्तरं यूयं तृप्ता भवत Sy. पीत्वा च. . . .तृप्ता भवत Mah. तृप्यध्वम् । नैवारं चरुमवजिघ्रन्त्यश्वस्य तदभिप्रायमेतत् U. पीत्वा च. . . .तृप्यत । 'मद तृप्तियोगे' चुरादिरनुदात्तेत् BB.

तृप्ताः[1] । गच्छत[2] । पथिभिः[3] । देवयानैः[4] ।

## VII. 39.

**ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेत्प्रतीची जूर्णिर्देवतातिमेति ।**
**भेजाते अद्री रथ्येव पन्थामृतं होता न इषितो यजाति ॥ १ ॥**

ऊर्ध्वः[5] । ऊर्ध्वः[6] । अग्निः[7] । सुष्टुतिमस्माकम्[8] । वस्वो दानाय[9] । श्रयति[10] । पृथिवी क्षिप्रा ?[11] उषा[12] । यज्ञम् । एति[13] । भेजाते[14] । शत्रूणामाहर्त्तारः[15] विद्रवा यूयं आजूं[16] रथ्येव[17] पन्थानं[18] महान्तमस्मिन् काले । यज्ञम् । होता । अस्माकम्[19] । प्रेषितः[20] । यजति[21] ।

---

१. यूयम् Sy. ततस्तृप्ताः सन्तः Mah. तृप्ताश्च सन्तः U. तृप्ताश्च BB.

२. गच्छति A. ३. मार्गैः Sy. Mah. U.

४. देवगमनसाधनैः Sy. देवाधिष्ठितैः Mah. देवाध्यासितैः U. देवा यैर्गच्छन्ति तैर्मनोहरैः BB. वाजे-वाजेऽवत । वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति । SB. 5. 1. 5. 24. p. 431. This stanza=YV. 9. 18.=TS. 1.7. 8. 2

५. 'ऊर्ध्वो अग्निः' इति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । 'ऊर्ध्वः सप्त वैश्वदेवं तु' इत्यनुक्रमणिका (36. 39. p. 25.) । सूक्तविनियोगो लैङ्गिकः । द्वितीये छन्दोमे प्रउगशस्त्रे 'ऊर्ध्वो अग्निः' इति वैश्वदेवस्तृचः । सूत्रितञ्च—'ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेदुत स्या नः सरस्वती जुषाणेति प्रउगम्' (ASS. 8. 10.) इति Sy.

६. उद्गमनः सन् Sy.

७. अङ्गनादिगुणविशिष्टः Sy.

८. ष्टिः सुमति० A. सुष्टुति० M. अस्मदीयां शोभनां स्तुतिम् Sy.

९. वासकस्य स्तोतः Sy.

१०. श्रयतु, सेवताम् Sy.

११. प्रतीची is suggested for पृथिवी ॥ अभिमुखी Sy.

१२. सर्वासां प्रजानां जरयित्री उषोदेवता Sy.

१३. गच्छति Sy.

१४. भोजाते M. सेवेते Sy.

१५. अद्री आद्रियन्तौ श्रद्धावन्तौ पत्नीयजमानौ Sy.

१६. माहर्तारावद्री युवामाजिम् is suggested for ०माहर्तारः विद्रवा यूयम् आजूम् ॥

१७. रथ्ये इव M. रथिनाविव Sy.

१८. यज्ञमार्गम् Sy.

१९. The passage beginning with वस्वो दानाय and ending with अस्माकम् is missing in A. अस्मदीयम् Sy.

२०. तथा सम्प्रेषितः Sy.

२१. यजतु । करोत्वित्यर्थः Sy.

प्र वां॑वृजे सुप्र॒या ब॒र्हिरे॑षा॒मा वि॒श्पती॑व॒ बीरि॑ट इयाते ।
वि॒शाम॒क्तोरु॒षसः॑ पू॒र्वहू॑तौ वा॒युः पू॒षा स्व॒स्तये॑ नि॒युत्वा॑न् ॥ २ ॥

प्र[1] वावृजे । प्रवृत्तमासीत्[2] । सुप्रयाणम्[3] । एषाम्[4] । बर्हिः[5] । आगच्छतौ[6] वायुः पूषा[7] च । अन्तरिक्षे[8] । राजानाविव[9] णे । मनुष्याणाम्[10] । रात्र्याः[11] ।

---

१. अथ चतुर्थ्यृचि वैश्वदेवस्तुत् Mah. वैश्वदेवस्तुतिः U. [illegible] Dur.

२. प्रवृक्तमासीत् is suggested for प्रवृत्तमासीत् ॥ प्रवृज्यते आस्तायत इत्यर्थः Sy. एषां केषाम् ? येषां बर्हिः प्रवावृजे, प्रवृज्यते प्रस्तीर्यते, 'वृजी वर्जने' [illegible] ? लिट् Mah. प्रवृज्यते प्रच्छिद्यते U. बर्हिः प्रस्तीर्यत इत्यर्थः Dur. व्रजिरत्रार्थः । [illegible] कर्मणि लट् । प्रवृज्यते प्रस्तीर्यते SKN.

३. सु प्रयाणम् A. शोभनानेन युक्तम् Sy. कीदृशं बर्हिः ? सुप्रयाः शोभनं प्रयः प्रगमनं प्रस्तरणं यस्य तत् सुप्रयः । दीर्घश्छान्दसः । सम्यग्विधिना प्रस्तीर्णमित्यर्थः Mah. सुप्रयाणं सुगमनम् U. सुप्रगमनं यत्सुखमभिगच्छन्ति देवताः Dur. सुखं गम्यते यस्मिन् देवताभिः SKN. ४. यजमानानां सम्बन्धि Sy. एषां यजमानानाम् Mah. येषामिति सर्वनामव्यत्ययः। येषां यजमानानाम् U. एषामृत्विग्यजमानानां स्वभूतम् SKN.

५. कुशमयम् Sy. किं पुनस्तत् ? बर्हिर्वेदिरास्तरणाद्दर्भात्मकस्य SKN.

६. आगच्छताम् Sy. 'ई कान्त्यसनगतिव्याप्त्यादौ' व्यत्ययेन तङ् Mah. आगच्छतमश्विनौ U. प्रास्तीर्णे तस्मिन्....आ इयाते Dur. विस्तीर्णे च तस्मिन् । आकार 'इयाते' इत्यनेन सम्बध्यते । ..ततो बीरिटाख्यं प्रति आ इयाते, आगच्छतम् SKN. ७. वायु पूषा A.

८. अन्तरिक्षे यद्वा गणे Sy. अन्तरिक्षे वर्तमानौ । ....बीरिटशब्दो गणवाचकः Mah. बीरिटशब्दो गणवचनः U. क्व पुनरवस्थितावेयाते ? इत्युच्यते, बीरिटेऽन्तरिक्ष इत्यर्थः ।....अन्तरिक्षेणैव हि देवता आगच्छन्तीति बीरटमन्तरिक्षमित्युपपद्यते Dur. बीरिटेऽन्तरिक्षे सप्तमीश्रुतेः स्थितौ सन्तौ । पञ्चम्यर्थे वा सप्तमी SKN.

९. Missing in M. ग seems missing before णे। गणे should therefore be the proper reading. गणे seems to be another meaning of बीरिटे ! So it should follow immediately अन्तरिक्षे ॥ इवेतीदानीमर्थे । इदानीमस्मदीयानां प्रजानां पालकौ, यद्वा विश्पतीवेत्युपमा। राजानौ यथा।.... अस्मिन्पक्षे विशामित्युभयत्र सम्बध्यते Sy. तत्र दृष्टान्तः—काविव ? विश्पतीव यथा विशां पती द्वौ राजानौ....आगच्छतस्तद्वत्तावपि तेषां स्वस्तय इयाते Mah. सर्वस्य पती इव। ....यथा विशां मनुष्याणां पती राजानौ ....अवस्थितौ U. विश्पती सर्वस्य जगतः 'पातारौ वा पालयितारौ वा' धात्वन्यत्वमर्थकल्प्यम् । इव पादपूरण एवेत्येतस्यार्थे वा । ....'अपि वा' अयमिवशब्दः 'उपमार्थे' एव स्यात् । विश्पती इवेति सर्वपती इवेति । 'सर्वपती इव राजानौ बीरिटे गणे' अवस्थितौ । ....अस्मिन्नपि पक्षे गणो बीरिटशब्देनोच्यते तस्मिन्नपि पक्षे विश्पती राजानौ सर्वदा गणमध्यगतावेवागच्छन इत्युपपद्यत एव Dur. इव सम्प्रत्यर्थत्वात्पदपूरणः । विश्वशब्दस्य वलोपेन च विश्पती सर्वस्य स्वामिनौ पातारौ । ....अथवा विशां पती विश्पती राजानौ कौचित् । बीरिटोऽपि मनुष्यगण इव स्वार्थ एव। यथा कौचिद् विशां पती राजानौ बीरिटे स्वस्मिन् सैनिके मनुष्यगणे स्थितौ ततो वाऽऽगच्छेतां तद्वदागच्छतम् । विशामित्येतत् पूर्वहूतावित्येतेन व्यवहितेनापि सामर्थ्यात्सम्बध्यते SKN.

१०. प्रजानाम्, मनुष्याणां वा Sy. मनुष्याणां गणे Mah. U. आह कस्य पुनरेयाते ? कस्मिन् काल एयाते ? कौ वा, एयाते ? कं वाऽर्थं पुरस्कृत्यैयाते ? इत्युच्यते—एषां....मनुष्याणां तासु तासु क्रियास्वाहूयमानौ Dur. विशां मनुष्याणामृत्विग्यजमानानाम् SKN.

११. रात्रेः सम्बन्धिन्याः Sy. रात्रेः Mah. रात्र्या अवसाने U. रात्र्या अपगमे सति Dur. कस्मिन् काल आगच्छतम् ? उच्यते । अक्तो रात्रिनामेदम् । रात्रेः SKN.

विवषवासेश्च[1] । पूर्वस्यामभिभूतौ[2] । वायुः[3] । नियुत्वान्[4] । पूषा च । अस्माकं स्वस्तये[5], नित्यानं प्रष्टव्यम्[6] ।

**ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः ।**
**अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥ ३ ॥**

ज्मयाः[7] । पृथिव्याः[8] । अस्मिन् देवयजने[9] । अरमयन्त[10] । पार्थिवाः[11] । देवाः । उरौ[12] । अन्तरिक्षे[13] च तत्रत्याः ।

१. विवासे उषसश्च is suggested for विव-षवासेश्च ॥ उषसः सकाशात् Sy. उषसो दिनस्य Mah.
उषस आगमनकाले U.
उषसश्चागमनकाले Dur. उषसश्चापि यः स काल इति SKN.

२. ०भिहूतौ is suggested for ०भिभूतौ ॥ पूर्वस्मिन्नाह्वाने सति Sy. पूर्वा चासौ हूतिश्च पूर्वहूतिस्तस्याम् । प्रथमाह्वानकाले । अग्नि-होत्रहोमकाल इत्यर्थः । उषसः पूर्वाह्वाने पूषा रविरायाति रात्रौ वायुः Mah. पूर्वस्मिन्ना-ह्वानकाले U.
प्रथम एवाह्वानकाले Dur.
पूर्वस्मिन्नाह्वाने SKN.

३. वायुना वायुसखत्वादग्निर्लक्ष्यते, रात्रिहोमस्या-ग्निदेवत्यत्वात् Mah.

४. नियुच्छब्देन वडवा उच्यन्ते । तद्वान् वायुः, पूषा च Sy. नियुतो नियुत्संज्ञा अश्वाः सन्त्यस्य तः । नियुतो वायोरित्युक्तेः Mah. अश्ववान् U. आह नियुत्वान् कस्मात् ? इत्युच्यते 'नियुतोऽस्याश्वाः' अथ 'नियुतः कस्मात् ? उच्यते, 'नियमनात्' नीवैर्हि ते निय-म्यन्ते । 'नियोजनाद्वा' नियोज्यन्ते हि रथे । 'नियुतो वायोः' इत्येतस्मात्कारणात् विप्रकृष्टो-ऽपि नियुत्वच्छब्दो वायुशब्देनैव संयोजितो भाष्यकारेण, नहि पूष्णो नियुद्भिः सम्बन्धोऽस्ति Dur.
नियुतो वायोरित्याद्विष्टोपयोजनत्वान्नियुत्वा-निति व्यवहितमपि वायुना सम्बध्यते । वायुश्च नियुत्वान् SKN.

५. प्रजानां स्वस्तये क्षेमाय Sy. कल्याणाय Mah. स्वस्त्ययनाय, अविनाशाय U. [illegible] ? स्वस्तये, अविनाशाय [illegible] चेत्यभिप्रायः । [illegible] पालयितारो वा [illegible] । [illegible] ? [illegible] — नियुतः कस्मात् ? नियमनाद्वा [illegible] SKN.
स्वस्त्ययनार्थं [illegible] Dur.

६. वीरिटं [illegible] पूर्व [illegible] उत्तरस्मिंस्तेः । [illegible] । [illegible] । अपि नियमो भवति . . . प्रयुज्यते सुप्रायणं बर्हिरेतत् । [illegible] सर्वस्य पातारो वा पालयितारो वा । वीरिट-मन्तरिक्षम् । भियो वा भासो वा ततिः । अपि वोपमार्थे स्यात् । [illegible] वीरिटे गणे मनुष्याणाम् । राञ्या विवासे पूर्वस्यामभिहूतौ । वायुश्च नियुत्वान् । पूषा च स्वस्त्ययनाय । नियुत्वान् नियुतोऽस्या-श्वाः । नियुतो नियमनाद्वा । नियोजनाद्वा N. 5. 28., SKN. II.383.

७. वसिष्ठस्यार्षम् dur. वसिष्ठस्य SKN.

८. पृथिव्यां भवाः Sy. 'ज्मा पृथिवी' । तस्यां भवा ये नित्यं भवन्ति ते ज्मयाः dur. ज्मेति पृथिवीनाम । ज्मयेति तृतीया सप्तम्याः स्थाने । . . . ज्मायाम् SKN.

९. यज्ञे Sy. एतस्मिन् कर्मण्यस्मिन्वा लोके dur. अत्रैव पृथिव्याम् SKN.

१०. रमयन्ताम् Sy.

११. वसुसंज्ञकाः Sy. त्रिस्थानानां वसूनां पार्थि-वास्तु वसवः SKN.

१२. विस्तीर्णे Sy. विस्तृते dur. विस्तीर्णे SKN.

१३. अन्तरिक्षे स्थिताः Sy.

गच्छन्ति[1] । शोभनाः[2], [illegible] र्गतिकर्मसु[4] पठितः[5] । अवाचीनानधोमुखान्[6] । कुरुध्वम्[7] । युष्माकं मार्गानित[8] आगच्छत । हे [illegible][9] । शृणुत च[10] । युष्माकं जग्मुषः[11] । अस्माकम्[12] । अस्य[13] । दूतस्याग्नेर्वचं[14][15] ।

**ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभि सन्ति देवाः ।**
**ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरंधिम् ॥ ४ ॥**

ते हि । [illegible][16] । यज्ञेषु । यज्ञार्हाः[17] । अविकारम्[18] । आसनम्[19] । अभि[20] । हि[21] । भवन्ति । सर्वे[22] ।

---

१. [illegible] Sy. [illegible] । [illegible] [illegible] । [illegible] Dur. [illegible] ।... [illegible] [illegible] SKN.

२. [illegible] Sy.

३. ष्टीन् A. मार्ष्टि० is suggested for ष्टीन् ।

४. र्गतिकर्मसु is missing in M.

५. पठितो A. The passage मार्ष्टिर्गतिकर्मसु पठितः should immediately follow गच्छन्ति and precede शोभनाः ॥

६. ०नातो मुखात् A. अस्मदभिमुखं यथा भवति तथा Sy. एवमनयोः स्थानयोर्वसून् विज्ञाप्य [illegible] द्युस्थानांस्तानुक्त्वा ब्रवीति । ये यूयमेवं त्रिस्थानास्तान्वो ब्रवीमि...श्रुत्वा चास्मान्-वर्गाभिमुख्येन Dur. प्रत्यक्षकृतत्वान्मन्त्रस्या-मन्त्रितश्रवणाश्रावाचवैकवाक्यतायै यत्तदध्या-हारः । य ईदृग्गुणविशिष्टास्तेऽर्वाक् । लिङ्गवचन-योर्व्यत्ययः । अर्वाञ्चोऽस्मदभिमुखत्वात् SKN.

७. कुरुत Sy. मार्गान् प्रहतान् कुरुध्वमित्येतदाशा-स्महे Dur. कुरुत । नित्यमस्मद्यज्ञेष्वागच्छत येनास्मान् प्रत्यागमनमार्गाः प्रहता भवन्ती-त्यर्थः SKN.

८. युष्मदीयान् मार्गान् Sy. बहुप्रकारं शतसह-स्रमागमनेनैव पथो मार्गान् Dur.

९. हे प्रभूतगमनाः ! वसवः ! मरुतः ! च यूयम् Sy. हे उरुजवाः SKN.

१०. शृणुत च यदयं ब्रवीति Dur., SKN.

११. ज is written twice in A. युष्मान् प्रति गतवतः Sy.; Dur. गतवतो युष्मा-नगति SKN.

१२. अस्मदीयस्य Sy. अस्मद्दूतस्य Dur. कस्य दूतस्य ?...अस्माकं स्वभूतस्य SKN.

१३. अग्नेः SKN.; Dur.

१४. ग्नेः वच M. ०ग्नेर्वचः is suggested for ०ग्नेर्वचं ॥ दूतस्याग्नेराह्वानम् । अग्निर्हि यजमानानां दूतः सन् देवानाह्वयतीत्यर्थः Sy. अर्वाक् पथ इत्यादिना त्रिस्थानानामध्येषणा । द्युस्थानो देवगण इत्यादिरपपाठः । केचित्तु श्रोता दूतस्येति चतुर्थेन पादेन द्युस्थानेषु वसुषु भाष्यं योजयन्ति SKN.

१५. ज्मया अत्र वक्षपोऽरसन्त देवाः । ज्मा पृथिवी । तस्यां भवा उरौ चान्तरिक्षे मर्जयन्त गमयन्त रश्मयन्त । शुभ्राः शोभमानाः । अर्वाच एनान्पथो बहुजवाः कुरुध्वम् । शृणुत इत्यस्य जग्मुषो नोऽस्याग्नेः N. 12. 43., SKN. IV. 143—144.

१६. ते प्रसिद्धाः Sy. १७. यज्ञसम्पादिनः Dur.

१८. अवितारः is suggested for अविकारम् ॥ रक्षकाः Sy. अवितारो रक्षितारोऽवनीया वा तर्पणीयाः Dur. अवितारोऽवनीयास्तर्पणीयाः SKN.

१९. सह स्थानम् Sy. वैश्वदेवं समानं स्थानम् Dur. सधं स्थीयते यत्र तत्स्थानं वेद्याख्यम् । सधस्थम्—'सध मादस्थयोः' (Pa. 6. 3. 96.) इति सहस्य सधादेशः SKN.

२०. अहि A. खलु Sy. २१. हिशब्दो यस्मादर्थे, यस्मात् SKN.

२२. आक्रामन्ति Sy. अभितिष्ठन्ते Dur. अभि-भवन्ति SKN.

देवाः[1] । तान्[2] । यज्ञे[3] । कामयमानान्[4] । यज[5] । अग्ने ! क्षिप्रम्[6] । भगवम्[7] । बहुप्रज्ञम्[8] । अश्विनौ[9] न[10] ।

---

१. देवा A.

२. तद् M. देवान् Sy. किं तेषामिति ? तान् विश्वान् देवान् Dur. यस्मादिति श्रुतेस्तस्मादित्यध्याहारः । तस्मात्तान् SKN.

३. अस्मदीये यज्ञे Sy. एतस्मिन्नध्वरे यज्ञे Dur.

४. स्वमंशं कामयमानान् Dur.

५. यजामहे SKN.

६. अविलम्बमानः. . .एवमत्र यागस्य विघ्नभयात् क्षिप्रस्येष्टत्वात् 'श्रुष्टीति क्षिप्रनाम' इत्युपपद्यते । अन्यत्र हि वक्ष्यति 'श्रुष्टीवरीः सुखवतीः' इति तस्मादेतदनेकार्थमपि भवति Dur. श्रुष्टीति क्षिप्रनाम Ngh. 4. 3. N. 6. 13.

७. भगवन् M. भगम् is suggested for भगवम् ॥ एतत्संज्ञं देवम् Sy.

८. पुरूणां ध्यातारमिन्द्रम् Sy. पुरन्धिशब्दोऽत्र गुणपदत्वात् सन्दिह्यते, इति विचार्यते तत्कः पुरन्धिरिति ?. . .अत्र पुरस्तात् 'श्रुष्टी भगम्' इति तस्यायमन्वादेश इत्येकमाचार्यमतम् । नासत्यावनन्तरावपि सन्तौ न सन्दिह्येते, द्विवचनवाच्यत्वात्तयोः । एकवचनान्तत्वात्पुरन्धिशब्दस्य च । इन्द्र उक्तः स्यात् पुरन्धिशब्देन इत्यपरं मतम् । किं कारणम् ? स हीन्द्रो बहुकर्मतमः अन्येभ्यो देवेभ्यः । धीरिति कर्मनामसु पठितम् । तद्यस्य पुरु बहु स पुरन्धिः स चेन्द्रः । तस्मात् पुरन्धिरिन्द्र इत्युपपद्यते । अथवा—अन्येन पुरन्धित्वमिन्द्रस्य स्यात्. . . मेघपुरो ह्यसावेव दारयति Dur. पुरन्धीति धीशब्दस्य धीकर्मसु पठितत्वात्, बहुकर्मा बहुप्रज्ञो वोच्यते । अतोऽसंविज्ञानपदत्वाभावाद् गुणपदत्वे सति प्रकृतस्यैव कस्यचिद् गुणपदमाहोस्विदपूर्वस्येति सन्देहाद्विचारार्थः प्रश्नः । तदिति वाक्योपन्यासार्थः । कोऽयं पुरन्धिर्नाम ?. . .आश्विनेन [illegible]न्तर्ये द्विवचनान्तत्वात् सम्बन्धानु[illegible]न्वादेशादिह भग इत्येकमतम् । [illegible] सम्बन्ध इत्युक्तम् । सामर्थ्यादिप्रकृतेनापि सम्बन्धो भवतीत्याह 'इन्द्र इत्यपरम्' तत् सामर्थ्यं दर्शयति । देवराजत्वादतिशयेनासौ [illegible] बहुकर्मा । व्युत्पत्त्यन्तरसामर्थ्याद्वा पुरामसुरसम्बन्धिनीनामतिशयेन दारयितेन्द्रः SKN.

९. सत्यावेव नासत्यावित्यौर्णवाभ आचार्यो मन्यते । तौ हि सत्यमेव ब्रूतो न कदाचिदप्यसत्यम् । तस्मान्नासत्यावित्युच्येते । द्विःप्रतिषेधः प्रकृतिमापादयति । अथवा सत्यस्योदकस्य यज्ञस्य वा प्रणेतारौ नासत्यौ, तथा हि आग्रायण आचार्यो मन्यते Dur. नासत्यौ चाश्विनौ । . .द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः । अविसंवादकावित्यर्थः, ओर्णवाभो मन्यते । नित्यपक्षे . . .सत्यस्याविसंवादिनोऽर्थस्य प्रणेतारौ । तस्मिन् हि काले मनसः प्रसादः । . . .सत्यशब्दान्नयतेश्च नासत्या इत्याग्रायणो मन्यते । नासिकाप्रभवावित्यैतिहासिकाः । नासिकाशब्दात् प्रभवार्थे त्यपि नसादेशो द्रष्टव्यः । नासिकातः प्रतिलब्धः सन् SKN.

१०. श्रुष्टीति क्षिप्रनाम । आशु श्रुष्टीति. . .तानध्वरे यज्ञे । उशतः कामयमानान् । यजाग्ने । श्रुष्टी भगम् । नासत्यौ चाश्विनौ । सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेतारावित्याग्रायणः । नासिकाप्रभवौ बभूवतुरिति वा । पुरन्धिर्बहुधीः । तत्कः पुरन्धिः ? भगः पुरस्तात्तस्यान्वादेश इत्येकम् । इन्द्र इत्यपरम् । स बहुकर्मतमः । पुरां च दारयितृतमः । वरुण इत्यपरम् । तं प्रज्ञया स्तौति N. 6. 12. 13., SKN. II 431.

आग्ने गिरो दिव आ पृथिव्या मित्रं वह वरुणमिन्द्रमग्निम् ।
आर्यमणमदितिं विष्णुमेषां सरस्वती मरुतो मादयन्ताम् ॥ ५ ॥

[ आग्ने[1] । ] अग्ने[2] ! दिवः[3] । पृथिव्याश्च[4] । आह[5] । अस्माकं स्तुतिः[6] प्रति । देवता मित्रादिकाम्[7] । एषां[8] वसिष्ठानाम् । तथा सरस्वती[9] । मरुतश्च । माद्यन्तु[10] च[10] ।

ररे हव्यं मतिभिर्यज्ञियानां नक्षत्कामं मर्त्यानामसिन्वन् ।
धाता रयिमविदस्यं सदासां सक्षीमहि युज्येभिर्नु देवैः ॥ ६ ॥

ररे[11] हव्यम् । दीरयते[12] । हविः । स्तुतिभिः[13] सह । देवानाम्[14] । व्याप्नोतु[15] । अभिलपितानाम्[16] । मनुष्याणां[17] मध्ये । स्वं धनमवुध्यन्[18] यजमानः । प्रयच्छत[19] । धनम् । अक्षयम्[20] । सदा दीयमानमप्यविदासम्[21] । सङ्गता[22] भवाम । भवार्यैः[23] । क्षिप्रम्[24] । देवैः ।

---

१. The *pratīka* is supplied by the Editor.

२. हे अग्ने ! त्वम् Sy. ३. द्युलोकात् सकाशात् Sy. ४. अन्तरिक्षाच्चावह Sy.

५. आवह is suggested for आह ॥ आह्वानं कुरु Sy.

६. स्तुति A. स्तुतीः is suggested for स्तुतिः ॥ गरणीयान् स्तुत्यान् देवान् अस्मदीयं यज्ञं प्रति Sy.

७. मित्रादिकाः is suggested for मित्रादिकाम् । आदि refers to वरुणम् । इन्द्रम् । अग्निम् । अर्यमणम् । अदितिम् and विष्णुम् । मित्रमेतत्संज्ञकम् । वरुणम् । इन्द्रं च । देवेषु देवतास्वरूपेणावस्थितं चाग्निम् । अर्यमणमेतत्संज्ञकम् । अदितिमदीनां पृथिवीं च । विष्णुञ्च । एवम्भूतान् देवान् Sy.

८. अस्माकं यजमानानामर्यावह Sy.

९. वाग्देवता च Sy.

१०. मान्यन्तु A. च is missing in M. अस्मदीयैः स्तोत्रैर्हविर्भिश्च माद्यन्तु Sy.

११. रे रे M.

१२. दीयते is suggested for दीरयते ॥ अस्माभिर्दीयते Sy.

१३. अस्मदीयाभिः स्तुतिभिः Sy.

१४. यज्ञियानाम्-चतुर्थ्यर्थे षष्ठी यज्ञार्हेभ्यो देवेभ्यः Sy.

१५. अस्मदीयं यज्ञं व्याप्नोतु Sy.

१६. अभिलषितम् is suggested for अभिलषितानाम् ॥ अभिलाषाम् Sy.

१७. मर्त्यानां मनुष्यगणामस्माकम् Sy.

१८. अवुधन् M. अबध्नन् is suggested for अवुध्यन् ॥ अप्रतिबध्नन्नग्निः Sy.

१९. हे देवाः ! अस्मभ्यं दत्त Sy.

२०. अनुपक्षपणीयम् Sy.

२१. सदा सम्भजनीयम् Sy.

२२. अप्यविदस्यम् is suggested for अप्यविदासम्. It referes to अक्षयम्

२३. सहायैः is suggested for भवार्यैः ॥ सहायभूतैरिह यज्ञे समागतैर्देवैः, यद्वा, बन्धुभिर्देवैः Sy.

२४. क्षिपम् A. नु अद्य वयम्...यद्वा न्वित्युपमार्थे । इव Sy.

**नू रोदसी अभिष्टुते वसिष्ठैर्ऋतावानो वरुणो मित्रो अग्निः ।**
**यच्छन्तु चन्द्रा उपमं नो अर्कं यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥**

नू[1] रोदसी । क्षिप्रम्[2] । द्यावापृथिव्यौ[3] । अभिष्टुतौ[4] । वसिष्ठैः[5] । यज्ञवन्तः[6] । वरुणादयश्च[7] । प्रयच्छन्तु[8] । उषसः । उपवासभूतम्[9] । नः[10] । अन्नम्[11], यद्वाह्लादका देवा इति[12] ।[13]

VII. 40.

**ओ श्रुष्टिर्विदथ्या३ समेतु प्रति स्तोमं दधीमहि तुराणाम् ।**
**यदद्य देवः सविता सुवाति स्यामास्य रत्निनो विभागे ॥ १ ॥**

ओ[14] श्रुष्टिः[15] । समायातु[16] । क्षिप्रम्[17] । विदर्थहितोया[18] । प्रतिधीमहि[19] । स्तोत्रमागतानां त्वरि[20] । देवानाम्[21] । यदि[22] । अद्य[23] । देवः[24] । सविता । अस्मात् प्रसौति[25] । तत्स्तुल्या[26] युक्ता वयं धनिनः[27] । भवेम । अस्य गनिनः । धन-विभाजनैः[28] ।

---

१. आरोदसि A. २. अद्य Sy.
३. ०थिव्योवभि० A.
४. ०ष्टुते is suggested for ०ष्टुतौ ॥ अभितः सर्वतः स्तुते अभूताम् Sy.
५. वसिष्ठैरस्माभिः । पूजार्थं बहुवचनम् Sy.
६. ०वन्तौ M. तथा-ऋतावानः अस्माभिः क्रियमाणैर्यज्ञैरुपेताः Sy.
७. आदि refers to मित्रः and अग्निः । वरुणो मित्रोऽग्निश्चैवम्भूता देवा अस्माभिरभिष्टुता आसन् Sy.
८. ०च्छन्ति A. ददतु Sy.
९. उपमानभूतम् is suggested for उपवासभूतम् ॥ सर्वोत्कृष्टम् Sy.
१०. अन्नः A. अस्मभ्यम् Sy.
११. अर्चनीयमन्नम् Sy.
१२. यद्वाह्लादका देवाः seems to be another explanation of चन्द्राः; therefore it should immediately follow उषस. and precede उपवा०
१३. सूक्ते प्रतिपादिता ये देवास्ते सर्वे यूयं नोऽस्मान् स्वस्तिभिरविनाशैः सदा सर्वदा पात पालयत Sy.
१४. 'ओ श्रुष्टिः' इति सप्तर्चं सप्तमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । 'ओ श्रुष्टिः' इत्यनुक्रान्तम् (KSA. 36. 40. p. 25.) । विनियोगो लैङ्गिकः Sy.
१५. ओ श्रुष्टिः is missing in A.
१६. हे देवाः ! . . . अस्मानागच्छतु Sy.
१७. सुखम् . . . अथवा श्रुष्टिर्वेगवती Sy.
१८. ०दर्थहितो M. ०दर्थहितो० ०दथाय हितो० is suggested for ०दर्थहितो० A. विदथेन त्वदीयेन चित्तेन सम्पाद्या . . . अथवा . . . विदथे यज्ञे क्रियमाणास्मदीया स्तुतिः Sy.
१९. प्रतिदनीडो धीमहि A. प्रतिदधीमहि is suggested for प्रतिधीमहि ॥ कुर्वीमहि Sy.
२०. स्तोत्रम् Sy. २१. त्वधि A.
२२. वयं तुराणां वेगवतां देवानाम् Sy
२३. यद्धनम् Sy. २४. इदानीम् Sy.
२५. अस्मभ्यं प्रेरयेत् Sy.
२६. तत् is missing in M.
२७. रमणीयधनवतः Sy.
२८. ०भजनैः A. ०भाजने is suggested for ०भाजनैः ॥ तस्य धनस्य विभागे दाने Sy.

मित्रस्तन्नो॒ वरु॑णो॒ रोद॑सी च॒ द्युभ॑क्तमिन्द्रो॑ अर्य॒मा द॑दातु ।
दिदे॑ष्टु दे॒व्यदि॑ती॒ रेक्णो॑ वा॒युश्च॒ यन्नि॑यवैते॒ भग॑श्च ॥ २ ॥

मित्रस्तन्नः[1] । मित्रः । तत्[2] । अस्मभ्यम् । वरुणादिः[3] । च । दीप्तान्नं धनम्[4] । प्रयच्छतु । दिशतु । देवी[5] । अदितिः[6] । धनम् । वायुः । भगः । च । यद्धनम् । पृथक्कृतम्[7] ।

सेदु॒ग्रो अ॑स्तु मरुतः॒ स शु॒ष्मी यं मर्त्यं॑ पृषदश्वा॒ अवा॑थ ।
उ॒तेम॒ग्निः सर॑स्वती जु॒नन्ति॒ न तस्य॑ रा॒यः प॑र्ये॒तास्ति॑ ॥ ३ ॥

सेदुग्रः । सः । उग्रः । अस्तु[8] । मरुतः[9] ! सः । बलवान् । न[10] । मर्त्यम्[11] । हे पृषदश्वाः[12] ! रक्षथ[13] । अपि च । एनम्[14] । अग्निम्[15] । सरस्वती[16] च [illegible][17] [illegible] । न च । [illegible][18] । धनस्य । परिगन्ता[19] । अस्ति[20] कश्चिदिति ।

अ॒यं हि ने॒ता वरु॑ण ऋ॒तस्य॑ मि॒त्रो राजा॑नो अर्य॒मापो॒ धुः ।
सु॒हवा॑ दे॒व्यदि॑तिरन॒र्वा ते नो॒ अंहो॒ अति॑ पर्ष॒न्नरि॑ष्टान् ॥ ४ ॥

अयं हि । अयम् । हि[21] । नेतारः[22] । वरुणः । सत्यस्य[23] । मित्रः । अर्यमा च । राजानः[24] । कर्म[25] । धारयन्ति[26] ।

---

१. स्त is missing in A.
२. तत् प्रसिद्धं धनम् Sy.
३. आदि refers to वरुणः । रोदसी । इन्द्रः and अर्यमा । Sy. explains these words as follows:—तथा वरुणो ददातु। रोदसी च द्यावापृथिव्यौ च दत्ताम् । तथेन्द्रः ददातु । अर्यमा च ददातु Sy.
४. ०प्तान्न ध० A. द्युभिर्द्योतमानैः स्तोतृभिः सेवितं तद्धनम् Sy.
५. तेऽपि M.
६. अतिथिः M.
७. अस्मान्नितरां योजयेताम् । तद्धनमिति पूर्वेण सम्बन्धः Sy.
८. ओजस्वी Sy.
९. हे रुद्रपुत्राः ! देवाः ! यूयम् Sy.
१०. अ M. यम् is suggested for न ।
११. मरणधर्माणं यं यजमानम् Sy.
१२. पृषद्वाश्वा A. पृषच्छब्देन केचिन्मृगविशेषा उच्यन्ते । त एवाश्वा वाहा येषां ते। एवम्भूताः Sy.
१३. रक्षत A. पालयेत Sy.
१४. यजमानम् Sy.
१५. अपि A. अग्निः is suggested for अग्नि ॥ अङ्गनादिगुणयुक्तो देवः Sy.
१६. वाग्देवता चेत्याद्याः सर्वे देवाः Sy.
१७. प्रवर्तयन्ति Sy.
१८. यजमानस्य सम्बन्धिनः Sy.
१९. नाशकः Sy.
२०. भवतीत्यर्थः Sy.
२१. खलु Sy.
२२. नेतार A. नेता is suggested for नेतारो ॥ प्रापयिता Sy.
२३. यज्ञस्य सत्यस्य वा Sy.
२४. एते समर्था देवाः Sy.
२५. अकर्म A. अस्मदीयं यज्ञादिलक्षणम् Sy.
२६. अधुः । दधति Sy.

तथा[1] स्वाह्वाना[2] । देवी[3] । अदितिश्च[4] । प्रत्युताऽन्यस्मिन्[5] । ते सर्वे[6] । अस्मान् । अंहसः[7] । अतिपारयन्तु[8] । अहिंसि-सानिति[9] ।

**अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।**
**विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ॥ ५ ॥**

अस्य देवस्य । अस्य । देवस्य । सेक्तुः[10] । शाखाभूता[11] अन्ये देवाः । विष्णोः[12] । हविर्भिः[13] । एषणी-यस्य[14] । यज्ञे । तथा रुद्रः स्तोता[15] । तुभ्यं[16] महत्त्वम् । अश्विनौ[17] । हि[18] । जानाति । तथाशत्वन्नयुक्ताम्[19] [20] । मार्गम्[21] । यासिष्टमिति[22] [23] ।

**मात्र पूषन्नाघृण इरस्यो वरूत्री यद्रातिषाचश्च रासन् ।**
**मयोभुवो नो अर्वन्तो नि पान्तु वृष्टिं परिज्मा वातो ददातु ॥ ६ ॥**

मात्र पूषन्[24] । मा । अत्र[25] । पूषन्[26] ! आगतदीप्ते[27] ! जरामिच्छो कृत्[28] ? वित्रारयित्र्यस्माकं[29] प्रजा । तथा । रात्रिषाचो[30] रातिं भजन्तोऽस्मदीयं[31] धनमपहरन्तश्च । यत्र[32] तुभ्यम् । प्रयच्छन्ति[33] । सुखस्य भावयितारः[34] ।

---

१. तथा is missing in M.
२. स्वाह्वाना A. शोभनाह्वाना भवति Sy.
३. द्योतमाना Sy.
४. अदीना देवमाता Sy.
५. अप्रत्युस्तुता० A. अप्रत्युद्गता is suggested for प्रत्युता० ॥ केनाप्यप्रतिगता Sy.
६. तः सर्वे A. वरुणादयो देवाः Sy.
७. दुरितम् Sy.
८. चारयतु A.
९. अबाधितान् सतः Sy.
१०. कामानां सेक्तुः Sy.
११. शाखा इव भवन्ति Sy.
१२. सर्वदेवात्मकस्य । 'विष्णुः सर्वा देवताः' (AB. I. I.) इति श्रुतेः Sy.
१३. हवीरूपैरन्नैः Sy.
१४. प्रापणीयस्य Sy.
१५. रुद्रस्तोता A. रुद्रो देवः Sy.
१६. स्तुभ्यं A.
१७. हे अश्विनौ ! देवौ ! युवाम् Sy.
१८. खलु Sy.
१९. अस्मान् प्रापयति Sy.
२०. हविर्लक्षणान्नयुक्तम् Sy.
२१. अस्मदीयं गृहम् Sy.
२२. यासिष्ठमिति M. आगच्छतम् Sy.
२३. VM. ignores रुद्रियम् ॥ रुद्रसम्बन्धि सुखम् Sy.
२४. मात् पूषत् A. २५. अस्मिन् दाने Sy.
२६. पूषण A. एवम्भूत ! हे देव ! Sy.
२७. दीप्त A. हे प्राप्तदीप्ते ! Sy.
२८. ०मिच्छे कृत्रि M. The reading is doubtful. इरस्यः विघातं (मा) कृथाः Sy.
२९. ०यित्र्यस्मा० A. सर्वैर्वरणीया सरस्वती Sy.
३०. रातिषा० is suggested for रात्रिषा० । रातिदीनं तस्य सम्भवन्त्यो देवपत्न्यश्च Sy.
३१. ०न्ता स्म० A.
३२. यद्धनम् Sy.
३३. अस्मभ्यं प्रयच्छेयुः । अत्र मा कृथा इति पूर्वेण सम्बन्धः Sy.
३४. सुखस्य भावकाः Sy.

अस्मान्[1] । अनश्वराः[2] । रक्षन्तु[3] । वृष्टिम्[4] । परितो गन्ता । वायुः । ददातु[5] ।[6]

नू रोद॑सी अ॒भिष्टु॑ते वसि॑ष्ठैर्ऋ॒तावा॑नो॒ वरु॑णो मि॒त्रो अ॒ग्निः ।
यच्छ॑न्तु च॒न्द्रा उ॑प॒मं नो॑ अ॒र्कं यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ७ ॥

(नू रोदसी)[7]

VII. 41.

प्रा॒तर॒ग्निं प्रा॒तरिन्द्रं॑ हवामहे प्रा॒तर्मि॒त्रावरु॑णा प्रा॒तर॒श्विना॑ ।
प्रा॒तर्भगं॑ पू॒षणं॒ ब्रह्म॑ण॒स्पतिं॑ प्रा॒तः सोम॑मु॒त रु॒द्रं हु॑वेम ॥ १ ॥

प्रातः[8] । 'प्रातर्भगमाद्या[9] लिङ्गोक्तदेवतान्त्योषस्या' इति कात्यायनः[10] । सेयं[11] निगदसिद्धा ।[12]

---

१. अस्मान् is missing in M.
२. अश्वश्चराः A. गच्छन्तो देवाः Sy.
३. पालयन्तु Sy. ४. वृष्टिलक्षणमुदकम् Sy.
५. प्रयच्छन्त्वस्मभ्यम् Sy.
६. VM. ignores नि ॥ नितराम् Sy.
७. The *pratīka* is supplied by the Editor. This stanza has already been explained, see RV. 7. 39. 7. Sy. explains this stanza in the following manner:—पूर्वं व्याख्यातेयम् । अक्षरार्थस्तु—द्यावापृथिव्यौ वरुणादयो देवाश्च वसिष्ठैरस्माभिरभिष्टुता भवन्ति । एवम्भूता आह्लादका देवाः सर्वोत्कृष्टमन्नमस्मभ्यं ददतु । अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवा यूयं कल्याणैरस्मान् सर्वदा पालयत Sy. ८. 'प्रातरग्निम्' इति सप्तर्चमष्टमं सूक्तम् । अत्रानुक्रमणिका—'प्रातर्भगं जगत्याद्या लिङ्गोक्तदेवतान्त्योषस्या'(KSA. 36. 41. p. 25.) इति वसिष्ठ ऋषिः । आद्या जगती । शिष्टास्त्रिष्टुभः । आद्याग्नीन्द्रादिदेवत्या द्वितीयाद्याः पञ्च भगदेवत्याः सप्तम्युषोदेवत्या । अत्र केचिदाहुः—
'निवेष्टुकामो रोगार्तो भग सूक्तं जपेत्सदा ।
निवेशं विशति क्षिप्रं रोगैश्च परिमुच्यते ॥
(Rgvidh. 25.) इति
९. KSA. reads प्रातर्भगं जगत्याद्याः ।
१०. KSA. 36. 41. p. 25.
११. सोऽयं निगदसिद्धः M.
१२. VM. does not explain the stanza because it is very easy. Sy. explains it in the following manner: प्रातरुषःकालेऽग्निं देवं हवामहे । वयं स्तोतार आह्वयामः । तथा प्रातः काल इन्द्रं हवामहे । तथामित्रावरुणामित्रावरुणावहोरात्राभिमानिनौ देवौ प्रातर्वयं हवामहे । तथाश्विनौ देवानां भिषजौ प्रातर्वयं हवामहे । तथा प्रातर्भगं देवं पूषणं देवं ब्रह्मणस्पतिं मन्त्राभिमानिनमेतत्संज्ञकं चाह्वयामः । तथा प्रातः सोममेतत्संज्ञकं देवमुतापि च रुद्रं देवं च हुवेम । आह्वयामः ॥ प्रातः शब्दो वीप्सावचनः । वयं प्रातःप्रातः पुनः पुनरेतान् देवान् हवामहे, आह्वयाम इति प्रत्येकं सम्बध्यते । कान् ? अग्निम्, इन्द्रं, मित्रावरुणौ, अश्विनौ, भगं, पूषणं, ब्रह्मणस्पतिं सोमम्, उत अपि च रुद्रं हुवेम आह्वयाम । हवामहे हुवेम । ह्वयतेः सम्प्रसारणे रूपद्वयम् Mah. प्रातःशब्दो वीप्सावचनः । प्रातःप्रातः पुनःपुनः । अग्निं चेन्द्रं च मित्रावरुणौ चाश्विनौ च । हवामह इति प्रत्येकमभिसम्बध्यते । प्रातर्भगं च पूषणं च ब्रह्मणस्पतिं च । प्रातः सोमम् । उतापि च रुद्रं हुवेम आह्वयामः U.
This stanza=YV. 31. 34.

प्रा॒त॒र्जितं॒ भग॑मु॒ग्रं हु॑वेम व॒यं पु॒त्रमदि॑ते॒र्यो वि॑ध॒र्ता ।
आ॒ध्रश्चि॒द्यं मन्य॑मानस्तु॒रश्चि॒द्राजा॑ चि॒द्यं भगं॑ भ॒क्षीत्याह॑ ॥ २ ॥

प्रातर्जितम्[१] । प्रातर्जयिनम्[२] । भगम्[३] । उग्रम्[४] । वयं ह्वयेम[५] । वयम् । पुत्रम्[६] । अदितेः[७] । यः[८] । विधारयिता[९] सर्वस्य । आवृद्धिद्यमन्यढ्यामानः[१०] आध्र आलुर्दरिद्रः[११] । सन्[१२] । यम्[१३] । स्तुवन्[१४] भक्षीयेत्याह[१५] । तथा तुरः ।

---

१. वसिष्ठस्यार्षम् Dur.

२. ०तर्जं० A. Sy. explains प्रातर्जितम् separately as two words but padapāṭha reads it as one word. जितं जयशीलम्....प्रातःकाल एव Sy. प्रातर्जयतीति प्रातर्जित् तं प्रातर्जयशीलम् Mah. प्रातः प्रातस्तमांसि यो जयति स भवति प्रातर्जित् तं प्रातर्जितम् Dur. सम्पदादित्वात्क्विप् । प्रातस्तमांसि जयति यस्तं प्रातरेव तमसां जेतारमित्यर्थः SKN.

३. तं भगं प्रातरेव वयं हुवेमेति सम्बन्धः Sy. तं भगमादित्यम् Mah. सूर्यम् Dur. भगमुक्तावस्थं ज्योतिः SKN.

४. उद्गूर्णम् Sy. उत्कृष्टमुद्गूर्णदानं वा Mah. उग्रमुद्गूर्णदानम् U. अभ्युद्यतम् Dur. अप्रसह्यम् SKN.

५. आह्वयामः Sy. U. आह्वयाम Mah. उदयाय आह्वयामहे Dur. उद्गरणायोत्सर्पणाय हुवेम ह्वयेम SKN.

६. तनयम् Mah.

७. देवमातुः प्रातस्तन्या वा सन्ध्यायाः SKN.

८. भगो देवः Sy.

९. विश्वस्य जगतो धारकः Sy. जगतो धारयिता Mah. विधारयिता सर्वस्य जगतः U. विधारयिता सर्वस्य जगतः स्वेनानुग्रहेण Dur. कीदृशं भगम् ? यो विधर्ता धारयिता सर्वस्य जगतः स्वेनानुग्रहेण Dur.

१०. This seems to be the fragment of this stanza. Therefore 'आध्रश्चिद्यं मन्यमानः' is suggested for आवृद्धिद्यमन्य० । Cf. N .12. 14.

११. आवृद्धिद्यमुन्यमा आर्धं आ० A. न घ्रायति, 'ध्रै तृप्तौ' न तृप्यति सोऽध्रः । नञो दीर्घश्छान्दसः । यद्वा आ समन्ताद् ध्र आध्रः । यद्वा अध्र एवाध्रः स्वार्थे तद्धितः । आध्रोऽतृप्तो बुभुक्षितो दरिद्रो वापि Mah. प्रतिषेधस्य दीर्घत्वं छान्दसम् । आध्रः—'ध्रै तृप्तौ' । अतृप्तो बुभुक्षितः । अथवा ध्रियतेराध्रो दरिद्रः । दरिद्रोऽपि U. आढ्यानां स्पृहयिता Dur. आढ्यालुराढ्यत्वकामो दरिद्रः । दरिद्रश्च ....'आढ्यालुर्दरिद्रः' इति वाक्यार्थे पदवचनमाध्र आध्यालुरिति । 'आढ्यच्चालुच उपसंख्यानम्' अस्मादेव विशिष्टप्रयोगात् SKN.

१२. दरिद्रोऽपि स्तोता Sy.

१३. स M. अपि Sy. चिच्छब्दोऽप्यर्थे Mah. U. चिच्चार्थे SKN.

१४. स्तुन्वन् A. पूजयन् स्वार्थसिद्धये । मन्यतिरर्चतिकर्मा । स हि सूर्योदये भिक्षादिना किञ्चिल्लभते तत उदयं वाञ्छति Mah. मन्यतिरर्चतिकर्मा । पूजयन् स्वार्थसिद्धये U. यं मन्यमान आकाङ्क्षन्नहन्यहनि पूजयन्नास्ते, अपि नामोदियाद् भगः, ततो वाऽस्मार्थं पर्यटेयमिति Dur. मन्यतिः कान्तिकर्मा । यं कामयमानम्, किम् ? सामर्थ्याद्विनार्थं पर्यागमनम् SKN.

१५. भक्षि भज विभज मह्यं देहीत्याह ब्रवीति Sy.

चित्[1] तुरः प्रेरको[2] धनस्याढ्यः । राजा[3] । चित् । यम् । भगमहम्[4] । भजेय[5] । इति । वदति[6] ।[7]

**भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः ।**
**भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥ ३ ॥**

भग प्रणेतः । भग[8] ! प्रणेतः[9] ! स्तोतॄणाम्[6] । भग ! सत्यधन[10] ! भग ! इदम्[11] । कर्म[12] । उदव

---

१. अपि Sy.

२. The passage तुरः प्रेरको धनस्याढ्यः should immediately follow तुरः and precede चित् ॥ तुरतिर्गतिकर्मा । प्राप्तधनः Sy. आतुरोऽपि यं भगं मन्यमानः । ....दिवसे तस्य सुखोदयाद् रोगिणो रात्रिः कष्टेन याति, यद्वा तुरो यमः, स हि मरणाय दिनानि गणयति Mah. आङोऽध्याहारः । आतुरोऽपि यं भगं मन्यमानो भक्षीत्याह, उदयं भक्षयस्वेत्याह । यद्वा तुरशब्देन यमोऽभिधीयते । स हि तूर्णं प्राणिनो हन्ति । यमोऽपि यं भगं मन्यमानो भक्षीत्याह, उदयं भक्षयस्वेत्याह । स हि विवसान् प्राणिनो गणयति U. तुरोऽपि । 'यमस्तूर्णगतिः' सर्वान्प्राणिन आभिमुख्येनोपसंहाराय तूर्णगतिस्त्वरितगतिर्यं मन्यमान आस्ते प्रेताधिपतिः । तदुदयाद्धि कालातिक्रमेणासावुपसंहरति प्राणिनः Dur. तूर्णगतिश्च । कोऽसौ ? सामर्थ्याद्यम इत्याह । प्राणिनामायुषः क्षयार्थम्....तुरस्त्वरण इत्यस्य तरतेर्वा प्लवनार्थस्य, त्वरतेर्वा शीघ्रार्थे वर्तमानस्य तुरः। तुरोऽपि यं भगमाहेति संबंधः SKN.

३. समर्थोऽपि Sy. राजाऽपि यं भगं भक्षीत्याह । तदुदये हि राज्ञां व्यवहारदर्शनादिना सर्वेष्टसिद्धिः Mah. राजाऽपि यं भगं मन्यमानो भक्षीत्याह, उदयं भक्षयस्व भजस्वेत्याह । तदुदये हि राज्ञां वार्तासिद्धिः U. राजाऽपि चार्थिनां कार्यचिकीर्षया Dur. राजा च प्रजानां व्यवहारादिदर्शनाद्यर्थम् ।....यमो राजा च स्वकार्यप्रसिद्धये समुद्यतमिच्छतीत्यर्थः SKN.

४. देवम्, भजनीयं धनम् Sy. तमुदयम् ।.... तं वयं भगमाह्वयामहे Dur. ज्योतिर्भग उच्यते, इत्यस्यैवार्थस्य द्रढिम्नः कारणमाह—अन्धो भग इत्याहुर्ब्रह्मवादिनः । तत्कथम् ? नास्मिन् द्रष्टॄणां ध्यानं दर्शनमस्तीत्यर्थः । 'अनुत्सृप्तः' सूर्यभावमनागतो मण्डलाकारतया न दृश्यत इत्यर्थः SKN.

५. मह्यं भक्षि देहीत्याह Sy. भजस्व, अर्थादुदयम् । इत्याह ।....भक्षि भजतेः Mah. उदयं भक्षयस्व भजस्वेत्याह U. इत्येवमाह Dur.

६. ऋषिरात्मानमाह U.

७. प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्य । आध्रश्चिद्यं मन्यमान आढ्यालुर्दरिद्रः । तुरश्चित् । तुर इति यमनाम । तरतेर्वा । त्वरतेर्वा । त्वरया तूर्णगतिर्यमः । राजा चिद् यं भगं भक्षीत्याह । 'अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते । प्राशित्रमस्याक्षिणी निर्जघान (Cf. KB. VI. 13.) इति च ब्राह्मणम् । जनं भगो गच्छति (Cf. MS. 1. 6. 12.) इति (वा) विज्ञायते ।· जनं गच्छत्यादित्य उदयेन N. 12. 14., SKN. IV. 11. 2. This stanza=YV. 34. 35.

८. हे देव ! Sy.

९. त्वं प्रणेता प्रकर्षेण नेतासि Sy. प्रकर्षेण नयति प्रापयति धनमिति प्रणेता तस्य सम्बोधने हे प्रणेतः ! Mah. प्रकर्षेण नयस्य कर्तः ! U.

१०. तादृश ! प्रणेतर्हे भग ! त्वं सत्यराधः सत्यधनो वा Sy. आदरार्थं पुनः सम्बोधनम् ।.... सत्यमनश्वरं राधो धनं यस्य स सत्यराधास्तत्सम्बुद्धौ हे सत्यराधः ! Mah. सत्यमविनाशि राधो धनं यस्य स तथोक्तः U.

११. अस्मदीयम् Sy १२. कर्म A. स्तुतिम् Sy. प्रज्ञां कर्म वा Mah. प्रज्ञाम् U.

रक्ष[1]। प्रयच्छन्[2] धनम् । अस्माकम्[3] । भग । प्रजनय[4] । अस्मान्[5] । गोभिः । अश्वैश्च[6] । भग[7] । प्रभवेम[8] । नृभिः[9] । नृपते[10] ।

**उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम् ।**
**उतोदिता मघवन्त्सूर्यस्य वयं देवानां सुमतौ स्याम ॥ ४ ॥**

उतेदानीम् । अपि च । इदानीम् । वयं भगेन देवेन युक्ताः[11] । स्याम[12] । अपि च । अह्नाम् । प्रपित्वे[13] प्राप्तौ प्रातः[14] । मध्ये । च । अपि च । उदये[15] । सूर्यस्य[16] । मघवन्ति[17] हिन्द्र ! भगस्यैव[18] वा सम्बोधनम् । वनम्[19] । सर्वेषामेव देवानाम्[20] । सुमनसः[21] । स्याम[22] ।

---

१. उद्रक्ष सफलयुक्तां कुरु Sy. उद्गमय । यथा सूक्ष्मार्थान् पश्यामस्तथा कुर्विति भावः Mah. यथा सूक्ष्मानर्थान् पश्यामस्तथा कुर्वित्यभिप्रायः U.

२. तादृश ! सत्यराधो हे भग ! त्वं कामान् प्रयच्छन् Sy. धनं प्रयच्छन् सन् Mah. देहि धनम् U.

३. अस्मभ्यम् Sy. U.

४. प्रोद्भूतान् कुरु Sy. प्रवर्धय Mah.

५. अस्मात् A.

६. अश्वैः इव A. गा अश्वांश्च बहून् देहीत्यर्थः Mah.

७. हे भग ! त्वत्प्रसादाद्वयम् Sy.

८. प्रकर्षेण स्याम भवेम Mah. भवेम U.

९. नेतृभिः पुत्रादिभिः Sy. पुत्रादिभिः Mah. मनुष्यैः U.

१०. नृपत A. नृवन्तः is suggested for नृपते ॥ मनुष्यवन्तः Sy., Mah.
This stanza=YV 34. 36.

११. भगेन त्वया स्वामिना युक्ताः, यद्वा भगवन्तो धनवन्तः Sy.
भगवन्तो ज्ञानवन्तो वा Mah.

१२. भवेम Mah. स्याम आदित्यप्रसादात् U.

१३. प्रापित्वा A. प्राप्ते पूर्वाह्णे भगवन्तः स्याम Sy. सूर्यस्य....प्रपतनेऽस्तमये Mah. प्राप्तेऽस्तमनकाले भगवन्तः स्याम U.

१४. मध्यन्दिने Mah. मध्यन्दिनेऽह्लाम् U.

१५. उदितौ उदये सति Sy. उदयसमये Mah. उदयकाले U.

१६. सर्वस्य प्रेरकस्य देवस्य Sy.

१७. ०वन्तीन्द्र M. भगवन्निन्द्र ! is suggested for ०वन्तिन्निन्द्र ॥ हे धनवन् ! भग ! देव ! Sy. धनवन् रवे ! Mah.

१८. भगनस्यैव A.

१९. वयं त्वदनुग्रहात् Sy.

२०. इन्द्रादीनाम् Sy.

२१. सुमनो A. सुमतौ is suggested for सुमनसः ॥ अनुग्रहबुद्ध्यैव Sy. कल्याण्यां बुद्धौ Mah. सूर्यस्य भगवतः प्रसादादेव वयं ....कल्याण्यां मतौ U.

२२. भवेम Sy. देवा अस्मासु शोभनामनुग्रहविषयां बुद्धिं ददत्वित्यर्थः । किं बहुना सर्वदाऽस्माकं धनवत्तास्त्वित्यर्थः Mah.
This stanza=YV. 34. 37.

भगं एव भगंवाँ अस्तु देवास्तेनं वयं भगंवन्तः स्याम ।
तं त्वां भग सर्व इज्जोहवीति स नो भग पुरएता भंवेह ॥ ५ ॥

भग एव । भगः । एव[1] देवोऽस्मदर्थम् । भाग्ययुक्तः[2] । भवतु प्रापयत्वस्माद्भाग्यम्[3] । हे देवाः ! तेन[4] । वयम् । भगवन्तः[5] । स्याम[6] । तम्[7] । त्वा[8] । भग[9] ! सर्वः । एव[10] । आह्वयन्ति[11] । सः । नः[12] । भग[13] ! पुरएता[14] । भव[15] । अतः[16] ।

समंध्वरायोषसों नमन्त दधिक्रावेंव शुचंये पदायं ।
अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन आ वंहन्तु ॥ ६ ॥

समध्वराय[17] । सन्नमन्त[18] । यज्ञार्थम्[19] । उषसः[20] । अश्व[21] इव । प्रतिष्ठिताय[22] । युद्धदेशाय[23] । अभि-

---

१. किमन्यैरदातृभिर्धनिभिर्देवैरिति भावः Mah. किमन्यैर्देवताविशेषैर्धनयुक्तैरदातृभिरित्यभिप्रायः U.
२. धनवान् Sy, Mah. U.;
३. ०स्यान्भा० M. अस्मद्भाग्यम् is suggested for अस्माद्भाग्यम् ॥
४. भगेन देवेन धनेन वा Sy. भगदत्तेन धनेन Mah. भगप्रदत्तेन धनेन U.
५. धनवन्तः Sy. U.
६. भवेम Sy., U.
७. प्रसिद्धम् Sy. एवं देवानुक्त्वाथ भगमाह । ....तं प्रसिद्धम् Mah. द्वितीयेनार्धर्चेन द्वितीयम् । एकवाक्यतया असम्भवात् ।.... उपरि तदः श्रवणाद् यदोऽत्र वृत्तिः U.
८. त्वाम् Sy.
९. भिः A.
१०. जनः Sy., Mah.
११. ०यति is suggested for ०यन्ति ॥ भृशं पुनः पुनर्वाह्वयति Sy. अत्यन्तमाह्वयतीष्टसिद्धये Mah. आह्वयति कामसिद्धये U.
१२. अस्माकम् Sy., U. स त्वमिह नोऽस्माकं कर्मणि Mah.
१३. हे भग ! देव ! त्वाम् Sy.
१४. पुरा एता A. पुरो गन्ता Sy. पुरोऽग्र एतीति पुरएता अग्रयायी भव Mah. अग्रयायी सर्वकार्येषु भव इह U.
१५. अग्रेसरो भूत्वा सर्वकार्याणि साधयेत्यर्थः Mah
१६. अत्र is suggested for अतः ॥ अस्मिन् यज्ञे Sy.
This stanza=YV. 34. 38.
१७. सुमध्व० A.
१८. सन्नवन्त A. सङ्गच्छन्तु Sy. सन्नमन्ते प्रह्वीभवन्ति Mah., U.
१९. अस्मदीयाय यागाय Sy. यज्ञायाग्निहोत्रादिकर्मणे U.
२०. तथोषसः Sy. प्रातःकालाधिष्ठातारो देवाः Mah. या उषसः U.
२१. अस्व A. अश्वो यथा Sy.
२२. शुद्धाय गमनयोग्याय Sy. अग्न्याधानार्थं शुचिपदम् Mah. शुचिपदमग्न्याधानार्थं कर्तव्यमिति सन्नमन्ते U.
२३. स्थानाय Sy.

मुखम्[१] । धनस्य लम्भयितारम्[२] । भगम्[३] । नः[४] । रथमिव[५] । अश्वाः । वेगवन्तः[६] । आवहरुषसः[७] ।

**अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।**
**घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥**

अश्वावतीः[८] । अश्ववत्यः[९] । गोमत्यः । अस्माकम्[१०] । उषसः[११] । वीरवत्यश्च[१२] । सदैव[१३] । उच्छन्तु[१४] ।
मुजनीयाः[१५] । उदकम्[१६] । दुहानाः[१७] । विश्वत एव[१८] । पुष्टाः[१९] ।[२०]

VII.42.

**प्र ब्रह्माणो अङ्गिरसो नक्षन्त प्र क्रन्दनुर्नभन्यस्य वेतु ।**
**प्र धेनव उदप्रुतो नवन्त युज्यातामद्री अध्वरस्य पेशः ॥ १ ॥**

[२१]प्र ब्रह्माणः[२२] ॥ वैश्वदेवम् । प्रव्याप्नुवन्तु[२३] । ब्राह्मणाः । अङ्गिरस आगच्छन्तु[२४] । प्रकामयताम्[२५] । पर्जन्यः ।

---

१. अस्मदभिमुखम् Sy. एवं ता उषसः । अर्वाचीनमन्यगतमनस्कम् U.

२. धनस्य प्रापकम् Sy. वसु धनं विन्दतीति वसुविदः Mah. वसु धनं विन्दतीति वसुवित्तं वसुविदम् U. ३. देवम् Sy. आदित्यम् Mah., U. ४. अस्मान् प्रति Sy., U. अस्माकम् Mah ५. यथा....अश्वा रथमावहन्ति तद्वत् Mah. ६. अन्नवन्तो वेगवन्तो वा Mah. वेजनवन्तोऽन्नवन्तो वा U.

७. आपो ह रुषसः A. आवहन्तूषसः is suggested for आवहरुषसः ॥ आनयन्तु Sy. आगमयन्तु Mah., U.
This stanza=YV. 34. 39.

८. अश्वा विपतिः A. ९. अश्वसहिताः सत्यः Sy. १०. अस्मभ्यम् Sy. अस्मान् Mah.

११. उषोदेवताः Sy.

१२. पुत्रादिजनोपेताश्च भवन्त्यः Sy.

१३. सर्वदा Sy. सदाकालम् Mah., U.

१४. व्यच्छन्तु तमो विवासयन्तु Sy. विवासयन्तु । अज्ञानलक्षणं पाशं मोचयन्तु । 'उछी विवासे' Mah. विवासयन्तु तमः U.

१५. मृज० M. भजनीयाः is suggested for मुजनीयाः ॥ कल्याणरूपाः Mah. भन्दनीयाः U. १६. अवश्यायजलम् Mah., U.

१७. सिञ्चन्त्यः Sy. क्षरन्त्यः Mah.

१८. सर्वैर्गुणैः Sy. सर्वतः Mah., U.

१९. पृष्टाः M. प्रवृद्धाः । एवम्भूता उषसस्तम उच्छन्तु Sy. धर्मार्थकामैराप्यायिताः Mah. आप्यायिता धर्मार्थकामैः U.

२०. अस्मिन् सूक्ते प्रतिपादिता हे सर्वे देवाः ! यूयं नोऽस्मान् सदा सर्वदा स्वस्तिभिः कल्याणैः पात पालयत Sy. एवं परोक्षं प्रार्थ्य प्रत्यक्षमाह । हे उषसः ! यूयं स्वस्तिभिरविनाशैः सदा नोऽस्मान् पात पालयत Mah. इदानीमृत्विग्विषयः प्रश्नः । यूयं पात पालयत स्वस्तिभिरविनाशैः सदा नोऽस्मान् U.
This stanza=YV. 34. 40.

२१. 'प्र ब्रह्माणः' इति षडृचं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । अत्रानुक्रान्तम् 'प्र ब्रह्माणः षड् वैश्वदेवं तु' (KSA. 36. 42.p. 25.) इति । सूक्तविनियोगो लैङ्गिकः । तृतीये छन्दोमे प्रउगशस्त्रे 'प्र ब्रह्माणः' इति वैश्वदेवस्तृचः । सूत्रितञ्च—'प्र ब्रह्माणो अङ्गिरसो नक्षन्त सरस्वतीं देवयन्तो हवन्ते' (ĀSS. 8.11.) इति Sy.

२२. ब्राह्मण A. २३. सर्वत्र व्याप्नुवन्तु Sy.

२४. एतन्नामका ऋषयः Sy.

२५. प्रकर्षेणेच्छतु Sy.

वायुदेशार्थम्[1] । सङ्गच्छन्ताञ्च[2] । उदप्रुतः[3] । धेनव[4] इति मेघान् । आयुज्येतां[5] रथेऽश्वानागमार्थम्[6] । आहर्तारौ[7] शत्रूणाम् । पातपर्जन्यौ[8] । अध्वरस्य । रूपभूतौ[9] ।

**सुगस्ते अग्ने सनवित्तो अध्वा युक्ष्वा सुते हरितो रोहितश्च ।**
**ये वा सद्मन्नरुषा वीरवाहो हुवे देवानां जनिमानि सत्तः ॥ २ ॥**

सुगस्ते[10] । शोभनगमनम्[11] । तव[12] । अग्ने[13] ! सम्भक्तधनः[14] । मार्गः । योजय । सुते[15] सोमे । हरितः[16] । रोहितः[17] । चान्[18] । यद्[19] । वा[20] । तव सदने[21] । आरोचमानाः[22] । वीरस्य तव वोढारस्तान्[23] वा युक्ष्य[24] । धयाम्यहम्[25] । देवानाम्[26] । जनिमानि[27] देवानित्यर्थः । सत्तो[28] निषण्णः[29] ।

---

१. देशार्थम् A. स्तोत्रस्यास्मदीयं स्तोत्रम् Sy.
२. सर्पन्तु Sy.
३. उदप्रुतः A. उदकानि सिञ्चन्त्यः Sy.
४. प्रीणयित्र्यो नद्यः Sy.
५. योजयेताम् Sy.
६. आगमनार्थम् is suggested for आगमार्थम् ।
७. आवत्तारौ A. आदर्तारौ is suggested for आहर्त्तारौ M. आद्रियन्तौ पत्नीयजमानौ Sy.
८. पातः पर्ज० A. वातपर्ज० is suggested for पातपर्ज० ।
९. रूपम् Sy.
१०. सुशस्ते M.
११. ०मनः is suggested for मनं ॥ सुष्ठु गन्तव्यो भवतु Sy.
१२. त्वदीयः Sy.
१३. अग्नेः A.
१४. सनाच्चिरकालादारभ्य लब्धः Sy.
१५. सते A. Sy. divides सुते into सु and ते construing सु with युक्ष्व and explaining it as सुष्ठु संयोजय and ते as त्वदीयाः taking it with अश्वाः । VM. following *padapāṭha* construes सुते as one word.
१६. हरीतः A. किञ्च श्यामवर्णाः Sy.
१७. लोहितवर्णाश्चेत्युभयविधाः Sy.
१८. चाश्वान् is suggested for चान् ।
१९. य A. ये is suggested for यद् ।
२०. च Sy.
२१. सद्मनि यज्ञगृहे Sy.
२२. आराच० A. भवन्ति Sy.
२३. वीरं शूरं त्वां वहन्तः Sy.
२४. युक्ष्व is suggested for युक्ष्य ॥ त्वदीये रथे सुष्ठु संयोजय Sy.
२५. ह्वयाम्य० is suggested for धयाम्य० ॥ आह्वयामि Sy.
२६. इन्द्रादीनाम् Sy.
२७. जनान् सङ्घान् Sy.
२८. सक्तो A. Sy. also divides जनमानि into जनिमा and नि । He explains जनिमा as जनान् सङ्घान् and takes नि with सत्तः explaining it as निषण्णाः । VM. following the *padapāṭha* construes जनिमानि as one word. यज्ञगृहे निषण्णोऽहं होता सन् Sy.
२९. ०षण्णाः M.

समु वो यज्ञं महयन्नमोभिः प्र होता मन्द्रो रिरिच उपाके ।
यजस्व सु पुर्वणीक देवाना यज्ञियामरमतिं ववृत्याः ॥ ३ ॥

समु वः । समपूजयन्[1] । युष्माकम् । हविः[2] । नमस्कारैः[3] सह । प्ररिरिचेऽत्यन्तमुज्ज्वले[4] । भवत्यन्तिके[5] । होता । मोदनः[6] । इत्यग्निमुक्त्वा तं प्रत्यक्षमाह[7]---यजस्व । सुष्ठु । हे वहुज्वालानीक[8] ! देवान् । आवर्तय च । यज्ञार्हम्[9] । सन्ततां ज्वालाम्[10] ।

यदा वीरस्य रेवतो दुरोणे स्योनशीरतिथिराचिकेतत् ।
सुप्रीतो अग्निः सुधितो दम आ स विशे दाति वार्यमियत्यै ॥ ४ ॥

यदा वीरस्य । यदा । वीरस्य[11] । आढ्यस्य[12] । गृहे । सुखशायी[13] । अतिथिः[14] । आभिमुख्येन स्तोत्रं बुध्यते[15] । सुप्रीतः[16] । अग्निः । सुनिहितः[17] । दमे[18] स्व आयतने । स वीरो मनुष्यः । विशे[19] । प्रयच्छति[20] । धनम्[21] । आत्मानमभिगच्छन्त्यै[22][23] ।

इमं नो अग्ने अध्वरं जुषस्व मरुत्स्विन्द्रे यशसं कृधी नः ।
आ नक्ता बर्हिः सदतामुषासोशन्ता मित्रावरुणा यजेह ॥ ५ ॥

इमं नः । इमम् । नः[24] । अग्ने ! यज्ञम् । सेवय[25] । मरुत्सु[26] । इन्द्रे च[27] । अस्माकम् । यशस्विनं पुत्रम्[28]

---

१. हे देवाः ।....सम्यक् पूजयन्ति Sy.
२. यज्ञम् Sy.
३. नमस्कारैर्युक्ता इमे स्तोतारो वा यजमाना वा Sy.
४. अन्येभ्यो होतृभ्योऽतिरिच्यते Sy.
५. भवदन्तिके is suggested for भवत्यन्तिके ॥ अस्माकं समीपे स्थितोऽस्मदीयो होता Sy. ६. स्तुतिशीलः Sy.
७. हे यजमान ! त्वम्....यजस्व Sy.
८. हे बहुतेजस्विन् ! अग्ने ! त्वम् Sy.
९. ०ता ज्वालम् A. अरमतिं भूमिम् .... तथा च निगमान्तरम् 'आ नो महीमरमतिं सजोषाः' (RV.5. 43. 6.) इति Sy.
१०. VM. ignores उ ॥ उ इति पूरकः Sy.
११. वीरकस्य स्तोत्राणां प्रेरयितुः Sy.
१२. हविष्मतो यजमानस्य Sy.
१३. सुखेन शयनीयः Sy.
१४. सर्वेषामतिथिभूतोऽग्निः Sy.
१५. प्रज्ञायते Sy.
१६. यदा सुप्रीतो भवति तदा Sy.
१७. सुष्ठु निहितः सन् Sy.
१८. गमे A. यज्ञगृहे Sy.
१९. विशो A. प्रजायै Sy.
२०. ददाति प्रयच्छति Sy.
२१. वरणीयं धनम् Sy.
२२. उपगच्छन्त्यै Sy.
२३. VM. ignores आ ॥ आकारश्चार्थः Sy.
२४. अस्मदीयम् Sy.
२५. सेवयस्व M. सेवस्व Sy.
२६. इन्द्रस्य सखिभूतेषु देवेषु Sy.
२७. इन्द्रो च A.
२८. यशोयुक्तं हविर्लक्षणान्नवन्तम् Sy.

कुर्वन्[1] । असीदाताम्[2] । नक्ता[3] । उषासा[4] । बर्हि[5] । कामयमानौ[6] । मित्रावरुणौ । यज । अतम्[7] ।

**एवाग्निं सहस्यं१ वसिष्ठो रायस्कामो विश्वप्स्न्यस्य स्तौत् ।**
**इषं रयिं पप्रथद्वाजमस्मे यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥**

एवाग्निम् । एवम्[8] । अग्निम् । सकुशलम्[9] । वसिष्ठः[10] । धनकामः[11] । विश्वप्स्न्यस्य[12] राज्ञः । अस्तौत् सोऽग्निः । अन्नम् । बलञ्च । अस्मासु[13] । प्रथयतु[14] [15] ।

## VII. 43.

**प्र वो यज्ञेषु देवयन्तो अर्चन्द्यावा नमोभिः पृथिवी इषध्यै ।**
**येषां ब्रह्माण्यसमानि विप्रा विष्वग्वियन्ति वनिनो न शाखाः ॥ १ ॥**

प्र[16] वो यज्ञेषु । प्रार्चन्[17] । युष्मान् हे देवाः ! यज्ञेषु । देवकामाः[18] । द्यावापृथिव्यौ[19] च । नमस्कारैः[20] इषध्यै[21] याचितुमन्नम् । येषां विप्राणाम्[22] । स्तोत्राणि । असमानि । विष्वक्[23] विविधं[24] गच्छन्ति । वृक्षस्य । इव । शाखाः[25] ।

---

१. कुरु is suggested for कुर्वन् ॥ कृधि कुरु स्थापयेत्यर्थः Sy.

२. असि दाता M. आसीदताम् is suggested for असीदाताम् ॥ उपविशताम् Sy.

३. रात्रिः Sy.

४. दिवसश्च । अहर्निशे इत्यर्थः Sy.

५. बर्हीं M. बर्हिः is suggested for बर्हि ॥ बर्हिषि कुशमये Sy. ६. अपि च हे अग्ने ! उशन्ता उशन्तौ यज्ञमिच्छन्तौ Sy.

७. अत्र is suggested for अतं ॥ इह अस्मिन् यज्ञे Sy. ८. एवम् उक्तप्रकारेण Sy. ९. सहकुशलम् A. सबलम् is suggested for सकुशलम् ॥ सहो बलं तस्य पुत्रं तद्वन्तमिति वा Sy.

१०. एतदाख्य ऋषिः Sy. ११. पश्वादिधनानीच्छन् Sy. १२. विश्वप्स्यस्य A. विश्वस्य M. पुरुरूपस्य धनस्य लाभाय Sy.

१३. अस्माकं सुप्रथ० A. अस्मभ्यम् Sy.

१४. विस्तारयतु ददात्वित्यर्थः Sy.

१५. VM. ignores रयिम् ॥ रयिं धनम् ॥ अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवा यूयमस्मान् कल्याणैः सर्वदा पालयत Sy.

१६. 'प्र वो यज्ञेषु' इति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैश्वदेवम् । 'प्र वः पञ्च' इत्यनुक्रान्तम् KSA. 36.43. p. 25. सूक्तविनियोगो लैङ्गिकः । प्रथमे छन्दोमे प्रउगशस्त्रे 'प्र वो यज्ञेषु' इति वैश्वदेवस्तृचः । सूत्रितञ्च—'प्र वो यज्ञेषु देवयन्तो अर्चन् प्र क्षोदसा धयसा सस्र एषेति प्रउगम्' (ĀSS. 8.9.) इति Sy. १७. प्राक् चन् A. प्रार्चयन्ति प्रकर्षेण स्तुवन्ति Sy. १८. देवान्कामयमानाः Sy. १९. दिवञ्च भूमिञ्च प्रस्तुवन्ति Sy. २०. स्तुतिभिर्हविर्भिर्वा Sy.

२१. इषध्ये A. M. अभि प्राप्तुम् Sy.

२२. मेधाविनाम् Sy. २३. विश्वतः Sy.

२४. विशेषेण गच्छन्ति ते विप्राः प्रार्चन्निति पूर्वेण सम्बन्धः Sy.

२५. VM. ignores विप्राः ।

प्र य॒ज्ञ ए॑तु॒ हेत्वो॒ न सप्ति॒रुद्य॑च्छध्वं॒ सम॑नसो घृ॒ताचीः॑ ।
स्तृ॒णी॒त ब॒र्हिर॑ध्व॒राय॑ सा॒धू॒र्ध्वा शो॒चींषि॑ देव॒यून्य॑स्थुः ॥ २ ॥

प्र यज्ञः[1] । प्रैतु[2] । यज्ञः[3] । गमनकुशलः[4] । अश्वः । च[5] । उद्यच्छध्वम्[6] । समनस्काः सन्तः[7] । श्रुचः[8] । स्तृणीत[9] । बर्हिः[10] । यज्ञार्थम्[11] । कल्याणम्[12] । उत्तिष्ठन्त[13] । देवकामानि[14] । शोचींषि[15] ज्वलत्वं[16] नयेत्यर्थः ।

आ पु॒त्रासो॒ न मा॒तरं॒ विभृ॑त्राः॒ सानौ॑ दे॒वासो॑ ब॒र्हिषः॑ सदन्तु ।
आ वि॒श्वाची॑ वि॒द॒थ्या॑मन॒क्त्वग्ने॒ मा नो॑ दे॒वता॑ता॒ मृध॑स्कः ॥ ३ ॥

आ पुत्रासः । आसीदन्तु[17] । मातर[18] । इव । विशेषेण भरणीया[19] बालाः । पुत्राः । बर्हिषः[20] । सामुच्छ्रिते[21] देशे । देवाः[22] । आभिमुख्येनानक्तु[23] । विश्वाची गौः[24] । यज्ञे वर्तमानां[25] तव ज्वालाम्[26], जुहूरेव या विश्वाची[27] । अग्ने[28] । अस्माकम् । यज्ञे[29] । मा । कार्षीः । हिंसाम्[30] ।

---

१. यज्ञं A. M.
२. देवान् प्रति गच्छतु Sy.
३. अयमस्मदीयो यज्ञः Sy.
४. शीघ्रगामी Sy.
५. च seems to be the explanation of न ॥ यथा तद्वत् Sy.
६. उध्यश्चध्वं A. हस्त उद्यम्य धारयत Sy.
७. हे ऋत्विजः ! सर्वे यूयं सदृशमनस्काः सन्तः Sy.
८. तृचः M. स्रुचः is suggested for श्रुचः ॥
९. वेद्यां च्छादयत Sy.
१०. कुशमयम् Sy.
११. यागं कर्तुम् Sy.
१२. साधकम् Sy.
१३. उत्तिष्ठु A. उत्तिष्ठन्तु is suggested for उत्तिष्ठन्त ॥ ऊर्ध्वमुखानि तिष्ठन्तु Sy.
१४. कासानि M. हे अग्ने ! देवान् कामयमानानि Sy.
१५. शोचिषि A. त्वदीयान्यर्चींषि Sy.
१६. ज्वलय is suggested for ज्वलत्वं नय ।
१७. उपविशन्तु Sy.
१८. मात A. मातरम् is suggested for मातर ॥ जननीम् Sy.
१९. भर्तव्या Sy.
२०. कुशमयस्य वेद्यामास्तीर्णस्य Sy.
२१. उन्नते देशे Sy.
२२. तद्वदस्माकं भरणीया देवाः Sy.
२३. आ समन्तात् सिञ्चन्तु Sy.
२४. विश्वं सर्वं हविरञ्चति गच्छतीति विश्वाची जुहूः ? (हूः) Sy.
२५. यज्ञयोग्यां त्वदीयां ज्वालाम् Sy.
२६. ज्वला A. ज्वलां M.
२७. The passage जुहूरेव या विश्वाची should immediately follow विश्वाची गौः ।
२८. अग्ने is suggested for अग्ने ।
२९. देवतातौ युद्धे । यज्ञवाचको देवतातिशब्दोऽत्र सङ्ग्रामे वर्तते Sy.
३०. हिंसा A. हिंसकान् Sy.

ते सीषपन्त जोषमा यजत्रा ऋतस्य धाराः सुदुघा दुहानाः ।
ज्येष्ठं वो अद्य मह आ वसूनामा गन्तन समनसो यति ष्ठ ॥ ४ ॥

ते सीषपन्त[1] ते[2] । आस्पृशन्तु । प्रीतिम्[3] । यष्टव्याः । उदकस्य[4] । धाराः । सुदोहाः[5] । दुहानाः[6] । प्रशस्ततमम्[7] । अद्य । युष्माकम् । वसूनाम् । महत्त्वमस्मान्[8] । आगच्छतु देवाः ! आगच्छत । समानमनस्काः[9] । यावन्तः । भवथ ।

एवा नो अग्ने विक्ष्वा दशस्य त्वया वयं सहसावन्नास्क्राः ।
राया युजा सधमादो अरिष्टा यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

एवा नः[10] । एवम्[11] । अस्मभ्यम् । अग्ने ! प्रजासु । आभिमुख्येन । देहि[12] । त्वया[13] । वयम् । बलवन् ! आस्कन्दितारः[14] । धनेन । सहायेन[15] । सहमाद्यन्तः । अहिंसिताः[16] ।

VII.44.

दधिक्रां वः प्रथममश्विनोषसमग्निं समिद्धं भगमूतये हुवे ।
इन्द्रं विष्णुं पूषणं ब्रह्मणस्पतिमादित्यान्द्यावापृथिवी अपः स्वः ॥ १ ॥

दधिक्रां वः[17] । एता[18] देवताः[19] । युष्माकम् । रक्षणाय । प्रथमम् । ह्वयामि[20] । त्रींश्च[21] लोकान् । आदित्यञ्च[22] ।

---

१. ०षवन्त A. M. २. इन्द्रादयो देवाः Sy.
३. सपतिः परिचरणार्थः । स्तुतिभिरा समन्तात्पर्यचीचरन् । अस्मान् परिचरणं कुर्वन्तु । स्वीकुर्वन्त्विति यावत् Sy. ४. पर्याप्तं यथा भवति तथा Sy. ५. सुखेन दोग्धुं शक्याः Sy.
६. वर्षन्तः Sy. ७. श्रेष्ठम् Sy. ८. मंहनीयं धनम् Sy. ९. ०मानं मन० A. तुल्यमतयः सन्तः Sy. १०. नम् A. M.
११. एवं स्तुतस्त्वम् Sy. १२. धनमभि प्रयच्छ Sy.
१३. त्वाया A. १४. अस्कन्दि० A. अस्कन्नाः Sy.
१५. सहावेन A. नित्ययुक्तेन Sy.
१६. अहिंसिता भवेम । अस्मिन् सूक्ते प्रतिपादिताः सर्वे देवा यूयं नोऽस्मान् कल्याणैः सर्वदा पालयत Sy. १७. 'दधिक्रां वः' इति पञ्चर्चमेकादशं सूक्तं वसिष्ठस्यार्षं दधिक्राख्यदेवताकम् । आद्या जगती सा तु दधिक्रादिलिङ्गोक्तदेवताका शिष्टाश्चतस्रस्त्रिष्टुभः । अनुक्रम्यते हि—'दधिक्रां दाधिक्रं जगत्याद्या लिङ्गोक्तदेवता' (KSA. 36. 44. p. 25.) इति । गतो विनियोगः Sy.
१८. एताः refers to दधिक्राम् । अश्विना । उषसम् । अग्निम्, समिद्धम् । भगम् । इन्द्रम् । विष्णुम् । पूषणम् । ब्रह्मणस्पतिम् and अपः ॥ Sy. explains these words in the following manner :—दधिक्रामश्वाभिमानिनीं देवताम् । अश्विदेवौ । उषोदेवताम् । सम्यग्दीप्तमग्निञ्च । भगमेलदाख्यं देवञ्च । इन्द्रम् । विष्णुम् । पूषणम् । ब्रह्मणस्पतिम् । अप उदकदेवता इत्येतान् देवानाह्वयामि ।
१९. देवात् A. २०. आह्वयामि Sy.
२१. त्रिंशश्च A. त्रीन् लोकान् refers to द्यावापृथिवी and स्वः ॥ But Sy. explains स्वः as सूर्यम् ।
२२. आदित्यांश्च is suggested for आदित्यश्च ।

**दधिक्राम् नमसा बोधयन्त उदीराणा यज्ञमुपप्रयन्तः ।**
**इळां देवीं बर्हिषि सादयन्तोऽश्विना विप्रा सुहवा हुवेम ॥ २ ॥**

दधिक्राम्[1] । दधिक्राम्[2] । एव[3] । हविषा[4] । बोधयन्तः[5] । उद्यच्छन्तः[6] । यज्ञम्[7] । उपप्रयन्तः[8] । इलाम्[9] । देवीम् । हविर्बर्हिषि[10] । सादयन्तः[11] । अश्विनौ । मेधाविनौ । स्वाह्वानौ[12] । हुवेम[13] । दाधिकं[14] सूक्तं[15] साहचर्या-दन्येषां स्तुतिः[16] ।

**दधिक्रावाणं बुबुधानो अग्निमुप ब्रुव उषसं सूर्यं गाम् ।**
**ब्रध्नं मंश्चतोर्वरुणस्य बभ्रुं ते विश्वास्मद्दुरिता यावयन्तु ॥ ३ ॥**

दधिक्रावाणम् । बुबुधानः[17] । अग्निम्[18] । उपब्रुवे[19] । अग्निम् । उषसम् । सूर्यम्[20] । गाञ्च[21] । मंश्चतु-रित्यश्वनाम[22], मन्यमानामनभिगच्छतीति[23] ह[24] तु वरुणविशेषणम्, मंश्चतोः[25] । वरुणस्य । महान्तम् । बभ्रुमश्वम्[26] । ते सर्वे । विश्वानि[27] । अस्मत्तः । दुरितानि[28] । पृथक्कुर्वन्तु ।

---

१. दधिका M.
२. दधिकाव M. एतन्नामकमश्वविशेषं देवम् Sy.
३. उ इति पूरणः Sy.
४. हविषं A. स्तोत्रेण Sy.
५. प्रज्ञापयन्तः Sy.
६. प्रेरयन्तः Sy.
७. यज्ञ M.
८. उपक्रममाणाः Sy.
९. हवीरूपाम् Sy.
१०. बर्हिषि A. ११. आस्थापयन्तः Sy.
१२. स्वाह्वानौ is suggested for स्वाहानौ ॥ शोभनाह्वानौ Sy.
१३. आह्वयाम Sy.
१४. दाधिक्रं is suggested for दाधिकं ।
१५. सूर्युक्तं A.
१६. The passage दाधिकं (क्रं) . . . . स्तुतिः should be placed at the beginning of the hymn.
१७. स्तोत्रेण बोधयन् Sy.
१८. अजानस् A. अश्वम् is suggested for अग्निम् ॥ दधिक्रावाणम् अश्वविशेषम् Sy.
१९. अहमुपस्तौमि Sy.
२०. सर्वस्य प्रेरकम् Sy.
२१. गां चमसं M. भूमिं वाग्देवतां वा, एवम्भूतान् देवानहमुपस्तौमि Sy.
२२. ०त्यश्च ना० A. मांश्चत्व इत्यश्वनाम (Cf. Ngh. 1. 14. Satup's ed. p. 6.
२३. ० ०नानभि० is suggested for ०ना मनभि० ॥ मन्यमानान् स्तुवतो जनांश्चेतयते जानातीति, यद्वाभिमन्यमानांश्चालयते नाशयतीति मंश्चतुः । तस्य Sy.
२४. ह is missing in M. इह is suggested for ह ॥
२५. ह्यश्चतोः A.
२६. ०मश्वन् A. पिङ्गलवर्णमश्वम् । तस्यानयनार्थमहमुपब्रुवे Sy.
२७. सर्वाणि Sy.
२८. पापानि Sy.

दधिक्रावा प्रथमो वाज्यर्वाग्रे रथानां भवति प्रजानन् ।
संविदान उषसा सूर्येणादित्येभिर्वसुभिरङ्गिरोभिः ॥ ४ ॥

दधिक्रावा । दधिक्रावा[1] । प्रथमः[2] । बलवान्[3] । गन्ता[4] । रथानाम् । अग्रे[5] । भवति[6] । गन्तव्यं देशं प्रजानन्[7] । उषःप्रभृतिभिः[8] । संविदान[9] ऐकमत्यं गतः ।

आ नो दधिक्राः पथ्यामनक्त्वृतस्य पन्थामन्वेतवा उं ।
शृणोतु नो दैव्यं शर्धो अग्निः शृण्वन्तु विश्वे महिषा अमूराः ॥ ५ ॥

आ नः । आभिमुख्येन । अनक्तु[10] । अस्माकम्[11] । दधिक्राः[12] । पन्थानमुदकेन[13] । यज्ञस्य[14] । पन्थानम् । अविच्छेदेनानुष्ठातुम्[15] । शृणोतु[16] । अस्मान्[17] । दैव्यम्[18] । बलम् । अग्निः । शृण्वन्तु । विश्वे । महान्तः । अमूढा देवा अस्मानिति[19] ।

## VII. 45.

आ देवो यातु सविता सुरत्नोऽन्तरिक्षप्रा वहमानो अश्वैः ।
हस्ते दधानो नर्या पुरूणि निवेशयञ्च प्रसुवञ्च भूम ॥ १ ॥

[20]आ देवः । आयातु[21] । देवः । सविता[22] । शोभनरत्नः[23] । अन्तरिक्षस्य पूरयिता[24] । अश्वैः[25] । उह्यमानः ।

---

१. अश्वरूपो देवः Sy.　२. सर्वेषामश्वानां मुख्यः Sy.　३. शीघ्रगामी Sy.　४. अर्वा गमनशीलः Sy.　५. प्रमुखः Sy.

६. भवन्ति A.　७. रथसंयोजनीयांस्तांस्तान्स्वानधिष्ठाय ज्ञातव्यानि सम्यग्जानन् Sy.

८. प्रभृति refers to उषसा । सूर्येण । आदित्येभिः । वसुभिः and अङ्गिरोभिः ॥ Sy. explains these words in the following manner :— उषोदेवतया । सर्वस्य प्रेरकेण देवेन । आदित्येभिरादित्यैश्च । वसुभिश्चाङ्गिरोभिर्देवैः सह स्तोतव्यैर्ऋषिभिश्च ॥

९. एक० A. संविदानः सम्यग्जानन् । ऐकमत्यं प्राप्त इत्यर्थः Sy.　१०. उदकेनासिञ्चतु Sy.

११. अमस्माकम् A.　१२. अश्वरूपो देवः Sy.

१३. वन्धनमु० M. पथ्यां पदवीम् Sy.

१४. It goes with अनक्तु ।

१५. अनुगन्तुं प्रवृत्तानाम् Sy.　१६. शृणोति A., M.　१७. अस्मदीयं हवम् Sy.

१८. देव्यम् A. देवसम्बन्धि Sy.

१९. VM. ignores उ ॥ उ इति पूरणः Sy.

२०. 'आ देवो यातु' इति चतुर्ऋचं द्वादशं सूक्तं वसिष्ठस्यार्षं सवितृदेवताकं त्रैष्टुभम् । 'आ देवश्चतुष्कं सावित्रम्' इत्यनुक्रान्तम् (KSA. 36. 45. p. 25.)। व्यूळ्हे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सावित्रनिविद्धानम् । सूत्र्यते हि—'चतुर्थेऽहन्या देवो यातु....' (ĀSS. 8. 8.) इत्येषा वपानुवाक्या। सूत्रितञ्च—'आ देवो यातु सविता सुरत्नः स घा नो देवः सविता सहावा' (ĀSS. 3. 7.) इति । अश्वमेधेऽनुसवनं तिस्रः सावित्र्य इष्टयः' तत्र द्वितीयस्यामिष्टौ याज्येयम् । सूत्रितञ्च—'य इमा विश्वा जातान्या देवो यातु' (ĀSS. 10. 6.) इति Sy.　२१. आगच्छतु Sy.

२२. सर्वस्य प्रेरकः Sy.

२३. रक्तः A. शोभनरत्नोपेतः Sy.

२४. स्वकीयेन तेजसान्तरिक्षस्य पूरयिता Sy.

२५. स्वकीयैर्वाहैः Sy.

हस्ते[1] । प्रयच्छन् धारयन्[2] वा । बहूनि । धनानि[3] । रात्रौ निवेशयन्[4] । प्रातः प्रसुवन्[5] । च । भूतजातम्[6] ।[7]

**उदस्य बाहू शिथिरा बृहन्ता हिरण्यया दिवो अन्ताँ अनष्टाम् ।**
**नूनं सो अस्य महिमा पनिष्ट सूरश्चिदस्मा अनु दादपस्याम् ॥ २ ॥**

उदस्य । उद्व्याप्नुवतः[8] । अस्य[9] । बाहू[10] । शिथिलौ[11] प्रेर्यमाणौ । महान्तौ । हिरण्मयौ[12] । दिवः[13] । पर्यन्तानि[14] । नूनम्[15] । सः । अस्य । महिमा । सूयते[16] । सवितुर्यत् । सूर्यः । अपि । अस्मै सवित्रे । अनुददाति[17] । अपस्यां[18] कर्मेच्छमुपबृंहयतीत्यर्थः[19], सविता कर्माणि लौकिकानि चिकीर्षति साहाय्यं सूर्यः करोति ।

**स घा नो देवः सविता सहावा साविषद्वसुपतिर्वसूनि ।**
**विश्रयमाणो अमतिमुरूचीं मर्तभोजनमध रासते नः ॥ ३ ॥**

स[20] घ[21] । सः[22] । खलु[23] । अस्मभ्यम् । देवः । सविता । सहनवान्[24] । आभिमुख्येन । सुवतु[25] । वसुपतिः[26] । वसूनि । विविधं श्रयमाणः[27] । रूपम्[28] । बह्वञ्चनम्[29] । मनुष्यभोजनमन्नम्[30] । इदानीम्[31] । प्रयच्छतु[32] । अस्मभ्यम् ।

---

१. पाणौ Sy.
२. दातुं धारयन् Sy.
३. नर्या नर्याणि मनुष्यहितानि....धनानि Sy.
४. दिवशयन् A.
रात्रिषु स्वे स्थाने स्थापयंश्च Sy.
५. अहःसु प्रेरयन् Sy.
६. भूतानि Sy.
७. VM. explains च once only.
८. उद्याप्नुतः A. उद्व्याप्नुतः is suggested for उद्व्याप्नुवतः ॥ ऊर्ध्वौ सन्तौ व्याप्नुवताम् Sy.
९. सवितुः सम्बन्धिनौ Sy.
१०. हस्तौ Sy.
११. शिथिलौ दानार्थं प्रसारितौ Sy.
१२. हरिस्मयौ A.
हिरण्ययौ सुवर्णमयौ Sy.
१३. अन्तरिक्षस्य Sy.
१४. ॰न्तांग्निना M. ॰न्तान् is suggested for ॰न्तानि ॥
१५. नानिं A. अद्य Sy.
१६. स्तूयते is suggested for सूयते ॥ अस्माभिः स्तूयते Sy.
१७. दद्याति A.
१८. अवस्थां M.
१९. ॰च्छामुप॰ is suggested for ॰च्छमुप॰ ।
२०. सावित्रे पशौ पुरोडाशस्य हविषः 'स घा नः' इति द्वे अनुवाक्ये । सूत्रं पूर्वमुदाहृतम् । आश्वमेधिकीषु सावित्रेष्टिषु तृतीयस्यामिष्टाविमे एव याज्यानुवाक्ये । सूत्रितञ्च—'स घा नो देवः सविता सहावेति द्वे' (ĀSS. 10. 6.) इति Sy.
२१. सं घ A.
२२. सं A.
२३. घेति पूरणः Sy.
२४. तेजोऽन्तराण्यभिभावुकं तेजो यस्य सः Sy.
२५. आ समन्तात् प्रेरयति Sy.
२६. धनानां पालकः Sy.
२७. निषेवमाणः सन् Sy.
२८. रूपं दीप्तिमित्यर्थः Sy.
२९. विस्तीर्णगमनाम् Sy.
३०. मनुष्याणां भोगयोग्यं धनम् Sy.
३१. अधुना Sy.
३२. ददातु Sy.

इमा गिरः सवितारं सुजिह्वं पूर्णगभस्तिमीळते सुपाणिम् ।
चित्रं वयो बृहदस्मे दधातु यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

इमा गिरः । इमाः[1] । गिरः[2] । सवितारम् । शोभनवाचम् । धनपूर्णमाहुः[3] । स्तुवन्ति । शोभनपाणिम् । सञ्चितम्[4] । अन्नम् । बृहत्[5] । अस्मासु[6] । दधातु[7] ।

VII. 46.

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥ १ ॥

इमाः[8] । इमाः[9] । रुद्राय[10] । स्थिरधन्वने[11] । गिरः[12] । क्षिप्रेषवे[13] । देवाय[14] । अन्नवते[15] । शत्रुभिरसोढाय[16] ।

---

१. ईदृग्भूताः Sy.

२. गृणन्ति स्तुवन्तीति गिरः स्तोत्र्यः प्रजाः । यद्वा इमाः स्तुतिरूपाः वाचः Sy.

३. धनपूर्णबाहुम् is suggested for धनपूर्णमाहुः ॥ सम्पूर्णधनहस्तम् Sy.

४. चायनीयम् Sy.

५. महत् Sy.

६. अस्मे अस्मासु यद्वा अस्मे अस्मभ्यम् Sy.

७. दधातु (यद्वा) प्रयच्छतु । हे सवितृप्रमुखाः ! देवाः ! यूयं नोऽस्मान् स्वस्तिभिः कल्याणैः सदा सर्वदा पात पालयत Sy.

८. 'इमा रुद्राय' इति चतुर्ऋचं त्रयोदशं सूक्तं वसिष्ठस्यार्षं रुद्रदेवताकम् । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रमणिका—'इमा रौद्रं त्रिष्टुबन्तम्' (KSA 36. 46. p. 25.) इति । शूलगवादिषु रौद्रयज्ञेष्वनेन सूक्तेनोदीची दिगुपस्थेया । सूत्र्यते हि—'इमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम्' (AGS. 4. 9. 21.) इति Sy.
वसिष्ठस्यार्षम् । उत्तरा च Dur.
वसिष्ठस्य परा च SKN.

९. हे अस्मदीया स्तोतारः ! यूयमिमाः Sy.
हे स्तोतारः ! यूयमुच्यध्वे, इमाः Dur
इमा वक्ष्यमाणाः SKN.

१०. एतन्नामकाय Sy.
रुद्रायेत्याद्याः सर्वास्तादर्थ्यचतुर्थ्यः । रुद्राय रुद्रस्य SKN.

११. दृढधनुष्काय Sy.
किंलक्षणाय ? . . . .दृढधनुषे Dur.
दृढधनुषः SKN.

१२. स्तुतीः Sy., Dur., SKN.

१३. शीघ्रगामिबाणाय Sy.
शीघ्रेषवे Dur.

१४. द्युवाय A.
दानादिगुणयुक्ताय Dur.
देवस्य SKN.

१५. अन्नवते A. स्वधावते Dur. स्वधा, अन्नं तेन तद्वान् स्वधावान् । ततश्चतुर्थी । अन्नवत इत्यर्थः SKN.

१६. केनाप्यनभिभूताय Sy. अनभिभूताय केनचित् Dur.
सहिरभिभवे । अनभिभूतस्यान्यैः SKN.

तत्सहमानाय[1] । विधात्रे[2] । तिग्मधनुष्काय[3] । भरत[4] मनुष्याः[5] । सः[6] शृणोतु[7] । अस्मानिति[8] ।[9]

**स हि क्षयेण क्षम्यस्य जन्मनः साम्राज्येन दिव्यस्य चेतति ।**
**अवन्नवन्तीरुप नो दुरश्चरानमीवो रुद्र जासु नो भव ॥ २ ॥**

स हि क्षयेण । सः । हि[10] । क्षयेण[11] निवासत्वेन । पार्थिवस्य[12] । भूतजातस्य[13] । जायते[14] । साम्राज्येन[15] च । दिवि भवस्य देवगणस्य चेति । अथ प्रत्यक्षः[16]—रक्ष[17] च । अस्माकम् । रक्ष[18] । दुर्[19] । उर[20] । अमिवारहितौ[21] । रुद्र[22] ! प्रजासु । भव । अस्माकम्[23] ।

---

१. शत्रूणामभिभवित्रे Sy. नित्यमभिभवते शत्रून् Dur. अभिभवतोऽन्यान् SKN.

२. विधातुः SKN.

३. तीक्ष्णास्त्राय Sy. तीक्ष्णायुधाय Dur. तीक्ष्णायुधस्य चार्थाय....तीक्ष्णं ह्यायुधं योद्धारमुत्साहयति । आभिमुख्येन युध्यतेऽनेनेत्यायुधम् SKN.

४. हर मनु० A. धारयत Sy. प्रहरत प्रापयत कुरुतेत्यर्थः SKN.

५. मनुष्याय शृणो० M.

६. स is suggested for सः ।

७. इमा गिर उच्यमाना शृणोतु Dur.

८. अस्मदीयाः स्तुतीः Sy. अस्माकमित्येतदाशास्महे Dur. अस्माकं स्वभूताः SKN.

९. रुद्रो रौतीति सतः । रोरूयमाणो द्रवतीति वा । रोदयतेर्वा । 'यदरुदत्तद्रुद्रस्य रुद्रत्वम्' इति काण्वम् । 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति हारिद्रविकम् । तस्यैषा भवति....इमाः । रुद्राय । दृढधन्वने । गिरः । क्षिप्रेषवे । देवाय । अन्नवते । अषाळ्हायान्यैः । सहमानाय । विधात्रे । तिग्मायुधाय । भरत शृणोतु । नः ॥ तिग्मं तेजतेरुत्साहकर्मणः । आयुधमायोधनात् N. 10. 6.; SKN. IV. 8.

१०. खलु Sy.

११. ऐश्वर्येण Sy.

१२. क्षम्यस्य क्षमायां पृथिव्यां भवस्तस्य Sy.

१३. जनस्य Sy.

१४. प्रज्ञायते Sy.

१५. सम्रा A. ऐश्वर्येण प्रज्ञायते Sy.

१६. शेषः प्रत्यक्षकृतः Sy.

१७. रक्ष रस्मा० A. रक्षन् is suggested for रक्ष च ॥ पालयन् Sy.

१८. रक्षन्तीः is suggested for रक्ष ॥ त्वां स्तोत्रैस्तर्पयन्तीर्नोऽस्मदीयाः प्रजाः Sy.

१९. दुरः is suggested for दुर् । दुर्याण्यस्मदीयानि गृहाणि Sy.

२०. ऊर M. उपचर is suggested for उर ॥ उपगच्छ Sy.

२१. अमिवहितौ A. अमीवारहितः is suggested for अमिवारहितौ ॥ अमीवा रोगस्तामकुर्वन् Sy.

२२. हे रुद्र ! देव ! त्वञ्च Sy.

२३. अस्मदीयासु Sy.

या ते॑ दि॒द्युदव॑सृष्टा दि॒वस्परि॑ क्ष्म॒या चर॑ति॒ परि॒ सा वृ॑णक्तु नः ।
स॒हस्रं॑ ते स्वपिवात भेष॒जा मा न॑स्तो॒केषु॒ तन॑येषु रीरिषः ॥ ३ ॥

या[1] ते[2] । यत्[3] । ते । आयुधम् । त्वयावसृष्टम्[4] । अन्तरिक्षात्[5] । पृथिवीम्[6] । लक्षीकृत्य[7] । चरति[8] । तत्[9] । परिवर्जयतु[10] । अस्मान्[11] । सहस्रम्[12] । ते[13] । स्वाप्तवनेति रास्को[14] । भेषजानि[15] । मा । अस्माकम् । पुत्रेषु[16] । पौत्रेषु[17] च । हिंसि[18, 19] ।

१. हे रुद्र ! Sy. हे भगवन् रुद्र ! Dur.
२. वैद्युतात्मनस्तव सम्बन्धिनी Sy. तव स्वभूता SKN.
३. अशनिरूपा हेतिः Sy. आयुधं ज्वरातिसारादिरोगाख्यं येन प्राणिनो हंसि....द्यतेर्वाऽवखण्डनार्थस्य द्युतेर्वा दीप्त्यर्थस्य Dur. वज्रनामैतत् । लुप्तोपमं चात्र द्रष्टव्यम् । दिद्युदिव वज्रमिव....प्राणिघातिनी । कासौ ? पुरस्ताद् भेषजश्रुतेः सामर्थ्यात्, रोगजातिः ....द्यतेः खण्डनार्थस्य, द्युतेर्वोज्ज्वलत्वात् SKN.
४. विमुक्ता Sy. त्वयैवाधः क्षिप्ता SKN.
५. अन्तरिक्षसकाशात् Sy. द्युलोकादधि.... सर्वैव हि देवता द्युस्थानेति गम्यते, दिवस्परीति लिङ्गात् । कर्माधिकारस्थानानि तु विशिष्टानि —इति तिसृणां त्रीणि कर्माधिकारस्थानानि नियतानि भवन्ति । अत एवोक्तमग्न्यधिकारे द्युस्थानो भवतीति Dur. दिव उपरि सती SKN.
६. क्षित्या क्षितौ वा Sy. कथं या चरति दिद्युत् ? क्ष्मया पृथिव्या व्रीह्यादिभावमुपगतया । हिंसन्ती चरतीति वा Dur. सप्तम्यर्थे तृतीया सहार्थे वा । पृथिव्यां पृथिव्या वा सह । अथवा 'क्ष्मायी विधूनने' इत्यस्य । क्ष्मा हिंसा तया सह, क्ष्मापयती घ्नती प्राणिन इत्यर्थः SKN. ७. रक्षी० A. लक्ष्यी० is suggested for लक्षी० ॥ तस्यां व्रीह्यादिभावमुपागतायां पृथिव्यामनुप्रविश्य Dur.
८. वर्तते Sy. अन्नपानसमुद्भूता तत्प्रभवत्वात्सर्वरोगाणाम् Dur.
९. सा विद्युत् Sy. तस्याः किम् ? विद्युतः सा घ्नती Dur.
१०. परित्यजतु Sy. परिवर्तयतु Dur. परिर्वर्जने । परिवर्जयतु साऽस्मान् SKN.
११. अस्मात् A. प्राणिनोऽस्मान् Dur.
१२. बहूनि Sy. किमन्यदस्तु त्वत्तोऽस्माकम् ? सहस्रम् Dur. सहस्रसङ्ख्याकानि SKN.
१३. तव स्वभूतानि SKN.
१४. रारको M. स्वाप्तवचनेति यास्कः is suggested for स्वाप्तवनेति रास्को ॥ कस्यचिदप्यनतिक्रमणीयाज्ञ Dur. हे स्वाप्तव चन ! SKN. १५. यान्यौषधानि सन्ति तान्यस्मभ्यं प्रयच्छेति शेषः Sy. यैर्बहुभिर्बहुप्रकारं भेषजं करोषि भक्तानां तान्यस्मान्प्रति सन्तु Dur. औषधानि तान्यस्मभ्यं देहीति शेषः SKN.
१६. तोकमिति पुत्रः । स हि नित्यं पित्रा विनयता तुद्यते, इदं कुर्विदं मा कार्षीरिति Dur. तुद्यते हि तत् तनयमात्मन एव विकाररूपम् SKN.
१७. पौत्रम् । तद्धचतितरां पितुः सकाशात् ततं भवति । सत्यप्यपत्यनामत्वाविशेषे, इहाजामितैव विशेषः Dur. अपौनरुक्त्याय विषयभेदप्रदर्शनं पुत्रेषु पौत्रेषु चेति SKN.
१८. हिंसीः is suggested for हिंसि ॥ हिंसां मा कृथाः Sy. हिंसां नो मा प्रयुङ्क्ष्वेत्येतदाशास्महे Dur.
१९. आयुधमायोधनात् । तस्यैषाऽपरा भवति.... या ते दिद्युदवसृष्टा । दिवस्परि दिवोऽधि । दिद्युद् द्युतेर्वा (द्योततेर्वा) । क्ष्मया चरति । क्ष्मा पृथिवी । तस्यां चरति । तया चरति । विक्ष्मापयन्ती चरतीति वा । परिवृणक्तु नः सा । सहस्रं ते स्वाप्तवचन । भैषज्यानि । मा नस्त्वं पुत्रेषु (च) पौत्रेषु च रीरिषः । तोकं तुद्यतेः । तनयं तनोतेः N. 10. 7; SKN. IV. 9.

मा नो॑ वधी रुद्र॒ मा परा॑ दा॒ मा ते॑ भूम॒ प्रसि॑तौ हीळि॒तस्य॑ ।
आ नो॑ भज ब॒र्हिषि॑ जीवशं॒से यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ४ ॥

मा नः । मा । अस्मान्[1] । वधीः[2] । रुद्र ! मा च शत्रुभ्यः । परा दाः[3] । मा । ते । भ्रम[4] । बन्धने[5] । क्रुद्धस्य, प्रसितिः प्रसयनाक्[6] तन्तिर्वा जालं वेत्युक्तम्[7] । आहजाप्रापय[8] । अस्मिन्[9] । यज्ञे । जीवानां[10] शंसनीये ।

## VII. 47.

आपो॒ यं वः॑ प्रथ॒मं दे॑व॒यन्त॑ इन्द्र॒पान॑मू॒र्मिमकृ॑ण्वते॒ळः ।
तं वो॑ व॒यं शुचि॑मरि॒प्रम॒द्य घृ॑त॒प्रुषं॒ मधु॑मन्तं वनेम ॥ १ ॥

आपः[11] । हे आपः[12] ! यम् । युष्माकम्[13] । प्रथमम्[14] । यजमानाः[15] । इन्द्रस्य पानम्[16] । ऊर्मिम्[17] । अकृण्वत[18] स्तोतार[19] इति वसतीवर्यभिप्रायम् । तम्[20] । वः[21] । वयम्[22] । शुचिम्[23] । अपापम्[24] । अद्य[25] । घृतस्य स्रष्टारम्[26] । मधुमन्तम्[27] । भजेम[28] ।

---

१. अस्मात् A.
२. हिंसीः Sy.
३. A. reads दारा for परा दाः ॥ त्याक्षीः Sy.
४. भूम is suggested for भ्रम ।
५. प्रकर्षेण बन्धने Sy.
६. कति वा M. ०नात्तन्तिर्वा or ०नात्तन्तुर्वा A. is suggested for ०नाक्तन्तिर्वा A. प्रसितिः प्रसयनात् । तन्तुर्वा । जालं वा N. 6. 12.
७. The passage प्रसितिः....वेत्युक्तम् should immediately follow बन्धने ।
८. आभजा० is suggested for आह जा०॥ भागिनः कुरु । हे रुद्रप्रमुखाः ! देवाः ! यूयं नोऽस्मान् कल्याणैः सर्वदा पालयत Sy.
९. अस्मान् is suggested for अस्मिन् ।
१०. किञ्च जीवैराशंसनीये Sy.
११. 'आपो यं वः' इति चतुर्ऋचं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमब्देवताकम् । 'आपो यमापम्' इत्यनुक्रान्तं च (KAS. 36. 47. p. 25.) । गतो विनियोगः
१२. आपो ह A. हे अब्देवताः ! Sy.
१३. युष्माकं कार्यभूतम् Sy.
१४. पुरा Sy.
१५. देवानिच्छन्तोऽध्वर्यवः Sy.
१६. इन्द्रेण पातव्यम् Sy.
१७. ऊर्मिकं A. सोमाख्यं यं रसम् Sy.
१८. कृण्वन्त A. अभिषवणवचनादिभिः समस्कुर्वत Sy.
१९. स्तो is written twice in A.
२०. ०ती पर्य० A. इळाया भूम्याः सम्भूतम् Sy.
२१. तमूर्मिम् Sy.
२२. युष्मदीयम् Sy.
२३. शुद्धम् Sy.
२४. अवापम् A. पापरहितम् Sy.
२५. इदानीम् Sy.
२६. वृष्टिलक्षणमुदकं सिञ्चन्तम् Sy.
२७. मधुमन्तं A. मधुररसोपेतम् Sy.
२८. सम्भजेमहि Sy.

तमूर्मिमापो मधुमत्तमं वोऽपां नपादवत्वाशुहेमा ।
यस्मिन्निन्द्रो वसुभिर्मादयाते तमश्याम देवयन्तो वो अद्य ॥ २ ॥

तमूर्मिम्[1] । तम्[2] । ऊर्मिम्[2] । हे आपः[3] ! मधुमत्तमम्[4] । युष्माकम्[5] । अपान्नपाद् देवः[6] । रक्षतु[7] । आशुगमनः[8] । यस्मिन्[9] । इन्द्रः । वसुभिर्देवैः सह[10] । माद्यति[11] । तम् । युष्माकमूर्मिम्[12] । अद्य वयम् । अश्याम[13] । देवकामाः ।

शतपवित्राः स्वधया मदन्तीर्देवीर्देवानामपि यन्ति पाथः ।
ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं घृतवज्जुहोत ॥ ३ ॥

[14] शतपवित्राः । अनेकभवनसाधनाः[15] । स्वधया[16] मनुष्यान् । तर्पयन्त्यः[17] । देव्यः[18] । देवानाम्[19] । अभिगच्छन्ति[20] । स्थानम्[21] । ताः[22] । इन्द्रस्य[23] । न[24] । हिंसन्ति[25] । कर्माणि[26] । ताभ्यः सिन्धुभ्यः[27][28] । हव्यम्[29] । घृतवत्[30] । जुहुत[31][32] ।

---

१. The *pratīka* is supplied by the Editor.
२. तमूर्मिं प्रसिद्धं सोमाख्यं रसम् Sy.
३. हे एतत्संज्ञका देवाः ! Sy.
४. रसवत्तमम् Sy. ५. युष्मदीयम् Sy.
६. एतदाख्यो देवः Sy. ७. पालयतु Sy.
८. शीघ्रगतिः Sy. ९. ऊर्मौ Sy.
१०. वासकैर्देवैः सह Sy. ११. माद्येत् Sy.
१२. अद्य is suggested for अध्य ॥ अस्मिन् दिने Sy. १३. प्राप्नुयाम Sy.
१४. वसिष्ठस्यार्षम् Dur., SKN.
१५. ०पवन० is suggested for ०भवन० ॥ शतं बहूनि पवित्राणि पावनानि रूपाणि यासां ताः Sy. बहुपावयित्र्यो या देव्यः.... एवमत्रापः पवित्रशब्देनोच्यन्ते, अब्दैवतत्वान्मन्त्रस्य बहून्यवयवानि पवित्राण्युदकानि यासु ताः शतपवित्राः, बह्व्य इत्यर्थः।..शतपवित्रा इत्यस्यार्थस्य कथनं बहूदका इति। SKN.
१६. स्वकार्यभूतेनान्नेन Sy. अन्नेन सहिता भूत्वा Dur. अन्नेन सह SKN. १७. जनान् मादयन्त्यः Sy. 'मद तृप्तौ' 'वा च्छन्दसि (Pa. 6. 1. 105.)इति पूर्वसवर्णः। सर्वप्राणिनस्तर्पयन्त्य इत्यर्थः SKN. १८. द्योतमाना आपः Sy. दानादिगुणयुक्ताः Dur. देव्य आपः SKN. १९. इन्द्रादीनाम् Sy. दानादिगुणयुक्तानामेव Dur.
२०. प्रविशन्ति Sy. अपि गच्छन्ति Dur. गच्छन्ति SKN. २१. पानं सोमाख्यम् Dur. अन्नं सोमाख्यम् SKN. २२. तादृश्य आपः Sy. ता एवंलक्षणा आपः Dur. ता इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यास्ताः SKN.
२३. इन्द्रस्य प्रीणनानि Sy. इन्द्रस्य स्वभूतानि SKN. २४. नि A. २५. उत्पादयन्तीत्यर्थः Sy. येनाभ्रवधानन्तरमविलम्बमाना वर्षभावेन प्रक्षरन्तीत्यभिप्रायः Dur. मेघहननादनन्तरमेव क्षरन्तीत्यर्थः। अक्षरन्तीषु हि तासु तद्धिंसतः कर्मणो निष्फलत्वात् Sy.
२६. यज्ञादीनि Sy. कर्माणि मेघवधादन्यानि SKN
२७. या एता एवङ्गुणयुक्ता आपस्ताभ्योऽद्भ्यः Dur. अतस्ताभ्यः SKN.
२८. अद्भ्यः Sy. स्यन्दमानाभ्यः Dur.
२९. पुरोडाशादिकं हविः Sy. हविः Dur., SKN.
३०. हुत० A. उपस्तरणाभिघारणलक्षणाज्ययुक्तम् Sy. घृतमिश्रम् Dur. घृतसंयुक्तम् SKN.
३१. जुहोत M. वज्रेण मेघांस्ताडयन् प्रयच्छति Sy. जुहोत हे ऋत्विजः ! अर्हन्ति ता हविरित्यभिप्रायः Dur.
३२. आपः पवित्रमुच्यन्ते 'शतपवित्राः स्वधया मदन्तीः' बहूदका N. 5. 6.; SKN. II. 320

याः सूर्यो रश्मिभिराततान याभ्य इन्द्रो अरदद्गातुमूर्मिम् ।
ते सिन्धवो वरिवो धातना नो यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

यः सूर्यः । याः[1] । सूर्यः । रश्मिभिः[2] । अन्तरिक्षे विस्तारयति[3] । याभ्यश्च[4] । इन्द्रः । विलिखत्[5] । गमनशीलम्[6] । ऊर्मिम्[7], गमनकामार्गं[8] चकारेत्यर्थः 'इन्द्रो अस्माकमरदद्वज्रबाहुः'[9] इति मन्त्रः । ते यूयम् । हे[10] सिन्धवः[11] ! धनम्[12] । अस्मभ्यम् । धत्त[13], सिन्धुसमानाधिकरण्यात्तच्छब्दस्य[14] लिङ्गभेदः[15] ।

VII. 48.

ऋभुक्षणो वाजा मादयध्वमस्मे नरो मघवानः सुतस्य ।
आ वोऽर्वाचः क्रतवो न यातां विभ्वो रथं नर्यं वर्तयन्तु ॥ १ ॥

ऋभुक्षणः[16] । हे ऋभवः[17] ! वाजा इति ज्येष्ठकनिष्ठाभ्यां व्यपदेशः । मादयध्वम्[18] । अस्मासु[19] । हे नरः[20] ! मघवन्तः[21] । सोमेन[22] । गच्छताम्[23] । युष्माकम्[24] । अमितो मुखा अश्वाः[25] । रथम् । आवर्तयन्तु[26] । नृहितम् । यथा[27] मनुष्याणाम् । कर्माणि[28] भवतां रथमावर्तयति[29] । हे महान्तः[30] !

---

१. अपः Sy. २. स्वकीयैः किरणैः Sy.
३. विस्तारयति । सूर्यो हि रश्मिभिरुदकसारमादाय वर्षतीत्यर्थः Sy. ४. अद्भ्यः Sy.
५. व्यलिखत् is suggested for विलिखत् ।
६. मेघेभ्यो निर्गमनसाधनं मार्गम् Sy.
७. ऊर्मिम्—अर्तेरिदं रूपम् । गमनयोग्यम् Sy.
८. गमनिका० M. गमनकामो मार्गम् is suggested for गमनकामार्गम् ॥
९. ०स्मानरद० A.
१०. M. reads हे before यूयम् ।
११. आपः ! Sy. १२. स्म is missing in A.
१३. धत्तं A. प्रयच्छत Sy. १४. ०मान्याधि० A.
१५. The passage : सिन्धु....लिङ्गभेदः refers to ते यूयम्, therefore it should immediately follow ते यूयम् ॥... ते इति सिन्धुशब्देन समानाधिकरणत्वात् पुंल्लिङ्गत्वम् । हे अब्देवताः ! यूयं सर्वदा नोऽस्मान् कल्याणैः पालयत Sy.
१६. 'ऋभुक्षणः' इति चतुर्ऋचं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमृभुदेवताकम् । अन्त्याया विकल्पेन विश्वेदेवा देवता । तथा चानुक्रान्तम्—'ऋभुक्षण आर्भवमन्त्या वैश्वदेवी वा (KSA. 36. 46. p. 25.) इति । दशमेऽहनि वैश्वदेवशस्त्र आर्भवनिविद्धानम् । सूत्र्यते हि—'ऋभुक्षण इत्यार्भवम्' (Ā SS. 8. 12.) इति Sy.
१७. ऋभुक्षवो A. ऋभुक्षेत्यृभूणां ज्येष्ठाख्या वाज इति तु कनिष्ठस्य । अत्रर्भुक्षणो वाजा इति बहुवचनेनर्भवस्त्रयो गृह्यन्ते....हे ऋभवः । यूयम् Sy. १८. तृप्ता भवत Sy.
१९ अस्मासु स्थितेन Sy. २०. नेतारः Sy.
२१. धवन्तः A. धनवन्तः Sy.
२२. अभिषुतेन सोमेन Sy.
२३. गच्छन्ताम् A. २४. युष्मदीयाः Sy.
२५. अभितो० is suggested for अमितो० ॥ अस्मदभिमुखाः Sy. २६. आगमयन्तु Sy.
२७. नेति सम्प्रत्यर्थे । इदानीम् Sy.
२८. कर्मणां कर्तारः Sy.
२९. ०यन्ति is suggested for यति ।
३०. विभवः समर्था अश्वाः Sy.

**ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि ।**
**वाजो अस्माँ अवतु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम् ॥ २ ॥**

[१] ऋभुर्ऋभुभिः[२]। ऋभुभिः[३]। युष्माभिः[४]। ययमप्तृभवः[५]। शत्रूनभिभवेम[६], तृतीयायामपि 'बहुवचनस्य वस्नसौ'[७] इति दृष्टम्[८] ऋभुरिति जसः स्वादेशः[९]। तथा वि भुहिर्भवद्भिः[१०]। वयं च विद्यो[११] महान्तः। बलेन[१२]। बलान्यभिभवेम[१३]। वाजो[१४] वाजनीयान्[१५] युष्माकम्। अस्मान्। सङ्ग्रामे। रक्षतु[१६]। तेषां सहायभूतेन[१७]। इन्द्रेण तरेम[१८]। शत्रुम्[१९]।

---

१. वसिष्ठस्येदमार्षम् Dur. वसिष्ठस्य SKN.

२. ऋभुभिः is missing in M.

३. हे शत्रवः ....ऋभव उरुभासो वयम् Dur. ऋभुरिति मेधाविनाम । व्यत्ययेन चात्रैकवचनं बहुवचनस्य स्थाने । ऋभवो मेधाविनो वयम् SKN.

४. उरुभाभिः....देवैः सहिताः Dur. ऋभुविभ्वा वाज इत्येतै र्देवैः सह SKN.

५. यमभिभवः M. वयमृभवः is suggested for ययमप्तृभवः ॥ उरु भवन्तीत्यृभवः । प्रायेणर्भवोऽपि इन्द्रेण सह स्तूयन्ते Sy.

६. ०भवेत् A. ७. Pa 8. 1. 21.

८. The passage : तृतीयाया० ...दृष्टम् explains the form of वः (युष्माभिः). It should therefore follow immediately युष्माभिः ।

९. ०भुमिरिति M. The passage ऋभु ... स्वादेश : refers to ऋभुः of the text. It should follow immediately ऋभवः and precede शत्रून० ।

१०. ऋभुभिर्भ० M. विभुभिर्भ० is suggested for वि भुहिर्भ० ॥ प्रभूतबलैर्युष्माभिः सहिताः Dur. निग्रहानुग्रहसमर्थैर्विभुप्रभृतिभिर्वा तैरेव देवैः सह SKN.

११. विभ्वो is suggested for विद्यो ॥ विभवश्च Sy. हे विभ्वः ! Dur. न च केवला मेधाविनः । किं तर्हि ? विभुर्बलवत्त्वान्निग्रहे चानुग्रहे च समर्थो विभुरुच्यते । तेनायमर्थः—विभवो वयम् SKN.

१२. युष्मदीयेन Sy. स्वेन बलेन Dur. बलेन सेनाख्येन SKN.

१३. शत्रूणां बलानि Sy. एतेषामभिभवितॄणां शवांसि बलान्यभिभवेम Dur. युष्माकं स्वभूतानि बलानि सेनाख्यानि, अभि स्यामेति सम्बन्धः SKN.

१४. वाजो is missing in A. एतत्संज्ञक ऋभुः Sy. अश्वाः Dur. वाजश्च देवः SKN.

१५ वर्जनीयान् A. वाजो वा कनीयान् is suggested for वाजो वाजनीयान् ।

१६. पालयतु Sy. रक्षन्तु Dur.

१७. संयुक्ताः सन्तो वयम् Dur. युज्यत इति युक् सहायः । इन्द्रेण सहायेन SKN.

१८. हनाम Sy. हन्म एतम् ।....अभिभवाधिकारात् तरुष्यतिर्हन्त्यर्थे उपपद्यते Dur. हन्याम SKN.

१९. शत्रुमित्यर्थः Dur. तरुष्यतिरप्येवङ्कर्मा (हन्तिकर्मा) इन्द्रेण युजा तरुषेम वृत्रम् इत्यपि निगमो भवति N. 5. 2. SKN. II. 291.

ते चि॒द्धि पू॒र्वीर॒भि सन्ति॑ शा॒सा विश्वाँ॑ अ॒र्य उ॑प॒रता॑ति वन्वन् ।
इन्द्रो॒ विभ्वाँ॑ ऋभु॒क्षा वाजो॑ अ॒र्यः शत्रो॑र्मिथ॒त्या कृ॑णव॒न्वि नृ॒म्णम् ॥ ३ ॥

ते चित् । ते[1] । हि[2] । खलु[3] । बह्वीः सेनाः । अभिभवन्ति । शासेनासीनापि[4] च । सर्वानेव[5] । अरीन्[6] । उपरताति[7] । घ्नन्ती[8], स्वार्थिकस्तातिल् प्रत्ययः[9], मूलत एव[10] घ्नन्तीति । इन्द्रः । विभ्वा[11] मध्यमाः । ऋभुक्षा[12] च ज्येष्ठः । कनीयान् वाजश्च । ईश्वरः[13] । शत्रोः[14] । धनम्[14] । विकृण्वन्तु[15] । मिथत्येति[16] निवातो[17] मिथापर्यायिः सङ्गता इति ।

नू दे॑वासो॒ वरि॑वः कर्तना नो भू॒त नो॒ विश्वेऽव॑से स॒जोषाः॑ ।
सम॒स्मे इ॒षं वस॑वो ददीरन्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ४ ॥

नू देवासः[18] । क्षिप्रम्[19] । भे[20] देवाः । धनम् । कुरुत[21] । अस्मभ्यम् । भवत[22] च । सर्वे । अस्माकम् रक्षणाय । सङ्गताः[23] । सन्नदीरन्[24] सम्प्रयच्छन्तु[25] । अस्मभ्यम् । अन्नम् । वसवो[26] देवाः ।

---

१. तादृशा इन्द्र ऋभवश्च Sy.
२. चिद्धीतीमौ पूरणौ Sy.
३. अस्मच्छत्रुसेनाः Sy
४. शोभनासीनापि M. शासनेनापि is suggested for शासेनासीनापि ॥ स्वकीययाज्ञया । यद्वा विशस्यते हिंस्यतेऽनेनेति शासशब्द आयुधवाची । तेन Sy.
५. समस्तान् Sy.
६. अर्यः शत्रून् Sy.
७. उप ताति । सप्तम्या लुक् । उपरैरुपलैः -पाषाणसदृशैरायुधैस्तायते विस्तीर्यत इत्युपरताति युद्धम् । तस्मिन् Sy.
८. घ्नन्ति is suggested for घ्नन्ती ॥ हिंसन्ति Sy.
९. स्वार्थीकस्यातिल प्र० A.
१०. VM. seems to explain the form of उपरताति by स्वार्थिस्तातिल् प्रत्ययः and मूलत एव seems to be the explanation of उपरताति। Therefore the passage स्वार्थिक... एव should immediately follow उपरताति ॥
११. बिभ्वा (व्हा M.) मध्यमः is suggested for मध्यमा।
१२ ऋभुक्षाश्च is suggested for ऋभुक्षा च
१३. शत्रूणामभिगन्तारः सन्तः Sy.
१४. शत्रोः सम्बन्धि नृम्णं बलम् Sy.
१५ विकण्व A. विकुर्वन्तु विनाशयन्त्वित्यर्थः Sy.
१६. मिथत्या मेथतेरिदं रूपम्, मिथतिर्हिंसा तया Sy.
१७. निपातो मिथः प० is suggested for निवातो मिथाप०
१८. भू देवासा A.
१९. न्वद्य Sy.
२०. भे is missing in M. हे is suggested for भे ॥ द्योतमाना ऋभवः ! Sy.
२१. कर्तन कुरुत प्रयच्छत Sy.
२२. भवत्र A.
२३. सह प्रीयमाणाः Sy.
२४. सन्दवीरन् is suggested for सन्नधीरन् ।
२५. ०च्छतु A.
सम्प्रयच्छेयुः Sy.
२६. वसवे A. अपि च वसवः प्रशस्या ऋभवः । हे ऋभवः ! यूयमस्मान् सर्वदा कल्याणे रक्षत Sy.

VII. 49.

**समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः ।**
**इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥ १ ॥**

समुद्रज्येष्ठाः[1] । समुद्रप्रथमाः[2] । अन्तरिक्षस्य[3] । मध्यात्[4] । शोदयन्त्यः[5] । गच्छन्ति । अनिविशमानाः[6] । इन्द्रः । या आपः[7] । वज्री[8] । वर्षिता[9] । व्यलिखद् वज्रेण भित्त्वा निरगमयत् । ताः । आपः । देवीः[10] । इह[11] । माम् । रक्षन्तु[12] ।

**या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः ।**
**समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु ॥ २ ॥**

या आपः । याः । आपः । अन्तरिक्ष्याः[13] । याश्च ततः[14] । स्रवन्ति[15] । खनित्रिमाः[16] कुप्याः[17] । उत । वा । यास्तु[18] । अयज्ञाज्जाता निम्नेषु देशेषु[18] । समुद्रो गन्तव्यो यासां समुद्रार्था नादेर्यो[19] [20] । ज्वलन्त्यः[21] । शोधयित्र्यः[22] ।

१. 'समुद्रज्येष्ठाः' इति चतुर्ऋचं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमब्देवताकम् । तथा चानुक्रान्तम्—'समुद्रज्येष्ठा आपम्' (KSA. 36.. 49. p. 25.) इति । गतो विनियोगः Sy

२. समुद्रोऽर्णवो ज्येष्ठः प्रशस्यतमो यासामपां ताः Sy.

३. सलिलस्य—अन्तरिक्षनामैतत् । अन्तरिक्षस्य Sy. सलिलस्य is explained both by Sy. and VM. as अन्तरिक्षस्य but according to the Ngh. 1. 3. सलिल is not a synonym of अन्तरिक्ष ।

४. माध्यमिकात् स्थानात् Sy.

५. शोदयन्त्यो A. शोधयन्त्यः is suggested for शोदयन्त्यः ॥ विश्वं शोधयन्तः Sy.

६. अविश० A. अः विश० M. सर्वदा गच्छन्त्यः Sy.

७. अपः is suggested for आपः ॥ या निरुद्धा अपः Sy.

८. वज्रभृत् Sy.

९. कामानां वर्षिता Sy.

१०. देव्यः Sy.

११. अस्मिन् प्रदेशे स्थितम् Sy.

१२. अवन्तु रक्षन्तु अभिगच्छन्तु वा Sy.

१३. आन्त M.
अन्तरिक्षभवाः सन्ति Sy.

१४. VM. seems to explain उत वा as याश्च ततः ।

१५. गच्छन्ति Sy.

१६. ०त्रमा: A. खननेन निवृत्ताः ? (निर्वृत्ताः) Sy.

१७. आप्याः A. कूप्याः is suggested for कुप्याः ।

१८. याः स्वयज्ञं जज्ञाता M. याः । स्वयं जाताः is suggested for यास्तु । अयज्ञाज्जाताः ॥ स्वयमेव प्रादुर्भवन्त्यः Sy.

१९. यासा स्स० A. यासां तास्समु० is suggested for यासां समु० ।

२०. नादेयाः is suggested for नादेर्यो ।

२१. शुचयो दीप्तियुक्ताः Sy.

२२. शोधिधयित्र्यः A. शोधयित्र्यश्च भवन्ति । ता आपो मामवन्त्विति Sy.

उत्तरा निगदसिद्धा।—

यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्।
मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु ॥ ३ ॥

[यासां राजा][1]

यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति।
वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु ॥ ४ ॥

यासु राजा[2]। यासु[3]। राजा[4]। वरुणः। यासु च[5]। सोमः। विश्व एव च[6]। देवाः स्थिताः। यामु[7]।
ऊर्जम्[8]। प्रतिमाद्यन्ति[9]। वैश्वानरः। यासु। अग्निः। प्रविष्टः।

## VII. 50.

आ मां मित्रावरुणेह रक्षतं कुलाययद्विश्वयन्मा न आ गन्।
अजकावं दुर्दृशीकं तिरो दधे मा मां पद्येन रपसा विदत्त्सरुः ॥ १ ॥

आ माम्[10]। आभिमुख्येन। माम्। इह[11]। मित्रावरुणं[12]। रक्षितम्[13]। कुलाय कुर्वत्[14]। विविधं वर्धमानं[15]

---

१. The *pratīka* is supplied by the Editor. The stanza is explained in the following manner :— वरुणो यासामपां राजा स्वामी मध्ये मध्यमलोके याति गच्छति। किङ्कुर्वन्? जनानां प्रजानां सत्यानृते सत्यं चानृतं चावपश्यन्, जानन्नित्यर्थः। या आपो मधुश्चुतो रसं क्षरन्त्यः शुचयो दीप्तियुक्ताः पावकाः शोधयित्र्यः। ता आपो देव्यो मां रक्षन्त्विति Sy. यासां मध्ये वरुणो राजा वरणोयो वाऽऽदित्यो याति सत्यानृते जनानामवपश्यन्, अवहितः पश्यन्, मधुश्चुतो मधुरसस्य क्षारयित्र्यः शुचय इत्यादि BB. This stanza=TS. 5. 6. 1. 1.

२. The *Pratīka* is supplied by the Editor.

३. यासु अप्सु वर्तते Sy. ४. अपां राजा Sy.

५. विश्वैः व च A. सर्वे Sy.

६. यासु is suggested for यामु ॥ यासु अप्सु स्थिताः Sy.

७. ऊब्जं A. अन्नम् Sy. ८. मदन्ति Sy.

९. ता आपो देव्य इह स्थितं मामवन्तु Sy.

१०. 'आ मां मित्रावरुणा' इति चतुर्ऋचं सप्तदशं सूक्तं वसिष्ठस्यार्षम्। चतुर्थ्यतिजगती व्यूहेन शक्वरी वादितस्तिस्रो जगत्यः। प्रथमा मैत्रावरुणी द्वितीयाग्नेयी तृतीया वैश्वदेवी चतुर्थी गङ्गादिनदीदेवताका। तथा चानुक्रमणिका— 'आ मां मैत्रावरुण्याग्नेयो वैश्वदेवीनदीस्तुतिर्जागतमन्त्यातिजगती शक्वरी वा' (KSA. 36. 50. p. 25.) इति। अस्य सूक्तस्य प्रत्यृचं विषाविहरणे विनियोगो लिङ्गादवगन्तव्यः Sy. ११. अस्मिंल्लोके Sy.

१२. °रुणौ is suggested for °रुणे ॥ हे मित्रावरुणौ! युवाम् Sy.

१३. रक्षतम् is suggested for रक्षितम्° ॥ पालयतम् Sy. १४. य कुर्वन्त् M. कुलायं कुर्वत् is suggested for कुलाय कुर्वत् ॥ कुलायं स्थानं तत्कुर्वत् Sy.

१५. विवं वर्ध° M. विशेषेण वर्धमानं विषम् Sy.

विविधं वा भाषमाणं भूतम् । मा[1] । अस्मान् । आगच्छत्विति[2] श्वाभिप्रायं[3] श्वाभिभूम्यां कुलानां[4] करोति । अजकावमजशब्दयुक्तम्[5] । दर्शयन्[6] । तिरः[7] । भवतु[8] । मा । माम् । पदभवने[9] । शब्देन[10] । जानातु । छद्म-गतिश्चेति[11] ।

**यद्विजामन्परुषि वन्दनं भुवदष्ठीवन्तौ परि कुल्फौ च देहत् ।**
**अग्निष्टच्छोचन्नप बाधतामितो मा मां पद्येन रपसा विदत्त्सरुः ॥ २ ॥**

यद्विजामन्[12] । यत् । विविधजन्मनि[13] । सन्धौ[14] । भवति[15] । वन्दनं नामकं[16] विषमविषम्[17] । अष्ठीवन्तौ[18] । गुल्फौ[19] । च । परितः । उपचितं करोति[20] । अग्निः[21] । तद्विष[22] । ज्वलन्[23] । अपबाधताम्[24] । इतः[25] । उत्तरा निगदसिद्धा[26]—

**यच्छल्मलौ भवति यन्नदीषु यदोषधीभ्यः परि जायते विषम् ।**
**विश्वे देवा निरितस्तत्सुवन्तु मा मां पद्येन रपसा विदत्त्सरुः ॥ ३ ॥**
[यच्छल्मलौ]

१. मा is missing in A.
२. अग० A.
३. श्वाऽपि भूम्यां or श्वाधि भूम्याम् is suggested for श्वाभिभूम्याम् ।
४. कुलायम् is suggested for कुलानाम् ।
५. अजका नाम रोगविशेषस्तद्वत् Sy.
६. दुर्दर्शनं is suggested for दर्शयन् ॥ दुर्दर्शनं विषम् Sy.
७. तिरो A.
८. धत्ताम् । नश्यत्वित्यर्थः Sy.
९. ०भवेन is suggested for ०भवने ॥
१०. रपिः शब्दकर्मा । शब्देन Sy.
११. छद्मगामी । जिह्मगः । सर्प इत्यर्थः Sy.
१२. ०जाम A.
१३. ०र्ध मन्मनि A.
१४. परुषि वृक्षादीनां पर्वणि Sy.
१५. उद्भवेत् Sy.
१६. वन्दकं A. वन्दननामकम् is suggested for वन्दनं नामकम् ॥ एतत्संज्ञकं यद्विषम् Sy.
१७. एषम A.
१८. यच्च विषं जानुनी Sy.
१९. गुल्पौ A.
२०. 'दिह उपचये' । उपचितं कुर्यात् Sy.
२१. देवः Sy.
२२. तद्विषम् is suggested for तद्विष ॥
२३. दीप्यमानः सन् Sy.
२४. ०तान् A. अपहन्तु Sy.
२५. इम A. अस्माज्जनात् । शिष्टं व्याख्यातम् Sy.
२६. The *pratīka* is supplied by the Editor. Sy. explains this stanza in the following manner :—यद्विषं शल्मलावेतत्संज्ञके वृक्षे भवति यद्विषं नदीषु तत्रस्थास्वप्सु प्रादुर्भवति । परीति पञ्चम्यर्थानुवादी । ओषधीभ्यः सकाशाद्यद्विषं जायत उत्पद्यते । विश्वे सर्वे देवास्तद्विषमितोऽस्माज्जनाद्देशाद्वा निःसुवन्तु । निःशेषेण प्रेरयन्तु । मा मामिति शिष्टं व्याख्यातम् ।

या॑: प्र॒वतो॑ नि॒वत॑ उ॒द्वत॑ उद॒न्वती॑रनुद॒काश्च॒ या॑: ।
ता अ॒स्मभ्यं॒ पय॑सा॒ पिन्व॑मानाः शि॒वा दे॒वीर॑शिप॒दा भ॑वन्तु॒
सर्वा॑ न॒द्यो॑ अशिमि॒दा भ॑वन्तु ॥ ४ ॥

या: प्रवत:[1] । या नद्य: । विस्तारवत्यो[2] विस्तृतेन देशेन गच्छन्त्य: । याश्च निवत:[3] । याश्चोद्वत्या:[4] । याश्चोदन्वत्य:[5] । अनुदका:[6] । च । या:[7] । ता:[8] । अस्मभ्यम् । वयसा[9] । वर्धमाना:[10] । शिवा:[11] । देव्य:[12] । अन्नस्य स्थानभूता अशिवदास्ता:[13] । सर्वा:[14] । नद्य: । अन्नस्य वर्धयित्र्योऽशिमिदा:[15] ।[16]

VII. 51.

आ॒दि॒त्याना॒मव॑सा॒ नूत॑नेन सक्षी॒महि॒ शर्म॑णा॒ शंत॑मेन ।
अ॒ना॒गा॒स्त्वे अ॑दिति॒त्वे तु॒रास॑ इ॒मं य॒ज्ञं द॑धतु॒ श्रोष॑माणाः ॥ १ ॥

आदित्यानाम्[17] । आदित्यानाम्[18] । रक्षणेन[19] । नवतितरेण[20] । सङ्गता भवेम[21] । गृहे[22] च ।[23]

---

१. या प्रवत A.
२. It seems to be the explanation of प्रवत: ॥ प्रवणदेशे गच्छन्त्य: Sy.
३. निवसतो M. निम्नदेशे गच्छन्त्य: Sy.
४. उद्वत्वो A. उन्नतदेशे गच्छन्त्य: Sy.
५. उदकयुक्ता: Sy.
६. उदकरहिता: Sy.
७. या: is omitted by M. नद्यो यान्ति Sy.
८. तादृश्यो नद्य: Sy.
९. पयसा is suggested for वयसा ॥ उदकेन Sy.
१०. विश्वमाप्याययन्त्य: Sy.
११. कल्याण्यो भवन्तु Sy. १२. द्योतमाना: Sy.
१३. अशिपदा० is suggested for अशिवदा० ॥ शिपदो नाम रोगविशेष: । तदकुर्वत्य: सत्य: Sy.
१४. अपि च सर्वास्ता: Sy.
१५. ०शिपादा: M. अहिंसाप्रदा भवन्तु Sy.
१६. VM. ignores भवन्तु ।
१७. 'आदित्यानाम् इति तृचमष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमादित्यदेवताकम् । अनुक्रम्यते च —'आदित्यानां तृचमादित्यं तु' (KSA. 36. 51. p. 25.) इति । गतः सूक्तविनियोगः । आदित्यदेवताके पशौ 'आदित्यानामवसा' इति वपाया अनुवाक्या । सूत्रितञ्च—'आदित्यानामवसा नूतनेनेमा गिर आदित्येभ्य:' (ĀSS. 3. 8.) इति । आदित्यग्रहस्यैवानुवाक्या । सूत्रितञ्च—'आदित्यानामवसा नूतनेन होता यक्षदादित्यान्' (ĀSS 5. 17.) इति Sy.
१८. अदिते: पुत्राणामेतत्संज्ञाकानां देवानाम् Sy.
१९. तद्धेतुभूतेनेत्यर्थ: Sy.
२० नवतरेण is suggested fo नवतितरेण ॥ अद्यतनेन Sy. अभिनवेन BB.
२१ सक्षीमहि वयं सङ्गच्छेमहि Sy. युक्ता भूयास्म BB.
२२. सुखेन is suggested for सुखे च ॥ गृहेण Sy. शर्मेति गृहनाम Ngh. 3. 4.
२३. ०तमेन्ति M. शं सुखमतिशयेन तत्कारणेन Sy. शान्ततमेन वा BB.

अपापत्वे[1] । अखण्डत्वे[2] च । क्षिप्राः[3] । इमम्[4] । यज्ञम्[5] । स्थापयन्तु, यज्ञमपापमखण्डिनञ्च कुर्वन्तु । स्तुतीः शृण्वन्तः[6] ।

**आदित्यासो अदितिर्मादयन्तां मित्रो अर्यमा वरुणो रजिष्ठाः ।**
**अस्माकं सन्तु भुवनस्य गोपाः पिबन्तु सोममवसे नो अद्य ॥ २ ॥**

[7]आदित्यासः । आदित्याः । अदितिश्च माता[8] । न्तु[9] । मित्रः । अर्यमा च । वरुणश्च[10] । अत्यन्तमृजवः[11] । अस्माकम्[12] । भवन्तु[13] । भवनस्य[14] । गोपयितारः । पिबन्तु । सोमम्[15] । रक्षणाय । अस्माकम् । अद्य[16] ।

**आदित्या विश्वे मरुतश्च विश्वे देवाश्च विश्व ऋभवश्च विश्वे ।**
**इन्द्रो अग्निरश्विना तुष्टुवाना यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥**

आदित्याः । एते[17] । सर्वे । स्तूयमाना भवन्त्वस्माभिरिति[18][19] ।

---

१. अनपराधत्वे Sy. निरपराधित्वे BB.

२. अदीनत्वे Sy. खण्डनरहितत्वे च BB.

३. त्वरिता आदित्याः Sy. त्वरमाणाः 'तुर त्वरासम्भ्रमयोः' BB. ४. इममस्मदीयम् BB.

५. यष्टारमिमं जनम् Sy.

६. अस्मदीयानि स्तोत्राणि शृण्वन्तः Sy. अस्माकं स्तुतीः शृण्वन्तः । श्रोषमाणाः—शृणोतेर्विकरणौ सिप्शपौ लेटो वा व्यत्ययेन शानच् श्रोषतिर्वा धात्वन्तरं द्रष्टव्यम् BB.

७. 'आदित्यासो अदितिः' इत्यादित्यग्रहस्य याज्या । सूत्रितञ्च—'आदित्यासो अदितिर्मादयन्तामिति नैतं ग्रहमीक्षेत हूयमानम्' (ĀSS. 5. 17.) इति Sy.

८. अदितिस्तेषां (देवानाम्) माता । यद्वा अदितिरिति देवविशेषणम् । अदितिरदितयोऽदीनाः Sy.

९. Missing in M. Something probably माद्य is missing immediately before न्तु ॥ तृप्ताः सन्तु Sy.

१०. एतत्संज्ञकाः Sy. ११. अतिशयेनर्जवः Sy.

१२. रक्षका भवन्त्वित्यर्थः Sy. १३. भुव० is suggested for भव० ॥ सर्वस्य जगतः Sy.

१४. गोपायि० A. रक्षका एवंम्भूता देवाः Sy.

१५. अस्माभिरभिषुतम् Sy. १६. अस्मिन् दिने Sy. १७. एते refers to आदित्याः । मरुतः देवाः । ऋभवः । इन्द्रः । अग्निः and अश्विना । १८. ०वन्त्यस्मा० A.

१९. VM. explains this stanza very briefly. Sy. explains this stanza in the following manner:—आदित्या अदितेः पुत्रा विश्वे सर्वे द्वादशसंख्याका अर्का विश्वे मरुतश्च सर्व एकोनपञ्चाशत्संख्योपेताश्च विश्वे देवाश्च ऋभवश्चेन्द्रोऽग्निरश्विनाश्विनावेतत्संज्ञका एवम्भूता ये देवास्तुष्टुवाना अस्माभिः स्तुता बभूवुः । सर्वे ते देवा यूयं सदा सर्वदा नोऽस्मान् स्वस्तिभिः कल्याणैः पात रक्षत ।

VII. 52.

**आ॒दि॒त्यासो॒ अदि॑तयः स्याम॒ पूर्दे॑व॒त्रा व॑सवो मर्त्य॒त्रा ।**
**सने॑म मित्रावरुणा॒ सन॑न्तो॒ भवे॑म द्यावापृथिवी॒ भव॑न्तः ॥ १ ॥**

आदित्यासः[1] । आदित्यानां स्वभूतावयव[2] । मण्डनीयाः[3] । भवेम । हे वसवः[4] । अस्माकं देवेषु । मर्त्येषु[5] च । निवासस्थानं[6] भवतु । हे मित्रावरुणौ ! भजेमहि[7] धनम् । भजमाना[8] अप्युपर्युपरि । तथा भवेम[9] । द्यावापृथिवी[10] । भवन्तो[11]ऽप्युपर्युपरि प्रजाभिः । पशुभिरन्यैश्चाभिलषितैः ।

**मि॒त्रस्तन्नो॒ वरु॑णो मामहन्त॒ शर्म॑ तो॒काय॒ तन॑याय गो॒पाः ।**
**मा वो॑ भुजेमा॒न्यजा॑त॒मेनो॒ मा तत्क॑र्म वसवो॒ यच्चय॑ध्वे ॥ २ ॥**

मित्रस्तत् । मित्रः[12] । तत्[13] । अस्मभ्यम् । वरुणो[12]ऽन्ये चादित्याः । प्रयच्छन्तु[14] । गृहम् । पुत्राय[15] । पौत्राय[16] च । गोपायितारः[17] । युष्माकम्[18] । अन्येषु[19] जातम्[20] । एना[21] यद्यूयमन्येषु जनयथ तद्वयम्[22] । मा । भुजेम[23] भोगं[24] प्राप्तिः । मा च । तत्[25] । कर्मः[26] । वसवः[27] । यद्यूयम्[28] । चयध्वे हृदये स्थापयत[29] ।

---

१. 'आदित्यासो अदितयः' इति तृचात्मकमेकोनविंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमादित्यदेवताकम् । 'आदित्यासः' इत्यनुक्रमणिका (KSA. 36. 52. p. 26.) । गतो विनियोगः Sy.

२. ०यवाः is suggested for ०यव ॥ हे आदित्या देवाः ! व्यत्ययेनाद्युदात्तत्वाभावः । यद्वा आदित्यानामिम आदित्याः, तस्येदमित्यर्थे प्राग्दीव्यतीयो ण्यप्रत्ययः । आदित्यानां शेषभूताः Sy.

३. अखण्डनी० is suggested for मण्डनी०॥ वयमखण्डनीयाः Sy.

४. वासका देवाः Sy.

५. मनुष्येष्वस्मासु Sy.

६. ०वात स्था० A. युष्मदीयं पूः पालनम् Sy.

७. युवाभ्यां दत्तं धनं सम्भजेमहि Sy.

८. सम्भजन्तो वयम् Sy.

९. स्याम Sy.

१०. हे द्यावापृथिव्यौ ! युवयोः प्रसादात् Sy.

११. भवेन्तो०' A. वयं भूतिमन्तः Sy.

१२. मित्रो वरुणोऽहर्निशाभिमानिनौ देवावेतवायाः सर्वे आदित्याः Sy.

१३. प्रसिद्धम् Sy.

१४. मंहतिर्दानकर्मा । ददतु Sy.

१५. अस्मदीयाय तनयाय Sy.

१६. तत्पुत्राय च शर्म प्रयच्छन्तु Sy.

१७. गोपयि० A. विश्वस्य रक्षकास्ते देवाः Sy.

१८. अथ प्रत्यक्षस्तुतिः—हे देवाः ! वो युष्मदीया वयम् Sy. १९. अन्वेषु A.

२०. जायम् M. अन्येनोत्पादितम् Sy.

२१. आनां M. एनः is suggested for एना॥ पापम् Sy.

२२. कृद्वयं A.

२३. हुजेम A. मा भुक्तवन्तः स्याम Sy.

२४. भोगः is suggested for भोगम् ।

२५. तादृशं कार्यम् Sy.

२६. कार्ष्म । लुङि करोतेरुत्तमस्य बहुवचनम् । मन्त्रेघसह्वर०' इत्यादिना च्लेर्लोपः Sy.

२७. हे वासकाः ! देवाः ! Sy.

२८. येन युष्मदप्रियेण कर्मणा Sy.

२९. ०पत्त A. यूयमस्मान्नाशयत Sy.

तुरण्यवोऽङ्गिरसो नक्षन्त रत्नं देवस्य सवितुरियानाः।
पिता च तन्नो महान्यजत्रो विश्वे देवाः समनसो जुषन्त ॥ ३ ॥

तुरण्यवः। त्वरमाणाः।[1] अङ्गिरसः।[2] प्राप्नुवन्।[3] रत्नम्।[4] देवस्य। सवितुः।[5] याचमानाः।[6] पिता।[7] च।[8] तत्। अस्माकं वरुणः।[9] महान्।[10] यष्टव्यः।[11] विश्वे च।[12] देवाः। सङ्गताः।[13] प्रायच्छन्नङ्गिरस[14] आदित्यान-जायन्[15] तेभ्य आदित्या दक्षिणामनयन् तामङ्गिरोयस्सविता[16] प्रायच्छत्[17] तदिदमत्रोक्तमिति।

VII. 53.

प्र द्यावा यज्ञैः पृथिवी नमोभिः सबाध ईळे बृहती यजत्रे।
ते चिद्धि पूर्वे कवयो गृणन्तः पुरो मही दधिरे देवपुत्रे ॥ १ ॥

प्र[18] द्यावा। प्रकर्षेण। स्तौमि। द्यावापृथिव्यौ। यज्ञैः।[19] नमस्कारैश्च।[20] बाधाय[21] सहितः।[22] महत्यौ।[23]

---

१. यज्ञादिकर्मसु त्वरिताः Sy.

२. एतन्नामका ऋषयः Sy.

३. आश्नुवन्त Sy.

४. नूकं नूक्तं A. रमणीयं धनम्। उत्तरार्ध-गततच्छब्दापेक्षया यच्छब्दोऽत्राध्याह्रियते Sy.

५. प्रेरकस्य देवस्य सम्बन्धि Sy.

६. सवितारं याचमानाः सन्तः Sy.

७. वसिष्ठस्य पितृभूतो वरुणश्च। यद्वा सर्वेषां पिता प्रजापतिः Sy.

८. तादृशं रत्नम् Sy.

९. अस्मान् Sy.

१०. महात् A.
प्रभूतः Sy.

११. यजनशीलः Sy.

१२. सर्वे Sy.

१३. समानमनस्काः Sy.

१४. सेवयन्तु यद्वा नोऽस्मभ्यं ददतु Sy

१५. ०रिस A.

१६. ०नयाजयन् is suggested for ०नजायन्।

१७. ०रोयस्स० A. ०रोभ्यस्स० is suggested for ०रोयस्स० M.

१८. 'प्र द्यावा यज्ञैः,' इति तृचात्मकं विंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं द्यावापृथिव्यम्'। अनुक्रम्यते च- 'प्र द्यावा द्यावापृथिव्यम्, (KSA. 36. 53. p. 26.) इति। चतुर्थेऽहनि वैश्वदेवशस्त्र इदं द्यावापृथिव्यनिविद्धानम्। सूत्रितञ्च—'आ देवो यातु प्रद्यावेति वासिष्ठम्' (ASS. 3. 8.) इति। द्यावापृथिव्ये पशौ वपापुरोडाशयोः 'प्रद्यावा' इति द्वे ऋचौ याज्ये। सूत्रितञ्च—'प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्वे' (ASS. 3. 8.) इति Sy.

१९. यागैः Sy.

२०. स्तोत्रैश्च Sy.

२१. बाधया is suggested for बाधाय।

२२. सहितौ M. अहं स्तोता बाधासहितः! ऋत्विजां सम्बाधयुक्त इत्यर्थः Sy.

२३. महत्यौ is missing in M. बृहत्यौ महत्यौ Sy.

यष्टव्ये[1]। ति[2]। चित्[3]। हि[4]। पूर्वे[5]। कवयः। गृणन्तः[6]। पुरो दधिरे[7]। महत्यौ। ययोर्देवाः[8] पुत्राः।

**प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य।**
**आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथम् ॥ २ ॥**

प्र पूर्वजे[9]। प्रकृणुध्वम्[10]। पूर्वजे वा[11]। पित्र्यौ[12]। नवतराभिः[13]। स्तुतिभिः[14]। यज्ञस्य[15]। आधारभूते[16]। आयातम्[17]। अस्मान्। हे द्यावापृथिव्यौ[18]! दैव्येन[19]। जनेन सह। महद्धि। युवयोः[20]। वरणीयं धनम्[21]।

**उतो हि वां रत्नधेयानि सन्ति पुरूणि द्यावापृथिवी सुदासे।**
**अस्मे धत्तं यदसदस्कृधोयु यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥**

उतो हि। अपि च। युवयोः। धनदानादि[22]। विद्यन्ते[23]। बहूनि। द्यावापृथिव्यौ! सुदासे पैजवनाय[24] राज्ञो[25]। अस्मभ्यं च। धत्तं[26] तत्। यत्[27][28]।

---

१. यजनीये Sy.

२. ते is suggested for ति ॥ तादृश्यौ द्यावापृथिव्यौ Sy.　　३. अपि Sy.

४. खलु Sy.　　५. पुरातनाः Sy.

६. स्तुवन्तः Sy.

७. पुरस्तात् स्थापयामासुः Sy.　　८. ययोः A.

९. आग्रयणे द्यावापृथिव्यैकपालस्य 'प्र पूर्वजे' इति याज्या। सूत्रितञ्च—'मही द्यौः पृथिवी च नः प्र पूर्वजे पितरा नव्यसीभिः' (ĀSS. 2.9.) इति Sy.

१०. हे अस्मदीयाः स्तोतारः! यूयं....प्रकृणुध्वं तुर ? (पुर-)स्कुरुत Sy.

११. वा is missing in A. पूर्वं प्रजाते Sy.

१२. पितरौ is suggested for पित्र्यौ ॥ विश्वस्य मातापितृभूते Sy.

१३. व is missing in A.

१४. स्तुतिरूपाभिर्वाग्भिः Sy.　१५. व्यज्यस्य A.

१६. स्थानभूते Sy.　　१७. आगच्छतम् Sy.

१८. अथ प्रत्यक्षस्तुतिः—हे द्यावापृथिव्यौ! युवाम् Sy.　　१९. देवसम्बन्धिना Sy.

२०. किमर्थमायातम् ? इत्युच्यते वां युवयोः Sy.

२१. वरूथं वरणीयं यद्धनमस्तीति शेषः। तद्धनमस्मभ्यं दीयतामित्यर्थः Sy.

२२. ०दानानि is suggested for ०दानादि॥ रमणीयानि धनानि Sy.

२३. भवन्ति Sy.

२४. पैज० A. शोभनहविर्दानाय यजमानाय देयानि Sy.

२५. राज्ञे is suggested for राज्ञो।

२६. प्रयच्छतम् Sy.

२७. तेषां मध्ये यद् धनम् Sy.

२८. VM. does not explain the fourth verse of this stanza and ignores हि। असत् and अस्कृधोयु ॥ हि खलु। असद् भवेत्। अस्कृधोयु। कृधुको ह्रस्वः। अह्रस्वमनल्पम्। हे द्यावापृथिव्यौ! यूयं युवां नोऽस्मान् सर्वदा। कल्याणैः पात पालयतम् Sy.

## VII. 54.

**वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः ।**
**यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ १ ॥**

[वास्तोष्पते][1][2]...यत्[3] । त्वाम् । याचामहे[4] । तत् । अस्मभ्यम्[5] । प्रयच्छ[6] । शङ्करः[7] । भव । अस्माकम् । द्विपदे[8] । चतुष्पदे[9] च[10] ।

**वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो ।**
**अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥ २ ॥**

वास्तोष्पते । वास्तोः[11] । पते[11] ! प्रणेता[12] । भव । अस्माकम् । गृहाणां वर्धयिता[13] । गोभिः[14] । अश्वैश्च[14] । इन्दो[15] ! ईश्वरास[16] इति स्पष्टम्[17] ।

---

१ 'वास्तोष्पते' इति तृचात्मकमेकविंशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वास्तोष्पत्यम् । तथा चानुक्रम्यते—'वास्तोष्पते वास्तोष्पत्यम्' (KSA 36. 54. p. 26.) इति । स्मार्ते गृहनिर्माणे 'वास्तोष्पते' इति चतसृभिः प्रत्यृचं जुहुयात् । सूत्रितञ्च—'वास्तोष्पते प्रति जानीह्यस्मानिति चतसृभिः प्रत्यृचं हुत्वा'(AGS. 2. 9. 9.)इति Sy. २ The *pratīka* is supplied by the Editor. Omission is shown here by some dots in the mss.

३ यद्धनम् Sy. ४ ०महते A. किञ्च वयम् ....याचामहे Sy. ५ नोऽस्मान् BB.

६ प्रतियच्छ M. प्रतिप्रापय। प्रत्येकं वा प्रापय। यद्वा तत्तत्प्रति तत्प्रदानार्थं नोऽस्माञ् जुषस्व । प्रतिगृहाण वाऽस्मान् BB.

७. सुखकरः Sy. सुखं सुखहेतुः BB.

८. पुत्रपौत्रादिजनाय Sy. द्विविभ्यां पाद्न्०' इति द्विपद इत्यत्रोत्तरपदान्तोदात्तत्वम् BB.

९. अस्मदीयाय गवाश्वादिवर्गाय Sy.

१०. VM. ignores वास्तोः । पते । प्रति । जानीहि । अस्मान् । स्वावेशः । अनमीवः । भव । प्रति and शम् ।
These words are explained in the following manner :—
हे वास्तोष्पते ! गृहस्य पालयितः ! देव ! त्वमस्मान् । त्वदीयान् स्तोतॄन् इति प्रति जानीहि प्रबुध्यस्व । तदनन्तरं नोऽस्माकं स्वावेशः शोभननिवेशोऽनमीवोऽरोगकृच्च भव Sy. वास्तोर्गृहस्य पालयितः ! 'रुद्रः खलु वै वास्तोष्पतिः' इति ब्राह्मणम् ।....अस्मान् प्रति जानीहि, आत्मीयत्वेन बुद्ध्यस्व । प्रत्येकं वा अस्माञ् जानीहि, अनुध्यातुमर्हसि । ततश्च स्वावेशः सुखावासः सुखं वासयिताऽस्माकं भव। अनमीवोऽरोगोऽरोगहेतुश्चास्माकं भव । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् BB. This stanza=TS. 3. 4. 10. 1.

११. हे गृहस्य पालयितः ! देव ! त्वम् Sy.

१२. प्रनेता A. प्रवर्धकः Sy. १३. अस्मदीयस्य धनस्य स्फाययिता प्रवर्धकः Sy. १४. गोभिः पशुभिरश्वेभिरश्वैश्च सहिताः Sy. १५. हे सोमवदाह्लादक ! Sy. १६. इन्दविश्वरास A. VM. seems to read ईश्वरासः for अजरासः ॥ जरारहिताः । विनाशरहिता इत्यर्थः Sy.

१७. VM. ignores ते । सख्ये । स्याम । पितेव । पुत्रान् । प्रति । नः and जुषस्व । Sy. explains these words in the following manner :—
ते त्वया सह। सख्ये सति वयम्। स्याम भवेम। पितेव, यथा पिता। पुत्रान् रक्षकत्वेन सेवते तथा त्वमपि नोऽस्मान्। प्रति जुषस्व सेवस्व

**वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या।**
**पाहि क्षेमं उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥**

[वास्तोष्पते[1]।] वास्तोः। पते! सुखकरेण[2]। तव[3]। उवसदनेन[4]। रमणीयेन[5]। गतिमता[6]। संसक्ता भवेम[7]। रक्ष[8]। अस्मान्[9]। योगक्षेमयोः[10]। कल्याणम्[11][12]।

## VII. 55.

**अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्। सखा सुशेवं एधि नः ॥ १ ॥**

[13] अमीवहा।

१. The *pratīka* is supplied by the Editor.

२. सुखकर्या Sy. सर्वार्थसाधनशक्त्या। छान्दसं जश्त्वम् BB.

३. तव is suggested for तप ॥ त्वया देयया Sy.

४. उपसद० is suggested for उवसद०॥ स्थानेन Sy. सन्तत्या श्लेषणेन, एतद्धोमनिमित्तेन सम्बन्धेन BB.

५. रमणीयया Sy. रण्वया गन्तव्यया। 'रवि गतौ' घञ्। पचाद्यजेव वाऽकर्तरि। रमणीयया वा। रमेरक्षरविकारश्छान्दसः, औणादिको यज्प्रत्ययः BB.

६. धनवत्या Sy. गतिमत्या सर्वत्राप्रतिहतगत्या BB.

७. वयं सङ्गच्छेमहि Sy. अभिभवेम शत्रून्। यद्वा त्वया संसक्ता भूयास्म। सञ्जेराशिषि लिङ्। छान्दसोऽनुनासिकलोपः BB.

८. अवतेश्छान्दसो लुङ् BB.

९. अस्मदीयं धनम् Sy.

१०. त्वमपि क्षेमे प्राप्तस्य रक्षणे उतापि च योगेऽप्राप्तस्य प्रापणे Sy. क्षेमे, उतापि च योगक्षेमार्थं योगार्थं च।....लब्धपरिपालनं क्षेमः, अलब्धलाभो योगः BB.

११. वरणीयं नोऽस्मदीयं धनं पाहि। हे वास्तोष्पते! यूयं त्वं नोऽस्मान् सर्वदा कल्याणैः पात पाहि Sy. वरमुत्कृष्टं रक्षेति यूयमित्यादि।.... पूजार्थमेकस्मिन् बहुवचनम्। वचनव्यत्ययो वा BB. This stanza = TS. 3. 4. 10. 1.

१२. VM. ignores उत ॥

१३. 'अमीवहा' इत्यष्टर्चं द्वाविंशं सूक्तम्। आद्या गायत्री, पञ्चमाद्यास्तिस्रोऽनुष्टुभः, द्वितीयाद्यास्तिस्र उपरिष्टाद्बृहत्यः। ऋष्टका चतुर्थद्वादशकौ बृहती (Cf. KSA. 7. 1.4. p. 3.) इति तल्लक्षणयोगात्। आद्या वास्तोष्पतिदेवताका शिष्टा ऐन्द्र्यः। तथा चानुक्रान्तम्—'अमीवहाष्टौ वास्तोष्पत्याद्या गायत्री शेषास्त्र्युपरिष्टाद्बृहत्यादयोऽनुष्टुभः प्रस्वापिन्य उपनिषद्' (KSA. 36. 55. p. 26.) इति। गतो विनियोगः। बृहद्देवतायां यदुक्तं तदिह लिख्यते—

वरुणस्य गृहान् रात्रौ वसिष्ठः स्वप्नमाचरन्।
प्रविवेशाथ तं तत्र श्वा नदन्नभ्यवर्तत॥
क्रन्दन्तं सारमेयं स धावन्तं दष्टुमुद्यतम्।
यदर्जुनेति च द्वाभ्यां सान्त्वयित्वा ह्यसूषुपत्॥
एवं प्रस्वापयामास जनमन्यं च वारुणम्।
इति ॥ BD. 6. 8 19. 821.

अत्र केचित्पुनरेवमाहुः—

आसां प्रस्वापिनित्वं तु कथासु परिकल्प्यते।
वसिष्ठस्तृषितोऽन्नार्थी त्रिरात्रालब्धभोजनः॥
चतुर्थरात्रौ चौर्यार्थं वारुणं गृहमेत्यमु।
कोष्ठागारे प्रवेशाय पालकश्वाविसुप्तये॥
यदर्जुनेति सप्तर्चं ददर्श च जजाप च॥ इति
(See VD. p. 133.) Sy.
वसिष्ठस्यार्षम् Dur. वसिष्ठस्य SKN.

रक्षोहा[१] । वास्तोः, पते[२] ! विश्वानि[३] । रूपाणि[४] । आविशन्[५] । सखा[६] । सुसुखः[७] । भव । अस्माकम् ।

१. रक्षोघ्न A. अमीवानां रोगाणां नाशकस्त्वम् Sy. त्वमस्माकममीवहा भव । अमीवा रोगस्तस्य हन्ता Dur. अमीवा हिंसिता सर्पादी रोगो वा तस्य हन्ता । 'बहुलं छन्दसि' (Pa 3. 2. 88.) इति क्विप् ।....अमीवाख्यमननमिति पर्यायवचनम् SKN.

२. ०शत् A. हे गृहस्य पालक ! एतत्संज्ञक ! देव ! Sy. हे भगवन् ! वास्तोष्पते ! Dur.

३. बहूनि Sy. ४. यस्यास्मद्दुःखहेतोर्यः प्रतिपक्षः सर्पादेर्नकुलादिः Dur. यैः स हन्यते नकुलबिडालादिरूपैरोषध्यादिरूपैर्वा SKN.

५. प्रविशन् Sy. 'यद् यद् रूपं कामयन्ते तत्तद्देवा विशन्ति' N. 10. 17. इति यास्कः Sy. तस्य तस्य रूपमाविशंस्त्वं तमस्माकममीवानं जहि ।....'सर्वाणि रूपाण्याविशन्' इत्यतः प्रसक्तमुच्यते । शक्नोति पुनर्वास्तोष्पतिः सर्वाणि रूपाण्यावेष्टुमित्युच्यते 'यद् यद् रूपं कामयते तत्तद् देवता भवति' । अस्त्येतदैश्वर्यं देवताया यद्यदिच्छति रूपं तत्तत्करोति Dur. तान्याविशन्, आविशमानो जहि तमित्यर्थः SKN. ६. मित्रभूतः Sy. अमुना प्रकारेण जनानस्मदुपद्रवान् सखा मित्रम् Dur.

७. सुष्ठु सुखकरः Sy. सुष्ठु सुखो भव । 'शेव इति सुखनाम' तत् कस्मात् ? 'शिष्यतेर्वकारो नामकरणः' शिषिर्धातुः । वकारः प्रत्ययः । शिष इत्यस्य स पुनः 'अन्तस्थान्तरोपलिङ्गी' अन्ते तिष्ठति धातोर्यो वर्णः सोऽन्तस्थः । न संज्ञा, यथा 'अन्तस्था यरलवाः' । कश्च पुनरसौ षकारः ? तस्यान्तरमवकाशस्थानमुपलिङ्गयत्युपगच्छति यः स भवत्यन्तस्थान्तरोपलिङ्गी । कश्च पुनरसौ वकारः ? स षकारस्य स्थानमुपगच्छति ततो गुणे कृते शेव इति भवति । स च पुनरेव धातुर्विभाषितगुण इति । 'शिवमित्यप्यस्य भवति' अगुणपक्षे Dur. सुसुखः । ....शेवः शिष्यतेर्वकारो नामकरणः । शिष इत्यस्य पुनरन्तस्थान्तरोपलिङ्गी । अस्य धातोरन्ते स्थितः षकारस्तस्यान्तरं स्थानं लिङ्गी, एवंशीलः । षकारस्थाने वकारः प्रविशतीत्यर्थः । विभाषितगुणत्वाच्च शिवोऽपि सिद्धः । ....अन्तस्थशब्दः क्रियावाची न यरलवाची SKN. वास्तोष्पतिः । वास्तुर्वसतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा ।.... अभ्यमनहा वास्तोष्पते ! सर्वाणि रूपाण्याविशन् सखा नः सुसुखो भव । शेव इति सुखनाम । शिष्यतेर्वकारो नामकरणः । अन्तस्थान्तरोपलिङ्गी । विभाषितगुणः । शिवमित्यप्यस्य भवति । यद्यद्रूपं कामयते तत्तद्देवता भवति N. 10. 17., SKN. IV. 20-21.

**यदर्जुन सारमेय दतः पिशङ्ग यच्छसे ।**
**वीव भ्राजन्त ऋष्टय उप स्रक्केषु बप्सतो नि षु स्वप ॥ २ ॥**

यदर्जुन[1] । यदा त्वम् । अर्जुनवर्ण ! सारमेय[2] ! पिशङ्गवर्ण[3] ! दन्तान्[4] । यच्छसि[5] विवृतान्[6] करोषि । तदानीं विभ्राजन्त[7] इव । तत्रष्टयः[8], ऋष्टिसदृशा भवन्ति दन्ताः । सृक्वयोः[9] । उपबप्सतो[10] लेलिहानस्य । स त्वं सुष्ठु । निष्वापय[11] । शौनकः[12]—

वरुणस्य गृहान्[13] रात्रौ वसिष्ठाः[14] स्वप्नमाचरन् ।
प्रविवेशाथ तां[15] तत्र श्वा नेदन्नभ्यभाषत[16] ॥
क्रन्दन्तं सारमेयं तं[17] धावन्तं द्रष्टुमुद्यतम्[18] ।
यदर्जुनेति च द्वाभ्यां[19] सां च पीत्वा[20] न्यसुष्टुवत्[21] ॥

---

१. तद्दर्शनार्येतिहासपूर्वा ऋचः प्रस्वापिन्यः 'बृहत्यादयोऽनुष्टुभः प्रस्वापिन्यः' इत्युक्तत्वात् (KSA. 7. 55. p. 26.) तत्रेतिहासः—
वसिष्ठः क्षुधितोऽन्नार्थी त्रिरात्रालब्धभोजनः ।
चतुर्थरात्रौ चौर्याय वारुणं गृहमेत्य तु ॥
कोष्ठागारे प्रवेशाय पालकश्वादिसुप्तये ।
यदर्जुनेति सप्तर्चं ददर्श च जजाप च ॥२॥
हे श्वेतवर्ण ! DDN.

२. सरमा नाम देवशुनी तस्याः कुलोद्भव ! Sy. सरमा नाम देवशुनी तस्याः पुत्र ! 'स्त्रीभ्यो ढक्' (Pa. 4. 1. 120.) DDN.

३. Missing in M. Something probably पिशं is missing before ग ॥ केषुचिदङ्गेषु पिङ्गलवर्ण ! Sy. एवम्भूत ! DDN.

४. 'पदन्नो०' (Pa. 6. 1. 63.) इति दतादेशः DDN.

५. विवृणोषि DDN.

६. ०तात् A. अस्मान् दष्टुमित्यर्थः Sy. DDN.

७. विभुजन्त A. विशेषेण भासन्ते तथा Sy. यथायुधानि विशेषेण भ्राजन्ते तथा DDN.

८. तत्र य इष्टि स० M. तत्र ऋष्टयः or ऋषयः is suggested for तत्रष्टयः ॥ आयुधानि Sy. उप अस्मत्समीपे भक्षयतः । तव दन्ताः DDN.

९. स्रक्वासु. . . .स्रक्वाशब्द ओष्ठप्रदेशविशेषवाचीत्यर्थः Sy. स्रक्वासु ओष्ठप्रदेशेषु भासन्ते। स्रक्वाशब्द ओष्ठप्रदेशवाची DDN.

१०. ऊप० A. उपभत्संतो M.

११. निष्वापय A. नितरां निद्रां कुरु Sy. तथाभूतस्त्वमिदानीं सुष्ठु नितरां निद्रां कुरु DDN.

१२. BD. (6.11-14.)

१३. गृहारान् A.

१४. वसिष्ठः is suggested for वसिष्ठाः ॥

१५. तम् is suggested for ताम् ।

१६. नदन्नभ्यभाषत is suggested for नेदन्नभ्यभाषत ॥

१७. तत् A.

१८. वष्टु० is suggested for द्रष्टु० ।

१९. त्रिभिः DDN.

२०. सान्त्वयित्वा is suggested for सां च पीत्वा ।

२१. न्यष्पवत् सत् A. न्यसुष्टुवत् M. न्यसूषुपत् is suggested.

एवं प्रस्थापयामास[1] जनमन्यं च वारुणम् ।
ततस्तु[2] वरुणो राजा स्वान्पाशान्प्रत्यमुञ्चत ॥
बद्धः[3] स वारुणैः पाशैर्ध्रुवासु त्वेति दृश्यते ।
स बुध्वा[4] पितरं सूक्तैश्चतुर्भिरथ उत्तरैः ॥
अभितुष्टाव[5] धीरेति मुमोचैनं ततः पिता[6] ॥ इति ॥

**स्तेनं राय सारमेय तस्करं वा पुनःसर ।**
**स्तोतॄनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप ॥ ३ ॥**

स्तेनम् । स्तेनं[7] प्रति । सम्भष[8] । सारमेय तस्करम्[9] । वा[10] । पुनस्तत्[11] प्रतिसर तस्करस्तेनयोरल्पो[12] भेदः । स्तोतॄन् । इन्द्रस्य । अस्मान्[13] । भषसि[14] तच्चायुक्तमिति वदति । किमस्मान् । बाधसे ?[15]

---

१. प्रस्त्रापयामास A. प्रस्वापयामास DDN.

२. ततः स इति DDN.

३. DDN. omits the hemistich.

४. DDN. reads स बद्धः पितरं सूक्तैश्चतुर्भिरित उत्तरैः ।
अभितुष्टाव धीरेति मुमोचैनमथान्यथा ॥
and adds after it—तथा ऋग्विधाने (श्लो० ३११.) अमीवहेति सूक्तेन भूतानि स्त्रापयेन्निशि । नहि प्रस्वापनं किञ्चिवीदृशं विद्यते क्वचित् । वसिष्ठस्त्र्युपरिष्टाद् बृहत्यादिभिः स्त्र्यष्टकद्वादशवतीभिः अनुष्टुब्भिः । सारमेयं आरुणं च जनं तुष्टाव इति ।

५. अहितु० A.

६. (बृह० ६. ११.—)

७. प्रच्छन्नधनापहारी स्तेनस्तम् Sy.

८. सौष A. स भषन् M. गच्छ Sy. DDN.

९. तस्क० M. प्रत्यक्षधनापहारी तस्करः । तम् Sy.
प्रच्छन्नधनापहारी स्तेनस्तं वा DDN.

१०. वा is missing in M.

११. ०स्त्वत् प्र० A. M. गतमेवं देशं पुनः सरतीति पुनःसरः । तादृग्भूत ! Sy. ज्ञातमेव देशं पुनः सरतीति हे पुनःसर तादृग्भूत हे सारमेय ! DDN.

१२. तरतर० A. तस्कर is missing in M.
प्रत्यक्षधनापहारी तस्करः । तम् Sy.

१३. अस्मन् M.

१४. भवसि A. M. गच्छसि Sy. DDN.

१५. VM· ignores नि षु स्वप । नितरां निद्रां कुरु Sy. दुष्टशुनक इव किं धावसे, अत्यन्तं निद्रां कुरु DDN.

**त्वं सू॒क॒रस्य॑ दर्दृहि॒ तव॑ दर्दर्तु सू॒क॒रः ।**
**स्तो॒तॄनिन्द्र॑स्य रायसि॒ किम॒स्मान्दु॑च्छुनायसे॒ नि षु स्व॑प ॥ ४ ॥**

त्वं[1] सूकरस्य । त्वम्[2] । सूकरस्य[3] । दर्दृहि[4] जहि सूकरम् । त्वाम् । सूकरः[5] । हन्तु[6] । स्तोतॄन्[7] । इन्द्रस्याहिंसकांस्तव । किम् । बाधस इति ।

**सस्तु॑ मा॒ता सस्तु॑ पि॒ता सस्तु॒ श्वा सस्तु॑ वि॒श्पतिः॑ ।**
**स॒सन्तु॒ सर्वे॑ ज्ञा॒तयः॒ सस्त्व॒यम॒भितो॒ जनः॑ ॥ ५ ॥**

सस्तु[8] माता । सर्वः[9] । जनः । स्वपित्विति यथाकाममात्मनः प्रवेशार्थं प्रस्वापयति[10] ।

**य आस्ते॒ यश्च॒ चर॑ति॒ यश्च॒ पश्य॑ति नो॒ जनः॑ ।**
**तेषा॒ं सं ह॑न्मो अ॒क्षाणि॒ यथे॒दं ह॒र्म्यं॑ तथा॑ ॥ ६ ॥**

य[11] आस्ते । तेषां[12] सर्वेषाम् । अक्षाणि[13] । संहन्मः[14], सहननं सर्वेषां हिंसनं दण्डादिना मथनं तथा कृते ।

---

१. हे सारमेय ! DDN.

२. त्वं सूकरस्य is missing in M.

३. सूकरस्य वराहस्य । द्वितीयार्थे षष्ठी Sy. DDN.

४. वदृहि A. विदारय Sy. 'दृ विदारणे' DDN.

५. सूक्तरं A. सूकरोऽपि तव विदारयतु DDN.

६. विदारयतु युवयोर्नित्यवैरित्वात् । अस्मान् मा दशेत्यर्थः Sy. DDN.

७. स्तोतॄन् इत्यर्धर्चः पूर्वस्यामृचि व्याख्यातः DDN.

८. हे सारमेय ! माता त्वदीया जननी सस्तु । स्वपतु पिता च सस्तु । श्वा सारमेयो भवान् सस्तु । विश्पतिर्जामाता यद्वा विशां जनानां पालको गृही सस्तु । सर्वे ज्ञातयो बन्धवोऽपि ससन्तु । स्वपन्तु । अभितः परितः स्थितोऽयमपि सर्वो जनः सस्तु । स्वपतु Sy. हे वरुण ! त्वदीया जननी DDN.

९. स्वपित्विति A. M. स्वपितु DDN.

१०. VM. ignores सस्तु । माता । सस्तु । पिता । सस्तु । श्वा । सस्तु । विश्पतिः । ससन्तु । सर्वे । ज्ञातयः । अयम् । He does not explain this stanza word for word, although he gives general explanation. पिता च स्वपितु—अन्यो यः शुनकः स्वस्तु । जामाता सस्तु । सर्वे बान्धवाः ससन्तु । परितः स्थितोऽयमपि सर्वो जनः स्वपितु । स्वपितिसस्ती इति द्वौ स्वपितिकर्माणौ (निघण्टु ३. २२) DDN.

११. जनः । अस्मिन् प्रवेशे उपविशति । यो गच्छति योऽस्मान् पश्यति DDN.

१२. येषां A. एषां M. एवम्भूतानां तेषां जनानाम्, अक्षीणि DDN. १३. इन्द्रियाणि Sy.

१४. वह सं० A. वहर M. संहनाम । संहृतिनिमीलनम् । निमीलयामेत्यर्थः Sy. DDN.

यथा । इदम्[1] । हर्म्यम[2]विचलत् तिष्ठति[3] । तथा सर्वो[4] जनोऽविचलस्तिष्ठतु सुप्तः[5] ।

**स॒हस्र॑शृङ्गो वृष॒भो यः स॑मु॒द्रादु॒दाच॑रत् ।**
**तेना॑ सह॒स्ये॑ना व॒यं नि जना॑न्त्स्वापयामसि ॥ ७ ॥**

सहस्रशृङ्गः[6] । सहस्रतेजाः[7] । वर्षिता[8] । योऽयम् । समुद्रात्[9] । उत्तिष्ठति[10] । तेन । अभिभवनकुशलेन[11] निष्वापयामः[12] । वयम्[13] । इमान् जनान्[14], इति ।[15]

**प्रो॒ष्ठे॒श॒या व॑ह्ये॒श॒या नारी॒र्यास्त॑ल्प॒शीव॑रीः ।**
**स्त्रियो॒ याः पुण्य॑गन्धा॒स्ताः सर्वाः॑ स्वापयामसि ॥ ८ ॥**

प्रोष्ठेशयाः । खट्वाशयाः[16] । वह्येशयाः[17] वह्यं शिबिकादि[18], याश्च[19] । नार्यः । तल्पशायिन्यः । स्त्रियः । याश्च । पुण्यगन्धाः[20] । ताः । सर्वाः । प्रस्वापयामः[21] ।

---

१. प्रत्यक्षेणोपलभ्यमानम् Sy. DDN.
२. ०मपि च० M. ०मविचलत् A. प्रासादादि-रथाद्यात्मकं वस्तुजातम् Sy.
३. तिष्ठन्विति A. तिष्ठत्विति M.
४. यथा निश्चलं भवति तथेमे सर्वे जना निश्चला भवन्त्वित्यर्थः Sy.
५. VM. ignores यः । आस्ते । यः । च । चरति । यः । च । पश्यति । नः । जनः ।
यो जन आस्ते, अस्मिन् प्रदेशे तिष्ठति । यश्च चरति गच्छति । यश्च जनो नोऽस्मान् पश्यति । एवम्भूतानां तेषां जनानाम् Sy.
६. शृंगम् A. ७. सहस्रकिरणः Sy. DDN.
८. कामानां वर्षिता यः सूर्यः Sy., DDN.
९. अम्बुधेः सकाशात् Sy.
१०. उदागच्छति Sy., DDN.
११. अहिभ० A. अभिभवित्रा तेन सूर्येण Sy., DDN.
१२. निष्वाप० A. नितरां स्वापयामः Sy., DDN
१३. वयं स्तोतारः Sy., DDN.
१४. जनान् सर्वान् Sy.
१५. तेना—इति 'सहस्येन सुश्रवसं०' (RPR. 7. 37.) इति दीर्घः । सहस्येना इति 'षष्ठं चाष्टाक्षरेऽक्षरम्' (RPR. 8. 39.) इति दीर्घः । जनान्त्स्वाप० टकारनकारयोस्तु-आहुः०' (RPR. 4. 17.) इति तकारागमः । DDN.
१६. खट्वानया A. M. प्राङ्गणे शयानः Sy., DDN.
१७. वह्येशया is missing in A. M. वह्यं वाहनं तस्मिन् शयानाः Sy.
१८. शिपिकादी A. १९. यादृश्यः स्त्रियः । तल्पे शयानाः स्त्रियः Sy. DDN.
२०. पुण्यगन्धाः कर्पूरादिपवित्रगन्धाः मङ्गल्यगन्धा Sy. DDN.
२१. ०पयाम् A. ०पय M. वयं निद्रां कारयाम Sy. ताः सर्वाः स्त्रीः, वयं स्वापयामः, निद्रां कारयामः । तस्माद् वसिष्ठः कुटुम्बार्थं तस्करो बभूवेति सिद्धम् । तथा मनुः—(म० स्मृ० १०. १०४.)
ब्राह्मणः सर्ववर्णेभ्य आददानो न दुष्यति ।
जीविकात्ययमापन्नो योऽन्नमत्ति यतस्ततः ॥
आकाशमिव पङ्केन न स पापेन लिप्यते । इति DDN.

VII. 56.

**क ईं व्यक्ता नरः सनीळा रुद्रस्य मर्या अधा स्वश्वाः ॥ १ ॥**

क ई व्यक्ताः[1] । के[2] । इमे[3] । व्यक्ता भवन्ति[4] । मनुष्याः[5] । सरथाः[6] । रुद्रस्य[7] । पुत्राः[8] । अपि च । स्वश्वा[9] इति मरुतो दृष्ट्वा[10] विस्मितो वदति ।

**नकिर्ह्येषां जनूंषि वेद ते अङ्ग विद्रे मिथो जनित्रम् ॥ २ ॥**

नकिः । न कश्चित्[11] । हि[12] । एषाम्[13] । जन्मानि । वेत्ति । ते[14] । एव[15] । परस्परस्य[16] । जन्मभूमीः[17] । जानन्ति[18] ।

**अभि स्वपूभिर्मिथो वपन्त वातस्वनसः श्येना अस्पृध्रन् ॥ ३ ॥**

अभि स्व । स्वभूतैरुदकैः[19] । परस्परं सर्व एव पृथिव्याम् । अभिवचनं[20] कुर्वन्ति पानन्युदकान्[21][22] । निर्गच्छत्स्वनाः[23] । गमनशीलाः[24] । स्पर्धन्ते निबिडा भवन्ति[25] ।

---

१. अथ चतुर्थे ऽनुवाके पञ्चदश सूक्तानि । तत्र 'क ईं व्यक्ताः' इति पञ्चविंशत्यृचं प्रथमं सूक्तं वसिष्ठस्यार्षं मरुद्देवताकम् । आद्या एकादश द्विपदा विंशत्यक्षरा विराजः शिष्टाश्चतुर्दश त्रिष्टुभः । तथा चानुक्रान्तम्—'क ईं पञ्चाधिका मारुतं ह्याद्या एकादश द्विपदा' (KAS. 36. 56. p. 26.) इति दशरात्रे चतुर्थेऽहन्याग्निमारुते शस्त्र इदं मारुतनिविद्धानम् । सूत्र्यते हि—'वैश्वानरस्य सुमतौ क ईं व्यक्ता नरः' (ĀSS 8. 8.) इति Sy.

२. के भवन्तीति रूपातिशयादृषिराश्चर्येणाह Sy.

३. एवम्भूताः Sy.

४. कान्तियुक्ताः Sy.

५. नेतारः Sy.

६. समानौकसः Sy.

७. महादेवस्य पुत्राः Sy.

८. VM. seems to explain मर्याः as पुत्राः but Sy. explains मर्याः as मर्येभ्यो नृभ्यो हिताः ।

९. शोभनवाहाः Sy.

१०. दृष्टवा A.

११. कश्चिदपि न Sy.

१२. खलु Sy.

१३. ०श्चिद्येषां M. मरुताम् Sy.

१४. तादृशा मरुतः Sy,

१५. अङ्ग स्वयमेव Sy.

१६. परस्परम् Sy.

१७. ०भूमिः A. जनित्रं रुद्रपृश्निभ्यां सकाशात् प्रादुर्भूतं स्वकीयं जन्म Sy.

१८. विदन्ति Sy.

१९. मरुतः स्वकीयैः पवनैः सञ्चरणैः स्वयमेव सञ्चरन्तः Sy.

२०. वपनं is suggested for ०चनं ।

२१. वपन्त्यु० is suggested for पपन्त्यु० ॥ सङ्गच्छन्ते Sy.

२२. ०कानिर् A. ०कानि निर० is suggested for ०कान्निर्० ।

२३. ०च्छत्स्व० is suggested for ०च्छन् स्व० ॥ वायुवत्स्वनन्तः शब्दायमानाः Sy.

२४. श्येनाः—'श्यैङ् गतौ' इति धातो रूपम् । गमनशीलाः । यद्वा श्येना इति लुप्तोपममेतत् । श्येनाः पक्षिणस्तद्वद् गच्छन्तः Sy.

२५. भन्ति A. परस्परं रूपसौन्दर्यादिभिः स्पर्धन्ते Sy.

**एतानि धीरो निण्या चिकेत पृश्निर्यदूधो मही जभार ॥ ४ ॥**

एतानि[1]। एतानि भूतानि। प्राज्ञे[2]। अन्तर्हितानि[3]। जानन्ति[4]। पृश्निः[5]। महती। यानि। आत्मीये[6] ऊधसि[7]। जहार[8], 'पृश्नि यै[9] वै पयसो मरुतो जाताः' इति ब्राह्मणम्।

**सा विट् सुवीरा मरुद्भिरस्तु सनात्सहन्ती पुष्यन्ती नृम्णम् ॥ ५ ॥**

सा विट्। सा[10]। विट्[11]। सुप्रजा[12]। मरुद्भिः[13]। भवतु। चिरम्[14]। अभिभवन्तु[15] शत्रून्। पुष्यन्ति[16] चेत्। धनं[17] याविवेतानि[18] निव्यानि[19] वेदेति।

**यामं येष्ठाः शुभा शोभिष्ठाः श्रिया संमिश्ला ओजोभिरुग्राः ॥ ६ ॥**

यामम्[20]। नियातव्यम्[21]। अत्यन्तं यान्तः[22]। उदकेन। अत्यन्तं शोभितारोऽलङ्कारैर्वा[23] शोभमान[24]। श्रिया[25]। सङ्गताः[26]। बलैः। उद्गूर्णाः[27]।

---

१. एतानि A.

२. प्राज्ञः is suggested for प्राज्ञे ॥ धीमान् शास्त्रज्ञो जनः Sy.

३. श्वेतवर्णान्येतानि मरुदात्मकानि भूतानि Sy.

४. जानन्ती M. जानाति is suggested for जानन्ति। जानीयात्, किन्तु न सर्वे जना जानन्तीत्यर्थः Sy.

५ वृश्निः A. मरुतां जननी Sy.

६. ०न्यात्मीये A. मरुदात्मकानि भूतानि Sy.

७. ऊध ऊधनि अन्तरिक्षे स्वकीये जठरे वा Sy.

८. जभार is suggested for जहार ॥ बभार। एतानि चिकेतेति पूर्वेण सम्बन्धः Sy.

९. ये वै वयसो A.

१०. सा विट् is missing in M.

११. सा प्रजा मरुतः परिचरति Sy.

१२. शोभनपुत्रयुक्ता Sy.

१३. सा प्रजा मरुद्भिर्हेतुभिः Sy.

१४. चिरात् Sy.

१५. ०वन्ती is suggested for ०वन्तु।

१६. ०न्ति चे A. ०न्ती च is suggested for ०न्ति चेत् ॥ लभन्ती ? लभमाना Sy.

१७. धनं बलं वा Sy.

१८. या विपेता० A. यापि वैता० is suggested for या विवेता०।

१९. नित्यानि M.

२०. यातम् A.

२१. मरुतो यातव्यं गन्तव्यं देशम् Sy.

२२. यातृतमाः। अतिशयेन गन्तारः Sy.

२३. ०लंकरै० A. अलङ्कारैः is the other explanation of शुभा।

२४. ०मानाः is suggested for ०मान ॥ अतिशयेन शोभायुक्ताः Sy.

२५. कान्त्या Sy.

२६. संगतैः M. सङ्गच्छमानाः Sy.

२७. एवम्भूता भवन्तीति शेषः Sy.

**उग्रं व॒ ओजः॑ स्थि॒रा शवां॒स्यधा॑ म॒रुद्भि॑र्ग॒णस्तुवि॑ष्मान् ॥ ७ ॥**

उग्रं व[1]। उग्रम्[2]। युष्माकम्[3]। ओजः[4]। स्थिराणि च[5]। बलानि। अपि च। सोऽयं मरुद्भिर्गरख्यः[6][7]। सङ्घा[8] वा। वृद्धिमान्[9]।

**शु॒भ्रो व॒ः शु॒ष्मः॒ क्रुध्मी॒ मनां॑सि॒ धुनि॒र्मुनि॑रिव॒ शर्ध॑स्य धृ॒ष्णोः ॥ ८ ॥**

शुभ्रो वः[10]। शोभनशीलः[11]। युष्माकम्। शुष्म[12]। क्रोधनशीलानि[13]। मनांसि मनांसि[14]। कम्पयिता मरुद्गणः। मुनिरिव[15]। वेगस्य[16] शारीरस्य[17]। धृष्ण्योर्ध्रुवस्य[18][19] स्थावरादेर्यथा मुनिरुत्थितं वेगमुन्मूलयति तद्वद् वृक्षादीनिति।

**सने॑म्य॒स्मद्यु॑योत दि॒द्युं मा वो॑ दु॒र्मति॑रि॒ह प्रण॑ङ्नः ॥ ९ ॥**

सनेमि। पुराणम्। भवतामायुधम्। अस्मत्तः। पृथक्कुरुत। मा। वो[20] युष्माकम्। दुर्मतिः[21]। इह[22]। अस्मान्[23]। प्रणक्तुः[24]।

---

१. वा A. ओजः is missing in M.

२. उग्रम् is missing in M. उद्गूर्णं भवतु Sy.

३. हे मरुतः ! युष्माकम् Sy.

४. तेजः Sy.

५. कैश्चिदनपहर्तव्यानि भवन्तु Sy.

६. मरुताम् Sy.

७. ०ब्धः is suggested for ०ख्यः।

८. संघर वा A. संघो is suggested for संघा।

९. वृद्धिमान् भवतु Sy.

१०. शुभो व A.

११. हे मरुतः ! सर्वतः शोभमानम् Sy.

१२. शुष्मः is suggested for शुष्म ॥ बलम् Sy.

१३. ०शीलांसि A.
सङ्ग्रामेषु शत्रुहननार्थं क्रोधनशीलानि Sy.

१४. मानांसि A. One मनांसि is redundant.

१५. मननान्मुनिः स्तोता। स यथा बहुविधं शब्दमुत्पादयति एवं बहुविधशब्दस्योत्पादक इत्यर्थः Sy.

१६. बलवतो युष्मदीयस्य गणस्य Sy.

१७. शरी० M.

१८. Omitted in M. धृष्णोः is suggested for धृष्ण्योः।

१९. ध्रुवस्य is missing in A. धर्षणशीलस्य Sy.

२०. मा A. युष्मदीया Sy.

२१. क्रूरमतिः Sy.

२२. अस्मिन् कर्मणि Sy.

२३. अस्मात् A.

२४. प्रणक्नुः M. The reading is doubtful. प्रणक् is suggested for प्रणक्तुः ॥ व्याप्नोतु Sy.

**प्रिया वो नाम हुवे तुराणामा यत्तृपन्मरुतो वावशानाः ॥ १० ॥**

प्रिया[1] वः । त्वरमाणानाम्[2] । युष्माकम् । प्रियमाणाम्[3] । ह्वयामि[4] । हे मरुतः ! यन्मान[5] । कामयमानाः[6] प्रजाः[7] । आभिमुख्येन[8] । तर्पयति[9] ।

**स्वायुधास इष्मिणः सुनिष्का उत स्वयं तन्वः शुम्भमानाः ॥ ११ ॥**

स्वायुधासः । स्वायुधाः[10] । एषणशीलाः[11] । शोभनमरणाः[12] । अपि च । स्वयमेव । अङ्गानि[13] । शोभना[14] भवन्ति मरुत आभरणैः ।

**शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः ।**
**ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः ॥ १२ ॥**

शुची[15] वः । शुचीनि । युष्माकम् । हव्यानि[16] । मरुतः ! शुचीनाम्[17] । शुचिम्[18] । प्रेरयामि[19] । यज्ञम[20] । शुचिभ्यो[21] भवद्भ्यः । सत्येनैव । सत्यम् । सत्यस्पृशो[22] मरुतः । आयन्[23] । शुचिजन्मानः[24] । शुचयः[25] । शोधकाः[26] ।

---

१. प्रियां व A.
२. शत्रूणां हिंसकानां त्वरावतां वा Sy. कार्यं प्रति त्वरमाणानाम् BB.
३. प्रियमाणा M. The reading is doubtful. प्रियम् । नाम is suggested for प्रियमाणाम् ॥ प्रियेण नाम्ना Sy. प्रियाणि नामानि 'सुपां सुलुक्०' इति लुक् BB.
४. आह्वयामि Sy. आह्वयामि । पूर्ववत्सम्प्रसारणम् BB. ५. ०मानः A. नाम is suggested for ०मान ॥ यद्येनानेन Sy. आगमनं विशिनष्टि । यद् यस्मिन्नागमने BB.
६. कामयमानाः सन्तः Sy. ग्रामादिकं कामयमानाः BB. ७. यजमाना : BB.
८. अभि० A. आ इति आङ्पदश्रवणाद्योग्यं क्रियापदमध्याहार्यम् । आगच्छतेत्यर्थः BB.
९. तृप्तिं गच्छन्ति Sy. तृप्येयुरिति । लेटि वचनव्यत्ययः । तृपतिस्तौदादिकः । यद्वा तृप्तिस्तृपन् । औणादिको निप्रत्ययः । यद्यस्माद्यूयं तृप्तिं वावशानाः कामयमानाः स्थ तस्मादागच्छतेति, यजमानस्य वा तृप्तिं वावशाना यस्मात्तस्मादागच्छतेति । वशेर्यङ्लुगन्ताद् व्यत्ययेनात्मनेपदम् BB.
This stanza=TS. 2. 1. 11. 1.
१०. शोभनास्त्राः Sy. ११. गन्तारः Sy.
१२. ०नहर० M. ०नाभर० is suggested for नमर० ॥ शोभनालङ्काराः Sy.
१३. स्वकीयानि शरीराणि Sy.
१४. शोभमानाः is suggested for शोभनाः । शोभयन्तः Sy.
१५. मारुते पशौ 'शुची वो हव्या' इति वपाया अनुवाक्या । सूत्रितञ्च 'शुची वो हव्या मरुतः शुचीनां नू ष्ठिरं मरुतः' (ĀSS. 3. 7.) इति Sy. १६. हवींषि भवन्तु Sy.
१७. शुद्धानाम् Sy. १८. शुद्धम् Sy.
१९. अहं प्रेरयामि Sy.
२०. यज्ञम् is suggested for यज्ञम ॥ यागम् Sy. २१. प्रकाशमानेभ्यो युष्मभ्यम् Sy.
२२. उदकं स्पृशन्तो मरुतः Sy.
२३. आयण् A. गच्छन्ति Sy.
२४. याचिज० A. शोभनजननाः Sy.
२५. दीप्यमानाः Sy.
२६. शोकाः A. एवम्भूता गच्छन्तीत्यर्थः Sy.

अंसेष्वा मरुतः खादयो वो वक्षःसु रुक्मा उपशिश्रियाणाः ।
वि विद्युतो न वृष्टिभी रुचाना अनु स्वधामायुधैर्यच्छमानाः ॥ १३ ॥

अंसेषु । युष्माकम्[1] । अंसेषु[2] । खादयः[3] । भवन्ति[4] । वक्षस्सु च । रुक्माः[5] । उपश्रियमाणा[6] भवन्ति । विद्युतः[7] । इव[8] । वृष्टिभिः[9] । विरोचमानाः[10] । मरुतो[11] भवन्त्यलङ्कृतास्ते[12] । स्वधामुदकम्[13] । आयुधैः[14] । अनुनियच्छन्ति[15] ।

प्र बुध्न्या व ईरते महांसि प्र नामानि प्रयज्यवस्तिरध्वम् ।
सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् ॥ १४ ॥

[16]प्र बुध्न्या[17] वः । प्रेरयन्ति[18] । अन्तरिक्षभवान्युदकानि[19] । भवताम्[20] । बलानि[21] । ते यूयं प्रकर्षेण यष्टव्याः[22] । उदकानि[23] । वर्धयन्तः[24] । सहस्रसम्मितम्[25] । गृहभवम्[26] । भागम्[27] । एतम्[28] । गृहमेधीयाख्यम्[29] । जुषध्वम्[30] । मरुतः ।

---

१. हे मरुतः ! युष्मदीयेषु Sy.
२. स्कन्धप्रदेशेषु Sy.
३. अलङ्कारविशेषाः Sy.
४. भवन्ति seems to be the explanation of आ ॥ आ मुक्ता भवन्तीति शेषः Sy.
५. रुग्माः A. Sy. seems to read वक्षः for वक्षःसु and सुरुक्माः for रुक्माः in the padapāṭha. He explains वक्षः as उरःप्रदेशम् and सुरुक्माः as सुष्ठु रोचमाना हाराः Sy.
६. ०शिश्रिय० A. आश्रिताः Sy.
७. तडितः Sy.
८. यथा Sy.
९. वर्षैः सार्धम् Sy.
१०. ०मानो A.
११. मरुतः is missing in A. हे मरुतः ! Sy.
१२. ०स्ते मि A.
१३. ०कम्म् A.
१४. मेघताडनैः Sy.
१५. प्रयच्छन्तो विचरथेति शेषः Sy.
१६. गृहमेधीये 'प्रबुध्न्या वः' इति प्रधानस्य याज्या । सूत्रितञ्च—'प्र बुध्न्या व ईरते महांसीति पुष्टिमन्तौ विराजौ संयाज्ये' (ĀSS. 2. 18.) इति Sy.
१७. बुध्या A.
१८. प्रकर्षेण गच्छन्ति Sy.
१९. ०वाल्युद० A. अन्तरिक्षे भवानि Sy.
२०. युष्मदीयानि Sy.
२१. तेजांसि Sy.
२२. किञ्च हे प्रकर्षेण यष्टव्याः ! मरुतः ! यूयम् Sy.
२३. पांसूस्नयन्तीति नामान्युदकानि Sy.
२४. ०यत is suggested for ०यन्तः ।
२५. सहस्रसंख्याकम् । एकं भागं सहस्रियमिति । कथमाह । तथा च श्रूयते—'यावदेका देवता कामयते यावदेका तावदाहुतिः प्रथते नहि तदस्ति यत्तावदेव स्याद्यावज्जुहोति' इति Sy.
२६. ग्रह० A.
२७. दमे गृहे भवम् Sy.
२८. एतादृशम् Sy.
२९. गृहमेधिगुणेभ्यो युष्मभ्यं देयम् Sy.
३०. सेवध्वम् Sy.

**यदि स्तुतस्य मरुतो अधीथेत्था विप्रस्य वाजिनो हवीमन् ।**
**मक्षू रायः सुवीर्यस्य दात नू चिद्यमन्य आदभदरावा ॥ १५ ॥**

यदि स्तुतस्य । यदि[1] । स्तुतम्[2] । हे मरुतः ! जानीथ[3] । इत्थम्[4] । मेधाविनः[5] । हविष्मतः[6] । आह्वाने[7] । शीघ्रम्[8] । धनम् । सुवीर्यम्[9] । दत्त । क्षिप्रम् । यं रयिम् । अन्यः । आदभदादत्त[10] । अरावणीनां[11] धनमाहृत्यास्मभ्यं[12] दत्तेत्यर्थो भवति ।[13]

**अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः ।**
**ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीळिनः पयोधाः ॥ १६ ॥**

अत्यासः[14] । अश्वाः[15] । इव । ये । मरुतः । स्वञ्चनाः । यक्षा[16] इव दृश्यमाना यक्षदृशो[17] यक्षा इवालङ्कारङ्गानि ये । शुभयन्त[18] । मर्याः । ते । प्रासादस्थाः[19] । इव । शिशवो[20] रथस्थाः । शोभमानाः । वत्साः । इव अ । प्रकर्षेण[21] क्रीडितः[22] । उदकस्य दातारः[23] ।

**दशस्यन्तो नो मरुतो मृळन्तु वरिवस्यन्तो रोदसी सुमेके ।**
**आरे गोहा नृहा वधो वो अस्तु सुम्नेभिरस्मे वसवो नमध्वम् ॥ १७ ॥**

वशस्यन्तः । प्रयच्छन्तः[24] । अस्माकम्[25] । मरुतः । सुखयन्तु[26] । परिचरन्तः[27] । द्यावापृथिव्यौ ।

---

१. यस्मात् कारणात् Sy.
२. मदीयं स्तोत्रम् Sy.
३. अवगच्छथ Sy.
४. अनेन प्रकारेण Sy.
५. मेधाविनो मम सम्बन्धिनि Sy.
६. हविर्लक्षणान्नवतः Sy.
७. हविष्मति हविषा युक्ते स्तोत्रे क्रियमाणे सति Sy.
८. रायः रायं धनम् । द्वितीयार्थे षष्ठी Sy.
९. स्तवी० A. तस्मात् कारणात्, हे मरुतः ! यूयं शोभनपुत्रोपेतस्य Sy.
१०. आरणध्य(ध्यु M.)वाल A., M. अभिहन्यात्
११. अरातीनाम् is suggested for अरावणीनाम् ॥ शत्रुभूतोऽन्यो जनः Sy.
१२. धनामा० A.
१३. VM. ignores चित् । Sy. explains नू चित् together as नैव ।
१४. मरुद्भ्यः क्रीळिभ्यः सप्तकपालमित्यस्य अत्यासः इति याज्या । सूत्रितञ्च—'अत्यासो न ये मरुतः स्वञ्चो जुष्टो दमूनाः' (ASS 2. 18.) इति Sy.
१५. सततगामिनोऽश्वाः Sy.
१६. सुष्ठु गच्छन्तः Sy.
१७. यक्षस्योत्सवस्य द्रष्टारो मनुष्या इव Sy.
१८. शोभन्ते Sy.
१९. हर्म्ये स्थिताः Sy.
२०. कुमाराः Sy.
२१. ०र्षेणे A.
२२. ०डिनः is suggested for ०डितः ॥ क्रीडमानाः Sy.
२३. धारयितारो दातारो वा भवन्ति Sy.
२४. धनानि प्रयच्छन्तः Sy.
२५. अस्मभ्यम् Sy.
२६. मृळयन्तु । अस्मान् सुखयुक्तान् कुर्वन्तु Sy.
२७. स्वमहिम्ना पूरयन्तः Sy.

शोभमाने[1]। दूरे[2]। गोर्हन्ता[3]। मनुष्यस्य हन्ता च[4]। वधः[5]। युष्माकम्[6]। भवतु। सुखैः[7]। अस्मासु। हे वासयितारः[8] नमध्वम्[9]।

**आ वो होता जोहवीति सत्तः सत्राचीं रातिं मरुतो गृणानः ।**
**य ईवतो वृषणो अस्ति गोपाः सो अद्वयावी हवते व उक्थैः ॥ १८ ॥**

आवः[10]। आभिमुख्येन। भृशं ह्वयति[11]। होता[12]। होतृषदने[13] निषण्णः। युष्मान्। बहुत्वभञ्चन्तीम्[14]। भवतां रातिं[15] दानम्। मरुतः! ब्रुवाणः[16]। यो यजमानः[17]। गमनवतो जङ्गमस्य[18]। हे वर्षितारः[19]! भवति। गोपायिता[20], यज्ञेन भि[21] जगद् वर्धते[22]। स होता। अद्वयावी[23]। युष्मान्[24]। उक्थैः[25], द्वयरहितोऽद्वयान्[26] मरुत एवाह्वयति[27][28]।

**इमे तुरं मरुतो रामयन्तीमे सहः सहस आ नमन्ति ।**
**इमे शंसं वनुष्यतो नि पान्ति गुरु द्वेषो अररुषे दधन्ति ॥ १९ ॥**

इमे तुरम्[29]। इमे[30]। त्वरमाणं स्तोतारम्[31]। मरुतः[32]। रमयन्ति[33]। इमे हि[34][35]। भवताम्[36]। अभिभवितारः[37]।

---

१. शोभनमाना A. सुरूपे Sy.
२. अस्मत्तो दूरे भवतु Sy.
३. गवां मेघस्थानामुदकानां भेदकः Sy.
४. नृणां शत्रूणां हन्ता Sy.
५. आयुधम् Sy.
६. युष्मदीयम् Sy.
७. यूयमपि सुम्नैः सुखैः सह Sy.
८. हे वासकाः! मरुतः! Sy.
९. स्वयमेवाभिमुखा भवत Sy.
१०. मारुते पशौ 'आ वो होता' इत्येषानुवाक्या सूत्रितञ्च—'आ वो होता जोहवीति सत्तः प्र चित्रमर्कं गृणते तुराय' ( ĀŚS. 3. 7. ) इति Sy.
११. भृशमाह्वयति Sy.
१२. अस्मदीयो होता Sy.
१३. हातृष० A.
१४. सर्वतो गमनशीलम् Sy.
१५. त्वदीयं दानम् Sy.
१६. स्तुवन् Sy.
१७. होता Sy.
१८. गच्छतो व्यापारवतो यजमानस्य Sy.
१९. हे कामानां वर्षितारः! Sy.
२०. गोपायिता A. युष्मदाह्वाननिमित्तेन रक्षको भवति Sy.
२१. Missing in M. हि is suggested for भि।
२२. वन्धते A. २३. मायारहितः सन् Sy.
२४. Missing in M.
२५. भवन्ततः उक्त्वै A. स्तोत्रैः Sy.
२६. ०द्वया A. M. The passage द्वयरहितोऽद्वयान् should immediately follow अद्वयावी २७. ०यती A.
२८. VM. ignores हवते ॥ हवते स्तौति Sy.
२९. तरम् A. ३०. ईदृशः Sy.
३१. स्त्वर० A. कर्मसु क्षिप्रवन्तं यजमानम् Sy.
३२. मरुतौ A. ३३. क्रीडयन्ति Sy.
३४. इमे is missing in M. ३५. हे M.
३६. भवतारम् A. बलवताम् is suggested for भवताम् ॥ सहः सहसा बलेन Sy.
३७. अहि हविद्वारः A. सहसो बलवतो जनान् Sy.

विधेयीकुर्वन्ति । इमे कुर्वन्तीमे[1] । आशंसतम्[2] । भजमानस्य[3] । परिरक्षन्ति[4] । गुरु[5] च । द्वेषः[6] । अयजमानाय[7] । कुर्वन्ति ।

**इमे र॒ध्रं चि॑न्म॒रुतो॑ जुनन्ति॒ भृमिं॑ चि॒द्यथा॒ वस॑वो जु॒षन्त॑ ।**
**अप॑ बाधध्वं वृषण॒स्तमां॑सि ध॒त्त विश्वं॒ तन॑यं तो॒कम॒स्मे ॥ २० ॥**

इमे रध्रं[8] चित् । यथास्मान् । धनानि[9] । सेवन्ते । तथेमे । मरुतः । प्रेरयन्ति[10] । बाधकम्[11] । भ्रमणशीलम्[12] । च रक्ष[13] । प्रत्यक्षः शिष्टः, अपबाधध्वम्[14] । हे वृषणः[15] ! तमांसि । धत्त[16] । विश्वम्[17] । धनं[18] तनयम्[19] । तोकं[19] च । अस्मासु[20 21] ।

**मा वो॑ दा॒त्रान्म॑रुतो॒ निर॑राम॒ मा प॒श्चाद्द॑ध्म रथ्यो वि॒भा॒गे ।**
**आ नः॑ स्पा॒र्हे भ॑जतना वस॒व्ये॑ यदीं॑ सुजा॒तं वृ॑षणो वो॒ अस्ति॑ ॥ २१ ॥**

मा वः[22] । मा । वः । मानात्[23] । हे[24] मरुतः ! निरराम । निर्गमाम[25] । मा[26] च । पश्चात् । गच्छेम[27] । हे[28] रथवन्तः ! भवतां धनविभागे[29] । आभजत[30] । अस्मान् । स्पृहणीये । धनसमूहे । यत् । शोभनजननम्[31] । हे वृषणः ! युष्माकम् । विद्यते पसव्यम्[32 33] ।

---

१. कुर्वन्तीमे is redundant.
२. ०सकम् is suggested for ०सतम् ॥ स्तोतारम् Sy.
३. भाजमा० A. हिंसकात्पुरुषात् Sy.
४. परिरक्षन्ति । गुरु च । द्वेषः । अ are missing in M. नितरां पालयन्ति Sy.
५. महत् Sy. ६. अप्रियम् Sy.
७. हविरप्रयच्छते जनाय Sy.
८. रन्ध्रं A. समृद्धमपि जनम् Sy.
९. वसवो वासका देवा युष्मान् यथा जुषन्त कामयेरन् Sy. १०. प्रर० A.
११. समृद्धमपि जनम् Sy.
१२. भ्रमणशीलमपि दरिद्रं जुनन्ति प्रेरयन्ति Sy.
१३. रक्षः is suggested for रक्ष ।
१४. ०बाधध्वम् A. नाशयत Sy.
१५. हे कामानां वर्षितारः ! ते यूयम् Sy.
१६. प्रयच्छत Sy. १७. बहुलम् Sy.
१८. धनयं A. धनं is redundant. पौत्रम् Sy.
१९. पुत्रम् Sy. २०. अस्मभ्यम् Sy.
२१. VM. ignores चित् twice ॥ चित् अपि Sy. २२. युष्माकम् Sy.
२३. दानात् is suggested for मानात् ।
२४. मानान् । धे A.
२५. वयं मा निर्गमाम । यूयमस्मान् परित्यक्त्वाऽन्येभ्यो धनं मा दत्तेत्यर्थः Sy.
२६. मा is omitted by A.
२७. दध्यतिर्गतिकर्मा । वयं पश्चाद्भागिनो मा भूम । यूयं प्रथममस्मभ्यमेव दत्तेति यावत् Sy.
२८. हे is missing in A.
२९. युष्मदीयस्य धनस्य दाने Sy.
३०. भागिनः कुरुत Sy.
३१. शोभनजनम्, यद्वसव्यमस्ति तस्मिन् भागिनः कुरुतेति सम्बन्धः Sy.
३२. ०सव्यम् A. वसव्यम् is suggested for पसव्यम् ॥ तस्मिन् भागिनः कुरुतेति सम्बन्धः
३३. VM. ignores ईम् ॥ ईमिति पूरणः Sy.

**सं यद्धनन्त मन्युभिर्जनासः शूरा यह्वीष्वोषधीषु विक्षु ।**
**अध स्मा नो मरुतो रुद्रियासस्त्रातारो भूत पृतनास्वर्यः ॥ २२ ॥**

सं यद्धनन्त । सङ्गच्छन्ते । यदा । क्रोधैः[1] । जनाः[2] । शूराः[3] । महतीषु । ओषधीषु[4] । निवेशयित्रीषु[5] । ओषधीनां हि पक्षाणां[6] लाभार्थं युध्यन्ते । स[7] । स्मा[8] । नः[9] । मरुतः[10] ! रुद्रपुत्राः ! रक्षितारः[11] । भवत । सङ्ग्रामेषु[12] । अभिगन्तारः[13] ।

**भूरि चक्र मरुतः पित्र्याण्युक्थानि या वः शस्यन्ते पुरा चित् ।**
**मरुद्भिरुग्रः पृतनासु साळ्हा मरुद्भिरित्सनिता वाजमर्वा ॥ २३ ॥**

भूरि चक्र । भूरीणि[14] । अहं[15] कृतवान्[16] । पितृभिः कृतानि[17] । उक्थानि[18] । यानि[19] । वः[20] । शस्यन्ते[21] । गतेऽपि काले[22] । मरुद्भिः[23] । उद्गूर्णो[24] वीरः । पृतनासु[25] । शत्रूणां सोढा भवति[26] । मरुद्भिः । एव । सम्भक्ता । सङ्ग्रामम्[27] । अश्वः[28] स्तोतुः[29] ।

---

१. कोपैरभिमानैर्वा Sy.
२. जजाना A.
३. विक्रान्ताः Sy.
४. ०धीष्ठ Sy.
५. विक्षु प्रजासु च जेतव्यासु Sy.
६. पक्षानां A.
७. The reading is quite unsatisfactory. अध is suggested for it ॥ तदानीम् Sy.
८. स्म is suggested for स्मा ।
९. अस्माकम् Sy. १०. हे मरुतः ! यूयम् Sy.
११. रक्षकाः Sy.
१२. युद्धेषु Sy.
१३. ०न्तारम् A.
अर्योऽरेः शत्रोः सकाशात् Sy.
१४. भूरिणि A. बहूनि Sy.
१५. अहंकृ० A.
१६. कृतवन्तो भवत Sy.
१७. अस्मत्पितृसम्बन्धीनि धनदानादीनि कर्माणि Sy.
१८. उत्थानि A. प्रशस्यानि यानि कार्याणि Sy.
१९. कर्माणि Sy.
२०. वः is omitted by M. युष्माकम् Sy.
२१. प्रशस्यन्ते प्रख्यापयन्ते तानि चक्रेति सम्बन्धः Sy.
२२. VM. seems to explain पुराचित् as गतेऽपि काले Sy. explains पुरा चित् as पूर्वकालेऽपि ।
२३. युष्माभिर्हेतुभिः Sy.
२४. उद्गीर्णो M. ओजस्वी Sy.
२५. पृथुतानां A. The commentary on this stanza from here is missing in M. युद्धेषु Sy.
२६. अभिभविता Sy.
२७. वाजमन्नम्, युद्धं वा Sy.
२८. स्तोत्रैरभिगन्ता यद्वाश्वः Sy.
२९. VM. ignores मरुतः ।

**अ॒स्मे वी॒रो म॑रुतः शु॒ष्म्य॑स्तु॒ जना॑नां॒ यो असु॑रो विध॒र्ता ।**
**अ॒पो येन॑ सुक्षि॒तये॒ तरे॒माध॒ स्वमोको॑ अ॒भि वः॑ स्याम ॥ २४ ॥**

अस्मे वीरः[1] । अस्माकम् । वीरः[2] । हे मरुतः ! बलवान् । अस्तु[3] । जनानाम्[4] । यः । बलवान्[5] । विभर्ता[6] भवति । व्याप्तः[7] । येन[8] । शोभनाय[9] । निवासाय । वीरेण तरेम[10] युद्धम् । अथ[11] । युष्माकम्[12] । स्वभूतम्[13] । ओकः[14] । वयमभिभवेम[15] यज्ञगृहं[16] प्राप्नुयामेति ।

**तन्न॒ इन्द्रो॒ वरु॑णो मि॒त्रो अ॒ग्निराप॒ ओष॑धीर्व॒निनो॑ जुषन्त ।**
**शर्म॑न्त्स्याम म॒रुता॑मु॒पस्थे॑ यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ २५ ॥**

[तन्न इन्द्रः][17] ।

## VII. 57.

**मध्वो॑ वो॒ नाम॒ मारु॑तं यजत्राः॒ प्र य॒ज्ञेषु॒ शव॑सा मदन्ति ।**
**ये रे॒जय॑न्ति॒ रोद॑सी चिदु॒र्वी पिन्व॒न्त्युत्सं॒ यदया॑सुरु॒ग्राः ॥ १ ॥**

[18-]मध्वो वः । स्तोतारः[19] । युष्माकम्[20] । मारुतम्[21] । नाम[22] मरुच्छब्दमित्यर्थः । हे यष्टव्याः[23] ! प्रमदन्ति[24] ।

---

१. The passage beginning with अस्मे वीरः and ending with जनानाम् is missing in A.
२. पुत्रः Sy. ३. भवतु Sy.
४. शत्रूणाम् Sy.
५. प्रज्ञावान् यः Sy.
६. विभक्ता A. विधारकः Sy.
७. अप आप्नुवतः शत्रून् Sy.
८. पुत्रेण Sy.
९. सुष्ठु निवासाय Sy.
१०. स बलवानस्त्विति पूर्वेणान्वयः Sy.
११. अपि च Sy.
१२. युष्मदीया वयम् Sy.
१३. आत्मीयम् Sy.
१४. स्थानम् Sy.
१५. अभितिष्ठेम Sy.
१६. ग्रहं A.
१७. The *pratika* is supplied by the Editor. This stanza has already been explained, see RV. 7. 34. 25. पूर्वं व्याख्यातेयम् । अक्षरार्थस्तु । इन्द्रादयो देवा अस्मदीयं स्तोत्रं सेवन्ताम् । महतामुपस्थाने वर्तमाना वयं सुखे स्याम । हे मरुतः ! यूयं सर्वदास्मानविनाशैः पालयत Sy.
१८. 'मध्वो वः' इति सप्तर्चं द्वितीयं सूक्तं वशिष्ठस्यार्षं त्रैष्टुभं मरुद्देवताकम् । 'मध्वः सप्त' इत्यनुक्रान्तम् (KSA. 36. 57. p. 26.) । दशरात्रे षष्ठेऽहन्याग्निमारुत इदं मारुतनिविद्धानम् । सूत्रितञ्च—'मध्वो वो नाम स प्रत्नथेत्याग्निमारुतम्' (ASS. 8.8.) इति Sy.
१९. मादयितारः स्तोतारः Sy.
२०. युष्मदीयम् Sy.
२१. मरुतम् A. मरुत्सम्बन्धि Sy.
२२. नाम ममरु० A. नामधेयम् Sy.
२३. हे यजनीयाः ! मरुतः ! Sy.
२४. प्रकर्षेण स्तुवन्ति । उच्चैः स्तुवन्तीत्यर्थः Sy.

यज्ञेषु[१]। बलेन सह स्तुवन्ति[२]। ये[३]। कम्पयन्ति। द्यावापृथिव्यौ। अपि। विस्तीर्णे। पिन्वन्ति च। मेघम्। यदा[४]। गच्छन्ति[५]। उद्गूर्णाः, उत्तरोऽर्धः[६] परोक्षः।

**निचेतारो हि मरुतो गृणन्तं प्रणेतारो यजमानस्य मन्म।**
**अस्माकमद्य विदथेषु बर्हिरा वीतये सदत पिप्रियाणाः॥ २॥**

निचेतारः। स्वस्मिन्नायतने स्थापयितारः[७]। हि[८]। मरुतः। स्तुवन्तो[९] द्वितीया च द्रष्टा[१०]। प्रणेता[११]। अस्य यजमानस्य। अभिलषितम्[१२]। [१३] अस्माकम्। अद्य[१४]। यज्ञेषु। बर्हिः[१५]। आसीद[१६]। सोमपानाय[१७]। प्रीयमाणाः[१८]।

**नैतावदन्ये मरुतो यथेमे भ्राजन्ते रुक्मैरायुधैस्तनूभिः।**
**आ रोदसी विश्वपिशः पिशानाः समानमञ्ज्यञ्जते शुभे कम्॥ ३॥**

नैतावत्। न। एतावत्। ये केचन राजन्ते[१९]। मरुतः। यथा[२०]। इमे। भ्राजन्ते[२१]। रुक्मैराभरणैः[२२]। अङ्गैश्च[२३]। द्यावापृथिव्यौ। विश्वान् विशः[२४]। आभिमुख्येन। पिशानाः[२५], पिपिशिराश्लेषकर्मा[२६]; द्यावापृथिव्यौ

---

१. यागेषु Sy.

२. मरुतः Sy.

३. विद्वन्ति A. विदन्ति M. किञ्च वर्षयन्ति Sy.

४. ये मरुतः Sy.

५. यान्ति सर्वत्र गच्छन्ति। तेषां मरुतां युष्माकं नाम प्रमदन्तीति पूर्वेणान्वयः Sy.

६. उत्तरोऽर्धर्चः is suggested for उत्तरोऽर्धः।

७. मृगयमाणाः Sy.

८. भि M. खलु Sy.

९. ये मरुतः गृणन्तं स्तुवन्तं जनम् Sy.

१०. द्रष्टा A. भ्रष्टा M. द्रष्टा is suggested for द्रष्टा।

११. ०तारस्य A. प्रणेतारः is suggested for प्रणेता।

१२. अपि च यजमानस्य मन्म अभिमतं कामम् Sy.

१३. अपरोऽर्धर्चः प्रत्यक्षकृतः। हे मरुतः! यूयम् Sy.

१४. अस्मिन् दिवसे Sy.

१५. बहि A. बर्हिषि कुशमये Sy.

१६. आसीदत is suggested for आसीद॥ उपविशत Sy.

१७. सोमस्य भक्षणाय Sy.

१८. त्रियमाणा M. प्रीयमाणाः सन्तः Sy.

१९. यत्परिमाणं धनादिकं ददति अन्ये मरुद्व्यतिरिक्ता देवा एतावद्धनादिकं न ददुरित्यर्थः Sy.

२०. ईदृशाः Sy.

२१. सर्वदा भासन्ते। कश्चिदेकवाक्यतामाह। यथेमे मरुतो रुक्मादिभिर्भ्राजन्ते नैतावदेतद्व्यतिरिक्ता भ्राजन्त इति Sy.

२२. रुक्मैः A. रोचमानैराभरणैः Sy.

२३. आत्मीयैः केवलैरङ्गैः Sy.

२४. विश्वंत्विशः A. विश्वान् पिशः is suggested for विश्वान् विशः॥ व्याप्तदीप्तयः। एवम्भूता मरुतः Sy. २५. प्रकाशयन्तः Sy.

२६. विशाना विविशि० A. पिशि० is suggested for पिपिशि०॥

सर्वं एव व्याप्नुवाना इत्यर्थस्त इमे । समानम्[1] । आभरणमात्मशरीरेषु[2] । अञ्जन्ते[3] । शोभनार्थम्[4][5] ।

**अधृक्सा वो मरुतो दिद्युदस्तु यद्व आगः पुरुषता कराम ।**
**मा वस्तस्यामपि भूमा यजत्रा अस्मे वो अस्तु सुमतिश्चनिष्ठा ॥ ४ ॥**

अधक्सा[6] वः । पृथगस्मत्तो[7] दूरे । तत्[8] । वः[9] । मरुतः ! दिद्युदायुधम्[10] । भवतु । यद्यपि वयम् । युष्माकम् । पुरुषत्वेन[11] बलानिश्वेन[12] । आग[13] । कूर्मः[14] । मा । युष्माकम्[15] । तस्यां दिद्युति[16] । अपिभिभूमावि-भवोऽव्ययः[17] ? हे[18] यष्टव्याः ! अस्मासु[19] । युष्माकम्[9] । अस्तु । सुमतुम्[20] । अतिशयेनान्नवती[21] ।

**कृते चिदत्र मरुतो रणन्तानवद्यासः शुचयः पावकाः ।**
**प्र णोऽवत सुमतिभिर्यजत्राः प्र वाजेभिस्तिरत पुष्यसे नः ॥ ५ ॥**

कृते चित् । कृते[22] । चित्[23] । अत्र[24] स्तोमे । मरुतः । रमन्त[25] । अनवद्याः[26] । शुचयः[27] । पावकाः[28] । प्रापत[29] । अस्मान् । सुमतिभिः[30] । हे यष्टव्याः ! प्रवर्धयत[31] । अस्मान् । अन्नैः । पोषणाय[32] ।

---

१. सदृशरूपम् Sy.
२. आहर० A.
३. अञ्जते is suggested for अञ्जन्ते ॥ स्वकीयावयवेष्वभिव्यक्तीकुर्वन्ति Sy.
४. शोभायै Sy.
५. VM. ignores आयुधैः and कम् ॥ आयुधैः स्वकीयास्त्रैः । कमिति पूरणः Sy.
६. ०धत्सा A.
७. ०त्ते A.
८. प्रसिद्धा Sy.
९. युस्मदीया Sy.
१०. दिद्युदा० A. हेतिः Sy.
११. पुरुषतया मनुष्यत्वेन । मनुष्याणां हि प्रमादः सुलभ इत्यर्थः Sy.
१२. बलानिश्चेन A. बलानिश्चयेन is suggested for बलानिश्वेन ॥
१३. आगः is suggested for आग ॥ अपराधम् Sy.
१४. कुर्मः is suggested for कूर्मः ।
१५. युष्मदीयायाम् Sy.
१६. ं दिद्युति । अ is omitted by M.
१७. ०भिभ्रमा विभ० A. The reading is doubtful. ईषदपि (मा) भूम Sy.
१८. हि M. हे यजनीयाः ! Sy.
१९. अस्मासु अस्तु Sy.
२०. सुमतिः is suggested for सुमतुम् ॥ अनुग्रहबुद्धिः Sy.
२१. अन्नवत्तमा । अतिशयेनान्नप्रदेत्यर्थः Sy.
२२. अस्मदीये यज्ञकर्मणि Sy.
२३. एव Sy.
२४. अस्मिन् Sy.
२५. अरमन्त M. रमन्ताम् Sy.
२६. अवदवद्याः A. अनिन्दिताः Sy.
२७. दीप्तियुक्ताः Sy.
२८. शोधकाः एवम्भूता इति Sy.
२९. प्रावत is suggested for प्रापत ॥ प्रकर्षेण पालयत Sy.
३०. अनुग्रहबुद्धिभिः सुष्टुतिभिर्हेतुभिर्वा Sy.
३१. किञ्च हे मरुतः ! यजनीया यूयम् Sy.
३२. पोषार्थम् Sy.

उत स्तुतासो मरुतो व्यन्तु विश्वेभिर्नामभिर्नरो हवींषि ।
ददात नो अमृतस्य प्रजायै जिगृत रायः सूनृता मघानि ॥ ६ ॥

उत स्तुतासः । अपि च । स्तुताः[1] । मरुतः । भक्षयन्तु । सर्वैः । नामभिरीदृङ् न चान्यां दृष्टे चेत्या-[2][3] दिभिः स्तुताः । नेतारः । हवींषि । दत्त । अस्माकम्[4] । अन्नम्[5] । प्रजार्थम्[6] । उच्चारयतः[7] । सूनृतानि च[8] वचनानि[9] । मंहनीयानि[10] ।

आ स्तुतासो मरुतो विश्व ऊती अच्छा सूरीन्त्सर्वताता जिगात ।
ये नस्त्मना शतिनो वर्धयन्ति यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

आ[11] स्तुतासः । आगच्छत । स्तुताः[12] । हे मरुतः ! सर्वेऽपि यूयम्[13] । रक्षणार्थम्[14] । स्तोतॄन् । प्रति[15] । सर्वस्मिन्नपि काले[16] । ये । अस्मान् । आत्मनैव । बहुधनाः[17] । वर्धयन्ति त इति ।

## VII. 58.

प्र साकमुक्षे अर्चता गणाय यो दैव्यस्य धाम्नस्तुविष्मान् ।
उत क्षोदन्ति रोदसी महित्वा नक्षन्ते नाकं निर्ऋतेरवंशात् ॥ १ ॥

प्र[18] साकम्[19] । प्रोच्चारयत स्तुतीः । सहोक्षणं[20] कुर्वते । गणाय[21] । यः । दैव्यस्य[22] । स्थानस्य[23] । बल-

---

१. एवमस्माभिः स्तुताः Sy.
२. उदकैः सहिताः Sy.
३. ०दृर्न चान्यां दृष्टे च त्या० A. चान्यो दृष्टश्चेत्या० is suggested for चान्यां दृष्टे चेत्या० ।
४. शेषः प्रत्यक्षस्तुतः । हे मरुतः ! न अस्मदीयायै Sy.
५. अमृतमुदकम् Sy.
६. सन्ततये Sy.
७. उचारयत A. ०यत is suggested for ०यतः ॥ उद्गिरत प्रयच्छतेत्यर्थः Sy.
८. सूनृतानि सुष्ठु नृत्यन्ति शोभनयोग्यानि Sy.
९. VM. ignores रायः ॥ Sy.explains रायः probably as तथा हविषो दातुर्यजमानस्य Sy.
१०. मघानि धनानि Sy. ११. अ A.
१२. एवमस्माभिः स्तुताः Sy.
१३. सर्वेति पी A. १४. रक्षया सहिताः Sy.
१५. अभिलक्ष्य Sy. १६. सर्वतातौ यज्ञे Sy.
१७. शतसङ्ख्याकान् । यथा वयं पुत्रपौत्रादिभिः शतिनो भवेम तथा वर्धयन्तीत्यर्थः । ते यूयमा जिगातेति पूर्वेण सम्बन्धः । एवम्भूता मरुतो यूयं सर्वदास्मान् पालयत Sy.
१८. 'प्र साकमुक्षे' इति षड्ऋचं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मरुद्देवताकम् । अनुक्रान्तञ्च— 'प्र साकमुक्षे षट्' (KSA. 36. 58. p. 26.) इति । गतो विनियोगः Sy.
१९. हे स्तोतारः ! यूयम् Sy.
२०. सभोक्षणं A. सन्ततं अविश्रे Sy.
२१. मरुत्समूहाय Sy.
२२. देव्यस्य A. देवसम्बन्धिनः Sy.
२३. स्वर्गाख्यस्य स्थानस्य Sy.

वान्[1] । सर्वेभ्यो देवेभ्यो बलवत्तरः । अपि च[2] । शकलीकुर्वन्ति[3] । द्यावापृथिव्यौ । महत्त्वेन[4] । व्याप्नुवन्ति च । नाकं[5] लोकम् । अस्याः पृथिव्या आरभ्य[6] । वंशरहितेनान्तरिक्षेण[7] ।

**जनूश्चिद्वो मरुतस्त्वेष्येण भीमासस्तुविमन्यवोऽयासः ।**
**प्र ये महोभिरोजसोत सन्ति विश्वो वो यामन्भयते स्वर्दृक् ॥ २ ॥**

जनूश्चित्[8] । जन्मानि[9] । युष्माकम्[10] । मरुतः[11] ! दीप्तेन रुद्रेण[12] । हे भीमाः[13] ! बहुक्रोधाः[14] ! गमनशीला[15]! प्रभवन्ति । ये । महद्भिस्तेजोभिः[16] । बलेन च सह । तेषां युष्माकम्[17] । गमने । सर्वः । अपि[18] । स्वदृक्[19] । बिभेति[20] दिवो दर्शनात् वनस्पति स्वगृह्णन्[21], वनस्पते याह्यर्धं[22] पश्यन्त्युत्तिष्ठत[23][24] ?

**बृहद्वयो मघवद्भ्यो दधात जुजोषन्निन्मरुतः सुष्टुतिं नः ।**
**गतो नाध्वा वि तिराति जन्तुं प्र णः स्पार्हाभिरूतिभिस्तिरेत ॥ ३ ॥**

बृहद्वयः[25] । बृहत्[26] । अन्नम् । हविष्मद्भ्याम्[27] । प्रयच्छत ऋत्विजः ! सेवन्ते[28] । एव । अस्माकम्[29]

---

१. वृद्धिमान् भवति । सर्वेभ्यो देवेभ्यः प्रवृद्ध इत्यर्थः। तस्मै गणायेति पूर्वेण सम्बन्धः Sy.
२. अपि च मरुतः Sy.
३. भञ्जन्ति Sy.
४. स्वकीयेन महत्त्वेन सहिताः Sy.
५. स्वर्गम् Sy.
६. ०भ्या A. तथा भूमेः Sy.
७. अन्तरिक्षात् Sy.
८. ज आश्चित् A.
९. जन्म Sy.
१०. ०क A.
११. मुरतः A. एवम्भूता हे मरुतः ! Sy.
१२. दीप्तेन रुद्रेण बभूवेति शेषः Sy.
१३. ह्रीमाः A.
१४. प्रवृद्धमतयः Sy.
१५. गन्तारः, इति त्रीणि सम्बोधनानि Sy.
१६. मरुद्भिः M.
१७. ०कं व A.
१८. अपि seems to be an explanation of चित् ।
१९. स्वर्दृक् is suggested for स्ववृक् ॥ सूर्यस्य द्रष्टा सर्वो जीवसमूहः। यद्वा स्वरन्तरिक्षम्, तत्पश्यतीति वृक्षः स्वर्दृक् । सर्ववोत्तिष्ठन्नित्यर्थः Sy.
२०. विभेति द्विवो A.
२१. ०ति स्वगवन् M. ०तिः स्वर्दृग् is suggested for ०ति स्वगृह्णन् ॥ The passage दिवो....स्वर्दृक् should immediately follow स्वर्दृक् and precede बिभेति
२२. र्यां A.
२३. त्तिष्ठतः M. The passage is doubtful. It seems to be a quotation. or वनस्पतिर्ह्यूर्ध्वं पश्यत्युत्तिष्ठन्निति is suggested for वनस्पते याह्यूर्ध्वं पश्यन्त्युत्तिष्ठत ।
२४. VM. ignores उत ॥ उत अपि च Sy.
२५. ०यम् A.
२६. महत् Sy.
२७. ०द्भ्यः is suggested for ०द्भ्याम् ॥ हविर्लक्षणान्नवद्भ्योऽस्मभ्यम् Sy.
२८. सेवन्ताम् Sy.
२९. अस्मदीयाम् Sy.

मरुतः । सुष्टुतिम्[1] । सोऽयं मरुद्गणो यथा[2] । गतः[3] । अध्वा[4] । विरमयति[5] । जन्तुमेवं विरमयति[6] लब्धकाममजिगमीषुं[7] करोति । सोऽस्मात्[8] । स्पृहणीयैः[9] । रक्षणैः[10] । प्रवर्धयेदिति[11] ।

**यु॒ष्मोतो॒ विप्रो॑ मरुतः शत॒स्वी यु॒ष्मोतो॒ अर्वा॒ सहु॑रिः सह॒स्री ।**
**यु॒ष्मोतः॑ स॒म्राळु॒त ह॑न्ति वृ॒त्रं प्र तद्वो॑ अस्तु धूतयो दे॒ष्णम् ॥ ४ ॥**

युष्मोतः[12] । युष्माभी रक्षितः । हे मरुतः ! स्तोता । बहुधनो[13] भवति । युष्मोतः[14] । अश्व[15] । सहनशीलः[16] । सहस्रमाहरति[17] शत्रुभ्यः । युष्मोतो नशी[18] रजा । अपि च । भवन्ति[19] । शत्रुम् । सम्राट्[20] भवन् । प्रास्तु[21] । त[22] । युष्माकम्[23] । दानमस्मासु[24] । हे कम्पयितारः[25] !

**ताँ आ रु॒द्रस्य॑ मी॒ळ्हुषो॑ विवासे कु॒विन्नंस॑न्ते म॒रुतः॒ पुन॑र्नः ।**
**यत्स॒स्वर्ता॑ जिहीळि॒रे यदा॒विर॒व तदेन॑ ईमहे तु॒राणा॑म् ॥ ५ ॥**

ताँ आ रुद्रस्य[26] । तान्[27] । परिचरामि[28] । सुरुद्रस्य सूनून्[29] । सेवतून्[30] । बहु[31] । अस्माकम्[32] ।

---

१. शोभनं स्तोत्रम् Sy. २. न । यद्वा नेति चार्थे Sy. ३. मरुद्भिः प्राप्तः Sy. ४. अर्ध्वा A. मार्गः Sy. ५. वि तिराति आहन्ति, उदकेनाप्याययत्येव । यद्वा वितिरतिर्वर्धनार्थः । मरुद्भिर्गतो मार्गश्च जन्तुं वर्धयति Sy.
६. प्राणिनम् Sy. ७. ०मिषु A.
८. अस्मात् M. अस्मान् is suggested for अस्मात् ॥ तथा नोऽस्मान् Sy.
९. स्पृहणीयाभिः Sy. १०. रक्षाभिः Sy.
११. प्रवर्धयते Sy. १२. ०ता A. १३. शतसङ्ख्योपेतधनवान् भवति Sy. १४. युष्मातः M.
१५. अश्वः A. अश्वः is suggested for अश्व ॥ अभिगन्ता Sy. १६. शत्रूणामभिभविता स्तोता Sy. १७. सहस्रधनवान् भवति Sy.
१८. युष्मतो न शी रता M. ०तोऽनश्वो राजा is suggested for ०तो न शी रजा ॥
१९. हन्ति is suggested for भवन्ति ॥ युष्मद्रक्षको हिनस्ति Sy.
२०. साम्राज्ययुक्तो भवति Sy.
२१. प्रस्तु A. प्रभूतं भवतु Sy.
२२. तत् is suggested for त ॥ प्रसिद्धम् Sy.
२३. युष्माभिर्दत्तम् Sy. २४. धनम् Sy.
२५. हे धूतयः ! कम्पयितारो मरुतः ! Sy.
२६. वसिष्ठस्येदमार्षम् Dur. वसिष्ठस्यार्षम् SKN. २७. तां M. तान् is suggested for तात् ॥ तान् प्रकृतान् SKN.
२८. अहं होता परिचरामि Sy. आभिमुख्येन स्थित्वा परिचरामि Dur. विवासतिः परिचर्यायाम् ॥ आभिमुख्येन परिचरामि SKN.
२९. सु seems to be unnecessary.
३०. सुनूत् A. ईश्वरस्य पुत्रान् Sy. किंलक्षणान् पुनर्मरुत आविवासे ? रुद्रस्य, इन्द्रस्य स्वभूतानाप्तान्वा । अथवा मीळहुष इति रुद्रविषयं षष्ठ्येकवचनान्तं स्यात् । मीळहुषो रुद्रस्य स्वभूतानिति Dur.
३१. सेवतून् A. कामानां वर्षितुः Sy. अहं मीळहुषो मरुतो वर्षस्य सेवतून् धनवतो बलवतो वा Dur. सेवतुर्धनवतो वा पुत्रानिति शेषः । कुत एतत् ? ऋग्वेदे 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' (RV. VI. 66. 3) इत्यादौ मन्त्रान्तरे दर्शनात् SKN.
३२. बहुकृत्वः Sy. कस्मात् ? यस्मात् कुविद् बहुवचनान्तम् SKN. अस्मभ्यम् Sy. अस्मान् प्रति Dur.

नमयन्ति[1] । मरुतः[2] । पुनः[3] । सस्वरितामित्यन्तर्हितनामात्र तु नु स्वर्ते त्रि दष्टं[4] ? यत्[5] । अन्तर्हितं[6] पापम् । ऋध्यन्ति[7] मरुतः यच्च । आविभूतम्[8] । अवेमहे[9] । तत्[10] । एनः[11] । मरुतां क्षिप्राणां[12] हृद्गतमवगच्छन्त्विति[13] याचामहे[14] ।

**प्र सा वाचि सुष्टुतिर्मघोनामिदं सूक्तं मरुतो जुषन्त ।**
**आराच्चिद्द्वेषो वृषणो युयोत यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥**

प्र सा[15] । प्रोक्ता[16] । सेयम् । सुष्टुतिः[17] । हविष्मताम्[18] । इदम्[19] । सूक्तम् । मरुतः । सेवन्ताम्[20] । अस्मत्तो दूरे[21] । वृषणः[22] ! पापम्[23] । पृथक्कुरुत[24] [25] ।

---

१. अभिमुखीभवन्तु Sy. वर्षाद्युपकारेण. . . नमन्ते प्रह्वीभवन्ति Dur. नमन्ते, वर्षाद्युपकारेण प्रह्वीभवन्ति SKN.

२. कस्मात् पुनस्तानहं परिचरामि ? यस्मात्ते मरुतः Dur.

३. भूयः । कुविच्छब्देनैव पुनःशब्दार्थस्य लब्धत्वात् पुनःशब्दग्रहणं किमर्थम् ? आदरार्थम् Sy. अन्तर्णीतवीप्सार्थोऽयं पुनःशब्दः । पुनः पुनः SKN.

४. ०मात् तु नु स्पर्ते त्रिदष्टं A. सस्वरित्यन्तर्हितनाम, अत्र तु स्वरतेस्तृचि रूपम् or अत्र तु सस्पर्तेति दृष्टम् is suggested and it refers to अन्तर्हितं पापम् । It should therefore, come immediately before अन्तर्हितं पापम् ।

५. यदेनेनसा Sy.

६. अन्तर्हितेनाप्रकाशेन Sy. यच्छरीरगतमेनः Dur. सस्वरित्यन्तर्हितनाम । ता इति 'तनु विस्तारे' एतस्य रूपम् । अन्तर्हितमेव तात्रमानमप्रकाशमानमेवेत्यर्थः SKN.

७. ऋध्य A. ऋध्येयुः Sy. लज्जयन्ति Dur. SKN. ८. आविर्भूतम् is suggested for आविभूतम् ॥ प्रकाशेन Sy. यच्च प्रकाशम् Dur., SKN.

९. स्तोत्रेण वयमपनयामः Sy. उभयलक्षणमपि, अवयजेमहि, निर्णुदेमहि, इत्येतत् 'ईमहे' अनेन परिचारेणाराध्यैतान् मरुत इति Dur. अवेत्येषोऽपेत्येतस्य स्थाने । ईमह इति 'इण् गतौ' इत्यस्यान्तर्णीतण्यर्थस्य रूपम् । अपगमयेम नाशयेमेत्यर्थः SKN.

१०. एवम्प्रकारमुभयलक्षणमपि Dur. तदुभयमपि SKN. ११. अपराधम् Sy. पापम् SKN.

१२. ०णा A. तदेषां मरुतां तुराणां त्वरमाणानां प्रसादेन Dur. सर्वस्य स्वशत्रोस्तूर्णां ? त्वरमाणानां मरुतां प्रसादेनेति शेषः SKN.

१३. न्त्वि is missing in A. ०मपगच्छन्त्विति is suggested for ०मवगच्छन्त्विति ।

१४. The passage हृद्गत. . . .याचामहे refers to अवेमहे. Therefore it should immediately follow. अवेमहे । N. 4. 15.; SKN. II. 233, 234.

१५. प्र सा is written twice in M.

१६. अस्माभिः प्रोक्तासीत् Sy.

१७. सुष्ठुतीः A. या शोभना स्तुतिरस्मिन् सूक्ते कृता सा स्तुतिः Sy.

१८. धनवतां मरुतां सम्बन्धिनीम् Sy.

१९. ईदृग्भूतम् Sy.

२०. The commentary from म, अस्म onwards is missing in A.

२१. दूरात् Sy.

२२. हे कामानां वर्षितारः ! यूयम् Sy.

२३. द्वेषांसि शत्रून् Sy.

२४. अस्मत्तः पृथक्कुरुत । यूयं नोऽस्मान् स्वस्तिभिः सर्वदा रक्षत Sy.

२५. VM. ignoers चित् ॥ एव Sy.

VII. 59.

**यं त्रायध्व इदमिदं देवासो यं च नयथ ।**
**तस्मा अग्ने वरुण मित्रार्यमन्मरुतः शर्म यच्छत ॥ १ ॥**

यं त्रायध्वे[1] । यम्[2] । रक्षत[3] । इत्थमित्थम्[4] । देवासः[5] ! यम्[6] । च । नयथ[7] । तस्मै मह्यम्[8] । अग्न्यादयः[9] ! सुखम् । प्रयच्छत[10] ॥ मारुतं[11] सूक्तम्[12] ।

**युष्माकं देवा अवसाहनि प्रिय ईजानस्तरति द्विषः ।**
**प्र स क्षयं तिरते वि महीरिषो यो वो वराय दाशति ॥ २ ॥**

युष्माकम्[13] । युष्माकम्[14] । हे देवाः ! रक्षणेन । प्रिये[15] दिवसे[16] । ईजानः[17] । तरति[18] । शत्रून् । प्रवर्धयति च । सः[19] । गृहम्[20] । विविधं[21] च वर्धयति । महान्ति[22] । अन्नानि[23] । यः[19] । युष्मभ्यम्[24] । प्रयच्छति । आत्मीयमभिलषितमुद्दिश्य[25] ।

---

१. 'यं त्रायध्वे' इति द्वादशर्चं चतुर्थं सूक्तम् । अत्रेयमनुक्रमणिका—'यं त्रायध्वे द्वादश त्रिप्रगाथादि नवम्याद्यास्तिस्रो गायत्र्योऽन्त्यानुष्टुब्रौद्री मृत्युविमोचनी' (KSA. 36. 59. p. 26.) इति । आद्यातृतीयापञ्चम्यो बृहत्यो द्वितीयाचतुर्थीषष्ठ्यः सतो बृहत्यः सप्तम्यावनुक्तत्वात्त्रिष्टुभौ नवमीदशम्येकादश्यो गायत्र्यः । द्वादश्यनुष्टुप् सा च रुद्रदेवताका । शिष्टा मारुत्यः । सूक्तविनियोगो लैङ्गिकः Sy.

२. The commentary on this stanza is missing in A.

३. स्तोतारम् Sy.

४. पालयध्वे Sy.

५. इतो भयहेतोः Sy.

६. हे देवाः ! Sy.

७. ०था M. सन्मार्गं प्रापयत Sy.

८. स्तोत्रे Sy.

९. आदि refers to वरुण ! मित्र ! अर्यमन् ! and मरुतः !

१०. दत्त Sy. ११. ०त M.

१२. The passage मारुतं सूक्तम् should immediately follow the *pratīka.* यं त्रायध्वे ।

१३. युष्मा is omitted in M.

१४. युष्मदीयेन Sy.

१५. सर्वेषां देवानां प्रियभूते सुत्याभिधाने Sy.

१६. ०सं A.

१७. राजानः A. इष्टवान् जनः Sy.

१८. आक्रामति Sy. १९. यजमानः Sy.

२०. स्वकीयं निवासम् Sy.

२१. विशेषेण ददाति । अतएव स स्वकीयं निवासं वर्धयतीत्यर्थः Sy. २२. महाति A.

२३. हविर्लक्षणानि Sy. २४. अस्मभ्यं M.

२५. ०त्यामीय० A. वराय निवारणाय । यूयं नान्यत्र गच्छतास्मदीयान्येव हवींषि स्वीकुरुतेति निरोधनं कर्तुम् Sy.

नहि वश्चरमं चन वसिष्ठः परिमंसते ।
अस्माकमद्य मरुतः सुते सचा विश्वे पिबत कामिनः ॥ ३ ॥

नहि वः । नहि । वः[1] । चरमम्[2] । अपि यो भवतां जघन्यमागच्छति तमव्ययम्[3] । वसिष्ठः[4] । परि-बुध्यते[5] परिवर्जयति । तथा सत्यस्माकम्[6] । अद्य[7] । हे मरुतः ! सुते[8] । सहिताः[9] । विश्वे[10] । पिबत[11] । कामिनः[12]

नहि व ऊतिः पृतनासु मर्धति यस्मा अराध्वं नरः ।
अभि व आवर्त्सुमतिर्नवीयसी तूयं यात पिपीषवः ॥ ४ ॥

नहि वः । नहि[13] । युष्माकम्[14] । रक्षणम्[15] । पृतनासु[16] । बाध्यते[17] । अस्मै यजमानाय[18] । तामूतिम-राध्वम्[19][20] । नरः[21] ! रातिर्दानिकर्मा[22] । तथा सति युष्माकम्[15] । नवतरो[23] । तिः[24] । अस्मानभ्यावृणोतु[25] । क्षिप्रम् । आगच्छत । सोमं पातुकामः[26] ।

---

१. युष्माकं मध्ये Sy.

२. अवरम् Sy.

३. ०मप्ययं is suggested for ०मव्ययं ।

४. ऋषिः Sy.

५. वर्जयित्वा न स्तौति किन्तु सर्वानेव युष्मान् स्तौतीत्यर्थः Sy.

६. अस्मदीये Sy.

७. अस्मिन् दिने Sy.

८. सोमेऽभिषुते सति Sy.

९. सङ्गत्य Sy.

१०. यूयम् Sy.

११. पानं कुरुत Sy.

१२. सोमं कामयमानाः Sy.

१३. न खलु Sy.

१४. हे मरुतः ! वः युष्मदीया Sy.

१५. रक्षा Sy.

१६. युद्धेषु Sy.

१७. हिनस्ति । शत्रुभिः कृतां हिंसां (न) सहत इत्यर्थः Sy.

१८. यस्मै जनाय Sy.

१९. ति is written twice in A.

२०. इतराध्वम् M.
कामानदध्वं तं जनं न हिनस्तीति सम्बन्धः Sy.

२१. हे नेतारः ! यूयम् Sy.

२२. The passage रातिर्दानिकर्मा refers to अराध्वम् । therefore it should immediately follow that.

२३. ०तरा is suggested for तरो० ।

२४. Something probably सुम is missing in the mss. अनुग्रहबुद्धिः Sy.

२५. अस्मानभ्यावर्तताम् Sy.

२६. ०कामात् A. ०कामाः is suggested for ०कामः ॥ हे सोमपानकामाः ! यूयमपि Sy.

ओ षु घृष्विराधसो यातनान्धांसि पीतये ।
इमा वो हव्या मरुतो ररे हि कं मो ष्व१न्यत्र गन्तन ॥ ५ ॥

ओ षु[1] । आयात । ये घृष्वीराधसः[2] ! इतरेतरं संहत्यगमनधनान्[3] ! सोमान्[4] । पातुम्[5] । इमानि । युष्मभ्यम् । हवींष्यहम् । हि[6] । प्रयच्छामि[7] । मा । गच्छत । अन्यत्र तथा सति[8] । सु पूजने[9] ।[10]

आ च नो बर्हिः सदताविता च नः स्पार्हाणि दातवे वसु ।
अस्रेधन्तो मरुतः सोम्ये मधौ स्वाहेह मादयाध्वै ॥ ६ ॥

आ च नः । आसीदत[11] । च । अस्माकम्[12] । बर्हिः[13] । रक्षत[14] । च । अस्मान्[15] । वर्णान्वित्वं छान्दसम्[16] । स्पृहणीयानि । धनानि । दातुम् । अक्षीणा भवन्तः[17] । मरुतः । सोमामये[18] । मधूनि[19] । स्वाहाकारेण । इह[20] । माद्यत[21] ।

सस्वश्चिद्धि तन्व१ः शुम्भमाना आ हंसासो नीलपृष्ठा अपप्तन् ।
विश्वं शर्धो अभितो मा नि षेद नरो न रण्वाः सवने मदन्तः ॥ ७ ॥

सस्वश्चित् । अन्तर्हिताः । अङ्गानि[22] । शोभयन्त आभरणैः[23][24] । नीलपृष्ठाः केचन[25] । हंसाः[26] । आपप्तन्निति[27]

---

१. ओष्ठः A.
२. ये युष्युरा० A. हे घृष्वि० is suggested for ये युष्वीरा० ॥ परस्परघृष्टानि सुसंहतानि राधांसि येषां ते हे मरुतः ! यूयम् Sy.
३. ०मा धनात् A. ०धनाः is suggested for ०धनान् ।
४. सोमात् A. सोमलक्षणानि हवींषि Sy.
५. भक्षणार्थम् Sy. ६. यस्मात् कारणात् Sy.
७. ददामि Sy.
८. अतः कारणाद्यूयमन्यत्र Sy.
९. सुष्ठु Sy.
१०. VM. ignores मरुतः । कम् ।
११. उपविशत Sy.
१२. हे मरुतः ! यूयं नः अस्मदीये Sy.
१३. कुशमये बर्हिषि Sy.
१४. आगच्छत च Sy.
१५. अस्मात् वर्णान्वित्व A.
१६. The passage वर्णान्वित्वं छान्दसम् refers to अवित in the text. It should therefore immediately follow रक्षत and precede च.
१७. अहिंसन्तो यूयम् Sy.
१८. सोमात्मके हविषि Sy.
१९. मदकरे Sy.
२०. अस्मिन् यज्ञे Sy.
२१. मद्यत A. मादयध्वम् माद्यत Sy.
२२. मरुतः स्वकीयान्यङ्गानि Sy.
२३. ०यत आ० M.
२४. अलङ्करणैः शोभयन्तः Sy.
२५. ०स्पृष्ठाः A.
२६. हंसा इव Sy.
२७. आपुतन्तु, आगच्छन्तु Sy.

मरुदभिप्रायम्, ते नूनं नीलपृष्ठा[1] भवन्ति । माम् । अहितः[2] । विश्वम्[3] । शर्धः[4] । निषीदत्विति[5] मारुतं शर्धोऽभिप्रेत्याह । मनुष्याः । इव[6] । रमणीयाः । यज्ञे । मदन्तो[7] भवन्ति मरुतः[8] ।[9]

**यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति ।**
**द्रुहः पाशान्प्रति स मुचीष्ट तपिष्ठेन हन्मना हन्तना तम् ॥ ८ ॥**

[10]यो नः । यः । अस्मान्[11] । हे मरुतः ! अभिजिघांसति[12] । दुर्हृणायुर्दुष्टभावो हृणायुः क्रुध्यन्[13] । तिरस्कुर्वन्[14] । बुद्धिः[15] । हे वासयिता[16] ! सः मुद्रोद्धन्[17] । पाशान् युष्मदीयान्[18] । प्रतिमुञ्चतु[19] । तप्तृतमेन[20] । आयुधेन[21] । तम् । हत[22] ।

---

१. ०पृष्ठो A. The passage ते नूनं नीलपृष्ठा भवन्ति refers to नीलपृष्ठाः केचन । It should therefore immediately follow नीलपृष्ठाः केचन and precede हंसा ॥ असितवर्णाः Sy.

२. अभितः is suggested for अहितः ॥ समन्तात् Sy.

३. व्याप्तः Sy.

४. शर्धा A. मरुद्गणः Sy.

५. मा निषी० M.

६. तद्वत् Sy.

७. हृष्यन्तः Sy.

८. ०रुतं A.

९. VM. ignores चित् and हि.

१०. साकमेधेषु मरुद्भ्यः सान्तपनेभ्यः इत्यस्य 'यो नो मरुतः' इति पूर्वानुवाक्या । 'सान्तपना इदम्' इति याज्या । 'सान्तपना इदं हविर्यो नो मरुतो अभि दुर्हृणायुः' (ĀSS 2. 18.) इति Sy. वसिष्ठस्येदमार्षम् Dur.

११. अस्मदीयानि Sy. अस्माकम् Dur., SKN.

१२. आभिमुख्येन हन्तुमिच्छति Sy. ततो हन्तुमस्मानिच्छति Dur. अभीत्ययं जिघांसतीत्येतेन सम्बध्यते।...अभिहन्तुमिच्छन्ति SKN.

१३. क्रुधं M. अशोभनं क्रुध्यन् Sy. पापक्रोधः Dur. हृणिः क्रोधः । कुत्सितो हृणिर्दुर्हृणिर्वैरानुबन्धिनी प्रणयपूर्व इत्यर्थः । तं यच्छति । यद्वा स दुर्हृणायुः SKN.

१४. सर्वैस्तिरस्कृतः Sy. अन्तर्हितानि Dur. 'तिरोऽन्तर्धौ' (Pa. I. 4. 71.) इत्येवमस्य गतिनाम । गतीनां च क्रियासम्बन्धात् क्रियाशब्दोऽत्राध्याहार्यः । तिरस्कृतात्मनोऽन्तर्हितानीत्यर्थः SKN.

१५. बुद्धीः is suggested for बुद्धिः । चित्तानि कृत्वा सम्मोह्य Dur. अभिप्रायाः SKN.

१६. ०यितारः is suggested for ०यिता ॥ हे प्रशस्याः ! Sy. हे वसवः ! सर्वभूतवासयितारः Dur. 'वस आच्छादने' छादयितारः । केन कस्य ? सामर्थ्याद् वृष्टचा जगतः SKN.

१७. मुद्रोद्धन् A. अस्मद्द्रोग्धुः or द्रोग्धुः is suggested for मुद्रोऽद्धन् । पापानां द्रोग्धुर्वरुणस्य Sy. तस्यैवंलक्षणस्य द्रुहोऽस्मद्द्रोग्धुरुपरि Dur. मूलविभुजादित्वाद्, द्रोग्धा SKN.

१८. अष्म० A.

१९. बध्नीयात् Sy. प्रतिसम्मोचयत Dur. प्रतिमुञ्चत्वात्मनि स युष्मदीयैः पाशैर्बध्यतामित्यर्थः SKN.

२०. नपूतमेन A. पाशैरेवं बद्ध्वा तपिष्ठेन तापयितृतमेन Dur. बद्धं च सन्तं तपिष्ठेनातिशयेन तापयित्रा दुःखयित्रेत्यर्थः SKN.

२१. हननसाधनेनायुधेन Sy. हननेन वधेनेत्यर्थः Dur. अनेनायुधेन SKN.

२२. हत हिंस्त Sy. हतेत्यर्थः Dur. हत आ यूयम् SKN. N. 4. 7. ; SKN. II. 215.

सांतपना इदं हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसः ॥ ९ ॥

सान्तपनाः । हे सन्तपनकुशलाः[1] ! शत्रूणाम् । तत्[2] । इदम्[3] । हविः । मरुतः ! सेवध्वम्[4] । यौष्माकीणेन[5] । रक्षणेन[6] सह । हे हिंसितॄणां[7] निरसितारः !

गृहमेधास आ गत मरुतो माप भूतन । युष्माकोती सुदानवः ॥ १० ॥

[8] गृहमेधासः[9] । गृहमेधाः[10] गृहे[10] विद्यमानयज्ञाः[11] । आगच्छत[12] । मरुतः ! मा च । अपभवत[13] । युष्माक[14] । ऊती[15] । सुदानाः[16] ।

इहेह वः स्वतवसः कवयः सूर्यत्वचः । यज्ञं मरुत आ वृणे ॥ ११ ॥

[17] इहेह । इह चेह च[18] । युष्माकम् । हे स्वभूतबलाः[19] ! कवयः[20] ! सूर्यसदृशरूपाः[21] । यज्ञम्[18] । मरुतः । आभिमुख्येन सम्भजे[22] ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ १२ ॥

[23] त्र्यम्बकम्[24] । अत्र वाजसनेयकम्-एष ते रुद्र भागः सह स्वविकया[25] ते[26] जुषस्व स्वाहेत्यम्बिका[26][27] ह वै नामा

---

१. हे शत्रूणां सन्तापकाः ! मरुतः ! Sy.
२. तादृशम् Sy. ३. प्रत्यक्षेणोपलभ्यमानम् Sy.
४. युष्मभ्यं कल्पितमिति शेषः Sy.
५. ०ष्मा किणे० A. युष्माकम् Sy.
६. रक्षया Sy. ७. ०सितॄणां A. हिंसतामसितारो रिशानामत्तारो वा यूयम् Sy.
८. 'गृहमेधासः' इति गृहमेधीयस्य हविषोऽनुवाक्या। सूत्रितञ्च—'गृहमेधास आ गत प्र बुध्न्या व ईरते महांसि' (ĀSS. 2. 18.) इति Sy.
९. ग्रहमे० A. १०. ग्रहे A.
११. ०मानाय० A. गृहे क्रियमाणो यज्ञो येषां ते Sy.
१२. अस्मदीयं यज्ञं प्रत्यागच्छत Sy.
१३. अपगता (मा) भवत । 'भू प्राप्तौ' इति धातुः Sy. १४. युष्माकम् Sy.
१५. रक्षया युक्ताः Sy. १६. शोभनदानाः Sy.
१७. वैश्वदेवे पर्वणि मारुतस्यानुवाक्या 'इहेह वः' इत्येषा । सूत्रितञ्च—'इहेह वः स्वतवसः प्र चित्रमर्कं गृणते तुराय' (ĀSS.2.16.) इति Sy.
१८. इहैवास्मदीयं यज्ञम् Sy.
१९. हे स्वायत्तबलाः ! स्वयं प्रवृद्धाः ! वा Sy.
२०. हे क्रान्तदर्शिनः ! Sy. २१. सूर्यवर्णाः Sy.
२२. आभजामि कल्पयामि Sy.
२३. त्रियम्ब० A. २४. अत्र शौनकः—
त्रिरात्रं नियतोऽपोष्य श्रपयेत्पायसं चरुम् ।
तेनाहुतिशतं पूर्णं जुहुयाच्छंसितव्रतः ॥
समुद्दिश्य महादेवं त्र्यम्बकं त्र्यम्बकेत्यृचा ।
एतत् पर्वशतं कृत्वा जीवेद्वर्षशतं सुखी,
(Rgvid 2. 27.) इदानीं मृत्युञ्जयमाशास्ते BB.
२५. स्वस्राम्बिकया is suggested for स्वबिकया ।
२६. ते जुष्टस्व स्याहे० A. तं is suggested for ते ।
२७. ०त्याम्बि० M. A. fragment of YV. 3. 57.

स्वसा तयास्यैष स भागः[1] सदस्यैष स्त्रिया सह भागस्तस्मात् त्र्यम्बको[2] नामेति तं[3] वयम् । यजामहे[4] । शोभन-गन्धम्[5] । पुष्टेर्वर्धयितारम्[6] । अथैकवदाह—यथोर्वारुकं[7] पक्त्वा । बन्धनात्[8] स्वयमेवानायासेन मुक्तं[9] भवत्येव-महम् । मृत्योः[10] । मुक्षीय[11] । मा[12] । अमृताज्जीवितममृतमिति[13] ।

---

१. The passage स भागः सदस्यैष seems to be unnecessary.

२. त्रियम्ब० A. त्रयाणां ब्रह्मविष्णुरुद्राणामम्बकं पितरम् Sy.

३. नेत्रत्रयोपेतं रुद्रम् Mah. त्रीण्यम्बकानि लोचनानि यस्य । यद्वा 'अबि शब्दे' अम्बका वेदाः, त्र्यम्बको वेदत्रयीप्रतिपाद्यः । अथवा 'अम गत्यादिषु' अम हेतवोऽम्बाः, द्यौरापः पृथिवी चेति, तदाराधनीयत्वात् । त्रयो वाऽग्नयः, तिस्रो वा गतयः, त्रीणि वा ज्योतींषि । छान्दस इयङ्ङादेशः । तस्मादेवं महानुभावं देवं त्र्यम्बकम् BB. ४. शिष्टसमाहितो वसिष्ठो ब्रवीति Sy. पूजयामः Mah., U.

५. दिव्यगन्धोपेतम्, मर्त्यधर्महीनम् Mah. नित्यशोभनं यशोगन्धि सर्वसुकृतमयत्वात् BB.

६. जगद्बीजम् । उक्तशक्तिमित्यर्थः । उपासकस्य वर्धनम्, अणिमादिशक्तिवर्धनम् Sy. धनधान्यादिपुष्टेर्वर्धयितारम् Mah. पोषस्य वर्धयितारम् U. गोभूमिवित्तविद्यादिपुष्टिहेतुमीदृशं देवं यजामहे BB.

७. यथा कर्कटीफलं मुच्यते तद्वन्मरणात् संसारात्, वा मोचय Sy. मृत्योर्मोचने दृष्टान्तः ।... यथोर्वारुकं कर्कन्ध्वादेः फलमत्यन्तपक्वं सत् Mah. उर्वारुकः फलविशेषः । स यथा पक्वः U. यथोर्वारुकं फलं...अपुसमुर्वारुकमिति केचित् । हिममित्यन्ये BB.

८. बन्धनात् स्वस्य वृन्तात् Mah. स्वबन्धनात् U. प्रसवबन्धनात् BB.

९. प्रमुच्यते तद्वत् Mah. वियुज्यते U. पक्वं स्वयं मुच्यते BB.

१०. संसाराद्वा Sy. ततो रुद्रप्रसादान्मृत्योः... अपमृत्योः संसारमृत्योश्च Mah. एवमहमपि मृत्योरनेन BB.

११. अतस्त्वत्प्रसादादेव मृत्योर्मरणात् संसाराद्वा मोचय Sy. मुक्तो भूयासम् Mah., BB. मोचय मोचयतु । पुरुषव्यत्ययश्छान्दसः U.

१२. मुक्तो मा भूयासम् । एकवचनं बह्वर्थे । मुक्ता मा भूयास्मेत्यर्थः । अभ्युदयनिःश्रेयसरूपात्फलद्वयान्मम भ्रंशो मा भूदित्यर्थः Mah. मा कदाचित्...मोचयतु U.

१३. किं मर्यादीकृत्य ? आमृतात्—सायुज्यतामोक्षपर्यन्तमित्यर्थः Sy. स्वर्गरूपान्मुक्तिरूपाच्च Mah. अमरणो भूयासम् ।...अन्य आहुः पुरुषेण बाह्यात्काष्ठादिभारात्, यद् भारातिक्तं तदुर्वारुकमिति तद्यथा बन्धनव्यवसायान्मुच्यते न वाहकवशं भवति एवमहं मृत्योर्मुक्षीय मृत्युवशं मा गां मां मृत्युर्मा गादिति । उरोभाराद्वारणीयमुर्वारुक मिति BB.

अथ तैत्तरीयभाष्ये 'शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः । यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति' (TS. 1. 8. 6. 2.) इति श्रुतेः । पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनः । तादृशं त्र्यम्बकं यजामहे । पूजयामः । लोके यथोर्वारुकफलानि बन्धनाद् वृन्तात् स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन मृत्योर्मुक्षीय । मोचनयुक्तो भूयासम् । अमृताच्चिरजीवितात् स्वर्गाद्वा मा मुक्षीय । चतुर्थपादार्थमन्त्रस्य तात्पर्यातिशयं दर्शयति । त्र्यम्बकं यजामह इत्याह मृत्योर्मुक्षीय मामृतादिति वावैतदाहेति Sy.

अथापसत्लवि त्रिः परियन्ति । सव्यानूरूनुपाघ्नानास्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादित्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते तद्धेव शमिव यो मृत्योर्मुच्यानैनामृतात्तस्मादाह मृत्योर्मुक्षीय मामृतादिति । ŚB. 2. 6. 2. 12. p. 197.

व्याख्यात्तुरीयमध्यायं[1] पञ्चमस्याष्टकस्य सः ।
अष्टकस्य कुले जातो माधवो वेङ्कटात्मजः ॥

# [अथ पञ्चमाष्टके पञ्चमोऽध्यायः][2]

'यद्द्य सूर्य[3]त्यध्यायं व्याचिख्यासति माधवः ।
अष्टकादिषु वक्तव्यमादितः सम्प्रदर्शयन् ॥ १ ॥
अष्टकाध्यायविच्छेदः पुराणैर्ऋषिभिः कृतः ।
उद्ग्राहार्थं प्रदेशानामिति[4] मन्यामहे वयम् ॥ २ ॥
वर्णानामपि विच्छेद आर्ष एवेति निश्चयः ।
ब्राह्मणेष्व[5]भिदृश्यन्ते वर्गसंशब्दनादि[6] च ॥ ३ ॥
विभज्यन्ते[7] च सूक्तानि समधा तत्र वर्गशः ।
अन्ताल्लोपोऽपि वृद्धिश्च क्रियते तु गुणाविति[8] ॥ ४ ॥
अध्यापनाय शिष्याणां विभागो[9] वर्गशः कृतः ।
सुग्रहो[10] हि भवत्यल्पः शक्यो धारयितुं ततः ॥ ५ ॥

---

Sy.'s commentary on this stanza is doubtful.

१. ०ख्या तु० A.

२. Supplied by the Editor.

३. RV. VII. 60. ४. ०नां मति A.

५. ०'ष्वपि दृ०' R. ०दृश्यन्ते plu. is doubtful..

६. ०शब्दनावयः is suggested for शब्दनादि च ।

७. ०न्तेऽथ R.

८. क्रियेतेऽनुगुणाविति R. As क्रियेते is dual, Sandhi should not take place. So. R's reading is defective. क्रियेते अनुगुणाविति is suggested for क्रियते तु गुणाविति । In the suggested reading one syllable is too many.

९. विभागे A. १०. सुगुहो A.

सङ्गीभूयाभवत्सर्वमेकं[1] मण्डलमादितः[2] ।
आसीदृषिर्मधुच्छन्दा[3] मधुमत्तममन्त्रदृक्[4] ॥ ६ ॥
तस्मादग्रे प्रादुरभूत् काण्वो[5] मेधातिथिस्ततः ।
शौनश्शेपानि[6] च्छन्दांसि[7] मधुराणि ततोऽभवन्[8] ॥ ७ ॥
हैरण्यस्तूपछन्दांसि[9] काण्वानि च ततः परम् ॥ ८ ॥

अत्र शाट्यायनकम्—वैश्वामित्रो मधुच्छन्दा अकामयत मुख्ये[10] ब्रह्मवर्चसि[10] स्यामिति ॥

अमहान्ति निवेश्यान्तर्मण्डलानि[11] महर्षिभिः ।
कृतो महद्भ्यां रक्षार्थमथ तेषां परिग्रहः ॥ ९ ॥
समानमेतद्यज्ञस्यैव तद्वसेने[12] ह्यतीति ।
सामिधेनीप्रभृतीषु[13] ब्राह्मणैस्तद्[14] विधीयते ॥ १० ॥
भूयिष्ठा[15] यज्ञसंयुक्तमुत्तमं मण्डलं विदुः ।
पितृमेधादिकं तस्मादन्ततस्तन्निवेशितम्[16] ॥ ११ ॥
मध्यस्थानां मण्डलानां क्रमो योऽयं व्यवस्थितः ।
तस्य कारणमन्वेष्टुं सङ्ख्यास्माभिः प्रदर्श्यते ॥ १२ ॥

---

१. संप्प भू० A.
२. सर्व एकमुण्डमादि० A. सर्वं ए० M. The reading is adopted from R.
३. ०वृष्टिर्म० A.
४. मधुरोत्तम० R.
५. काञ्चो A., M. The reading is adopted from R.
६. ०शेवानि A.
७. छन्दांसि R.
८. ०वत् A, R.
९. ०चिन्दासी कण्वा० A. चिन्वासि M. ०च्छन्दां-सि is suggested for ०छन्दांसि ।
१०. मुख्यौ A. मुख्यौ ब्रह्मवर्चसी M. The reading is adopted from R.
११. ०न्तं म० A. M. The reading is adopted from R.
१२. ०द्वसने A. The reading of 2nd pāda is omitted in R. The reading is doubtful.
१३. ०प्रभृतिषु is suggested for ०प्रभृतीषु ।
१४. ०णैःद् वि० A. ०णैयंद् R.
१५. भूयिष्ठं R.
१६. ०तश्च नि० R.

आद्यन्तयोर्मण्डलयोर्नवोने[1] द्वे शते[2] विदुः ।
द्विचत्वारिंशद्[3] द्विषष्टिद्र्यूना[4] षष्टिरनन्तरम् ॥ १३ ॥
सप्ताध्यशीतिः[5] पञ्चाधिसप्ततिस्तदनन्तरम्[6] ।
चतुरधिकं च[7] शतमष्टोनं च शतं[8] ततः ॥ १४ ॥
चतुर्दशकं च शतं[9] सूक्तानां क्रमशो विदुः ।
मध्यस्थानां मण्डलानामिति संख्या यथाक्रमम् ॥ १५ ॥
रक्षार्थमथ वाक्यानि कळायो[10] लवनं ततः ।
रातिनाश्च[11] दमूनाश्च सदनं मथनं तथा ॥ १६ ॥
वनाय क्रोधतो[12] द्वे च भयकृद्युद्धकृत्तथा ।
क्रमेण दशवाक्यानि प्रच्छन्नं[13] स्यात् समन्वये ॥ १७ ॥
वामदेवस्तृतीयश्चेद्[14] भरद्वाजश्च पञ्चमः ।
कण्वश्च सप्तमः सूक्तैः क्रमवृद्धैर्भवेत् क्रमः ॥ १८ ॥

---

१. नपोने A.

२. गते A. गतो M. There are one hundred and ninety-one sūktas in the 1st and 10th maṇḍalas.

३. त्रिच० is suggested for द्विच० ॥ 43 sūktas in the 2nd maṇḍala.

४. ०ष्टिद्यूनां A. ०ष्टि यूनां M. 62 sūktas in the third maṇḍala. 58 sūktas in the 4th maṇḍala.

५. सप्ताधीशि A. ०प्ताधिशी...M. सप्ताशीतिः R.

६. ०धिकास० A. ०धिकस० R. 75 sūktas in the 6th maṇḍala. 87 sūktas in the 5th maṇḍala.

७. च is missing in A. 104 sūktas in the 7th. maṇḍala.

८. 92 sūktas in the 8th maṇḍala.

९. गतं A. चतुर्दशं च शतकं R.. 114 sūktas in the 9th maṇḍala.

१०. कानयोगवनं A. M.

११. ०ना च A. ०नश्च R.

१२. ०न्तो R.

१३. नि च्छन्नस्याः सम० A. सायाह्नं R.

१४. ०यश्च R.

न च क्रमेण वर्धन्त ऋचो गार्त्समदादिषु[1] ।
तस्मादृक्तोऽपि[2] नैतेषामष्टानां सिध्यति क्रमः ॥ १९ ॥
वाक्यैरेतैर्विजानीयान् मण्डलानामृचः क्रमात् ।
दशानां दशभिः प्राज्ञस्तथाधेयो[3] धरावनिः ॥ २० ॥
साध्यं च नो धेहि मेन्नं शूरसूनुर्मतोऽसिनः ।
गुरुदाने युगान्तस्य[4] सिद्धान्नस्य[5] निशीथके ॥ २१ ॥
शतैश्चतुर्भिरधिकमयुतं गणितं[6] मया ।
द्वे चर्चावतिरिच्येते[7] द्विपदाश्चात्र सङ्गताः ॥ २२ ॥
पृथक्पदा[8] तु गणनं द्विपदानां तदाधिका ।
चतुश्शतादशीतिश्च वाक्यं च ग्रहवानयम् ॥ २३ ॥
एकर्च्चे एकवर्गः[9] स्याद् द्वृचौ[10] द्वौ नवकावुभौ ।
एकोनं स्यात्[11] त्रिकशतं चतुष्कं[12] पञ्चसप्ततिः ॥ २४ ॥
अधिकं च शतं तस्याश्चतुः[13]पञ्चाशदष्टकाः ।
एकविंशशतं[14] प्राहुः सप्तकानां च वैदिकाः ॥ २५ ॥
शतानि त्रीणि षट्कानां चत्वारिंशत्त्रयस्तथा ।
पञ्चकानां सहस्रं च द्वे शते नवकं तथा ॥ २६ ॥

---

१. गाद्रसमदा० A. ०द्रसदा० M. The reading is adopted from R.
२. ०तो विनै० M.
३. तवाधे० M. तथा देयो R.
४. युगं तस्य M.
५. सिद्धान्यस्य R.
६. गणिकं A.
७. च यावति M. च यान्यति० R.
८. ०ग्यतवा A. ०क्तवा M. The reading is adopted from R.
९. एकच्च एकं वर्ग A. एतच्च एक० M. The reading is adopted from R.
१०. चौ A.
११. स्वा A. M. The reading is adopted from R.
१२. ०ष्कां A.
१३. वर्गाश्च० R.
१४. एकं विं०

ऋचां दश सहस्राणि ऋचां पञ्च शतानि[१] च ।
ऋचामशीति[२]पादश्च पाठोऽयं न समञ्जसः ॥ २७ ॥
अपहायाथ पापस्य क्षादानाय[३] च पण्डितः ।
ऋचः[४] कालेन गणयेत् तत्तु[५] शुद्धिर्भविष्यति ॥ २८ ॥
मण्डलं वामदेवस्य तृतीयं चेत्तथा[६]ष्टमम् ।
स्यान्मण्डलं पावमानं क्रमावृद्धे[७] क्रमो भवेत्[८] ॥ २९ ॥
विश्वामित्रो वामदेवात्[९] सम्पन्नो[१०] व्यतिरिच्यते ।
अतिरेकश्च विज्ञेयो गायत्रीकरणाद्[११] बुधैः ॥ ३० ॥
अत्र ब्रूमो गृत्समदः क्षत्रियो ब्राह्मणोऽभवत्[१२] ।
इन्द्रप्रसादादस्यासन् वाचश्च हृदयङ्गमाः ॥ ३१ ॥
अग्रे[१३] तस्मात् प्रादुरभूद् विश्वामित्रस्ततोऽभवत् ।
तस्यापि मधुरा मन्त्रा ब्राह्मण्यमपि लब्धवान् ॥ ३२ ॥
दृष्टवेदे[१४]नतोऽपश्यत् पुनश्च तपसान्विताः[१५] ।
मण्डलं नवमं तेन तदन्ते[१६] सन्निवेशितम् ॥ ३३ ॥

---

१. दशानि A. शतानि वै R.
२. The reading is adopted from R.
३. पापस्य. .क्षानदाय M. पावस्य क्षादनाय च R. पादस्याक्षराण्यादाय is suggested for पापस्य क्षादानाय च ॥
४. ऋचः is missing in A.
५. तन्तु शु० R.
६. च तथा० R.
७. क्रमवृद्धे R. क्रमाद् वृद्धेः is suggested for क्रमावृद्धे ।
८. ०मोद्भवेत् A.
९. ०वान् M.
१०. ०न्नोऽप्यति० R.
११. ०त्रीतर० A.
१२. णो भवेत् A., M. The reading is adopted from R.
१३. अग्रेरस्मात् A., M. The reading is adopted form R.
१४. ०वास्ततोऽपश्यन् पुनश्च R. दृष्टवेदस्ततो० is suggested for दृष्टवेदेनतो०
१५. ०न्विता A. ०न्वितः is suggested for ०न्वितः ।
१६. तं तो A.

प्रगाथे[1] मण्डले बह्व्यो नाराशंस्य[2] ऋचस्ततः ।
सन्निवेशोऽन्ततस्तस्य[3] मध्यस्थेष्विति मन्यते[4] ॥ ३४ ॥
अन्येषां क्रमवृद्धानां सन्निवेशः[5] क्रमादभूत् ।
चतुर्णां वामदेवादेर्मण्डलानामिति स्थितिः ॥ ३५ ॥
अथानुवाकविच्छेदो बहुभिर्हेतुभिः कृतः ।
सुरूपकृत्नु[6]मित्यैन्द्रात् प्रागेकः कल्पितो बुधैः ॥ ३६ ॥
ऐन्द्राण्यथाष्टौ सूक्तानि विभक्तानि समन्वितैः[7] ।
षट् सूक्तावनुवाकौ[8] द्वौ समौ मेधातिथेरपि ॥ ३७ ॥
शौनश्शेपो[9]ऽनुवाकस्तु शुनश्शेपेन कल्पितः ।
हैरण्यस्तूपकाण्वौ[10] च प्रास्कण्वाद्याश्च[11] सप्तकाः ॥ ३८ ॥
गोतमस्योपप्रयन्त[12]' सूक्तानां विंशतिं[13] विदुः ।
एकादशकनवकावनुवाकौ च कल्पितौ ॥ ३९ ॥
ऐन्द्रमेकादशं सूक्तमैन्द्रैः[14] पूर्वसमन्वितम्[15] ।
इति सर्वानुवाकेषु[16] कार्या सूक्ष्मेक्षिका बुधैः ॥ ४० ॥ इति ॥

---

१. प्रागाथ A.

२. ऽन्वह्यो नराशंसस्य A. नरा० M. The reading is adopted from R.

३. ०शोद्धत० A.

४. ति संस्थितिः R.

५. ०वेशक्र० A., M. The reading is adopted from R.

६. ०कृत्तुमि० A. ०कृणुमि० M. The reading is adopted from R.

७. ०न्विजैः A. समन्विधा R.

८. ०वसुवा० A. ९. ०शेफोनु० A.

१०. कास्वौ A. कास्स्वौ M. The reading is adopted from R.

११. प्रस्कन्धा (न्धा M.) स्याश्च A. M. The reading is adopted from R.

१२. ०स्यामव A. गोतमस्यां व प्रियन्त M. The reading is adopted from R. उपप्रयन्तो' अध्वरम्' (RV. I. 74. 1.)

१३. (RV. 1. 74–93.)

१४. ०श सूक्तमैन्द्रः A.

१५. पूर्वैः स० R.

१६. ०वाते (वे) षु A.

## VII. 60.

**यद॒द्य सूर्य॒ ब्रवो॒ऽनागा॑ उ॒द्यन्मि॒त्राय॒ वरु॑णाय स॒त्यम् ।**
**व॒यं दे॑व॒त्रादि॑ते स्याम॒ तव॑ प्रि॒यासो॑ अर्यमन्गृ॒णन्तः॑ ॥ १ ॥**

यदद्य[1] ॥ वसिष्ठो मैत्रावरुणं सूक्तमाद्या सौ[2] । यत्[3] । अद्य[4] । सूर्य[5] ! ब्रूवाः[6] । अस्मान् अनागसः[7] । उद्यन्[8] । मित्रावरुणयोः । सत्यमेव[9], नैते[10] पापं कृतमिति ब्रवीषि । ततो[11] वयम् । हे[12] अदीन ! सूर्य ! देवेषु[13] । साम[14] । क[15] । प्रियासः[16] । अर्यमन् ! त्वां स्तुवन्तः[17] ।

**ए॒ष स्य मि॑त्रावरुणा नृ॒चक्षा॑ उ॒भे उदे॑ति॒ सूर्यो॑ अ॒भि ज्मन् ।**
**विश्व॑स्य स्था॒तुर्जग॑तश्च गो॒पा ऋ॒जु मर्ते॑षु वृ॒जिना॑ च॒ पश्य॑न् ॥ २ ॥**

एष स्यः । सः[18] । एषः[19] । मित्रावरुणौ ! मनुष्याणां द्रष्टा[20] । द्यावापृथिवी[21] । लक्षीकृत्य[22] । उदेति[23] ।

---

१. तत्र 'यदद्य सूर्य' इति द्वादशर्चं पञ्चमं सूक्तम् । अत्रानुक्रमणिका—'यदद्य मैत्रावरुणं तु वै सौर्याद्या' (KSA. 37. 60. p. 26.) इति । मण्डलद्रष्टा वसिष्ठ ऋषिः । अनुक्तत्वा-त्त्रिष्टुप् छन्दः । 'तु वै' इत्युक्तत्वादेतदादीनि सप्तसूक्तानि मित्रावरुणदेवत्यानि । आद्या सूर्यदेवत्या । विनियोगो लैङ्गिकः Sy.

२. Something probably र्या is omitted in the mss.

३. यदि Sy.

४. अस्मिन्ननुष्ठानकाले Sy.

५. सूर्यो M. हे सर्वस्य प्रेरक ! एतन्नामक देव ! Sy.

६. ब्रुवा M. ब्रूयाः is suggested for ब्रूवाः ।

७. एते अपापा इति यदि देवेषु मध्ये ब्रूयाः Sy.

८. उदयंस्त्वम् Sy.

९. अवितथम् Sy.

१०. नैतैः is suggested for नैते ।

११. तर्हि Sy.

१२. हे is missing in M.

१३. देवानां मध्ये Sy.

१४. स्याम is suggested for साम ॥ अनागसो भवेम Sy.

१५. तव is suggested for क ॥

१६. प्रियाः Sy.

१७. यद्वा उत्तरार्धं एकवाक्यम् । हे अदिते ! हे अर्यमन् ! उक्तलक्षण ! देव ! वयं देवेषु मध्ये त्वां गृणन्तस्तवैव प्रियाः स्याम । यदि मां देवेष्वपापं ब्रूयास्तर्हि तैरयमनपराधी-त्यनुगृहीतस्त्वां स्तुत्वा तव प्रियो भवेयमित्यर्थः Sy.

१८. सर्वैः स्तुत्यत्वेन प्रसिद्धः Sy.

१९. पुरतो दृश्यमानः Sy.

२०. दृष्टा A.

२१. द्यावापृथिव्यौ Sy.

२२. अभिलक्ष्य Sy.

२३. इवेति A.

सूर्यः[1] । गच्छन्[2] । विश्वस्य । स्थावरस्य । जङ्गमस्य । च । गोपायिता[3] । ऋजूनि[4] । मनुष्येषु[5] । कुटिलानि[6] च कर्माणि । पश्यत्[7] ।

**अयु॑क्त स॒प्त ह॒रित॑ः स॒धस्था॒द्या ई॑ वह॑न्ति॒ सूर्य॑ घृ॒ताचीः॑ ।**
**धामा॑नि मित्रावरुणा यु॒वाकुः॒ सं यो यू॒थेव॒ जनि॑मानि॒ चष्टे॑ ॥ ३ ॥**

अयुक्त । रथे युक्तवान् । सप्त[8] । वडवाः[9] । स्यस्थानो[10] । याः[11] । एनम्[12] । वहन्ति[13] । सूर्यम् । उदकमञ्चन्त्यो[14] वृष्टिमुत्पादयन्त्यः । धामानि[15] स्थानानि त्रींल्लोकान् । हे मित्रावरुणौ[16] ! यः[17] । युवां कामयमानः । सम्पश्यति[18] । तेषु जातानि[19] च भूतानि । यूथानिव[20] गवां गोपालः ।

**उद्वा॑ं पृ॒क्षासो॒ मधु॑मन्तो अस्थु॒रा सूर्यो॑ अरुहच्छु॒क्रमर्णः॑ ।**
**यस्मा॑ आदि॒त्या अध्व॑नो॒ रद॑न्ति मि॒त्रो अ॑र्य॒मा वरु॑णः स॒जोषाः॑ ॥ ४ ॥**

उद्वाम्[21] । उदस्थुः[22] । युवाभ्याम्[23] । अन्नानि[24] । आज्यवन्ति[25] । आरुहत्[26] । अन्तरिक्षं तस्थम्[27] । शुक्रमुदकम्[28] । सूर्यः, तत्रस्थानां ह्युदकानां मध्येन सूर्यो गच्छत्यत एवाप इत्यन्तरिक्षनाम भवति[29] । यस्मै सूर्याय[30] ।

---

१. गच्छत् A. अन्तरिक्षे गच्छन् Sy.
२. सर्वस्य Sy. ३. गोपयिता A.
४. ऋजु ऋजूनि सुकृतानि Sy.
५. किंकुर्वन् ? मर्त्येषु मनुष्येषु स्थितानि Sy.
६. पापानि Sy.
७. पश्यन् is suggested for पश्यत् ।
८. सर्पणस्वभावान् तत्संख्याकान् वा Sy.
९. पत्वा A. पटवा M. हरिद्वर्णानश्वान् Sy. 'हरित आदित्यस्य' (Ngh. 1. 15.) (N. 4. 11.)
१०. स्येस्थानो A. सहस्थाने is suggested for स्यस्थानो ॥ सहस्थानादन्तरिक्षादन्तरिक्षे Sy.
११. हरितः Sy.
१२. सूर्यं देवम् Sy.
१३. तादृश्यः सत्यो वहन्ति ता अयुक्त Sy.
१४. घृताञ्चना उदकवत्यः, उदकप्रदा इत्यर्थः Sy.
१५. उदितः सन् स्थानानि लोकान् Sy.
१६. ०रुणो A. हे मित्रावरुणौ ! युवयोरागमनाय Sy.
१७. देवः Sy.
१८. सम्यक् पश्यति Sy.
१९. जनिमानि जन्मानि । जन्मभाजः प्राणिन इत्यर्थः । तांश्च Sy.
२०. गोयूथानीव यूथपाः । स यथा सर्वयूथं तदवान्तरगोव्यक्तिं च सम्यक् पश्यति तद्वल्लोकान् प्राणिनश्च पश्यति Sy.
२१. हे मित्रावरुणौ ! Sy.
२२. सम्पादितान्यासन् Sy.
२३. यवा० A. युवयोरर्थाय Sy.
२४. अणानि A. अन्नानि चरुपुरोडाशादीनि Sy.
२५. अज्य० A. माधुर्योपेतानि तत्साधनान्योषध्यादीनि Sy.
२६. आरोहति Sy.
२७. ०क्षन्ति स्थम् A. तत्स्थम् is suggested for तस्थम् ॥ अर्णवमन्तरिक्षम् Sy.
२८. शुकमु० A. शुक्रं दीप्तम् Sy.
२९. Ngh. 1. 3.
३०. तद्गमनार्थम् Sy.

अन्ये आदित्याः[1] । मार्गात्[2] । विलिखन्ति[3] । मित्रः[4] । अर्यमा । वरुणश्च । ताभ्यां सङ्गतः[5] सूर्यः, आदित्या दरन्तीति[6] ।

**इमे चेतारो अनृतस्य भूरेर्मित्रो अर्यमा वरुणो हि सन्ति ।**
**इम ऋतस्य वावृधुर्दुरोणे शग्मासः पुत्रा अदितेरदब्धाः ॥ ५ ॥**

इमे । इमे[7] । ज्ञातारः[8] । पापस्य । बहिनः[9] । मित्रः । अर्यमा । वरुणः । हि । भवन्ति । म एव[10] च । यज्ञस्य । गृहे । वर्धन्ते[11] । शक्ताः[12] । अदितेः । पुत्राः । अहिंसिताः[13] ।

**इमे मित्रो वरुणो दूळभासोऽचेतसं चिच्चितयन्ति दक्षैः ।**
**अपि क्रतुं सुचेतसं वतन्तस्तिरश्चिदंहः सुपथा नयन्ति ॥ ६ ॥**

इमे । इमे[14] । मित्रः[15] । वरुणं चार्यमा[16] च । तदङ्क्तिमशक्याः[17] । अज्ञम्[18] । अपि पुरुषम् । चेतयन्ति[19] । स्वसामर्थ्यैः । अपि च । कर्म[20] । सुप्रज्ञानम्[21] । भजमानाः[22] । तिरः । नयन्ति[23] । च[24] । पापम्[25] । स्तोतॄन् शोभनेन मार्गेण ।

---

१. अदितेः पुत्रा देवाः Sy.
२. मार्गान् is suggested for मार्गात् ।
३. साधयन्ति Sy.
४. मन्त्र A.
५. समानप्रीतयः सन्तः । स देव आरुद्दिविति Sy.
६. रदन्तीति is suggested for दरन्तीति ।
७. मित्रोऽर्यमा वरुणश्च त्रयोऽपि Sy.
८. हन्तारः Sy.
९. बहिर्नो M. बहुनः is suggested for बहिनः । प्रभूतस्य Sy.
१०. स एव च M. इम एव is suggested for म एव । मित्रादयः Sy.
११. वर्धन्ते हविषा स्तुत्या च Sy.
१२. सुखकराः Sy.
१३. ०सितां A.
१४. इम आदित्याः. . .एते Sy.
१५. मित्रा M.
१६. ०णश्चा० is suggested for ०णं चा० । एतद्द्वयमर्यम्णोऽप्युपलक्षणम् Sy.
१७. दम्भितुमशक्याः is suggested for तदङ्क्तिमशक्याः ॥ दुर्दभा अनभिभाव्याः Sy.
१८. आज्ञम् A. अप्रज्ञानमनुष्ठानविषयज्ञानरहितमपि Sy.
१९. चेदयन्ति A.
२०. कर्तारं कर्मानुष्ठानवन्तम् Sy.
२१. ०ज्ञानां A. प्रकृष्टज्ञानवन्तं पुरुषम् Sy.
२२. गच्छन्तः Sy.
२३. प्रापयन्त्यभिमतं यज्ञं स्वर्गादिकं वा Sy.
२४. च is missing in A.
२५. दुष्कृतम् Sy.

**इमे दि॒वो अनि॑मिषा पृथि॒व्याश्चि॑कि॒त्वांसो॑ अचे॒तसं॑ नयन्ति ।**
**प्र॒व्रा॒जे चि॑न्न॒द्यो गा॒धम॑स्ति पा॒रं नो॑ अ॒स्य वि॑ष्पि॒तस्य॑ पर्षन् ॥ ७ ॥**

इमे दिवः[१] । इमे[२] । द्युलोकस्य[३] । अनिमेषेण पश्यन्तः[४] । अस्याश्च पृथिव्याः[५] । ज्ञातारः[६] । अज्ञं[७] मनुष्यं स्तोतारम् । नयति[८] । प्रव्राजो गमनमार्ग उदकस्य तत्र[९] । चास्याः[१०] । नद्याः[११] । स्थलम्[१२] । विद्यते तस्मात्[१३] सुतरेन्नदीं[१४] भवतां तथा सति । परम्[१५] । अस्य । प्रवृद्धस्योदकस्य[१६] । नयन्त्युन्त्विति[१७] काञ्चन नदीमुत्तितीर्षुराहेति[१८] ।[१९]

---

१. वसिष्ठस्य SKN. इत्येतस्मिन् सूक्ते, अस्य पुनः सूक्तस्य प्रथमा सौरीति प्रतिजज्ञे शौनकः । अन्या सर्वा मैत्रावरुण्य इति । इमे इति द्वयोरेव मित्रावरुणयोः । पूजार्थे बहुवचनम् । अर्यमा वा तृतीयः स्यात् । असावपि ह्यस्मिन् सूक्ते श्रूयते । शौनकाभिप्रायस्त्वेवं सति परीक्ष्यः Dur.

२. मित्रादयः Sy. मित्रावरुणार्यमाणः Dur. इमे प्रकृता मित्रो वरुणोऽर्यमा च SKN.

३. दिव एत्य Dur. द्युलोकात् SKN.

४. अनिमिषेण M. सर्वदा जानन्तः Sy. आदरवन्तः Dur. महता यत्नेनेत्यर्थः SKN.

५. पृथिव्याः सम्बन्धिनः Sy. पृथिवीलोकादित्यर्थः Dur. पृथिवीलोकाच्च SKN.

६. जानन्तः Sy. सुकृतदुष्कृतानि कर्माणि प्राणिनां जानन्तः Dur. इदमप्यस्य कर्म अत्रानेन गन्तव्यमित्येतज्जानन्तः SKN.

७. अज्ञानम् Sy. अचेतयमानं प्राणिनं कर्मानुरूपेण Dur. अज्ञं कं देशं केन वा यास्यामीत्येतदजानन्तमित्यर्थः SKN.

८. नयन्ति is suggested for नयति ॥ प्रापयन्ति कर्माणि Sy. अमुं लोकं नयन्ति । यत एवमतस्तानहं ब्रवीमि Dur. प्राणिनं नयन्ति यत्रानेन परिपक्वस्वकर्मवशाद् गन्तव्यम् । यत एनान् मित्रादीन् ब्रवीमि SKN.

९. प्रवणे-अत्यन्तनिम्ने देशे Sy. प्रकृष्ट एतस्मिन् व्रजने मरणाख्ये मृत्युकाल उपस्थिते यदि Dur. प्रकर्षेण व्रज्यते यस्मिन्त्स प्रव्राजो मरणकालस्तस्मिन् । चिच्छब्दो यद्यर्थे । यदि SKN.

१०. अपि Sy.

११. नद्याः गाधमस्ति भवति युष्मत्सामर्थ्यात् Sy. नद्या इव Dur. अस्याः संसारनद्याः SKN.

१२. संसारगाहनसमर्थं कर्म विज्ञानं वा Dur. प्रतिष्ठास्थानं येनास्मिन् संसारनदीश्वभ्रे निमज्जन्तो धारयामहे तज्ज्ञानं कर्म वा किञ्चिदस्ति SKN.

१३. भवति युष्मत्सामर्थ्यात् Sy.

१४. ०दी M.

पारं कूले SKN.

१६. व्याप्तितस्य ? (विप्राप्तस्य) कर्मणः Sy. संसाराध्वनः ।...एवमत्र शब्दसारूप्यादर्थाविरोधाच्च विष्पितो विप्राप्तः संसाराध्वा, इत्युपपद्यते Dur. विप्राप्तस्य विस्तीर्णस्य संसारनदीश्वभ्रस्य SKN.

१७. ०यन्ति ऋत्विति M. नयन्त्वि० is suggested for नयन्त्युन्त्वि० । पारयन्तु । नयन्तु Sy. पारं यन्त्वित्यर्थः Dur. नोऽस्मान्... पारयन्तु गमयन्तु प्रापयन्त्वित्यर्थः । अनादिश्च संसारः श्लिष्यतेऽन्तवांश्चापवर्गेण । अतः पारमपवर्ग इहाभिप्रेतः SKN.

१८. ०त्तितिष्ठरा० A. विष्पितो विप्राप्तः N. 6. 20.; SKN. II. 463.

१९. VM. ignores नः ॥ नोऽस्माकम् Sy.

१५. पारम् is suggested for परम् ॥ ततः

यद्गोपावददितिः शर्म भद्रं मित्रो यच्छन्ति वरुणः सुदासे ।
तस्मिन्ना तोकं तनयं दधाना मा कर्म देवहेळनं तुरासः ॥ ८ ॥

यद् गोपावत्[1] । यदि[2] । गोपनवत्[3] । पृथिवी[4] । गृहम्[5] । भजनीयम्[6] । मित्रः । वरुणश्च[7] । प्रयच्छन्ति । सुदासे[8] राज्ञे । तस्मिन्[9] । वयं पुत्रम् । तत्पुत्रं[10] च । धारयन्तो[11] निदधाना वा[12] । लब्धधनाश्चौर्यादिकं देवानां तधन[13] । मा । कुर्म[14] । हे त्वरमाणाः[15] । इत्युत्तरोऽर्थः[16] प्रत्यक्षः[17] ।

अव वेदिं होत्राभिर्यजेत रिपः काश्चिद्वरुणध्रुतः सः ।
परि द्वेषोभिरर्यमा वृणक्तूरुं सुदासे वृषणा उ लोकम् ॥ ९ ॥

अव[18] वेदिम्[19] । याः काश्चिद्दिवः[20] । रिपूभूताः[21] । वरुणस्य दोग्ध्युः[22] प्रजा भवन्ति । तासां वेदिम्[23] । स[24] वरुणः । ऋत्विग्भिः[25] ।[26] पृथक् करोतु यज्ञोन्मुखानसुरान्[27] विश्लथयतु वा[28] । अर्यमा[29] च । परिवृणक्तु[30] । द्वेषोभिः[31] क्रोधैः । विस्तीर्णम् । स्थानम् । पैजवनाय[32] । वर्षितारौ[33] मित्रावरुणौ कुर्वन्तमिति ।[34]

---

१. गोवाचत् A. २. यत् Sy.
३. ०पवन० A. रक्षणोपेतम् Sy.
४. अदीनोऽर्यमादितिर्वा Sy.
५. सुखं गृहं वा Sy. ६. स्तुत्यम् Sy.
७. एते त्रयो देवाः Sy.
८. सुदासो M. सुदानाय मह्यम् Sy.
९. शर्मणि Sy.
१०. तत्पुत्रादिकम् । अथवा तनयशब्दोऽपत्यसामान्यवचनः । तोकं बलवन्तं पुत्रम् Sy.
११. ०यतो A.
१२. वा is missing in M.
१३. क्रोधनम् is suggested for त धन । देवानां मित्रादीनां कोपनम् Sy.
१४. करवाम or कार्ष्म is suggested for कुर्म ।
१५. हे गमनाय त्वरमाणाः ! Sy.
१६. ०रोऽध्वंः A. रोऽर्थवं: is suggested for ०रोऽर्थः ॥
१७. VM. ignores आ ॥ आ सर्वतः Sy.
१८. अप A. १९. हे मित्रावयः ! Sy.
२०. या कश्चिदिवः A.
२१. हिंसाः प्राप्नुयादिति शेषः Sy.
२२. द्राग्ध्य A. द्रोग्ध्र्यः is suggested for दोग्ध्युः ॥ वरुणेन त्वया हिंसितः सः Sy.
२३. यागसाधनम् Sy.
२४. अस्मद्द्वेषी Sy.
२५. ऋत्युभिः A.
२६. वाग्रूपाभिः स्तुतिभिः सार्धम् Sy. वाङ्नामैतत् Ngh.
२७. वेद्यां कर्माणि कुर्वन् देवाश्च स्तुत्याविल्यर्थः । अवपूर्वो यजतिस्त्यागार्थः Sy.
२८. वा is suggested for ना ।
२९. अतर्यमा A अस्मांस्त्वर्यमा देवः Sy.
३०. वर्जयतु Sy.
३१. द्वेष्टृभी रक्षःप्रभृतिभिः Sy.
३२. वैजव० A. शोभनदानाय मह्यं प्रयच्छतम् Sy.
३३. हे वर्षकौ ! कामानां मित्रावरुणौ ! Sy.
३४. VM. ignores उ ।

**सस्वश्चिद्धि समृतिस्त्वेष्येषामपीच्येन सहसा सहन्ते ।**
**युष्मद्भिया वृषणो रेजमाना दक्षस्य चिन्महिना मृळता नः ॥ १० ॥**

सस्वश्चित् । एषामसुराणां[1] जलैः पुरैर्वा । तिरोहिता[2] । समृतिः सङ्गतिः सङ्घः[3] । त्वेषी दीप्तिमती[4] भवति । तथान्तर्हितेन[5] । बलेन । अभिभवन्ति[6] सर्वाः[7] प्रजाः । युष्मत्[8] । भयेन[9] । हे वर्षितारः[10] ! कम्पमानाः[11] । अपि च्छिद्रेषु प्रहरन्ति[12] । बलस्य[13] । महत्त्वेन । तत्रास्मान्[14] । सुखयतेति[15] ।[16]

**यो ब्रह्मणे सुमतिमायजाते वाजस्य सातौ परमस्य रायः ।**
**सीक्षन्त मन्युं मघवानो अर्य उरु क्षयाय चक्रिरे सुधातु ॥ ११ ॥**

यो ब्रह्मणे । यः[17] । ब्राह्मणाय मह्यम्[18] । सुमतिम्[19] । अन्नस्य । परस्य[20] च । धनस्य । लाभार्थम्[21] । आप्रयच्छन्ति[22] सुदा[23] पैजवनः । तस्य शत्रोः[24] । क्रोधम्[25] । तस्य भगाः[26] सहन्ताम्[27] । धनवन्तः । तथा विस्तीर्णम्[28] । शोभनं सन्धानं[29] च स्थानम् । आवासाय[30] । कुर्वन्त्विति[31] ।

१. एषां मित्रादीनाम् Sy.
२. अन्तर्हिता निगूढा Sy.
३. सङ्घः A. सङ्गतिः संहतिर्वा Sy.
४. ०मति A. दीप्ता Sy.
५. अपीच्यमित्यन्तर्हितनाम Ngh. 3. 25.
६. अहि भ० A. ७. अस्मद् द्वेष्टॄन् Sy.
८. युष्मत्तः Sy. ९. भीत्या Sy.
१०. हे अभिमतवर्षका मित्रादयः ! Sy.
११. कम्पमाना भवन्ति विरोधिनः Sy.
१२. ०रन्ती A.
१३. यस्मादेवं तस्माद् युष्माकं बलस्य Sy.
१४. अस्मभ्यम् Sy.
१५. उपदयां कुरुत Sy.
१६. VM. ignores चित् and हि ।
१७. यजमानः Sy.
१८. परिवृढस्त्वकर्मणे युष्मत्स्तोत्ररूपायSy.
१९. शोभनां बुद्धिम् Sy.
२०. उत्कृष्टस्य Sy.
२१. अलार्थम् A. दाने निमित्ते Sy.
२२. ०च्छति is suggested for ०च्छन्ति ॥ यजतिरत्र दाने । ददाति करोति Sy.
२३. सुदा वेज० A. सुदाः is suggested for सुदा ॥
२४. तस्यार्यः, ईरयति स्तुतीः प्रेरयतीत्यरिः तोता Sy. २५. स्तोत्रम् Sy.
२६. दानवन्तोऽर्यमादयः Sy.
२७. सचन्ते Sy.
२८. ०र्णाम् Sy.
२९. ०ना स० A. ०नस० is suggested for ०नं स० ॥ सुधाम शोभनस्थानम् Sy.
३०. मा वा० A. Sy. explains उरु and क्षयाय together as a compound word but padapātha and VM. mean उरु and क्षयाय as two words. सेवित्वा च तस्य विस्तीर्णनिवासाय Sy.
३१. कुर्वते ।

इयं॑ देव पु॒रोहि॑तिर्यु॒वभ्यां॑ य॒ज्ञेषु॑ मित्रावरुणावकारि ।
विश्वा॑नि दु॒र्गा पि॑पृतं ति॒रो नो॑ यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ १२ ॥

इयम्[1]। हे देवौ ! मित्रावरुणौ ! युवाभ्याम् । इयम् । पुरोहितिः[2] पुरोनिधानयोग्या स्तुतिः । यज्ञेषु । अकारि[3] । विश्वानि[4] । दुर्गाणि[5] । अतिवारयतम्[6] । तस्मात्[7] ।

VII. 61.

उद्वां॒ चक्षु॑र्वरुण सु॒प्रती॑कं दे॒वयो॑रेति॒ सूर्य॑स्तत॒न्वान् ।
अ॒भि यो विश्वा॒ भुव॑नानि॒ चष्टे॒ स म॒न्युं मर्त्ये॒ष्वा चि॑केत ॥ १ ॥

[8]उद्वां चक्षुः । उदेति[9] । युवयोः । देवयोः[10] । तेजः[11] । सुखम्[12] । अन्तरिक्षे विस्तारयन् । सूर्यः । हे मित्रावरुणौ । यः[13] सूर्यः । सर्वाणि । भुवनानि[14] । अभिपश्यति । सः[15] । मनशीलस्थम्[16] । मनः[17] । आचिकेत[18] तेजसा प्रज्ञापयति ।

प्र वां॒ स मि॑त्रावरुणावृ॒तावा॒ विप्रो॒ मन्मा॑नि दीर्घ॒श्रुदि॑यर्ति ।
यस्य॒ ब्रह्मा॑णि सुक्रतू॒ अवा॑थ॒ आ यत्क्रत्वा॒ न श॒रदः॑ पृ॒णैथे॑ ॥ २ ॥

प्र वां सः । प्रेरयति प्रेरयति[19] । वाम्[20] । सः[21] । मेधावी । बहुश्रुतो वसिष्ठः[22] । हे मित्रावरुणौ !

---

१. अनया स्तुतिमुपसंहरति Sy.
२. पुरस्क्रिया पूजा स्तुतिलक्षणा Sy.
३. कृताभूत् Sy.
४. तां सेवयित्वा सर्वाणि Sy.
५. दुःखेन गन्तव्यान्यापदः Sy.
६. ०यतः M. ०पारय० is suggested for ०वारय ॥ तिरस्कुरुतम् । तथा कृत्वा पारयतम् । शिष्टो गतः Sy.
७. अस्मान् is suggested for तस्मात् ।
८. 'उद्वां चक्षुः' इति सप्तर्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं मैत्रावरुणम् । 'उद्वां सप्त' इत्यनुक्रमणिका (KSA 37. 31. p. 26.) । विनियोगो लैङ्गिकः Sy.
९. उद्गच्छति Sy. १०. द्योतमानयोः Sy.
११. प्रकाशकं तेजः Sy.
१२. शोभनरूपम् Sy.
१३. अथोदितो यो देवः Sy.
१४. भव० M. भूतजातानि Sy.
१५. देवः Sy.
१६. मानशीलस्थं M. मरणशीलेषु is suggested for मनशीलस्थम् ॥ मर्त्येषु प्रवृत्तम् Sy.
१७. स्तोत्रं कर्म वा Sy.
१८. आजानाति Sy.
१९. प्रेरयति । वाम् । सः । is written twice in A. One प्रेरयति seems to be redundant.
२०. युवयोः Sy. २१. प्रसिद्धः Sy.
२२. चिरकालं श्रोता । एवमुक्तलक्षणो वसिष्ठः Sy.

यज्ञवान् । स्तोत्राणि[1] । यस्य[2] । स्तोत्राणि[3] । हे सुप्रज्ञानौ[4] ! रक्षथः । यानि च स्तोत्राणि । कृष्यादिना कर्मणा[5] । शरदः[6] । इवोषधिभिः कामैः । आपूरयथ[7] ।

**प्रोरोर्मित्रावरुणा पृथिव्याः प्र दिव ऋष्वाद्बृहतः सुदानू ।**
**स्पशो दधाथे ओषधीषु विक्ष्वृधग्यतो अनिमिषं रक्षमाणा ॥ ३ ॥**

प्रोरोः । प्रकर्षेण[8] । दधाथे[9] । हे मित्रावरुणौ[10] ! सुदानौ[11] । विस्तीर्णायाः । पृथिव्याः । दिवश्च[12] । महतः[13] । दर्शनीयादुदितौ[14] । तेजांसि[15] । औषधीषु[16] । मनुष्येषु[17] च । पृथक्[18] पृथक् । स्तुतिभिरभिगच्छतो मनुष्यान्[19] । अनिमेषम्[20] । रक्षमाणाविति[21] ।

**शंसा मित्रस्य वरुणस्य धाम शुष्मो रोदसी बद्बधे महित्वा ।**
**अयन्मासा अयज्वनामवीराः प्र यज्ञमन्मा वृजनं तिराते ॥ ४ ॥**

शंसा मित्रस्य । स्तुहि[22] । मित्रावरुणयोः । तेज[23] । योर्बलमेतयोः[23] । महत्त्वेन[24] । द्यावापृथिव्यौ[25] । बाधते[26] । गच्छन्तु । मासाः[27] । अयज्वनाम्[28] । अनुत्पादितपुत्राः[29] । प्रवर्धयतु[30] । यज्ञबुद्धिः[31] । बलमिति ।

---

१. मननीयानि स्तोत्राणि Sy.
२. ऋषेः Sy.
३. परिवृढानि स्तोत्राणि Sy.
४. प्रज्ञानौ M. हे शोभनकर्माणौ ! Sy.
५. कृष्यादीनां कर्मणां M. यत्कर्म Sy.
६. शरदे A. बहून् संवत्सरान् Sy.
७. ०यथः is suggested for ०यथ ॥ आपूरयेथे स उदियर्ति Sy.
८. प्ररिरिचाथे । 'अस्येदेव प्र रिरिचे' (RV. 1. 61. 9.) इत्यादिषु प्रशब्दस्य रिरिचे इत्यनेन सह सम्बन्धदर्शनादत्राप्युचितक्रियाध्याहारेण रिरिच इति योज्यम् Sy.
९. धारयेथे । According to Sy. दधाथे goes with स्पशः in the text.
१०. हे मित्रावरुणौ ! युवाम् Sy.
११. हे शोभनदानौ ! Sy.
१२. द्युलोकादपि प्ररिरिचाथे Sy.
१३. स्वरूपतोऽतिमहतः Sy.
१४. गुणैर्महतः Sy. १५. रूपम् Sy.
१६. ओष० is suggested for औष० ।
१७. प्रजासु निमित्तभूतासु प्रजासु चेति वा Sy.
१८. सत्येन Sy.
१९. विवेकात् सत्येन गच्छतो जनान् Sy.
२०. अव्यवधानेन सर्वदा Sy.
२१. पालयन्तौ Sy.
२२. हे ऋषे ! Sy.
२३. तेजः । ययो० is suggested for तेज योः ॥ तेजःस्थानम् Sy.
२४. स्वमहत्त्वेन Sy. २५. सह वर्तमाने Sy.
२६. बा(पा-)धते A बध्नाति पृथक् पृथक् स्थापयति । इयं पृथिवीयं द्यौरिति पृथक् करोति । 'द्यावापृथिवी सहास्ताम्' इति श्रुतेः Sy.
२७. कालावयवाः Sy.
२८. अयं ज्व० A. अननुष्ठातॄणाम् Sy.
२९. अपुत्राः Sy.
३०. प्रपूर्वस्तिरतिर्वर्धनार्थः Sy.
३१. यज्ञबल बुद्धिमिति M. तद्विपरीतो यज्ञार्थं मतिमान् यज्वा Sy.

अमूरा विश्वा वृषणाविमा वां न यासु चित्रं ददृशे न यक्षम् ।
द्रुहः सचन्ते अनृता जनानां न वां निण्यान्यचिते अभूवन् ॥ ५ ॥

अमूरा[1] । युवयोः[2] । इमानि विश्वानि भूतानि[3] । अमूढानि[4] । इमाश्च[5] दिशः[6] । यासु[7] दिक्षु स्थितम्[8] । चित्रं[9] नानारूपमुद्भूतं च । भूतम्[10] । मनुष्यैर्न । दृश्यते । जनानाम् । द्रोग्धारः[11] । पापानि[12] । सेवन्ते । तत्र न[13] । युवयोः[14] । अन्तर्हितानि[15] कानिचित् पापानि । अभवन्[16] । अप्रज्ञाते[17] देशे[18] ।

समु वां यज्ञं महयं नमोभिर्हुवे वां मित्रावरुणा सबाधः ।
प्र वां मन्मान्यृचसे नवानि कृतानि ब्रह्म जुजुषन्निमानि ॥ ६ ॥

समु वाम् । सम्पूजयामि[19] । युवयोः । यज्ञमहम् । हविर्भिः[20] । हुवे[21] च । वाम् । मित्रावरुणौ ! बाधासहितः[22] । प्रसेवन्ताम्[23] । वाम्[24] । मननीयानि[25] । अर्चनार्थम्[26] । नवानि[27] । कृतानि[28] । स्तोत्राणि[29] । इमानि[30][31] ।

इयं देव पुरोहितिर्युवभ्यां यज्ञेषु मित्रावरुणावकारि ।
विश्वानि दुर्गा पिपृतं तिरो नो यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

(इयं देव[32] ।)

---

१. आमूरा A. २. युवाभ्याम् Sy.
३. हे व्याप्तौ !
४. अमूह्य(ल्ह)नौ० A. हे अमूढौ ! Sy.
५. इमानि स्तुतिवचांसि क्रियन्ते Sy.
६. दिशे A. ७. यासु स्तुतिषु Sy.
८. स्थितः A. ९. आश्चर्यम् Sy.
१०. न यक्षं न पूजा दृश्यते युवाभ्यां महिम्नोऽपि महत्त्वात् प्रयत्नेन क्रियमाणमपि स्तोत्रं न चमत्करोतीत्यर्थः Sy.
११. द्रोग्धार A.
१२. स्तुत्यविषयाणि स्तोत्राणि Sy.
१३. न महान्तः Sy.
१४. युवाभ्यां क्रियमाणानि Sy.
१५. अन्तर्हितानि रहस्यान्यपि स्तोत्राणि Sy.
१६. भवन्ति Sy. १७. अज्ञानाय Sy.
१८. VM. ignores वृषणौ ॥ हे वर्षितारौ Sy.
१९. सुः पूज० A.
२०. नमस्कारैः स्तुतिभिः Sy.
२१. भुवे A. आह्वयामि बाधापरिहाराय Sy.
२२. वासा सहित A. बाधायुक्तोऽहम् Sy.
२३. प्रीणयन्तु Sy.
२४. वा A. युवाम् Sy.
२५. स्तोत्राणि प्रभवन्त्वित्यध्याहारः Sy.
२६. सेवितुम् Sy.
२७. नूतनानि स्तुत्यानि वा Sy.
२८. मया समूहीकृतानि Sy.
२९. परिवृढानि स्तोत्राणि Sy.
३०. इदानीं क्रियमाणानि Sy.
३१. VM. ignores उ ।
३२. This *pratīka* is supplied by the editor. The stanza has already been explained. See RV. VII. 60. 12.

VII. 62.

**उत्सूर्यो॑ बृ॒हद॒र्चींष्य॑श्रेत्पु॒रु विश्वा॒ जनि॑म॒ मानु॑षाणाम् ।**
**स॒मो दि॒वा द॑दृशे॒ रोच॑मान॒: क्रत्वा॑ कृ॒तः सु॒कृ॑तः क॒र्तृभि॑र्भूत् ॥ १ ॥**

[1] उत्सूर्यः । उदश्रेत् [2] प्राप । सूर्यः [3] । महान्ति [4] । अर्चींषि [5] । पुरुणि [6] च । जातानि [7] । सर्वाणि । मानुषाणाम् [8] । समा [9] । एव वा [10] । दृश्यते । दीप्यमानः [11] । 'तस्मात् सर्व एव मन्यते मां प्रत्युदगात्' [12] इति ब्राह्मणम् । उदिते च सूर्ये कर्तृभिः [13] । कृतः [14] । अत्थ [15] प्रज्ञानेन [16] तेजसा वा प्रादुर्भूतेन । सुकृतः [17] । भवति, रात्रौ हि कृतं दुष्कृतं भवति ।

**स सू॑र्य॒ प्रति॑ पु॒रो न॒ उद्गा॑ ए॒भिः स्तोमे॑भिरेत॒शेभि॒रेवैः॑ ।**
**प्र नो॑ मि॒त्राय॒ वरु॑णाय वो॒चोऽना॑गसो अर्य॒म्णे अ॒ग्नये॑ च ॥ २ ॥**

स सूर्य । सः [18] । सूर्य [19] ! त्वम् [20] । अस्माकम् [21] । पुनः [22] । प्रत्युदगात् [23] । एभिः । स्तोमेभिर्मया [24] क्रियमाणैः ।

---

१. 'उत्सूर्यः' इति षडृचं सप्तमं सूक्तम् । अत्रानुक्रमणिका—'उत्सूर्यः षळाद्यास्तिस्रः सौर्यः' (KSA. 37. 62. p. 26.) इति । वसिष्ठऋषिः । त्रिष्टुप् छन्दः । आद्यास्तिस्रः सूर्यदेवत्याः । शिष्टा मित्रावरुणदेवत्याः । सूक्तविनियोगो लैङ्गिकः Sy.

२. ऊर्ध्वं श्रयति Sy.

३. सर्वस्य प्रेरको देवः Sy.

४. अत्यधिकम् Sy.

५. तेजांसि Sy.

६. बहूनि Sy.

७. जनिमानि जनान् । जनशब्दः सङ्घवचनः । तान् प्रत्युदश्रेत् Sy.

८. मनुष्याणाम् Sy.

९. समः is suggested for समा ॥ एकरूपः प्रतिनियतः सन् Sy.

१०. दिवा is suggested for एव वा ॥ स देवोऽहनि Sy.

११. रोचमानः सन् Sy.

१२. ०दकादि० A.
'तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति' इति हि श्रुतिः Sy.

१३. स्तुतिकर्तृभिः Sy.

१४. सर्वस्य कर्ता Sy.

१५. अथ is suggested for अत्थ ॥ सम्पादितः प्रजापतिना Sy.

१६. सर्वस्य कर्ता Sy.

१७. स्तुत्या तीक्ष्णीकृतः Sy.

१८. सू A. प्रसिद्धस्त्वम् Sy.

१९. हे सूर्य ! Sy.

२०. ०र्यस्त्व० M.

२१. अस्मान् प्रति Sy.

२२. पुरः is suggested for पुनः ॥ पुरस्तात् Sy.

२३. ०त्युदका M. ०त्युदगाः is suggested for ०त्युदगात् ॥ उद्गच्छ Sy.

२४. स्तोमैः is suggested for स्तोमेभिः ॥ स्तुत्यैः Sy.

एतशैः[1] श्वाश्वैः । गन्तृभिः[2] सह । अदितिश्च सन्[3], अस्मान् । मित्रादिभ्यः[4] । प्रब्रूहि । अपापान्[5][6] ।

**वि नः॑ सह॒स्रं॑ शु॒रुधो॑ रदन्त्वृ॒तावा॑नो॒ वरु॑णो मि॒त्रो अ॒ग्निः ।**
**यच्छ॑न्तु च॒न्द्रा उ॑प॒मं नो॑ अ॒र्कमा नः॒ कामं॑ पूपुरन्तु॒ स्तवा॑नाः ॥ ३ ॥**

वि नः सहस्रम्[7] । विलिखन्तु[8] । भिन्नाग्राः कुर्वन्तु[9] । अस्माकम्[10] । वल्लीः[11] । ओषधीः शुचो रोधयित्रीः[12] । यज्ञवन्तः[13] । वरुणः[14] । मित्रः । अग्निः । प्रयच्छन्तु च । ल्हादकाः[15] । अस्मभ्यम् । उपमानभूतम्[16] । अन्नम्[17] । आपूरयन्तु[18] च । अस्माकम् । स्तूयमानाः[19] । कामम्[20] ।

**द्यावा॒भूमी॑ अदिते॒ त्रासी॑थां नो॒ ये वां॑ ज॒ज्ञुः सु॒जनि॑मान ऋष्वे ।**
**मा हेळे॑ भूम॒ वरु॑णस्य वा॒योर्मा मि॒त्रस्य॑ प्रि॒यत॑मस्य नृ॒णाम् ॥ ४ ॥**

द्यावाभूमी[21] । उभे[22] द्यावाभूमी[23] ! रक्षेथाम्[24] । अस्मान्, तत्र विशेषेण भूमिमा[25] आयते[26] । अदिते[27] ! इति त्वं

---

१. एतशोश्चाभि M. एतशैश्चाश्वैः is suggested for एतशैः श्वाश्वैः ॥ एतवर्णैः । स्वार्थिकः शकारः । 'या जरन्ता युवशा ता' (RV. 1. 161. 7) । 'पुरुषः कृष्णशवास्युत्तरतः' (AB. 5. 14.) इत्यादिवत् Sy.

२. गमनशीलैरश्वैरुद्गाः Sy.

३. अथ तथा कृत्वास्माभिः स्तुतः सन् नोऽस्मान् Sy.

४. आदि refers to वरुणाय । अर्यम्णे and अग्नये ॥ अत्र सौर्ये इतरेषां मित्रादीनां सङ्कीर्तनं तेषामपि निपातभाक्त्वादविरुद्धम् । एवं पूर्वत्रोत्तरत्र च मैत्रावरुणेऽर्यमादीनां सङ्कीर्तनमपि न विरुध्यते Sy.

५. ०पात् A.

६. VM. ignores च ।

७. ०स्रा A.

८. वितरन्तु Sy.

९. कुर्वंस्त्वम् M.

१०. अस्मभ्यम् Sy.

११. सहस्रसंख्याकं धनम् । यद्वा सहस्रसंख्याकाः Sy.

१२. तु(कृ)चो A. शुचेर्दुःखस्य प्रतिरोद्धारः—अथवा, उक्तलक्षणा ओषधीः Sy.

१३. सत्यवन्तो वरुणादयः Sy.

१४. वरुणे मित्रे अग्निम् M.

१५. आह्लादकारिणः Sy.

१६. स्तुत्यम् Sy.

१७. अर्चनीयम् Sy.

१८. पूरयन्तु हे सूर्य ! त्वयानुज्ञाता इति सूर्यस्य स्तुतिः Sy.

१९. मानं A. अस्माभिः स्तूयमानाः Sy.

२०. कामं A. अपेक्षितम् Sy.

२१. ०भूमिम् A. २२. भे A.

२३. ०भूमि A.
हे द्यावापृथिव्यौ ! Sy.

२४. रक्षेयाम् A. रक्षतम् Sy.

२५. भूमिमा A. भूमिर्माम् is suggested for भूमिमा ॥

२६. अयते A.

२७. हे अखण्डनीये ! एतद्द्यावाभूम्योरेवैकवचनेन सम्बोधनम् Sy.

विशेषेण त्रायस्वेति । ये[१] । वाम्[२] । ज्ञातवन्तः[३] । शोभनजन्मानः । दर्शनीये[४] । मा । क्रोधे । भूम[५] । वत्रणस्य[६] । वायोश्च । मित्रस्य । नृणाम्[७] । प्रियतमस्येति[८] ।

**प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।**
**आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ॥ ५ ॥**

[९]प्र बाहवा । प्रसारयतम्[१०] । बाहू[११] । जीवनाय[१२] । अस्माकम्[१३] । गोमार्गं च[१४] । अस्माकम् । उदकेन[१५] । आसिञ्चतम्[१६] । आश्रावयतं[१७] च । अस्मान्[१८] । जनेषु[१९] । युवानौ[२०] ! शृणुतं[२१] च । हे मित्रावरुणौ[२२] ! मम । इमानि[२३] । स्तोत्राणि[२४] ।

---

१. वयम् Sy. २. युवाम् Sy. ३. ज्ञातवन्तः स्म Sy. ४. हे महत्यौ ! Sy. ऋष्व इति महन्नाम Ngh. 3.3. ५. भ्रम A.

६. वतृणस्य M. वरुणस्य is suggested for वत्रणस्य ॥ किञ्च वयं वरुणस्य Sy.

७. स्तुतिनेतॄणां मनुष्याणाम् Sy.

८. मित्रस्य हेळे मा भूम Sy.

९. 'प्र बाहवा' इति पञ्चमी मैत्रावरुणे पशौ पशुपुरोडाशस्य याज्या। सूत्रितञ्च—'प्र बाहवा सिसृतं जीवसे नो यद्बंहिष्ठं नातिविधे सुदानू' (ĀSS 3. 8.) इति Sy.

१०. ०यत M. प्रसारयतं हविःस्वीकाराय धनप्रदानाय वा Sy. अन्तर्भूतण्यर्थः । प्रसारयतम् । जीवनविघ्ननिवारणाय बाहुप्रसारणं कुरुतमित्यर्थः Mah. आगच्छतम् । यद्वा बाहवा बाहुबलेन सह बाहुबलवन्तावागच्छतम् BB.

११. बाहोर्बलं बाहुशब्देनोच्यते । अर्शआदित्वादच् । बाहवा बाहवौ बाहुबलवन्तौ युवाम्, . . . तृतीयैकवचनस्य नाभावाभावे गुणश्छान्दसः BB.

१२. जीवहाय A. चिरं जीवनाय Ngh बाहुप्रसारणं जीवनहेतुप्रतिपक्षनिराकरणायेत्यर्थः U. जीवयितुम् । . . . . अस्माकं वा जीवसे जीवनाय BB. १३. अस्मान् BB.

१४. गावो यान्ति गच्छन्त्यत्रेति गव्यूतिर्गोमार्गभूमिः, तां तृणादिप्ररोहाय Sy. गव्यूतिं क्षेत्रम् Mah. गवि पृथिव्यामूतिमवनम् । जीवनहेतुभूतानि क्षेत्राण्यत्राभिप्रेतानि । तदर्थं हि वृष्टिः प्रार्थ्यमाना दृष्टार्था भवति । गोजातिविषयभूतां वेतिमवनमार्गम् । भक्षणमार्गाभिप्रायतो गोप्रवाहमिति यावत् U. गव्यूतिं गोप्रचारम् । गावो यूयन्ते मिश्र्यन्तेऽस्यामित्यधिकरणे क्तिन् BB. १५. जलेन Mah. अक्षारोदकेन U. आगत्य च. . . घृतेन BB.

१६. समन्तात् सिञ्चतम् Sy. सिञ्चतम् Mah. आभिमुख्येन सिञ्चन्तम् U. समन्तादुक्षतम् BB.

१७. विश्रुतं कुरुतम् Sy. इत्थमदाद् इत्थमयाक्षीदिति लोके मां कथयतमित्यर्थः । वृद्ध्यभाव आर्षः Mah. प्रकथयतमित्थमदादित्थमयाक्षीदिति U. समन्ताच्छ्रावयतम् । यद्वा—अस्माकं जनपदेषु युवयोर्बाहुबलं ख्यापयतम् । शृणोतेर्णिचि वृद्ध्यभावश्छान्दसः BB.

१८. भवत्सिक्तक्षेत्रनिष्पन्नधान्यैर्यज्विनं मा माम् Mah. सिक्तधान्यनिष्पत्तिहेतुना यज्ञं कुर्वाणं मा माम् U.

१९. अस्मत्समाने मनुष्यसमूहे वा Sy. जनपदे Mah., U. जनेषु जनपदेषु BB.

२०. युवाना A. हे नित्ययुवानौ ! सर्वत्र व्याप्तौ वा युवाम् Sy. तरुणौ छिन्नजरसौ Mah. उच्छिन्नजरसौ U. नित्यतरुणौ मिश्रितौ वा । पूर्ववदाकारः BB.

२१. श्रुत्वा पूर्वोक्तं कुरुतमित्यर्थः । शृणोतेः शपो लुक् Mah. आशृणुतं मम । . . . . श्रुत्वा चातिष्ठतमित्यभिप्रायः U.

२२. ०रुणो A. हे मित्रावरुणौ ! देवौ ! युवाभ्याम् Sy. २३. इमानस्मदीयान् BB.

२४. आह्वानानि Sy., Mah., U. हवान् आह्वानानि BB.

This stanza=YV. 21. 9=TS 1. 8. 22. 3.

नू मि॒त्रो वरु॑णो अर्य॒मा न॑स्त्मने॑ तो॒काय॒ वरि॑वो दधन्तु ।
सु॒गा नो॒ विश्वा॑ सु॒पथा॑नि सन्तु यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ६ ॥

नू मित्रः । क्षिप्रम्[1] । मित्रः । वरुणः । अर्यमा[2] च । अस्माकम् । आत्मने[3] । पुत्राय च । धनम् । प्रयच्छन्तु । सुगानि[4] । अस्माकम् । विश्वानि[5] । स्थानानि[6] । भवन्तु ।

VII. 63.

उद्वे॑ति सु॒भगो॑ वि॒श्वच॑क्षाः॒ साधा॑रणः॒ सूर्यो॒ मानु॑षाणाम् ।
चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्य दे॒वश्चर्मे॑व॒ यः स॒मवि॑व्य॒क्तमां॑सि ॥ १ ॥

उद्वेति[7] । उदेति[8] । एव[9] । सुभगः[10] । विश्वस्य द्रष्टा[11] । समानः[12] । सूर्यः[13] । मनुष्याणाम्[14] । मित्रावरुणयोः । चक्षुः[15] । देवः[16] । यः । चमेव[17] विस्तृतान्तरिक्ष्याणि[18] । तम[19] तमांसि । तत् पिण्डयति[20] ।

उद्वे॑ति प्रसवी॒ता जना॑नां म॒हान्के॒तुर॑र्ण॒वः सूर्य॑स्य ।
स॒मा॒नं च॒क्रं प॑र्या॒विवृ॑त्स॒न्यदे॑त॒शो वह॑ति धू॒र्षु यु॒क्तः ॥ २ ॥

उद्वेति । उदेति[21] । प्रेरयिता[22] । जनानाम् । महत्[23] । प्रज्ञापयिता[24] रश्मिः । उदकवान्[25] । सूर्यस्य[26] ।

---

१. अद्य Sy. २. एते त्रयो देवाः Sy.
३. आत्महिताय Sy. ४. सुगमनानि Sy.
५. सर्वाणि गन्तव्यानि Sy. ६. स्वानानि A.
७. 'उद्वेति' इति षड्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । आद्याश्चतस्रः पञ्चम्याः पूर्वार्धश्च सूर्यदेवतया अवशिष्टास्त्रयोऽर्धर्चा मित्रावरुणदेवतयाः । तथा चानुक्रान्तम्—'उद्वेतीति चार्धपञ्चमाः' (KSA. 37. 63. p. 26.) इति । विनियोगो लैङ्गिकः Sy.
८. उद्गच्छति Sy. ९. अव A.
१०. शोभनभाग्यः सुष्ठु भजनीयो वा Sy.
११. दृष्टो A. सर्वस्य द्रष्टा Sy.
१२. साधारणत्वप्रतिपादकश्रुतिः पूर्वमुदाहृता cf. RV. VII. 62. 1. 'तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति' ।
१३. अयं सूर्यः Sy. १४. सर्वेषां मनुष्याणाम् Sy.
१५. प्रकाशकः Sy. १६. द्योतमानः Sy.
१७. य इवमेव M. चर्मेव is suggested for चमेव ॥ चर्माणीव
१८. ०तमान्त० A. विस्तृतान्यान्त० is suggested for विस्तृतान्त० ।
१९. मम तमांसि M. तम seems to be redundant.
२०. तं पिण्डति A. सम् is suggested for तत् ॥ सह विचति । संवेष्टयति । स महानुभावो देव उदेति Sy. २१. उद्गच्छति Sy.
२२. सर्वेषु कर्मस्वनुज्ञाता Sy.
२३. महान् is suggested for महत् ॥ पूज्यः Sy.
२४. सर्वस्य प्रज्ञापकः Sy.
२५. उदकप्रदः Sy.
२६. अयं सूर्यस्य सर्यः विभक्तिव्यत्ययः Sy.

समवृत्तम्[1] । चक्रम्[2] । पर्यावर्तयितुमिच्छन् । यस्मिन् काल[3] । विनशः[4] । वहति । रथस्य सूक्ष्[5] । युक्तः ।

**विभ्राजमान उषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः ।**
**एष मे देवः सविता चच्छन्द यः समानं न प्रमिनाति धाम ॥ ३ ॥**

[विभ्राजमानः][6] विभ्राजमानः[7] । उषसाम् । उत्सङ्गात्[8] । स्तोतृभिः । उदेति । अनुमाद्यमानः[9] । एषः । मे[10] । देवः[11] । सविता । उपच्छन्दनं करोति[12] । यः[13] । समानं सर्वेषाम्[14] । तेजः[15] । न । हिनस्ति[16] ।

**दिवो रुक्म उरुचक्षा उदेति दूरेअर्थस्तरणिर्भ्राजमानः ।**
**नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि ॥ ४ ॥**

दिवः[17] । दिवः[18] । रोचमानः[19] । महातेजाः[20] । उदेति । दूरे गमनं यस्य भवत्युदितमात्रस्य[21] । क्षिप्रगतिः[22] । भ्राजमानः[24] । इदानीम्[25] । जनाः[26] । सूर्येण[27] । प्रसूताः[28] । प्राप्नुवन्ति । गन्तव्यानि स्थानानि[29] । कुर्वन्ति च । कर्माणि[30] ।

---

१. किं कुर्वन्नुदेति ? इत्युच्यते । सर्वेषामेकरूप-मेकमेव Sy.

२. रथाङ्गम्, चरणशीलं रथं वा Sy.

३. काले is suggested for काल ॥ यद्रथ-चक्रम् Sy.

४. विनाशः M. एतशः is suggested for विनशः ॥ एतशवर्णो हरितवर्णोऽश्वः 'एको अश्वो वहति सप्तनामा' (RV. 1. 164. 2.) इत्युक्तम् Sy.

५. सुष्ठु M. धूर्षु is suggested for सूक्ष् ॥

६. The *Pratīka* is supplied by the Editor.

७. अयं सूर्यो विशेषेण दीप्यमानः Sy.

८. उपस्थे मध्ये Sy.

९. अरमा० A. अनुमद्यमानः सन् Sy.

१०. मह्यम् Sy.  ११. द्योतमानः Sy.

१२. इवच्छ० A. उपच्छन्दयति कामान् Sy.

१३. देवः Sy.

१४. सर्वेषां प्राणिनामेकरूपम् Sy.

१५. तेजः A. स्वीयं तेजः स्थानम् Sy.

१६. हिनस्ति सङ्कोचयति स देव उदेति Sy.

१७. मिव A. M.

१८. अन्तरिक्षात् यद्वा अन्तरिक्षस्य Sy.

१९. अयं सूर्यः रुक्मो रोचमानः । यद्वा रुक्म आभ-रणस्थानीयः Sy.

२०. प्रभूततेजाः सन् Sy.

२१. दूरे गन्ता । अर्थोऽर्त्तेः । दूरे प्रार्थ्यमानो वा Sy.

२२. यस्यु भवन्त्युदि० A.

२३. तारकः Sy.

२४. दीप्यमानः सन् उदेति Sy.

२५. निश्चयम् Sy.

२६. सर्वे प्राणिनः Sy.

२७. प्रेरकेण देवेन Sy.

२८. अनुज्ञाताः प्रेरिताः सन्तः Sy

२९. अनुष्ठेयानि Sy. ३०. ०णिः A.

यत्रा॒ च॒क्रुर॒मृता॑ गा॒तुम॑स्मै श्ये॒नो न दीय॒न्नन्वे॑ति॒ पाथः॑ ।
प्रति॑ वां॒ सूर॒ उदि॑ते विधेम॒ नमो॑भिर्मित्रावरु॒णोत ह॒व्यैः ॥ ५ ॥

[1] यत्रा चक्रुः । यत्र । [2] चक्रुः । [3] देवाः । [4] मार्गम् । [5] अस्मै तत् । [6] अन्तरिक्षम् । [7] श्येनः । [8] इव । गच्छति । [9] अनुगच्छन्ति । [10] प्रतिविधेम । [11] [12] युवयोः । [13] सूर्येऽस्मिन् । [14] उदिते । [15] नमोभिः । [16] अपि च । हव्यैश्च । [17] मित्रावरुणौ ! इति । [18]

---

१. वसिष्ठस्यार्षम् । अस्याः प्रथमोऽर्धर्चः सौर्य इति प्रतिजज्ञे शौनकः । मैत्रावरुणयोर्द्वितीय इति Dur. वसिष्ठस्यार्षम् । अस्याश्च प्रथमोऽर्धर्चः सौरो द्वितीयो मैत्रावरुणः । तेन भिन्ने एवैते वाक्ये SKN.

२. यस्मिन्नन्तरिक्षे Sy. यदा Dur. यस्मिन्नभसः प्रदेशे SKN.

३. अकुर्वन् Sy. कृतवन्तः Dur., SKN.

४. अमरणधर्माणः पूर्वे देवाः Sy.

५. गातुं गमनमार्गमुदयादारभ्य यावदस्तमय इति Dur. गंस्यते येन मार्गेण गातुं गमनमार्गम् SKN.

६. सूर्याय Sy., Dur. सूर्यायेति निर्देशः । अस्य सूर्यस्येत्यर्थः SKN.

७. अन्तरिक्षं तेन मार्गेण....'श्येनो न दीयन्नन्वेति पाथः' (VII. 63. 5.) इत्यनेन सम्बन्धात् 'पाथोऽन्तरिक्षम्' इत्युपपद्यते । अपठितमप्येतदन्तरिक्षनामसु । इत्यप्रतीतार्थम् Dur.

८. शंसनीयगमनो गृध्रः Sy. यदा चायमारब्धः सूर्यः श्येनो न श्येन इव Dur. तेनैवायं मार्गेणानतिक्रामन् मर्यादां श्येनो न श्येन इव SKN.

९. गच्छन् is suggested for गच्छन्ति ॥ दीयमानो गच्छन् Dur. दीयतिरिति गतिकर्मा । गच्छन्नुदयात्प्रभृत्यास्तमयात् SKN.

१०. अनुगच्छति is suggested for अनुगच्छन्ति ॥ अथ तदारभ्य प्रति....प्रतीत्य चेतसा Dur. किञ्च प्रतीत्ययं धात्वर्थानुवादी SKN.

११. अयमर्धर्चः सौर्य इत्युक्तम् (cf. RV. VII. 63. 1.) पञ्चम्याः पूर्वार्धश्च सूर्यदेवतः Sy.

१२. प्रधिवि० A. परिचरेम Sy. परिचरेम वयम् Dur. विधतिः परिचर्यायाम् । परिचरेमेत्याशास्महे SKN.

१३. युवाम् Sy., Dur., SKN.

१४. सूर्ये उदिते सति प्रातःसवने Sy.

१५. अदिते A. अहन्यहनीत्यर्थः SKN.

१६. नमस्कारैः स्तुतिभिः Sy. नमस्कारैः Dur. स्तुतिभिः SKN.

१७. हविर्भिश्च Sy. न शुष्केण हस्तेन । किं तर्हि ? ....हविर्भिश्च पुरोडाशादिभिः SKN.

१८. अथवैवमन्यथा स्यात्प्रथमस्यार्धर्चस्यार्थः सूर्यप्रधानत्वात् । उत्तरोऽर्धर्चो निराकाङ्क्ष एव । यत्र यस्मिन्नभसः प्रदेशे गातुं कृतवन्तोऽमृता देवाः सूर्यश्च । तेनैव प्रदेशेन श्येन इव दीयन्नन्वेति, अनुगच्छति पाथः । न तां मर्यादामीश्वरोऽपि सन्नतिक्रामतीत्यर्थः Dur.; N. 6. 7; SKN. II. 413., 414.

नू मित्रो वरुणो अर्यमा नस्त्मने तोकाय वरिवो दधन्तु ।
सुगा नो विश्वा सुपथानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

[ नू मित्रः[1] ]

VII. 64.

दिवि क्षयन्ता रजसः पृथिव्यां प्र वां घृतस्य निर्णिजो ददीरन् ।
हव्यं नो मित्रो अर्यमा सुजातो राजा सुक्षत्रो वरुणो जुषन्त ॥ १ ॥

दिवि क्षयन्ता[2] । दिवि[3] । निवसन्तौ[4] । उदकस्यार्थम्[5] । पृथिव्यां च[6] । वाम्[7] । आज्यस्य[8] हूयमानस्य[9] । निर्णिजस्तोकाः[10] । प्रकर्षेण । धारयेयुः[11] । हव्यम् । अस्माकम् । मित्रः । अर्यमा च[12] । शोभनजननः[13] । राजा[14] । सुधनः[15] । वरुणश्च । सेवन्ताम् ।

आ राजाना मह ऋतस्य गोपा सिन्धुपती क्षत्रिया यातमर्वाक् ।
इळां नो मित्रावरुणोत वृष्टिमव दिव इन्वतं जीरदानू ॥ २ ॥

आ राजाना । आयातम्[16] । राजानौ[17] । हे महतः[18] ! सत्यस्य[19], गोपायितारौ[20] ! सिन्धूनां[21] स्वामिनौ ।

---

१. The *pratīka* is supplied by the Editor.
This stanza has already been explained. See. RV. VII. 62. 6.

२. 'दिवि क्षयन्तः' इति पञ्चर्चं नवमं सूक्तं वसिष्ठस्यार्षं मैत्रावरुणम् । 'दिवि पञ्च' इत्यनुक्रमणिका(KSA. 37. 64. p. 26.)। तृतीये छन्दोमे प्रउगशस्त्रे आद्यास्तृचो मैत्रावरुणस्य । सूत्रितञ्च—'दिवि क्षयन्ता रजसः पृथिव्यामा विश्ववाराश्विना गतं नः' (ĀSS. 8. 11.) इति Sy.

३. द्युलोकेऽन्तरिक्षे Sy.

४. क्षयतिरैश्वर्यकर्मा । स्वामिनौ भवथः Sy.

५. ०स्यार्थः M.

६. पृथिव्यां च वर्तमानस्य Sy.

७. हे मित्रावरुणौ ! युवाभ्यां प्रेरिता मेघाः Sy.

८. उदकस्य Sy.

९. भूय० A.

१०. नि (श) णृजस्तो० A. निर्णिजः is suggested for निर्णीज० ॥ रूपाणि.... अथवा वां युवाभ्यां घृतस्य निर्णिजो रूपाणि, घृतानीत्यर्थः, तानि ददीरन् दीयन्ते Sy.

११. ददते प्रयच्छन्ति Sy.

१२. अध्यमा A.

१३. सुष्ठु प्रादुर्भूतः Sy.

१४. सर्वस्य स्वामी Sy.

१५. सुधानः A. शोभनबलः Sy.

१६. आयान्तम् A. आगच्छतम् Sy.

१७. सर्वस्य स्वामिनौ Sy.

१८. महतः M.

१९. ऋतस्योदकस्य यज्ञस्य Sy.

२०. गोपा गोपायितारौ । 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य निघातत्वम् Sy.

२१. हे नद्याः पालयितारौ ! Sy.

जातितः क्षत्रियाद्[१] । अभिमुखम् । अन्नम् । नः[२] । मित्रावरुणे[३] । वचि च[४] । विष्टि[५] । द्युलोकात्[६] । अपक्षारयितम्[७] । क्षिप्रदानौ ।

**मित्रस्तन्नो वरुणो देवो अर्यः प्र साधिष्ठेभिः पथिभिर्नयन्तु ।**
**ब्रवद्यथा न आदरिः सुदास इषा मदेम सह देवगोपाः ॥ ३ ॥**

मित्रस्तन्नः । मित्रादयः[८] । अस्मान्[९] । साधुतमैः[१०] । मार्गैः । तथा[११] । प्रणयन्तु[१२] । ब्रूयात्[१३] । यथा । अस्मान् । अभिगमनानन्तरमेव । . . .गन्ता[१४] द्वाराधिकृतः । अन्तःपुरस्थिताय सुदासे[१५] प्राप्तान् । अन्नेन[१६] । मदेम[१७] । पुत्रपौत्रैः सह[१८] । देवै रक्ष्यमाणाः[१९] ।

**यो वां गर्तं मनसा तक्षदेतमूर्ध्वां धीतिं कृणवद्धारयच्च ।**
**उक्षेथां मित्रावरुणा घृतेन ता राजाना सुक्षितीस्तर्पयेथाम् ॥ ४ ॥**

यो वाम् । यः । वाम्[२०] । रथम् । एत[२१] । मनसा स्तोत्रपरेण[२२] । संस्तौतीत्यर्थः[२३] । उन्मुखाम्[२४] । बुद्धिम्[२५] ।

---

१. क्षत्रियौ is suggested for क्षत्रियाद् ॥ हे बलवन्तौ ! युवाम् Sy.

२. अस्मभ्यम् Sy.

३. मित्रावरुणौ is suggested for मित्रावरुणे ॥

४. वचि चि A. अधि च is suggested for वचि च ॥

५. वृष्टिम् is suggested for विष्टि ।

६. अन्तरिक्षात् Sy.

७. ०रयतम् is suggested for ०रयितं । प्रेरयतम् Sy.

८. आदि refers to वरुणः । देवः and अर्यः ॥ अर्यः अर्यमा चैते त्रयोऽपि Sy.

९. अस्मात् A.

१०. साधकतमैः Sy.

११. तदा यदास्माकमपेक्षितं तदा Sy.

१२. प्रापयन्तु Sy.

१३. असावनुकम्प्य इति ब्रूयात् । तथा कुर्वन्तु Sy. अरिः अर्यमा. . . .

१४. . . . .गन्ता is missing in M. Omission is shown by the dots. अरिर्गन्ता is suggested for गन्ता । अर्यम्णः पुनरभिधानमादरार्थम् Sy.

१५. शोभनदानाय जनाय Sy.

१६. युष्माभिर्दातव्येन Sy.

१७. मदम A. हृष्येम Sy.

१८. पुत्रादिसहिताः Sy.

१९. देवा यूयं गोपायितारो येषां ते वयम् Sy.

२०. युवयोः Sy.

२१. एतः A. एतम् is suggested for एत ।

२२. स्तोमेन Sy.

२३. संस्तरोति A. सङ्कल्पयेत् Sy.

२४. ०खा A. तथा कृत्वोर्ध्वाम् उन्नताम् Sy.

२५. कर्म स्तुतिरूपम् Sy.

करोति[1] स्तुत्यर्थम्। धारयति[2]। च निश्चलां करोति। तस्य स्वभूताः सुनिवासाः[3] प्रजाः। उदकेक्षेथाम्[4]। उक्षेथाम्[5]। तौ[6]। राजानौ[7]। तर्पयेथां च[8]।

**एष स्तोमो॑ वरुण मित्र॒ तुभ्य॒ं सोमः॑ शु॒क्रो न वा॒यवे॑ऽयामि ।**
**अ॒वि॒ष्टं धियो॑ जिगृ॒तं पुरं॑धीर्यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ५ ॥**

एषः[9]। अयम्। स्तोमः[10]। वरुण! मित्र! तुभ्यमहर्मुखे[11][12]। सोमः[13]। इव[12]। दीप्तः[14]। वायवे[15]। अस्माभिरयामि[16] यत[17] कृतः। अवशिष्ट[18]। मियः[19]। जिगृतम्[20][21]।

## VII. 65.

**प्रति॑ वां॒ सूर॒ उदि॑ते सू॒क्तैर्मि॒त्रं हु॑वे॒ वरु॑णं पू॒तद॑क्षम् ।**
**ययो॑रसु॒र्य१॒॑मक्षि॑त॒ ज्येष्ठं॒ विश्व॑स्य॒ याम॑न्ना॒चिता॑ जिग॒त्नु ॥ १ ॥**

[22]प्रति वाम्। प्रतिभुवे[23]। वाम्। उदिते[24]। सूर्ये। सूक्तैः। मित्रम्। वरुणं च। शुद्धबलम्। ययोः[25]। असुराणां हन्तृ बलम्। अक्षीणम्। प्रशस्तम्[26]। विश्वस्यापि[27]। अभिगमने[28]। संख्ये[29] च। जयशीलं[30] भवति।

---

१. कुर्यात्। उच्चैः स्तुयात् Sy.
२. एवं कृत्वा धारयच्च यागे धारयेत् Sy.
३. तस्मै शोभननिवासाः प्रजाः। यथा सुक्षितयो भवन्ति तथा Sy.
४. उदकेन is suggested for उदकेक्षेथाम्।
५. उक्षेथाम् A. M. जनं सिञ्चतम् Sy.
६. युवाम् Sy. ७. हे स्वामिनौ! Sy.
८. VM. ignores मित्रावरुणौ।
९. अनया स्तुतिमुपसंहरति। हे वरुण! मित्र! Sy. १०. स्तवः Sy.
११. युवयोः Sy. १२. ०मह्नं मुखे A.
१३. सोम न M. युष्मभ्यं प्रीतिकरः सोमो यथा दीप्यते तद्वत् Sy.
१४. दीप्तः is missing in M.
१५. वायुर्गन्तादित्यः। स एवार्यमा। तस्मै Sy.
१६. अकारि Sy.
१७. य M. यतः is suggested for यत।
१८. अविष्टम् is suggested for अवशिष्ट॥ रक्षतम् Sy.
१९. धियः is suggested for मियः॥ कर्माण्यस्मदीयानि Sy.
२०. तिकृतम् A. M. प्रबुध्यतम् Sy.
२१. VM. ignores पुरन्धीः॥ पुरन्धीः स्तुतीः। अन्यद्गतम् Sy.
२२. 'प्रति वां सूरः' इति पञ्चर्चं दशमं सूक्तं वसिष्ठस्यार्षं मैत्रावरुणम्। 'प्रति वाम्' इत्यनुक्रान्तम् (KSA. 37.65. p. 26.)। द्वितीये छन्दोमे प्रउगशस्त्रेऽप्येष तृचः। सूत्रितञ्च— 'प्रति वां सूर उदिते सूक्तैर्धेनुः प्रत्नस्य' (ASS. 8. 10.) इति Sy.
२३. प्रतिभ्रुवे M. प्रति हुवे is suggested for प्रतिभुवे॥ आह्वये Sy.
२४. प्रातःसवने Sy.
२५. The rest of the commentary from ययोः onwards is missing in M. मित्रावरुणयोः Sy.
२६. अत एव ज्येष्ठम् Sy. २७. शत्रुसङ्घस्य Sy.
२८. यामनि सङ्ग्रामे Sy.
२९. उपचिते शूरसङ्घैरुपेते Sy.
३०. जेतृ भवति Sy.

ता हि दे॒वाना॒मसु॑रा॒ ताव॒र्या ता नः॑ क्षि॒तीः क॑रतमू॒र्जय॑न्तीः ।
अ॒श्याम॑ मित्रावरुणा व॒यं वां॒ द्यावा॑ च॒ यत्र॑ पी॒पय॒न्नहा॑ च ॥ २ ॥

ता हि देवानामसुरा । तौ[1] । हि[2] । देवानाम्[3] । बलिनौ[4] । तौ[5] । ईश्वरौ[6] । तौ[7] । नः[8] । प्रजाः । कुरु-तम्[9] । बलं कुर्वाणाः । प्राप्नुयाम[10] । हे मित्रावरुणौ[11] ! वयम् । वाम्[12] । यस्यां प्राप्तौ[13] सत्यामस्मान् । द्यावाः पृथिव्यौ[14] । अहानि[15] । च । वर्धयन्ति[16] ।

ता भूरि॑पाशा॒वनृ॑तस्य॒ सेतू॑ दुर॒त्येतू॑ रि॒पवे॒ मर्त्या॑य ।
ऋ॒तस्य॑ मित्रावरुणा प॒था वा॑म॒पो न ना॒वा दु॑रि॒ता त॑रेम ॥ ३ ॥

ता । तौ[17] । बहुतन्ती[18] । पापस्य[19] । बलन्धकौ[20] । हिंसितुम्[21] । मर्त्यानां मनुष्यस्य[22] । आक्रमितुमशक्यौ[23] सर्वथा[24] बध्नीथ[25] इत्यर्थः । तथाविधौ हे मित्रावरुणौ ! युवयोः । सत्यस्य[26] । मार्गेण । उदकानि[27] । नावा । इव । तरेम । दुरितानि[28] ।

१. देवौ Sy.
२. खलु Sy.
३. देवानां मध्ये Sy.
४. बलवन्तौ Sy.
५. तावुदरौ A.
६. अया सर्वस्येश्वरौ Sy.
७. अस्माकम् Sy.
८. पुत्रादिरूपाः प्रजाः Sy.
९. The commentary on this stanza from the beginning upto कुरु is missing in M. प्रवृद्धाः Sy.
१०. व्याप्नुयाम Sy.
११. ०रुणा M.
१२. युवाम् Sy.
१३. यस्यां युवयोर्व्याप्तौ Sy.
१४. द्यावा द्यावापृथिव्यौ । सर्वदा तयोः सहभावा-दयमर्थो लभ्यते Sy.
१५. एतत्रात्रेरप्युपलक्षणम् । अहोरात्राणि च Sy.
१६. अस्मान् व्याप्याययेयुः Sy.
१७. मित्रावरुणौ Sy.
१८. ०तन्ति A. प्रभूतबन्धनसाधनपाशोपेतौ Sy.
१९. यागरहितस्य Sy.
२०. बन्धकौ is suggested for बलन्धकौ ॥ सेतुबद्धन्धकौ Sy.
२१. This seems to be the explanation of रिपवे । Sy. explains it with मर्त्याय as वैरिजनाय
२२. रिपवे मर्त्याय वैरिजनाय Sy.
२३. This seems to be the explanation of दुरत्येतू । Sy. explains it as दुरतिक्रमौ भवतः ।
२४. सर्वथा A.
२५. ०ध्नीथ M.
२६. यज्ञस्य युवयोरर्थायानुष्ठीयमानस्य यागस्य Sy.
२७. प्रभूतान्युदकानि Sy.
२८. दुःखानि Sy.

आ नो॑ मित्रावरुणा ह॒व्यजु॑ष्टिं घृ॒तैर्गव्यू॑तिमुक्षत॒मिळा॑भिः ।
प्रति॑ वा॒मत्र॒ वर॒मा जना॑य पृणी॒तमु॒द्नो दि॒व्यस्य॒ चारोः॑ ॥ ४ ॥

[1]आ नः । [2]आसिञ्चतम् । अस्माकम् । मित्रावरुणौ ! युवाभ्याम् । यत्र हव्यानि सेवन्ते[3] तमित्येत-देवाह । उदकैः । गोमार्गम्[4] । इळाभिरन्नैर्घातैः[5] । प्रतियच्छतं[6] च । युवाम् । वरणीयमुदकम्[7] । जनाय तदेव । इह[8] । प्रयच्छतम् । उदकम्[9] । दिव्यम्[10] । चार्विति[11] प्रतिभवति युवयोः स्वस्वभूतमुदकं[12] जनायेति वा[13] ।

ए॒ष स्तोमो॑ वरुण मित्र॒ तुभ्यं॒ सोमः॑ शु॒क्रो न वा॒यवे॑ऽयामि ।
अ॒वि॒ष्टं धियो॑ जिगृ॒तं पुरं॑धीर्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ५ ॥

[एष स्तोमः[14] । ]

VII. 66.

प्र मि॒त्रयो॒र्वरु॑णयोः॒ स्तोमो॑ न एतु शू॒ष्यः॑ । नम॑स्वान्तुविजा॒तयोः॑ ॥ १ ॥

[15]प्र मित्रयोः । प्रैतु[16] । मित्रावरुणयोः[17] । अस्मदीयः[18] । स्तोमः[19] । सुखावहः[20] । हविष्मान्[21] ।

---

१. मैत्रावरुणे पशौ 'आ नो मित्रावरुणा' इत्येषा चतुर्थ्यनुवाक्या । सूत्रितञ्च—'आ नो मित्रावरुणा हव्यजुष्टिं युवं वस्त्राणि पीवसा वसाथे, (ĀSS. 3. 8.) इति Sy.
२. VM. explains आ and उक्षतम् together as आसिञ्चतम् but Sy. explains आ and उक्षतम् separately आ as आगच्छतमिति शेषः and उक्षतम् as सिञ्चतम् ।
३. हविः सेवनवन्तं यज्ञं गच्छतमिति शेषः Sy.
४. अस्मदीयां भूमिम् Sy.
५. ०घातैः is doubtful. घृतैः is suggested for आगत्य आज्यैः सह Sy.
६. It seems to be the explanation of प्रति ॥ क आ यच्छेदिति शेषः Sy.
७. उत्कृष्टं हविः स्तोत्रं वा Sy.
८. अस्मिंल्लोके Sy.
९. उदकस्य । कर्मणि षष्ठी । उक्तलक्षणमुदकम् Sy.
१०. अतः केवलं कृपयैव दिविभवस्य Sy.
११. चार्विति A. चरणीयस्य Sy.
१२. One स्व seems to be redundant.
१३. VM. ignores आ ।
१४. The *pratīka* is supplied by the Editor. The stanza has already been explained. See. RV. 7. 64. 5.
१५. 'प्र मित्रयोः' इत्येकोनविंशत्यृचमेकादशं सूक्तं वसिष्ठस्यार्षम् । अत्रेयमनुक्रमणिका—'प्रमित्रयोरेकोना गायत्रं दशम्याद्यास्त्रयः प्रगाथाः पुरउष्णिक् चतुर्थ्याद्या दशादित्यास्तिस्रः सौर्यः' (KSA. 37. 66. p. 26.) इति । दशमी बृहत्येकादशी सतोबृहती द्वादशी बृहती त्रयोदशी सतोबृहती चतुर्दशी बृहती पञ्चदशी सतोबृहती षोडशी पुरउष्णिक् शिष्टा गायत्र्यः । चतुर्थ्याद्यास्त्रयोदश्यन्ता आदित्यदेवताश्चतुर्दश्याद्यास्तिस्रः सूर्यदेवत्याः । आद्यन्तौ तृचौसपूर्ववन्मैत्रावरुणौ । अग्निष्टोमे माध्यन्दिनावने मैत्रावरुणशस्त्र आदितो नवर्चः शस्याः 'प्र मित्रयोर्वरुणयोः' इति नव, (ĀSS. 5. 10.) इति सूत्रितत्वात् । पृष्ठ्याभिप्लवषडहयोः स्तोमवृद्धिनिमित्तमावापार्था आद्या षडृचः । सूत्रितञ्च—'प्र मित्रयोर्वरुणयोरिति षट्' (ĀSS 7. 5.) इति Sy.
१६. प्रैतु A. गच्छतु Sy.
१७. मित्रव० A. मित्रावरुणयोरित्यर्थः । उभयत्र प्रतियोगापेक्षया द्विवचनत्वम् Sy. १८. वीये A. १९. स्तोत्रम् Sy. २०. सुखकरः Sy.
२१. अन्नवान् । हविर्भिर्युक्तः Sy.

बहुजननयोः[1]।

**या धारयन्त देवाः सुदक्षा दक्षपितरा । असुर्याय प्रमहसा ॥ २ ॥**

या धारयन्त । यौ[2] । अवधारयन्[3] । देवाः[4] । शोभनबलौ । दक्षपितरौ बलं रक्षन्तं[5] ययोस्तौ । असुर्यायासुराणां स्वभूतया[6] वलाय तत् प्रतिहन्तुम् । प्रकृष्टतेजसाविति[7] ।

**ता नः स्तिपा तनूपा वरुण जरितॄणाम् । मित्र साधयतं धियः ॥ ३ ॥**

ता नः । तौ । अस्माकम् । तूनां[8] गृहाणां[9] च रक्षकौ[10] । हे वरुण ! स्तोतॄणाम् । मित्र ! च[11] । साधयतम्[12] । कर्माणि[13] ।

**यदद्य सूर उदितेऽनागा मित्रो अर्यमा । सुवाति सविता भगः ॥ ४ ॥**

यदद्य । यत्[14] । अद्य[15] । उदिते[16] । सूर्ये । अनागसोऽस्मान्[17] । मित्रादयः[18] । प्रेरयन्ति[19] ततः सुखं जीवाम इति वाक्यशेषः ।

---

१. बहून् जननयः M. बहुप्रादुर्भावियोर्देवयोः । 'अहोरात्रं वै मित्रावरुणौ' इति श्रुतिः । अनयोरहोरात्रापेक्षत्वात्तयोः पुनःपुनरागमनादनयोस्तुविजातत्वम् । अथवा बहूनामुपकाराया नयोः प्रादुर्भावात्तुविजातत्वम् Sy.

२. या M. युवाम् Sy.

३. अद्धार० A. अधारयन् is suggested for अवधार० ।

४. आदिकर्तारः Sy.

५. रक्षतं A. बलस्य पालकौ स्वामिनौ वा बलप्रदावित्यर्थः Sy.

६. ०भूतये M. ०भूताय is suggested for ०भूतया ॥ बलकरणाय Sy.

७. प्रकृष्टतेजस्कौ । तौ साधयतमित्युत्तरत्रान्वयः Sy.

८. नां A. तनूनाम् is suggested for तूनां ॥ तन्वः पातारौ Sy.

९. ग्रहा० A. स्त्यायन्त इति स्तयो गृहाः । तान् पात इति स्तिपौ Sy.

१०. VM. seems to explain स्तिपा and तनूपा together as तनूनां गृहाणां च रक्षकौ ।

११. उक्तलक्षणौ युवाम् Sy.

१२. साधकं A. सफलयन्ति कुरुतम् Sy.

१३. स्तुतिरूपाणि Sy.

१४. यद्धनमस्माकमपेक्षितम् Sy. यत्कर्म U.

१५. तदस्मिन् काले Sy. अस्मिन् अधि U.

१६. उदिते सति प्रातःसवने Sy. उदिते गति Mah. उद्गते U.

१७. अनग० A. अनागाः पापहन्ता Sy. नास्ति आगोऽपराधो यस्य सोऽनागा इति चतुर्णां विशेषणम् Mah. अनपराधः U.

१८. आदि refers to अर्यमा । सविता and भगः । मित्रोऽर्यमा सविता भगश्चैते प्रत्येकम् . . . .अथवा अनागा मित्रोऽर्यमा दाता भवतु । भगो भजनीयः Sy. मित्रोऽर्यमा सविता भगश्च Mah. मित्रः. . . .एवमर्यम्णः सवितुर्भगस्य च वाक्यान्यविशेषात् U.

१९. प्रेरयेत्, प्रेरयतु Sy. प्रेरयति तत्कर्म कुर्यादिति शेषः Mah. प्रसौति तत्कर्म कुर्यादिति शेषः U.

This stanza=YV. 33. 20.

**सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः । ये नो अंहोऽतिपिप्रति ॥ ५ ॥**

सुप्रावीः । शोभनरक्षणम्[1] । प्रभवतु[2] । तत्[3] । गृहम्[4] । हे शोभनदानाः[5] ! भवतां गमने । ये[6] । अस्माकम् । अंहसो वृत्तेः[7] । अतिपारयन्ति[8][9] ।

**उत स्वराजो अदितिरदब्धस्य व्रतस्य ये । महो राजान ईशते ॥ ६ ॥**

उत स्वराजः । अपि च । स्वराजो[10] मित्रादयः । अमितिश्च[11] । अहिंसितस्य । व्रतस्य,[12] ये,[13] वर्षणादेः[14] । प्रणेतारस्ते । महान्तः[15] । राजानः[16] । सर्वेषामीश्वरा[17] भवन्ति ।

**प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणं रिशादसम् ॥ ७ ॥**

[18]प्रति वाम् । प्रति स्तौमि[19] द्विविकरणानां छान्दसी[20] । वाम्[21] । उदिते । सूर्ये[22] । मित्रावरुणौ[23] । अर्यमणं च । हिंसितॄणामसितारम्[24] ।

---

१. सुष्ठु प्रकर्षेण रक्षिता Sy.

२. प्रशब्द आदरार्थः । प्रकर्षेण Sy.

३. सः Sy. ४. ग्रहम् A. निवासः Sy.

५. हे सुदानाः ! युष्माकम् Sy.

६. ये is missing in M. यूयमागत्य Sy.

७. अंहसोर्वर्तेः M. पापम् Sy.

८. अतिपारयथ तेषां गमने Sy.

९. VM. ignores नु ॥ नु क्षिप्रं भवत्विति शेषः Sy.

१०. स्व is missing in M. सर्वस्य स्वामिनः Sy.

११. अदिति० is suggested for अमिति० ॥ तेषां माता च सन्ति Sy.

१२. अस्य कर्मणा Sy.

१३. ये is missing in M. ये मित्रादयस्त्रयः Sy.

१४. वर्षणा० A.

१५. महतः Sy.

१६. From राजानः onwards the rest of the commentary is missing in A.

१७. समर्था भवन्ति । अभिमतं दातुमिति शेषः । अथवैवं योज्यम् । ये मित्रादयोऽदितिश्चादब्धस्य व्रतस्य स्वराज ईश्वरास्ते महो महतोऽस्मदभिमतधनस्य राजानः स्वामिनः सन्त ईशतेऽस्मभ्यं तद्दातुम् Sy.

१८. 'प्रति वाम्' इत्येष तृचश्चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणस्य पर्यासार्थः । सूत्रितञ्च—'प्रति वां सूर उदिते व्यन्तरिक्षमतिरत् (ĀSS. 7. 2.) इति Sy. The commentary on this stanza is missing in A.

१९. प्रत्येकं स्तुवे Sy.

२०. The root गॄ is in the *parasmaipada* in the classical sanskrit but is used in the Veda in the *ātmanepada* also. गृणीषे is the 2nd person sing. but is to be construed as the 1st person sing.

२१. Addition of सिद्धिः after छान्दसी is suggested.

२२. प्रातरित्यर्थः Sy.

२३. हे मित्रावरुणौ ! मित्रं त्वां वरुणञ्च युवाम् Sy.

२४. शत्रूणामत्तारम् Sy.

राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा मेधसातये ॥ ८ ॥

राया[1] । धनेन हेतुना[2] । हिरण्येच्छया[3] च । इयम्[4] । स्तुतिः[5] । स्तेनवर्जिताय[6] । बलाय[7] च । इयम्[8] । प्राज्ञयोर्मित्रावरुणयोः[9][10] । यज्ञभजनाय[11] चेति ।

ते स्याम देव वरुण ते मित्र सूरिभिः सह । इषं स्वश्च धीमहि ॥ ९ ॥

ते स्याम[12] । ते वयम् । भवाम समृद्धाः । हे देव ! वरुण ! ते[13] । मित्र[14] ! स्तोतृभिः पुत्रैः[15] । सह स्याम । अन्नम्[16] । च । सर्वम्[17] । धारयेम[18] ।

बहवः सूरचक्षसोऽग्निजिह्वा ऋतावृधः ।
त्रीणि ये येमुर्विदथानि धीतिभिर्विश्वानि परिभूतिभिः ॥ १० ॥

बहवः[19] । बहवः[20] । सूर्यदर्शनाः[21] मित्रादयस्तेषां हि सूर्यश्चक्षुः । अग्निर्जिह्वा[22] । यज्ञस्य वर्धयितारः । ये[23] । त्रीणि । विदथानि[24] त्रींल्लोकान् । यच्छन्ति[25] । कर्मभिः । विश्वानि[26] च भूतानि च[27] । परिभवनैः[28] ।

---

१. राया । धनेन हेतुना is missing in A.
२. धनेन सहिताय Sy.
३. हितरमणीयेन । हिरण्यया—इत्यत्र 'सुपां सुलुक्०' इति तृतीयैकवचनस्य याजादेशः Sy.
४. इदानीं क्रियमाणा Sy.
५. मतिः स्तुतिर्भवत्विति शेषः Sy.
६. अवृकाय means free from theft or thieves. वृकः is a synonym of theft. Ngh. 3. 24. अहिंस्याय Sy.
७. अस्माकं बलाय Sy.
८. इयम्मे च स्तुतिः Sy.
९. किञ्च हे प्राज्ञाः ! Sy. १०. ०त्रव० A.
११. यज्ञलाभाय च भवतु Sy. १२. तस्याम A.
१३. तव स्तोतारः Sy. १४. मित्रः A.
१५. न केवलं वयमेव यजमानाः किन्तु सूरिभिः स्तोतृभिर्ऋत्विग्भिः सह Sy.
१६. अनम् A. १७. उदकम् Sy.
१८. धारयामः M. धारयामहे Sy.
१९. आश्विनशस्त्रे 'बहवः सूरचक्षसः' इति प्रगाथः । सूत्रितञ्च—'बहवः सूरचक्षस इति प्रगाथाः' (ĀSS. 6. 5.) इति । दशरात्रे पञ्चमेऽहनि प्रउगशस्त्रेऽप्ययं प्रगाथः । सूत्रितञ्च—'बहवः सूरचक्षस इमा उ वां दिविष्टयः' (ĀSS. 7. 12.) इति Sy.
२०. महान्तः Sy.
२१. ०न मि० A. सूर्यवच्चक्षुःप्रकाशाः । सूरः प्रकाशको येषामिति वा Sy.
२२. अग्नि जिग्रा A. अग्निजिह्वा is suggested for अग्निर्जिह्वा ॥ अग्निरेव जिह्वावनसाधनो येषां तादृशाः Sy.
२३. वि ये M.
२४. ०दथानि is suggested for ०दधानि ॥ क्षित्याविस्थानानि क्षित्यादीनि Sy.
२५. प्रयच्छन्ति । 'ते क्षत्रमाशत' इत्युत्तरत्र सम्बन्धनीयम् । अथवात्रैव । ये त्रीणि स्थानानि प्रयच्छन्ति ते बहुत्वादिगुणोपेता आगच्छन्तु । इत्यध्याहार्यम् Sy.
२६. व्याप्तानि Sy.
२७. च seems to be unnecessary.
२८. परिभावुकैः Sy.

वि ये दधुः शरदं मासमादहर्यज्ञमक्तुं चादृचम् ।
अनाप्यं वरुणो मित्रो अर्यमा क्षत्रं राजान आशत ॥ ११ ॥

वि ये[1] । आकुर्वन्[2] । येऽत्र[3] । संवत्सरम् । मासम्[4] । अहश्च[5] । आवृत्तिभिर्यज्ञम् । आज्यम्[6] । स्तुतिम्[7] । च । तथा[8] । अन्यैराप्तुमशक्यम्[9] । धनं च सोमात्मकम्[10] । मित्रादयः[11] । राजानः[12] । व्याप्नुवन्[13][14] ।

तद्वो अद्य मनामहे सूक्तैः सूर उदिते ।
यदोहते वरुणो मित्रो अर्यमा यूयमृतस्य रथ्यः ॥ १२ ॥

तद्वः । तत्[15] । वः[16] । अद्य[17] । स्तुमः[18] । सूक्तैः । उदिते[19] । सूर्ये[20] । यद्धनम्[21] । प्रापयति[22] । वरुणे[23] । मित्रः[24] । अर्यमेति[25] पादः परोक्षः । यूयम्[26] । सत्यभूतस्य[27] मनुष्यस्य प्रापयथ । हे नेतारः ! रथवन्तो वेति ।

ऋतावान ऋतजाता ऋतावृधो घोरासो अनृतद्विषः ।
तेषां वः सुम्ने सुच्छर्दिष्टमे नरः स्याम ये च सूरयः ॥ १३ ॥

ऋतावानः । सत्यवन्तः[28] । सत्याज्जाताः[29] । सत्यस्य[30][31] वर्धयितारः[32] । घोराः[33] । अनृतस्य द्रोग्धारः[34] ।

---

१. ई ये M.
२. अकु० is suggested for आकु० ।
३. ये अा A. मित्रादयः Sy.
४. मां सम् A. ५. अहःसाध्यं यज्ञम् Sy.
६. रात्रिम् Sy. ७. मन्त्रांश्च Sy.
८. अनन्तरम् । आत् अनन्तरमेव । यद्वा सर्वत्रादित्ययमपीत्यर्थे वर्तते । तथा सति क्रमोऽविवक्षितः Sy.
९. अन्यैरप्राप्तम् Sy. १०. क्षत्रं बलम् Sy.
११. आदि refers to अर्यमा and वरुणः । वरुणः मित्रोऽर्यमा च त्रयः Sy.
१२. त्रयो राजमानाः Sy. १३. व्याप्तवन्तः Sy.
१४. VM. ignores वि ।
१५. प्रसिद्धम् Sy. १६. युष्मान् Sy.
१७. अस्मिन् यागकाले Sy. १८. याचामहे Sy.
१९. उदितः A. प्रातःकाल इत्यर्थः Sy.
२०. सूर्ये is missing in M.
२१. यन्धनम् A.
२२. यूयमित्यनेन सामानाधिकरण्यादोहत इत्यत्र पुरुषव्यत्ययः । ओहध्व इत्यर्थः । तद्धनं मनामह इति Sy.
२३. वरुणः is suggested for वरुणे ।
२४. मित्रे M. २५. अय्यमेति A.
२६. यूयं वरुणादयः Sy. २७. ऋतस्योदकस्य Sy.
२८. ये यूयम् ऋतवन्तो यज्ञवन्त उदकवन्तो वा Sy.
२९. ०त्यज्जा० A.
३०. ऋतजाताः । उक्त ऋतशब्दार्थः । तदर्थमुत्पन्नाः । अथवा ऋतात्प्रजापतेः सकाशादुत्पन्नाः Sy.
३१. उक्तार्थस्यर्तस्य वर्धयितारः Sy.
३२. ०यिता A. ३३. घो is missing in A.
३४. अयष्टृद्वेष्टारः Sy.

तेषाम्[1] । युष्माकम् । सुखे । अतिशयेन शोभनगृहयुक्ते[2] । नेतारः[3] । स्याम वयम्[4] । सन्तु च ये । च । अन्ये स्तोतारः ।

**उदु त्यद्दर्शतं वपुर्दिव एति प्रतिह्वरे ।**
**यदीमाशुर्वहति देव एतशो विश्वस्मै चक्षसे अरम् ॥ १४ ॥**

[5] उदु त्यत् । दिवः[6] । उदेति । तदिदम् । दर्शनीयम् । रूपमादित्याख्यम्[7] [8] । अस्मत्समीपे[9] । यत् । एनम्[10] । अश्वः[11] । वहति[12] । देवनशीलः[13] । एतशवर्णः । विश्वस्मै[14] । चक्षसे सर्वेषां दर्शनाय[15] । पर्याप्तमिति[16] [17] ।

**शीर्ष्णःशीर्ष्णो जगतस्तस्थुषस्पतिं समया विश्वमा रजः ।**
**सप्त स्वसारः सुविताय सूर्यं वहन्ति हरितो रथे ॥ १५ ॥**

शीर्ष्णः । उच्छ्रितादुच्छ्रितादेशात्[18] । जगतीत इति[19] । स्थावरस्य[20] च[21] । स्वामिनम् । सर्वस्य[22] । लोकस्य । समीपे[23] । सप्त[24] । स्वयं सारिण्यः[25] । अभ्युदयाय[26] । सूर्यम् । आवहन्ति । हरितः[27] । रथे[28] ।

---

१. दुहे A. धने Sy.
२. सुखतमे....अत्यन्तरमणीयगृहयुक्ते सुखे वा Sy. ३. नतार A.
४. ते सर्वे भवेम Sy.
५. सोमातिरेके माध्यन्दिनसवने नैमित्तिके शस्त्रे 'उदु त्यद्' इत्ययं प्रगाथोऽनुरूपः । सूत्रितञ्च—'बण्महाँ असि सूर्योदु त्यद्दर्शतं वपुरिति प्रगाथौ स्तोत्रियानुरूपौ' (ASS 6. 7.) इति । चातुर्विंशिकेऽहनि माध्यन्दिनसवनेऽयमेव वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितञ्च—'उदुत्यद्दर्शतं वपुरुदु त्ये मधुमत्तमाः' (ASS. 7. 4.) इति Sy. ६. अन्तरिक्षस्य Sy.
७. मण्डलम् Sy. ८. ०ख्याम् A.
९. अस्वत्० A. प्रतिह्वरे समीपे Sy.
१०. एतन्मण्डलम् Sy. ११. शीघ्रगामी Sy.
१२. धारयति Sy. १३. ०शीलं M.
१४. सर्वस्मै Sy.
१५. सर्वलोकदर्शनाय Sy. १६. सम्यक् Sy.
१७. VM. ignores उ ॥ उ इति पूरणः Sy.
१८. सर्वस्यापि शिरसः । तृतीयार्थे पञ्चमी । स्वस्वशिरसेत्यर्थः । सूर्यं वहन्तीत्यनेन सम्बध्यते । अथवा शिरःशब्देन तद्वान् पदार्थो लक्ष्यते । वीप्सया तस्य कार्त्स्न्यमुच्यते । सर्वस्य श्रेष्ठमित्यर्थः Sy.
१९. ०शा जजदिति A. जगतः is suggested for जगतीतः ॥ जङ्गमस्य Sy.
२०. स्थाव० A. २१. च is omitted by M.
२२. सप्तस्य M.
२३. 'अभितः परितः समया' इत्यादिना (VPa. 2. 3. 2. 1.) समयाशब्दयोगाद् द्वितीया Sy. २४. सप्तसंख्याकाः Sy.
२५. अन्यनिरपेक्ष्येण स्वयमेव सरन्त्यः Sy.
२६. कल्याणाय Sy. २७. हरितवर्णा अश्वाः Sy.
२८. रथे वर्तमानम् Sy.

तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ १६॥

तच्चक्षुः । तत्[1] । प्रकाशकम्[2] । देवैर्निहितम्[3] । ज्वलत्[4] । उद्यत्[5] । पश्येम[6] । शरदः । शतम्[7] । पश्यन्तश्च जीवेम[8] । शरदः । शतम्[9] ।

काव्येभिरदाभ्या यातं वरुण द्युमत् । मित्रश्च सोमपीतये ॥ १७ ॥

काव्येभिः[10] । स्तोत्रैः[11] । हे[12] अहिंसितौ[13] ! आगच्छत[14] । दीप्तियुक्तम्[15] । वरुण ! मित्रः । च । सोमपानाय ।

दिवो धामभिर्वरुण मित्रश्चा यातमद्रुहा । पिबतं सोममातुजी ॥ १८ ॥

दिवः । दिवः[16] । स्थानेभ्यः[17] । मित्रावरुणौ[18] । आगच्छतम् । अद्रोग्धारौ[19] । पिबतम् । च[20] । सोमम् । आहन्तारौ[21] शत्रूणाम् ।

---

१. तं A. प्रसिद्धम् Sy. एतैर्यन्त्रैर्यो महावीरोऽस्माभिः स्तुतस्तत् Mah. योऽयं महावीरोऽस्माभिः स्तुतस्तत् U.

२. सर्वस्य प्रकाशकम् Sy. जगतां नेत्रभूतमादित्यरूपम् Mah. आदित्यरूपं चक्षुः U.

३. ०हित A. देवानां हितम् । तेषां हविःस्वीकारस्यैतदधीनत्वात् । अथवा देवेन हितम् Sy. देवैर्हितं स्थापितम् । यद्वा देवानां हितं प्रियम् Mah. देवैर्निहितं स्थापितं देवानां वा हितम् U.

४. निर्मलं सूर्यमण्डलम् Sy. शुक्लं पापासंसृष्टं शोचिष्मद्वा Mah. असंसृष्टं पाप्मभिः शोचिष्मद्वा U.

५. उत् M. उद्यत् is suggested for उदुद्यत् ॥ उद्गच्छति Sy. पुरस्तात्पूर्वस्यां दिशि । उच्चरद् उच्चरति, उदेति Mah. प्राच्यां दिशि....उदितम् U.

६. तस्य प्रसादात्....वयं पश्येम, शतवर्षपर्यन्तं वयमव्याहतचक्षुरिन्द्रिया भवेम । प्रार्थनायां लिङ् Mah तत् प्रसादाच्च पश्येम U.

७. शतसंवत्सरम् Sy. वर्षाणि ।.....अत्यन्तसंयोगे द्वितीया Mah.

८. अपराधीनजीवना भवेम । शतं शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रिया भवेम । शतं शरदः प्रब्रवाम, अस्खलितवागिन्द्रिया भवेम । शतं शरदोऽदीनाः स्याम न कस्याप्यग्रे दैन्यं कुर्याम । शताच्छरदः शतवर्षोपर्यपि भूयश्च बहुकालं पश्येमेत्यादि योज्यम् Mah. .... अस्खलितवागिन्द्रिया भवामः ।....भूयश्च बहुतरं कालं च शरदः शतात् U. This stanza= YV. 36.24. ९. पुनः श्रुतिरादरार्था Sy.

१०. पृष्ठ्याभिप्लवषडहयोः स्तोमनिमित्त आवापे 'काव्येभिरदाभ्येति तृचः' (ĀSS. 7. 5.) इति हि सूत्रितम् Sy. ११. काव्ये हि A.

१२. स्तोत्रेः A. अस्मत्कृतैः स्तोत्रैः Sy.

१३. हि M. अदम्भनीयौ Sy.

१४. ०च्छतम् is suggested for ०च्छत ।

१५. ०युक्त ! is suggested for ०युक्तं ॥ द्युतिमन्तौ युवाम् Sy. १६. द्युलोकसम्बन्धिभ्यः Sy. १७. धामभिर्धामभ्यः स्थानेभ्यः। पञ्चम्यर्थे तृतीया। अथवा धामभिस्तेजोभिर्विभूतिभिः सार्धम् Sy. १८. हे वरुण ! त्वं मित्रश्च Sy. १९. अस्मद्यजम्..Sy. २०. ०रो A.

२१. आवह० M. शत्रूणां सर्वतो हिंसकावादातारौ वा धनानाम् । एवंरूपौ सन्तौ 'तुजि पिजि हिंसाबलादाननिकेतनेषु' अत्र हिंसायामादाने वा वर्तते Sy.

आ यातं मित्रावरुणा जुषाणावाहुतिं नरा । पातं सोममृतावृधा ॥ १९ ॥

उत्तरा निगदसिद्धाः[1]—

(आ यातम्[2])

VII. 67.

प्रति वां रथं नृपती जरध्यै हविष्मता मनसा यज्ञियेन ।
यो वां दूतो न धिष्ण्यावजीगरच्छा सूनुर्न पितरा विवक्मि ॥ १ ॥

प्रति वाम्[3] । प्रतिगच्छामि । युवयोः[4] । रथम् । हे नृपती[5] ! स्तोतुम्[6] । हविष्मता[7] । मनसा[8] । यज्ञोयुक्तेन[9] । यो[10] रथः । वाम्[11] । इति[12] । वा[12] । धिषणाहविषीमं[13] लोकम् । प्रापयति[14] । किं च पुत्रः । इव । पितरावश्विनावहम्[15] । अभिष्टौमि[16] ।

---

१. उत्तराणिगवसिद्धाः A. ०सिद्धा is suggested for ०सिद्धाः ॥

२. The *pratīka* is supplied by the Editor. VM. does not explain this stanza because it is very easy. Sy. explains this stanza in the following manner:— हे मित्रावरुणा ! मित्रावरुणौ ! हे नरा ! यागनेतारौ ! आहुतिं सोमलक्षणं जुषाणौ प्रियमाणौ सन्तावायातम् । आगच्छतं यज्ञम् । आगत्य च । हे ऋतावृधा ! यज्ञस्य वर्धकौ युवां सोमं पातं पिबतम् ।

३. 'प्रति वां रथम्' इति दशर्चं द्वादशं सूक्तम् । 'प्रति वां दशाश्विनं तु तत्' इत्यनुक्रमणिका (KSA. 37. 67. p. 26) । ऋषिर्वसिष्ठः । छन्दस्त्रिष्टुप् । तुह्यादिपरिभाषयैतदादीन्यष्ट सूक्तान्यश्विदेवत्यानि । प्रातरनुवाक आश्विने क्रतौ त्रैष्टुभे छन्दस्येतदादिसूक्तसप्तकं द्वितीयवर्जं शंस्यम् । तथा च सूत्रम्—'प्रति वां रथमिति सप्तानां द्वितीयामुद्धरेत्' (ĀSS. 4. 15.) इति

४. यवयोः A.

५. हे नृणामृत्विग्यजमानानां स्वामिनौ ! अश्विनौ! Sy.

६. जरा स्तुतिः । स्तोतुम् Sy.

७. केन साधनेन ? इति तदुच्यते, हविर्युक्तेन Sy.

८. स्तोत्रेण Sy.

९. यज्ञार्हेण Sy.

१०. यो omitted in A.

११. युवाम् Sy.

१२. इतिव A. ब्रूतः । इव is suggested for इति वा ॥

१३. धिषणा स्तुतिः Sy.

१४. जागरयति प्रबोधयति Sy.

१५. मातापितरौ Sy.

१६. VM. seems to explain अच्छ and विवक्मि together as अभिष्टौमि ॥ अस्मान् प्रति गन्तुं तं रथमच्छा विवक्मि आवच्मि ....अथवात्र यो रथो युवामजीगस्तेन रथेन गन्तुं बुध्यमानौ युवामच्छा विवक्मीति वा योज्यम् Sy.

अशोच्यग्निः समिधानो अस्मे उपो अदृश्रन्तमसश्चिदन्ताः ।
अचेति केतुरुषसः पुरस्ताच्छ्रिये दिवो दुहितुर्जायमानः ॥ २ ॥

अशोचि । प्रजज्वाल[1] । अग्निः[2] । समिध्यमानः[3] । अस्मासु[4] । उषसि तथोपदृश्यन्त[5] औषसैस्तेजोभिः । अन्धकारस्य । अन्तान्[6] । अचेति[7] । च । तेजः[8] । उषसः । प्राच्यां दिश्यन्तरिक्षे[9] । श्रयणाय[10] । दिवः । दुहितुः । प्रादुर्भवति ।

अभि वां नूनमश्विना सुहोता स्तोमैः सिषक्ति नासत्या विवक्वान् ।
पूर्वीभिर्यातं पथ्याभिरर्वाक्स्वर्विदा वसुमता रथेन ॥ ३ ॥

अभि वाम्[11] । अभिसेवते । अस्मिन् काले । इमावश्विनौ[12] । कल्याणस्तोता[13] । स्तोमैः । वचनकुशलः[14] । पुनरातनैः[15] । यात[16] । मार्गैः । अभिमुखम्[17] । सर्वज्ञः[18] । युवाम् । धनवता । रथेन[19] ।

अवोर्वां नूनमश्विना युवाकुर्हुवे यद्वां सुते माध्वी वसूयुः ।
आ वां वहन्तु स्थविरासो अश्वाः पिबाथो अस्मे सुषुता मधूनि ॥ ४ ॥

अवोर्वाम्[20] । रक्षकयोः[21] । युवयोः । इदानीम्[22] । अश्विनौ[23] ! युवां कामयमानोऽहमस्मि । ततो ह्वयामि[24] । यदा[25] । वाम्[26] । सुतसोमे[27] । मधुमन्तौ[28] ! वसुकामः । तदानीमावहन्तु । वाम् । दृढाः[29] । अश्वाः । पिबतम् । अस्मासु[30] । सुष्ठु तान्[31] । सोमान्[32] ।

---

१. दंप्यते Sy. २. अनि A.
३. समिध्यमानः सन् Sy. ४. अस्माभिः Sy.
५. उपदृश्यन्ते सर्वैः Sy.
६. अन्तानि A. अन्ताः is suggested for अन्तान् ॥ पर्यन्ताः प्रदेशाः Sy.
७. पचेति M. ज्ञायते । यस्मादेवं तस्माद्युवयोः-रागमनसमयः । अतः आगच्छतमिति शेषः Sy. ८. सर्वस्य प्रज्ञापकः सूर्य Sy.
९. पूर्वस्यां दिशि Sy. १०. शोभायै Sy.
११. अभिद्वां A. १२. हे अश्विनौ ! Sy.
१३. स्तोता is missing in A. सुष्ठु देवानां स्तोता Sy. १४. स्तुतीनां वक्ताहम् Sy.
१५. पुनरातनैः A. पुरातनैः is suggested for पुनरातनैः ॥ पूर्वैक्षुण्णैः Sy.
१६. यातम् is suggested for यात ॥ गच्छतम् Sy. १७. अस्मदभिमुखम् Sy.
१८. सर्वमुदकं वा जानता स्वरणवता वा Sy.
१९. VM. ignores नासत्या ॥ हे नासत्या ! सत्यभूतौ ! Sy. २०. युवो A. २१. रक्षित्रोः Sy. २२. अत्र स्वभूतो भवामीति शेषः Sy.
२३. अश्विनं A. २४. स्तौमि Sy.
२५. यद्यस्मात् Sy. २६. युवाम् Sy.
२७. अभिषुते सोमे Sy. २८. हे मधुरस्य सोमस्यार्हौ मधुविद्यासम्बन्धिनौ ! वा Sy.
२९. स्थूलाः प्रवृद्धाः । एतयोरतिप्रवृद्धत्वाच्छीघ्रगतयोरपेक्षितत्वाच्च स्थविरैरेव भाव्यम् Sy.
३०. आगमनानन्तरमस्माभिः Sy.
३१. सुष्ठुतात् A. सुष्ठु सुतान् is suggested for सुष्ठु तान् ॥ सुष्ठ्वभिषुतानि Sy.
३२. सोमान् is missing in A. मधुररसान् Sy.

प्राचींमु देवाश्विना धियं मेऽमृध्रां सातये कृतं वसूयुम् ।
विश्वा अविष्टं वाज आ पुरंधीस्ता नः शक्तं शचीपती शचीभिः ॥ ५ ॥

प्राचीम्[1] । उन्मुखम् । एव । हे देवौ[2] ! अश्विनौ ! मदीयम्[3] । कर्म[4] । रक्षोभिरहिंसितम्[5] । भजमानाय[6] । कुरुतम्[7] । धनकामं[8] मदीयं कर्म भजत । विश्वाश्च । रक्षतमस्माकम् । अन्ने[9] । प्रवृत्ता बुद्धिः[10] । तौ[11] । अस्मान् । शक्तान्[12] कुरुतम् । प्रज्ञावती[13] । प्रज्ञाभिः[14] ।[15]

अविष्टं धीष्वश्विना न आसु प्रजावद्रेतो अह्रयं नो अस्तु ।
आ वां तोके तनये तूतुंजानाः सुरत्नासो देववीतिं गमेम ॥ ६ ॥

आविष्टम्[16] । रक्षत[17] । कर्मसु । अश्विनौ । अस्मान् । एषु । प्रजायुक्तम्[18] । रेतः । अभूयमुन्मुखम्[19] । अस्माकम् । अस्तु । आगमे[20] । युवयोः[21] । यज्ञम्[22] । पुत्रे[23] । तत्पुत्रे च तयोर्लोभाय[24] । त्वरमाणाः । शोभनधनाः[25] । प्रजार्थमुपगच्छाम इत्यर्थः[26] ।

---

१. ऋज्वीम् Sy.
२. देवा A.
३. मम Sy.
४. बुद्धिं स्तुतिं कर्म वा Sy.
५. अहिंसिताम् Sy.
६. लाभाय Sy.
७. उचितां कुरुतम् Sy.
८. धनमिच्छन्तीम् Sy.
९. सङ्ग्रामेऽपि Sy.
१०. बुद्धीः is suggested for बुद्धिः ॥ अस्मदीया बुद्धीः Sy.
११. तौ A. युवाम् Sy.
१२. शक्तात् Sy. प्रयच्छतं धनमिति शेषः Sy.
१३. प्रज्ञापती is suggested for प्रज्ञावती ॥ हे कर्मणां पालकौ ! शमीति कर्मनाम Ngh. 2. 11.
१४. अस्मदीयैः स्तुत्यादिरूपैः कर्मभिः Sy.
१५. VM. ignores आ ॥ Sy. explains आ as अभि ।
१६. आवि० M.
१७. रक्षतम् is suggested for रक्षत ।
१८. पुत्राद्युपेतं पुत्रोत्पादनसमर्थम् Sy.
१९. अह्रयम् is suggested for अभूय० ॥ अक्षीणम् Sy.
२०. आगन्मे A. आगमेम is suggested for आगं मे ॥ आगच्छेम Sy.
२१. युवयोरनुग्रहाल्लब्धे Sy.
२२. देवानां वीतिः प्राप्तिर्यस्मिंस्तादृशं यज्ञम् Sy.
२३. तत्पुत्रे is missing in A.
२४. तयोर्लभाय is suggested for तयोर्लोभाय ।
२५. अभिमतं धनं प्रयच्छन्तः Sy.
२६. The passage प्रजार्थमुपगच्छाम इत्यर्थः refers to आगमेम and तयोर्लभाय ।

एष स्य वां पूर्वगत्वेव सख्ये निधिर्हितो माध्वी रातो अस्मे ।
अहेळता मनसा यातमर्वागश्नन्ता हव्यं मानुषीषु विक्षु ॥ ७ ॥

एष स्यः । सः[1] । एषः[2] । वाम्[3] । पूर्वगत्वेव यो वयोः[4] सन्धानाय[5] प्रथमं गच्छति[6] । स्वसख्यसिद्ध्यर्थम्[7] । सोममयो[8] निधिः[9] । निहितः[10] । अस्माकम्[11] । अभिप्रत्तः[12] । हे मधुमन्तौ[13] ! अहे[14] इति स्पष्टम्[15] ।

एकस्मिन्योगे भुरणा समाने परि वां सप्त स्रवतो रथो गात् ।
न वायन्ति सुभ्वो देवयुक्ता ये वां धूर्षु तरणयो वहन्ति ॥ ८ ॥

एकस्मिन् । युवयोर्द्वयोः समाने[16] । एकस्मिन् । उद्योगे[17] । हे क्षिप्रकारिणौ[18] ! वाम्[19] । परिगमयति[20] । सप्त[21] । नदीः । रथः सप्त हि नदीरतिक्रम्याश्विनावागच्छतः[22] । न । शुष्यन्ति[23] । शोभनभवनाः[24] । देवैर्युक्ताः[25] । ये[26] । वाम्[27] । धूर्षु युक्ताः । अश्वाः[28] । वहन्ति ।

---

१. युवयोः प्रियत्वेन प्रसिद्धः सोमः Sy.
२. पुरतो दीयमानः Sy. ३. युवयोः Sy.
४. पुरतो गन्ता दूत इव । स यथा प्रियं जनयन् स्वामिनः पुरतो वर्तते तद्वदित्यर्थः Sy.
५. ०गस्त्वेव तयोः M. यो द्वयोः is suggested for यो वयोः ॥
६. गच्छन्ति A. ७. सख्यार्थम् Sy.
८. सोमयोः M.
९. त्रिधिः A. निधिस्थानीयः Sy.
१०. पुरतः स्थापितः Sy.
११. अस्माभिः Sy.
१२. ०प्रेतः M. ०प्रत्तः is suggested for ०प्रक्तः ॥ दत्तः सङ्कल्पितः । सन्निहितः Sy.
१३. ०मन्तः M. हे मधुप्रियौ ! अश्विनौ ! Sy.
१४. अक्रुध्यता Sy.
१५. अहे इति ते स्पष्टः A. अहेळतेति स्पष्टम् is suggested for अहे इति स्पष्टम् ॥ VM. ignores मनसा । आ । यातम् । अर्वाक् । अश्नन्ता । हव्यम् । मानुषीषु and विक्षु ॥ Sy. explains these words in the following manner :— मनसानुग्रहयुक्तेन चेतसार्वागस्मदभिमुखमा यातम् । आगच्छतम् । अश्नन्ता हव्यं हविः सोमादिकमश्नन्तावभ्यवहरन्तौ । कुत्र ? मानुषीषु विक्षु मनुष्यरूपासु प्रजासु वर्तमानम् ।
१६. समानं A. उभयसाधारणे Sy.
१७. योगे अस्मद्विषये सति Sy.
१८. हे सर्वस्य भर्तारौ ! Sy. १९. युवयोः Sy.
२०. परग० A. परिगच्छति शीघ्रमागच्छतीत्यर्थः Sy.
२१. सप्त । नदीः । रथः is missing in A. सर्पणस्वभावाः सप्तसंख्याकाः वा गङ्गाद्याः Sy.
२२. ०वंग० A.
२३. शीघ्रगमने (न) श्राम्यन्ते Sy.
२४. तद्रथानुकूलाः सुभवनाः Sy.
२५. देवाभ्यां युवाभ्यां युक्ताः Sy.
२६. अश्वाः Sy. २७. युवाम् Sy.
२८. रथस्य तरणयस्तारकाः शीघ्रगन्तारः Sy.

असश्चता मघवद्भ्यो हि भूतं ये राया मघदेयं जुनन्ति ।
प्र ये बन्धुं सूनृताभिस्तिरन्ते गव्या पृञ्चन्तो अश्व्या मघानि ॥ ९ ॥

असश्चता । असमवर्जितौ[1] । हविष्मन्द्यः[2] । हि युवाम् । भवतम्[3] । येन[4] । धनेन । मंहनीयं देवमन्नम्[5] । प्रेरयन्ति[6] । ये च । बन्धुमागतं[7] दरिद्रम्[8] । वाग्भिः[9] । वर्धयन्ति[10] । मंहनीयानि[11] । गवाम्[12] । अश्ववृन्दानि[13] । सम्पर्चयन्त[14] इति ।

नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् ।
धत्तं रत्नानि जरतं च सूरीन्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

नू मे । क्षिप्रम्[15] । मम[16] । आह्वानम्[17] । आशृणुतम् । युवां तौ[18] । प्राप्नुतम्[19] । मार्गम्[20] । अन्नयुक्तं[21] तम् । अश्विनौ[22] ! धत्तम्[23] । रत्नानि[24] । वयसा[25] जरयन्तम्[26] । च । स्तोतॄन् ।

---

१. समव० A. असंवर्जितौ is suggested for असमव० ॥ कुत्राप्यसज्यमानौ युवाम् Sy.

२. ०ष्मन्द्भ्यः is suggested for ०ष्मन् द्यः ॥ धनवद्भ्यो हविष्मद्भ्यो यजमानेभ्यस्तेषामर्थाय Sy.

३. तेभ्य एव अनुरक्तौ भवतम् Sy.

४. धनेन निमित्तेन राया युक्ता वा Sy.

५. देयम० is suggested for देवम० ॥ दातव्यं मघं धनं हविर्लक्षणं वा Sy.

६. प्रेरयन्ति यच्छन्ति Sy.

७. स्नेहेन बध्नातीति बन्धुः । तं स्वसम्बन्धिनम् । अथवा फलेन बध्नातीति बन्धुरध्वर्य्वादिः । तम् Sy.

८. ०मार्गं A.

९. वाभि A.
प्रियसत्यात्मिकाभिः Sy.

१०. प्रवर्धयन्ति । प्रपूर्वस्तिरतिर्वर्धनार्थः Sy.

११. धनानि Sy.

१२. The addition of वृन्दानि after गवाम् is suggested. गोरूपाणि Sy.

१३. अश्वरूपाणि च Sy.

१४. संवर्च० A. अर्थिभ्यः प्रयच्छन्तः । तेभ्यो मघवद्भ्यो भूतम् Sy.

१५. अद्य Sy.

१६. अस्मदीयम् Sy.

१७. स्तुतिम् Sy.

१८. युवा तौ A. युवानौ is suggested for युवां तौ ॥ हे नित्ययुवानौ ! युवाम् Sy.

१९. प्राप्नुत M. आगच्छतम्

२०. गृहम् Sy.

२१. हविर्युक्तम् Sy.

२२. ०ना A.
श्रुत्वा च हे अश्विनौ ! Sy.

२३. दत्तम् Sy.

२४. आगत्य च रमणीयानि धनानि Sy.

२५. पयसा M.

२६. जरतं वर्धयतम् । धातूनामनेकार्थत्वात् । शिष्टं स्पष्टम् Sy.

VII. 68.

**आ शुभ्रा यातमश्विना स्वश्वा गिरो दस्रा जुजुषाणा युवाकोः ।**
**हव्यानि च प्रतिभृता वीतं नः ॥ १ ॥**

आ शुभ्रा[1] । आयातम्[2] । शोभनौ[3] ! अश्विनौ[4] । शोभनाश्वौ[5] । स्तुतिः[6] । दर्शनीयौ[7] । सेवमानौ[8] । युष्मत्कामस्य[9] । हव्यानि[10] । च । प्रतिसम्भृतानि । खादतम्[11] । न[12] ।

**प्र वामन्धांसि मद्यान्यस्थुररं गन्तं हविषो वीतये मे ।**
**तिरो अर्यो हवनानि श्रुतं नः ॥ २ ॥**

प्र[13] वाम्[14] । प्रस्थितानि[15] । युवयोः[16] । मदकराणि[17] । अन्नानि हविर्धानात्[18] । पर्याप्तम्[19] । गच्छतम्[20] । मम[21] । हविषः[22] । पानाय । तिरस्कृत्य । शत्रून्[23] । हवनानि[24] । श्रुतम्[25] । अस्माकम्[26] ।

**प्र वां रथो मनोजवा इयर्ति तिरो रजांस्यश्विना शतोतिः ।**
**अस्मभ्यं सूर्यावसू इयानः ॥ ३ ॥**

प्र वाम् । प्रेरयति[27] । वाम्[28] । मनोवेगः । रथः । तिरस्कुर्वन्[29] । लोकान् । अश्विनौ ! शतरक्षणः[30] । अस्मदर्थम् । हे सूर्यायावासयितारौ[31] ! गच्छन्[32] ।

---

१. 'आ शुभ्रा यातम्' इति नवर्चं त्रयोदशं सूक्तं वसिष्ठस्यार्षमाश्विनम् । आदितः सप्त विराजोऽष्टमीनवम्यौ त्रिष्टुभौ । अनुक्रम्यते च— 'आ शुभ्रा नव सप्ताद्या विराजः' (KSA. 37. 68. p. 26.) इति । सूक्तविनियोगो लैङ्गिकः Sy. २. शुभ्राः A. M.

३. अस्मद्यज्ञमागच्छतम् Sy.

४. हे दीप्तौ ! Sy. ५. शोशना० A.

६. स्तुतीः is suggested for स्तुतिः ॥

७. शत्रूणामुपक्षपयितारौ युवाम् Sy.

८. सेवमानौ भवतमिति शेषः Sy.

९. युवां कामयमानस्य मम Sy.

१०. हवींषि Sy. ११. भक्षयतम् Sy.

१२. नः is suggested for न ॥ न केवलं स्तुतिः किन्तु नोऽस्मदीयानि Sy.

१३. 'प्र वामन्धांसि' इत्येषाश्विनशस्त्रयाज्या । सूत्रितञ्च 'प्र वामन्धांसि मद्यान्यस्थुरुभा पिबतमश्विना' (ĀSS. 6. 5.) इति Sy.

१४. हे अश्विनौ ! Sy.

१५. प्रास्थिषत । गृहीतान्यासन्नित्यर्थः Sy.

१६. युवाभ्याम् Sy. १७. मदजनकानि Sy.

१८. सोमलक्षणानि अन्नानि Sy.

१९. अत्यर्थं शीघ्रम् Sy. २०. आगच्छतम् Sy.

२१. अतो युवां मम Sy. २२. हर्षे A

२३. अरेरस्मद्विरोधिनः Sy. २४. भुव० A.

२५. शृणुतम् । श्रुतमित्यस्य वाक्यादित्वादनिघातः Sy. २६. अस्मदाह्वानमित्यर्थः Sy.

२७. आगच्छत्यस्मद्यज्ञम् । अथवा वां प्रेरयति गमनाय Sy.

२८. वाङ् A. युवयोः Sy.

२९. तिरस्तिरस्कृत्य अतिक्रम्य Sy.

३०. अपरिमितास्मद्विषयरक्षणः Sy.

३१. वस० A. हे सूर्यायाः सह रथे वसन्तौ Sy.

३२. याच्यमानः सन् Sy.

अयं ह यद्वां देवया उ अद्रिरूर्ध्वो विवक्ति सोमसुद्युवभ्याम् ।
आ वल्गू विप्रो ववृतीत हव्यैः ॥ ४ ॥

अयं ह । अयम् । ह । यदा । वाम्[1] । देवौ[2] कामयमानः । ग्रावा[3] । उन्मुख[4]शब्दं करोति[5] । सोमसत्[6] । युवाभ्याम्[7] । तदानीं[8] वल्गनशीलौ[9] । मेधावी स्तोता[10] । आववृत्याद्[11] युष्मन्[12] । हविर्भिः ।[13]

चित्रं ह यद्वां भोजनं न्वस्ति न्यत्रये महिष्वन्तं युयोतम् ।
यो वामोमानं दधते प्रियः सन् ॥ ५ ॥

चित्रं ह[14] । पूजनीयम्[15] । ह[16] । यत् । युवयोः । अन्नम्[17] । अस्ति तत्सर्वम्[18] । ममत्वयुक्तम्[19] । अत्रय ऋषये[20] । नियुयोतं[21] प्रायच्छतम् । यः[22] । वामम्[23] । रक्षणम्[24] । अधारयत्[25] । प्रियः[26] । भवन्नत्रिः[27] ।

उत त्यद्वां जुरते अश्विना भूच्च्यवानाय प्रतीत्यं हविर्दे ।
अधि यद्वर्प इतऊति धत्थः ॥ ६ ॥

उत त्यत् । अपि च । तत् । वाम्[28] । स्तुवते[29] । अश्विनौ ! अभवत्[30] । च्ययानाय[31] । प्रतित्यं[32]

---

१. युवां प्रति Sy.
२. देवौ युवां कामयमानः Sy.
३. अभिषवग्रावा Sy.
४. उन्मुखः is suggested for उन्मुख ॥ उन्नतः सन् Sy.
५. विवक्ति उच्चैः शब्दयति Sy.
६. ०सुत् is suggested for ०सत् ॥ सोममभिषुण्वन् Sy.
७. युवाभ्यामर्थायाभिषुण्वन्निति सम्बन्धः । एवं कुर्वन् Sy.
८. तदानीम् is written twice in M.
९. सुन्दरौ Sy.
१०. यजमानः Sy.
११. आवर्तयति Sy.
१२. युवाम् is suggested for युष्मन् ॥
१३. VM. ignores उ ॥ उ इति पूरणः Sy.
१४. हे अश्विनौ ! Sy.
१५. चायनीयम् Sy.
१६. खलु Sy.
१७. धनम् Sy.
१८. अस्ति तदस्मभ्यं दत्तमित्यर्थः Sy.
१९. ममहृत्व० A. महत्त्व० is suggested for ममत्व० ॥ ऋबीसम् Sy.
२०. अथ तयोः स्तुतिः । अत्रय एतन्नामकादृषेः । पञ्चम्यर्थे चतुर्थी । तस्मात् Sy.
२१. युयोतं M. पृथक्कुरुतम् Sy.
२२. अत्रिः Sy.
२३. वाम् is suggested for वामं ॥ युवभ्यामेव कृतम् Sy.
२४. रक्षणं सुखम् Sy.
२५. धारयति Sy.
२६. स्तोतृत्वाद् युवाभ्यां प्रियभूतः सन् Sy.
२७. VM. ignores नु ॥ न्विति पूरणः Sy.
२८. युवयोः कर्म कुर्वते Sy.
२९. जूर्णाय Sy.
३०. अभूत् Sy.
३१. चपाना० M. च्यवानाय is suggested for च्ययानाय ॥ एतन्नामकाय महर्षये Sy.
३२. प्रतीत्यं is suggested for प्रतित्यं ॥ तस्य रूपस्य प्रत्याप्त्यै Sy.

प्रतिगमनं वृद्धस्य पुनर्युवत्वं प्रति गमनम्। हविषो दात्रे। अधिधस्थः[1]। अयमस्मात्[2]। रूपं जीर्णस्य। इधोमुखम्[3]।

**उत त्यं भुज्युमश्विना सखायो मध्ये जहुर्दुरेवासः समुद्रे।**
**निरीं पर्षदरावा यो युवाकुः॥ ७॥**

उत त्यम्। अपि च। तम्। भुज्युम्[4]। अश्विनौ! सखायः[5]। समुद्रमध्ये[6]। त्यक्तवन्तः। दुर्गमनाः[7]। तमेनम्[8]। पारं प्रति निष्पर्षत्[9]। अरावाश्वो[10] गमनवाद्रथो[11] वा। यः[12]। युष्मत्कामः[13]। अरणं गमनं तद्वानरावेति[14][15]।

**वृकाय चिज्जसमानाय शक्तमुत श्रुतं शयवे हूयमाना।**
**यावघ्न्यामपिन्वतमपो न स्तर्यं चिच्छक्त्यश्विना शचीभिः॥ ८॥**

वृकाय। वृकाय[16]। अवि[17]। जसमानाय[18]। विमोचने शक्तावभवतम्[19]। अपि च। अवृणुतम्[20]। शयवे[21]।

---

१. धस्थः A. ०धत्थः is suggested for ०धस्थः M. अध्यधत्तम्। 'युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः' (RV. I. 117. 13.) इत्यादिषु च्यवानस्य युवयोर्नवीकरणं प्रसिद्धम् Sy.

२. यस्मात् is suggested for अयमस्मात्।

३. अधोमु० M. इतोमुखम् is suggested for इधोमुखम्॥ इतो गमनाख्यं मृत्योः सकाशादितः प्राप्तिरूपम् Sy.

४. एतन्नामानम् Sy.

५. भुज्युसखिभूताः Sy.

६. VM. seems to explain together समुद्रे and मध्ये as समुद्रमध्ये॥ समुद्रोदकस्य मध्ये Sy.

७. दुष्टगमनाः Sy

८. ईमेनं समुद्रमध्ये क्षिप्तम् Sy.

९. निरपारयतम् Sy.

१०. ०वश्वो A. अरणमानभिगन्ता च तमेनं निरपारयतम् Sy.

११. ०वान्रथो is suggested for ०वाद्रथो।

१२. यः is missing in M. भुज्युः Sy.

१३. युवां कामयिता Sy.

१४. The passage अरणं गमनं तद्वानरावा should immediately follow निष्पर्षत् and precede अरावाश्वो०

१५. अत्राश्विनेषु सूक्तेषु कथाः सूच्यन्ते। अत्रिभुज्य्वादीनामग्निजलादिभ्यो रक्षणरूपास्ताः सर्वा महता प्रपञ्चेनास्माभिः 'नासत्याभ्यां बर्हिरिव' (RV. I. 116. I.) इत्यत्र प्रपञ्चिताः। तास्तत्र द्रष्टव्याः Sy.

१६. धनादात्रे। अभिलषत इत्यर्थः...अथवा परेभ्यो धनानि प्रयच्छते। यद्वा वृकाय वृकवर्द्धिसकाय। एतन्नामकाय Sy.

१७. अपि is suggested for अवि। चिदिति पूरणः Sy.

१८. कर्मभिरुपक्षीयमाणायर्षये Sy.

१९. गक्ता० A. अभिमतं धनमदत्तम्। शकेर्दानार्थस्य लुङ्येतद्रूपम्। अडभावश्छान्दसः Sy.

२०. तृणुतं A. अश्रृणुतम् is suggested for अवृणुतम्।

२१. एतन्नामकायर्षये Sy.

हूयमानः[1] । शयोर्गाम्[2] । अपिन्वतक्षारयतं पयः[3] । उदकानि । इव[4] । निवृत्तप्रसवा[5] । अपि । आत्मीयया[6] शक्त्या[7] । प्रज्ञाभिश्च[8] ।[9]

**एष स्य कारुर्जरते सूक्तैरग्रे बुधान उषसां सुमन्मा ।**
**इषा तं वर्धदघ्न्या पयोभिर्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥**

एष स्यः । एषः । स्तोता[10] । स्तौतिः[11] । सूक्तैः । उषसाम् । अग्रे[12] । बुध्यमानः । शोभनमननः[13] । तं शयुम् । आत्मीया गौः । पयसा । अवर्धयदिति[14] ।[15]

VII. 69.

**आ वां रथो रोदसी बद्बधानो हिरण्ययो वृषभिर्यात्वश्वैः ।**
**घृतवर्तनिः पविभी रुचान इषां वोळ्हा नृपतिर्वाजिनीवान् ॥ १ ॥**

आ वाम्[16] । आयातु[17] । युवयोः[18] । द्यावापृथिव्यौ । बाधमानः । हिरण्मयः । पुम्भिः[19] । अश्वैः[20] । उदकयुक्तमार्गः[21] । पविभिः[22] । दीप्यमानः । अन्नानाम्[23] । वोळ्हा । नृणां पालयिता[24] । बलवानिति[25] ।[26]

१. भूयमानोः A. ०मानौ is suggested for ०मानः M. आहूयमानौ युवाम् Sy.
२. ०पिबत० M. ०न्वतमक्षार० is suggested for ०न्वतक्षार० ॥ अपूरयतं क्षीरेण Sy.
३. यः A.
४. अद्भिरिव नदीम् । तां यथोदकेन पूरयतस्तद्वत् Sy.
५. ०सवाम् is suggested for ०सवा॥ वृद्धामपि Sy.
६. अव्यात्मी० A.
७. शवती शक्त्या सामर्थ्येन दोहनलक्षणेन युक्तां कृत्वा Sy.
८. युष्मदीयैः कर्मभिः Sy.
९. VM. ignores यौ and अश्विना ॥ यौ युवाम् । हे अश्विनौ ! 'शयवे' चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम्' (RV. I. 11 6. 22.) इत्यादि ह्युक्तम् Sy.
१०. स्तौता A.
११. स्तौति is suggested for स्तौतिः ।
१२. प्रातःसवने Sy.
१३. शोभनमतिः सुष्टुतिर्वा Sy.
१४. ०र्धयिदि० A. वर्धयतम् । वचनव्यत्ययः । अघ्न्या हन्तव्या गौश्च वर्धत वर्धयतु । अथर्वकमेव वाक्यम् । अघ्न्या गौर्वसिष्ठस्य प्रतिनियताग्निहोत्रार्था गौरिषान्नेन घृतादिनेत्यर्थः। पयोभिश्च तं वसिष्ठं वर्धत् वर्धयतु । एवमात्मानं परोक्षेण निर्दिदेश । शिष्टं स्पष्टम् Sy.
१५. VM. ignores स्यः and इषा ॥ स प्रसिद्धो वसिष्ठः । इषा अन्नेन Sy.
१६. 'आ वां रथः' इत्यष्टर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम् । अनुक्रम्यते च—'आ वां रथोऽष्टौ' (KSA. 37. 69. p. 26.) इति । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः Sy.
१७. हे अश्विनौ ! Sy.
१८. आयातु यज्ञमस्मदीयम् Sy.
१९. पुं हिः A. युवभिः Sy.
२०. अश्वैर्युक्तः सन् Sy.
२१. मार्ग M. घृतमुदकं वर्तन्यां यस्य तादृशः Sy.
२२. रथनेमिभिर्मधुपात्रैर्वा Sy.
२३. यजमानैर्दत्तानां हविषां वाहको दातव्यानां वाञ्नानाम् Sy.
२४. यजमानानां स्वामी Sy.
२५. अन्नवान् Sy.
२६. VM. ignores रथः

**स प॑प्रथा॒नो अ॒भि पञ्च॒ भूमा॑ त्रिवन्धु॒रो मन॒सा या॑तु यु॒क्तः ।**
**विशो॒ येन॒ गच्छ॑थो देव॒यन्तीः॒ कुत्रा॑ चि॒द्याम॑मश्विना॒ दधा॑ना ॥ २ ॥**

सः पप्रथानः । पञ्च । जनान्[1] । धनप्रदानेन विस्तारयन्[2] । त्रिबन्धुरः[3] । मनसा । युक्तः[4] । अभ्यायातु[5] । मनुष्यान्[6] । येन[7] । अभिगच्छथः[8] । देवकामान् । यत्र कुत्र । चिदपि[9] । गमनम् । अश्विनौ । कुर्वन्तौ[10,11] ।

**स्वश्वा॑ य॒शसा या॑तम॒र्वाग्दस्रा॑ नि॒धिं मधु॑मन्तं पिबाथः ।**
**वि वां॒ रथो॑ व॒ध्वा॒३॒॑ याद॑मा॒नोऽन्ता॑न्दि॒वो बा॑धते वर्त॒निभ्या॑म् ॥ ३ ॥**

स्वश्वा । शोभनाश्वौ[12] । यशस्विनौ[13] । आगच्छतम् । अभिमुखम्[14] । हे दस्रौ[15] ! सोमवन्तम्[16] । निधिं[17] प्राग्रम् । पिवतम् । विबाधते[18] । युवयोः रथः । उषसा हस[19] । अभिगच्छन्[20], यदिरभिक्रमणकर्मा । दिवः । पर्यन्तान्[21] । चक्रपविभ्याम्[22] ।

---

१. It seems to be the explanation of भूम ॥ भूतानि सर्वप्राणिनः Sy.

२. प्रथमानः Sy.

३. ति वसुन्धरो M.
वन्धुरमुच्चावचं सारथ्यवस्थानं काष्ठमयं तादृशैस्त्रिभिर्युक्तः Sy.

४. अस्मत्स्तुत्या युक्तः Sy.

५. युक्तम् M.

६. यजमानान् प्रति Sy.

७. रथेन Sy.

८. अनाभि० M.

९. यत्र क्वापि Sy.

१०. धारयन्तौ येन विशो गच्छथः स यात्विति Sy.

११. VM. ignores सः ॥ स रथः Sy.

१२. हे देवौ ! शोभनाश्वेन Sy.

१३. यशसा च Sy.

१४. अस्मदभिमुखम् Sy.

१५. हे शत्रूणामुपक्षयितारौ ! Sy.

१६. मधुररसोपेतम् Sy.

१७. निधिवन्निहितं सोमम् Sy.

१८. पिबा० A.
शीघ्रगमनेन पीडयति Sy.

१९. सह is suggested for हस । सूर्यया सह Sy.

२०. गन्तव्यान् प्रति गच्छन् । गमयन्नित्यर्थः । एवं कुर्वन् Sy.

२१. पर्यन्तप्रदेशान् Sy.

२२. ववि॒भ्यम् A.
स्वचक्राभ्याम् Sy.

युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् ।
यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ॥ ४ ॥

[ युवोः[1] । ] युवयोः । श्रियतम्[2] । पर्यवृणीत[3] । सूर्यदुहिता[4] । युवतिः[5] । परितक्म्येति[6] रात्रिनाम तस्याः[7] पश्चिमे भागे युवयोः काले । यत्[8] । देवकामम्[9] । रक्षथ[10] । प्रज्ञाभिः[11] । अत्र यास्कः 'पर्यगाद्वां घ्रंसहरव-[12] सानेऽन्नम्[13] इति । यजमानानां रक्षणार्थम्[14] । अग्निर्हविर्भूतमनम्[15][16] । अश्विनौ[17] । परिगच्छतीत्यर्थः[18] ।

१. The *pratika* is supplied by the Editor. वसिष्ठस्येदमार्षम् Dur. वसिष्ठस्य अश्विना-वुच्येते SKN.

२. श्रियतं M. श्रियम् is suggested for श्रियतम् ॥ श्रयत इति श्री रथः । तं सेवामेव वा Sy. या श्रीस्ताम् Dur.

३. सर्वतः सम्भजते Dur. परि सर्वतः. . .वृणीते युवयोर्दीप्त्या दीप्तिमती भवतीत्यर्थः SKN.

४. VM. explains सूरः and दुहिता together as सूर्यदुहिता ॥ सूर्यस्य दुहिता Sy. योषा, आह कतमेति ? उच्यते, सूरो दुहिता सूर्यस्य दुहिता Dur. सूर्येण दिवि जन्यमानत्वात् सूर्यस्य दुहिता SKN. ५. सर्वदा मिश्रयन्ती योषित् Sy. येयमुषःसञ्ज्ञिका, इयमवृणीत Dur. स्त्री उषआख्या SKN.

६. ०तक्म्येति is suggested for ०तक्ष्येति cf. Ngh. 4. 1. ॥ परितस्तकनवति सङ्ग्रामे यज्ञे वागन्तव्ये Sy. कदा तां श्रियमुषःसञ्ज्ञिकामियमवृणीत ?. . .रात्र्यामूर्ध्वमर्धरात्रात् । स ह्यश्विनोः कालः Dur. कदा वृणीत ? रात्रौ । ऊर्ध्वमर्धरात्रादश्विनोः काल इति वक्ष्यति । तस्मिन् काले रात्रेः पश्चिमे भाग इत्यर्थः SKN. परितक्म्या रात्रिः । परित एनां तक्म । तक्मेत्युष्णनाम । तकत इति सतः N. 11. 25. ७. तस्या बश्चिमे A.

८. य A. यदा Sy. यस्मात् Dur., SKN.

९. यजमानं प्रज्ञं वा Sy. देवान् यष्टुमिच्छन्तं यजमानम् Dur. देवान् यष्टुमिच्छन्तम् । इच्छयाऽत्र तत्पूर्वकत्वादनुष्ठानं लक्ष्यते । देवानां यष्टारमित्यर्थः SKN. १०. रक्षत M. रक्षथः is suggested for रक्षथ ॥ रक्षथो युवाम् SKN. ११. ०ज्ञाहि A. युवयोर्गमनादिलक्षणैः कर्मभिः Sy. स्वैः कर्मभिः Dur. कर्मभिः स्वैः प्रज्ञाभिर्वा SKN.

१२. VM. seems to explain घ्रंसम् by the quotation of N. only. तदानीं घ्रंसं दीप्तम् Sy. परि प्रति, अहनि प्राप्त इत्यर्थः । पूर्वाह्णे ह्यश्विनोर्यागकालः Dur. यस्मादिति· श्रुतेस्तस्मादित्यध्याहारः । तस्मात्. . .परीत्ययं प्रतीत्यस्य स्थाने । घ्रंसमप्यह्नः । अहनीत्यर्थः SKN.

१३. पर्यगाद्वां घ्रंसमहरवनायान्नम् is suggested for पर्यगाद्वां घ्रंसहरवसानेऽन्नमिति A. M. N. 6. 4.

१४. अवनेन रक्षणेन निमित्तेन Sy. कमर्थं पुरस्कृत्य वयोऽन्नं गच्छति ? तर्पणायेत्यर्थः । एवमत्राश्विनोर्हविःसम्प्रदानसम्बन्धात् 'ओमना' इत्यस्य शब्दस्य'अवनाय' इत्येव विपरिणाम उपपद्यते Dur. अवनायावनेन वा निमित्तभूतेन । तर्पणार्थमित्यर्थः SKN.

१५. आनि हवि० A.

१६. ०न्नम् is suggested for ०नम् । सोमादिलक्षणम् Sy. सर्वासु दिक्षु यजमानैर्दीयमानं युवां प्रति वयोऽन्नं हविर्लक्षणम् Dur. वयोऽन्ननामेदम् । अन्नं हविर्लक्षणम् SKN.

१७. अश्विनौ seems to be the explanation of वाम् ॥

१८. पर्यगात् Sy. तेन कारणेन वां. . .परिगच्छति Dur. अगाद् गच्छति युवाभ्यां दीयत इत्यर्थः । उदिते, अश्विनोर्याग उच्यते । अहः प्रत्यहमगादिति, तस्माद्यजमानं रक्षथः । तस्मात् प्रातरेवेज्येथे इत्यर्थः SKN. N. 6. 4.; SKN. II 40 3., 40 4.

**यो ह॒ स्य वां॑ रथिरा॒ वस्त॑ उ॒स्रा रथो॑ युजा॒नः प॑रि॒याति॑ व॒र्तिः**
**तेन॑ न॒ः शं योरु॒षसो॒ व्यु॑ष्टौ॒ न्य॑श्विना वहतं य॒ज्ञे अ॒स्मिन् ॥ ५ ॥**

यो ह[1]। खलु[2]। एषः। युवयोः। हे रथवन्तौ[3] ! वस्ते[4]। तेजांसि[5]। रथः। युज्यमानः[6]। परिगच्छन्ति[7] च। मार्गम्[8]। तेन[9]। अस्माकम्। शं च[10]। योश्च[11]। उषसः। व्युच्छने[12]। निवहतम्[13]। अश्विनौ[14] ! अस्मिन्[15]। यज्ञे[16]।

**नरा॒ गौरे॑व वि॒द्युतं॑ तृषा॒णास्माक॑म॒द्य सव॒नोप॑ यातम् ।**
**पु॒रु॒त्रा हि वां॑ म॒तिभि॒र्हव॑न्ते॒ मा वा॑म॒न्ये नि य॑म॒न्दे॑व॒यन्तः॑ ॥ ६ ॥**

नरा गौरेव। हे नेतारौ[17] ! गौराविव[18] मृगौ। विद्युतम्[19]। मृगतृष्णावन्तौ[20]। अस्माकम्। अद्य। सवनादि[21]। उपगच्छतम्[22]। बहुषु। हि देशेषु[23]। वा[24]। स्तुतिभिः। हवन्ते[25]। तत्र मा। वाम्। अन्ये। नियच्छन्तु[26]। देवकामाः[27]।

**यु॒वं भु॒ज्युमव॑विद्धं समु॒द्र उदू॑हथु॒रर्ण॑सो॒ अस्रि॑धानः ।**
**प॒त॒त्रिभि॑रश्र॒मैर॑व्य॒थिभि॑र्दं॒सना॑भिरश्विना पा॒रय॑न्ता ॥ ७ ॥**

युवम्[28]। युवम्। भुज्युः[29]। सखिभिः समुद्रमध्ये[30]। अवविद्धम्[31]। पारं प्रत्युदूहतुः[32]। उदकात्।

---

१. हेति पूरणः Sy.
२. एषु A. स प्रसिद्धो रथः Sy.
३. हे रथिनौ ! मत्वर्थीयो रः Sy.
४. आच्छादयति Sy. ५. ते is omitted by M. ६. अश्वैर्युक्तः सन् Sy..
७. ०च्छति is suggested for ०च्छन्ति ॥
८. यजमानगृहं वा Sy.
९. रथेन Sy.
१०. शमनाय पापानाम् Sy.
११. मिश्रणाय च सुखानाम् Sy.
१२. ०च्छन्ने M. प्रातः काले Sy.
१३. नितरां प्राप्नुतम् Sy. १४. अश्विना M.
१५. अस्मिन् is missing in M.
१६. VM. ignores यः ॥ यो रथः Sy.
१७. नेकारौ A. हे नरा नेतारौ। अश्विनौ ! Sy.
१८. ०पिव A. गौरा मृगीव Sy.
१९. विशेषेण दीप्यमानं सोमं प्रति Sy.
२०. तृष्णावन्तौ Sy.
२१. ०नानि is suggested for ०नादि ।
२२. उवग० A. उपागच्छतम् Sy.
२३. यज्ञेषु Sy.
२४. वाम् is suggested for वा युवाम् Sy.
२५. भवन्ते Sy. यजमानाः स्तुवन्ति
२६. अतो यष्टारः Sy.
२७. देवौ कामयमानाः Sy.
२८. युवम् is omitted by A.
२९. भुज्युम् is suggested for भुज्युः ॥ हे अश्विनौ ! युवं भुज्युम् एतन्नामकम् Sy.
३०. समुद्रे तन्मध्ये निमग्नम् Sy.
३१. अपवि० M. विक्षिप्तम् Sy.
३२. उदुह० A. ०हथुः is suggested for ०हतुः ।

अक्षिणैः[1] । अश्वैः[2] । व्यथारहितैः । श्रमवर्जितैः । कर्मभिः[3] । अश्विनौ तम् । वारयन्तौ[4] ।

**नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् ।**
**धत्तं रत्नानि जरतं च सूरीन्यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥**

[नू मे हवम्][5]

## VII. 70.

**आ विश्ववाराश्विना गतं नः प्र तत्स्थानमवाचि वां पृथिव्याम् ।**
**अश्वो न वाजी शुनपृष्ठो अस्थादा यत्सेदथुर्ध्रुवसे न योनिम् ॥ १ ॥**

[6]आ विश्ववारा । हे विश्वैर्वरणीयौ[7] ! आगच्छतम् । अस्मान्[8] । अश्विनौ ! प्रावाचि[9] प्रोक्तमस्माभिः[10] । तत् । स्थानम् । अस्यां पृथिव्याम्[11] । युवयोरस्माभिःतच्च[10] स्थानं[12] स्तीर्णबर्हिर्वामन्विक्ष[13], अश्च[14] । इव[15] । बलवान्[16] । सुखपृष्ठः[17] । तिष्ठति[18] । आसिदथः[19] । यत्[20] स्थानम् । यथा मनुष्यः । ब्रुवावस्थानाय[21] । युग्महमासीदति[22] ।

---

१. अक्षीणैः is suggested for अक्षिणैः॥ अक्षीयमाणैः Sy.

२. पतनवद्भिर्गमनवद्भी रथे नियुक्तैरश्वैः Sy.

३. शारीरैः कर्मभिश्च Sy.

४. पार० is suggested for वार० ॥ पारयन्तौ समुद्रम् अर्णस उदूहथुरिति । 'नासत्या भुज्युमूहथुः पतङ्गैः' (RV. 1. 116. 4.) इति ह्युक्तम् Sy.

५. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV. VII. 67. 10.

६. 'आ विश्ववारा' इति सप्तर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम् । अनुक्रम्यते च—'आ विश्ववारा सप्त' (KSA. 37. 70. p. 26.) इति । प्रातरनुवाक आश्विनशस्त्रे च विनियोग उक्तः । आद्यास्तृचस्तृतीये छन्दोमे प्रउगशस्त्रे विनियुक्तः । 'आ विश्ववाराश्विना गतं नोऽयं सोम इन्द्र' (ĀSS 8. 11) इति सूत्रितत्वात् Sy. ७. सर्वैर्वरणीयौ ! Sy.

८. अस्माकं यज्ञं यागम् Sy.

९. प्रोवाचि M. प्रोच्यते Sy. १०. वेद्याम् Sy.

११. One अस्माभिः is redundant.

१२. स्थान A.

१३. ०मन्वीक्ष्य is suggested for ०मन्विक्ष

१४. अश्वः is suggested for अश्च ।

१५. श्व M. १६. वेगवान् Sy.

१७ तदर्थं सुखकरपृष्ठभागः । अत्यन्तविपुलत्वादारूढानां सुखकरपृष्ठभाग इत्यर्थः Sy.

१८. तिष्ठतु युवयोः समीपे Sy.

१९. आसिदधः M. आसीदथः is suggested for आसिदथः ॥ आसीदथः, तत्स्थानमश्व आश्रयतिवतो गमनाय Sy.

२०. यत् । यमित्यर्थः । यमश्वम्. . .यद्वा यत्स्थानम् Sy. २१. ब्रूवावस्थाना० A. ध्रुवावस्थाना० is suggested for ब्रुवावस्थाना० ॥ ध्रुवाय निवासाय Sy.

२२. It seems to be an explanation of योनिम् ॥ युग्मम् is suggested for युग्महम् ॥ योनिं स्थानमिव Sy.

सिषंक्ति सा वां सुमतिश्चनिष्ठातापि घर्मो मनुंषो दुरोणे ।
यो वां समुद्रान्त्सरितः पिपर्त्येतंग्वा चिन्न सुयुजा युजानः ॥ २ ॥

सिषक्ति । सेवते । सा । वाम्[1] । सुमतीः[2] । अतिशयेनान्नवती[3] । तप्तश्च[4] । घर्मः[5] । मनुष्यस्य[6] । गृहे[7] । यो घर्मे[8] । वाम्[9] । समुद्रात्[10] । सरितः । पारयन्ति गमयन्तीत्यर्थः[11] । अश्वौ[12] । इव । सुयुक्तौ[13] यज्ञे युज्यमानः[14,15] ।

यानि स्थानान्यश्विना दधाथे दिवो यह्वीष्वोषंधीषु विक्षु ।
नि पर्वतस्य मूर्धनि सदन्तेषं जनाय दाशुषे वहन्ता ॥ ३ ॥

यानि । यानि[16] । आवासस्थानान्यात्मनः[17] । अश्विनौ[18] ! कुरुतः[19] । दिव आगतौ[20] । महीषु[21] । ओषधीषु । प्रजासु च[22] । पर्वतस्य[23] । मूर्ध्नि[24] । निवसन्तो[25] । यजमानाय । अन्नं च । वहन्तावुत्तरत्र[26,27] सम्बन्धः[28] ।

चनिष्टं देवा ओषंधीष्वप्सु यद्योग्या अश्नवैथे ऋषीणाम् ।
पुरूणि रत्ना दधंतौ न्य१स्मे अनु पूर्वाणि चख्यथुर्युगानि ॥ ४ ॥

चनिष्टम् । चन इच्छतम्[29] । हे देवौ[30] ! तास्वोषधीषु[31] । अप्सु च । यदा[32] । व्याप्नुथः[33] । योग्याः[34]

---

१. युवाम् Sy.
२. ०तिः is suggested for ०तीः ॥ अस्माभिः क्रियमाणा शोभना स्तुतिः Sy.
३. कमनीयतमातिशयेनान्नवती वा Sy.
४. तप्तोऽभूत् । 'यद्घ्रां इत्यपतत्तद्घमस्य घर्मत्वम्'(T. A. 5. 1. 5) इति श्रुतिः Sy.
५. प्रवर्गश्च Sy. ६. यजमानस्य Sy.
७. यागगृहे Sy.
८. घर्मः is suggested for घर्मे ॥ यज्ञस्य शिरःस्थानीयत्वादस्य यो घर्मः Sy.
९. युवां प्राप्नुवन्निति शेषः Sy.
१०. ०द्रान् is suggested for ०द्रात् ।
११. ०यति गमयती० is suggested for ०यन्ति गमयन्ती० ॥ पूरयति वृष्टिद्वारा Sy.
१२. नेत्युपमार्थे, तद्वत् Sy.
१३. सुष्ठु युक्तौ रथे भवतस्तथेत्यर्थः Sy.
१४. योजयन् यज्ञः स एव करोति Sy.
१५. VM. ignores चित् ॥ चिदिति पूरणः Sy.
१६. यादि A. १७. ०नाद्या० A.
१८. ०नः M. हे अश्विनौ ! युवाम् Sy.
१९. कुरुथः Sy. २०. द्युलोकादागत्य Sy.
२१. महतीषु is suggested for महीषु ।
२२. यजमानेषु Sy. २३. तौ युवां मेघस्यान्तरिक्षस्य Sy. २४. स्थाने Sy.
२५. ०सन्तौ is suggested for ०सन्तो ॥ निषीदन्तौ २६. प्रापयन्तौ भवतमिति शेषः Sy.
२७. वुत्तरत्र is missing in M.
२८. VM. ignores दाशुषे ॥ दाशुषे हविर्दात्रे Sy.
२९. अत्यन्तं कमनीयतमं कामयेथामित्यर्थः Sy.
३०. हे देवा देवौ ! युवाम् Sy.
३१. ओषधिविकारांश्चरुपुरोडाशादिकान् सोमरसान् Sy. ३२. यस्मात् Sy.
३३. व्याप्नुथस्तस्मादस्मदीया अपि कामयेथामित्यर्थः । यद्वा ऋषीणामिति पूजार्थं बहुवचनम् । यद्यस्मादोषधीष्वप्सु च चनिष्टं योग्याः स्तुतीश्चाश्नवैथे तस्मात् Sy.
३४. युवयोरुचिता ओषधीरपश्च Sy.

स्तुतीः । ऋषीणाम्[१] । बहूनि । रत्नानि[२] । अस्मासु । निदधानौ[३] । अनुचख्यपृथुः[४] । गतान् दिवसानतुख्या-नमनुमनुनं[५][६] दिवसा गता निरर्थका इति बुद्धिमधुना धनं प्रयच्छन्तौ[७] कुरुतः ।

**शुश्रुवांसा चिदश्विना पुरूण्यभि ब्रह्माणि चक्षाथे ऋषीणाम् ।**
**प्रति प्र यातं वरमा जनायास्मे वामस्तु सुमतिश्चनिष्ठा ॥ ५ ॥**

शुश्रुवांसा । शुश्रूषमाणौ । एव । अश्विनौ ।[८] . . . .

**यो वां यज्ञो नासत्या हविष्मान्कृतब्रह्मा समर्यो३ भवाति ।**
**उप प्र यातं वरमा वसिष्ठमिमा ब्रह्माण्यृच्यन्ते युवभ्याम् ॥ ६ ॥**

[ यो वां यज्ञः । ][९]

---

१. ऋषीणां सम्बन्धिनीः Sy.

२. रमणीयानि धनानि Sy.

३. तिद० A.

४. चखपृथुः A. ०चख्यथुः is suggested for ०चख्यपृथुः ॥ ख्यातवन्तौ । अनुकृष्टवन्तावनु-ग्रहार्थम् Sy.

५. युगानि मिथुनानि जायापतिरूपाणि Sy.

६. ०मननमनतं A. ०मनुमननम् is suggested for ०मनुमनुतं ॥

७. ०तौऽकुरुत A.

८. The commentary on the rest of this stanza as well as on VII. 70. 6. and up to स्तुतिः in VII. 70. 7. is missing in all mss. Sy. explains this stanza in the following manner :—

हे अश्विनाश्विनौ ! चिदिति पूरणः । युवां शुश्रुवांसा श्रुतवन्तौ सन्तौ पुरूणि बहूनि ब्रह्माणि परिवृढानि कर्माणि स्तुतिलक्षणान्यृषीणा-मस्माकं सम्बन्धीन्यभि चक्षाथे । अभिपश्यथो युवाम् । अतो जनाय जनस्य यजमानस्य मम वरं यज्ञं प्रति प्र यातम् । वां युवयोश्चनिष्ठोक्त-लक्षणा सुमतिरनुग्रहमतिरस्मे अस्मास्वस्तु भवतु ।

९. The *pratīka* is supplied by the Editor. Sy. explains this stanza in the following manner :—

हे नासत्यावश्विनौ ! वां युवयोर्यो यज्ञो यज-मानः समर्य ऋत्विग्रूपैर्मर्त्यैः सहितः सन् हवि-ष्मान् हविषा युक्तः कृतब्रह्मा कृतस्तोत्ररूप-कर्मा भवाति भवति तं वरं वरणीयं वसिष्ठ-मोप प्रयातं प्रकर्षेणोपागच्छतम् । इमेमानि ब्रह्माणि मन्त्रजातानि युवभ्यां युवाभ्यामर्थाया-गमनायर्च्यन्ते स्तूयन्ते क्रियन्त इत्यर्थः ।

इयं म॑नी॒षा इ॒यम॑श्विना॒ गीरि॒मां सु॑वृ॒क्तिं वृ॑षणा जुषेथाम् ।
इ॒मा ब्रह्मा॑णि युव॒यून्य॑ग्मन्यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ७ ॥

[इयं मनीषा][1]...। स्तुतिः[2] । इमां च[3] । स्तुतिम्[4] । वर्षितारौ । सेवेथाम् । इमानि च । हवींषि[5] । युवां कामयमानानि । गच्छन्तु वामिति ।[6]

VII 71.

अप॒ स्वसु॑रु॒षसो॒ नग्जि॑हीते रि॒णक्ति॑ कृ॒ष्णीर॑रु॒षाय॒ पन्था॑म् ।
अश्वा॑मघा॒ गोम॑घा वां हुवेम॒ दिवा॒ नक्तं॒ शरु॑म॒स्मद्यु॑योतम् ॥ १ ॥

अप[7][8] । स्वसुः[9] । उषस[10] आगमनाय । नन्[11] नगिति रात्रिमाह[12] सा । अवगच्छति[13] 'रुशद्वत्सा रुशती श्वेत्या-[14]गात्' इत्युक्तम्[15] । रेचयति[16] । पन्थानम्[17] । रात्रिः[18] । आरोचमानायादित्याय[19] । अस्मिन् काले वयमश्वि-धनौ[20] ! गोधनौ[21] ! वाम्[22] । हवेम[23] । दिवा । नक्तं च[24] । अस्मत्तः । हिंसकम् । पृथक् कुरुतम् ।

---

१. The *pratīka* is supplied by the Editor.

२. स्तुतिः कृता Sy. ३. अस्मत्कृताम् Sy.

४. शोभनां स्तुतिम् Sy.

५. कर्माणि स्तुतिरूपाणि Sy.

६. Sy. explains the rest of words in the following manner :— हे अश्विनाश्विनौ ! इयं मनीषा स्तुतिर्युवयोः कृतेति शेषः । तदेवादरार्थं पुनरुच्यते । इयं गीः स्तुतिः कृता । हे वृषणा कामानां वर्षकौ ! यूयं पातेति सिद्धम् Sy.

७. पञ्चमेऽनुवाक एकोनविंशतिसूक्तानि । तत्र 'अप स्वसुः' इति षडृचं प्रथमं सूक्तं त्रैष्टुभमाश्विनम् । अनुक्रम्यते च—'अप स्वसुः षट्' (KSA. 37. 71. p. 26.) इति । गतो विनियोगः Sy. ८. आव A.

९. सुवुरुषस M. स्वसृस्थानीयायाः Sy.

१०. उषसः सकाशात् Sy.

११. नन्द A. नक्तम् is suggested for नन् ॥

१२. ०मंह् A.

१३. अपग० is suggested for अवग० ॥ तस्या अवकाशं दत्वा स्वयमपगतेत्यर्थः । 'स्वसा स्वस्रे ज्यायस्यै योनिमारैक्' (RV. 1. 124. 8.) इत्युक्तम् Sy.

१४. श्वेत्या० A. M.

१५. ०त्युक्ता M. (RV. 1. 113. 2.)

१६. रिणक्ति रेचयति । यस्मादेवं तस्माद्युवयोरागमनसमयत्वात् Sy. १७. मार्गम् Sy.

१८. कृष्णवर्णा रात्रिः Sy.

१९. आरोचमानायाह्ने सूर्याय वा Sy.

२०. अश्विनौ A. अश्वधनौ is suggested for अश्विधनौ ।

२१. ०नौ is suggested for ०नो ॥ उभयोः प्रदातारावित्यर्थः Sy.

२२. युवाम् Sy,

२३. हुवेम is suggested for हवेम ॥ स्तुमः आह्वयामः Sy.

२४. त्वाम् A. दिवा नक्तं सर्वदा Sy.

**उपा॑यातं दा॒शुषे॒ मर्त्या॑य॒ रथे॑न वा॒मम॑श्विना॒ वह॑न्ता ।**
**यु॒यु॒तम॒स्मदनि॑रा॒मम॒मीवां॒ दिवा॒ नक्तं॑ माध्वी॒ त्रासी॑थां नः ॥ २ ॥**

उपायातम्[1] । उपगच्छतम्[2] । दाशुषे[3] । यजमानाय । रथेन । धनम्[4] । अश्विनौ[5] ! वहन्तौ । पृथक् कुरुतम् । अस्मत्तः । अनिरामनतिप्राणनकमश्विासकारिण्यशक्तिरनिरा[6][7] । अमीवा[8] च रोगविशेष औदरः । दिवा । नक्तं[9] च । हे वसुमन्तौ[10] ! अस्मान् । रक्षतम्[11] ।

**आ वां॒ रथ॑मव॒मस्यां॒ व्यु॑ष्टौ सुम्ना॒यवो॒ वृष॑णो वर्तयन्तु ।**
**स्यूम॑गभस्तिमृत॒युग्भि॒रश्वै॒राश्वि॑ना॒ वसु॑मन्तं वहेथाम् ॥ ३ ॥**

आ वां रथम् । आवर्तयन्तु । वाम्[12] । रथम् । अवमस्याम्[13] । उषसि अवमाद्यतनी[14] । सुखमिच्छन्तः[15] । पुमांस[16] ऋत्विजः । अनुस्यूतरश्मिम्[17] । यजुयोगिभिः[18] । अश्वैः । आवहेथौ[19] । अश्विनौ ! वसुमन्त[20] रथम् ।

**यो वां॒ रथो॑ नृपती॒ अस्ति॑ वो॒ळ्हा त्रि॑वन्धु॒रो वसु॑माँ उ॒स्रया॑मा ।**
**आ न॑ ए॒ना ना॑स॒त्योप॑ यातम॒भि यद्वां॑ वि॒श्वप्स्न्यो॒ जिगा॑ति ॥ ४ ॥**

यो वाम् । यः । वाम्[21] । रथः । नृपती[22] ! भवन्ति[23] । वोळ्हा[24] । वन्धुरं[25] फलकासंघाटस्त्रिबन्धुरः । वसुमान्[26] । उत्सरणशीलगमनः[27] । तेनानेन[28] । अस्मान् । उपायातम् । नासत्यौ । अभिगच्छति[29] । यस्मात्[30] । वां[31] वसिष्ठः । विश्वरूपो[32] नानाविधस्तुतिकरणाद्विश्वरूप्यं यद्वा[33] विश्वस्य व्यापको विश्वस्येति[34] ।

---

१. The *pratīka* is supplied by the Editor. २. अस्मदाह्वानं प्रति Sy.
३. हविषां दात्रे Sy. ४. वननीयं धनम् Sy.
५. हे अश्विनौ ! युवाम् Sy. ६. ०प्राणान० A.
७. इरान्नम् । तदन्नदारिद्र्यमित्यर्थः Sy.
८. अमिवा A. रोगञ्च Sy. ९. सर्वदा Sy.
१०. मधुमन्तौ is suggested for वसुमन्तौ । हे मधुमन्तौ ! युवाम् Sy. ११. रक्ष० A.
१२. युवयोः Sy. १३. आसन्नायाम् Sy.
१४. ०वमवाद्य० A. अवमा० is suggested for ०आवमा० ॥ अवमाद्यतनी should immediately follow अवमस्याम् ॥ व्युच्छने उषसि Sy. १५. सुखेन योजयन्तोऽश्वाः Sy. १६. वर्षकाः Sy.
१७. सुखरश्मिम् Sy.
१८. यजू० A. यज्ञयोगिभिः is suggested for यजुयोगिभिः ॥ उदकयुक्तैरश्वैरुदकप्रदैः Sy.
१९. ०थाम् is suggested for ०थौ ॥
२०. प्रद्रेयधनयुक्तम् Sy. २१. युवयोः Sy.
२२. ०तीः A. हे नृणां यजमानानां पालकौ ! Sy.
२३. भवति is suggested for भवन्ति । सर्वदा सन्निहितो वर्तते Sy.
२४. वोळ्हु A. युवयोर्वाहकः Sy.
२५. वोधु० A. ०बन्धु० is suggested for ०बन्धु० ॥ सारथ्यधिष्ठानस्थानत्रयोपेतः Sy.
२६. धनवान् Sy. २७. उस्रं दिवसं प्रति गन्ता Sy. २८. रथेन Sy.
२९. अभिगच्छति । अथवाह यद्यस्माद्विश्वप्स्न्यो वसिष्ठो वां जिगाति स्तौति, अत उपा यातम् Sy. ३०. यद्रथो यश्च रथः Sy.
३१. वं A. ३२. व्याप्तरूपः Sy. ३३. यद्वां A.
३४. विश्वस्य seems to be unnecessary.

**युवं च्यवा॑नं ज॒रसो॑ऽमुमुक्तं॒ नि पे॒दव॑ ऊहथु॒रा॒शुमश्व॑म् ।**
**निरंह॑स॒स्तम॑सः स्पर्त॒मत्रिं॒ नि जा॑हु॒षं शि॑थि॒रे धा॑तम॒न्तः ॥ ५ ॥**

युवम्[1] । युवम् । च्यावानम्[2] । जरया[3] । मोचितवन्तौ[4] । वैवे[5] च राज्ञे । शीघ्रगन्तारम्[6] । अश्वमात्मीयम् । न्यूहथुः[7] । निष्पमुत्थापितवन्तौ[8] । अहन्तुः[9] । तमसः[10] । अत्रिं[11] शतद्वारेषु यन्त्रगृहेष्वसुरे[12] प्रक्षिप्तम् । चाहुषं[13] च राजानम्[14] । शिथिले[15] । तस्य[16] राष्ट्रे पुनः । निहितवन्तौ[17] ।

**इ॒यं म॑नी॒षा इ॒यम॑श्विना॒ गीरि॒मां सु॑वृ॒क्तिं वृ॑षणा जुषेथाम् ।**
**इ॒मा ब्रह्मा॑णि युव॒यून्य॑ग्मन्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ॥ ६ ॥**

[ इयं मनीषा ][18]

---

१. हे अश्विनौ ! Sy.

२. त्यावा० A. च्यवा० is suggested for च्यावा० ॥

३. जीर्णद्रूपात् Sy.

४. मोऽच्युत० M. ०वन्तौ is suggested for ०वन्तो । अमुञ्चतम् । 'युवं च्यवा॑नमश्विना जर॑न्तं पुन॒र्युवा॑नम्'(RV. 1. 117. 13.) इति ह्यन्यत्र Sy.

५. एव च M. पेदवे च is suggested for वै वे च ॥ पेदवे एतन्नामकाय राज्ञे Sy.

६. शीघ्रगामिनः Sy.

७. न्यूहथुः M. न्यवहतं युद्धे । 'युवं श्वेतं पे॒दवे॑' (RV. 1. 118. 9.) इति निगमः Sy.

८. Missing in M. निष्पतितमु० is suggested for निष्पमु० ॥ निवारयतम् 'युवमृबी॒सम॒त त॒प्तमत्र॑य॒ ओम॑न्वन्तं चक्रथुः' (RV. 10. 39. 9.) इति निगमः Sy.

९. अहं तु M. आहन्तुः is suggested for अहन्तुः । ऋबीसादग्ने सकाशात् Sy.

१०. तुम० A. गुहान्तःस्थिताच्च सकाशात् Sy.

११. महर्षिम् Sy.

१२. ०ष्वश्वैः सुरैः M. ०सुरैः is suggested for ०सुरे ।

१३. जाहु० is suggested for चाहु० ।

१४. राजादं A.

१५. भ्रष्टे Sy.

१६. तस्या A. स्वराष्ट्रेऽन्तर्मध्ये पुनः Sy.

१७. ०वन्तः M. वन्तौ is suggested for ०वन्तो ॥ न्यधातम् ।'परि॑विष्टं जाहु॒षं वि॒श्वतः॑ सीम्' (RV. 1. 116. 20.) इति ह्युक्तम् Sy.

१८. The *pratīka* is supplied by the Editor.
The stanza has already been explained. See RV. 7. 70. 7.

VII. 72.

आ गोमता नासत्या रथेनाश्वावता पुरुश्चन्द्रेण यातम् ।
अभि वां विश्वा नियुतः सचन्ते स्पार्हया श्रिया तन्वा शुभाना ॥ १ ॥

आ[1] गोमता । आयातम्[2] । गोमता[3] । हे नासत्यौ[4] ! रथेन । अश्ववता[5] । बहुसुवर्णेन[6] । अभिसचन्ते[7] विश्वाः[8] । विधवाः[9] । स्पृहणीयया । श्रिया[10] । अङ्गेन[11] च । शोभमानौ[12][13] ।

आ नो देवेभिरुप यातमर्वाक्सजोषसा नासत्या रथेन ।
युवोर्हि नः सख्या पित्र्याणि समानो बन्धुरुत तस्य वित्तम् ॥ २ ॥

आ[14] नः । उपायातम्[15] । अस्मान्[16] । देवैः[17] सह । सङ्गतौ[18] । हे नासत्यौ ! रथेन । युवोः[19] । ही[20] । नः[21] ।

---

१. 'आ गोमता' इति पञ्चर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम् । अनुक्रम्यते च—'आ गोमता पञ्च' (KSA. 37. 72. p. 26.) इति । विनियोगः प्रातरनुवाकाश्विनशस्त्रयोरुक्तः । आश्विने पशावाद्याश्चतस्रो याज्यानुवाक्याः । सूत्रितञ्च—'आ गोमता नासत्या रथेनेति चतस्रः' (ĀSS. 3. 8.) इति Sy.

२. आयतम् A. आगच्छतम् Sy.

३. गोयुक्तेन...यद्वा गोमता गोप्रदेन Sy.

४. हे अश्विनौ ! Sy.

५. अश्चवता A. अश्वयुक्तेन । अश्वैर्वृषभैश्चोढेनेत्यर्थः Sy.

६. धनप्रदेनेत्यर्थः Sy.

७. अहि स० A. सेवन्तेऽस्मत्प्रेरिताः Sy.

८. बह्वयः Sy.

९. विधवाः seems to be the explanation of नियुतः ।
वडवाः is suggested for विधवाः ॥ स्तुतयः Sy.

१०. शोभया Sy.

११. शरीरेण च Sy.

१२. दीप्यमानौ Sy.

१३. VM. ignores वाम् ॥ युवाम् Sy.

१४. वसिष्ठस्त्रिष्टुभाऽश्विनौ तुष्टाव । नासत्यौ अश्विनौ । युवाम् । इतरैर्देवैः सह । समानप्रीतौ परस्परं सन्तौ । अस्माकम् । अभिमुखम् । समीपे आगच्छतम् DDN.

१५. आगच्छतम् Sy.

१६. अस्माकम् Sy.

१७. इतरैर्देवैः सह Sy.

१८. समानप्रीतौ परस्परं सन्तौ Sy.

१९. युवयोः Sy.

२०. हि is suggested for ही ।

२१. आगमने बन्धुत्वातिशयमाह—युवयोः, अस्माकञ्च Sy., DDN.

सख्यानि । पित्र्याणि[1] क्रमागतानि । तथा[2] । बन्धुश्च[3] । समानस्तुतिर्बन्धुः[4] पितरश्च वां स्तुवन्ति[5] वयं चेत्यर्थः । तं[6] बन्धुम् । वित्तमिति[7][8] ।

**उदु स्तोमा॑सो अ॒श्विनो॑रबुध्रञ्जा॒मि ब्रह्मा॑ण्यु॒षस॑श्च दे॒वीः ।**
**आ॒विवा॑स॒न्रोद॑सी॒ धिष्ण्ये॒मे अच्छा॒ विप्रो॒ नास॑त्या विवक्ति ॥ ३ ॥**

उदु स्तोमासः[9] । उदबुध्यत । अश्विनोः[10] । स्तोमाः[11] । भवति[12] । इमे । अश्विनेति[13] ।

---

१. पितृतः प्राप्तानि । नेदानीं स्तुत्याद्युपाधिना प्राप्तानि भवन्तीत्यर्थः । तदेवाह Sy., DDN.

२. अपि च युवयोर्मम च Sy. DDN.

३. बन्धकः पितामहः. Sy.

४. एक एव । विवस्वान् वरुणश्चोभावपि कश्यपाददितेर्जातौ विवस्वानश्विनोर्जनकः वरुणो वसिष्ठस्येति एवं समानबन्धुत्वम् । अभवन् मिथुनमिति । तथा च बृहद्देवतायां—'यमश्विना ददथुः' इत्यस्यां (RV. 1. 116. 6.) स्पष्टमुक्तम् DDN. (B D. VI. 162. 163. 7. 1-6)

अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह ।
स वै सरण्यूं प्रायच्छत् स्वयमेव विवस्वते ॥१६२॥
ततः सरण्व्यां जाते ते यमयम्यौ विवस्वतः ।
तावप्युभौयमावेव ह्यास्तांयम्याचवैयमः॥१६३॥
सृष्ट्वा भर्तुः परोक्षं तु सरण्यूः सदृशीं स्त्रियम् ।
निक्षिप्य मिथुनं तस्यामश्वा भूत्वा प्रचक्रमे ॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन् मनुम् ।
राजर्षिरासीत् स मनुर्विवस्वानिव तेजसा ॥
स विज्ञाय अपक्रान्तां सरण्यूमात्मरूपिणीम् ।
त्वाष्ट्रीं प्रतिजगामाशु वाजी भूत्वा सलक्षणः ॥
सरण्यूस्तु विवस्वन्तं विज्ञाय हयरूपिणम् ।
मैथुनायोपचक्राम तां च तत्रारुरोह सः ॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि ।
उपाजिघ्रच्च सा त्वश्वा तच्छुक्रं गर्भकाम्यया ।
आघ्राणमात्राच्छुक्रं तत्कुमारौ सम्बभूवतुः ।
नासत्यश्चैव दस्रश्च यौ स्तुतावश्विनावपि ॥

५. स्तुन्वन्ति A.

६. तस्येति कर्मणि षष्ठी । तं बन्धुम् । तद्बन्धुत्वं वा Sy.

७. तस्य वित्तं ज्ञापितं तस्मादेवमुक्तम् । वित्तं जानीतम् । इति वसिष्ठेन सुहृत्सख्यम् DDN.

८. VM. ignores अर्वाक् ॥ अर्वागभिमुखम् Sy.

९. उत्कृष्टं बोधयन्ति । चेदयोगादनिघातः Sy.

१०. ०नौ M.

११. मा is written twice in A.
स्तवाः Sy.

१२. विवक्ति is suggested for भवति ॥
स्तौति Sy.

१३. The rest of the commentary is missing. Sy. explains the stanza in the following manner: स्तोमासः स्तोमाः स्तवा अश्विनाश्विनावुदबुध्रन् उत्कृष्टं बोधयन्ति । उ इति पूरणः । जामि । बन्धुनामैतत् । बन्धुस्थानीयानि ब्रह्माणि परिवृढानि कर्माणि देवीर्द्योतमाना उषसः । चकारादश्विनौ च । अबुध्रन् विप्रो मेधावी वसिष्ठ इमे रोदसी द्यावापृथिव्यौ धिष्ण्ये धिषणार्हे स्तुत्ये आविवासन् परिचरन् नासत्याश्विनावच्छाभिमुखम्, विवक्ति स्तौति ।

वि चेदुच्छन्त्यश्विना उषासः प्र वां ब्रह्माणि कारवो भरन्ते ।
ऊर्ध्वं भानुं सविता देवो अश्रेद्बृहदग्नयः समिधा जरन्ते ॥ ४ ॥

वि चेत् । व्युच्छन्ति[1] । च[2] । इत्[2] । अश्विनौ ! उषसः । प्रहरन्ते[3] । युवयोः[4] । स्तोत्राणि । स्तोतारः । ऊर्ध्वम् । रश्मिम्[5] । देवः । सविता । श्रयति । महान्तः[6] । अग्नयः । समिन्धनेन सहास्मिन् काले युवयोर्यागे[7] । स्तूयन्ते ।

उत्तरा निगदसिद्धेति—

आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

[ आ[8] पश्चातात्[9] ]

VII. 73.

अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः ।
पुरुदंसा पुरुतमा पुराजामर्त्या हवते अश्विना गीः ॥ १ ॥

अतारिष्म[10] । नैशस्यास्य । तमसः[11] । पारम् । तीर्णवन्तम्[12] । प्रतिदधानाः[13] । स्तोमम्[14] । देवकामा अस्मिन् काले । पुरुकर्माणौ[15] । बहूक्षपणौ[16] शत्रूणाम् । पुराणजातौ[17] । अमर्त्यौ[18] । ह्वयति[19] । वाक्[20] । अश्विनौ ।

---

१. तमांसि विवासयन्ति Sy. २. चेदिति पूरणश्च.र्थे वा । स च वक्ष्यमाणसूर्याद्यपेक्षकः Sy.
३. प्रभर० is suggested for प्रहर० ॥ प्रकर्षेण सम्पादयन्ति Sy. ४. स्तुतिसमयत्वात् Sy.
५. रश्मि A. तेजः Sy. ६. अतिमहत् Sy.
७. ०र्योगे M. ८. 'आ पश्चातात्' इति पञ्चम्याश्विने पशौ वपाया अनुवाक्या । सूत्रितञ्च—'आ पश्चातान्नासत्या पुरस्तादा गोमता नासत्या रथेन' (ASS. 3.8.) इति Sy.
९. VM. does not explain the stanza. Sy. explains it in the following manner :
हे नासत्याश्विनौ ! पश्चातात् पश्चाद्देशादा यातम् । तथा पुरस्तात् पूर्वस्माद्देशात् तथाधरादधस्तनाद्देशाद्दक्षिणतउदक्तादुदग्देशात् । सर्वत्रायातमिति सम्बन्धः । किम्बहुना विश्वतः सर्वस्माद्देशात् पाञ्चजन्येन पञ्चजनहितेन राया धनेन सहा यातम् । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः Sy.
१०. 'अतारिष्म' इति पञ्चर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमाश्विनम्' । 'अतारिष्म' इत्यनुक्रमणिका (KSA. 37. 73. p. 26.) । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः
११. अज्ञानस्य तत्कार्यस्य जननमरणवतः संसारदुःखस्य अथवा प्रकृतत्वात् प्रयोगविषयज्ञानस्य Sy.
१२. ०वन्तः is suggested for ०वन्तं ॥ तीर्णाः स्म Sy.
१३. देवेषु कुर्वाणाः Sy.
१४. स्तुतिं प्रति Sy. १५. बहुकर्माणौ Sy.
१६. प्रभूततमौ Sy. १७. पूर्वजातौ Sy.
१८. अत एवामरणधर्माणौ Sy.
१९. ०ती A. स्तौति । आह्वयति वा Sy.
२०. गरिता स्तोता वसिष्ठः Sy.

न्यु प्रियो मनुषः सादि होता नासत्या यो यजते वन्दते च ।
अश्नीतं मध्वो अश्विना उपाक आ वां वोचे विदथेषु प्रयस्वान् ॥ २ ॥

न्यु[1] प्रियः । निषण्णो[2] होतृषदने । प्रियः[3] । होता[4] । मनुष्यस्य[5] । नासत्यौ । यः । यजति[6] ते[7] । स्तौति । च । विवतम्[8] । सोमम्[9] । अश्विनौ ! अन्तिके[10] । आभिमुख्येन ब्रवीमि[11] । वामहम्[12] । यज्ञेषु । हविष्मान्[13] ।[14]

अहेम यज्ञं पथामुराणा इमां सुवृक्तिं वृषणा जुषेथाम् ।
श्रुष्टीवेव प्रेषितो वामबोधि प्रति स्तोमैर्जरमाणो वसिष्ठः ॥ ३ ॥

अहेम । प्रेरयामः[15] । यज्ञम्[16] । उषसि । पततामागच्छतां[17] देवानाम्[18] । उरुकर्मणा[19] उरु कर्म कुर्वाणाः । इमाम् । स्तुतिम्[20] । वृषणौ । सेवेथाम्[21] । क्षिप्रवानिव[22] प्रषितो[23] दूतः । वाम् । प्रत्यबोधि[24] । स्तोमैः[25] । स्तुव[26] । वसिष्ठः ।

उप त्या वह्नी गमतो विशं नो रक्षोहणा संभृता वीळुपाणी ।
समन्धांस्यग्मत मत्सराणि मा नो मर्धिष्टमा गतं शिवेन ॥ ४ ॥

उप त्या[27] । तौ । वोढारौ[28] । अस्माकम् । प्रजाम् । उपगच्छतः । रक्षोहणौ[29] । हविर्भिः सम्भृतौ[30] ।

---

१. द्यु A.

२. निषण्णो भवति । युवयोः कर्माणि वर्तत इत्यर्थः Sy. ३. युवयोः प्रियभूतः Sy.

४. देवानामाह्वाता स्तोतायम् Sy.

५. मानुषो मनुषः सकाशाज्जातो वा Sy.

६. जयति ते M. यागं करोति Sy.

७. ते seems to be unnecessary.

८. विपतं A. पिबतम् is suggested for विवतम् ।

९. स्तोमम् M. तस्य सम्बन्धिनं मधुरं सोमरसम् Sy. १०. अन्तिक एव। समीपे स्थित्वैव Sy.

११. आह्वये Sy. १२. युवाम् Sy.

१३. अन्नवान् सन् Sy.

१४. VM. ignores उ. १५. वर्धयेम Sy.

१६. यागम् । तत्साधनं हविर्वा Sy.

१७. ०ततमा० A.

१८. पततामागच्छतां देवानामर्थाय Sy.

१९. ०कर्माणः is suggested for ०कर्मणा A. M. उरु स्तोत्रं कुर्वाणाः स्तोतारो वयम् Sy.

२०. शोभनस्तुतिम् Sy.

२१. हे वर्षकौ ! कामानाम् Sy.

२२. श्रुष्टीति क्षिप्रनाम । क्षिप्रगन्ता Sy.

२३. प्रेरितो M. २४. बोधयति शीघ्रं गन्तव्यमिति Sy. २५. स्तोत्रैः Sy.

२६. स्तुवन् is suggested for स्तुव ॥

२७. उपेत्य A.

२८. हविषां वोढारौ. . .यद्वा अयमर्धर्चोऽश्वपरतया व्याख्येयः । तथा सति तौ रथस्य वोढारौ वृढपादावश्विनोरश्वावुपगच्छताम् । इति तस्यार्थः Sy. २९. रक्षसां हन्तारौ Sy.

३०. भूत्संभूतौ A. सम्भृतौ is suggested for सम्भूतौ ॥सम्यग्भृतौ । पुष्टाङ्गौ Sy.

दृढपाणी[1] । समगच्छन्त । युवयोर्मदिकानि[2] । सोमान्नानि । मा । अस्मान्[3] । हिंसिष्टम्[4] । आगच्छतम् । सुखेन[5] प्रदित्सितेन सहेति ।

**आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।**
**आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥**

[ आ पश्चातात्[6] ]

VII. 74.

**इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।**
**अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ १ ॥**

इमा[7] उ[8] वाम् । इमाः । उ[9] । वाम् । दिविष्टय[10] उषसो दिवमिच्छन्तीति । उत्सरणशीलौ[11] । हवन्ते[12] । हे अश्विनौ ! अयं[13] च । वाम्[14] । ह्वयामि[15] । रक्षणाय[16] । प्रज्ञावसू युवाम्[17] । हि[18] । विशंविशम्[19] । गच्छथः सर्वाः प्रजा अभिगच्छत[20] ।

---

१. ०वाणी A.

२. मदकराणि । सोमाः Sy.

३. अस्मात् A. ४. हिंस्तम् Sy.

५. मङ्गलेन धनेन सार्धम् Sy.

६. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV. 7. 72. 5.

७. 'इमा उ वाम्' इति षडृचं चतुर्थं सूक्तमाश्विनं वसिष्ठस्यार्षम् । आद्यातृतीयापञ्चम्यो बृहत्यः शिष्टाः सतोबृहत्यः । तथा चानुक्रान्तम्—'इमा उ वां षट् प्रगाथम्' ( KSA. 37. 74. p. 26. ) इति । प्रातरनुवाक आश्विने क्रतौ बार्हते छन्दस्याश्विनशस्त्रे च सूक्तम् । सूत्रितञ्च—'इमा उ वामयं वाम्' (ĀSS. 4. 15. ) इति । दशरात्रे पञ्चमेऽहनि प्रउगशस्त्रे-'इमा उ वाम्' इत्ययमाश्विनस्तृचः । सूत्रितञ्च—'इमा उ वां दिविष्ठयः पिबा सुतस्य रसिनः' (ĀSS 7. 12.) इति Sy.

८. उ is omitted by A.

९. उ is omitted. by M. उ इति चार्थे Sy.

१०. दिवमिच्छन्त्यः प्रजा ऋत्विजोऽपि Sy.

११. ०शीलौ is suggested for ०शीलो ॥ वासकौ Sy.

१२. भवन्ते A. आह्वयामि Sy.

१३. वसिष्ठोऽपि Sy.

१४. युवाम् Sy. १५. आह्वयामि Sy.

१६. अस्मद्रक्षणाय युवयोस्तर्पणाय वा Sy.

१७. हे कर्मधनौ ! Sy.

१८. यस्मात् कारणात् Sy.

१९. किमर्थमेवं प्रजा अप्यहमपीत्यावरोषितरिति तत्राह-प्रजां प्रजां प्रति Sy.

२०. ०च्छतम् is suggested for ०च्छत ।

युवं चित्रं ददथुर्भोजनं नरा चोदेथां सूनृतावते ।
अर्वाग्रथं समनसा नि यच्छतं पिबतं सोम्यं मधु ॥ २ ॥

युवम् । युवाम्[१] । पूजनीयम्[२] । ददतुः[३] । अन्नम्[४] । हे नरौ ! मह्यं च । चोदयम्[५] । स्तुतिमते[६] । अवागिति[७] स्पष्टम्[८] ।

आ यातमुप भूषतं मध्वः पिबतमश्विना ।
दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमा गतम् ॥ ३ ॥

आ यातम् । आगच्छतम्[९] । उप च । भवतम्[१०] । सोमं च[११] । पितम्[१२] । अश्विनौ[१३] ! दुग्धम्[१४] । पयश्च[१५] । हे वृषणौ[१६] ! जेतव्यं शत्रुधनौ[१७] ! मा । अस्मान् । हिंसिष्टम्[१८] । आगच्छतम्[१९] ।

---

१. हे अश्विनौ ! युवं युवाम् Sy.
२. चायनीयम् Sy.
३. ददथुः is suggested for ददतुः ॥ धारयेथे Sy.
४. धनम् Sy.
५. चोदयतम् is suggested for चोदयं ॥ प्रेरयतम् Sy.
६. तद्वते स्तुतिवते स्तोत्रे Sy.
७. अर्वागि० is suggested for अवागि० ।
८. VM. ignores the words रथम् । समनसा । नि । यच्छतम् । पिबतम् । सोम्यम् and मधु ।
Sy. explains these words in the following manner :—तदर्थं समनसा समानमनस्कौ सन्तौ रथं युवयोः सम्बन्धिनमर्वागस्मदभिमुखं नि यच्छतम् । नियमयतम् । तथा कृत्वा सोम्यं सोमसम्बन्धिनं मधु मधुररसं पिबतम् Sy.
९. यज्ञं प्रत्यागच्छतम् Sy.
१०. हव० M.
आगत्योप समीपे भूषतं भवतम् Sy.
आगत्य चोपभूषतमलङ्कुरुतं यज्ञम् Mah.
अलङ्कुरुतं च यज्ञम् U.
११. मधुरं सोमरसम् Sy. मधुरं सोमम् । . . . कर्मणि षष्ठी, नुमभावश्छान्दसः Mah. मधुरूपस्य स्वमंशम् U.
१२. वितम् M. पिबतम् is suggested for पितम् ॥
१३. हे अश्विनौ ! युवाम् Sy.
१४. दुग्धं M. अन्तरिक्षाद्दुग्धम् Sy. अन्तरिक्षात् प्रक्षारयतम् Mah. दुग्धं पयो महावीरसेचनार्थम् U.
१५. वृष्टयुदकम् Sy., Mah.
१६. णो M. पीत्वा च हे वर्षकौ ! Sy. वर्षकौ ! यज्ञफलस्य सेक्तारौ ! Mah. हे वृषणौ ! सेक्तारौ ! U.
१७. ०व्यशत्रुधनौ is suggested for ०व्यं शत्रुधनौ ॥ हे जेतव्यधनौ ! जितधनावित्यर्थः Sy. जेन्यं जेतव्यं जितं वा आ समन्ताद् वसु धनं याभ्यां तौ जेन्यावसू वशीकृतधनौ तादृशौ Mah. जितं स्वीकृतं वसु धनं याभ्यां तौ जेन्यावसू U.
१८. हिंस्तम् । ईदृशप्रार्थनाकरणमेव हिंसा Sy. मा हिंस्तम् । मृधिर्हिंसार्थः लुङ् Mah. मा च मर्धिष्टं सम्प्रहारं कुरुतं नोऽस्मान् प्रति U.
१९. आगच्छतं शीघ्रम् Sy. किं बहुना ? युवामागच्छतम् । आदरार्थं पुनर्वचनम् Mah. अवश्यं चागच्छतम् U. This stanza= YV. 33. 88.

अश्वासो ये वामुप दाशुषो गृहं युवां दीयन्ति बिभ्रतः ।
मक्षूयुभिर्नरा हयेभिरश्विना देवा यातमस्मयू ॥ ४ ॥

अश्वासः । अश्वासः[1] । ये । युवयोः[2] । उपगच्छन्ति[3] । यजमानस्य[4] । गृहं[5] प्रति । युवां रथे । धारयन्तस्तैः । क्षिप्रगमनकारिभिः[6] । हे[7] नरौ[8] ! अश्वैः । अश्विनौ ! देवौ ! आयातम्[9] । अस्मत्कामौ[10] ।

अधा ह यन्तो अश्विना पृक्षः सचन्त सूरयः ।
ता यंसतो मघवद्भ्यो ध्रुवं यशश्छर्दिरस्मभ्यं नासत्या ॥ ५ ॥

अधा । अथ[11] । खलु । अभिगच्छन्तः[12] । अश्विनौ । अन्नम् । सचन्ते[13] । स्तोतारः[14] । तौ[15] । प्रयच्छतः । हविष्मद्भ्यः[16] । ध्रुवम्[17] । अन्नम्[18] । अस्मभ्यं च । गृहं[19] प्रयच्छतमिति[20] ।

प्र ये ययुरवृकासो रथाइव नृपातारो जनानाम् ।
उत स्वेन शवसा शूशुवुर्नर उत क्षियन्ति सुक्षितिम् ॥ ६ ॥

प्र ये । प्रयच्छन्ति[21] । ये[22] । वृकवर्जिताः[23] शीघ्रम् । रथाइव[24] । नृणां रक्षितारः[25] । जनानां[26] मध्येऽश्विनौ । स्तोतारः[22] । स्तेन स्वेन[27] । बलेन । वृद्धा[28] भवन्ति । अपि[29] च । निवसन्ति[30] । सुनिवासम्[31] ।

---

१. अश्वाः Sy.
२. युवयोः स्वभूताः Sy.
३. गमयन्तीत्यर्थः Sy.
४. हविर्दातुः Sy.
५. ग्रहं A.
६. ०मन गामिभिः A. शीघ्रगन्तृभिः Sy.
७. हे is missing in M.
८. नेतारौ ! Sy.
९. अस्मद्यज्ञमागच्छतम् Sy.
१०. अस्मान् कामयमानौ Sy.
११. अपि च Sy.
१२. स्तुतिभिर्गच्छन्तो यजमानाः Sy.
१३. प्रभूतं सेवन्ते । संयन्ति वा Sy.
१४. मेधाविनः स्तोतारः Sy.
१५. युवाम् Sy.
१६. अन्नवद्भ्योऽस्मभ्यम् Sy.
१७. अविचलितम् Sy.
१८. अन्नं यश एव वा Sy.
१९. ग्रहं Sy.
२०. VM. ignores नासत्या ॥ हे नासत्यावश्विनौ
२१. युवां प्रापयन्ति हविर्भिः Sy.
२२. यजमानाः Sy.
२३. प्रकय० A. परकीयधनस्यानादातारः Sy.
२४. व्रीह्यादिपूर्णा रथा यथा प्राप्नुवन्ति स्वामिगृहम् Sy.
२५. ऋत्विग्रूपाणां नृणां रक्षितारः सन्तः Sy.
२६. मनुष्याणाम् Sy.
२७. स्तेन स्वन A. स्वेन is suggested for स्तेन ॥ स्वीयेन Sy.
२८. वर्धन्ते Sy.
२९. उतेत्ययमुत्तरवाक्यापेक्षः । अपि च Sy.
३०. गच्छन्ति प्राप्नुवन्ति Sy.
३१. सुनीवा० A.

VII. 75.

**व्यु१॑षा आ॑वो दि॒वि॒जा ऋ॒तेना॑विष्कृण्वा॒ना म॑हि॒मान॒मागा॑त् ।
अप॑ द्रु॒हस्तम॒ आव॒रजु॑ष्टमङ्गि॒रस्त॑मा प॒थ्या॑ अजीगः ॥ १ ॥**

व्युषा[1]। विविधम्[2]। गच्छति[3]। दिवि जाता[4]। सत्येन[5] प्रकाश्येन सहान्धकारापनयनात्[6] सत्यस्य प्रकाशनम्। प्रकाशयन्ती। महिमानम्[7]। आजगामागतां च[8]। रक्षांसि[9]। तमश्चात्मनः। अपर्याप्तम्[10]। अपगमयति सेयम्[11]। अङ्गिरस्तमा[12], पुरोषा[13] अङ्गिरस्सु जज्ञे[14]। मार्गान्[15] तमसा तिरोहितान्। तदपनयनेनोज्जहारेति[16], तेजांसि वा पथ्या[17] इति[18]।

---

१. 'व्युषा आवः' इत्यष्टर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षम्। अत्रानुक्रमणिका—'व्युषा अष्टावुषस्यं तु वा' (KAS. 37. 75. p. 26.) इति।

'तु वा' इत्युक्तत्वात्तुह्यादिपरिभाषयेदमादीनि सप्तसूक्तान्युषोदेवत्यानि। प्रातरनुवाक उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदमादीनि षट् सूक्तानि। तथा च सूत्र्यते—'व्युषा आवो दिविजा इति षडिति त्रैष्टुभम्' (ĀSS. 4. 14.)इति। ऋग्विधान आख्यातो विनियोगोऽत्र लिख्यते—

राज्या अपरकाले य उत्थाय प्रयतः शुचिः।
व्युषा इत्युपतिष्ठेत षड्भिः सूक्तैः कृताञ्जलिः॥
प्राप्नुयात्स हिरण्यानि नानारूपं धनं बहु।
गा अश्वान् पुरुषान् धान्यं स्त्रियो दासांस्यजाविकम्' (Rgvid. 2. 28.) इति Sy.

२. व्यूषा A.

३. व्योच्छत्। विभानं कृतवतीत्यर्थः। वसिर्निवासवाच्यत्र विपूर्वो व्युच्छने भवेत्। 'छन्दस्यपि दृश्यते' pa. 6. 4.73. इत्याट्। दृशिग्रहणस्य विध्यन्तरोपसङ्ग्रहणार्थत्वादनजादेरप्याडागमः। 'हल्ङ्याब्भ्यः०' (Pa. 6. 1. 68.) इति लोपः Sy.

४. दिव्यन्तरिक्षे प्रादुर्भूता सती Sy.

५. तेजसा Sy.

६. ०रावनयतात् A.

७. स्वमहत्त्वम् Sy.

८. ०तानि च M. ०ता च is suggested for ०तां च॥ आगतवती Sy.

९. आगत्य चास्मद्द्रोग्धॄन् Sy.

१०. सर्वेषामप्रियम् Sy.

११. अपवृणोति Sy.

१२. अङ्गेर्गत्यर्थादङ्गिराः। गन्तृतमा Sy.

१३. ०रोष M.

१४. ०रः स A.

१५. पदवीः Sy.

१६. ०नेनेज जहा० A.

उद्गिरति। प्राणिनां व्यवहाराय प्रकाशयतीत्यर्थः Sy.

१७. The passage तेजांसि वा पथ्या इति should immediately follow तमसा तिरोहितान् and precede तदपनयनेन.

१८. VM. ignores उषाः। इयमुषाः Sy.

महे नो॑ अ॒द्य सु॑वि॒ताय॑ बो॒ध्युषो॑ म॒हे सौभ॑गाय॒ प्र य॑न्धि ।
चि॒त्रं र॒यिं य॒शसं॑ धेह्य॒स्मे देवि॒ मर्ते॑षु मानुषि श्रव॒स्युम् ॥ २ ॥

महे नः । महते । अस्माकम् । अद्य[1] । अभ्युदयाय[2] । प्रवृद्धा भव[3] । तथोषः ! महते । सौभाग्याय[4] । धनमस्मभ्यं प्रयच्छ[5] । चित्रम्[6] । रयिम्[7] । यशस्विनम्[8] । प्रयच्छ[9] । अस्मभ्यम्[10] । देवि ! मर्त्येषु[11] मां प्रथितं[12] कुरु धनप्रदानेन । मनुष्यहिते ! कीर्तिमिच्छन्तम्[13] ।

ए॒ते त्ये भा॒नवो॑ द॒र्श॒तायाश्चि॒त्रा उ॒षसो॑ अ॒मृता॑स॒ आगुः॑ ।
ज॒नय॑न्तो॒ दैव्या॑नि व्र॒तान्या॑पृ॒णन्तो॑ अ॒न्तरि॑क्षा॒ व्य॑स्थुः ॥ ३ ॥

एते । एते[14] । इमे[15] । रश्मयः[16] । दर्शनीयायाः[17] । चित्राः[18] । उषसः । मरणवर्जिताः[19] । प्रादुरभवन्[20] । जनयन्तः[21] । यज्ञान्[22] । पूरयन्तश्च[23] । अन्तरिक्षम्[24] । वितिष्ठन्ते[25] ।

---

१. अद्य is missing in A.

२. सुखप्राप्तये सुखगमनाय वा Sy.

३. भवत M.

४. सेभ्योग्याय A.

५. प्रयच्छास्मान् Sy.

६. चायनीयम् Sy.

७. धनम् Sy.

८. यशोयुक्तम् Sy.

९. धारय Sy.

१०. अस्मासु Sy.

११. मर्तेषु A.
अस्मासु Sy.

१२. ०त A.

१३. गच्छन्तं A. अन्नवन्तं पुत्रं धेहीत्यनुषङ्गः Sy.

१४. Missing in M. ते is suggested for एते ॥ ते प्रसिद्धाः Sy.

१५. पुरो दृश्यमानाः Sy.

१६. रश्वयोः A.

१७. प्रकाशयुक्तायाः Sy.

१८. पूज्या आश्चर्यभूता वा Sy.

१९. अमरणा अनश्वराः Sy.

२०. ०वत् A. आगच्छन्ति Sy.

२१. उत्पादयन्तः । तदनुकूलप्रकाशप्रदानात्तदुत्पादकत्वमेषाम् Sy.

२२. VM. seems to explain दैव्यानि and व्रतानि together as यज्ञान् ॥ देवानां सम्बन्धीनि व्रतानि कर्माणि Sy.

२३. आपूरयन्तः Sy.

२४. अन्तरिक्षाणि । एकस्यैवान्तरिक्षस्य वायुमेघपक्षिणामालम्बनोपाधिना विविधत्वम् । अतो बहुवचनमुपपन्नम् Sy.

२५. चिति० A.
सरन्ति विविधं तिष्ठन्ति Sy.

एषा स्या युजाना पराकात्पञ्च क्षितीः परि सद्यो जिगाति ।
अभिपश्यन्ती वयुना जनानां दिवो दुहिता भुवनस्य पत्नी ॥ ४ ॥

एषा । सा । एषोषाः । युञ्जाना[1] । दूरात्[2] । पञ्च । जनान्[3] । सद्य एव । परीच्छति[4] । दर्शनीय[5] । मार्गान्[6] । जनानाम्[7] । दिवः । दुहिता[8] । भवनस्य[9] । पालयित्री[10] ।

वाजिनीवती सूर्यस्य योषा चित्रामघा राय ईशे वसूनाम् ।
ऋषिष्टुता जरयन्ती मघोन्युषा उच्छति वह्निभिर्गृणाना ॥ ५ ॥

वाजिनीवती । अन्नवती[11] । सूर्यस्य । योषा[12] । चित्रधना[13] । धनस्य[14] । ईशे । वसूनां च[15], वसूनि वोसयन्तीति[16] रश्मयः । ऋषिष्ठुताः[17] । सर्वं भूतजातं जनयन्ती[18] । धनवती । उषाः । उच्छति[19] । वोढृभिः स्तोतृभिः[20] । स्तूयमाना ।

प्रति द्युतानामरुषासो अश्वाश्चित्रा अदृश्रन्नुषसं वहन्तः ।
याति शुभ्रा विश्वपिशा रथेन दधाति रत्नं विधते जनाय ॥ ६ ॥

प्रति द्युतानाम् । प्रत्यदृश्यन्[21] । द्योतमानाम् । आरोचमानाम्[22] । अश्वाः । चित्राः[23] । उषसम् । हवन्तः[24] । याति[25] । शोभमाना[26] । विश्वरूपा[27] । रथेन । दधाति[28] । रत्नम्[29] । परिचरते । जनाय ।

---

१. उद्योगं कुर्वाणा प्रकाशय Sy.
२. दूरदेशात् दूरे स्थितःपि Sy.
३. निषादपञ्चमांश्चतुरो वर्णान् Sy.
४. परिच्छती A.
५. Missing in M. दर्शयन्ती is suggested for दर्शनीय ॥ साक्षित्वेनावलोकयन्ती Sy. ६. मार्गज् A. प्रज्ञानानि Sy.
७. प्राणिनाम् Sy. ८. दुहितृस्थानीया Sy.
९. भूतजातस्य Sy.
१०. पालयित्री परिजिगातीत्यन्वयः Sy.
११. ०वति A. बह्वन्ना । यद्यप्युषोनामैतत् तथापि चित्रामघेत्यस्याप्युषोनामकस्य पृथग्विद्यमानत्वादत्रैको योगरूढोऽवगन्तव्यः Sy.
१२. योषित् Sy.
१३. विचित्रधना विचित्ररश्म्याख्यधना वा Sy.
१४. अविशिष्टस्य तस्य Sy.
१५. वसूनां च is missing in A. देवमनुष्यादिसर्वाश्रयाणाम्. . .धनानाम् । अथवा वसवो वासका रश्मयः, तेषामपि Sy.
१६. वासय० is suggested for वोसय० ॥
१७. ०ष्मता A. ०ष्टुता is suggested for ०ष्ठुताः ॥ ऋषिभिः स्तुता Sy.
१८. जरय० is suggested for जनय० ॥ प्राणिजातानि । उषाः खलु पुनः पुनरावर्तमाना प्राणिनामायुः क्षपयति Sy. १९. विभानं करोति Sy. २०. कर्मवोढृभिर्यजमानैः Sy.
२१. Missing in M. ०दृश्रन् is suggested for ०दृश्यन् ॥ प्रतिदृश्यन्ते Sy.
२२. आरे चाचमाना A. आरोचमानाः Sy.
२३. चायनीयाः Sy. २४. हवन्ते M. वहन्तः is suggested for हवन्तः ॥ धारयन्तः Sy.
२५. सर्वत्र गच्छति Sy. २६. सा चोषा दीप्यमाना Sy. २७. बहुरूपेण Sy. २८. धनाति A. ददाति च Sy. २९. रमणीयं धनम् Sy.

**स॒त्या स॒त्येभि॑र्मह॒ती म॒हद्भि॑र्दे॒वी दे॒वेभि॑र्यज॒ता यज॑त्रैः ।**
**रु॒जद्दृ॒ळ्हानि॒ दद॑दु॒स्रिया॑णां॒ प्रति॒ गाव॒ उ॒षसं॑ वावशन्त ॥ ७ ॥**

सत्या[1] । सत्या[2] । सत्यैः । महती[3] च । महद्भिः । देवी[4] । देवैः[5] । यष्टव्या[6] । यष्टव्यैः[7] सह । विनाशयति[8] । दृढानि[9] तमांसि । ददाति[10] च[11] । रश्मीन्[12] । रश्मयश्च[13] । ओषुसम्[14] । अत्यन्तं प्रतिकामयन्ते[15] ।

**नू नो॒ गोम॑द्वी॒रव॑द्धेहि॒ रत्न॒मुषो॒ अश्वा॑वत्पुरु॒भोजो॑ अ॒स्मे ।**
**मा नो॑ ब॒र्हिः पु॑रु॒षता॑ नि॒दे क॑र्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ८ ॥**

नू नः[16] । क्षिप्रम् । अस्मभ्यम् । गोमत्[17] । वीरवच्च[18] । धेहि[19] । रत्नम्[20] । उषः ! अश्ववत् । बहुप्रकारं[21] भोक्तव्यम् । अस्माभिः[22] । मा । अस्माकम् । यज्ञम् । जनतायाम्[23] । निन्दायै[24] । कार्षी[25] ।

१. सत्या is missing in A.

२. अन्यैरबाध्या Sy.

३. ०हूती च A. पूजनीया प्रवृद्धा वा गुणैः Sy.

४. देवं A. द्योतमाना Sy.

५. किरणैर्निपातभाग्भिरन्यैर्देवैर्वा सहिता सतीSy.

६. यजनीया Sy.

७. उक्तलक्षणैः Sy

८. भिनत्ति Sy.

९. दृव्व्हाति A. अत्यन्तं स्थिराणि तमांसि Sy.

१०. ददाति सामर्थ्यात्प्रकाशमित्यर्थः । यद्वा ददाति स्तोतृभ्यः Sy.

११. च is missing in M.

१२. उस्रियाणाम् । गोनामैतत् । उत्स्राविण आसां भोगा इति तद्व्युत्पत्तिः । तासां सञ्चाराय । अथवोस्रिया गा ददत् Sy.

१३. किं च गावः । उपलक्षणमेतत् । सर्वेऽपि तमोऽवरुद्धाः प्राणिनः । . . . विशेषेण गवां प्रभाते सञ्चारार्थमुषसोऽपेक्षितत्वात्तासां प्राधान्येनोक्तिः Sy.

१४. श्चोषसम् is suggested for ०श्चोषुसम् ।

१५. उशन्ति कामयन्ते Sy.

१६. नूनं A.

१७. बहुभिर्गोभिर्युक्तम् Sy.

१८. वीरैः पुत्रैरुपेतम् Sy.

१९. देहि Sy.

२०. रमणीयं धनम् Sy.

२१. ०कारं भो० A. बह्वन्नम् Sy.

२२. पादभेदादस्मे इति पुनरभिधानम् Sy.

२३. पुरुषतायाम् । पुरुषसमूहेषु । अस्मत्सदृशेष्वित्यर्थः Sy.

२४. यथा ते निन्दन्ति तथा मा कुर्वित्यर्थः Sy.

२५. षु A. कार्षीः is suggested for कार्षी ॥

## VII. 76.

**उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ।**
**क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः ॥ १ ॥**

[१] उदु । यास्कः—[२]'उदशिश्रयत् । [३]ज्योतिः । [४]अमृतम् । [५]सर्वजन्यम् । [६]विश्वानरः । [७]सविता । [८]देवः । [९]क्रत्वा [१०]रश्मिना । उषआख्यं [११]चक्षुः । [१२]अजनिष्ट । [१३]आविष्करोति । [१४]भवनम् । [१५]सर्वम् । [१६]उषा इति ।

---

१. 'उदु ज्योतिः' इति सप्तर्चं षष्ठं सूक्तं त्रैष्टुभमुषस्यम् । तथा चानुक्रान्तम् 'उदु सप्त' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy. वसिष्ठस्यार्षम् Dur. SKN.

२. N. 11. 10. VM. explains the first hemistich of this stanza by the quotation of the N. only.

३. उदग्निश्रयं A. उदशिश्रयत् is suggested for उदग्श्रियत् ॥ ऊर्ध्वं श्रयति Sy. उच्छ्रयत्यूर्ध्वमुपनयति Dur. उच्छब्दोऽश्रेदित्यनेन सम्बध्यते।...उदश्रयदुच्छ्रितं कृतवान् करोति वा उद्गमयतीत्यर्थः । कुत एतत् ? निष्क्रियत्वात् सर्वज्योतिषां वायुना प्रेर्यमाणानामुद्गमनात् । वायोश्च विश्वानरत्वात् SKN.

४. सूर्याख्यम् Dur. आदित्याख्यम् SKN.

५. अमृतत्वसाधकमविनाशि वा Sy. मरणवर्जितम् SKN.

६. विश्वेषां जनानां हितकरम् Sy. सर्वगन्तॄणां वायुपूर्वकत्वात्, गमनस्योपपद्यते विश्वजन्यं सर्वलोकहितम् Dur. विश्वस्मै जनाय हितम् SKN.

७. सर्वेषां नेता Sy. मध्यमो वायुः...एवमत्र विश्वानरो ज्योतिरुच्छ्रयतीति व्यपदेशान्मध्यमो विश्वानरः । एवं चाभिप्रेत्योक्तम्—'कमन्यं मध्यमादेवमवक्ष्यत्' इति Dur. मध्यमस्थानः SKN.

८. सविता स एव सर्वस्याभ्यनुज्ञानात् SKN.

९. दानादिगुणयुक्तः SKN.

१०. कृत्वा A. कर्मणा निमित्तेन यागानुष्ठानमित्यर्थः Sy. भाष्यकारो नाधिजज्ञे । प्रसङ्गतस्तु निर्भ्रमः । यदा तज्ज्योतिः द्युस्थानमुपनीयते विश्वानरेणाथ तदा क्रत्वा तत्कर्मणा Dur. कथं ज्ञायते ? यतः क्रत्वादिकर्मणः SKN.

११. चक्षुःस्थानीयमौषसं तेजः Sy. ख्यानं प्रकाशः Dur.

१२. प्रादुरभूत् Sy. जायते Dur. जातम् SKN.

१३. प्रादुरकरोत् । सर्वं जगदाविष्कृतवती Sy.

१४. हवनं M. भुवनम् is suggested for भवनम् ॥ भूतजातम् Sy. Dur. SKN.

१५. उत्पन्ना चोषाः सर्वम् Sy.

१६. VM. ignores उ and देवानाम् ॥ देवानां व्यवहर्तॄणां स्तोतॄणां वा यजमानानाम् Sy. देवानां रश्मीनाम् Dur. उकारः पदपूरणः SKN., N. 11. 10.; SKN. IV. 60.

प्र मे पन्थां देवयानां अदृश्रन्नमर्धन्तो वसुंभिरिष्कृंतासः ।
अभूंदु केतुरुषसंः पुरस्तांत्प्रतीच्यागादधिं हर्म्येभ्यंः ॥ २ ॥

प्र मे । प्रादृश्यन्त[१] । ममाग्रे[२] । पन्थानः । देवयाना[३] रश्मयः । अहिंसन्तः[४] । वसुभिर्देवैः[५] । इष्कृताः[६] । भवति[७] । केतु[८] प्रज्ञानं रश्मिः । उषसः । पुरस्तात्[९] । अभिमुखम्[१०] । आगच्छत्युषा । उच्छ्रितेभ्यो देशेभ्यः ।[११]

तानीदहांनि बहुलान्यांसन्या प्राचीनामुदिंता सूर्यस्य ।
यतः परिं जारइंवाचरन्त्युषो ददृक्षे न पुनर्यतीवं ॥ ३ ॥

तानि । तानि[१३] । एव । अहानि[१४] । विस्तृतानि । भवन्ति । यान्यहानि । सूर्यस्योद्द्योतः[१५] । प्रागेव[१६] । उदितान्यासन्[१७] । यस्मात्[१८] त्वम् । जारइव[१९] । आचरन्ती[२०] । उषः[२१] । न । परिदृश्यसे[२२] । न क्षणमात्रं तिष्ठसि । यथा यतीति[२३] देशान्तरं गच्छन्ती । काचिदागता तदानीमेव गच्छति यथा वा जारस्तद्वत्[२४] त्वं च गता ततोनि[२५] प्रादुर्भवन्तीति[२६] ।[२७]

---

१. प्रदृश्यन्ते Sy.
२. मया Sy.
३. देवप्रापकाः Sy.
४. हिंसन्तः M.
५. तेजोभिः Sy.
६. इवष्कृता A. संस्कृताः Sy.
७. अचेति ज्ञायते Sy.
८. केतु पज्ञा० A. केतुः प्र० is suggested for केतु प्र० ॥ प्रज्ञापकं तेजः Sy.
९. पूर्वस्यां दिशि Sy.
१०. प्रत्यगञ्चनास्मदभिमुखी Sy.
११. उच्छ्रितेभ्यः प्रदेशेभ्यः । हर्म्यशब्द उन्नतप्रदेशोपलक्षकः Sy.
१२. VM. ignores उ and अधि ॥
१३. तव तेजांसि Sy.
१४. उषःप्रकाशयुक्तस्यैव कालस्याहःशब्दव्यवहारात् Sy.
१५. ०स्याद्यत A. ०स्योद्यतः is suggested for ०स्योद् द्योतः ॥
१६. तस्य प्राग्देशं प्रत्युदयन्ति । यद्वा सूर्यस्य प्राचीने देशे या यान्युदितोदितानि तानीत्यर्थः Sy.
१७. उदिते सति Sy.
१८. यं समा A. यैश्च तेजोभिः Sy.
१९. तव A.
पत्याविव Sy.
२०. समीपे सञ्चरन्ती साध्वी नारीव । जारे रात्रेर्जरयितरि सूर्ये सञ्चरन्ती त्वं दृश्यसे । यथा लोके दुष्टं भ्रमणशीलमपि पतिमत्यज्यैव ? (मत्यक्त्वैव) साध्वी सञ्चरति तद्वत् तमविमुञ्चती त्वमित्यर्थः Sy. Sy. seems to take जारइव as जारेइव and not as जारःऽइव as padapātha takes it.
२१. उषसो न A.
२२. ०दृश्य० A.
२३. यती is suggested for यतीति ॥ न पुनर्यतीव यती पतिं परित्यज्येतस्ततः सञ्चरन्ती व्यभिचारिणीव सूर्यमपरित्यजन्ती त्वम् Sy.
२४. स्त is written twice in A.
२५. ततोऽपि is suggested for ततो नि ॥
२६. ०वसीति is suggested for ०वन्तीति ॥
२७. VM. ignores पुनः ॥ पुनरित्ययं वैलक्षण्यद्योतनार्थः । एवं यैस्तेजोभिर्युक्ता परिदृश्यसे तान्येवाहान्यासन्निति सम्बन्धः Sy.

त इद्देवानां सधमाद आसन्नृतावानः कवयः पूर्व्यासः ।
गूळ्हं ज्योतिः पितरो अन्वविन्दन्सत्यमन्त्रा अजनयन्नुषासम् ॥ ४ ॥

त इद्देवानाम् । ते[1] । खलु[2] । देवानाम् । सधमादः[3] । अभवन् । यज्ञवन्तः[4] । कवयः[5] । पुराणाः[6] कर्माण्यनुतिष्ठन्ति । गूढम्[7] । ज्योतिरुषआख्यम्[8] । पालयितारो[9] देवाः । अन्वविन्दन्[10] । सत्यमन्त्राः[11] सत्यस्तुतयः । जनयन्तु[12] । उषसं यद्वा वसिष्ठस्य पितरः स्तुतिभिरुषसमविन्दन्[13]नजनयंश्चेति ।

समान ऊर्वे अधि संगतासः सं जानते न यतन्ते मिथस्ते ।
ते देवानां न मिनन्ति व्रतान्यमर्धन्तो वसुभिर्यादमानाः ॥ ५ ॥

समाने । समाने साधारणे[14] । ऊर्वे[15] वाडवे[16]ऽग्नावुषसो निद्रानभूते[17] ? सङ्गताः[18] । सञ्जानते[19] । न च । मिथः । यतन्ते[20] संयत्ताः । ते[21] रश्मयः । ते । देवानाम् । यज्ञाख्यानि कर्माणि[22] । न । हिंसन्ति[23] । अहिंसन्तः[24] । वसुभिर्देवैः[25] । प्रेर्यमाणाः[26] [27] ।

---

१. तेऽङ्गिरसः Sy.

२. एव ऋषीणां मध्ये Sy.

३. सह माद्यन्तः Sy.

४. सत्यवन्तः Sy.

५. ०या A. अनूचानाः 'ये वा अनूचानास्ते कवयः' (AB. 2. 38.) इति श्रुतेः Sy.

६. पूर्वकालीनाः Sy.

७. तमसावृतम् Sy.

८. सौर्यं तेजः Sy.

९. पालयितारः सर्वस्याङ्गिरसः Sy.

१०. लब्धवन्तो मन्त्रसामर्थ्यात् Sy.

११. त्य is missing in A.

१२. प्रादुरकुर्वन् । 'तुरीयेण ब्रह्मणाविन्ददत्रिः (RV. 5. 40. 6.) 'अत्रयस्तमन्वविन्दन्' (RV. 5. 40. 9.) इति निगमौ । अत्राङ्गिरसां स्तुत्योषस एव स्तुतिर्ज्ञातव्या Sy.

१३. ०मपविन्द० M.

१४. सर्वेषां साधारणे Sy.

१५. गोसमूहे पणिभिरपहृते पुनर्लब्धे सति Sy.

१६. ०वेऽग्ना उष० A.

१७. निदानभूते is suggested for निद्रानभूते ॥

१८. मिलिताः सन्तः Sy.

१९. एकबुद्धयो भवन्ति Sy.

२०. ०न्ते न सं य० M. सहैव साधनमनुतिष्ठन्तीत्यर्थः Sy.

२१. अङ्गिरसः Sy.

२२. कर्माणि न is missing in A. यागलक्षणानि Sy.

२३. (न) हिंसन्ति । किन्तु परिपालयन्तीत्यर्थः Sy.

२४. अः हिंस० A.

२५. वासकैरुषसां तेजोभिः Sy.

२६. गच्छन्तः Sy.

२७. VM. ignores अधि ॥ अधीत्यनर्थकः Sy.

प्रति त्वा स्तोमैरीळते वसिष्ठा उषर्बुधः सुभगे तुष्टुवांसः ।
गवां नेत्री वाजपत्नी न उच्छोषः सुजाते प्रथमा जरस्व ॥ ६ ॥

प्रति त्वा । प्रतिष्टुवन्ति । त्वाम्[1] । स्तोमैः[2] । वसिष्ठाः[3] । उषसि प्रबुध्यमानाः[4] । सुधने ! स्तुवन्तः[5] । पशूनाम् । नेत्री[6] । अन्नस्य पालयित्र्यन्नवतीका[7] वा । अस्मदर्थम् । व्युच्छ[8] । उषः ! शोभनजनने[9] ! मुख्या[10] । स्तूयस्व स्तुता भवेति ।

एषा नेत्री राधसः सूनृतानामुषा उच्छन्ती रिभ्यते वसिष्ठैः ।
दीर्घश्रुतं रयिमस्मे दधाना यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

एषा । एषा । अन्नस्य[11] । वाचां[12] च नेत्रभ्युषा[13] । व्युच्छन्ती[14] । स्तूयते ॥ वसिष्ठे[15] । दीर्घकालं[16] श्रूयमाणम् । धनम् । अस्मभ्यम्[17] । दधानेति[18] ।

VII. 77.

उपो रुरुचे युवतिर्न योषा विश्वं जीवं प्रसुवन्ती चरायै ।
अभूदग्निः समिधे मानुषाणामकर्ज्योतिर्बाधमाना तमांसि ॥ १ ॥

[19][20]उपो रुरुचे । उपैव[21] । रुरुचे । युवतिः[22] । इव । स्त्री[23] । विश्वम्[24] । जीवम्[25] । प्रेरयन्ती । चरणार्थं[26]

---

१. ०ष्ठुव० M. २. स्त्वां A.
३. स्तोत्रैः Sy. ४. उषसि बुध्यन्तः Sy.
५. ०नैः M. ६. प्रापयित्री Sy.
७. ०न्नभवतिका A. ०न्नपतिका is suggested for ०न्नवती का ॥ अन्नस्य दात्रीत्यर्थः
८. विभाहि Sy. ९. सुप्रादुर्भावे ! Sy.
१०. इतरदेवेभ्यो मुख्यभूता Sy.
११. राधसः स्तोतुः Sy. १२. स्तुतीनाम् Sy.
१३. नेत्री । उषाः is suggested for नेत्रभ्युषा ।
१४. व्युच्छन्ति A. तमो विवासयन्ती Sy.
१५. वसिष्ठैः is suggested for वसिष्ठे ॥ वसिष्ठगोत्रोत्पन्नैः Sy.
१६. दीर्घं श्रूयमाणम् । सर्वत्र प्रसिद्धम् Sy.
१७. अस्मासु Sy. १८. धारयन्ती Sy.
१९. 'उपो रुरुचे' इति षडृचं सप्तमं सूक्तं वसिष्ठस्यार्षमुषस्यम् । तथा चानुक्रान्तम्—'उपो रुरुचे षट्' (KAS. 37. 77. p. 26.) इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.
२०. उषो रुरुचे A.
२१. उपैव रुरुचे is missing in A. इयमुषाः समीपे एव सूर्यस्य दीप्यते Sy.
२२. यौवनोपेता Sy.
२३. योषिदिव सा यथा वस्त्राभरणादिना पत्युः समीपे प्रदीप्यते तद्वत् Sy.
२४. सर्वम् Sy.
२५. जीवसङ्घम् Sy.
२६. सञ्चाराय Sy.

तस्मिन् काले[1]। अभूत्[2]। अग्निः[3]। समिन्धनाय। मानुषाणाम्[4]। करोति[5]। ज्योतिः[6]। बासमाना[7]। तमांसि[8]।

**विश्वं प्रतीची सप्रथा उदस्थाद्रुशद्वासो बिभ्रती शुक्रमश्वैत् ।**
**हिरण्यवर्णा सुदृशीकसंदृग्गवां माता नेत्र्यह्नामरोचि ॥ २ ॥**

विश्वम्[9]। विश्वं भूतम्। अभिमुखी। सर्वतः पृथुतमा। उदतिष्ठत्[10]। श्वेतम्[11]। वासः[12]। बिभ्रती[13]। दीप्तमिति ज्योतिः[14]। आवर्धयते[15]। हिरण्यवर्णा[16]। सुदृशीकसन्दर्शना[17]। ज्योतिषाम्[18]। माता[19]। अह्नाम्[20]। नेत्री[21]। दीप्यते[22]।

**देवानां चक्षुः सुभगा वहन्ती श्वेतं नयन्ती सुदृशीकमश्वम् ।**
**उषा अदर्शि रश्मिभिर्व्यक्ता चित्रामघा विश्वमनु प्रभूता ॥ ३ ॥**

देवानाम्। देवानाम्। चक्षुरादित्यमाह्निकं वा तेजः[23]। वहन्ती[24]। सुधना[25]। श्वेतम्[26]। सुदर्शनमात्मीयम्। अश्वम्[27]। नयन्ती[28]। उषाः। अदर्शि[29]। रश्मिभिः[30]। व्यज्यमाना। चित्रधना[31]। सर्वं भूतजातम्[32]। लक्ष्यीकृत्य[33]। प्रादुर्भूतेति[34]।

---

१. ते० A. २. अभ्र इत् A. अभवत् Sy.
३. समिधे समिन्धनीयः। कृत्यार्थे केन्। समिद्धः सन्। Sy. ४. मनुष्याणामर्थाय Sy.
५. अकार्षीत्।...अकरोत् Sy.
६. तेजःसङ्घम्। अथवा औषसं ज्योतिस्तमांसि Sy.
७. बाधमानम् is suggested for वासमाना॥ बाधमानं बाधकम् अथवा बाध्यमानानि Sy. ८. अन्धकारान् Sy.
९. विश्वभू० A. कृत्स्नं जगत् प्रति Sy.
१०. उदगच्छत् Sy. ११. उदिता च दीप्तम् Sy.
१२. वसनीयं तेजःसमूहम् Sy.
१३. विभूती A. धारयन्ती Sy.
१४. दीप्ति मि० A. तेजोमयम् Sy.
१५. ०वर्तय० M. वर्धते Sy.
१६. ०पर्णा A. हितरमणीयवर्णोपेता Sy.
१७. सन्दर्शयतीति सन्दृक् तेजः। सुष्ठु दर्शनीयं सन्दृक् तेजो यस्याः सा तादृशी Sy.
१८. ०षा A. वाचां गवामेव वा अथवा रश्मीनाम् Sy. १९. माता निर्मात्री। उषःकाले हि पक्षिमनुष्यादीनां वाचो निर्गच्छन्ति। गवामपि तस्मिन् काले सञ्चारान्निर्मातृत्वम् Sy.
२०. अनान् A. दिवसानाम् Sy.
२१. प्रापयित्री Sy. २२. रोचते Sy.
२३. ०त्यमह्नि० A. चक्षुःस्थानीयं तेजः Sy.
२४. ०न्ति A. धारयन्ती Sy.
२५. शोभनधना Sy.
२६. श्वेतवर्णोपेतं सूर्यं प्रकाशयुक्तं कुर्वतीत्यर्थः Sy.
२७. सर्वदागन्तारमादित्यम् Sy.
२८. प्रापयन्ती Sy. २९. दृश्यते च Sy.
३०. रश्मिभिः स्वकीयैः Sy.
३१. धाना A. विचित्रधना Sy.
३२. जगत् Sy. ३३. लक्षी० M. अनुलक्ष्य Sy.
३४. प्रवृद्धा, सर्वजगद्व्यवहारायेत्यर्थः Sy.

अन्तिवामा दूरे अमित्रमुच्छोर्वीं गव्यूतिमभयं कृधी नः ।
यावय द्वेष आ भरा वसूनि चोदय राधो गृणते मघोनि ॥ ४ ॥

अन्तिवामा । सन्निकृष्टधना[1] । अमित्रम्[2] । दूरेऽस्माकम्[3] । व्युच्छ[4] यथाऽमित्रो[5] दूरे भवति तथा व्युच्छे[6]-त्यर्थः[7] । विस्तीर्णम् । गोमार्गम् । अभयं च । अस्माकम् । कुरु । पृथक्[8] कुरु च । शत्रुम्[9] । आहर । धनानि[10] । चोदय[11] । अन्नम्[12] । स्तुवते मह्यम् । उषः[13] !

अस्मे श्रेष्ठेभिर्भानुभिर्वि भाह्युषो देवि प्रतिरन्ती न आयुः
इषं च नो दधती विश्ववारे गोमदश्वावद्रथवच्च राधः ॥ ५ ॥

अस्मे । अस्माकम्[14] । श्रेष्ठैः[15] । भानुभिः[16] । व्युष्टा[17] भव । उषः[18] ! देवि ! वर्धयन्ती । अस्माकम् । आयुः[19] । अन्नम् । च । नः[20] । प्रयच्छन्ति[21] । विश्ववैरणीये[22] ! गवादियुक्तम्[23] । धनम् । च ।

उत्तरा निगदसिद्धेति—

यां त्वा दिवो दुहितर्वर्धयन्त्युषः सुजाते मतिभिर्वसिष्ठाः ।
सास्मासु धा रयिमृष्वं बृहन्तं यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

[यां त्वा दिवः][24]

---

१. अस्मदन्तिके वामं वननीयं धनं यस्याः सा त्वम् Sy.
२. मित्रान् A. अस्मच्छत्रुम् Sy.
३. अस्मत्तो विप्रकृष्टदेशे वर्तमानं कृत्वा Sy.
४. व्यच्छ A. विभाहि Sy.
५. यथा...दूरे is missing in A.
६. प्युच्छे० A.
७. भूमिम् Sy.
८. पृथु० A. अस्मत्तः पृथक् कुरु Sy.
९. अस्मद्द्वेष्टॄन् Sy.
१०. शत्रूणां धनानि Sy.
११. प्रेरय Sy.
१२. धनम् Sy.
१३. हे मघोनि ! धनवति ! Sy
१४. अस्मभ्यम् Sy.
१५. प्रशस्यैः Sy.
१६. रश्मिभिः प्रकाशैः Sy.
१७. प्रकाशय Sy. १८. उषसः A.
१९. आयुष्यम् Sy.
२०. न A. अस्मभ्यम् Sy.
२१. ०च्छन्ती is suggested for ०च्छन्ति ॥ विभाहीति Sy.
२२. ०वैरणीये is suggested for ०वै रणीये॥ हे विश्वैः सम्भजनीये ! देवि ! Sy.
२३. आदि refers to अश्ववत् and रथवत् ॥ गोभिर्बहुभिरुपेतमश्वैश्चोपेतं रथैरुपेतम् Sy.
२४. The *pratīka* is supplied by the Editor. VM. does not explain this stanza. Sy. explains it in the following manner :—
हे दिवो दुहितरुषः ! सुजाते ! शोभनजनने ! यां त्वा त्वां मतिभिः स्तोत्रैर्वसिष्ठा वर्धयन्ति सा त्वमस्मासु वसिष्ठेष्वृष्वं प्रदीप्तं बृहन्तं महान्तं रयिं धनं धाः । धेहि Sy.

VII. 78.

प्रति केतवः प्रथमा अदृश्रन्नूर्ध्वा अस्या व्यञ्जयो वि श्रयन्ते ।
उषो अर्वाचा बृहता रथेन ज्योतिष्मता वाममस्मभ्यं वक्षि ॥ १ ॥

प्रति केतवः[1] । प्रत्यदृश्यन्[2] । मुख्याः[3] । रश्मयः[4] । ऊर्ध्वाः[5] । उषसः । अञ्जयः[6] । विविधम्[7] । सेवन्ते[8] । अञ्जयो रश्मयः[9] । हे उषः ! आभिमुख्येन[10] । महता । रथेन । ज्योतिष्मता[11] । धनम्[12] । अस्मभ्यम् । वह[13] ।

प्रति षीमग्निर्जरते समिद्धः प्रति विप्रासो मतिभिर्गृणन्तः ।
उषा याति ज्योतिषा बाधमाना विश्वा तमांसि दुरिताप देवी ॥ २ ॥

प्रति षीम् । सर्वतः । समिद्धः । अग्निः प्रति स्तूयते[14] । तथा विप्राश्च[15] । स्तुतिभिरुष[16] । स्तुवन्तो जनैः । प्रतिष्टूयन्ते[17] । उषाः । गच्छति[18] । विश्वानि । तमांसि । दुरितानि च । ज्योतिषा । अपबाधमाना । देवीति ।

एता उ त्याः प्रत्यदृश्रन्पुरस्ताज्ज्योतिर्यच्छन्तीरुषसो विभातीः ।
अजीजनन्त्सूर्यं यज्ञमग्निमपाचीनं तमो अगादजुष्टम् ॥ ३ ॥

एता उ त्याः[19] । ताः[20] । एताः । पुरस्तात्[21] । प्रतिदृश्यन्ते । ज्योतिः[22] । यच्छन्त्यः[23] । उषसः । व्युच्छ-

---

१. 'प्रति केतवः' इति पञ्चर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम् । 'प्रति पञ्च' इत्यनुक्रमणिका (KSA. 37. 78. p. 26.) । उक्तो विनियोगः Sy.

२. प्रति दृश्यन् M. प्रत्यदृश्यन्त is suggested for प्रत्यदृश्यन् ॥ प्रतिदृश्यन्ते Sy.

३. प्रथमोत्पन्नाः Sy.

४. प्रज्ञापका रश्मयः Sy.

५. ऊर्ध्वमुखाः Sy.

६. व्यञ्जका रश्मयः Sy.

७. ०धं A. विविधं सर्वत्र Sy.

८. श्रयन्ति Sy.

९. ञ्जयोरश्म० A. The passage अञ्जयो रश्मयः should immediately follow अञ्जयः and precede विविधम्.

१०. अस्मदभिमुखेनागच्छता Sy.

११. तेजोवता Sy.

१२. वननीयं धनम् Sy.

१३. वहसि Sy

१४. अभिवर्धते Sy.

१५. पि प्राञ्चः M. विप्रा मेधाविन ऋत्विजश्च Sy.

१६. ०रुषः M. The addition of सम् after उष is suggested.

१७. जरन्ते Sy.

१८. ऊर्ध्वं गच्छति Sy.

१९. एका A.

२०. प्रसिद्धाः Sy.

२१. उरस्तान् M. पूर्वस्यां दिशि Sy.

२२. तेजः Sy.

२३. इच्छ० M. प्रयच्छन्त्यः Sy.

न्त्यः[1]। ता[2] इमा अजीजनन्[3]। सूर्यम्[4]। यज्ञम्। अग्निं च। अवाचीनम्[5]। तमः। अगच्छदागतायामुषसि[6]। अशोभनम्[7]।[8]

**अचेति दिवो दुहिता मघोनी विश्वे पश्यन्त्युषसं विभातीम्।**
**आस्थाद्रथं स्वधया युज्यमानमा यमश्वासः सुयुजो वहन्ति ॥ ४ ॥**

अचेति। ज्ञायते[9]। दिवः। दुहिता। उषाः[10]। विश्वे[11]। पश्यन्ति। उषसम्। अव्युच्छन्तीम्[12]। सेयमातिष्ठति[13]। रथम्। बलेन[14]। युज्यमानम्। रथम्। आवहन्ति[15]। अश्वाः। सुयुक्ताः[16]।

**प्रति त्वाद्य सुमनसो बुधन्तास्माकासो मघवानो वयं च।**
**तिल्विलायध्वमुषसो विभातीर्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥**

प्रति त्वाद्य। प्रतिबुध्यन्त[17]। अद्य[18]। त्वामागताम्। सुमनसः स्तोतारः[19]। अस्मदीयाः[20]। हविष्मन्तः[21]। वयम्[22]। च। हे उषसः[23]! तिल्विलेपापक्त[24]। व्युच्छन्त्यः[25], यथा भद्रे क्षेत्रे निमिता[26] तिल्विला प्ररोहति तथा बहुशाखाः प्रादुर्भवतेति।

---

१. विभात्यो विभानं कुर्वत्यः Sy.
२. अप्युच्छन्त्यस्मा A. ता उषसः Sy.
३. अजीजनन् प्रादुरकुर्वन्। उषस उदयानन्तरं तेषां सम्भवात्तज्जनकत्वमुपचर्यते Sy.
४. सूर्य A.
५. अपाची० is suggested for अवाची० ॥ नीचीनम् Sy.
६. अपगतमभूत् Sy.
७. अप्रियम्, सर्वेषां दृष्टिनिरोधकत्वादप्रियत्वम्। तादृशम् Sy.
८. VM. ignores उ ॥ उ इति पूरणः Sy.
९. सर्वैर्ज्ञायते Sy.
१०. धनवत्युषाः Sy.
११. सर्वेऽपि प्राणिनः Sy.
१२. अप्यु० A. व्युच्छन्तीम् is suggested for अव्युच्छन्तीम् ॥
१३. तादृशी देवी ... आस्थात् आतिष्ठत्। आरोहति Sy.
१४. अन्नेन Sy.
१५. अभिमतदेशं प्रापयन्ति। तं रथमास्थादिति Sy.
१६. शोभनयोजना Sy.
१७. ०ध्यन्त्व A. प्रत्यबोधयन् स्तुतिभिः Sy.
१८. अस्मिन् काले Sy.
१९. शोभनस्तुतिकाः Sy.
२०. ०सस्ताता० A.
२१. अस्मदीयाः पुरुषा ऋत्विजः Sy.
२२. हविर्लक्षणान्नवन्तः। यद्वा मघवान इत्येतद्वयमित्येतस्य विशेषणम्। हविष्मन्तो वयम् Sy.
२३. हे उषसः। यूयम् Sy.
२४. ०वाचरत is suggested for ०पापक्त ॥ जगत् स्निग्धभूमिकं कुरुत। 'तिल स्नेहने' इत्यस्मात्तिलुः। तिलुरिला भूमिर्यस्य तत्तिल्विलम्। तत्कुरुत। शिष्टं स्पष्टम् Sy.
२५. व्युच्छन्त्यः सत्यः Sy.
२६. न्युप्ता is suggested for निमिता ॥

VII. 79.

व्यु१॒षा आ॑वः प॒थ्या॓३ जना॑नां॒ पञ्च॑ क्षि॒तीर्मानु॑षीर्बो॒धय॑न्ती ।
सु॒सं॒दृग्भि॑रु॒क्षभि॑र्भा॒नुम॑श्रे॒द्वि सूर्यो॒ रोद॑सी॒ चक्ष॑सावः ॥ १ ॥

व्युषाः[1] । विगमयति[2] । उषाः[3] । मार्गान्[4] । जनानां[5] रश्मीन् पा[6] । पञ्च । क्षितीः[7] । मानुषी[8] । बोधयति[9] । सुसन्दर्शनैः[10] । सेक्तुभी[11] रश्मिभिः । दीप्तम् । श्रयति[12] । व्यावृणोति[13] । सूर्यः । द्यावापृथिव्यौ । तेजसा[14] ।

व्य॑ञ्जते दि॒वो अन्ते॑ष्व॒क्तून्विशो॒ न यु॒क्ता उ॒षसो॑ यतन्ते ।
सं ते॒ गाव॒स्तम॒ आ व॑र्तयन्ति॒ ज्योति॑र्यच्छन्ति सवि॒तेव॑ बा॒हू ॥ २ ॥

व्यञ्जते । प्रकाशयन्ति[15] । अन्तरिक्षस्य । पर्यन्तेषु[16] । अञ्जनसाधनान् रश्मीन्[17] । मनुष्याः[18] । इव । युक्ताः कार्येषु[19] । उपसम्[20] । प्रयत्नं कुर्वन्ति[21] । समावर्तयन्ति पिण्डीकुर्वन्ति[22] । तव । रश्मयः । तमः[23] । ज्योतिश्च[24] । यच्छन्ति[25] । यथा सवितोद्यन्[26] । आत्मीयौ बाहुभ्यां यमिति[27] ।

---

१. 'व्युषा आवः' इति पञ्चर्चं नवमं सूक्तं वसिष्ठस्यार्षमुषस्यं त्रैष्टुभम् । 'व्युषाः' इत्यनुक्रमणिका (KSA. 37. 79. p. 26.) प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

२. व्यूहा A.

३. व्यौच्छत्, यद्वा जनानां हिताय व्यौच्छदिति योज्यम् Sy.

४. पथि हिता Sy.

५. सर्वप्राणिनाम् Sy.

६. वा is suggested for पा ॥ The passage 'रश्मीन् वा' should immediately follow मार्गान् and precede जनानाम् ।

७. क्षितिः M. निषादपञ्चमांश्चतुरो वर्णान् Sy.

८. ०षीः is suggested for ०षी ॥ मनुष्यरूपाः Sy.

९. बोयति A. बोधयन्ती is suggested for बोधयति ।

१०. सन्दृश्यते सन्दर्शयति वा सन्दृक् तेजः । सुतेजोभिः Sy.

११. गोभिः Sy

१२. श्रयनि A. 'अरुणैरुषा आजिमधावत्' (AB. 4. 9.) इति हि श्रुतिः । 'अरुण्यो गाव उषसाम्' इति निरुक्तम् (Ngh. 1.15.) Sy.

१३. विवृणोति Sy.

१४. प्रकाशकेन तेजसा Sy.

१५. व्यक्तीकुर्वन्तीत्यर्थः Sy.

१६. पर्यन्तप्रदेशेषु Sy.

१७. तेजांसि Sy.

१८. प्रजा इव सेना इव Sy.

१९. परस्परं संयुक्ताः Sy.

२०. उषसः is suggested for उषसम् ।

२१. तमो नाशनायात्र गमनाय वा Sy.

२२. ०न्ती A.
नाशयन्ति Sy.

२३. अन्धकारम् Sy.

२४. तेजः Sy.

२५. प्रयच्छन्ति Sy.

२६. सपितो० A.

२७. बाहभ्यं यमिति A. The reading is doubtful. बाहू यच्छतीति is suggested for बाहुभ्यां यमिति ।

अभूदुषा इन्द्रतमा मघोन्यजीजनत्सुविताय श्रवांसि ।
वि दिवो देवी दुहिता दधात्यङ्गिरस्तमा सुकृते वसूनि ॥ ३ ॥

अभूदुषाः[1] । अभूत्[2] । उषाः । ईश्वरतमा[3] । धनवती । अजीजनत्[4] । अभ्युदयाय[5] । अन्नानि । दिवः । दुहिता । देवी[6] । विदधाति[7] । अङ्गिरसां वसिष्ठाः[8] । सुकर्मणे[9] [10] । धनानि ।

तावदुषो राधो अस्मभ्यं रास्व यावत्स्तोतृभ्यो अरदो गृणाना ।
यां त्वा जज्ञुर्वृषभस्या रवेण वि दृळ्हस्य दुरो अद्रेरौर्णोः ॥ ४ ॥

तावत् । तावत् । उषः ! अन्नम्[11] । अस्मभ्यम्[12] । देहि । यावत् । स्तोतृभ्यः । प्रादाः[13] । स्तूयमाना । या[14] । त्वामागताम् । जानन्ति[15] । वृषभस्योर्षसि[16] शब्दायन्तः[17] । रवेण सा व्योर्णी[18] । दृढस्य[19] । शिलोच्चयस्य[20] । द्वाराणि पणिभिरपहृतानां[21] गवामानयनाय[22] ।

देवंदेवं राधसे चोदयन्त्यस्मद्र्यक्सूनृता ईरयन्ती ।
व्युच्छन्ती नः सनये धियो धा यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

देवंदेवम्[23] । सर्व[24] देव । धनाय[25] । चोदयन्ती[26] । अस्मदभिमुखम् । वाचश्च[27] । प्रेरयन्ती । व्युच्छन्ती[28]

---

१. अभूमुषां A.
२. अभूत् । उषाः is missing in A. प्रादुर्भूत् Sy. ३. सर्वस्येश्वरतमा Sy.
४. अर्जजिन् A. उदपादयत् प्रकाशितवतीत्यर्थः Sy. ५. कल्याणाय Sy.
६. देवि A. ७. करोति Sy.
८. गन्तृतमा । यद्वा अङ्गिरोगोत्रैर्भारद्वाजैः सह रात्रेरप्युत्पत्ते रात्र्यवसानस्योषारूपत्वादङ्गिरस्तमेत्युच्यते । भारद्वाजै रात्रेः सहोत्पत्तिरनुक्रमण्यामुक्ता—'रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी' (KSA. 10. 127.) Sy.
९. वरिष्ठा is suggested for वसिष्ठाः ।
१०. यजमानाय Sy. ११. धनम् Sy.
१२. अस्मभ्यमपि Sy. १३. दत्तवत्यसि Sy.
१४. याम् is suggested for या ।
१५. जानन्ति प्राणिनः । अथवा जज्ञुः ज्ञापयन्ति Sy.
१६. वृषभस्य रवेण । लुप्तोपमैषा । वृषभस्येति कर्मणि षष्ठी वृषभं रवेणेव । प्रकाशेन । अथवा वृषभस्य प्रवृद्धस्य स्तोत्रस्य रवेण शब्देन Sy.
१७. ०ब्दं य० A.
१८. प्योर्णो A. व्योर्णोः is suggested for व्योर्णो ॥ विवृतान्यकरोः Sy.
१९. दूल्हस्य A. २०. शीलो० A.
२१. वणिभिरवभूता० A.
२२. ०नायं A. द्वाराणि पणिभिर्गाः प्रवेश्य पिहितानि Sy.
२३. देवः A. सर्वमपि स्तोतारम् Sy.
२४. देवम् is suggested for देव ।
२५. लाभाय is suggested for लानायम् ।
२६. प्रेरयन्ती Sy.
२७. वचांसि Sy.
२८. व्युच्छनं कुर्वती Sy.

अस्माकम् । लानायम्[1] । बुद्धिम्[2] । देहि[3] ।

VII. 80.

**प्रति॒ स्तोमे॑भिरु॒षसं॒ वसि॑ष्ठा गी॒र्भिर्विप्रा॑सः प्रथ॒मा अ॑बुध्रन् ।**
**वि॒व॒र्तय॑न्तीं॒ रज॑सी॒ सम॑न्ते आवि॒ष्कृ॒ण्व॒तीं भुव॑नानि॒ विश्वा॑ ॥ १ ॥**

[4] प्रति । प्रत्यबोधयन्[5] । स्तोमैः[6] । उषसम् । वरिष्ठाः[7] । गीर्भिश्च[8] । मेधाविनः । अन्येभ्यः स्तोतृभ्यः पूर्वमेव[9] । अन्धकारापनयनेन[10] पृथक्कुर्वन्तीम्[11] । द्यावापृथिव्यौ । सङ्गतान्ते[12] । सर्वाणि । भुवनानि[13] । प्रकाशयन्तीम्[14] ।

**ए॒षा स्या नव्य॒मायु॒र्दधा॑ना गू॒ढ्वी तमो॒ ज्योति॑षो॒षा अ॑बोधि ।**
**अग्र॑ एति युव॒तिरह्र॑याणा॒ प्राचि॑कित॒त्सूर्यं॑ य॒ज्ञम॒ग्निम् ॥ २ ॥**

एषा स्या । सा[15] । एषा[16] । नवतरम् । आयुः[17] । दधाना[18] । तिरोहितं कृत्वा[19] । तमः[20] । ज्योतिषा[21] । उषाः । प्रवुद्धा भवति[22] । अग्रे[23] च सर्वेषां देवानाम् । युवतिः[24] । एति । अणीभूतयाना[25] । प्रज्ञापयति च । सूर्यम् । यज्ञम् । अग्निम् ।

---

१. दानाय धनलाभाय Sy.

२. बुद्धिः A.

३. धेहि । शिष्टं स्पष्टम् Sy.

४. 'प्रति स्तोमेभिः' इति तृचात्मकं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम् । 'प्रति तृचम्' इत्यनुक्रमणिका (KSA. 37. 80. p. 26.)। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

५. ०धनयम् A. प्रतिबोधयन्ति Sy.

६. स्तोतृभिः प्रयुज्यमानाः Sy.

७. वसिष्ठाः is suggested for वरिष्ठाः ॥ वसिष्ठगोत्राः Sy.

८. स्तुतिभिः Sy.

९. इतरयजमानेभ्यः पूर्वभूताः सन्तः Sy.

१०. ०रावनयन्नेन A.

११. व्यावर्तयन्तीम् Sy.

१२. समानपर्यन्ते एकीभूतप्रान्ते Sy.

१३. भूतजातानि Sy.

१४. प्रकाशयन्तीम् A. प्रकटीकुर्वतीं स्वभासा Sy.

१५. गतदिवसेषु प्रसिद्धाः Sy.

१६. दृश्यमाना Sy.

१७. आयुष्यं यौवनमित्यर्थः Sy.

१८. धारयन्ती Sy.

१९. गूढम् Sy.

२०. अन्धकारम् Sy.

२१. स्वतेजसा निवारयन्ती Sy.

२२. बुध्यते Sy.

२३. पुरोदेशे, सूर्यस्य पुरस्तात्, देवानामग्रे वा । इतरदेवेभ्यः पूर्वमित्यर्थः Sy.

२४. नित्यतरुणी सर्वत्र मिश्रयन्ती वा Sy.

२५. अहृणीभूतयाना is suggested for अणीभूतयाना । लुप्तोपमैषा । अलज्जा युवतिरिव । सा यथा पत्युरग्रे सञ्चरति तद्वत्सूर्यस्य पुरस्तादेति Sy.

अभूदुषा इन्द्रतमा मघोन्यजीजनत्सुविताय श्रवांसि ।
वि दिवो देवी दुहिता दधात्यङ्गिरस्तमा सुकृते वसूनि ॥ ३ ॥

अभूदुषाः[1]। अभूत्[2]। उषाः। ईश्वरतमा[3]। धनवती। अजीजनत्[4]। अभ्युदयाय[5]। अन्नानि। दिवः। दुहिता। देवी[6]। विदधाति[7]। अङ्गिरस्तमा[8] वसिष्ठाः[9]। सुकर्मणे[10]। धनानि।

तावदुषो राधो अस्मभ्यं रास्व यावत्स्तोतृभ्यो अरदो गृणाना ।
यां त्वा जज्ञुर्वृषभस्या रवेण वि दृळ्हस्य दुरो अद्रेरौर्णोः ॥ ४ ॥

तावत्। तावत्। उषः। धनम्[11]। अस्मभ्यम्[12]। देहि। यावत्। स्तोतृभ्यः। प्रादाः[13]। स्तूयमाना। या[14]। त्वामागताम्। जानन्ति[15]। वृषभस्य[illegible][16] शब्दायन्तः[17]। रवेण सा व्यौर्णो[18]। दृढस्य[19]। शिलोच्चयस्य[20]। द्वाराणि पणिभिरपहृतानां[21] गवामानयनाय[22]।

देवंदेवं राधसे चोदयन्त्यस्मद्र्यक्सूनृता ईरयन्ती ।
व्युच्छन्ती नः सनये धियो धा यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

देवंदेवम्[23]। सर्वं देव[24]। धनाय[25]। चोदयन्ती[26]। अस्मदभिमुखम्। वाचश्च[27]। प्रेरयन्ती। व्युच्छन्ती[28]

---

१. अभूमुषां A.
२. अभूत् । उषाः is missing in A. प्रादुर्भूत् Sy. ३. सर्वस्येश्वरतमा Sy.
४. अजंजिन् A. उदपादयत् प्रकाशितवतीत्यर्थः Sy. ५. कल्याणाय Sy.
६. देवि A. ७. करोति Sy.
८. गन्तृतमा । यद्वा अङ्गिरोगोत्रैर्भारद्वाजैः सह रात्रेरप्युत्पत्ते रात्र्यवसानस्योषारूपत्वादङ्गिरस्तमेत्युच्यते । भारद्वाजैः रात्रेः सहोत्पत्तिरनुक्रमण्यामुक्ता—'रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी' (KSA. 10. 127.) Sy.
९. वरिष्ठा is suggested for वसिष्ठाः।
१०. यजमानाय Sy. ११. धनम् Sy.
१२. अस्मभ्यमपि Sy. १३. दत्तवत्यसि Sy.
१४. याम् is suggested for या।
१५. जानन्ति प्राणिनः। अथवा जज्ञुः ज्ञापयन्ति Sy.
१६. वृषभस्य रवेण । लुप्तोपमैषा । वृषभस्येति कर्मणि षष्ठी वृषभं रवेणेव । प्रकाशेन । अथवा वृषभस्य प्रवृद्धस्य स्तोत्रस्य रवेण शब्देन Sy.
१७. ०ब्दं य० A.
१८. प्यौर्णो A. व्यौर्णोः is suggested for व्यौर्णो ॥ विवृतान्यकरोः Sy.
१९. दूल्हस्य A. २०. शीलो० A.
२१. वणिभिरवभूता० A.
२२. ०नायं A. द्वाराणि पणिभिर्गाः प्रवेश्य पिहितानि Sy.
२३. देवः A. सर्वमपि स्तोतारम् Sy.
२४. देवम् is suggested for देव।
२५. लाभाय is suggested for लानायम्।
२६. प्रेरयन्ती Sy.
२७. वचांसि Sy.
२८. व्युच्छनं कुर्वती Sy.

अस्मावम् । लानायम्[1] । वृद्धिम्[2] । देहि[3] ।

VII. 80.

प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा अंबुध्रन् ।
विवर्तयन्तीं रजसी समन्ते आविष्कृण्वतीं भुवनानि विश्वा ॥ १ ॥

[4] प्रति । प्रत्यबोधयन्[5] । स्तोमैः[6] । उषसम् । वरिष्ठाः[7] । गीर्भिश्च[8] । मेधाविनः । अन्येभ्यः स्तोतृभ्यः पूर्वमेव[9] । अन्धकारापनयनेन[10] पृथक्कुर्वन्तीम्[11] । द्यावापृथिव्यौ । सङ्गतान्ते[12] । सर्वाणि । भुवनानि[13] । प्रकाशयन्तीम्[14] ।

एषा स्या नव्यमायुर्दधाना गूढ्वी तमो ज्योतिषोषा अंबोधि ।
अग्रं एति युवतिरह्रयाणा प्राचिकितत्सूर्यं यज्ञमग्निम् ॥ २ ॥

एषा स्या । या[15] । एषा[16] । नवतरम् । आयुः[17] । दधाना[18] । तिरोहितं कृत्वा[19] । तमः[20] । ज्योतिषा[21] । उषाः । प्रबुद्धा[22] भवति । अग्रे[23] च सर्वेषां देवानाम् । युवतिः[24] । एति । अणीभूतयाना[25] । प्रज्ञापयति च । सूर्यम् । यज्ञम् । अग्निम् ।

---

१. दानाय धनलाभाय Sy.

२. वृद्धिः A.

३. धेहि । शिष्टं स्पष्टम् Sy.

४. 'प्रति स्तोमेभिः' इति तृचात्मकं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमुषस्यम् । 'प्रति तृचम्' इत्यनुक्रमणिका (KSA. 37. 80. p. 26.)। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy.

५. ०धनयम् A. प्रतिबोधयन्ति Sy.

६. स्तोतृभिः प्रयुज्यमानाः Sy.

७. वसिष्ठाः is suggested for वरिष्ठाः ॥ वसिष्ठगोत्राः Sy. ८. स्तुतिभिः Sy.

९. इतरयजमानेभ्यः पूर्वभूताः सन्तः Sy.

१०. ०रावनयमेन A.

११. व्यावर्तयन्तीम् Sy.

१२. समानपर्यन्ते एकीभूतप्रान्ते Sy.

१३. भूतजातानि Sy.

१४. प्रकाशयन्तीम् A. प्रकटीकुर्वतीं स्वभासा Sy.

१५. गतदिवसेषु प्रसिद्धाः Sy.

१६. दृश्यमाना Sy.

१७. आयुष्यं यौवनमित्यर्थः Sy.

१८. धारयन्ती Sy.

१९. गूढम् Sy.

२०. अन्धकारम् Sy.

२१. स्वतेजसा निवारयन्ती Sy.

२२. बुध्यते Sy.

२३. पुरोदेशे, सूर्यस्य पुरस्तात्, देवानामग्रे वा । इतरदेवेभ्यः पूर्वमित्यर्थः Sy.

२४. नित्यतरुणी सर्वत्र मिश्रयन्ती वा Sy.

२५. अहृणीभूतयाना is suggested for अणीभूतयाना । लुप्तोपमैषा । अलज्जा युवतिरिव । सा यथा पत्युरग्रे सञ्चरति तद्वत्सूर्यस्य पुरस्तादेति Sy.

अश्वा॑वतीर्गोम॑तीर्न उ॒षासो॑ वी॒रव॑तीः॒ सद॑मुच्छन्तु भ॒द्राः ।
घृ॒तं दुहा॑ना वि॒श्वतः॒ प्रपी॑ता यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ३ ॥

[अश्वावती[1]]

व्याख्यत्पञ्चमेऽध्याये[2] पञ्चमस्याष्टकस्य सः ।
लोहितस्य कुले जातो माधवः सुन्दरीसुतः ॥

# [ अथ पञ्चमाष्टके षष्ठोऽध्यायः ]

'प्रत्यु[3] अदर्श्यायतीति[4] व्याचिख्यासति माधवः ।
कारणं[5] सूक्तभेदस्य सुखतः सम्प्रदर्शयन् ॥१॥
ऋषिच्छन्दो देवतार्थाः[6] सूक्तभेदस्य हेतवः ।
मन्यन्ते बह्वृचाः केचिदर्थमेव विभेदकम् ॥२॥
नवमे[7] मण्डले भेदः सूक्तानामृषिभिः कृतः ।
'स्वादिष्ठया मदिष्ठया'[8] चत्वार्यत्र[9] निदर्शनम् ॥३॥
गायत्र्याण्येव[10] चत्वारि सोम एव च देवता ।
मधुच्छन्दःप्रभृतयश्चत्वार[11] ऋषयोऽभवन् ॥४॥

---

१. The *pratīka* is supplied by the Editor.
This stanza has already been explained. See RV. 7. 41. 7. Sy. explains this stanza here again in the following manner:—
**अश्वावतीर्बहुभिरस्मभ्यं प्रदेयैरश्वैस्तद्वत्यस्तथा गोमतीर्गोमत्यो गोप्रदा वीरवतीर्वीरवत्यः पुत्रदा अत एव भद्राः स्तुत्या उषास उषसः सदं सर्वदोच्छन्तु । पुनः कीदृश्यः ? घृतमुदकं दुहाना दोग्ध्र्यो विश्वतः प्रपीताः सर्वतः प्रवृद्धाः । यूयं पातेति गतम् ।**

२. **पञ्चम॰** A.

३. supplied by the Editor.

४. ॰श्यायन्ती A. ॰र्श्यायन्ती M. **अदर्शि आयती** R.

५. **करणं** A., M. The reading is adopted from R.

६. **ऋषिच्छन्दोदेवतार्थाः** R.

७. **वागे** A. ८. RV 9. 1. 1.

९. **चतुर्थाह्नि** M., A. The reading is adopted from R.

१०. ॰त्र्याण्ये॰ A.

११. ॰धुश्छ॰ A. (1) Madhucchandas. (2) Medhātithi. (3) Sunaḥśepa: (4) Hiraṇyastūpa.

छन्दोदेवनयोः[1] साम्ये सन्ति सूक्तानि मण्डले ।
ऋषिभेदेन भिन्नानि पावमानाभिशब्दिते[2] ॥५॥
'इन्द्रं विश्वा अवीवृधन्'[3] छन्दोभेदेन भिद्यते ।
देवताभेदभिन्नानि 'वायवा[4] याहि दर्शत'[5] ॥६॥
आत्मदृष्टेषु सूक्तेषु क्वचित् संयोजयन्ति च ।
दृष्टानन्येन ऋषिणा मन्त्रानिह महर्षयः ॥७॥
आङ्गिरसेन[6] घोरेण दृष्टामेकामिमामृचम्[7] ।
'अस्मे प्र यन्धि मघवन्'[8] विश्वामित्रस्तथाऽकरोत्[9] ॥८॥
आन्त्यं तृचं[10] मण्डलस्य सूक्तान्ते च न्यवेदयत्[11] ।
'आ नो मित्रावरुणेति[12] जामदग्न्यं[13] वदन्ति हि[14] ॥९॥
महात्मनकृतां[15] तत्र सम्प्रीतिं[16] कारणं विदुः ।
आत्ममन्त्रसमांश्चैते[17] मन्त्रान् पश्यन्ति सङ्गताः ॥१०॥
बहवः सन्ति ननु च द्रष्टारो[18] द्वैपदस्य ये ।

---

१. देव० M.

२. ०मानिभिः शब्दितः A. ०नीभि० M.

३. ०धश्च A. धच्च M. (RV. I. 11. 1.)

४. वायायाहि A.

५. ०ता A., M. (RV. I. 2. 1.)

६. आंगीर० M.

७. दृष्ट्वामे० A.

८. प्र. . .न्ध A. प्रवृद्ध M. The reading is adopted from R.

९. RV. II. 36. 10.

१०. आन्त्यच ग्तुचं A. अन्त्यं तृचं R. RV. III. 62. 16—18.

११. न्यवेशयत् R.

१२. RV. III. 62. 16.

१३. ०दग्नि A.

१४. हि is missing in A. The second and Fourth verses are interchanged in R.

१५. ०सन्नकृतं A. ०सन कृतं M. The reading is adopted from R.

१६. सप्रीतिं A.

१७. ०तमां श्चेते A. ०तमांश्चै० M.

१८. द्रष्टारौ A., M. The reading is adopted from R.

वन्धुः सुबन्धुरित्येते सत्यं ते भ्रातरोऽभवन् ॥११॥

द्विपदाश्च समानीताः सूक्तमेकमतोऽभवत्[1] ।
ददृशुः काल एकस्मिन् सर्वे च सह सङ्गताः ॥१२॥

तदेतच्छाट्यायनके[2] विस्पष्टं प्रतिपादितम् ।
यथा दृष्टमिदं[3] सूक्तं तत्रैवावधार्यताम् ॥१३॥

ऋष्यादिभेदः प्रायेण सूक्तभेदस्य[4] कारणम् ।
कारणान्तरमप्यस्ति दृश्यते[5] यत्क्वचित् क्वचित् ॥१४॥

कर्मानुरोधादपि[6] च सूक्तानां भेद इष्यते ।
ऋषिच्छन्दो[7]दैवतेषु समानेष्वपि च क्वचित् ॥१५॥

तत्रोदाहरणान्याहुर्नवमे[8] मण्डले बुधाः[9] ।
एकर्षिकाणि[10] सूक्तानि 'मन्द्रया[11] सोम धारया'[12] ॥१६॥

'सुरूपकृत्नु मूतये'[13] इति सूक्तेषु सप्तसु ।
देवतेन्द्र ऋषिश्चैको भिद्यते[14] केन हेतुना ॥१७॥

छन्दश्च षण्णां गायत्री[15] सप्तमेऽनुष्टुबागता[16] ।
'गायन्ति त्वा गायत्रिणः'[17] कामं तत्तेन भिद्यताम् ॥१८॥

---

१. ०मेकतमोऽभवन् A. ०मेकतमोऽभवत् M. RV. V. 24.

२. Cf. JB. III. 168.—170.

३. ०दृष्टि० A.

४. ०भेदेस्य A.

५. दृश्यन्ते A., M.

६. अर्थानुरो० R.

७. ०षिश्छ० A.

८. ०र्नं च मे A.

९. बुधाम् A.

१०. ०कानि R. RV. IX. 6.—24.

११. मन्त्रया A.

१२. RV. IX. 6. 1.

१३. त्नु मूतय is missing in M. RV. I. 4.—10.

१४. भिद्यन्ते A. M.

१५. ०त्रीं A.

१६. सुष्ठुगा० A., M. The reading is adopted from. R.

१७. ०त्रिण A. RV. I. 10. 1.

नोपपादयितुं शक्यं मनुष्यैरत्र कारणम् ।
अथापि[1] वासनां कांचित् कथ्यमानामिमां शृणु ॥१९॥
सुरूपकृत्नुसूक्तेषु[2] यज्ञ[3] आगन्तुमिच्छति ।
आगते सति कर्तव्यमा[4] त्वेतेति च भाषते ॥२०॥
'युञ्जन्ति[5] ब्रध्नमित्यस्मिन् यथा वै सहकारिभिः ।
यस्मिंश्च काल आयाति तत्सर्वं कथितं विदुः ॥२१॥
'इन्द्रमिद्[6]गाथिनो[7] बृहदिति सूक्तेन भाषते ।
अनेकाह्वात्[8]सद्भावमिन्द्रमाहात्म्यमेव[9] च ॥२२॥
बहवो यद्यपीन्द्र![10] त्वां विह्वयन्त इमे जनाः ।
तान् सर्वानपहाय[11] त्वमस्माकं भव केवलम्[12] ॥२३॥
'एन्द्र[13] सानसिमित्यत्र स्तुतादिन्द्रात्[14] स ह्रीच्छति[15] ।
धनमात्माभिलषितं सञ्जिहीर्षति च स्तुतिम् ॥२४॥
स्तुतमिन्द्रं जिगमिषुमृषिस्त्यक्तुमशक्नुवन्[16] ।
'इन्द्रेहीति[17] पुनः स्तौति याचते च धनं पुनः ॥२५॥

---

१. तथापि कारणं किंचित् कथ्यमानमिमं शृणु R.

२. ०कत्नु M. 'आ त्वेता' RV. I. 4. 1.

३. यज्ञ् आग० A.
यजुराग० M.

४. RV. I. 5. 1.

५. प्रा...ध्नमि० A. RV. I. 6. 1.

६. शूद्रमि० M.

७. ०मिनो A. RV. I. 7. 1.

८. ०कां ह्वात्रस० A.

९. ०ह्राजंवे...च A.

१०. ०वीन्द्र A.

११. ०नवहा० A.

१२. ०लः R. Cf. RV. I 7. 10.

१३. समि० M. RV. I. 8. 1.

१४. ०विन्द्रा A. M. The reading is adopted from R.

१५. R. reads अभीप्सति for स ह्रीच्छति ।

१६. ०षुः ऋषि० A. ०षुरपि० M.

१७. 'इन्द्रेहि' RV. I. 9. 1.

उक्तमर्थमिमं सर्वं सप्तमेनानुभाषते ।
आनुष्टुभेन[1] सूक्तेन 'गायन्ति त्वेत्यृषिः[2] पुनः ॥२६॥
कवित्वस्यानुरोधाय[3] तमेवार्थं पुनः क्वचित् ।
अन्यं प्रकारमाश्रित्य पश्यन्ति च महर्षयः ॥२७॥
भेदस्तत्रापि सूक्तानां भवतीति विनिश्चयः[4] ।
'नासत्याभ्यां बर्हिरिव'[5] सूक्तान्याहुर्निदर्शनम्[6] ॥२८॥
स्तौत्यश्विनावृषिस्तेषु[7] सङ्गृह्य च विगृह्य च ।
कक्षीवान् दैर्घतमसः[8] कवित्वं सम्प्रदर्शयन् ॥२९॥
पश्यन्ति तांस्तानुद्दिश्य कामानपि[9] महर्षयः ।
ये ये सूक्तेषु दृश्यन्ते ते च भेदस्य हेतवः ॥३०॥
तथा दर्शनकालस्य भेदश्चैषां विभेदकः ।
स च भेदो ब्राह्मणेषु मन्त्रेष्वपि च दृश्यते ॥३१॥
महावाक्यानुसारेण[10] सैषा[11] सूक्ष्मेक्षिका बुधैः ।
कार्या भिन्नेषु सूक्तेषु शुद्धमर्थमभीप्सुभिः ॥३२॥

---

१. अनु० A.

२. ०त्वृषिः A. RV. I. 10. 1.

३. क्वचि त्वस्यावरोधाय A.

क्वापि तस्यानुरोधाय M.

The reading is adopted from R.

४. ०याः A.

५. ०रेव M. RV. I. 116. 1.

६. ०हु निद० A. RV. I. 116.—119.

७. सो श्विनौ वृषि० A.

सोऽश्विनौ च ऋषि० M.

The reading is adopted from R.

८. दैवत० A. M.

९. कामानिह R.

१०. ०नुरोधेन R.

११. सैषां A.

VII. 81.

प्रत्यु अदर्श्यायत्यु१च्छन्ती दुहिता दिवः ।
अपो महि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी ॥ १ ॥

प्रत्यु[1] ॥ सिष्ठः[2] ॥ प्रति । एव[3] । दृश्यते[4] । आगच्छन्ति[5] । व्युच्छन्ती[6] । दिवः[7] । दुहिता[8] । इव[9] । नयति । महत् । तयः[10] । दर्शना[11] । ज्योतिश्च[12] । कृणोति[13] । उषाः[14] ।

उदुस्रियाः सृजते सूर्यः सचाँ उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि ॥ २ ॥

उदुस्रियाः । उदेव[15] । सृजते[16] । सूर्यः[17] । रश्मीन् । सहैव[18] । तयोद्यन्[19] । नक्षत्रमपि[20] । तेजस्वी[21] भवति । तव । इत्[22] । उषः[23] । व्युच्छने[24] । सूर्यस्य । च । सङ्गतेमभिहि[25] अने[26] ।

---

१. अथ षष्ठो व्याख्यायते । सप्तमे मण्डले पञ्चमेऽनुवाके दश सूक्तानि व्याकृतानि । 'प्रत्यु अदर्शि' इति षड्चमेकादशं सूक्तं वसिष्ठस्यार्षमुषस्यम् । प्रथमाद्या अयुजो बृहत्यो द्वितीयाद्या युजः सतोबृहत्यः । तथा चानुक्रान्तम्—'प्रत्यु षट् प्रागाथम्' (KSA. 38. 80 p. 26.) इति । प्रातरनुवाक उषस्ये क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—'प्रत्यु अदर्शि सह वामेनेति बार्हतम्' (ĀSS. 4. 14.) इति Sy.

२. सिष्ठः is omitted by M. वसिष्ठः is suggested for सिष्ठः ।

३. उ इति पूरकः Sy.

४. सर्वैः प्रतिदृश्यते Sy.

५. ०च्छन्ती is suggested for ०च्छन्ति ।

६. तमांसि विवासयन्ती वर्जयन्ती Sy.

७. द्युलोकस्य सूर्यस्य वा Sy.

८. पुत्री, एवम्भूतोषाः Sy.

९. वश्व M. अप उ इति निपातद्वयसमुदायोऽपेत्यस्यार्थे । अपो व्ययति । अपवृणोति Sy.

१०. तयोः M. तमः is suggested for तयः ॥ सैषा नैशमन्धकारम् Sy.

११. ०नायः A. दर्शनाय is suggested for दर्शना ॥ दर्शनार्थम् Sy.

१२. प्रकाशम् Sy.

१३. करोति Sy.

१४. एवं कृत्वा जनानां सुष्ठु नेत्र्युषाः Sy.

१५. उदैव M.

१६. उद्गमयति Sy.

१७. सर्वस्य प्रेरक आदित्यः Sy.

१८. युगपदेव Sy.

१९. अद्यत् A. उद्गच्छत् प्रादुर्भवत् Sy.

२०. नभसि दृश्यमानं ग्रहनक्षत्रादिकम् Sy.

२१. तेजस्वि is suggested for तेजस्वी ॥ दीप्तिमत्करोति । सौरेण तेजसा हि नक्तं चन्द्रप्रभृतीनि नक्षत्राणि भासन्ते । 'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' (YV. 18. 40.) इति हि निगमः Sy.

२२. इच्छब्दः पूरकः Sy.

२३. एवं च सति हे उषोदेवते ! Sy.

२४. विवासन प्रकाशने सति Sy.

२५. सङ्गमेमहि is suggested for संगतेमभिहि ॥ सङ्गच्छेमहि Sy.

२६. अन्नेन is suggested for अने ।

प्रति॑ त्वा दुहितर्दिव उषो॑ जी॒रा अ॑भुत्स्महि ।
या वह॑सि पु॒रु स्पा॒र्हं व॑नन्वति॒ रत्नं॒ न दा॒शुषे॒ मयः॑ ॥ ३ ॥

प्रति त्वा[1] । प्रतिबोधयामः[2] । त्वाम् । दिवः । दुहितः[3] ! उषः[4] ! क्षिप्राः[5] । या त्वम्[6] । वहसि[7] । बहु । स्पृहणीयम्[8] । धनवति[9] ! रत्नम्[10] । यजमाना[11] । सुखभयं[12] प्रयच्छसीति[13] ।

उ॒च्छन्ती॒ या कृ॒णोषि॑ मं॒हना॑ महि प्र॒ख्यै दे॑वि॒ स्व॑र्दृ॒शे ।
तस्या॑स्ते रत्न॒भाज॑ ईमहे व॒यं स्याम॑ मा॒तुर्न सू॒नवः॑ ॥ ४ ॥

उच्छन्ती[14] । व्युच्छन्ती[15] । या । करोषि । महत्त्वेन[16] । महति ! सर्व भूतदर्शनाय[17] । प्रकथनाय च[18] तमसोऽपनयनाय[19] । तस्याः । तव[20] । रत्नप्रापणानि[21] । याचामहे[22] । तथा कुर्वाणाः । स्याम[23] । मातुः[24] । इव । पुत्रास्तव[25] प्रियाः[26] ।

---

१. प्रति is written twice in A., M.

२. प्रतिबोद्धारो भवेम Sy.

३. हे अन्तरिक्षाज्जायमाने ! Sy.

४. हे उषोदेवते ! Sy.

५. क्षिप्रकारिणो वयम् Sy.

६. त्वास् A.

७. प्रापयसि Sy.

८. स्पृहणीयं धनम् Sy.

९. ०वती M. वननं सम्भजनं सम्भक्तव्यं धनं वा तद्वति ! Sy.

१०. रत्न A. रमणीयं धनम् Sy.

११. यजमानाय is suggested for यजमाना ॥ हवींषि दत्तवते यजमानाय Sy.

१२. मयं सुखं is suggested for सुखभयं ।

१३. VM. ignores न ॥ इव Sy.

१४. उच्छति A.

१५. तमांसि वर्जयन्ती Sy.

१६. महिम्ना युक्ता । यद्वा 'मंहतिर्दानकर्मा' दानयुक्ता वा Sy.

१७. सर्वभूत० is suggested for सर्वं भूत० ॥ VM. explains स्वः and दृशे together as सर्वभूतदर्शनाय. But Sy. explains स्वः and दृशे separately स्वः as सर्वं जगत् and दृशे as दर्शनार्थम्.

१८. ०नाय च A. प्रबोधनार्थम् Sy.

१९. ०पयनय० A.

२०. तव प्रियतमाः Sy.

२१. प्रावरनानि A. रमणीयानां धनानां भाजयित्र्याः सेवयित्र्याः Sy.

२२. याचामहे, किम् ? रत्नभ ज इति समभिव्याहाराद्रत्नानीति गम्यते Sy.

२३. भवेम Sy.

२४. जनन्याः Sy.

२५. पुत्राः प्रियतमा भवन्ति तद्वत् Sy.

२६. VM. ignores देवि ॥ हे देवि ! दानादिगुणयुक्ते ! उषोदेवते ! Sy.

तच्चित्रं राध आ भरोषो यद्दीर्घश्रुत्तमम् ।
यत्ते दिवो दुहितर्मर्तभोजनं तद्रास्व भुनजामहै ॥ ५ ॥

तच्चित्रम् । तत् । चापनीयम्[1] । धनम् । आहर[2] । ओ[3] ! यत् । अत्यन्तं दीर्घकालं श्रूयते[4] । यच्च । ते[5] । दिवः । दुहितः[6] ! मनुष्याणा भोजनसाधनं[7] भवति । तदस्मभ्यम् । प्रयच्छ । तद्वयं भुनजामहै[8] ।

श्रवः सूरिभ्यो अमृतं वसुत्वनं वाजाँ अस्मभ्यं गोमतः ।
चोदयित्री मघोनः सूनृतावत्युषा उच्छदप स्रिधः ॥ ६ ॥

श्रवः सूरिभ्यः[9] । श्रवणीयम्[10] । स्तोतृभ्यः । अन्नम्[11] । वसुमत्त्वं[12] च । अस्मभ्यं च । अन्नानि । गोयुक्तानि[13] । चोदयित्री[14] । धनवतः[15] । शब्दवती[16] । उषाः । अवोच्छतु[17] । शत्रून्[18], प्रदापयत्वाढ्यानस्माकं धनम्, विनाशयतु च शत्रूनिति ।

VII. 82.

इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥ १ ॥

इन्द्रावरुणा[19] । इन्द्रावरुणौ[20] ! युवाम्[21] अस्माकम्[22] । यज्ञाय[23] । विशे दासभूतायै[24] । जनाय[25] च[26] पुत्राय

---

१. चावनी० A. चायनी० is suggested for चापनी० ।
२. आहार A. अस्मभ्यं प्रयच्छ Sy.
३. उषः ! is suggested for ओ ।
४. ०न्तद्दीर्घं का० A. देशकालयोर्विप्रकर्षेऽप्यतिशयेन श्रोतव्यम् Sy.
५. तव त्वया देयम् Sy. ६. ०तं M.
७. मर्तानां मनुष्याणां भोगयोग्यं यदन्नमस्ति Sy.
८. वयञ्च त्वद्दत्तं धनमन्नं चाभ्यवहरेम Sy.
९. हे उषः ! Sy. १०. यशो रास्वेत्यनुषङ्गः Sy. ११. मरणरहितं नित्यम् Sy.
१२. ०मत्यं M. वासकं वसुत्वयुक्तं वा Sy.
१३. बहुभिर्गोभिर्युक्तान् Sy. १४. प्रेरयित्री Sy.
१५. शिष्टः परोक्षकृतः हविष्मतो यजमानस्य Sy.
१६. प्रियसत्यात्मिका वाक्सूनृता । तद्वती Sy.
१७. अपोच्छ० is suggested for अवोच्छ० अपगमयतु Sy. १८. शोषकान् शत्रून् Sy.
१९ 'इन्द्रावरुणा' इति दशर्चं द्वादशं सूक्तं वसिष्ठस्यार्षं जागतम् । इदमादीनि चत्वारि सूक्तानीन्द्रावरुणदेवतानि । तथा चानुक्रान्तम्—'इन्द्रावरुणा दशैन्द्रावरुणं ह जागतं तु' (KSA. 38. 82. p. 26)इति । तृतीये सवन उक्थ्ये प्रशास्तुः शस्त्र एतत्सूक्तम् । सूत्रितञ्च—'इन्द्रावरुणा युवमा वां राजानौ' (ASS 6. 1.) इति Sy. वसिष्ठस्येदमार्षम् Dur. वसिष्ठस्य SKN. २०. ०णा A.
२१. युवम् A. २२. अस्मभ्यम् BB.
२३. यज्ञानुष्ठानार्थम् Sy. दर्शपूर्णमासादियज्ञनिर्वहणं यथा भवेत् BB.
२४. ०तायै M. ०ताय is suggested for ०तायै ॥ निवेशयित्रे परिचारकाय Sy. यथा पुत्रादिका प्रजा मां न निवर्तते BB. मनुष्याय SKN.
२५. पुत्रपौत्रादिलक्षणाय Sy. अन्यस्मै सुहृदादये स यथा मां न त्यजेत् BB. सर्वस्मै मनुष्यजनाय, अस्मत्सर्वकामाय Dur. पुत्रादिकाय जनाय च परिचारकाय SKN.
२६. च is missing in A.

च । महत् । सुखम्[१] । दत्त[२] । दीर्घप्रततयज्ञम्[३] । अतिहिनस्ति[४] । यः । तादृशान्[५] दुर्बुद्धीन्[६] । वयम् । सङ्ग्रामेषु[७] । जयेम[८] ।

---

१. गृहं सुखं वा Sy. पापयक्ष्माभावप्रभवम् BB.

२. दत्तम् is suggested for दत्त ॥ प्रयच्छतम् Sy.

३. दीर्घप्रततयज्ञमस्मदीयं जनम् Sy. यदुक्तमध्वराद्यर्थमिति तदेव प्रकटीकरोति-दीर्घप्रयज्युर्दीर्घकालं यावज्जीवं प्रकर्षेणात्वतिपरत्या कर्तव्यो दर्शपूर्णमासादियज्ञो दीर्घप्रयज्युः । यजेरौणादिको युप्रत्ययः । दासीभारादिर्द्रष्टव्यः । वचनव्यत्ययो वा । दीर्घकालकर्तव्या दर्शपूर्णमासादयः प्रकृष्टा यागा येषां तानस्मान् BB. नित्ययायजूकम्, अग्निहोत्रिणम् Dur. दीर्घप्रवृत्तयज्ञमग्निहोत्रसमयादिकमस्माकम् SKN.

४. अतिजिघांसति Sy. अतिक्रम्य यो वनुष्यत्यभिभवति पापयक्ष्मा ।...तं तावद् वयं जयेम न तेन वयं जीयेमहि BB. यो निहन्तुमिच्छति...एवमत्रापि प्रकरणाद् वनुष्यतिर्हन्त्यर्थः । अल्पप्रयोगविषयत्वाद् भाष्यकारेण निगमद्वयं पठितम् Dur. अतीत्यव्ययमभीत्येतस्य स्थाने । योऽभिवनुष्यति, अभिजिघांसति । यजमानविशेषणं चैतत् । दीर्घप्रततयज्ञं नित्यानामग्निहोत्रादीनां कर्मणां कर्तारं यजमानमभिवनुष्यति SKN.

५. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तम् SKN.

६. दुर्धियः, दुष्टाभिसन्धींस्ताञ्छत्रून् Sy. दुर्धियश्च BB. पापया धिया हि दीर्घप्रततयज्ञमभिजिघांसति ।...व्याख्यानप्रसक्तमुच्यते—'पापः पाताऽपेयानाम्' अपेयान्यलेह्यानि यानि तान्यसौ पिबति विषयप्रसक्त इत्यर्थः ।... पुनः-पुनः पापत्यमानः, तेनैव पापेन कर्मणा ।..नरकमेव प्रति पतत्यसौ । तस्माद्वा पापः Dur. दूढ्यो जयकर्मा तच्छब्दसामानाधिकरण्योपपत्तेर्विभक्तिविपरिणामः । दूढ्यं दुर्धीकं पापबुद्धिमित्यर्थः । निर्वचनप्रसक्तमाह—पापः पाता रक्षिताऽपेयानामरक्षितव्यानां त्याज्यानाम् । पिबतेर्वा कृत्यः।अपातव्यानां प्रतिषिद्धानां सुरादीनाम् । अकार्यमात्रोपलक्षणं चैतत् । अकार्याणां कर्तेत्यर्थः 'पापत्यमानः' अथवा विषयासक्त्याऽत्यर्थं पात्यमानः । अवाङेव अधो नरकमेव पतति प्रायश्चित्ताकरणाद् नोर्ध्वमिति पापः । अधोभावनिष्ठाकः पततेः पाप इत्यर्थः ।...अथवा किं न एतेनावाङ्-नाम्नेति, पापत्यतेरेव. पापो विहिताकरणात्. प्रतिषिद्धसेवनाच्च । नित्यमत्यर्थं श्रेयसः पततीति पततेर्यङ्लुगन्ताल् पचाद्यचि तलोपः । डप्रत्ययो वा छान्दसत्वात् । एवं पातेः पिबतेर्वा पापः SKN.

७. अभिभवेम Sy. जयेमेत्येव कैश्चिद् दुर्बुद्धिभिर्न वयं जीयेमहि । पृषोदरादित्वादभीष्टस्वररूपसिद्धिः BB.

८. वनुष्यतिर्हन्तिकर्मा । अनवगतसंस्कारो भवति । ....दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु । दूढ्यं दुर्धियं पापधियम् । पापः पाताऽपेयानाम् । पापत्यमानोऽवाङेव पततीति वा । पापत्यतेर्वा स्यात् N. 5. 2. SKN. II. 289.—290

This stanza=TS. 2.5. 12. 2.

**स॒म्राळ॒न्यः स्व॒राळ॒न्य उ॑च्यते वां म॒हान्ता॒विन्द्रा॒वरु॑णा म॒हाव॑सू ।**
**विश्वे॑ दे॒वासः॑ पर॒मे व्यो॑मनि॒ सं वा॒मोजो॑ वृषणा॒ सं बलं॑ दधुः ॥ २ ॥**

सम्राट्[1] । सम्राडिति[2] । अन्यः[3] । स्वराट्[4] । अन्यः[5] । उच्यते । युवयोः[6], सर्वेषां राजा[7] सम्राट् स्वयमेव राजन् स्वराडिति वरुणमाह[8] । महान्तौ[9] । इन्द्रावरुणौ ! महाधना[10] । विश्वे[11] । देवाः[12] । परमे[13] । स्थाने[13] स्थितयोः[14] । युवयोः[15] । सर्वे देवाः[16] । वलम्[17] । ओजश्च । सन्दधुः[18] । हे वृषणौ[19] ! इति ।

**अन्व॒पां खान्य॑तृ॒न्तमोज॒सा सूर्य॑मैरयतं दि॒वि प्र॒भुम् ।**
**इन्द्रा॑वरुणा॒ मदे॑ अ॒स्य मा॒यिनोऽपि॑न्वतम॒पितः॒ पिन्व॑तं॒ धियः॑ ॥ ३ ॥**

अन्वपाम्[20] । मेघस्थानामपाम्[21] । द्वाराणि[22] । वलेन । अन्वतृप्तम्[23] । दिवि[24] च । सूर्यम्[25] । आरोहयत[26]

---

१. द्वितीयः पादः परोक्षकृतः, शिष्टाः प्रत्यक्षकृताः Sy.

२. सम्यग्राजमान इति 'ता स॒म्राजा॑ घृ॒तासु॑ती' (RV. 2. 41. 6.) इत्यादिषु कीर्त्यते Sy.

३. एको वरुणः Sy.

४. स्वरा इन्यः A. स्वयमेवान्यनिरपेक्षयैव राजमान इति 'स्व॒राळिन्द्रो॒ दमे॑' (RV. 1. 61. 9.) इत्यादिषु कीर्त्यते Sy.

५. अन्य इन्द्रः Sy.

६. युवयोर्मध्ये Sy.

७. राज्ञाः A. राज्ञां M.

८. ०णा याह A. The passage सर्वेषा... माह seems to be the explanation of सम्राट् and स्वराट्. It should, therefore, immediately follow सम्राट् and स्वराट् ।

९. तथाविधाविन्द्रावरुणौ गुणैरधिकौ Sy.

१०. ०धनौ is suggested for ०धना ॥ महाधनौ च भवतः Sy.

११. सर्वे Sy.

१२. देवासः A.

१३. परमे व्योमन्युत्कृष्टे आकाशे Sy.

१४. स्थिलयोः A.

१५. युवाम् Sy.

१६. सर्वेः देवाः A. सर्वे देवाः seems to be unnecessary.

१७. बलं वृत्रवधादेः कार्यस्य हेतुभूतं सामर्थ्यं च युवाभ्यां च सन्दधुः समयोजयन् शरीरदार्ढ्याय Sy.

१८. तद्धेतुभूतं तदोज इत्युच्यते । स्मर्यते च । ओजः साष्टमी दशेति Sy.

१९. हे कामानां वर्षिताराविन्द्रावरुणौ ! Sy.

२०. ०न्ववाम् A.

२१. ०मवा A. उदकानाम् Sy.

२२. द्वाराणि वृत्रेण पिहितानि Sy.

२३. तृप्यन् M. ०तृन्तम् is suggested for ०तृप्तम् ॥ अन्वविध्यतम् । आवरकस्य वृत्रस्य वधेन वृष्टिप्रतिबन्धं निराकृतवन्ताविरयर्थः Sy.

२४. अन्तरिक्षे Sy.

२५. तथा सर्वस्य प्रेरकमादित्यम् Sy.

२६. अभ्यगमयतम् । स्वर्भानुनावृतं सूर्यं तद्वधेन प्रकाशितवन्ताविरयर्थः Sy.

प्रापयतम्। प्रभुम्[1]। इन्द्रावरुणौ[2] ! मदे[3]। अस्य[4] सोम[5]। प्रज्ञावतः[6]। परित उदकानि[7]। अपिन्वतं[8] च। कर्माण्यपि[9]। शब्दपरिच्चर्याय[10]।

**युवामिद्युत्सु पृतनासु वह्नयो युवां क्षेमस्य प्रसवे मितज्ञवः।**
**ईशाना वस्व उभयस्य कारव इन्द्रावरुणा सुहवा हवामहे ॥ ४ ॥**

युवामित्। युवाम्। एव। युद्धेषु। सेनासु[11] च। वोढारः[12]। हवामहे[13]। युवामेव[14]। क्षेमस्य[15]। प्रसवनिमित्त[16]। मिवजानुका[17] अभिगच्छन्तो भवामहे[18]। ईशाना[19]। दिव्यस्य च पार्थिवस्य। स्तोतारः[20]। इन्द्रावरुणौ ! स्वाह्वाना[21] भवामहे[22][23]।

**इन्द्रावरुणा यदिमानि चक्रथुर्विश्वा जातानि भुवनस्य मज्मना।**
**क्षेमेण मित्रो वरुणं दुवस्यति मरुद्भिरुग्रः शुभमन्य ईयते ॥ ५ ॥**

इन्द्रावरुणा। इन्द्रावरुणौ ! यत्[24]। इमानि[25]। चक्रतुः[26]। विश्वान्यपि[27]। जातानि[28]। भुवनस्यास्य[29]। बलेन[30]। तयोरेको[31] वरुणस्य। क्षेमार्थम्[32]। मित्रो देवस्तम्। परिचरति[33]। मरुद्भिः[34]। उद्गूर्णः[35]। कल्याणम्[36]। अन्य इन्द्रः। गच्छति[37]।

---

१. प्रभूतं सन्तम् Sy.
२. ॰न्द्रव॰ A. ३. हर्षे सति Sy.
४. अस्त्य A. सोमस्य पानेन Sy.
५. स्तोमः M. सोमस्य is suggested for सोम।
६. प्रज्ञाकरस्य Sy. ७. जलरहिता नदीः Sy.
८. तथा च निवित्पदमाम्नायते 'अस्य मदे जरितरिन्द्रोऽजिन्वदजुवोऽपिन्वदपितः' इति Sy.
९. अस्माभिरनुष्ठितानि कर्माणि Sy.
१०. The reading is doubtful. सिञ्चतम् फलेन पूरयतम् Sy. ११. शत्रुसेनासु रक्षणार्थम् Sy. १२. हविषां स्तोत्राणां वा वोढार ऋत्विजः Sy. १३. भवा॰ M. आह्वयन्ति Sy. १४. युव॰ A. १५. रक्षणस्य Sy.
१६. निमित्तम् is suggested for ॰मित्त। उत्पादने निमित्तभूते सति Sy.
१७. मितजा॰ is suggested for ॰मिव जा ॥ सङ्कुचितजानुका अङ्गिरसोऽपि Sy.
१८. हवा॰ is suggested for भवा॰ ॥ हवन्ते Sy. १९. ईश्वरौ Sy.
२०. स्तोतारो वयमपि Sy.
२१. स्वा॰ A. सुखेन ह्वातव्यौ Sy.
२२. हवा॰ is suggested for भवा॰ ॥ आह्वयामहे Sy. २३. VM. ignores वस्वः ॥ वस्वो वसुनो धनस्य Sy.
२४. यद्यौ युवाम् Sy. २५. परिदृश्यमानानि Sy.
२६. कृतवन्तौ Sy. २७. सर्वाणि Sy.
२८. जातिमन्ति भूतजातानि Sy.
२९. लोकस्य सम्बन्धीनि Sy.
३०. न is written twice in M. आत्मीयेन बलेन Sy. ३१. युवयोर्मध्ये एकं वरुणम् Sy.
३२. रक्षणहेतुना Sy. ३३. मित्रावरुणौ हि परस्परं प्राप्तसख्यौ। अत एव सहचरौ दृश्येते Sy. ३४. रुद्भिः A. मरुद्गणैः सार्धम् Sy.
३५. उद्गूर्णबलः सन् Sy. ३६. शोभनमलङ्कारम् Sy. ३७. प्राप्नोति। यद्वा मरुद्भिर्मध्यस्थानैर्देवगणैः सार्धमुग्र ओजस्वीन्द्रः शुभमुदकमीयते प्रेरयति Sy.

**म॒हे शु॒ल्काय॒ वरु॑णस्य॒ नु त्वि॒ष ओजो॑ मिमाते ध्रु॒वम॑स्य॒ यत्स्वम् ।
अजा॑मिम॒न्यः श्नथय॑न्त॒माति॑रद्द॒भ्रेभि॑र॒न्यः प्र वृ॑णोति॒ भूय॑सः ॥ ६ ॥**

महे । महते । बन्धनाय[१] । वरुणस्य[२] । क्षिप्रम् । दीप्ताय[३] । बलम् । उपबृंहितं कुरु[४] कुरुत[५]मिन्द्रा-वरुणौ । यत्[६] । अस्य[७] वरुणस्य । ध्रुवम्[८] । स्वभूतं[९] भवति बलं पापकृतां[१०] बन्धनाय वरुणबलमिन्द्रश्चोपबृंहयती-[११]त्यर्थः । इन्द्रावरुणयोरेते[१२] । अजामिमबन्धुम् । व्रतानि[१३] श्नथयन्तम्[१४] । आति[१५], तरतिर्विनाशकर्मा[१६], विनाशयति[१७] । स्वल्पैः[१८] । अन्य उपायैः[१९] । प्रवारयति[२०] । बहून् शत्रून् दभूतिश्चित्[२१] समृताहंसि भूयस इत्युक्तम् ।

**न तमंहो॒ न दु॑रि॒तानि॒ मर्त्य॒मिन्द्रा॑वरुणा॒ न तपः॒ कुत॑श्च॒न ।
यस्य॑ देवा॒ गच्छ॑थो वी॒थो अ॑ध्व॒रं न तं मर्त॑स्य नशते॒ परि॑ह्वृतिः ॥ ७ ॥**

न तमंहः । न । तम् । अंहः[२२] । न च[२३] । दुरितानि[२४] । मर्त्यम्[२५] । हे इन्द्रावरुणौ ! नावि[२६] । तावक-मन्यत्[२७] । कुतः[२८] । चिदागच्छति । यस्य । देवौ[२९] ! अभिगच्छथ[३०] । कामयेथे[३१] च । यज्ञम् । न च । मनुष्यस्य । व्याप्नोति[३२] । परिबाधा[३३][३४] ।

---

१. धनाय । ईदृशस्य धनस्य लाभार्थम् Sy.
२. उपलक्षणमेतत् । इन्द्रस्य वरुणस्य च Sy.
३. दीप्त्यर्थम् Sy. ४. कुरु is redundant.
५. कुरु is written twice in A. कुरुत M. स्तोत्रेण निर्मिमाते यजमानपत्न्यौ । स्तोत्रेण हि बलं जायते Sy.
६. यत् । अस्य is written twice in A.
७. अस्येन्द्रस्य वरुणस्य च Sy. ८. नित्यम् Sy.
९. स्वं स्वकीयमसाधारणं यदोजो विद्यते तदोजो मिमाते इत्यन्वयः Sy.
१०. वापकृ० A. ११. ०मिन्द इचो० A.
१२. इन्द्रावरुणयोरेते seems to be the explanation of अन्यः therefore इन्द्रावरुणयोरेकः is suggested for इन्द्रावरुणयोरेते ।
१३. अस्तुवन्तम् Sy. १४. वृता० A.
१५. हिंसन्तं कर्माण्यकुर्वन्तमस्तोतारमयजमानम् । Sy.
१६. आतिरति is suggested for आति । अभिहन्ति Sy.
१७. ०शनक० A. १८. एक इन्द्रः Sy.
१९. उपायैः goes with स्वल्पैः ।
२०. प्रवारयति । बहून् । शत्रून् दभूतिश्च is missing in M. प्रकर्षेणावृतान् करोति । यद्वा...प्रवरानुत्कृष्टान् करोति Sy.
२१. बहुतराञ्छत्रून् यद्वा भूयसो यजमानान् Sy.
२२. पापम् Sy.
२३. न व्याप्नोति Sy.
२४. दुर्गमनानि पापफलानि च प्राप्नुवन्ति Sy.
२५. मनुष्यम् Sy.
२६. नापि is suggested for नावि ।
२७. तावकम० M. तापक० is suggested for तावक० ॥ A. सन्तापश्च तं न प्राप्नोति Sy.
२८. कस्मादपि निमित्तात् Sy.
२९. हे दानादिगुणयुक्तौ ! इन्द्रावरुणौ ! Sy.
३०. ०थं A. ०थः is suggested for ०थ ॥ प्राप्नुथः Sy.
३१. ०यैथे A. कामयेथे च यस्य हवींषि Sy.
३२. उक्तप्रकारेण न प्राप्नोति Sy.
३३. ०धम् A.
३४. VM. ignores तम् ॥ तं मनुष्यम् Sy.

**अर्वाङ्नरा दैव्येनावसा गतं शृणुतं हवं यदि मे जुजोषथः ।**
**युवोर्हि सख्यमुत वा यदाप्यं मार्डीकमिन्द्रावरुणा नि यंच्छतम् ॥ ८ ॥**

अर्वाङ्नरा[1] । अभिमुखम्[2] । आगच्छतम् । नरौ[3] ! देवयोर्युवयोरुचितेन[4] । रक्षणेन । शृणुतं च । ह्वानम्[5] । यदि । मे[6] । प्रीयेथे[7] । युवयोः । हि[8] । सख्यम्[9] । अपि । च । यत् । ज्ञातेयं[10] सह भवतस्तथा सति । सुखकरम्[11] । इन्द्रावरुणौ ! तदुभयमस्मासु कुरुतमिति[12] ।

**अस्माकमिन्द्रावरुणा भरेभरे पुरोयोधा भवतं कृष्ट्योजसा ।**
**यद्वां हवन्त उभये अध स्पृधि नरस्तोकस्य तनयस्य सातिषु ॥ ९ ॥**

अस्माकम्[13] । अस्माकम् । इन्द्रावरुणौ ! सङ्ग्रामे[14] । पुरो योद्धारौ । भवतम् । हे कर्षणशीलबलौ[15] ! तदा[16] । वाम्[17] । हवन्ते । उभये[18] सैनिकाः । सङ्ग्रामे । मनुष्याः[19] । पुत्रस्य[20] । तत्पुत्रस्य च । लाभेष्विति[21] [22] ।

**अस्मे इन्द्रो वरुणो मित्रो अर्यमा द्युम्नं यंच्छन्तु महि शर्म सप्रथः ।**
**अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥**

अस्मे । अस्मभ्यम् । इन्द्रादयः[23] । अन्नम्[24] । यच्छन्तु[25] । महच्च । सुखम्[26] । सर्वतः पृथुतमम्[27]

---

१. आर्वाजरा A.
२. अस्मदभिमुखम् Sy.
३. हे नेतारौ ! Sy.
४. From देवयोः onwards the rest of the commentary is missing in A. देवसम्बन्धिना Sy.
५. मदीयं स्तोत्रम् Sy.
६. मम Sy.
७. प्रियेथे M. मयि प्रीतिरस्ति चेत् युवाभ्यामागन्तव्यं मदीयं स्तोत्रं श्रोतव्यं च भवतीत्यर्थः Sy.
८. खलु Sy.
९. सखित्वम् Sy. १०. बान्धवम् Sy.
११. मृडीकस्य सुखस्य साधनम्, तदुभयम् Sy.
१२. अस्मभ्यं प्रयच्छतम् Sy.
१३. कम् A.
१४. सङ्ग्रामे सङ्ग्रामे Sy.
१५. हे शत्रूणां कर्षकमोजो बलं ययोस्तादृशौ ! हे इन्द्रावरुणौ ! Sy.
१६. यदा is suggested for तदा ॥ यद्यौ Sy.
१७. तावस्माकं पुरोयोधा भवतमित्यन्वयः Sy.
१८. उभयविधाः पूर्वकालीना इदानीन्तनाश्च Sy.
१९. नेतारः स्तोतारः Sy.
२०. पौत्रस्य Sy.
२१. सम्भजनीयेषु निमित्तभूतेषु Sy.
२२. VM. ignores अध ॥ अध अपि च Sy.
२३. इन्द्रोद० A. आदि refers to वरुणः मित्रः । अर्यमा ।
२४. द्योतमानं धनम् Sy.
२५. प्रयच्छन्तु Sy.
२६. गृहं च प्रयच्छन्तु Sy.
२७. सर्वतः पृथु विस्तीर्णम् Sy.

बाधकरहितम्[1]। ज्योतिः[2]। अदितेः[3]। यज्ञस्य[4] वर्धयित्र्या भवतु। देवस्य[5] च। सवितुः[6]। श्लोकमन्वहम्[7]। ब्रूमो[8] युवयोः प्रसादादिति।

VII. 83.

**युवां नरा पश्यमानास आप्यं प्राचा गव्यन्तः पृथुपर्शवो ययुः।**
**दासा च वृत्रा हतमार्याणि च सुदासमिन्द्रावरुणावसावतम्॥ १॥**

युवां नरा[9]। युवाम्[10]। नरौ[11]! पश्यमानाः[12]। ज्ञातेय[13] युवयोर्यज्ञार्थम्। प्राङ्मुखं[14] बर्हिराहर्तुम्। अगा[15] इच्छन्तः। पृथु पृथु[16] पशव आत्तपृथवश्च पशवः। यान्ति[17]। दासानुपक्षपयितॄन्[18]। वृत्राण्युपद्रवावान्[19]। च। आर्यैरपि कृतान्[20]। विनाशयतम्[21]। पैजवनं सुदासम्[22]। मित्रावरुणौ[23]! रक्षतम्[24][25]।

---

१. अहिंसकम् Sy.

२. तेजः Sy.

३. उदितेः A.
अदीनायाः देवमातुः Sy.

४. य is written twice in A.

५. दानादिगुणयुक्तस्य Sy.

६. सर्वस्य प्रेरकस्य Sy.

७. शोक० A.
स्तोत्रम् Sy.

८. जानीमः। कुर्म इत्यर्थः। यद्वा देवेन सवित्रा-स्मभ्यं देयं श्लोकं यशो मनामहे याचामहे Sy.

९. 'युवां नरः' इति दशर्चं त्रयोदशं सूक्तं वसिष्ठ-स्यार्षं जागतमैन्द्रावरुणम्। 'युवां नरा' इत्यनु-क्रान्तम् (KSA. 38. 83. p. 26.) आभि-प्लविकेषूक्थ्येषु स्तोमवृद्धौ प्रशास्तुरिदं सूक्त-मावापार्थम्। सूत्रितञ्च 'युवां नरा पुर्नषे वाम्' (ĀSS. 7. 9.) इति Sy.

१०. षष्ठ्यर्थे द्वितीया। युवयोः Sy.

११. हे नेतारौ! इन्द्रावरुणौ! Sy.

१२. पश्यन्तः is suggested for पश्यमानाः॥ युष्मद्बान्धवलाभार्थिनः Sy.

१३. ०यं is suggested for ०य

१४. प्राचीनम् Sy.

१५. आगच्छन्तः M. गा० is suggested for अगा०॥ गा आत्मन इच्छन्तो यजमानाः Sy.

१६. प्रथु प्रथिव पशव आक्त प्रथश्च पशवो A. The reading is doubtful. पृथुर्विस्तीर्णः पर्शुः पार्श्वास्थि येषां ते तथोक्ताः। विस्तीर्णा-श्वपर्शुहस्ताः सन्तः Sy.

१७. बर्हिराहरणार्थं गच्छन्ति। पर्श्वा हि बर्हिराच्छि-द्यते तथा च तैत्तिरीयकम् 'अश्वपर्श्वा बर्हि-राच्छयति' इति Sy.

१८. उपक्षपयितॄणि च Sy.

१९. उपद्रवान् is suggested for उपद्रवा-वान्॥ आवरकाणि शत्रुजातानि Sy.

२०. कर्मानुष्ठानपराणि च शत्रुजातानि Sy.

२१. हिंस्तम् Sy.

२२. वैजवनं A. अस्मद्याज्यमेतत्संज्ञं राजानम् Sy.

२३. इन्द्राव० is suggested for मित्राव०।

२४. आगच्छतम् Sy.

२५. VM. ignores च and अवसा॥ अवसा रक्षणेन सार्धम् Sy.

यत्रा नरः समयन्ते कृतध्वजो यस्मिन्नाजा भवति किं चन प्रियम् ।
यत्रा भयन्ते भुवना स्वर्दृशस्तत्रा न इन्द्रावरुणाधि वोचतम् ॥ २ ॥

यत्रा नरः । यत्र[1] । मनुष्याः । सङ्गच्छन्ते[2] । उच्छ्रितपताका ध्वजतेरुच्छ्रयकर्मणः[3][4] । यस्मिन् । सङ्ग्रामे[5] । भवति[6] । यत्किञ्चिदपि[7] मनुष्यस्याभिमतमन्नादिकम्[8] । यत्र[9] । बिभ्यति । भूतानि[10] । स्वर्दृशश्च[11] देवा हिंसारम्भावाद्भयम्[12] । तत्र[13] । अस्माकम्[14] । इन्द्रावरुणौ ! अधिवोचतमेत[15] एव राजं जयन्त्विति[16] ।

सं भूम्या अन्ता ध्वसिरा अदृक्षतेन्द्रावरुणा दिवि घोष आरुहत् ।
अस्थुर्जनानामुप मामरातयोऽर्वागवसा हवनश्रुता गतम् ॥ ३ ॥

सं भूम्याः । भूम्याः । अन्ताः[17] । ध्वंसनशीलाः[18] । सन्दृश्यन्ते ध्वंसयन्ति चतस्रो दिशः सैनिकाधिष्ठिताः[19] । तथेन्द्रावरुणौ[20] ! दिव[21] । सैनिकानां शब्दः । आरोहणं करोति[22] । जनानाम्[23] । अरातयश्च[24] । माम् । उअवतिष्ठन्ति[25] । अभिमुखम्[26] । रक्षणार्थम् । हवनश्रुतौ[27] । आगच्छतम् ।

इन्द्रावरुणा वधनाभिरप्रति भेदं वन्वन्ता प्र सुदासमावतम् ।
ब्रह्माण्येषां शृणुतं हवीमनि सत्या तृत्सूनामभवत्पुरोहितिः ॥ ४ ॥

इन्द्रावरुणा । हे इन्द्रावरुणौ ! वधैः[28] । अप्रतिगतशत्रुकम्[29] । भेत्तारं[30] कुलस्य चाद्यमानम् । हिंसन्तौ ।

---

१. यस्मिन् सङ्ग्रामे Sy.
२. ०च्छन्तः A. युद्धार्थं सङ्गच्छन्ते Sy.
३. उच्छ्रितध्वजाः Sy.
४. ०यतक० A.
५. युद्धे Sy.
६. (न) भवति, अपि तु सर्वं दुष्करं भवति Sy.
७. चनेति निपातद्वयसमुदायो विभज्य योजनीयः । किञ्च किमपि Sy.
८. अनुकूलम् Sy.
९. युद्धे Sy.
१०. भुवनानि भूतजातानि Sy.
११. शरीरपातादूर्ध्वं स्वर्गस्य द्रष्टारो वीराश्च Sy.
१२. ०सम्भया० is suggested for ०सम्भावा० ।
१३. तादृशे सङ्ग्रामे Sy.
१४. अस्मान् Sy.
१५. अस्मत्पक्षपातवचनौ भवतम् Sy.
१६. एतमेवराजं जयन्त्विति M. राजानं is suggested for राजम् ।
१७. पर्यन्ता Sy. १८. सैनिकैर्ध्वस्ताः Sy.
१९. ०ता तथा A. २०. इन्द्रो वरुणो M.
२१. Missing in M. दिवि is suggested for दिव ॥ द्युलोके Sy.
२२. आरूढोऽभूत् Sy.
२३. धना० M. अस्मदीयानां भटानाम् Sy.
२४. ०रताय० A. शत्रवः Sy.
२५. उपति० is suggested for उ अव ति० ॥ उपस्थिताः Sy.
२६. अस्मदभिमुखम् Sy.
२७. ०नः श्रुतौ A. एवं प्रवर्तमानेऽस्मिन् युद्धे हे आह्वानशीलौ ! इन्द्रावरुणौ ! Sy.
२८. वधकरैरायुधैः Sy.
२९. अप्राप्तम् Sy.
३०. भेदमेतत्संज्ञं सुदासः शत्रुम् Sy.

प्रावतम्[1]। सुदासम्[2]। ब्रह्माणि[3] च। एषाम्[4]। शृणुतम्[5]। हवने[6]। सत्यभरा[7]। भवतु। तृत्सूनाम्[8]। पुरोहिति-[9]रिति च यदस्मानेते पुरोदधुस्तृत्सवस्तत्[10] फलत्वेषामिति[11]।

**इन्द्रावरुणावभ्या तपन्ति माघान्यर्यो वनुषामरातयः।**
**युवं हि वस्वं उभयस्य राजथोऽधं स्मा नोऽवतं पार्ये दिवि ॥ ५ ॥**

इन्द्रावरुणौ। हे इन्द्रावरुणौ ! माम्। अभ्यातपन्ति[12]। शत्रोः[13]। अघान्याहन्तॄणि[14] प्रहरणानि[15] हिंसितां[16] शत्रूणाम्। करादीनामप्रदानानि[17]। युवाम्। हि[18]। दिव्यस्य पार्थिवस्य च। धनस्य। राजथः[19]। तथा सति[20]। अस्मान्। रक्षत[21]। पार्ये[22]। दिवसेऽन्तिमे[23] सङ्ग्रामस्याह्नि[24]।

**युवां हवन्त उभयास आजिष्विन्द्रं च वस्वो वरुणं च सातये।**
**यत्र राजभिर्दशभिर्निबाधितं प्र सुदासमावतं तृत्सुभिः सह ॥ ६ ॥**

युवाम्[25]। युवाम्। हवन्ते[26]। उभये[27] सैनिकाः। सङ्ग्रामेषु। इन्द्रम्। वरुणम्[28]। च[29]। धनस्य।

१. प्रापतम् A. प्रकर्षेणारक्षतम् Sy.
२. शोभनं ददातीति सुदाः। एतत्संज्ञम। मम याज्यं राजानम् Sy.
३. स्तोत्राणि Sy.
४. एषाव A. तृत्सूनाम् Sy.
५. अशृणुतम् Sy.
६. आहूयन्तेऽस्मिन् युद्धार्थं परस्परमिति हवीमा सङ्ग्रामस्तस्मिन् Sy.
७. सत्यफलम् Sy.
८. एतत्संज्ञानां मम याज्यानाम् Sy.
९. ति is missing in A: मम पुरोधानम् Sy.
१०. ०दधुस्तृ० A.
११. तेषु यन्मम पौरोहित्यं तत् सफलं जातमित्यर्थः Sy.
१२. अह्यात० A. अभितो बाधन्ते Sy.
१३. अरेः शत्रोः सम्बन्धीनि Sy.
१४. न्या is written twice in A.
१५. ०रिणाभिः A. आयुधानि Sy.
१६. missing in M. हिंसतां is suggested for हिंसितां ॥ हिंसकानां मध्ये Sy.
१७. अभिगमनशीलाः शत्रवः Sy.
१८. खलु Sy.
१९. ईशाथे। राजतिरैश्वर्यकर्मा Sy.
२०. अतः कारणात् Sy.
२१. रक्षतम् is suggested for रक्षत।
२२. पार्ये दिवसे ऽन्तिमे is missing in M. तरणीये Sy.
२३. युद्धदिने Sy.
२४. VM ignores स्म।
२५. युवा A.
२६. हुन्ते A. आह्वयन्ते Sy.
२७. उभयविधाः सुदाःसंज्ञो राजा तत्सहायभूतास्तृत्सवश्चैवं द्विप्रकारा जनाः Sy.
२८. वर A.
२९. युवाम् Sy.

भजनाय[1] । यस्मिन्[2] सङ्ग्रामे । शत्रुभिर्दर्शनी[3] । राजभिः[4] । नितरां बाधितम्[5] । प्रापतम्[6] । सुदासं राजानम् । सर्वैस्तृत्सुभिः । सह[7] ।

**दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः ।**
**सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन्देवहूतिषु ॥ ७ ॥**

दश राजानः[8] । दश[9] । राजानः[10] । सङ्गताः[11] । अयष्टारः[12] । सुदासम्[13] । इन्द्रावरुणौ ! न । युयुधु-र्भवद्भ्यां परिगृहीतम्[14] । सत्या[15] । नृणम्[16] । हविषि सीदताम्[17] । अपस्तुतिः[18] फलं प्रयच्छति । एषाम्[19] । प्रादुर्भवन्ति[20] । देवानमाह्वानेषु[21] । देवास्त्वाहूतास्तानुपगच्छन्ति[22] ।

**दाशराज्ञे परियत्ताय विश्वतः सुदास इन्द्रावरुणावशिक्षतम् ।**
**श्वित्यञ्चो यत्र नमसा कपर्दिनो धिया धीवन्तो असपन्त तृत्सवः ॥ ८ ॥**

दाशराज्ञे[23] । दाशराज्ञे । परितो[24] युद्धार्थं यतमानाय[25] । सर्वत एव । सुदासे[26] । हे इन्द्रावरुणौ ! बलं

---

१. सम्भजनार्थम् Sy.
२. येष्वाजिषु Sy.
३. दशभिः । राजभिः । नितरां is missing in M. ०र्दशभिः is suggested for दर्शनी ॥ दशसंख्याकैः Sy.
४. शत्रुभूतैर्नृपैः Sy.
५. बाधिकम् A. हिंसितम् Sy.
६. प्रावतम् is suggested for प्रापतं ॥ प्रकर्षेणारक्षतम् Sy.
७. सह वर्तमानम् Sy.
८. दश राजानः is missing in A.
९. दशसंख्याकाः Sy.
१०. सुदासः शत्रवः Sy.
११. परस्परं समवेताः Sy.
१२. अयजमाना एवम्भूतास्ते Sy.
१३. एतत्संज्ञमेकमपि राजानम् Sy.
१४. सम्प्रजहुः युवाभ्यामनुगृहीतं तं प्रहर्तुं न शेकुः Sy.
१५. सफलाभूत् Sy.
१६. नृणाम् is suggested for नृणं ॥ यज्ञस्य नेतॄणाम् Sy.
१७. अद्मन्यन्ने हविषि सीदन्तीत्यद्मसद ऋत्विजः । हविर्भिर्युक्तानाम् Sy.
१८. अवस्तु० A. उपस्तु० is suggested for अपस्तु० ॥ स्तोत्रम् Sy.
१९. एवां एवा A.
२०. युष्मदनुग्रहात् प्रादुर्भवन्ति Sy.
२१. देवाना० is suggested for देवान० ॥ अपि चैषां देवहूतिषु देवा हूयन्ते एष्विति देवहूतयो यज्ञाः । तेषु Sy.
२२. सर्वे च देवाः Sy.
२३. दश राज्ञे M. दशशब्दस्य छान्दसो दीर्घः । विभक्तिव्यत्ययः । दशभी राजभिः शत्रुभूतैः Sy. २४. परीतो M.
२५. परिवेष्टिताय Sy.
२६. राज्ञे Sy.

प्रायच्छतम् । इवेतिमानमञ्चन्तः[1] । यत्र[2] । हविषा सह[3] । कपर्दिनः[4] । कर्मणा[5] । कर्मवन्तः[6] । देवानस्पृशन्[7] । तृत्सवश्च[8] 'त्यञ्चो[9] मा दक्षिणतः[10] कपर्दी' इत्युक्तम् ।

उत्तरा निगदसिद्धेति—

वृ॒त्राण्य॒न्यः स॑मि॒थेषु॒ जिघ्न॑ते व्र॒तान्य॒न्यो अ॒भि र॑क्षते॒ सदा॑ ।
हवा॑महे वां वृषणा सुवृ॒क्तिभि॑र॒स्मे इ॑न्द्रावरुणा॒ शर्म॑ यच्छतम् ॥ ९ ॥

[वृत्राण्यन्यः[11]]

अ॒स्मे इन्द्रो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा द्यु॒म्नं य॑च्छन्तु॒ महि॒ शर्म॑ स॒प्रथः॑ ।
अ॒व॒ध्रं ज्योति॒रदि॑तेॠता॒वृधो॑ दे॒वस्य॒ श्लोकं॑ सवि॒तुर्म॑नामहे ॥ १० ॥

[अस्मे इन्द्रः[12]]

---

१. इवेतिमानां म० A. श्वेतिमा० is suggested for इवेतिमा० ॥ श्वितं श्वैत्यं नैर्मल्यमञ्चन्तो गच्छन्तः Sy.

२. तस्मिन् देशे Sy.

३. हविर्लक्षणेनान्नेन Sy.

४. जटिलाः Sy.　　५. स्तुत्या Sy.

६. कर्मभिर्युक्ताः Sy.

७. पर्यचरन् । तस्मिन् देशे युवां तस्मै राज्ञे बलम् प्रायच्छतमित्यर्थः Sy.

८. त्यृत्स० M. वसिष्ठशिष्या एतत्संज्ञा ऋत्विजः Sy.

९. श्वित्यञ्चो is suggested.

१०. ०तः स्कप० A.

११. The *pratīka* is supplied by the Editor. Sy. explains this stanza in the following manner :— हे इन्द्रावरुणौ ! युवयोरन्य एक इन्द्रो वृत्राणि शत्रून् समिथेषु सङ्ग्रामेषु जिघ्नते हन्ति । अन्य एको वरुणः सदा सर्वदा व्रतानि कर्माण्यभि रक्षते । अभितः सर्वतो रक्षति । हे वृषणा ! कामानां वर्षितारौ ! इन्द्रावरुणौ ! तथाविधौ ! वां युवां सुवृक्तिभिः सुप्रवृत्ताभिः स्तुतिभिर्हवामहे । आह्वयामहे । आहूतौ च युवामस्मे अस्मभ्यं शर्म सुखं यच्छतम् । दत्तम् Sy.

१२. The *pratīka* is supplied by the Editor. This stanza has already been explained. See RV. VII. 82. 10. Sy. explains this stanza in the following manner :— व्याख्यातेयम् । अक्षरार्थस्तु-इन्द्रादयोऽस्मभ्यं द्योतमानं धनं प्रयच्छन्तु सर्वतो विस्तीर्णं महद् गृहं च । यज्ञस्य वर्धयित्र्या अदीनाया देवमातुस्तेजश्चास्माकमबाधकं भवतु । वयञ्च प्रेरकस्य देवस्य स्तोत्रं मनीमहे कुर्महे ।

VII. 84.

**आ वां राजानावध्वरे ववृत्यां हव्येभिरिन्द्रावरुणा नमोभिः ।**
**प्र वां घृताची बाह्वोर्दधाना परि त्मना विषुरूपा जिगाति ॥ १ ॥**

आ[1] वाम् । आवर्तयामि । वाम्[2] । राजानौ[3] । यज्ञे[4] । हव्यैः[5] । नमस्कारैश्च[6] । इन्द्रावरुणौ ! परि-गच्छति[7] । वा[8] । जुहूः[9] । बाह्वौ[10] । ध्रियमाणा[11] । स्वयमेव । नानाविधैर्हविर्भिर्नानारूपा[12] ।[13]

**युवो राष्ट्रं बृहदिन्वति द्यौर्यौ सेतृभिररज्जुभिः सिनीथः ।**
**परि नो हेळो वरुणस्य वृज्या उरुं न इन्द्रः कृणवदु लोकम् ॥ २ ॥**

युवोः[14] । युवयोः[15] । महत् । राष्ट्रम्[16] । द्यौः[17] । वर्षेण प्रीणयति[18] । यौ युवाम् । रज्जुवर्जितैः[19] । सेतु-भिर्बन्धकैः[20] । बध्नीथः[21] पापकृतस्ते हि रोगादिनाभिभूयन्ते । वरुणस्य[22] । क्रोधः । अस्मान्[23] । वर्जयतु[24] । विस्तीर्णम् । लोकम्[25] । अस्माकमस्माकम्[26] । इन्द्रः । च । करोतु[27] ।

---

१. 'आ वाम्' इति पञ्चर्चं चतुर्दशं सूक्तं वासिष्ठं त्रैष्टुभमैन्द्रावरुणम् । अनुक्रान्तञ्च—'आ वां पञ्च' (KSA. 38. 84. p. 26.) इति । उक्थ्ये तृतीयसवने । मैत्रावरुणशस्त्र इदं सूक्तम् । सूत्रितञ्च—'आ वां राजानावि द्रावरुणा मधुमत्तमस्येति याज्या' (ĀSS. 6. 1.) इति Sy.

२. युवाम् Sy.

३ ०नो M. हे राजमानौ ! ईश्वरौ ! वा Sy.

४. हिंसारहितेऽस्मिन् यागे Sy.

५. हविर्भिः Sy.

६. स्तोत्रैश्च Sy.

७. अभिप्रगच्छति Sy.

८. वाम् is suggested for वा ।

९. जुहूः A. घृतमञ्चती जुहूः Sy.

१०. वो M. बाह्वोः is suggested for बाह्वो ॥ हस्तयोः Sy.

११. ध्रीय० A. धार्यमाणा Sy.

१२. रूप्यत इति रूपं हविः । विविधहविर्युक्ता । यद्वा विषुरूपा नानाविधरूपौ वामिति योज्यम् Sy.

१३. VM. ignores प्र ।

१४. हे इन्द्रावरुणौ ! Sy

१५. युवोः A.

१६. राज्यम् Sy

१७. त्यौः A. द्युलोकरूपम् Sy.

१८. वृष्ट्या सर्वान् प्रीणयति Sy.

१९. ०तैः A. रज्जुरहितैः रोगादिभिः Sy.

२०. ०भिबबन्ध० A. सेतृभि० is suggested for सेतुभि० ॥ 'षिञ् बन्धने' इति धातुः Sy.

२१. बबध्नीयः A.

२२. तयोर्मध्ये वारयितुर्देवस्य Sy.

२३. अस्मात् A.

२४. परिवृणक्तु । परित्यज्यान्यत्र गच्छतु Sy.

२५. स्थानम् Sy.

२६. One अस्माकम् is redundant.

२७. VM. ignores परि.

कृतं नो॑ य॒ज्ञं वि॒दथे॑षु॒ चारुं॑ कृ॒तं ब्रह्मा॑णि सू॒रिषु॑ प्रश॒स्ता ।
उपो॑ र॒यिर्दे॒वजू॑तो न एतु॒ प्र ण॑ः स्पा॒र्हाभि॑रू॒तिभि॑स्तिरेतम् ॥ ३ ॥

कृतं[1] नः । कुरुतम् । अस्माकम् । यज्ञम् । गृहेषु[2] । चारुम्[3] । कुरुतं च । स्तोत्राणि[4] । स्तोतृषु[5] । प्रशस्ता[6] हि । उपगच्छतु[7] । अस्मान् । रयिः[8] । देवप्रेरितः[9] । प्रवर्धयतम्[10] । अस्मान्[11] । स्पृहणीयैः[12] । रक्षणैः[13] ।

अ॒स्मे इ॑न्द्रावरुणा वि॒श्ववा॑रं र॒यिं ध॑त्तं॒ वसु॑मन्तं पुरु॒क्षुम् ।
प्र य आ॑दि॒त्यो अनृ॑ता मि॒नात्यमि॑ता॒ शूरो॑ दयते॒ वसू॑नि ॥ ४ ॥

अस्मे । अस्मासु[14] । इन्द्रावरुणौ ! विश्वैर्वरणीयम्[15] । रयिम् । धत्तम्[16] । वासयितृभिः पुरुषैस्तद्वन्तम्[17] । बहूनां शब्दनीयम्[18] । प्रमिणाति[19] । यः । अदितेः पुत्रः[20] । अनतानि[21] भूतानि सवजोऽस्मभ्यं[22] धनानि प्रयच्छत्विति वाक्यशेषः । एवममितानि[23] । धनानि । शूर[24] इन्द्रश्च । प्रयच्छतीति[25] ।

इ॒यमिन्द्रं॒ वरु॑णमष्ट मे॒ गीः प्राव॑त्तो॒के तन॑ये॒ तूतु॑जाना ।
सु॒रत्ना॑सो दे॒ववी॑तिं गमेम यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ५ ॥

इयम् । इयम् । मदीया । स्तुतिः[26] । इन्द्रावरुणौ । अश्नुते[27] । प्रागच्छन्[28] । पुत्रार्थम्[29] । पौत्रे[29] च । त्वरमाणा[30] । शोभनधनाः[31] । यज्ञं[32] वयम् । प्राप्नुयामेति[33] ।

---

१. हे इन्द्रावरुणौ ! Sy.
२. गृहेषु क्रियमाणम् Sy.
३. शोभनं फलसहितम् Sy.
४. परिवृढानि स्तोत्राणि Sy.
५. स्तोतृषु अस्मासु विद्यमानानि Sy.
६. प्रशस्तान्युत्कृष्टानि फलभाञ्जि Sy.
७. प्राप्नोतु Sy. ८. धनम् Sy.
९. देवपरीतं M. देवाभ्यां युवाभ्यां प्रेरितः Sy.
१०. युवां वर्धयेथाम् । प्रपूर्वस्तिरतिर्वर्धनार्थः Sy.
११. अस्मात् A. १२. स्पृहणीयाभिः Sy.
१३. रक्षाभिः Sy. १४. अस्मभ्यम् Sy.
१५. विश्वैः सर्वैर्वरणीयं सम्भजनीयम् Sy.
१६. प्रयच्छतम् Sy.
१७. निवासयुक्तम् Sy.
१८. बह्वन्नं पुरुभिर्बहुभिः प्रशस्यं वा Sy.
१९. प्रहिनस्ति । 'मीङ् हिंसायाम्' इति धातुः Sy.
२०. वरुणः Sy.
२१. अनृता० is suggested for अनता० ॥ सत्यरहितानि भूतानि Sy.
२२. omitted by M. सर्वतोऽस्म० is suggested for सवजोऽस्म० A.
२३. ०ममि० A. अपरिमितानि Sy.
२४. शौर्यवान् स वरुणः Sy.
२५. स्तोतृभ्यो ददाति Sy.
२६. स्तुतिव् A.
२७. अश्नुताम् । व्याप्नोतु Sy.
२८. प्रगच्छन् M; प्रागच्छत् is suggested for प्रागच्छन् ॥ प्ररक्षत्वस्मान् Sy.
२९. पुत्रे पौत्रे च विषये Sy.
३०. ०माणाः M. मया प्रेर्यमाणा सा Sy.
३१. शोभनधनाः सन्तः Sy.
३२. देवैः कामयितव्यं यज्ञम् Sy.
३३. हे इन्द्रावरुणादयः ! सर्वे देवाः! यूयं स्वस्तिभिः कल्याणैर्नोऽस्मान् सदा सर्वदा । पात रक्षत Sy..

VII. 85.

**पुनीषे वामरक्षसं मनीषां सोममिन्द्राय वरुणाय जुह्वत् ।**
**घृतप्रतीकामुषसं न देवीं ता नो यामन्नुरुष्यतामभीके ॥ १ ॥**

पुनीषे[1] अहम् । शोधयामि[2] । युवयोरहम्[3] । बाधकरहिताम्[4] । स्तुतिं न ह्यनयोः स्तोतारं कश्चिद् बाधते । सोमम् । इन्द्रावरुणाभ्याम्[5] । जुह्वन्[6] । घृतावयवां[7] घृतसहितां स्तुतिम् । उषसम् । इव । देवन-शीलम्[8] । नव[9] । अस्मात्[10] । गमने[11] । रक्षताम् । सङ्ग्रामैः[12] ।

**स्पर्धन्ते वा उ देवहूये अत्र येषु ध्वजेषु दिद्यवः पतन्ति ।**
**युवं ताँ इन्द्रावरुणावमित्रान्हतं पराचः शर्वा विषूचः ॥ २ ॥**

स्पर्धन्ते । अस्मिन् । देवह्वाने[13] । जनाः[14] स्पर्धन्तेऽहमिका वां ह्वयन्ते[15] । येषु जनेषु[16] । साङ्ग्रामिकेषु[17] ध्वजेषु[18] । आयुधानि[19] । पतन्ति, येषां सङ्ग्रामः प्रादुर्भवतीत्यर्थः[20] । युवाम् । तान्[21] । इन्द्रावरुणौ ! अमित्रान्[22] । हतम्[23] । प्राङ्मुखान् । आयुधेन[24] ! नानादिक्कान्[25] ।[26]

---

१. 'पुनीषे वाम्' इति पञ्चर्चं पञ्चदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रावरुणम् । 'पुनीषे' इत्यनुक्रान्तम् (KSA. 38. 85. p. 26.) । आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ प्रशास्तुरिदमावापार्थम् । सूत्रितञ्च—'युवां नरा पुनीषे वाम्' (ĀSS. 7. 9.) इति Sy.

२. शोध० A.

३. युवाभ्यां युवयोरर्थम् Sy.

४. रक्षोरहितां राक्षसैरसंस्पृष्टाम् Sy.

५. इन्द्रं वरुणञ्चोद्दिश्य Sy.

६. जुह्वत् is suggested for जुह्वन् ॥ अग्नौ प्रक्षिपन् Sy. ७. दीप्तावयवाम् Sy.

८. ०शीलाम् is suggested for ०शीलम् ॥ द्योतमानम् Sy.

९. तौ is suggested for नव । इन्द्रा-वरुणौ Sy.

१०. अस्मान् is suggested for अस्मात् ॥

११. युद्धार्थं गमने सति Sy.

१२. सङ्ग्रामे is suggested for सङ्ग्रामैः । अभिगते युद्धे Sy.

१३. देवा विजिगीषवो योद्धारो हूयन्ते युद्धार्थं पर-स्परमाहूयन्ते इति देवहूयः सङ्ग्रामाः । सङ्ग्रामे Sy.

१४. शत्रवोऽस्माभिः Sy. अहमहमिकया ह्व० is suggested for अहमिका वां ह्व०

१५. हतमिका वां हूयते A.

१६. सङ्ग्रामेषु Sy.

१७. सङ्ग्रा० A.

१८. पताकासु Sy.

१९. शत्रुक्षिप्तानि आयुधानि Sy.

२०. ०वन्तो० A.

२१. तेषु सङ्ग्रामेषु विद्यमानान् Sy.

२२. असिन्द्रान् A. शत्रून् Sy.

२३. हिंस्तम् । यथा ते शत्रवः पराङ्मुखा इतस्ततः पलायमानाश्च भवन्ति तथा तान् बाधेथा-मित्यर्थः Sy.

२४. आयुधे A. शरुणा हिंसकेनायुधेन Sy.

२५. ०दिक्तान् A. विविधगतींश्च Sy.

२६. VM. ignores वै and उ ॥ वै खलु, उ इति पूरकः Sy.

**आपश्चिद्धि स्वयशसः सदःसु देवीरिन्द्रं वरुणं देवता धुः ।**
**कृष्टीरन्यो धारयति प्रविक्ता वृत्राण्यन्यो अप्रतीनि हन्ति ॥ ३ ॥**

आपश्चित्[1] । आपः[2] । चित्[3] । चान्तरिक्ष्याः[4] । स्वभूतयशसः[5] । स्वेषु स्थानेषु[6] । देवीः[7] । इन्द्रावरुणौ । देवते । धारयन्ति[8] मध्यमे स्थाने पठिताविन्द्रावरुणावन्तरिक्षं धारयन्तीत्यर्थः, अन्तरिक्षनाम च भवत्याप इति । मनुष्यान्[9] । एको वरुणः[10] । धारयति[11] । प्रकर्षेण व्याप्त्यात्[12] । शत्रून्[13] । अन्यः । अप्रतिगतानिन्द्रः[14] । हन्ति[15] ।

**स सुक्रतुर्ऋतचिदस्तु होता य आदित्य शवसा वां नमस्वान् ।**
**आववर्तदवसे वां हविष्मानसदित्स सुविताय प्रयस्वान् ॥ ४ ॥**

स सुक्रतुः[16] । सः । सुप्रज्ञः[17] । भवतु[18] सुकर्मा वा[19] । सत्यज्ञः[20] । होता[21] । यः । हे आदित्यौ[22] ! वेगेन[23] । नमस्कारयुक्तम्[24] । आवर्तयति[25] । वाम् । रक्षणार्थम्[26] । पुनर्वामिति पूरणम् । हविष्मान् । भवति[27] । एव[28] । सः[29] । अभ्युदयाय[30] । अन्नवान्[31] हविष्मानिति ।

---

१. आवश्चित् A.
२. आव A. अविकाराः सोमश्च Sy.
३. वित् A.
४. छान्त० A.
५. स्वायत्तयशस्काः Sy.
६. सदनेषु स्थानेषु Sy.
७. द्योतमानाः सन्तः Sy.
८. अवस्थापयन्ति सोमेनाप्यायिता हि देवताः स्वे स्वे स्थानेऽवतिष्ठन्ते । यद्वा वसतीवर्याख्या आप एव सोमाभिषवद्वारा सदनेष्विन्द्रं वरुणं धारयन्ति Sy. ९. ०प्रजाः Sy.
१०. तयोरिन्द्रावरुणयोरेकः Sy.
११. असाङ्कर्येण धारयति Sy.
१२. पृथक्कृताः पुण्यापुण्यविवेकेन विचित्रफलभोक्त्रीः Sy. १३. शत्रुजातानि Sy.
१४. ०ति हता० M. अन्यैरप्रतिगतानि Sy.
१५. हिनस्ति Sy.
१६. सुक्रत् A.
१७. शोभनकर्मा शोभनप्रज्ञो वा Sy.
१८. भि भवतु A.
१९. सुकर्मा वा refers to सुप्रज्ञः, therefore सुकर्मा वा should immediately follow सुप्रज्ञः ।
२०. ऋतस्योदकस्य यज्ञस्य वा चेता निचेता Sy.
२१. स्तोता Sy..
२२. ०त्य M. ०त्यौ is suggested for ०त्यो ॥ A. हे अदितेः पुत्राविन्द्रावरुणौ ! छान्दसः सांहितिको ह्रस्वः Sy.
२३. बलेन युक्तौ Sy.
२४. ०युक्तः is suggested for युक्तम् ॥ नमसा नमस्कारेण स्तोत्रेण वा युक्तः सन् Sy.
२५. आवर्तयेत् Sy. २६. तर्पणार्थम् Sy.
२७. भवेत् Sy. २८. एवम् A.
२९. नः A. यजमानः Sy.
३०. सुष्ठु प्राप्तव्याय फलाय Sy.
३१. अन्नवान् भूत्वा Sy.

इयमिन्द्रं वरुणमष्ट मे गीः प्रावत्तोके तनये तूतुंजाना ।
सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

[इयमिन्द्रम् ।][1]

VII. 86.

धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥ १ ॥

[2] धीरा[3] । स्थिराण्यविचलानि[4] । वरुणस्य । महत्त्वेन[5] । सर्वाणि जातानि[6] भूतानि । यः[7] । विस्तीर्णे । द्यावापृथिव्यौ । व्यस्तद्विध्मान्[8] । प्रणुनुदे[9] च । तृतीयं लोकमादित्यं[10] वा । दर्शनीयम् । महान्तं सोमं वरुणो दिवा । नक्षत्रम् । पृथिव्याम् । च भूतजात[11] । द्वैधम्[12] । वप्रथ उभयत्र[13] प्रथितं करोति[14] ।

उत स्वया तन्वा३ सं वदे तत्कदा न्व१न्तर्वरुणे भुवानि ।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम् ॥ २ ॥

[15] उत स्वया । अपि[16] च । आत्मीयेन । पुत्रेण[17] । सहाहम्[18] । एतत्[19] । वदामि[20] । कदाहम् । वरुणस्य ।

---

१. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV. VII. 84. 5.

२. 'धीरा त्वस्य' इत्यष्टर्चं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वरुणदेवत्यम् । तथा चानुक्रान्तम्—'धीराष्टौ वरुण ह' (KSA. 30. 86. p. 26.) इति । गतो विनियोगः Sy.

३. धीरां A.

४. ०पिचालीनि A. ०विचालीनि is suggested for ०विचलानि ॥ धीराणि धैर्यवन्ति भवन्ति Sy.

५. महिम्ना Sy.

६. जातानि is omitted by A. जन्मानि Sy.

७. वरुणः Sy.

८. व्यष्टभ्नात् is suggested for व्यस्तद्विध्मान् ॥ विविधं स्तब्धे स्वकीये स्थाने स्थिते अकरोत् Sy.

९. प्रेरयति स्म Sy.

१०. ०त्या वा A.

११. ०जातम् is suggested for ०जात ॥ भूमिम् Sy.

१२. द्वैतम् A. अहनि सूर्यं दर्शनीयं प्रेरयति । रात्रौ नक्षत्रं तथेति द्विप्रकारः Sy.

१३. थ उभयमुभ० M. पप्रथदुभयत्र is suggested for वप्रथ उभयत्र ॥ अप्रथयत् विस्तारितवान् Sy.

१४. VM. ignores तु and चित् ॥ तु क्षिप्रम् । चिद् अपि Sy.

१५. वरुणं शीघ्रं दिदृक्षमाण ऋषिरनया वितर्कयति Sy.

१६. उतेति विचिकित्सायाम् । उत किम् Sy.

१७. स्वीयेन शरीरेण Sy.

१८. सहवदनं करोमि Sy.

१९. आहोस्वित् तत्तेन वरुणेन सह सं वदे Sy.

२०. वरुण्य A. वरुणे देवे Sy.

अन्तः । भवानीति[1] । किञ्च[2] । मे[3] । हव्यं[4] वरुणः । अक्रुद्ध[5] । जुषे[6] च । कदा[7] चाहम्[8] । खशयितारम्[8] । अहं[9] च सुमनाः । अभिपश्यामि[10] ।[11]

**पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।**
**समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥ ३ ॥**

पृच्छे तत् । पृच्छामि[12] । वरुण ! तत् । पापमहम् । दिदृक्षुः[13] सर्वं भूतं यो मा[14] मद्दिदृक्षयागच्छति तं पृच्छामि तथाहमेवान्यान् । चिकितुषो[15] जना[16] । अपगच्छामि[17] । विविधं च[18] पृच्छामि । तत्र च सर्व एव । कवयः[19] । समानम्[20] । एवम्[21] । मम[22] । आहुः[23] । अयम् । ह[24] । तुभ्यम् । वरुणम्[25] । क्रुध्यतीति[26] ।

---

१. अन्तर्भूतो भवानि । वरुणस्य चित्ते संलग्नो भवानीत्यर्थः Sy.

२. कं च A.
केन हेतुना Sy.

३. मदीयम् Sy.

४. स्तोत्रम्, हविर्वा Sy.

५. ०द्धः is suggested for ०द्ध ॥ अक्रुध्यन् Sy.

६. जजृषेत A. जुषेत is suggested for जुषे च ॥ सेवेत Sy.

७. कस्मिन् काले Sy.

८. सुखयि० is suggested for ०खशयि० ॥ वरुणम् Sy.

९. चाहं च सुम० M. अहं च seems to be redundant. शोभनमनस्कः सन्नहम् Sy.

१०. अभिपश्येयम् Sy.

११. VM. ignores नु ॥ नु खलु Sy.

१२. त्वां पृच्छामि । येन पापेन हेतुना त्वदीयैः पाशैर्बद्धोऽस्मि पृष्टः संस्तत्पापं कथय Sy.

१३. ०क्षु सम्भूतं A.
दिदृक्षु । छान्दसः सुलोपः । द्रष्टुमिच्छन्नहम् Sy.

१४. मा मदिदृ० A. मां is suggested for मा ॥

१५. विदुषो जनान् Sy.

१६. जनान् is suggested for जना ।

१७. उप० is suggested for अप० ॥ उपागाम् Sy.

१८. च is omitted by A.
विविधं प्रष्टुम् Sy.

१९. ते क्रान्तदर्शिनो जनाश्च Sy.

२०. एकरूपमेव Sy.

२१. एव M.
चित् च Sy.

२२. मम is missing in A.

२३. अकथयन् Sy.

२४. ह is missing in A. एव Sy.

२५. वरुणः is suggested for वरुणम् ।

२६. हृणीते क्रुध्यतीति । अतः क्रोधं परित्यज्यास्मान्प शेभ्यो मोचय Sy.

**किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम् ।**
**प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥ ४॥**

किमागः[1] । किम् । मम प्रवृद्धतरम्[2] । पापम्[3] । आस[4] । वरुण ! यत्त्वम्[5] । स्तोतारम् । जिघांससि[6] पाशैर्बध्नन् । सखायम्[7] । प्रब्रूहि । तत् पापम् । मम[8] । हे दुर्दभ[9] ! बलवन्[10] ! उक्ते तस्मिन् पापे प्रायश्चित्तं कृतवानेना[11] स[12] । त्वम्[13] । अभिमुखं गच्छामि[14] । हविषा[15] सह । त्वरमाणः[16] । अत्र शौनकः—

वरुणस्य गृहान्[17] रात्रौ वसिष्ठः स्वप्नमाचरन् ।
प्रविवेशाथ तं तत्र श्वा नदन्नभ्यभाषत ॥
स तं प्रस्वापयामास जनमन्यं[18] च वारुणम् ।
ततस्तु वरुणो राजा स्वैः पाशैः प्रत्यबध्यत[19] ॥
स[20] बुद्ध्वा पितरं सूक्तैश्चतुर्भिरथ उत्तरैः ।
अभितुष्टाव धीरेति मुमोचैनं ततः क्वचित्[21] ॥
ध्रुवा[22] सं त्वेति चोक्ताभ्यां पाशान्मुमुचिरे सुतम् ॥ इति ।

**अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।**
**अव राजन्पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥ ५ ॥**

**अव द्रुग्धानि** । पितुरागतान्[23] । अस्माकम्[24] । द्रोहात्[25] । गर्भस्तेष्वस्मासु[26] यदेन[27] पिता चकार ततोऽ-

---

१. कि A. कः Sy. २. अधिकम् Sy.
३. पा वाचम् A. अपराधो मया कृतः Sy.
४. बभूव Sy. ५. येनागसा Sy.
६. हन्तुमिच्छसि Sy.
७. मित्रभूतं सन्तम् Sy. ८. मह्यम् Sy.
९. हे अन्यैर्बाधितुमशक्य ! Sy.
१०. तेजस्विन् ! Sy.
११. कृत्वा is suggested for कृत वा ।
१२. अनेन सं M. अनेनाः सन् is suggested for अनेना स M. ॥ अपापः Sy.
१३. त्वाम् is suggested for त्वम् ।
१४. अवेयाम् उपगच्छेयम् Sy.
१५. नमस्कारेण हविषा वा Sy.
१६. क्षिप्रः Sy. १७. ग्रहान् A.
१८. ०मं च रु वारु० A. १९. त्यबुध्य ० M.
२०. सं A. २१. ०चित्ता A.
२२. सस्त्वेति A.
२३. पितृतः प्राप्तानि Sy. २४. अस्मदीयानि Sy.
२५. द्रोहान् is suggested for द्रोहात् ॥ बन्धनहेतुभूतान् Sy.
२६. ०स्थेष्व० is suggested for ०स्तेष्व० ।
२७. ०देनं M. ०देनः is suggested for देन ।

स्मासु संक्रान्तानि पापानि । अवसृज[1] । तथा वयम् । एव[2] । यानि[3] । कृतवन्तः । शरीरैः । था[4] । स्तेनः प्रायश्चित्तं कुर्वाणः । तृप्तपशुकोऽवसृज्यते[5] यवसे प्रदर्शिते यदि पशवो भक्षयन्ति ततोऽवसृज्यते । तथा अवसृज । वत्सम् । ईव च[6] । दाम्नः[7] । वसिष्ठम्[8] ।[9]

**न स स्वो दक्षो॑ वरुण॒ ध्रुति॒ः सा सुरा॑ म॒न्युर्वि॒भीद॑को॒ अचि॑त्तिः ।**
**अस्ति॒ ज्याया॒न्कनी॑यस उपा॒रे स्वप्न॑श्च॒नेदनृ॑तस्य प्रयो॒ता ॥ ६ ॥**

न सः[10] । न । तत् । स्वम् । बलम्[11] । वरुण ! अपि तर्हि ध्रुतिः[12] । सा भवति ध्रुतिरिति ध्रुवां[13] नियतिमाह न पुरुषः स्वैरं तदनुतिष्ठति दैवाभिपन्नोऽनुतिष्ठतीत्यर्थः । सुरा[14] । मन्युश्च[15] ब्राह्मणादीनां हनननिमित्तभूतः । विभेदकश्च[16] देवनहेतुः । अन्विक्तिश्च[17] मान्यामान्यहेतुः[18] । अस्ति । ज्यायान् देवं[19] नाम । कमनीयः[20] । समीपे[21] तथा । स्वप्नः । अपि पुरुषस्य । अनिरर्थकस्य[22] । मिश्रयिता[23] भवति[24] ।

---

१. अस्मत्तो विश्लेषय Sy.
२. अव is suggested for एव ।
३. द्रोहजातानि Sy.
४. स्तौ A.
५. तृप्तपशु is omitted by M. स्तैन्यप्रायश्चित्तं कृत्वावसाने घासादिभिः पशूनां तर्पयितारं स्तेनमिव Sy.
६. इव च is suggested for ईव च ।
७. धाम्नः A. रज्जोः बन्धकात् Sy.
८. माम् Sy.
९. VM. ignores राजन् ॥ हे राजन् राजमान ! Sy.
१०. स न सः A.
११. पुरुषस्य स्वभूतं तद्बलं पापप्रवृत्तौ कारणं न भवति Sy.
१२. स्थिरोत्पत्तिसमय एव निर्मिता दैवगतिः कारणम् । 'ध्रु गतिस्थैर्ययोः' इति धातुः Sy.
१३. ध्रुवं A.
१४. सा च ध्रुतिर्वक्ष्यमाणरूपा सुरा प्रमादकारिणी Sy.
१५. क्रोधः गुर्वादिविषयः सन्ननर्थहेतुः Sy.
१६. द्यूतसाधनोऽक्षः । स च द्यूतेषु पुरुषं प्रेरयन्ननर्थहेतुर्भवति । अत ईदृशी दैवप्रवृत्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् Sy.
१७. अचित्तिश्च is suggested for अन्विक्तिश्च ॥ अज्ञानमविवेककारणम् Sy.
१८. मान्या is omitted by A.
१९. देवः is suggested for देवम् ॥ नियन्तृत्वेन स्थितो ज्यायानधिक ईश्वरोऽस्ति । स एव तं पापे प्रवर्तयति तथा चाम्नातम्—'एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' (Kau. 3.8) इति Sy.
२०. कनीयसः is suggested for कमनीयः ॥ अल्पस्य हीनस्य पुरुषस्य Sy.
२१. अपि च पापप्रवृत्तावुपारे उपागते समीपे Sy.
२२. अनिनर्थ० A. निरर्थ० is suggested for अनिरर्थ० ॥ पापस्य Sy.
२३. प्रयोता प्रकर्षेण मिश्रयिता भवति ।... स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्त इति । अतो ममापराधो दैवगत इति हे वरुण ! त्वया क्षन्तव्य इति भावः Sy.
२४. VM. ignores इत् ॥ इदिति पूरकः Sy.

**अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।**
**अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥ ७ ॥**

अर दासः । पर्याप्तं[1] कर्म । दासम्[2] । इव[3] स्वामिने । ह[4] । मेक्त्रे[5] वरुणाय । करोमि[6] । देवाय[7] । क्षिप्रकारिणे[8] । अपापः[9] । ज्ञापयतु[10] । अज्ञान्[11] । देवः । स्वामिम्[12] । स्तोतारम्[13] । धनाय[14] । अत्यन्तं प्राज्ञ[15] । प्रेरयति[16] ।

**अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।**
**शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥**

अयं सु तुभ्यम्[17] । अयम्[18] । तुभ्यम्[19] । वरुण[20] ! बलवत्[21] । हृदि[22] । स्तोमः[23] । गूढ । उपश्रितः[24] । भवतु । शङ्करश्चायम्[25] । अस्माकम् । क्षेमे[26] । भवतु । शम्[27] । एव । अस्मदीये[28] । योगे[29] ।[30]

---

१. परिचरणम् Sy.
२. दासः is suggested for दासम् ॥ भृत्यः Sy.
३. यथा स्वामिने सम्यक् परिचरति तद्वत् Sy.
४. अहम् is suggested for ह ।
५. ०क्त्रेः A कामानां वर्षित्रे Sy.
६. करवाणि Sy.
७. दानादिगुणयुक्ताय वरुणाय Sy.
८. तत्प्रसादादपापः सन्नहम् Sy.
९. जगतो भर्त्रे Sy.
१०. चेतयतु प्रज्ञापयतु Sy.
११. आज्ञान् A. अजानतोऽस्मान् Sy.
१२. स्वामिस् M. स्वामी is suggested for स्वामिम् ।
१३. स्तोरम् A.
१४. धनप्राप्त्यर्थम् Sy.
१५. प्राज्ञं M. प्राज्ञः is suggested for प्राज्ञ ॥ प्राज्ञतरः Sy.
१६. जुनातु प्रेरयतु Sy.
१७. एकादशिने वारुणे पशौ 'अयम्' इति पुरोडाशस्यानुवाक्या । सूत्रितञ्च 'अयं सु तुभ्यं वरुण स्वधाव एआ वन्दस्व वरुणं बृहन्तम्' (ASS. 3.7.) इति Sy.
१८. एतत्सूक्तात्मकम् Sy.
१९. तु is written twice in A. त्वदर्थं क्रियमाणाः Sy.
२०. वरुण is written twice in M.
२१. बलवन् ! is suggested for बलवत् ॥ हे अन्नवन् ! Sy.
२२. त्वदीये हृदये Sy.
२३. स्तोत्रम् Sy.
२४. पश्रितः A. समवेतः Sy.
२५. उपद्रवाणां शमनम् Sy.
२६. प्राप्तस्य रक्षणं क्षेमः Sy.
२७. इम् M. उपद्रवाणां शमनमस्तु Sy.
२८. अस्मदीयो M.
२९. अप्राप्तस्य प्रापणं योगः । योगे च नोऽस्मदीये प्रापणे शमु शमनमेवास्तूपद्रवाणाम् । हे वरुणादयो देवाः नोऽस्मान् सर्वदा स्वस्तिभिरविनाशैः पात रक्षत Sy.
३०. VM. ignores चित् ॥ चिदिति पूरकः Sy.

VII. 87.

**रद॑त्प॒थो वरु॑णः॒ सूर्या॑य॒ प्रार्णां॑सि समु॒द्रिया॑ न॒दीना॑म् ।**
**सर्गो॒ न सृ॒ष्टो अर्व॑तीरृता॒यञ्च॒कार॑ म॒हीर॒वनी॒रह॑भ्यः ॥ १ ॥**

[1]रदत्पथः[2]। वलिरिवान्तरिक्षे[3] मार्गान्[4]। वरुणः[5]। सूर्याय[6] 'उरुं[7] हि राजा वरुणश्चकार' इत्युक्तम्[8]। प्रासृजच्च[9]। उदकानि। अन्तरिक्ष्याणि[10]। नदीः पूरयितुम्। उत्सृष्टः। इव। अश्व[11]। उद्युक्ता[12] वडवाः। गन्तुमिच्छन्[13]। करोति[14]। महतीः। गतीर्वरुणः[15]। अहोभ्यः[16], अन्वहमुदितः शीघ्रं गच्छतीत्यर्थः।

**आ॒त्मा ते॒ वातो॒ रज॒ आ न॑वीनोत्प॒शुर्न भूर्णि॒र्यव॑से सस॒वान् ।**
**अ॒न्तर्म॒ही बृ॑ह॒ती रोद॑सी॒मे विश्वा॑ ते॒ धाम॑ वरुण प्रि॒याणि॑ ॥ २ ॥**

आत्मा ते। शरीरम्[17]। ते[18]। अवगच्छन्[19]। सर्वलोकम्[20]। नवं करोति[21]। पशुः। इव। भर्ता[22]। यवसे[23]।

---

१. 'रदत्पथः' इति सप्तर्चं सप्तदशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणम्। अनुक्रान्तञ्च— 'रदत्सप्त'(KSA. 38.87. p. 26.)इति। गतो विनियोगः Sy.

२. रुत्पथम् A.

३. ०रवा० A.

४. अन्तरिक्षप्रदेशान् Sy.

५. ०ण M. अयं वरुणो देवः Sy.

६. सर्वस्य प्रेरकायादित्याय Sy.

७. ऊरु A.

८. RV.1.24.8.

९. प्रायच्छत् Sy.

१०. समुद्र उदधौ भवानि। यद्वा समुद्द्रवन्त्यस्मादाप इति समुद्रमन्तरिक्षम्। तत्र भवानि Sy.

११. सृज्यते युद्धभूमौ सादिना प्रेर्यत इति सर्गोऽश्वः Sy.

१२. ०क्तो वडवां M. स यथा वडवाः प्रति शीघ्रं गच्छति तद्वत् Sy.

१३. ऋतं गमनमात्मन इच्छन् Sy.

१४. भेदेन कृतवान्। अस्तं गच्छन् सूर्य एव वरुण इत्युच्यते। स हि स्वगमनेन रात्रीर्जनयति Sy.

१५. गतिर्व० A. रात्रीः Sy.

१६. ०सोऽन्व० A. अहोभ्यः सकाशात् Sy.

१७. आत्मा सर्वस्य प्राणिजातस्य प्राणरूपेण धारयिता Sy.

१८. त्वदीयस्त्वयान्तरिक्षे प्रेर्यमाणः Sy.

१९. गच्छन् M. अवगच्छन् seems to be the explanation of 'आ'।

२०. सर्वं A. स च रज उदकम् Sy.

२१. तवं A. समन्तात् प्रेरयति। वातेन हि वृष्टिर्जायते Sy.

२२. जगतो भर्ता Sy.

२३. घासे प्रक्षिप्ते सति यथा पशुरन्नवान् भवति तद्वत् Sy.

सम्भजनवान्[1] भक्षितः सस्य[2] इत्यर्थः । अन्तः[3] । महती[4] । बर्हिणे[5] । द्यावापृथिव्यो । इमे । यानि भवानि[6] स्थानानि तानि[7] । सर्वाणि । तव । प्रियाणि[8] । वरुण ! इति[9] ।

**परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके ।**
**ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयन्त मन्म ॥ ३ ॥**

**परि स्पशः**[10] । परिपश्यन्ति[11] । चाराः[12] । वरुणस्य[13] । शोभनगमनाः[14] । उभे । द्यावापृथिव्यो । शोभमाने[15] । सत्यवन्तः[16] । क्रान्तकर्माणः[17] । सम्पूजनीयधैर्याः[18] । ये । वरुणस्य[19] । पूजा[20] मनुष्यैः क्रियमाणाम् । गच्छन्ति[21] ।

**उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या बिभर्ति ।**
**विद्वान्पदस्य गुह्या न वोचद्युगाय विप्र उपराय शिक्षन् ॥ ४ ॥**

**उवाच** । उवाच[22] । मह्यम् । वरुणः । मेधाविने । त्रिः, सप्तैकविंशतिः[23] । नामानि । काचिद् गौः[24] ।

---

१. ससमित्यन्ननाम । तद्वान् भवति । हविर्लक्षणमन्नमपि तस्मै प्रयच्छन्तीत्यर्थः । यद्वा सनोतेः क्वसौ रूपम् । ससवान् सम्भक्तवान् वातो घासे सति पशुर्यथा भारवाही भवति तद्वज्जगतो भर्ता Sy.

२. भक्षितसस्यः is suggested for भक्षितः सस्यः ।

३. मध्ये । द्यावापृथिव्योर्मध्य इत्यर्थः Sy.

४. महत्यौ Sy.

५. परिवृढे Sy.

६. धामानि भवनानि is suggested for भवानि तेजांसि वा Sy.

७. तानि is missing in A.

८. सर्वेषां प्रीतिकराणि भवन्ति Sy.

९. VM. ignores वातः ॥ वातः वायुः Sy.

१०. स्पर्शः A.

११. परित ईक्षन्ते, उभयोर्लोकयोर्वर्तमानान्पुण्यापुण्यकारिणो जनान् पश्यन्तीत्यर्थः Sy.

१२. स्पशन्ति स्पृशन्तीति स्पशश्चराः Sy.

१३. वरुणस्य Sy.

१४. स्मदित्येतत् प्रशस्यार्थे सहार्थे च वर्तते प्रशस्तगतयः । यद्वा सह प्रेषिताः सन्तः Sy.

१५. ०भनमा० A. शोभनमेहने सुरूपे वा Sy.

१६. यस्मादेवं तस्माद् भीत्या कर्मवन्तः Sy.

१७. क्रान्तदर्शिनः Sy.

१८. समपूज० A. यज्ञेषु कृतबुद्धयः Sy.

१९. प्राज्ञाः Sy.

२०. प्रजां A. पूजाम् is suggested for पूजा ॥ मन्मानि स्तोत्राणि Sy.

२१. गमयन्ति वरुणं प्रापयन्ति । तानपि परिपश्यन्तीत्यर्थः । अतोऽस्मानपि स्तोतॄन् ज्ञात्वा पापान्मुञ्चन्त्वित्यृषिराशास्ते Sy.

२२. उक्तवान् Sy.

२३. ०ति M. एकविंशतिसंख्याकानि Sy.

२४. वागत्र गौरुच्यते । सा चोरसि कण्ठे शिरसि च बद्धानि गायत्र्यादीनि सप्त छन्दसां नामानि बिभर्ति । यद्वा वेदात्मिका वागेकविंशतिसंस्थानां यज्ञानां नामानि बिभर्ति । धारयति । अपर आह । गौः पृथिवी । तस्याश्च गौर्ग्मा ज्मेति पठितान्येकविंशति नामानीति Sy.

विभक्तीति[1] पृथिवीमाह तस्या हि यास्कपठितान्[2]येकविंशतिनामानि[3]। किं च विद्वान्[4] वरुणः। पदस्य[5]। गुह्यानि[6]। च[7] मह्यम्। अवोचत्[8]। युक्ताय। मेधाव्याप्नुहि[9]। उत्काय[10] दृढमवस्थिताय। शिक्षणं कुर्वन्[11], नकारः[12] समुच्चयार्थियः[13], पदानां गुह्यानर्थांश्च व्याकरोदित्यर्थः[14]।

**तिस्रो द्यावो निहिता अन्तरस्मिन्तिस्रो भूमीरुपराः षड्विधानाः।**
**गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेङ्खं हिरण्ययं शुभे कम्॥ ५॥**

तिस्रः[15]। तिस्रो द्यावो भवन्तीति[16] तिस्रश्च भूमयस्तिस्रो भूमीर्धारयन्तीरुत[17] [18] द्यूनित्युक्तम्, तिस्रः[19]। द्यावः[20]। अस्मिन्[21] वरुणे। अन्तः[22]। निहिता। तथा तिस्रश्च[23]। भूम्यः। अस्मिन्नेवोक्ताः[24]। तथा षड्विधाश्च[25] षट् कार्याणि

---

१. भक्तीति A. बिभर्ति is suggested for विभक्ति ॥ धारयतीति Sy.

२. यास्तप० A.

३. ०तिर्ना० A.

४. जानन् Sy.

५. उत्कृष्टस्य स्थानस्य ब्रह्मलोकलक्षणस्य सम्बन्धीनि Sy.

६. रहस्यानि । उपदेशे गम्यानि Sy.

७. न शब्दश्चार्थे Sy.

८. एवो A. उक्तवान्, अतोऽहं वरुणस्य शिष्योऽस्मि । तस्मात्स वरुणोऽस्मान्पापान्मोचयत्वित्यर्थः Sy.

९. ०प्नुनि A. आप्नुहि is redundant मेधावी स वरुणः Sy.

१०. उक्ताय A. उप समीपे रममाणायान्तेवासिने मह्यम् Sy.

११. उपदिशन् Sy.

१२. अका० M.

१३. ०च्चयश्चार्थी० M. ०यार्थी० is suggested for ०यार्थि० ॥ The passage नकारः समुच्चयार्थीयः should immediately follow च and precede मह्यम्।

१४. The passage पदानां व्याकरोदित्यर्थः should immediately follow अवोचत् and precede युक्ताय।

१५. तिस्रः is missing in A.

१६. ०वन्ति तिसृश्च अमय०A.

१७. ०मिर्धा० A.

१८. ०न्तिरु० A.

१९. त्रिप्रकारा, उत्तममध्यमभावेन त्रिविधाः । लोकानां त्रित्वं च 'त्रयो वा इमे त्रिवृतो लोकाः,' इत्यादिना ब्राह्मणेनावगम्यते । 'तिस्रो भूमीर्धारयन्' (RV. 2.27. 8.) इति निगमश्च भवति । इमौ लोकावावृत्य वरुणस्तिष्ठतीत्यर्थः Sy.

२०. द्युलोकाः Sy.

२१. ०णं तर्नि० A.

२२. मध्ये Sy.

२३. पूर्ववत्त्रिविधाः Sy.

२४. उक्तस्त० A. उप्ताः is suggested for उक्ताः ॥ वरुणेऽन्तर्भूताः Sy.

२५. ०विधानाश्च is suggested for ०विधाश्च ॥ विधानं विधा । वसन्ताद्यृतुभेदेन षड्विधाः प्रकारा यासु तादृश्यः Sy.

येषामृतूनां ते षड्विधानाः । मेधावी[1] । राजा[2] । वरुणः । चक्रे[3] । एतत्[4] । दिवि[5] । प्रेङ्खमित्यादित्यमाह[6] । हिरण्मयम्[7] । शोभार्थम्[8] । तमिति[9] पूरणम् ।

**अव॒ सिन्धुं॒ वरु॑णो॒ द्यौरि॑व स्थाद्द्र॒प्सो न श्वे॒तो मृ॒गस्तुवि॑ष्मान् ।**
**ग॒म्भी॒रशं॑सो॒ रज॑सो वि॒मान॑ः सुपा॒रक्ष॑त्रः स॒तो अ॒स्य राजा॑ ॥ ६ ॥**

[10]अव सिन्धुम् । समुद्रम् । वरुणः । अवस्थापयति[11] यथा वेलां नातिक्रामति । यथा[12] द्यौः सर्वाणि भूता-न्यधः[13] स्थापयति । द्रविणशीलः[14] । श्वेतवर्णो[15] गौरः । इव[16] । मृगः । तुविष्मान्[17] प्रवृद्धिमान् वेगवान् । गम्भीरः[18] स्तोता । अन्तरिक्षस्य[19] । परिच्छेत्ता[20] । सुद्वारबलोऽस्य[21] बलं[22] सुष्ठु पारयति । सत्ये[23] । अस्य[24] सर्वस्य लोकस्य । राजा[25] ।

---

१. स्तुत्यः Sy.

२. ईश्वरः Sy.

३. कृतवान् 'दिवि सूर्यमदधात्सोममद्रौ' (RV. 5. 84. 2.) इति हि श्रूयते Sy.

४. एतम् is suggested for एतत् ॥ सूर्यम् Sy.

५. अन्तरिक्षे Sy.

६. दोलावद्दिग्द्वयसंस्पर्शिनम् Sy.

७. हितरमणीयं वा Sy.

८. दीप्त्यर्थम् Sy.

९. कमिति is suggested for तमिति ।

१०. वारुणे पशौ 'अव सिन्धुम्' इति वपाया अनुवाक्या । सूत्रितञ्च—'अव सिन्धुं वरुणो द्यौरिव स्थादयं सु तुभ्यं वरुण स्वधावः' (ASS 3. 7.) इति Sy.

११. वेलायामवस्थापयति वेलां नातिक्रामति तथा करोतीत्यर्थः Sy.

१२. यथा यथा द्यो A. सूर्य इव दीप्तः Sy.

१३. ०न्यध A.

१४. द्रविशी० A. द्रवण० is suggested for द्रविण० ॥ उदबिन्दुः Sy.

१५. श्वेतवर्णो मृगः लुप्तोपममेतत् । गौरमृग इव Sy.

१६. श्व M.

१७. बलवान् प्रवृद्धो वा Sy.

१८. ०र स्तोत्रा A. गम्भीरो महाञ्छंसः स्तोत्रं यस्य स तथोक्तः Sy.

१९. उदकस्य Sy.

२०. निर्माता Sy.

२१. सुपार० is suggested for सुद्वार ।

२२. ०लोजस्य A. सुष्ठु दुःखात्पारकं क्षत्रं बलं धनं वा यस्य तादृशः Sy.

२३. सतः is suggested for सत्ये ॥ विद्यमानस्य Sy.

२४. अस्य जगतः Sy.

२५. राजा भवति Sy.

**यो मृ॒ळया॑ति च॒क्रुषे॑ चि॒दागो॑ व॒यं स्या॑म॒ वरु॑णे॒ अना॑गाः ।**
**अनु॑ व्र॒तान्यदि॑ते॒र्ऋ॒धन्तो॑ यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ७ ॥**

यो मृळयाति[1] । यः । सुखयति[2] । पापम्[3] । चक्रुषे[4] । अपि स्तोत्रे । तस्मिन् वरुणे । वयम् । स्याम[5] । अनान्यस[6] । अनुक्रमेण[7] । अदीनस्य वरुणस्य[8] । सन्ध्यावन्दनादीनि[9] । वर्धयन्तम्[10] ।

## VII 88.

**प्र शु॒न्ध्युवं॒ वरु॑णाय॒ प्रेष्ठां॑ म॒तिं व॑सिष्ठ मी॒ळ्हुषे॑ भरस्व ।**
**य ई॑म॒र्वाञ्चं॒ कर॑ते॒ यज॑त्रं स॒हस्रा॑मघं॒ वृष॑णं॒ बृह॑न्तम् ॥ १ ॥**

प्र शुन्ध्युवम्[11] । प्रभरस्व[12] । शोधयित्रीं[13] पापकृताम्[14] । वरुणाय । प्रियतमाम् । स्तुतिम्[15] । वसिष्ठ[16] ! सेक्त्रे । यम्[17] । एनमादित्यम्[18] । अभिमुखम्[19] । कुरुते[20] ! यष्टव्यम् । बहुधनम् । वृषणम्[21] । महान्तम् 'दिवि सूर्यमदधात्[22]' इत्युक्तम् ।

---

१. मृळायाति A. मृडायति M.

२. सुखेति A. उपदयां करोति Sy.

३. अपराधम् Sy.

४. कृतवते स्तोत्रे Sy.

५. वर्तमाना भवेम Sy.

६. नान्यस्य M. अनागसः is suggested for अनान्यस ॥ अनपराधाः सन्तः Sy.

७. आनुपूर्व्येण Sy.

८. अदीनस्य वरुणस्य सम्बन्धीनि Sy.

९. It seems to be the explanation of व्रतानि ॥ कार्याणि Sy.

१०. ०यन्तः is suggested for ०यन्तं ॥ समर्धयन्तः । हे वरुणादयो देवाः ! यूयमस्मान् सर्वदा कल्याणैः पालयत Sy.

११. 'प्र शुन्ध्युवम्' इति सप्तर्चमष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणम् । 'प्र शुन्ध्युवम्' इत्यनुक्रान्तम् (KSA. 38. 30. p. 26) । गतो विनियोगः Sy.

१२. शुध्यु० A.

१३. प्रहर प्रापय Sy.

१४. ०यित्री A. शोधयित्रीं यद्वा स्वत एव शुद्धाम् Sy.

१५. मननीयामीदृशीं स्तुतिम् Sy.

१६. हे वसिष्ठ ! ऋषिरात्मानमेव प्रत्यक्षीकृत्य स्तुतौ नियुङ्क्ते Sy.

१७. यः is suggested for यम् ।

१८. सूर्यम् Sy.

१९. अखिमु० A. अस्मदभिमुखम् Sy.

२०. अन्तरिक्षेक रोति, तस्मै वरुणायेत्यन्वयः Sy.

२१. कामानां वर्षकम् Sy.

२२. ०धातीत्यु० A. RV. 5. 85. 2.

अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्वर्यदश्मन्नधिपा उ अन्धोऽभि मा वपुर्दृशये निनीयात् ॥ २ ॥

अधा नु । अस्य । सन्दर्शनम् । प्राप्तोऽहम्[1] । अथ[2] । क्षिप्रं तस्य यागार्थम्[3] । वरुणस्य । अग्नेः । ज्वालालक्षणमनीकम्[4] । सामिधेनीभिः स्तौमि[5] । कल्याणम्[6] । अभिषवग्राव्णि[7] निधीयमानम्[8] । यदा । अन्धः सोमलक्षणम्[9] । वरुणोऽधिपाता[10] भवति । तदानीमात्मीयं[11] रूपम् । माम् । प्रति । नयतु[12] । मम दर्शनाय[13][14] ।

आ यद्रुहाव वरुणश्च नावं प्र यत्समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम् ॥ ३ ॥

आ यत् । आरुहाव[15] । यद्यहम्[16] । वरुणः । च । नावम्[17] । आरोहानन्तरम्,[18] च तां मध्यस्थितम्[19] । समुद्रं[21] प्रति । यदि । प्रेरयाव[20] । समुद्रमध्यस्थानामपाम्[21] । उपरि । स्थितैः समुत्थितैरूर्मिभिः[22][23] । यदि । चराव[24] तं[25] तेता वरुणगृहं[26] प्रति नेतुम्[27] ।

---

१. गतवानहम् Sy.

२. अधुना Sy.

३. ०र्थ A.

४. ज्वालासङ्घम् Sy.

५. स्तवानि तं वरुणं यष्टुमिति शेषः Sy.

६. सुखकरम् Sy.

७. अर्थेव ग्राव्णी A. अभिषवार्थे पाषाणेऽवस्थितम् । अभिषुतमित्यर्थः Sy.

८. ०धीयुमा० A.

९. सोमः ल० A. सोमलक्षणमन्नम् । छान्दसः षष्ठ्यभावः Sy.

१०. ०वाता A.
अधिकं पाता भवेत् Sy.

११. शरीरं स्वकीयम् । प्रशस्तं रूपं वा Sy. वपुरिति रूपनाम Ngh. 3. 7.

१२. अभिप्रापयेत् Sy.

१३. दर्शनार्थम् Sy.

१४. VM. ignores उ ॥ उ इति पूरकः Sy.

१५. उभावारूढावभूव Sy.

१६. यद्यदा वरुणे प्रसन्ने सत्यहम् Sy.

१७. द्रुममयीं तरणसाधनभूताम् Sy.

१८. ०हावान० M.

१९. समुद्रस्य मध्यं प्रति Sy.

२०. प्रकर्षेण गमयाव Sy.

२१. उदकानाम् Sy.

२२. समुच्छ्रितैः रश्मिभिः A.

२३. गन्त्रीभिरन्याभिर्नौभिः Sy.

२४. पराव M. वर्तावहै Sy.

२५. तां ततो is suggested for तं तेता ।

२६. ग्रहं A.

२७. VM. ignores प्र । प्रेङ्खे । ईङ्खयावहै । शुभे and कम् ॥ तदानीं शुभे शोभार्थं प्रेङ्खे नौरूपायां दोलायामेव प्रेङ्खयावहै । निम्नोन्नतैस्तरङ्गैरितश्चेतश्च प्रविचलन्तौ सङ्क्रीडावहै । कमिति पूरकम् । यद्वा क्रियाविशेषणम् । कं सुखं यथा भवति तथेत्यर्थः Sy.

वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नु द्यावस्ततनन्यादुषासः ॥ ४ ॥

[वसिष्ठं ह][1, 2]...[3]ऋषिम्[4] । चकार[5] । शोभनकर्मा[6] । तेजोभिः[7] । स्तोतारम्[8] । मेसापी[9] । अह्नाम्[10] । सुदिनत्वे[11] सुदिनान्यहान्यस्मै चकारेत्यर्थः[12] । योन्यहानि[13] । द्यावः[14] । ततनन्[15] । यानि च[16] । उषसस्तेषामित्यह्नां[17] मैत्री जनित्री प्रजानामित्यौषसो[18] मन्त्रः, द्यावो दीप्तो देवः[19], यादिति[20] द्वितीयाबहुवचनस्यादेशः[21, 22, 23] ।

क्व१ त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुरा चित् ।
बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥ ५ ॥

क्व[24] त्यानि । हे वरुण ! क्व[25] । तानि[26] । आवयोः[27] । सख्यानि[28] । अभवन्निति वरुणमपश्यन्[29] । आभि-

---

१. एवं वसिष्ठेनात्मनोक्ते सद्वरुणेन कृतं तद्दर्शयति Sy.

२. The *pratīka* is supplied by the Editor.

३. Explanation of वसिष्ठम् । ह । वरुणः । नावि । आ । अधात् । missing in the mss. Sy. explains these words in the following manner: वसिष्ठं खलु वरुणो नावि स्वकीयायामाधात् । आरोहयत् Sy. ४. तथा तमृषिम् Sy.

५. वरुणः कृतवान् Sy. ६. शोभनकर्माणम् Sy.

७. Sy. seems to take स्वपा महोभिः as स्वपाम्, अवोभिः and explains स्वपाम् as स्वपसं शोभनकर्माणम् । and अवोभिः as रक्षणैः ।

८. ०र M.

९. मेधावी is suggested for मेसापी ॥ मेधावी वरुणः Sy. १०. दिवसानां मध्ये Sy.

११. यत्फलत्वेन शोभनदिनत्वं तत्र स्तोतारमस्थापयदिति शेषः Sy.

१२. ०कारत्य० A.

१३. यान्य० is suggested for योन्य० ॥ यातो गच्छतः Sy.

१४. दिवसान् Sy.

१५. सूर्यात्मना विस्तारयन् Sy.

१६. यातीः Sy.

१७. याद्यातीरुषस उषसोपलक्षिता रात्रीश्च Sy.

१८. ०जाना (ना) मि० A.

१९. देवा M. The passage द्यावो दीप्तो देवः should immediately follow द्यावः and precede ततनम्.

२०. ०तिर्द्वि० M.

२१. ०स्यादादेशः is suggested for ०स्यादेशः।

२२. The passage यादिति...देशः refers to यानि, यात् in the text. It should therefore immediately follow यानि च and precede उषस०

२३. VM. ignores नु ॥ नु क्षिप्रम् Sy.

२४. क्वा-A.

२५. कुत्र Sy.

२६. पुरातनानि Sy. २७. तान्य A.

२८. सखित्वानि Sy. २९. श्यन्ना भग० A.

गच्छेवहि[1] । यद्यावाम्[2] । स्तेनवर्जितम्[3] । यथा पुरम्[4] । चिदित्युमार्थे[5] । बृहन्तं बहुनर्थान् । सम्भवन्तम्[6] । वरुण ! बलवत्[7] । सहस्रद्वारम्[8] । गच्छाव[9] । गृहम् । तव[10] ।

**य आपिर्नित्यो वरुण प्रियः सन्त्वामागांसि कृणवत्सखा ते ।**
**मा त एनस्वन्तो यक्षिन्भुजेम यन्धि ष्मा विप्रः स्तुवते वरूथम् ॥ ६ ॥**

य आपिः[11] । यः[12] । ज्ञातिः । नित्यमौरसे[13] । वरुण ! प्रियः[14] । सन्त च[15] । त्वाम् । अनांसि[16] । करोति[17] तवानिष्टानि करोतीत्यर्थः । समानख्यानः[18] । ते । अथ बहुवदाह तेऽनागमा[19] वयं तव सम्भृताः । मा । एनस्वन्तः[20] । भुजेम[21] पापफलम् । पूजावत्[22] । प्रयच्छ । मेधावी त्वम् । स्तुवते[23] मह्यम् । ध्रुवं[24] गृहम्[25] ।[26]

**ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्यस्मत्पाशं वरुणो मुमोचत् ।**
**अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥**

ध्रुवासु[27] । आसु[28] । ध्रुवासु निर्गन्तुमशक्यासु[29] । त्वेति सप्तमीबहुवचनस्याकारं कासुचित्[30] । निवसन्तो[31]

---

१. आवां सेवावहे Sy.
२. यदावाम् is suggested for यद्यावाम् ।
३. अहिंस्यमात्यन्तिकं सख्यम् Sy.
४. पुरा is suggested for पुरम् ॥ पूर्वस्मिन् काले Sy
५. ०दि सुपमा० M. ०त्युपमार्थे is suggested for ०त्युमार्थे ॥ चिदिति पूरकः Sy.
६. मान्त्यस्मिन् सर्वाणि भूतानीति मानम् । सर्वस्य भूतजातस्य परिच्छेदकमित्यर्थः Sy.
७. बलेवत् A. ०वन् ! is suggested for ०वत् । हे अन्नवन् ! Sy.
८. बहुद्वारम् Sy.　　९. गच्छानि । लोडर्थे लिट् Sy.　　१०. त्वदीयम् Sy.
११. आवि A.
१२. यः। ज्ञातिः is written twice in A. वसिष्ठः Sy.
१३. ०रसः is suggested for ०रसे ॥ नित्यो ध्रुवः । औरसः पुत्र इत्यर्थः Sy.
१४. प्रयः A.
१५. सन् is suggested for सन्त च ॥
१६. अनांसि A. आगांसि is suggested for अनांसि ॥ अपराधान् Sy. १७. अकरोत् Sy.
१८. स इदानीं ते तव सखा समानख्यानः प्रियोऽस्तु Sy.
१९. अनागसः is suggested for अनागसा ।
२०. एनसा पापेन युक्ताः सन्तः Sy.
२१. मा भुज्महि, त्वत्प्रसादात् पापरहिता एव सन्तो भोगान् भुनजामहै Sy.
२२. ०वन् ! is suggested for ०वत् ॥ हे यजनीय ! Sy.
२३. स्तोत्रं कुर्वते वसिष्ठाय Sy.
२४. ध्रुवं is missing in A.
२५. अनिष्टनिवारकं वरणीयं वा गृहम् Sy.
२६. VM. ignores स्म ॥ स्मेति पूरकः Sy.
२७. अत्र ऋग्विधानम्—'ध्रुवासु त्वासु क्षितिषु जपन् बन्धात्प्रमुच्यते । तिष्ठन्रात्रौ जपेदेतां पिशाचस्तं न गच्छति' (Rg. Vid. 2. 28) इति Sy.
२८. दृश्यमानासु Sy.　　२९. नित्यासु Sy.
३०. ०कारः कासु० is suggested for कार-कासु० ।
३१. निवसन्तो वयं त्वां स्तुम इति शेषः Sy.

वयमिदानीं भवामः । विमुमोक्तु[1] । अस्मत्तः । पाशम्[2] । वरुणः । गमनम्[3] । याचमाना वयम्[4] । अदितेः[5] । उपस्थानिदानीम्[6], बध्वो[7] दितेरुपस्थे तिष्ठति[8] विमुक्तः स्वैरं गच्छतीति[9] ।

VII. 89.

**मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् । मृळा सुक्षत्र मृळय ॥ १ ॥**

मा षु[10] । मैव । मृन्मयम्[11] । गृहम् । राजन्[12] ! अहम् । गच्छेयं[13] किं तर्हि सौवर्णमेव । स्विति[14] पूरणम् । सुखितो[15] भव । अस्मांश्च सुबल[16] मृळयः[17][18] ।

**यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः । मृळा सुक्षत्र मृळय ॥ २ ॥**

यदेमि । यत्[19] । गच्छामि[20] । प्रस्फुरन्निव[21] चोरः सभादर्शने । दृतिम्[22] । इव । चोदकेन भयेनास्मातः[23] । आयुधवान्[24] ।

---

१. विमुमोक् is missing in A. मोचयेत् Sy.

२. बन्धकं पापम् Sy.

३. रक्षणं वरुणेन दत्तम् Sy.

४. सम्भजमाना Sy.

५. अखण्डनीयायाः पृथिव्याः Sy.

६. ०स्थानिदीनीं A. ०स्थादिदा० is suggested for ०स्थानिदा० ॥ उपस्थादुपस्थानात् Sy.

७. बध्वोऽभ्यदि० A. बद्धोऽदिते० is suggested for बध्वोदिते० ।

८. तितिष्ठती A.

९. VM. ignores क्षितिषु ॥ क्षितिषु भूमिषु Sy.

१०. 'मो षु वरुण' इति पञ्चर्चमेकोनविंशं सूक्तं वारुणम् । अन्त्या जगती शिष्टाश्चतस्रो गायत्र्यः । तथा चानुक्रान्तम्—'मो षु पञ्च गायत्रं जगत्यन्तम्' (KSA. 38. 89. p. 26.) इति । गतो विनियोगः Sy.

११. त्वदीयं मृदादिभिर्निर्मितम् Sy.

१२. हे ईश्वर ! Sy.

१३. गतोऽस्मि । अपि तु सुशोभनं सुवर्णमयमेव त्वदीयं गृहं प्राप्नवानि Sy.

१४. स्वि (न्वि) ति A.

१५. स त्वं मां मृळ सुखय Sy.

१६. हे शोभनधन ! Sy.

१७. ०य is suggested for ०यः ॥ उपदयां च कुरु Sy.

१८. VM. ignores वरुण ।

१९. यदा Sy.

२०. गच्छामि तदानीं मृळ । सुखय हे सुक्षत्र ! सुधन ! मृळय उपदयां कुरु Sy.

२१. प्रस्थुरणिव A. शैत्येन प्रविचलन्निव त्वद्भयाद्वेपमानः Sy.

२२. धृतिम् M. दृतिः is suggested for दृतिम् ॥

२३. स्मातः M. आध्मातः is suggested for आस्मातः ॥ वायुना पूर्णः सन् त्वया बद्धोऽहम् Sy.

२४. वत् M. ०वन् ! is suggested for ०वान् ।

क्रत्वः समह दीनता प्रतीपं जंगमा शुचे । मृळा सुक्षत्र मृळयं ॥ ३ ॥

क्रत्वः[1] समह । हे पूजासहित[2] ! कर्मणः[3] । दीनतायाम्[4] । प्रतीपम्[5] । गच्छेम[6] । शिवचे[7] दीनं कर्म मास्मानुपतिष्ठत्वित्यर्थः ।

अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् । मृळा सुक्षत्र मृळयं ॥ ४ ॥

अपाम्[8] । समुद्रमध्यस्थानामपाम्[9] । मध्ये । तस्थिवांसम्[10] । स्तोतारं[11] माम् । अविन्दत्[12] । मृळा[13] । तथा सति मृळ[14] । सुक्षत्र ! मृळयेति[15] ।

यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ ५ ॥

यत्किं चेदम्[16] । यत् । किम्[17] । च । इदम्[18] । वरुण[19] ! दैव्ये[20] । जने । मनुष्याः सन्तो वयम्[21] । अभिद्रोहम्[22] । चरामो[23] देवदृष्टानि व्रतानि न तथा कुर्म इत्यर्थः । अज्ञानेन[24] । यच्च । तव[25] । धर्माणि[26] । युयोपिम[27] शुभानामशुभानां च समीकरणं योपनम्[28] । मा । अस्मान् । तस्मात् । पादेः[29] । देव ! हिंसीः[30] ।

---

१. क्रयः सम A.
२. हे सधन ! Sy.
३. कर्तव्यत्वेन विहितस्य श्रौतस्मार्तादिलक्षणस्य Sy.
४. दीना कायां A. दीनतया शक्ततया Sy.
५. प्रतीवं A. प्रतिकूलमनुष्ठानम् Sy.
६. प्राप्तवानस्मि । अतएव त्वया बद्धः । तादृशं मां मृळ । सुखय । अन्यद्गतम् Sy.
७. चिचे M. शुचे is suggested for शिवचे ॥ हे स्वभावतो निर्मल ! Sy.
८. अवात् A. ९. समुद्राणामुदकानाम् Sy.
१०. स्थितवन्तमपि Sy.
११. स्तोता० A. तव स्तोतारं माम् Sy.
१२. आप्तवती लवणोत्कटस्य सामुद्रजलस्य पानानर्हत्वात् Sy.
१३. पिपासा Sy.
१४. तृष्णा is suggested for मृळा ।
१५. मिळ० A. अतस्तादृशं मां मृळ सुखय । अन्यद्गतम् Sy.
१६. देवसुवां हविःषु वारुणस्य हविषो 'यत्किं चेदम्' इति याज्या । सूत्रितञ्च—'यत्किं चेदं वरुण दैव्ये जन उप ते स्तोमान् पशुपा इवाकरमिति द्वे' (ĀSS. 4. 11.) इति Sy.
१७. तद्विषये किञ्चित् स्वल्पमपि वा BB.
१८. इदमिति क्रियाविशेषणम् BB.
१९. हे वरुण ! देव ! Sy.
२०. दैव्ये A. देवसमूहरूपे Sy. देवप्रभवे BB.
२१. मनुष्यस्वभावात्सम्भाव्यमानप्रमादाः BB.
२२. अपकारजातम् Sy. अभितो द्रोहम् BB.
२३. निर्वर्तयामः Sy.
२४. ज्ञानेन M. २५. त्वदीयम् Sy.
२६. यद्धारकं कर्म Sy.
२७. वयं विमोहितवन्तः Sy. विनाशयामः । 'युपु विमोहने' BB.
२८. योवनं A.
२९. पापैः M. पापादेः is suggested for पादेः ॥ अभिद्रोहलक्षणाद्धर्मविलोपलक्षणाच्च हेतुभूतात् BB.
३०. अपि त्वनुगृहाणैव BB. This stanza TS. 3. 4. 11. 6.

VII 90

**प्र वी॒रया॒ शुच॑यो दद्रिरे वामध्व॒र्युभि॒र्मधु॑मन्तः सु॒तासः॑ ।**
**वह॑ वायो नि॒युतो॑ या॒ह्यच्छा॒ पिबा॑ सु॒तस्यान्ध॑सो॒ मदा॑य ॥ १ ॥**

प्र[1] वीरया । प्रकर्षेण । आद्रियन्ते[2] । युवयोः[3] । वीर्यकरणेच्छया[4] । शुचयः[5] । अध्वर्युभिः[6] । मधुमन्तः[7] । सुताः[8] सोमाः । वह[9] । वायो[10] ! त्वं प्रापयात्मानं तदर्थम् । नियुतः[11] । अभियाहि[12] । पिब । सुतम्[13] । सोमम्[14] । मदार्थमिन्द्रेण[15] सहेति ।

---

१. षष्ठेऽनुवाके पञ्चदश सूक्तानि । तत्र 'प्र वीरया' इति । सप्तर्चं प्रथमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम् । यासु पञ्चम्याद्यासु द्विवचनमस्ति ता ऐन्द्रवायव्यः । तथा चानुक्रान्तम्—'प्र वीरया सप्त वायव्यं ह्यैन्द्रयश्च या द्विवद्वताः' (KSA. 38. 90. p. 26.) इति । तृतीये छन्दोमे प्रउगशस्त्रे 'प्र वीरया' इति वायव्यस्तृचः । सूत्रितं च—'प्र वीरया शुचया दद्रिरे वां ते सत्येन मनसा दीध्यानाः' (ĀSS. 8. 11.) इति Sy.

२. प्रदीयन्ते—'दद दाने' इत्यस्यैतद्रूपम् Sy. विदीर्णाश्चूर्णीभूताः । 'द्रु विदारणे' कर्मकर्तरि लिट् Mah. 'दृ विदारणे' विदीर्णाः कणीभूताः U.

३. ते । व्यत्ययेन द्विवचनम् । तुभ्यम् Sy. वामिति द्विवचनं पत्नीयजमानविषयम् । हे पत्नीयजमानौ ! वां युवयोः स्वभूताः सोमाः Mah. वां युवयोः सम्बन्धिनः, हे यजमानौ ! जायापती ! U.

४. वीराय विविधमीरयित्रे 'सुपां सुलुक्०' इति चतुर्थ्या याजादेशः Sy. प्रकृष्टा वीरा ज्ञानोद्भवा ऋत्विजो येषां सोमानां ते प्रवीराः Mah. प्रवीरया बहुवचनस्य स्थाने यादेशः । प्रकृष्टवीराः सोमाः U.

५. ०ये A. शुद्धाः Sy. निर्मलाः Mah. स्वभावादेव शुद्धाः U.

६. अध्ववर्यभिः A. ऐतरेयिभिर्नवमेऽहनि प्रउगेऽध्वर्युभिरध्वरस्य नेतृभिरृत्विग्भिः Sy. 'ग्रावभिर्द्रोणभावमापादिता अभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात्' (9. 5. 1.) इति कात्यायनस्मरणादध्वर्युभिरिति बहुवचनम् । अध्वरनेतृभिरृत्विग्विशेषैः सुता इत्यर्थः Mah.

७. माधुर्योपेताः Sy. मधुनिग्राभ्यारूपमुदकम्, तद्वन्तः Mah. उदकवन्तः U.

८. अभिषुताः Sy. सुता अभिषवधर्मेण Mah. अभिषुता ग्रावभिः U.

९. सह A. रथं प्रापय Sy. देवयजनदेशं प्रापय Mah. प्रापय U.

१०. यत एवमतः कारणाद् हे वायो ! Sy. एवं पूर्वार्धे पत्नीयजमानौ सम्बोध्य वायुमाह । वाति सर्वत्र गच्छति वायुः, हे वायो ! Mah. एवमनेनार्धर्चेन यजमानौ सम्बोध्याथेदानीं सम्बोधयति वायुम् U.

११. वडवाः Sy. नियुतोऽश्वान् Mah. नियुद्गणकानश्वान् U.

१२. तेन रथेनाच्छ याहि अस्मद्यज्ञमभिगच्छ Sy. अच्छाभेरर्थे, आप्तुमिति वा सोमाभिमुखं सोममाप्तुं वा याहीत्यर्थः Mah. सोमं वाप्राप्तुम् U.

१३. अभिगत्य चाभिषुतस्य Sy. अभिषुतस्य Mah. U.

१४. अन्नस्य सोमलक्षणस्य स्वकीयं भागम् Sy. सोमस्य स्वमंशम् Mah. सोमस्य U.

१५. तृप्तये मत्ततायै वा Mah. तृप्तये मदजननायै वा U. This stanza=YV. 33. 70.

ई॒शा॒नाय॒ प्रहु॑ति॒ यस्त॒ आन॑ट् शुचिं॒ सोमं॑ शुचिपास्तु॒भ्यं॑ वायो ।
कृ॒णोषि॒ तं मर्त्ये॑षु प्रश॒स्तं जा॒तोजा॑तो जायते वा॒ज्य॑स्य ॥ २ ॥

ईशानाय[1]। ईशानाय[2]। प्रकर्षेण। होतव्यं प्रमुखे वा होतव्यम्[3]। य.[4]। तुभ्यम्[5]। प्रापयति[6]। शुचि[7] सोमम्[8]। शुद्धस्य सोमस्य प.त.[9]! तुभ्यम्। वायो ! करोषि। तम्[10]। मनुष्येषु[11]। प्रशस्तम्[12]। जातोजातः[13] पुत्रः। अस्य[14]। बलवान्[15]। जायते सर्वः पुत्रो बलवान् भवति।

रा॒ये नु यं ज॒ज्ञतू॒ रोद॑सी॒मे रा॒ये दे॒वी धि॒षणा॑ धाति दे॒वम् ।
अध॑ वा॒युं नि॒युतः॑ सश्चत॒ स्वा उ॒त श्वे॒तं वसु॑धितिं निरे॒के ॥ ३ ॥

राये नु[16]। धनार्थम्[17]। यत्[18]। जनयत[19]। इमे। द्यावापृथिव्यौ। तं देवम्[20]। धनार्थम्[21]। मदीया

१. शुनासीरीये पर्वणि वायव्यस्य हविषः 'ईशानाय' इति याज्या। सूत्रितं च—'स त्वं नो देव मनसेशानाय प्रहुतिं यस्त आनट्' (ĀSS. 2. 20) इति। वायव्ये पशावेवैव पशुपुरोडाशस्य याज्या। सूत्रितञ्च—'ईशानाय प्रहुतिं यस्त आनट् प्र वो वायुं रथयुजं कृणुध्वम्' (ĀSS. 3. 8.) इति Sy.

२. ईश्वराय Sy.

३. हेतव्यं M. प्रकृष्टामाहुतिं चरुपुरोडाशादिसाध्याम् Sy. ४. यजमानः Sy.

५. त्वदर्थम् Sy. ६. प्राप्नोत् दद्यादित्यर्थः Sy.

७. शुचिम् is suggested for शुचि ॥ शुद्धम् Sy. ८. यः प्रयच्छति Sy.

९. ०स्या पातः A. १०. यजमानम् Sy.

११. मनुष्येषु मध्ये Sy. १२. मुख्यम् Sy.

१३. सर्वत्र प्रादुर्भूतः प्रख्यातः सन् Sy.

१४. Sy. seems to take वाज्यस्य as one word and explain वाजस्य प्राप्तव्यस्य धनस्य प्राप्तये but according to *pathapātha* VM. takes them as two words वाजी and अस्य।

१५. जायते सर्वः पुत्रो बलवान् is missing in A. जायते अवकल्पते सर्वं धनं लभत इत्यर्थः Sy.

१६. नियुत्वद्गुणविशिष्टवायुदेवताके पशौ 'राये नु यम्' इति पुरोडाशस्य याज्या। सूत्रितञ्च—'राये नु यं जज्ञतू रोदसीमे प्र वायुमच्छा बृहती मनीषा' (ĀSS. 3. 8.) इति Sy.

१७. राये धनायोदकरूपाय Mah. धनायोदकलक्षणाय U.

१८. यम् is suggested for यत् ॥ वायुम् Sy., Mah., U.

१९. जनयताम् is suggested for जनयत ॥ जनयामासतुः Sy. उत्पादयामासतुः। नु क्षिप्रम्....रोदस्योः सद्भावेऽपि वायुं विना जगद्धारणाशक्तेर्वायुरुत्पादितः Mah. नु क्षिप्रम्...जनयामासतुः।....अनयोर्द्यावापृथिव्योः संयोगेऽपि सति वायुमन्तरेण जगद्धारणं नोपपद्यत इति जनितवत्यौ द्यावापृथिव्यौ U.

२० दानादिगुणयुक्तं वायुम् Sy. वायुम् Mah. दानादिगुणयुक्तम् U.

२१. धनाय Mah. धनायोदकलक्षणाय U.

बुद्धिः[1] धारयति[2] । तदनन्तरमेव[3] । मया गमनार्थं[4] वायुः[5] । नियुत[6] । सवन्ते[7] । स्वाः[8] । अपि च[9] । श्वेतवर्णम् । दत्त धनम्[10] । निर्गमने[11] दारिद्र्ये वा[12] स्तोतॄणामिति[13] ।

**उच्छन्नुषसः सुदिना अरिप्रा उरु ज्योतिर्विविदुर्दीध्यानाः ।**
**गव्यं चिदूर्वमुशिजो वि वव्रुस्तेषामनु प्रदिवः सस्रुरापः ॥ ४ ॥**

उच्छन्[14] । व्युच्छन्ति[15] । उषसः[16] । सुदिनाः[17] । अवापाः[18] । उरु[19] । ज्योतिश्च[20] । लेभिरे[21] । दीप्यमाना अग्नयः । गव्यम्[22] । च[23] । संघातम् । कामयमाना[24] देवाः । विवृतद्वारमकुर्वन्[25] । तान्[26] । आपश्च । दीप्ताः पुरातनाः वा[27] । अनुसस्रुः[28] ।

---

१. बुद्धि A. स्तुतिः Sy. धियं सनोति ददाति धिषणा वाग्देवी ।....धिषणेति ह्रस्वमार्षम् Mah. धियं बुद्धिं कर्म वा सनोति सम्भजत इति धिषणा वाङ् मध्यस्थाना U.

२. धनं यथा लभते तथा प्रेरयतीत्यर्थः Sy. धारयति । शपो लुक् Sy.

३. अधुनैव स्तुतौ प्रवृत्तायाम् Sy. अथोत्पत्त्यनन्तरमेव Mah. अध अथेत्यर्थः । समनन्तरमेव U.

४. मर्याग० A. ममागमनार्थम् suggested for मयागमनार्थम्.

५. वायुम् is suggested for वायुः ॥ तं वायुम् U.

६. नियुतः is suggested for नियुत ॥ वडवा रथवाहाः...अस्मद्यज्ञं प्रापयन्तीत्यर्थः Sy. निजाश्वाः Mah. अश्वाः U.

७. सेवन्ते । 'षच् सेवने' पुरुषव्यत्ययः Mah. सरन्तः सेवन्तः U.

८. स्वकीयाः Sy.

९. निश्चितम् Mah.

१०. धत्त० M. वसूनां धातारं प्रदातारं वा तं वायुम् Sy. वसुनो धनस्य धितिर्धारणं यत्र तं धनस्य धारयितारम् Mah. वसुनो धनस्योदकलक्षणस्य धारयितारम् U.

११. नितरां रेको रिक्तता निरेकः । दारिद्र्यमित्यर्थः । तस्मिन् सति Sy. निर्गतो रेको रेचनं रेकः शून्यता यस्मात्तादृशे बहुजनाकीर्णे स्थाने Mah. जनैराकीर्णप्रदेशेऽवस्थितं वायुम् U.

१२. ०द्र्यो वा पा स्तो० A. वा पास्तो नृणा० M.

१३. VM. ignores नु and देवी ॥ नु क्षिप्रम् । देवी द्योतमानः Sy.
This stanza=YV. 27. 24.

१४. द्वितीये छन्दोमे प्रउगशस्त्रे वायव्यतृचस्य 'उच्छन्नुषसः' इति तृतीया । सूत्रितं च—'उच्छन्नुषसः सुदिना अरिप्रा इत्येकपातिन्यः' (ĀSS. 8. 10) इति Sy.

१५. औच्छन्, व्यवासयन् Sy.

१६. ऊषसः A.

१७. शोभनदिनस्य हेतुभूताः सन्तः Sy.

१८. अरापाः is suggested for अवापाः ॥ येऽङ्गिरसो वायुमस्तोषत तेषामरिप्राः पापरहिताः Sy.

१९. विस्तीर्णम् Sy.

२०. सूर्याख्यम् Sy.

२१. वायोः प्रसादादलभन्त Sy.

२२. गोसङ्घरूपम् Sy.

२३. धनं पणिभिरपहृतम् Sy.

२४. अपि च कामयमानास्तेऽङ्गिरसः Sy.

२५. व्यवृण्वन् । अलभन्त Sy.

२६. तथा तेषामङ्गिरसामर्थाय Sy.

२७. पुराण्यः Sy.

२८. अनुबसस्रु A. अन्वसरन् हिताहिताचरणपरा आसन्नित्यर्थः । आवरकस्यासुरस्य वायुना हननादसुरेणाहृतानुषःप्रभृतीन् पुनर्लब्धवन्तः Sy.

**ईशा॒नाय॒ प्रहु॑तिं॒ यस्त॒ आन॒ट् शुचि॑ं॒ सोमं॑ शु॒चिपा॒स्तुभ्य॑ं वायो ।**
**कृ॒णोषि॒ तं मर्त्ये॑षु प्रश॒स्तं जा॒तोजा॑तो जायते वा॒ज्य॑स्य ॥ २ ॥**

ईशानाय[1] । ईशानाय[2] । प्रकर्षेण । होतव्यं[3] प्रमुखे वा होतव्यम् । यः[4] । तुभ्यम्[5] । प्रापयति[6] । शुचि[7] सोमम्[8] । शुद्धस्य सोमस्य प.त.[9] ! तुभ्यम् । वायो ! करोषि । तम्[10] । मनुष्येषु[11] । प्रशस्तम्[12] । जातोजातः[13] पुत्रः । अस्य[14] । बलवान्[15] । जायते[15] सर्वः पुत्रो बलवान् भवति ।

**रा॒ये नु यं ज॒ज्ञत॒ू रोद॑सी॒मे रा॒ये दे॒वी धि॒षणा॑ धाति दे॒वम् ।**
**अध॑ वा॒युं नि॒युतः॑ सश्चत॒ स्वा उ॒त श्वे॒तं वसु॑धितिं निरे॒के ॥ ३ ॥**

राये नु[16] । धनार्थम्[17] । यत्[18] । जनयत[19] । इमे । द्यावापृथिव्यौ । तं देवम्[20] । धनार्थम्[21] । मदीया

---

१. शुनासीरीये पर्वणि वायव्यस्य हविषः 'ईशानाय' इति याज्या । सूत्रितं च—'स त्वं नो देव मनसेशानाय प्रहुतिं यस्त आनट्' (ĀSS. 2. 20) इति । वायव्ये पशावेवैव पशुपुरोडाशस्य याज्या । सूत्रितञ्च—'ईशानाय प्रहुतिं यस्त आनट् प्र वो वायुं रथयुजं कृणुध्वम्' (ĀSS. 3. 8.) इति Sy.

२. ईश्वराय Sy.

३. हेतव्यं M. प्रकृष्टामाहुतिं चरुपुरोडाशादिसाध्याम् Sy. ४. यजमानः Sy.

५. त्वदर्थम् Sy. ६. प्राप्नोत् दद्यादित्यर्थः Sy.

७. शुचिम् is suggested for शुचि ॥ शुद्धम् Sy. ८. यः प्रयच्छति Sy.

९. ०स्या पातः A. १०. यजमानम् Sy.

११. मनुष्येषु मध्ये Sy. १२. मुख्यम् Sy.

१३. सर्वत्र प्रादुर्भूतः प्रख्यातः सन् Sy.

१४. Sy. seems to take वाज्यस्य as one word and explain वाजस्य प्राप्तव्यस्य धनस्य प्राप्तये but according to *pathapātha* VM. takes them as two words वाजी and अस्य ।

१५. जायते सर्वः पुत्रो बलवान् is missing in A. जायते अवकल्पते सर्वं धनं लभत इत्यर्थः Sy.

१६. नियुत्वद्गुणविशिष्टवायुदेवताके पशौ 'राये नु यम्' इति पुरोडाशस्य याज्या । सूत्रितञ्च—'राये नु यं जज्ञतू रोदसीमे प्र वायुमच्छा बृहती मनीषा' (ĀSS. 3. 8.) इति Sy.

१७. राये धनायोदकरूपाय Mah. धनायोदकलक्षणाय U.

१८. यम् is suggested for यत् ॥ वायुम् Sy., Mah., U.

१९. जनयताम् is suggested for जनयत ॥ जनयामासतुः Sy. उत्पादयामासतुः । नु क्षिप्रम् . . . . रोदस्योः सद्भावेऽपि वायुं विना जगद्धारणाशक्तेर्वायुरुत्पादितः Mah. नु क्षिप्रम् . . . जनयामासतुः । . . . . अनयोर्द्यावापृथिव्योः संयोगेऽपि सति वायुमन्तरेण जगद्धारणं नोपपद्यत इति जनितवत्यौ द्यावापृथिव्यौ U.

२० दानादिगुणयुक्तं वायुम् Sy. वायुम् Mah. दानादिगुणयुक्तम् U.

२१. धनाय Mah. धनायोदकलक्षणाय U.

बुद्धि[1]: धारयति[2] । तदनन्तरमेव[3] । मया[4] गमनार्थं वायु[5]: । नियुत[6] । सवन्ते[7] । स्वाः[8] । अपि[9] च । श्वेतवर्णम् । दत्त[10] धनम् । निर्गमने[11] दारिद्र्ये वा[12] स्तोतॄणामिति[13] ।

**उ॒च्छन्नु॒षसः॑ सु॒दिना॑ अरि॒प्रा उ॒रु ज्योति॑र्विविदु॒र्दीध्या॑नाः ।**
**गव्यं॑ चि॒दू॒र्वमु॒शिजो॒ वि व॑व्रु॒स्तेषा॒मनु॑ प्र॒दिवः॑ सस्रु॒रापः॑ ॥ ४ ॥**

उच्छन्[14] । व्युच्छन्ति[15] । उषसः[16] । सुदिनाः[17] । अवापाः[18] । उरु[19] । ज्योतिश्च[20] । लेभिरे[21] । दीप्यमाना अग्नयः । गव्यम्[22] । च[23] । संघातम् । कामयमाना[24] देवाः । विवृतद्वारमकुर्वन्[25] । तान्[26] । आपश्च । दीप्ताः पुरातनाः[27] वा । अनुसस्रुः[28] ।

---

१. बुद्धि A. स्तुतिः Sy. धियं सनोति ददाति धिषणा वाग्देवी ।....धिषणेति ह्रस्वमार्षम् Mah. धियं बुद्धिं कर्म वा सनोति सम्भजत इति धिषणा वाङ् मध्यस्थाना U.
२. धनं यथा लभते तथा प्रेरयतीत्यर्थः Sy. धारयति । शपो लुक् Sy.
३. अधुनैव स्तुतौ प्रवृत्तायाम् Sy. अथोत्पत्त्यनन्तरमेव Mah. अध अथेत्यर्थः । समनन्तरमेव U.
४. मयागा॰ A. ममागमनार्थम् suggested for मयागमनार्थम्.
५. वायुम् is suggested for वायुः ॥ तं वायुम् U.
६. नियुतः is suggested for नियुत ॥ वडवा रथवाहाः...अस्मद्यज्ञं प्रापयन्तीत्यर्थः Sy. निजाश्वाः Mah. अश्वाः U.
७. सेवन्ते । 'षच् सेवने' पुरुषव्यत्ययः Mah. सरन्तः सेवन्तः U.
८. स्वकीयाः Sy.
९. निश्चितम् Mah.
१०. धत्त॰ M. वसूनां धातारं प्रदातारं वा तं वायुम् Sy. वसुनो धनस्य धितिर्धारणं यत्र तं धनस्य धारयितारम् Mah. वसुनो धनस्योदकलक्षणस्य धारयितारम् U.
११. नितरां रेको रिक्तता निरेकः । दारिद्र्यमित्यर्थः । तस्मिन् सति Sy. निर्गतो रेको रेचनं रेकः शून्यता यस्मात्तादृशे बहुजनाकीर्णे स्थाने Mah. जनैराकीर्णप्रदेशेऽवस्थितं वायुम् U.
१२. ॰द्र्यो वा पा स्तो॰ A. वा पास्तो नृणा॰ M.
१३. VM. ignores नु and देवी ॥ नु क्षिप्रम् । देवी द्योतमानः Sy.
This stanza=YV. 27. 24.
१४. द्वितीये छन्दोमे प्रउगशस्त्रे वायव्यतृचस्य 'उच्छन्नुषसः' इति तृतीया । सूत्रितं च—'उच्छन्नुषसः सुदिना अरिप्रा इत्येकपातिन्यः' (ASS. 8. 10) इति Sy.
१५. औच्छन्, व्यवासयन् Sy.
१६. ऊषसः A.
१७. शोभनदिनस्य हेतुभूताः सन्तः Sy.
१८. अपापाः is suggested for अवापाः ॥ येऽङ्गिरसो वायुमस्तोषत तेषामरिप्राः पापरहिताः Sy.
१९. विस्तीर्णम् Sy.
२०. सूर्याख्यम् Sy.
२१. वायोः प्रसादादलभन्त Sy.
२२. गोसङ्घरूपम् Sy.
२३. धनं पणिभिरपहृतम् Sy.
२४. अपि च कामयमानास्तेऽङ्गिरसः Sy.
२५. व्यवृण्वन् । अलभन्त Sy.
२६. तथा तेषामङ्गिरसामर्थाय Sy.
२७. पुराण्यः Sy.
२८. अनुबसस्रु A. अन्वसरन् हिताहिताचरणपरा आसन्नित्यर्थः । आवरकस्यासुरस्य वायुना हननादसुरेणाहृतानुषःप्रभृतीन् पुनर्लब्धवन्तः Sy.

ते सत्येन मनसा दीध्यानाः स्वेन युक्तासः क्रतुना वहन्ति ।
इन्द्रवायू वीरवाहं रथं वामीशानयोरभि पृक्षः सचन्ते ॥ ५ ॥

ते सत्येन[1] । ते[2] । सत्येन[3] । मनसा[4] । दीप्यमाना अमुग्धमनसः[5] । स्वेन[6] । प्रज्ञानेन[7] । युक्ताः[8] । वहन्ति[9] । हे इन्द्रवायू ! वीरयोर्युवयोर्वोढारम्[10] । रथम्[11] । वर्णी (पणि) जेतुं तथेश्वरयोः[12] । भवतोः सतोः[13] । पणिभ्यो गोलक्षणमन्नं च[14] । सचन्ते[15][16] ।

ईशानासो ये दधते स्वर्णो गोभिरश्वेभिर्वसुभिर्हिरण्यैः ।
इन्द्रवायू सूरयो विश्वमायुरर्वद्भिर्वीरैः पृतनासु सह्युः ॥ ६ ॥

ईशानाः[17] । हे इन्द्रवायू ! शक्ताः[18] ये[19] । धारयन्ति[20] । सर्वम्[21] । अस्माकम् । गवादिभिः सह धनं[22] ते । सूरयः स्तोतारोऽस्मदीयाः[23] । विश्वम्[24] । अन्नम्[25] । अश्वैः[26] । वीरैश्च । सङ्ग्रामेषु । अभिभवन्तु[27] ।

अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः ।
वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

अर्वन्तः[28] । अश्वाः । इव[29] । धासमन्नम्[30] । भिक्षमाणाः[31] । इन्द्रवायू[32] ! शोभनाभिः स्तुतिभिः ।

१. तृतीये छन्दोमे प्रउगशस्त्रे 'ते सत्येन' इत्यैन्द्रवायवस्तृचः । सूत्रितञ्च—'ते सत्येन मनसा दीध्याना दिवि क्षयन्ता रजसः पृथिव्यान्' (ĀSS. 8. 11.) इति Sy. २. The *Pratīka* is supplied by the Editor.
३. प्रसिद्धाः Sy. ४. यथार्थेन Sy.
५. मननीयेन स्तोत्रेण Sy. ६. स्वकीयेन Sy.
७. कर्मणा नित्यनैमित्तिकात्मना Sy.
८. युक्ता एवम्भूता यजमानाः Sy.
९. स्वं स्वं यज्ञं प्रापयन्ति Sy.
१०. ०धारं A. वीरैर्विशेषेणेरयितृभिः स्तोतृभिर्वहनीयं प्रापणीयं यद्वा वीरैरश्वैर्वहनीयम् Sy.
११. रथम् is omitted by M.
१२. वर्णी जेतु A. पणीन् is suggested for वर्णी [पणि] ।
१३. ०तेः स० A. युवयोः स्वभूतम् Sy.
१४. तत्र च पृक्षोऽन्नानि हविर्लक्षणानि Sy.
१५. युवामभिसेवन्ते Sy.
१६. VM. ignores अभि ।
१७. ०न सः M. १८. ईश्वराः प्रभवः Sy.
१९. जनाः Sy. २०. ददति प्रयच्छन्ति Sy.
२१. सुष्ठ्वरणीयं सुखम् Sy.
२२. आदि refers to अश्वेभिः। वसुभिः and हिरण्यैः॥ अश्वेभिरश्वैः। वसुभिर्निवासकैः। हिरण्यैश्च सहितम्। यद्वा हिरण्यव्यतिरिक्तानि धनानि वसूनि । तैर्हिरण्यैश्च सहेत्यर्थः Sy.
२३. दातारः Sy. २४. व्याप्तम् Sy.
२५. अन्नं जीवनं वा शत्रूणां स्वभूतम् Sy.
२६. सूरभटैश्च साधनभूतैः। यद्वा सहार्थे तृतीया। अर्वद्भिर्वीरैः पुत्रैश्च सहितं शत्रूणामायुरभिभवेयुरित्यर्थः Sy. २७. अभिभवेयुः Sy.
२८. अवन्त A. २९. हविषां वोढारः Sy.
३०. श्रवसः अन्नस्य। द्वितीयार्थे षष्ठी । अन्नम् Sy.
३१. याचमानाः Sy. ३२. इन्द्रं वायुञ्च Sy.

वसिष्ठाः[1] । अन्नमिच्छन्तः[2] । सुष्ठु । आह्वयेम[3] । रक्षणार्थमिति[4] ।

VII. 91.

**कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।**
**ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥ १ ॥**

कुविदङ्ग[5] । बहु[6] । क्षिप्रम्[7] । हविषा[8] । वृद्धाः । पुरा[9] । ये । देवाः[10] । अनवद्याः[11] । अभवन् । ते । शत्रुभिर्बाधिताय[12] । मनवे[13] राज्ञे तद्धविर्भिः प्रीता[14] यज्ञमुखे । वायुमयं यजत्विति मन्यमानास्तद्यागार्थम् । सूर्येण[15] सह । उषसम् । अवासयन्निति[16] ।

**उशन्ता दूता न दभाय गोपा मासश्च पाथः शरदश्च पूर्वीः ।**
**इन्द्रवायू सुष्टुतिर्वामियाना मार्डीकमीट्टे सुवितं च नव्यम् ॥ २ ॥**

उशन्ता[17] । कामयमाना[18] । दूतौ[19] । न । हिंसायै भवथः[20] । गोपयितारौ[21] । मासान्[22] । च । रक्षथः[23] ।

---

१. वसिष्ठा वयम् Sy.  २. अग्निमि॰ A. बलमात्मन इच्छन्तः Sy.

३. सुष्टवतां [पां] ह्वये॰ M. आह्वयेमहि । अन्यद्गतम् Sy.

४. Sy. seems to take सु and अवसे as one word स्ववसे and explain as शोभनरक्षणाय सुष्ठुतर्पणाय वा Sy.

५. 'कुविदङ्ग' इति सप्तर्चं द्वितीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम् । 'कुविदङ्ग' इत्यनुक्रान्तम् (KSA. 38. 91. p. 26) । गतः सूक्तविनियोगः । वायव्ये पशौ 'कुविदङ्ग' इति वपाया याज्या । सूत्रितं च—'कुविदङ्ग नमसा ये वृधासः ईशानाय प्रहुतिं यस्त आनट्' (ĀSS 3. 8.) इति Sy.

६. कुविदिति बहुनाम Ngh. 3.1.

७ क्षिप्रं कृतेन Sy. अङ्गेति क्षिप्रनाम N. 5. 17.

८. वायुविशेषेण स्तोत्रेण नमस्कारेण वा Sy.

९. पूर्वस्मिन् काले Sy.

१०. दीव्यन्ति स्तुवन्तीति देवाः स्तोतारः Sy.

११. ॰पद्याः A. अवद्यरहिताः Sy.

१२. बाधितानां पुत्रादीनां रक्षणार्थमित्यर्थः । यद्वा मनवे बाधितायेति षष्ठ्यर्थे चतुर्थी । बाधितस्य मनोः प्रजापतेर्यागे वायवे हवींषि दातुमित्यन्वयः Sy.

१३. मनुष्याणाम् Sy.  १४. ॰विभीः प्री॰ A.

१५. सूर्येण is omitted by A.

१६. उषसो व्युष्टिं सूर्योदयं च वायुयागार्थं कुर्वन्तीत्यर्थः Sy.

१७. द्वितीये छन्दोमे प्रउगशस्त्रे ऐन्द्रवायवतृचस्य 'उशन्ता' इत्येषा प्रथमा । सूत्रितञ्च—'उशन्ता दूता न दभाय गोपा यावत्तरस्तन्वो यावदोज इत्येका द्वे च' (ĀSS 8. 10) इति Sy.

१८. ॰मानौ is suggested for ॰माना ॥

१९. देवतेर्गतिकर्मणो दूतशब्दः । गन्तारौ Sy.

२०. ॰यै प भव॰ A. भवतम् Sy.

२१. गोपारयि॰ A. गोपायि॰ is suggested for गोपयि॰ ।

२२. मासा॰ A.  २३. रक्षतम् Sy.

शरदः[1]। च। बह्वीः। हे[2] इन्द्रवायू ! सुष्टुतिः[3]। वाम्[4]। गच्छन्ती[5]। सुखम्। इच्छति[6]। शोभनं, च, गमनम्[7]। नवतरम्[8], पुत्रो वा सुपित[9] इति।

**पीवोअन्नाँ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः।**
**ते वायवे समनसो वि तस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः॥ ३॥**

पीवोअन्नान्[10]। स्थूलान्नान्[11]। नया वृद्धान्[12]। सुप्रज्ञः[13]। श्वेतवर्णः[14]। सेवते वायुः[15]। नियुताम्[16]। अभिगन्ता[17]। ते[18] वायमेव[19] यष्टव्य इति[20]। सङ्गतमनसः[21]। वायवे[22]। तिष्ठन्ति[23]। विविधम्। विश्वानि[24]। एव[25]।

---

१. संवत्सरांश्च, चिरकालम् Sy.

२. हे is missing in A.

३. अस्मदीया शोभना स्तुतिः Sy.

४. युवाम् Sy.

५. न्ती। सुखम्। इच्छ is missing in A. गच्छन्ती प्राप्नुवन्ती Sy.

६. याचते। यद्वा सुखं यथा स्यात्तथा स्तौति Sy.

७. सुचितं सुष्ठु प्राप्यं धनम् Sy.

८. तथा प्रशस्यम् Sy.

९. सुवित is suggested for सुपित। The passage पुत्रो वा सुपि(वि)तः Should immediately follow गमनम् and precede नवतरम्।

१०. नियुत्वद्वायुदेवताके पशौ 'पीवोअन्नान्' इति वपाया याज्या। सूत्रितं च—'पीवोअन्नाँ रयिवृधः सुमेधा राये नु यं जज्ञतू रोदसीमे' (ĀSS 3. 8.) इति। तथा द्वितीये छन्दोमे प्रउगशस्त्रे वायव्यतृचस्यैषैव द्वितीया। सूत्रितञ्च—'पीवोअन्नाँ रयिवृधः सुमेधा उच्छन्नुषसः सुदिना अरिप्राः' (ĀSS. 8. 10) इति Sy.

११. ०न्नात् A.

१२. पीवांसि स्थूलानि प्रभूतान्यन्नानि येषां तान् Sy. पीवः पुष्टमन्नं येषां तान्।...पीवोअन्नानित्यत्र सन्ध्यभावः Mah. पीवः पुष्टमन्नं येषामिति पीवोअन्नान् U.

१३. नर्या A. रय्या is suggested for नया॥ रय्या धनेन वृद्धान् एवम्भूतानाढ्यजनान् Sy. रयिं धनं वर्धयन्ति तान् Mah. रयिं धनं ये वर्धयन्ति ते रयिवृधः U.

१४. शोभनप्रज्ञः Sy. शोभना मेधा बुद्धिर्यस्य Mah. कल्याणप्रज्ञानो वायुः U.

१५. 'शुक्लो हि वायुः' इति श्रुतेः श्वेतो वायुः Mah. श्वेतो वायोर्वर्णवचनम् U.

१६. यान् नियुतोऽश्वान् सिषक्ति सेवते Mah. सेचति U.

१७. वडवानां स्ववाहानाम् Sy. अश्वानाम् Mah.

१८. अभिश्रयणीयः Sy. आश्रयणीयः Mah. अभ्याश्रयणीयः U.

१९. ते नियुतः Mah. ते नियुतोऽश्वाः U.

२०. वाय० A.

२१. समानमनस्काः सन्तः Sy. सममनस्काः सन्तः Mah. समनस्काः सन्तः U.

२२. वायुमुद्दिश्य यष्टुम् Sy. वायवेऽर्थाय Mah., U.

२३. तिषष्ठन्ति A. अवतिष्ठन्ते Sy. विशेषेण तिष्ठन्ति Mah.

२४. सर्वाणि Sy. Mah.

२५. इत् पादपूरणे U.

मनुष्याः[1] । कर्माणि वायवे चक्रुः[2] । शोधना[3]न्य[4]पतननिमित्तानि येषु तानि स्वपत्यानीति ।

**यावत्तरस्तन्वो॒ यावदोजो यावन्नरश्चक्षसा दीध्यानाः ।**
**शुचिं सोमं शुचिपा पातमस्मे इन्द्रवायू सदतं बर्हिरेदम् ॥ ४ ॥**

यावत्तरः[5][6] । यावत्प्रमाणः । वेगः । शरीरस्य । यावच्च[7] । ओजः[8] । यावच्च । मनुष्याः[9] । चक्षुषा[10] पश्यन्ति युवयोः शरीरम् । दीप्यमाना[11] युवानः । ताः वात[12] शरीरेणागतौ ? शिष्टं[13] स्पष्टमिति[14] ।

**नियुवाना नियुतः स्पार्हवीरा इन्द्रवायू सरथं यातमर्वाक् ।**
**इदं हि वां प्रभृतं मध्वो अग्रमध प्रीणाना वि मुमुक्तमस्मे ॥ ५ ॥**

नियुवाना । निमिश्रयन्तो[15] । नियुतः[16] । स्पृहणीय[17] बलाः । इन्द्रवायू ! समानरथम्[18] । आगच्छतम् ।

---

१. कर्मणां नेतारो जनाः Sy. एवमश्वयोगे वायुना कृते नरो मनुष्या ऋत्विजः Mah. मनुष्या ऋत्विग्यजमानाः U.

२. कुर्वन्ति Sy. चक्रुः कर्माणीति शेषः Mah. कुर्वन्ति । एतदुक्तं भवति । वाय्वश्वसंयोगे सति सर्वमिदं यज्ञादि प्रवर्तत इति U.

३. शोभना० is suggested for शोधना० ॥ शोभनापत्यहेतुभूतानि यद्वा सुष्ठ्वपतनकारणानि वायुदेवत्यानि कर्माणि Sy. शोभनापत्यप्रापकाणि Mah. शोभनानामपत्यानां यानि कर्माणि तानि U.

४. प is written twice in A.
This stanza=YV. 27. 33.

५. द्वितीये छन्दोमे प्रउगशस्त्र ऐन्द्रवायवतृचस्य 'यावत्तरः' इत्यादिके द्वे ऋचौ। सूत्रं तु पूर्वमेवोदाहृतम् Sy.

६. ०त्तरं A. ७. ०वर्च A.

८. बलम् Sy.

९. कर्मणां नेतार ऋत्विजः Sy.

१०. ज्ञानेन Sy.

११. दीप्यमाना भवन्ति Sy.

१२. ताः भवताशरी० A. तौ पातं or तावतं is suggested for ताः वात शरी० ।

१३. षष्ट० A.

१४. VM. ignores शुचिम् । सोमम् । शुचिपा । अस्मे । इन्द्रवायू । सदतम् । बर्हिः । आ and इदम् । Sy. explains this stanza in the following manner:—
हे इन्द्रवायू ! युवयोः...तस्य सर्वस्यानुरूपं शुचिपा शुचेः सोमस्य पातारविन्द्रवायू शुचिं शुद्धं सोममस्मे अस्मदीयं पातं पिबतम् । इदं वेद्यां स्तीर्णं बर्हिश्चा सदतम् । पानार्थमासीदतम् । बर्हिष्युपविशतमित्यर्थः ।

१५. निमिगूयन्तो A. ०यन्तौ is suggested for ०यन्तो ।

१६. आत्मीयाश्वान् Sy.

१७. बला is missing in M. ०णीयब० is suggested for णीयं व० ॥ स्पृहणीयस्तोतृकान् Sy.

१८. उभयोः समानमेकं रथम् Sy.

अभिमुखम्[१] । इदम् । नि[२] । वाम्[३] । प्रभृतम्[४] । ऐन्द्रवायवाख्यमध्वः[५][६] । अग्रम्[७] । अथ[८] । प्रियमाणा[९] । अस्मान् । पाशबन्धाद्[१०] विमुञ्चत्[११] ।

**या वां शतं नियुतो याः सहस्रमिन्द्रवायू विश्ववाराः सचन्ते ।**
**आभिर्यातं सुविदत्राभिर्वाक्पातं नरा प्रतिभृतस्य मध्वः ॥ ६ ॥**

[१२]या वाम् । याः । वाम्[१३] । सेवन्ते । शतम्[१४] । नियुतः । याश्च । सहस्रम्[१५] । इन्द्रवायू ! सर्वेषां वासयित्र्यः[१६] । आयातम्[१७] । आभिः[१८] । सुधनाभिः[१९] । अभिमुखम्[२०] । पातं च[२१] । नरेण[२२] । सम्भृतम्[२३] । सोमम्[२४] ।

**अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः ।**
**वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥**

[ अर्वन्तः[२५] । ]

---

१. अस्मदभिमुखम् Sy.

२. हि is suggested for नि ॥ खलु Sy.

३. वा A. युवयोरर्थम् Sy.

४. प्रकर्षेण हृतं होमार्थमुत्तरवेदिं प्रति नीतम् Sy.

५. ०वाख्यय A.M.

६. मु [ मू ] ध्वः A. मधुरस्य सोमस्य Sy.

७. ग्रहेष्वाद्यमैन्द्रवायवाख्यं ग्रहम् Sy.

८. तादृशस्य सोमस्य पानानन्तरम् Sy.

९. प्रीयमाणौ is suggested for प्रियमाणा ।

१०. ०बद्धान् M.

११. ०ञ्चतम् is suggested for ०चत् ॥ पापाद् विमोचयतम् Sy.

१२. प्रथमे छन्दोमे प्रउगशस्त्र ऐन्द्रवायव्यतृचस्य 'या वां शतम्' इति तृतीया । सूत्रितञ्च 'या वां शतं नियुतो याः सहस्रमित्येकपातिन्यः, (ASS 8. 9.) Sy.

१३. युवाम् Sy.

१४. शतसंख्याकाः सत्यः Sy.

१५. सहस्रसंख्याकाः सत्यो युवां सचन्ते Sy.

१६. विश्वैर्वरणीयाः Sy.

१७. आयतम् A. आगच्छतम् Sy.

१८. नियुद्भिः Sy.

१९. सु is written twice in A. शोभनधनप्रदाभिः Sy.

२०. अस्मदभिमुखम् Sy.

२१. पिबतम् Sy.

२२. हे नरा ! नेतारौ Sy.

२३. प्रभृतस्य उत्तरवेदिं प्रति नीतस्य Sy.

२४. मधुरस्य सोमस्य द्वितीयार्थे षष्ठी । ईदृश सोमम् Sy.

२५. The *pratīka* is supplied by the Editor. This stanza has already been explained. See RV. 7. 90. 7. Sy. mentions here the following. व्याख्यातेयम् । अक्षरार्थस्तु-अश्वा इव हविषां वोढारोऽन्नं याचमाना बलं कामयमाना वसिष्ठा वयं शोभनरक्षणाय शोभनैः स्तोत्रैरिन्द्रवायू आह्वयेमहीति ।

## VII. 92.

**आ वा॑यो भूष शुचिपा॒ उप॑ नः स॒हस्रं॑ ते नि॒युतो॑ विश्ववार ।**
**उपो॑ ते॒ अन्धो॒ मद्य॑मयामि॒ यस्य॑ देव दधि॒षे पू॑र्व॒पेय॑म् ॥ १ ॥**

आ[१] वायो । उपागच्छ[२] । अस्मान्[३] । वायो ! सोमस्य पातः[४] ! सहस्रं[५] हि । ते । सन्ति[६] नियुतः[७] ।

---

१. 'आ वायो' इति पञ्चर्चं तृतीयं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वायव्यम् । अनुक्रान्तञ्च— 'आ वायो पञ्च' (KSA. 38. 92. p. 26.) इति । शुनासीरीये पर्वणि वायोर्नियुत्वतो यागस्य 'आ वायो' इत्यनुवाक्या । सूत्रितञ्च— 'आ वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमच्छ' (ĀSS 2. 20) इति । नियुत्वद्वायुदेवताके पशावेवैव वपाया अनुवाक्या (ĀSS. 3. 8.) । प्रथमे छन्दोमे प्रउगशस्त्रे वायव्यतृचस्यैषैवाद्या । सूत्रितञ्च— 'समुद्रादूर्मिरित्याज्यमा वायो भूष शुचिपाः' (ĀSS 8. 9.) इति Sy.

२. उप समीपे आ भूष आगच्छ । 'भू प्राप्तौ' इत्यस्यैतद्रूपम् Sy. उप समीपे, आभूष आक्रमस्वाऽऽगच्छेत्यर्थः । 'भूष अलङ्कारे' इह गत्यर्थः Mah. आ अभूष अभ्याक्रमस्व । . . . उप समीपे . . . अभ्याक्रमस्वेति सम्बन्धः U. उपेत्युपसर्गश्रुतेर्योग्यं क्रियापदमध्याह्रियते । नोऽस्मानुपेत्य, इममस्मदीयं सोमं पानेनाभूष आ समन्तादलङ्कुरु । यद्वा—अस्मदीयं यज्ञमागमनेनालङ्कुरु । 'भूष अलङ्कारे' भौवादिकः BB.

३. अस्माकम् Sy., Mah., U.

४. हे शुचेः शुद्धस्य सोमस्य पातः ! Sy. शुचि पवित्रं प्रथमं वषट्कृतमप्राप्तमन्यदेवैरीदृशं सोमं पिबतीति शुचिपाः पवित्रसोमपान ! Mah. पवित्रं सोमं प्रथमवषट्कारवषट्कृतमप्राप्तमन्यैर्देवताविशेषैः पिबतीति शुचिपाः U. शुचेः शुद्धस्य पातः ! BB.

५. बहवः U.

६. सति A. विद्यन्ते U.

७. केनाहमाक्रमे ? इति चेत् . . . ते तव सहस्रं नियुतः सन्ति । 'नियुतो वायोः' इत्युक्तेर्नियुच्छब्देन वायुवाहनभूता मृगा उच्यन्ते । तवासङ्ख्याता वाहनभूता मृगास्तै रागच्छेत्यर्थः Mah. नियुद्गुणयुक्ता अश्वाः U. नियुतोऽश्वाः, अतस्तवैवागमनं भूषणाय भवति । हे वायो ! नियुतोऽश्वा अस्मानुपयान्तु । यद्वा वायो आभूषय यज्ञम् । तदर्थं किं क्रियतामित्याह—तव सहस्रं नियुतोऽस्मानुपागच्छन्तु । यद्वा भूषेत्यामन्त्रितमेव, भूषयतीति भूषोऽलङ्कर्ता । कस्य ? तस्य यत्र यत्र गच्छतीति, हे एवङ्गुणक ! वायो ! तव सहस्रं नियुतोऽस्मानुपयन्तु, तैः सहितस्सन्, अस्मत्सकाशमागच्छेत्यर्थः BB.

विश्ववैर्वरणीय[1] ! तुभ्यम्[2] । उपगमयामि[3] । मदकरम्[4] । सोमम्[5] । यस्य[6] । देव[7] ! करोषि[8] ! पूर्वयानम्[9] ।

**प्र सोता जीरो अध्वरेष्वस्थात्सोममिन्द्राय वायवे पिबध्यै ।**
**प्र यद्वां मध्वो अग्रियं भरन्त्यध्वर्यवो देवयन्तः शचीभिः ॥ २ ॥**

प्र सोता[10] । प्रास्थात्[11] । अभिषोताऽध्वर्युः[12] । क्षिप्रः[13] । यज्ञेषु[14] प्रागवयम्[15] । सोमम् । इन्द्राय । वायवे

---

१. विश्वं सर्वं वृणोति व्याप्नोति, विश्वैर्वा व्रियते प्रार्थ्यते इति विश्ववारस्तत्सम्बोधनं हे विश्ववार सर्वव्यापक ! Mah. विश्वं सर्वं वृणोति, विश्वैः सर्वैर्वा व्रियते प्राणिभिरिति विश्ववारस्तत्सम्बोधनं हे विश्ववार ! U. कथमनेनागमनेन यज्ञोऽलङ्क्रियते ? इत्याह, विश्ववार ! निजबलेन विश्वस्यावरक ! विश्वेषां वा वरणीय ! BB.

२. तव Sy., Mah. तव स्वभूतम् U. अहं तुभ्यमागताय BB.

३. उपायामि । उपयतं पात्रे गृहीतमासीत् Sy. उप समीप एव, अयामि गमयामि । सोमं ते समर्पयामीत्यर्थः Mah. उपसर्गद्वयेन क्रियापदमध्याह्रियते । उपो इत्युपशब्दस्यार्थे वर्तते । उपो अयामि समीपं प्रापयामि । किम् ? सोममुपहरामि । 'इ गतौ' भौवादिकः । अन्तर्भावितण्यर्थः । णिलुग्वा BB.

४. मदनीयं तृप्तिजनकम् Mah. मदनीयम् U.

५. सोमलक्षणमन्नम् Sy., Mah. अन्नम् U. अदनीयम् BB.

६. सोमस्य Sy., Mah., U. पुनश्च सोमो विशेष्यते ।....यस्य BB.

७. हे देव ! दीप्यमान ! वायो ! Mah. हे देव ! वायो ! BB.

८. दधासि धारयसि Sy. त्वं....धारयसि । दधातेर्लिटि रूपम् Mah. U. दधासि, आचरसि । यं लब्ध्वा प्रथमं पिबसि, अन्यमग्रे पिबन्तं न क्षमसे यागेषु BB.

९. पूर्वपानम् is suggested for पूर्वयानम् ॥ प्रथमपानम् । ऐन्द्रवायवग्रहे प्रथमे वषट्कारे केवलाय वायवे हूयते द्वितीये त्विन्द्रवायुभ्यामिति वायोः प्रथमपानम् । तादृशमन्ध उपायामीत्यन्वयः Sy. प्रथमवषट्कारलक्षणं पूर्वपानम् Mah. पूर्वपेयं प्रथमवषट्कारलक्षणम् । पूर्वपानं प्रथमवषट्कार एव ते सोमस्य राज्ञ इत्याशयः U. प्रथमपानम् BB.

This stanza=YV. 7. 7. =TS. 1. 4. 4. 1.

अथातो गृह्णात्येव । आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो तेऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वेति SB. 4. 1. 3. 18. p. 348.

१०. प्रथमे छन्दोमे प्रउगशास्त्र ऐन्द्रवायवतृचस्य 'प्रसोता' इत्याद्या । सूत्रितञ्च—'प्र सोता जीरो अध्वरेष्वस्थाद्वो वायव इन्द्रमादनासः' (ĀSS. 8. 9.) इति Sy.

११. प्रस्थातात् A. प्रतिष्ठिपत् । पुरस्तादुत्तरवेदिं प्रापितवान् Sy.

१२. ०ध्वर्य A.

१३. क्षिप्रा M. क्षिप्रकारी Sy.

१४. यागेषु Sy.

१५. प्रागेव यम् or प्रापयत् is suggested for प्रागवयम् and प्रापयत् can be the explanation of प्रास्थात् ।

च । पानाय[1] । प्रहरन्ति[2] । यत्[3] । मुख्यम्[4] । सोमस्य । वाम्[5] । अध्वर्यवः । देवकामाः । कर्मभिः[6] ।

**प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे ।**
**नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥ ३ ॥**

प्र[7] याभिः[8] । प्रयच्छसि[9] । याभिः । यजमानम्[10] । प्रति[11] । नियुद्भिः[12] । वायो ! यज्ञार्थम्[13] । गृहे[14] । ताभिर्नियुवस्व[15] । अस्माकम्[16] । रयिम्[17] । शोभनभोजनम्[18] । गव्यम्[19] । अगव्यम्[20] । च[21] । धनम्[22] । निमिश्रयेति[23] ।[24]

---

१. पानार्थम् Sy.

२. प्रकर्षेण भरन्ति सम्पादयन्ति तेऽध्वर्यव इत्यन्वयः Sy.

३. येषु यज्ञेषु Sy.

४. अग्रभवम् । प्रथमभागम् Sy.

५. युवयोरर्थम् Sy.

६. अभिषवादिलक्षणैः Sy.

७. शुनासीरीये पर्वणि नियुत्वद्वायोर्यागस्य 'प्रयाभिः' इति याज्या । सूत्रितञ्च—'प्र याभिर्यासि दाश्वांसमच्छ स त्वं नो देव मनसा' (ĀSS, 2. 20) इति । तद्दैवत्ये पशावेवैव पुरोडाशस्यानुवाक्या । सूत्रितं च—'प्र याभिर्यासि दाश्वांसमच्छा नो नियुद्भिः शतिनीभिः' (ĀSS. 3. 8.) इति । प्रथमे छन्दोमे प्रउगशस्त्र एषैव वायवतृचस्य द्वितीया । सूत्रितञ्च—'आ वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वासमच्छा' (ĀSS. 8. 9.) इति Sy.

८. The *Pratīka* is supplied by the Editor.

९. अभिगच्छसि । ताभिरस्मान् प्रत्यागच्छेति शेषः Sy. गच्छसि Mah. प्रयासि U. गच्छसि BB.

१०. ०नवव A. हविषां दातारं यजमानम् Sy हविर्दत्तवन्तं यजमानम् Mah. हवींषि दत्तवन्तं यजमानम् U. हविर्दत्तवन्तम् BB.

११. अभिमुखम् Mah. अच्छाभेराप्तुमिति शाकपूणिः । अभि U. अभिगन्तुम् BB.

१२. युवत् भिः A. बडवाभिः Sy. अश्वाभिः कृत्वा Mah. नियुच्छब्द उभयलिङ्गः स्त्रियां पुंसि च U. बडवाभिर्नियुत्संज्ञाभिः BB.

१३. आगाय Sy. Mah. एवमागत्य वा U. पुनरपि आगमं प्रवर्तयितुम् BB.

१४. यज्ञगृहे स्थितम् Sy. यज्ञगृहे वर्तमानम् Mah. यज्ञगृहे वर्तमानं यजमानम् U. यज्ञगृहे BB.

१५. नियुद्भिरागत्य Mah. U. ताभिरागत्येहास्मद्यज्ञगृहे BB.

१६. नितरां मिश्रय प्रयच्छ Sy. देहि । नियौतिर्दानार्थः, व्यत्ययेन शप्रत्ययः Mah. निपूर्वो यौतिर्दानार्थः । देहि U. शोभनभुक्तिकं धनमस्माभिर्मिश्रय BB.

१७. आगत्य चास्मभ्यम् Sy. अस्मभ्यम् Mah., U

१८. रथं A.

१९. शोभनान्नयुक्तम् Sy. सुष्ठु भुज्यत इति सुभोजास्तासाम् । भुजेरसुन्प्रत्ययः Mah. साधु भुज्यत इति सुभोजास्तं सुभोजसम् U. शोभनभोजनम् BB.

२०. गोसङ्घम् Sy. वीरं पुत्रं गोसम्बन्धि Mah. वीरवत् पुत्रपौत्रादिवत्, गव्यं गोसमृद्धिनिमित्तम् । . . . यद्वा गव्यैः क्षीरादिभिस्तद्वत् BB.

२१. अश्व्यम् is suggested for अगव्यम् । अश्वसङ्घमेतदुभयात्मकम् Sy. अश्वसम्बन्धि Mah. अश्वसमूहवत् । . . . . यद्वा अश्वयोगस्यापि निमित्तभूतम् । छान्दसो यत् BB.

२२. गोऽश्वरूपं रायो धनं च Mah. नियुव च रायो धनम् BB.

२३. प्रयच्छ Sy.

२४. VM. ignores वीरम् ॥ वीरं पुत्रम् Sy. This stanza=YV. 27. 27.=TS. 2. 2. 12. 7.

**ये वायवं इन्द्रमादनास आदेवासो नितोशनासो अर्यः ।**
**घ्नन्तो वृत्राणि सूरिभिः ष्याम सासह्वांसो युधा नृभिरमित्रान् ॥ ४ ॥**

ये[1] वायवे । अश्वाः[2] । इन्द्रवायुभ्याम्, मदहेतवः[3] । इन्द्रवायू देवावभिमुखाः[4] । हन्तारः[5] । शत्रोः[6] । तैः सूरिभिः[7] प्राज्ञैरश्वैरिन्द्रवायू[8] गमयद्भिः । शत्रून्[9] । घ्नन्तो वयम् । स्याम[10] । अभिभवन्तः[11] । युद्धेन[12] । भगैश्च[13] । अमित्रान्[14] ।

**आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि यज्ञम् ।**
**वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥**

उत्तरा निगदसिद्धेति—

[आ[15] नः[16]]

---

१. प्रथमे छन्दोमे प्रउगशस्त्र ऐन्द्रवायवतृचस्य 'ये वायव इन्द्र' इति द्वितीया । सूत्रितञ्च—'ये वायव इन्द्रमादनासो या वां शतं नियुतो याः सहस्रम्' (ĀSS 8. 9) इति Sy.

२. अश्वाः is missing in M. ये सूरयः स्तोतारः Sy.

३. मुद० A. VM. seems to explain वायवे and इन्द्रमादनासः together as इन्द्रवायुभ्यां मदहेतवः ॥ स्तोत्रैरिन्द्रस्य तर्पयितारस्तथा वायवे वायोश्च मादनास्तर्पका भवन्ति Sy.

४. जागतैरुपेताः Sy.

५. निहन्तारः Sy.

६. अत एवार्योऽरेः शत्रोः Sy.

७. तैरस्मदीयैः स्तोतृभिः Sy.

८. ०वायु A.

९. घ्नतो M. हिंसन्तः Sy.

१०. भवेम Sy.

११. मभि० A.

१२. युद्धेभिः Sy.

१३. The reading is doubtful. अस्मदीयैः पुरुषैः Sy.

१४. मित्रान् A. शत्रुभटान् Sy.

१५. नियुत्वद्वायुदेवताके पशौ 'आ नो नियुद्भिः' इति हविषोऽनुवाक्या । सूत्रितञ्च—'आ नो नियुद्भिः शतिनीभिरध्वरं पीवोअन्नाँ रयिवृधः सुमेधाः' (ĀSS. 3. 8.) इति । प्रथमे छन्दोमे प्रउगशस्त्रे वायवतृचस्यैषैव तृतीया । सूत्रितञ्च—'आ नो नियुद्भिः शतिनीभिरध्वरं प्र सोता जीरो अध्वरेष्वस्थात्' (ĀSS. 8.9. इति Sy.

१६. The *Pratīka* is supplied by the Editor. VM. does not explain the stanza VII 92.5. Sy. explains this stanza in the following manner: हे वायो ! नोऽस्माकमध्वरं हिंसारहितं यज्ञं शतिनीभिः शतसंख्यावतीभिः सहस्रिणीभिः सहस्रसंख्यावतीभिश्च नियुद्भिर्वडवाभिरुपा याहि । उपागच्छ । तदनन्तरमस्मिन् सवने प्रातःसवने मादयस्व सोमेन तृप्यस्व । अन्यद् गतम् ।

VII.93.

शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् ।
उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा ॥ १ ॥

शुचिम्[1] । निरवद्यम्[2] । क्षिप्रम्[3] । स्तोमम्[4] । नवजननम्[5] । अद्य[6] । हे इन्द्राग्नी ! शत्रूणां हन्तारौ[7] ! वेथाम्[8] । उभा[9] । हि[10] । वामहम्[11] । स्वाह्वानौ[12] । भृशमाह्वयामि[13] । तौ युवाम्[14] । अन्नम्[15] । सद्य एव[16] । कामयमानाय[17] मह्यम्[18] । दातृतमौ[19] ।

ता सानसी शवसाना हि भूतं साकंवृधा शवसा शूशुवांसा ।
क्षयन्तौ रायो यवसस्य भूरेः पृङ्क्तं वाजस्य स्थविरस्य घृष्वेः ॥ २ ॥

ता सानसी[20] । तौ[21] । सम्भजनीयौ[22] बलमाचरन्तौ[23] । हि[24] । भवतम्[25] । सहवृद्धौ[26] । बलेन । वर्धमानौ ।

---

१. 'शुचिं नु' इत्यष्टर्चं चतुर्थं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्राग्नम् । अनुक्रम्यते हि—'शुचिं न्वष्टावैन्द्राग्नं तु' (KSA. 38. 93. p. 26.) इति । गतः सूक्तविनियोगः । ऐन्द्राग्नस्य पशोर्वपायाः 'शुचिम्' इत्येषा याज्या । सूत्रितञ्च—'शुचिं नु स्तोमं नवजातमद्य गीर्भिर्विप्रः प्रमतिमिच्छमानः' (ĀSS 3. 7.) इति Sy.

२. शुचि A.

३. शुद्धम् निरवद्यम् Sy. निर्दोषम् BB.

४. सोमं M. अस्मदीयं स्तोत्रम् Sy. स्तोत्रम् BB.

५. इदानीमुत्पन्नम् Sy. नवमभूतपूर्वं जातं जननमस्येति BB.

६. अस्मिन् काले Sy. अस्मिन्नहनि BB.

७. हे वृत्राणां शत्रूणां हन्तारौ ! Sy. वृत्रस्य पापस्य हन्तारौ ! युवाम् BB.

८. भवेथां M. सेवेथाम् is suggested for वेथाम् ।

९. उभौ Sy., BB.

१०. यस्मात् Sy. BB.

११. युवाम् BB.

१२. स्वा॰ A. सुखमाह्वातुं शक्यौ Sy. आहूयमानावप्यरोषौ BB.

१३. ०आं० A. पुनः पुनराह्वयामि । अत आगत्य सेवेथामित्यर्थः Sy. ईदृशौ वां युवां जोहवीमि भृशमाह्वयामि BB.

१४. तथाविधौ युवाम् Sy. तौ तादृग्गुणौ युवां यस्माज्जोहवीमि तस्मादिमं स्तोमं जुषेथाम् । अस्मिन्निन्द्रियादिकं च धत्तम् BB.

१५. बलं वा ईदृशमन्नम् Sy.

१६. तदानीमेव शीघ्रम् Sy. तदानीमेव BB.

१७. कामयमानाय यजमानाय BB.

१८. कामयमानाय यजमानाय Sy.

१९. धातृतमौ भवतम् Sy. धातृतमौ । 'धानकर्मणो दधातेस्तृचि BB.

This stanza=TS. 1. 1. 14. 1.

२०. हे इन्द्राग्नी ! Sy. २१. तादृशौ Sy.

२२. सर्वैः सम्भजनीयौ युवाम् Sy.

२३. शवो बलम् । तद्वदाचरन्तौ Sy.

२४. खलु Sy.

२५. बलमिव शत्रूणां भञ्जकावास्तामित्यर्थः Sy.

२६. वृद्धौ is missing in A. सहप्रवृद्धौ Sy.

ईश्वरौ भवन्तौ । धनस्य । यवसस्य[१] च । बहुनः[२] । तथा सति सम्पर्चयतं[३] प्रयच्छतं[४] वा । अन्नम्[५] । वृद्धम्[६] । वर्षणशीलं[७] शत्रूणामिति ।

**उपो ह यद्विदथं वाजिनो गुर्धीभिर्विप्राः प्रमतिमिच्छमानाः ।**
**अर्वन्तो न काष्ठां नक्षमाणा इन्द्राग्नी जोहुवतो नरस्ते ॥ ३ ॥**

उपो ह[८] । उपगच्छन्ति । यदा[९] । गृहम्[१०] । हविष्मन्तः । कर्मभिः[११] । मेधाविनः । इन्द्राग्न्योः प्रमतिम्[१२] । इच्छमानाः[१३] । अश्वाः । इव[१४] । काष्ठाम्[१५] । व्याप्नुवानाः[१६] । तदानीमिन्द्राग्नी[१७] । भृशमाह्वयन्तौ[१८] भवन्ति । ते । मनुष्या[१९] इति ।

**गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।**
**इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः ॥ ४ ॥**

गीर्भिः[२०] । गीर्भिः[२१] । विप्रः[२२] । प्रमतिम्[२३] । इच्छमानः[२४] । याचते[२५] धनमिच्छति[२६] वा । यशसा युक्तम् । पूर्वमेव भजनीयम्[२७] । हे इन्द्राग्नी ! शत्रूणां[२८] हन्तारौ ! स्वायुधौ[२९] । प्रवर्धयतम्[३०] । अस्मान् । नोतरैः[३१] । धनैः[३२] ।

---

१. अन्नस्य Sy. २. व A. ३. बहुलस्य Sy.
४. ०प्रच्चच०० A. संयोजयतम् । अस्मभ्यं प्रयच्छतम् Sy.
५. अन्नस्य 'क्रियाग्रहणमपि कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । ईदृशमन्नम् Sy.
६. स्थूलस्य Sy.
७. घर्षण० is suggested for वर्षण० ॥ शत्रूणां घर्षकस्य Sy.
८. Sy. takes उपो as two words उप and उ He construes उप with गुः and उ as उ इति पूरकः ।
९. ये यजमानाः Sy.
१०. ग्रहम् A. विदन्ति जानन्ति देवांस्तत्र यष्टव्यत्वेनेति विदथो यज्ञस्तम् Sy.
११. कर्मभिर्बुद्धिभिर्वा Sy.
१२. प्रमितिम् M. प्रकृष्टां मतिमिन्द्राग्न्योरनुग्रहबुद्धिम् Sy.
१३. इच्छन्तः is suggested for इच्छमानाः ॥ आत्मन इच्छन्तः Sy. १४. यथा Sy.
१५. शीघ्रं युद्धभूमिं व्याप्नुवन्ति तथा Sy.
१६. ऐन्द्राग्नानि कर्माणि व्याप्नुवन्तः Sy.
१७. इन्द्रमग्निञ्च Sy.
१८. पुनः पुनराह्वयन्तो भवन्ति Sy.
१९. कर्मणां नेतारो जनाः Sy.
२०. अमावास्यायामैन्द्राग्नस्य हविषो 'गीर्भिः' इत्येषा याज्या । सूत्रितञ्च—'इन्द्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमानः' (ASS. I. 6.) इति । ऐन्द्राग्ने पशौ पुरोडाशस्यैषैव याज्या । सूत्रं तूदाहृतम् Sy.
२१. स्तुतिभिः Sy. २२. मेधावी वसिष्ठः Sy.
२३. युवयोरनुग्रहबुद्धिम् Sy.
२४. इच्छन् is suggested for इच्छमानः ।
२५. युवां स्तौति Sy. २६. धनमुद्दिश्य Sy.
२७. पूर्वमेव सम्भजनीयम् Sy. २८. वृत्रस्य Sy.
२९. शोभनायुधौ Sy. ३०. ०यन्तम् A.
३१. नेतरैः M. नवतरैः is suggested for नोतरैः ॥ नवतरैः प्रशस्तैः Sy.
३२. दातव्यैर्धनैः Sy.

**सं यन्मही मिथती स्पर्धमाने तनूरुचा शूरसाता यतैते ।**
**अदेवयुं विदथे देवयुभिः सत्रा हतं सोमसुता जनेन ॥ ५ ॥**

सं यत् । सङ्गच्छते । महत्यौ[1] । संयुध्यमाने[2] । स्पर्धमाने । दीप्तशरीरे[3] सेने । संग्रामे । तदानीम-यजमानम् । देवयुवभिः[4] । हतं[5] सग्रामगृहे[6] । तदेवाह सत्यमेव । हतम् । यजमानेन[7] । जनेन[8] चेति[9] ।

**इमामु षु सोमसुतिमुप न एन्द्राग्नी सौमनसाय यातम् ।**
**नू चिद्धि परिमम्नाथे अस्माना वां शश्वद्भिर्ववृतीय वाजैः ॥ ६ ॥**

इमाम् षु । इमाम् । एव । अस्मदीयाम्[10] । सोमसुतिम्[11] । हे इन्द्राग्नी ! अस्मासु सौमनसं[12] कर्तुम् । सुष्ठु । उपागच्छतम् । क्षिप्रम्[13] । अस्मान् । परिमम्नाथे[14] आत्मीया एत इति बुद्धिः परिमननम् । तथा सति । बहुभिः । अन्नैः[15] । वाम्[16] । आवर्तयेयम्[17][18] ।

**सो अग्न एना नमसा समिद्धोऽच्छा मित्रं वरुणमिन्द्रं वोचेः ।**
**यत्सीमागश्चकृमा तत्सु मृळ तदर्यमादितिः शिश्रथन्तु ॥ ७ ॥**

सो अग्ने । स त्वम् । अग्ने ! अनेन । हविषा[19] । समिद्धः[20] । मित्रादीन्[21] । अभिब्रूहि[22] यदस्माकमभि-

---

१. ०ज्येतमा० A. परस्परं हिंसन्त्यौ । यद्वा मेथतिराक्रोशकर्मा परस्परमाक्रोशन्त्यौ Sy.
२. स्पर्धां कुर्वन्त्यौ Sy.
३. ०प्तः श० A.
४. देवायुवभिः A. ०युभिः is suggested for. ०युवभिः ।
५. हिंस्तम् Sy.
६. ०ग्रहे A.
७. सोममभिषुण्वता Sy.
८. यजमानसङ्घेन सोमसुतं जनं हिंस्तम् Sy.
९. VM. ignores यतैते ॥ Sy.'s commentary on this stanza is partly missing.
१०. अस्वदीया A.
११. सोमाभिषवक्रियाम् Sy.
१२. सुमनसो भावाय Sy.
१३. न Sy.
१४. परित्यज्य अन्यान्न मन्येथे । अस्मानेव सर्वदा बुध्येथे Sy.
१५. अन्नैर्हविर्लक्षणैः Sy.
१६. युवाम् Sy.
१७. ०र्ततयेयम् म A. आवर्तयामि Sy.
१८. VM. ignores चित् and हि ॥ चिद् एव । हि यस्मादेवं तस्मात् Sy.
१९. अन्नेनास्मदीयेन हविषा Sy.
२०. ०न्धः A. सन्दीप्तः सन् Sy.
२१. आदि refers to वरुणम् and इन्द्रम् ।
२२. अभिब्रूयाः । अयमस्मदीयो रक्षणीय इति कथय Sy.

लषितम् । यद्वयम् । सर्वतः[1] । पापम्[2] । कृतवन्तः । तत्पापम्[3] । सुष्ठु । सुखय[4] । तयत्[5] । अर्यमा । अदितिश्चान्ये च मित्रादयः । श्रथयन्तु[6] ।

**एता अग्न आशुषाणास इष्टीर्युवोः सचाभ्यश्याम वाजान् ।**
**मेन्द्रो नो विष्णुर्मरुतः परि ख्यन्यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥**

एताः । एताः[7] । इष्टीः[8] । अग्ने[9] ! व्यापयन्तः[10] । अपि च ये स्वभूतान्यन्नानि[11] । सह[12] । प्राप्नुयाम[13] । युवायो[14] स्वभूतान् । अस्मान् । इन्द्रादयः[15] । मा । परिख्यन्[16], परिख्यानं[17] त्यागः[18] ।

## VII.94.

**इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनि ॥ १ ॥**

इयं वाम्[19] । इयम् । युवयोः[20] । अस्य[21] । स्तोन्[22] । हे इन्द्राग्नी[23] ! पूर्वस्तुतिर्मुख्ये[24] काले प्रादुर्भूता स्तुतिः । अभ्रात्[25] । वृष्टिरिव[26] । अजनि[27] ।

---

१. सीमिति परिग्रहार्थीयः । सर्वतो वाङ्मनःकायैश्च Sy. २. अपराधम् Sy.

३. तस्मादागसः Sy. ४. अस्मान् सुष्ठु रक्ष Sy.

५. तद्यत् is suggested for तयत् ॥ तच्चागः Sy. ६. अस्मत्तो वियोजयन्तु Sy.

७. इमाम् Sy. ८. इष्टिः A. यज्ञान् Sy.

९. उपलक्षणमेतत् । हे इन्द्राग्नी ! Sy.

१०. व्यावयन्तो० A. आशु शीघ्रं सम्भजमाना वयम् Sy. ११. यो A.

१२. युगपदेव Sy. १३. अभिप्राप्नुयाम् Sy.

१४. युवा यः M. युवयोः is suggested for युवायो ।

१५. आदि refers to विष्णुः and मरुतः ।

१६. परि परिख्य A.

१७. अस्मान् परित्यज्यान्यान् मा द्राक्षुः । सर्वदास्मानेव पश्यन्तु । अन्यद्गतम् Sy.

१८. त्यागं A.

१९. 'इयं वाम्' इति द्वादशर्चं पञ्चमं सूक्तं वसिष्ठस्यार्षमैन्द्राग्नम् । द्वादश्यनुष्टुप् शिष्टा गायत्र्यः । तथा चानुक्रान्तम् 'इयं वां द्वादशगायत्रमन्त्यानुष्टुप्' (KSA. 38. 94. p. 26.) इति । ज्योतिष्टोमे प्रातःसवनेऽच्छावाकशस्त्र आदितो नवर्चः शस्यन्ते । सूत्र्यते हि—'इयं वामस्य मन्मन इति नव (ĀSS 5. 10) इति । आभिप्लविकेषूक्थ्येषु स्तोमेषु वृद्धावच्छावाकस्य प्रातःसवन इदं सूक्तमावापार्थमुत्तमावर्जम् । सूत्रितञ्च—'इयं वामस्य मन्मन इत्येकादश' (ĀSS 7. 5.) इति । चातुर्विंशिकेऽहनि प्रातःसवने तस्यैवाद्यस्तृचः । सूत्रितञ्च—'इयं वामस्य मन्मन इन्द्राग्नी युवामिमे' (ĀSS. 7. 2.) इति Sy.

२०. युवाभ्यां युवयोरर्थम् Sy.

२१. अस्माद्वसिष्ठात् Sy.

२२. स्तोतुः is suggested for स्तोन् ।

२३. ०ग्नि A.

२४. पूर्वस्तुस्तुति० A. मुख्या स्तुतिः Sy.

२५. मेघात् Sy. २६. वृष्टिरिव बह्वी सती Sy.

२७. प्रादुर्भूता । तां शृणुतमित्युत्तरत्र सम्बन्धः Sy.

श्रुणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः । ईशाना पिप्यतं धियः ॥ २ ॥

श्रृणुतम् । श्रृणुतम्[1] । स्तोत्राह्वानम्[2] । इन्द्राग्नी ! भजतम्[3] । स्तुतिः[4] । ईश्वरो[5] । पूजयन्[6] । कर्माणि[7] ।

मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये । मा नो रीरधतं निदे ॥ ३ ॥

मा पापत्वाय[8] । हे नरा[9] ! हे नेतारौ ! अस्मान्[10] । न । पापत्वाय[11] । विधेयान् कुरुतम्[12] । इन्द्राग्नी ! मा च । अभिशस्तये[13] । मा च । निन्दित्रे[14] शत्रवे[15] ।

इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे । धिया धेना अवस्यवः ॥ ४ ॥

इन्द्रे[16][17] । वयमिन्द्राग्न्योः[18] । महत्[19] । हविः[20] । सुप्रवृत्तम्[21] । आभिमुख्येन प्रापयामः[22] । कर्मणा[23] । स्तुतीश्च[24] । रक्षणमिच्छन्तः[25] ।

---

१. युवां श्रृणुतम् Sy.

२. स्तोतृह्वा० A. VM. seems to explain जरितुः and हवम् together as स्तोत्राह्वानम् ॥ जरितुः स्तोतुर्हवमाह्वानम् Sy.

३. सम्भजतम् Sy.

४. स्तुतीः is suggested for स्तुतिः ॥ श्रुत्वा च तदीयाः स्तुतीः Sy.

५. इश्वरौ M. ईश्वरौ is suggested for ईश्वरो । तथेशानेश्वरौ युवाम् Sy.

६. पूजायां M. पूरयतम् is suggested for पूजयन् । तत्स्थैः फलैः पूरयतम् Sy.

७. कर्मणि M. अनुष्ठितानि कर्माणि Sy.

८. पावत्वा० A.

९. हे नरा is missing in A.

१०. अस्मा M.

११. हीनभावाय Sy.

१२. ० यात् A. वशीकुरुतम् Sy.

१३. शत्रुभिः कृतायाभिशंसनाय Sy..

१४. शक्रत्रे A. निन्दकाय जनाय Sy.

१५. VM. explains नः once only.

१६. चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकस्य 'इन्द्रे अग्ना' इत्ययं षडहस्तोत्रियसंज्ञकस्तृचः । सूत्रितञ्च—'इन्द्रे अग्ना नमो बृहत्ता हुवे ययोरिदम्' (ĀSS. 7. 2.) इति Sy.

१७. इन्द्रे A.

१८. VM. explains इन्द्रे and अग्ना together as इन्द्राग्न्योः ॥ इन्द्रे देवेऽग्नौ च Sy.

१९. बृंहणं वर्धकम् Sy.

२०. हविर्लक्षणमन्नम् Sy.

२१. सुप्रवृत्तां स्तुतिम् Sy.

२२. अभिप्रेरयामः Sy.

२३. कर्मणा युक्ताः Sy.

२४. अप्रगीताः स्तुतिवाचश्चाभिप्रेरयामः Sy. धेना वाङ्नामैतत् Ngh. 1. 11.

२५. रक्षणकामा वयम् Sy.

**ता हि शश्वन्त ईळत इत्था विप्रास ऊतये । सबाधो वाजसातये ॥ ५ ॥**

ता हि शश्वन्तः । तौ । हि[1] । बहवः । स्तुवन्ति । यथा वयमित्थम्[2] । मेधाविनः[3] । रक्षणाय । बाधात्सहिताः[4] । युद्धप्राप्तये[5] च ।

**ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे । मेधसाता सनिष्यवः ॥ ६ ॥**

ता वाम्[6] । तौ । वाम्[7] । गीर्भिः[8] । स्तोतारः । हविष्मन्तः[9] । हवामहे[10] । यज्ञे[11] । धनकामाः[12] ।

**इन्द्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशत ॥ ७ ॥**

इन्द्राग्नी[13][14] । इन्द्राग्नी ! रक्षणेन[15] । आगच्छतम् । अस्मदर्थम्[16] । हे शत्रूणां सोढारौ[17] ! मा । अस्माकम्[18] । शत्रुः[19] । ईशिष्ट[20] ।

**मा कस्य नो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । इन्द्राग्नी शर्म यच्छतम् ॥८॥**

मा कस्य । मा[21] । कस्यचिदपि[22] । अदातुः[23] । हिंसा[24] । अस्मान्[25] । प्राप्नोतु । मनुष्यस्य । तथास्माकं सुखम् । प्रयच्छतम्[26] । इन्द्राग्नी !

---

१. खलु Sy. २. अनेन प्रकारेण Sy.

३. मेधाविनो जनाः Sy.

४. बाधात्सहिताः is suggested for बाधात् सहिताः ॥ तथा समानं बाधमानाः परस्परं बाध्यमानाः जनाः Sy.

५. अन्नलाभाय । यद्वा वाजसातिरिति सङ्ग्रामनाम । सङ्ग्रामार्थम् Sy.

६. हे इन्द्राग्नी ! तौ युवाम् Sy.

७. स्तुतिभिः Sy. ८. स्तोत्रमिच्छन्तः Sy.

९. हविर्लक्षणेनान्नेनोपेताः Sy.

१०. आह्वयामहे Sy.

११. मेधानां यागानां सातौ सम्भजने निमित्तभूते सति Sy.

१२. सनि धनमात्मन इच्छन्तो वयम् Sy.

१३. अमावास्यायामैन्द्राग्नस्य हविषः 'इन्द्राग्नी 'अवसा' इत्यनुवाक्या । सूत्रितञ्च—'इन्द्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमानः' (ĀSS 1. 6.) इति Sy.

१४. The *Pratīka* is supplied by the Editor.

१५. देयेनावसान्नेन सह Sy.

१६. अस्मभ्यं स्तोतृभ्यः Sy.

१७. हे चर्षणीनां मनुष्याणां शत्रुभूतानामभिभवितारौ ! Sy. १८. अस्मान् Sy.

१९. दुष्टाभिशंसनः पारुष्यवादी शत्रुश्च Sy.

२०. इशिष्ट A. ईशत ईशिष्ट । अस्मान् बाधितुं (मा) शक्नोतु Sy.

२१. का A. २२. मस्यचिदपि A.

२३. अररुषः अरेर्मर्त्यस्य मनुष्यस्य सम्बन्धिनी Sy.

२४. भिः सा A.

२५. अस्मात् A.

२६. दत्तम् Sy.

**गोम॒द्धिर॑ण्यव॒द्वसु॒ यद्वा॒मश्वा॑व॒दीम॑हे । इन्द्रा॒ग्नी॒ तद्व॑नेमहि ॥ ९ ॥**

उत्तरा निगदसिद्धेति—

[गोम॑त्][1]

**यत्सोम॒ आ सु॒ते नर॑ इन्द्रा॒ग्नी अजो॑हवुः । सप्ती॑वन्ता सप॒र्यव॑ः ॥ १० ॥**

यत्[2] सोमे । यदा । सोमे । अभिषुते[3] । मनुष्याः[4] । इन्द्राग्नी[5] ! भृशमाह्वयन्ति[6] । अश्ववन्तः[7] । पूजा-कामाः[8] पूर्वत्र वाक्यसमाप्तिः ।

**उ॒क्थेभि॑र्वृ॒त्र॒हन्त॑मा॒ या म॑न्दा॒ना चि॒दा गि॒रा । आ॒ङ्गू॒षैरा॒वि॒वास॑तः ॥ ११ ॥**

उक्थेभिः । शस्त्रैः[9] । वृत्राणां हन्तारौ[10] । यौ[11] । स्तुत्या[12] । मोदमानौ[13] । आङ्गूढैः[14] आ घोषैरुच्चैः[15] शब्दितैः शस्त्रैः । आभिमुख्येन[16] वसतोर्यजमानेषूत्तरत्र[17] सम्बन्धः[18] ।

---

१. The *Pratika* is supplied by the Editor.
हे इन्द्राग्नी ! गोमद् गोभिर्युक्तं हिरण्यवद्धिरण्यैः सुवर्णैर्युक्तमश्वावदश्वैश्चोपेतं यद्वसु वां युवा-मीमहे याचामहे । तद्वसु युवयोः प्रसादाद्वयं वनेमहि सम्भजेमहि Sy.

२. चातुर्विंशिकेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे—'यत्सोम आ सुते' इत्यारम्भणीयाहर्गणेषु च द्वितीयादिष्वहःस्वेषा प्रातःसवने तेनैव शंस-नीया । सूत्रितञ्च—'यत्सोम आ सुते नर इत्यारम्भणीयाः शस्त्वा' (ĀSS. 7. 2.) इति Sy. ३. अहिषु० A. अभिषुते सति Sy.

४. कर्मणां नेतार ऋत्विजः Sy.

५. इन्द्रमग्निञ्च Sy.

६. अभिह्वयन्ते तदा युवामागच्छतमिति शेषः Sy.

७. अश्मवन्तो A. अश्ववन्तो is suggested for अश्ववन्तः ॥ प्रशस्ताश्वौ Sy.

८. परिचरणकामाः सन्तः Sy.

९. उक्थैः Mah. उक्थैः स्तुतौ सन्तौ Sy.

१०. ०रा A. वृत्राणामावरकाणां हन्तृतमौ Sy. वृत्राणामावरकाणां पाप्मनां हन्तृतमौ Mah. वृत्रस्यातिशयेन हन्तारौ स्तः U.

११. यावाविवासतः परिचर्येते तौ युवामागच्छतमिति शेषः Sy. इन्द्राग्नी Mah., U.

१२. स्तोत्रात्मिकया स्तुत्या Mah. वाचा स्तुतौ U.

१३. ०दनमा० A. मोदमानौ स्वभावतः Mah. मोदमानौ स्तः U.

१४. आङ्गूषैः is suggested for आङ्गूढैः ।

१५. ०च्चैश० M. आघोषैरन्यैश्च स्तोत्रैः Sy. लौकिकवाक्यस्तोमैरपि स्तुतौ, आ आगच्छतः Mah. स्तोमैः स्तुतौ U. आङ्गूषः स्तोम आघोषः N. 5. 11.

१६. ०ख्यैन A.

१७. विवासतो य० or वसतो य० is suggested for वसतोर्य० ॥ परिचर्येते । व्यत्ययेन कर्मणि कर्तृप्रत्ययः Sy. आविवस्येते परिचर्येते यज-मानैरिति शेषः । व्यत्ययेन कर्तरि लट् Mah. परिचरतः स्तोतॄन् तौ, उक्थैर्गिरः आङ्गूषैश्च स्तुमः सर्वकामाप्त्यर्थम् U. विवासतिः परि-चर्यायाम् (N. 11. 23.)

१८. VM. ignores चित् ।
This stanza=YV. 33. 76.

**ताविद्दुःशंसं मर्त्यं दुर्विद्वांसं रक्षस्विनंम् ।**
**आभोगं हन्मंना हतमुदधिं हन्मंना हतम् ॥ १२ ॥**

ताविद्दुःशंसम्[1] । तौ[2] । एव युवाम् । दुःशंसम्[3] । मनुष्यम्[4] । दुर्विद्वांसं दुर्बुद्धिमित्यर्थः[5] । रक्षो बलं[6] तद्वन्तम् । अभिभूय भोक्तारमिमम्[7] । आयुधेन[8] । हतम्[9] । उदधिमिव[10] घाम्,[11] एनायासेन[12] । हतमिति ।

VII.95.

**प्र क्षोदंसा धायंसा सस्र एषा सरंस्वती धरुणमायंसी पूः ।**
**प्रबाबंधाना रथ्येंव याति विश्वां अपो मंहिना सिन्धुरन्याः ॥ १ ॥**

प्र[13] क्षोदसा । प्रसरस्यति[14] । उदकेन वा । पानार्हेण[15] सहिता । एषा[16] । सरस्वती[17] । धारयती[18] लोकस्य ।

---

१. ताविद्दुः शंस A.

२. हे इन्द्राग्नी ! तौ युवाम् Sy.

३. दमुः शंसन् A. दुष्टाभिशंसनम् Sy.

४. मनुष्यन् A. शत्रुम् Sy.

५. ०द्धिमित्य० is suggested for ०द्धि-मत्य० ॥ दुर्विज्ञानम् Sy. ६. बलवन्तम् Sy.

७. आहृत्यास्मत्तोऽपहृत्य भोक्तारम् Sy.

८. हननसाधनेनायुधेन Sy. ९. हिंस्तम् Sy.

१०. उक्तमेवार्थं दृष्टान्तेन द्रढयति-- उदधिम् । लुप्तोपममेतत् । उदधानं कुम्भमिव । यथा कुम्भोऽनायासेन भिद्यत एवमनायासेनैव शत्रु-मायुधेन युवां हिंस्तम् Sy.

११. घगाम् A. घटम् is suggested for घाम् ॥

१२. एनायसेन M. अना० is suggested for एना० ।

१३. 'प्र क्षोदसा' इति षड्चं षष्ठं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं सरस्वतीदेवताकम् । तृतीया तु सरस्वद्देवताका । अनुक्रम्यते च--'प्र क्षोदसा षट् सारस्वतं तु तृतीया सरस्वतः' (KSA. 38. 95. p. 26.) इति । गतः सूक्तविनियोगः । प्रथमे छन्दोमे प्रउगशस्त्रे 'प्र क्षोदसा धायसा सस्र एषेति प्रउगम्' (ĀSS. 8. 9.) इति । सारस्वते पशौ 'प्र क्षोदसा' इति वपाया याज्या। सूत्रितञ्च--'प्र क्षोदसा धायसा सस्र एषा पावीरवी कन्या चित्रायुः' (ĀSS. 3. 7.) इति । ......सरस्वत्या एषा नदीवन्निगमा Sy. वाङ्नामान्युत्तराणि सप्तपञ्चाशत् । वाक् कस्मात् ? वचेः । तत्र सरस्वतीत्येतस्य नदी-वद्देवतावच्च निगमा भवन्ति N. 2. 23.

१४. ०रस्युति A. प्रसरति is suggested for प्रसरस्यति ॥ प्रधावति शीघ्रं गच्छति Sy.

१५. धारकेण Sy.

१६. दृश्यमाना नदीरूपा Sy

१७. स is written twice in A.

१८. धारयन्ती is suggested for धारयति ॥ धरुणम्--लिङ्गव्यत्ययः । धरुणा धारयित्री Sy.

लोकमयी[1] च[2] । नगरीत्यौपमिकम्[3] । प्रकर्षेण बध्नन्त्यात्मन्येकीकुर्वन्ति[4] । राजमार्गइव[5] । गच्छति । सर्वाण्येव[6] अन्यानि । उदकानि[7] । महत्त्वेन[8] प्रबाधमाना । सिन्धुरिति[9] ।

**एकाचेतत्सरस्वती नदीनां शुचिर्यती गिरिभ्य आ समुद्रात् ।**
**रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय ॥ २ ॥**

एकाचेतत्[10] । एका[11] । बुबुधे[12] । सरस्वत्येव[13] । नदीनां मध्ये[14] । शुचिः[15] । गच्छन्ती[16] । पर्वतेभ्यो निस्सृता[17] । यावत् पश्चिमं[18] समुद्रम्[19] । धनम्[19] । बहु[20] । प्रज्ञापयन्ती[21] । भुवनस्य गौर्भूत्वा[22][23] । घृतम् । पयश्च[24] । दुदुहे[25] । नहुषपुत्राय[26] नाहुषोक्तं वचनं नान्याः शुश्रुवुर्नद्यः[27] सरस्वती तु शुश्रावेति[28] ।

---

१. लोहम० is suggested for लोकम० ।

२. ०यो य च A. अयसा निर्मिता Sy.

३. पुरीव Sy.

४. ०न्तीन्ति A ०न्ती is suggested for ०न्ति ।

५. प्रतोलीव विस्तीर्णा सती....यद्वा रथ्येव रथिनेव यथा रथी रथेन मार्गस्थं तरुगुल्मादिकं चूर्णीकृत्य गच्छति तद्वत् स्वकीयेन वेगेन सर्वं सम्पिषती गच्छतीत्यर्थः Sy.

६. सर्वाः Sy. ७. आपगाः Sy.

८. महिम्ना Sy.

९. स्यन्दनशीला नदीरूपा सा Sy.

१०. सारस्वत एव पशौ वपायाः 'एकाचेतत्' इत्यनुवाक्या । सूत्रितं च—'एकाचेतत्सरस्वती नदीनामुत स्या नः सरस्वती जुषाणा' (ĀSS.3.7.) इति सहस्रसंवत्सरेण क्रतुना यक्ष्यमाणो नाहुषो नाम राजा सरस्वतीं नदीं प्रार्थयामास । सा च तस्मै सहस्रसंवत्सरपर्याप्तं पयो घृतञ्च प्रददौ । अयमर्थोऽत्र प्रतिपाद्यते Sy. DDN. adds वसिष्ठस्त्रिष्टुभा सरस्वतीं तुष्टाव before Sy.'s quotation.

११. ०तम् A.

१२. एकां A.

१३. नाहुषस्य प्रार्थनामज्ञासीत् Sy, नाहुषस्य प्रार्थनामचेतीत् । 'चिती संज्ञाने' DDN.

१४. सरस्वती नदी Sy. DDN.

१५. नदीनामन्यासां मध्ये Sy., DDN.

१६. शुद्धा Sy. पवित्रा DDN.

१७. गिरिभ्यः सकाशात् Sy., DDN.

१८. ०मां A. समुद्रपर्यन्तम् Sy, DDN.

१९. धनानि Sy., DDN.

२०. बहुलस्य Sy., DDN.

२१. प्रयच्छन्ती Sy., DDN.

२२. भूतजातस्य Sy., DDN.

२३. गोः भूत्वा A.

२४. सहस्रसंवत्सरपर्याप्तम् Sy., DDN.

२५. दुग्धवती, दत्तवती Sy., DDN.

२६. न भूबु० M. नाहुषाय राज्ञे Sy., DDN.

२७. ०श्रुवून्नद्यः A.

२८. 'तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति' (N. 2. 23.) इत्युक्तत्वादत्र सरस्वती नदीवत् स्तूयते DDN.

शौनकः—

राजा वर्षसहस्राय वीक्षिष्यन्नाहुषः[१] पुरा ।
चचारैकरथेनेमां[२] वदन् सर्वाः समुद्रगाः ॥
यक्ष्ये वहत मा[३] सर्वा द्वन्द्वशो वाथवैकशः[३] ।
प्रत्यूचुस्तं नृपं नद्यः स्वल्पवीर्याः[४] कथं वयम् ॥
वहेम सर्वान् भोगांस्ते[५] सत्रे वार्षसहस्रिके[६] ।
सरस्वतीं प्रपद्यस्व सा त्वा वक्ष्यति नाहुष[७] ! ॥
तथेत्युक्त्वा जगामाश्वामापगां[८] च सरस्वतीम् ।
प्रतिजग्राह सा चैनं पयः[९] सर्पिश्च दुह्यती[१०] ॥
एतदत्यद्भुतं[११] कर्म सरस्वत्या नृपं प्रति ।
वारुणिः[१२] कीर्तयामास सूक्तस्यास्य द्वितीयया[१३] ॥ इति[१४] ।

**स वा॑वृधे॒ नर्यो॒ योष॑णासु॒ वृषा॒ शिशु॑र्वृष॒भो य॒ज्ञिया॑सु ।**
**स वा॒जिनं॑ म॒घव॑द्भ्यो दधाति॒ वि सा॒तये॑ त॒न्वं॑ मामृजीत ॥ ३ ॥**

स वावृधे[१५] । स[१६] सरस्वान् । वावृधे[१७] । नृहितः । नदीषु[१८] । पुमान्[१९] । शिशुः[२०] । सेक्ता[२१] । यज्ञार्हासु[२२] ।

---

१. वीक्षिष्यन् DDN.
२. ०रेकरथेनेथमां A. ०रथेनैताम् DDN.
३. मा सर्वान् M. 'मे भोगान्,, द्वन्द्वशोऽप्यथवैकशः DDN.
४. ०ल्पा A.
५. भोगान् सर्वांस्ते यज्ञे वर्षस..स्रके DDN.
६. पार्ष० A.
७. नहुष A. सा ते वक्ष्यति DDN.
८. जगामाशु श्वा० is suggested for जगामाश्वामा० ॥ जगामाथ पावनीं स सरस्वतीम् । सा चैनं प्रति जग्राह DDN.
९. पय सर्पिश्वश्व A.
१०. दुह्वती A. दुह्वतीं M. दुदुहे च पयोघृतम् ॥२३॥ DDN.
११. ०त्यु० A.
१२. ०णी A.
१३. प्रथमस्य द्वितीयया Sy. DDN.
१४. इति is omitted by M. BD. VI. 20—24.
१५. सरस्वद्देवताके पशौ 'स वावृधे' इति पुरोडाशस्य याज्या । सूत्रितञ्च—'स वावृधे नर्यो योषणासु यस्य व्रतं पशवो यन्ति सर्वे' (ĀSS. 3. 8.) इति Sy.
१६. स is omitted by A.
१७. ववृधे उर्धते Sy.
१८. योषित्स्वात्मनः कलत्रभूतासु मध्यमस्थानास्वप्सु मध्ये Sy.
१९. पुमां श्चिशुः A.
सेचनसमर्थः Sy.
२०. अल्पः प्रादुर्भावसमयेऽल्पतया दृश्यमानः Sy.
२१. वर्षिता Sy.
२२. ०र्हाः सु M.

स[1]: । बलिनम्[2] । हविष्मभ्यम्[3] । प्रयच्छति[4] । विशोधयतु[5] । सोऽस्मदीयां तनुम्[6] । लाभाय[7] । संश्यतु[8] ।

**उत स्या नः सरस्वती जुषाणोप श्रवत्सुभगा यज्ञे अस्मिन् ।**
**मितज्ञुभिर्नमस्यैरियाना राया युजा चिदुत्तरा सखिभ्यः ॥ ४ ॥**

उत स्या[9] । अपि च । सा । सरस्वती । अस्मान्[10] । सेवमाना[11] । स्तुतीरुपशृणोतु[12] । सुधना[13] । अस्मिन् यज्ञे । प्रमाणार्थं[14] मितजानुकैः । नमस्कारं कुर्वद्भिः[15] । अभिगम्यमाना[16] । धनेन[17] । सहायवर्गेण सहायवर्षेण[18] । च[19] । अन्याभ्यो नदीभ्यः सखिभ्यः । उत्कृष्टो[20] स्तोतृभ्यो वा सुप्रशस्तेति ।

**इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व ।**
**तव शर्मन्प्रियतमे दधाना उप स्थेयाम शरणं न वृक्षम् ॥ ५ ॥**

इमा जुह्वानाः[21] । इमानि हवींषि[22] । जुह्वाना वयम्[23] । भवाम नमस्कारैः[24] । प्रतिसेवस्व त्वम्[25] । स्तोमम्[26] ।[27]

---

१. तादृशः सरस्वान् Sy.	२. पुत्रम् Sy.
३. ०ष्मद्भ्यः is suggested for ०ष्मभ्यम् ॥ हविष्मद्भ्यो यजमानेभ्यः Sy.
४. ददाति Sy.
५. ०यितु A.
६. तनूं A. तेषां शरीरम् Sy.
७. लाभार्थम् Sy.
८. संश्यतु ॥ 'शो तनूकरणे' ॥ विमार्ष्टि । लाभार्थं संस्करोतीत्यर्थः । यद्यप्येषा सरस्वतः स्तुतिस्तथापि सरस्वत्याः प्रीणनार्थं तत्सवनमिति छान्दोमिके सारस्वते तृचेऽस्या उक्तो विनियोगो न विरुध्यते Sy.
९. दशरात्रेऽष्टमेऽहनि प्रउगे 'उत स्या नः' इति सारस्वतः सप्तमस्तृचः। सूत्रितञ्च—'उत स्या नः सरस्वती जुषाणेति प्रउगम्' (ĀSS. 8. 10) इति । सारस्वते पशौ पुरोडाशस्य 'उत स्या नः' इत्यनुवाक्या । सूत्रितञ्च—'उत स्या नः सरस्वती जुषाणा सरस्वत्यभि नो नेषि वस्यः' (ĀSS. 3. 7.) इति Sy.
१०. अस्माकम् Sy.
११. प्रीयमाणा Sy.
१२. इवशृ० A.
१३. शोभनधना Sy.
१४. प्रणामार्थं is suggested for प्रमाणार्थं ॥ प्रह्वैर्जानुभिः Sy.
१५. नमस्कारैः Sy.
१६. अभि is omitted by A. देवैरियाना उपगम्यमाना Sy.
१७. धनेन सङ्गता Sy.
१८. सहायवर्गेय A. This seems to be redundant. नित्ययुक्तेन Sy.
१९. चिच्छब्दश्चार्थे Sy.
२०. ०ष्ट M. ०ष्टा is suggested for ०ष्टो ॥ उत्कृष्टतरा । ईदृशी । अस्मदीयाः स्तुतीरुपशृणोत्वित्यन्वयः Sy.
२१. पवित्रेष्ट्यां सारस्वतस्य हविषः 'इमा जुह्वानाः' इति याज्या । सूत्रितञ्च—'इमा जुह्वाना युष्मदा नमोभिर्दधिक्राव्णो अकारिषम्' (ĀSS, 2. 12.) इति Sy.
२२. ०नां A.
२३. अस्मदीयानि हवींषि Sy.
२४. तुभ्यं जुह्वतो वयम् Sy.
२५. ०म यि A.
२६. त्वद्विषयैर्नमस्कारैः Sy.
२७. अस्मदीयं स्तोत्रम् Sy.

सरस्वति ! तव[1] । सुखे । प्रिये[2] । निधीयमानाः त्वामुपस्थेयाम[3][4] । प्रतिश्रयभूतं[5] महान्तम् । इव । वृक्षम्[6] ।

**अयमु ते सरस्वति वसिष्ठो द्वारावृतस्य सुभगे व्यावः ।**
**वर्ध शुभ्रे स्तुवते रासि वाजान्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥**

अयमु ते । अयम् । उ[7] । ते[8] । सरस्वति ! वसिष्ठः । ऋतस्य यज्ञस्य पूर्वापरौ[9] । व्यावः[10] । द्वारौ संस्तपयागार्थम्[11] । सुभगे[12] ! वर्ध[13] । शोभमाने[14] ! स्तुवते[15] च[16] । प्रयच्छ[17] । अन्नानीति[18] ।

VII 96.

**बृहदु गायिषे वचोऽसुर्या नदीनाम् ।**
**सरस्वतीमिन्महया सुवृक्तिभिः स्तोमैर्वसिष्ठ रोदसी ॥ १ ॥**

बृहदु गायिषे[19] । हे वसिष्ठ[20] ! महत् । वर्चस्त्वम्[21] । ब्रवीषि[22] । बलवती[23] । नदीनां[24] सरस्वतीति ताम् ।

---

१. त्वई.ये Sy.
२. वयञ्चातिशयेन प्रिये Sy.
३. ०नां त्वां M.
४. त्वामुपतिष्ठेम सङ्गच्छेमहि Sy.
५. आश्रयभूतम् Sy.
६. VM. ignores युष्मत् and आ ॥ युष्मत् सकाशात् । आ । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आददीमहि धनानीति शेषः Sy.
७. उ इति पूरकः Sy.
८. त्वां यन्तुः Sy.
९. यज्ञस्य सम्बन्धिन्यौ पूर्वापरे Sy.
१०. व्याव A. विवृणोति Sy.
११. सप्तप A. संस्तव० is suggested for संस्तप० ।
१२. हे शोभनधने Sy.
१३. वर्धस्व Sy.
१४. हे शुभ्रवर्णे ! देवि ! Sy.
१५. स्तोत्रं कुर्वते वसिष्ठाय Sy.
१६. न च A. १७. प्रवेहि । अन्यद् गतम् Sy.
१८. अन्नानिति M.
१९. 'बृहदु गायिषे' इति षडृचं सप्तमं सूक्तं वसिष्ठस्यार्षम् । आद्या बृहती द्वितीया सतोबृहती तृतीया प्रस्तारपङ्क्तिः शिष्टास्तिस्रो गायत्र्यः । आद्यस्तृचः सरस्वतीदेवताकोऽन्त्यश्च सरस्वद्देवताकः । तथा चानुक्रान्तम्—'बृहदु प्रगाथः प्रस्तारपङ्क्तिः परास्तिस्रो गायत्र्यः सरस्वतः' (KSA. 38. 96. p. 27.) इति । पञ्चमेऽहनि प्रउगशस्त्र आद्यः प्रगाथः सरस्वतस्तृचः । सूत्रितं च—'बृहदु गायिष इति बार्हतं प्रउगं प्रगाथानेके' (ASS. 7. 12.) इति ।.... अनर्षिरात्मानं सम्बोध्य सरस्वत्याः स्तुतौ प्रेरयति Sy.
२०. गाधिषे A.
२१. वच्च० A. वचः is suggested for वर्च० ॥ स्तोत्रम् Sy.
२२. गायसि Sy.
२३. असुर्या—असुराशब्दाच्चतुर्थ्येकवचनस्य ड्यादेशः । असुरायै बलवत्यै नदीरूपायै सरस्वत्यै । अस्याः प्रीणनार्थमित्यर्थः Sy.
२४. नदीनां मध्ये Sy.

एव । सरस्वतीम् । पूजय[1] । स्तुतिभिः[2] । सुप्रवृत्ताभिर्वसिष्ठ[3] ! द्यावापृथिव्योरुपश्रृण्वतोः[4][5] ।

**उभे यत्ते महिना शुभ्रे अन्धसी अधिक्षियन्ति पूरवः ।**
**सा नो बोध्यवित्री मरुत्सखा चोद राधो मघोनाम् ॥ २ ॥**

उभे[6] यत्ते[7] । उभे[8] । यस्याः । ते[9] । महत्त्वेन[10] । हे शोभमाने[11] ! अन्ने[12] दिव्यं पार्थिवं च यद्वा कृष्टपच्यं वाकृष्टपच्यं[13] च । अधिगच्छन्ति । मनुष्याः[14] । सा[15] । अस्माकम्[16] । बुध्यस्व[17] अ वित्री[18] भवामीति । यस्यास्ते मरुतः सखायः[19] । चोदय[20] । धनम् । हविष्मताम्[21] ।

**भद्रमिद्भद्रा कृणवत्सरस्वत्यकवारी चेतति वाजिनीवती ।**
**गृणाना जमदग्निवत्स्तुवाना च वसिष्ठवत् ॥ ३ ॥**

भद्रमित् । भद्रम्[22] । एव । भद्रा[23] । कृणोतु[24] । सरस्वती । अकुत्सितगमना[25] । बुध्यवताम्[26] । अन्नवती । स्तूयमाना । जमदग्निनेवर्षिणा[27][28] । तथा यथा वसिष्ठः स्तौति तद्वत्[29] । च । स्तूयमानेत्यात्मानं[30] परोक्षमाह ।

---

१. पूजय । सर्वदा सरस्वतीमेव स्तुहि नान्यां देवतामिति भावः Sy.
२. स्तोत्रैः Sy.
३. सुवृक्तिभिः सुष्ठु दोषवर्जितैः Sy.
४. द्यावापृथिव्योः स्थितां दिवि देवतारूपेण भूम्यां वाग्रूपेण निवसन्तीम् Sy.
५. ०श्रृण्वत्योः is suggested for ०श्रृण्वतोः ।
६. VM. ignores उ ॥ उ एव Sy.
७. य धत्ते A.
८. उभ A. उभयविधं दिव्यं पार्थिवं चाग्नि ग्राम्यमारण्यं वा Sy.
९. तव Sy.
१०. महिम्ना Sy.
११. हे शुभ्रवर्णे ! सरस्वति ! Sy.
१२. अन्नैः A.
१३. वाकृष्टपच्यं is omitted by A.
१४. पूरवः पूरयितव्याः मनुष्याः Sy.
१५. सा त्वम् Sy.
१६. अस्मान् Sy.
१७. बुध्यास्व A.
१८. रक्षित्री सती Sy.
१९. अपि च मरुत्सखा-मरुतो माध्यमिका देवगणाः, ते सखायो यस्याः माध्यमिकाया वाचस्तादृशी त्वम् Sy.
२०. प्रेरय Sy.
२१. हविर्लक्षणधनोपेतानाम् Sy.
२२. कल्याणम् Sy.
२३. भद्रं A. कल्याणी भजनीया वा Sy.
२४. अस्माकं करोतु Sy.
२५. ०स्वत्यः कुत्सि० A.
२६. बुध्यताम् is suggested for बुध्यवताम् ॥ चेतयतु, अस्मान् प्रज्ञापयतु । यद्वा मदीयं स्तोत्रं चेतति जानातु Sy.
२७. ०दग्नीग्नि० A.
२८. ०णो A. जमदग्निनर्षिणेव मया Sy.
२९. वसिष्ठवत्-अर्हार्थे वतिप्रत्ययः । वसिष्ठार्हं वसिष्ठस्यानुरूपम् Sy.
३०. स्तूयमाना च भव Sy.

**जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः । सरस्वन्तं हवामहे ॥ ४ ॥**

जनीयन्तः[1] । जायामात्मन इच्छन्तः[2] । क्षिप्रम्[3] । गमनशीलाः[4] । पुत्रीयन्तश्च[5] वयम् । शोभनदानाः । सरस्वन्तम्[6] । हवामहे[7] ।

**ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव ॥ ५ ॥**

[8]ये ते सरस्वः । ए[9] । ते[10] । सरस्वः[11] ! ऊर्मयः[12] सिन्धुरूपस्य । मधुरसवन्तः[13] । उदकच्युतः[14] । तेभिः[15] । नः[16] । अविता[17] । भव[18] ।

**पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः । भक्षीमहि प्रजामिषम् ॥ ६ ॥**

[19]पीपिवांसम्[20] । वर्धमानम्[21] । सरस्वतः[22] । स्तनम्[23] । भजामहे[24] । प्रजाम्[25] । अन्नं च ततो धुक्षीमहीत्यर्थः[26] ।

---

१. सरस्वद्देवताके पशौ 'जनीयन्तः' इति तिस्रः पुरोडाशहविषां क्रमेणानुवाक्याः । सूत्रितञ्च—'जनीयन्तो न्वग्रवः । इति तिस्रो दिव्यं सुपर्णं वायसं बृहन्तम्' ĀSS. 3. 8.) इति Sy.

२. जायमा० A. जायन्त आस्वपत्यानीति जनयो जायाः । ता इच्छन्तः Sy.　३. अद्य Sy.

४. अङ्गन० A. उपगन्तारो वयम् Sy.

५. पुत्रान् कामयमानाः Sy.

६. देवम् Sy.

७. हवामहे स्तुमहे । आह्वयामहे वा Sy.

८. वसिष्ठस्यार्षम् Dur. वसिष्ठस्य SKN.

९. ये is suggested for ए ।

१०. त्वदीया Sy. तव BB.

११. हे सरस्वन् देव ! Sy. सरस्वन् ! उदकवन् ! BB. हे भगवन् ! सरस्वन् ! Dur.

१२. ०स सिन्धू० A. जलसङ्घाः Sy. उदकसङ्घाताः BB. कल्लोला उदकस्य सामर्थ्यात् SKN. यैरूर्णोषि नभो मेघैश्छादयसि Dur.

१३. ०वन्त A. रसवन्तः Sy. मधुररसाः BB. उदकवन्तः Dur. स्वादयुक्ताः SKN.

१४. घृतस्य वृष्ट्युदकस्य क्षारिणो भवन्ति Sy. उदकं क्षारयन्त्यः । यद्वा ऊर्मयोऽरणशीला गावो मधुमन्तो घृतश्चुतः BB. घृतवन्त उदकप्रक्षराः Dur. घृतमिव क्षरितारः । अथवा ऊर्णोतेरूर्मयो मेघाः । ये ते तव हे सरस्वन् ! ऊर्मय आच्छादयितारोऽनर्थानामभावहेतवः कृत्स्नस्य नभसो मेघाः, मधुमन्तो मधूदकवन्तः । घृतमित्युदकनाम । उदकस्य क्षरितारः SKN.

१५. तेभिन् A. तैः is suggested for तेभिः ॥ तैरूर्मिभिः Sy.

१६. अस्माकम् Sy., Dur., SKN.

१७. अपिता A. रक्षिता Sy. तर्पयिता Dur. वर्षिता रक्षिता वा SKN.

१८. भवेत्येतदाशास्महे Dur. N. 10. 24, SKN. IV. 28. This stanza=TS. 3. 1. 11. 3.

१९. अन्वारम्भणीयायां सरस्वतो यागस्य 'पीपिवांसम्' इत्यनुवाक्या । सूत्रितञ्च—'पीपिवांसं सरस्वतो दिव्यं सुपर्णं वायसं बृहन्तम्' ( ĀSS. 2. 8.) इति Sy.

२०. वीचीवांसं A.

२१. प्रवृद्धम् Sy. वर्धितवन्तम् ।....वर्धयन्तमित्यर्थः BB.

२२. देवस्य Sy. सरस्वान्वाग्देवताविशेषस्तस्य BB.

२३. शब्दायमानं स्तनवद्रसाधारं वा मेघम् Sy. स्तनस्थानीयं यागं, यथा स्तनो बालान् वर्धयति, एवं सर्वलोकं वर्धयन्तम् BB.

२४. भजेमहि प्राप्नुयाम Sy.

२५. पुत्रादिरूपाम् Sy. वयमपि प्रजां पुत्रादिकाम् BB.

२६. सरस्वतः प्रसादाद्धुक्षीमहि Sy. तस्याश्च जीवनार्थमिषमन्नं च BB.

य:[1] स्तन: । विश्वेषां दर्शनीय:[2] ।

VII. 97.

**य॒ज्ञे दि॒वो नृ॒षद॑ने पृथि॒व्या नरो॒ यत्र॑ देव॒यवो॒ मद॑न्ति ।**
**इन्द्रा॑य॒ यत्र॒ सव॑नानि सु॒न्वे गम॒न्मदा॑य प्रथ॒मं वय॑श्च ॥ १ ॥**

यज्ञे[3] ॥ ऐन्द्राग्न्याद्या[4] सूक्तं बार्हस्पत्यमन्त्यैन्द्री[5] च ॥ यज्ञे । दिव[6] आगत्य निषीदतु । पृथिव्या:[7] । नृषदने[8] मनुष्याणां सदनस्थाने तदेवाह । नर ऋत्विज:[9] । यस्मिन् यज्ञे । देवकामा:[10] । मदन्ति[11] । इन्द्राय[12] । यस्मिन् यज्ञे[13][14] । त्रीणि सवनानि । सुषुविरे । तत्रेन्द्रो मदाय[15] । गच्छतु[16] । प्रथममेव[17] । तस्याश्वा:[18] । वा गच्छन्तु[19] ।

**आ दैव्या॑ वृणीम॒हेऽवां॑सि॒ बृह॒स्पति॑र्नो मह॒ आ सखा॑य: ।**
**यथा॒ भवे॑म मी॒ळ्हुषे॒ अना॑गा॒ यो नो॑ दा॒ता प॑रा॒वत॑: पि॒तेव॑ ॥ २ ॥**

आ दैव्या । आवृणीमहे[20] । दैव्यानि[21] । रक्षणानि । बृहस्पति:[22] । अस्मान्[23] । आ पूजयति[24] । हे सखाय:[25] !

---

१. यस्तन: A.

२. ०यं A. विश्वै: सर्वैर्दर्शितो भवति दृश्यमानो भवति । तं स्तनं मेघमित्यर्थ: Sy. विश्वं दर्शनीयं यस्य । दृशेरौणादिकोऽनच्प्रत्यय: । तादृशो योऽसौ सरस्वांस्तस्य स्तनस्थानीयं विश्वं वर्धयितुं पर्याप्तं यागम् BB.
This stanza=TS. 3. 1. 11 2.

३. 'यज्ञे दिव:' इति दशर्चमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । प्रथमैन्द्री तृतीयानवम्योरिन्द्राब्रह्मणस्पती देवता दशम्या इन्द्राबृहस्पती शिष्टानां तु बृहस्पति: । तथा चानुक्रान्तम्—'यज्ञे दशैन्द्रयाद्यि बार्हस्पत्यमन्त्यैन्द्री च तृतीयानवम्यावैन्द्राब्राह्मणस्पत्ये (KSA. 38. 97. p. 27) इति । आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ ब्राह्मणाच्छंसिन इदमुत्तरं च सूक्तमावापार्थम् । सूत्रितञ्च—'यज्ञे दिव:' (ĀSS. 7. 9.) इति Sy.

४. ०न्द्राश्वाद्या A.

५. ०त्येन्द्रि च A. Cf KSA. 38. 97. p. 27.

६. दीप A. द्युलोकात् Sy.

७. पृथिव्या सम्बन्धिनि Sy.

८. नृणां नेतॄणां सदनभूते तस्मिन् यज्ञे Sy.

९. नरर्जत्विज: A. नेतार ऋत्विज: Sy.

१०. देवान् कामयमाना: Sy.

११. हृष्यन्ति Sy.

१२. इन्द्रार्थम् Sy.

१३. अभिषोतव्या: सोमा: Sy.

१४. अभिषूयन्ते Sy.

१५. मदार्थम्, सोमं पातुमित्यर्थ: Sy.

१६. आगच्छत् Sy.

१७. सर्वेभ्यो देवेभ्य: पूर्वम् Sy.

१८. अश्वा: is suggested for अभ्वा: ॥ गन्तारस्तदीया अश्वाश्च Sy.

१९. व A. आगच्छन्तु Sy.

२०. अभिभजामहे प्रार्थयामहे Sy.

२१. देवसम्बन्धीनि Sy.

२२. बृहतां पालयिता देव: Sy.

२३. अस्माकं हवि: Sy.

२४. आ महे-महतिर्दानार्थ: । आमहते आदत्त 'लोपस्त आत्मनेपदेषु' इति तलोप: Sy.

२५. हे समानख्याना: ! स्तोतारो वयम् Sy.

यथा। भवेम वयम्[1]। कामानां सेक्त्रे[2]। अनागसः[3]। यः[4]। अस्मान्[5]। दाता[6] परावतो[7] दूरात्। पितेवागच्छति[8]।

**तमु॒ ज्येष्ठं॒ नम॑सा ह॒विर्भि॑ः सु॒शेवं॒ ब्रह्म॑ण॒स्पतिं॑ गृणीषे ।**
**इन्द्रं॒ श्लोको॒ महि॒ दैव्य॑ः सिषक्तु॒ यो ब्रह्म॑णो दे॒वकृ॑तस्य॒ राजा॑ ॥ ३ ॥**

तमु। तम्। एव[9]। ज्येष्ठम्[10]। नमस्कारेण[11]। हविर्भिश्च[12]। सुसुखम्। ब्रह्मणस्पतिम्[13]। स्तुहि[14]। इन्द्रं च[15]। श्लोकः[16]। महान्तम्[17]। देवार्हः। सेवताम्[18]। यः[19]। अन्नस्य[20]। देवैरुत्पादितस्य[21] सर्वस्य राजा[22]।

**स आ नो॒ योनिं॑ सदतु॒ प्रेष्ठो॒ बृह॒स्पति॑र्वि॒श्ववा॑रो॒ यो अस्ति॑ ।**
**कामो॑ रा॒यः सु॒वीर्य॑स्य॒ तं दा॑त्पर्ष॑न्नो॒ अति॑ स॒श्चतो॒ अरि॑ष्टान् ॥ ४ ॥**

स आ नः। सः। अस्माकम्। बर्हिः[23]। आसीदतु[24]। प्रियतमः। बृहस्पतिः। विश्वैर्वरणीयः। यः[25] भवति। सुवीर्यस्य[26]। धनस्य[27]। योऽस्माकं कामः[28]। तम्[29]। प्रयच्छतु[30]। अतिपारयतु[31]। नः[32]। शत्रुभिः[33] संसक्तान्। अहिंसितानेव[34]।

---

१. यथा वयं भवेम तथा यूयं परिचरतेति शेषः Sy.
२. बृहस्पतये Sy.
३. अनपराधाः Sy.
४. बृहस्पतिः Sy.
५. अस्मभ्यम् Sy.
६. दाता भवति Sy.
७. वरा॰ A. दूरदेशाद्धनान्याहृत्य Sy.
८. पुत्रेभ्यः पितेव Sy.
९. देवम् Sy.
१०. प्रशस्यतमम् Sy.
११. ॰मस्मारे॰ A.
१२. चरुपुरोडाशादिभिश्च सार्धम् Sy.
१३. ब्रह्मणो मन्त्रस्य पतिं पालयितारमेतत्संज्ञम् S.
१४. गृणे स्तुव Sy.
१५. इन्द्रश्च A.
१६. अस्मदीयः स्तावको मन्त्रः Sy.
१७. अपि च महान्तम् Sy.
१८. सेवन्ताम् A.
१९. य इन्द्रो ब्रह्मणस्पतिर्वा Sy.
२०. अन्नस्य मन्त्रस्य वा Sy.
२१. देवैः स्तोतृभिः कृतस्य Sy.
२२. ईश्वरो भवति । तमिन्द्रं तं ब्रह्मणस्पतिमिति सम्बन्धः Sy.
२३. बर्हि: A. स्थानं वेदिलक्षणम् Sy.
२४. आगत्योपविशतु Sy.
२५. बृहस्पतिः Sy.
२६. वीर्यस्य A. शोभनवीर्यस्य Sy.
२७. अपि च धनस्य Sy.
२८. अभिलाषोऽस्ति Sy.
२९. कामम् Sy.
३०. अस्मभ्यं ददातु । काम्यमानं प्रयच्छत्वित्यर्थः Sy.
३१. इति वार॰ A. अतिपारयति शत्रून् Sy.
३२. अस्मान् Sy.
३३. उपद्रवैः Sy.
३४. अहिंसितान् कृत्वा Sy.

**तमा नो॑ अ॒र्कम॒मृता॑य॒ जुष्ट॑मि॒मे धा॑सुर॒मृता॑सः पुरा॒जाः ।**
**शुचि॑क्रन्दं यज॒तं प॒स्त्या॑नां बृह॒स्पति॑मन॒र्वाणं॑ हुवेम ॥ ५ ॥**

तमा नः । तत्[1] । अन्नम्[2] । अस्मभ्यम् । आप्रयच्छन्तु[3] । अमरणाय[4] । पर्याप्तम् । इमे[5] । देवाः[6] । पुराणाः[7] । शुद्धस्तोत्रम्[8] । यष्टव्यम् । गृहाणाम्[9] विश पस्त्या इति च ब्राह्मणम्[10] । बृहस्पतिम्[11] । आप्रत्युतमन्य-[12]स्मिन् । भूमयः[13] ।

**तं श॒ग्मासो॑ अरु॒षासो॒ अश्वा॒ बृह॒स्पतिं॑ सह॒वाहो॑ वहन्ति ।**
**स॒हश्चि॒द्यस्य॒ नील॑वत्स॒धस्थं॒ नभो॒ न रू॒पम॑रु॒षं वसा॑नाः ॥ ६ ॥**

तं शग्मासः[14] । तम् । शक्ताः[15] । आरोचमानाः । अश्वाः । बृहस्पतिम् । सह वहन्तः[16] । वहन्तु । सहः[17] शरीरं सहनाच्छरीरम् । यस्य[18] । नीलवर्णयुक्तम्[19] । 'आवेधसं नीलपृष्ठम्' इत्युक्तम्[20] । रथे सह स्थितम्[21] । नभः, न आदित्य इव[22] । रूपम् । आरोचमानाम्[23] । आच्छादयन्तः[24][25] ।

**स हि शुचिः॑ श॒तप॑त्रः॒ स शु॒न्ध्युर्हिर॑ण्यवाशीरिषि॒रः स्व॒र्षाः ।**
**बृह॒स्पतिः॒ स स्वा॑वे॒श ऋ॒ष्वः पु॒रू सखि॑भ्य आसु॒तिं करि॑ष्ठः ॥ ७ ॥**

स हि शुचिः[26] । सः[27] । हि[28] । शुचिः[29] । शतपतनः[30] । स हि । शोधकः[31] । हितरमणीयं वचनमायुधं वा

---

१. सर्वत्र भोक्तव्यतया प्रसिद्धम् Sy.
२. अर्चनसाधनमन्नम् Sy.
३. प्रदद्युः Sy.
४. अरमाणाय A. अमरणत्वाय जीवनाय Sy.
५. इम A.
६. अमरणा देवा ब्रह्मणस्पतेराज्ञया Sy.
७. पुरा जातः Sy.
८. ०द्धः स्तो०
९. पस्त्यमिति गृहनाम । तेन तद्वन्तो लक्ष्यन्ते । गृहिणाम् Sy.
१०. विशतया M.
११. बृहतां पालकं देवम् Sy.
१२. अप्रयुत० M. अप्रत्यृत० is suggested for आप्रत्युत० ॥ केनाप्यप्रतिगतम् Sy.
१३. भूर्य A. हुवेम is suggested for भूमयः ॥ आह्वयामः स्तुयाम वा Sy.
१४. शमास A.
१५. शग्माः सुखकराः शक्ता वा Sy.
१६. संहृत्य वाहका अश्वाः Sy.
१७. बलं च भवति Sy.
१८. बृहस्पतेः Sy.
१९. नीलं निलयो निवासः । तद्युक्तम् Sy.
२०. RV. V. 43. 12.
२१. सहस्थानं च यस्य तं बृहस्पतिमित्यन्वयः Sy.
२२. आदित्यमिव Sy.
२३. ०मानम् is suggested for ०मानाम् ।
२४. धारयन्तः Sy.
२५. VM. ignores चित्.
२६. सह शुचि A.
२७. बृहस्पतिः Sy.
२८. खलु Sy.
२९. शुद्धः Sy.
३०. बहुविधवाहनः Sy.
३१. सर्वेषां शोधयिता Sy.

पावनी[१] । गमनशील[२] । स्वर्गस्य[३] सम्भक्ता । बृहस्पतिः । सः । शोभनावेशः[४] । दर्शनीयः[५] । स्तोतृभ्यः । महतीम्[६] । आसुतिं धनस्य[७] प्रसवम् । अत्यन्तं तत्कर्ता[८] ।

**देवी देवस्य रोदसी जनित्री बृहस्पतिं वावृधतुर्महित्वा ।**
**दक्षाय्याय दक्षता सखायः करद्ब्रह्मणे सुतरा सुगाधा ॥ ८ ॥**

देवी[९] । देव्यौ[१०] । देवस्य[११] । जनयित्र्यौ । द्यावापृथिव्यौ । बृहस्पतिम्[१२] । वर्धयामासतुः[१३] । महत्त्वेन[१४] । पूज्याय[१५] । पूजां कुरुत[१६] । हे सखायः![१७] करोतु । ब्राह्मणाय मह्यम्[१८] । सुतराणि[१९] । सुगाधानि चोदकानि[२०] ।

**इयं वां ब्रह्मणस्पते सुवृक्तिर्ब्रह्मेन्द्राय वज्रिणे अकारि ।**
**अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥ ९ ॥**

इयं वाम् । इयम् । वां[२१] युवयोः । ब्रह्मणस्पते![२२] सुवृक्तिः[२३] । इन्द्राय । वज्रिणे[२४] तुभ्यं च । अकारि[२५] हविश्च[२६] । अविष्टमिति गतम्[२७] ।

---

१. वाशी is suggested for पावनी ॥ हितरमणीयवाक् । यद्वा 'वाशीभिस्तक्षताश्मन्मयीभिः' (RV. 101. 10. 10.) इति निगमाद् वाश्यायुधम् । स्वर्णमयायुधः Sy. वाशीति वाङ्नाम (Nagh. I. 11.)

२. शीलः is suggested for ०शील ॥ गन्ताऽभ्येषणीयो वा Sy.

३. स्वर्षाः स्वर्गस्य सम्भक्ता । यद्वा सरणशीलस्योदकस्य सनिता दाता Sy.

४. सुनिवासः Sy.

५. ईदृशो देवः Sy.

६. बहुलम् Sy.

७. ०तीं A. अन्नम् Sy.

८. ०न्तत् कर्ता A. कर्तृतमो दातृतमो भवति Sy.

९. A adds मदेव० after देवी ।

१०. दानादिगुणयुक्ते ! Sy.

११. बृहस्पतेः Sy.

१२. ०तीम् A.

१३. ०मास तं M.

१४. महत्त्वेन युक्तम् Sy.

१५. वर्धनीयाय । द्वितीयार्थे चतुर्थी । वर्धनीयं तं बृहस्पतिम् Sy.

१६. वर्धयत Sy.

१७. हे सखायः ! यूयमपि Sy.

१८. बृंहिताय प्रभूतायान्नाय तदर्थम् Sy.

१९. सुतरणानि सुखेन तरणीयानि Sy.

२०. ०नि वेचि चाद० A. सुखेनावगाहनीयान्युदकानि Sy.

२१. वां युवाभ्याम्, तादर्थ्ये चतुर्थी Sy.

२२. बृह्मण० A.

२३. सुप्रवृत्ता स्तुतिः Sy.

२४. वज्रवते Sy.

२५. मया कृताभूत् Sy.

२६. मन्त्ररूपेयम् Sy.

२७. VM. ignores अविष्टम् । धियः । जिगृतम् । पुरन्धीः । जजस्तम् । अर्यः । वनुषाम् and अरातीः । Sy. explains these words in the following manner : तौ युवां धियाऽस्मदीयानि कर्माणि । अविष्टं रक्षतम् । तथा पुरन्धीः पुरुधीर्बह्वीः स्तुतीर्जिगृतम् । निगिरतम् । शृणुतमिति यावत् । अर्योऽरीरभिगन्त्रीः । वनुषां सम्भवतृणामस्माकम् । अरातीः शत्रुसेनाः । जजस्तमुपक्षपयन्तम् Sy.

See RV. VII. 64. 5.

**बृह॑स्पते यु॒वमिन्द्र॑श्च॒ वस्वो॑ दि॒व्यस्ये॑शाथे उ॒त पार्थि॑वस्य ।**
**ध॒त्तं र॒यिं स्तु॑व॒ते की॒रये॑ चिद्यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ १० ॥**

बृहस्पते[1] । बृहस्पते[2] ! त्वं च[3] । इन्द्रः । च । युवाम् । धनस्य । दिव्यस्य[4] । चोभयस्य । ईश्वरो[5] भवतः । तथा सति प्रयच्छत[6] यत् । तद् धनम् । स्तुवते[7] । स्तोत्रे[8] ।[9]

VII.98.

**अध्व॑र्यवोऽरु॒णं दु॒ग्धमं॒शुं जु॒होत॑न वृष॒भाय॑ क्षिती॒नाम् ।**
**गौ॒राद्वेदी॑याँ अव॒पान॒मिन्द्रो॑ वि॒श्वाहेद्या॑ति सु॒तसो॑ममि॒च्छन् ॥ १ ॥**

अध्वर्यवः[10] । अध्वर्यवः[11] । आरोचमानम् । दुग्धम्[12] । अंशुम्[13] । जुहुत । क्षितीनाम्[14] । वर्षित्रे[15] । गौरादपि[16] मृगात् । अतिशयेन दूरस्थं विन्दन्[17] । अधोमुखेन पातव्यम्[18] । इन्द्रः । सर्वदा[19] इव । गच्छति[20] । सुतसोमं यजमानम् । इच्छन्[21] ।

---

१. तृतीयसवन उक्थ्ये ब्राह्मणाच्छंसिनः 'बृहस्पते युवम्' इति शस्त्रयाज्या । सूत्रितञ्च—'बृहस्पते युवमिन्द्रश्च वस्व इति याज्या' ĀSS. 6. 1.) इति । वाजपेयेऽतिरिक्तोक्थस्यैषैव परिधानीया । सूत्रितञ्च—'बृहस्पते युवमिन्द्रश्च वस्व इति परिधानीया' (ĀSS. 9. 9.) इति Sy.

२. बृहस्पते is missing in M.

३. ततश्च M. From च । इन्द्रः onwards the rest of the commentary is missing in A.

४. दिवि भवस्य Sy.

५. ०रौ is suggested for ०रो ।

६. ०च्छतम् is suggested for ०च्छत यत् ॥ दत्तम् Sy.

७. अतः कारणात् स्तोत्रं कुर्वते Sy.

८. कीरिः स्तोतृनामैतत् (Ngh. 3. 16.)

९. VM. ignores पार्थिवस्य and चित् ॥ चिदिति पूरणः । अन्यद्गतम् Sy.

१०. 'अध्वर्यवः' इति सप्तर्चं नवमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमैन्द्रम् । सप्तम्यैन्द्राबार्हस्पत्या । तथा चानुक्रान्तम्—'अध्वर्यवः सप्तोक्तदेवतान्त्या' (KSA. 38. 98. p. 27). इति । पूर्वसूक्तेन सहोक्तो विनियोगः Sy.

११. हे अध्वरस्य नेतारः ! ऋत्विजः ! Sy.

१२. अभिषुतम् Sy.

१३. अंशं M. सोमम् Sy.

१४. जनानां मध्ये Sy.

१५. श्रेष्ठायेन्द्राय Sy.

१६. ०रामपि A. From the beginning upto गौ०, the commentary is missing in A.

१७. ०स्थ A. विद्वानिन्द्रः Sy.

१८. अवक्रम्य स्थितं दूरस्थं पातव्यं सोमम् Sy.

१९. विश्वान्यहानि सर्वदा Sy.

२०. गच्छति । अतस्तस्मा इन्द्राय सोमं जुहुतेत्यन्वयः Sy.

२१. अन्विच्छन् Sy.

यद्दधिषे प्रदिवि चार्वन्नं दिवेदिवे पीतिमिदस्य वक्षि ।
उत हृदोत मनसा जुषाण उशन्निन्द्र प्रस्थितान्पाहि सोमान् ॥ २ ॥

यद्दधिषे[1] । यत्[2] । धारयसि[3] । गते काले[4] । चारु[5] त्वम् । अन्नम् । तस्य[6] । इदानीमपि । अन्वहम्[7] । पानम् । वह[8] पिब तमधुना । अपि च । हृदयेन । मनसा । अपि च[9] । सेवमानः[10] । कामयमानः । इन्द्र![11] प्रस्थितान्[12] । पिब । सोमान् ।

जज्ञानः सोमं सहसे पपाथ प्र ते माता महिमानमुवाच ।
एन्द्र पप्राथोर्वन्तरिक्षं युधा देवेभ्यो वरिवश्चकर्थ ॥ ३ ॥

जज्ञानः । प्रादुर्भवंस्त्वम्[13] । सोमम् । पपाथ[14] । पालय[15] । प्रोवाच[16] । ते[17] । महिमानम्[18] । माता पृथिवी[19] त्वया पाल्यमाना । आपप्राथ[20] च । विस्तीर्णम् । अन्तरिक्षम् । इन्द्र![21] युधा[22] । देवेभ्यस्त्वम्[23] । धनम् । चकर्थ[24] ।

---

१. ०षेम A.

२. सोमलक्षणम् Sy.

३. पानेनोदरे धारयसि Sy.

४. काले गते M. प्रगतेषु दिवसेषु पूर्वस्मिन् काले Sy.

५. शोभनम् Sy.

६. सोमस्य Sy.

७. प्रतिदिवसमिदानीमपि Sy.

८. वक्षि-कामयसे 'वश कान्तौ' इत्यस्य सिपि शपो लुकि षत्वकत्वषत्वेष्वेतद्रूपम् Sy.

९. उतशब्दश्चार्थे Sy.

१०. ०माना A.

११. कामयमानः is missing in A. अस्मान् कामयमानस्त्वम् Sy.

१२. पुरस्तान्नीतान् उत्तरवेदिस्थान् Sy.

१३. ०व त्वम् A. जायमान एव Sy.

१४. पीतवानसि Sy.

१५ वलाय is suggested for पालय ॥

१६. प्रोक्तवती । संवारसूक्ते 'अयं पन्थाः' (RV.4.18.) इत्यादिके 'नही न्वस्य' (RV.4.18.4.) इत्यर्धर्चादारभ्यादित्येन्द्रमहत्त्वस्योक्तत्वात् Sy.

१७. तव Sy.

१८. महत्त्वम् Sy.

१९. त्वदीया जनन्यदितिः Sy.

२०. स्वतेजसापूरितवानसि Sy.

२१. अतः कारणात् हे इन्द्र ! त्वम् Sy.

२२. युद्धेन Sy.

२३. स्तोतृभ्यो देवेभ्य एव वा Sy.

२४. कृतवानसि Sy.

यद्योधया महतो मन्यमानान्त्साक्षाम तान्बाहुभिः शाशदानान् ।
यद्वा नृभिर्वृत इन्द्राभियुध्यास्तं त्वयाजिं सौश्रवसं जयेम ॥ ४ ॥

यद्योधयाः[1] । यम् । अयोधयस्त्वम्[2] । महतोऽस्मान्[3] । अभिमन्यमानान्[4] । सहेमहि[5] । तान् । बहुभिः[6] । अस्मान् हिंसितशत्रून्[7], 'शदिः शातनकर्मा'[8] यत्[9] । वा त्वम् । मरुद्भिः[10] । इन्द्र ! परिवृतः । त्वम्[11] । अभियुध्याः[12] । ततस्त्वया यम्[13] । सङ्ग्रामम्[14] । कीर्तिनिमित्तम्[15] । जयेम ।

प्रेन्द्रस्य वोचं प्रथमा कृतानि प्र नूतना मघवा या चकार ।
यदेददेवीरसहिष्ट माया अथाभवत्केवलः सोमो अस्य ॥ ५ ॥

प्रेन्द्रस्य । प्रावोचम्[16] । इन्द्रस्य । पुरातनानि[17] । कर्माणि[18] । प्रावोचं च । नूतनानि[19] । मघवा[20] । यानि । चक्रे[21] । यदा । इवेन्द्राः[22] । सूरिः[23] । मायाः[24] । असहिष्ट[25] । अनन्तरमेव । अस्य[26] । अभवत्[27] । असाधारणः[28] । सोमः[29] ।

---

१. यद्यदा Sy.

२. ०ध्व त्व० A. अस्माभिर्योधयेः । तैः सह योद्धुं बलं प्रयच्छेरित्यर्थः Sy.

३. प्रभूतान् Sy.

४. ०मान्य० A. शत्रून् Sy.

५. त्वत्प्रसादात् सहेम ? (सहेमहि) अभिभवेम Sy.

६. बहु० M. बाहुभिः is suggested for बहुभिः ॥ आयुधनिरपेक्षैर्हस्तैरेव Sy.

७. हिंसतस्तान् शत्रून् Sy.

८. हृदि A.

९. यदि Sy.

१०. नेतृभिर्मरुद्भिः Sy.

११. तम् is suggested for त्वम् ।

१२. अस्मदीयान् शत्रूनभियुध्येः Sy.

१३. ०तः A.

१४. त्वं त्वया M. त्वया वयम् is suggested for त्वया यम् ॥ त्वया सहायेन वयम् Sy.

१५. श्रवोऽन्नं यशो वा शोभनस्य श्रवसो हेतुम् Sy.

१६. प्रोवाचम् A. प्रब्रवीमि Sy.

१७. ०पुरा० A.

१८. वीर्यकर्माणि Sy.

१९. अभिनवानि भुवि Sy.

२०. मघवानिन्द्रः Sy.

२१. कृतवान् Sy.

२२. एवेन्द्रः is suggested for एवेन्द्राः ।

२३. आसुरीः is suggested for सूरिः ।

२४. तैः कृतानि Sy.

२५. अभ्यभूत् Sy.

२६. इन्द्रस्य Sy.

२७. तदाप्रभृत्येव सोमस्येन्द्रस्य चासाधारणः सम्बन्धो जात इत्यर्थः Sy.

२८. केवलः Sy.

२९. स्तोमः M.

तवेदं विश्वमभितः पशव्यं१ यत्पश्यसि चक्षसा सूर्यस्य ।
गवामसि गोपतिरेक इन्द्र भक्षीमहि ते प्रयतस्य वस्वः ॥ ६ ॥

तवेदं विश्वम् । तवैव[1] । इदम् । सर्वम्[2] । अभितो[3] दृश्यमानम् । पशव्यं[4] पशूनां सुखस्वं[5] भवति । यदा त्वम् । सूर्यस्य[6] । तेजसा । पशून्[7] पश्यसि[8] । ततश्च गवाम्[9] । असि । गोपतिस्त्वम् । एक एव इन्द्र ! भजेमहि । त्वया । प्रवृत्तम्[10] । धनम् ।

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

[बृहस्पते][11]

VII.99.

परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ १ ॥

परः[12] । परस्त्वम्[13] । मानसाधनेन[14] । शरीरेण त्रींल्लोकान् । हे वर्धमान ! वामनो हि भूत्वा ववृधे

१. तवैव स्वभूतम् Sy.
२. विश्वं सर्वं जगत् Sy.
३. सर्वतो विद्यमानम् Sy.
४. पशवो द्विविधा द्विपादश्चतुष्पादश्च । तेभ्यो हितम् Sy.
५. सख स्वं A. सुसुखम् is suggested for सुख स्वं ॥
६. प्रेरकस्यादित्यस्य Sy.
७. विश्वम् Sy. ८. प्रकाशयसि Sy.
९. न केवलमेकस्या एव गोपतिरपितु सर्वासामित्याह गवामिति Sy.
१०. प्रयतस्य प्रतस्य । द्वितीयार्थे षष्ठी । प्रत्तम् Sy.
११. The *Pratīka* is supplied by the Editor.
This stanza has already been explained. See VII. 97. 10.
Sy. explains this stanza again in the following manner:—
व्याख्यातेयम् । अक्षरार्थस्तु हे बृहस्पते ! त्वं चेन्द्रश्च युवां दिव्यस्य पार्थिवस्य चोभयविधस्य धनस्येश्वरौ भवथः । तौ युवां स्तुवते स्तोत्रे धनं दत्तमिति ।
१२. 'परो मात्रया' इति सप्तर्चं दशमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । 'उरुं यज्ञाय' इत्याद्यास्तिस्र ऐन्द्रावैष्णव्यः शिष्टाः केवलविष्णुदेवताकाः । तथा चानुक्रान्तम्—'परो वैष्णवं तूरुमित्यैन्द्र्यश्च तिस्रः'(KSA. 38. 99. p. 27.) इति । गतः सूक्तविनियोगः । विष्णुदेवताके पशौ 'परो मात्रया' इति पुरोडाशस्य याज्या । सूत्रितञ्च—'परो मात्रया तन्वा वृधानेरावती धेनुमती हि भूतम्' (ĀSS. 3. 8.) इति Sy.
१३. पर इति सकारान्तं परस्तादित्यस्यार्थे । परशब्दाच्छान्दसोऽसि प्रत्ययः । 'परो दिवा पर एना पृथिव्या' (RV. 10. 82. 5.) इति यथा । मात्रयेति व्यत्ययेन तृतीया । मात्रया परः परस्ताद्वर्तमानयापरिमितया Sy.
१४. मन० A.

विष्णुः ।[1] तव शरीरस्य । महत्त्वम् । नान्ये केचन । व्याप्नुवन्तः[2] । तव[3] स्वभूतौ । द्वावेव । लोकौ[4] । वयं जानीमः[5] । पृथिवीमन्तरिक्षं[6] च । हे देव[7] ! विष्णो ! त्वमेव । तृतीयं[8] लोकम् । जानासि[9] ।[10]

**न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।**
**उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ २ ॥**

[11]न ते विष्णो । न । ते[12] । विष्णो[13] ! जायमानः[14] । नापि[15] । जातः[16] । देव[17] ! महिम्नः[18] । परम्[19] । अन्तम्[20] । प्राप[21] । ऊप्तम्[22] । अभिवानसि[23][24] । तृतीयं लोकम्[25] । दर्शनीयम् । महान्तम् । अधारयश्च[26] । पृथिव्याः । प्राचीम् । दिशम्[27] ।

---

१. त्रैविक्रमसमये यत्तव माहात्म्यं तत्सर्वैरपि जनैर्ज्ञातुं न शक्यत इत्यर्थः Sy.

२. Something probably तव is missing in the mss.

३. ०तौ is suggested for ०तो ।

४. ०का पयं A.

५. जानी उ A. वयं चक्षुषोपलभामहे नान्यत् Sy.

६. अन्तरिक्षं च is written twice in A. पृथिव्या आरभ्य पृथिवीमन्तरिक्षञ्च Sy.

७. हे द्योतमान ! Sy.

८. अस्य स्वर्गादिरुत्कृष्टलोकस्य । द्वितीयार्थे षष्ठी । परमं लोकम् Sy.

९. अतस्तव महत्त्वं न केनापि व्याप्तुं शक्यमिति भावः Sy.

१०. VM. ignores अनु.

११. पूर्वोक्त एव पशौ 'न ते विष्णो' इति वपाया अनुवाक्या । सूत्रितञ्च—'न ते विष्णो जायमानो न जातस्त्वं विष्णो सुमतिं विश्वजन्याम्' (ĀSS. 3. 8.) इति Sy.

१२. तव Sy.

१३. विष्णो is missing in A.

१४. प्रादुर्भवन् जनः Sy.

१५. नापी A.

१६. तथा प्रादुर्भूतोऽपि जनः नैव प्राप्नोति तव महत्त्वस्यावसानं नास्ति । अत एव सर्वैर्न ज्ञायत इति भावः Sy.

१७. हे दानादिगुणयुक्त ! Sy.

१८. महत्त्वस्य Sy.

१९. विप्रकृष्टम् Sy.

२०. अवसानम् Sy.

२१. प्राव A. प्राप्नोति Sy.

२२. ऊर्ध्वम् is suggested for ऊप्तम् ।

२३. Something probably धारित is missing in the mss. between अभि and वानसि ।

२४. ०सि M. अधारयः । यथाधो न पतति तथा Sy.

२५. द्युलोकम् Sy.

२६. धारितवानसि । उपलक्षणमेतत् सर्वस्य भूतजातस्य । तथा च मन्त्रान्तरम्—'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' (RV. 1. 154. 4.) इति Sy.

२७. दिश A.

इरा॑वती धे॒नुम॑ती॒ हि भू॒तं सू॑यव॒सिनी॒ मन॑षे दश॒स्या ।
व्य॑स्तभ्ना॒ रोद॑सी विष्णवे॒ते दा॒धर्थ॑ पृथि॒वीम॒भितो॑ म॒यूखैः॑ ॥ ३ ॥

इरावती[1]। अन्नवत्यौ[2]। पशुमत्यौ[3] च। हि[4]। अभवतम्[5]। शोभनयवसे[6] सर्वस्मै। मनुष्या[7] मनवे राज्ञे। दानीमिच्छन्त्यौ[8]। त्वं चैते[9]। रोदसी[10]। हे विष्णो[11]! व्यस्तभ्नाः[12]। दाधर्थ[13] च। इमां पृथिवीम्[14]। परितः[15]।

१. पूर्वोक्त एव पशौ 'इरावती' इति हविषो याज्या। सूत्रितञ्च—'इरावती धेनुमती हि भूतं विश्वकर्मन् हविषा वावृधान इति द्वे' (ĀSS. 3. 8.) इति Sy.

२. सस्यवत्यौ Mah. हे विष्णो! यस्मात्तव प्रशासनमनुकुर्वत्यौ द्यावापृथिव्यौ. . .सस्यवत्यौ U. द्यावापृथिव्यात्मना स्तूयेते। हे हविर्धानात्मिके! द्यावापृथिव्यौ! इरावती इरावत्यावन्नवत्यौ BB.

३. बहुधेनुयुक्ते Mah. धेन्वादिभिः पशुभिस्तद्वत्यौ U. धेनुमत्यौ च भवतम् BB.

४. हिशब्दः प्रसिद्धौ। विष्णुना विक्रान्तत्वाद्युवामेवमेव खलु पूर्वभूतमित्यर्थः Sy. हिशब्दो यस्मादर्थे व्याख्यातः U. हिशब्दश्चार्थे, इरावती धेनुमती च भवतमिति BB.

५. अभूतम् Sy. हे रोदसी! द्यावापृथिव्यौ! युवामीदृश्यौ भूतं भवतम् Mah. एवम्भूतं भूताम्, अभूतामिति पुरुषव्यत्ययः। संवृत्ते इत्यर्थः U. भवतं यज्ञसाधनद्वारेण BB.

६. ०नाय० A. सुष्ठु यवसानि विद्यन्ते ययोस्ते सुयवसिनी, यवसशब्देनात्राभ्यवहार्याणि वस्तूनि Mah. शोभनयवसवत्यौ सुसस्यवत्यौ U. शोभनैर्यवसैरभ्यवहार्यैस्तद्वत्यौ सूयवसिन्यौ च भवतम्। सौस्सांहितिको दीर्घः BB.

७. मनुष्याय is suggested for मनुष्या॥ स्तुवते मनुष्याय Sy. मनुते जानातीति मनुर्ज्ञानवान् यजमानस्तस्मै Mah. यजमानाय U. मन्त्रवते मननवते यजमानायेत्थं भवतम् BB.

८. दासीमि०—M. दातुमि० or दानमि० is suggested for दानीमि०॥ दित्सया युक्ते युवाम् Sy. दात्र्यौ यज्ञसाधनानाम्। 'दाशृ दाने' दाशतस्ते दशस्या Mah., U.

९. इमे Sy. कस्मादेवमुच्यते? इति चेत्, श्रूयतां युवयोर्महाभाग्यम्। एते युवाम् BB.

१०. द्यावापृथिव्यौ Sy. रोदस्सञ्ज्ञां भजमाने BB.

११. एवं द्यावापृथिव्यौ सम्प्रार्थ्य विष्णुमाह। हे विष्णो Mah. विष्णुरेव प्रजापत्यात्मा स्वयम् BB. १२. ०स्तना A. विभज्य स्तम्भितवानसि Mah. अतः कारणात्।. . . . स्कभ्नोतिः स्तम्भनार्थः। स्तम्भितवानसि U. विभज्य स्थापितवान्, अध उपरि च।. . . . तदानीं युवां रोदस्सञ्ज्ञे चाभूतमिति भावः BB.

१३. दाधर्म A. विविधमधारयः। पृथ्वीमूर्ध्वमुखत्वेन द्यामधोमुखत्वेनेति विविधत्वम् Sy. धारितवानसि Mah. धारयसि U. इमां च विष्णुर्दाधार, अविचलितां स्थापयामास BB.

१४. अपि च पृथिवीं प्रथितामिमां भूमिम् Sy. पृथिवीं द्यां चेत्यध्याहारः U. विस्तीर्णां वा पृथिवीमन्तरिक्षं च। पृथिवीशब्देन प्रथि? (पृथु)त्वात् त्रयो लोका उच्यन्ते। यथा 'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्' इति BB.

१५. सर्वत्र स्थितैः Sy. सर्वतः Mah. इतश्चेतश्च U. अधरादुपरिष्टाच्च BB.

तेजोभिः[1] शङ्कुभिः[2]।

**उ॒रुं य॒ज्ञाय॑ चक्रथुरु लो॒कं ज॒नय॑न्ता॒ सूर्य॑मु॒षास॑म॒ग्निम् ।**
**दास॑स्य चिद्वृषशि॒प्रस्य॑ मा॒या ज॒घ्नथु॑रा पृत॒नाज्ये॑षु ॥ ४ ॥**

उरुम्[3] । उरुम्[4] । यज्ञाय[5] । चक्रथुः[6] । उ[7] । लोकं[8] स्थानम्[4] । जनयन्ताविन्द्राविष्णू[9] ! सूर्यम्[10] । उषसम्[11] । अग्निं च । दासस्य[12] । चित्[13] । वृषशिप्राख्यस्य[14] युवाम्[15] । जघ्नथुः[16] । मायाः । सङ्ग्रामेषु । नेतारौ[17] ।

१. पर्वतैर्दार्ढ्यं धारितवानसि । यथा न चलति तथा दृढीकृतवानित्यर्थः। पर्वता हि विष्णोः स्वभूताः । 'विष्णुः पर्वतानामधिपतिः' इति श्रुतेः (TS. 3. 4. 5. 1.) Sy. स्वतेजोरूपैर्नानाजीवैर्वराहाद्यनेकावतारैर्वा Mah. रश्मिभिः। यस्मात्त्वमेवम्प्रभावस्तस्मात्त्वां स्तुम इति शेषः U. अंशुभिः BB.

२. एवंमहाभागधेयाभ्यां युवाभ्यां किन्नाम कर्तुं न शक्यते। तस्माद्यथोक्तं भवतमिति। आदित्यपक्षे व्यस्कभ्नाद् रोदसी विष्णुरादित्य एते युवां विविधं स्थापयति। तत एते एवं स्थापिते दाधार धारयति पृथिवीमभितः पृथिव्यामन्तरिक्षस्याधस्तादुपरिष्टाच्च। 'अभितः परितः' इति द्वितीया। मयूखै रश्मिभिरधोमुखैः पृथिवीम्, ऊर्ध्वमुखैश्च दिवम्, स्वयं मध्येऽन्तरिक्षे वर्तमान इति । तस्मादनयाऽऽहुत्या युवामन्नादिमत्यौ भवतम्। युवां युवयोरन्तरालं च विष्णुरपि दृढीकरोत्विति BB.

चतुर्गृहीतमाज्यं गृहीत्वा। प्रतिप्रस्थातोत्तरस्य हविर्धानस्य दक्षिणायां वर्त्तन्याᳩहिरण्यं निधाय जुहोतीरावती धेनुमती हि भूतᳩसूयवसिनी[1] मनवे दशस्या। व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहेति दᳩष्ट्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपानवित[2] देवश्रुतौ देवेष्वाघोषतमिति तद्यदेवं जुहोति SB. 3. 5. 3. 14. p. 274.

ऋचि 'मनुषे' परं यजुषि (5. 16. p. 84.) 'मनवे' इति (YV. 5. 17. p. 85.) मन्त्रस्यापि कियान् पूर्वो भागोऽत्रैव 'देवश्रुतौ देवेष्वाघोषतम्' इति निहितः।

This stanza=YV. 5.16.=TS. 1. 2. 13. 2.

३. उरु A. ४. विस्तीर्णम् Sy.

५. यजमानाय Sy.

६. कुः M. कृतवन्तौ युवाम् Sy.

७. खलु Sy. ८. लोकं स्वर्गाख्यम् Sy.

९. पुनः प्रादुर्भावयन्तौ Sy.

१०. सर्वस्य प्रेरकमादित्यम् Sy.

११. तमोनिवारकमुषःकालम् Sy.

१२. असुरैरावृतम् Sy.

१३. उपक्षयितुरसुरस्य Sy. १४. चि A.

१५. कोर्षचिप्रा० A. एतत्संज्ञस्य Sy.

१६. जिहिंसथुः। युवां सूर्यादिकं जनयन्तावित्युच्यते Sy. १७. नेतरौ A. हे इन्द्राविष्णू ! Sy.

इन्द्रा॑विष्णू दृंहि॒ताः शम्ब॑रस्य॒ नव॒ पुरो॑ नव॒तिं च॑ श्नथिष्टम् ।
श॒तं व॒र्चिनः॑ स॒हस्रं॑ च सा॒कं ह॒थो अ॑प्र॒त्यसु॑रस्य वी॒रान् ॥ ५ ॥

इन्द्राविष्णू[1] । हे इन्द्राविष्णू[2] ! शिलाभिर्दृहिताः[3] । शम्बरासुरस्य[4] । नव[5] । पुरः[6] । नवतिम्[7] । च । श्नथिष्टम्[8] । तथा वर्चिनोऽसुरस्य[9] । शतम् । सहस्रम् । च पुरः । साकम्[10] । हथः[11] । शत्रुभिरप्रतिहतान्[12] असुरस्य[13] । वीरांश्च[14] ।

इ॒यं म॑नी॒षा बृ॑ह॒ती बृ॒हन्ता॑रुक्र॒मा त॒वसा॑ व॒र्धय॑न्ती ।
र॒रे वां॒ स्तोमं॑ वि॒दथे॑षु विष्णो॒ पिन्व॑त॒मिषो॑ वृ॒जने॑ष्विन्द्र ॥ ६ ॥

इयं मनीषा । इयम् । स्तुतिः[15] । महती । महान्तौ[16] । उरुक्रमणाविति[17] विष्णुसाहचर्यादुपावाह[18] ।

---

१. विष्णुना संस्तवः । वसिष्ठस्यार्षम् Dur. वसिष्ठस्य SKN.

२. हे इन्द्राविष्णू ! युवाम् BB. Dur.

३. दंहिताः A. दृढीकृताः Sy. SKN. दृढाः BB. स्थिरीकृताः Dur.

४. शम्बरस्यासुरस्य BB. मेघस्यासुरस्य वा स्वभूताः Dur. शम्बरस्य स्वभूताः SKN.

५. नर A.

६. पुराणि Sy. नगरीः BB.

७. ०तीं चा A. नवोत्तरनवतिसंख्याकाः Sy.

८. श्नष्टे A. अहिंसिष्टम् । 'श्नथ हिंसायाम्' Sy. नाशितवन्तौ । 'श्नथ हिंसायाम्' BB. श्नथतिर्वधकर्मा । हतवन्तौ स्थः Dur,SKN.

९. तासु वर्चिनो दीप्तिशीलान् BB. तांश्च हत्वा मेघान्तर्गताः..... वर्चिनो दीप्तिमतोऽन्नवतो वा Dur. तांश्च श्नथन्तौ तत्रस्थान्...... वर्चिनो दीप्तिमतोऽन्नवतो वा SKN.

१०. तथा साकं सह सद्य एव Sy. एकेन प्रहारेण BB. अवस्थितान् सहभावेनैकनिश्चयान् Dur. सह SKN.

११. हाथ A. अहिंसिष्टम् । 'यो वर्चिनः शतमिन्द्रः सहस्रम्' (RV. 2. 14. 6.) इति हि निगमान्तरम् Sy. नाशितवन्तौ युवाम् BB. हतवन्तौ स्थः Dur. SKN.

१२. प्रतिद्वन्द्विनो यथा न भवन्ति तथा Sy. अप्रतिपक्षौ यथा भवतस्तथा BB. अप्रतीकारान् Dur. प्रतीत्युपसर्गः । उपसर्गाश्च पुनरेवमात्मकाः यत्र क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः । यत्र न प्रयुज्यते तत्र ससाधनां क्रियामाहुः । तेनात्र प्रतिशब्दः ससाधनक्रियावचनत्वात् प्रत्यवतिष्ठमानशब्दस्यार्थे । अप्रत्यवतिष्ठमानान् SKN.

१३. शम्बरस्य BB. SKN. शम्बरस्य स्वभूतान् Dur. SKN.

१४. यो युवामेतदतिदुष्करमकार्ष्टम्, तावस्माकमपि शत्रून् हतमिति BB. हथ इत्येतदाशास्महे Dur. वीरान् प्रधानभूतान् ।.... एवं महाप्रभावौ युवामस्मदभिप्रेतं साधयत पुत्रान् पौत्रांश्च SKN, N. 7. 10. SKN. III. 60. This stanza = TS. 3. 2. 11. 3.

१५. मननीया स्तुतिः Sy.

१६. बृहन्तौ महन्तौ Sy.

१७. विस्तीर्णविक्रमौ । विष्णुना सहैकार्थीभावादिन्द्रस्याप्युरुक्रमत्वम् Sy.

१८. ०दुपावह M. ०दुभावाह is suggested for दुपावाह ।

वर्धनेन[1]। वर्धयन्ती[2] भवति। तथा प्रयच्छामि[3] च। स्तोमम्[4]। युवाभ्याम्। यज्ञेषु। विष्णोः! तथा सति। इन्द्र! त्वं च विष्णुश्च। अन्नान्यस्मभ्यम्। पिन्वतम्[5]। सङ्ग्रामेषु।

**वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।**
**वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः॥ ७॥**

वषट्[6] ते[7]। वषट्कारम्। तव[8]। हे विष्णो[9]! आस आस्यादि[10]। आभिमुख्येन[11]। करोमि[12]। तथा वषट्कृतम्[13]। मम[14]। हव्यम्[15]। हे शिपिविष्ट[16]! सेवस्व। शिपिविष्टो यज्ञ इति द्वे यज्ञनामनी इत्युक्तम्[17]। वर्धयन्त्विति[18] स्पष्टम्[19]।

---

१. तव इति बलस्य वृद्धेर्वा नामधेयम् (Ngh. 2. 9. 33.)। तद्वन्तौ एवम्भूतौ युवाम् Sy.

२. प्रवृद्धो कुर्वत्यस्माभिः कृता Sy.

३. ररे ददे। 'रा दाने' इति धातुः Sy.

४. स्तोम A. उक्तलक्षणं स्तोत्रम् Sy.

५. पिवतं A. M. अस्मभ्यं वर्धयतम् Sy.

६. अभ्युदयेष्टौ विष्णोः शिपिविष्टस्य 'वषट् ते' इत्येवानुवाक्या। सूत्रितञ्च—'भद्रा ते हस्ता सुकृतोत पाणी वषट् ते विष्णवास आ कृणोमि' (ĀSS 3. 13.) इति Sy.

७. के A.

८. तुभ्यम् Sy.

९. हे विष्णो! व्यापनशील! BB.

१०. आस्यात् is suggested for आस्यादिः॥ किम्? आसः, अस्यते क्षिप्यत इत्यासोऽग्नौ क्षिप्यमाणं हविरुच्यते। कर्मणि घञ्। वचनव्यत्ययः। 'कर्षात्वतः' इत्यन्तोदात्तत्वम्। यद्वा असुनि। सवर्णव्यत्ययः BB.

११. ०ख्येन A. अभिमुखम् Sy. आङ् मर्यादायाम् BB.

१२. वषट्कारेण हविर्ह्वावयामि Sy. ददामि BB.

१३. From ०कृतम् onwards the rest of the commentary is missing in A.

१४. मदीयम् Sy.

१५. हविः Sy. BB.

१६. शिपयो रश्मयस्तैराविष्ट! Sy. शिपयो रश्मयस्तैर्वेष्टितः प्रविष्टो वा। पृषोदरादित्वादभीष्टं रूपं सिद्धम् BB.

१७. N. 5. 7. reads 'शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः'।

१८. किञ्च—मम सुष्टुतयः शोभनस्तुतिकारणभूता गिरस्त्वां वर्धन्तु वर्धयन्तु स्तुवन्त्विति यावत्। स्तुत्या हि स्तोतव्यो वर्धते। 'बहुलं सञ्ज्ञाछन्दसोः' इति णिलुक्। 'छन्दस्युभयथा' इति वा शप आर्धधातुकत्वम्। यूयं च मया स्तुता नोऽस्मान् स्वस्तिभिरविनाशैः पात रक्षत, सदा सर्वदा। पूजार्थमेकस्मिन् बहुवचनम् BB.

१९. VM. ignores वर्धन्तु। त्वा। सुष्टुतयः। गिरः। मे। यूयम्। पात। स्वस्तिभिः। सदा and नः।

Sy. explains these words in the following manner:

सुष्टुतयः शोभनस्तुत्यात्मिकाः। गिरो वाचश्च। त्वाम्। वर्धन्तु वर्धयन्तु। अन्यद् गतम्। Sy.

This stanza=TS 2. 2. 12. 4.

VII. 100

नू मर्तो॑ दयते सनि॒ष्यन्यो विष्ण॑व उरुगा॒याय॒ दाश॑त् ।
प्र यः स॒त्राचा॒ मन॑सा॒ यजा॑त ए॒ताव॑न्तं॒ नर्य॑मा॒विवा॑सात् ॥ १ ॥

नू[1] मर्तः । क्षिप्रम् । मनुष्यः[2] । प्रयच्छति[3] हविः । धनं तद्द्वारेण स सनिष्यन्[4] । यः[5] । विष्णवे । उरु-कीर्तये[6] । हविः प्रयच्छति नान्येभ्यश्च[7] देवेभ्यो विडम्बते[8] । यः । महत्त्वमञ्चता[9] । मनसा[10] । विष्णुं प्रयजते[11] । यश्चैतावन्तम्[12] । नर्यम्[13] । आविवासति[14], एत्यधितिष्ठति, एतावन्तमिति महान्तमित्यर्थः[15] ।

त्वं वि॑ष्णो सुम॒तिं वि॒श्वज॑न्या॒मप्र॑युतामेवयावो म॒तिं दाः ।
पर्चो॒ यथा॑ नः सुवि॒तस्य॒ भूरे॒रश्वा॑वतः पुरुश्च॒न्द्रस्य॑ रा॒यः ॥ २ ॥

त्वं[16] विष्णो । त्वम् । विष्णो ! सुमतिम्[17] । विश्वजनहिताम्[18] । अप्रमत्ताम्[19] । हे एवयावः[20] ! एवन्[21]

१. 'नू मर्तः' इति सप्तर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैष्णवम् । 'नू मर्तः' इत्यनुक्रान्तम् (KSA. 38. 100. p. 27.) उक्थ्येऽच्छावाकशस्त्र इदं शंसनीयम् । सूत्रितञ्च—'ऋतुर्जनित्री नू मर्तो भवा मित्रः' (ĀSS. 6. 1.) इति Sy. २. स मनुष्यः Sy.

३. धनमादत्ते । दयतिराङ्पूर्वो दानार्थे वर्तते Sy.

४. धनमिच्छन्....यद्वा सनिष्यन्निति सनतेर्लाभार्थस्य लृटि रूपम् । धनादीनि लप्स्यमानो भवन्नेव Sy.

५. मनुष्यः Sy.

६. The commentary from the beginning upto कीर्तये is missing in A. बहुभिः कीर्तनीयाय Sy.

७. ०भ्यः इव A.

८. विद्धं बते A.

९. सहाञ्चता Sy.

१०. मननेन स्तोत्रेण Sy.

११. प्रकर्षेण पूजयेत् Sy.

१२. एतावत्परिमाणं महान्तम् Sy.

१३. नरेभ्यो हितं विष्णुम् Sy.

१४. आपिपास० A. नमस्कारादिभिः परिचरेत् । मर्तो दयत इत्यन्वयः Sy.

१५. The passage: एतावन्तमिति महान्तमित्यर्थः should immediately follow एतावन्तम् and precede नर्यम् ।

१६. विष्णुदेवत्ये पशौ पुरोडाशस्य 'त्वं विष्णो' इत्यनुवाक्या । सूत्रितञ्च—'त्वं विष्णो सुमतिं विश्वजन्यां विचक्रमे पृथिवीमेष एताम्' (ĀSS 3. 8.) इति Sy.

१७. अनुग्रहबुद्धिम् Sy.

१८. सर्वजनहिताम् Sy.

१९. दोषैर्वियुक्ताम् Sy.

२०. याव M. एवाः प्राप्तव्याः कामाः । तान् यापयति प्रापयति स्तोतॄनित्येवयावः । हे एवयावन् ! Sy.

२१. एव नू M. एवान् is suggested for एवन् ।

गच्छति । देहि[1] । वर्चः[2] । यथा । नः[3] । शोभनगमनस्य[4] । वहोः[5] । अश्ववतः[6] । बहुसुवर्णस्य[7] । धनस्य भवेत् वर्चः[8] सम्पर्क[9] इति[10] ।

**त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा ।**
**प्र विष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥ ३ ॥**

[त्रिर्देवः][11] [12] त्रिः[13] । देवः[14] । पृथिवीम्[15] । एषः । एताम् । विचक्रमे[16] । बहुस्तुतिकाम्[17] । महत्त्वेन । प्रभवतु[18] । विष्णुः[19] । वृद्धोदपि[20] । वृद्धतरः[21] । हि[22] अस्य । स्थविरस्य[23] । नाम[24] विष्णुरिति[25] [26] ।

**वि चक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ।**
**ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥ ४ ॥**

[27] वि चक्रमे । विचक्रमे[28] । पृथिवीम्[29] । एषः । एतामसुरैराक्रमन्तान्[30] । निवासार्थमसुरानवजित्य पृथि-

---

१. अस्मभ्यं देहि Sy.
२. पर्चः is suggested for वर्चः ॥ सम्पर्को यथा भवति तथा देहीत्यन्वयः Sy.
३. अस्माकम् Sy.
४. सुष्ठु प्राप्तव्यस्य Sy.
५. बहुलस्य Sy. ६. अश्वयुक्तस्य Sy.
७. पुरूणां बहूनामाह्लादकस्य Sy.
८. वर्च A. पर्चः is suggested for वर्चः ॥ VM. seems to read वर्चः for पर्चः in the text.
९. The passage वर्चः सम्पर्कः should immediately follow वर्चः and precede यथा ।
१०. VM. ignores मतिम् ।
११. वैष्णव्यस्योपांशुयाजस्य 'त्रिर्देवः' इति याज्या । सूत्रितञ्च—'इदं विष्णुर्वि चक्रमे त्रिर्देव पृथिवीमेव एताम्' ĀSS. 1.6.) इति । वैष्णव्ये पशावप्येषैव वपाया याज्या । सूत्रितञ्च—'त्रिर्देवः पृथिवीमेष एतां परो मात्रया तन्वा वृधान' (ĀSS. 3. 8.) इति Sy.
१२. The *pratīka* is supplied by the Editor
१३. त्रिभिः पदैः Sy.
१४. दानादिगुणयुक्तो विष्णुः Sy.
१५. उपलक्षणमेतत् । पृथिव्यादींस्त्रींल्लोकान् Sy.
१६. विक्रान्तवान् Sy.
१७. शतसंख्यान्यर्चींषि यस्यास्तादृशीम् Sy.
१८. अस्माकं प्रभवतु । स्वामी भवतु Sy.
१९. विष्णो M.
२०. वृद्धोऽपि M. वृद्धादपि is suggested for वृद्धोदपि ॥ तवस्विनो वृद्धादपि Sy.
२१. तवस्वितरः Sy.
२२. यस्मात् तस्मात् कारणात् स विष्णुः प्रभवत्वित्यर्थः Sy. २३. वृद्धस्य Sy.
२४. नामकं रूपं विष्णुरित्येतन्नामैव वा Sy.
२५. रिव A. विष्णुरित्येतन् नामैव वा Sy.
२६. VM. ignores त्वेषम् ॥ त्वेषं दीप्तम् Sy.
२७. पूर्वोक्त एव पशौ 'विचक्रमे' इति वपाया अनुवाक्या । सूत्रितञ्च—'वि चक्रमे पृथिवीमेष एतां त्रिर्देवः पृथिवीमेष एताम्' (ĀSS. 3. 8.) इति Sy.
२८. विक्रान्तवान् Sy.
२९. पृथिवीम्—उपलक्षणमेतत् । पृथिव्यादींस्त्रींल्लोकान् Sy.
३०. ०रैः माक्रमन्तान् A. ०राक्रान्तान् is suggested for ०राक्रमन्तान् ।

वीम् । मनुष्याय[1] । दातुमिच्छन्[2] । स्थिताः[3] । अस्य[4] स्तोतारः । जना अयमेव स्तोतव्य इत्येकमनसस्तिष्ठन्ति सोऽयम् । शोभनजन्मा[5] । विस्तीर्णमन्निवासमसुरापनयनेन[6] । चकार[7][8] ।

**प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।**
**तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥ ५ ॥**

प्र[9] तत्ते । प्रशंसामि[10] । तत्[11] । ते[12] । अद्य[13] । शिपिविष्ट[14] ! नाम[15] । अर्यः स्तोमानामीश्वरो[16]

---

१. स्तुवते देवगणाय Sy.

२. असुरेभ्योऽपहृत्य दास्यन् Sy.

३. निश्चला भवन्ति । ऐहिकामुष्मिकयोर्लाभेन स्थिरा भवन्तीत्यर्थः Sy.

४. अस्य च विष्णोः Sy.

५. शोभनानि जनिमानि कीर्तनस्मरणादिना सुखहेतुभूतानि यस्य तादृशो विष्णुः Sy.

६. ०र्णनिवा० is suggested for ०र्णमन्निवा० ।

७. स्तोतृभ्यः करोति Sy.

८. VM. ignores विष्णुः ॥ देवो विष्णुः Sy.

९. तृतीयसवनेऽतिरात्रादूर्ध्वं सोमातिरेके सति नैमित्तिके होतुः शस्त्रे 'प्र तत्ते अद्य इति स्तोत्रियस्तृचः' (ĀSS 6. 7.) । अभ्युदयेष्टौ विष्णोः शिपिविष्टस्य 'प्र तत्ते अद्य' इति याज्या । सूत्रितञ्च—'वषट् ते विष्णवास आ कृणोमि प्र तत्ते अद्य शिपिविष्ट नाम' (ĀSS. 3. 13.) इति Sy.

१०. प्रकर्षेण स्तौमि Sy. प्रशंसामि । प्रशस्तगुणाभिधाय्येवेदं नाम न तु निन्दितं मन्तव्यम् । ....कोऽभिप्रायः ? एषोऽभिप्रायः, केचिदाहुः—शेप इव निर्वेष्टितः संयतरश्मिश्शिपिविष्ट इति । अन्ये तु ब्रुवते निर्विष्टशेपश्शिपिविष्ट इति । अपरे त्वाचक्षते—विवृत्तरश्मिश्शिपिविष्ट इति । नैतेषु त्रिष्वपि पक्षेषु, अनेन पदेन कश्चिद् गुणोऽभिधीयते, अपि तु निन्दैव । ततश्चानेन पदेन निर्वापादि क्रियमाणमुपालम्भमस्यावहेत् । अत इमं दोषमपनेतुमिदमुक्तमिति । तत्कथमिति चेत् ? उच्यते—नात्र शेपशब्दोऽस्ति न च केवलोऽपि विशिर्निरुपसृष्टस्यार्थमभिधातुमीष्टे । तस्माच्छिपयो रश्मयः, श्यतेश्शिपयस्तैक्ष्ण्यात् । तेषु प्रविष्टश्शिपिविष्ट इति प्रशंसापरमेतत् । अतोऽहमप्येतत् प्रशंसामीति BB. यदन्ये कुत्सितार्थीयं पश्यन्ति Dur. अनामन्त्रितत्वाच्चैकवाक्यभावाय यस्मात्तस्मादित्यध्याहारः कर्तव्यः यस्मादर्य ईश्वरस्त्वमसि तस्मात् प्रशंसामि SKN.

११. प्रसिद्धम् । विष्णुरिति प्रख्यातम् Sy.

१२. तव Sy.

१३. इदानीम् Sy.
अस्मिन् कर्मणि BB.

१४. हे रश्मिभिराविष्ट ! Sy. हे शिपिविष्ट ! विष्णो ! Dur. हे शिपिविष्टाख्य ! SKN.

१५. विष्णुरिति प्रख्यातं नाम Sy. शिपिविष्टेत्येवंरूपम् BB. तत्ते नामेति विस्फुटतरं प्रशंसानामत्वमिति Dur.

१६. स्वामी स्तुतीनां हविषां वा Sy. अज्ञस्त्वमिति न वक्तव्यमित्याह—अर्यः, अरणीयोऽहम् । 'अर्यः स्वामिवैश्ययोः' इति BB. यस्मादीश्वरः स्तुतीनामुदीरणे युष्मद्गुणाभिज्ञस्तस्मादहं प्रशंसामि तत्ते नाम । अथवा—अर्यस्त्वमसि । अर्य ईश्वरो मदनुग्रहाय समर्थस्तस्मात् प्रशंसामि Dur. ईश्वरोऽहं स्तोमानां करणे समर्थ इत्यर्थः । अथवा शिपिविष्टस्यैव तद्विशेषणमर्य इति SKN.

महीश्वरस्[1]त्वमस्तीति[2] वा । प्रज्ञानानि[3] । जानन्[4] । त्वाम्[5] । स्तौमि[6] । तवसम्[7] । अतव्यान्[8] तवस इति महतो नामधेयं भवति । निवसन्तम्[9] । अस्य[10] । लोकस्य[11] । पराकान्ते[12] दूरे देशे[13] ।

---

१. हविषामीश्वरः is suggested for महीश्वरः ।

२. त्वसस्तीति A. ०मसीति is suggested for ०मस्तीति ।

३. ज्ञातव्यान्यर्थजातानि Sy. युष्मद्विषयाणि प्रज्ञानानि Dur. प्रकाशरूपाणि कान्तिलक्षणानि ज्ञानानि वा सर्वार्थविषयाणि तावकीयानि SKN.

४. जानन्नहम् Sy. जानानः Dur.

५. त्वां विष्णुम् Sy. यस्त्वं सर्वगुणसम्पन्न ईश्वरस्तं त्वा त्वाम् Dur. तमिति तच्छ्रुतेर्यच्छब्दाध्याहारः । यतश्चैतन्नामासि तं त्वां सर्वावस्थम् SKN.

६. स्तौमि Sy. ईदृशमहं गृणामि स्तौमि BB. अहं....स्तौमि Dur.

७. स्तव० A. प्रवृद्धम् Sy. तन्नामानं तवसं तपस्विनं महान्तम् । 'तु' इति वृद्धिकर्मा । असुन्नन्तादुत्पन्नो मत्वर्थीयो लुप्यते । अत एव प्रत्ययान्तरसङ्क्रान्त्या तद्विषयत्वाभावादाद्युदात्तत्वाभावः BB. महान्तम् Dur., SKN.

८. सम अत is written twice in A. अवृद्धतरोऽहम् Sy. अतिशयेन तपस्वी तवीयान् ततोऽन्योऽतवीयान् । यद्यप्यहं विद्यामहिम्ना तवीयान्, तथापि त्वदपेक्षयाऽतवीयान् । तादृशोऽपि त्वत्प्रसादेन त्वां स्तौमीति । विन्मतोर्लुक्, तपस्विशब्दादीयसुन्प्रत्ययः । अत एवातिशय्यमानोऽपि तपस्वीति गम्यते । द्वयोर्हि तपस्विनोरन्यतरस्तपीयान् भवति BB. अमहानहम् । आत्मनिन्दया स्तूयते Dur. तवतेर्वृद्ध्यर्थस्य 'तुश्छन्दसि' (Pa. 5.3.59.) इति तृन्नन्तादीयसुनि 'तुरिष्ठेमेयस्सु' (Pa. 5. 4.154.) इति तृनो लोपेन तव्यानिति रूपम् । अतव्यानतिशयेनावर्धितः प्रज्ञया । अत्यन्तमहमल्पप्रज्ञ इत्यर्थः SKN.

९. निवसन्तं तथापि सर्वलोकप्रकाशकं त्वां स्तौमि । इदं तव शिपिविष्टत्वमतः प्रशंसामीति 'क्षि निवासगत्योः' व्यत्ययेन शप् BB.

१०. इदानीमुक्तं शिपिविष्टपदार्थं समर्थयितुमाह—अस्य BB. क्व वर्तमानं निवसन्तम् ? अस्य Dur.

११. अन्तरिक्षस्य BB. अन्तरिक्षलोकस्य Dur. सोमलोकस्य द्विसञ्ज्ञस्य SKN.

१२. दूरदेशे Sy. परागते दूरे प्रदेशे BB. पराक्रान्तिस्थाने दूराद् दूरतरे निवसन्तं स्तौमि Dur. षष्ठीश्रुतेरेकदेशमते पराके दूर इत्यर्थः । पराके दूर इत्यस्य निर्वचनं पराकान्ते गत इत्यर्थः SKN.

१३. VM. ignores तम् ।

तत्तेऽद्य शिपिविष्ट ! नामार्यः प्रशंसामि । अर्योऽहमस्मीश्वरः स्तोमानाम् । अर्यस्त्वमसीति वा । तं त्वा स्तौमि तवसमतव्यान् । तवस इति महतो नामधेयम् । उदितो भवति । निवसन्तमस्य रजसः । पराके पराकान्ते N. 5.9.; SKN. II. 326.

This stanza=TS. 2.2.12.5.

**किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि ।**
**मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ ६ ॥**

कि[1]मित्ते[2] । यास्कः—'शिपिविष्टो विष्णुरिति विष्णोर्धय[3]नामनी भवतः । कुत्सितार्थीयं पूर्वं[4] भवतीत्यौपमन्यवः[5] । किम्[6] । इत्[7] । ते । विष्णो[8] ! प्रख्यापनीयमेतत्[9] । भवत्यप्रख्यापनीयम्[10] । यन्नः[11] । प्रब्रूषे[12] । शेप इव निर्वेष्टितः[13] । अस्मीत्यप्रतिपन्नरश्मिः[14] ।

---

१. पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमं रूपान्तरं धारयन् सङ्ग्रामे वसिष्ठस्य साहाय्यं चकार तं जानन्नृषिरनया प्रत्याचष्टे । अत्र निरुक्तम्...Sy. वसिष्ठस्यैते आर्षे Dur. वसिष्ठस्य । परा च SKN.

२. ०क्ते A.

३. ०ष्णोर्द्वेना० is suggested for ०ष्णोर्धयना० ॥

४. पूर्वं A.

५. N. 5.7.

६. किंरूपस्त्वम् ? इति पृष्टः शिपिविष्टोऽस्मीत्युक्ते, अनन्तरं प्रक्रियते किमित् Dur. किं क्षेपे SKN.

७. इत् is not read in the Nirukta किमेतदेवैकं विगतरश्मिरूपम् Dur. इत् पदपूरणः SKN.

८. इदानीं तदेव परिसङ्ख्येयतया सम्भाव्यमानं दर्शयति—हे शिपिविष्ट BB.

९. N reads अप्रख्यातम् for प्रख्यापनीयम् गूहनीयं वर्जनीयमेव भूद् भवति नैवेतद् वर्जनीयम् । चक्षेश्छान्दसो यत् BB. परिख्यापनीयम् Dur. परीत्ययं प्रशब्दस्यार्थे, चक्षिङ् ख्यापनायाम्, प्रख्यापनीयमेतद्रूपम्....भवति । अश्लीलोपमायोगान्नैतत्प्रख्यापनीयमित्यभिप्रायः अथवा परिपूर्वः ख्यातिः । परि वर्जने अवक्षिप्तमवशीतमुक्तादेव कारणात् परिवर्जनीयमित्यर्थः SKN.

१०. ०त्या प्र० A. नान्यानि रूपाणि तव सन्ति Dur.

११. यन्न A. M. येनैवम् Dur. कतमद्रूपम् ? यत् SKN.

१२. शिपिविष्टोऽस्मीति यद् ववक्षे किमिदं तदेव परिचक्ष्यं भवति । नैतदेवम् । तस्माच्छिपिविष्टोऽस्मीति ब्रुवन्नेव विश्वव्यापी वर्तस्वेति । वक्तेर्व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति शपश्श्लुः BB. पुनःपुनर्ब्रूषे, अस्माकमग्रतः Dur. प्रशब्दो ववक्षे इत्यनेन सम्बध्यते ।... प्रब्रवीषि प्रदर्शयसीत्यर्थः । कस्मै ? सामर्थ्यादस्मदादिभ्यः SKN.

१३. सामर्थ्यादन्तर्णीतोपमानमेतत् । शिपिविष्ट इव यादृशः शेपो निर्वेष्टितस्तादृशः SKN.

१४. अप्रतिपन्नरश्मिर्हि सूर्य उदयकाले निर्वेष्टितः शेपस्वरूपो भवति । तस्य तद्रूपगुणयोगित्वमकुत्सितार्थमित्युपपद्यते Dur. अस्मीति, उदितमात्रादप्रतिपन्नरश्मिरस्यामवस्थायामारब्धतस्तां प्रतिपन्नः SKN.

अपि वा प्रशंसानामैवाभिप्रेतं[1] स्यात्—किम् । ते । विष्णो प्रख्यातमेतत् । भवति । प्रख्यापनीयम् । यदुत प्रब्रूषे । शिपिविष्टः । अस्मीति प्रतिपन्नरश्मिः, शिवयोऽत्र[2] रश्मय उच्यन्ते तैराविष्टो भवति । मा । वर्पः[3] । अस्मत्[4] । अपगूहः[5] । एतदित्[6] । वर्प इति न[7] रूपनाम[8] वृणोतीति[9] सतः । यत् । अन्यरूपः[10] । समिधे[11]

---

१. नामेवा० M. अपि वा. . .प्रशंसायुक्तगुणमेवैतन्नाम स्याच्छिपिविष्ट इति । आह कथम् ? इत्युच्यते, शिपयोऽत्रास्मिन्प्रशंसानामपक्षे रश्मय उच्यन्ते। स च सूर्यो मुहूर्त्तोदितस्तैः शिपिसंज्ञैर्बालरश्मिभिराविष्टो भवति तस्माच्छिपिविष्ट इत्युच्यते । एवमेतद् व्युत्पाद्यमानं प्रशंसानामैव भवति । नाश्लीलोपमासम्बद्धमित्यभिप्रायः । हे विष्णो ! किमेतदेवैकं रूपं तव परिचक्ष्यं प्रख्यापनीयमस्ति, यदेतदुदयकाले प्रतिपन्नमात्रेषु रश्मिषु नान्यानि रूपाणि प्रख्यापनीयानि सन्ति। 'यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः' प्रतिपन्नमात्रेषु रश्मिष्विति । विजानीमस्तवैतद्रूपद्वयम् Dur. आचार्यमतेन यदा तु शिपयो बालरश्मय उच्यन्ते तैराविष्ट इति एवमेतत् प्रशंसानामैवाभिप्रेतं स्यात् । तदप्येवं व्याख्येयम्—किं प्रश्ने । इदेवार्थे । मा वर्पो अस्मविति परस्ताद् रूपश्रुतेरिहाप्येतद्रूपमित्यध्याहार्यम् । तेनायमर्थः । किमेतदेव रूपं तव हे विष्णो ! अप्रख्यातमिव परिचक्ष्यं प्रख्यापनीयं भूद् भवति। युक्ततममुच्यते । उदयोत्तरकालभाविनी या अवस्था तस्यां वर्तमानो यत् तद् ब्रवीषि शिपिविष्टोऽस्मि, बालरश्मिभिराविष्टोऽस्मीत्यर्थः किमेतदेव रूपं ते ? नेत्युच्यते । अन्यदप्यस्ति रूपं तन्मापगूहेत्यादि समानं पूर्वेण। भाष्ये तु परिपूर्वश्चक्षिर्वर्जनार्थः। किमित् ते तव विष्णो ! अप्रख्यानं भवति । परिचक्ष्यं परिवर्जनीयम् । अश्लीलोपमायोगादप्रख्यापनीयं प्रब्रूम इति । प्रशंसानामत्वे तु किं ते विष्णो ! अप्रख्यातमेतद् भवति । अप्रख्यातमेवेत्यर्थः । परिचक्ष्यं भूत् प्रख्यापनीयं सद् यदुत प्रब्रूष इति वा पाठः SKN.

२. शिवयो० M. शिपयो० is suggested for शिवयो०

३. वर्पः A. इदानीं प्रशस्तगुणाभिधाय्येतन्नाम न परिसङ्ख्येयम्, अपि तु. . . . 'वर्प गतौ' असुन् प्रत्ययः लोके ख्यापयितव्यमिति दर्शयितुमाह—वर्पो वरितव्यमिदमुच्छ्रितं नाम BB. अतो ब्रूमः. . .मा एतद् वर्पो रूपम् Dur. वर्प इति रूपनाम. .तद्धि आश्रयमावृत्य तिष्ठति SKN.

४. अस्माकमग्रतः प्रख्यापय Dur. अस्माकमित्यर्थः SKN.

५. अवजूह A. मापगूहः नेदमस्माकं गूहनीयमपि तु लोके श्लाघमानेन त्वयाऽऽघोषणीयमेव. . . गूहतेश्छान्दसोऽङ्प्रत्ययः BB. किं तर्हि ? . . . संवृतं कुरुष्व Dur. 'गुहू संवरणे' मा संवरणं प्रकटय SKN.

६. एतत् is suggested for एतदित् ।। एतच्छिपिविष्टशब्दवाच्यमुपमेयं रूपम्। अथवा बालरश्मिसंयुक्तम् Dur. प्रख्यापयैतदित्यभिप्रायः SKN.

७. न is not read in the *Nirukta*.

८. रूपना M. ९. वृणोती० A.

१०. येनान्येन रूपेण Dur. युक्ततममुच्यते यदन्यरूप एव कोऽप्यत्यन्तदीप्तः SKN.

११. N. reads समिथे for समिधे ।। अथ यदि ब्रूया नापगूहामिति, मृषैतत्, यस्मात् त्वं समिथे सङ्ग्रामे उदयकाले रक्षोभिस्सह तव यस्सङ्ग्रामस्तत्र BB. सङ्ग्रामे । केन सह ? सामर्थ्यात् तमोभिः SKN.

सङ्ग्रामे । भवसि[1] संयतरश्मिः[2]' इति ।

औपमन्यवपक्षेऽयमर्थः[3]—प्रच्छन्नरूपः[4] सन् युद्धे वसिष्ठस्य विष्णुः साहाय्यमकरोत् तं[5] वसिष्ठः प्रच्छन्नरूपमाह किमित्त[6] इति । यद्यपि त्वम् । परित्यक्तरश्मि[7] प्रच्छादनार्थमिह वर्तमानः । प्रब्रवीषि । शेप इवाऽहं वेष्टितः । अस्मीति न तत्तव व्रीळमावहति[8] महतस्तथा सति । मा । वर्पः[9] । अस्मत्[10] । अपगूहनाय[11] । तन् । यत्[12] त्वमिदमस्मिन् [ सङ्ग्रामे । अन्यरूपः[13] । भवसीति[14] [15] ।

---

१. अन्यरूपो बभूव भवसि न मध्याह्न एव महातेजा भवसि । तन्नूनं लज्जया शत्रुजनसमवाये उदयकाल एतदात्मीयं रूपं छादयसीति संलक्ष्यते । तस्मान्नैवमिदं गूहनीयमिति । 'बभूथात तन्थ' इतीडभावो निपात्यते BB. तदेव नो माध्यन्दिनं रूपमनेकरश्मिविकचं प्रकाशयस्वेत्यभिप्रायः । तद्धि, अनाधृष्यं सङ्ग्रामेषु भवति Dur. भवति मध्यन्दिनसमय एवमित्ययमौपमन्यवो मन्यते SKN.

२. संयित० A. सम्बद्धानेकरश्मिजालः Dur. संयतरूपो भवसीति द्रष्टव्यम् । सङ्गृहीतरश्मिर्वा । उपात्तरश्मिभिराविष्टः । कोमलमयूखादिभिरुदयोत्तरकालभाविन्यामवस्थायां वर्तमानस्य यत् कुत्सितार्थीयमिव दृश्यते SKN.

३. ०र्थ A. M. ४. प्रयच्छ० A. M.

५. त्वं वसिष्ठं A. M.

६. ०त्तमिति A. ०त्थमिति M.

७. ०श्मिः प्र० is suggested for ०श्मि प्र० ।

८. व्रीडामा० is suggested for व्रीळमा० ।

९. ववो A. अत उक्तरूपविलक्षणं यद्वैष्णवरूपमस्त्येतद्वर्पो रूपम् Sy.

१०. अस्माकम् Sy.

११. ०हना A. अपगूढं संवृतं (मा) कुरु । 'गुहू संवरणे' अपि तु तदेव रूपं प्रकटय Sy.

१२. वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत् ? यद्यस्मात् Sy.

१३. रूपान्तरमेव धारयन् Sy.

१४. अस्माकं सहायो भवसि तस्मादिदं गूहनं न कार्यमिति Sy.

१५. Sy. explains the first two verses of the stanza in the sense of contempt as follows:—तत्र कुत्सितार्थपक्षे योजना। हे विष्णो ! ते तव तन्नाम किं परिचक्ष्यं प्रख्यापनीयं भूद् भवति किंशब्दः क्षेपे, अप्रख्यापनीयमेव तद्भवति । यन्नामास्मभ्यं प्रववक्षे प्रब्रूये शिपिविष्टोऽस्मीति । अन्तर्णीतोपमानमेतत् । शेप इव । निर्वेष्टितस्तेजसानाच्छादितो भवामीति । तदश्लीलत्वादिदं नाम न प्रशस्तमित्यर्थः । तन्नाम किं परिचक्ष्यं वर्जनीयं परित्याज्यम्, विरुद्धार्थप्रतिपादकत्वात् स्वत एव परित्यक्तं हि तत् । शिष्टं समानं हि पूर्वेण । अन्य आहुः—उक्तं शिपिविष्टोऽस्मीति नेदं परिसङ्ख्येयमिति । अथापि यस्त्वं लज्जयेव समिथे सङ्ग्राम उदयकालेऽन्यरूपो भवसि, इदमेव वर्पः प्रशस्ततरं रूपं तस्मादेतं मापगूहः सर्वावस्थास्वपीदमेव रूपं तव भवत्विदमेव शोभनमिति । अत्र निरुक्तादिषु बहुधा व्याख्यानानि कृतानि, अत्र युक्तरूपमिवमस्माभिरुक्तम् BB. This stanza=TS. 2.2.12.5.

प्रशंसानामपक्षे[1] तु—मानुषे युद्धे समागतस्य स्वरूपप्रच्छादनार्थमात्मीयं तेजोऽपगूहितुमिच्छतो विष्णोरनुशासनम्—किमित्त इति ।

**वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।**
**वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥**

[ वषट् ते[2] ]

व्याकरोत् षष्ठमध्यायं पञ्चमस्याष्टकस्य सः ।
भरतस्य कुले जातो माधवो वेङ्कटात्मजः ॥

---

# [अथ पञ्चमाष्टके सप्तमोऽध्यायः][3]

'तिस्रो वाचोऽ[4]धुनाध्यायं व्याचिख्यासति माधवः ।
ऋषौ[5] चार्षे च वक्तव्यं प्रागनुक्तं प्रदर्शयन्[6] ॥१॥
मनुष्यत्वे मन्त्रकृत ऋषयः परिकीर्तिताः ।
आर्षेयवरणं येषां[7] तथा च ब्राह्मणं शृणु ॥२॥

---

१. Sy. explains this stanza in the sense of praise as follows:—हे विष्णो ! ते तव तन्नाम किं परिचक्ष्यं भूत् । किं प्रख्यापनीयं भवति ? न प्रख्यापनीयम् । किं तन्नाम ? शिपिविष्टो रश्मिभिराविष्टोऽस्मीति यन्नाम प्रब्रूषे । यत एवंप्रख्यातरूपस्त्वमतोऽस्माकमेतद्वैष्णवं रूपं संवृतं मा कार्षीः । इदानीं गूढरूपोऽपि यद्यस्मात्त्वं समिथे सङ्ग्रामेऽन्यरूपः कृत्रिमरूपं यदन्यद्वैष्णवं रूपं शौर्यादिलक्षणं तादृग्रूप एव बभूथ भवसि तस्मात्त्वं गूढोऽपि ज्ञायस एवेति व्यर्थमेव तस्य रूपस्य गूहनम् । अतो बहुतेजस्कं यद्वैष्णवं रूपं तदस्माकं प्रदर्शयेति तात्पर्यार्थः ।

२. The *pratīka* is supplied by the Editor. The stanza has already been explained. See VII. 99. 7. Sy. explains it again in the following manner:—
व्याख्यातेयम् । अक्षरार्थस्तु—हे विष्णो ! तुभ्यमास्यादास्येन वषट्करोमि । वषट्कृतं तन्मदीयं हविर्हे शिपिविष्ट ! सेवस्व । शोभनस्तुतिरूपा मदीया वाचश्च त्वां वर्धयन्त्विति । शिष्टः पादः सिद्धः ।

३. supplied by the Editor

४. ०चो मधु० A. 'तिस्रो वाचः प्र वद' RV VII. 101. 1

५. ०षिवा० A. ०षिर्वा० M. The reading is adopted from R.

६. ०यत् A. The hemistich is written twice in A.

७. तेषां R.

'न देवैर्न मनुष्यैरार्षेयं वृणीत[1] ऋषिभिरेवार्षेयं वृणीत' इति[2] ।
न मन्त्रदर्शनात् पूर्वमृषित्वं प्रत्यपद्यत ।
श्यावाश्व इत्यवोचाम[3] पञ्चमे मण्डले वयम् ॥३॥
तेषामृषीणां ज्ञातव्यं गोत्रमित्याह शौनकः ।
देवा देव्योऽप्सरो[4] नद्यो गन्धर्वाश्च स्वयम्भुवः[5] ॥४॥
कार्याण्युद्दिश्य[6] जायन्ते यदि देवादयोऽपि च ।
मानुषेषु कुलेष्वंशैर्गोत्रं[7] ज्ञेयमिति स्थितिः ॥५॥
विपाट्छुतुद्र्योरिन्द्रस्य[8] मरुतामदितेस्तथा[9] ।
नोवाच[10] शौनको[11] गोत्रमिति तत्र निदर्शनम् ॥६॥
इच्छन्निन्द्रसमं पुत्रमभ्यधादङ्गिरा[12] ऋषिः ।
अभूदिन्द्रः[13] स्वयं[14] तस्य[15] तनयः सव्यनामकः ॥७॥
इच्छन्निन्द्रसमं पुत्रं चचार कुशिकः पुरा ।
ऐषीरथिर्ब्रह्मचर्यं[16] गाधिनोऽस्य[17] सुतोऽभवत् ॥८॥

---

१. ०तं A.
२. ĀP. ŚS. 24. 5. 3.
३. ०वौं० A. Cf. VM.'s commentary on RV. V. 61.1. and also DDN's commentary on the same stanza 'तदाभवदृषिः सूक्तद्रष्टा श्यावाश्वनामकः'
४. देव्यो परो A. M. The reading is adopted from R.
५. ०वा A.
६. रार्या० A. रायां निर्दिश्य M. The reading is adopted from R.
७. ०शैः गो० A.
८. द्विपाश्नुतुद्यो० A. M.
९. ०मन्दिते० A.
१०. प्रोवाच is suggested for नोवाच ।
११. ०के M.
१२. ०धा अंगि० A.
१३. अपो दि० A. M. Cf. BD. III. 115 स्वयमिन्द्रसमं पुत्रमिच्छतोऽङ्गिरसो मुनेः । वज्र्येव सव्यो भूत्वर्षेर्योगित्वात्पुत्रतां गतः ॥
१४. ०न्द्रस्य स्वयं A.
१५. तस्य omitted in A.
१६. ०थी ब्र० A. M.
१७. गाथीन्द्रो० M. गाथीन्द्रोऽ० A. Cf. KSA. 16. p. 14. कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार तस्येन्द्र एव गाथी पुत्रो जज्ञे गाथिनो विश्वामित्रः । स तृतीयं मण्डलमपश्यत् and also Cf. ṣaḍvedārthadīpikā p. 104.

ज्ञातव्यमनयोर्गोत्रं[1] विद्यमानमिति स्थितिः ।
नामार्षयोस्तु[2] विज्ञानं कार्यं सर्वत्र पण्डितैः ॥९॥
ऋषिः शाक्त्यो[3] गौरिवीतिरत्रीणां[4] मण्डले कथम् ।
आजगाम परित्यज्य वासिष्ठं मण्डलं[5] स्वकम् ॥१०॥
'समिद्धो अग्निर्दिवीति'[6] विश्ववारार्षमुच्यते ।
तस्याः पतिर्गौरिवीतिरपश्यत्[7] सूक्तमुत्तरम् ॥११॥
'सञ्जास्पत्यमिति'[8] ब्रूते विश्ववारा ततो वयम् ।
मन्यामहे पतिं[9] तस्या[10] गौरिवीतिमिहागतम् ॥१२॥
मध्येऽत्रीणामाङ्गिरसो धरुणो नाम कश्चन ।
सूक्तं 'प्र वेधसे'[11] इति प्रसङ्गाद्[12] दृष्टवानृषिः ॥१३॥
तेनाभिषज्य[13] सूक्तेन धरुणोऽत्रिमृषिं[14] पुरा ।
तथैव तत्रात्रिमत्सपरिति[15] सूक्तान्ततः[16] श्रुतम् ॥१४॥
वर्तमाना मातृकुले तत्रत्यैर्ऋषिभिः सह ।
तादृशा[17] ददृशुर्मन्त्रानिति[18] केचिदव स्थिताः ॥१५॥

---

१. ज्ञातमनयोः A.
२. ना चीतिरपश्यत्...मार्षं० A.
३. ऋषिशक्त्योः M. शक्त्यो A.
४. ०रिचीरिरत्री० A,M. RV. V. 29.
५. मण्डलं is omitted in A.
६. RV. V. 28.1. ०दिति A. दिवीति is missing in M.
७. ०रि चीति० A. M. The reading is adopted from R.
८. RV. V. 28.3.
९. पतितं A.
१०. तस्य M.
११. RV. V.15.1.
१२. ०गा दुष्ट० A.
१३. ०षिज्य A. ०षज्यत् R.
१४. वरुणोऽत्रि मुषिं A. वरुणो० M. The reading is adopted from R.
१५. ०मत्सरि० A., M. RV. V.15.5
१६. सूक्तं तता A. सूक्तं तथा M.
१७. ०शान् R.
१८. ०दिति A.

समानोदक[1]सामान्याच्छ्यावाश्वः कण्वमण्डले ।
'अग्निनेन्द्रेण[2] सूक्तानि* ददर्श पुनरागतः ॥१६॥
ऊह्यानि[3] कारणान्येवं[4] मण्डलान्तरसङ्क्रमे ।
अन्येषामपि दृष्टानामिति वृद्धेभ्य आगमः ॥१७॥
ऋषयो बह्वृचै[5]रित्थं स्मर्यन्ते सामगै[6]रपि ।
स्मरन्त्यध्वर्यवे[7] नैवं[8] तत्र किं कारणं भवेत्[9] ॥१८॥
प्रजापतिश्च सोमश्च तृतीयोऽग्निस्तथैव च ।
विश्वे देवाः स्वयम्भूश्च तेषां काण्डर्षयो मताः[10] ॥१९॥
यजुष्यृचश्च[11] बहुभिर्दृष्टा[12] ह्येतै[13]र्महर्षिभिः ।
काण्डान्यकुर्वन्नृषयः[14] स्मर्यन्तेऽध्वर्युभिश्च ते ॥२०॥
पठन्त्यवान्तरा[15]नादौ ब्राह्मणानां कथाः[16] पुनः ।
ऋषीन् व्याख्यानभूतानामनेकान् यजुषामपि ॥२१॥
काण्डर्षि[17]स्मरणादेव भवत्यभ्युदयस्तथा[18] ।
स्मरन्त्यवान्तराग्नैत इति वृद्धेभ्य आगमः ॥२२॥
ब्राह्मणान्नामधेयाच्च[19] शाखास्वन्यास्वपि द्विजाः ।
तानेवर्षीन्[20] विजानन्ति य ऋग्वेदे व्यवस्थिताः ॥२३॥

---

१. ०दर्कसा० M. २. RV. VIII. 35:1.
*RV. VIII. 35-38
३. औह्यानि A. M.
४. ०न्येव A. ५. ०चे० A.
६. सागमेर० A. सागमैर० M.
७. ०न्तध्वर्यत्रे A. ०न्त्याध्वर्यवे: R. ०न्त्यध्वर्यव: is suggested for ०न्त्यध्वर्यत्रे ।
८. नैव M. ९. वदेत् R. १०. विदुः R.
११. यजूष्टृ च० A. यजुष्टृच M.
१२. द्रष्टा A.
१३. नेते मह० A., M. सन्ति मह० R.
१४. नृषयः स्मर्युः स्तेऽध्व० A. काण्वान्यकर्मन्नृ० M.
१५. पठश्यवा० A., M. १६. कठाः R.
१७. काण्वर्षि० A., M. १८. ततः M., R.
१९. ०याश्च A., M.
२०. तनेर्षीन् A., M.

साम्नां रथन्तरादीनां भिन्नैवात्यन्तमाकृतिः[1] ।
ताण्डक शाटचायनके[2] भिद्यन्त ऋषयो न तु ॥२४॥
भरद्वाजोऽकामयत वसिष्ठोऽकामयतेति ।
उभयत्रार्थवादानां[3] पश्यामो ह्येकरूपताम्[4] ॥२५॥

अध्वर्यूणां[5] ब्राह्मणानि—'कृणुष्व पाजः'* इत्यत्र वामदेवस्यर्चो[6] याज्यानुवाक्या[7] भवन्तीत्युक्तम्[7] । 'दिवस्परि प्रथमम्'† इत्यत्रैतेन वै[8] वत्सप्रीर्भालन्दन[9] इत्युक्तम् । 'अयं सो अग्निः'[10] इति विश्वामित्रस्य सूक्तं भवतीत्युक्तम् । ऋषेर्ऋषेर्वा एता निर्मिता[11] यत् सामिधेन्य इत्युक्तम् ।

एवमैक्ये रूपभेदः पाठभेदश्च किङ्कृतः ।
साम्नामृचां च विविधः कथयन्त्यत्र वैदिकाः ॥२६॥
भूयोभूयस्तपस्तप्त्वा वेदान्नानाविधानिति[12] ।
ऋषयो ददृशुः[13] पूर्वे तं तमर्थमभीप्सवः ॥२७॥
यजुष्वृक्षु च वैरूप्ये[14] रूपस्वरकृते बुधाः ।
अर्थद्वैरूप्यमपि च कारणं प्रतिजानते ॥२८॥
ऋग् 'विश्वो[15] देवस्य नेतुः[16]' भवेत् तत्र निदर्शनम् ।
विश्वे बहुवचनान्तं पठन्त्यध्वर्यवः[17] पदम् ॥२९॥इति॥

---

१. भिन्नेहत्य० A., M.
२. ०टचार्यन० A.
३. ०र्थपादा० A.
४. ह्यक० A.
५. ०र्यूणान् ब्रा० R.
*RV. 4.4.1.
६. स्य चो A.
७. ०क्य० A. ०वती० M.
†RV. 10.45.1.
८. वै is omittd in A.
९. यत् स प्रीर्हाल० A.
१०. अयसो A. RV. III. 22.1
११. निमिता A.
१२. विदान्ताना० A. वेदान्ताना० M.
१३. दंदृशुं A.
१४. ०रूपे A.
१५. ऋग्वि (त्वि) श्चो A.
ऋग्विदो M.
१६. देवस्य गेतुं० A. देव्यस्य हेतु० M. RV. V. 50.1
१७. पठत्यध्वर्यव A. पठन्त्याध्व० R. TS. 2.2.1

VII. 101.

तिस्रो वाचः प्र वंद ज्योतिरग्रा या एतद्दुह्रे मधुदोघमूधः ।
स वत्सं कृण्वन्गर्भमोषधीनां सद्यो जातो वृषभो रोरवीति ॥ १ ॥

तिस्रो[1] वाचः । आग्नेयः[2] कुमारो नाम सूक्तयोर्वसिष्ठ[3] एव वा वृष्टिकामः ॥ तिस्रः[4] । वाचः[5] प्रवद[6] । विद्यन्मुखास्तस्यैते[7] वषट्कारा यत्[8] स्तनयति यद्[9] विद्योतति ततो यदवस्फूर्जते[10] यद्वातो[11] वायतीति ब्राह्मणम् । याः[12] । एत[13] । दुहते[14] । मधुक्षारि[15] । मेघस्योधः[16] यः । सः[17] । आत्मीयं वत्समुदतम्[18] । औषधीनाम्[19] । गर्भम् । कृण्वन्[20] अपि[21] वाग्निर्वत्सः पर्जन्यस्य तमोषधीनां गर्भं कृण्वन् । सद्यः[22] । जातः[23] । वृषभः[24] । शब्दायते[25] ।

---

१. अथ सप्तमो व्याख्यास्यते । सप्तममण्डलस्य षष्ठेऽनुवाके, एकादश सूक्तानि व्याख्यातानि । 'तिस्रो वाचः' इति षडृचं द्वादशं सूक्तम् ॥ अत्रानुक्रम्यते—'तिस्रः षट् पार्जन्यं तु'(KSA. 39. 101. p 27.)इति । 'एते कुमार आग्नेयोऽपश्यद्वसिष्ठ एव वा' (KSA. 39. 101. p. 27.) इति । वक्ष्यमाणत्वादग्निपुत्रः कुमार ऋषिर्वसिष्ठो वा । अनुक्तत्वात्त्रिष्टुप् । इदमुत्तरं च पर्जन्यदेवत्यम् ।

अत्र शौनकः—

आस्यद घ्नं विगाह्यापः प्राङ्मुखः प्रयतः शुचिः ।
सूक्ताभ्यां तिस्र आदिभ्यामुपतिष्ठेत भास्करम् ॥
अनश्नतैतज्जप्तव्यं वृष्टिकामेन यत्नतः ।
पञ्चरात्रेऽप्यतिक्रान्ते महतीं वृष्टिमाप्नुयात् ॥

(Rgvidh. 2. 30.) . . . ऋषिरात्मानं स्तुतौ प्रेरयति Sy.

२. आग्नेय A. (Cf. KSA. 39. 102. p.27)

३. सूक्तं यो M. ४. हे ऋषे ! त्रिविधाः Sy.

५. वाच A. ऋग्यजुस्सामात्मिकाः स्तुतिरूपाः Sy.

६. प्रावद M. प्रब्रूहि । यद्वा वदेति व्यत्ययेन मध्यमः । तिस्र इति द्रुतविलम्बितमध्यमभेदेन त्रिविधा ज्योतिरग्रा विद्युत्प्रमुखा वाचः प्रवदेतेति । या गर्जितलक्षणा वाचो वृष्टिप्रदमेतं मेघं दुह्रे उदकानि दुहन्ति Sy.

७. द्यमु॰ A. विद्युन्मु॰ is suggested for विद्यन्मु॰ ज्योतिर्द्योतिमानः प्रणवोऽग्रे प्रमुखो यासां तादृशीः Sy.

८. यय A. ९. व्यद् M.

१०. ॰दः प्रस्पूर्ज॰ M. ११. यद्वौतो A.

१२. या is missing in M.

१३. एतत् is suggested for एत ॥ नभसि दृश्यमानम् Sy.

१४. दुहेर्लटि 'लोपस्त आत्मनेपदेषु' इति तलोपः । बाहुलको रुट् । स्तोत्रैः प्रीतो हि पर्जन्यो मेघैर्वर्षयति । अतो वाच एव दुहन्तीत्युपचर्यते Sy.

१५. मधुन उदकस्य दोहकं वृष्ट्युदकस्य कर्तारम् Sy.

१६. ऊयः A. ऊधः यः M. यः seems to be redundant. उद्धृतं मेघम् । यद्वा लुप्तोपममेतत् । ऊध इव पयस आश्रयभूतं मेघम् Sy.

१७. एवम्भूतः स पर्जन्यः Sy.

१८. ॰दकम् is suggested for ॰दतम् ॥ सह निवसन्तं वैद्युताग्निम् Sy.

१९. ओष॰ is suggested for औष॰ ॥ व्रीह्यादीनाम् Sy. २०. प्रादुष्कुर्वन् Sy.

२१. ॰न्नप वा॰ M. २२. शीघ्रम् Sy.

२३. प्रादुर्भूतः Sy. २४. वर्षिता Sy.

२५. भृशं शब्दायते Sy.

यो वर्धन ओषधीनां यो अपां यो विश्वस्य जगतो देव ईशे ।
स त्रिधातु शरणं शर्म यंसत्त्रिवर्तु ज्योतिः स्वभिष्टयस्मे ॥ २ ॥

यो वर्ध : । यः[1] । ओषधीनाम् । अपां[2] च । वर्धनः[3] । यश्च । विश्वस्य[4] । जगतः[5] । ईष्टे[6] । सः । त्रिबन्धनम्[7] । गृहं च । सुखं च । यच्छतु[8] । त्रिवर्तु[9] च । ज्योतिः[10] । स्वभ्येषणम्[11] । अस्मभ्यं प्रयच्छतु, त्रिवर्तनं भवत्यादित्याज्ज्योतिर्वा[12] 'वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे'[13] त्रिप्रकारं[14] तप्यमानमिति[15] ।[16]

स्तरीरु त्वद्भवति सूतं उ त्वद्यथावशं तन्वं चक्र एषः ।
पितुः पयः प्रति गृभ्णाति माता तेन पिता वर्धते तेन पुत्रः ॥ ३ ॥

स्तरीरु[17] त्वत् । तृवृत्तप्रसवम्[18] । एकम्[19] । भवति[20] । सूतं[21] । अन्यत्[19] । यथाकामम् । आत्मीयं शरीरमुभयोः[22] । करोति । एष देवः पर्जन्यो दिवि च पृथिव्यां चात्मीयमुदकं विस्तारयति तत्र पृथिव्यौषधीं[23] जनय-

---

१. ये ओष० A. पर्जन्यः Sy.

२. उदकानाम् Sy.

३. वर्धयिता Sy.

४. सर्वस्य Sy.

५. कर्मणि शेषत्वेन विवक्षिते षष्ठी Sy.

६. 'लोपस्त आत्मनेपदेषु' इति तलोपः 'अधीगर्थ०' (Pa. 2. 3. 52.) इति । अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः Sy.

७. त्रिभूमिकम् Sy.

८. अस्मभ्यं ददात्वित्यर्थः । प्रमेर्लेटचडागमः 'सिब्बहुलम्' इति सिप् । 'इतश्च लोपः' इतीकारलोपः Sy.

९. त्रिष्वृतुष्वतिशयेन वर्तमानम् Sy.

१०. तेजः Sy.

११. अभ्येषणम् M.

१२. ०त्यं ज्यो० A.

१३. TS. 2. 1. 2. 5.

१४. तिप्रकारं तप्यम्नामिति A.

१५. The passage त्रिवर्तनम्...तप्यमानम् should immediately follow त्रिवर्तु च and precede ज्योतिः ।

१६. VM. ignores देवः ॥ देवः द्योतमानः Sy.

१७. ०रू त्वं A.

१८. त्रिवृतः M. निवृ० is suggested for तृवृ० ॥ स्तरीर्निवृत्तप्रसवा गौः सा यथा न दोग्ध्री तद्वद्वर्षुकं न भवति Sy.

१९. त्वदिति तकारान्तोऽन्यशब्दपर्यायोऽनुदात्तः सर्वनामसु पठितः । अस्य पर्जन्यस्य त्वद् अन्यद्रूपम् Sy.

२०. ०ती A.

२१. धेनुवत्प्रसूते । उदकानि प्रवर्षति Sy.

२२. स्तरीत्वेन धेनुत्वेन च Sy.

२३. ०व्योषधीर्ज० is suggested for ०व्यौषधीं ज०

तीत्यर्थः । पितुः[1] । पयः[2] । प्रतिगृह्णाति[3] । माता द्युलोकात् पृथिव्युदकम् । तेनोदकेन । पिता[4] च । वर्धते । पुत्रश्चायं[5] लोकः पितृप्रदानं[6] हि देवाश्चोपजीवन्ति[7] [8] ।

**यस्मिन्विश्वानि भुवनानि तस्थुस्तिस्रो द्यावस्त्रेधा सस्रुरापः ।**
**त्रयः कोशास उपसेचनासो मध्वः श्चोतन्त्यभितो विरप्शम् ॥ ४ ॥**

प्रस्मिन्[9] । यस्मिन्[10] । विश्वानि[11] । भूतानि[12] । तिष्ठन्ति[13] । त्रयश्च । लोकाः[14] । यस्माच्च त्रेधा[15] । स्रवन्ति[16] । आप आज्यौषधिसोमरूपाः[17] [18] । त्रयः[19] । कोशा[20] अग्निवायुसूर्याख्याः[21] । पर्जन्यस्योपसेचनाः[22] । उदकानि[23] । क्षरन्ति[24] । परितः । महान्तं पर्जन्यम् ।

**इदं वचः पर्जन्याय स्वराजे हृदो अस्त्वन्तरं तज्जुजोषत् ।**
**मयोभुवो वृष्टयः सन्त्वस्मे सुपिप्पला ओषधीर्देवगोपाः ॥ ५ ॥**

इदं वचः । इदम् । वचः[25] । पर्जन्याय[26] । स्वराजे[27] । हृदयस्य[28] । अन्तरङ्गम्[29] । अस्तु[30] । तत्[31] । स

---

१. दिवः सकाशात् Sy.
२. वृष्ट्युदकम् Sy.
३. 'हृग्रहोर्भः' इति भत्वम् Sy.
४. प्रतिगृहीतेन तेन हविरात्मना परिणतेन पिता द्युलोकः Sy.
५. तेनैवोदकेन पुत्रः पृथिव्यां भवः प्राणिसङ्घोऽपि वर्धते Sy.
६. पितप्र० M.
७. The passage beginning with विस्तारयति and ending with देवाश्चोप is missing in A.
८. VM ignores उ twice ॥ उ इति पूरकः । द्वितीय उशब्दश्चार्थे Sy.
९. यस्मिन् is missing in A.
१०. पर्जन्ये Sy.
११. सर्वाणि Sy.
१२. भूतजातानि Sy.
१३. यदधीनवृत्तीनि भवन्तीत्यर्थः Sy.
१४. यस्मिंश्च द्युप्रभृतयो लोका अवतिष्ठन्ते Sy.
१५. प्राच्यः प्रतीच्योऽवाच्यश्च सत्यः Sy.
१६. ०वति A. निर्गच्छन्ति Sy.
१७. आज्योष० A.
१८. ०रूपः M.
१९. पौरस्त्यः प्रतीच उदीच्यश्चेति त्रिप्रकाराः Sy.
२०. मेघाः Sy.
२१. अग्निः वायुः सू० A.
२२. उपसेक्तारः Sy.
२३. मध्वः-कर्मणि षष्ठी । मधु उदकम् Sy.
२४. क्षारयन्ति । वर्षन्ति Sy.
२५. वचनं स्तोत्रम् Sy.
२६. अय० A. पर्जन्याय क्रियते Sy.
२७. ०जो A. स्वायत्तदीप्तये Sy.
२८. तदीयस्य हृदयस्य Sy.
२९. अन्तर्गतम् Sy.
३०. अस्त A.
३१. स्तोत्रम् Sy.

सेवताम्[1]। सुखस्य[2] भावयित्र्यः। वृष्टयः[3]। अस्मासु[4]। सुबला[5]। ज्यौषध्यः[6]। देवेन पर्जन्येन गुप्ताः[7]।[8]

**स रेतोधा वृषभः शश्वतीनां तस्मिन्नात्मा जगतस्तस्थुषश्च।**
**तन्मं ऋतं पातु शतशारदाय यूयं पात स्वस्तिभिः सदा नः॥ ६॥**

स रेतोधाः। पर्जन्यः। रेतसो[9] निधाता। वर्षिता[10] च। बह्वीनामपाम्[11]। तस्मिन्[12]। आत्मा[13]। जङ्गमस्य। स्थावरस्य[14]। च यद्वा बह्वीनामोषधीनां[15] पर्जन्यः। तत्[16]। उदकम्[17]। अस्मान्[18]। रक्षतु। शतशरदाय[19] जीविताय।

## VII. 102.

**पर्जन्याय प्र गायत दिवस्पुत्राय मीळ्हुषे। स नो यवसमिच्छतु॥ १॥**

पर्जन्याय[20]। पर्जन्याय। प्रगायत[21]। अन्तरिक्षे[22]। प्रादुर्भूताय[23]। सेक्त्रे। सः[24]। अस्माकम्[25]। यवसम्[26]। इच्छतु[27]।

---

१. जुजोषत्—'जुषी प्रीतिसेवनयोः' लेट्यडागमश्छान्दसः। शपः श्लुः Sy.
२. सख० A.
३. वष्ट० A.
४. अस्माकम् Sy.
५. लभला A. सुफलाः is suggested for ०बला M. सुफला अस्माकं भवन्तु Sy.
६. ज्योष० A. आज्यौष० is suggested for ज्यौष० ॥ ओषधयश्च Sy.
७. तथा देवः पर्जन्यो गोपायिता रक्षिता यासां तथाविधाः Sy.
८. VM. ignores सन्तु ॥ त्वत्प्रसादात् सन्तु भवन्तु Sy.
९. उदकस्य बीजभूतस्य धाता विनिधाता भवति Sy.
१०. वृषभ इत्युपमा। यथा कश्चिद्वृषभो बह्वीनां गवां गर्भस्याधाता भवति तद्वत् Sy.
११. ओषधीनाम् Sy.
१२. पर्जन्ये Sy.
१३. देहो वर्तते Sy.
१४. र is missing in A.
१५. ०नामौष० A.
१६. तत्पर्जन्येन दत्तम् Sy.
१७. उकम् Sy.
१८. माम्। मा शब्दस्य 'ऋत्यकः' इति प्रकृतिभावो ह्रस्वत्वं च। अन्यद्गतम् Sy.
१९. शतसंवत्सरजीवनार्थम् Sy.
२०. 'पर्जन्याय' इति तृचं त्रयोदशं सूक्तं गायत्रम्। पूर्ववदृषिदेवते। तथा चानुक्रान्तम्—'पर्जन्याय तृचं गायत्रम्' (KSA. 39. 102. p. 27. adds after it: एते कुमार आग्नेयोऽपश्यद्वसिष्ठ एव वा वृष्टिकामः इति।) वैश्वानरपार्जन्यायामन्वारम्भणीयायां पर्जन्यस्य चरोः 'पर्जन्याय' इत्यनुवाक्या। सूत्र्यते हि—'पर्जन्याय प्र गायत प्र वाता वान्ति पतयन्ति विद्युतः' (ĀSS 2. 15.) इति Sy.
२१. हे स्तोतारः!...प्रकर्षेण स्तोत्रमुच्चारयत Sy.
२२. अन्तरिक्षस्य Sy.
२३. पुत्राय, तत्र हि पर्जन्यः प्रादुर्भवति Sy.
२४. तादृशः पर्जन्यः Sy.
२५. अस्मभ्यम् Sy.
२६. यचस A. ओषध्यादिलक्षणमन्नम् Sy.
२७. गच्छतु A.M. दातुमिच्छतु Sy.

योग॒र्भमोष॑धीनां॒ गवां॑ कृ॒णोत्यर्व॑ताम् । प॒र्जन्यः॑ पुरु॒षीणा॑म् ॥ २ ॥

उत्तरे निगदसिद्धे[1]—

[ यो गर्भम्[2] ]

तस्मा॑ इ॒दास्ये॑ ह॒विर्जु॑होता॒ मधु॑मत्तमम् । इळां॑ नः सं॒यतं॑ करत् ॥ ३ ॥

[ तस्मा इत[3] ] । . . . . अन्नम्[4] । सम्यग्गतम्[5] । करोत्विति[6] ।

## VII. 103.

सं॒व॒त्स॒रं श॑शया॒ना ब्रा॑ह्म॒णा व्र॑तचा॒रिणः॑ ।
वाचं॑ प॒र्जन्य॑जिन्वितां॒ प्र म॒ण्डूका॑ अवादिषुः ॥ १ ॥

संवत्सरम्[7] । संवत्सरम्[8] । शिश्यानाः[9] । ब्राह्मणाः[10] । व्रतचारिणोऽनश्नन्तः[11] वाचम्[12] । पर्जन्यप्रीताम्[13] ।

---

१. As VM. does not explain the stanzas VII. 10.2—3 and a few words of his commentary on this stanza are preserved, the reading should be उत्तरा निगदसिद्धा

२. The *Pratīka* is supplied by the Editor. This stanza is not explained by VM. Sy. explains it in the following manner:— यः पर्जन्य ओषधीनां व्रीह्यादीनां गवामर्वतामर्वतीनां पुरुषीणां नारीणां च यः पर्जन्यो गर्भं प्रसूतिहेतुं बीजमुदकरूपं कृणोति करोति तस्मै पर्जन्यायेत्युत्तरत्र सम्बन्धः Sy.

३. The *Pratīka* is supplied by the Editor.

४. अन A. ५. सम्यगतं A.

६. तस्मा इत्तस्मा एव पर्जन्यायास्ये देवानामास्यभूतेऽग्नौ मधुमत्तमं रसवत्तमं हविर्जुहोत जुहुत हे ऋत्विजः ! स च पर्जन्यो नोऽस्मभ्यमिळामन्नं संयतं सम्यग्नियतं यथा भवति तथा करत् करोतु । ददात्विति यावत् Sy.

७. 'संवत्सरम्' इति दशर्चं चतुर्दशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभम् । आद्या त्वनुष्टुप् । मण्डूका देवता । तथा चानुक्रान्तम्—'संवत्सरं दश पर्जन्यस्तुतिः संहृष्टान्मण्डूकांस्तुष्टावाद्यानुष्टुप्' (KSA. 39.103. p. 27.) इति । वृष्टिकामेनैतत् सूक्तं जप्यम् Sy. वसिष्ठस्यार्षम् Dur. वसिष्ठस्य SKN.

८. शरत्प्रभृत्यावर्षर्तोरेकं संवत्सरम् Sy.

९. वर्षणार्थं तपश्चरन्त इव बिले एव सन्तः Sy. निर्वाचः संवत्सरं सुप्ता इव स्थित्वा Dur. अत्रैकवाक्यतायै यत्तच्छब्दाध्याहारः । ये . . . . शयितवन्तः । लुप्तोपममेतत् । सुप्ता इव वाऽष्टौ मासान् निश्शब्दा बभूवुरित्यर्थः SKN.

१०. लुप्तोपममेतत् । एवम्भूता ब्राह्मणा इव Sy. सर्वथा सन्तो वक्तुम् Dur. ब्रुवतेरेतद्रूपम् । वचनसमर्था अपि सन्तः SKN.

११. वृतपारिणे० A. व्रतं संवत्सरसत्रात्मकं कर्माचरन्तः Sy. कृतवाक्संयमाः । ततः प्रावृट्कालं प्राप्याभिवृष्टाः Dur. अथवा व्रतमिति कर्मनाम । स्वस्य कर्मणश्चरितारो गन्तार इत्यर्थः । ते SKN.

१२. वर्षासु वाचम् SKN.

१३. पर्जन्येन प्रीताम् । यया वाचा पर्जन्यः प्रीतो भवति तादृशीं वाचम् Sy. पर्जन्येन तर्पिताम् Dur. जिन्वतिः प्रीतिकर्मा । पर्जन्येन प्रीताम् SKN.

प्रावादिषुः[1]। मण्डूकाः[2], अत्र यास्कः—'ब्राह्मणाः प्रवणाद्[3], अपि। वोपमार्थे[4] स्याद् ब्राह्मणा इव व्रतचारिण[5] इति[6]'

**दि॒व्या आपो॑ अ॒भि यदे॑नमाय॒न्दृतिं॒ न शुष्कं॑ स॒रसी॒ शया॑नम्।**
**गवा॒मह॒ न मा॒युर्व॒त्सिनी॑नां म॒ण्डूका॑नां व॒ग्नुरत्रा॒ समे॑ति ॥ २ ॥**

दिव्या आपः। दिव्याः[7]। आपः। अभ्यायन्[8]। यत्[9]। एनं मण्डूकम्[10]। दृतिम्। इव। शुष्कम्[11]। सलिले महति सरसि[12]। शयानम्[13]। गवाम्। इव। शब्दः। वत्सयुक्तानाम्। मण्डूकानाम्। शब्दः। अत्र[14] पर्जन्ये वर्षासु वा। सङ्गच्छते[15]। अहेति पूरणम्[16]।

---

१. प्रवदन्ति Sy. प्रशब्दोऽवादिषुरित्येतेन सम्बध्यते।....प्रावादिषुः, वर्तमाने लुङ्। प्रवदन्ति SKN.

२. अथवा न युक्तो रूढिपरिवादो ब्राह्मणशब्दस्येति लुप्तोपमः प्रकल्प्यते 'ब्राह्मणा इव व्रतचारिणः' इति। यथा ब्राह्मणा उपाकृत्य प्रावृषि पवित्रपाणयो मेखलिनो नियतकालां तां वैदिकीं वाचं वदन्ति, एवं प्रावादिषुरिति Dur. ब्राह्मणा इति लुप्तोपमम्। ये संवत्सरं शयितवन्तस्ते यथा ब्राह्मणाः कृतस्वाध्यायोपकरणा व्रतचारिणः स्वाध्यायमेवं वाचं पर्जन्येन प्रीतां मण्डूकाः प्रवदन्तीति SKN.

३. N. reads व्रतचारिणोऽब्रुवाणाः for प्रवणात्।

४. वोवमा० A. ५. ०णा A.

६. मण्डूका मज्जूका मज्जनात्। मदतेर्वा मोदतिकर्मणः। मन्दतेर्वा तृप्तिकर्मणः। मण्डयतेरिति वैयाकरणाः। मण्ड एषामोक इति वा। मण्डो मदेर्वा मुदेर्वा। तेषामेषा भवति ....संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणोऽब्रुवाणाः। अपि वोपमार्थे स्यात्। ब्राह्मणा इव व्रतचारिण इति। वाचं पर्जन्यप्रीतां प्रावादिषुर्मण्डूकाः।

वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव। तं मण्डूका अन्वमोदन्त। स मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव N. 9.5.6. SKN. III. 147.

७. दिवि भवाः Sy.

८. ०यत् A. अभिगच्छन्ति Sy.

९. यदि A. यदा Sy.

१०. मण्डूकगणम् Sy. ११. नीरसम् Sy.

१२. महत्सरः सरसी। सरस्याम्। 'सुपां सुलुक्०' इति सप्तम्या लुक्। 'ईदूतौ च सप्तम्यर्थे' इति प्रगृह्यसंज्ञा। महति सरसि निर्जले घर्मकाले Sy. १३. निवसन्तम् Sy.

१४. अस्मिन् वर्षणे पर्जन्ये वा सति Sy.

१५. ०च्छेते A. यथा वत्सैः सङ्गतासु गोषु महान् घोषो जायते तद्वद्वृष्टे पर्जन्ये महान् कलकलशब्दो जायत इत्यर्थः Sy.

१६. ०णाय A. अहेति पूरकः Sy.

यदीमेनाँ उशतो अभ्यवर्षीत्तृष्यावतः प्रावृष्यागतायाम् ।
अख्खलीकृत्या पितरं न पुत्रो अन्यो अन्यमुप वदन्तमेति ॥ ३ ॥

यदीमेनान्[1] । यदि[2] । एनान्[3] । कामयमानानुदकम् । अभिवर्षति[4] पर्जन्यः । तृष्णायुक्तान् । प्रावृषि[5] । आगतायाम्[6] । अख्खलीकृत्येति[7] शब्दानुकरणमाहुः । पितरम् । इव । पुत्रः । अन्यः[8] । अन्यम्[9] । उपगच्छति[10] । वदन्तं शब्दायमानमिति[11] ।

अन्यो अन्यमनु गृभ्णात्येनोरपां प्रसर्गे यदमन्दिषाताम् ।
मण्डूको यदभिवृष्टः कनिष्कन्पृश्निः संपृङ्क्ते हरितेन वाचम् ॥ ४ ॥

अन्यो अन्यम्[12] । अन्यः[13] । अन्यम्[14] । अनयोर्मण्डूकयोः । अनुगम्य । गृह्णाति । अपाम्[15] । प्रसर्गे[16] । यदा । अमन्दिषाताम्[17] । मण्डूकः । यदा[18] मण्डूकः[19] । अभिवृष्टः[20] । शब्दं कुर्वन्[21] । पृश्निवर्णः[22] । सम्पृङ्क्ते[23] । हरितवर्णेनान्येन[24] । आत्मीयां वाचं सम्मिश्रयति[25] ।

---

१. यदि मेनात् A.
२. यदा Sy.
३. एनात् A. मण्डूकान् Sy.
४. ०न्ति A. जलैरभिषिञ्चति Sy.
५. वर्षतौ Sy.
६. ०यन्म् A. आगते सति Sy.
७. तदानीमख्खलशब्दं कृत्वा Sy.
८. मण्डूकः Sy.
९. मण्डूकम् Sy.
१०. प्राप्नोति Sy.
११. VM. ignores ईम् ॥ ईमिति पूरणः Sy.
१२. अन्योन्यं A.
१३. मण्डूकः Sy.
१४. मण्डूकम् Sy.
१५. उदकानाम् Sy.
१६. प्रसर्जने वर्षणे सति Sy.
१७. ०मदि० M. हृष्टावभूताम् Sy.
१८. यदा च Sy.
१९. It seems to be redundant.
२०. पर्जन्येनाभिषिक्तः Sy.
२१. कनिष्कन्—स्कन्दतेर्यङ्लुगन्तस्य रूपम् । भृशं स स्कन्दन्नुत्प्लवं कुर्वन् Sy.
२२. वृश्चिव० A. पृश्निवर्णो मण्डूकः Sy.
२३. संयोजयति । उभावप्येकं शब्दं कुर्वाते तदानीमन्योऽन्यमनुगृभ्णातीत्यन्वयः Sy.
२४. ह is written twice in A. हरितवर्णेनान्येन मण्डूकेन Sy.
२५. सम्मिश्रयति seems to be the explanation of सम्पृङ्क्ते, it should therefore immediately follow that.

यदे॑षाम॒न्यो अ॒न्यस्य॒ वाचं॑ शा॒क्तस्ये॑व॒ वद॑ति॒ शिक्ष॑माणः ।
सर्वं॒ तदे॑षां स॒मृधे॑व॒ पर्व॒ यत्सु॒वाचो॒ वद॑थ॒नाध्य॒प्सु ॥ ५ ॥

यदेषाम् । यत्[1] । येषाम्[2] । अन्यः[3] । अन्यस्य[4] । वाचम् । वदति[5] । शक्तियुक्तस्येव[6] । शिष्यस्य शिष्य-ग्राचार्यस्य[7] । सर्वम् । तत् । एषां भवताम्[8] । समृद्धमिव[9] । पर्वाङ्गानामुदकाप्यायितम्[10] । यत्[11] । सुवाचो यूयम्[12] । अप्सु[13] । स्थिताः[14] । शं[15] कुरुतेति[16] ।

गोमा॑युरेको॒ अ॒जमा॑युरेकः॒ पृश्नि॑रेको॒ हरि॑त॒ एक॑ एषाम् ।
स॒मा॒नं नाम॒ बिभ्र॑तो॒ विरू॑पाः पुरु॒त्रा वाचं॑ पिपिशु॒र्वद॑न्तः ॥ ६ ॥

गोमायुः[17] । गोशब्दः[18] । एकः । अजशब्दः[19] । एकः[20] । पृश्निवर्णः[21] । एकः । हरितवर्णः । एकः[22] । एषां मण्डूकानाम्[23] । समानं मण्डूकाख्यम्[24] । नाम । बिभ्रतः[25] । नानारूपाः । बहुदेशेषु[26] । वाचम्[27] । मिश्रयन्ति[28] । शब्दायन्तः[28] ।

---

१. हे मण्डूकाः ! यदा Sy.

२. युष्माकं मध्ये Sy.

३. अनः A. मण्डूकः Sy.

४. मण्डूकस्य Sy.

५. अनुवदति अनुकरोति Sy.

६. ०स्यैव M. शक्तिमतः शिक्षकस्य वाचं यथानुवदति तद्वत् Sy.

७. शिष्यग्राचार्य A. शिष्य आचार्यस्य is suggested for शिष्यस्य शिष्यग्राचार्यः ॥ आचार्यस्य goes with शक्तियुक्तस्य ॥ शिक्ष्यमाणः शिष्यः Sy.

८. युष्माकम् Sy.

९. समृद्धमेवाविकलावयवमेव भवति । इवशब्दोऽवधारणे । घर्मकाले मृद्भावमापन्ना मण्डूकाः पुनर्वर्षणे सत्यविकलाङ्गाः प्रादुर्भवन्तीत्यर्थः Sy.

१०. पर्वाङ्गना० A. पर्व परुष्मच्छरीरम् Sy.

११. यदा Sy.

१२. शोभनवाचो यूयं सर्वे Sy.

१३. वृष्टेषूदकेषु Sy.

१४. अप्युपरि प्लवन्तः Sy.

१५. शब्दम् is suggested for शं ॥ वदत Sy.

१६. ०थेति A.

१७. गोर्मायुरिव मायुःशब्दो यस्य तादृशः Sy.

१८. मण्डूकः Sy.

१९. अजस्य मायुरिव मायुर्यस्य तादृशो भवति Sy.

२०. अन्यः Sy.

२१. ०वर्ण A.

२२. कः A. अपरः Sy.

२३. मध्ये Sy.

२४. एकं मण्डूका इति Sy.

२५. विभ्रतः A. धारयन्तः Sy.

२६. बहुरूषु A. पुरुत्रा पुरुशब्दाद् 'देवमनुष्य०' (Pa. 5. 4. 56.) इत्यादिना त्राप्रत्ययः Sy.

२७. VM construes वाचम् with पिपिशुः and explains वदन्तः as शब्दायन्तः but Sy. explains these words as शब्दं कुर्वन्तः ।

२८. अवयवीभवन्ति प्रादुर्भवन्ति । 'पिश अवयवे' Sy.

ब्राह्मणासो अतिरात्रे न सोमे सरो न पूर्णमभितो वदन्तः ।
संवत्सरस्य तदहः परि ष्ठ यन्मण्डूकाः प्रावृषीणं बभूव ॥ ७ ॥

ब्राह्मणासः । ब्राह्मणाः । इव[1] । अतिरात्रे[1] । सोमे[2] भूयिष्ठस्तोत्रशस्त्रे[3] । सरः । इव[4] । पूर्णम् । अभितः[5] स्तोत्रशस्त्राणि । वदन्तः[6], सरश्शब्दः[7] स्तोमवचनः[8] । संवत्सरस्य । तत् । दिनम् । परितः[9] भवथ । यद्दिनम् । हे मण्डूकाः । प्रावृषेण्यम्[9] । भवति प्रादुर्भवति चेति ।

ब्राह्मणासः सोमिनो वाचमक्रत ब्रह्म कृण्वन्तः परिवत्सरीणम् ।
अध्वर्यवो घर्मिणः सिष्विदाना आविर्भवन्ति गुह्या न के चित् ॥ ८ ॥

ब्राह्मणासः[10] । ब्राह्मणासः[11] । सोमिन[12] इत्यौपमिकम् । कर्म[13] । कृण्वन्तः[14] । संवत्सरान्तर्भवम्[15] । वाचम्[16] । अकुर्वन्[17] । अध्वर्यवः[18] । धर्मेण[19] चरन्तः । स्विद्यच्छरीराः[20] । आविर्भवन्ति[21] । गुह्याः[22] । इदानीम् । केचिद्[23] बिलादुत्थिता मण्डूकाः । नेति[24] सम्प्रत्यर्थः ।

---

१. रात्रिमतीत्य वर्तत इत्यतिरात्रः । अतिरात्रे Sy.

२. यथातिरात्राख्ये सोमयागे ब्राह्मणासो ब्राह्मणा रात्रौ स्तुतशस्त्राणि पर्यायेण शंसन्ति Sy.

३. ०यिष्णु० A.

४. यथा । द्वितीयो नशब्दः सम्प्रत्यर्थे । न सम्प्रति Sy. ५. सर्वतः Sy.

६. रात्रौ शब्दं कुर्वाणाः यूयम् Sy.

७. सराः श० A.

८. सोम० is suggested for स्तोम० ॥ The passage सरश्शब्दः सोमवचनः should immediately follow सरः and precede इव ।

९. प्रावृषि भवं बभूव तस्मिन्नहनि सर्वतो वर्तमाना भवथेत्यर्थः Sy.

१०. ०णास्सा A. ब्राह्मणासः is omitted by M.

११. ०णः स A. ब्राह्मणा इव Sy.

१२. सोमयुक्ताः Sy.

१३. स्तुतशस्त्रात्मकम् Sy.

१४. कृत् तः A. कृत् M. कुर्वन्तः Sy.

१५. ०न्तभव A. ०र्भव M. सांवत्सरिकं गवामयनिकम् Sy.

१६. शब्दम् Sy.

१७. अकुर्वं A. अकृत M. अकृषत is suggested for इमे मण्डूकाः Sy.

१८. अध्वरस्य नेतार ऋत्विजः Sy.

१९. प्रवर्गेण Sy.

२०. स्विद्यद्गात्राः Sy.

२१. जायन्ते Sy.

२२. घर्मकाले बिलेऽभिगूढाः Sy.

२३. केचन Sy.

२४. It should immediately follow इदानीम् ॥ सम्प्रति वृष्टौ सत्याम् Sy.

देवहितिं जुगुपुर्द्वादशस्य ऋतुं नरो न प्र मिनन्त्येते ।
संवत्सरे प्रावृष्यागतायां तप्ता घर्मा अश्नुवते विसर्गम् ॥ ९ ॥

देवहितिम्[1] । द्वादशमासस्य संवत्सरस्य[2] । देवहितिं हवीरूपम्[3] । एते[4] । रक्षन्ति[5] । तदेवाह न । हिंसन्ति[6] । वार्षिकमृतुम्[7] । नेतार इति प्रकाशीभवन्त ऋतुं प्रकाशयन्तीत्यर्थः । संवत्सरे[8] । प्रावृषि[9] । आगतायाम्[10] । तप्ताः[11] केचन[12] । घर्माः[13] । विलात् विसर्गम्[14] । प्राप्नुवन्ति तप्ता घर्मा इत्यौपमिकम् ।

गोमायुरदादजमायुरदात्पृश्निरदाद्धरितो नो वसूनि ।
गवां मण्डूका ददतः शतानि सहस्रसावे प्र तिरन्त आयुः ॥ १० ॥

गोमायुः[15] । गोमायुः[16] । अदादेवमन्ये[17] च । धनानि । अस्मभ्यम् । गवाम् । शतानि[18] । प्रयच्छन्तः मण्डूकाः । सहस्रसावे[19] बहूनां प्रसवे वर्षद्धनम्[20] । प्रवर्धयन्ति[21] । आयुरन्नमिति[22] ।

---

१. देवहितिम् । द्वादशमासस्य संवत्सरस्य is missing in A.

२. अत एव द्वादशमासात्मकस्य संवत्सरस्य Sy.

३. ०हितं हवि० A. देवैः कृतं विधानमस्यर्तोरयं धर्म इत्येवंरूपम् Sy.

४. मण्डूकाः Sy.

५. गोपायन्ति कालेकाले रक्षन्ति Sy.

६. पर्जन्यस्तुतेरनुमोदनेन तत्तत्काले वृष्टिहेतवो भवन्तीत्यर्थः Sy.

७. तं तं वसन्तादिकम् Sy.

८. संवत्सरे सम्पूर्णे Sy.

९. वर्षर्तौ Sy.

१०. आगते सति Sy.

११. तापेन पीडिताः Sy.

१२. केचा A.

१३. कर्मा वि० A.
पूर्वं घर्मकाले वर्तमानाः Sy.

१४. सम्प्रति विसर्जनं बिलाद्विमोचनम् Sy.

१५. वसिष्ठः पर्जन्यस्तुतिसंहृष्टान् मण्डूकांस्त्रिष्टुभा तुष्टाव । 'वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव तं मण्डूका अन्वमोदन्तेति यास्कः' (N.9.6.) वृष्टिकामेनैतत् सूक्तं जप्तव्यम् DDN.

१६. गोरिव मायुः शब्दो यस्य तादृशः Sy. गोरिव मायुः शब्दो यस्य तादृशोऽयं मण्डूकः DDN. वग्नुः, उपब्दिः, मायुः, इति वाङ्नामानि Ngh. 1. 11.

१७. अन्ये refers to अजमायुः । पृश्निः and हरितः ॥ तथा अजस्येव मायुर्यस्य सोऽप्यदात् । तथा पृश्निवर्णः अदात् । हरितवर्णः अदात् । एते अस्मभ्यं धनं दत्तवन्तः । तथा मण्डूका एते सर्वे DDN.

१८. अपरिमिता गाः Sy. DDN.

१९. सहस्रसंख्याका ओषधयः सूयन्त उत्पद्यन्ते इति वर्षर्तुः सहस्रसावः । तस्मिन् सति Sy. DDN.

२०. वर्ष धन A.

२१. प्रवर्धयन्तु Sy. प्र ऽर्द्धयन्तु । प्रपूर्वस्तिरतिर्वर्धनार्थः । असुनीते मनो अस्मास्वित्यत्र यास्कदर्शनात् (Cf N. 10. 40.) DDN.

२२. जीवनम् Sy.

VII.104.

**इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः ।**
**परा शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्रिणः ॥ १ ॥**

इन्द्रासोमा[1] । शौनकः—

संवत्सरं तु मण्डूकमैन्द्रासोमं[2] परं तु यत् ।
ऋषिर्ददर्श राक्षोघ्नं पुत्रशोकपरिप्लुतः[3][4] ॥
'ये पाकशंस[5]मृग्वौम्या[6] आग्नेयी तत उत्तरा ।
एकादशी वैश्वदेवी सौम्यस्तस्मात्[7] परो द्वृचः ॥
'यदि वाहमृगाग्नेयी ऐन्द्र्यचौ[8]'यो मे' ' तु स्मृतौ[9] ।
नाष्णी[10]'प्र या जिगातीति[11]'वि तिष्ठध्व'[12]'तु मारुती[13] ॥

१. 'इन्द्रासोमा' इति पञ्चविंशत्यृचं पञ्चदशं सूक्तं वसिष्ठस्यार्षम् । आद्या षड् जगत्यः सप्तमी जगती त्रिष्टुब्वाष्टादश्येकविंशीत्रयोविंश्यो जगत्योऽन्त्या 'प्रति चक्ष्व' इत्यनुष्टुप् शिष्टाश्चतुर्दश त्रिष्टुभः । नवमीद्वादशीत्रयोदश्यः सोमदेवत्या एकादशी देवदेवत्याष्टमीषोडश्याविन्द्रदेवताके सप्तदशी ग्रावदेवत्याष्टादशी मरुद्देवताका दशमीचतुर्दश्यावग्निदेवताके 'प्र वर्तय' इत्याद्याः पञ्चर्च इन्द्रदेवताकाः । 'मा नो रक्षः' इति त्रयोविंश्याः पूर्वोऽर्धर्चो वसिष्ठस्य प्रार्थनापरः, अतस्तद्देवताकः । उत्तरोऽर्धर्चो पृथिव्यन्तरिक्षदेवत्यः । शिष्टानां रक्षोहणाविन्द्रासोमौ देवता । तथा चानुक्रान्तम्—'इन्द्रासोमा पञ्चाधिकैन्द्रासोमं राक्षोघ्नं शापाभिशापप्रायं षट् सप्त वाद्या जगत्य एकविंशीत्रयोविंश्यौ चाष्टादशी मारुती च दशमीचतुर्दश्यावाग्नेय्यौ वैव्येकादश्यन्त्यानुष्टुम्नवमी, द्वादशीत्रयोदशी सौम्यः सप्तदशी ग्राव्ण्यष्टमीषोळश्यावैन्द्रयौ 'प्र वर्तय' इति पञ्चैन्द्र्यो मा नो रक्ष इत्यृषेरात्मन आशीरुत्तरोऽर्धर्चः पृथिव्यन्तरिक्षदेवतः'(KSA 39. 104. p. 27.) इति । अत्र बृहद्देवतायामनुक्रम्यते—
'संवत्सरं तु मण्डूकानैन्द्रासोमं परं तु यत् ।
ऋषिर्ददर्श रक्षोघ्नं पुत्रशोकपरिप्लुतः ।
हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा'
BD. इति रक्षोनिबर्हणार्थमेतत्सूक्तं जप्यम् Sy.

२. मण्डूकान् BD. ३. ०रिच्छ्रुत A.

४. BD. VII. 28. p. 67. adds one hemistich after ऋषिर्ददर्श... as 'हते पुत्रशते तस्मिन् सौदासैर्दुखितस्तदा ।

५. वाक० A. M.

६. ०मद्वोद्यानेयि A. ०मृक् सौम्या is suggested for ०मृग्वौम्या ।

७. तस्याः is suggested for तस्मात् ।

८. ऐन्द्री is suggested for ऐ द्रचो ।

९. स्मृता is suggested for स्मृतौ ।

१०. Missing in M. ग्राव्णी is suggested for नाष्णी ।

११. गजिगातीत A. यो गजि० M.

१२. पि ति० A. वि ति० is missing in M.

१३. ०रुति A.

'प्र वर्तयेति पञ्चैन्द्रय ऐन्द्रासोमीत्यृगुत्तरा[1] ।[2]
ऋषिस्त्वाशिषमाशास्ते 'मा नो रक्षः' इति द्व्चे[3] ॥
पञ्चदश्यां तु सूक्तस्य अष्टम्यां[4] चैव वारुणी[5] ।
दुःखशोकपरीतात्मा शपथे[6] विलपन्निव[7] ॥ इति ॥

हे इन्द्रासोमौ[8] ! तेजोभिस्तपतम्[9] । रक्षः[10] । उब्जतं[11] च, उब्जतिर्वधकर्मा । न्यर्पयतमधो[12] नयतम् । वर्षितारौ[13] ! तमसा वर्धयितॄन्[14] राक्षसान् । पराशृणीतं[15] पराङ्मुखं नीत्वा विशीर्णान् कुरुतम्[16] । अज्ञान्[17] । निर्दहतं[18] च । हतम्[19] । नुदेथाम्[20] । नितरां च तनूकुरुतम् । अदनशीलानिति[21] ।

---

१. एन्द्रासोमी प्रदगु० A.

२. BD. reads त्वृगुत्तमा for इत्यृगुत्तरा०

३. BD. reads त्वृचि for द्व्चे and adds the following stanza after this:
दिवि चैव पृथिव्यां च तथा पालनमात्मनः ।
उलूकयातुं जह्येतान् नानारूपान्निशाचरान् ।

४. ०स्याष्ट० A. ०स्याथाष्ट० is suggested for ०स्याथाष्ट० ।

५. वरुणी A. वारुणीः is suggested for वारुणी ॥

६. शपते is suggested for शपथे ।

७. BD. 6. 27—33.

८. सोमौः० A.
इन्द्रश्च सोमश्चेन्द्रासोमौ । 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ् । आमन्त्रिताद्युदात्तत्वम् Sy.

९. युवां सन्तापयन्तम् । 'आमन्त्रितं पूर्वमविद्यमानवद्' इत्यविद्यमानवत्त्वात् तपतमिति तिङन्तस्य निघाताभावः Sy.

१०. रक्षांसि । जातावेकवचनम् Sy.

११. इब्ज० A.
हिंस्तम् । उब्जतिर्हिंसाकर्मा । तिङः परत्वान्निघाताभावः Sy.

१२. ०धोः A.
रक्षांसि नीचैष्ट्वं प्रापयतम् Sy.

१३. हे कामानां वर्षितारौ ! Sy.

१४. ०यिवृ स्त्राक्ष० A. तमसावरकेणान्धकारेण मायारूपेण वर्धमानान् तमसि रात्रौ वर्धमानान् वा Sy.

१५. ०णितं A.

१६. ०रुत M. पराङ्मुखा यथा भवन्ति तथा हिंस्तम् Sy.

१७. अज्ञा M. अज्ञान् is suggested for अज्ञन् ॥ ज्ञानरहितान् गूढान् राक्षसान् Sy.

१८. निदह० M. तथा न्योषतं नितरां दहतम् । 'उष दाहे' Sy.

१९. हतं तान् मारयतम् Sy.

२०. नुदथा M.
अस्मत्तो हतांस्तान् प्रेरयेथाम् Sy.

२१. अदनशीलान् तान् राक्षसान् Sy.

इन्द्रासोमा समघशंसमभ्यघं तपुर्ययस्तु चरुरग्निवाँइव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥ २ ॥

इन्द्रसोमा[1] । इन्द्रासोमौ ! अघस्य शंसितारम्[2] । समभिभवतम्[3] । अघमाहत्य[4] । तापको राक्षसः[5] । युवयोस्तेजसाऽऽयस्तो[6] भवतु । यथाऽग्निना तप्यमानाः[7] । चरुः[8] । ब्राह्मणद्वेषिणे[9] । क्रव्यादे[10] । घोराख्यानाय[11] ।

---

१. इन्द्रासोमा is missing in M. वसिष्ठस्यार्षम् Dur. वसिष्ठस्य SKN.

२. अघस्यानर्थस्य शंसितारम् Sy. पापस्य शंसितारम् Dur. पापं परेभ्यः शंसतीत्यघशंसः, तं पापस्यास्माकं शंसितारम् SKN.

३. सं सहैव । अभीति श्रुतेर्योग्यक्रियाध्याहारः । अभिभवतम् Sy. सन्तापयन्तं भवन्तौ Dur. अभ्युपसर्गस्तच्छ्रुतेश्च योग्यक्रियापदाध्याहारः कार्यः । तेनाभिसन्तापयतमिति शेषः SKN.

४. आगत्य हन्तारं राक्षसम् Sy. पापमेव कर्तुमाभिमुख्येन नित्यकालमेव योऽवस्थितस्तं सन्तापयन्तम् Dur. अन्तर्णीतमत्वर्थमेतत् । अघवन्तमघात्मकं वा, अघं केवलं पापकमित्यर्थः ....अघं हन्तेः पूर्वस्याङो ह्रस्वत्वेन । आभिमुख्येन हन्ति श्रेयसे विनाशयतीत्यर्थः SKN.

५. पक्तौ राक्षसोः A. युवयोस्तेजसा तप्यमानो राक्षसः Sy. युवाभ्यां सन्ताप्यमानः Dur. स च तपुः । तपेः कर्मण्युप्रत्यये । अभिसन्तप्यमान इत्यर्थः SKN.

६. ययस्तु 'यसु प्रयत्ने' केवलोऽप्ययमाङ्पूर्वार्थे द्रष्टव्यः । आयासं प्राप्नोतु । उपक्षीयतामित्यर्थः Sy. क्षयं यात्वित्यर्थः Dur. 'यसु प्रयत्ने' आयस्यतु क्षीयतामित्यर्थः SKN.

७. ०मानः is suggested for ०मानाः ॥ अग्नियुक्तोऽग्नौ प्रक्षिप्तः Sy. तप उच्यते ।....अग्निसंयुक्त इत्यर्थः Dur. SKN.

८. चरु ब्रह्मण० A. 'चरुर्मृच्चयो भवति' मृदादिसञ्चितो भवति Dur. चरुशब्दो मृन्मय्यां स्थाल्यामधिकरणे, आधेये चरावपीति द्रोणादिशब्दवदुभयत्र प्रसिद्धोऽविशेषात् । मुख्यं चरतेरर्थसमवायं दर्शयति समुच्चरन्त्यस्मात्तप्तावाप इति SKN.

९. अपि च ब्राह्मणेभ्योऽस्मभ्यं द्वेष्ट्रे Sy. क्षीणाय ....तस्मै ब्राह्मणद्विषे SKN.

१०. क्रव्यादे घोरख्या० A. क्रव्यं मांसं भक्षयित्रे Sy. पृष्ठमांसभक्षयित्रे Dur. क्रव्यं मांसं तदत्तीति क्रव्यात्, तस्मै पृष्ठमांसादिने परोक्षाक्रोशकायेत्यर्थः । लोकेऽपि यः परोक्ष आक्रोशति स उच्यते पृष्ठमांसानि खादतीति ।....लोकस्तु समुदायप्रसिद्ध्या संस्मरन् क्रव्यादमाचष्टे SKN.

११. घोरदर्शनाय परुषभाषिणे वा Sy. चक्षिर्दर्शने । घोरदर्शनाय Dur. SKN.

द्वेषः[1]। धत्तम्[2]। अव्यपेयमनवयवं[3][4] वा यदन्ये न प्यपेयु[5] 'किमीदिने[6] किमिदानीमिति चरते[7]। इदं[8] किमिदमिति वा पिशुनाय चरते' इति यास्कः[8]।

**इन्द्रासोमा दुष्कृतो वव्रे अन्तरनारम्भणे तमसि प्र विध्यतम् ।**
**यथा नातः पुनरेकश्चनोदयत्तद्वामस्तु सहसे मन्युमच्छवः ॥ ३ ॥**

इन्द्रासोमा। इन्द्रासोमौ[9] ! दुष्टस्य कर्मणः कतॄन्[10]। वारके[11]। अन्तः[12]। अनालम्बने[13]। तमसि[14]। प्रवर्धतं[15] प्रक्षिपतम्। यथा[16]। न। अतस्तमसः[17]। पुनः। एकः[18]। अपि राक्षसो न[19]। उदगच्छत्[20]। तत्[21]। युभयोः[22]। अस्तु[23]। अभिभवाय[24] रक्षसाम्[25]। धियुक्तम्[26]। बलम्।

---

१. द्वेष्यभावम् Sy. सर्वलोकद्वेष्यताम् Dur. सर्वलोकस्य द्वेष्यबन्धस्तम् SKN.
२. दत्तम् Sy. धत्तं युवाम् Dur.
३. अप्यपेयमा० A.
४. ०वायंवा M. अथवा यदन्येऽतद्द्रुहस्तत्सुहृदोऽद्वेषसोऽद्वेष्टारो न व्यवेयुर्व्यवेतुं वियोजयितुं घटमाना अपि न शक्नुयुस्तादृशं द्वेषो धत्तम् । ....एवमत्र 'अनवायम्' इत्यस्यानवयवमवियोजनं वा, इत्यर्थप्रतीतिस्तथाभीष्टत्वात् Dur. सकलमित्यर्थः । अव्यवेयं वा, अनवगमनीयं वा। अनवगमनीयं यदद्वेषसः सन्तः सुहृदो नेतुं न शक्नुयुरित्यर्थः SKN.
५. व्यापयेयुः M. व्यपेयुः is suggested for प्यपेयु ।
६. किमिदि० M. पिशुनाय SKN. पिशुनायेत्यर्थः। ....किमीदी च पिशुनः। स हि किमिदानीं वर्तत इत्येवमन्वेषणश्चरते, अथवा किमिदं वर्तत इत्येवमन्वेषमाणश्चरते । स हि तस्य स्वभावः Dur.
७. ०ते रिमिमं कि० A. चरते। इदं is suggested for चरतेरिमम् ।
८. N. adds किम् before इदम् ॥ इन्द्रासोमावघस्य शंसितारम् । अघं हन्तेः । निर्ह्रसितोपसर्गः । आहन्तीति । तपुस्तपतेः । चरुर्मृच्चयो भवति । चरतेर्वा । समुच्चरन्त्यस्मा— दापः । ब्रह्मद्विषे (ब्राह्मणद्वेष्ट्रे । क्रव्यादे) क्रव्यमदते । (घोरचक्षसे) घोरख्यानाय । क्रव्यं विकृत्ताज्जायत इति नैरुक्ताः । द्वेषो धत्तम् । अनवायमनवयवम् । यदन्ये न व्यवेयुः द्वेषस इति वा । किमीदिने । किमिदानीमिति चरते । किमिदं किमिदमिति वा । पिशुनाय चरते । पिशुनः पिंशतेः विपिंशतीति' N. 6. 11; SKN II. 425.
९. ०सोमा A.
१०. कृतॄन् A. कर्तॄन् is suggested for कतॄन् ।
११. वारके is missing in M.
१२. अन्तन् A. मध्ये Sy.
१३. आलम्बनरहिते Sy. १४. अन्धकारे Sy.
१५. प्रवर्धत A. The reading is doubtful. प्रविध्यतम् is suggested for प्रवर्धतम्॥ प्रवेश्य ताडयतम् Sy.
१६. येन प्रकारेण Sy.
१७. ०तप्त० M. अस्मात्तमसः Sy.
१८. एषां मध्ये एकः Sy.
१९. न seems to be unnecessary.
२०. उद्गच्छेत् तथाविध्यतमित्यर्थः । एतेर्लेटचडागमः । 'इतश्च लोपः०' इतीकारलोपः । गुणायादेशौ Sy. २१. तत् प्रसिद्धम् Sy.
२२. उभयोः M. युवयोः is suggested for युभयोः ।
२३. भवतु Sy. २४. अभिभवनाय Sy.
२५. रक्षांसि M.
२६. युक्तम् M. क्रोधयुक्तम् is suggested for धियुक्तम् ।

**इन्द्रासोमा वर्तयतं दिवो वधं सं पृथिव्या अघशंसाय तर्हणम् ।**
**उत्तक्षतं स्वर्यं पर्वतेभ्यो येन रक्षो वावृधानं निजूर्वथः ॥ ४ ॥**

इन्द्रासोमा । इन्द्रासोमौ[1] ! द्युलोकात्[2] । वज्रम्[3] । संवर्तयतम्[4] । पृथिव्याः[5] । अघशंसाय[6] रक्षसे । हिंसकम्[7] । उत्तक्षतं[8] पृथक्कुरुतम्[9] । स्वरणकुशलमशनम्[10] । मेघेभ्यो[11] यथा काष्ठेभ्यः शकलमुत्वक्षन्ति[12] । येन[13] वज्रेण । रक्षः[14] । वर्धमानम्[15] । निहथ[16] ।

**इन्द्रासोमा वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ।**
**तपुर्वधेभिरजरेभिरत्रिणो नि पर्शाने विध्यतं यन्तु निस्वरम् ॥ ५ ॥**

[इन्द्रासोमा][17] इन्द्रासोमौ[18] ! परिवर्तयतम्[19] । अन्तरिक्षादागच्छथः । अग्निना तप्तास्यैः[20] । व्याप्तहननैः[21] । तापनशीलप्रहारैः[22] । अदनशीलान्[23] राक्षसान् । शस्त्रैः[24] । निविध्यतम्[25] । परिशाने[26] पार्श्वस्थे । अपि नियन्तु[27] राक्षसाः । निस्वरं[28] शब्दायमानाः[29] ।

---

१. ०सोमा दुष्टस्य कर्मण मे A.
२. अन्तरिक्षाद्....वा Sy.
३. हननसाधनमायुधम् Sy.
४. उत्पादयतम् Sy.
५. अस्मदीयलोकात् Sy.
६. अघशंसम् । अनर्थस्याशंसकम्, राक्षसं हन्तुम् Sy. ७. आयुधम् Sy.
८. उक्तक्षतत् A. उद्धृतं कुरुतम् Sy.
९. ०रुत A. M.
१०. अशनिम् is suggested for अशनम् ॥ 'स्वृ शब्दोपतापयोः' उपतापकमशनिम् Sy.
११. पर्ववद्भ्यो मेघेभ्यः सकाशात् Sy.
१२. ०लं भक्ष० M. ०मुत्तक्ष० is suggested for ०मुत्वक्ष० ।
१३. अशनिना Sy.
१४. राक्षसम् Sy.
१५. वर्धनम् M. वर्धमानं प्रवृद्धं वा Sy.
१६. निहथः is suggested for निहथ । निजूर्वथः निहथः । 'जुर्वी हिंसायाम्' ? तमशनिमुत्तक्षतमित्यर्थः Sy.
१७. VM'S commentary on this stanza is missing in M. The *pratīka* is supplied by the Editor.
१८. ०सोमो A.
१९. इवर्तं यम् A. सर्वत आयुधानि प्रेरयतम् Sy.
२०. अग्निना सन्तप्तैः Sy.
२१. ०ननैः A. अश्मसारभूतस्यायसो विकारैर्हननसाधनैरायुधैः Sy.
२२. तापकप्रहारैः Sy.
२३. राक्षसस्य Sy.
२४. ०स्त्रैः A. जरारहितैर्वृद्धैः Sy.
२५. ०बध्य० A. निहितम् Sy.
२६. पार्श्वस्थाने Sy.
२७. अपयन्तु निर्गच्छन्तु Sy.
२८. न्यतस्वरं A. निःशब्दम् Sy.
२९. VM. ignores युवम् ॥ तौ युवाम् Sy.

इन्द्रा॑सोमा॒ परि॑ वां भूतु वि॒श्वत॑ इ॒यं म॒तिः क॒क्ष्याश्वे॑व वा॒जिना॑ ।
यां वां॒ होत्रां॑ परिहि॒नोमि॑ मे॒धये॒मा ब्रह्मा॑णि नृ॒पती॑व जिन्वतम् ॥ ६ ॥

इन्द्रासोमा । इन्द्रासोमौ[1] ! परिभवतु[2] । वाम् । सर्वतः । इयम्[3] । स्तुतिः[4] । अश्वाविव । बलौ[5] कक्ष्या[6] । याम् । युवयोरहम्[7] । प्रेरयामि[8] । प्रज्ञया । अतो युवामिमानि । स्तोत्राणि[9] । राजमानाविव काम-प्रदानेन[10] । प्रीणयतम्[11] ।[12]

प्रति॑ स्मरेथां तु॒जय॑द्भि॒रेवै॑र्ह॒तं द्रु॒हो र॒क्षसो॑ भङ्गु॒राव॑तः ।
इन्द्रा॑सोमा दु॒ष्कृते॒ मा सु॒गं भू॒द्यो नः॑ क॒दा चि॑दभि॒दास॑ति द्रु॒हा ॥ ७ ॥

प्रति स्मरेथाम् । अस्मात्[13] प्रतिस्मरेथामागच्छतमित्यर्थः । क्षिप्रमाचरद्भिः[14] । गमनैः[15] । हतं[16] च । दोग्धून्[17] । राक्षसान् । भङ्गुरावतो[18] भञ्जनशीलकर्मयुक्तान्[19] । हे इन्द्रासोमौ ! दुष्कर्मणे[20] । मा[21] । सुगम्[22] । भवतु सुगमिति[23] सुखनाम[24] । यः । नः । कदा । चिदपि । अभिहिनस्ति[25] । द्रोहेण[26] ।

---

१. इन्द्रासोमौ is missing in A.

२. परिगृह्णातु व्याप्नोतु वा Sy.

३. अस्माभिः क्रियमाणा Sy.

४. मननीया स्तुतिः Sy.

५. सबलौ or बलिनौ is suggested for बलौ ॥ बलवन्तौ वां युवाम् Sy.

६. कक्ष्या कक्षबन्धनी रज्जुरश्वेव यथाश्वं परि-गृह्णाति तद्वत् Sy.

७. युवाभ्याम् Sy.

८. प्रेरयामि सेयं मतिरिति सम्बन्धः Sy.

९. अस्माभिः कृतानि Sy.

१०. धनैः Sy.

११. फलेन पूरयतम् Sy.

१२. VM. ignores होत्राम् ॥ होत्रां वाचम् Sy.

१३. प्रत्यस्मान् स्म० M. अस्मान् is sugge-sted for अस्मात् ॥ प्रति स्मरेथाम् अभि-गच्छतम् । उपसर्गवशेन स्मरतिरत्रार्थान्तरे वर्तते। यथा प्रस्मरणं प्रस्थानमिति Sy.

१४. त्वरमाणैः Sy.

१५. गन्तृभिरश्वैः Sy.

१६. हितं M. हिस्तम् Sy.

१७. द्राद्धून् A. द्रोग्धून् is suggested for दोग्धून् ।

१८. भञ्जनकर्मवतः Sy.

१९. ०क्तन् A.

२०. पापकारिणे राक्षसाय Sy.

२१. ना A.

२२. सुखम् Sy.

२३. सुभमि० A.

२४. ०नमे A. The passage सुगमिति सुखनाम should immediately follow सुगम् ।

२५. अभिहन्ति तस्मै दुष्कृत इत्यन्वयः Sy.

२६. द्रोहेण युक्तः Sy.

**यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः ।**
**आपइव काशिना संगृभीता असन्नस्त्वासत इन्द्र वक्ता ॥ ८ ॥**

यो मा[1] । यः[2] । माम् । पक्वेन त्यक्तानृतेन[3] । मनसा । चरन्तमृजुभिः[4] । वदति[5] । अनृतैः[6] । वचोभिः[7] । ऊकानीक[8] । आकाशवता पात्रेण[9] । सङ्गृहीतानि[10], यद्वा काशिर्मुष्टिः[11] । असन्[12] । भवतु । असत्यस्य । इन्द्र ! वक्ता[13] यो मोघं[14] यातुधानेत्याहेति वक्ष्यति ।

**ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः ।**
**अहये वा तान्प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे ॥ ९ ॥**

ये पाकशंसम्[15] । ये[16] । पक्वानां वचसां शंसितारम्[17] । विविधं हरन्ति[18] । गमनैः[19] । ये । वा । भद्रं माम्[20] । दूषयन्ति[21] । बलैः[22] । तान्[23] । सर्पाय[24] । वा । परिददातु[25] । सोमः । आदधातु[26] । वा । निर्ऋतेः[27] । उपस्थे[28] ।

---

१. ये माम् A.

२. राक्षसः Sy.

३. पक्त्वेन त्यक्तानृतन A. शुद्धेन Sy.

४. वर्तमानं सत्यवादिनम् Sy.

५. अभिशंसति । मय्यसत्यवचनमारोपयति Sy.

६. असत्यैः Sy.

७. वचनैः Sy.

८. उतानीक M. उदकानीव is suggested for ऊकानीक ॥ यथापो विशीर्णा भवन्ति Sy.

९. वाका० A. मुष्टिना Sy.

१०. सम्यग्गृहीता Sy.

११. The passage यद्वा काशिर्मुष्टि should immediately follow आकाशवता पात्रेण and precede सङ्गृहीतानि ।

१२. असद् M. अविद्यमानो भवतु । नश्यत्वित्यर्थः Sy.

१३. स राक्षसः Sy.

१४. माघं A. An addition of मा before मोघं is suggested.

१५. वाक० A.

१६. राक्षसाः Sy.

१७. पक्त्वानां A. सत्यभाषिणं माम् Sy.

१८. विशेषेण हरन्ति । उपक्षयन्ति । यथा कामं परिवदन्तीत्यर्थः Sy.

१९. ०नै A. एतव्यैः प्राप्तव्यैरात्मीयैः कामैर्हेतुभूतैः Sy.

२०. कल्याणवर्तनं माम् Sy.

२१. दुष्टं कुर्वन्ति Sy.

२२. बलैर्युक्ताः Sy.

२३. सर्वान् Sy.

२४. सर्वाय A.

२५. वरि० A. प्रददातु Sy.

२६. ०ददातु M. प्रक्षिपतु Sy.

२७. पापदेवतायाः Sy.

२८. उत्सङ्गे Sy.

**यो नो रसं दिप्सति पित्वो अग्ने यो अश्वानां यो गवां यस्तनूनाम् ।**
**रिपुः स्तेनः स्तेयकृद्दभ्रमेतु नि ष हीयतां तन्वा३ तना च ॥ १० ॥**

यो नः । यः[1] । अस्माकम् । अन्नस्य[2] । रसम् । विनाशयति[3] । अग्ने । यश्च । अश्वादीनाम्[4] । रिपुः[5] । स्तेनः[6] । स्तेयस्य[7] कर्ता भवति सः । दभ्रम्[8] । एतु[9] दभ्रत्वं[10] प्राप्नोत्वल्पो[11] भवतु । निहीयतां[12] च । सः[13] । आत्मना[14] । पुत्रेण[15] । च यद्वा पुत्रेण धनेन चति ।

**परः सो अस्तु तन्वा३ तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।**
**प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम् ॥ ११ ॥**

परः सः । परस्तात् । भवतु[16] । सः[17] । आत्मना[18] । पुत्रेण । तथा । तिस्रश्च[19] । पृथिवीः । सर्वाः[20] । अधस्तात् । अस्तु[21] । प्रतिशुष्यतु च । अस्य[22] । यशः[23] । देवाः ! कीर्तिरन्नं वा[24] । यः । न इति स्पष्टम्[25] ।

**सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।**
**तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत् ॥ १२ ॥**

सु[26] विज्ञानम् । सुविज्ञानम्[27] । चिकितुषे[28] । जनायेति विद्वांसमात्मानमाह[29] तस्मै मह्यम् । सत्यम् ।

---

१. राक्षसः Sy. २. सारम् Sy.
३. जिघांसति Sy.
४. आदि refers to गवाम् and तनूनाम् ॥ अश्वानामस्मदीयानां रसं दित्सति । यश्च गवां रसं दिप्सति । यश्च तनूनामस्मदीयानां शरीराणां रसं दिप्सति Sy. ५. बाधकः Sy.
६. चोरः Sy. ७. धनस्यापहर्ता स सर्वो जनः Sy. ८. दभ्रम् A. हिंसाम् Sy.
९. प्राप्नोतु Sy. १०. दभ्रत्वं A.
११. ०त्यल्पो भवतु A. १२. निहीनो भवतु Sy.
१३. बाधकः Sy. १४. स्वकीयेन शरीरेण Sy.
१५. तनयेन च Sy.
१६. वर्तमानो भवतु । उभाभ्यां वियुक्तो भवत्वित्यर्थः Sy. १७. राक्षसः Sy.
१८. तन्वा तना च । व्यत्ययेन तृतीया । तन्वाः शरीरस्य तनयस्य च Sy.
१९. पृथिवीस्त्रींल्लोकान् Sy. २०. व्याप्ताः Sy.
२१. भवतु । लोकत्रयादपि प्रच्युतो भवत्वित्यर्थः Sy. २२. शत्रोः Sy. २३. अन्नं कीर्तिर्वा Sy.
२४. वा A. The passage : कीर्तिरन्नं वा should immediately follow यशः ।
२५. VM. ignores दिवा । दिप्सति । यः । च and नक्तम् ॥ यो राक्षसो नोऽस्मान् दिवाह्नि दिप्सति जिघांसति यश्च नक्तं रात्रौ जिघांसति अस्योभयविधस्य यशः प्रति शुष्यत्विति सम्बन्धः Sy.
२६. प्रायेणेदमादिभिरृग्भी राक्षसेन सहर्षिणा शपथः क्रियते । अत्र केचिदाहुः–
हत्वा पुत्रशतं पूर्वं वसिष्ठस्य महात्मनः ।
वसिष्ठं राक्षसोऽसि त्वं वासिष्ठं रूपमास्थितः ॥
अहं वसिष्ठ इत्येवं जिघांसू राक्षसोऽब्रवीत् ।
अत्रोत्तरा ऋचो दृष्टा वसिष्ठेनेति नः श्रुतम् ।
इति Sy.
२७. विज्ञातुं सुशकं भवतु Sy.
२८. चितितु० A. विदुषे जनाय Sy.
२९. ०त्मन० A.

असत्यम् । च । वचसी[1] स्पर्धमाने[2] भवतः केचिन्मा[3] यातुधान इति वदन्ति न तथेत्यपरे ते वचने मिथः स्पर्ध-यते[4] किमिदं सत्यमुतेदमिति । तयोर्वचसोः[5] । यत्[6] । सत्यम्[7] । यतरच्चानृतमेव[8] । अपार्जितम्[9] । तत्[10] । एव । सोमः । रक्षति तथा स्थापयति । हन्ति[11] । असत्यमिति[12] ।

**न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।**
**हन्ति रक्षो हन्त्यासद्वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥ १३ ॥**

न वा उ[13] । न । एव[14] । सोमः[15] । पापकारिणम्[16] । विसृजति[17] । नापि । क्षत्रियम्[18] । असत्यम्[19] । धार-न्तं[20] किं तर्हि करोति । हन्ति[21] । रक्षः[22] । हन्ति च । असत्यम् । वदन्तम् । उभौ[23] । इन्द्रस्य[24] । जालेन[25] परि-गृहीतौ[26] तदन्तः । शयाते[27] [28] ।

**यदि वाहमनृतदेव आस मोघं वा देवाँ अप्यूहे अग्ने ।**
**किमस्मभ्यं जातवेदो हृणीषे द्रोघवाचस्ते निर्ऋथं सचन्ताम् ॥ १४ ॥**

यदि[28] । यदि । वा । अहम्[29] । अनृतदेवः[30] । भवाम्यसत्येन[31] यः[32] क्रीडति सोऽनृतदेवः । मोघम्[33] । वा[34] ।

---

१. सत्यासत्यरूपे वचने Sy.
२. मिथः स्पर्धेते Sy. ३. म A.
४. ०र्येते is suggested for ०यते ।
५. तयोर्मध्ये Sy. ६. युत A.
७. यथार्थवचनम् Sy.
८. एव is missing in M. यत् Sy.
९. The reading is doubtful ॥ ऋजुत-ममकुटिलम् Sy.
१०. अकुटिलं सत्यभाषणम् Sy.
११. हिनस्ति । एवं ??यथयोर्मध्ये कतरोनृतभाषीति विद्वद्भिः सुविज्ञानमित्यर्थः Sy.
१२. असदुक्तविलक्षणमसत्यम् Sy.
१३. उ वे A. १४. खलु Sy. १५. देवः Sy.
१६. वाप० A. पापकारिणं राक्षसम् Sy.
१७. प्रेरयति गच्छ त्वमिति न मुञ्चति Sy.
१८. क्षत्रं बलम् । तद्वन्तम् Sy.
१९. मिथ्याभूतं वचनम् Sy.
२०. बिभ्रतमसत्यवादिनं पुरुषं (न) च हिनोति विसृजति Sy.
२१. हिनस्ति Sy. २२. राक्षसम् Sy.
२३. राक्षसानृतवादिनौ तौ सोमेन हतौ Sy.
२४. यद्वा इन्द्रस्येति तृतीयार्थे षष्ठी । इन्द्रेणेश्वरेण सोमेन प्रसितौ बद्धौ । 'षिञ् बन्धने' अस्मात् कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.
२५. इन्द्रस्य सम्बन्धिनि बन्धने Sy.
२६. ०हीतो A. २७. निवसतः Sy.
२८. VM. ignores उ ।
२९. वाम् A.
३०. अनृते० A. अनृता असत्यभूता देवा यस्य तादृशाः Sy.
३१. ययुक्तरूपोऽस्मि Sy.
३२. या A. The passage यः...०देवः should immediately follow अनृतदेवः
३३. मोघम् A. M. निष्फलम् Sy.
३४. पा A.

देवान् । अपिनयानि । अग्ने ! सत्यं निवेदयामि देवेभ्यस्तत्त्वं जानामीति वाक्यशेषो नाहं तथाविधः। तथा सति किम् । अस्मभ्यम् । जातवेदः ! कृध्यसि । द्रोघवाचो राक्षसाः । तव । निर्ऋथम् । सेवन्तां यां त्वं निर्ऋतिमुल्पायसि तां प्राप्नुवन्तीति ।

**अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।**
**अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ॥ १५ ॥**

अद्या मुरीय । अद्यैवाहम् । म्रियेय । यद्यहम् । यातुधानः । अस्मि । यदि । वा राक्षसो भूत्वा । पुरुषस्य । आयुर्जीवितमहम् । ततप । अथ । स च । वीरैः पुत्रैः । दशभिः । पृथक्कृतो भवतु । यः । मा ।

१. ०यामि is suggested for ०यानि ॥ उपगच्छामि Sy. २. हे अग्ने ! तर्हि मां बाधस्व नह्यहं तथाविधोऽस्मि Sy.
३. एवं सति किं कारणम् ? Sy.
४. ०दस A. ०दशः M. हे जातानां वेदितः! Sy.
५. तव क्रोधोऽस्मासु न जायतामित्यर्थः Sy.
६. द्रोहवा० M. अनृतवाचः Sy.
७. निर्ऋथं निष्पूर्वोऽर्तिर्हिंसायां वर्तते । निःशेषेणार्तिं हिंसाम् Sy.
८. ०मल्पायसि M. ०मुत्पादयसि is suggested for ०मुल्पायसि ।
९. इयमपि शपथरूपैव Sy. 'ऋषिर्ददर्श रक्षोघ्नं पुत्रशोकपरिप्लुतः' ॥ (BD.6.28.) 'इन्द्रासोमेति सूक्तं तु जपेच्छत्रुनिबर्हणम्' इति ऋग्विधानम् (Rgvidh.2.163) DDN. वसिष्ठः किल राक्षसस्त्वमित्यभियुक्तः । सोऽनयर्चा शपथं प्रतिपेदे परं चाभिशशाप Dur. विश्वामित्रप्रयुक्तैः कैश्चित् (शब्दैः) राक्षसस्त्वमित्यभिप्रयुक्तो वसिष्ठ आह SKN.
१०. ०रीव A.
११. अहं वसिष्ठः, अस्मिन्नेव दिने Sy. तर्हि अस्मिन्नेव दिने । पादादित्वाददद्येति दीर्घः । RPR.7.33DDN.
१२. ०येय A. म्रिये DDN., Dur. SKN.
१३. राक्षसः Sy., SKN.
१४. स्याम Dur. भवामि SKN.
१५. रक्ष० A.
१६. मनुष्यस्य Sy. पूरुषस्येति 'अर्धर्चान्ते तु पूरुषः' (RPR.9.39.) इति दीर्घः DDN. कस्यचिदपि पुरुषस्य Dur. पुरुषस्य कस्यचित् SKN.
१७. जीवितलक्षणम् SKN.
१८. तव A. M. हिंसितवानस्मि । तर्ह्यद्यैव म्रियेयेत्यन्वयः Sy. 'तप सन्तापे' हिंसितवानस्मि । तर्हि, अद्य म्रिये DDN. तप्तवानहम् Dur. तपिरत्र विनाशोपलक्षणार्थः । विनाशितवानपहृतवानित्यर्थः SKN.
१९. अथाथैवं स्यात्, अहं वसिष्ठस्त्वं राक्षस इति तर्हि स त्वम् Sy. अथ एवं न स्यात् तर्हि यो दुर्जनः मां मोघं यातुधानः राक्षस इति सम्बोधनं कृत्वाऽऽह DDN. अथ पुनः Dur.
२०. उपलक्षणमेतत् । सर्वैर्बन्धुजनैः Sy.
२१. प्रथ कृ० A. वियुक्तो भवतु छान्दसो मध्यमपुरुषः Sy. DDN.वियुक्तो भवेः Sy. वियूयाद् वियुज्यतामित्यभिप्रायः Dur. वियूयाः, मध्यमः प्रथमस्य स्थाने यौतिर्मिश्रणार्थः ।... पृथग्भवेद् वियुज्येतेत्यर्थः SKN.
२२. यो राक्षसः Sy.

अनृतमेव[1] । यातुधानः[2] । इति[3] । वदति[4] ।[5]

**यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह ।**
**इन्द्रस्तं हन्तु महता वधेन विश्वस्य जन्तोरधमस्पदीष्ट ॥ १६ ॥**

[6] यः मा । यः[7] । माम् । अहिंसकम्[8] । यातुधान[9] ! इति वदति[10] । यः । वा स्वैरम्[11] । राक्षसः[12] । शुचि-

---

१. मृषैव Sy. अयातुधानमेव मां सन्तं यो योवम-नृतम् Dur. वृथैव SKN.

२. राक्षसः Sy. यातुधानस्त्वम् Dur. हे राक्षस SKN.

३. हे राक्षस ! इति सम्बोध्य Sy.

४. इत्येवमाह Dur. इत्येवमाह पूर्वार्धेन शपथः । उत्तरार्धेनाभिशापः SKN.

५. मिथ्यापवादभङ्गेषु यत्नं कुर्याद्विचक्षणः ।
कृष्णोऽपि स्यमन्तीय यदुवर्गेऽभवत्सुखी ॥
इति चारुचर्याप्रसङ्गादाह DDN. अथापि शपथाभिशापौ N.7.3. SKN. III.16

६. तत्र बृहद्देवता—

प्राजापत्यो मरीचिर्हि मरीचेः कश्यपोऽभवत् ।
तस्य देव्योऽभवन् जाया दाक्षायण्यस्त्रयोदश ॥१४३॥
अदितिर्दितिर्दनुष्ठीला दनायुः सिंहिकाथिनी ।
गोधा वृषा वरिष्ठा च सुरभिर्विनता तथा ॥१४४॥
कद्रूश्चैवेति दुहितॄः कश्यपाय ददौ स च ।
तासु देवासुराः सिद्धाः गन्धर्वोरगराक्षसाः ॥१४५॥
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ।
तत्रैका त्वदितिर्नाम द्वादशाजनयत् सुतान् ॥१४६॥
मित्रश्चैवार्यमांशश्च भगो वरुण एव च ।
धाता चैव विधाता च विवस्वांश्च महाद्युतिः ॥१४७॥
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
द्वन्द्वं तस्यास्तु जज्ञेऽथ मित्रश्च वरुणश्च ह ॥१४८॥
तयोरादित्ययोः सत्रे दृष्ट्वाऽप्सरसमुर्वशीम् ।
रेतश्चस्कन्द तत्कुम्भे न्यपतद् वासतीवरे ॥१४९॥
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी सम्बभूवतुः ॥१५०॥
बहुधा पतिते शुक्रे कलशेऽथ जले स्थले ।
स्थले वसिष्ठश्च ऋषिः सम्बभूवर्षिसत्तमः ॥१५१॥
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः ।
उदियाय ततोऽगस्त्यो शम्यामात्रो महातपाः ॥१५२॥
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ।
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि मीयते ॥१५३॥
कुम्भ इत्यभिधानं तु परिमाणस्य लक्ष्यते ।
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः ॥१५४॥
सर्वतः पुष्करं तच्च विश्वे देवा अधारयन् ।
उत्थाय सलिलात्तस्मात् तेपेऽथ सुमहत्तपः ॥१५५॥
नामास्य गुणतो जज्ञे वसतेः श्रैष्ठ्यकर्मणः ।
अदृश्यमृषिभिर्हीन्द्रं सोऽपश्यत्तपसा पुरा ॥१५६॥
सोमभागानथो तस्मै प्रोवाच हरिवाहनः ।
ऋषयो वा इन्द्रमिति ब्राह्मणात्तद्धि दृश्यते ॥१५७॥
वशिष्ठश्च वसिष्ठाश्च ब्राह्मणा ब्रह्मकर्मणि ।
सर्वकर्मसु यज्ञेषु दक्षिणीयतमास्तथा ॥१५८॥
तस्माद्येऽद्यापि वासिष्ठाः सदस्याः स्युस्तु कर्हिचित् ।
अर्हयेद्दक्षिणाभिस्तान् भल्लवेयी श्रुतिस्त्वियम्॥१५९॥
'उर्वश्यप्सरा' इत्यादि (N. 5. 13.) BD.5. 143-159.
तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द (N. 5. 14.) इति यास्कः । 'मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा' (KSA. 12. 166.) इत्यनुक्रमणी । एवं वसिष्ठस्य कुम्भयोनित्वम् । वसिष्ठः पूर्वोक्तया त्रिष्टुभा यातुधानत्वं परिहरति DDN.

७. राक्षसः Sy.

८. अराक्षसं सन्तम् Sy. यो दुर्जनः । माम् । अयातुधानम् । अराक्षसं सन्तम् DDN.

९. ०धान M. The rest of the commentary is missing in M. हे राक्षस ! इति सम्बोध्य Sy.

१०. ब्रूते DDN.

११. चा स्वरम् A.
वा अथवा यो दुष्टः Sy.

१२. ०सं A. रक्षाः सन् DDN.

रहम्[1] । अस्मि[2] । इति । वदति[3] । इन्द्रः[4] तम्[5] । हन्तु[6] । महता[7] । वधेन[8] । स विश्वस्य[9] । जन्तोः[10] । अधमः[11] । पततु[12] सर्वस्याद्[13] भवन्त्विति[14] ।

**प्र या जिगाति खर्गलेव नक्तमप द्रुहा तन्वं१ गूहमाना ।**
**वव्राँ अनन्ताँ अव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपब्दैः ॥ १७ ॥**

प्र या जिगाति[15] । प्रयच्छति[16] । या[17] । नक्तम्[18] । खर्गलेत्युलूकीमाहुरुलूकीमिव[19] नक्तम् । द्रोहार्थं[20] मनुष्याणाम् । शरीरम्[21] । अपगूहमाना[22] । सा[17] । अपर्यन्तान् । कूपन्[23] । अवपदीष्ट कूपेष्ववाक्पततवगाधेषु[24] । ग्रावाणः[25] । घ्नन्तु[26] । राक्षसान् । शब्दैः[27] ।

---

१. (अ) रुचिरमहम् A. शुद्धः Sy. अहं वसिष्ठः शुचिः DDN.

२. भवामि Sy.

३. The rest of the commentary is missing in M. हे राक्षस ! इति सम्बोध्य Sy.

४. देवः । वज्रेण । 'सृकः, वृकः, वधः' इति तन्नाम (वज्रनाम) (Ngh. 2. 20) हिनस्तु । स च सर्वस्य जनस्य DDN.

५. उभयविधं राक्षसम् Sy. ६. हिनस्तु Sy.

७. प्रौढेन Sy. ८. आयुधेन वज्रेण Sy.

९. सर्वस्य Sy. १०. जनस्य Sy.

११. अतसम A. निकृष्टः सन् Sy., DDN.

१२. यततु A. अधमस्पदीष्ट इति 'दिवस्पृथिव्या अधमस्पदीष्ट०' (RPR.[**] 4. 57.) इति निपातनात् सत्वम् ।

१३. सर्वस्याधो भवत्विति is suggested for सर्वस्याद् भवन्त्विति ।

१४. तथा स्मृतिः—
वह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना ।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ DDN.

१५. जिवाति A. प्र या जिगाति is missing in M.

१६. प्रगच्छति is suggested for प्रयच्छति ॥

१७. राक्षसी Sy.

१८. रात्रौ Sy.

१९. खङ्गले० A. The passage from the beginning upto नक्तम् is missing in M.

२०. द्रोहेण युक्ता Sy.

२१. स्वकीयं शरीरम् Sy.

२२. आवृण्वती प्रकाशयन्ती Sy.

२३. कृपन् A. कूपान् is suggested for कूपन् ॥ गर्तान् Sy.

२४. कूपेष्वल्य पततवगार्थेषु M. अवाङ्मुखी पततु Sy.

२५. सोमाभिषवार्थाः पाषाणाः Sy.

२६. हिंसन्तु Sy.

२७. अभिषवशब्दैः Sy.

**वि तिष्ठध्वं मरुतो विक्ष्वि१॒च्छत॑ गृ॒भायत॑ र॒क्षसः॒ सं पि॑नष्टन ।**
**वयो॒ ये भू॒त्वी प॒तय॑न्ति न॒क्तभि॒र्ये वा॒ रिपो॑ दधि॒रे दे॒वे अ॑ध्व॒रे ॥ १८ ॥**

वि तिष्ठध्वम् । विविधम् । गच्छथ[१] । हे मरुतः ! प्रजासु । हविरिच्छत[२] । तदनन्तरं[३] रक्षांसि[४] । गृह्णीत[५] । सं च तानि । चूर्णयत । परिक्षीणाः[६] । भूत्वा । ये । रात्रिभ्यः[७] । पतन्ति[८] । ये[९] । वा पपादे[१०] । उत्पादयन्ति[११] । देवनशीले[१२] । यज्ञे[१३] तान् राक्षस इति ।

**प्र व॑र्तय दि॒वो अश्मा॑नमिन्द्र॒ सोम॑शितं मघव॒न्त्सं शि॑शाधि ।**
**प्राक्ता॒दपा॑क्ता॒दध॒रादुद॑क्ता॒द॒भि ज॑हि र॒क्षसः॒ पर्व॑तेन ॥ १९ ॥**

प्र वर्तय । प्रवर्तय[१४] । दिवः[१५] । अश्मानम्[१६] । इन्द्र ! वज्रम्[१७] । इन्द्र[१८] । पीतेन[१९] सोमेन शीनमात्मीयं[२०] बलम् । निशीती[२१] कुरु । वज्रेण । प्राच्याः[२२] । प्रतीच्याः । अधरात्[२३] । उदक्[२४] । अभिजहि[२५] । राक्षसान् ।

---

१. गच्छ A. गच्छत is suggested for गच्छथ ॥ यूयं तिष्ठत Sy.

२. तत्र गूढान्राक्षसान् हन्तुमिच्छत Sy.

३. तदन्तरम् M.

४. तान्राक्षसान् Sy.

५. गृहीत M.

६. पक्षिणः is suggested for परिक्षीणः ।

७. रात्रीभी रात्रिषु Sy.

८. आगच्छन्ति Sy.

९. पा A.

१०. पापदि A. पापानि is suggested for पापादि ॥ हिंसाः Sy.

११. उत्पा० A. विदधिरे । तान् राक्षसान् संपिनष्ट-नेत्यन्वयः Sy.

१२. दीप्ते Sy.

१३. नज्ञे A. यागे Sy.

१४. राक्षसान् हन्तुं प्रेरय Sy.

१५. अन्तरिक्षात् Sy.

१६. अशनिम् Sy.

१७. यजमानम् Sy.

१८. हे धनवन् ! इन्द्र ! Sy.

१९. पितेन A.

२०. ०शित० is suggested for शीत० ॥ सोमे तीक्ष्णीभूतं यजमानम् Sy.

२१. निशीति० A. निशिती० is suggested for निशीती० ॥ संस्कुरु Sy.

२२. प्राप्या A.

२३. अवाच्याः Sy.

२४. उत्तरश्च A. उदक्ताच्च or उत्तरतश्च is suggested for उदक् च ॥ सर्वस्मादपि दिग्भागात् Sy.

२५. अभिजहि मारय Sy.

एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् ।
शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः ॥ २० ॥

एते । ते । एते[1] । पङ्क्ति[2] । श्वयातवः[3] । इन्द्रं[4] च । दिप्सन्ति[5] । दम्भितुमिच्छन्तः[6] । शत्रुभिर[7]-भिभवितुमशक्यम्[8] । अथेन्द्रश्च[9] । तीक्ष्णीकरोति[10] । शक्तः[11] । राक्षसेभ्यः[12] । वज्रम्[13] । स क्षिप्रम् । विसृजतु[14] । अशनिम् । अहिंसावद्भ्यः[15] ।

इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्या३विवासताम् ।
अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः ॥ २१ ॥

इन्द्रः । 'इन्द्रोऽपि पराशर[16] उच्यते (परा) शातयिता[17] यातूनाम्[18] इति यास्कः । इन्द्रः । यातूनाम्[19] हविर्मथीनाम्[20] । आभिमुख्येन सञ्चरताम्[21] । अभिभवम् । करोति । अभि । एव[22] । गच्छति । शक्रः[23] । परशुः[24] । यथा[25] । वनमभिगच्छति[26] । पात्राणीव । भिन्दन्[27] मृन्मयान्यपक्वानि[28] । विद्यमानान् प्रादुर्भूतान्[29] राक्षसान्[30], पुंलिङ्गश्च रक्षःशब्दो दृष्ट इति ।

---

१. राक्षसाः Sy.
२. पतन्ति is suggested for पंक्ति ।
३. श्वभिः परिकरभूतैर्हिंसन्तः श्वभिः सह यान्तो वा Sy.
४. इन्द्र M.
५. जिघांसन्ति Sy.
६. जिघांसवः सन्तः Sy.
७. शत्रुम् M.
८. भवतुम० A. अहिंस्यम् Sy.
९. तीक्ष्णिक० A.
१०. पिशुनान् कपटान् हन्तुम् Sy.
११. हन्तुं शक्तः Sy.
१२. तेभ्यः पिशुनेभ्यः पिशुनान् कपटान् Sy.
१३. आयुधमशनिरूपम् Sy.
१४. विसृजतु हननार्थम् Sy.
१५. अहिंसाव (स्य) भ्यः A. हिंसा० is suggested for अहिंसा० । राक्षसेभ्यः Sy.
१६. वराशारुच्य० A.
१७. हिंसिता Sy.
१८. यातुना० A. (N. 6. 30)
१९. नूना A. हिंसकानां राक्षसानाम् Sy.
२०. ०थिनाम् A. हवींषि मथ्नताम् Sy.
२१. अभिमुखमागच्छताम् Sy.
२२. इदु पूरणे Sy.
२३. शक्रा A.
२४. कुठारः Sy.
२५. छिन्दन् यथा...इव Sy.
२६. न्वन० A. वृक्षजातम् Sy.
२७. हिंसन् Sy.
२८. मय अपत्वानि A. मृन्मयानि पात्राणि भिन्दन् मुद्गर इव Sy.
२९. सतः प्राप्तनामैतत् यदाह यास्कः 'तिरः सत इति प्राप्तस्य' N. 3 20.
३०. ०तान्नक्ष० M. प्राप्तान् Sy.

**उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।**
**सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र ॥ २२ ॥**

उलूकयातुम् । उलूकादयो रात्रिंचराः प्राणिनां[1] हिंसका[2] येषां हिंसासाधनानि भवन्ति ते तथोक्ता इत्येतान् । दृषदुपलाभ्यामिव[3] बीजादिकम् । सञ्चूर्णयेति[4] ।

**मा नो रक्षो अभि नड्यातुमावतामपोच्छतु मिथुना या किमीदिना ।**
**पृथिवी नः पार्थिवात्पात्वंहसोऽन्तरिक्षं दिव्यात्पात्वस्मान् ॥ २३ ॥**

मा नो रक्षः । रक्षो[5] रक्षितव्यमित्यस्मादित्युक्तम्[6] । अस्मान् । अभिव्याप्नोतु[7] । हिंसावतां[8] बलम् । पृथक्[9] करोतु । मिथुनानि[10] । किमिदं किमिदमित्याचरन्ति[11] । राक्षसानां तानिन्द्रोऽपोहतु[12] । पृथिवी[13] न[14] इति स्पष्टम्[15] ।

---

१. ०ना A. ०नो M.

२. हिंसा० A.

३. दृषदु० A.

४. VM. explains the stanza briefly and not word by word. Sy. explains this stanza in the following manner:— उलूकयातुम् । उलूकैः परिकरभूतैः सह यातयति हिनस्तीति याति गच्छतीति वोलूकयातुः। यद्वा—उलूकरूपी यातीत्युलूकयातुः । हे इन्द्र ! तादृशं राक्षसं जहि विनाशय। तथा च बृहद्देवतायाम् उक्तम्—'उलूकयातु जह्येतान् नानारूपान् निशाचरान् । स्त्रीपुंरूपांश्च तिर्यञ्चो जिघांसूनिन्द्र मे जहि ॥' (BD. 6. 32.) एवमुत्तरत्रापि योज्यम्। शुशुलूकयातुम्, उलूका द्विविधाः बृहदुलूका अल्पोलूकाश्चेति । तत्रोलूकयातुमिति बृहदुलूकाभिप्रायेणोक्तम् । शिशुरल्प उलूकः शिशुलूकः, तद्रूपेण वर्तमानं राक्षसं श्वयातुं श्वरूपेण वर्तमानं राक्षसम् । उतापि च कोकयातुम् । कोकश्चक्रवाकः, तद्रूपेण वर्तमानं राक्षसम् । सुपर्णयातुम्, सुपर्णः श्येनः तदाकारं यातुधानमुतापि च गृध्रयातुं गृध्ररूपं च यातुधानमेतान् सर्वान् नानाकारान् हे इन्द्र जहि । किं बहुना ? दृषदेव पाषाणेनेव वज्रेण रक्षो राक्षसमात्रं प्र मृण मारय ।

५. राक्षसजातिः Sy.

६. स्मोदि० A. रक्षोजातिः Sy.

७. नट्—नशतेर्व्याप्तिकर्मणो लुङि 'मन्त्रे घस०' च्लेर्लुक् । 'न माङ्योगे' इत्यडभावः Sy.

८. यातनावतां राक्षसानाम् Sy.

९. उषा अपि विनाशयतु अपवर्जयतु Sy.

१०. मिथुनानि स्त्रीपुंरूपाणि युगलानि Sy.

११. ०मत्या० A. किमीदिना किमीदिनानि किमिदं किमिदमिति जिघांसया वर्तमानानि भवन्ति Sy.

१२. वोहृ० A.

१३. अपि च पृथिवी प्रथितेयं भूमिश्च Sy.

१४. अस्मान् Sy.

१५. VM. ignores मा । पार्थिवात् । पातु । अंहसा । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥ पार्थिवात् पृथिव्या अन्तरिक्षस्य सम्बधिनोंऽहसः पापात् पातु रक्षतु । अन्तरिक्षं च दिव्यात् दिवि भवात् पापादस्मान् पातु रक्षतु Sy.

इन्द्रं जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् ।
विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्त्सूर्यमुच्चरन्तम् ॥ २४ ॥

इन्द्र जहि । इन्द्र ! जहि[1] । पुमांसम्[2] । यातुधानम्[3] । अपि च । स्त्रियम्[4], तेन सहागच्छन्तीम्[5] । मायया[6] । प्रजाः पीडयन्तीम्[7] । विगतग्रीवा[8] । मूरदेवा मरणक्रीडा राक्षसाः[9] । ऋदितिर्गमनकर्मा नाशकर्मा[10] वा गच्छन्तु नश्यन्तु वेति । मा । ते[11] । द्राक्षुः । सूर्यम्[12] । उद्यन्तम् ।

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥ २५ ॥

[13]प्रति चक्ष्व । प्रतिपश्य[14] । विपश्य[15] । इन्द्रः । त्वम् । च । सोम ! युवाम्[16] । जागरणं कुरुतः[17] । रक्षोभ्यः[18] । हन्तारम्[19] । अस्यतम्[20] । अशिनम्[21] । हिंसावद्भ्य इति ।

[ इति सप्तमं मण्डलं समाप्तम् ][22]

---

१. इन्द्रः सहि A.

२. मारय Sy.

३. पुंरूपधारिणम् Sy.

४. यातुधानम् Sy.

५. राक्षसीं च जहि Sy.

६. वञ्चनया Sy.

७. हिंसन्तीम् Sy.

८. श्रीर्वा० M. ग्रीवाः is suggested for ०श्रीवा ॥ विच्छिन्नग्रीवाः सन्तः Sy.

९. मारणक्रीडाः Sy.

१०. नाशकर्मा is missing in A.

११. तथाविधा राक्षसाः Sy.

१२. आदित्यम् Sy.

१३. उपाकरणोत्सर्जनयोर्मण्डलाद्यन्तहोमे 'प्रति चक्ष्व' इत्येषा । सूत्रितञ्च—'यो नः स्वो अरणः प्रति चक्ष्व' (AGS. 3.5.7.) इति Sy.

१४. प्रत्येकं पश्य राक्षसान् Sy.

१५. विपश्च A. विविधं पश्य यथास्मान्न बाधेरंस्तथा पश्येत्यर्थः Sy.

१६ युवां संहतौ Sy.

१७. कुरुतम् is suggested for कुरुतः ॥ जागरूकौ रक्षोवधोद्युक्तौ भवतम् Sy.

१८. राक्षसेभ्यः Sy.

१९. अशनिरूपम् Sy.

२०. क्षिपतम् Sy.

२१. आयुधम् Sy.

२२. Supplied by the Editor.